३ अलक्षेन्द्रेण पञ्चनदप्रदेशे क्षुद्रकेति प्रसिद्धा युद्धप्रवणा जातिर्विनाशितेत्यपि ख्यापितं यवनदेशीयैरैतिहासिकैः । महाभाष्ये तु 'एकाकिभिः क्षुद्रकैर्जितमि'त्युदाहरणं दृश्यते । यदि हि अलक्षेन्द्राक्रमणादनन्तरं महाभाष्यं विरचितमिति मन्येत, तदानुपदमेव पराजिताया विनष्टायाश्च जातेर्विजयशीलत्वं न कदापि तत्र वर्णितं स्यात् । तस्मादलक्षेन्द्राक्रमणात् प्रागेव महाभाष्यस्य निर्माणमिति । ता एताः प्रधानास्तस्य युक्तयः । 'पुष्यमित्रं याजयामहे' 'चन्द्रगुप्तसभा' 'पुष्यमित्रसभा' 'अरुणद्यवनः साकेतम्' इत्यादीन्युदाहरणानि तु स्वकल्पितान्येवेति सामश्रमिमहाशयो वदति । यथा व्याकरणग्रन्थेषु देवदत्तयज्ञदत्तादीनि कल्पितान्येव नामानि तत्र तत्रोदाह्रियन्ते, तथैव पुष्यमित्रचन्द्रगुप्तादिनामान्यपि तदात्वे कल्पितान्येव महाभाष्यकृतोदाहृतानि । पश्चात्तु तन्नामका राजानोऽपि बभूवुरित्येव कल्पयितुमुचितम् । पुष्यमित्रो हि यीशुतः प्राग् द्वितीयस्यां शताब्द्यां जात इत्यैतिहासिकानां मतम् । ततश्च एकशताब्दीमात्रे समये महाभाष्यसदृशस्य दूरदेशे प्रचारस्तद्विलोपश्चापि नैव सम्भवतीति न युज्यते पुष्यमित्रकाले भाष्यनिर्माणम् । किञ्च महाभाष्ये 'अनुशोणं पाटलिपुत्रम्' इत्यप्युदाहरणं दृश्यते । कुसुमपुरापरपर्यायं पाटलिपुत्रञ्चेदं बुद्धदेवकाले एव वासयितुमुपक्रान्तम्, बुद्धदेवेन 'महदिदं नगरं भविष्यतीत्याशीरपि दत्ता । तच्चेदं प्राक् शोणतीरे निवासितम् तदनु च ततः परिवर्त्य गङ्गातीरे स्थापितमित्येतत्सर्वं बौद्धग्रन्थेभ्यः प्रतीयते । इत्थं च यावच्छोणतीरे आसीत्पाटलिपुत्रं तावदेव महाभाष्यं निर्मितमिति ततोऽपि महाभाष्यस्य अर्वाचीनता न सम्भवतीति ।

ता एता सामश्रमिमहाशयस्य युक्तयः उपदर्शितदृढतरयुक्त्यग्रे नैव स्थातुमुत्सहन्ते । पुष्यमित्रचन्द्रगुप्तयोर्नामनी स्फुटं महाभाष्ये दृश्येते । पुष्यमित्रस्य यागकरणमपि ततः प्रसिद्ध्यति । यवनकृतः साकेतावरोधो माध्यमिकावरोधश्चापि यदेतिहासेभ्यः प्रमाणीभवति, तदा सर्वमिदं कल्पनमित्युक्तिरुपहासायैव प्रेक्षावताम् । एवमपलापे तु कस्यापि ग्रन्थस्य कालनिर्णयः कदापि न सम्भवति । सर्वत्रैवमुच्छृङ्खलानां कल्पनानां जागरूकत्वसंभवात् । तस्मात् ताः प्रबलतरा युक्तयः । 'संकलादिभ्यश्च' इति सूत्रे भाष्यमेव न दृश्यते, तदा केवलं नगरध्वंसवर्णनायैव भाष्यकारस्तत्सूत्रं व्याचक्षीतेत्येतदप्युपहासास्पदम् । न हि भाष्यमैतिहासिको ग्रन्थः, यत्रैवंविधा घटना अवश्यमुल्लिख्येरन् । क्षुद्रकजातिविषयेऽपि ऐतिहासिकैरन्यथैव प्रमाणितम् । मालवाः क्षुद्रकाश्चेति जातिद्वयं पञ्चनदप्रान्ते सुप्रसिद्धमासीत् । तयोश्च सर्वत्र युद्धादिषु साहचर्यमेव बभूव । परमलक्षेन्द्रस्याक्रमणकाले तेन सह युद्धावसरे तयोः साहचर्यं केनचिद्धेतुना न जातम् । ततश्च मालवैः पृथग् युद्धं कृतम्, क्षुद्रकैश्च पृथक् । ते एते जाती तदा विनष्टे इत्यपि भारतीयैरैतिहासिकैः खण्डितम् । अग्रे तयोर्जात्योर्देशान्तरेषु निवासः स्फुटं सिद्ध्यतीति । क्षुद्रका एकान्ततस्तदा पराजिता इत्यपि जायसवालमहोदयो नानुमनुते । यद्यपि यूनानदेशीयाः स्वलिखित इतिहासे क्षुद्रकाणां पराजयं वदन्ति, परमिदमप्यैतिहासिकैरुच्यते यद्युद्धान्ते क्षुद्रकेभ्यः ससम्मानं सभासु भोज्यादिकं यूनानदेशीयैरुपह्रियते स्म । न हि पराजितानामेवंविधः सत्कारः सम्भाव्यते । तस्माद् युद्धे सन्धिरेवासीत्, तत्र च यवनैतिहासिकैर्यवनानां जयो भारतीयैश्च क्षुद्रकाणां जय उद्घोष्यते स्म इत्यनुमीयते । तत्र भारतीयमतमेवानुसृत्य महाभाष्यकृता 'एकाकिभिः क्षुद्रकैर्जितम्'इत्युदाहृतम् । तादृशेन विश्वविजयिना महावीरेण सन्धिरपि नूनं जय एवेति जितमित्युक्तिर्न विरुद्धा । अत्र 'एकाकिभिः' इति पदं मालवसाहचर्यविरहं व्यञ्जयत् स्फुटमेव अलक्षेन्द्रयुद्धघटनां स्मारयति, तेन अलक्षेन्द्राक्रमणादनन्तरमेव महाभाष्यनिर्माणं सुस्फुटीभवतितराम् । पाटलिपुत्रं चापि विस्तृततमं नगरम्, गङ्गाशोणसङ्गमसन्निधाने निवासितम् अनुशोणमित्यनुगङ्गमिति च उभयथापि ख्यापयितुमद्यापि शक्यते । गङ्गाशोणसङ्गमश्च पूर्वं यत्रासीत् ततोऽद्य पश्चिमस्यां दिश्यागत इति प्राचीनाभिर्घटनाभिः सिद्ध्यति । तस्मात्तदात्वे अनुशोणमित्युक्तिर्न कथमपि विरुद्धा । अभिमन्युराज्यकाले कश्मीरेषु भाष्यपुस्तकगमनमवशिष्यते । परमभिमन्युराज्यकाल एव यदा न निश्चितस्तदा तदाधारेण कथं पतञ्जलेः कालनिर्णयो दृढः स्यात् । यदि लासेनमहोदयस्यैव मतं सम्यक् स्यात्, यीशुख्रिष्टादनन्तरं चाभिमन्युराज्यकालः सिद्धः स्यात् तदा पुष्यमित्रादनन्तरमपि द्वित्रिशताब्दीव्यवधानं सम्भाव्यत एव । किञ्च नैव राजतरङ्गिण्यां न वा हरिणा प्रचारानन्तरं महाभाष्यविलोप उक्तः । पूर्वं देशान्तरेषु प्रचारः तदनु विलोप इति कल्पनामात्रमिदम् । इदमपि सम्भाव्यते यत् पूर्वं महाभाष्यप्रचारो नैव जातः, कैश्चित्पतञ्जलिशिष्यैः गुरोरधीत्य तत् पुस्तकं देशान्तरेषु नीतं तदेव च कथंचिच्चन्द्राचार्यादिभिः प्राप्तम् । प्रचारस्तु तैरेव पश्चात् कृत इति । अस्यां च कल्पनायां शताब्दीव्यवधानमात्रमपि पर्याप्तं भवति । तस्माद् दृढतरप्रमाणाग्रेऽनुमानसाधकानि प्रमाणानीमानि दुर्बलान्येवेति पुष्यमित्रराज्यकाल एव पतञ्जलिकाल इति मन्यामहे । स तु कालः कीदृश इति विप्रतिपत्तिर्न शक्यतेऽत्र समाधातुमिति निवेदितपूर्वम् ।

तदेवं व्याकरणप्रधानाचार्याणां पाणिनिकात्यायनपतञ्जलीनां देशकालविषये यथोपलब्धि यथाशक्यं च विवेचितम् । एषां चाचार्याणां 'यथोत्तरं मुनीनां प्रामाण्यम्' इति श्रीभट्टोजिदीक्षितप्रभृतयो वैयाकरणा आहुः । पाणिनिसूत्रविषये यत्र कात्यायनेन काचिद्विप्रतिपत्तिः प्रदर्शिता उपसंख्यानादिकं वा कृतं तत्र कात्यायनस्यैव वचनं ग्राह्यम् । तद्वचनसंस्कृता एव प्रयोगाः साधुत्वेन मन्तव्याः । यत्र च कात्यायनवचनानि खण्डयित्वा भाष्यकारेण कश्चित् प्रयोगः समर्थितः, वार्तिकं वा प्रत्याख्यातं तत्र भाष्यकारवचनमेवानुसृत्य प्रयोगाणां साधुत्वमनुसंधेयमिति तदाशयः । एतेन भाष्यकारस्य प्रामाण्यं सर्वोपरिस्थितमिति सिद्धं भवति । यथा 'न बहुव्रीहौ' इति बहुव्रीहिसमासे सर्वनामसंज्ञाप्रतिषेधं कुर्वतः सूत्रकारस्य मते बहुव्रीह्यवयवानामपि सर्वनामत्वाभावे तत्राकज्न भवतीति 'त्वं पिता यस्येत्यादि' विग्रहे स्वार्थिके कप्रत्यये 'त्वत्कपितृकः' इत्येव प्रयोगः साधुतयाऽभ्युपगन्तुं युक्तः प्राप्नोति । परं भाष्यकारेण 'गोनर्दीयस्त्वाह अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयम्—त्वकत्पितृको मकत्पितृक इत्येवं भवितव्यम्' इति स्वीकृतम् । तत्र भाष्यकाराभ्युपगता एव प्रयोगाः साधुतया मन्तव्या इत्याधुनिका वैयाकरणा मन्यन्ते । इत्थमेव च 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति परिभाषयाऽपि सिद्ध्यति । व्याख्या-

तस्यैवानया पूर्वसन्देहनिवारकत्वरूपस्य प्राबल्यस्य बोधनात्। श्रीमन्तो दाधिमथाद्यास्तु 'यथोत्तरं मुनीनां प्रामाण्यमि'ति ब्रुवते। पाणिनिरेव भगवान् मुख्यप्रमाणभूत इति तदाशयः। आचार्याणां दृष्ट्या तदेव युक्तम्। स्वयमेव भाष्यकाराद्यः पाणिनिवचनं सर्वात्मभावेन प्रमाणयन्तीति। आधुनिकवैयाकरणदृष्ट्या तु व्याख्यानरीत्यैव व्याख्येयस्य तात्पर्यप्रतिपत्तिसंभवात् भाष्यरूपं व्याख्यानमेव मुख्यं मन्यते—इत्युभयोः सामञ्जस्यम्। मीमांसादर्शनभाष्यकृता श्रीशबरस्वामिनाऽपि दशमेऽध्याये अष्टमे पादे चतुर्थे सूत्रे प्रसङ्गादिदमुक्तम्—'सद्वादित्वात् पाणिनेर्वचनं प्रमाणम् असद्वादित्वाद् न कात्यायनस्य' इति। नञ्समासेन नित्येन भवितव्यं विकल्पितेन वेति तत्र विचारः। पाणिनेर्विभाषाधिकारकरणात् तद्रीत्या विकल्पः सिद्ध्यति, वार्तिककारेण तु 'वा वचनानर्थक्यं च स्वभावसिद्धत्वात्' इति विभाषाधिकारखण्डनं कृतम्। तद्रीत्या नञ्समासो नित्यः सिद्ध्यतीति पाणिनिवचनमनुसृत्य विकल्पित एव समासो मन्तव्य इति शबरस्वामिनोऽभिप्रायः। अस्ति विकल्प इति विकल्पाऽभ्युपगमात् पाणिनिः सद्वादीति तेन ख्यापितः, नास्ति विकल्प इति कथनाच्च कात्यायनस्यासद्वादित्वमुक्तम्। वस्तुतस्तु कात्यायनस्य तत्रायमभिप्रायः, समासविकल्पो न विधिसापेक्षः, अपि तु स्वभावसिद्धः। एकार्थीभावो व्यपेक्षा चेति द्विविधापि शब्दस्य वृत्तिर्वक्तुरिच्छाधीना। यो हि व्यपेक्षया प्रयोक्तुमिच्छति स राज्ञः पुरुष इति पृथक्पदघटितं वाक्यमेव प्रयुङ्क्ते, यश्चैकार्थीभावेन प्रयोक्तुमिच्छति स राजपुरुष इत्येकपदतां प्रापय्य प्रयुङ्क्त इति व्यर्था तत्र सद्वादित्वासद्वादित्वकल्पना। स्पष्टीकृतमिदं तत्रैव टुप्टीकायां भट्टपादैः।

इदं तु वार्तिकानां भाष्यस्य च पर्यालोचनया बहुत्र प्रतीयत एव—यत् वार्तिककारः सूत्रकृतः पाणिनेर्न्यूनताप्रदर्शनमेवाभिलक्ष्य वार्तिकरूपव्याख्याकरणे प्रवृत्तः। महाभाष्यकारस्य तु पाणिनेर्गौरवरक्षार्थमेव दृश्यते प्रवृत्तिः। अत एव 'प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म, तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुं किं पुनरियता सूत्रेण' ( अ. १ पा. १ सू. १ भा. ३ ) इत्यादिकमनेकत्र तेनोद्घुष्टम्। अत एव कथासरित्सागरे पाणिनिकात्यायनयोर्विद्वेषपूर्वकं परस्परशास्त्रार्थकिंवदन्त्यपि प्रवृत्ता। यद्यपि श्रीवासुदेवशरणप्रभृतयः वार्तिककारस्य न्यूनता—प्रदर्शनबुद्ध्या विद्वेषबुद्ध्या वा प्रवृत्तिरिति श्रुत्वा विमनायन्ते, अनुकूलबुद्ध्यैव व्याख्यातरूपाण्येव वार्तिकानि तेन विरचितानीति ते मन्यन्ते। परं किं कुर्मो वयं यदा भाष्यकार एव तथा ध्वनयति, तदाऽभ्युपगन्तव्यमेवेदं भवति। तथाहि—प्रत्याहाराह्निके 'अ इ उण्' सूत्र एव 'अकारस्य विवृतोपदेश आकारग्रहणार्थः' इति वार्तिकं विवृण्वता भाष्यकृता स्पष्टमुक्तम्'—आहोपुरुषिकामात्रं तु भवानाह संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते इति, वयं तु ब्रूमः, विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति'। अत्र आहोपुरुषिकेति पदं स्फुटमेव वार्तिककृतोऽहंकारपूर्विकां प्रवृत्तिमन्वाचष्टे। तथैव 'ऋलृक्' सूत्रभाष्यान्तेऽपि 'स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन् प्रत्याख्यायते सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते'। एवं परिहासः स्फुटमेव कात्यायनस्य न्यूनताविष्करणरूपां प्रवृत्तिमभिव्यनक्ति। किमन्यत्, सर्वमपि भाष्यं पर्यालोच्यतां ग्रामाधिक्येन न्यूनताप्रदर्शनरूपाणां वार्तिकानां निराकरणमेव भाष्यकृता कृतम्। सूत्राक्षरैरेव वार्तिकार्थलाभाय च प्रयतितम्। अत्यल्पानि वार्तिककृतः उपसंख्यानानि तेन स्वीकृतानि।

महाभाष्यं चेदं वार्तिकात्मकमेव व्याख्यानमिति शक्यते वदितुम्, वार्तिकमेवावलम्ब्य भाष्यस्य सर्वत्र प्रवृत्तिदर्शनात्। स्वातन्त्र्येण सूत्राणि तु क्वचिदेव व्याख्यातानि। येषु सूत्रेषु वार्तिकानि न दृश्यन्ते तत्र भाष्यमपि प्रायेण न दृश्यत एव। इदमपि वैलक्षण्यं व्याकरणेऽनुसन्धेयम्—यदन्यत्र मीमांसा–वेदान्त–न्याय–योग दर्शन–प्रभृतिषु भाष्यस्य व्याख्यानभूतं वार्तिकम्, इह तु वार्तिकव्याख्यानरूपं भाष्यमिति। अस्यापि इदमेव तात्पर्यं प्रतीयते यत् सूत्रेषु उक्तानुक्तदुरुक्तचिन्ता कात्यायनस्याभीष्टाऽभूत्। तत एव तेन स्वीयस्य ग्रन्थस्य वार्तिकमिति नाम कृतम्। 'उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते। तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः'—इतिवार्तिकलक्षणात्। इदं चाप्यतिदुष्करमापतितं यत् कात्यायनकृतः स्वतन्त्रो वार्तिकपाठः इदानीं नोपलभ्यते। भाष्यमेव तु दृष्ट्वा कैश्चिद्वार्तिकपाठः सज्जीकृतः। परं नायं पाठः सर्वथाऽसन्दिग्धो वदितुं शक्यते, यतो हि स्ववाक्यमपि यत्र व्याख्यायते तद् भाष्यं भवतीति भाष्यलक्षणं वदन्त्यभियुक्ताः। 'सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः'। दृश्यते च महाभाष्ये बहुत्र तथैव यत् महाभाष्यकृत् पूर्वं संग्राहकवाक्यमुक्त्वा ततस्तद्विवरणं वितनुते इति। तेन कुत्र महाभाष्यस्यैव तत्संग्राहकं वाक्यं कुत्र वा वार्तिककृतस्तथा वार्तिकमित्यसंदिग्धं दुःशको निर्णयः। 'वक्तव्यं न वक्तव्यम्' इत्यादिभाष्यशैल्या कथंचिन्निर्णयः सम्पाद्यते, परन्तु तथापि बहुत्र विप्रतिपत्तिर्न निवर्तत एव।

स्ववाक्यव्याख्याकरणरूपभाष्यपरिपाट्या बह्वी विप्रतिपत्तिः प्रवृत्ता। यथा 'अथ शब्दानुशासनम्' इति भाष्यकारस्य आदिमं वाक्यं तत्सूत्रमेवेति केचिन्महाशया मन्यन्ते। साधयन्ति च तदेव महत्यारभट्या। वयं तु तेषां भ्रान्तिमेव मन्महे यतो हि भाष्यकारः स्वयम् 'वृद्धिरादैच्' सूत्रे वृद्धिपदं मङ्गलार्थमाह। 'अनुवाद्यमनुक्त्वा हि न विधेयमुदीरयेत्' इति नियममनुसृत्य पूर्वमुद्देश्यकथनं तदनु विधेयकथनमित्यस्याचार्यस्य शैली। यथा 'इको यणचि, अकः सवर्णे दीर्घः' इत्यादि। तथैव संज्ञासूत्रेष्वपि 'अदेङ् गुणः' इत्यादिषु पूर्वमुद्देश्यकथनं तदनु विधेयकथनमित्येव रीतिर्दृश्यते। तयैव च रीत्या संज्ञा–संज्ञिभावो निर्णेतव्य इति भाष्यकृता सिद्धान्तितम्। तत्रेयं शङ्का 'कथं वृद्धिरादैच् इति' अत्र पूर्वं विधेयनिर्देशः कृतमिति प्रश्नस्याशयः। तत्रोत्तरयति भाष्यकृत्—'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्, माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। 'मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्त्यायुष्मत्पुरुषाणि च अध्येतारश्च वृद्धियुक्ता यथा स्युरि'ति। एतस्य भाष्यस्य तुलनायां यदि 'अथ शब्दानुशासनम्' इति वाक्यस्य मङ्गलार्थकानि प्रमाणान्युपलभ्यन्ते सर्वाण्यपि दुर्बलानि। [illegible]

च शिष्टाः आदिसूत्रत्वेन 'वृद्धिरादैच्' इत्येव परम्परया पठन्ति। तदेतदपि मुख्यं प्रमाणं मन्तव्यम्। तथैव 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिके सिद्धशब्दोऽपि मङ्गलरूपतया भाष्यकृता व्याख्यातः। तस्मात् 'रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इत्येतदादिमं वार्तिकं ये मन्यन्ते तेऽपि भ्रान्ता एव प्रतीयन्ते। किञ्च 'वृद्धिरादैच्' इति वृद्धिपदेन सूत्रकृतो मङ्गलम् 'सिद्धे शब्दार्थसम्बन्धे' इति सिद्धशब्देन च वार्तिककृतो मङ्गलम् इति व्याचक्षाणः पतञ्जलिः स्वयं महाभाष्यस्यारम्भे मङ्गलं न कुर्यादिति नैतदुपपद्यते। तस्मात् 'अथ शब्दानुशासनम्' इत्यथशब्देन तेन मङ्गलं कृतम्, इत्येव सम्यगाभाति। व्याख्यातं च प्रधानव्याख्यात्रा कैयटेन 'भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात् प्रयोजनमाह 'अथ शब्दानुशासनमि'ति। प्रयोजनप्रयोजनानि तु रक्षोहादीति पश्चाद् वक्ष्यन्ते' इति। एतेनोभयमपि भाष्यकारवाक्यमिति कैयटमतं स्फुटीभवति। यादृशी च भाष्यकारस्य शैली, यद् वार्तिकमुल्लिख्य तदनु तद्वाक्यानुवादेन 'कर्तव्यः' 'वक्तव्यम्' इत्यादि वदति, तथा 'रक्षोहागमलघ्वसन्देहा' इत्यत्र न दृश्यते इत्येतदपि तस्य वार्तिकत्वाभावे बीजम्। यत्तु—मीमांसकविरुदभाजा श्रीयुधिष्ठिरमहाशयेन, संस्कृत—व्याकरणेतिहासे प्रोक्तम्—आदिशब्दो भाष्यकारस्य न सर्वादिबोधकः, अपि तु किञ्चित् परतोऽपि विद्यमाने मध्यगेऽप्यादिशब्दः प्रयुज्यते। एवमेवान्त्यशब्दः मध्यगशब्दश्चापि तस्य व्यभिचारी। तत्र निदर्शनं च 'भूवादयो धातव' इति सूत्रे 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' इति वार्तिकं तद्भाष्यं च। 'भूवादय' इति सूत्रं हि नाद्यं नान्तिमं न वा मध्यगम्, प्रथमाध्यायस्य तृतीयपादादौ वर्तमानत्वात्। तत्रापि च वशब्दः मङ्गलार्थत्वेनोक्तः तत्समर्थनञ्च 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते' इत्यादिरीत्यैव कृतम्। तस्मात् तस्यादित्वं मध्यगत्वं वा भाष्यकारेणाभ्युपगतम्। तेनैव सिद्धमिदं यदादिशब्दो मध्यगशब्दो वा सर्वादिभूते सर्वमध्यगे वा प्रयुज्येतेति नैष नियमः। ततश्च 'अथ शब्दानुशासनमि'त्यस्य सूत्रत्वाभ्युपगमेऽपि 'वृद्धिरादैच्' इति वृद्धिशब्दस्य मङ्गलार्थता न विरुध्यते। 'रक्षोहागमे'त्यस्य वार्तिकत्वेऽपि च 'सिद्धे शब्दार्थसम्बन्धे' इति सिद्धशब्दस्यापि मङ्गलार्थता युज्यते एवं। तदिदमितिहासमीमांसकस्य वचनं बालानामप्युपहासाय भवेत्। 'सति हि परस्मिन् यस्मात् पूर्वो नास्ति स आदिः, सति च पूर्वस्मिन् यस्मात् परो नास्ति सोऽन्त्यः' इति स्वयमेव भाष्यकृता आद्यन्तयोर्लक्षणं कृतम्। तच्च स्वकीयं लक्षणं स्वयमेव स न मन्यते—इत्यहो तस्याप्तता समर्थिता। 'भूवादयः' इत्यत्र यद् वशब्दस्य मङ्गलार्थत्वमुक्तम्, तस्य तु धातुपाठमङ्गलार्थत्वं प्रतीयते। सर्वो हि धातुपाठो 'भूवादयो धातव' इति सूत्रेण संगृहीतः, ततश्च संग्राहके सूत्रे कृतं मङ्गलं धातुपाठस्यैव मङ्गलं संवृत्तमिति तदभिप्रायः। सम्भवेच्च मध्यगशब्दस्य व्यभिचारित्वमपि, आद्यन्तौ विहाय सर्वेऽपि मध्यगा वक्तुं शक्यन्ते। आद्यन्तशब्दौ तु व्यवहारे शास्त्रे च नियतौ न व्यतिक्रममर्हतः। 'वृद्धिरादैजि'ति सूत्रे हि 'एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्, माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते' इति स्पष्टमादिशब्दो भाष्यकृतोपात्तः। नैवं 'भूवादयो धातवः' इति सूत्रे आदिशब्दोपादानं दृश्यते। एवमेव सिद्धशब्दविषयेऽपि 'महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते' इत्यादिशब्दप्रयोगो दृश्यते। तस्मात् 'वृद्धिरादैजि'त्यतः प्राक् सूत्रकल्पना 'सिद्धे शब्दार्थसम्बन्धे' इत्यतः प्राग् वार्तिककल्पना च न कथमपि प्रामाणिकी भवितुमर्हति। यैर्ग्रन्थकृद्भिस्तथोल्लिखितं तद्भ्रमात्प्रमादाद्वेत्येव मन्तव्यं स्यात्। भाष्यकृतस्तुलनायां तेषां प्रामाण्याभावात्। अद्यावधि सर्वेषु पुस्तकेषु व्यवह्रियमाणेषु अध्यायाद्यङ्केषु प्राथम्यमेव 'वृद्धिरादैच्' सूत्रस्य दृश्यत इति 'अथ शब्दानुशासनमि'त्यस्य सूत्रत्वकल्पना सर्वप्रामाणिकविरुद्धेत्यास्तां तावत्। तस्माद् भाष्यकृतः किं स्वकीयं वाक्यं किं वा वार्तिककृतो वार्तिकम् इति निर्णयो दुःशक एवापतितः। भाष्यकारशैलीमेवावधानेन परीक्ष्य कथंचित् निर्णीयत एवाऽभियुक्तैः। सिद्धान्तकौमुद्यादिषु तु बहुत्र वार्तिकानि स्वरूपान्तरतामिव प्रापितानि दृश्यन्ते। केवलमर्थसम्बन्ध एव तत्रानुसृतः। भवतु नाम, वार्तिकपाठस्य प्रामाणिकस्योद्धारोऽन्वेषकाणां कर्तव्येषु मुख्यतया तिष्ठतीति अवश्यमवधेयम्।

इदं तु असंदिग्धमेव, यदद्यत्वे पाणिनीयस्य व्याकरणस्य यादृशी प्रतिष्ठा दृश्यते, यथा च शास्त्रेषु व्याकरणस्य मुख्यं स्थानं गण्यते, सोऽयं सर्वोऽपि कात्यायनस्य, भाष्यकृतः पतञ्जलेश्च प्रभावः। महाभाष्यं न केवलं व्याकरणनिबन्धः, अपि तु सर्वाण्यपि ज्ञातव्यानि विषयजातानि स्थाने स्थानेऽत्र सपरिकरं विवेचितानि। लौकिका व्यवहाराः, प्राक्तना इतिहासाः, आवश्यका धर्माः, दर्शनानां सिद्धान्ताः, गूढतमानि विज्ञानानि चेति सर्वमेतन्महाभाष्ये कृतपरिश्रमैस्सम्यक् परिचेतुं शक्यते। एवंविधया विवेचनयैव संस्कृतस्य व्याकरणशास्त्रमियतीं प्रतिष्ठां गतम्। न च पतञ्जलेरिव सरलगम्भीरा प्राञ्जलतमा भाषाऽपि कस्याप्यन्यस्य ग्रन्थकृतो भाग्ये विधिना निवेशिता। तस्मान्महाभाष्यमिदमलौकिकं वस्तु संस्कृतवाङ्मयमन्दिरस्य सुवर्णकलशायमानमित्यत्र न सन्देहः। आश्चर्यं त्विदं यद्यः समयो भाष्यकारस्य निर्णीयते स आधुनिकस्य भौतिकविज्ञानस्य न तादृशः प्रचारसमयः शक्यते निर्धारयितुम्। भारतीयं वैदिकं विज्ञानं तदात्वे विलुप्तप्रायमेव सम्भाव्यते, तथापि विज्ञानस्यापि गूढतमाः सिद्धान्ता महाभाष्ये तत्र तत्र प्राप्यन्ते। यथा 'स्थानेऽन्तरतमः' इति सूत्रे 'अचेतनेष्वपि—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग् गच्छति, नोर्ध्वमारोहति, पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः। तथा या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः, स धूम आकाशे निवाते नैव तिर्यग् गच्छति, नार्वागवरोहति, अब्विकारोऽप एव गच्छत्यान्तर्यतः। तथा ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग् गच्छति, नार्वागवरोहति, ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः इति। इह हि सजातीयाकर्षणसिद्धान्तः स्पष्टतया कियद्दर्शित इति वैज्ञानिका विद्वांस एवात्र प्रमाणम्। यमाकर्षणसिद्धान्तं न्यूटनमहाशयेनाविष्कृतं पाश्चात्त्या मन्यन्ते, स भारते योशुखिष्टतोऽपि पूर्वं विस्पष्टं प्रचलित आसीदिति नाल्पं गौरवं भारतस्य। अनन्तरं सिद्धान्तोऽयम्—

आकृष्टिशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या।
आकृष्यते तत्पततीव भाति समे समन्तात् क पतत्वियं खे। (सिद्धान्तशिरोमणौ)

इत्यादिना भास्कराचार्यप्रभृतिभिः स्वशब्दैरेव स्पष्टीकृत इत्यन्यदेतत्।

एवमन्यत्रापि तत्र तत्र द्रष्टव्यम्। सन्दर्भितानन्तु पदे पदे महाभाष्ये जागर्त्यैव। अनेकत्र तु भाष्यकृता निरूपितं विज्ञानं व्याख्याकृद्भिरपि न बुद्धम्। तेन च भाष्यकारस्याशय एव तैर्गर्ते पातितः। तत्र निदर्शनं 'स्त्रियाम्' इत्यधिकार-सूत्रस्थं भाष्यम्—

संस्कृतभाषायामचेतनबोधका खट्वा-वृक्षादिशब्दा अपि तत्तल्लिङ्गभाजोऽभ्युपगम्यन्ते। तत्र वैज्ञानिकहेतुमुपदर्शयन् महाभाष्यकारो भगवान् पतञ्जलिः—

संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः।
संस्त्याने स्त्यायतेर्ड्रट् स्त्री सूतेः सप् प्रसवे पुमान्॥

इति वार्तिकं व्याचक्षाण आह 'अधिकरणसाधना लोके स्त्री, स्त्यायत्यस्यां गर्भ इति, कर्तृसाधनश्च पुमान् सूते पुमानिति। इह पुनरुभयं भावसाधनम्—संस्त्यानं स्त्री प्रवृत्तिश्च पुमान्, कस्य पुनः संस्त्यानं स्त्री प्रवृत्तिर्वा पुमान्। गुणानाम्। केषाम्, शब्द-स्पर्श-रूप-रस-गन्धानाम्। सर्वाश्च पुनः मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः शब्दः स्पर्शो रूपमिति, रसगन्धौ न सर्वत्र। प्रवृत्तिः खल्वपि नित्या, न हीह काचिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपायेन वा युज्यते, तच्चोभयं सर्वत्र, यद्युभयं सर्वत्र, कुतो व्यवस्था, विव-क्षातः। संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयविवक्षायां नपुंसकम्' इति। अस्याभिप्रायः स्फुट एव—यत् सर्वत्र यज्ञप्रक्रियाविधया आदानप्रदाने प्रवर्तेते। सर्वमपि पदार्थजातं दृश्यमानं न कदाप्येकरूपम्, परिवर्तमानमेव खिदं सर्वमुप-लभ्यते। परिवर्तमानमपि च नैकान्ततः सत्तां जहाति। तदिदं सर्वं यज्ञकृतम्। स्वीयानां भावानामन्यत्रार्पणम्, अन्यतश्च भावा-नामादानमितीयमादानप्रदानप्रक्रिया यज्ञः। यथा प्रदीपः प्रकाशं सर्वत्रार्पयति, तैलावयवांश्चाजस्रमादत्ते, मलं बलं च सर्वत्र प्रयोजयति। तथैव वृक्षा अपि मूलाज्जलमाददते, प्रसूनफलादिकं च ददति वाय्वादिष्वपि च स्वप्रभावमर्पयन्ति। इष्टका-प्रस्त-रादिष्वत्यन्तजडेष्वपि प्रक्रियेयं सर्वत्र प्रवर्तते। तत एव नवस्य पुराणत्वं सर्वत्रैव जायते इति विभाव्यम्। सोऽयमादान-प्रदानापरपर्यायोऽन्नान्नादभावः। तत्रादानविवक्षायां स्त्रीलिङ्गशब्दस्तत्र प्रवर्तते, प्रदानविवक्षायां पुँल्लिङ्गशब्दः, तादर्थ्यविव-क्षया तु नपुंसकलिङ्गशब्द इति। परं कैयटमहाभागो यज्ञप्रक्रियामिमामनभिलक्ष्यैव शब्दस्पर्शादिरूपेण स्वकृतमपि भाष्य-कृतो विवरणं गौणं मत्वा गुणशब्दस्य सांख्यप्रसिद्धं सत्त्वाद्यर्थमुपगम्य तदुपचयापचयौ च काल्पनिकौ मत्वा सर्वां वैज्ञानिक-प्रक्रियां तिरोदधाति। नागेशभट्टाद्याश्च तदेवानुसरन्ति। विज्ञानप्रक्रियाया देशे विलोप एवात्रापराध्यतीति न प्रस्मर्तव्यम्। एव-मेव 'उच्चैरुदात्तः' इति सूत्रेऽपि शब्दोत्पत्तिप्रक्रिया या वैज्ञानिकी महाभाष्यकृतोक्ता, सा व्याख्याकृद्भिरन्यथैव नीता। उच्चैस्त्वं नीचैस्त्वं चेदमव्यवस्थितम्, यदेव एकस्य कृते उच्चैस्तदेवापरस्य कृते नीचैर्भवतीत्याशङ्क्य गात्रायामदारुण्यादिना क्रियमाणा-मपि व्यवस्थामनवस्थितां निरूप्य 'सिद्धन्तु समानप्रक्रमवचनात्, सिद्धमेतत्, कथम्—समाने प्रक्रम इति वक्तव्यम्। कः पुनः प्रक्रमः, उरः कण्ठः शिरः इति' इत्येवं मुख्यं समाधानमुक्तम्। वर्णानां हि द्विविधानि स्थानानि पाणिनीयशिक्षादौ दर्शितानि, सवनस्थानानि, आस्यान्तर्गतस्थानानि च। बुद्ध्यार्थान् समर्थ्यात्मना प्रेरितेन मनसाऽभिहतः कायाग्निर्यदा शारीरं मारुतं प्रेरयति, तदा स वायुः उरसि, कण्ठे, शिरसि वा मनोऽभिप्रायानुकूलमेव क्वचित्प्रक्रमं करोति, तान्येतानि त्रीणि सवनस्थानानि शिक्षायामारम्भ एव स्पष्टीकृतानि—

मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्।
प्रातःसवनयोगं तं छन्दो गायत्रमाश्रितम्॥ ७॥
कण्ठे माध्यन्दिनयुगं मध्यमं त्रैष्टुभानुगम्।
तारं तार्तीयसवनं शीर्षण्यं जागतानुगम्॥ ८॥

एवं त्रिषु प्रक्रमेषु क्रमेण मन्द्रमध्यमताराः स्वरा भवन्तीति प्रतिपाद्य अनन्तरम्—

'सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः। वर्णान् जनयते'

इति आस्यस्थानेषु वर्णोत्पत्तिरुक्ता । उरसि कण्ठे शिरसि वा क्वचिद्वक्तुरभिप्रायानुसारेण केन्द्रं प्रकल्प्य पुनर्वायुस्तस्मात्केन्द्रादुत्थाय मूर्धपर्यन्तं गच्छति, ततश्चाभिघातमासाद्य मुखे प्राप्तस्तत्तत्स्थानसम्बन्धेन वर्णान् जनयतीति स्फुटोऽभिप्रायः। आस्यगतस्थानेष्वपि 'अष्टौ स्थानानि वर्णानाम्' इत्यादिना उरःकण्ठशिरांसि स्थानानि शिक्षायामुक्तानि, तान्येतानि सवनस्थानेभ्यः पृथग्भूतानि, अत्रैव हि कण्ठान्नीचैस्तनो भाग 'उर' इत्युक्तः, दन्तानां मूर्धा च शिर इति । तत्र ह्व, ह्म, इत्यादिषु हकारस्य उरःस्थानमुक्तम्–केवलस्य तु हकारस्य कण्ठ्यत्वमित्यादि सर्वं तत्रालोच्यम् । सवनस्थानानां च स्पष्टीकरणमग्रेऽपि शिक्षायाम्–

प्रातः पठेन्नित्यमुरःस्थितेन स्वरेण शार्दूलरुतोपमेन ।
मध्यन्दिने कण्ठगतेन चैव चक्राह्वसंकूजितसन्निभेन ॥
तारं तु विद्यात् सवनं तृतीयं शिरोगतं तच्च सदा प्रयोज्यम् ।
मयूरहंसान्यभृतस्वराणां तुल्येन नादेन शिरःस्थितेन ॥

प्रत्यात्ममनुभवसिद्धं चेदम्—स्वसामर्थ्यानुसारं कदाचित्कश्चिदुच्चैर्वदति, कदाचिन्नीचैः, कदाचिच्च समेन स्वरेण इति । सोऽयं भेदः सवनस्थानकृत एव । तान्येतानि सवनस्थानान्येव प्रक्रमशब्देनोक्त्वा भाष्यकारेण उच्चैस्त्वनीचैस्त्वयोरव्यवस्थायाः समाधानं कृतम्, यद्यथाविधो यस्योपक्रमः, तत्र यदुच्चैस्तदुदात्तमिति विज्ञातव्यम्–कामं तदन्यापेक्षया नीचैर्भवतु, न तेनास्माकं प्रयोजनमिति । परं कैयटमहाशयः सवनस्थानानामास्यस्थानानां च भेदमविचार्यैव भाष्ये स्पष्टमुक्तम् 'उरः कण्ठः शिरः' इति स्थानत्रयमष्टानामपि स्थानानामुपलक्षणं मत्वा तत्र च प्रत्येकं स्थानेषु काल्पनिकमनुभवविरुद्धं विन्दुत्रयमुररीचकारेत्येकदेशितात्रापराध्यति । एवं महाभाष्यस्य गूढा आशया व्याख्याकृतां कृपया अन्यथैव नीता इति निदर्शनमात्रमिदम्, सम्यगालोचने बहुत्रैवं प्रतीयेत ।

इदं तूपकारभारं महामान्यस्य कैयटमहाभागस्य नैव विस्मर्तव्यम्–यद् बहुत्र महाभाष्यं तद्व्याख्ययैवाद्यास्मादृशैर्बुध्यते, यदि नाभविष्यत् कैयटकृतं व्याख्यानम्, तर्हि दुरवबोधमेव महाभाष्यं बहुत्राभविष्यदिति। यद्यप्यन्या अपि व्याख्या महाभाष्यस्य बह्व्यः सन्तीति श्रीयुधिष्ठिरमीमांसकमहाशयेन संस्कृतव्याकरणशास्त्रस्येतिहासे स्फुटीकृतम्, हरिवृद्धं सेतुन्तु कैयटः स्वयमालम्बनत्वेन स्मरति, तथापि ता अनुपलब्धा अप्रचलिता वा, प्रसिद्धं प्रामाणिकं व्याख्यानन्तु कैयटस्यैव भाष्यप्रदीपाख्यमेव। हरिर्वैज्ञानिकमूर्धन्य इत्यत्र न संदेहः, तदीयाद्वाक्यपदीयग्रन्थात्तथावगतेः, तन्त्रशास्त्रेष्वपि च तन्मतस्य मान्यताप्रसिद्धेः, परं तद्व्याख्यायाः कियांश्चिदेवांशो जर्मनपुस्तकालये प्राप्योऽस्ति। ततश्च तत्प्रतिलिपिः पञ्जापविश्वविद्यालयेनापि आनाय्य स्वकीये पुस्तकालये रक्षिता ततः कैश्चिद्विद्वद्भिरपि प्रतिलिपिः कृता । प्रचारस्तु तस्या अद्यावधि नास्ति । स्वल्पपरिमाणैव च सा लब्धा इति भाष्यार्थावबोधकृते कैयट एवाद्यावधि शरणम् । अस्य च कालः दशमी एकादशी वा शताब्दी ऐतिहासिकैर्मन्यते ।

कैयटकृतस्य भाष्यप्रदीपस्यापि कतिचिद्व्याख्यानानि सन्ति, परं तेषु प्रसिद्धो नागेशकृतो 'भाष्यप्रदीपोद्द्योतः' विवरणापरनामा । तस्यापि च व्याख्या छायानाम्नी श्रीवैद्यनाथपायगुण्डनिर्मिता सुप्रसिद्धा । सा विस्तृतेति छात्राणां तत्रोत्साहाल्पतामभिलक्ष्य श्रीजयकृष्णदासगुप्तमहोदयेन व्याकरण–न्याय–वेदान्ताचार्य–श्रीरुद्रधरझामहोदयं प्रोत्साह्य 'तत्त्वालोक' नाम्नी अभिनवा व्याख्या निर्मापिता । अयमपि तत्त्वालोकः प्रथमाह्निके सुविस्तृतः, तत्र भाष्यस्य प्रदीपस्यापि च प्रतीकान्युपादाय विशेषेण विवरणं कृतम् । द्वितीयाह्निकात्तु क्रमेण संक्षेपः । तृतीयादौ च सोऽयं संक्षेपः औचित्यमेव प्राप्तः, यादृशः कालेऽस्मिन्नपेक्ष्यते । झामहोदयेन पाण्डित्यपूर्णं विवरणं कृतमित्यत्र न संशयः, परं तस्य प्रथम एवायं ग्रन्थविरचनसम्पादनाऽध्यवसाय इति क्वचित् क्वचित् त्रुटिः प्रतीयते । शोधनेऽपि क्वचिदनवधानं लक्ष्यते । तथापि पुस्तकस्योपयोगिताया अग्रे तदेतत्सर्वमगण्यम्, वारान्तरे च मुद्रणे त्रुटीनामासां निराकरणं सम्भाव्यत एव । अनेनाभिनवेन तत्त्वालोकेन सम्यगुपकृताः स्युर्विद्वांसश्छात्राश्चेत्यहं सम्भावये । धन्यवादैश्च तत्त्वालोकनिर्मातारं पण्डितमहाशयं संस्कृतरत्नभाण्डागारस्य परिपूर्तयेऽभिवृद्धये च वंशपरम्पराऽनुक्रमेण सततं बद्धपरिकरं चौखम्बा–बनारस–काशी–हरिदासानेकसुप्रसिद्धग्रन्थमालाप्रकाशकश्रेष्ठिप्रवरगोलोकवासिश्रीहरिदासगुप्तात्मजश्रीजयकृष्णदासगुप्तमहाशयं च सादरमभिनन्दयामीति ।

दीपावली
वि० सं० २०११

विदुषां वशंवदो—
गिरिधरशर्मा चतुर्वेदः

# निवेदनम्

अयि सुरसरस्वतीप्रेयांसः श्रेयांसो विद्वांसोऽन्तेवासिनश्च ?

विदितमेवैतत्तत्रभवतां भवतां यद्दृश्यमाने नामरूपात्मके जगति शब्दमन्तराऽर्थस्य व्यवहारप्रयोजकं ज्ञानमपि नोदेति। उक्तञ्च—'**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥**' इति। तत्रापि शब्दान्तरजनकत्वात्, लौकिकालौकिकसकलविषयप्रतिपादकत्वाच्च संस्कृतशब्दस्य महत्त्वं प्राचीनैरर्वाचीनैश्च सर्वैर्विद्वद्भिरनुमन्यत एवेति नाप्रकाशितं केषामपि शिक्षितानाम्।

यदा कस्यापि शब्दराशेः सौविध्येन ज्ञानं व्याकरणमन्तरा न भवति, तदा—'**सप्तद्वीपा वसुमती, त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्नाः—एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः, वाकोवाक्यम्, इतिहासः, पुराणं, वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः**' इति, '**बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच, नान्तं जगाम**'इति च महाभाष्येण यस्य संस्कृतशब्दराशेर्महाप्रयोगविषयत्वमपरिमितत्वञ्च प्रत्यपादि, तस्य सौविध्येन ज्ञानं व्याकरणमन्तरा न सम्भवतीति किमु वक्तव्यम्।

यद्यप्यस्य संस्कृतशब्दराशेरनायासेन ज्ञानाय नवविधं व्याकरणमस्ति—'**ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्। सारस्वतं चापिशलं शाकलं पाणिनीयकम्॥**' इति श्रीतत्त्वनिधावुक्तेः, 'सोऽयं नवव्याकरणार्थवेत्ता' इति श्रीवाल्मीकीयरामायणे उक्तेश्च। तथापि लौकिकालौकिकसकलशब्दव्युत्पादकत्वात्, समुपनिबद्धत्वात्, संक्षिप्तत्वाच्च पाणिनीयमेव व्याकरणन्तेषु प्रधानमिति नाननुमतं केषामपि सदसद्विवेचकानाममरवाणीप्रणयिनाम्। उक्तञ्च—'**काणादं पाणिनीयञ्च सर्वशास्त्रोपकारकम्।**' इति।

यद्यपि पाणिनीयव्याकरणेऽपि बहवो ग्रन्था विराजन्ते, तथापि तेषु पाणिनिमुनिनिर्मिताया अष्टाध्याय्यास्तद्विवरणस्य पतञ्जलिमुनिप्रणीतस्य महाभाष्यस्य च प्राधान्ये न संशेरते केऽपि समालोचनपरायणाः सचेतसो विद्वांसः।

यद्यपि महाभाष्यस्याप्यनेकाष्टीकाः समुपलभ्यन्ते, तथापि तासु कैयटोपाध्यायविरचितः प्रदीपो नागेशभट्टप्रणीतोद्द्योतेन कियद्विद्योतत इत्यत्र तत्प्रचार एव प्रमाणम्। किन्तु तयोरपि क्वचिद्विवरणीयानामप्यंशानामविवरणात्, क्वचिच्च काठिन्यात् कोमलमतीञ्छात्रान्, अतीक्ष्णबुद्धीरध्यापकांश्चाध्ययनाध्यापनयोः क्लेशमनुभवतोऽवलोकमानेन दयार्द्रहृदयेन निजप्रधानसम्पादकेन मद्वत्सलेन प० **श्रीरामचन्द्र झा** व्याकरणाचार्यमहोदयेन प्रेरितैः काशीस्थचौखम्बासंस्कृतपुस्तकालयाध्यक्षैः संस्कृतभाषोपनिबद्धानामप्रचलितानामपि पुस्तकानाम्प्रकाशनेन संस्कृतानुरागिणां परमुपकारं कुर्वाणैर्गोलोकवासि-श्रेष्ठिप्रवर-**श्रीहरिदासगुप्तात्मजैः श्रीजयकृष्णदासगुप्त**महोदयैः महाभाष्य-प्रदीपोद्द्योतानां टीकां निर्मातुं निवेदितेन मया छाया-विमला-शब्दकौस्तुभादि समीक्ष्य प्रणीतं प्रथमाह्निकस्य तत्त्वालोकं वीक्ष्य संक्षेपणाय वाराणसेयवैयाकरणकेशरिभिराग्रहीतेन तथा निर्मितं द्वितीयाद्याह्निकानां तम्पश्यद्भिर्विद्वद्भिर्नाश्चर्यचकितैर्भूयेतेत्याशासे।

यदा संस्कृतव्याकरणानुरागिणः संस्करणमिदं समापयिष्यन्, तदा प्रस्तुतसंस्करणादपि सुन्दरं संस्करणान्तरं तेषाम्पुरस्तादुपास्थास्यदिति सुदृढो मे विश्वासः।

यथाऽवधानं संशोधितेऽप्यत्र संस्करणे मनुजसुलभेन भ्रमेण जाताऽशुद्धिरवलोक्येत चेत्तर्हि तदपनोदनभारोऽपि विद्वद्भिरेव वहनीय इति सानुनयमभ्यर्थये।

परमपूज्यपादाः कवितार्किकचक्रवर्त्तिमहानुभावप्रभृतयोऽत्र संस्करणे निजसम्मतिं प्रकाशयान्वगृह्णन्निति तेभ्यो भूमिकालेखकेभ्यो विश्वविख्यातवैदुष्येभ्यो महामहोपाध्यायमहोदयेभ्यश्च धन्यवादसन्ततिं सप्रणतिं वितरन्, तत्त्वालोकविषये—

**न कश्चिदपि वञ्चितो जगति दोषलेशैर्विधिर्विधेरपि नरैः कृते किमकलङ्कविध्येषणा।**
**गुणैककलनादराः परिहरन्ति दोषान् परं प्रकाशनपराः खलाः प्रकटयन्ति तानुत्सुकाः॥**

इति निवेदनमेव पर्याप्तं मन्ये।

विजयादशमी
वि० सं० २०११

**श्रीरुद्रधरशर्मणः**

# सम्मतिपत्रम्

## कवितार्किकचक्रवर्ती पण्डितश्रीमहादेवशास्त्री पाण्डेयः

### [ काशीहिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालयाध्यक्षः ]

श्रीरुद्रधरझाशर्मणा विनिर्मिता, क्वचिदतिसरलस्य क्वचिच्चातिकुटिलस्यात एवात्मानं नागराजकृतिं सत्यापयतो वैयाकरणधुरीणैरनवरतं सश्रद्धं समुपास्यमानस्य महाभाष्यस्य व्याख्या तत्त्वालोकनाम्ना समवतीर्णा मया न्यभालि । यत्र–भाष्यस्य, प्रदीपस्य, उद्द्योतस्य च निगूढमैदम्पर्यं सम्यक् पर्यालोचितं, पूर्वैः कृतं व्याख्यानञ्च स्थाने स्थाने चिन्तितम् । विभूष्यवैदुष्यसमलङ्कृतैषा गभीरतरं व्याकरणान्तरदरं प्रविविक्षूणामवश्यं चमत्करिष्यति, अध्यापयतामपि साहाय्य कौतूहलञ्च संवर्द्धयिष्यति, परीक्षार्थिनाञ्च श्रेयसे जागरिष्यतीति विद्वद्भिरादियमाणां, सम्भाव्यमानाञ्चाधिकारिभिरेनां भूयो भूयः प्रशास्ते ।

## पण्डितश्रीसभापतिशर्मोपाध्यायः एम. एल. सी. पदविभूषितः

### काशिक–विरलासंस्कृतमहाविद्यालयाध्यक्षः

### [ उत्तरप्रदेश–विधानपरिषदः सदस्यः ]

श्रीजयकृष्णदासहरिदासगुप्तकाशीसंस्कृतसीरिजग्रन्थमालायामैषमः ( २०११ वैक्रमे ) प्रकाशितं प्रदीपोद्द्योतगम्भीर- टीकोपेतं नवमाह्निकपर्य्यन्तं पातञ्जलमहाभाष्यं तत्रत्यगूढार्थप्रदर्शनप्रयत्नपरायाः नूत्नायास्तत्त्वालोकव्याख्यायाः सहयोगेन विदुषां छात्राणाञ्च सन्तोषं जनयेदिति मन्यते ।

## पण्डितश्रीगणपतिशास्त्री मोकाटे

### [ भूतपूर्व–काशिकराजकीयसंस्कृतकालेजप्रधानाध्यापकः ]

भाष्यप्रदीपोद्द्योतेषु व्याख्यानभूतस्तत्त्वालोक आपाततो मया सकलोऽवलोकितः । तत्रायं विशेषः–अवतरणमुखेन तत्तत्पदानामर्थाभिलापनेन च पङ्क्तिलापनं समीचीनमिति छात्राणां कृते दुरूहोऽप्यर्थो झटिति हृदयङ्गमो भविष्यतीति । अपरश्च विशेष –तत्रेति तदिति तेनेति तच्छब्दार्थप्रदर्शनेन तत्त्वालोक इति नामापि सार्थकमभूदिति, अतो विशेषतो व्याख्याकारमभिनन्दयाम्यहमिति ।

## पण्डितश्रीगोपालशास्त्री नेने

### [ भूतपूर्व–काशिकराजकीयसंस्कृतकालेजाध्यापकः ]

इदं खलु पतञ्जलिप्रणीतव्याकरणमहाभाष्यस्य नवीनं संस्करणं नवमाह्निकान्तमापाततो दृष्टिपथमागतम् । अस्मिन् संस्करणे कैयटकृतप्रदीपं महाभाष्यव्याख्यानभूतन्तद्विवरणं श्रीमन्नागोजीभट्टकृतोद्द्योताभिधञ्च सन्निवेश्य यत्र तत्र महाभाष्यप्रदीपोद्द्योतग्रन्थान् तदसाधारणव्याख्यानात्मकेन तत्त्वालोकेन सनाथीकृत्यास्य संस्करणस्य सर्वाङ्गीणसौन्दर्यमापादितं श्रीमता नवीनविदुषा झोपाख्येन सुगृहीतनामधेयेन रुद्रधरेणेति । एतन्मुद्रणं नवीन-सुन्दरसीसकाक्षरैश्चिक्कणकर्गलेषु प्रवीणाक्षरयोजकद्वाराऽनुरूपाकारं सुमहता प्रयत्नेन सम्पाद्य मुद्रणयन्त्रालयाध्यक्षैः श्रीजयकृष्णदासमहोदयैरल्पतरेण मूल्येन विद्यार्थिजनसुलभतामासादितमिति मन्येऽहमनेन नवीनेन संस्करणेन महानुपकारः संस्कृतविदुषां संस्कृतच्छात्राणाञ्च भवेदिति ।



श्रीमत्पतञ्जलिमुनिविरचितं

# महाभाष्यम्

## प्रदीपोद्द्योततत्त्वालोकैर्विभूषितम्

### प्रथमाध्याये प्रथमपादे प्रथममाह्निकम् ।

**प्रदीपः—**

सर्वाकारं निराकारं विश्वाध्यक्षमतीन्द्रियम् ।
सदसद्रूपतातीतमदृश्यं माययावृतैः ॥ १ ॥

ज्ञानलोचनसंलक्ष्यं नारायणमजं विभुम् ।
प्रणम्य परमात्मानं सर्वविद्याविधायिनम् ॥ २ ॥

पुरुषाः प्रतिपद्यन्ते देवत्वं यदनुग्रहात् ।
सरस्वतीं च तां नत्वा सर्वविद्याधिदेवताम् ॥ ३ ॥

पदवाक्यप्रमाणानां पारं यातस्य धीमतः ।
गुरोर्**महेश्वर**स्यापि कृत्वा चरणवन्दनम् ॥ ४ ॥

महाभाष्यार्णवावारपारीणं विवृतिप्लवम् ।
यथागमं विधास्येऽहं **कैयटो जैयटा**त्मजः ॥ ५ ॥

भाष्याब्धिः **क्वातिगम्भीरः** क्वाहं मन्दमतिस्ततः ।
छात्राणामुपहास्यत्वं यास्यामि पिशुनात्मनाम् ॥ ६ ॥

तथापि हरिबद्धेन सारेण ग्रन्थसेतुना ।
क्रममाणः शनैः पारं तस्य प्राप्तास्मि पङ्गुवत् ॥ ७ ॥

**उद्द्योतः—**

नत्वा साम्बशिवं देवीं वागधिष्ठानिकां गुरून् ।
पाणिन्यादिमुनीन् वन्द्यान् पितरौ च **सतीशिवौ** ॥ १ ॥

**नागेश**भट्टो नागेशभाषितार्थविचक्षणः ।
**हरिदीक्षित**पादाब्जसेवनावाप्तसन्मतिः ॥ २ ॥

याचकानां कल्पतरोररिकक्षहुताशनात् ।
शृङ्गवेरपुराधीशाद्**रामतो** लब्धजीविकः ॥ ३ ॥

नाविस्तीर्णं न विस्तीर्णं मध्यानामपि बोधकृत् ।
भाष्यप्रदीपव्याख्यानं कुर्वेऽहं तु यथामति ॥ ४ ॥

**भाष्यं** व्याचिकीर्षुः शिष्टाचारप्राप्तं मङ्गलं शिष्यशिक्षायै निबध्नाति-**सर्वेति ॥** क्त्वान्तानां पञ्चमश्लोकोत्तरार्धेनान्वयः । **सर्वाकारत्वं** सर्वोपादानकारणत्वान्मृदादिवत् ॥ कार्यातिरिक्तदृश्यस्वरूपाभावाद् **निराकारत्वम् ॥** कर्तृत्वाद् **विश्वाध्यक्षत्वम् । स ऐक्षते**ति श्रुतेः ॥ **अतीन्द्रियत्वं** विगतेन्द्रियत्वेन-**पश्यत्यचक्षुः** इत्यादिश्रुतेः ॥ सर्वप्रत्यक्षीकरणं तु स्वरूपचैतन्येनैव। इन्द्रियाविषयत्वेन वातीन्द्रियत्वम् ॥ त**दसद्रूपता** प्रपञ्चधर्मः । एतच्च **स्त्रिया**मिति सूत्रे वक्ष्यते । तामतीतं द्रहितमित्यर्थः । एवं च सदेवेति भावः ॥ नन्वीदृशमस्माभिः कुतो न गृह्यत इत्यत आह—**अदृश्यमित्यादि ॥ मायया वृतै**रित्यस्य कृत्यमाह—**ज्ञानेति । तत्त्वमस्या**दिमहावाक्यजनिताखण्डाद्वितीयसच्चिदानन्दब्रह्माकारा वृत्तिर्ज्ञानं तदेव लोचनं तेन संप्रेक्ष्यमित्यर्थः । **नारायणमित्यादि ।** सर्वनरसमूहान्तर्यामिणमित्यर्थः ॥ **सर्वविद्याः** वेदरूपाः । तद्विधायिनम् ॥ वचनसंदर्भविशेषरूपे ग्रन्थे समुचितत्वाद्वागधिदेवतां नमति—**पुरुषा इति । देवत्वं** पाण्डित्यम् ॥ संप्रदायशुद्धिं द्योतयन् गुरुं नमति—**पदेति ।** व्याकरणमीमांसातर्काणामित्यर्थः ॥ **धीमतः** ऊहापोहकुशलस्य ॥ **महाभाष्येति ।** व्याख्यातृत्वेऽप्यस्येत्थादिकथनेनान्वाख्यातृत्वादितरभाष्यवैलक्षण्येन महत्त्वम् ॥ अवारपारयोर्भवम् । प्लूयतेऽनेनेति प्लवं सेतुम् ॥ **यथागमम् ।** संप्रदायमनतिलङ्घ्येत्यर्थः ॥ औद्धत्यं परिहरति—**भाष्येति । मयूरव्यंसकादि**समासो रूपकं चेति बोध्यम् ॥ **पिशुनत्वं** दुष्टत्वम् ॥ नन्वेवं कथं प्रवृत्तिरत आह—**तथापिति** । तत्रत्यसारांश एवात्र निबद्ध इति भावः ॥ **शनैरित्य**नेनात्यन्तग्रन्थासंकोचः । **पङ्गुवदि**त्यनेन व्याख्येयांशापरित्यागो व्याख्यानस्याविस्तृतत्वं च बोध्यते ॥

**तत्त्वालोकः—**

नवीननीरदश्यामं रामं राजीवलोचनम् ।
जानकीजानिमानौमि चिदानन्दमयं विभुम् ॥

प्रदीपे—अथ भाष्यं व्याचिख्यासुः कैयटः शिष्टाचारपरम्पराऽनुमित"विघ्नध्वंसकामो मङ्गलमाचरेदि"ति वेदबोधिताभिमतसमयविधेयताकं "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरि"ति वृद्धिसूत्रस्थमहाभाष्यादिस्मृतिसूचित-

सम्पाद्यताकस्य निर्दिष्टदेवादिनमनरूपं मङ्गलं शरीरेप्सितप्रकृतपरिसमाप्तिप्रभृतिपरिपन्थिप्रत्यूहव्यूहविनाशाय विधाय व्याख्यातृश्रोतॄणामनुषङ्गतो सङ्गलाय "शिष्या अप्येवं सम्पादयेयुरि"ति शिक्षणाय च प्रदीपे समुचितक्रमेण सर्वप्रथमं व्याख्यातारौ तावद् निबध्नाति-**सर्वाकारमिति**—सर्वे आकाराः ( स्वरूपाणि ) यस्येति, सर्वेषाम् आकारः ( उपादानकारणम् ) इति वा व्युत्पत्तिः । **निराकारमिति**-निर्गता आकारा यस्मादिति, आकारेभ्यो निष्क्रान्त इति वा विग्रहः । **विश्वाध्यक्षमिति**-विश्वस्य अध्यक्षः ( सञ्चालकः ) इति व्युत्पत्तिः । केचित्तु विश्वम् अध्यक्षं ( प्रत्यक्षं ) यस्येति विगृह्णन्ति तन्न, तथा सति योगिषु विश्वाध्यक्षताप्रसक्तेः । तेषामपि योगजसन्निकर्षेण सकलविश्वप्रत्यक्षसत्त्वात् ॥ परमात्मनो जगत्कारणत्वेऽपि न मायासादृश्यमिति सूचनायाह-**सदसद्रूपतेति ।** आरोपितसत्त्ववास्तविकासत्त्ववत्त्वेत्यर्थः । अनिर्वचनीयतेति फलितार्थः । सर्वेषां परमात्मा नादृश्य इति सूचनायाह-**माययावृतैरिति ।** अस्य पूर्वोक्तेनान्वयिता । तथा च चेतनस्वप्रकाशपरमात्मनो जडतमोरूपमायाऽऽवृतत्वादेवादृश्यता, अत एव च ब्रह्माकाराकारितान्तःकरणवृत्त्या ( नयनेन ) मायाऽऽवरणनाशपूर्वकं परमात्मनः साक्षात्करणीयताऽपि समुपपद्यते इति भावः । **नारायणमिति**—नारं ( नराणां समूहः ) अयनं ( स्थानं ) यस्येति विग्रहः । **अजम्**-जन्मरहितम् । **ताम्**-प्रसिद्धाम् । **पारम्**-अशेषाशयम् । **यातस्य**-अवगन्तुः । **अपि**-च । अभिधेयं प्रतिज्ञातुमाह-**महाभाष्येति ।** अवारञ्च पारञ्च अवारपारे, तयोर्भवः अवारपारीणः ( राष्ट्रावारपाराद्घखाविति खप्रत्ययः )। महद् भाष्यम् महाभाष्यम्, तदेव अर्णवः ( समुद्रः ) महाभाष्यार्णवः, तस्य अवारपारीणः महाभाष्यार्णवावारपारीण इति व्युत्पत्तिः । यथा रामस्य गुरुकुलमित्यत्र रामं विनैव तत्सम्बन्धिनोऽपि गुरोः कुलेन समासः, तथाऽत्र विहितं खप्रत्ययं विनैव तदन्वयिभ्यामपि अवारपाराभ्यां महाभाष्यार्णवस्य समासः । **विवृतिप्लवमिति**-विवृतिरेव प्लवः ( सेतुः ) इति व्युत्पत्तिः । उभयत्र रूपकं बोध्यम् ॥

**भाष्येति**-भाष्यमेव अब्धिरिति विग्रहः । **क्वेति**-भाष्यस्य मम च मध्ये महदन्तरमिति भावः । **ग्रन्थसेतुनेति**-ग्रन्थ एव सेतुरिति व्युत्पत्तिः ।

उद्योते—**नत्वेति ।** अहं नागेशभट्टः साम्बशिवादीन् नत्वा पातञ्जलभाष्यप्रदीपव्याख्यानं यथामति कुर्वे इत्यन्वयः । नमधात्वर्थः—स्वावधिकोत्कृष्टत्वप्रकारकज्ञानपूर्वकः करशिरःसंयोगानुकूलव्यापारः । क्त्वार्थ उत्तरकालीनता । द्वितीयार्थो विषयिता । **वागधिष्ठानिकाम्**-वागधिष्ठात्रीं ( सरस्वतीम् ) **गुरून्**-गायत्रीविद्यादीक्षागुरून् । अत्राभ्यर्हितमुनिनमनात्पूर्वं गुरुनतेरयुक्ततया गुरुपदं जगद्गुरुपरं सत् मुनिविशेषणमिति व्याख्यानं न युक्तम्, "नास्ति तत्त्वं गुरोः परमि"ति वचनेन सर्वतो गुरूणामभ्यर्हितत्वबोधनात् । **पितरौ**-मातापितरौ । **चः** सकलपूज्यसमुच्चयार्थः । ख्यात्यै स्वनामाप्याह-**नागेशेति** । नन्वेवं तस्य दोषः, "आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्जेष्ठापत्यकलत्रयोः॥" इति स्मृतेः सत्त्वादिति चेन्न, तत्र न गृह्णीयादित्यस्य नोच्चारयेदित्यर्थेन तेषां लेखने दोषाभावात् ॥ भाष्यप्रदीपव्याख्यानसम्पादनयोग्यतासूचनायाह-**नागेशभाषितेति ।** पतञ्जलिभाषितभाष्याद्याशयविज्ञ इत्यर्थः । कृतज्ञतां प्रकाशयितुमाह-**हरिदीक्षितेति ।** सिद्धान्तार्थप्रतिपादनोपयोगिबुद्धिस्थैर्यबोधनायाह-**याचकानामिति ।** पद्येनानेन रामसिंहवर्मणि क्रमशो दानवीरता युद्धशूरता तदुभयसाधिका लक्ष्मीर्विद्या च सूचिता । **कक्षं**-शुष्ककाननम् । निजव्याख्यानोपादेयतासूचनायाह-**नाविस्तीर्णमिति ।** अभिधेयं प्रतिजानीते-**भाष्यप्रदीपेति ।** भाष्यञ्च प्रदीपश्च भाष्यप्रदीपौ, तयोः व्याख्यानमिति व्युत्पत्तिः । तुना प्राचीनव्याख्यातृविलक्षणता सूचिता । अभिधेयविषयकाज्ञानसंशयानुकरणादीनां निरासायाह-**यथामतीति ।**

**क्त्वान्तानां**-प्रणम्येत्यादिक्त्वान्तपदानामित्यर्थः । अत्र नप इत्युक्त्यैव निर्वाहे सत्यपि स्वेष्टदेवादिनमनस्य ग्रन्थारम्भपूर्वकालावश्यविधेयत्वसूचनाय क्त्वाप्रत्ययोक्तिः । **उत्तरार्द्धेनेति**-"व्याकरणं विधास्येऽहमि"ति पञ्चमश्लोकोत्तरार्द्धवाक्यार्थघटकप्रधानविधानक्रियेत्यर्थः । अविरोधाय मतान्तरमनुपेक्ष्य वास्तवाद्वैतमतेनाह-**सर्वोपादानेति** । "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ती"ति श्रुत्या परमात्मनः सर्वविवर्त्तोपादानकारणत्वादित्यर्थः । **मृदादिवदिति**-यथा स्वपरिणामत्वात् स्वस्वरूपभूतानां घटादीनामुपादानकारणानि मृदादयः, तथा स्वविवर्त्तत्वात् स्वस्वरूपभूतानां घटादीनामुपादानकारणं परमात्मेति भावः । परमात्मनो घटादिकार्यातिरिक्तस्य संस्कृतान्तःकरणगोचरस्वरूपस्य सत्त्वादाह-**दृश्येति ।** बहिरिन्द्रियबोध्येत्यर्थः । अत्रापि मृदादिवदिति दृष्टान्तः सम्बध्यते, किन्तूपपद्यते वैधर्म्येण, तथा हि—यथा मृदादीनां घटादिकार्यातिरिक्तं बहिरिन्द्रियगोचरं स्वरूपं वर्त्तते, तथा परमात्मनो घटादिकार्यातिरिक्तं बहिरिन्द्रियवेद्यं स्वरूपं नास्तीति भावः । **कर्तृत्वादिति**-विश्वस्येत्यादिः । **ऐक्षततेति**-विश्वरचनाय पर्यालोचनमकरोत्परमात्मेत्यर्थः । इन्द्रियाणिपचत्वेनादृश्यत्वस्योपपादयिषितया अतीन्द्रियत्वोपपादनाय प्रकारान्तरमाह-**विगतेन्द्रियत्वेनेति । अचक्षुः**-चक्षुरिन्द्रियरहितः । नन्वेवं "स ऐक्षते"ति श्रुतिविरोध इत्यत आह-**सर्वप्रत्यक्षीति ।** परमात्मा स्वरूपचैतन्येनैव विश्वं साक्षात्करोति न तु मादृशवदिन्द्रियेणेति भावः । "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहे"ति श्रुत्यनुरोधेन दिनिगमनाया अभावादाह-**इन्द्रियेति ।** तथा च नञो दुरर्थकत्वाद् दृशो ज्ञानार्थकत्वाच्च दुर्ज्ञेयत्वपरतया अदृश्यत्वमुपपाद्यमित्याशयः । **संसारः** स्वाधिष्ठानब्रह्मगतसत्त्वेन स्वस्मिन्नारोपितेन सन्निवभाति, वस्तुतोऽसत्त्वेनेत्याशयेनाह-**प्रपञ्चेति । तद्विधायिनम्**-यत्तं विना वेदाविर्भावकम् । सकलेन्द्रादिसाधारणदेवत्वस्याप्रापणादाह-**पाण्डित्यमिति । गुरुमिति**-अत्रैकवचनेन एकस्मादेव गुरोः विद्यालाभः सूचितः । व्याकरणादिशास्त्रार्थावगन्तृत्वादेव धीमत्त्वे सूचिते पुनरुक्तिपरिहाराय धीमत इति व्याचष्टे-**ऊहेति । ऊहः**-अज्ञातोपादेयांशस्फुरणम् । **अपोहः**-ज्ञातहेयांशत्यागः ।

**व्याख्यातृत्वेऽपीति**-व्याख्यानभूतत्वेऽपीत्यर्थः । भाष्यस्य व्याख्यानकर्तृत्वाभावात् यथाश्रुतानुपपत्त्या लक्षणायाः ( गौण्या वृत्त्याः ) आश्रयणात् । एवम् 'अन्वाख्यातृत्वादि'त्यादावपि बोध्यम् । **अस्य**-प्रकृतभाष्यस्य । **इष्ट्यादीति**-आदिना उपसंख्यान-वाच्य-वक्तव्यादिसंग्रहः । **अन्वाख्यातृत्वात्**-पाणिनीयसूत्राविरुद्धविवरणत्वात् । **इति**-इति हेतोः । प्रकृते वेदान्तक्रमणकथनस्यानुपयोगित्वादाह-**सम्प्रदायमिति ।** अविच्छिन्नगुरुपरम्परामित्यर्थः ।

**रूपकमिति**-अस्य "विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यदि"ति लक्षणम् । अतः प्रकृते उपमानोपमेययोरभेदेन कथनाद् रूपकम् । "पिशुनौ खलसूचकावि"त्यमरकोशतः पिशुनशब्दस्य तदुभयवाचकत्वेऽपि सूचकत्वस्य प्रकृतानुपयोगित्वादाह-**दुष्टत्वमिति । एवम्**-उपहाससंभवे । **तत्रत्येति** - हरिनिबन्धस्थेत्यर्थः । **अत्र**-प्रदीपे । **भावः**-सारशब्दस्वारस्यप्रतीयमान आशयः । **बोध्यते इति**-यथा पङ्गुः लघुपदन्यासैः प्रायः समं पन्थानं स्पृशन्नेव गम्यं गच्छति, तथाऽहं लघुपदन्यासैः प्रायः सकलं कठिनविषयं विवेचयन्नेव महाभाष्यं व्याख्यास्यामीति भावः

**( शास्त्रारम्भप्रतिज्ञाभाष्यम् )**

**अथ शब्दानुशासनम् ॥**

**अथेत्ययं शब्दोऽधिकारार्थः प्रयुज्यते। शब्दानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् ॥**

**( प्रदीपः )** भाष्यकारो विवरणकारत्वाद् व्याकरणस्य साक्षात्प्रयोजनमाह—अथ शब्दानुशासनमिति। प्रयोजनप्रयोजनानि तु रक्षोहादीनि प्रदर्शयिष्यति॥ स्ववाक्यं व्याख्यातुं तदवयवमथशब्दं तावद् व्याचष्टे—**अथेत्ययमिति।** इतिशब्दोऽथशब्दस्य स्वरूपावस्थापनाय प्रयुक्तः। एवं हि पदान्तरैः सामानाधिकरण्येन तदन्वये सत्यथशब्दो व्याख्यातुं शक्यते। स्वरूपावस्थितश्च सर्वनाम्ना परामृश्यते—अयमिति। **शब्द इति** स्वरूपकथनं विस्पष्टप्रतिपत्त्यर्थम्॥ **अधिकारार्थ इति।** अधिकारः प्रस्तावो द्योत्यो नान्यत् प्रयोजनमित्यर्थः। निपातानां च द्योतकत्वं वाक्यपदीये निर्णीतम्॥ अथशब्दस्याधिकारार्थत्वे यो वाक्यार्थः संपद्यते तं दर्शयति—**शब्दानुशासनमिति।** अनेकक्रियाविषयस्यापि शब्दानुशासनस्य प्रारभ्यमाणताऽथशब्दसन्निधानेन प्रतीयते। व्याकरणस्य चेदमन्वर्थं नाम—शब्दानुशासनमिति। अत्र चाचार्यस्य कर्तुः प्रयोजनाभावादनुपादानादुभयप्राप्त्यभावा**न्नोभयप्राप्तौ कर्मणी**त्यनेन षष्ठी, अपि तु **कर्तृकर्मणोः कृती**त्यनेनेति **कर्मणि चेति** समासप्रतिषेधाप्रसङ्गादिध्मप्रव्रश्चनादिवत्समासः॥

**( उद्द्योतः )** यद्यपि पाणिनिना **"ब्राह्मणेन निष्कारणः"** इत्यादिश्रुतेः संध्योपासनादाविव प्रत्यवायपरिहारार्थितयैवोत्तमाधिकारिप्रवृत्तिसंभवात् प्रयोजनं नोक्तम्। वार्तिककृतापि **'शास्त्रपूर्वके प्रयोगे धर्मः'** इत्यनेन मध्यमाधिकारिणः परमप्रयोजनं दर्शितम्। तथापि भगवान् विवरणकारस्तु मन्दाधिकारिणां प्रवृत्तेः प्ररोचकप्रयोजनप्रतिपादनप्रवणत्वाद्ब्रह्महितेषु स्वर्गापूर्वादिष्वनाश्वासात्साक्षात्प्रयोजनं शब्दव्युत्पत्तिलक्षणं वदतीत्याह—**भाष्यकार इति।** तत्र शब्दज्ञानरूपे प्रयोजने उक्ते विषयोऽप्युक्त एव। शास्त्रजन्यज्ञानविषयस्यैव शास्त्रविषयत्वादिति बोध्यम्। तज्जिज्ञासुरधिकारी, प्रतिपाद्यप्रतिपादकभावः संबन्ध इति अर्थादेव लब्धम्॥ ननु **कानि पुन**रित्यादिना प्रयोजनानि वक्ष्यति। तेन पौनरुक्त्यमत आह—**साक्षादिति।** तदेवाह—**प्रयोजनप्रयोजनानीति। व्याख्यातुमि**त्यस्य शब्दानुशासनमित्यादिनेति शेषः॥ **तावत्** प्रथमम्। **व्याचष्टे इति।** पदार्थज्ञानाद्यानन्तर्याद्यर्थकत्वनिरासाय चेति शेषः। भाष्यत्वादेव च स्ववाक्यव्याख्यानमिति भावः। नन्वितिं विनाप्यथशब्दस्याभिधानार्थं इत्येवोच्यतामत आह—**एवं हीति। पदान्तरैः** शब्दपदाधिकारार्थपदप्रयुज्यतइतिपदैः॥ **व्याख्यातुमिति।** अधिकारार्थत्वेनेति शेषः॥ अथेतिशब्दोऽधिकारार्थ इत्युक्ते आनन्तर्याद्यर्थकत्वमप्रमाणमिति भ्रमः स्यादतो **ऽयमिति** भाष्ये। योऽयमस्मिन् वाक्ये स इत्यर्थः॥ **विस्पष्टेति। नवेती**त्याद्यर्थपरताया दर्शनेन तथा भ्रमं निवर्तयितुमित्यर्थः॥ ननु निपातानां द्योतकत्वादभिधेयवाच्यर्थशब्दोऽनुपपन्नोऽत आह—**अधिकार इति॥ प्रस्ताव इति।** प्रारम्भ इत्यर्थः॥ स चार्थो व्याख्यायमानस्य। अर्थशब्दः प्रयोजनवाचीति भावः॥ **निपातानां च द्योतकत्वमिति।** निपातानां द्योतकत्वं चेत्यर्थः। उपसर्गातिरिक्तनिपातानां द्योतकत्ववाचकत्वोभयस्वीकारस्या**व्ययमित्यादिभक्ती**ति सूत्रे भाष्ये स्पष्टत्वात्। उपसर्गाणां तु द्योतकत्वमेवेति स्पष्टं **गतिर्गता**विति सूत्रे भाष्ये इति तत्रैव निरूपयिष्यामः। अत एव साक्षात्क्रियते गुरुरित्यादि संगच्छते। प्रारम्भक्रियाविषयत्वद्योतकस्यापि अथशब्दस्य न्यायेन नीयमानदध्यादिवन्मङ्गलत्वमपीत्युभयार्थमथशब्दः प्रयुज्यत इति फलितम्॥ परे त्वत्र **वाचकत्वमे**वेच्छन्ति। अधिकृतमिति च तदर्थं वदन्ति॥ भाष्ये **प्रयुज्यत** इत्यनेन वर्तमाननिर्देशेन सर्वलोकसिद्धमस्याधिकारार्थत्वं न तु वृद्ध्यादिवत्पारिभाषिकमिति ध्वनितम्॥ ननु विवरणेऽधिकृतमित्यधिकं वाचकपदाभावात् द्योतकतानुपपत्तिश्चेत्यत आह—**अनेकेति।** उच्यते श्रूयते क्रियते इति॥ **प्रतीयत इति।** एतावतैव द्योतकत्वमिति भावः॥ ननु भावसाधनस्यानुशासनपदस्य शास्त्रपदेन सामानाधिकरण्यमनुपपन्नमत आह—**व्याकरणस्य चेति।** अन्वर्थत्वात्प्रयोजनाभिधानोपपत्तिः। अनुशिष्यन्तेऽसाधुशब्देभ्यो विविच्य ज्ञाप्यन्तेऽनेनेति करणल्युडन्ततया शास्त्रपदेन सामानाधिकरण्यमिति भावः॥ इदमेव ध्वनयितुं भाष्ये नामपदोपादानम्॥ नामनामिनोरभेदान्नाम शास्त्रमिति सामानाधिकरण्यम्॥ अनेनैवापभ्रंशानामविषयत्वं सूचितं ध्वनीनां च॥ **केषामिति** प्रश्नस्तु किं लौकिकमात्रविषयं शाकटायनादिशास्त्रमधिकृतम्, उत वैदिकमात्रविषयं प्रातिशाख्यम्' इतीति परे॥ ननु **कर्मणि चेति** निषेधात्कथं कर्मषष्ठ्यन्तेन समासोऽत आह—**अत्र चाचार्यस्येति।** उभयोरुपादान एवोभयप्राप्तिरित्या**क्रममाने** इति सूत्रे भाष्ये स्पष्टम्॥ **कर्तृकर्मणो**रिति षष्ठ्यामपि समासनिषेधः कुतो नेत्यत आह—**इध्मेति।** चस्येवार्थकतया कर्मणीत्युच्चार्य विहितषष्ठ्या एव समासनिषेध इति भावः॥ भाष्ये **शास्त्र**मित्यस्य कर्तव्यत्वेनेति शेषः। विवरणकारत्वाद् व्याख्यातव्यत्वेनेति शेष उचित इत्यन्ये॥ शास्त्रत्वं चास्य साधुत्वरूपैकप्रयोजनसंबद्धत्वाद्बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये-**अथ शब्देति**-अत्र प्रारभ्यमिति क्रियाबोधकाथशब्दानुपादाने काञ्चित्क्रियामादायैव बोधस्य सम्पादनीयतया समाप्तमित्यादिक्रियामध्याहृत्य शब्दानुशासनं समाप्तमित्यादिभ्रमात्मकबोधेन साधुशब्दजिज्ञासवोऽपि निवर्तेरन्नित्यापत्तिर्बोध्या। व्याख्येयभाष्यमभिधाय व्याख्यानभाष्यमाह-**अथेत्ययमिति।** अत्र शब्दशब्दविशेषणत्वादिदमः पुंलिङ्गता। ननु मङ्गलार्थताया अपि सम्भवात्केवलम् अधिकारार्थ इति कथनमनुचितमत आह-**प्रयुज्यते इति।** तथा चान्यार्थमेव नीयमानानां पूर्णकलशादीनामिव अधिकारार्थमेव प्रयुज्यमानस्याथशब्दस्यापि मङ्गलार्थतेति भावः। **वेदितव्यमिति**-तादृशजिज्ञासुभिरिति शेषः। प्रकृतशास्त्रारम्भप्रतिज्ञाख्यापनायास्यैवाध्याहारो युक्तः, न तु भवतीत्यादेरिति बोध्यम्। तथा च साधुशब्दज्ञापनाय शब्दानुशासनसंज्ञकं व्याकरणशास्त्रं व्याख्येयतया प्रारब्धं बोध्यं जिज्ञासुभिरिति फलितार्थः॥

प्रदीपे—**विवरणेति**-विवरणत्वञ्च स्वप्रतिपाद्यार्थप्रतिपादकत्वम्। **साक्षात्प्रयोजनमाहेति**-व्याकरणाध्ययने जिज्ञासूनाम्प्रवृत्तये तस्य साक्षात्प्रयोजनं साधुशब्दज्ञानरूपं कथयन् शब्दशास्त्रारम्भप्रतिज्ञां वदतीत्यर्थः। तत्र साक्षात्त्वञ्च अव्यवधानेन जायमानत्वम्। प्रतिज्ञा च अव्यवहितोत्तरसमयविधेयत्वप्रकारकबोधानुकूलशब्दप्रयोगरूपो व्यापारः॥ **प्रयोजनेति**-व्याकरणाध्ययनसाक्षात्प्रयोजनेत्यर्थः। **स्ववाक्यम्**-अथ शब्दानुशासनमित्याकारकम्। **तदवयवम्**-तद्वाक्यैकदेशम्। **प्रयुक्त इति**-तेनात्रेति शब्दे प्रकारप्रभृतिहेतुसमाप्त्याद्यन्यतमार्थकत्वस्य पदार्थविपर्यासकत्वस्य च न प्रसक्तिः। **एवं हि**-यतोऽथशब्दस्य (इति शब्दसमभिव्याहारात्) स्वरूपपरत्वे सति। **च**-तु। **अस्य**-अथशब्दस्य। **इत्यर्थ इति**-अत एवाधिकारार्थ इत्यत्राधिकारः ( प्रारम्भः ) अर्थः ( प्रयोजनं ) यस्येति व्युत्पत्तिः। **निर्णीतमिति**-अनेनात्राथशब्दस्य प्रारम्भवाचकतैव कुतो नेति शङ्का निरस्ता। **तमिति**-तस्मिन्नेव शब्दानुशासनपदार्थं कथयन्निति शेषः। **प्रारभ्यमाणता**-प्रारब्धता, "वर्तमानसामीप्ये वर्तमानवद्वे"ति भूते लट्। किमिदमिति जिज्ञासायामाह-**शब्देति। अत्र**-( शब्दानामनुशासनं ) शब्दानुशासनमित्यत्र। **आचार्यस्य**-पाणिनेः। **कर्तुः**-शब्दकर्मकानुशासन( व्याकरण )विधातुः। **प्रयोजनाभावादि**-

ति-प्रयुज्यतेऽनेनेति प्रयोजनं ( फलं ) तदभावात्, कर्तृप्रयोग-करणफलाभावादित्यर्थः । यद्यप्यत्र कर्तुपाणिनस्य शाकटायनेन्द्रा-दिभिन्नव्याकरणकार्यव्यावृत्तिरूपं फलमस्ति, तथापि ( शब्दाना-मिदमनुशासनं न त्वन्येषाम् ) इति वाक्यस्यार्थनिवृत्तिपरत्वात् कर्तृविशेषनिवृत्तिपरत्वाभावाच्च तन्नोऽपि कर्तुरविवक्षयाऽनुपादान-मिति भावः । **उभयप्राप्त्यभावादिति**-उभयस्मिन् ( कर्तृकर्मणोः ) प्राप्तिः ( षष्ठीप्राप्तिः ) उभयप्राप्तिस्तदभावादित्यर्थः । **इध्मेति**-इध्म-स्य प्रव्रश्चन इति विग्रहः ।

उद्द्योते-**इत्यादीति**-आदिना ( धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च इति संगृह्यते । **श्रुतेरिति**-व्याकरणस्य वेदाङ्गत्वात्तदध्ययने वेदाध्य-यने इव नित्यतया प्राप्ते इति शेषः । **एवेन** फलार्थितानिरासः । **नोक्तमिति**-अत एव "तस्माद्विज्ञायमानत्वान्नोक्तं शास्त्रकृता स्व-यम् । शास्त्रेण सर्वशब्दानामन्वाख्यानप्रयोजनम् ॥" इति भट्टोक्तिः । **अपि**-तु । **परमप्रयोजनमिति**-परम्परया प्रयोजनमित्यर्थः । परम-पदस्य पार्यन्तिकार्थकत्वात् । **भगवान्**-पतञ्जलिः । **विवरण-कारत्वादिति**-अस्य साक्षात्प्रयोजनं वक्तीत्यनेन सम्बन्धः । विवरण-कारस्य मूलानुक्तावश्यकविषयप्रतिपादकताया औचित्याद् भाष्य-कारस्य पाणिनिकात्यायनानुक्तस्यापि व्याकरणाध्ययनसाक्षात्प्रयो-जनस्य कथनं सङ्गतमेवेति भावः ॥ ननु-आचार्यादीनाम् ( इमे व्या-करणाध्ययने प्रवर्त्तन्तामिति ) अभिप्राये ज्ञाते आप्ता एते हितकारिणो-ऽस्मानत्र प्रवर्त्तयन्तीति अवश्यमेवैतद् अस्मत्साध्यं कल्याणकरञ्च भवे-दित्यनुमायैवात्र जिज्ञासवः प्रवर्त्तेरन् । आह च-"हितकारिभिरेवासौ[1] ज्ञायमानः प्रयोजकः[2] । कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयो-जकः[3] ॥" इति । तथा चात्र प्रयोजनकथनं नावश्यकम् । अत एव शब्दकौस्तुभे आदौ व्याकरणस्य विषयं ( साधुशब्दं ) प्रति-पाद्य ततस्तदध्ययनस्य रक्षोहादीनां प्रयोजनानां निरूपणे ततश्च किमिदमित्यादिना अधिकारिनिर्वचने प्रसङ्गसङ्गतिरपि भवतो-त्याशयेन "प्रेक्षावत्प्रवृत्तये व्याकरणस्य विषयं भगवान् भाष्यकारः प्रादर्शयदथ शब्दानुशासनमिति" इति लिखितमिति चेन्न, प्रवृत्तिम्प्रति इष्टसाधनताज्ञानं कृतिसाध्यताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानञ्च कारणम् । एवञ्च केषुचिद् जिज्ञासुषु तादृशाप्ताभिप्रायज्ञानोत्तरं सा-मान्यत इष्टसाधनत्वाद्यनुमित्या तत्र प्रवृत्तिष्वपि केषाञ्चिन्मन्दजिज्ञा-सूनां तदातत्वसंशयवतां विशेषेणेष्टसाधनत्वादिज्ञानमन्तरा प्रवृत्तेर-नुपपत्तौ तद्वारणायात्र प्रयोजनकथनस्यावश्यकत्वात् । अत एव "अथातो ब्रह्मजिज्ञासे"त्यादौ प्रयोजनं निरूपितमित्याशयेनाह-**मन्देति । प्ररोचकप्रयोजनप्रतिपत्तिप्रवणत्वात्**-इष्टफलज्ञानार्थी-नत्वात् । अथ यथा विश्वजिता यजेतेत्यत्र फलानुपदेशे स्वर्गफलकल्प-ना, तथाऽत्रापि स्यादित्यत आह-**व्यवहितेष्विति ।** व्यवहितफले-ष्वित्यर्थः । अस्मिन् स्वर्गादिते व्यवहितानि ( पश्चाद्भावीनि ) **चेमानि** फलानीति, तथा अपूर्वाद्यन्विते व्यवहितानि फलानि येषा-मिति व्युत्पत्तिः । अथवा स्वर्गे साक्षाद्, अपूर्वे च व्यवहितफलकत्वेन **व्यवहितत्वस्य** सत्त्वादुपपत्तिः । अपूर्वादीति-व्यवहितपूर्वकालजातकर्म-णोऽपि व्यवहितपरकालभावि सुखं दुःखं वा प्रतिकार्यव्यवहित-पूर्वक्षणवृत्तित्वघटितकारणताया उपपादनाय कल्पितं कर्मजन्यं कर्मफलमध्यस्थायि कर्मव्यापाररूपं केचिदपूर्वशब्देन केचिच्च पुण्यपाप-शब्देन व्यवहरन्तीति बोध्यम् । **अनाश्वासात्**-अविश्वासात् । **शब्द-व्युत्पत्तिलक्षणं**-( प्रकृतिप्रत्ययविभागज्ञानपूर्वकं ) साधुशब्दज्ञानरू-पम् । न्यूनतां निराकरोति-**तत्रेति ।** प्रयोजनादीनां मध्ये महाभा-ष्यवाक्ये वेत्यर्थः । **शब्देति**-साधुशब्देत्यर्थः । **विषयः**-साधुश-ब्दरूपः । **उक्त इति**-स्वाध्यायोऽध्येतव्य इत्यत्रैवेति भावः । **ज्ञानेति**-साधुशब्दज्ञानेत्यर्थः । **शास्त्रविषयत्वादिति**-शास्त्रघटकत्वा-च्चेत्यपि समूहनीयम् । **तज्जिज्ञासुः**-साधुशब्दजिज्ञासुः । **इति**-इति तु । **अर्थात्**-अर्थापत्तिप्रमाणात् । **लब्धमिति**-एतावता अ-नुबन्धचतुष्टयं सूचितम् । तत्रानुबन्धत्वञ्च अध्ययनविषयकप्रवृत्ति-प्रयोजकज्ञानजनकज्ञानविषयत्वम् । **तदेवाहेति**-साक्षात्पदोपादानफल-मेवाहेत्यर्थः । साक्षात्प्रयोजनस्य किं प्रयोजनमित्याकाङ्क्षायामिति शेषः । साधुशब्दज्ञानस्य व्याकरणाध्ययनसाक्षात्प्रयोजनत्वे सत्येव तत्साध्यरक्षोहादीनां प्रयोजनप्रयोजनतोपपद्यते इति भावः । **पदार्थ-ज्ञानाय**-अथपदार्थबोधाय । वाक्यार्थबोधम्प्रति पदार्थज्ञानस्य का-रणत्वादिति भावः । नन्वथपदार्थतया अनन्तरादिः प्रसिद्ध एवात आह-**आनन्तर्याद्यर्थकत्वेति ।** आदिना "मङ्गलानन्तरारम्भप्रश्न-कार्त्स्न्येष्वथो अथ" इति कोशोक्तप्रश्नकार्त्स्न्यसंग्रहः । तथा च अत्रा-थशब्द आनन्तर्यार्थः ? प्रश्नार्थो वा ? कार्त्स्न्यार्थो वा ? आद्ये कथिता-नन्तर्यार्थः ? अकथितानन्तर्यार्थो वा ? शास्त्रविषयजिज्ञासानन्तर्यार्थो वा ? वेदाध्ययनानन्तर्यार्थो वा ? नाद्यः, प्राक्कस्यचिदकथनात् । न द्वितीयः, तथा सति अव्यवस्थापातात् । न तृतीयः, शास्त्रविषयजिज्ञा-सानन्तर्यस्य शास्त्रविषयादिकथनेनैव सूचनात्, तथा सति पुनरुक्ति-प्रसक्तेः । न चतुर्थः, वेदाङ्गव्याकरणाध्ययने वेदाध्ययनसमकालि-कताबोधिकाया "अनध्यायेष्वङ्गान्यधीयीत" इत्यादिस्मृतेः विरोधात्, अनधीतवेदस्यापि साधुशब्दज्ञानाय व्याकरणाध्ययने प्रवृत्तिसम्भ-वाच्च । न प्रश्नार्थः, कोऽयमनन्तरानिर्वचनात् । न कार्त्स्न्यार्थः, तथा सति सर्वेषां शब्दानामिति वक्तव्ये "केषां शब्दानाम्" इत्यग्रिमकथनस्या-युक्ततापत्तेरिति **क्रमेणात्राथशब्दस्यानन्तर्याद्यर्थकत्वनिरासो** बोध्यः ॥ **भाष्यत्वादेवेति**-"सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः । स्वप-दानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥" इति भाष्यलक्षणल-क्षितभाष्यत्वादेवेत्यर्थः । अनेन भाष्यं द्विविधं व्याख्येयव्याख्यान-भेदादिति सूचितम् ॥ **स्ववाक्येति**-अथ शब्दानुशासनमिति वाक्ये-त्यर्थः । **इत्येवेति**-एवेन अयमित्यस्य व्युदासः । अथाधिकारार्थ इति, 'अथ' शब्दोऽधिकारार्थ इति चोक्ते अनन्तरं कश्चिच्छब्दोऽधिकारार्थ इत्यादिप्रमितेरापत्तिः । केचित्तु वापक्षे "अन्योऽयं वाऽथशब्दोऽधि-कारार्थः" इति संशय आपद्येतेति वदन्तीत्याशयेनाह-**अथेतीति । आनन्तर्येति**-कश्चिद् अथशब्दस्येत्यादिः । **भ्राम्येदिति**-कश्चिद् अथ-शब्दस्यानन्तर्यार्थकत्वप्रमापककोशव्यवहारादिसत्त्वे केवलमधिका-रार्थकत्वकथनमसङ्गतमिति वा भ्राम्येदित्यपि बोध्यम् । **योऽयमिति**-योऽयम् अथ शब्दः "अथ शब्दानुशासनमि"ति वाक्ये प्रयुक्त ( इति पदेन स्वरूपेऽवस्थापितश्च ) स इत्यर्थः । तेन तदवयवमिति **कैयटः** सङ्गच्छते । **न वेतीत्यादौ**-न वेति विभाषेत्यादौ । इतिपदसमभिव्या-हृतनवाशब्दस्येति शेषः । **तथा भ्रमम्**-अत्रापीतिशब्दसमभिव्याहृताथ-शब्दस्य भाविनम् अर्थपरत्वभ्रमम् । स्तुतिप्रतिपादनयोः भ्रमनिरा-साय प्रस्तावपदार्थमाह-**प्रारम्भ इति । स चार्थाविति**-प्रारम्भश्चार्था-पत्तिप्रमाणाद् व्याख्येयस्य ( व्याकरणस्य ) इत्यर्थः । अथ शब्दानुशा-सनमिति कथनात् । **अर्थशब्द इति**-अधिकारार्थ इत्यत्रेत्यादिः । प्रकृताविरोधिसिद्धान्तसामञ्जस्याय चस्य व्युत्क्रमं विधायाह-**निपाता-नामिति ।** प्रादिभिश्चादीनामित्यर्थः । तेन चेन वाचकतायाः समुच्च-यादाह-**उपसर्गेति । उभयस्वीकारस्येति**-नन्वेवं "चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः । क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥ तयो-रर्थाभिधाने हि व्यापारो नैव विद्यते । यदर्थद्योतको तौ तु वाचकः स

१. **असौ**-प्रयोजनपदार्थः । २. **प्रयोजक इति** ३. **अप्रयोजक इति च**-प्रवृत्तेरित्यादिः ।

वेचार्यते ॥" इति भट्टोक्तिः, "द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।" इति कारिका च विरुद्ध्येतेति चेन्न, तयोः बहूनां चादीनां द्योतकतेत्यभिप्रायकत्वात् । चाप्यर्द्धजरतीयनापत्तेरुभयं न स्वीकार्यम्, क्वचिदर्थादौ द्योतकता, क्वचिन्निरर्थके द्वारा द्योतकतेत्येवमर्धजरतीयतया द्योतकतामात्रवादिमतेऽपि दुर्वारत्वात् । न च निपातानां वाचकत्वे शोभनः समुच्चय इत्यर्थे शोभनश्चेति, तथा घटस्य समुच्चय इत्यर्थे घटस्य चेति समापद्येतेति वाच्यम्, शब्दशक्तिस्वभावात् निपातानां नित्यपरतन्त्रतया तत्र विशेषणयोगस्य षष्ठ्याश्चाप्रसङ्गात् ॥ उपसर्गेष्वनिवेशफलमाह–**उपसर्गेति ।** अत एवोपास्यते गुरुरित्यादौ धातोः शब्दशास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वरूपसकर्मकत्वात् कर्मणि लकारः । **अत एव**–उपसर्गातिरिक्तनिपातानां द्योतकताया अपि स्वीकारादेव । **सङ्गच्छते इति**–धातोः निरुक्तसकर्मकत्वेन कर्मणि लकारस्य विधानादिति भावः । चादीनां वाचकतास्वीकृतिफलन्तु घटं पटञ्च पश्येत्यादौ घटसमुच्चयादिमति घटादीनां लक्षणाया अकरणमेवेति बोध्यम् ॥ **प्रारम्भेति**–भूतेत्यादिः । तेनाधिकारादिपदानां भूतकालार्थककर्मप्रत्ययान्तता सूचिता । अत एव "अधिकृतमि"ति भाष्योक्तिः सङ्गच्छते । **मङ्गलत्वमिति**–अत्र "ओङ्कारश्चाथशब्दश्च द्वाविमौ ब्रह्मणः पुरा । कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥" इति स्मृतिः स्मरणीया । **उभयार्थमिति**–स्वरूपतो मङ्गलार्थम्, अर्थतोऽधिकारार्थमिति भावः । तेन "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती"ति व्युत्पत्तिविरोधो न । तस्यानुभयार्थत्वे "अधिकृतं शब्दानुशासनमि"त्येव वदेत् ॥ अव्ययं विभक्तीति सूत्रीयभाष्यानुसारेण प्राद्युपसर्गभिन्नचादिनिपातानां द्योतकत्ववाचकत्वे उभयस्मिन् स्वीकृते वाचकशब्दसमभिव्याहारसहकृतलाघवसत्त्वे तेषां द्योतकता अनन्यलभ्यः शब्दार्थ इति न्यायात्, अन्यथा वाचकतेति नियमस्थावश्याभ्युपगन्तव्यतया प्रकृते बाधकाभावाद् अथशब्दस्याधिकारवाचकत्वमेव सम्यगित्याशयेन स्वमतमाह–**परे त्विति । अत्र**–अथशब्दे । **एवेन** द्योतकता व्युदस्ता । नन्वेवमथशब्दस्य प्रस्तूयते इति साध्यार्थवाचकतया नामशब्दानां सिद्धार्थपराकाङ्क्षेत्यत आह–**अधिकृतमिति ।** न चैवमथशब्दस्य क्रियावाचकत्वानुपपत्तिः, यथा हिरुगाद्यव्ययानां साध्यपरत्वाभावेऽपि क्रियामात्रविशेषणपरतयैव क्रियावाचकत्वव्यवहारस्तथाऽस्यापि तदुपपत्तेः । वस्तुतस्तु "चत्वारि पदजातानि" इत्यग्रिमभाष्ये निरुक्ते च नामनिपातयोः पृथगुपादानेनाव्ययेषु नामत्वास्वीकाराद् अथ शब्दस्य साध्यक्रियापरत्वेऽपि न क्षतिः । **तदर्थम्**–अथशब्दार्थम् । **अस्य**–अथशब्दस्य । **पारिभाषिकमिति**–मयाऽधुना परिभाष्यते इत्यर्थः । **विवरणे**–व्याख्यानभाष्ये । **इति**–इत्यादि । कैयटसरणिमनुसृत्याह–**वाचकपदाभावादिति ।** अस्य देहलीदीपन्यायेन पूर्वत्रोत्तरत्र च सम्बन्धः । **एतावतेति**–प्रकृते वाचकशब्दासमवहितस्याप्यथशब्दस्य प्रकरणादिवत्तात्पर्यग्राहकतयैव क्रियाविशेषाक्षेपकतारूपा द्योतकता, प्रादेशं विलिखतीत्यादाविवेति भावः । **एवेनो**पसर्गस्येवोपसन्दानेन द्योतकताया व्यावृत्तिः ।। व्याकरणप्रयोजनाभिधायित्वादाह–**भावसाधनेति । शास्त्रपदेन**–शिष्यतेऽनेनेति व्युत्पत्तौ निष्पन्नेन । **व्याकरणस्य चेतीति**–अनेनात्र शास्त्रपदेन कस्य ग्रहणमिति जिज्ञासाऽपि निवृत्ता । ननु नामशब्दसन्निधानेन रूढस्यैव शब्दानुशासनशब्दस्य प्रतीत्या प्रदीपे "साक्षात्प्रयोजनमाहे"ति कथमवतरणमित्यत आह–**अन्वर्थत्वादिति ।** ( शब्दानुशासनशब्दस्य ) यौगिकार्थानुसारित्वादित्यर्थः । "सुम्पूषन् विदुषानय योऽञ्जसाऽनुशासति" इत्यादिश्रुतावनुपूर्वकशासेर्विविच्य बोधने दृष्टत्वादाह–**असाधुशब्देभ्य इति । विविच्य**–विभज्य । **इदमेव**–शब्दानुशासनमिति व्याकरणस्यान्वर्था संज्ञेत्येव । अत एव नाम( प्रातिपदिक )शास्त्रमिति समस्तं पदमित्यपास्तम्, शब्दानुशासने आख्यातशास्त्रस्यापि सत्त्वाच्च । **अभेदात्**–तादात्म्यात् । अत एव "ओमित्येकाक्षरं ब्रह्मे"–त्यादि श्रुतिः, "योऽयं शब्दः सोऽर्थो योऽर्थः स शब्द" इति महाभाष्यम्, श्लोकमशृणोदित्यर्थमशृणोदित्यर्थं वदतीत्यादिव्यवहाराश्च सङ्गच्छन्ते । **अनेनैव**–शब्दानुशासनशब्दस्य व्याकरणान्वर्थनामत्वेनैव । नन्वेवं संशयाभावात् कथं "केषां शब्दानामि"त्यग्रिमभाष्यस्थप्रश्नसङ्गतिरित्यत आह–**केषामितीति । इतीति**–इति पूर्वशास्त्रविषयसंशयाशयक इत्यर्थः । एतच्च लौकिकानामेव वा वैदिकानामेव शब्दानाम् ( इहानुशासनमारभ्यम् ) इति तात्पर्यकः स प्रश्न इति भावः । **परे**–भाष्यानुसारिणः ( नागेशादयः ) । **निषेधादिति**–समासस्येत्यादिः । शब्दानुशासनमित्यत्रेति शेषः । **उभयोः**–कर्तृकर्मणोः । तथा च कृद्योगे कर्तृकर्मणोरुभयोरुपादान एव कर्तृकर्मणोरुभयोः षष्ठीप्राप्तिः, तत्रैव च "उभयप्राप्तौ"ति सूत्रस्य प्रवृत्तिरित्याशयः । **समासनिषेध इति**–' कर्मणि चे'त्यनेनेत्यादिः । **चस्य**–' कर्मणि चे'ति सूत्रघटकचकारस्य । निपातानामनेकार्थत्वादिति भावः । **भाव इति**–अत्र "अस्तु वा यथाकथञ्चिदुभयप्राप्तिस्तथापि न क्षतिः, उभयप्राप्ताविति सूत्रेऽविशेषेण विभाषेति पक्षस्यापि वक्ष्यमाणतया नियमाप्रवृत्तिपक्षे आचार्यस्य शब्दानुशासनमिति प्रयोगसंभवात् । शेषलक्षणा षष्ठी वाऽस्तु ।" इति शब्दकौस्तुभो द्रष्टव्यः । भाष्यनिष्ठकर्तव्यत्वं शास्त्रे आरोप्याह–**कर्त्तव्यत्वेनेति ।** आरोपाकरणजनितलाघवं विविच्याह–**विवरणेति ।** यद्यपि प्रकृते साधुशब्दानामेव व्युत्पाद्यतया प्रस्तुतता, तथापि तेषां प्रतिपादकत्वाद् व्याकरणशास्त्रस्यैव व्याख्येयतया प्रस्तुतता कथ्यते इति भावः । **अस्य**–व्याकरणस्य । न्यायादीनां सिद्धार्थपरत्वेऽपि शास्त्रत्वाय "एकप्रयोजनसम्बद्धार्थानां साकल्येन प्रतिपादकत्वमेव शास्त्रस्य लक्षणमित्यभिप्रेत्याह–**साधुत्वेति । सम्बद्धत्वात्**–सम्बद्धार्थत्वात् । "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा । पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥" इत्यनुसारेण तु प्रवृत्त्याद्युपदेशकत्वादस्य शास्त्रता, एतद्बोधिताः साधुशब्दा एव प्रयोक्तव्या नासाधुशब्दा इत्याद्युपदेशसम्भवादिति बोध्यम् ॥

## ( अनुशासनीयशब्दनिर्णयाधिकरणम् । )

## ( आक्षेपभाष्यम् )

## केषां शब्दानाम् ? ॥

**( प्रदीपः )** शब्दशब्दस्य सामान्यशब्दत्वाद्विना प्रकरणादिना विशेषेऽवस्थानाभावात्तन्त्रीशब्दकाकवाशितादीनामप्यनुशासनप्रसङ्ग इति मत्वा पृच्छति—**केषामिति ।** उत्तरपदार्थान्तर्गतस्यापि पूर्वपदार्थस्य बुद्ध्या प्रविभागात्किमा प्रत्यवमर्शः । यथा राजपुरुष इत्युक्ते 'कस्य राज्ञः ?' इति ॥

**( उद्द्योतः ) सामान्यशब्दत्वादिति ।** लोकव्यवहारे ध्वनावपभ्रंशे च शब्दशब्दप्रयोगादिति भावः । एतेन ध्वनिव्यङ्ग्य एव **तपर**सूत्रादौ शब्दशब्दप्रयोगादिदं चिन्त्यमित्यपास्तम् ॥ ननु व्रीहीन् प्रोक्षतीत्यादौ सामान्यशब्दस्याप्यपूर्वीयेषु विशेषेषु प्रवृत्तिवद्वाचके साधौ तद्विशेषे प्रवृत्तिर्भविष्यतीत्यत आह—**विनेति ।** व्रीहिशब्दस्य तु प्रकरणाद्विशेषे प्रवृत्तिरिति भावः॥ **वाशितादीना**मित्यादिनाऽपभ्रंशसंग्रहः ॥ ननूत्तरपदार्थसंसृष्टपूर्वपदार्थस्य कथं सर्वनाम्ना परामर्शोऽत आह—**उत्तरपदार्थान्तर्गतस्येति ।** ततः पृथगुपस्थित्यविषयस्येत्यर्थः ॥ **बुद्ध्या**–मानस्या, यद्वा वाक्यजन्यबुद्ध्या ॥

**(तत्त्वालोकः)** भाष्ये–यथा राजपुरुष इत्युक्ते कस्य राज्ञ इति प्रश्ने किमा परामृष्टस्य राज्ञः स्फुटबोधाय राज्ञ इति वदति, तथाऽत्र **शब्दा-**

नुशासनमित्युक्ते केषां शब्दानामिति प्रश्ने किमा परामृष्टस्य शब्दशब्दस्य स्पष्टप्रतिपत्तये एवाह—**शब्दानामिति ।**

प्रदीपे—**सामान्येति**—वैदिकलौकिकापभ्रंशसाधारणेत्यर्थः । **विशेषे**—शब्दविशेषे । साधुशब्दे । शब्दशब्दस्येति शेषः । **प्रसङ्ग इति**—अथ शब्दानुशासनमिति प्रतिज्ञयेति शेषः । तथा च साधुशब्दजिज्ञासूनामिव असाधुशब्दजिज्ञासूनामप्यत्र प्रवृत्त्यापत्तिरिति भावः । **ननु** तन्त्र्यादिशब्दानां गान्धर्ववेदशकुनागमादिभिरेव निश्चयात्, तत्र प्रकृतिप्रत्ययविभागासम्भवाच्च नात्र तेषामनुशासनीयताप्रसङ्गोऽत आह—**मत्वेति । पूर्वपदार्थस्य**—शब्दपदार्थस्य । **इतीति**—इति प्रश्ने समस्तराजपुरुषादिजन्यैकोपस्थितिविषयस्य विशेषणस्यापि राज्ञो बुद्ध्या विभज्य किमा परामर्शसत्त्वेत्यर्थः । एवमेव "उशैते राजमातङ्गास्तस्यैवामी तुरङ्गमाः" इत्यादावपि समुपपत्तिः । अथवा शब्दानामिति भाष्योक्तस्यैव किंशब्देन परामर्शः, तदुपादानसामर्थ्यात् । अत्र कल्पे "उशैते राजमातङ्गा" इत्यादौ तत्पदपरामृष्टराजमातङ्गे बाधितस्य तुरङ्गमस्वामित्वस्य "सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसङ्क्रामतः" इति न्यायेन राजन्यन्वयादुपपत्तिः, शिखी ध्वस्त इत्यत्रेवेति बोध्यम् ।

उद्द्योते—**लोकेति**—त्रैविद्यवृद्धेत्यर्थः । **चेन** काकवाशितानां समुच्चयः । **एतेन**—लोकव्यवहारे तत्र तत्र शब्दशब्दप्रयोगेण । **ध्वनिव्यङ्ग इति**—शब्दानां ध्वनिरित्यादिनेत्यादिः । **प्रयोगादिति**-शब्दशब्दस्यान्वर्थत्वाच्चेत्यपि बोध्यम् । **इदमिति**—तन्त्रीशब्दादीनामत्रानुशासनीयत्वप्रसञ्जनमित्यर्थः । तथा च तपरसूत्रे तादृशप्रयोगस्य तन्त्रीशब्दादीनामत्रानुशासनीयता नास्त्येवेति सिद्धान्ताशयकत्वादेव सङ्गतिर्बोध्या । **शब्देति**—व्रीहिशब्देत्यर्थः । **विशेषेषु**—व्रीहिविशेषेषु । सिद्धान्ते वाचकतायां अपभ्रंशसाधारण्यादाह—**साधाविति । तद्विशेषे**—शब्दविशेषे । **प्रकरणात्**—यागप्रकरणात् । **विशेषे**—व्रीहिविशेषे । ननु "सर्वनाम्नां प्रधानपरामर्शित्वमि"ति नियमात् शब्दानुशासनशब्दे विशेषणीभूतस्य शब्दशब्दस्य किमा परामर्शो न स्यादित्याशयेनाह—**ननूत्तरपदार्थेति ।** अनुशासनपदार्थैकार्थीभावापन्नशब्दपदार्थस्येत्यर्थः । **सर्वनाम्ना**—किमा । **ततः**—अनुशासनपदार्थात् । समस्तशब्दानुशासनशब्दात् शब्दानुशासनपदार्थयोरेकैवोपस्थितिरिति भावः । शब्दानुशासनशब्दजन्यबुद्ध्या विभागासंभवादाह—**मानस्येति ।** तत्र नियमेन मानसबोधसत्त्वे मानाभावादाह—**यद्वेति । वाक्येति**—शब्दानामिति वाक्यैकदेशेत्यर्थः । न च शब्दानामित्यस्य पदतया तत्र वाक्यशब्दप्रयोगोऽसङ्गतः, "वाक्ये वाक्यैकदेश" इति न्यायात्, साकाङ्क्षपदस्थलविशेषे एकपदेऽपि वाक्यत्वस्य जयदेवेनोक्तत्वाच्च तदुपपत्तेः ।

## ( समाधानभाष्यम् )

**लौकिकानां वैदिकानां च । तत्र लौकिकास्तावद्—गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इति ॥ वैदिकाः खल्वपि—शं नो देवीरभिष्टये । इषे त्वोर्जे त्वा । अग्निमीळे पुरोहितम् । अग्न आयाहि वीतय इति ॥**

**( प्रदीपः )** सिद्धान्तवादी तु व्याकरणस्य वेदाङ्गत्वात्सामर्थ्याद्विशेषावगतिरिति मत्वाह—**लौकिकानामिति ।** लोके विदिता इति—**लोकसर्वलोकाट्ठञिति** ठञ् । अथ वा भवार्थे**ऽध्यात्मादि**त्वाट्ठञ् । एवं वेदे भवा वैदिकाः । वैदिकानां लौकिकत्वेऽपि प्राधान्यख्यापनाय पृथगुपादानम् । यथा—**ब्राह्मणा आयाता वसिष्ठोऽप्यायात** इति वसिष्ठस्य । तेषां तु प्राधान्यं यत्नेनापभ्रंशपरिहारात् । अथ वा भाषाशब्दानामेव लौकिकत्वमिति भेदेन निर्देशः ॥ तत्र लोके पदानुपूर्वीनियमाभावात्पदान्येव दर्शयति—**गौरश्व इति ।** वेदे त्वानुपूर्वीनियमाद्वाक्यान्युदाहरति—**शं न इति ॥**

**( उद्द्योतः ) वेदाङ्गत्वादिति ।** तत्त्वं चागमसिद्धम् । अनेन तन्त्रीशब्दादीनामविषयता सूचिता ॥ न च वेदाङ्गत्वाद्वैदिका एव विषयाः स्युः । तत्र तत्र **भाषायां छन्दसी**त्याद्युक्त्योभयोरपि विषयत्वात् ॥ ननु चिदानन्दस्वरूपब्रह्मातिरिक्तस्य सर्वस्य लोकपदार्थत्वाद्वेदस्यापि लोकान्तर्गतत्वाद् भेदेनाभिधानं न युज्यत इत्यत आह—**वैदिकानामिति ।** वैदिकानां लौकिकत्वेऽपीति पाठः ॥ **तेषां त्विति ।** लौकिकानां याज्ञे कर्मण्येव तत्परिहारः, तेषां तु सर्वत्रेति भावः ॥ **भाषाशब्दानामिति । भाषा** प्रयोज्यप्रयोजकवृद्धव्यवहारस्तत्र प्रयुज्यमानानामित्यर्थः । एवञ्च वेदमात्रान्तर्गत**कर्णाभिर्देवासो गृभ्णामी**त्याद्यतिरिक्तपरता लौकिकशब्दस्य, तैस्तद्व्यवहारादर्शनात् । अत एव गौरश्व इत्यादीनां लौकिकोदाहरणत्वसंगतिः । लोके स्वरानादराद्वेदे तदादराच्च स्वरविशिष्टानां वेदमात्रविषयतामभिप्रेत्य **शं न** इत्यादीनां वैदिकोदाहरणत्वसङ्गतिरिति भावः ॥ ( भाष्ये **लौकिकास्तावदिति ।** तावच्छब्दोऽनुक्रमे । पूर्वं लौकिका उदाह्रियन्ते, पश्चाद्वैदिका इत्यर्थः । वैदिकानां प्रधानत्वेऽपि लौकिकानां पूर्वनिर्देशस्तद्वदादरसूचनार्थः ॥ ) लोके पदानामुदाहरणत्वोक्तौ वेदे वाक्यानामेव तत्त्वोक्तावाशयमाह—**तत्रेति ।** पदान्तरसमभिव्याहारेण स्वरविशेषाच्च वेदे वाक्यानामुदाहरणत्वोक्तिरित्यपि बोध्यम् ॥ लोकवेदसाधारणतया पाणिनीयशब्दानुशासनस्यैवात्राधिकृतत्वम्, न तु शाकटायनादिव्याकरणस्येत्युत्तराशयं परे ॥

**( तत्त्वालोकः )** भाष्ये—व्याकरणस्य वेदाङ्गतया तत्र वैदिकानामेवाभ्यर्हितत्वात् वैदिकानामित्यस्य प्राग् वक्तव्यत्वेऽपि, निखिललोकैकरूपेण ख्यातानां साधुशब्दानामिहानुशासनं नापशब्दानां प्रतिदेशं भिन्नानामिति सूचनाय सङ्कोचकाभावादत्र लोकशब्दस्य सकललोकपरतया लौकिकशब्दानां वैदिकशब्दापेक्षया व्यापकत्वात् प्रथममाह—**लौकिकेति । तत्र**—लौकिकवैदिकयोर्मध्ये । **गौरिति**—गोशब्दस्य सकललोकवेदसाधारणत्वात्, धर्मशास्त्रोक्तप्रभातदर्शनीयत्वेन मङ्गलस्य गोरूपार्थस्य वाचकतया मङ्गलत्वात्, भोगमोक्षसाधकगोरूपार्थवत्त्वाच्च प्रथममुपादानम्, अनेन साधुशब्दे गोः सदृशता सूचिता । अत एव वक्ष्यति—"एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवती"ति । **शं न इति**—अथ प्रामाणिकग्रन्थेषु ऋग्यजुःसामाथर्ववेदानां क्रमश उपलब्धतया, प्रकृतेऽथर्वयजुरृक्सामवेदानां क्रमेणोदाहरणोपादानं न युक्तमिति चेन्न, वेदानां यज्ञार्थत्वाद् यज्ञोपादेयताक्रमेणैव तदुदाहरणानामभिधानात् । तथा हि—अथर्ववेदस्य "यज्ञैरथर्वा प्रथमः पथस्तते" इति **ऋक्**संहितोक्त—यज्ञप्रक्रियाप्रथमप्रकाशकत्वादथर्वमुनिप्रोक्तत्वेनाभ्यर्हितत्वात्, सर्वत्र प्राग् विधेयमङ्गलार्थकशम्पदेन कर्मादिनिरसनीयविघ्ननिवारकशान्त्यादिमन्त्रेण च घटितत्वात्, अथर्ववेदाध्ययनस्यैव "अथर्वाङ्गिरोभिर्ब्रह्मत्वमि"ति गोपथब्राह्मणवचनेन यज्ञप्रथमवरणीयब्रह्मत्वप्रयोजकत्वाच्च प्रागथर्ववेदोदाहरणोपादानम् । ततो यजुर्वेदस्य "अध्वर्युरृत्विगि"तिक्रमप्रथमाध्वर्युकर्ममन्त्रप्रदर्शकत्वात्, तस्य गद्यात्मकतया पद्यात्मकऋग्वेदगीत्यात्मकसामवेदापेक्षया सुज्ञेयत्वाच्च यजुर्वेदोदाहरणाभिधानम् । ततः ऋग्वेदस्य स्वाश्रितसामवेदापेक्षया प्रधानत्वात् तदुदाहरणकथनम् । ततः परिशेषात् सामवेदोदाहरणप्रतिपादनमिति बोध्यम् । **देवीरिति**—अयं प्रथमाबहुवचनान्तः । **अभिष्टये इति**—अत्रेकारलोपः । **ईळ इति**—अत्र ळत्वम् ।

प्रदीपे—प्रकरणाभावेऽपि सामर्थ्यस्य विशेषनिश्चायकतायाः काव्यप्रकाशकारेणाभिधानादाह—**सामर्थ्यादिति । विदिताः**—विख्या-

ताः । लौकिकवैदिकेत्युभयसाधारण्यानुरोधादाह–**अथवेति । तेषां तु प्राधान्यं**–वैदिकानां प्राधान्यं तु । **तुना** वैदिकप्राधान्ये वसिष्ठप्राधान्यतो विलक्षणता सूचिता । **यत्नेन**–सर्वथा । अन्यथाऽनिष्टफलश्रवणादिति भावः । **परिहारादिति**–बोध्यमिति शेषः । एकरूपेण लौकिकवैदिकयोः निर्देशे लाघवेन विनिगमनाविरहादाह–**अथवेति । तत्र**–तयोर्मध्ये ।

उद्योते—**तत्त्वं**–वेदाङ्गत्वम् । **आगमेति**–"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" श्रुतीत्यर्थः । **अनेन**–वेदाङ्गत्वेन । **आदिना**–काकवाशितापभ्रंशसंग्रहः । **एवेन** लौकिकव्यावृत्तिः । **उभयोः**–लौकिकवैदिकयोः । **भेदेनेति**–लौकिकवैदिकयोरित्यादिः । **पाठ इति**–अनेन 'लौकिकत्वेन" इति पाठो निरस्तः । **लौकिकानामिति**–अर्थज्ञानायोच्चारणप्रसङ्गे इति शेषः । अथवा तस्य नियमाकाङ्क्षया नियेकदेशेनान्वयः । **तदिति**–अपभ्रंशेत्यर्थः । **तेषां**–वैदिकानाम् । **सर्वत्रेति**–अपभ्रंशपरिहार इति शेषः । **प्रयुज्यमानानां**–उच्चार्यमाणानाम् । **एवञ्च**–प्रयोज्यप्रयोजकवृद्धव्यवहारे प्रयुज्यमानानां लौकिकत्वे च । **तैः**–कर्णाभिरित्यादिभिः । **तदिति**–प्रयोज्यप्रयोजकवृद्धेत्यर्थः । **अत एव**–गौरश्व इत्यादीनां वेदमात्रानन्तर्गतत्वेन लौकिकत्वादेव । ननु शं न इत्यादीनामपि वेदमात्रानन्तर्गततया लौकिकत्वात् तेषां वैदिकोदाहरणतयाऽभिधानमसङ्गतमित्यत आह–**लोके इति । तदिति**–स्वरेत्यर्थः । **मात्रेण** लोकव्यावृत्तिः । **तद्वत्**–वैदिकवत् । लौकिकानामपि "एकः शब्दः सम्यग्ज्ञातः" इत्यादिश्रुत्युक्तफलवत्तया वैदिकवदादरणीयत्वेन भावः । **पदानां**–गौरश्व इत्यादिपदानामेव । **वाक्यानां**–शं नो देवीरित्यादीनाम् । **तत्त्वोक्तौ**–उदाहरणत्वोक्तौ । **आशयम्**–भाष्याशयम् । लोकेऽपि क्वचित् पदानुपूर्वीनियमसम्भवादाह–**पदान्तरेति । चेनानुपूर्वीनियमः समुच्चितः** । श्रुतावानुपूर्वीनियमस्य सार्वत्रिकता, लोके तु काचित्कतेति भावः । स्वसरण्याऽऽह–**लोकवेदेति**–लौकिकवैदिकेत्यर्थः । **अत्र**–अथ शब्दानुशासनमिति महाभाष्यग्रन्थे । करणस्याधिकरणत्वविवक्षया सप्तमी । **अधिकृतत्वमिति**–प्रतिपाद्यते इति शेषः । **व्याकरणस्येति**–लौकिकमात्रविषयस्य, प्रातिशाख्यस्य वैदिकमात्रविषयस्य वेति शेषः । **परे**–भाष्यानुयायिनः । अस्य प्रतिपादयन्तीति शेषः ।

## ( आक्षेपभाष्यम् )

## अथ गौरित्यत्र कः शब्दः ? ॥

**( प्रदीपः )** अयं गौरयं शुक्ल इति शब्दार्थयोरभेदेन लोके व्यवहारदर्शनाच्छब्दस्वरूपनिर्धारणाय पृच्छति—**अथेति ।** गौरिति विज्ञाने प्रतिभासमानेषु वस्तुषु कः शब्द इत्यर्थः ॥

**( उद्द्योतः ) अभेदेन लोके इति ।** अभेदेनैवेत्यर्थः । शब्दपरत्वाभिप्रायेणास्य गौरिति प्रयोगाभावादिति भावः । पुरोवर्तिव्यक्तिं पश्यतो वाचकजिज्ञासया कोऽयमिति प्रश्ने अयं गौरयं वर्णः शुक्ल इत्युत्तरस्थले संनिहितमुद्दिश्य तादात्म्येन शब्दविधेयताप्रतीतिरिति तात्पर्यम् ॥ शब्दार्थयोस्तादात्म्यमेव शक्तिः । स्पष्टं चेदं पातञ्जलभाष्ये इति मञ्जूषायामस्माभिर्हर्यादिसंमततया व्युत्पादितम् । अत एव जात्यादिव्यक्त्योरिव **"रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः"** इत्यादौ शब्दार्थयोरपि अभेदेन व्यवहारः ॥ **अथ गौरिति** भाष्ये—अथेत्यस्य पृच्छ्यत इति शेषः ॥ किं पृच्छ्यते, तदाह—**गौरित्यत्रेत्यादि ॥ कः शब्द** इति । कः शब्दशब्दाभिधेय इति प्रश्नः ॥ **प्रतिभासमानेषु ।** शब्दजातिव्यक्त्यादिषु ॥ नन्वेवं गुणक्रिययोः शब्दत्वाशङ्कानुपपन्ना । नहि ते अपि गौरितिशब्दजन्यबोधे भासेते इति चेन्न । गुणगुणिनोः क्रियाक्रियावतोश्चाभेदात् । शब्दार्थयोश्च तत्त्वात् । **तदभिन्नाभिन्नस्येति** न्यायेन तच्छङ्कोपपत्तेः । यथा परमकारणाभिन्नकार्यकारणकस्य परमकारणेनाप्यभेदः । यद्वा **गुणसमूहो द्रव्यमिति** पक्षे **तस्य भाव** इति सूत्रस्थभाष्यसंमते समूहस्य गोशब्दान्यत्वेऽवयवभूतगुणादीनामपि तद्वाच्यत्वमिति शङ्का बोध्या । अत्र **गौरिति विज्ञाने इति** सामान्योक्त्या तदाकारप्रत्यक्षादिज्ञानेऽपि गुणादीनां सामान्यरूपेण भानम् । अत एव प्रत्यक्षदृष्टेऽपि **आम्रफलादौ** रसविशेषादिजिज्ञासा, विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वादित्यन्ये ॥ निरूपितं चैतन्मञ्जूषायाम् ॥

**( तत्त्वालोकः )** भाष्ये–**अथ**–अनन्तरम् । लौकिकोदाहरणेषु गोशब्दस्य प्रागुपादानात् । प्रकृतेऽप्याह–**गौरित्यत्रेति** । अत्रत्यप्रश्नोत्तरयोः सार्वत्रिकप्रश्नोत्तरोपलक्षणता बोध्या ।

प्रदीपे—**इति**–इत्यादि । तेनायं कृष्ण इत्यादेः संग्रहः । **व्यवहारेति**–आप्तेत्यादिः । **दर्शनादिति**–संशयोदये इति शेषः । गौरिति स्वरूपं श्रोत्रग्राह्यगुणत्वेन प्रत्यक्षनिश्चयात्, गुणादीनामसत्त्वाच्च तत्र संशयानुदयेन गौरिति स्वरूपे कः शब्द इति प्रश्नस्यासम्भवाद् गौरितीत्यस्य न स्वरूपपरता, किन्तु ज्ञानाकारपरतेत्याह–**विज्ञाने इति ।** शाब्दबोधे प्रत्यक्षादौ चेत्यर्थः । अर्थापत्तिप्रमाणाद् ज्ञानस्याधारत्वोपपत्तौ, **अत्र**पदस्य प्रतिभासमानेष्वित्यर्थकतया सफलता बोध्या । **प्रतिभासमानेषु**–विषयभूतेषु । **वस्तुषु**–वस्तूनां मध्ये । निर्धारणे सप्तमीविधानात् ॥

उद्योते—**एवेन** भेदव्यावृत्तिः । शुक्लपदस्य गुणपरत्वे घटस्य शुक्ल इति, तथा गुणिपरत्वे घटः शुक्ल इति क्रमशो भेदेनाभेदेन च गुणगुणिनोः व्यवहारो भवति । किन्तु शब्दार्थयोः गोपदस्य व्यक्तिपरत्वे अयं गौरित्यभेदेन व्यवहारस्य सत्त्वेऽपि, तस्य शब्दपरत्वे अस्य गौरिति भेदेन व्यवहारो न भवतीत्याशयेनाह–**शब्देति** । गोपदस्येत्यादिः नन्वेवं गोशब्दगोचरज्ञानजनकतया अयं गौरिति शब्दप्रयोगाभावात् कथन्तेन शब्दार्थयोस्तादात्म्यं सेत्स्यतीति चेन्न, अयं गौरितिव्यवहारेणार्थभिन्नतया शब्दविषयकज्ञानाजननादर्थापत्त्या तयोस्तादात्म्यसिद्धेः ॥ उक्तरीत्या सिद्धं तयोस्तादात्म्यं "द्विर्बद्धं सुबद्धं भवती"ति न्यायेन द्रढयितुं तत्र हेत्वन्तरमाह–**पुरोवर्त्तीति ।** तदाकारस्तु अयमित्येव इत्यादिः । **सन्निहितं**–समीपदेशस्थं ( सास्नादिमत्पिण्डम् ) **प्रतीतेरिति**–तयोस्तादात्म्याभावे तयोरभेदावगाहिप्रतीतिरनुपपद्येत, आपद्येत च तयोर्भेदावगाहिप्रतीतिरिति भावः । नन्वेवं तयोस्तादात्म्ये कथमुपपद्येतार्थे शब्दस्येच्छारूपा शक्तिरित्यत आह–**शब्दार्थयोरिति ।** तादात्म्यञ्च तद्भिन्नत्वे सति तदभेदेन प्रतीयमानत्वम् । तत्र भेदस्य वास्तवतया अभेदस्य चाध्यस्ततया तयोरविरोधः । एवं भेदस्योद्भूतत्वविवक्षया अस्यार्थस्यायं वाचक इत्यादौ षष्ठी, तथा अभेदस्योद्भूतत्वविवक्षणेन वृद्धिरादैजित्यादौ प्रथमा । कः शब्दः कोऽर्थ इति प्रश्ने गौरित्ययं शब्दो गौरित्ययमर्थ इत्येकरूपोत्तरदर्शनात् शब्दार्थयोः परस्पराध्यासः सिद्धः । स चादिव्यवहारकृदीश्वरकृतः । ननु शब्दार्थयोरन्योन्याध्यासज्ञापिततादात्म्यस्य सङ्केतापरपर्यायस्य तयोः वाच्यवाचकभावापरपर्यायसम्बन्धान्तररूपशक्तेः ज्ञापकतेति सिद्धान्ते कथन्तादात्म्ये शक्तिपदप्रयोगः सङ्गच्छते इति चेन्न, तस्य पदनिष्ठशक्त्युपकारकतया तत्र शक्तिशब्दव्यवहारोपपत्तेः । **एवेन**ेच्छानिरासः । **इदमिति**–"स्थितोऽस्य वाचकस्य वाच्येन सह सम्बन्धः । सङ्केतस्तूक्तरूप ईश्वरस्य स्थितमेवाभिसम्बन्धमभिनयति, यथाऽवस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते–अयमस्य पिता, अयमस्य पुत्रः" इत्यादिनेति शेषः ॥ "इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा । अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता । समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥ सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते । शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते ॥" इत्यादिहरिप्रभृतिवचनानुसारेणाह–**हर्यादीति ।**

**व्युत्पादितमिति**-शक्तिविचारे इति शेषः। **अत एव**-तयोस्तादात्म्यादेव। **आदिना** गुणक्रियासंग्रहः। द्वितीयादिना "गर्वभङ्गो मार्गवस्य शौर्यभङ्गश्च वालिन,, इत्यस्य संग्रहः। **किं पृच्छ्यत इति**-इति शङ्कायामिति शेषः। **तदाहेति**-साधारणतया प्रश्नविषयीभूतम् ( असाधारणीकृत्य ) वदतीत्यर्थः। स्पष्टप्रतिपत्तये आह-**प्रश्न इति**-शाब्दबोधे प्रत्यक्षे च गवि गोत्वमिव तादात्म्येन गोशब्दोऽपि विशेषणतया भासते, जातिमदर्थस्य शब्देन वाच्यवाचकभावस्य तादात्म्यस्य च सत्त्वात् गृहीतशक्तिकम्प्रति शब्देनार्थादेरिव अर्थेन शब्दादेरपि स्मरणे बाधकाभावात्। आह च-"न सोऽस्ति प्रत्ययो लोके[१] यः शब्दानुगमादृते। अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते॥ ग्राह्यत्वं ग्राहकत्वञ्च द्वे शक्ती तेजसो यथा। तथैव सर्वशब्दानामेते पृथगवस्थिते॥ यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्। पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः॥" इत्याशीत्याशयेनाचष्टे-**शब्देति।** एषां शब्दस्योपस्थापकत्वात्, जातेर्विशेषणत्वात्, व्यक्तेर्गुणाद्यधिकरणत्वाच्च **क्रमेणोक्तिः। एवम्**-शब्देत्यादेः प्रतिभासमानेष्विति कैयटस्य विशेष्यत्वे। **ते**-गुणक्रिये। **भासेते इति**-गुणक्रिययोः गोशब्देन तादात्म्यवाच्यवाचकभावयोरसत्त्वादित्याशयः। **अभेदादिति**-पटः शुक्लः, गौश्चल इत्यादिप्रतीतेः तयोः समवायमनङ्गीकृत्य तादात्म्यस्य स्वीकारादिति भावः। **च तत्त्वात्**-अभेदाच्च। **भिन्नस्येति**-तदभिन्नत्वमिति शेषः। **तच्छङ्केति**-गुणक्रिययोः शब्दत्वशङ्केत्यर्थः। शब्दाभिन्नगुणिक्रियावदर्थाभिन्नगुणक्रिययोः शब्दाभिन्नत्वमिति तयोरपि शब्देन तादात्म्यादिसत्त्वात् गोशब्दजन्यबोधे भासमानतया शब्दत्वशङ्कोपपत्तिरिति भावः। तत्र दृष्टान्तमाह-**पथेति।** मूलप्रकृतिरूपोपादानाभिन्नमहत्तत्त्वात्मककार्यरूपकारणाभिन्नाहङ्कारात्मककार्यस्य मूलप्रकृत्याऽभेद इत्यर्थः। गुणादेः साक्षादपि गोशब्दवाच्यता सम्भवतीत्याशयेनाह-**यद्वेति। गुणसमूह इति**-निरन्तरत्वात्मकायुतसिद्धत्वविशिष्टावयवविशेषानुगतसाधारणासाधारणगुणादिसमुदाय इत्यर्थः। अयुतसिद्धावयवविशेषानुगतः समूहो द्रव्यमिति, गुणसमुदायो द्रव्यमिति च पतञ्जलिवचनसत्त्वात्। **भाष्येति**-किं पुनर्द्रव्यम्? के पुनर्गुणाः? शब्दस्पर्शरूपरसगन्धा गुणाः, ततोऽन्यद् द्रव्यमिति भाष्ये-त्यर्थः। तत्र स्पष्टतयाऽकथनादाह-**सम्मते इति।** अन्यथा उक्ते इति कथयेदिति भावः। **समूहेति**-गुणादीत्यादिः। **अवयवेति**-समुदायम्प्रतीत्यादिः। **आदिना** क्रियासंग्रहः। **तदिति**-गोशब्देत्यर्थः। **अत्र**-कैयटे। **तदिति**-गौरितीत्यर्थः। **आदिना** अनुमितिसंग्रहः। **अपिना** शाब्दबोधः समुच्चितः। **सामान्येति**-रूपत्वादीत्यर्थः। विशेषरूपेण तु तत्तदिन्द्रियेणैव भानमिति भावः। **भानमिति**-इति सूचितमिति शेषः। **अत एव**-प्रत्यक्षादिज्ञाने गुणादीनां रूपत्वादिना भानादेव। **अपिना**-अनुमित्यादिसंग्रहः। **आदिना** गन्धविशेषादिसंग्रहः। **अन्ये**-सिद्धान्तिनः। **मञ्जूषायामिति**-शक्तिवादे इति शेषः। तथा च गौरिति ज्ञाने विषयभूतेषु शब्दद्रव्यकर्मगुणसामान्येषु कः शब्द शब्दाभिधेय इति सारार्थः॥

### ( आक्षेपोपपादकभाष्यम् )

## किं यत्तत्सास्नालाङ्गूलककुदखुरविषाण्यर्थरूपं स शब्दः ?॥

**( प्रदीपः )** तान्येव वस्तूनि क्रमेण निर्दिशति—**किं यत्तदिति।** उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत इति कामचारतः **स शब्द** इति पुंल्लिङ्गेन निर्देशः॥

**( उद्द्योतः ) यत्तदि**ति समुदायो यद्वृत्तार्थे वर्तते, तस्यैव पुनस्तद्वृत्तेन स इत्यनेन परामर्शः। यद्वा प्रसिद्धौ। ननु यदित्यस्य नपुंसकत्वेन तच्छब्देऽपि नपुंसकलिङ्गमेवोचितमत आह—**उद्दिश्यमानेति।** सिद्धवत्कीर्तनमुद्देशः। प्रतिपाद्यतया विधेयतया वा कीर्तनं प्रतिनिर्देशः, यथा "शैत्यं हि यत्सा प्रकृतिर्जलस्य" इत्यादौ स्त्रीलिङ्गनिर्देशः॥ **तल्लिङ्गमिति।** तयोर्लिङ्गमित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**किमिति**-अस्य शब्द इत्युत्तरं योजना। तथा अग्रेऽपि सर्वत्र सम्बन्धः। **सास्नेति**-अत्र समाहारद्वन्द्वोत्तरमिन् प्रत्ययः, तेनावयवी बोध्यते। **शब्दः**-शब्दशब्दाभिधेयः। एवमग्रेऽपि सर्वत्र। तथा च यः सास्नादिमानर्थः स शब्दः किमित्यर्थः।

प्रदीपे—**निर्दिशतीति**-प्रश्नवाचैव द्रव्यक्रियागुणसामान्यानां शब्दत्वं सिद्धान्तिमुखान्निरसितुं तान्येव विशिष्य क्रमेण प्रश्नविषयतया निर्दिशतीत्यर्थः। यौगपद्येनोभयलिङ्गासम्भवादाह-**पर्यायेणेति। इति**-इति हेतोः।

उद्द्योते—**यत्तदितीति**-अस्य व्याख्यानान्तर्भूततया न प्रतीकता। घटोऽस्तीत्यादावुभयोरपि पदसमुदायात्मकवाक्यशब्दप्रयोगदर्शनादाह-**समुदाय इति।** सर्वनामशब्दसमुदाय इत्यर्थः। **यद्वृत्तार्थे**-यदा यच्छब्देन वृत्तं निष्पन्नं यदिति तदर्थे। ते वयं गच्छाम इत्याद्यनुरोधादाह-**यद्वेति।** यत्तदित्यस्य यदित्यर्थकत्वादाह-**यदित्यस्येति।** नपुंसकलिङ्गार्थाभिधायित्वादित्याशयः। नित्यसम्बद्धयोर्यत्तदोरेकविषयतेत्याशयेनाह-**उचितमिति।** उद्देश्यस्यासिद्धत्वेऽपि सिद्धत्वेन कीर्त्तनदर्शनादाह-**सिद्धवदिति।** प्रतिपाद्यताया असार्वत्रिकत्वादाह-**विधेयतयेति। स्त्रीलिङ्गनिर्देश इति**—उद्दिश्यमानशैत्यप्रतिनिर्दिश्यमानप्रकृत्योरेकत्वमापादयतः तच्छब्दस्य सेति स्त्रीलिङ्गनिर्देश इत्यर्थः। **तयोः**-उद्दिश्यमानप्रतिनिर्दिश्यमानयोः।

### ( आक्षेपबाधकभाष्यम् )

## नेत्याह। द्रव्यं नाम तत्॥

**( प्रदीपः ) नेत्याहेति।** भिन्नेन्द्रियग्राह्यत्वान्न द्रव्यं शब्द इति प्रतीतम्, अपि तु द्रव्यमिति। यदि च द्रव्यानुशासनं विवक्षितमभविष्यद् 'अथ द्रव्यानुशासन'मित्येवावक्ष्यत्॥

**( उद्द्योतः )** भाष्योक्तहेतुमुपपादयति—**भिन्नेन्द्रियेति।** सामान्यव्यतिरिक्तत्वे सति श्रोत्रेन्द्रियग्राह्यत्वं हि शब्दलक्षणमिति भावः॥ **यदि च द्रव्येति।** यदि द्रव्यं शब्दशब्दाभिधेयं स्यादित्यर्थः। तथा हि सति द्रव्यादीनां तन्त्रान्तरे निरूपितत्वात्तस्य वैयर्थ्यापत्तिरित्यपि बोध्यम्॥ तत्र द्रव्यस्य क्रियाद्याश्रयत्वात्पूर्वमुक्तिः। क्रियागुणौ च जात्याश्रयाविति तयोस्ततः पूर्वमुक्तिः। वैशेषिकसिद्धगुणानामपि संयोगविभागादीनां क्रियात्वं ध्वनयितुं गुणात्प्राक् क्रियोक्तिरिति ध्येयम्। **यत्तर्हि शुक्ल** इत्यादौ गुणस्य शब्दत्वशङ्कापरे वाक्ये इतिशब्देन प्रकारार्थेन सुरभ्यादिभेदभिन्नगन्धादिलिङ्गसंख्यादिरूपगुणसंग्रह इति न न्यूनता॥ ननु शब्दस्यापि गुणत्वाद् **गुणो नाम स** इत्युत्तरमसङ्गतम्। तस्य द्रव्यत्वे **द्रव्यं नाम तदि**त्युत्तरासंगतिरिति चेन्न। उक्तद्रव्याश्रितो गुणो नाम स इत्यर्थात्॥

**( तत्त्वालोकः )** भाष्ये—उत्तरमनुवदति तटस्थः-**नेत्याहेति।** न ( सास्नादिमद्वस्तु शब्द ) **इति** वदति ( सिद्धान्ती ) **इत्यर्थः।** कुत एवमित्यत आह-**द्रव्यमिति।** यत इत्यादिः। नामशब्दः प्रसिद्धार्थकः। एवमग्रेऽपि सर्वत्र। तथा च यतः तत् ( शब्द **इति** न प्रसिद्धम्, किन्तु ) द्रव्यम् ( इति ) प्रसिद्धम् ( अतः तथा ) इत्यर्थः।

प्रदीपे—यत इत्यस्यार्थमाह-**भिन्नेति।** शब्दग्राहकश्रोत्रेन्द्रि-

१. अत्र लोकपदोपादानेन शब्दस्य निर्विकल्पकज्ञानाविषयता सूचिता॥

यस्मिन्नचक्षुरादीन्द्रियग्राह्यत्वादित्यर्थः । तत्पदार्थमाह–**द्रव्यमिति ।** द्रव्यत्वेनाभिमतं ( सास्नादिमद्वस्तु ) इत्यर्थः। नामपदार्थमाह–**प्रतीतमिति ।** प्रसिद्धमित्यर्थः । तर्हि केन रूपेण तत् प्रसिद्धमित्यत आह–**अपि तु द्रव्यमितीति ।** प्रसिद्धम् , गुणाश्रयत्वाद् गुणसमूहत्वाद्वेति शेषः । ननु शब्दशब्दस्य कर्मघञन्ततया कुतो नार्थ( द्रव्य )स्य शब्दतेत्यत आह–**यदि चेति ।** **अथेति**–तर्हीत्यादिः । **एवेन** शब्दानुशासनव्यावृत्तिः ।

उद्योते—**हेतुं**–( यतः ) द्रव्यं नाम तदित्याकारकम् । तत्र हेतौ हेतुमाह–**सामान्येति** । अत्र "येनेन्द्रियेण या व्यक्तिर्गृह्यते तद्गता जातिस्तदभावश्च तेनैवेन्द्रियेण गृह्यते" इति नियमेन शब्दत्वे तथा शब्दाभावे प्रसज्यमानाया अतिव्याप्तेर्वारणाय सत्यन्तमुपात्तम् , तथा भावत्वे सतीति देयम् । एवं द्रव्यादावतिप्रसक्तिनिरासाय विशेष्यदलम् । **हि**–यतः । यथाश्रुतानुपपत्त्या भावार्थमाह–**यदि द्रव्यमिति । स्यादिति**–अनेनावक्ष्यदित्यस्य वदेदित्यर्थः सूचितः । ननु द्रव्यस्य शब्दद्रव्योभयशब्दवाच्यत्वेन विनिगमनाविरहात् शब्दानुशासनमिति कथितमित्यत आह–**तथा हीति । आदिना** गुणादिनिरूपणाय तन्त्रान्तरस्यावश्यकतासूचनात् तस्यैव वैयर्थ्यं कुतो नेति शङ्का निराकृता । **तन्त्रेति**–शास्त्रेत्यर्थः । **तस्य**—द्रव्यानुशासनस्य । **तत्र—**गौरिति ज्ञाने भासमानानां वस्तूनां मध्ये । **तयोः**–क्रियागुणयोः । **ततः**–जातितः । ननु गुणस्य क्रियापेक्षया चिरस्थायित्वेनाभ्यहितत्वात्प्रागुपादानं कुतो नेत्यत आह—**वैशेषिकेति ।** मतेति शेषः । गुणस्य शब्दत्वशङ्काकालेऽभिधेयं प्रसङ्गादत्रैवाह–**यत्तर्हीति । प्रकारेति**–सादृश्येत्यर्थः । अत एवेति पदस्य सफलता । **गन्धादीति**–आदिना स्पर्शादिसंग्रहः । **संख्यादीति**–आदिना शक्तिरूपकारकसंग्रहः । गुणस्य शब्दत्वनिराकरणावसरे विधेयां शङ्कां प्रसङ्गादत्रैवोपस्थापयति–**नन्विति । तस्य**–शब्दस्य । **द्रव्यत्वे**–द्रव्यत्वे तु । **उक्तेति**–सास्नादिमदित्यर्थः । **इत्यर्थात्**–इति "गुणो नाम स" इत्युत्तरार्थात् । एतेन "द्रव्यं नाम तदि"त्युत्तरस्य वक्ष्यमाणगुणाश्रयो द्रव्यं नाम तदित्यर्थः सूचितः । केचित्तु द्रव्यं नाम गुणो नामेत्यादौ द्रव्यगुणयोः श्रोत्राग्राह्यत्वेन विशेषितवया शब्दस्य मतभेदेन द्रव्यत्वे गुणत्वे वा न तदुत्तरद्वयासङ्गतिरिति वदन्ति ।

### ( आक्षेपोपपादकभाष्यम् )

### यत्तर्हि तदिङ्गितं चेष्टितं निमिषितमिति, स शब्दः ?॥

**( प्रदीपः )** अनेनैव न्यायेन गुणक्रियासामान्यानां निराकृतेऽपि शब्दत्वे प्रपञ्चार्थं तच्चोद्यपूर्वकं निराकरोति—**यत्तर्हीति ।** गोशब्दार्थे चैषां संभवाच्छब्दत्वमाशङ्कते । परिहारस्तु पूर्ववत् ॥ तत्रे**ङ्गितमभि**प्रायस्य सूचकः शरीरव्यापारः । **चेष्टितं** कायपरिस्पन्दः । **निमिषित**मक्षिव्यापारः ॥

**( उद्द्योतः )** श्रोत्राग्राह्यत्वादेव क्रियादीनां शब्दत्वे निरस्ते किमुत्तरग्रन्थेनेत्यत आह—**अनेनैवेति ॥ गोशब्दार्थे चैषां संभवादिति ।** अभेदसंभवात् , तेन **तदभिन्नाभिन्नस्य तदभिन्नत्व**मिति न्यायेन शब्दत्वाशङ्का तेषामिति भावः ॥ यद्वा गोशब्दार्थे गुणसमूहे समूहितया एषां संभवादित्यर्थः ॥ **शरीरव्यापारो** रोमाञ्चादिः ॥

**( तत्त्वालोकः )** भाष्ये–**यत्तर्हीति**–( यदि सास्नादिमती व्यक्तिः द्रव्यं न शब्दः ) तर्हि यत् तदिङ्गितादि तत् (द्रव्यान्यत्वात् शब्दः किमित्यर्थः ।

प्रदीपे–**अनेन**–सास्नादिमति द्रव्ये शब्दत्वनिरासकेन । लोकव्यवहारानुसारेणाह–**न्यायेनेति ।** श्रोत्रभिन्नचक्षुरादिग्राह्यत्वेन हेतुनेत्यर्थः । वैशेषिकदर्शनक्रमेणाह–**गुणक्रियेति । निराकृते**–निराकृतप्राये । **प्रपञ्चार्थम्**–जिज्ञासुबुद्धिवैशद्याय तस्य तस्य तेन तेन रूपेण प्रसिद्धेः ज्ञानाय वा । **तत्**–तेषां शब्दत्वम् । **चोद्येति**–प्रश्नेत्यर्थः । **निराकरोति**–निरसितुं निर्दिशति । **गोशब्दार्थे**–सास्नादिमति पिण्डे । **एषां**–क्रियादीनाम् । **पूर्ववदिति**–भिन्नेन्द्रियग्राह्यत्वान्न क्रिया शब्द इति प्रतीतम् , अपि तु क्रियेति । यदि च क्रियाऽनुशासनं विवक्षितमभविष्यत् अथ क्रियाऽनुशासनमित्येवावक्ष्यदिति रीत्येत्यर्थः । **तत्र**–इङ्गितादित्रयमध्ये । **कायपरिस्पन्दः**–गमनागमनादिः । **अक्षिव्यापारः**–निमीलनोन्मीलनादिः ।

उद्द्योते–**निरस्ते**–निरस्तप्राये । गुणादौ शब्दत्वशङ्कायाः कारणस्योद्योते विशेषतया विचारितत्वादत्र संक्षेपेणाह–**अभेदेति । गोशब्दाभि**न्नगवार्थाभिन्नक्रियादीनां गोशब्दभिन्नतया गौरिति ज्ञाने भासमानत्वात् तत्र शब्दत्वशङ्कोपपत्तिरित्याशयेनाह–**तेनेति ।** तत्र क्रियादीनां साक्षादपि भासमानता सम्भवतीत्यभिप्रेत्याह–**यद्वेति । गुणसमूहे**–गुणादिसमुदायात्मके ( ज्ञायमाने ) । **समूहितया**–अवयवतया । **सम्भवात्**–ज्ञानसम्भवात् । कायपरिस्पन्द इत्यनेन शरीरव्यापारस्य वक्ष्यमाणत्वात् शरीरव्यापार इत्यस्यार्थान्तरमाह–**रोमाञ्चादिरिति ।** अनेन "भाव इङ्ग्यते येन तदिङ्गितमि"ति व्युत्पत्तिः सूचिता ।

### ( निराकरणभाष्यम् )

### नेत्याह । क्रिया नाम सा ॥

### ( आक्षेपोपपादकभाष्यम् )

### यत्तर्हि तच्छुक्लो नीलः कपिलः कपोत इति, स शब्दः ? ॥

**( प्रदीपः ) शुक्लो नील इति ।** द्रव्यस्य प्रागुपन्यासाद् गुणमात्राभिधायिनोऽत्र शुक्लादयो द्रष्टव्याः ॥

**( तत्त्वालोकः )** भाष्ये–तटस्थ उत्तरमनुवदति–**नेत्याहेति ।** न ( तदिङ्गितादि शब्द ) इति वदति ( सिद्धान्ती ) इत्यर्थः । कुत इत्यत आह–**क्रियेति ।** यतः ( श्रोत्रभिन्नचक्षुरादिग्राह्यत्वात् ) **सा** ( इङ्गितादिव्यक्तिः शब्द इति न प्रसिद्धिः किन्तु ) क्रिया ( इति ) प्रसिद्धिः ( प्राधान्येन कृदन्तधातुवाच्यत्वाद् , अतः ) इत्यर्थः । **यत्तर्हीति**–( यदि तदिङ्गितादि क्रिया, न शब्दः ) तर्हि यः तच्छुक्लादिः स ( द्रव्यक्रियाभिन्नत्वात् ) शब्दः किमित्यर्थः । अत्र य **इति** वक्तव्ये प्रयुक्तस्य यदित्यस्याव्ययत्वात्साधुता । **कपोतः**–चित्रः ।

प्रदीपे—ननु "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति' इति कोशात् शुक्लादिशब्दानां गुणगुण्युभयवाचकतया अत्र के वाच्या इत्यत आह—**द्रव्यस्येति । मात्रेण** गुणवद्द्रव्यव्यावृत्तिः ।

### ( निराकरणभाष्यम् )

### नेत्याह । गुणो नाम सः ॥

### ( आक्षेपोपपादकभाष्यम् )

### यत्तर्हि तद्भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नं सामान्यभूतं, स शब्दः ? ॥

**( प्रदीपः ) भिन्नेष्वभिन्नमिति ।** अनेन सामान्यस्यैकत्वं कथ्यते ॥ **छिन्नेष्वच्छिन्नमिति ।** अनेन तु नित्यत्वम् ॥ **सामान्यभूतमिति ।** सत्ताख्यं महासामान्यं गोत्वादेः सामान्यविशेषस्योपमानं निर्दिष्टम् । सामान्यमिव सामान्यभूतम् । **भूतशब्द** उपमार्थे, यथा—पितृभूत इति ॥

**( उद्द्योतः ) एकत्वमिति ।** अनेकसमवेतत्वस्याप्युपलक्षणम्। नित्यत्वेन संयोगनिरासः। एकत्वेन प्रत्यभिज्ञानप्रत्यक्षरूपं प्रमाणं दर्शितम् ॥ भूतशब्दप्रयोगानुपपत्तिं परिहरति—**सत्ताख्यमिति ।** एवं हि वृक्षवदाम्र इत्याद्यापत्तेः। सामान्यश्रुतेः सर्वसामान्यविषयत्वेन प्रवृत्तायाः संकोचे कारणाभावाच्च। उपमाकथनस्य प्रकृतेऽनुपयोगाच्च। अध्याहारे गौरवाच्च नेदं युक्तम्। किं तु स्वरूपवाची सः। वृद्धिसंज्ञासूत्रस्थभाष्यप्रयोगस्य **'प्रमाणभूत'** इत्यस्य स्वयं करिष्यमाणव्याख्यानरीत्याऽस्यापि व्याख्यानसंभवात् ॥ पितृभूत इत्यत्रा**प्यन्यत्रान्यशब्दप्रयोगः सादृश्यपर** इति सादृश्यप्रतीतिर्न त्वस्य सादृश्यवाचकत्वे मानमस्तीति दिक्।

**( तत्त्वालोकः )** भाष्ये–स तदनुवदति–**नेत्याहेति ।** न ( तच्छुक्लादिः शब्द इति वदति ( सः ) इत्यर्थः। कथमित्यत आह—**गुण इति ।** यतः ( श्रोत्रभिन्नचक्षुर्ग्राह्यत्वात् ) स ( शुक्लादिः शब्द इति न प्रसिद्धम् , अपि तु ) गुण ( इति ) प्रसिद्धम् ( द्रव्यकर्मभिन्नत्वे सति सामान्यवत्त्वाद् , अतः ) इत्यर्थः। ननु शब्दरूपयोः गुणत्वेनाभेदात् शब्द इव रूपेऽपि शब्दशब्दव्यवहारः कुतो नेति चेन्न, तयोः गुणत्वेनाभेदेऽपि शब्दशब्दव्यवहार्यताप्रयोजकस्य श्रोत्रग्राह्यगुणत्वस्य शब्दातिरिक्तेऽसत्त्वात्। **यत्तर्हीति–**(यदि तच्छुक्लादिः गुणः न शब्दः) तर्हि यत् ( तस्य ) सकलगोषु सर्वदा वृत्त्येकं ( गोत्वं ) तत् ( द्रव्यक्रियागुणान्यत्वात् ) शब्दः किमित्यर्थः।

प्रदीपे–**तुना** उक्तवैलक्षण्यं बोध्यते। सत्ताजातेः द्रव्यगुणकर्मवृत्तित्वात् सकलजात्यपेक्षया अधिकदेशवृत्तितेत्याशयेनाह–**महेति । सामान्यभूतं–**महासामान्यसदृशम्। प्रकृतसामान्यशब्दस्य महासामान्यपरत्वात्। **उपमार्थे–**सादृश्ये। **पितृभूतः–**पितृसदृशः।

उद्द्योते—कैयटस्य न्यूनतां निरसितुमाह–**अनेकेति ।** एतावता एकत्वे सति नित्यत्वे सति अनेकनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तितावत्त्वं सामान्यलक्षणं सूचितम्। तत्रात्यन्ताभावेऽतिप्रसक्तिनिरासाय समवायेति। गगनपरिमाणादावतिव्याप्तिवारणायानेकनिरूपितेति। द्वितीयसत्यन्तकृत्यमाह—**संयोग निरास इति ।** अनेन विभुद्वयसंयोगास्वीकारः सूचितः। अन्यथा नित्ये तत्रातिप्रसङ्गव्युदासाय संयोगभिन्नत्वे सतीति, पटादावतिव्याप्तिवारणाय नित्यत्वे सतीति च समच्येत। प्रथमसत्यन्तस्याव्यावर्त्तकत्वात् स्वरूपपरिचायकतामात्रमिति सूचयितमाह—**एकत्वेनेति । प्रत्यभिज्ञा–**सोऽयं गौरित्याद्याकारिका। **प्रमाणमिति–**गोत्वादिसामान्यसद्भावे इत्यादिः। कैयटकथितं कर्त्तयति–**एवं हीति ।** सामान्यविशेषयोरुपमानोपमेयभावस्वीकारे हीत्यर्थः। एतदन्वितपञ्चम्यन्तानां नेदं युक्तमित्यत्र सम्बन्धः। **सामान्यश्रुतेः–**( अत्र ) सामान्येतिशब्दश्रवणस्य। **सर्वसामान्येति–**सामान्यविशेषरूपसकलजातीत्यर्थः। **सङ्कोचे–**महासामान्यमात्रपरत्वे। **अध्याहारे इति–**गोत्वादिरूपजातिविशेषवाचकशब्दस्येत्यादिः। **इदम्–**सामान्यविशेषयोरुपमानोपमेयभावाङ्गीकरणम्। प्रकृते सामान्यभूतेतिशब्दश्रवणेन झटिति बोधोपपत्तये भूतशब्दस्यार्थान्तरपरतामाह–**किन्त्विति । सः–**भूतशब्दः। ननु तस्य स्वरूपवाचकत्वे मानाभाव इत्यत आह–**वृद्धिसंज्ञेति । व्याख्यानेति–**"प्रामाण्यं प्राप्त इत्यर्थः। भू प्राप्तावित्यस्याऽऽधृषाद्वेति णिजभावे रूपम्। वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्त्तते।" इति व्याख्यानेत्यर्थः। **अस्य–**सामान्यभूतशब्दस्य। **सम्भवात्–**सम्भवाच्च। तथा चात्र सामान्यशब्दस्य सामान्यत्वपरतया, प्राप्त्यर्थकभूधातोः "आ धृषाद्वे"ति णिजभावे क्त प्रत्यये च सिद्धस्य भूतशब्दस्य प्राप्तार्थकतया च सामान्यभूतमित्यस्य सामान्यत्वं प्राप्तमित्यर्थः। ननु पितृभूत इत्यत्रेवात्रापि भूतशब्दस्य सदृशवाचकता कुतो नेत्यत आह–**पितृभूत** इति। **इति–**इति न्यायेन। अस्य–भूतशब्दस्य। **दिगिति–**एतदर्थस्तु प्रकृते सामान्यञ्च तद्भूतञ्चेति कर्मधारयः। तथा गोत्वादिसामान्यस्यागवादिव्यावृत्तरूपत्वे तस्यायं गौरयं गौरित्याद्यनुगताकारप्रतीतिविधिमुखप्रवृत्तशब्दविषयत्वायोगेनाप्रामाणिकत्वापातात् तस्य तद्रूपताव्यावर्त्तनाय परमार्थवाचको भूतशब्द उपात्त इति बोध्यः।

## ( निराकरणभाष्यम् )

## नेत्याह । आकृतिर्नाम सा ॥

**( उद्द्योतः )** भाष्ये—**आकृति**र्जातिः संस्थानं च। आक्रियते व्यवच्छिद्यते स्वाश्रयोऽनयेति व्युत्पत्तिरिति भावः॥ शङ्कापरभाष्ये **सामान्यभूत**मित्यस्य तद्व्यञ्जकं चेत्यप्यर्थो बोध्यः॥ जातिमात्रपरत्वे **'जात्याकृतिव्यक्तयस्तु पदार्थः'** इति गौतमसूत्रेण तस्यापि पदार्थत्वबोधनात्, प्रत्यक्षादौ तद्भानाच्च, तस्य शब्दत्वाशङ्कातत्समाधानाभावेन न्यूनता स्यात्॥ **सिद्धे शब्दार्थेति** वार्तिकव्याख्याने भाष्ये तस्यापि पदार्थत्वम्। नियत्वं च कैयटो वक्ष्यति। **तदभिन्नाभिन्नस्य तदभिन्नत्व**मिति न्यायस्तु यत्र स्वाभिन्नद्वारकः स्वस्वरूपानुगमस्तद्विषयः। यथा **परमकारणकार्यो**पादानकं परमकारणाभेदः। अत एव सुखदुःखयोर्नैक्यम्, नापि कुण्डलकटकयोस्तत्। कुण्डलारम्भकस्वर्णावयवानुगमस्य कटकेऽभावात्। एवं गुणसमूहस्यानुद्भूतावयवभेदस्य वाच्यत्वेऽपि समूहिनां तत्तद्रूपेणावाच्यत्वान्न तेषां शब्दत्वशङ्केति भावः॥

**( तत्त्वालोकः )** भाष्ये—उत्तरमनुवदति तटस्थः–**नेत्याहेति ।** न ( तस्य गोत्वं शब्द ) इति वदति ( सिद्धान्ती ) इत्यर्थः। कस्मादेवमित्यत आह–**आकृतिरिति ।** यतः ( श्रोत्रभिन्नचक्षुरादिग्राह्यत्वात् ) सा ( गोत्वादिव्यक्तिः शब्द इति न प्रसिद्धम् , किन्तु ) आकृतिः ( जातिरिति ) प्रसिद्धं ( नित्यत्वे सत्यनेकसमवेतत्वाद् , अतस्तथा ) इत्यर्थः।

उद्द्योते–अत्राकृतिशब्दस्य न जातिमात्रपरता, जातिशब्दमनुपादाय आकृतिशब्दोपादाने तत्र जातिसंस्थानोभयबोधकतारूपस्यैव बीजस्य सत्त्वादित्याशयेनाह–**संस्थानमिति ।** अवयवसंयोगविशेष इत्यर्थः। प्रकृते संस्थानं गुणक्रियादिमत्सास्नाद्यवयवसन्निवेशविशेषरूपगवाकारः। अत्रोत्तरपरभाष्ये आकृतिशब्देन गृहीते संस्थाने शब्दत्वनिराकरणस्य सङ्गतये "प्राप्तौ सत्यां निषेध" इति नियमेन तत्र शब्दत्वशङ्कोपपत्तेरावश्यकतयाऽऽह–**शङ्कापरभाष्ये इति । तद्व्यञ्जकं—**सामान्यज्ञापकं ( संस्थानम् )। एवंव्याख्याने युक्त्यन्तरमाह–**जातिमात्रपरत्वे इति ।** आकृतिसामान्यभूतशब्दयोरित्यादिः। **पदार्थ इति—**"गौर्न पदा स्प्रष्टव्ये"त्यत्र जातिः पदार्थो व्यक्त्याकृती विशेषणे। "पिष्टकमय्यो गाव" इत्यत्राकृतिः पदार्थो जातिव्यक्ती विशेषणे। "गौर्गच्छती"त्यत्र व्यक्तिः पदार्थो जात्याकृती विशेषणे इति बोध्यम्। **तस्य–**संस्थानस्य। **बोधनादिति–**अत एव "गां लिखे"त्यादौ गवाकारस्य लेखनकर्मत्वोपपत्तिः। **तद्भानात्–**संस्थानभानात्। **स्यादिति–**केचित्तु अवयवसंयोगविशेषरूपसंस्थानस्य गुणत्वादेव तत्र शब्दत्वशङ्कासमाधानयोरुपपन्नतया न भाष्यकृतो न्यूनता, न वा प्रकृते आकृतिशब्दस्य जातिसंस्थानोभयपरतेति वदन्ति। संस्थानस्य पदार्थत्वे भाष्यकृत्सम्मतिमाह–**सिद्धे इति । तस्यापि–**संस्थानस्यापि। **पदार्थत्वमिति–**कथितमिति शेषः। ननु "तदभिन्नाभिन्नस्येति न्यायेन क्रियादिषु विहितायाः शब्दत्वशङ्कायाः "नेत्याह। क्रिया नाम से"त्यादिरीत्या निराकरणे तस्य न्यायस्य निर्विषयत्वापत्तिरुत्तरेण तेषां भेदबोधनादित्यत आह–**तद्भिन्नेति । स्वेति–**कारणेत्यर्थः। **परमेति–**परमकारणं

मूलप्रकृतिः, तत्कार्यं महत्तत्वम्, तदुपादानके अहङ्कारे, इत्यर्थः । **अत एव**–तस्य न्यायस्य तादृशविषयत्वादेव । **तत्**–ऐक्यम् । कुत एवमित्यत आह–**कुण्डलेति** । वस्तुतः कुण्डलकटकयोः कारणरूपेणाभेदः, कार्यात्मना भेदः । अत एवाह—'कार्यरूपेण नानात्वमभेदः कारणात्मना । हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा" ॥ इति । एवमीदृशमेव तदभिन्नेति न्यायोदाहरणमर्पाति बोध्यम् । यद्वा कल्पेन तत्र तच्छाङ्कायामेवं निराकरणतात्पर्यमाह–**एवमिति** । तद्वदित्यर्थः । **वाचकत्वेऽपीति**–गवादिशब्दस्येत्यादिः । **समूहिनाम्**–अवयवानाम् ( इङ्गितशुक्लादीनाम् ) । **तत्तद्रूपेण**–तत्तद्विशेषरूपेण इङ्गितत्वादिना । **तेषां**–क्रियादीनाम् ।

## ( आक्षेपोपसंहारभाष्यम् )

## कस्तर्हि शब्दः ? ॥

**( प्रदीपः )** द्रव्यादिषु निरस्तेषु पृच्छति—**कस्तर्हीति** ।

**( उद्द्योतः ) पृच्छतीति** । प्रश्नविषयविशेषान्तराभावात् सामान्यरूपेण पृच्छतीत्यर्थः ।

**( तत्त्वालोकः )** उद्द्योते—अथ "कि यः शब्द्यते स शब्दः । नेत्याह, अर्थरूपं तद्" इत्येकोक्त्यैवेष्टसिद्धिसम्भवे किमर्थमनेकोक्तिरनुसृतेति चेन्न, मन्दधियां स्पष्टबोधाय तथाऽभिधानात् । तथा च श्रोत्राग्राह्यत्वाद् द्रव्यक्रियागुणसामान्यानां न शब्दतेति सिद्धान्तः । पूर्वप्रश्नापेक्षया प्रकृतप्रश्ने वैलक्षण्यमाह–**प्रश्नेति । विशेषान्तरेति**–व्यावर्त्यशब्दत्ववदित्यादिः । अत एव शब्दस्य प्रश्नयोग्यस्य सत्त्वेऽपि नासङ्गतिः ।

## ( समाधानभाष्यम् )

## येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां संप्रत्ययो भवति स शब्दः ॥

**( प्रदीपः )** उत्तरमाह—**येनोच्चारितेनेति** । वैयाकरणा वर्णव्यतिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वमिच्छन्ति । वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसङ्गात् । आनर्थक्ये तु प्रत्येकमुत्पत्तिपक्षे यौगपद्येनोत्पत्त्यभावात् अभिव्यक्तिपक्षे तु क्रमेणैवाभिव्यक्त्या समुदायाभावादेकस्मृत्युपारूढानां वाचकत्वे सरो रस इत्यादावर्थप्रतिपत्त्यविशेषप्रसङ्गात्तद्व्यतिरिक्तः स्फोटो नादाभिव्यङ्ग्यो वाचको विस्तरेण वाक्यपदीये व्यवस्थापितः ।—**उच्चारितेन** । प्रकाशितेनेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये **उच्चारितेनेति** । शारीरमारुताभिहतकण्ठादिस्थानैरवयवद्वाराभिव्यक्तेन येनेत्यर्थः । अत्र विषाणान्तैरवयवैर्गुणादयोऽप्युपलक्ष्यन्ते ॥ **संप्रत्ययो** ज्ञानम् । ननु प्रत्यायकशब्दस्य वर्णसमूहरूपतया येनेत्येकवचनमयुक्तम् । न च वनमितिवत् समूहाभिप्रायं तत् । समूहस्य स्थिरस्य निरूपयितुमशक्यत्वादत आह—**वैयाकरणा इति** । वर्णव्यतिरिक्तपदानभ्युपगमे एकैकस्य वर्णस्य वाचकत्वं, समुदायस्य वा, नाद्य इत्याह—**वर्णानां प्रत्येकमिति** ॥ द्वितीयमनूद्य दूषयति—**आनर्थक्ये तु प्रत्येकमिति** । प्रत्येकमानर्थक्ये तु समुदायस्य वाचकत्वमुपेयम्, तत्तु न युक्तम् इति शेषः । यतस्तत्र नयद्वयम्—उत्पद्यमानसमुदायस्याभिव्यज्यमानसमुदायस्य वा वाचकत्वमिति । तत्राद्यं दूषयति—**उत्पत्तिपक्षे इति** । उत्पत्त्यभावादित्यस्य समुदायाभावादित्यनेनान्वयः ॥ द्वितीयं दूषयति—**अभिव्यक्तीति** । उत्पन्नाभिव्यक्तेर्ध्वंस्तत्वादित्यर्थः ॥ ननु पक्षद्वयेऽपि पूर्वपूर्ववर्णानुभवजसंस्कारसहकृतान्त्यवर्णानुभवहेतुकैकस्मृत्युपारूढानां वाचकत्वमस्त्वत आह—**एकस्मृतीति** ॥ ननु तस्य नित्यत्वे सर्वदार्थप्रतीतिप्रसङ्गोऽत आह—**नादेति** । नादो वर्णः ॥ ननु येन क्रमेणानुभूता वर्णास्तेनैव क्रमेणैकस्मृत्युपारूढानां वाचकत्वेन नार्थप्रतीत्यविशेषप्रसङ्गः, अन्यथा त्वयापि वर्णानां स्फोटव्यञ्जकत्वाभ्युपगमात् कथं पूर्वोक्तदोषान्निस्तारस्तवापीत्यत आह—**विस्तरेणेति** । इदमेकं पदमेकं वाक्यमिति प्रत्ययः स्फोटसत्त्वे तदैक्ये च प्रमाणम् । अनुभवक्रमेणैव स्मरणमित्यर्थे दृढप्रमाणाभावाच्च । क्रमेणानुभूतानां व्युत्क्रमेणापि स्मरणदर्शनात् । मम तु यथा पटे नानारञ्जकद्रव्याहितनानावर्णोपरागः क्रमेण, तथा एकस्मिन्नेव तस्मिन्नुच्चारणक्रमेण क्रमवानेन तत्तद्वर्णस्वरूपानुरागः स च स्थिरः, तस्य च मनसा ग्रहणमिति न दोषः ॥ अत्र येनेत्येकवचनेन विषाणिनामिति बहुवचनेन चानेकोच्चारणविषयगोरित्यस्यैकत्वं सूचितम् । एवं च तेनैव दृष्टान्तेन घटपटादिबोधकसाधारण्येन वाचकस्यैकत्वं सूचितम् । भेदप्रत्ययस्त्वौपाधिक इत्याद्यस्मत्कृतमञ्जूषायां शक्तिवादे द्रष्टव्यम् ॥ नन्वेवं तस्य ताल्वोष्ठपुटव्यापारविषयत्वाभावादुच्चारितेनेत्ययुक्तमत आह—**प्रकाशितेनेति** । अभिव्यञ्जकैरिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये–ज्ञातसङ्केतस्यापि पदस्याप्रकाशितस्य बोधकत्वाभावादाह–**उच्चारितेनेति । सः**–स्फोटः । तथा च शब्द्यते येनेति व्युत्पत्तौ घञित्यभिप्रेत्याह–**शब्द इति** ।

प्रदीपे–**उत्तरमिति**–सिद्धान्तीत्यादिः । पदस्यापि कल्पितत्वादाह–**वाक्यस्य वेति । पक्षे तु**—पक्षेऽपि । उभयत्र रेफसकारादिवर्णानां साम्यादाह–**अविशेषेति । तदिति**–वर्णेत्यर्थः । **व्यवस्थापित इति**–तथा च स्फोटाभिप्रायेणैव येनेत्यत्रैकवचनप्रयोग इति भावः ।

उद्द्योते—**अवयवद्वारेति**–इदं सखण्डस्फोटस्थले । अखण्डस्फोटस्थले तु साक्षात् । **लक्ष्यन्ते इति**–अनेन न्यूनता निराकृता । **ज्ञानम्**–अनुभवरूपम् । केचित्तु "एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयती"ति नियमेन पदज्ञानोत्तरं जायमानोऽर्थसम्प्रत्ययः स्मरणात्मक एव भवतीति वदन्ति, तन्न, पदार्थोपस्थितेः स्मृतित्वस्य मञ्जूषायां खण्डितत्वात् । **समूहाभिप्रायम्**–अनुद्भूतावयवविशेषवर्णसमुदायतात्पर्यकम् । **तत्**–एकवचनम् । **समूहस्येति**—तद्वदत्रेत्यादिः । **स्थिरस्य**–चिरसमयवर्तिनः । वर्णानामुत्पत्तेरभिव्यक्तेर्वा यौगपद्यासम्भवात् क्रमिकतया तेषां क्षणिकत्वाद् अग्रिमवर्णसमये पूर्ववर्णस्यानवस्थानादाह–**अशक्यत्वादिति । द्वितीयमनूद्य दूषयति**–आद्यपक्षोक्तदोषमनूद्य द्वितीयपक्षं निराकरोति । तत्राद्यमाह—**प्रत्येकमिति**–वर्णानां प्रत्येकं वाचकत्वे द्वितीयादिवर्णानां वैयर्थ्ये स्थित्यर्थः । शेषं पूरयति–**समुदायस्येति । तत्तु**—तदपि । **तत्र**—समूहस्य वाचकत्वे । **नयेति**–मतेत्यर्थः । **उत्पद्यमानेति**—उत्पद्यमानानां समुदाय इति विग्रहः । एवमग्रेऽपि । क्रमेणैवेत्यत्र युक्तिमाह–**उत्पन्नेति** । उत्पन्ना चेयमभिव्यक्तिरिति व्युत्पत्तिः । मशब्दस्य रामवाचकत्वापत्त्या पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णस्य वाचकत्वासम्भवात्प्रकारान्तरमाह—**पूर्वपूर्वेति** । तथा च कल्पद्वयेऽपि समुपपत्तिरिति भावः । **तस्य**–स्फोटस्य । **वर्ण इति**–अनेन ध्वनिः निरस्तः । वर्णसत्ताकल्पे ध्वनौ साक्षात् स्फोटाभिव्यञ्जकत्वस्याभावादित्याशयः । **प्रसङ्ग इति**—तथा च स्फोटो नाभ्युपेय इति भावः । **अन्यथा**–अनुभवक्रमेण स्मृतिविषयत्वानभ्युपगमे । **त्वया**–स्फोटवादिना । **पूर्वोक्तेति**—अर्थप्रतीत्यविशेषप्रसङ्गरूपेत्यर्थः । अत आह—"यस्यानवयवः[1] स्फोटो व्यज्यते वर्णबुद्धिभिः । सोऽपि पर्यनुयोगेन[2]

---

१ **यस्येति**–मते इति शेषः । २ **पर्यनुयोगेन**–प्रश्नेन ।

न केनापि विमुच्यते ॥" इति । **तदैक्ये**-स्फोटैक्ये । हेत्वन्तरेण स्फोटं संसाध्य वर्णसमुदायस्य वाचकत्वाभ्युपगमे नदी, दीन इत्यादावर्थ-प्रतीत्यविशेषप्रसङ्गरूपदोषपदानाय अनुभवक्रमविपरीतक्रमेण स्मरण-विषयतामुपपादयितुं युक्तिमाह—**अनुभवेति ।** अत आह—"नानु-भूतिक्रमाद्वर्णाः क्रमिकाः स्मृतिगोचराः । गोचरो[१]ऽनुभवो न स्यात्त-त्क्रमस्ते[२] कुतः पुनः ॥" इति । **दर्शनादिति**—तृतीयदिनानुभूतकृष्ण-मूर्त्तिं विहाय द्वितीयदिनानुभूतरामप्रतिमास्मृतिस्थले इति भावः । अथैवंस्फोटवादिनस्तवैव कथं सामाञ्जस्यमित्यत आह—**मम त्विति । तस्मिन्**—स्फोटे । **क्रमेणेति**-न तु व्युत्क्रमेणेति भावः । **सः**—स्फोटः । **स्थिर इति**—अत एव न वर्णवत् क्षणिकताप्रयुक्तानु-पपत्तिः । स्फोटस्य श्रोत्राग्राह्यत्वादाह—**तस्येति ।** स्फोटस्येत्यर्थः । **अत्र**—भाष्ये । विभिन्नोच्चारयितृकतया विभिन्नविषयकतया चोच्चारण-स्यानेकतेत्याशयेनाह—**अनेकोच्चारणेति । सूचितमिति**—तथा च विषाणिनामित्यत्र प्रश्नवाक्य इवैकवचनमेव कुतो नेति जिज्ञासा निरस्ता । **एवञ्च**-स्फोटस्यैकत्वसूचने च । **वाचकस्य**—स्फोटस्य । **सूचितम्**—समुचितम् । नन्वेवं कथं घटपटादिशब्दानां परस्परं भेदप्रतीतिरित्यत आह—**भेदप्रत्यय इति । औपाधिकः**—घपादि-वर्णात्मकोपाधिभेदप्रयुक्तः । **एवं**—स्फोटस्य वर्णातिरिक्तत्वे । **तस्य**—स्फोटस्य । वर्णानां बहुत्वाद् वर्णैरेव व्यञ्जितात् स्फोटादर्थबोधस्येष्ट-त्वाचाह—**अभीति ।** नन्वलौकिकस्फोटस्य शब्दपदार्थत्वे लौकिक-शब्दानुशासनप्रतिज्ञा विरुध्यतीति चेन्न, व्यञ्जकानुशासनद्वारा व्यङ्ग्या-नुशासनस्यैव विवक्षणात् ॥

## ( समाधानान्तरभाष्यम् )

**अथवा-प्रतीतपदार्थको लोके ध्वनिः शब्द इत्यु-च्यते । तद्यथा-शब्दं कुरु, मा शब्दं कार्षीः, शब्द-कार्ययं माणवकः, इति ध्वनिं कुर्वन्नेवमुच्यते । तस्माद् ध्वनिः शब्दः ॥**

**( प्रदीपः ) अथवेति ।** अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापि-तत्वादिहाभेदेन व्यवहारेऽपि न दोषः, द्रव्यादयो न शब्दशब्दवाच्या इत्यत्र तात्पर्यात् । **ध्वनिं कुर्वन्निति ।** विधिनिषेधयोरप्रवृत्तविषयत्वा-त्कथमस्य त्रिभिः संबन्धः । उच्यते—शब्दं कुर्वन्नपि शब्दं कुर्वित्युच्यते विरामाशङ्कायां तन्निवृत्तये । तथानभिमतशब्दश्रवणोद्वेजितेनोच्यते—मा शब्दं कार्षीरिति ॥

**( उद्द्योतः )** भाष्ये **अथवा प्रतीतपदार्थक इति ।** लोके व्यव-हर्तृषु पदार्थबोधकत्वेन प्रसिद्धः श्रोत्रेन्द्रियग्राह्यत्वाद्वर्णरूपध्वनिसमूह एव शब्द इत्यर्थः । तस्यार्थबोधकताप्यविचारितरमणीयस्यैव लोके सिद्धा तादृशस्यैव शास्त्रेणान्वाख्यानमिति तात्पर्यम् । तदाह—**अन्य-त्रेति ।** संग्रहादौ तपरसूत्रे भाष्ये चेत्यर्थः । ध्वनिपदेनात्र दानवैखरी, स्फोटपदेनाभिव्यक्तकत्वादिको मध्यमावस्थ आन्तरः शब्द उच्यते ॥ **कथमस्येति ।** कुर्वन्नित्यस्य वर्तमानार्थत्वादित्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—नन्वेवमर्थप्रत्यायकतया मनोग्राह्यस्फोटस्य शब्दत्वे श्रोत्रग्राह्यगुणत्वस्य शब्दलक्षणताऽनुपपद्येत, विरुद्ध्येत चार्थाप्र-त्यायकतया वर्णानामशब्दत्वे तेषां शब्दशब्दव्यवहार्यतेत्यत आह—**अथवेति ।** पदार्थ एव पदार्थकः । स्वार्थे कन् । प्रतीतश्चासौ पदार्थक इति व्युत्पत्तिः । पदार्थकशब्दस्य पदार्थबोधके लक्षणा । अथवा प्रतीतः पदार्थो यस्मादिति विग्रहः । लक्षणाऽकरणलाघवात् । **ध्वनिः**—कादि-

१ **गोचर इति**-अनुभवान्तरेत्यादिः । २ **तदिति**-अनुभवेत्यर्थः ।

वर्णात्मकः । एवमग्रेऽपि । अनुभवादिना वर्णस्थले आवश्यकतामुपेतैः ध्वनिभिरेव स्फोटाभिव्यक्तिसम्भवे तदतिरिक्तवर्णाङ्गीकारे गौरवाद् ध्वनय एव वर्णा इति भावः । **उच्यते इति**—अनेनात्रोत्तरे सिद्धा-न्त्यसम्मतिः सूचिता । अन्वयव्यतिरेकाभ्यां ध्वनेः शब्दतासाधनाय हानोपादानोपेक्षारूपत्रिविधव्यवहारे तस्य शब्दताप्रसिद्धिमुपपादयति—**तद्यथेति ।** ध्वनिं कुर्वन्नित्येवमुच्यते इत्यन्वयः । अथवा ध्वनिं कुर्वन्ने-वमुच्यते इतीति योजना । वापदे एववाचक एवमिति । **तस्मात्**—लोकव्यवहारात् ।

प्रदीपे-**दोषः**—अभेदापादनरूपः । तर्हि तस्य व्यवहारस्य काभि-प्राय इत्यत आह—**द्रव्यादय इति ।** प्रवृत्तम्प्रति प्रेरणानिषेधयोः वैयर्थ्यसम्भवादाह-**अप्रवृत्तेति । अस्य**—ध्वनिं कुर्वन्नित्यस्य । एके-नान्वयसम्भवेऽपि समूहेन तदसम्भवादाह—**त्रिभिरिति ।** शब्दं कुरु इत्यादिवाक्यत्रयेणेत्यर्थः ।

उद्द्योते—लोके इत्यस्यार्थमाह—**व्यवहर्त्तृष्विति ।** अस्य पदार्थ-शब्दलक्ष्यार्थघटकबोधे प्रतीतशब्दार्थघटकप्रसिद्धौ वा सम्बन्धः । **वर्ण-रूपेति**—वर्णात्मकता ध्वनौ तत्समूहे च बोध्या । ननूक्तरीतौ कथं ध्वनेस्तत्समूहस्य चार्थबोधकता संभवतीत्यत आह—**तस्येति ।** ध्वनेस्तत्समूहस्य चेत्यर्थः । नन्वेवं कथं ध्वनेस्तत्समूहस्य च शब्द-त्वोक्तिरत आह—**तादृशस्येति ।** अविचारितरमणीयस्येत्यर्थः । एतेन तद्वरस्य वैयर्थ्यं सूचितम् । **अत्र**—कैयटे । **दानवैखरी**—वैखरी-नादः ( श्रोत्रग्राह्यः ) । नादवैखरीति पाठो युक्तः ।

( इत्यनुशासनीयशब्दनिरूपणाधिकरणम् )

---

## ( शब्दानुशासनशास्त्रप्रयोजनाधिकरणम् )

## ( आक्षेपभाष्यम् )

**कानि पुनः शब्दानुशासनस्य प्रयोजनानि ? ॥**

**( प्रदीपः ) कानि पुनरिति ।** किं संध्योपासनादिवद्व्याकरणा-ध्ययनं नित्यं कर्माथ काम्यमिति प्रश्नः ॥

**( उद्द्योतः )** भाष्ये **कानि पुनः शब्दानुशासनस्येति । शब्द-**ज्ञानफलकव्याकरणाध्ययनस्येत्यर्थः । तदाह—**किं सन्ध्येति ।** शब्द-ज्ञानद्वारा अध्ययनस्य तदज्ञानप्राप्तप्रत्यवायपरिहारः फलमुत तदतिरि-क्तमपि किंचिदिति प्रश्नाशय इत्यर्थः ॥ प्रयोजनशब्दः करणव्युत्पत्त्या प्रयोजकपरोपि । तेन व्याकरणाध्ययनस्य प्रयोजकं किंचिदस्ति न वेत्यपि प्रश्नाशयो बोध्यः ॥ अत एवोत्तरे आगमपदोपादानम् ॥ **नपुसकमन-पुंसकेने**त्येकशेषः । तत्रैकवद्भावस्य वैकल्पिकत्वात्प्रश्ने बहुवचनमुत्तरे एकवचनं बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—अथान्येच्छानधीनेच्छाविषयत्वात् स्वतः पुरुषार्थयोः सुखस्य दुःखाभावस्य च साक्षात् परम्परया वा साधन-तायाः सर्वत्र साफल्यायावश्यसाधनीयतया प्रकृते व्याकरणाध्ययनेन साधुशब्दज्ञानद्वारा तज्ज्ञानद्वारा तदज्ञानजपापक्षयात्मकादृष्टकार्यमात्रं तादृशादृष्टान्यादृशादृष्टकार्याणि सम्पाद्य स्वतः पुरुषार्थसाधनं धर्मादिं साधयतीति जिज्ञासया पृच्छति-**कानीति । पुनरिति**—विशेषेणेत्यर्थः । सामान्येन प्रयोजनस्य साधुशब्दज्ञानस्योक्तत्वात् । अथवा पश्चात् ( साधुशब्दज्ञानानन्तरम् ) इत्यर्थः ।

प्रदीपे—**नित्यमिति**—अत्र नित्यत्वं न ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम्, कर्मत्वेन जन्ये सन्ध्यादावव्याप्तेः । नापि दैनिकानुष्ठानविषयत्वं तत्, तथा सति "वसन्ते वसन्ते ज्योतिषा यजेते"ति श्रुत्या वसन्तमात्रानुष्ठानविषये ज्योतिष्टोमयागेऽव्याप्तेः ।

नाप्यनायनन्तफलकत्वं तत्, एवं सति "अग्निहोत्रं जुहुयात् स्वर्गकाम" इति श्रुत्या जन्यस्वर्गफलकेऽग्निहोत्रेऽव्याप्तेः। किन्तु अकरणे पापजनकत्वे सति करणे फलविशेषाजनकत्वं नित्यत्वम्। एवं काम्यत्वमपि न कामनाविषयत्वम्, तथा सति जानाति, इच्छति, यतते इति क्रमस्य सत्त्वेन प्रवृत्तिविषयमात्रे काम्यत्वापत्तेः। किन्तु अननुष्ठाने प्रत्यवायासाधनत्वे सति अनुष्ठाने फलविशेषसाधनत्वं तत्। एवम् अननुष्ठाने पापजनकत्वे सति करणे फलविशेषजनकत्वं नैमित्तिकत्वमिति बोध्यम्।

उद्द्योते–व्याकरणस्य स्वरूपतः रक्षाद्यसाधकत्वात् प्रकृते शब्दानुशासनशब्दस्य व्याकरणात्मकस्ववाच्यार्थपरताया अनुपपत्त्या तस्य लक्ष्यार्थमाह—**शब्दज्ञानेति। तदाहेति—**लक्ष्यार्थमनुसृत्य वदतीत्यर्थः। व्याकरणाध्ययनस्य साधुशब्दज्ञानरूपसाक्षात्प्रयोजनस्योक्ततया अयं प्रश्नः, तस्य पारम्परीणप्रयोजनजिज्ञासयेत्यभिप्रेत्याह—**शब्दज्ञानेति। अध्ययनस्य—**व्याकरणाध्ययनस्य। **तदिति**—साधुशब्देत्यर्थः। **तदिति**—तादृशप्रत्यवायपरिहारेत्यर्थः। **अपिना** तादृशपापपरिहारस्य समुच्चयः। **किञ्चिदिति–**फलमिति शेषः। तथा च व्याकरणाध्ययनस्याद्यपक्षे नित्यता, द्वितीयपक्षे काम्यतेति फलति। उत्तरे प्रवर्त्तकागमोल्लेखानुरोधादाह—**प्रयोजनेति। करणेति—**प्रयुज्यते प्रवर्त्यतेऽनेनेतीत्यर्थः। केचित्तु प्रयोजयतीति कर्त्तृल्युत्पत्त्या बाहुलकात् कर्त्तृल्युडन्तस्य प्रयोजनशब्दस्य प्रवर्त्तकपरतां कथयन्ति। **अपिना** फलपर इत्यस्य समुच्चयः। तत्र प्रयोजकपरः प्रयोजनशब्दः पुँल्लिङ्गः। फलपरोऽपरः स क्लीबलिङ्गः। अत एवोभयोरेकशेषं वक्ष्यति "नपुंसकमि"त्यनेन। तथा च रक्षोहलघ्वसन्देहाः व्याकरणाध्ययनस्य शब्दज्ञानद्वारा फलानि, तथा आगमः तस्य प्रयोजक इति भावः। **तेन**—प्रयोजनशब्दस्य प्रवर्त्तकपरत्वेन। **प्रश्नाशय इति।** साधुशब्दाज्ञानजपापक्षयभिन्नमपि किञ्चिद् व्याकरणाध्ययनस्य प्रयोजकमस्ति, अथवा तदात्मकमेवास्तीत्यपि प्रश्नाशय इत्यर्थः। **अत एव–**प्रवर्त्तकविषयेऽपि प्रश्नसत्त्वादेव। **एकशेषः–**प्रयोजनश्च प्रयोजनानि चेति विग्रहे प्रयोजनानीत्यस्य सिद्धये क्लीबलिङ्गस्य तस्यैकशेषः। ननु प्रश्नोत्तरयोः कुतो वचनभेद इत्यत आह–**तत्रेति।** एकशेषे इत्यर्थः। **प्रश्ने–**"कानी"ति भाष्यस्थे। **उत्तरे–**"रक्षोहे"ति भाष्यस्थे।

## ( समाधानभाष्यम् )

## रक्षोहागमलघ्वसंदेहाः प्रयोजनम् ॥

## ( रक्षापदार्थनिरूपणभाष्यम् )

## रक्षार्थं वेदानामध्येयं व्याकरणम्। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यतीति ॥

**( प्रदीपः )** पारम्पर्येण पुरुषार्थसाधनतामस्याह—**रक्षेति।** लोके लोपाद्यदृष्टं वेदे दृष्ट्वा भ्राम्येदवैयाकरणः, वैयाकरणस्तु न भ्राम्यति वेदार्थं चाध्यवस्यति। तत्र **लोपागम**योरुदाहरणं **देवा अदुहेति।** दुहेर्लङो झस्यादादेशे कृते **लोपस्त आत्मनेपदेष्विति** तलोपः, **बहुलं छन्दसीति** रुटि सति रूपमेतत्। **वर्णविकारो** यथा—**उद्ग्राभं च निग्राभं** चेति। **हृग्रहोर्भश्छन्दसि हस्तेतिवक्तव्यमिति** हस्य भकारः। **उदि ग्रह** इत्यत्रोद्**ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोरिति।** वचनादुन्निपूर्वाद्ग्रहेर्घञ् ॥

**( उद्द्योतः ) पुरुषार्थो** धर्मो मोक्षश्च ॥ शिष्याचार्यसंबन्ध एव महान् वेदरक्षाहेतुः, किं व्याकरणेनेत्यत आह—**लोके इति ॥ भ्राम्येदिति।** भ्रमेण पाठान्तरं कल्पयेदित्यर्थः। न चाचार्यवचनाद् भ्रमनिवृत्तिः, भ्रंशशङ्कया तेष्वविश्वासात् ॥ वेदार्थावगमद्वारापि व्याकरणं पुरुषार्थसाधनमित्याह—**वेदार्थं चेति।** एवं च वेदार्थज्ञानपूर्वकं शुद्धतत्तन्मन्त्रैस्तद्विहितकर्मानुष्ठानेन स्वर्गसुखम्, उपनिषदर्थज्ञानेन वक्ष्यमाणरीत्या वा मोक्षश्च पुरुषार्थो व्याकरणाध्ययनस्य फलमिति भावः ॥ **विकार इति।** लोपस्तु न विकार इति पृथग्गणितः। भावरूप एव चादेशोऽत्र विकारः ॥ **हृग्रहोर्भ इति।** इदं च गृभ्णामीत्याद्यर्थमावश्यकम्। एतेन **'उद्ग्राभनिग्राभौ चेत्य**नेनैव भस्यापि सिद्धत्वादेतदुपन्यासश्चिन्त्य' इति परास्तम्। अन्यार्थमावश्यकेन तेनैव भस्य सिद्धौ तदंशे निपातनाश्रयणवैयर्थ्यात्। निपूर्वाद्ग्रहेर्घञ्विधायकाभावादाह—**उद्ग्राभनिग्राभौ चेति ॥**

**( तत्त्वालोकः )** भाष्ये-**रक्षोहेति**–व्याकरणाध्ययनप्रयोज्यसाधुशब्दज्ञानस्य रक्षादयो दृष्टं प्रयोजनमित्यर्थः।

**रक्षार्थमिति–**अत्रार्थशब्दः प्रयोजनवाचकः। तथा व्याकरणाध्ययनेन साधुदीनाबलादीनां रक्षाया असम्भावाद् **वेद**पदोपादानम्। व्याकरणेनानधीतेन स्वरूपसता वेदरक्षाया दुःसाधत्वादाह–**अध्येयमिति।** शब्दानुशासनशब्दमुपादाय कृते प्रश्ने व्याकरणशब्दमुपादाय कृतेनोत्तरेण तयोः पर्यायता सूचिता। ननु व्याकरणस्य पारायणरूपाध्ययनेन कथं वेदरक्षा स्यादित्यत आह—**लोपेति।** अस्य प्रकृतिप्रत्ययविभागादेरप्युपलक्षणतया प्रकृते व्याकरणाध्ययनं न पाठमात्रं विवक्षितम्, किन्तु वाक्यार्थबोधपर्यन्तम्, सत्येव हि तादृशाध्ययने अज्ञानादिनिवृत्त्या वेदरक्षा सम्भवति नान्यथा। अत एव च "ब्राह्मणेन निष्कारण" इति श्रुतौ "ज्ञेयश्चे"ति प्रत्यपादि।

प्रदीपे–व्याकरणाध्ययनेन साधुशब्दज्ञानद्वारा तदज्ञानजपापक्षयादिरूपादृष्टानि वेदरक्षादिरूपदृष्टानि च कार्याणि सम्पाद्य स्वतः पुरुषार्थसाधनं धर्मादि साधयति तदध्येतेत्यभिप्रायेणाह**–पारम्पर्येणेति। अस्य–**व्याकरणाध्ययनस्य। **भ्राम्येदिति**-लोके आत्मना, देवाः, अदुहत, उद्ग्राहमित्यादावदृष्टम् आलोपम्, असुगागमं, तलोपरुडागमौ, भादेशम्, क्रमशो वेदे त्मना देवेषु, देवासः ब्राह्मणासः, अदुह्र, उद्ग्राभमित्यादौ विलोक्य तत्र तत्र वैदिकपाठं परित्यज्य लौकिकपाठं कल्पयेदित्यर्थः। **न भ्राम्यतीति**–प्रत्युत "मन्त्रेष्वाङ्यादेरात्मन" इत्यनेन तत्राकारलोपं तथा "आज्जसेरसुगि"त्यादिना तत्रासुगागमादि जानातीति भावः। **तत्र—**लोपादीनां मध्ये। लोपागमयोरुक्तस्य पृथक् पृथग् उदाहरणस्य सत्त्वेऽपि लाघवादेकत्राह–**लोपागमयोरिति।** केवलस्य वर्णविकारस्य गृभ्णामीत्युदाहरणसत्त्वेऽपि विशेषं दर्शयितुं छान्दसप्रत्ययसंवलितस्य तस्योदाहरणमाह–**उद्ग्राभञ्चेति।** "उद्ग्राभञ्चेति जुहूमुद्यच्छति, निग्राभञ्चेति उपभृतं नियच्छती"ति वचनात् जुहूपभृतोरेव ग्रहणम्, ताभ्यां न स्रुचोरिति बोध्यम्।

उद्द्योते–**पुरुषार्थः–**स्वतः पुरुषार्थसाधनम्। **चे**नार्थकामयोः संग्रहः। अत एव "ऊहज्ञस्य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमि"ति उद्द्योते वक्ष्यति। **शिष्याचार्यसम्बन्धः–**गुरुशिष्यपरम्परा। **व्याकरणेन–**व्याकरणाध्ययनेन। नन्वस्तु भ्रमः, तेन क्षत्यभावादित्यत आह–**भ्रमेणेति। भ्रंशेति–**पाठभ्रंशेत्यर्थः। आत्मनेति पठितव्ये प्रमादात् त्मनेति पठन्त्याचार्या इति शङ्कयेति भावः। **तेषु**–आचार्येषु। **वेदार्थावगमद्वारा–**वेदार्थावगमपूर्वकवेदरक्षाद्वारा। अनेन वेदार्थावगमरक्षाऽपि तस्यावान्तरप्रयोजनं सूचितम्। **अपि**ना केवलवेदरक्षाद्वारसमुच्चयः। **व्याकरण–**व्याकरणाध्ययनम्। **एवञ्च–**व्याकरणाध्ययनस्य वेदार्थनिश्चायकत्वे च। "यतो वाचो निवर्त्तन्ते" इत्यादिश्रुत्या ब्रह्मणो वागविषयत्वादाह–**वक्ष्यमाणेति।** आनुषङ्गिकप्रयोजनोपपादनावसरे इत्यादिः। **चे**नैहिकसुखसमुच्चयः। **ननु** लोप-

स्यापि वर्णविकारत्वात्तस्य पृथगभिधानमनङ्गमित्यत आह-**लोपस्त्विति । विकारः**-विकारत्वेनाभिमतः । अस्य "अभावरूपत्वादि' ति शेषः । **चो** हेतौ । **अत्रेति**-अनेनान्यत्र लोपस्य विकारत्वेऽपि क्षत्यभावः सूचितः । **आदिना** जभारेत्यस्य संग्रहः । **एतेन**-"हृग्रहो" रित्यस्य तदर्थमावश्यकत्वेन । **अपिः** वत्सुसमुच्चायकः । **एतदिति**-"हृग्रहोर्भ ' इतीत्यर्थः । **अन्येति**-गृभ्णामीत्यादीत्यर्थः । **तेनैव**-"हृग्रहो"रित्यनेनैव । **तदंशे**-आदेशांशे । उत्पूर्वाद् ग्रहेः घञो विधायकस्य "उदि ग्रह" इति सूत्रस्य लोके सत्त्वादाह-**निपूर्वादिति ।** तथा च उद्ग्राभमित्यत्र लोकसिद्धस्यैव घञोऽनेनानुवादः । निग्राभमित्यत्र तु घञो लोकासिद्धत्वादनेन विधिरिति भावः ।

## ( ऊहपदार्थनिरूपणभाष्यम् )

**ऊहः खल्वपि—न सर्वैर्लिङ्गैर्न च सर्वाभिर्विभक्तिभिर्वेदे मन्त्रा निगदिताः । ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः । तान्नावैयाकरणः शक्नोति यथायथं विपरिणमयितुम् । तस्मादध्येयं व्याकरणम् ॥**

**( प्रदीपः ) ऊहः खल्वपीति ।** इह यस्मिन् यागे इतिकर्तव्यतोपदिष्टा यागान्तरेणोपजीव्यते सा **प्रकृतिः । येनोप**जीव्यते सा **विकृतिः । प्रकृतिवद्विकृतिः कर्तव्येति** मीमांसकैर्व्यवस्थापिते न्याये प्रकृतिप्रत्ययादीनामूहं वैयाकरणः सम्यग्विजानाति । तत्राग्नेर्मन्त्रोऽस्ति—**अग्नये त्वा जुष्टं निर्वपामीति ।** तत्र **'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः'** इति सौर्ये चरौ मन्त्र ऊह्यते—**सूर्याय त्वा जुष्टं निर्वपामीति ।** विस्तरेण भर्तृहरिणा प्रदर्शित ऊहः ॥

**( उद्द्योतः )** भाष्ये ऊहः खल्वपीत्यस्य प्रयोजनमिति शेषः । खल्वपीति निपातसमुदायो निश्चयार्थः ॥ ननु यत्र प्रकरणे ये मन्त्राः पठितास्तत्र तेषां तथैव प्रयोग इष्ट इति नोहेन प्रयोजनमित्याशङ्क्य प्रकृतावूहाभावेऽपि विकृतावूह इति दर्शयितुं प्रकृतिशब्दार्थमाह-**इहेति । यस्मिन्** आग्नेयादौ । **यागान्तरेण** सौर्यादिना । प्रकृतिविकृत्यवगमश्च द्विदेवत्यत्वैकदेवत्यत्वादिसाम्येन बोध्यः ॥ अन्यत्र पठितमन्त्राणां कथमन्यत्र गमनमत आह—**प्रकृतिवदिति ।** यथा सोपकारा प्रकृतिरनुष्ठीयते, तथा विकृतिरपीति तदर्थः । तदनेनोपकारातिदेशे तत्पृष्ठभावेन पदार्था अप्यतिदिश्यन्ते, इतिकर्तव्यतायां भावनायाः साकाङ्क्षत्वात् ॥ एतन्मूलकमेव **प्रकृतिव**दितीति मीमांसकसरणिः ॥ पदार्थान्तर्गताश्च मन्त्राः । तत्र अग्निसंबन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसंबन्धिनिर्वापप्रकाशकमन्त्रस्थाग्निपदस्य सूर्यसंबन्धिनिर्वापप्रकाशनासमर्थत्वात्तदपहाय तत्स्थाने सूर्यायेत्यूह्यमित्याह—**तत्राग्नेरिति । मन्त्र ऊह्यत इति ।** यद्यप्यूहे न मन्त्रत्वम्, तथाप्येकदेशस्योहेऽपि अनेकपदसमुदाये मन्त्रत्वप्रत्यभिज्ञानात्तद्घटिते समुदाये मन्त्रत्वव्यवहारः कर्मणः साङ्गत्वं चेति बोध्यम् ॥ सोयं प्रकृत्यूहः । अन्येप्यूह्याः । ऊहश्च य हि आर्त्विज्यलाभेन द्रव्यप्राप्तिद्वारा ऐहिकसुखसिद्धिः फलमिति बोध्यम् । भाष्ये **लिङ्गपदं** च प्रकृत्यादेरुपलक्षणम् ॥ **यथायथमिति ।** अर्थप्रकाशनसामर्थ्यानतिलङ्घनेनेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-यथाक्रममूहमुपपादयति-**ऊह इति । न, नच** इत्यनयोः निगदिता इत्यनेनान्वयः । **सर्वैर्लिङ्गैः**-सर्वलिङ्गज्ञापकपदैः । **सर्वाभिर्विभक्तिभिः**-सकलविभक्त्यन्तपदैः । अनयोः **"घटिता"** इति शेषः । **ते**-मन्त्राः । **चो** हेतौ । **विपरिणमयितव्याः**-तत्तल्लिङ्गादिबोधकपदघटिततया पठितव्याः । **तान्**-**मन्त्रान्** । यत इत्यादिः ।

प्रदीपे-**इह**-वेदे । **इतिकर्त्तव्यता**-विधानप्रकारः । **सा**-स यागः । **येन** सौर्यादिना । वस्तुतस्तु यत्र यागे सकलाङ्गानि समुपदिष्टानि सा प्रकृतिः । यत्र यागे तानि नोपदिष्टानि स विकृतिरिति बोध्यम् । लिङ्गादिग्रहणस्य प्रकृत्यादेरप्युपलक्षणत्वादाह-**प्रकृतीति । आदिना** लिङ्गसङ्ग्रहः । **सम्यक्**-यथोचितम् । **तत्र**-प्रकृतौ । **अग्नेर्मन्त्रः**-अग्निसम्बन्धिनिर्वापप्रकाशकमन्त्रः । **तत्र**-विकृतौ । **इति सौर्ये चरौ**-इति विहिते सूर्यदेवताके चरुद्रव्यकयागे ।

उद्द्योते-खल्वपिशब्दयोः क्रमशो निश्चयसमुच्चयार्थयोः बोधकत्वेऽपि परिगणनादेव समुच्चयस्य लाभसम्भवादाह-**खल्वपीतीति । मन्त्रा इति**-यथैवेति शेषः । नन्वेवमपि केन प्रकृतिविकृतिभावबोध इत्यत आह-**प्रकृतिविकृतीति ।** प्रकृतिविकृतिभावेत्यर्थः । **अन्यत्र**-प्रकृतौ । **अन्यत्र**-विकृतौ । **यथेति**-यथा प्रकृतौ पठितान्यङ्गानि येनोपकारेण प्रकृतिमुपकुर्वन्ति, तथा विकृतावूह्यानि तानि तेनैवोपकारेण विकृतिमप्युपकुर्वन्तीत्यर्थः । **विकृतिरपीति**-सोपकारा अनुष्ठीयते इत्यनुषज्यते । **तत्पृष्ठभावेन**-उपकारानुसारित्वेन । विकृतावुपकारविधानायैवातिदेशवाक्येन प्रकृतिस्थाङ्गानां तत्रातिदेशः । अत एव विकृतौ तेन सामान्यतोऽप्यतिदिष्टानां प्रकृतिस्थाङ्गानामुपकारासम्भवे क्वचित्साकल्येन निवृत्तिः, क्वचित्त्वांशिकत्वेन । यथा प्रकृतावुपकारकस्य "अवरक्षो दिवः सपत्नं वध्यासमि"त्यवघातमन्त्रस्य कृत्स्नस्य विकृतावुपकारकताया असम्भवान्निवृत्तिः । यथा च प्रकृतौ वैतुष्योपकारिणोऽवघातस्य कृष्णलेषूपकारिताया असम्भवान्निवृत्तिरिति बोध्यम् । **साकाङ्क्षत्वादिति**-उत्पद्यमानोत्पत्त्यनुकूल उत्पादकव्यापारविशेषो भावना । सा द्विविधा । तत्रैका पुरुषप्रवृत्त्युत्पत्त्यनुकूलोत्पादकव्यापारविशेषरूपा लिङ्त्वावच्छिन्नवाच्या शाब्दी भावना । अपरा च फलेच्छाजनित क्रियाविषयव्यापारविशेषात्मिका आख्यातत्वावच्छिन्नवाच्या आर्थी भावना । उभयोः भावनयोः किं भावयेत्, केन भावयेत्, कथं भावयेदिति साध्यसाधनेतिकर्त्तव्यताऽऽकांक्षात्रयी नियता । तत्र कर्ममात्रस्येतिकर्त्तव्यतावत्त्वाद्, इतिकर्त्तव्यतां विना साध्यसाधनयोः भावनायामन्वयस्यासम्भवाच्च भावनाया इतिकर्त्तव्यतायां साकाङ्क्षताऽऽवश्यकीति भावः । नन्वेवं पदार्थातिदेशेऽपि कथं मन्त्रातिदेश इत्यत आह-**पदार्थेति । तत्र**-प्रकृतौ । ''अग्नये त्वे''त्यादिमन्त्रस्य प्रकृतिसम्बद्धाग्निसम्बन्धिनिर्वापप्रकाशनात्मकप्रकृत्युपकारकारकत्वाद् विकृतिसम्बद्धसूर्यसम्बन्धिनिर्वापप्रकाशनरूपविकृत्युपकारस्यापि तन्मन्त्रविधेयतामापन्नस्य अग्निशब्दघटितेन तेन विधातुमशक्यत्वादाह-**तदपहायेति ।** अग्नये इति पदमपहायेत्यर्थः । ननु किमपराद्धमेकारेणेति चेन्न । अदन्तभिन्नप्रकृतिसन्निहितैकारेण वाच्यस्य सम्प्रदानत्वस्य अदन्तप्रकृतिसन्निहितयकारेणैव प्रायो वाच्यतया प्रकृते निमित्तापाये नैमित्तिकस्याप्यपाय इति नियमेन निवृत्तेऽग्निशब्दे एकारस्यापि निवृत्तेर्दुर्वारत्वात् । तथा चाग्निशब्दस्थाने सूर्यशब्दे समागते एकारस्थाने यशब्द आगत इति भावः । "अनाम्नाता अमन्त्रा" इत्याद्यापस्तम्बादिवचनानुसारेणाह-**न मन्त्रत्वमिति । अनेकेति**-अवशिष्टेत्यादिः । "एकदेशविकृतमनन्यवदि"ति न्यायेनाह-**मन्त्रत्वेति । सोऽयम्**-अग्नये इत्यत्र सूर्यायेत्यूहः । एकारस्थानेय कारूपप्रत्ययोहस्य नान्तरीयकत्वादस्य नोभयोहतेति भावः । **अन्ये**-प्रत्ययलिङ्गोहाः । यथा "देवीरापः शुद्धाः स्थ" इत्यप्सु विनियुक्तस्य मन्त्रस्याज्ये ऊहः "देवाज्य शुद्धमसी"ति स लिङ्गोहः । यथा च "मा भैर्मा संविक्था" इति पुरोडाशेऽवदानमन्त्रस्य धानासूहः "मा भैट मा संविग्ध्वमि"ति स प्रत्ययोहः । **हीति**-अस्य चार्थकतया स्वर्गसुखादिसमुच्चायकस्य सिद्धिरित्युत्तरं योजना । चेन विभक्तिसमुच्चयः ।

### ( आगमपदार्थनिरूपणभाष्यम् )

**आगमः खल्वपि—"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति ॥ प्रधानं च षट्स्वङ्गेषु व्याकरणम् । प्रधाने च कृतो यत्नः फलवान्भवति ॥**

**( प्रदीपः ) आगम इति ।** आगमः प्रयोजनः प्रवर्तको नित्यकर्मतां व्याकरणाध्ययनस्य दर्शयति । प्रयोजनशब्देन च फलं प्रयोजकश्चोच्यते । **निष्कारण इति ।** दृष्टं कारणमनपेक्ष्येत्यर्थः ॥ **प्रधानं चेति ।** पदपदार्थावगमस्य व्याकरणनिमित्तत्वात्तन्मूलत्वाद्वाक्यवाक्यार्थावसायस्येति भावः ॥

**( उद्द्योतः )** ननु वक्ष्यमाणागमस्य न व्याकरणफलत्वमत आह—**प्रवर्तक इति ॥ नित्यकर्मतामिति ।** एतेन नित्यकाम्यता व्याकरणाध्ययनस्येत्युक्तम् । नित्यत्वं चाध्येयज्ञेयपदार्थविशेषणीभूताध्ययनज्ञानयोर्बोध्यम् । अत्र **ब्राह्मणेने**त्युक्तेरन्यस्यैवमध्ययनं काम्यमेवेति सूचयतीति कश्चित् ॥ **निष्कारण इति ।** कारणशब्दः फलपरः ॥ ननु नित्यत्वेऽपि प्रत्यवायपरिहाररूपं फलमस्त्येवेत्यत आह—**दृष्टमिति ।** अध्ययनादिनिष्ठं कारणानपेक्षत्वं विषये आरोप्य निष्कारणो वेद इति प्रयोगः । आगमपदेन श्रुतिः । श्रुतावपि जनमेजयाद्युपाख्यानवत्पौरुषेयव्याकरणस्यापि नित्यताबोधनमुपपद्यते । यद्वा **तेन प्रोक्त**मिति सूत्रभाष्यरीत्या वेदार्थवद्व्याकरणार्थोऽपि अनादित्वरूपनित्यतावानिति श्रुत्या तस्य नित्यत्वबोधनमिति बोध्यम् । धर्मत्वं च वेदस्य पुरुषयत्नसाध्यतया धर्मत्वेनाभिमताध्ययनज्ञानकर्मत्वेनौपचारिकमित्याहुः ॥ **षडङ्गः ।** शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषाङ्गसहितः । **वेदः** स्वशाखारूपः । **अध्येय** इत्यतः प्रेरणाविषयाध्ययनकर्मेति बोधः ॥ यद्यपि **तेन प्रोक्त**मिति सूत्रे भाष्ये वक्ष्यमाणया रीत्या वेदत्वं शब्दतदर्थोभयनिष्ठम्, तथापि **ज्ञेय** इत्यस्य सम्यगर्थबोधपर्यवसाय्यध्ययनं कार्यमित्यर्थे तात्पर्यम् । अत एव **'समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते केचिन्ने'**ति वक्ष्यति भाष्यकृत् । अध्ययनतज्ज्ञानयोश्च समुच्चयः । अनेनातादृशस्याधर्मत्वं सूचयति । श्रुत्या मिलितस्यैव धर्मत्वबोधनात् । तथा च व्यासः—

**"वेदार्थज्ञो जपं जप्त्वा तथैवाध्ययनं द्विजः ।**
**कुर्वन् स्वर्गमवाप्नोति नरकं तु विपर्यये"** ॥ इति ॥

जपपदं मन्त्रसाध्यकर्ममात्रोपलक्षणम् । ज्ञाधातोश्च ज्ञानानुकूलो मनःप्रणिधानविषयेन्द्रियसंयोगसंपादनादिरूपो व्यापारोऽर्थस्तस्यैवात्र विधेयत्वम् । एतेन—ज्ञानस्याविधेयत्वादिदं चिन्त्यमित्यपास्तम् ॥ ननु गुणानां परस्परसंबन्धाभावात् षडङ्गेषु प्रधानमित्यनुपपन्नमत आह—**पदेति** । एवं च वेदार्थज्ञाने व्याकरणं प्रधानं कारणमिति भावः ॥ **भाष्ये प्रधाने कृतो यत्न इति ।** प्रधानविषये निर्वृत्त इत्यर्थः । अन्यथा यत्नविषयकृतेरसंभवादसंगतिः स्पष्टैव ॥ भाष्ये **फलवानित्यत्र** फलपदेन वाक्यार्थावगमो विवक्षितः । एतच्छास्त्रं च पदपदार्थावगमद्वारा वाक्यार्थावगमोपयोगीति बोध्यम् ॥ एवं च व्याकरणानध्ययनप्रयुक्तस्य वेदार्थाज्ञानप्रयुक्तस्य च प्रत्यवायस्य परिहारकतयाऽस्य नित्यत्वमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—क्रमागतमागममवगमयन्ति—**आगमः खल्वपीति ।** प्रयोजनमिति शेषः । **खल्वपीति** निपातसमूहो निश्चयार्थकः । तमेवागममाह—**ब्राह्मणेनेति ।** अस्य षडङ्गो वेदोऽध्येयो ज्ञेयश्चेत्यनेनान्वयः । तथा च निष्कारणशब्दलक्ष्यफलापेक्षारहितस्य षडङ्गवेदविशेषणाध्ययनज्ञानयोरन्वयेन ब्राह्मणकर्तृकफलापेक्षारहिताध्ययनज्ञानरूपधर्मविषयीभूतः षडङ्गो वेद इति बोधः । **षडङ्ग इति**—षड् अङ्गानि यस्येति व्युत्पत्तिः । वेदाङ्गानां व्याकरणज्यौतिषनिरुक्तशिक्षाकल्पच्छन्दसां मध्ये व्याकरणस्यावश्याध्येयतासूचनाय तस्य ज्यौतिषादितो मुख्यत्वमाह—**प्रधानञ्चेति ।** व्याकरणाध्ययनस्य साफल्यमाह—**प्रधाने चेति ।** अस्य क्वचिच्चकाररहितः पाठोऽस्तीति उद्द्योतप्रतीकतः प्रतीयते ।

प्रदीपे—कथं प्रयोजनपदार्थः प्रवर्तकोऽपीत्यत आह—**प्रयोजनेति ।** फलापेक्षाया एवात्रापि प्रवृत्तिप्रयोजकत्वे सत्यनारायणपूजनादिरूपकाम्यतामात्रत्वकर्मणीव साङ्गवेदाध्ययनादावपि फलनिष्पत्त्यनन्तरं प्रवृत्तावालस्यं स्यादित्यतः प्रकृते नित्यताया एव प्रवृत्तिप्रयोजकता, न तु रक्षादिफलापेक्षाया इति लक्षणया सूचयतो नित्यताबोधकनिष्कारणशब्दस्य नात्र फलाभावबोधकता येनेह रक्षादिफलकथनं नोपपद्येतेत्याशयेनाह—**दृष्टं कारणमनपेक्ष्येति । व्याकरणनिमित्तत्वात्**—व्याकरणाध्ययनकारणकत्वात् । **तन्मूलत्वात्**—पदपदार्थबोधनिमित्तकत्वात् । **वाक्यवाक्यार्थावसायस्य**—वेदवेदार्थावबोधस्य ।

उद्द्योते—**वक्ष्यमाणागमस्य**—"ब्राह्मणेन निष्कारणो धर्म" इत्यादिश्रुतेः । प्रयोजनशब्दस्य फलपरत्वमभिप्रेत्याह—**व्याकरणफलत्वमिति ।** व्याकरणाध्ययनस्य फलत्वमित्यर्थः । ननु नित्यतामात्रबोधनाय नित्यकर्मताशब्दस्य प्रयोगे तत्र कर्मपदवैयर्थ्यमित्यत आह—**एतेनेति ।** ( फलकामेन यत्क्रियते तत्कर्मेति व्युत्पत्तेः ) काम्यपरककर्मशब्दघटितकथनेनेत्यर्थः । ननु विभाजकानां मिथो विरुद्धत्वे कथं कर्मविभाजकनित्यत्वकाम्यत्वयोरेकत्रावस्थानमिति चेन्न, 'एकस्य तूभयत्वे संयोगपृथक्त्वमि'ति न्यायेन प्रमाणसत्त्वे एकस्यापि विरुद्धधर्मद्वयवत्ताया बोधनात् । "संज्ञा च परिभाषा च विधिर्नियम एव च । अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्" ॥ इत्यनेन सूत्रविभाजकयोरपि विधित्वसंज्ञात्वयोः स्वादिसूत्रे दर्शनात् । प्रमाणप्रमेयेति न्यायशास्त्रादिमसूत्रेण पदार्थविभाजकयोरपि प्रमाणत्वप्रमेयत्वयोरिन्द्रियेऽवलोकनाच्च एकत्रावस्थितयोरपि विभाजकताया निर्णयात् । आह च हेत्वाभासगादाधर्याम् "उपधेयसङ्करेऽपि उपाधेरसाङ्कर्यादि"ति । तथा च रक्षोहादिफलचतुष्टयात् प्राक् पश्चाद्वा पठनीयस्य प्रवर्त्तकागमस्य मध्ये पाठेन साङ्गवेदाध्ययनादेः सन्ध्यादेरिवाकरणे पापजनकत्वान्नित्यता एवं रक्षादिफलकत्वात्काम्यता च सूचितोपपद्यते ॥ आनुपूर्व्या अनित्यतया साङ्गवेदस्य नित्यत्वासंभवादाह—**नित्यत्वमिति । अत्र**—प्रकृतागमे । **अन्यस्यैवमध्ययनमिति**—क्षत्रियस्य वैश्यस्य च साङ्गवेदस्याध्ययनं ज्ञानञ्चेत्यर्थः । **कश्चित्**—रत्नकृत् । स्मृत्या सकलद्विजानां कृते साङ्गवेदाध्ययनादेः नित्यताऽवगमात्, कश्चिदित्यनेन तत्रारुचेर्दर्शनाच्चात्र ब्राह्मणशब्दः त्रैवर्णिकानुपलक्षयतीति प्रतीयते । केचित्तु "कलौ न क्षत्रियाः सन्ति कलौ नो वैश्यजातयः । ब्राह्मणाश्चैव शूद्राश्च कलौ वर्णद्वयं स्मृतम् ॥" इति स्मृतिप्रतिपादितकलिकालिकक्षत्रियवैश्याभावसूचनायैवोपात्तमत्र ब्राह्मणपदं यथाश्रुतार्थकतयैवोपपद्यते इति वदन्ति, तन्न । वेदानां कलियुगपरत्वासम्भवात् । **फलपर इति**—कार्यतेऽनुष्ठाप्यतेऽनेनेति व्युत्पत्तेरिति शेषः । तथा च कारणान्निर्गत इति व्युत्पत्त्या निष्पन्नस्य निष्कारणशब्दस्य नित्यार्थकतेति भावः । **आदिना**ज्ञानसंग्रहः । केचिद् "ब्राह्मणेने"त्यादेरुपलभ्यमानश्रुतिष्वनुपलम्भात् स्मृतितां कल्पयन्ति, तन्न, आगमपदस्य वाच्यवेदपरतयोपपत्तिसंभवे लक्ष्यस्मृतिपरत्वकल्पनाया अनुचितत्वाद्, उपलभ्यमानस्मृतिष्वनुपलम्भेन तुल्यत्वाच्चेत्यभिप्रेत्याह—**आगमपदेनेति ।** आगम्यते प्रमीयते हिताहितप्राप्तिपरिहारावनेनेति व्युत्पत्तेरिति शेषः । ननु कथमपौरुषेयवेदेन पौरुषेयव्याकरणाद्यध्ययनादिः नित्यतया विधीयते इत्यत आह—**श्रुतावपीति ।** "धाता यथापूर्वमकल्पयदि"त्यादिश्रुतेः "अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रवृत्तयः" ॥ **सर्वेषां सन्तु नामानि कर्माणि च पृथक् पृथक् ।**

वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे ॥ तेषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः ॥ ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः ॥ इत्यादिस्मृतेश्च अनादिसृष्टिलयप्रवाहान्तर्गततया जनमेजयादिचरितादीनां वेदाभिधेयताया इव व्याकरणादीनामपि श्रुतिविहितनित्याध्ययनादिविषयताया उपपत्तेः । नच व्याकरणस्य तादृशप्रवाहान्तर्गततताया अनुपपत्तिः, "तस्मादियं व्याकृता वागुच्यते" इत्यादिश्रुतेरुपलम्भात् ॥ **अपिना** शिक्षादिसमुच्चयः । **नित्यता**–नित्याध्ययनादिविधिविषयता । एवमग्रेऽपि । सिद्धान्तसरण्या वदति–**यद्धेति । श्रुत्या**–"ब्राह्मणेने"त्यादिवेदेन । **तस्य**–व्याकरणस्य । ननु "चोदनालक्षणोऽर्थो धर्म"इति धर्मलक्षणस्य वेदेऽसङ्गमनेऽपि कुतस्तस्य धर्मत्वमित्यत आह–**धर्मस्वञ्चेति ।** वेदस्य धर्मत्वमौपचारिकमित्यन्वयः । **सहित इति**–केचित्तु षडङ्गघटकाङ्गशब्देन श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्या एव गृह्णन्ति, तन्न, वेदत्वादेव संगृहीतानां श्रुत्यादीनां तेन ग्रहणे षडङ्गपदोपादानवैफल्यापातात् । अपरे तु शिक्षादीनां वेदार्थावबोधकश्रुत्याद्यभावात्, सादितया अनादिवेदावयवत्वासम्भवाच्च तदङ्गताप्रयोजकस्य तदर्थत्वस्य तदवयवत्वस्य चाभावाद्वेदाङ्गता न युक्तेति वदन्ति, तन्न, 'मुखं व्याकरणं तस्ये"त्यादिस्मृतेः शिक्षादीनां वेदाङ्गत्वबोधनात्, वेदाङ्गत्वप्रयोजकवेदोपकारकत्वस्य तेषु सत्त्वाच्च ॥ शिक्षादिषडङ्गसहितस्य सकलशाखारूपवेदस्य शतायुषपुरुषेणाध्येतुमशक्यत्वादन्यशाखाध्ययनादेरन्यानुपयोगित्वाच्चाह–**स्वशाखेति । बोध इति**–अध्येयशब्दे "अचो यदि"ति सूत्रविहितयत्प्रत्ययस्य "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे"ति सूत्रेण प्रैषात्मकविधिरूपत्वे पर्यवसानादिति भावः । **उभयनिष्ठमिति**–तथा चाध्येय इत्यस्यार्थबोधपर्यवसाय्यध्ययनं विधेयमित्यर्थकत्वेन, शब्दस्य साक्षादध्ययनस्यैवार्थस्य ज्ञानद्वारा अध्ययनस्य संभवेन च "अध्येय"पदोपादानादेव सामञ्जस्येन "ज्ञेय"-पदं व्यर्थमिति भावः । **तात्पर्यमिति**–ज्ञेयपदोपादानसामर्थ्यादित्याशयः । **अत एव**–ज्ञेय इत्यस्य सम्यगित्याद्यर्थे तात्पर्यादेव । **तथाज्ञानेति**–सम्यगर्थविषयकबोधेत्यर्थः । **समुच्चय इति**–चेनेत्यादिः । **ज्ञेय** इति पाठे तु "अहरहर्नयमानो गामश्वं पुरुषं पशुमि"त्यत्रेवात्रापि चं विनैव समुच्चयो बोध्यः । **अनेन**–श्रुत्या मिलितयोरेवाध्ययनज्ञानयोः धर्मत्वज्ञापनेन । **अतादृशस्य**–तयोरन्यतरस्य । तत्र सम्मतिं दर्शयति–**तथा चेति । जप्त्वा**–कृत्वा । जपरूपार्थस्य जपमित्यनेनोक्तत्वात् । **तथाशब्दः** समुच्चयवाचकः कुर्वन्नित्यनेन सम्बध्यते । **एव**पदं क्रियाऽवधारणबोधनाय । **विपर्यये**–प्रत्येकानुष्ठाने । न्यूनतानिरासायाह–**जपपदमिति ।** प्रकृतपद्ये इत्यादिः । मन्त्रस्यैव जपसम्भवादाह—**मन्त्रसाध्येति । प्रणिधानेति**–अस्य संयोगस्य च सम्पादनेऽन्वयः । **आदिना** स्थित्यादिसंग्रहः । **अत्र**—"वेदोऽध्येयो ज्ञेयश्चे"ति श्रुतौ **विधेयत्वमिति**–अनेन ज्ञानविधेरुपपत्तिः,फूत्कारप्रभृतिविधिना पाकविधेरिवेति भावः । **एतेन**–तादृशव्यापारस्यैवात्र विधेयत्वेन । यथाभूतवस्तुविषयकप्रमाणजन्यज्ञानस्य वस्तुतन्त्रतया पुरुषेण कर्त्तुमकर्त्तुमन्यथाकर्त्तुञ्चाशक्यत्वाद् विधेयता न संभवतीत्यभिप्रेत्याह—**अविधेयत्वादिति । इदं**–ज्ञानस्य विधेयताप्रतिपादनम् । **गुणानां**–वेदाङ्गानां ( शिक्षादीनाम् ) । **भावादिति**–गुणप्रधानभावासंभवादिति शेषः । **एवञ्च**–व्याकरणस्य वेदवेदार्थावगमकारणपदपदार्थबोधनिमित्तत्वे च । **वेदार्थज्ञाने**–वेदवेदार्थज्ञानम्प्रति । तथा च वेदाङ्गशिक्षादिषट्कमध्ये व्याकरणं वेदवेदार्थज्ञानम्प्रति मुख्यं कारणमिति तदर्थः । यथा शरीरनिर्वाहरूपकार्यं प्रति मुखस्य साक्षाद् भक्ष्यपेयादिदातृतया मुख्यकारणता, अतिरिक्ताङ्गानां तु परम्परया ( भक्ष्यादिप्रबन्धकत्वेन ) तद्दातृतया तत्प्रति गौणकारणता । तथा वेदनिर्वाहकार्यं ( वेदस्वरूपवेदार्थज्ञानरूपम् ) प्रति साक्षात्पदपदार्थबोधकतया व्याकरणस्य मुख्यकारणता, अतिरिक्ताङ्गानां तु परम्परया पदपदार्थबोधोपयोगितया आंशिकतया तद्बाधकतया वा तत्प्रति गौणकारणता । तथाहि–ज्योतिषमध्ययनाद्युपयोगिसमयं बोधयति । निरुक्तं बाहुलकादिसाम्यान् लोपागमविकारादीन् ज्ञापयति । छन्दः "गायत्र्या यजती"त्यादौ श्रुतानां गायत्र्यादिपदानां लक्षणतोऽर्थं प्रतिपादयति । शिक्षा अध्ययनादिकालिकमन्त्रोच्चारणरीतिं बोधयति । कल्पः साङ्गाध्ययनादिकर्मणोऽनुष्ठानपद्धतिं प्रतिपादयति । अत एव "मुखं व्याकरणं तस्य ज्योतिषं नेत्रमुच्यते । निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे ॥ शिक्षा घ्राणन्तु वेदस्य हस्तौ कल्पान् प्रचक्षते ।" इत्यादीनि शिक्षावचनानि सङ्गच्छन्ते । अन्ये तु–यथा मुखं स्वभक्षितान्नपानादिजरक्तादि सकलावयवेभ्यो ददातीति सर्वाङ्गोपकारकत्वात् सकलाङ्गापेक्षया प्रधानतां भजते । तथा व्याकरणं सकलशिक्षादिप्रयुक्तसाधुशब्दानां स्वरूपार्थयोर्बोधकतया सर्वाङ्गोपयोगित्वात् सकलाङ्गापेक्षया मुख्यतां भजते इति वदन्ति । सर्वत्र शास्त्राणां पठितानामेव कारणता न स्वरूपत इति भावः । व्याकरणस्य प्रधानत्वादेव "उपासनीयं यत्नेन शास्त्रं व्याकरणं महत् । प्रदीपभूतं सर्वासां विद्यानां यदवस्थितम् ॥ रूपान्तरेण ते देवा विचरन्ति महीतले । ये व्याकरणसंस्कारपवित्रितमुखा नराः" ॥ इत्यादिपद्यानि विराजन्ते ॥ **प्रधानविषये**–व्याकरणाध्ययनविषये । **निर्वृत्तः**–सञ्जातः । **अन्यथा**–यथाश्रुतार्थकत्वे । ननु फलपदस्य व्याकरणज्ञानपरत्वे कुत उक्तार्थलाभ इत्यत आह–**वाक्येति ।** वेदेत्यर्थः । एवमग्रेऽपि । आशयं वदति—**एतदिति । वाक्यार्थेति**—वाक्येत्यादिः । परमाशयमाह–**एवञ्चेति** । व्याकरणस्य तद्द्वारावेद वेदार्थावगमोपयोगित्वे चेत्यर्थः । **अस्य**–व्याकरणाध्ययनादेः ।

## ( लघुपदार्थनिरूपणभाष्यम् )

**लघ्वर्थं चाध्येयं व्याकरणम् "ब्राह्मणेनावश्यं शब्दा ज्ञेयाः" इति । नचान्तरेण व्याकरणं लघुनोपायेन शब्दा शक्या ज्ञातुम् ॥**

**( प्रदीपः ) लघ्वर्थमिति ।** लाघवेन शब्दज्ञानमस्य प्रयोजनम् ॥ **ब्राह्मणेनेति ।** अध्यापनं ब्राह्मणस्य वृत्तिः । नचाशब्दज्ञं तमुपश्लिष्यन्ति शिष्या इति ॥

**( उद्द्योतः ) अवश्य**मित्यनेन विवक्षितं दर्शयति—**अध्यापनमिति ।** लाघवं च प्रतिपदपाठापेक्षया प्रकृत्यादिविभागेनान्वाख्यानस्य विवक्षितम् ॥

**( तत्त्वालोकः )** भाष्ये—क्रमप्राप्तं लघ्वात्मकप्रयोजनमुपपादयति—**लघ्वर्थमिति ।** सकलसाधुशब्दज्ञानसाधनभूतप्रक्रियारूपलघुभूतोपायबोधायेत्यर्थः । यस्मै निखिलशब्दज्ञानाय लघूपायजिज्ञासा तस्यैवावश्यकता केत्यत आह—**ब्राह्मणेनेति ।** क्षत्रियवैश्ययोरध्यापनानधिकारित्वादनुपादानम् । **इति**–इति हेतोः । व्याकरणे अधीते एव लघूपायेन शब्दाः ज्ञातुं शक्या इति प्रतिपादयति व्यतिरेकेण—**नचान्तरेणेति ।** न हि व्याकरणाध्ययनं विनेत्यर्थः । शब्दानामानन्त्याद् गुरुभूतस्य प्रतिपदपाठरूपशब्दज्ञानोपायस्य व्यवच्छेदायाह–**लघुनेति ।**

प्रदीपे—भाष्यभावमाह–**लाघवेनेति । अस्य**–व्याकरणाध्ययनस्य । शब्दज्ञानस्य वृत्तिसाधनतां व्यतिरेकेण साधयति–**नचेति ।** नहीत्यर्थः । **तम्**—ब्राह्मणम् । **उपश्लिष्यन्ति**–अर्थादिना सेवन्ते । **इतिः** समाप्तौ ।

उद्द्योते—लाघवस्य शब्दज्ञाननिष्ठताभ्रमनिराकरणायाह–**लाघवञ्चेति । प्रकृत्येति**–उत्सर्गापवादात्मकसूत्रवद्व्याकरणशास्त्रबोध्येने-

त्यादिः । विप्रैरध्यापनयाजनरूपनिजर्जीविकासञ्चालनाय साधुशब्दज्ञानस्यापेक्षिततया तस्य प्रतिपदपाठादिना दुःसाध्यत्वात् तदर्थं लघूपायज्ञानाय व्याकरणमध्येयमिति भावः ।

## ( असंदेहपदार्थनिरूपणभाष्यम् )

**असंदेहार्थं चाध्येयं व्याकरणम् । याज्ञिकाः पठन्ति—स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति । तस्यां संदेहः—स्थूला चासौ पृषती च स्थूलपृषती, स्थूलानि पृषन्ति यस्याः सेयं स्थूलपृषतीति । तां नावैयाकरणः स्वरतोऽध्यवस्यति—यदि पूर्वपदप्रकृतिस्वरत्वं ततो बहुव्रीहिः, अथ समासान्तोदात्तत्वं ततस्तत्पुरुष इति ॥**

**( प्रदीपः ) असंदेहार्थमिति ।** संदेहस्य प्रागभावोऽत्र द्रष्टव्यो न तु प्रध्वंसाभावः । न हि वैयाकरणस्य संशय उत्पद्य विनश्यति, इतरस्यैव तदुत्पादात् ॥ **स्वरत इति ।** पूर्वपदप्रकृतिस्वराद्बहुव्रीह्यर्थावसाय इत्यर्थः ॥

**( उद्द्योतः )** नन्वसंदेहः संदेहाभावः । स च नात्यन्ताभावः, तस्य नित्यत्वात् । न च ध्वंसः, तत्तद्विषयकव्याकरणज्ञानवतः संदेहस्यैवाभावेन तदसंभवात् । यस्य त्वधीतव्याकरणस्यापि कचित्संदेहः, स तद्विषयकवैयाकरणत्वाभाववानेव, वेदनार्थे हि तत्र प्रत्ययोऽत आह—**प्रागभाव इति ।** तत्परिपालनं च शास्त्राध्ययनफलम् । न तु स्वरूपं, तस्याजन्यत्वात् । तत्पालनं च प्रतियोगिजनककारणविध्वंसनं, प्रागभावस्य प्रतियोगिजन्मनाश्यत्वादिति बोध्यम् ॥ भाष्ये **याज्ञिकाः पठन्तीति ।** यज्ञकाण्डभवा वैदिकाः शब्दा याज्ञिकास्ते पठन्तीत्यर्थः । **'ऋषिः पठति' 'शृणोत ग्रावाणः'** इतिवत्प्रयोगः । तत्र ऋषिर्वेदः ॥ **सन्सूत्रे** भाष्ये एष प्रयोगः ॥ **ताम् ।** अनड्वाहीम् । कस्तर्हि निश्चयस्तत्राह—**पूर्वपदेति ॥**

**( तत्त्वालोकः )** भाष्ये—क्रमप्राप्तमसन्देहरूपप्रयोजनमाह—**असन्देहार्थमिति ।** संशयप्रागभावपरिपालनायेत्यर्थः । ननु क्वावैयाकरणस्य संशय इत्यत आह—**याज्ञिका इति । अनड्वाहीम्**—गाम् । **तस्यां**—श्रुतौ ( स्थूलपृषत्याम् ) । **पृषतीति**—अनेन मत्वर्थलक्षणया पृषत्वती ( बिन्दुमती ) गौरुच्यते । कर्मधारये गव्येव स्थौल्यान्वयाद् बिन्दूनां स्थूलत्वे तनुत्वे वोपेक्षा । **पृषन्ति**—बिन्दवः । बहुव्रीहौ पृषत्स्वेव स्थौल्यान्वयाद् गोः स्थूलत्वे कृशत्वे वाऽनादरः । ननु स्वपदार्थप्रधानत्वेन प्रबलात्कर्मधारयादन्यपदार्थप्रधानत्वेन बहुव्रीहेर्दुर्बलत्वात्कुतोऽत्र तस्य सम्भावनेति चेन्न, अन्यपदार्थप्रधानाग्निवारुणीपदसन्निधानेन तस्यापि संभवात् । तत्र सन्देहकारणाभावाय तां वैयाकरणः स्वरतो निश्चिनोतीति व्यतिरेकेणाह—**तामिति । अध्यवस्यतीति**—अत एव च संशेते इति भावः । नच व्याख्यानात् सोऽपि निश्चिनुयादिति वाच्यम्, सर्वत्र व्याख्यातुर्दौर्लभ्यात् । स्वरतोऽध्यवसायप्रकारमाह—**यदीति । पूर्वपदेति**—"बहुव्रीहौ प्रकृत्या पूर्वपदमि"ति सूत्रेणेत्यादिः । **समासेति**—"समासस्ये"ति सूत्रेणेत्यादिः । **तत्पुरुषः**—कर्मधारयरूपः ।

प्रदीपे—**अत्रेति**—न तु सर्वत्रेत्याशयः । केचित्तु प्रकृते सन्देहात्यन्ताभाव एवासन्देहपदार्थः, अन्यथा शङ्कासमाधानपरभाष्यासङ्गतेरिति वदन्ति, तन्न, अवैयाकरणवैयाकरणभेदेन शङ्कासमाधानयोरुपपादनात् । **इतरस्य**—अवैयाकरणस्य । **तदिति**—संशयेत्यर्थः । **पूर्वपदप्रकृतिस्वरादिति**—पठ्यमानादित्यादिः । **अवसायः**—निर्णयः । अर्थविशेषबोधकबहुव्रीहिप्रयुक्तपूर्वपदप्रकृतिस्वरस्य विधानाय स्थूलशब्दः फिट्स्वरेणान्तोदात्तः कृतः, तथा च तस्य निश्चायकता युक्तेत्याशयः । अवैयाकरणस्य तु सर्वथा अनिर्णय एव, स्वरज्ञानाभावादनुकूलनिश्चयस्य, वृत्तिज्ञानाद्यभावात्प्रतिकूलनिर्णयस्य चासम्भवात् ॥

उद्द्योते—**तस्य**—अत्यन्ताभावस्य । **नित्यत्वात्**—प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वात् । एतेन तस्य प्रागभावप्रतियोगित्वव्याप्यफलत्वाभावः सूचितः, व्यापकाभावे व्याप्याभावस्यावश्यंभावात् ॥ ध्वंसम्प्रति प्रतियोगिनः कारणत्वादाह—**तदसंभवादिति ।** सन्देहध्वंसासम्भवादित्यर्थः । **तदिति**—सन्देहास्पदेत्यर्थः । तथा च संयोगवद् वैयाकरणत्वमव्याप्यवृत्ति ( स्वाभावसमानाधिकरणम् ) इति भावः । **वेदनार्थे हि तत्र प्रत्यय इति**—यतो वैयाकरणशब्दे ज्ञानार्थे अण्प्रत्यय इत्यर्थः । अनवस्थापत्त्याप्रागभावस्य प्रागभावास्वीकारात् तस्य जन्यत्वव्याप्यफलत्वासंभवादाह—**तत्परिपालनमिति ।** सन्देहप्रागभावपरिपालनमित्यर्थः । **शास्त्रेति**—व्याकरणेत्यर्थः । **स्वरूपमिति**—संशयप्रागभावस्येत्यादिः । **तस्य**—प्रागभावस्य । ननु निरवयवप्रागभावस्य पोषणाद्यसम्भवात् कथं तस्य परिपालनं सम्भवतीत्यत आह—**तत्पालनमिति ।** सन्देहप्रागभावपालनमित्यर्थः । **विध्वंसनमिति**—प्रतियोगी सन्देहः, तस्य जनकं यत् निश्चयरूपप्रतिबन्धकस्याभावात्मकं कारणं, तद्विनाशनमित्यर्थः । ननु कथं तादृशस्य विध्वंसनं तत्पालनमित्यत आह—**प्रागभावस्येति ।** तथा च व्याकरणाध्ययनेन निश्चयो विधेयः, येन संशयप्रागभाव एव सदा तिष्ठेदित्याशयः । यज्ञपदस्य लक्ष्यार्थमाह—**यज्ञकाण्डेति ।** केचित्तु यज्ञं विदन्तीति व्युत्पत्तौ उक्थादित्वात् ठकि याज्ञिका इति साधयन्ति । ननु कथं शब्दानां पाठकर्तृतेत्यत आह—**ऋषिरिति ।** तथा चोभयत्र तज्ज्ञातरि तद्बोधकपदस्य लक्षणया प्रयोग इति भावः । तत्र पूर्ववाक्ये तत्प्रयोगं प्रमाणयितुमाह—**सनूसूत्र इति ।** स्थूलपृषतीशब्दे दर्शितस्यार्थसंशयस्य स्थौल्यसन्देहद्वारा गव्येव पर्यवसानमभिप्रेत्य स्थूलपृषतीमिति विहाय व्याचष्टे—**अनड्वाहीमिति ।** ननु भाष्यकृता निर्णयस्यानुक्तत्वात् सन्देह एव तिष्ठेदित्यभिप्रायेणाह—**कस्तर्हीति ।**

## ( व्याकरणाध्ययनसाधकागमप्रतीकभाष्यम् )

**इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेऽसुराः । दुष्टः शब्दः । यदधीतम् । यस्तु प्रयुङ्क्ते । अविद्वांसः । विभक्तिं कुर्वन्ति । यो वा इमाम् । चत्वारि । उत त्वः । सक्तुमिव । सारस्वतीम् । दशम्यां पुत्रस्य । सुदेवो असि वरुण इति ॥**

**(प्रदीपः)** मुख्यानि प्रयोजनानि प्रदर्श्यानुषङ्गिकाणि प्रदर्शयति—**इमानि चेति ॥ भूय इति ।** पुनरित्यर्थः ॥ आनुषङ्गिकत्वाच्चैषां वर्गद्वयोपादानम् ॥

**( उद्द्योतः )** ननु अम्लेच्छत्वादीनां बहुत्वाद्बहूनामनुग्रहो **न्याय्य** इति प्रथमतोऽभिधानं युक्तमत आह—**मुख्यानीति ।** प्रधानत्वादेव तेषां प्रथमतोऽभिधानमिति भावः ॥ तेषां प्रधानत्वं च पदपदार्थज्ञानाधीनत्वेनान्तरङ्गत्वाद् । वक्ष्यमाणानां च बहिरङ्गशब्दापशब्दप्रयोगविधिनिषेधविषयत्वादानुषङ्गिकत्वं बोध्यम् ॥ ननु **भूय** इत्येकवचनमनुपपन्नं **प्रयोजनानी**त्यनेन सामानाधिकरण्यादत आह—**पुनरीति ॥ इमानि चेति ।** चः समुच्चये ॥ भाष्ये **प्रयोजनानीति ।** प्रवर्तकानि फलानि चेत्यर्थः । तत्र वक्ष्यमाणवाक्यानि प्रवर्तकानि, तद्बोध्यानि फलानीति विवेकः ॥ ननु रक्षादिभिः सहैवैतानि कुतो न पठितानि ? इत्यत आह—**आनुषङ्गिकत्वादिति ।** एषामानुषङ्गिकत्वं तेषां प्रधानत्वं बोधयितुं तथोक्तिरिति भावः ॥

**(तत्त्वालोकः)** भाष्ये—**इमानि च**—वक्ष्यमाणानि च । बोध्या-

नीति शेषः। व्याख्येयप्रयोजनानामियत्ताया बोधनाय यथासम्भवं तेषामादिभागं प्रतीकीकृत्य तानि गणयितुमाह—**तेऽसुरा इति। विभक्तिं कुर्वन्तीति**—अत्र तद्वाक्यार्थकथनम्। **सारस्वतीमिति**—इदं तद्वाक्यमध्यस्थपदम्।

उद्द्योते—**इति**–इति न्यायेन। **तेषां**–रक्षोहादीनाम्। **ज्ञानेति**–ज्ञानमात्रेत्यर्थः। **वक्ष्यमाणानां**–तेऽसुरा इत्यादीनाम्। **विषयत्वादिति**–बहिरङ्गौ यौ शब्दापशब्दप्रयोगयोर्विधिनिषेधौ तद्विषयत्वादित्यर्थः। प्रकृते शीघ्रोपस्थितिकत्वमन्तरङ्गत्वम्, तथा विलम्बोपस्थितिकत्वं बहिरङ्गत्वमिति भावः। **पुनरितीति**–**भूय** इत्यस्य पुनः (पश्चाद्) इत्यर्थकाव्ययतया साधुतेति भावः। **भाष्ये इति**–अस्य देहलीदीपन्यायेन पूर्वत्रोत्तरत्र चान्वयः। प्रयोजनशब्दस्योक्तरीत्या प्रकृतेऽप्यर्थद्वयमाह–**प्रवर्त्तकानीति। तत्र**–तयोर्मध्ये। **वक्ष्यमाणवाक्यानि**–तेऽसुरा इत्यादीनि। **तद्बोध्यानि**–अम्लेच्छत्वादीनि। **एषाम्**–अम्लेच्छत्वादीनाम्। **तेषां**–रक्षोहादीनाम्। कैयटस्थचकारस्य हेतुबोधकतया यत एषामानुषङ्गिकत्वम्, अतस्तेषां प्रधानत्वमित्याद्यर्थो बोध्यः। **तथा**–पार्थक्येन।

**( भाष्यम् )**

**तेऽसुराः—**

**"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः। तस्माद् ब्राह्मणेन न म्लेच्छितवै नापभाषितवै, म्लेच्छो ह वा एष यदपशब्दः" ॥**

**म्लेच्छा मा भूमेत्यध्येयं व्याकरणम्। तेऽसुराः ॥**

**( प्रदीपः ) तेऽसुरा इति** निन्दार्थवादेन **न म्लेच्छितवा** इति म्लेच्छनं निषिध्यते। तत्र केचिदाहुः **'हैहेप्रयोगे हैहयोः'** इति प्लुते प्रकृतिभावे च कर्तव्ये तदकरणं म्लेच्छनमिति। पदद्विर्वचने कार्ये वाक्यद्विर्वचनं लत्वं च म्लेच्छनमित्यपरे। **न म्लेच्छितवा** इत्यस्य पर्यायो **नापभाषितवा** इति। **कृत्यार्थे** इति तवैप्रत्ययः। म्लेच्छ इति कर्मणि घञ् ॥

**(उ०)** ननु पराबभूवुस्तस्माद्ब्राह्मणेनेति श्रुतौ पराभवस्यापशब्दभाषणफलत्वावगतेः 'पराभूता मा भूमेत्यध्येयम्' इति वक्तुमुचितमत आह—**निन्दार्थवादेनेति। द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्या**दिति ( पू० मी० ४।३।१ ) न्यायेन **यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं श्रृणोती**त्यादावपापश्लोकश्रवणस्य प्राशस्त्यमात्रपरत्ववदस्य निन्दामात्रपरत्वादिति भावः ॥ प्रकरणाच्च क्रत्वङ्गोऽयं निषेधः। **केचिदाहुरिति।** अत्रारुचिबीजं तु **'सर्वः प्लुतः साहसमनिच्छता विभाषा कर्तव्यः'** इति ॥ **पदेति। 'सर्वस्य द्वे'** इत्यत्र पदग्रहणस्य वार्तिककृतोक्तत्वादिति भावः ॥ ननु नेदं द्वित्वं, किं त्वैच्छिकः पुनः प्रयोगोऽत आह—**लत्वं चेति। न म्लेच्छितवै** इत्येतन्म्लेच्छभाषाविषयमिति भ्रमनिवृत्त्यर्थं तद्विवरणं **नापभाषितवै** इति। **ह वै** इति प्रसिद्धौ। अपशब्दत्वं व्याकरणानुगतशब्दस्यैषशद्भ्रंशन एव प्रसिद्धमिति भावः ॥ ननु म्लेच्छो नाम पुरुषविशेषो देशविशेषो वा स कथमपशब्दोऽत आह—**घञिति।** निन्दावचनान्म्लेच्छतेरिति भावः। निन्दा च शास्त्रबोधितविपरीतोच्चारणेन पापसाधनत्वात्। एवंच म्लेच्छा इत्यस्य निन्द्या इत्यर्थ इति दिक् ॥

**(तत्त्वालोकः)** भाष्ये—प्राङ्निर्दिष्टप्रतीकघटितानि प्रयोजनपरवाक्यानि उद्देशक्रमेणोपस्थापयितुं प्रथमं वर्णापराधे दोषबोधकं वेदब्राह्मणभागस्थवाक्यमाह—**तेऽसुरा इति। हेलयो हेलय इति** हे अरयो हे अरय इति वक्तव्ये इत्यादिः। **कुर्वन्तः**–प्रयुञ्जानाः। निषेधस्य सविषयानुप्रातृनिन्दाया अपेक्षिततया पराबभूवुरित्यन्तेन प्रयोक्तृनिन्दां कथयन् विषयस्य निन्दामाह–**म्लेच्छो ह वेति।** यद् यस्म एषोऽपशब्दो म्लेच्छो म्लेच्छत्वेन प्रसिद्धः, तस्मात् तेऽसुरा देवान्प्र अपशब्दं प्रयुञ्जानाः पराभवमापुः, तस्माद् ( अत एव ) ब्राह्मणेना शब्दभाषणं सर्वथा त्याज्यमित्यर्थः। उक्तवाक्येनापशब्दाभाषणस्याम्लेच्छताफलकत्वाद् व्याकरणाध्ययनस्याम्लेच्छत्वफलकत्वं सिद्धमि स्वयमुपसंहरति–**म्लेच्छा मेति।** एवमग्रेऽपि सर्वत्र। उपसंहृत मध्यवर्तितया दृढीकरणार्थम् "एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मा यती"ति न्यायेन समस्तमन्त्रस्मारणाय प्रतीकमेव कथयति–**तेऽसु इति।** एवमग्रेऽपि सर्वत्र।

प्रदीपे—**म्लेच्छितवा इति**—म्लेच्छितव्यमित्यनेन **म्लेच्छनम**पशब्दभाषणम्। ननु तेषां पराभवकारणं म्लेच्छनं प्र कीदृशमित्यत आह–**तत्रेति।** श्रुतावित्यर्थः। **प्रकृतिभावे**–"प्लुत गृह्या अचि नित्यमि"त्यनेन प्लुतप्रयुक्ते प्रकृतिभावे। **तदिति**–प्लु प्रकृतिभावेत्यर्थः। **कृत्यार्थे इतीति**–( **शब्दद्वये** )"कृत्यार्थे तवैकेन्केन त्वन" इति सूत्रेणेत्यर्थः। **कर्मणीति**–म्लेच्छ्यते इतीति व्युत्पत्त्या त्यर्थः। तत्र कर्मणि करणे वा घञित्यपरे।

उद्द्योते—**निन्दार्थवादेन**—निन्दार्थवादपूर्वकम्। तथा "म्लेच्छो ह"ति बोधितं म्लेच्छत्वमेवापशब्दभाषणफलमिति भाव ननु रात्रिसत्रन्यायेन "तेऽसुरा" इत्यस्यार्थवादिकफलनिर्देशकं कुतो नेन्यत आह—**द्रव्यसंस्कारेति। अपापश्लोकश्रवणस्य**–प श्लोकश्रवणाभावस्य। उभयत्र **मात्र**शब्देन स्वार्थपरतानिरासः **अस्य**–तेऽसुरा इत्यर्थवादस्य। नन्वपशब्दभाषणनिषेधस्य द्रव्याद्य तमत्वाभावात् कर्मानङ्गतया कथन्तत्र "द्रव्यसंस्कारे"ति न्यायप्रवृ रित्यत आह–**प्रकरणादिति।** भाष्यकारोऽपि "यर्वाणस्तर्वाणो नाम त्यादावुत्तरग्रन्थे निषेधस्यास्य क्रत्वङ्गतां स्पष्टीकरिष्यति। **च**–तु **क्रत्वङ्ग इति**–अङ्गशब्दस्य "अङ्गं शरीरावयव" इत्यादिकोशतो नि क्लीबलिङ्गतया क्रत्वङ्गमिति पाठः। अथवा अङ्गशब्दादर्शे आद्य क्रतुरङ्गो यस्येति बहुव्रीहौ, अथवा क्रत्वङ्गत्वपरात् क्रत्वङ्गशब्दादर्श यचि प्रकृतपाठ एव साधुः। **सर्वस्य द्वे इति**–अत्र केचित् "पदस्ये त्यस्याधिकारमेव कथयन्ति। **इदं**—हेलयो हेलय इति। **प्रयं इति**–तात्पर्यद्योतनायेति शेषः "अनावृत्तिः शब्दादनावृत्तिः शब्दादि ति व्याससूत्रवदित्याशयः। नचैवं तत्राम्रेडितस्वरानुपपत्तिः, तत्तत्स्व रहितस्यैव तस्य पाठाभ्युपगमादित्यभिप्रेत्याह–**लत्वमिति।** हेल हेलय इति माध्यन्दिनानां शतपथब्राह्मणस्य पाठे वत्वस्यापि म्लेच्छ नता। **म्लेच्छभाषेति**—म्लेच्छ ( यवनादि ) भाषा ( निषेध्यत्वेन विषयो यस्येति व्युत्पत्तिः। "न म्लेच्छभाषां शिक्षेदि"त्यस्य स दाह—**भ्रमेति। ह वै इति**–समुदायो द्वौ वा। प्रकृतनिषेधस्य वैदिकशब्दमात्रापभाषणविषयता, किन्तु साधुशब्दसामान्यापभाष विषयतेति सूचनायाह—**अपशब्दत्वमिति। एवो** व्युत्क्रम्य श स्येत्यनेनान्वेति। म्लेच्छपुरुषाश्रयत्वाद्देशस्य म्लेच्छता, अथवा म्ले च्छदेशस्थितत्वात्पुरुषस्य म्लेच्छतेत्यत्र विनिगमनाविरहादाह—**घे ति।** धातूनामनेकार्थत्वादाह—**निन्देति। शास्त्रेति**–शास्त्रबोधि द्विपरीतस्योच्चारणविषयत्वादिनेत्यर्थः **एवञ्च**—म्लेच्छतेर्निन्दार्थ च। तथा चापशब्दस्य तादृशोच्चारणविषयत्वेन पापसाधनत्व निन्द्यता, एवमपशब्दभाषितुः तादृशोच्चारणकर्तृतया पापकारित्व म्लेच्छता। अत एव म्लेच्छतामनिच्छता ब्राह्मणपदोपलक्ष्यद्विजेन शब्दभाषणपरित्यागाय व्याकरणमध्येयमिति भावः।

( भाष्यम् )

दुष्टः शब्दः

"दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥" इति ॥

दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणम् ॥

दुष्टः शब्दः ॥

**( प्रदीपः ) दुष्टः शब्द इति ।** स्वरेण स्वरतः । आद्यादित्वात्तसिः **मिथ्याप्रयुक्त इति ।** यदर्थप्रतिपादनाय प्रयुक्तस्ततोऽर्थान्तरं स्वरवर्णदोषात्प्रतिपादयन्नाभिमतमर्थमाहेत्यर्थः । वागेव वज्रो हिंसकत्वात् । यथेन्द्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इन्द्रस्याभिचारो वृत्रेणारब्धस्तत्रे**न्द्रशत्रुर्वर्धस्वेति** मन्त्र ऊहितः । तत्रेन्द्रस्य शातयिता शमयिता भवेति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः, तदाश्रयणे हि बहुव्रीहितत्पुरुषयोरर्थाभेदः । तत्रेन्द्रामित्रत्वे सिद्धे सतीन्द्रस्य शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्य **आद्यु**दात्त ऋत्विजा प्रयुक्त इत्यर्थान्तराभिधानादिन्द्र एव वृत्रस्य शातयिता संपन्नः । इन्द्रशत्रुत्वस्य च विधेयत्वात्संबोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः । यथा—राजा भव युध्यस्वेति ॥ ऊह्यमानस्य चामन्त्रत्वा **द्यज्ञकर्मणीति** जपादिपर्युदासेन मन्त्राणामेकश्रुतिर्विधीयमानेह न भवति ॥

**( उद्द्योतः )** असर्वनामत्वात्तसोऽप्राप्तेराह—**स्वरेणेति आद्यादित्वादिति** च ॥ तमित्यस्य यच्छब्दापेक्षित्वादाह—**यदर्थेति ॥ मिथ्याप्रयुक्त** इत्यस्य विवरणं—**ततोऽर्थान्तरमिति ॥** न केवलं तदर्थं नाहेत्येतावत्, किंतु प्रत्यवायोत्पादनद्वारा हिंसकोऽपीत्याह—**वागेवेति ।** यथाध्वर्युकृताद्धोमाद्यजमाने धर्मोत्पत्तिः, एवं तत्कृतापशब्दप्रयोगात्तस्मिन् प्रत्यवाय इत्याशयः ॥ तत्र दृष्टान्तमाह—**यथेति । वृत्रेणेति ।** हेतौ तृतीया । फलमपीह हेतुः ॥ **मन्त्र इति ।** न चोहितस्य कथं मन्त्रत्वमिति वाच्यम् । मन्त्रशब्दस्य बोधकपरत्वात् । अत एव **'मन्त्रो हीनः स्वरतः'** इति प्रसिद्धमपि शिक्षापाठं विहाय भाष्ये—**दुष्टः शब्द इति** पठितं तत्रत्यमन्त्रशब्दस्य शब्दमात्रपरतेति सूचयितुम् ॥ शत्रुशब्दस्यामित्रपर्यायत्वे **बहुव्रीहि**तत्पुरुषयोरविशेषोऽत आह—**तत्रेन्द्रस्येति ।** शदेर्ण्यन्तादौणादिकः क्रुन् । प्रज्ञादिगणे निपातनाद्ध्रस्वत्वम् । **शमेस्तु** तत्वम् ॥ संबोधनविभक्त्यभावायाह—**इन्द्रशत्रुत्वस्येति ।** नन्वत्र **यज्ञकर्मणी**त्यैकश्रुतौ प्राप्तायां पूर्वपदप्रकृतिस्वरकरणं स्वरापराध इति वक्तुं युक्तम् । न च तथैवास्तु । शतपथब्राह्मणतद्भाष्यविरोधात् । तत्र हि आद्युदात्तत्वकरणमेव स्वरापराध उक्त इत्यादि स्पष्टमस्मत्कृतैकश्रुत्यादेऽत आह—**ऊह्यमानस्य चेति ।** तदुक्तम्—**'अनाम्नाते**ष्वमन्त्रत्वम् ( **पू०** मी० २।१।३४ )—' इति । नचास्यामन्त्रत्वे लौकिकशब्देन क्रियमाणस्य कर्मणः कथं फलजनकत्वमिति वाच्यम् । सूर्याय त्वेत्यादेर्लौकिकघटितस्य ऊहविधायकशास्त्रबलेन फलजनकत्ववदुपपत्तेरित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—क्रमागतं स्वरापराधे दोषबोधकं शिक्षावाक्यमाह—**दुष्टः शब्द इति । दुष्टः**—अन्यथाभूतः । **तम्**—अभिमतम् । **सः**—स्वरादिदुष्टः शब्दः । **वाग्वज्रः**—ऋत्विग्वचनरूपवज्रः । **हिनस्ति**—हिंस्यात् । लिङर्थे वैदिकलेट् । **अपराधादिति**—हिंसितवानिति शेषः । **अध्येयमिति**—ऋत्विग्वचने स्वरादिदोषाद् यजमानो नश्यतीति जानन् यजमानोऽवैयाकरणं कथमपि ऋत्विक्त्वेन न वृणुयादिति **ऋत्विग्वृत्त्या द्रव्यार्जयितुं** व्याकरणमध्येयमिति भावः ।

प्रदीपे—**तसिरिति**—अयम् "इतराभ्योऽपि दृश्यन्ते" इति वचनात्तृतीयार्थे जातः एवं वर्णत इत्यत्रापि । **प्रतिपादयन्निति**—अस्ति, अत एवेति शेषः । तत्तत्स्वरवर्णानुपूर्वीकमेव पदादि तत्तदर्थकमिति तत्तथैव प्रयुक्तं सत् तं तमर्थं बोधयति नान्यथेत्याशयः । **स्वरदोषादिति**—ननु स्वरस्य छन्दोमात्रविषयकतया कथं लौकिकेऽपि इन्द्रशत्रुशब्दे स्वरवैगुण्यप्रयुक्तदोष इति चेन्न, स्वरविधौ छन्दोऽनधिकारात् । भेदस्तु वेदे त्रिस्वरतैकश्रुती नियमतः समाश्रीयेते, लोके त्वैच्छिकवैकल्पिकत्वेनेत्येव बोध्यः । **यजमानमिति**—नन्वत्र यजमानपुत्रस्य नाशसत्त्वे यजमाननाशः कथं कथित इति चेन्न, पितृपुत्रयोः तादात्म्याध्यासमभिप्रेत्य तथाऽभिधानात् ॥ पुरा किल त्वष्टा इन्द्रेण विश्वरूपनामके पुत्रे हते कुपित इन्द्रहन्तुरुत्पिपादयिषया आभिचारिकयागे होमं विदधत् मन्त्रममुमुच्चारितवान् "स्वाहेन्द्रशत्रुर्वर्धस्वे"ति । तस्यायं विपक्षितोऽर्थः—हे अग्ने तुभ्यमिदं स्वाहुतं पुनरिन्द्रस्य शातयिता ( हिंसकः ) कश्चित्पुरुषो भूत्वा वर्धस्वेति । सोऽग्निर्यावता कालेनोर्ध्वज्वालारूपो भूत्वा पराभूतमिन्द्रं कर्तुं विध्यामीत्युद्यतो' भवति, तावति काले मन्त्रगतस्वरापराधेन वह्निः स्वयमेव विरतोऽभूज्ज्वाला शान्तेति वैदिककथाऽनुसारेणाह—**इन्द्रस्येति । तत्र तत्र**—आभिचारिके यागे । विनिगमनाविरहादाह—**शमयितेति । अत्र**—ऊहितमन्त्रे । **तदिति**—रूढिशब्देत्यर्थः । **हि**—यतः । **अर्थाभेद इति**—स्वरभेदेऽपि अर्थभेदो न भवेदित्यर्थः । यौगिकशब्दाश्रयणे तु अर्थभेद इत्याह—**तत्रेति**—ऊहितवाक्ये इत्यर्थः । अस्य प्रयोक्तव्यादावन्वयः । नन्विन्द्रवैरित्वमेव कथं न विधेयमित्यत आह—**सिद्धे इति ।** अत एवेन्द्रस्य शातयितेत्यर्थस्य प्रतिपाद्यतेति भावः । **शत्रुः**—शातयिता । **अन्तोदात्त इति**—तत्पुरुषसमासनिमित्तके "समासस्ये"ति सूत्रेण विहिते इत्यादिः । **आद्युदात्त इति**—इन्देरौणादिके "ऋज्रेन्द्राग्रे"त्यादिना रन्प्रत्यये कृते निष्पन्नस्येन्द्रशब्दस्य नित्त्वादाद्युदात्तत्वे तस्य "बहुव्रीहौ प्रकृत्या पूर्वपदमि"ति पूर्वपदप्रकृतिस्वरेण बहुव्रीहिद्योतकः स इति भावः । **अर्थान्तरेति**—इन्द्रः शातयिता यस्येतीत्यादिः । **अनुवाद्येति**—सिद्धेत्यर्थः । **इह**—इन्द्रशत्रुशब्दे । **युद्ध्यस्वेतीति** अत्र राजत्वस्य विधेयतया राजशब्दात्सम्बोधनविभक्तेरनुपपत्तिः, तस्यानुवाद्यत्वे तु राजन् ! युद्ध्यस्वेत्यत्र स्या भवत्येवेति भावः ।

उद्द्योते—**तसः**—"पञ्चम्यास्तसिलि"ति तसिलः । यत्तदोर्नित्यसम्बन्धमभिप्रेत्याह—**यच्छब्देति ।** अध्याहाराकरणजनितलाघवाशयेनाह—**विवरणमिति ।** प्रतिपादयन्नित्यन्तमिति शेषः । **तदर्थमिति**—अत्र कर्मधारयः । **प्रत्यवायेति**—यजमानस्येत्यादिः । नन्वपराधदण्डयोः सामानाधिकरण्यनियमात् कथमृत्विगपराधेन यजमाननाश इत्यत आह—**यथेति । तदिति**—अध्वर्य्वित्यर्थः । **तस्मिन्**—यजमाने । **तत्र**—हिंसायाम् । नन्विन्द्रहिंसकवृत्रासुरोत्पादरूपफलाय त्वष्टुराभिचारिकयागकर्तृतया कथं वृत्रेणेत्यत्र तृतीयेत्यत आह—**हेताविति ।** ननु कथं ( याग ) नियतपूर्ववर्त्तित्वघटितहेतुताऽपि तत्रेत्यत आह—**फलमिति ।** तथा चाभिचारिकयागफलत्वरूपहेतुत्वेनैव वृत्रेणेत्यत्र तृतीयेति भावः । "अनाम्नाता अमन्त्रा" इत्यापस्तम्बोक्त्यनुसारेणाह—**ऊहितस्येति ।** सकलस्येति शेषः । 'एकदेशविकृतमनन्यवदि"त्यादिन्यायेन मन्त्रांशाधिक्यविनाशाभ्यां मन्त्रत्वाव्याघातादिति भावः । **अत एव**—ऊहितस्यामन्त्रत्वादेव । **पठितमिति**—व्यक्तमपीति शेषः । अन्यथेन्द्रशत्रुशब्दरूपदृष्टान्तासङ्गतिरेव स्यादित्याशयः । **तत्रत्येति**—शिक्षापाठस्थेत्यर्थः । **शब्देति**—बोधकेत्यर्थः । **अमित्रेति**—सपत्नेत्यर्थः । सपत्नत्वस्य समानरूपेणोभयनिष्ठतया अर्थभेदासंभवादाह—**अविशेष इति ।** शत्रुशब्दसाधनप्रक्रियायां विषयविशेषमाह—**शदेरिति । तत्त्वमिति**—प्रज्ञादिगणे निपातनादित्यनुषज्यते । **अत्र**—**इन्द्रशत्रुर्वर्धस्वेति**

मन्त्रे । **शतपथेति**—"अथ यदब्रवीत्-इन्द्रशत्रुर्वर्धस्वेति तस्मादु हैनमिन्द्र एव जघान । अथ यद्ध शश्वदवदयत्—इन्द्रस्य शत्रुर्वर्धस्वेति शश्वदु ह स इन्द्रमेवाहनिष्यत्" ॥ इति शतपथे १ का० ५ प्र० २ ब्राह्मणम् । "स त्वष्टा महत्स्वारसमये इन्द्रशत्रुरिति पूर्वपदाद्युदात्ततया इन्द्रः शत्रुर्यस्येति बहुव्रीहिसमासं कृत्वा मन्त्रं प्रयुक्तवानतस्तमिन्द्रो जघान । यद्यसौ अन्तोदात्ततया तत्पुरुषसमासेन वा इन्द्रस्य शत्रुरिति व्यस्तनिर्देशेन वा ब्रूयात्तदा निश्चितमेव स इन्द्रं हन्यात्" इति शतपथब्राह्मणसायणभाष्यम् । **आद्युदात्तत्वेति**—अन्तोदात्तत्वे कर्तव्ये इत्यादिः । **तदुक्तमिति**—जैमिनिना भेदलक्षणे ऊह्यमानस्य मन्त्रत्वमुत नेति सन्दिह्य मन्त्रैकवाक्यतया मध्यनिवेशान्मन्त्रत्वमिति पूर्वपक्षे इति शेषः । **अमन्त्रत्वमिति**—कथितेष्वेवाभियुक्तप्रसिद्ध्या मन्त्रता ज्ञायते, न कापि मन्त्रैकवाक्यतयेति भावः । **अस्य**—इन्द्रशत्रुर्वर्धस्वेत्यस्य । अग्नये त्वा जुष्टं निर्वपामीति मन्त्रे अग्नये इत्यत्र सूर्यायेत्यस्योह इत्याशयेनाह—**सूर्यायेति । लौकिकेति**—ऊहितावैदिक ( सूर्यायेति ) इत्यर्थः ।

**( भाष्यम् )**

**यदधीतम्—**

**"यदधीतमविज्ञातं निगदेनैव शब्द्यते ।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥"**

**तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम् ॥**

**यदधीतम् ॥**

**( प्रदीपः ) अविज्ञातमिति ।** अविदितस्वरादिसंस्कारत्वादर्थापरिज्ञानाद्वा ॥ **निगदेनेति ।** पाठमात्रेण । **न तज्ज्वलतीति ।** निष्फलं भवति ॥ **अनर्थकमिति ।** निष्प्रयोजनम् ॥

**( उद्द्योतः )** नन्वधीतमविज्ञातमिति विरुद्धमत आह—**अविदितेति । शुष्कैध** इति सान्तक्लीबैधःशब्देनादन्तपुंलिङ्गेन वा निर्वाह्यम् ॥ निरुक्ते तु **यद्गृहीतमविज्ञातमिति** पठ्यते । तत्र **गृहीतं** शब्दतः । **अविज्ञातमर्थ**त इति बोध्यम् ॥ भाष्ये—**तस्मादनर्थकमिति** अनेन निन्दार्थवादेन निष्प्रयोजनाध्ययनेऽनौचित्येन निष्प्रयोजनं नाध्येयमिति निषेधकल्पनादिति भावः । अतो निषिद्धमध्ययनं मा भूदिति व्याकरणमध्येयमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—यथाक्रममाह—**यदधीतमिति ।** एवं सर्वत्र बोध्यम् । **शब्द्यते**—भूयोभूय उच्चार्यते । भेर्येव ध्वनिमात्रमेवाभिव्यज्यते तेनेति भावः । **अनग्नाविति**—न अग्निर्यत्रेति बहुव्रीहौ भस्मनीत्यर्थः । न अग्निरिति तत्पुरुषे नञो विरोधार्थकतया जले, तथा पर्युदासार्थकतया भस्मनीत्यर्थः । प्रक्षिप्तमिति शेषः । **ज्वलति**-दीप्यते ( प्रकाशते ) ।**अध्येयमिति**—स्वरार्थादिज्ञानपूर्वकवेदपाठस्यैव सफलतया तज्ज्ञानाय व्याकरणमध्येयमिति भावः ।

प्रदीपे-**अविदितेति**—अविदितः स्वरादिसंस्कारो यत्रेति व्युत्पत्तिः । "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥ इति श्रुत्याद्यनुसारेणार्थज्ञानस्य प्राधान्यमभिप्रेत्याह—**अर्थेति ।** तस्य भावार्थमाह—**निष्फलमिति ।** वाच्यार्थसत्त्वाद्, दृष्टान्तानुरोधाच्च तस्यार्थमाह—निष्प्रयोजनमिति ।

उद्द्योते—अधीतस्य स्वरूपतो विज्ञानत्वादाह-**अधीतमिति** । विनिगमकाभावादाह—**अदन्तेति । पठ्यते इति**—भाष्यकृता मन्त्रो हीन इत्यत्र दुष्टः शब्द इतिवद् गृहीतमित्यत्राधीतमित्यनुसृतं ज्ञाग्रह-

धात्वोरर्थभेदसूचनार्थेति भावः । पाठभेदेऽपि नार्थभेद इत्याह—**तत्रेति** । तत्रापीत्यर्थः । पूर्वत्र परत्र चानुक्तस्यात्रोक्तस्य तस्मादित्यस्यार्थमाह—**अनेनेति** । यदधीतमित्यादिनेत्यर्थः ।

( भाष्यम् )

**यस्तु प्रयुङ्क्ते—**

**"यस्तु प्रयुङ्क्ते कुशलो विशेषे**
**शब्दान्यथावद् व्यवहारकाले ।**
**सोऽनन्तमाप्नोति जयं परत्र**
**वाग्योगविद् दुष्यति चापशब्दैः ॥"**

**कः ? ॥**

**वाग्योगविदेव ॥**

**कुत एतत् ? ॥**

**यो हि शब्दाञ् जानात्यपशब्दानप्यसौ जानाति । यथैव हि शब्दज्ञाने धर्मः, एवमपशब्दज्ञानेऽप्यधर्मः । अथ वा भूयानधर्मः प्राप्नोति । भूयांसोऽपशब्दाः, अल्पीयांसः शब्दा इति । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्यादयो बहवोऽपभ्रंशाः । अथ योऽवाग्योगविद् , अज्ञानं तस्य शरणम् ॥**

**( प्रदीपः ) यस्तु प्रयुङ्क्ते इति ।** अनेनाभ्युदयहेतुत्वं व्याकरणाध्ययनस्य दर्शयति ॥ **विशेष इति ।** स एव शब्दः कचिदर्थे केनचिन्निमित्तेन प्रयुक्तः साधुरन्यथाऽसाधुः । यथाऽस्त्रेऽस्वशब्दो धनाभावनिमित्तकः साधुर्जातिनिमित्तकोऽसाधुः । गवि च गोणीशब्दः साधर्म्यात्प्रयुक्तः साधुर्जातिप्रयुक्तस्त्वसाधुः ॥ **क इति ।** वाग्योगविदः श्रुतत्वाद्दोषदर्शनाच्च प्रश्नः ॥ प्रष्टैव परमतमाशङ्क्याह-**वाग्योगविदेवेति ॥ एवमपशब्दज्ञानेऽपीति ।** यथा श्लैष्मिकद्रव्यसेवया श्लैष्मिको व्याधिर्भवति तद्विपरीतसेवया त्वारोग्यं तथात्रापि यथोक्तं न्याय्यमिति भावः ॥ **भूयांसोऽल्पीयांस इति ।** परमतापेक्षया प्रकर्षे प्रत्ययः । यदि मन्यसे बहवः शब्दा अल्पेऽपशब्दा अङ्गभूयस्त्वाच्च फलभूयस्त्वमिति । तन्न । यस्माद्भूयांसोऽपशब्दा अल्पीयांसः शब्दाः ॥ **अज्ञानमिति ।** यथा च तिरश्चां ब्रह्महत्यादिफलाभावः ॥

**( उ० ) एकः पूर्वपरयोरित्यत्र** भाष्यपठितैकः शब्द इत्यादिश्रुतिमूलकमाह-भाष्ये—**यस्त्विति । अभ्युदयहेतुत्वम**दृष्टद्वारा पुरुषार्थसाधनत्वम् । **कुशलोऽ**धीतव्याकरणः । लक्षणस्मरणपूर्वकं यः प्रयुङ्क्ते इति फलति ॥ **विशेष इति ।** अर्थविशेष इत्यर्थः । तदाह-**स एवेति ॥ साधर्म्यात्** साधर्म्यमूलकाऽभेदारोपात् ॥ भाष्ये—**यथावत्** अम्बूकृतादिदोषरहितम् ॥ वाचो योगः प्रकृतिप्रत्ययविभागेनार्थविशेषपरत्वं तद्वेत्तीति वाग्योगवित् ॥ **श्रुतत्वादिति ।** एकत्र जयाप्तिदोषयोश्चकारेण समुच्चयप्रतिपादनाच्चेत्यपि बोध्यम् ॥ **दोषदर्शनादिति ।** शास्त्रस्याधर्महेतुत्वं दोष इत्यर्थः । वादिप्रतिवादिपूर्वपक्षोत्तरपक्षतयाव्याख्यानेऽसामञ्जस्यं मत्वाह—**प्रष्टैवेति ॥** भाष्ये—**कुत एतदिति ।** वाग्योगविदो दोषः कुत इत्यर्थः ॥ ननु साधुज्ञानस्य यथा धर्मजनकता शास्त्रोक्ता न तथाऽसाधुज्ञानस्याधर्मजनकता शास्त्रोक्तेत्यत आह—**यथेति ।** एवंचापशब्दज्ञानमधर्मसाधनं धर्महेतुशब्दज्ञानविरोधित्वात्, यद्यद्विरोधि तत्तद्विरोधिफलकं यथा श्लैष्मिकद्रव्यसेवेत्यनुमानं प्रमाणमिति भावः । एवं च शास्त्रस्याधर्महेतुतया तत्र प्रवृत्तिर्न स्यादिति नेदं

१. इत्—एव । स एवेति भावः ।

वचो व्याकरणाध्ययनानुष्ठापकं स्यादिति तात्पर्यम् ॥ नन्वस्त्वेवमेवमपि, तथापि धर्माधिक्यायाध्येयं व्याकरणमत आह—भाष्ये-**अथवेति । अङ्गभूयस्त्वादिति ।** अज्ञानां धर्मजनकानां भूय—स्त्वादित्यर्थः । एवं च यज्ञादेः पापजनकत्वेऽप्यधिकधर्मजनकत्वाद्यथा तत्र प्रवृत्तिस्तथा प्रकृतेऽपीति भावः ॥ **अल्पीयांसः शब्दा इति ।** एवं च श्रुतिप्रक्षिप्तक्षीरवदनुपादेयं तद्विज्ञानमिति भावः ॥ नन्वेवं सामर्थ्यादवाग्योगविदेव दुष्यतीत्यत्र कर्ताऽस्त्वत आह—भाष्ये-**अथ योऽवाग्योगविदिति॥**

**( तत्त्वालोकः )** भाष्ये—**शब्दान्**-साधुशब्दान् । एवं सर्वत्र । **यथावदिति**—अत्र योग्यतायैकयथाशब्दान्नतुप्रत्ययः । **अनन्तमिति**-अत्रानन्तता चैहिकापेक्षयाऽत्यधिककालावस्थायिता, नाविनाशिता, जन्यभावस्य सान्ततानियमात् । नचैवं कथं सङ्गच्छते "अपाम सोमममृता अभूमेति," "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इत्यादिसत्त्वात् । **जयम्**-विशिष्टोत्कर्षम् । **परत्र**-परलोके । **दुष्यति**-अपकर्षं प्राप्नोति । यो हि शब्दान् जानाति, अपशब्दानप्यसौ जानात्येवेति न नियमः, किन्तु संभव इत्याशयेनाह-**यो हीति । अप्यधर्म इति**-अधर्मोऽपीत्यन्वयः । **इति**-इति हेतोः । ननु साधारणजनैः व्यवहाराय संकेतितानामपशब्दानां कथं साधुशब्दापेक्षया भूयस्त्वमित्यत आह-**एकैकस्येति । बहव इति**-देशकालपुरुषवदवस्थादीनां भेदादित्यादिः । **अथ**शब्दः प्रश्नवाचकः । एवमग्रेऽपि । विधिनिषेधादीन् जानतामेव सर्वत्राधिकारदर्शनादाह-**अज्ञानमिति ।** निषेधशास्त्राज्ञानमित्यर्थः । तथा च विधिनिषेधशास्त्रं जानतां विदुषामेवाल्पसाधुशब्दज्ञानजनितपुण्यापेक्षया अधिकापशब्दज्ञानजनितपापाधिकता, न मूर्खाणां निषेधशास्त्राज्ञानादिति स्थितौ व्याकरणाध्ययनस्य नित्यतयैव विधेयता युक्ता, न पुण्यजनकसाधुशब्दज्ञानजनकतया; तथा सति बहुपापजनकताया एव संभवेन बहुपापजनकाल्पपुण्यजनकानां प्रेक्षावद्भिरग्राह्यत्वात् प्रवर्त्तनस्थले निषेध एव प्रसज्येतेत्याशयः समाधातुरेकदेशिनः ॥

प्रदीपे-**अनेन**-यस्तु प्रयुङ्क्ते इति पद्येन । **अस्वे**-दरिद्रे । **जातीति**-अश्वत्वेत्यर्थः । **जातीति**-गोत्वेत्यर्थः । **असाधुरिति**-तथा च एकत्रार्थे निमित्तविशेषैः शब्दसाधुत्वासाधुत्वज्ञानं व्याकरणैकसाध्यमिति तदर्थं तदध्येयमिति फलति । आह च हरिः—"अर्थप्रवृत्तितत्त्वानां शब्दा एव निबन्धनम् । तत्त्वावबोधः शब्दानां नास्ति व्याकरणादृते ॥" इति ॥ **दध्येति**-दध्यादीत्यर्थः । **व्याधिः**-कासश्वासादिरोगः । **तद्विपरीतेति**-श्लेष्मघ्नशुण्ठीपिप्पल्यादीत्यर्थः । **प्रत्ययः**-ईयसुन् । पूर्वपक्षिणो विवक्षितस्य साधुशब्दानां बहुत्वस्यासाधुशब्दानां न्यूनत्वस्य च खण्डनपरेऽत्रैकदेशिमते परमतापेक्षया प्रकर्षस्य तात्पर्यविषयत्वादिति भावः । केचित्तु प्रकृते स्वार्थे ईयसुन्, अल्पाच्तरमित्यत्र तरबिवेति वदन्ति । तन्न, तस्यागतिकगतित्वात् ॥ निषेधशास्त्रमजानतः कर्मजनितदोषाभावे दृष्टान्तमाह-**यथेति ।**

उद्द्योते—**एक इति**-निषेधविधिविषयफलानि प्रतिपाद्य काम्यविधिविषयं फलमुपपादयन्नित्यादिः । **इत्यादीति**-आदिना "सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवती"त्यस्य संग्रहः । पूर्वापरसङ्गतये वदति-**अदृष्टेति । अर्थविशेषे**-शक्यलक्ष्यद्योत्याद्यन्यतमरूपे । सामञ्जस्यायाह-**साधर्म्यमूलकेति । वाचः**-शब्दस्य । **केचित्तु** वाचो योगं ( घटनां ) वेत्तीति वाक्योगविदिति व्युत्पत्तिं कथयन्ति । भाष्ये द्वितीयतया हेत्वन्तरमाह-**एकत्रेति ।** प्रथमेनानेन च हेतुना वाग्योगविद एव कर्तृत्वेनोपस्थितत्वादुत्तरभाष्ये एवकारप्रयोगः । प्रश्नकारणसंशयायात्र कोटिद्वयोपस्थितेरावश्यकतायामुक्तरीत्यैकैककोटेरुपस्थितत्वात् तृतीयहेतोः कोट्यन्तरोपस्थापनसमर्थमर्थमाह-**शास्त्रस्येति । दोष इति**-प्रसज्येत वाग्योगविदः कर्तृत्वे इति शेषः । अतोऽनेन हेतुना अवाग्योगविद एव कर्तृत्वेनोपस्थितिः । दोषदर्शनादिति । कैयटस्य वाग्योगविदोऽपशब्दज्ञानप्रयुक्तदोषदर्शनादित्यर्थो न युक्तः, तस्य तादृशार्थकत्वे हेतुत्रयेण वाग्योगविद एव कर्तृत्वेनोपस्थितेः कोट्यन्तरानुपस्थित्या संशयाभावात् प्रश्नानुपपत्तेः । भाष्ये एकत्रेति शेषपूरणस्य वैयर्थ्यापाताच्चेति भावः । उत्तरस्य दुष्टत्वेनासिद्धान्तत्वादाह-**असामञ्जस्यमिति । दोष इति**-वाग्योगविदः कर्तृत्वे शास्त्रस्याधर्महेतुत्वरूपदोष आपद्यते. तथा च कुतः ( कथं ) एतत् ( तस्य कर्तृत्वं ) सङ्गच्छते इत्यर्थः । अतोऽवाग्योगविद एव कर्तृता युक्तेति भावः । **न तथेति**-तथा च दथैवेत्यादिभाष्यासङ्गतिरिति भावः । **एवञ्च**-दृष्टान्तसत्त्वे च । विशेषव्याप्त्यभावादाह-**यद्वदिति । एवञ्च**-अनुमानमानसत्त्वे च । **इदं**-यस्तु प्रयुङ्क्ते इति । **अपीति**-विदुष एवेति शेषः । साधुशब्दज्ञानाय शास्त्राध्ययनेन विधीयमानेन नान्तरीयकतया जनिताऽसाधुशब्दज्ञानजोऽधर्मः, तस्य कूपखानकन्यायेन साधुशब्दज्ञानजनितधर्मांशेनैव नाशः स्यादित्यभिप्रेत्याह—**धर्मेति ।** धर्मांशेत्यर्थः । उपकारकत्वमप्यङ्गत्वमित्याशयेनाह-**धर्मजनकानामिति ।** साधुशब्दानामिति शेषः । **एवञ्च**-उक्तन्यायस्वीकारे च । **पापेति**-पश्वादिहिंसाजनितेत्यादिः । **तत्र**-यज्ञादौ । **प्रकृते**-व्याकरणाध्ययने । **एवञ्च**-अधिकपापजनकत्वे च । क्षीरविशेषस्य कुक्कुरचर्मपात्रान्तर्गतत्ववत् साधुशब्दस्य बहुपशब्दव्याप्तत्वात् दृष्टान्तमाह—**श्वदृतीति ।** श्वचर्मपात्रेत्यर्थः । **तदिति**-साधुशब्देत्यर्थः । **एवम्**-उक्तरीत्या वाग्योगविदोऽधिकपापप्रसक्तेः । यस्तु प्रयुङ्क्ते इत्यस्य व्याकरणाध्ययनाप्रवर्त्तकत्वापत्तौ । **कर्त्तेति**-तस्य बहुपापसम्भवेऽवाग्योगविदोऽगणितपापसंभावनेति भावः ।

## ( बाधकभाष्यम् )

**विषम उपन्यासः । नात्यन्तायाज्ञानं शरणं भवितुमर्हति । यो ह्यजानन् वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् ॥**

**( प्रदीपः ) नात्यन्तायेति ।** पुरुषाणां विधिनिषेधयोरधिकारात्तत्परिज्ञाने प्रयत्नस्य न्याय्यत्वात् ।

**( उ० )** अत्यन्तमित्यर्थेऽत्यन्तायेति । अव्ययम् । **पुरुषाणामिति ।** मनुष्याणामित्यर्थः । तिरश्चामत्यन्तायोग्यत्वादस्त्वज्ञानं **शरणं** मनुष्याणां तु योग्यत्वात्तैर्निषिद्धानुष्ठानवर्जनार्थमवश्यं शास्त्रं विज्ञेयम् । अतोऽवाग्योगविदो महाननर्थ इति भावः ॥ अत्र नात्यन्तायेत्यनेन शास्त्राज्ञानं नैव शरणं दोषद्वयप्रसङ्गात् । किं तु वध्यादेर्ब्राह्मणत्वाद्यज्ञानमेव पापाल्पत्वे प्रयोजकमिति ध्वनितम् ॥ भाष्ये-**यो ह्यजानन्निति ।** निषेधशास्त्रमजानन् ब्राह्मणत्वादिज्ञानपूर्वकं तद्वधादि कुर्वन्सोऽपि पतित एवेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये **विषमः**-असङ्गतः । **उपन्यासः**-हेतुपादः । अवाग्योगविदो न निषेधशास्त्राज्ञानमात्रेण अपशब्दभाषणजनितपापान्मुक्तिः, पापजननाय निषिद्धेनापेक्षितस्याधिकारस्य तत्रापि सत्त्वादित्याशयेनाह-**नात्यन्तायेति । हि**-यतः । **मन्ये**-निश्चिनोमि ।

प्रदीपे—पश्वादीनां निषेधाद्यधिकाराभावादेव निषिद्धाद्यनुष्ठानजनितफलाभावो, न निषेधशास्त्राज्ञानादित्यभिप्रायेणाह-**पुरुषाणामिति । तदिति**-विधिनिषेधेत्यर्थः ।

उद्द्योते—**अत्यन्तं**-सर्वथा । **अव्ययम्**-विभक्तिप्रतिरूपकमव्ययम् । विधिनिषेधयोः मनुष्यमात्राधिकारस्य शास्त्रेण निश्चिततया न्यूनतानिराकरणायाह—मनुष्येति । मनुष्यपक्षिणोः भेदमाह—**तिरश्चामिति । तैः**-मनुष्यैः । **शास्त्रम्**-निषेधशास्त्रम् । **अनर्थः**-प्रत्यवाय

एव । ननु "अत्यन्तायेऽति पदं विनाऽपि निर्वाहसम्भवे कथ तदुक्तमित्यत आह-**तत्रेति ।** भाष्ये इत्यर्थः । **शास्त्रेति**-निषेधेत्यादिः । **दोषद्वयेति**-शास्त्राज्ञाननिषिद्धानुष्ठानैतद्द्वयजनितेत्यादिः । **किन्त्विति**-अज्ञानं किञ्चित् शरणमपि यथेति शेषः । **बध्यादेरिति**-अस्य ब्राह्मणत्वादौ सम्बन्धः । प्रक्रान्ततया निषेधशास्त्रस्यैवाजानन्निरयत्रान्वयो न तु ब्राह्मणस्येत्याह-**निषेधेति ।**

## ( सिद्धान्तव्याख्याभाष्यम् )

एवं तर्हि—

सोऽनन्तमाप्नोति जयं परत्र
वाग्योगविद् दुष्यति चापशब्दैः ॥
कः ? ॥

**अवाग्योगविदेव । अथ यो वाग्योगविद्, विज्ञानं तस्य शरणम् ॥**

**( प्रदीपः )** प्रकरणात्सामर्थ्यं बलीय इत्याह—**अवाग्योगविदिति ।** वाग्योगवित्तूभयज्ञोपि शब्दान्प्रयुङ्क्ते नापशब्दानिति ज्ञानपूर्वकप्रयोगादभ्युदयभाग्भवति ॥

**( उद्द्योतः ) प्रकरणादिति ।** संनिधेरित्यर्थः ॥ नन्वेवं वाग्योगविदोऽपशब्दज्ञानादधर्मः स्यादत आह—**वाग्योगेति ।** एवंचापशब्दप्रयोग एवाधर्महेतुर्न ज्ञानमात्रमिति न दोष इति भावः ॥

**( तत्त्वालोकः )** भाष्ये-**एवम्**-अवाग्योगविदोऽन्यथा गत्यभावाद् दोषित्वस्यावश्यवाच्यत्वे । सिद्धान्ती सम्यगुत्तरं वक्तुमनुवदति-**सोऽनन्तमिति । विज्ञानमिति**-( बहुव्रीहिणा लक्षणया वा ) लक्षणस्मरणपूर्वकमर्थविशेषे साधुशब्दप्रयोगरूपमित्यर्थः ।

प्रदीपे—**इत्याह**-इत्यभिप्रायेण सिद्धान्ती वदति । **उभयज्ञः**-साध्वसाधुशब्दज्ञः ।

उद्द्योते – उभयाकांक्षारूपप्रकरणस्यासम्भवादाह – **सन्निधेरिति ।** अन्यतराकांक्षारूपात् स्थानाख्यप्रमाणादित्यर्थः । **एवम्**-अवाग्योगविदो दोषकर्तृत्वस्वीकारे । **वाग्योगविदः**-वाग्योगविदोऽपि । **एवञ्च**-वाग्योगविदोऽपशब्दाप्रयोक्तृत्वे च । **ज्ञानेति**-अपशब्दस्येत्यादिः । **दोष इति**-वाग्योगविद इत्यादिः । "यस्तु प्रयुंक्ते" "एकः शब्दः" इत्यादिना साधुशब्दस्य प्रयोगे धर्मो न तु ज्ञानमात्रे इति सूचितेन अपशब्दस्य प्रयोगेऽधर्मो न तु ज्ञानमात्रे इति फलति । तथा च वाग्योगवित् साध्वसाधुशब्दज्ञत्वाद् अपशब्दं विहाय साधुशब्दप्रयोगकरणेन धर्ममेवाप्नोति, अवाग्योगवित्तु अपशब्दप्रयोगकरणेनाधर्ममेवाप्नोतीति भावः ।

## ( आक्षेपभाष्यम् )

**क्व पुनरिदं पठितम् ? ॥**

**( प्रदीपः )** श्लोकस्यापरिज्ञानात्पृच्छति—**क्व पुनरिति ।** प्रातिपदिकार्थप्रश्न एवात्र तात्पर्यम्—किं तदस्ति यत्रेदं पठितमित्यर्थः । अत एव श्लोका इति प्रथमान्तेनोत्तरम् । अन्यथा श्लोकेष्विति वक्तव्यं स्यात् ॥

**( तत्त्वालोकः )** भाष्ये-**इदं**—"यस्तु प्रयुंक्ते" इति पद्यम् ।

प्रदीपे— **श्लोकस्येति**-( लक्षणया ) श्लोकाधारस्येत्यर्थः । **प्रातिपदिकेति**-विभक्त्यर्थप्रकारकेत्यादिः । अस्य **शाब्द**बोधाविषयत्वादाह—**तात्पर्यमिति ।** अत आह—**किन्तदिति । अर्थः**-फलितार्थः । **अत एव**-तत्प्रश्ने तात्पर्यादेव ।

## ( समाधानभाष्यम् )

**भ्राजा नाम श्लोकाः ॥**

**( उद्द्योतः )** भ्राजा नाम कात्यायनप्रणीताः श्लोका इत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—आधारभूतश्लोकपरिचायकमाह—**भ्राजेति ।**

## ( आक्षेपभाष्यम् )

**किंच भोः श्लोका अपि प्रमाणम् ? ॥**
**किं चातः ? ॥**

**यदि श्लोका अपि प्रमाणम्, अयमपि श्लोकः प्रमाणं भवितुमर्हति—**

**"यदुदुम्बरवर्णानां घटीनां मण्डलं महत् ॥**
**पीतं न गमयेत्स्वर्गं किं तत् क्रतुगतं नयेत्" इति ॥**

**( प्रदीपः )** आलोक्तत्वापरिज्ञानादाह—**किंच भो इति ॥ यदुदुम्बरेति ।** अयं श्लोकः सौत्रामणियागे सुरापानस्य दुष्टत्वमुद्भावयति ।

**( उद्द्योतः ) भाष्ये किं चात इति ।** अतः प्रमाणत्वे किं विवक्षितमित्यर्थः ॥ **उदुम्बरं** ताम्रम् ॥ **दुष्टत्वमिति ।** इदमुपलक्षणम् । अन्यत्राप्यदुष्टत्वस्य ॥

**( तत्त्वालोकः )प्रमाणमिति**—अस्य विभक्तिप्रतिरूपकाव्ययतया, प्रमाणत्वे एकत्वान्वयेन वा प्रकृते सामानाधिकरण्योपपत्तिः । तथा "धर्माधर्मयो"रित्यादिः । **यदुदुम्बरेति**-उदुम्बरवर्णानां, रक्तवर्णानाम्, घटीनां कलशीनाम्, महत् विशालम्, मण्डलम् ( मण्डलस्य स्वरूपतोऽपेयत्वाल्लक्षणया ) मण्डलस्थम्, ( मद्यं ) पीतं ( सत् ) यद् यदि ( पातारं ) स्वर्गं न गमयेत्, तत् तर्हि क्रतुगतं सौत्रामणीग्रहपात्रस्थं ( स्वल्पं मद्यं ) पीतं ( सत् पातारं ) किं ( स्वर्गं ) नयेत्, अर्थान्न नयेदिति शब्दार्थः । भावार्थस्तु यदि क्रतौ स्वल्पमपि मद्यं पीतं सत् पातारं स्वर्गं नयेत्, तर्हि पानागारे पर्याप्तं मद्यं पीतं सदवश्यमेव पातारं स्वर्गं नयेदिति हेतोः यज्ञापेक्षया पानागार एव मद्यपानं श्रेयस्करमिति । अथ यदि पानागारे मद्यं न पीयते दोषसम्भवात्, तर्हि यज्ञे तु सर्वथैव मद्यं न पेयं दोषसम्भवात् वैयर्थ्यसम्भवाच्चेति स्थितौ तत्र मद्यपानविधायको वेदः तद्बोध्ययज्ञादिश्च सर्वथा हेय एवेति पर्यवसितार्थः

प्रदीपे-**आलोक्तत्वेति**-भ्राजाख्यश्लोकानामित्यादिः । शब्दार्थपर्यवसितार्थाभिप्रायेणाह-**दुष्टत्वमिति ।**

उद्द्योते-**अत इति**-केचित्तु किञ्चात इति निपातसमुदायः किमित्यर्थकः, तथा च श्लोकप्रामाण्ये किमनिष्टमित्यर्थ इति वदन्ति । भावार्थमभिप्रेत्याह-**इदमिति । अन्यत्र**-यागातिरिक्ते पानागारादौ । **अपिना ।** यागस्य समुच्चयः । **अदुष्टत्वस्य**-मद्यपानादुष्टत्वस्य ।

## ( समाधानभाष्यम् )

**प्रमत्तगीत एष तत्रभवतः । यस्त्वप्रमत्तगीतस्तत्प्रमाणम् ॥ यस्तु प्रयुङ्क्ते ॥**

**( प्रदीपः ) प्रमत्तगीत इति ।** प्रमादेन विप्रतिपन्नत्वेन गीत इत्यर्थः । कात्यायनोपनिबद्धभ्राजाख्यश्लोकमध्यपठितस्य त्वस्य श्लोकस्य श्रुतिरनुग्राहिकास्ति—**"एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवती"**ति ॥

**( उद्द्योतः )** ननु कर्तरि क्तान्तप्रमत्तशब्दस्य गीतशब्देन समासोऽनुपपन्नः, **तत्रभवत** इत्यनेन साकाङ्क्षत्वादत आह-**प्रमादेनेति ।** भावे क्तान्त इति भावः ॥ **विप्रतिपन्नत्वेन** वेदविषयविप्रतिपत्त्याश्रयत्वेन । तत्त्वं स्वस्मिन्नारोप्य दैत्यनाशाय पूज्यस्यापि भगवत ईश्वरस्य

तथोक्तिरिति न प्रमाणमिति भावः ॥ **भाष्ये** यस्त्वप्रमादेन गीतो यस्य कस्यापि तत्प्रमाणमिति प्रतिनिर्देशलिङ्गम् ॥ ननु कथं ज्ञातम्—'अयमप्रमत्तगीतः' इत्यत आह—**श्रुतिरनुग्राहिकेति** ।

**( तत्त्वालोकः )** भाष्ये—एतन्निरसितुमाह—**प्रमत्तेति** । तत्रभवतः पूज्यबुद्धस्य एष "यदुदुम्बरेति" श्लोकः प्रमत्तगीत इति योजना । ननु "यस्तु प्रयुङ्क्ते" इत्यस्यैव "यदुदुम्बरे"त्यस्यापि कथन्न प्रामाण्यमित्यत आह—**यस्त्विति** ।

प्रदीपे—**अस्य**—"यस्तु प्रयुङ्क्ते" इत्यस्य । **इतीति**—अत्र साधुशब्देष्वपि अधिकसूत्रसिद्धानां प्रयोगे फलविशेषबोधिकाः "नाकमिष्टसुखं यान्ति सुयुक्तैर्वडवारथैः । अथ पत्काषिणो यान्ति येऽचीकमतभाषिणः ॥ इत्यादयः स्मृतयोऽपि बोध्याः ।

उद्द्योते—**कर्त्तरि**—प्रमाद्यतीति प्रमत्त इति व्युत्पत्तौ । **साकांक्षत्वादिति**—साकांक्षत्वात् "सापेक्षमसमर्थं"मिति न्यायेनासामर्थ्यादित्याशयः । **क्रान्त इति**—प्रमत्तशब्द इति शेषः । **विप्रतिपत्तीति**—विरुद्धा प्रतिपत्तिः ( मतिः ) विप्रतिपत्तिरिति व्युत्पत्तिः । ननु कोऽयं तत्रभवान्? यदि भगवान्, तर्हि कथन्तत्र विप्रतिपत्तिः । यदि तदन्यः, तर्हि कथन्तत्र पूज्यतादोषसम्भवादित्यत आह—**तत्त्वमिति** । श्रुतिविषयकविप्रतिपत्तित्वमित्यर्थः । आरोपकारणमाह—**दैत्येति** । ननु वेदनिन्दाद्वारा अधर्मप्रचारकस्य बुद्धस्य कथमीश्वरता, भगवतो हि "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" ॥ इत्यादिगीतादिना धर्ममात्रसंस्थापकत्वादिति चेन्न, अधिकारिणां कर्मप्रवर्त्तनस्येवानधिकारिणां कर्मनिवर्त्तनस्यापि धर्मसंस्थापनान्तर्गततया तस्मिन्समये वैदिककर्मसु प्रवर्त्तमानानधिकारिणो वेदनिन्दाद्वारा तेभ्यो निवर्त्त्य बुद्धेन धर्मसंस्थापनस्यैव कृतत्वादित्याशयेनाह—**भगवत इति** । "सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः । अचिन्त्यशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य ॥" इत्यादिप्रतिपादितषड्विधैश्वर्यवत इत्यर्थः । **ईश्वरस्य**—नियामकस्य । **तथा**—वेदविरुद्धा । प्रमत्तपदस्य भावक्तान्ततताऽभिप्रायेणाह—**अप्रमादेनेति** । तत्रभवत इत्यस्याप्रमत्तगीत इत्यत्रासम्बन्धसूचनायाह—**यस्य कस्यापीति** । **लिङ्गमिति**—तदित्यत्र विधेयप्रमाणलिङ्गतया क्लीबलिङ्गमित्यर्थः । **अयम्**—"**यस्तु** प्रयुङ्क्ते" इति श्लोकः ।

**( भाष्यम् )**

**अविद्वांसः—**

**"अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः ।**
**कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेत् ॥"**
**अभिवादे स्त्रीवन्मा भूमेत्यध्येयं व्याकरणम् ॥**
**अविद्वांसः ॥**

**( प्रदीपः )**-**स्त्रीष्विवेति** । प्रत्यभिवादे हि गुरुणा प्लुतः कार्यः । यस्तु प्लुतं कर्तुं न जानाति स स्त्रीवद्वक्तव्योऽयमहमिति, न 'अभिवादये देवदत्तोऽहम्' इत्यादिना संस्कृतवाक्येनेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये **(अविद्वांस इति)** । अत्र योग्यत्वाद्व्याकरणं कर्मबोध्यम् ॥ **प्रत्यभिवादे** अभिवादानन्तरप्रयोज्ये वचने **नाम्नोऽ**भिवादकनाम्नष्टेः प्लुतिं कर्तुं **ये** न जानन्ति **तेषु कामं** निःशङ्कं **विप्रोष्य** प्रवासादेत्य । यद्वा कामं विध्यनुसारमन्तरेवेत्यर्थः ॥ अयमहमित्यनुकरणस्यानितिपरत्वेऽपि कृञ्योगाभावाद्गतित्वाभावेन वदेदित्यतिङन्तत्वेन च **समासाभाव** इत्याहुः ॥ अत्र कश्चिद् 'अयमहमिति वदेत् । **अनुकरणं चानितिपरमिति** गतित्वात्समासः' इति पाठो दृश्यते सोऽपपाठः॥

भाष्ये—**स्त्रीवदिति** । तद्वत्करणेन शास्त्राज्ञानिबन्धनतापमानप्रयुक्तदुःखभाजो मा भूमेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**कामं**—यथेष्टम् । **तेषु**—अवैयाकरणेषु । **तुनोक्तवैलक्षण्यं** सूच्यते । **अयमिति**—नामगोत्रादिरहितम् । 'अयमहमभिवादये" इति वदन् प्रणामाभिनयेन विहिताञ्जलिपुटस्य हृदयदेशानयनादभिवादनभ्रमोत्पादनेनावैयाकरणान् प्रीणयेत् । अथवा नमामीत्यादिरहितम् "अयमहं समागतस्तव दर्शनाये"त्येव कथयन्नुक्तरीत्या तान् प्रसादयेत्, न तु "अभिवादये शाण्डिल्यगोत्रो देवचन्द्रशर्माऽहंभोः" इति वदन् तेषां पादौ गृह्णीयादित्यर्थः । **अध्येयमिति**—व्याकरणाध्ययनेन प्लुतज्ञाने सति अभिवादानन्तरप्रयोज्याशीर्वादवाक्योपान्ताभिवादकनामटेः प्लुतकरणात् स्त्रीणामिवाभिवाद्यता न भवतीति स्त्रीसाम्याभावफलाय व्याकरणमध्येयम्, अन्यथा स्त्रीसाम्यं दुर्वारमेवेति भावः ।

प्रदीपे—यथाविधि अभिवादनप्रत्यभिवादनयोः कृतयोः अभिवाद्याभिवादकौ पुण्यं प्राप्नुतो नान्यथेति हेतोः विघ्नभिज्ञाः नाभिवाद्या इत्याशयेनाह—**प्रत्यभिवादे इति** । **गुरुणा**—प्रणम्येन । "आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने । अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥' इति मनुवचनानुसारेणाह—**प्लुतः कार्य इति** । **देवदत्तोऽहमिति**—ननु "अभिवादात्परं विप्रो ज्यायांसमभिवादयन् । असौनामाहमस्मीति स्वं नाम परिकीर्त्तयेत् ॥" इति स्मृत्या नामोच्चारणस्य तत्र विहिततया, "आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः ॥" इति स्मृत्या नामोच्चारणस्य निषिद्धतया च षोडशिग्रहणाग्रहणे इव पाक्षिकतया नामग्रहणाग्रहणे स्यातामिति चेन्न, "निर्दिशेद्यजमानः स्वं नाम सांव्यवहारिकम् । नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि ॥" इत्याश्वलायनश्रौतकारिकोक्त्या, "अमुष्यासाविति पतिनाम गृह्णीयादात्मनश्चे"त्यादिगृह्यवाक्यालोचनेन "जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि" इति वेदवाक्येन च निषेधस्मृतेः विहितातिरिक्तस्थलविषयताकल्पनात् ॥ **संस्कृतेति**—यथाविधिप्रयुक्तेत्यर्थः ।

उद्द्योते—यथाश्रुतानुपपत्त्या टेरित्यादिशेषं पूरयन् व्याख्यातुमाह—**वचने इति** । आशीर्वादवाक्ये इत्यर्थः । तथा "प्रयुक्तस्ये"ति शेषः । फलितार्थमाह—**निःशङ्कमिति** । **आहुरिति**—सिद्धान्तविद इति शेषः । **अत्र**—कैयटे ( वाक्येनेत्यर्थ इत्यतोऽग्रे ) । उक्तहेतुद्वयेन समासासम्भवादाह—**सोऽपपाठ इति** । तेन समासाभावादेव "अत्र गतिसमासेऽपि अस्य वामीयमित्यादाविवानुकरणत्वाद् विभक्तेर्न लुगि"ति **केषा**ञ्चिदुक्तिरप्यपास्ता । **तद्वत्करणेन**—स्त्रीवदिति कथनेन । नच त्रिमात्रः प्लुत इत्यादि लोकप्रसिद्धयैव प्लुतज्ञानसम्भवान्नेदं व्याकरणाध्ययनप्रवर्त्तकमिति वाच्यम्, तादृशलोकप्रसिद्धेरपि व्याकरणशास्त्रमूलकत्वात् ॥

**( भाष्यम् )**

**विभक्तिं कुर्वन्ति—**

**याज्ञिकाः पठन्ति—"प्रयाजाः सविभक्तिकाः कार्याः" इति । नचान्तरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुम् ॥ विभक्तिं कुर्वन्ति ॥**

**( प्रदीपः )** **प्रयाजा इति** । प्रयाजमन्त्रा ऊह्यमानाग्निशब्दप्रकृतिकविभक्तियुक्ता इत्यर्थः । यथा **समिधः समिधोऽग्न आज्यस्य व्यन्तु अग्नेऽग्न" इति** ।

**( उद्द्योतः )** ननु प्रकृतौ प्रयाजमन्त्राः सविभक्तिका एव पठ्यन्ते तत्किमनेन वचनेनेत्यत आह—**प्रयाजेति** । ऊह्यमाना याऽग्नि-

शब्दप्रकृतिकविभक्तिरुक्ता इत्यर्थः ॥ नन्वग्निशब्दप्रकृतिकेत्यसङ्गतम्। अपूर्वविभक्तिमात्रविधाने न **केवलः प्रत्यय** इति निषेधात् यत्किञ्चित्प्रातिपदिकप्रकृतिकाः सर्वा विभक्तयः प्रयोक्तव्या इति प्राप्नोतीति चेन्न। **त्वमग्ने प्रयाजानुयाजानां पुरस्ताच्च पश्चा**दिति मन्त्रवर्णेनाग्निशब्दप्रकृतिका एव ता इत्याशयात्। तत्राग्नेर्देवताया एकत्वादेकवचनमेव। विभक्तयश्च प्रथमाद्वितीयातृतीयाषष्ठीसप्तम्य एवेति श्रौतसंप्रदायः ॥

**( तत्त्वालोकः )** भाष्ये-**कुर्वन्तीति**-विभक्त्यन्तं कुर्युरित्यर्थः। लिङर्थे लेड्विधानात्। कुत्रेति जिज्ञासायामाह-**याज्ञिका इति।** किमागतमेतावतेत्यत आह- **नचेति। च**-यतः। **व्याकरणम्**-व्याकरणाध्ययनम्। **कर्त्तुमिति**-अतोऽध्येयं व्याकरणमिति शेषः।

प्रदीपे-यागस्य सविभक्तिकत्वासम्भवेन प्रयाजपदस्य मन्त्रपरत्वादाह-**प्रयाजमन्त्रा इति।** दिग्दर्शनायाश्वलायनाद्युक्तं प्रयाजमन्त्रप्रयोगस्वरूपमाह-**यथा समिध इति।**

उद्द्योते-आधानोत्तरं यजमानस्य विपद्ग्रस्तत्वे नैमित्तिकत्वेन विहितायां पुनराधेयेष्टौ समाम्नातं "प्रयाजाः सविभक्तिका" इति अभिप्रेत्याह-**प्रयाजेतीति।** प्रथमदोषमाह-**नन्वग्नीति। अपूर्वेति**-यत इत्यादिः। द्वितीयदोषं बोधयन्नाह-**सर्वा इति।** प्रथमं समाधत्ते-**त्वमग्ने इति।** प्रयाजानां पुरस्तादनुयाजानां पश्चादिति क्रमेणान्वयः। **मन्त्रवर्णेनेति।** केचित्तु निरुक्ते देवताकाण्डे-अथ "किं देवताः प्रयाजानुयाजा" इति प्रश्ने "आग्नेया इति तु स्थितिः" इत्युपसंहारेणेति वदन्ति। **ताः**-प्रयाजानुयाजाः। द्वितीयं समाधातुमाह-**तत्रेति।** सकलविभक्तीनामपि मध्ये इत्यर्थः। अथ "अग्नेऽग्नेऽग्नावग्नेऽग्निनाऽग्नेऽग्निमग्ने" इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्ददाति इत्यापस्तम्बोक्त्या अग्निशब्दप्रकृतिकसम्बुद्धिसप्तमीतृतीयाद्वितीयैकवचनानि आदिक्रमेण याज्यातः पूर्वमग्निशब्दात्पूर्वं वा प्रयोज्यानीति निर्णयः। अथवा "द्व्यक्षराः सन्तो द्वित्वेनावृत्त्या चतुरक्षरा भवन्ती"ति वचनाद् यद्विभक्त्यन्तानां द्वित्वे कृते चतुरक्षरता, तद्विभक्त्यन्तानामेव प्रयोगस्य विहिततया सम्बुद्धितृतीयाचतुर्थ्यन्तानां कृतेऽपि द्वित्वे कृते चतुरक्षरत्वाभावात् "नशब्दजामि पठेत्। शब्दजामि हि तद्भवति यत्पञ्चम्यन्तम्" इति वचनेन पञ्चम्या निषेधाच्च प्रथमाद्वितीयाषष्ठीसप्तम्येकवचनान्तानामेव प्रयोगो विधेय इति सिद्धान्तः। तदेतन्मतद्वयमभिप्रेत्याह-**विभक्तयश्चेति।**

**( भाष्यम् )**

**यो वा इमाम्—**

**"यो वा इमां पदशः स्वरशोऽक्षरशश्च वाचं विदधाति स आर्त्विजीनो भवति" आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणम् ॥ यो वा इमाम् ॥**

**(प्रदीपः) पदश इति।** पदं पदमिति **संख्यैकवचनाच्च वीप्सायामिति** शस् ॥ **स्वरश इति।** स्वर उदात्तादिः ॥ **अक्षरश इति।** अक्षरं व्यञ्जनसहितोऽच् ॥ **आर्त्विजीन इति। ऋत्विज**मर्हत्यार्त्विजीनो यजमानः। ऋत्विक्कर्मार्हतीति याजकोऽप्यार्त्विजीनः। **यज्ञर्त्विग्भ्यां घखञाविति** सूत्रेण **यज्ञर्त्विग्भ्यां तत्कर्मार्हतीति चोपसंख्यानमिति** वार्तिकेन च खञ् ॥ **विद्वान्यजेत विद्वान्याजये**दिति द्वयोरपि विदुषोरधिकारात् ॥

**( उद्द्योतः ) व्यञ्जनसहित** इति। यथा **"ये यजामहे"** इति **पञ्चाक्षर**मिति **वर्णं बाहुः पूर्वसूत्र** इति भाष्यात् वर्णमात्रमित्यन्ते ॥ सकृत्प्रयुक्तार्त्विजीनशब्दस्योभयपरत्वे युक्तिमाह—**विद्वानिति।** वेदार्थज्ञ इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**यो वा इति**—यो वै निश्चयेनेमां सन्निहितां प्रत्यक्षां वाचं श्रुतिरूपां वाणीं पदशः पदं पदं स्वरशः स्वरं स्वरम् अक्षरशः अक्षरम् अक्षरम् विदधाति संस्करोति स आर्त्विजीनो यजमानो याजको वा भवतीत्यर्थः। तत्र यजमानस्याप्रत्यक्षं स्वर्गादि फलम्भवति, याजकस्य तु प्रत्यक्षमेव धनलाभादि फलम्भवति। ननु प्रकृते किमागतमेतावतेत्यत आह-**आर्त्विजीना इति।** यजनयाजनयोः विद्वन्मात्रस्याधिकाराद्वैदुष्यस्य सिद्धये व्याकरणमध्येयमिति भावः।

प्रदीपे-**शसिति**-एवं स्वरशोऽक्षरश इत्यनयोरपि बोध्यम्। अक्षरशब्दस्य पृथगुक्तिसामर्थ्यान्नात्र स्वरपदेनाचां ग्रहणमिति सूचनायाह—**उदात्तेति।** अक्षरग्रहणव्यावृत्तये आह-**व्यञ्जनेति।** व्यञ्जनस्याप्रधानत्वादच्सहितं व्यञ्जनमिति न प्रत्यपादि। **वार्त्तिकेन**-वार्त्तिकेनैव। **इति**-इति श्रुतेः। **द्वयोः**-यजनयाजनयोः।

उद्द्योते-व्यञ्जनसहिताचोऽक्षरपदग्राह्यतायां मानमाह-**यथेति। भाष्यात्**—उत्तराह्निकस्थात्। **वर्णमात्रम्**- व्यञ्जनसहितोऽच्, वा अजेव।

**( भाष्यम् )**

**चत्वारि—**

**"चत्वारि शृङ्गा त्रयो अस्य पादा**
**द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति**
**महो देवो मर्त्या आविवेश" इति ॥**

**चत्वारि शृङ्गाणि। चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ त्रयो अस्य पादाः। त्रयः काला भूतभविष्यद्वर्तमानाः ॥ द्वे शीर्षे। द्वौ शब्दात्मानौ नित्यः कार्यश्च ॥ सप्त हस्तासो अस्य। सप्त विभक्तयः। त्रिधा बद्धः। त्रिषु स्थानेषु बद्ध उरसि कण्ठे शिरसीति ॥ वृषभो वर्षणात् ॥ रोरवीति शब्दं करोति ॥ कुत एतद् ?।**

**रौतिः शब्दकर्मा ॥ महोदेवो मर्त्यां आविवेशेति। महान्देवः शब्दः ॥ मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम् ॥**

**( प्रदीपः ) चत्वारीति।** शब्दस्य वृषभत्वेन निरूपणम् ॥ **त्रयः काला इति।** लडादिविषयाः ॥ **नित्यः कार्यश्चेति।** व्यङ्ग्यव्यञ्जकभेदेन। **सप्त विभक्तय इति।** सुप इत्यर्थः ॥ केचित्तु तिङामपरिग्रहप्रसङ्गात्सह शेषेण सप्त कारकाणि विभक्तिशब्दाभिधेयानीति व्याचक्षते ॥ **वर्षणादिति।** कामानां ज्ञानपूर्वकानुष्ठानफलत्वात् ॥ **महतेति।** परेणब्रह्मणेत्यर्थः ॥

**( उद्द्योतः ) चत्वारीति ॥** ऋङ्मन्त्रः ॥ **शब्दस्येति।** शब्दशास्त्रप्रतिपाद्यस्येत्यर्थः। वृषभाकारः शब्दशास्त्रप्रतिपाद्यः शब्दो रोरवीति महान् देवोऽन्तर्यामिरूपः शब्दो मर्त्यानाविवेश स्वाभेदमाविष्कृतवानिति मन्त्रतात्पर्यम्। महतो देवस्य शब्दब्रह्मणो व्याकरणज्ञाप्यतया व्याकरणज्ञस्तदाविष्ट इव भवतीति यावत् ॥ भाष्ये **पदजातानि** परापश्यन्तीमध्यमावैखरीरूपाणि। अत एवाग्रे निपाताश्चेति चकारः संगच्छते ॥ **नामाख्यातेति।** नामशब्देन सुबन्तं, नमत्याख्यातार्थं प्रति विशेषणीभवतीति व्युत्पत्तेः। आख्यातं तिङन्तम्। उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन ॥ **व्यङ्ग्य** आन्तरः।

**व्यञ्जको** वैखरीरूपः ॥ तिङ्विभक्तीनां षट्त्वादाह—**सुप इति ॥ सह शेषेणेति ।** शेषः षष्ठ्यर्थः । तत्सहितकारकाभिधायकत्वेन सुप्तिङोरुभयोरपि संग्रह इति भावः ॥ भाष्ये—**उरसीत्यादि ।**

**'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् ।**
**औरस्यं तं विजानीयात् ।'' स्युर्मूर्धन्या ऋटुरषाः'**

इत्युक्तेर्मूर्धैव शिरः ॥ कण्ठ इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते ॥ ननु वर्षति मूत्रेण भूमिं सिञ्चतीति वृषभ इत्युच्यते तत्कथं शब्द एवमित्यत आह—**कामानामिति ।** मेघ उदकमिवोक्तचतुःश्रृङ्गत्वादिगुणवैशिष्ट्येन ज्ञानपूर्वकं प्रयोगेण कामानां दाता इत्यर्थः । द्विश्रृङ्गद्विपादद्विकरकण्ठमात्रबद्धलौकिकवृषभादस्य व्यतिरेकः ॥ किं रोरवीति, तत्राह—भाष्ये **महान् देव** इत्यादि । महान् परब्रह्मस्वरूपो देवोऽन्तर्यामिरूपः शब्दो मर्त्येष्वाविष्ट इत्यर्थः ॥ तदावेशफलमाह—**महता देवेनेति । साम्यं** सायुज्यम् । तदुक्तं हरिणा—

**अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् ।**
**प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते ॥**

आह च—**चत्वारि श्रृङ्गा त्रयो अस्य पादा** इत्यादि ऋग्मन्त्रः । **इह** 'द्वौ शब्दात्मानौ कार्यो नित्यश्च । तत्रान्त्यः सर्वेश्वरः सर्वशक्तिर्महान् शब्दवृषभस्तस्मिन् खलु वाग्योगवित् शास्त्रजशब्दज्ञानपूर्वकं प्रयोगेण क्षीणपापः पुरुषो विच्छिद्याहंकारग्रन्थीन् अत्यन्तं संसृज्यते इति तदर्थं तद्व्याख्यातारः ॥

**( तत्त्वालोकः )** भाष्ये—व्याकरणाध्ययनस्य निःश्रेयससाधनत्वमाह—**चत्वारीति । श्रृङ्गेति**—अस्य श्रृङ्गाणीत्यत्र "शेश्छन्दसि बहुलमि"त्यनेन शिलोपे नलोपे च कृते सिद्धिः । अथवा "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः" इत्यनेन शेर्डादेशे निष्पत्तिः । "प्रकृत्यान्तःपादमव्यपरे" इत्यनेन प्रकृतिभावे "एङः पदान्तादती"त्यनेन पूर्वरूपासंभवादाह—**त्रयो अस्येति ।** "उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियामि"ति कोशादोऽकारान्तक्लीबलिङ्गशीर्षशब्दस्तस्य रूपमाह—**शीर्षे इति ।** हस्ता इत्यत्र "आज्जसेरसुगि"त्यनेनासुकि देवास इतिवद्रूपमाह—**हस्तास इति ।** पूजार्थकमहधातोः कर्मणि ( मह्यते इतीति व्युत्पत्तौ ) "बहुलं कविधानमि"त्यनेन कप्रत्यये सति रूपमाह—**मह इति ।** महानित्यर्थः । शब्दे चतुःश्रृङ्गादिमद्वृषभरूपताया बाधादयोग्यतया बोधो न स्यादतो गौण्या वृत्त्या सम्भविनमर्थं वक्तुमाह—**चत्वारीति ।** अत एव "शब्दस्य वृषभत्वेन निरूपणमि"ति कैयटः । **श्रृङ्गाणि ।** श्रृङ्गस्थानीयानि । एवमग्रेऽपि । त्रिभिः प्रकारैर्बद्ध इति वाच्यार्थाशयेनाह—**त्रिधेति । बद्धः**—व्यञ्जकध्वन्यनुत्पादेऽनभिव्यक्तरूपेण स्थितः । वृषधातोरौणादिकेऽभच्चि तस्य किन्त्वे च निष्पन्नं रूपमाह—**वृषभ इति ।** सकलफलवर्षक इत्यर्थः । **वर्षणात्**—ज्ञानपूर्वकप्रयोगेण कामानां वर्षणात् । **कुत एतदिति**—कस्माद् रोरवीतीत्यस्य शब्दं करोतीत्यर्थ इत्यर्थः । अस्योत्तरमाह—**रौतिरीति ।** रुधातुरित्यर्थः । किं रोरवीतीत्यत आह—**महोदेवो इति ।** तदर्थमाह—**महानिति । तान्**—मनुष्यान् ( विदुषः ) । **देवेन**—शब्दब्रह्मणा । **अध्येयमिति** "ब्रह्मविद् ब्रह्मैव भवती"ति श्रुत्या ब्रह्मत्वाविर्भावकतायाः शब्दब्रह्मज्ञाने सत्त्वात्तदर्थं व्याकरणमध्येयमिति भावः ।

**प्रदीपे**—ननु अमूर्त्तकालस्य कथं पादरूपावयवत्वेत्यत आह—**लडादीति ।** तथा च लडादीनां दशत्वात् त्रित्वासम्भवेऽपि लडादिद्योत्यप्रसिद्धकालानां त्रित्वात् तादृशकालत्रये विहिततया दशसंख्याकानपि लडादीन् त्रेधा विभज्य भूतादिकालत्रयद्योतकास्त्रिविधा लडादयः पादा इत्यर्थः । **व्यञ्जयेति ।** केचित्तु शब्दात्मानावित्यत्रात्मशब्दस्य प्रधानवाचितया स्वरूपतः प्रधानभूतौ शब्दौ स्फोटनादौ ताविति वदन्ति । अपरे तु वाच्यतया प्रधानभूतावर्थौ जातिव्यक्ती शब्दस्यात्मानाविति कथयन्ति । **सुपः**—प्रथमादिस्वौजसित्यादित्रिकरूपाः । सुप्तिङोः विभक्तित्वेऽपि सुपामेव त्रिकाणां सप्तत्वात् सप्तपदसहकृतविभक्तिपदेन तेषामेव बोध इत्याशयेनाह—**तिङामिति ।** त्रयः काला इत्यनेन तिङां संग्रहात् केचिदित्यनेनात्रारुचिः दर्शिता । **कामानां** स्वर्गापवर्गादीनाम् । **अनुष्ठानेति**—साधुशब्दप्रयोगेत्यर्थः ।

उद्द्योते-**ऋगिति**—ऋग्वेदेत्यर्थः । प्रसिद्धशब्दस्य तादृशवृषभत्वासम्भवादाह—**शब्दशास्त्रेति ।** शब्दब्रह्मण इति भावः । **शब्दः**—शब्दब्रह्मरूपः । **स्वाभेदमिति**—तेषामिति शेषः । ननु प्रकृते किमायातमेतावतेत्यत आह—**महत इति । ज्ञाप्यतया**—ज्ञानजन्यज्ञानविषयतया । प्रारब्धक्षयं विना तदाविष्टत्वासंभवादाह—**इवेति ।** पदजातपदस्य नामादिमात्रपरता दण्डिकृष्णाद्युक्ता नोचितेति सूचनाय तस्यार्थमाह—**परेति ।** तत्र मानमाह—**अत एवेति ।** पदजातपदेन परापश्यन्त्यादीनां ग्रहणादेवेत्यर्थः । **चः** परापश्यन्त्यादिसमुच्चायकः । आख्यातार्थंप्रति विशेषणतायाः स्वार्थद्वारा सुबन्तस्यैव सत्त्वादाह—**आख्यातार्थमिति । आख्यातम्**—आख्यातशब्दप्रतिपाद्यम् । निपातपदेनैवोपसर्गस्यापि बोधसम्भवादाह—**उपसर्गेति । न्यायेनेति**—अत्र ब्राह्मणवशिष्ठन्यायकथनमुचितम् "गोशब्दः स्त्रीगवीणामेव वाचकः प्रायेणे"त्येकशेषप्रकरणोक्त्या गोबलीवर्दन्यायोपादानायायुक्तत्वात् । एवञ्चोपसर्गपदेन धात्वर्थद्योतकतामात्रवतामुपसर्गाणां तथा निपातपदेन धात्वर्थद्योतकत्ववाचकत्वोभयवतामुपसर्गातिरिक्तनिपातानां ग्रहणमिति भेदः । **आन्तरः**—नित्यो मध्यमावस्थः । **वैखरीरूपः**—कार्यः श्रोत्रग्राह्यः । **तिङ्विभक्तीनामिति**—त्रिकाणामिति शेषः । **षष्ठ्यर्थः**—स्वस्वामिभावादिसम्बन्धरूपः । ननूरसः कण्ठादिबहिर्भूततया स्थानत्वं न प्रसिद्धमित्यत आह—**हकारमिति । पञ्चमैः**—ङकारादिभिः । **अन्तःस्थाभिः**—यवरलैः । **मूर्धैवेति**—एवेन नासिकादिव्यावृत्तिः । तेन "शिरःपदेन नासिकारूपं स्थानं ग्राह्यमि"ति केषाञ्चित्कथनस्यायुक्तता सूचिता । न्यूनतानिराकरणायाह—**कण्ठादीति । उच्यते इति**—लोकैरिति शेषः । **एवम्**—वृषभ इत्युच्यते । **इवेति**—अयं शब्दरूपो वृषभः सकलान् कामान् वर्षतीति शेषः । अत्र हेतुतया "कामानामि"ति कैयटार्थमाह—**उक्तेति । प्रयोगेणेति**—साधुशब्दस्येत्यादिः । शब्दरूपवृषभस्य लौकिकवृषभाद् विलक्षणफलदातृत्वेन भेद इव विलक्षणाङ्गत्वेनापि भेद इत्याह—**द्विश्रृङ्गेति ।** अग्रिमपादयोः करत्वविवक्षया द्विपादेत्युक्तिः । **अस्य**—शब्दरूपवृषभस्य । **व्यतिरेकः**—भेदः । **तत्राह**—तत्रार्थमाह । **फलमाह**—फलं सूचयन्नेतावत्कथनस्य फलितमाह । **सायुज्यम्**—ऐक्यम् । अत्र मानमाह—**तदुक्तमिति । आह**—तदर्थमाह । अस्य ऋङ्मन्त्र इत्यनेनान्वयः । **इह**—ऋङ्मन्त्रे । प्रतिपाद्याविति शेषः । **कार्यः**—ककारादिवर्णरूपः । **नित्यः**—स्फोटरूपः । **तत्र**—तयोर्मध्ये । **तस्मिन्निति**—अस्य संसृज्यते इत्यनेन सम्बन्धः । **वाग्योगवित्**—तादृशवैयाकरणः । **तदिति**—हरिकारिकेत्यर्थः । ननु कथं शब्दस्य शब्दकर्त्तृतेति चेन्न, शब्दः स्फोटरूपः शब्दं व्यञ्जकं करोति अपेक्षते इत्यर्थात्, परापश्यन्त्यादिषु पूर्वस्यां परकर्त्तृत्वसत्त्वाच्च तदुपपत्तेः । 'चत्वारि श्रृङ्गे'ति मन्त्रं केचित्प्रकारान्तरेण व्याचक्षते—तथाहि, अस्य ब्रह्मणः, चत्वारि ऋग्यजुःसामाथर्ववेदाख्यानि, श्रृङ्गा श्रृङ्गस्थानीयानि ( एवमग्रे ) त्रयः कर्मोपासनाज्ञानाख्याः पादाः, द्वे जीवेशरूपे शीर्षे सप्त भूर्भुवःस्वर्महःजनतपःसत्याख्याः अतलवितलसुतलतलातलरसातलपातालमहातलाख्याश्च हस्तासः करद्वयस्थानीयाः, त्रिधा रजःसत्त्वतमोगुणैः बद्धः, वृषभः वृषभस्थः, शिवः कल्याणमयः, रोरवीति कथयति, शेषं प्राग्वत् ।

( भाष्यम् )

**अपर आह—**

**"चत्वारि वाक्परिमिता पदानि**
**तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति**
**तुरीयं वाचो मनुष्या वदन्ति ॥"**

'चत्वारि वाक्परिमिता पदानि ।' चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च ॥ 'तानि विदुर्ब्राह्मणा ये मनीषिणः ।' मनस ईषिणो मनीषिणः । 'गुहा त्रीणि निहिता नेङ्गयन्ति ।' गुहायां त्रीणि निहितानि नेङ्गयन्ति न चेष्टन्ते । न निमिषन्तीत्यर्थः ॥ 'तुरीयं वाचो मनुष्या वदन्ति ।' तुरीयं वा एतद्वाचो यन्मनुष्येषु वर्तते चतुर्थमित्यर्थः ॥ चत्वारि ॥

**( प्रदीपः ) चत्वारी**त्यनेनैकदेशेन सद्दशेन वाक्यान्तरमपि सूच्यत इत्याह—**अपर आहेति ।** परिमितानीति प्राप्ते **शेश्छन्दसि बहुलमिति** शेर्लोपे परिमितेति भवति । परिमितानि परिच्छिन्नान्येतावन्त्येवेत्यर्थः ॥ मनीषिशब्दः **पृषोदरादि**त्वात्साधुः । कथं मनीषिण एव विदन्तीत्याह—**गुहेति ।** अज्ञानमेव गुहा तस्यामित्यर्थः । **सुपां सुलुगिति ।** सप्तम्या लुक् । व्याकरणप्रदीपेन तु तानि प्रकाशन्ते । तत्र चतुर्णां पदजातानामेकैकस्य चतुर्थभागं मनुष्या अवैयाकरणा वदन्ति **नेङ्गयन्ती**त्यस्यैव व्याख्यानं न चेष्टन्ते, न निमिषन्तीति ॥

**( उद्द्योतः ) एतावन्त्येवेति । वाक्परिमितानीति** षष्ठीतत्पुरुषः ॥ **पदजातानि ।** परापश्यन्तीमध्यमावैखर्यः । नामादीनि च । नामादिमध्ये च एकैकं चतुष्पादम् ॥ भाष्ये—**मनस ईषिणः ।** चित्तशुद्धिक्रमेण वशीकर्तारो विषयान्तरेभ्यो व्यावृत्त्या हिंसका वा । ते च वैयाकरणाः । अन्येषां तदज्ञाने हेतुमाह—**गुहेति ।** एकैकस्य नामादिरूपस्य चतुर्थं भागम् । एकैकस्य चतुरंशत्वात् ॥ परादीनां वा त्रयोंशा मध्यमान्ताः । गुहा अज्ञानं हृदयादिरूपा च । वैयाकरणस्तु शास्त्रबलेन तद्बललब्धयोगेन च गुहान्धकारं विदार्य सर्वं जानातीति भावः ॥ **न निमिषन्तीति ।** ज्ञानसामान्यविषयत्वाभाव उच्यते ॥ भाष्ये **यन्मनुष्येषु वर्तत इति ।** ज्ञानविषयतया तद्वाचश्चतुर्थमित्यन्वयः । तस्मात्सकलपदज्ञानाय मनीषित्वाय वाऽध्येयं व्याकरणमिति शेषः ।

हरिरप्याह-**वैखर्या मध्यमायाश्च पश्यन्त्याश्चैतदद्भुतम् ।**
**अनेकतीर्थभेदायास्त्रय्या वाचः परं पदम् ॥**

तत्र श्रोत्रविषया वैखरी । **मध्यमा** हृदयदेशस्था पदप्रत्यक्षानुपपत्त्या व्यवहारकारणम् । **पश्यन्ती** तु लोकव्यवहारातीता । योगिनां तु तत्रापि प्रकृतिप्रत्ययविभागावगतिरस्ति । परायां तु नेति त्रय्या इत्युक्तम्—

**स्वरूपज्योतिरेवान्तः परा वागनपायिनी ।**
**तस्यां दृष्टस्वरूपायामधिकारो निवर्तते ॥**

इत्युक्तेः । **अनेकतीर्थभेदाया** नामाख्यातादिवीणावेणुमृदङ्गशब्दादिरूपानेकभेदायाः । आप खल्वपि **चत्वारि वाक्परिमिता पदानीति** ऋङ्मन्त्र इति तद्व्याख्यातारः ॥

**( तत्त्वालोकः )** भाष्ये—प्रतिपाद्यभेदात् प्रतिपादके भेदेन व्यवहार इत्यभिप्रेत्याह-**अपर आहेति ।** अथवा व्याख्यातमन्त्रे केनचिच्छात्रेण यज्ञाद्यग्निविषयत्वे कथिते शिष्यान्तरेणोक्तमसन्दिग्धवाग्विषयमन्त्रं व्याख्यातुमाह-**अपर आहेति वाग्परिमितेति-**वाचः शब्दस्य परिमितानि चत्वारि ( एव ) परादीनि नामादीनि च पदानि सन्ति, तानि सर्वाणि विदन्ति त एव, ये ब्राह्मणाः मनीषिणश्चेत्यर्थः । **ब्राह्मणा इति-**ब्रह्म साङ्गोपाङ्गवेदं विदन्तीति ब्राह्मणाः । छान्दसत्वाद् "ब्राह्मोऽजातावि"ति टिलोपाभाव इति भावः । **पदजातानि-**पदसमूहानि । पदशब्दो नात्र सुप्तिङन्तपरः, किन्तु बोधकमात्रपर; । मनःशब्दस्य जातिवाचकतया "सुप्यजातौ णिनिस्ताच्छील्ये" इति सूत्रस्याप्राप्तेः मन ईषन्तीति मनीषिण इति न संभवति । किन्तु **मनस इति** कर्मणि षष्ठी, कर्त्तरि औणादिकेनिविधानेन ईषन्तीति ईषिण **इति** निष्पत्तेः । तथा च शकन्ध्वादित्वात्पररूपे मनीषिण इत्यस्य सिद्धिरित्याशयेनाह-**मनस ईषिण इति । निहितेति-**अस्य निहितानीति प्राप्ते "शेश्छन्दसि बहुलमि"ति शेर्लोपे निष्पत्तिः । तथा च यतो गुहायाम् अज्ञानान्धकारे त्रीणि परापश्यन्तीमध्यमाख्यानि, त्रिभिरंशैः परादिभिः युतानि नामाख्यातोपसर्गनिपाताख्यानि च पदानि निहितानि सन्ति, अतो व्याकरणप्रदीपमन्तरा तानि न निमिषन्ति प्रकाशन्ते इति भावः । नन्वेवं कथमवैयाकरणाः शब्देन व्यवहरन्तीत्यत आह-**तुरीयमिति ।** वाचः परादेस्तुरीयं तथा नामादेः प्रत्येकस्य चतुर्थभागं वैखरीरूपं मनुष्या अवैयाकरणाः वदन्तीत्यर्थः । **वै** इति निश्चये ।

प्रदीपे-**एकदेशेनेति-**प्रकृतमन्त्रयोरित्यादिः । तथा "इमानि च भूयः" इत्यादि भाष्योक्तप्रतीकसमुदायमध्योक्तेनेति शेषः । वाक्यान्तरसूचनकारणमाह-**सद्दशेनेति । परिच्छिन्नानि-**परिगणितानि । **एतावन्ति-**चत्वारि । मनीषिन्शब्दस्य शकन्ध्वादिगणान्तर्गतताकल्पनेपि "तच्च टेः" इत्यस्य भाष्येऽदर्शनात् सकारलोपार्थं पृषोदरादित्वस्यावश्यकल्पनीयतया सर्वथा तेनैव निर्वाहसम्भवे शकन्ध्वादिगणान्तर्गतता न कल्पनीया गौरवादित्याशयेनाह-**पृषोदरादित्वादिति । इत्याह-**इत्यतोऽन्येषां तदवेदने हेतुमाह । **अज्ञानमेव-**व्याकरणशास्त्राद्यज्ञानमपि । अत एव "हृदयादिरूपाचे"त्युद्द्योतोक्तिः संगच्छते । गुहायामिति प्राप्ते आह-**सुपामिति ।** मनीषिणां परादित्रयज्ञाने हेतुमाह—**व्याकरणेति । तानि—**परापश्यन्तीमध्यमाख्यानि । **तत्र-**तेषाम् । **चतुर्णां—**नामादीनाम् । **चतुर्थभागं—**वैखरीरूपम् । **व्याख्यानमिति—**स्फुटप्रतिपत्तये इति शेषः ।

उद्द्योते-**तत्पुरुष इति—**अनेन वागित्यस्य "सुपां सुलुगि"ति लुप्तषष्ठ्यन्तताकल्पनाया अयुक्तता सूचिता । पदजातपदस्य नामादिमात्रपरतां कथयतां कैयटादीनां न्यूनतानिवारणाय निपाताश्चेति चकारसमुच्चितानामपि पदजातपदार्थत्वमाह-**परेति ।** विशेषकथनाय भाष्योक्तं पदजातपदार्थमनुवदति-**नामेति ।** तुरीयमिति चरमपादानुरोधेनाह-**नामादिमध्ये** चेति । **चतुष्पादमिति-**परापश्यन्त्यादिभिरेवेत्यादिः । तथा च नामाख्यातोपसर्गनिपातानां मध्ये प्रत्येकं परापश्यन्तीमध्यमावैखरीभेदेन चतुर्विधमिति भावः । ईषिण इत्यस्यार्थमाह-**चित्तेति ।** धातूनामनेकार्थतया वशीकरणार्थतां भजत "ईष उञ्छे" इत्यस्य "ईश ऐश्वर्ये" इत्यस्य वा पृषोदरादित्वात्षान्ततामाश्रयतो रूपमीषिण इतीत्याशयेनाह-**वशीति ।** ईष गतिहिंसादर्शनेषु" इत्यस्य रूपन्तदित्यभिप्रायेणाह-**हिंसका इति ।** मनसो विषयान्तरव्यावृत्तिरेव हिंसा, न तु मुख्या, असम्भवादित्याशयः । **अन्येषाम्** अवैयाकरणानाम् । **तदिति-**परादित्रयेत्यर्थः । परादिपक्षे आह-**परेति । मध्यमान्ता इति-**गुहानिहिताः, अतस्तासां चतुर्थांशं वैखरीरूपम् अवैयाकरणा वदन्तीति शेषः । **हृदयादीति-**आदिना नाभिमूलाधारचक्रे संगृह्येते । परा वाङ् मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा ॥" इति स्मृतेः । व्याकरणेति

कैयटाशयमाह–**वैयाकरण इति ।** नामोपसर्गादिकल्पे आह–**शास्त्रेति।** व्याकरणशास्त्रेत्यर्थः। परापश्यन्त्यादिकल्पे आह–**तद्बलेति ।** शास्त्रबलेत्यर्थः। **गुहान्धकारम्**–अज्ञानान्धकारं, हृदयाद्यन्धकारञ्च। **सर्वं**–परादिचतुष्टयम्। धातूनामनेकार्थतामभिप्रेत्याह–**ज्ञानेति ।** अत एव "न निमिषन्ती"त्यस्य "न प्रकाशन्ते" इत्यर्थः सङ्गच्छते। आकाशवृत्तिशब्दस्य मनुष्यवृत्तित्वासम्भवेन यथाश्रुतानुपपतेराह–**ज्ञानेति ।** भाष्यकृतो न्यूनतां निराकरोति–**तस्मादिति ।** नामादिपक्षे आह–**सकलेति ।** परादिपक्षे आह–**मनीषित्वाथेति । वा**– च। **शेष इति**–चतुर्थमित्यर्थ इति भाष्यस्येत्यादिः। परादेः व्याकरणबोध्यत्वे मानमाह–**हरिरिति । अनेकेति**–अनेके तीर्थतः शास्त्रतो भेदा यस्या इत्यर्थः। त्रय्याः–परायाः। तथा च तस्या वाचः, एतद् व्याकरणम्, अद्भुतं (अन्यतो) विलक्षणं, परं श्रेष्ठं, पदं स्थानमस्तीत्यर्थः। तद्व्याख्यानमाह–**तत्रेति ।** तासां मध्ये इत्यर्थः। **श्रोत्रेति**–श्रोत्रं विषयः (ग्राहकं) यस्या इति व्युत्पत्तिः। मध्यमा वागेवास्यपर्यन्तमागच्छता वायुना कण्ठदेशमागत्य मूर्धानमाहत्य परावृत्य कण्ठताल्वाद्यभिघातेन स्थानविशेषेष्वभिव्यक्ता श्रोत्रग्राह्या सती **वैखरी**पदाभिधेया। पश्यन्ती वागेव हृदयपर्यन्तमागच्छता वायुना हृदयदेशमागत्याभिव्यक्ता अर्थशब्दविशेषोल्लेखिबुद्धिविषयीभूता सूक्ष्मा कथञ्चित् स्वश्रुतिगोचरा सती **मध्यमा**शब्दवाच्या। परा वागेव नाभिपर्यन्तमागच्छता वायुना तत्राभिव्यक्ता मनोमात्रग्राह्या सूक्ष्मतरा योगिनां समाधौ सविकल्पकज्ञानविषयीभूता सती **पश्यन्ती**पदवाच्या। मूलाधारचक्रे संस्कृतवायुचलनेनाभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निःस्पन्दं सूक्ष्मतमं योगिनां समाधौ निर्विकल्पकज्ञानविषयः **परा** वाग्॥ उक्तञ्च–वैखरी शब्दनिष्पत्तिः मध्यमा श्रुतिगोचरा। आन्तरार्था[1] च पश्यन्ती सूक्ष्मा[2] वागनपायिनी ॥' इति। **तत्रापि**–पश्यन्त्यामपि। परायां वाचि प्रकृतिप्रत्ययविभागज्ञानविषयत्वाभावे हेतुमाह–**स्वरूपेति अनपायिनी**–नित्या। **तस्यां**–परायाम्। **दृष्टस्वरूपायां**–साक्षात्कृतायाम्। **अधिकारः**–लौकिकाधिकारः। **आख्यातादीति**–आदिना उपसर्गनिपातयोः संग्रहः। **शब्दादीति**–आदिना भेरीशब्दापभ्रंशादिसंग्रहः। तदिति–हरिकारिकेत्यर्थः।

**( भाष्यम् )**

**उत त्वः—**

**"उत त्वः पश्यन्न ददर्श वाच-**
**मुत त्वः शृण्वन्न शृणोत्येनाम् ।**
**उतो त्वस्मै तन्वं विसस्रे**
**जायेव पत्य उशती सुवासाः"**

**'उत त्वः' अपि खल्वेकः पश्यन्नपि न पश्यति वाचम्। अपि खल्वेकः शृण्वन्नपि न शृणोत्येनामिति। अविद्वांसमाहार्धम् ॥ उतो त्वस्मै तन्वं विसस्रे तनुं विवृणुते ॥ जायेव पत्य उशती सुवासाः। तद्यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुते, एवं वाग् वाग्विदे स्वात्मानं विवृणुते ॥ वाङ्नो विवृणुयादात्मानमित्यध्येयं व्याकरणम् ॥ उत त्वः ॥**

**( प्रदीपः ) उत त्व इति ।** त्वशब्दोऽन्यवाची। उतशब्दोऽपिशब्दस्यार्थे। स च भिन्नक्रमः। प्रत्यक्षेण शब्दस्वरूपमुपलभमानोऽप्यर्थापरिज्ञानान्न पश्यतीत्यर्थः। **उतो इति ।** उत उ इति निपातसमाहारः॥ **अविद्वांसमाहार्धमिति ।** अविद्वल्लक्षणमर्थमर्धर्चं आहेत्यर्थः॥

**( उद्द्योतः ) उतत्व इति ।** उत शब्दोऽप्यर्थे॥ बहूनामपि समानपृष्ठोदरपाणिपादानामध्ययनमधीयानानामेकः कश्चित्पश्यन्नपि स्वभ्यस्ताध्ययनोऽपि तीक्ष्णबुद्धिरपि **सन्न** पश्यति अर्थानभिज्ञत्वात्। अर्थपरिज्ञानफला हि वागित्यभिप्रायः। **एवमेकः** शृण्वन्नपि **न** शृणोत्येनां वाचम्। य एव ह्यर्थं सम्यगवबुध्यते तेनैव **सा** सम्यक् श्रुता भवति ॥ एवमर्धेनाविद्वांसं निन्दित्वाऽर्धान्तरेण विद्वांसं स्तौति–**उतो त्वस्मै ।** अप्येकस्मै कस्मैचिद्वैयाकरणाय तन्वं शरीरं विसस्रे विवृणोति प्रकाशयति। सम्यक् ज्ञानं हि प्रकाशनमर्थस्य। अर्थो हि वाचः शरीरम्॥ अथोपमायुक्तयोत्तमया वाचा प्रसादेन तमेव स्तौति–यथा जाया विवृतसर्वाङ्गावयवाऽभूत्वोशती कामयमाना भर्त्रे प्रेम्णा दर्शयत्यात्मानम्। कस्मिन् काले? यदा सुवासा निर्णिक्तवासा नीरजस्का ऋतुकालेषु। तदा ह्यतितमां स्त्री पुरुषं प्रार्थयते। यथा तत्पुरुषस्तां यथावत्पश्यति शृणोति च तद्वचनार्थं नान्यदा घनपटप्रावृतशरीराम्। एवं स एवैनां वाचं पदशः प्रकृतिप्रत्ययविभागेन विवृतार्थमस्याः पश्यति शृणोति चेत्यर्थः। अयमर्थो निरुक्ततद्भाष्ययोः ( १ अ० १९ ख० ) स्पष्टः। भाष्ये—**वाग्विदे** वैयाकरणाय॥

**( तत्त्वालोकः )** भाष्ये - सरस्वतीप्रसादसाधनञ्च व्याकरणाध्ययनमित्याह–**उतत्व इति । अपि खल्विति** वाक्यालङ्कारे। **एकः**–(वैयाकरणेभ्यः) अन्यः। **ददर्श विसस्रे** इत्यनयोः, दृश सृधातुभ्यां "छन्दसि लुङ्लङ्लिटः" इति सूत्रेण वर्तमाने लिट् विहित इत्याशयेनाह–**पश्यतीति ।** वक्ष्यति च **विवृणुते** इति। **एनाम्**—वाचम्। **इतिः** श्लोकार्धार्थसमाप्तौ। अत उपसंहरति—**अविद्वांसमिति ।** अनेन विद्वांसमाहोत्तरार्धमिति सूचितम्। **अस्मै**–वैयाकरणाय। "अमि पूर्वः" इत्यत्र "वा छन्दसी"त्यनुवृत्तेः यणं विधायाह–**तन्वमिति।** अस्यैव व्याख्यानं तनुमिति, स्वमात्मानमिति, स्वात्मानमिति च। सर्वेषां स्वसकलस्वरूपमित्यर्थः। **विवृणुते इति** वागिति शेषः। प्रकाशयतीत्यर्थः। धातूनामनेकार्थत्वात्। उक्तदृष्टान्तमुपपादयति–**तद्यथेति ।** वश कान्ताविति धातोः शतृसम्प्रसारणादौ सति निष्पन्नस्योशतीपदस्यार्थमाह–**कामयमानेति । वागिति**-व्याकरणाध्ययनप्रसन्नेत्यादिः। सकलफलितमाह–**वागिति । नः**–अस्मभ्यम्।

प्रदीपे - **सः**–उतशब्दः। **भिन्नक्रमः**–पश्यन्नित्युत्तरमन्वितः। पश्यन्नपीत्यादेरर्थमाह–**प्रत्यक्षेणेति । समाहार इति**–अप्यर्थक इति शेषः। **अविद्वल्लक्षणमर्थमिति**–अवैयाकरणरूपमर्थमित्यर्थः। उद्दिश्येति शेषः। **अर्धर्चं इति**–ऋचोऽर्धमिति व्युत्पत्तिः। "अर्धर्चाः पुंसि चे"ति पुंल्लिङ्गता। **आहेति**–निन्दामित्यादिः।

उद्द्योते—अप्यर्थे इति विहाय अपिशब्दस्यार्थे इति कथनेन कैयटस्याशयविशेष इति सूचनायैवात्राह–**उतशब्द इति ।** लोकव्यवहारानुसारेणाह–**अध्ययनमिति ।** अध्ययनविषयमित्यर्थः। यथाश्रुतानुपपत्त्या लक्षणाश्रयणात्। **एकः**–(अर्थविद्भ्यः) अन्यः। **पश्यन्नपीति**–स्वरूपतो वाचमित्यादिः। **न पश्यति**–न (सकलं) जानाति। **हि**–यतः। **अभिप्राय इति**–अर्थज्ञानाभावे शब्दाभ्यसनमकिञ्चित्करमेवेत्याशयः। **एवमिति**–तेषां मध्ये इति शेषः। **शृण्वन्नपीति**–स्वरूपत इत्यादिः। **न शृणोति**–न सम्यक् शृणोति। **हि**—यतः। **सा**–वाक्। **भवतीति**–अर्थज्ञानासत्त्वे शब्दश्रवणं निष्फलमेवेति भावः। **हि**–यतः। ननु तथापि कथं शरीरं प्रकाश इत्यत आह—**अर्थ इति । हि**–यतः। **वाचा**–'जायेवे'त्यादिरूपया। **तमेव**–वैयाकरणमेव। **अङ्गेति**–(यथाश्रुतानुपपत्तेः लक्षणया) शरीरेत्यर्थः।

---

१. आन्तरेवि—स्वरूपज्योतिरित्यर्थः। २. सूक्ष्मा—सूक्ष्मतमा

**निर्णिक्तवासा**—सुधौतसूक्ष्मतमवस्त्रा । **नीरजस्का**—ऋतुस्नाता । **तत्पुरुषः**—तस्याः पुरुषः । **तद्वचनार्थम्**—तद्वचनरूपमर्थम् । अथवा तस्याः वचनेन अर्थम् ( प्रयोजनम् ) । **वनेति**—निविडेत्यर्थः । **सः**—वैयाकरणः । **अस्याः**—वाचः । **पश्यति**—जानाति । **शृणोति चेति**—शब्दद्वारेति शेषः । अत्र मानमाह—**अयमिति ।**

**( भाष्यम् )**

**सक्तुमिव—**

"सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत ।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥"

**सक्तुः—सचतेर्दुर्धावो भवति, कसतेर्वा विपरीताद्विकसितो भवति । तितउ-परिपवनं भवति—ततवद्वा तुन्नवद्वा । धीरा ध्यानवन्तः । मनसा प्रज्ञानेन । वाचमक्रत वाचमकृषत ।**

**अत्रा सखायः सख्यानि जानते । अत्र सखायः सन्तः सख्यानि जानते ।**

**क ?**

**य एष दुर्गो मार्गः, एकगम्यो वाग्विषयः ॥**

**के पुनस्ते ? ।**

**वैयाकरणाः ॥**

**कुत एतत् ? ।**

**'भद्रैषां लक्ष्मीर्निहिताधिवाचि ।'**

**एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्लक्षणाद्भासनात्परिवृढा भवति । सक्तुमिव ॥**

**( प्रदीपः ) सचतेरिति ।** षच सेचन इत्यस्य । **दुर्धाव इति ।** दुःशोधः । यथा तितउना सक्तोस्तुषाद्यपनीयते तथा व्याकरणेन वाचोऽपशब्दा इत्यर्थः ॥ **कसतेरिति ।** पृषोदरादित्वाद्वर्णव्यत्ययः ॥ **ततवदिति ।** विस्तारयुक्तमित्यर्थः । **तुन्नवदिति ।** बहुच्छिद्रम् ॥ **धीरा इति ।** वैयाकरणाः ॥ **वाचमक्रतेति ।** अपशब्देभ्यो विविक्तां कृतवन्तः । **मन्त्रे घसेति ।** लौकिके सत्यकृतेति रूपम् ॥ **अत्रासखाय इति । ऋचि तुनुघेति दार्घः ।** सखायः समानख्यातयो भेदग्रहस्य निवृत्तत्वात्सर्वमेकमिति मन्यन्ते ॥ **सख्यानीति ।** सायुज्यानीत्यर्थः ॥ **एकगम्य इति ।** ज्ञानेनैव प्राप्यः ॥ **वाचीति ।** वेदाख्ये ब्रह्मणि या लक्ष्मीर्वेदान्तेषु परमार्थसंविल्लक्षणोक्ता सैषां निहितेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये **( सक्तुमिवेति ) ।** ये यत्र व्याकरणे धीरा ध्यानवन्तः सन्तस्तितउना सक्तुमिव ध्यानयुक्तमनसा तत्करणकज्ञानेन वाचमक्रत अकृषत असाधुभ्यो विविक्तां कृतवन्तस्ते तत्करणेन शुद्धचि । अत्र ब्रह्मप्रतिपादकशब्दे शब्दार्थयोरभेदबुद्ध्या **सखायः समानख्यातयः** समानज्ञानाः । तच्छब्दे ब्रह्मैकत्वज्ञानवन्तस्तेनैव **दृष्टान्तेन** सर्वपदार्थेषु ब्रह्मणा निरूपिताभेदज्ञानवन्तः **सख्यानि सायुज्यानि** जानते प्राप्नुवन्तीत्यर्थः । यत **एषां वाचि भद्रा लक्ष्मीः स्वप्रकाशब्रह्मरूपा** अधि अधिकं निहिता स्थिता भवतीति **ऋगर्थः** ॥ **सचतेर्दुर्धाव इति ।** षच सेचनेऽस्मात् दुःशोधार्थप्रतिपादको भवतीत्यर्थः ॥ तितउशब्द **इत** एवाभाव्यान्नपुंसकः । **चालनी तितउः पुमानिति** कोशात्पुंलिङ्गोऽपि ॥ **बिस्तारेति । तनोतेर्डउः सन्वच्चेति** व्युत्पत्तेरिति भावः ॥ **तुन्नेति ।** तुदधातोः **कर्मणि डउः सन्वच्चेति भावः ॥ ध्यानं** ज्ञातार्थभावनम् ॥ **मनसेति** व्यापारपरं, तदाह—**प्रज्ञानेनेति ॥** भाष्ये **क्वेति ।** 'किं तद्, यत्र सायुज्यानि प्राप्नुवन्ति' इति प्रश्नः । उत्तरयति—**य एष इति ।** दुर्गमार्गप्राप्यत्वाद्दुर्गमार्गत्वोपचारः ॥ दुर्गत्वमेवाह—**एकेति ॥ ज्ञानेनैवेति ।** निर्विकल्पकज्ञानेनेत्यर्थः । अत एव दुर्गत्वं **'नान्यः पन्था' इति** श्रुतेरिति भावः ॥ भाष्ये वाग्विषय इति च्छेदः । अत एव श्रवणोपपत्तिः ॥ **वाग्** वेदरूपात्र ॥ **वेदान्तेष्विति । सत्यं ज्ञान**मित्यादिषु । **परमार्थसंविल्लक्षणा** परमार्थब्रह्ममात्रविषयज्ञानविषयाऽखण्डार्थरूपा सैषां वाचि निहितेत्यर्थः । सर्वोऽपि वेदस्तेषां ब्रह्मपरो **वेदैश्च सर्वैरहमेव वेद्य** इत्युक्तेरिति भावः ॥ अयं भावः—**ये** शास्त्रतः प्रकृतिप्रत्ययविभागेन साधून् ज्ञात्वा शास्त्रार्थध्यानवन्तो मानसज्ञानेन वाचमसाधुभ्यः पृथक् कृतवन्तस्ते तज्ज्ञानपूर्वकसाधुशब्दप्रयोगैर्लब्धान्तःकरणशुद्धयोऽत्र **य एष दुर्गो मार्गो** ब्रह्मरूपस्तत्रात्मना सह **समानख्यातय**स्त्यक्तभेदभावनाः **सख्यानि** सायुज्यानि प्राप्नुवते । यत **एषां** वाचि वेदाख्ये ब्रह्मणि या **भद्रा लक्ष्मीः** सर्वभासकब्रह्मरूपा सा **अधि** अधिकं **निहिता** भवति । एतच्छास्त्रसाध्यप्रयोगव्यङ्ग्यस्य ध्वनिरूपवैखरीरूपरूषितस्यैव तैर्वाचकत्वस्वीकारेण तस्य चात्यन्तविचारे ब्रह्मातिरेके मानानुपलम्भेन तत्तदुपाधिभिन्नचित एव बोधकतया तैर्ग्रहात् । एवं सर्वबोधकेषु ब्रह्मबुद्धौ जातायां तेनैव दृष्टान्तेन सर्वपदार्थेषु ब्रह्मबुद्धिर्वैयाकरणानामिति ॥ यत्तु पदपदार्थवाक्यार्थमर्यादया **सत्य**मित्यादितस्तेषां तद्बोधात्सा तेषां वाचि निहितेति ॥ तन्न, **यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति** श्रुत्या ब्राह्मणस्तन्मर्यादया शब्दावोध्यत्वोक्तेः । तत्र ह्यप्राप्येत्यस्य संबन्धज्ञानेऽविषयीभूयासंबध्य चेत्यर्थः । आद्यं शब्दे, अन्त्यं मनसि ॥ शुद्धचित्तस्य तूभयमपि बोधकमखण्डविषयस्य—**दृश्यते त्वग्रयया बुद्ध्येति** श्रुत्यन्तरात् । न तु पदपदार्थमर्यादयेति बोध्यम् ॥ **लक्षणादि**त्यस्य व्याख्या **भासना**दिति ॥ **परिवृढा** अज्ञाननिवर्तने प्रभ्वी ॥ एते च मन्त्राः सर्वानुक्रमभाष्येऽन्यत्र विनियुक्ता अपि भाष्यप्रामाण्यादेतत्तात्पर्यका अपीति बोध्यम् ॥ **चत्वारी**त्यादि ऋक्चतुष्टयं व्याकरणस्य मोक्षजनकत्वं प्रतिपादयति ॥

**( तत्त्वालोकः )** भाष्ये – क्रमप्राप्तं व्याकरणाध्ययनस्य ब्रह्मसायुज्यावाप्तिसाधनतायाः सूचकमन्यदप्याह—**सक्तुमिवेति । सक्तुरिति**—( यतः ) सक्तुः सक्तुशब्दः सचतेः षच सेचने, षच समवाये इत्यनयोरन्यतरस्मात् कर्मणि औणादिके तुनि कर्तरि च निष्पन्नः, अतः ) दुर्धावः **दुर्धावार्थ**बोधको भवतीत्यर्थः । दुर्धाव इत्यत्र दुःखेन धावयितुं योग्य **इति** व्युत्पत्तौ **दुः**पूर्वाद्धावेः "ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खलि"ति सूत्रेण कर्मणि खल् । विनिगमकाभावादाह—**कसतेरिति ।** अथवा यतः ( सक्तुशब्दः ) कसतेः कसगतावित्यस्माद् विपरीतात् पृषोदरादितया कृतवर्णव्यत्ययात् ( कर्मणि तादृशे **तुनि** निष्पन्नः, अतः ) विकसितः विकसितार्थबोधको भवतीत्यर्थः । धातूनामनेकार्थत्वादिति भावः । **तितउ इति**—अत्र "तनोतेर्डउः सन्वच्च" त्यौणादिकेन डउः । विश्लेषोच्चारणसामर्थ्यादसन्धिः । परितः पूयतेऽनेनेति व्युत्पत्तौ करणे ल्युटि निष्पन्नमाह—**परिपवनमिति ।** परिशोधनकरणत्वस्यान्यत्रापि सत्त्वात् तितउशब्दव्युत्पत्तिमाह—**ततवदिति ।** तादृशस्याप्यतिप्रसक्तत्वादाह—**तुन्नवदिति । धीरा इति**—धाधातोरौणादिके क्रनि "घुमास्थेती"त्वे साधुः । धातूनामनेकार्थत्वादाह—**ध्यानेति ।** व्याकरणविषयकेत्यादिः । **वाचमकृषत**—वाचं शुद्धां कृतवन्तः, अत्रा सखाय इत्यत्र नञभावसूचनायाह—**अत्र सखाय इति । जानते**—प्राप्नुवन्ति । **एकगम्यः**—एकेनैव गम्यः । तत्र विशेषतया कर्त्तुरनुल्लेखादाह—**के पुनस्ते इति ।** ते सायुज्यप्राप्तिकर्त्तारः पुनः

के इत्यर्थः । **एतत्**-वैयाकरणानामेव सायुज्यप्राप्तिकर्त्तृत्वम् । उत्तरयति-**भद्रैषामिति ।** यत इत्यादिः । तदर्थमाह-**एषामिति ।** वैयाकरणानामित्यर्थः । लक्ष्मीशब्दार्थमाह-**लक्ष्मीरिति ।** अस्य लक्ष दर्शनाङ्कनयोरित्यस्मात् "लक्षेर्मुट् च" इत्यनेनौणादिके मुटीत्वे च निष्पत्तिः ।

प्रदीपे-**दुःशोध इति**-अत्र (तुषाद्याक्रान्ततया) दुःखेन शोधयितुं **शक्य इति** व्युत्पत्तौ पूर्ववत् खल् । **अपशब्दा इति**-अपनीयन्ते **इति** शेषः । ततं विस्तृतमस्यास्तीति व्युत्पत्तौ मतुबित्याशयेनाह—**विस्तारेति ।** तुदानि छिद्राणि सन्त्यस्येति व्युत्पत्तौ भूम्नि मतुबित्याशयेनाह-**बहिति ।** अत्र बहुव्रीहिः । **एषामिति—**शाचीति शेषः । अथवा वाचीत्यस्यावृत्त्योभयत्रान्वयः ।

उद्द्योते-**व्याकरणे—**व्याकरणविषये । **सक्तुमिव—**सक्तुं पुनन्त इव । शुद्धौ सव्यापारमनसः कारणत्वादाह—**तत्करणेति ।** **तत्करणेन**-वाक्शुद्धतासम्पादनेन । **ब्रह्मप्रतिपादकशब्दे**-व्याकरणप्रतिपाद्ये । **तच्छब्दे**-ब्रह्मप्रतिपादकशब्दे । कुत एतदित्यत आह—**यत इति । एषाम्**-वैयाकरणानाम् । **भवतीति**-अत **इति** शेषः । **सचतेरिति**-रूपमिति शेषः । **इत एव**-इतोऽपि । तस्य "स्याद्वास्तु हिङ्गु तितउ" इति त्रिकाण्डशेषेणापि क्लीबलिङ्गता सूचनात् । **नपुंसकः**-नपुंसकलिङ्गः । नन्वेवममरकोशासङ्गतिरित्यत आह-**चालनीति ।** अत्र पुमानिति पदं पुंल्लिङ्गत्वायोगमात्रस्य व्यवच्छेदकं न त्वन्ययोगस्यापीति सकलसामञ्जस्यमिति भावः । प्रश्नोत्तरयोः सामानाधिकरण्यायास्य प्रातिपदिकार्थमात्रपरतामाह—**किं तदिति । दुर्गेति**-ब्रह्मण इत्यादिः । **दुर्गत्वमिति**—ब्रह्मप्रापकमार्गे इत्यादिः । सविकल्पकव्यावृत्तये आह-**निर्विकल्पकेति । अत एव**-तत्प्रापकमार्गस्यातियत्नसाध्यनिर्विकल्पकज्ञानमात्रत्वादेव । तत्र मानमाह-**नान्यः पन्था इति ।** विद्यतेऽयनायेति शेषः । **छेद इति**-केचित्तु "यतो वाचो निवर्त्तन्ते" **इति** श्रुतिमनुरुध्य "अवागविषय" **इति** छेदं विदधति । **अत एव**-ब्रह्मणो वागविषयत्वादेव । ननु कीदृशवागविषयता तस्येत्यत आह-**वेदेति । ज्ञानमिति**-अनन्तं ब्रह्मेति शेषः । नन्वेवं कथन्तस्या लक्ष्म्याः सकलवेदवृत्तितेत्यत आह-**सर्पोपीति । तेषां—**वैयाकरणानाम् । **ब्रह्मपरः**-ब्रह्मतात्पर्यकः । उपक्रमादिषड्विधलिङ्गैः वेदानां ब्रह्मतात्पर्यकतानिश्चयात् । आह च-"उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती **च** लिङ्गं तात्पर्यनिर्णये ॥" **इति ।** तत्र मानमाह-**वेदैश्चेति । शास्त्रतः**-व्याकरणतः । **साधून्**-साधुशब्दान् । **वाचम्**-शुद्धां वाचम् **। असाधुभ्यः**—असाधुशब्देभ्यः । **तदिति**-प्रकृतिप्रत्ययविभागेत्यर्थः । **ध्वनिरूपेति**-ध्वनिरूपा या वैखरी तस्या रूपेण रूषितस्य (आलिङ्गितस्य) इत्यर्थः । **तैः**-वैयाकरणैः । एवमग्रेऽपि । **तस्य**-व्यङ्ग्यस्य । **चितः**-ब्रह्मणः । **सत्यमित्यादितः**-सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतेः । **तेषां**-वैयाकरणानाम् । **तदिति**-ब्रह्माभेदेत्यर्थः । **सा**-स्वप्रकाशब्रह्मरूपा लक्ष्मीः । **तन्मर्यादया**-पदपदार्थादिमर्यादया । अप्राप्येत्यस्योभयत्रान्वयायाह—**तत्रेति । उभयम्—**वाङ्मनसरूपम् । **एते—**चत्वारीत्यादयः । **अन्यत्र**-अग्निध्यानादौ । **एतत्तात्पर्यकाः**—व्याकरणाध्ययनस्य मोक्षादिसाधनत्वपरकाः ।

**( भाष्यम् )**

**सारस्वतीम्—**

**याज्ञिकाः पठन्ति—"आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेद्" इति ॥**

**प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणम् ॥ सारस्वतीम् ।**

**( प्रदीपः ) प्रायश्चित्तीयामिति ।** भवार्थे वृद्धाच्छः ॥ **प्रायश्चित्तीया इति ।** प्रायश्चित्ताय पापशोधनाय श्रुतिस्मृतिविहिताय कर्मणे हितास्तन्निमित्तोत्पादना मा भूमेत्यर्थः ॥

**( उद्द्योतः ) भवार्थे इति ।** प्रायश्चित्तसाधनत्वेन तद्भवत्वम् ॥

**( तत्त्वालोकः )** भाष्ये-अभिनमाद्धानेन व्याकरणमवश्यमध्येयमित्याह—**सारस्वतीमिति ।** अन्यस्यापशब्दप्रयोगे दोषो नेति सूचनायाह-**आहिताग्निरिति ।** यज्ञमध्ये इति शेषः । ननु अनारभ्याधीतेन "नानृतं वदेदि"ति सामान्यनिषेधेन अर्थानृतस्येव शब्दानृतस्यापि त्याज्यत्वात् सर्वेषां रजतस्थाने रङ्गदानेनेव साधुशब्दस्थाने अपशब्दप्रयोगेण दोषसम्भवात् कथन्तत् सूचितमिति चेन्न, यागप्रकरणपठितेन तादृशवाक्येन यज्ञेऽपशब्दप्रयोगे क्रतुपुरुषोभयस्य दोषोऽन्यत्र पुरुषमात्रस्येति सूचनायैव आहिताग्निपदोपादानात् । **सारस्वतीं**-सरस्वतीदेवताकाम् । **प्रायश्चित्तीया इति**-प्रायश्चित्ताय हिता इति व्युत्पत्तौ "वृद्धाच्छः" इति छः ।

प्रदीपे-**भवार्थे**—प्रायश्चित्ते भवेति व्युत्पत्तौ । चर्मणि द्वीपिनं हन्तीत्यत्रेवात्र निमित्तार्थे सप्तमी । **तन्निमित्तोत्पादनाः**—तस्य तादृशकर्मरूपप्रायश्चित्तस्य निमित्तं यज्ञकर्मण्यपशब्दप्रयोगः तस्योत्पादनाः कर्त्तारः ।

उद्द्योते—ननु पापनाशकश्रुतिस्मृतिविहितकर्मणः प्रायश्चित्ततया कथन्तद्रूपाधिकरणे इष्टेः भवत्वमित्यत आह-**प्रायश्चित्तेति ।** तथा चात्र प्रायश्चित्तपदस्यान्तःकरणशुद्धिपरतया तत्र (तदर्थम्) इष्टेः भवत्वसम्भवादिति भावः । **तदिति**-प्रायश्चित्तेत्यर्थः ।

**( भाष्यम् )**

**दशम्यां पुत्रस्य—**

**याज्ञिकाः पठन्ति—"दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्याद् घोषवदाद्यन्तरन्तःस्थमवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितम् । तद्धि प्रतिष्ठिततमं भवति । द्व्यक्षरं चतुरक्षरं वा नाम कृतं कुर्यान्न तद्धितम्" इति ॥**

**नचान्तरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुम् ॥ दशम्यां पुत्रस्य ॥**

**( प्रदीपः ) दशम्युत्तरकालमिति ।** दशम्या उत्तर इति **पञ्चमीति ।** योगविभागात्समासः । ततः कालशब्देन बहुव्रीहिः । क्रियाविशेषणं चैतत् । दश दिनान्यशौचं भवतीति दशम्युत्तरकालमित्युक्तम् । येऽपि गृह्यकाराः पठन्ति **दशम्यां पुत्रस्येति,** तैरपि दशम्यामिति सामीपिकमधिकरणं व्याख्येयम् ॥ **घोषवदादीति ।** घोषवन्तो ये वर्णाः शिक्षायां प्रदर्शितास्तदादि ॥ **अन्तरन्तःस्थमिति ।** मध्ये यरलवा यस्य तदित्यर्थः ॥ **त्रिपुरुषानूकमिति ।** नामकरणे योऽधिकारी पिता तस्य ये त्रयः पुरुषास्ताननुकायत्यभिधत्त **इति** त्रिपुरुषानूकम् । **अन्येषामपि दृश्यते इति** दीर्घः ॥

**( उद्द्योतः ) पञ्चमीति योगविभागादिति ।** सुप्सुपेति तु युक्तम् ॥ ननु दशम्यां पुत्रस्येति प्रयोजनस्वरूपगणने भाष्ये उक्तम् । गृह्येपि तथैव पठ्यतेऽतो दशम्युत्तरकालमित्ययुक्तमत आह—**तैरपीति ॥ शिक्षायामिति ।** ते च हशः ॥ अन्तरन्तःस्था यस्येत्यर्थः । **त्रिपुरुषा-**

**नूकम्।** त्रिपुरुषशब्दे द्विगुः। मूलविभुजादित्वात्कः॥ भाष्ये-**अनरीति।** अमनुष्येऽरिभिन्ने इति वार्थः॥

**( तत्त्वालोकः )** भाष्ये-व्याकरणाध्ययनस्य नामकरणेऽप्युपयोगमाह-**दशम्यामिति । याज्ञिकाः**-यज्ञकाण्डभवा वैदिकशब्दाः। ऋषिः ( वेदः ) पठतीतिवत् प्रयोगः। कूपे गर्गकुलमित्यत्रेव दशम्यामित्यत्रौपश्लेषिकेऽधिकरणे सप्तमीत्यभिप्रायेणाह-**दशम्युत्तरेति। अवृद्धं**-वृद्धसंज्ञकभिन्नम्। **हि**-यतः। **कृतं**-कृदन्तम्। नियमपालनजनितपुण्यानिच्छया तद्धितान्तनामकरणेऽपि प्रवृत्तिः स्यादित्यतस्तं निषेधति-**न तद्धितमिति।** न तद्धितान्तमित्यर्थः। तथा च तद्धितान्तनामकरणे न केवलं पुण्याप्राप्तिः, किन्तु पापावाप्तिरपीति भावः। नन्वेतावता किं फलितमित्याह-**नचेति।** नहीत्यर्थः। **व्याकरणं**-व्याकरणाध्ययनम्। **विज्ञातुमिति**-प्रतोऽध्येयं व्याकरण मिति शेषः।

प्रदीपे-**पञ्चमीतीति**-"पञ्चमी भयेने"ति सूत्रे **इत्यादिः। बहुव्रीहिः**-दशम्युत्तरः कालो यस्मिन् ( कर्मणि ) इति व्युत्पत्तौ। **सामीपिकम्**-औपश्लेषिकम्। **व्याख्येयमिति**-अनेनैवाशयेन "दशम्यां पुत्रस्ये"ति प्रतीकं दशम्युत्तरकालमिति गृह्यवचनानुसारेण व्याख्यातं भाष्यकृता, अन्यथा असङ्गतिर्दुर्वारेति भावः। **घोषवन्तः**-घोषप्रयत्नवन्तः। **त्रयः पुरुषाः**-पितृपितामहप्रपितामहाः। **तानिति**-तेषामन्यतममिति फलितार्थः। **दीर्घं इति**-अनूकमित्यत्रानोरुकारस्येति शेषः।

उद्द्योते—योगविभागस्य भाष्येऽदृष्टतयाऽप्रामाणिकत्वादाह-**सुप्सुपेतीति। द्विगुः**-समाहारद्विगुः। पात्रादित्वात् "अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः" इति स्त्रीत्वं न। **कः**-'कै शब्दे' इति धातोः कप्रत्ययः। केचित्तु प्रथमं कर्मरूपोपपदाविवक्षायाम् "आतश्चोपसर्गे" इति कप्रत्ययेनानूकपदं व्युत्पाद्य पश्चात् कर्मसम्बन्धे कर्मषष्ठ्यन्तेन षष्ठीतत्पुरुषं समाश्रित्य त्रिपुरुषानूकमिति साधयन्ति। **अमनुष्ये इति**-देवतादाविति फलितार्थः। **अरिभिन्ने इति**-मित्रादाविति फलितार्थः।

**( भाष्यम् )**

**सुदेवो असि—**

**'सुदेवो असि वरुण यस्य ते सप्त सिन्धवः।**
**अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव॥'**

**सुदेवो असि वरुण सत्यदेवोऽसि। यस्य ते सप्त सिन्धवः सप्त विभक्तयः। अनुक्षरन्ति काकुदम्। काकुदं तालु। काकुर्जिह्वा, साऽस्मिन्नुद्यत इति काकुदम्। सूर्म्यं सुषिरामिव। तद्यथा—शोभनामूर्मि सुषिरामग्निरन्तः प्रविश्य दहति, एवं ते सप्त सिन्धवः सप्त विभक्तयस्ताल्वनुक्षरन्ति। तेनासि सत्यदेवः॥ सत्यदेवाः स्यामेत्यध्येयं व्याकरणम्॥ सुदेवो असि॥**

**( प्रदीपः ) सुदेवो असीति।** वरुणस्येयं स्तुतिः। यतो हेतोर्व्याकरणज्ञानाद्वरुण सत्यदेवोऽसि ततो हेतोरन्येऽपि सत्यदेवा भवन्तीत्यर्थः॥ **सिन्धव इति।** नद्य इव विभक्तय इत्यर्थः। **अनुक्षरन्तीति।** ताल्वनुप्राप्य प्रकाशन्त इत्यर्थः॥ **साऽस्मिन्नुद्यत इति।** अनेकार्थत्वाद्धातूनामुत्क्षिप्यत इत्यर्थः॥ **सूर्म्यमिति।** सूर्मीमिति प्राप्ते **अमि पूर्व** इत्यत्र **वा छन्दसी**त्यनुवृत्त्या यणादेशः॥

**( उद्द्योतः ) सत्यदेव इति।** वरुणे यथा सत्येन दीव्यति द्योतत इति यौगिकोयं शब्दस्तथान्येष्वपीत्यर्थः॥ **यस्येति।** पञ्चमीस्थाने षष्ठी। यस्मात्ते काकुदं तालु प्राप्य सिन्धवः सप्तसमुद्ररूपाः॥ सप्तविभक्तयोऽनुक्षरन्ति प्रकाशन्ते इत्यर्थः॥ **अनेकार्थत्वादिति।** वदेरधिकरणे **घञर्थे इति** कः। शकन्ध्वादिवत्पररूपं **पृषोदरादित्वाद्** दैकस्योकारस्य लोपः। **नुदेर्वा**धिकरणे कः। पृषोदरादित्वान्नुलोपः॥ **सूर्मीं** शोभनामयःप्रतिमाम्, **सुषिराम्, ऊषसुषी**ति रप्रत्ययेन सच्छिद्रां प्रविश्याग्निर्यथा तद्गतं मलं भस्मीकृत्य प्रतिमां शुद्धां करोति एवं तालुदेशे प्रकाशं प्राप्य विभक्त्यो विभक्त्यन्ताः शब्दाः शारीरं पापमपाकुर्वन्तीत्यर्थः॥ अनेन स्वर्गप्राप्तिः फलमित्युक्तम्॥

**( तत्त्वालोकः )** भाष्ये-क्रमप्राप्तं व्याकरणाध्ययनस्य सत्यदेवत्वावाप्तिफलकतासूचकम् ऋग्वेदमन्त्रमाह-**सुदेवो असीति।** अत्र "प्रकृत्यान्तःपादमव्यपरे" इति सूत्रेण प्रकृतिभावान्न "एङः पदान्तादती"ति सूत्रेण पूर्वरूपापत्तिः। हे वरुण! त्वं "सुदेवो असि" अस्य व्याख्या सत्यदेवोऽसीति। तत्र सत्यदेवतासाधनाय हेतुमाह-**यस्येति।** तालुरूपार्थे काकुपदं न रूढं, किन्तु यौगिकमित्युपपादयति-**काकुरिति।** तत्र दृष्टान्तमाह-**सूर्म्यमिति।** तमुपपादयति-**शोभनामिति।** अनेनोर्मिशब्द एवायःप्रतिमावाचकः, न सूर्मिशब्द इति सूचितम्। उपनयमाह-**एवमिति।** निगमनमाह-**तेनासीति।** फलितमाह—**सत्येति।**

प्रदीपे-**वरुणस्येति**-बार्हस्पत्ये प्रगाथे इत्यादिः। सम्पूर्णमन्त्रभावार्थमाह-**यत इति।** व्याकरणज्ञानाख्यतो हेतोः प्रकृतिप्रत्ययविभागज्ञानपूर्वकं साधुशब्दप्रयोगादित्यर्थः। **अन्ये**-वैयाकरणाः। **नद्य इति**-( यथाश्रुतानुपपत्तेः लक्षणया ) सागरा इत्यर्थः। **इवेन** मन्त्रे लुप्तोपमा सूचिता। अध्याहृत्याह-**अनुप्राप्येति।** एवमुद्योतेऽपि। "सूर्मी स्थूणाऽयःप्रतिमे"त्यमरकोशादितो दीर्घान्ततामूर्मिशब्दस्याभिप्रेत्याह—**सूर्मीमिति।**

उद्द्योते-**सत्येन**-साधुशब्दमात्रप्रयोगाख्येन। **अयं शब्दः**-सत्यदेवशब्दः। **अन्येषु**-वैयाकरणेषु। **षष्ठीति**-व्यत्ययेनेत्यादिः। **सप्त विभक्तयः**-प्रथमादिसप्तत्रिकरूपाः विभक्तयः। **प्रकाशन्ते इति**-मूर्त्तिमत्य इत्यादिः। अत इत्यन्तश्च। धातूनामनेकार्थत्वमभिप्रेत्याह—**वदेरिति।** उत्क्षेपार्थादिति शेषः। **घञर्थे इति**-'घञर्थे कविधान'मिति वार्त्तिकेन। **शकन्ध्वादिति**-ततः सम्प्रसारणपूर्वरूपयोः काकोरुदमिति विग्रहे षष्ठीसमासे चेत्यादिः। विनिगमनाविरहादाह-**पृषोदरादित्वाद्वेति।** संप्रसारणाद्यकरणजनितलाघवमभिप्रेत्याह-**नुदेर्वेति। पृषोदरादित्वादिति**-काकोर्नुदमिति व्युत्पत्तौ षष्ठीतत्पुरुषे इत्यादिः। कल्पद्वयेऽपि "साऽस्मिन्नुद्यते" इति भाष्यं फलितार्थकथनपरमेवेति भावः। **अयःप्रतिमाम्**-लोहमयीं मूर्त्तिम्। **ऊषसुषीति**-"ऊषसुषिमुष्कमधोर" इति मत्वर्थीयसूत्रेण। भाष्योक्तं सामर्थ्यलब्धमर्थं विशदीकृत्याह-**प्रविश्येति।** अन्त इत्यादिः। **ताल्विति**-वरुणस्येति शेषः। **पापम्**-पापरूपं मलम्। लोके कथञ्चिद् विनष्टमलानां वस्तूनां द्योतनमिव साधुशब्दप्रयोगेण विनष्टपापात्मकमलस्य वरुणस्य वैयाकरणस्य च द्योतनमिति तयोः सत्यदेवतेति भावः। **अनेन**-वैयाकरणे सत्यदेवत्वेन वरुणसादृश्यप्रतिपादनेन। वरुणस्येव वैयाकरणस्यापि स्वर्गवासिता भवेदिति व्याकरणाध्ययनस्येति शेषः।

**( उक्तप्रयोजनग्रन्थोपपत्तिप्रकरणम् )**

**( आक्षेपभाष्यम् )**

**किं पुनरिदं व्याकरणमेवाधिजिगांसमानेभ्यः प्रयोजनमन्वाख्यायते, न पुनरन्यदपि किंचित्? ओम् इत्युक्त्वा वृत्तान्तशः शमित्येवमादीन् शब्दान्पठन्ति?॥**

**( प्रदीपः ) किं पुनरिति ।** नन्**नु कानि पुनरस्येति** येन पृष्टं, स एव कथं पृच्छति-**किं पुनरिति ।** एवं तर्हि भाष्यकारः प्रयोजनान्वाख्यानस्य विषयविभागं दर्शयति । **पुरा** वेदाध्ययनात्पूर्वं व्याकरणमधीयते ते बाल्यात्प्रष्टुमसमर्था इति न प्रयोजनमन्वाख्येयम् । अद्यत्वे तु स्वल्पायुष्ट्वात्पूर्वमेव वेदं प्रधानमधीयते ततः प्रष्टुं समर्थत्वाद्व्याकरणाध्ययनस्य प्रयोजनं पृच्छन्तीत्यवश्यान्वाख्येयं प्रयोजनम् ॥ **न पुनरन्यदिति** वेदमप्यधिजिगांसमानेभ्य इत्यर्थः ॥ ॐ **मित्युक्त्वेति ।** अभ्युपगम्येत्यर्थः । **वृत्तान्तश इति ।** वृत्तान्तः प्रपाठक उच्यते । वृत्तान्तं वृत्तान्तं पठन्तीत्यर्थः ॥

**( उद्द्योतः ) एवं तर्हीति ।** 'वेदातिरिक्तविषय एव प्रयोजनान्वाख्यानं, न तु वेदविषये' इत्येवंरूपं **विषयविभागम् ॥** तृतीयस्य प्रश्न इत्यन्ये । किंचित्पदार्थमाह-**वेदमपीति ।** शेषपूरणमन्यत् । किं तत्किंचिदित्याकाङ्क्षायामाह-भाष्ये-**ओमित्युक्त्वेति । पठन्ती**त्यस्यानन्तरमे**तेभ्योऽपी**ति शेषः ॥ एवंच वेदमधिजिगांसमानेभ्यो वेदाध्ययनप्रयोजनं किमिति नान्वाख्यायत **इ**ति प्रश्नः ॥ वेदाध्ययनवद् व्याकरणाध्ययनमपि प्रयोजनमन्तरैव करिष्यन्तीति प्रयोजनविचारो व्यर्थ **इ**ति तात्पर्यम् ॥ नन्वोमित्यधिकमत आह-**अभ्युपगम्येति ।** विनैव प्रयोजनज्ञानमिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**पुनरिति**-अयमुभयत्र हेत्वर्थे वाक्यालङ्कारे वा । **इदमिति**-अस्य प्रयोजनमित्यनेन सम्बन्धः । **अन्यत्**-व्याकरणभिन्नम् । वैदिकोदाहरणे प्रथमोक्तत्वादाह-**शमित्येवमादीनीति ।** "शन्नो देवीरभिष्टये" **इत्येव**मादीनीत्यर्थः ।

प्रदीपे-**किं पुनरितीति**-अस्य प्रतीकता, तथा अग्रिमस्य प्रश्नाकारतेति भावः प्रयोजनानाम् अवश्यान्वाख्येयतां विज्ञाय तानि पृच्छतः तदन्वाख्याने वैयर्थ्यशङ्काया असम्भवात्तस्यायं प्रश्नो न सम्भवतीत्याशयेनाह-**ननु कानीति । भाष्यकार इति**-एवेति शेषः । **दर्शयतीति**-प्रश्नपूर्वकमित्यादिः । उत्तरग्रन्थे भाष्यकृता दर्शितमेव विषयभागमत्राह-**पुरेति । युगान्तरे इत्यर्थः । ते**-अध्येतारः । **प्रष्टुमिति**-व्याकरणाध्ययनस्य प्रयोजनमित्यादिः । पुरा द्विजैः सहस्रायुष्ट्वात् साङ्गोपाङ्गवेदा अध्येया इति विचारयन्तो गुरवः अङ्गाद्यध्ययनोत्तरमङ्गिनोऽध्यापनेन विशेषलाभो भवेदित्याशयेन वेदात्प्राग्व्याकरणाद्येवाध्यापयन्ति स्म । सम्प्रति तु शततोऽप्यल्पायुष्ट्वात् "अनन्तशास्त्रं बहुला च विद्या अल्पश्च कालो बहुविघ्नता च । यत्सारभूतं तदुपासनीयं हंसैर्यथा क्षीरमिवाम्बुमध्यात् ॥" **इत्यादि समालो**चयन्तो गुरवः प्रधानतया परमावश्यकं वेदमेवाङ्गादितः प्राक् पाठयन्तीति भावः । वीप्सायां शसित्यभिप्रेत्याह-**वृत्तान्तमिति ।**

उद्द्योते—भिन्नं भिन्नं विषयमित्येवरूपं विषयविभागमितिभ्रमनिरासायाह-**वेदेति ।** प्रकारान्तरेणापि प्रकृतभाष्यस्य सामञ्जस्यं सम्भवतीति बोधनायाह-**तृतीयस्येति ।** प्रयोजनप्रष्टृवक्तृभिन्नस्येत्यर्थः। **शेषेति**-अनुषङ्गेणेत्यादिः । प्रदीपोक्तकिञ्चित्पदार्थस्य भाष्यैकवाक्यत्वायाह-**किं तदिति । आह**-विशिष्याह । अत एव सामञ्जस्यायाह-**एतेभ्योऽपीति ।** प्रयोजनमन्वाख्यायते **इ**त्यस्यानुषङ्गः । ननु किम्फलिङ्गमेतावतेत्यत आह-**एवञ्चेति ।** व्याकरणाध्ययनप्रयोजनान्वाख्याने चेत्यर्थः । **वेदेति**-वेदाध्ययनप्रयोजनान्वाख्यानेऽकृते चेत्यादिः । **प्रयोजनमिति**-प्रयोजनज्ञानमित्यर्थः । अधीष्वेत्याचार्यवचनादित्यादिः । **प्रयोजनमिति**-प्रयोजनज्ञानमित्यर्थः । अधीष्वेत्याचार्यवचनादित्यादिः । **ओमित्यधिकम्**-ओमित्युक्त्वेत्यधिकम् । **अत इति**-विशिष्टस्यार्थमिति शेषः । **अभ्युपेति**-आचार्येण अधीष्वेत्युक्ते तदाज्ञामित्यादिः ।

( समाधानभाष्यम् )

**पुराकल्प एतदासीत्-संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्यो वैदिकाः शब्दा उपदिश्यन्ते ॥ तदद्यत्वे न तथा । वेदमधीत्य त्वरिता वक्तारो भवन्ति—**

**'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः,**

**अनर्थकं व्याकरणम्' इति । तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वा आचार्य इदं शास्त्रमन्वाचष्टे—इमानि प्रयोजनान्यध्येयं व्याकरणम्-इति ॥**

**( प्रदीपः ) अद्यत्व इति ।** अद्यत्वेशब्दो निपातोऽस्मिन् काल इत्यत्रार्थे वर्तते ॥ **त्वरिता इति ।** विवाहादौ ॥

**( उद्द्योतः )** भाष्ये उत्तरमाह-**पुराकल्पे इति ।** युगान्तरे इत्यर्थः ॥ **संस्कार** उपनयनम् ॥ **करण**माभ्यन्तरप्रयत्नः ॥ **अनुप्रदानं** नादादिबाह्यप्रयत्नः । तेनाधीतव्याकरणशिक्षेभ्य इत्यर्थः । ते तदानीमपि कर्मानुष्ठानफलकत्वं वेदस्य जानन्तो नित्यत्वं वा तदध्ययनस्य जानन्तो न तदध्ययनप्रयोजनं पृच्छन्तीति न कदाचिदपि वेदाध्ययनप्रयोजनोपदेश इति तात्पर्यम् ॥ **न तथेति ।** किं तु विपरीतमित्यर्थः॥ भाष्ये-**आचार्यपदेन** शास्त्राध्यापको भाष्यकृदेव विवक्षितः ॥ **इदं शास्त्रमिति ।** प्रयोजनान्वाख्यानमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**एतदिति**-अस्यैव क्रियाविशेषणस्यार्थः। संस्कारेत्यादिरुपदिश्यन्ते **इ**त्यन्तः । **ब्राह्मणा**-द्विजाः । **तेभ्यः**-वैयाकरणेभ्यः । **स्थानं**-कण्ठादि । **नाद**पदेन विवारादय उपलक्ष्यन्ते । **दिश्यन्ते इति**-इतीति शेषः । **वक्तार इति**-अस्य "वेदानित्यादि, इतीत्यन्त" कर्म । **नः**-अस्माकम् । कर्तुः शेषत्वविवक्षणात् **षष्ठी । लोकाच्च**-लोकव्यवहाराच्च । **विप्रतिपन्नेति**-विप्रतिपन्ना विरुद्धार्थविषयिणी बुद्धिर्येषामिति व्युत्पत्तिः । **अन्वाचष्टे**-करोति । विशिष्टवाचकपदानां सति विशेषणवाचकपदसमवधाने विशेष्यमात्रपरत्वमिति न्यायात् । यथा 'सकीचकैर्मारुतपूर्णरन्ध्रै'रित्यत्र कीचकपदस्य वेणुमात्रपरता ॥ कुत इत्यत आह-**इमानीति ।** इमानि प्रयोजनानि सन्तीत्यतोऽध्येयं व्याकरणमिति कथयितुमित्यर्थः ।

प्रदीपे—त्वशब्दसार्थक्यबोधनायाह-**अद्यत्वे इति ।** शेषं कथयति-**विवाहादाविति ।** तत्रोत्सुकाः सन्तः इत्यर्थः ।

उद्द्योते —**केचित्तु** किञ्चिदित्यन्तः पूर्वपक्षः, ओमित्यादिरुत्तरपक्ष इति वदन्ति, तदयुक्ततां सूचयन्नाह-**उत्तरमिति ।** अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीते"ति श्रुतिम् , "उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यञ्च तमाचार्यं प्रचक्षते ॥" इति स्मृतिञ्चानुसन्धायाह-**उपेति ।** प्रकृतिप्रत्ययादिविभागेन शब्दार्थकथनप्रकारस्य, स्थानादेः वर्णोच्चारणरीतेश्च व्याकरणशिक्षयोः सत्त्वादाह-**अधीतेति ।** ननु व्याकरणशिक्षाध्ययनोत्तरं वेदं पिपठिषूणां प्रौढतया वेदाध्ययनप्रयोजनप्रश्नकरणसामर्थ्यात् कथन्न कृतो वेदाध्ययनप्रयोजनोपदेशोऽन्ततस्तदर्थमेवेत्यत आह-**ते तदानीमपीति ।** अधीतव्याकरणशिक्षाः ( वेदाध्ययनकाले ) प्रौढतायामपीत्यर्थः । **फलकत्वम्**-स्वरूपार्थबोधनद्वारा । **तदिति**-वेदेत्यर्थः । **इति-इति** हेतोः । ( कदाचित्पदप्रयोगेण सूचितात् ) बालास्तु सामर्थ्याभावादेव न तत्पृच्छन्तीति हेतोश्च । **विपरीतम्**-( अल्पायुष्ट्वात् ) वेदाध्ययनोत्तरं व्याकरणाद्यध्ययनम् । व्याकरणान्वाख्यानस्यानुत्तरत्वाद्, **इदं** शास्त्रमित्यनेन तत्परामर्शासम्भवाद्, उत्तरग्रन्थानुरोधाच्च तदर्थमाह-**प्रयोजनेति ।**

### ( अनुबन्धचतुष्टयोपसंहारभाष्यम् )

**उक्तः शब्दः । स्वरूपमप्युक्तम् । प्रयोजनान्यप्युक्तानि ॥**

**( उद्द्योतः )** भाष्ये ( **उक्तः शब्द इति** )। **लौकिकानां वैदिकानां** चेत्यनेन विषयभूतः शब्द उक्त इत्यर्थः ॥ **स्वरूपमपीति । अथगौरित्यादिना** ॥ अयमुपसंहारो ग्रन्थस्य, विषयप्रयोजननिरूपणमेतावता कृतमिति बोधयितुम्। तेनैव संबन्धाधिकारिणावुक्ताविति तौ पृथग्नोक्तौ ॥

**( तत्त्वालोकः )** भाष्ये-वक्ष्यमाणप्रविवेकाय शिष्यसौलभ्याय लोकं संगृह्णाति-**उक्त इति । स्वरूपम्**-शब्दस्वरूपम् । **प्रयोजनानीति**-कानि पुनरित्यादिना , उक्तः शब्द इत्यतः प्राक्तनग्रन्थेनेत्यादिः ।

उद्द्योते-**विषयभूतः**-व्याकरणशास्त्रविषयभूतः । **आदिनेति**-ध्वनिः शब्द इत्यन्तेनेति शेषः । ननु किमर्थमयं संग्रह इत्यत आह-**अयमिति । ग्रन्थस्य**-प्रागुक्तस्य । इदं मध्यमणिन्यायेन पूर्वत्रोत्तरत्र चान्वेति । **विषयेति**-"अथ शब्दानुशासनमि"ति प्रथमवाक्यसूचितमित्यादिः । **तेनैव**-विषयप्रयोजनयोरभिधानेनैव । **उक्तौ**-उक्तप्रायौ । **तौ**-सम्बन्धाधिकारिणौ । **पृथक्**-साक्षात् ।

( इत्यनुबन्धचतुष्टयनिरूपणम् ॥ )

### ( अथ शास्त्रनिर्माणरीतिनिरूपणाधिकरणम् )

### ( आक्षेपभाष्यम् )

**शब्दानुशासनमिदानीं कर्तव्यम् । तत्कथं कर्तव्यम् । किं शब्दोपदेशः कर्तव्यः, आहोस्विदपशब्दोपदेशः, आहोस्विदुभयोपदेश इति ? ॥**

**( प्रदीपः ) उभयोपदेश इति ।** हेयोपादेयोपदेशे स्पष्टा प्रतिपत्तिर्भवतीत्युभयोपदेश उद्भावितः ॥

**( तत्त्वालोकः )** भाष्ये-शब्दानुशासनविधानप्रकारनिरूपणायाह-**शब्देति । इदानीम्** । अनुबन्धचतुष्टयनिर्णयसमये । **कर्तव्यमिति**-इति सिद्धमिति शेषः। साध्वसाधुशब्दान्यतरोपदेशे अकृतार्थतां, तथोभयोपदेशे गौरवं सम्भाव्य शब्दानुशासनस्य दुष्करतां विभावयन् सामान्यतस्तावत् पृच्छति-**तत्कथमिति । तत्**-शब्दानुशासनम्। अथ विशिष्य पृच्छति-**किमिति । आहोस्विद्**-अथवा। **उभयेति**-शब्दापशब्देत्यादिः ।

प्रदीपे-ननु गौरवादुभयोपदेशो न सम्भवतीति स कथमुद्भावित इत्यत आह-**हेयेति । इति**-इति हेतोः ।

### ( समाधानभाष्यम् )

**अन्यतरोपदेशेन कृतं स्यात् । तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते । 'पञ्च पञ्चनखा भक्ष्याः' इत्युक्ते गम्यत एतद्—अतोऽन्येऽभक्ष्या इति ॥ अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः । तद्यथा 'अभक्ष्यो ग्राम्यकुक्कुटः अभक्ष्यो ग्राम्यसूकरः' इत्युक्ते गम्यत एतद्-आरण्यो भक्ष्य-इति॥ एवमिहापि। यदि तावच्छब्दोपदेशः क्रियते, गौरित्येतस्मिन्नुपदिष्टे गम्यत एतद्-गाव्यादयोऽपशब्दा इति। अथाप्यपशब्दोपदेशः क्रियते, गाव्यादिषूपदिष्टेषु गम्यत एतद्-गौरित्येष शब्द-इति ॥**

**( प्रदीपः )** यद्यपि प्रतिपत्तिः स्पष्टा, गौरवं तु भवतीत्याह-**अन्यतरेति ।** शब्दापशब्दयोरित्यर्थः । अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते ॥ **पञ्चेति ।** अर्थित्वाद्भक्षणं प्राप्तं पञ्चसु पञ्चनखेषु नियम्यमानं सामर्थ्यादन्येभ्यो निवर्तते । न त्वयं विधिः, अप्राप्तेरभावात् ॥

**( उद्द्योतः )** कियत्तद्भ्योऽन्यत्र डतराभावादाह—**अन्यतरान्येति ।** तत्र सुशब्दोपदेशः प्रयोगविध्यर्थोनुवादः । अपशब्दोपदेशस्तु प्रयोगप्रतिषेधार्थः ॥ **पञ्च पञ्चनखा** इत्यस्य नियमत्वं दर्शयति—**अर्थित्वादिति । नियम्यमानं** पुनः शब्देन बोध्यमानमित्यर्थः ॥ ननु अस्य परिसङ्ख्यात्वात्कथं नियमत्वेन व्यवहारः। अस्ति च नियमपरिसंख्ययोर्भेदः पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणफलो **नियमः** अन्यनिवृत्तिफला च **परिसंख्ये**ति चेन्न । नियमेप्यप्राप्तांशपरिपूरणरूपफलबोधनद्वारार्थान्यनिवृत्तेः सत्त्वेन अभेदमाश्रित्योक्तेः ॥ **विधिरिति ।** अपूर्वविधिरित्यर्थः ॥ ये तु पञ्चपदस्य तदतिरिक्ते लक्षणा भक्ष्यपदस्य चाभक्ष्ये सेति वदन्ति तेषां पदद्वये लक्षणागौरवम्। अस्यैव नियमत्वेन **भक्ष्यनियमेनाऽभक्ष्यप्रतिषेधो गम्यत** इति भाष्यविरोधश्च । नियमपदस्य तद्बोधके लक्षणायां सैव दोषः । अक्षरास्वारस्यं च । नियम्यमानं भक्षणं सामर्थ्यादन्येभ्यो निवर्तत इति कैयटासंगतिश्च । दृष्टान्तदार्ष्टान्तिकयोरत्यन्तवैषम्यापत्तिश्च । अन्यनिवृत्तिफला परिसंख्येति अभियुक्तोक्ति विरोधश्च । सिद्धस्य पुनर्विधानात्प्रापकप्रमाणस्य तदितराविषयत्वरूपसङ्कोचकल्पनम्। तेनान्येषां भक्षणाभावस्तद्भक्षणे प्रायश्चित्तं च सिध्यति । एवसमभिव्याहारे सोपि स्फुटमस्यार्थस्यैव द्योतकः। अन्ययोगव्यवच्छेद एवकारार्थ इति तु सामान्यप्रमाणसंकोचफलितमर्थमादाय नेयम् ॥ **भक्ष्यनियम इति ।** भक्ष्यानुमतिरूप उपदेश इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-विनिगमनाविरहेणैकाश्रयणासम्भवादाह-**अन्यतरेति । कृतं**-कृतकृत्यता । अस्योपपादनायोदाहरणमेवाह-**तद्यथेति ।** यथेत्यर्थः। अथवा तद् अन्यतरोपदेशेनेष्टसाधकं यथेत्यर्थः । **भक्ष्यनियमेन**-रागतः प्राप्तस्य भक्ष्यस्य पुनः शब्दतो विधानेन । **गम्यते**-अर्थापत्त्या ज्ञायते । एवमग्रेऽपि । "पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव । शशकः शल्लकी गोधा खड्गी कूर्मोऽथ पञ्चमः ॥" इति स्मृतेरंशमाह-**पञ्चेति ।** एवं ग्राह्यनियमेनार्थादग्राह्यनिषेधावगतौ दृष्टान्तमुपपाद्य हेयनियमेनार्थादुपादेयप्रतीतावुदाहरणमाह-**अभक्ष्येति ।** अभक्ष्यप्रतिषेधोपदेशेनेत्यर्थः । दार्ष्टान्तिकमुपपादयति-**एवमिति ।** गौरित्यादेः साधुत्वोक्तावर्थाद् गाव्यादीनामसाधुत्वज्ञानमित्युक्त्वा गाव्यादेरसाधुत्वोक्तावर्थाद् गौरित्यादीनां साधुत्वज्ञानमित्याह-**अथेति ।** ननु कीदृशी कतिविधा च साधुता असाधुता च शास्त्रकाराभिमतेति चेद्, अत्रोच्यते, "अनपभ्रष्टताऽनादिर्यद्वाऽभ्युदययोग्यता । व्याक्रिया व्यञ्जनीया वा जातिः कापीह साधुता ॥" इति स्मृतिसमीक्षया-१ अनपभ्रष्टता-अन्यथाऽनुच्चारितता, २ अनादिः-अनादिता ( भावप्रधाननिर्देशात् ), ३ अभ्युदययोग्यता, ४ व्याक्रिया व्यञ्जनीया कापि जातिः-शास्त्रतत्त्वविद्गम्यो जातिविशेषो वा । इति चतुर्विधा साधुता तथा एतद्विपरीता-१ 'अपभ्रष्टता, २ सादिता, ३ प्रत्यवाययोग्यता, ४ तदवच्छेदकजातिविशेषो वा' इति चतुर्धा असाधुता शास्त्रकारसम्मतेति ॥

प्रदीपे- **यद्यपीति**—उभयोपदेशे इति शेषः । **गौरवमिति**—तथापि तत्रेत्यादिः । **इत्याह—**इत्यतः सिद्धान्त्येकदेश्याह । **इत्यर्थः**-इत्यादिः । **स्वभावात्**—शब्दशक्तिस्वाभाव्यात् । **द्विबह्विति**—अत्र

यथासंख्यमन्वयः। **अर्थित्वात्**—रागित्वात्। **भक्षणमिति**—युगपत् सर्वेषामित्यादिः। अत एवाह—**सामर्थ्यादिति**। "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥" इति स्मृत्यनुसारेणाह—**न त्विति**। **अयं**—पञ्च पञ्चनखा भक्ष्या इत्ययम्। **अप्राप्तेरिति**—पञ्चपञ्चनखभक्षणस्येत्यादिः।

उद्द्योते—"किंयत्तदो निर्धारणे द्वयोरेकस्य डतरजि"ति सूत्रेण किंयत्तद्भ्य एव डतरचो विधानमित्याशयेनाह—**किंयत्तद्भ्य इति**। **तत्र**—शब्दापशब्दान्यतरोपदेशे। **प्रयोगेति**—सुशब्देत्यादिः। **प्रयोगेति**—अपशब्देत्यादिः। नियमस्याप्राप्तांशपरिपूरणफलकत्वेन विधिरूपेण प्रवृत्तेः, कैयटे पुनरुक्त्यापत्तेश्चाह—**पुनरिति**। नानासाधनसाध्यक्रियायामेकसाधनप्राप्तिपक्षे अप्राप्तसाधनस्य प्रापको विधिः नियमविधिः। यथा व्रीहीनवहन्तीत्यादिः। व्रीहीणामवघातनखविदलनादिनानासाधनसाध्यवितुषीकरणक्रियायां नखविदलनप्राप्तिकल्पे अप्राप्तावघातस्य प्रापकतयाऽस्य नियमविधिता। उभयोश्च युगपत्प्राप्तावितरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा पञ्च पञ्चनखा भक्ष्या इति। पञ्चनखभक्षणापञ्चनखभक्षणयोः युगपत्प्राप्तावपञ्चनखभक्षणनिवृत्तिपरकतयाऽस्य परिसंख्याविधितेत्याशयेनाह—**नन्वस्येति**। पञ्च पञ्चनखा भक्ष्या इत्यस्येत्यर्थः। **च**—यतः। भेदमेवाह—**पाक्षिकेति**। पाक्षिकी अप्राप्तिर्यस्य स पाक्षिकाप्राप्तिकः, स चासौ अप्राप्तांशः पाक्षिकाप्राप्तिकाप्राप्तांशः, तस्य परिपूरणं पाक्षिकाप्राप्तिकाप्राप्तांशपरिपूरणं तत् फलं यस्येति व्युत्पत्तिः। **अन्येति**—अन्यस्य निवृत्तिरन्यनिवृत्तिः, सा फलं यस्या इति व्युत्पत्तिः। **च**—तु। **अपिना** परिसंख्यासमुच्चयः। **आर्थान्यनिवृत्तेरिति**—आर्थी चेयमन्यनिवृत्तिरिति व्युत्पत्तिः। यथा व्रीहीनवहन्तीत्यनेनावघातविधिना अर्थान्नखविदलननिवृत्तिः। **अभेदमिति**—नियमपरिसंख्ययोरित्यादिः। **उक्तेः**—(अस्य) नियमत्वोक्तेः। यदर्थत्वेन प्रमाणान्तरेणाप्राप्तस्य तदर्थत्वेन प्रापको यो विधिः सोऽपूर्वविधिः। यथा यजेत स्वर्गकाम इति। स्वर्गार्थकत्वेन प्रमाणान्तरेणाप्राप्तस्य यागस्य तदर्थत्वेन विधायकत्वादस्यापूर्वविधिता। प्रकृते तु नियमविधिरित्याशयेनाह—**अपूर्वेति**। ननु परिसंख्यायां शाब्दान्यनिवृत्तिसम्भवे कथमार्थान्यनिवृत्तिरुक्तेत्यत आह—**ये त्विति**। पञ्च पञ्चनखा भक्ष्या इत्यत्रेति शेषः। पञ्चनखपदस्य तात्पर्यग्राहकतामभिप्रेत्याह—**तदिति**। पञ्चपञ्चनखेत्यर्थः। **सा**—लक्षणा। तथा च पञ्चपञ्चनखातिरिक्ता भक्ष्यत्वाभाववन्त इति बोधात् तत्रान्यनिवृत्तेः शाब्दता फलितेति भावः। **तेषां**—तेषाम्मते। ननु फलमुखगौरवं न दोषाधायकमित्यत आह—**अस्यैवेति**। तदतिरिक्ता अभक्ष्या इत्युक्तार्थस्यैवेत्यर्थः। ननु अर्थतो भक्ष्यनियमबोधकेन शब्दतोऽभक्ष्यनिवृत्तिः ज्ञायते इति भाष्यार्थकरणान्न विरोध इत्यत आह—**नियमेति**। **तदिति** नियमेत्यर्थः। **सैव**—लक्षणैव। तथा सति अभक्ष्यप्रतिषेधार्थिकत्वसूचक"गम्यते" इति पदस्वारस्यहानिश्चेत्याशयेनाह—**अक्षरेति**। तस्याः शाब्दत्वे कैयटासाङ्गत्यमपीत्याह—**सामर्थ्यादिति**। अर्थतः न तु शब्दत इति भावः। **अन्येभ्यः**—अभक्ष्येभ्यः। तत्र मते दृष्टान्तेऽन्यनिवृत्तेः शाब्दता, दार्ष्टान्तिकेऽन्यनिवृत्तेरार्थतेत्यभिप्रायेणाह—**दृष्टान्तेति**। तेषां मतेऽन्यनिवृत्तेः शाब्दत्वेन फलत्वोक्तिरयुक्तेत्याशयेनाह—**विरोधश्चेति**। ननु पञ्चेति वाक्यस्य पञ्चपञ्चनखभक्षणबोधकत्वे तदतिरिक्तानामभक्ष्यता न ज्ञायेत, तथा च तदन्यभक्षणे प्रायश्चित्तविधानवैयर्थ्यमापद्येतेत्यतः स्वमते सामञ्जस्यमाह—**सिद्धस्येति**। (रागतः) प्राप्तस्य (पञ्चपञ्चनखभक्षणस्य) इत्यर्थः। पञ्चेति वाक्येनेति शेषः। **प्रमाणस्य**—रागरूपस्य। **तदिति**—पञ्चपञ्चनखेत्यर्थः। **तेन**—तत्कल्पनेन **अन्येषां**—पञ्चपञ्चनखभिन्नानाम्। **तदिति**—अन्येत्यर्थः। एवसमभिव्याहारेऽपि अन्यनिवृत्तेरार्थीत्वमुपपादयितुमाह—**एवेति**। **सोऽपि**—एवकारोऽपि। **अस्य**—रागः पञ्चपञ्चनखेतरादिविषयोऽस्तु इत्याकारकसङ्कोचरूपस्य। विरोधं निराकरोति—**अन्ययोगेति**। **इति तु**—इति प्रामाणिकवाक्यन्तु। **सामान्येति**—सामान्यरागरूपप्रमाणस्य यः पञ्चपञ्चनखेतराविषयत्वरूपसङ्कोचः, तस्य फलिम् "तदन्ये अभक्ष्या" इत्यर्थमादायेत्यर्थः। **नेयं**—सङ्गमनीयम्। तत्र नियमत्वाभावादाह—**भक्ष्यानुमतीति**—केचित्तु पञ्चेत्यादाववधारणविषयबुद्धिस्थवृत्तिपञ्चत्वसंख्यावति पञ्चपदस्य लक्षणा। अवधारणञ्च स्वान्यसंख्याधिकरणासन्वयि समभिव्याहृतप्रकारकज्ञानरूपम्, तेन "अन्येऽभक्ष्याः" इति फलतीति सिद्धान्तिभावं वर्णयन्ति॥

**(आक्षेपभाष्यम्)**

**किं पुनरत्र ज्यायः?॥**

**(प्रदीपः)** किं पुनरिति। उभयोपदेशाद् गुरोर्द्वावपि प्रशस्यौ तयोः को ज्यायानित्यर्थः।

**(तत्त्वालोकः)** भाष्ये—साधुशब्दोपदेशे विधेयतायाः स्पष्टीकरणाय पृच्छति—**किं पुनरिति**। **ज्यायः**—अतिशयेन प्रशस्यम्।

प्रदीपे—**उभयेति**—शब्दापशब्देत्यर्थः। **द्वावपि**—शब्दोपदेशापशब्दोपदेशयोः प्रत्येकमपि। **तयोः**—शब्दोपदेशापशब्दोपदेशयोः मध्ये।

**(समाधानभाष्यम्)**

**लघुत्वाच्छब्दोपदेशः।**

**लघीयाञ्छब्दोपदेशः। गरीयानपशब्दोपदेशः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा—गौरित्यस्य शब्दस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः। इष्टान्वाख्यानं खल्वपि भवति॥**

**(प्रदीपः) इष्टेति।** साधुशब्दप्रयोगाद्धर्मावाप्तेरित्यर्थः। अथवा उपादेयोपदेशात्साक्षात्प्रतिपत्तिर्भवतीति भावः॥

**(तत्त्वालोकः)** भाष्ये—**शब्दोपदेश इति**। ज्यायानिति शेषः। **लघीयान्**—अतिशयेन लघुः। **गरीयान्**—अतिशयेन गुरुः। शब्दोपदेशकल्पे लाघवे बीजभूतामपशब्दापेक्षया शब्दाल्पतामुपपादयति—**एकैकस्येति**। शब्दोपदेशे न लाघवमेव, अपि तु तेनोपदेष्टा स्वेष्टं धर्ममपि प्राप्नोति, तथा श्रोता स्वेष्टं शब्दाशुबोधमप्यवाप्नोतीत्याशयेनाह—**इष्टेति**। इष्टश्चेदमन्वाख्यानमिति व्युत्पत्तिः। इष्टजनकमपि शब्दान्वाख्यानं निश्चयेन भवतीत्यर्थः। इष्टान्वाख्यानपदयोः लक्षणायाः, खलुपदस्य निश्चयार्थकतायाः, अपेः भिन्नक्रमस्य च स्वीकारात्।

प्रदीपे—उपदेशकाभिप्रायेणाह—**साधुशब्देति**। श्रोत्रभिप्रायेणाह—**अथवेति**। **उपादेयेति**—ग्राह्यसाधुशब्देत्यर्थः।

**(आक्षेपभाष्यम्)**

**अथैतस्मिञ्छब्दोपदेशे सति किं शब्दानां प्रतिपत्तौ प्रतिपदपाठः कर्तव्यः। गौरश्वः पुरुषो हस्ती शकुनिर्मृगो ब्राह्मण इत्येवमादयः शब्दाः पठितव्याः?॥**

**(उद्द्योतः)** भाष्ये—**प्रतिपत्तावित्यस्योपायभूत इति शेषः॥**

**(तत्त्वालोकः)** भाष्ये—एवं शब्दोपदेशे कर्तव्यत्वेन निश्चितेऽपि तत्र प्रकारविशेषजिज्ञासया पृच्छति—**अथेति**। अनन्तरमित्यर्थः। **एतस्मिन्**—लघुभूते, इष्टसाधके च। **शब्दोपदेशे इति**—विधेयत्वेन व्यवस्थापिते इति शेषः। किमिति प्रश्ने। **प्रतिपदेति**—पदं पदं प्रति प्रतिपदं, तस्य पाठः प्रतिपदपाठः। पदस्य पदस्य पाठ इत्यर्थः। अत्रैव प्रतिपदपाठस्वरूपमाह—**गौरिति**।

उद्द्योते-प्रतिपत्तावित्यत्र निमित्तार्थे सप्तमीमभिप्रेत्य समुच्चितान्वयायाह-**उपायेति ।**

## ( समाधानभाष्यम् )

नेत्याह । अनभ्युपाय एष शब्दानां प्रतिपत्तौ प्रतिपदपाठः ॥ एवं हि श्रूयते—"बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नान्तं जगाम" ॥ बृहस्पतिश्च प्रवक्ता, इन्द्रश्चाध्येता, दिव्यं वर्षसहस्रमध्ययनकालो, न चान्तं जगाम, किं पुनरद्यत्वे । यः सर्वथा चिरं जीवति वर्षशतं जीवति । चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति—आगमकालेन, स्वाध्यायकालेन, प्रवचनकालेन, व्यवहारकालेनेति । तत्र चास्यागमकालेनैवायुः कृत्स्नं पर्युपयुक्तं स्यात् । तस्मादनभ्युपायः शब्दानां प्रतिपत्तौ प्रतिपदपाठः ॥

**( प्रदीपः ) बृहस्पतिरिन्द्रायेति ।** प्रतिपदपाठस्याशक्यत्वं प्रतिपादयितुमयमर्थवादः ॥ **शब्दानामिति ।** शब्दपारायणशब्दो योगरूढः शास्त्रविशेषस्य, तत्र प्रतिपदोक्तानामिति विशेषणाभिधानाय गम्यमानार्थस्यापि शब्दानामित्यस्य प्रयोगः ॥ एकदेशोपयोगादपि लोके उपयुक्तमित्युच्यते, यथौषधसंस्कृतघृतमात्रैकदेशोपयोगे उपयुक्तं घृतमिति व्यवहारः, तथेह नेति प्रतिपादयति-**चतुर्भिरिति । आगमकालो** ग्रहणकालः । **स्वाध्यायकालोऽ**भ्यासकालः । **प्रवचनकालोऽ**ध्यापनकालः । **व्यवहारो** याज्ञे कर्मणि ॥

**( उद्द्योतः ) अनभ्युपाय इति ॥** तत्त्वं चाशक्यत्वेन कृत्स्नाभिमतानभ्युपायत्वात् । तत्रार्थवादमाह—**बृहस्पतिरिति ॥** ननु शब्दानामिति पुनरुक्तमत आह—**योगरूढ इति ।** अर्थपौनरुक्त्यमाशङ्क्य निराकरोति—**तत्रेति** ॥ ननु यावदेवाऽध्येष्यते तावदेवाभ्युपयुक्तं स्यात् । अत आह—भाष्ये **चतुर्भिरिति ॥** उक्तमेव तदाशयमाह—**एकदेशेत्यादि ।** विद्योपयोगाधारभूतानां कालानां विद्यां प्रत्यप्याधारत्वात् तस्य च करणत्वविवक्षा बोध्या । चतुर्षु कालेषु विद्योपयुज्यते इति फलितोऽर्थः । तत्राद्ययोर्विद्यार्थ्येयं बुद्धिमानित्यादरपूर्वकमन्नवस्त्रादिलाभरूप उपयोगः । तृतीये प्रतिष्ठा सच्छिष्यलाभद्वारार्थप्राप्तिः सत्कारविशेषश्च । चतुर्थे यज्ञाद्यनुष्ठानकालेऽपशब्दप्रयोगप्रयुक्तप्रायश्चित्ताभावः कर्मसाङ्गता दक्षिणालाभः प्रतिष्ठा चेत्युपयोगः । तादृशश्चोपयोगः सर्वाध्ययन एव ॥ भाष्ये **पर्युपयुक्तमिति ।** समाप्तमित्यर्थः । पर्यवसन्नमिति पाठान्तरम् । न चेष्टापत्तिः । विद्योच्छेदापत्तेः । कर्मसु प्रायश्चित्तविधिवैयर्थ्यापत्तेश्च ॥

**( तत्त्वालोकः )** भाष्ये-तटस्थ उत्तरमनुवदति-**नेत्याहेति ।** न ( शब्दज्ञानाय प्रतिपदपाठः कर्त्तव्यः ) इति ( सिद्धान्ती ) वदतीत्यर्थः । कुत एवमित्यत आह-**अनभ्युपाय इति ।** यत इत्यादिः । **एष**-गौरश्च इत्यादिः । प्रतिपदपाठस्य शब्दज्ञानानुपायतां साधयितुमाह-**एवमिति । हि**-यतः । **श्रूयते**-श्रुतिः । मनुष्याणामेकवर्षं देवानामेकाहोरात्र इति मानक्रममभिप्रेत्याह-**दिव्यमिति ।** "कालाध्वनोरत्यन्तसंयोगे" इति सूत्रेण द्वितीया । **शब्दानामिति**-बोधकमिति शेषः । **शब्दपारायणं**-शब्दपारायणाख्यशास्त्रविशेषम् । **अन्तं**-शब्दानामन्तम् । **जगाम**-जगामेति । श्रुतेः फलितार्थमाह-**बृहस्पतिश्चेति । चकारौ** बृहस्पतीन्द्रयोः साधनसम्पन्नतां सूचयन्तौ आधुनिकाध्यापकाध्येत्रोस्तद्राहित्यं द्योतयतः । **न च**-नैव । पुरा **सर्वथा** सम्पन्नानां वक्तृश्रोतृसमयानां समवधानेऽपि यदि प्रतिपदपाठेन शब्दसमाप्तिर्न जाता, तर्हि का सम्भावना सम्प्रति सर्वथा हीनानां वक्त्रादीनां समवधाने प्रतिपदपाठेन शब्दसमाप्तेरित्याशयेनाह-**किं पुनरिति ।** अस्मिन् समये प्रतिपदपाठेन शब्दानामन्तं गमिष्यतीति किं पुनर्वाच्यमित्यर्थः । **अद्यत्वे इति**-अस्य देहलीदीपन्यायेन पूर्वत्रोत्तरत्र च सम्बन्धः । **सर्वथा**-अत्यन्तम् । **वर्षशतं**-वर्षाणां शतम् । "कालाध्वनो"रित्यनेन द्वितीया । प्रक्रियते व्यवच्छिद्यतेऽनेनेति व्युत्पत्तौ घञमभिप्रेत्याह-**प्रकारैरिति ।** सामान्यव्यावर्त्तकैः विशेषैरित्यर्थः । **विद्या**-विद्यते ज्ञायतेऽनयेति विद्या । **उपयुक्ता**-सफला । चतुरः प्रकारानेव स्पष्टयति-**आगमेति ।** ननु किमागतमेवावर्तेत्यत आह-**तत्रेति ।** चतुर्णां कालानां मध्ये इत्यर्थः । **अस्य**-अध्येतुः । **कृत्स्नं**-सकलम् । **तस्मात्**-प्रतिपदपाठेन सर्वशब्दज्ञानाद्यसम्भवात् ।

प्रदीपे-ननु प्राशस्त्यनिन्दान्यतरपरं वाक्यमर्थवादः । स च लक्षणया विधेयनिषेध्ययोः प्राशस्त्यनिन्दितत्वे प्रतिपादयतीति सिद्धान्तः । तथा च कथमनेनार्थवादेन प्रतिपदपाठस्य शब्दप्रतिपत्त्यनभ्युपायत्वं बोध्यते इत्यत आह-**प्रतिपदेति ।** शब्दाः प्रतिपदपाठेन ज्ञातुमशक्याः आनन्त्यादिति बोधनद्वारा अर्थवादेन प्रतिपदपाठस्य तदनभ्युपायत्वबोधनसम्भवादिति भावः । **प्रतिपादयितुं**-प्रतिपादयतः । **अयम्**-बृहस्पतिरित्यादिः । **योगरूढ इति**-शब्दानां पारमन्तमयते गच्छति येनेति व्युत्पत्तौ निष्पन्नस्य "शब्दपारायण"शब्दस्य प्रतिपदोक्तशब्दप्रतिपादके शास्त्रविशेषे रूढतया न तद्घटकशब्दशब्दस्य व्यर्थतेति भावः । **तत्र**-श्रुतौ । **प्रयोग इति**-शब्दपारायणशब्दस्य योगरूढतया तेन ज्ञातेऽपि शब्दे "पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेने"ति नियमेन प्रतिपदोक्तानामित्यस्यान्वयासम्भवात् तत्र तदन्वयाय शब्दानामिति प्रयुक्तमित्याशयः । **अपिना** समुदायसंग्रहः । **औषधेति**-औषधेन औषधसम्बन्धिसारभागादिना संस्कृता परिशोधिता या घृतस्य मात्रा परिमितिः तदेकदेशस्योपयोगे सेवनेऽपि इत्यर्थः । **इह**-शास्त्रे । व्यवहार इत्यस्यानुषङ्गः । **ग्रहणेति**-अध्ययनेत्यर्थः । **अभ्यासेति**-मननेत्यर्थः । व्यवहारशब्दस्य यागपुरुषोभयार्थकर्मादौ यथायोग्यमुपयोग इत्यर्थमभिप्रेत्याह-**याज्ञे इति ।** प्रवचनस्य व्यवहारत्वेऽपि पुरुषमात्रार्थत्वेनोभयार्थत्वात् पृथगुक्तिः ।

उद्द्योते—ननु लक्षणेन प्रत्याहारसंज्ञादिज्ञानपूर्वकशब्दज्ञानापेक्षया प्रतिपदपाठेन साक्षाच्छब्दज्ञानस्य लघुतया कथं प्रतिपदपाठस्य शब्दज्ञानानुपायत्वं भाष्यकृतोक्तमित्यत आह-**तत्त्वञ्चेति ।** ( तस्य तत्र ) अनभ्युपायत्वञ्चेत्यर्थः । शब्दानामानन्त्यात् प्रपिपदपाठेन तदन्तगमनस्येति शेषः । **कृत्स्नेति-इष्टसकल**शब्दप्रतिपत्त्यनभ्युपायत्वादित्यर्थः । प्रतिपदपाठस्येत्यादिः । **तत्र**-अनभ्युपायत्वे । **शब्दानामितीति**-शब्दपारायणघटकशब्दपदमित्यर्थः । नन्वेवमपि शब्दपारायणपदस्य योगरूढतया तेनैव शब्दानां पारायणविषयत्वावगतिः स्यादिति शब्दानामित्युपादाने अर्थपुनरुक्तिरस्त्येवेत्याशयेनाह-**अर्थेति । आशङ्क्य**-तदाशङ्कां हृदये निधाय । **अभ्युपयुक्तम्**-अभीष्टसाधकम् । **स्यादिति**-तथा च किं समाप्त्येति शेषः । मदाशयात्कैयटाशयो न भिन्न इत्याह-**उक्तमेवेति ।** मदुक्तमेवेत्यर्थः । **तदाशयमिति**-"चतुर्भिरि"ति भाष्याशयमित्यर्थः । सदृष्टान्तमिति शेषः । ननु कालानां विद्योपयोगाधारत्वेऽपि विद्यानाधारत्वात् कथं "चतुर्भिश्च प्रकारैरि"त्यादि "व्यवहारकालेने"त्यन्तभाष्ये तेषां विद्यां प्रति प्रकारता समाश्रितेत्यत आह-**विद्योपयोगेति । कालानामिति**-परम्परयेति शेषः । **आधारत्वादिति**-तां प्रति प्रकारताऽश्रयणमिति शेषः । ननु कालानां विद्याधारत्वे कथं तत्र तत्र तृतीयोपपत्तिरित्यत आह—**तस्य चेति ।** आधारस्य चेत्यर्थः । **तत्र**-चतुर्णां मध्ये ।

आद्ययोः–आगमस्वाध्यायकालयोः । **पूर्वकमिति**–परैर्दानादिति शेषः । **उपयोग इति**–विद्याया इत्यादिः । **तृतीये**–अध्यापनकाले । **विशेषश्चेति**–धर्मविशेषोऽपि बोध्यः। विद्याया उपयोग इत्यस्यानुषङ्गः । **चतुर्थे**–व्यवहारकाले । **उपयोग इति**–विद्याया इत्यस्यानुषक्तस्य मध्यमणिन्यायेन पूर्वत्रोत्तरत्र चान्वयः। पर्यन्त्समिति पाठान्तरानुरोधेन "आगमकालेने"ति तृतीयान्तपाठानुसारेण चाह–**समाप्तमिति । केचित्तु** "आगमकाले" इति सप्तम्यन्तपाठमभ्युपगम्य तेषां कालानां मध्ये आगमकालादारभ्य समाप्तिपर्यन्तम् अस्याधुनिकस्य सकलमायुः नैव पर्युपयुक्तं पर्याप्तं स्यादित्यर्थं वदन्ति । प्रतिपदपाठेन **शब्दोपदेशे** अध्येतुरागमकालेनैव सकलायुषः समाप्तिः स्यादित्यापत्ताविष्टतां निराकरोति–**न चेति । विद्येति**–तथा सति फलाभावादित्यादिः । अध्ययनकालेनैव सर्वायुषः समाप्ततया कर्मानुष्ठानासम्भवात् कर्मसु कृतानामपराधानां निवर्त्तनाय यद्यत् प्रायश्चित्तं विहितं तस्य तस्य वैयर्थ्यञ्चापद्येतेत्य शयेनाह–**कर्मस्विति ।**

**( आक्षेपभाष्यम् )**

**कथं तर्हीमे शब्दाः प्रतिपत्तव्याः ? ॥**

**( समाधानभाष्यम् )**

**किंचित्सामान्यविशेषवल्लक्षणं प्रवर्त्यम् । येनाल्पेन यत्नेन महतो महतः शब्दौघान् प्रतिपद्येरन् ॥**

**किं पुनस्तत् ? ।**

**उत्सर्गापवादौ । कश्चिदुत्सर्गः कर्तव्यः, कश्चिदपवादः ॥**

**( प्रदीपः ) किंचिदिति ।** सामान्यविशेषौ यस्मिंस्तत्सामान्यविशेषवत् । **कर्मण्यण् , आतोऽनुपसर्गे क** इत्यादि ॥

**( उद्द्योतः )** ननु तदात्मकत्वाल्लक्षणस्य मतोरनुपपत्तिरत आह–**सामान्यविशेषा**विति । **लक्षणं** शास्त्रमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—ये शब्दाः स्वरूपत उपदेशेनापि ज्ञातुं परिगणितुञ्च न शक्याः, कथन्ते शास्त्रेण बोद्धुमनुगन्तुञ्च योग्या इत्याशयेन पृच्छति–**कथमिति । इमे**–प्रतिपदपाठेन दुर्ज्ञेयाः । उत्तरयति सिद्धान्ती—**किञ्चिदिति** । लघुभूतमित्यर्थः । तदित्यादिः । ननु किं स्यात्तेन प्रवर्तितेनेत्यत आह–**येनेति** । शास्त्रेणेति शेषः । **यत्नेन**–आयासेन । **महतो महत इति**–अस्य शब्दौघविशेषणस्य वीप्सायां "नित्यवीप्सयोरि"ति सूत्रेण द्वित्वम् । अथवा तयोः प्रथमः पञ्चम्यन्तः, चरमस्तद्विशेषणम् । तथा च विशालादपि विशालान् शब्दसमुदायानित्यर्थः । शास्त्रीयसामान्यविशेषौ कीदृशावित्याशयेन पृच्छति–**किं पुनरिति । तत्**–सामान्यविशेषयोः स्वरूपम् । उत्तरयति–**उत्सर्गेति** । फलितमाह–**कश्चिदिति** । शास्त्रे योग इत्यादिः । **अपवाद इति**–कर्तव्य इत्यस्यानुषङ्गः ।

प्रदीपे—सामान्यविशेषवदित्यत्र सामान्यविशेषशब्दे समासान्तत्वस्य, सादृश्यार्थे वतुपश्च भ्रमो मा भूदित्याशयेनाह–**सामान्येति । सामान्यविशेषयोः** स्वरूपे क्रमशः भाष्योक्ते एवाह–**कर्मणीति । आदिना**–'कर्तरि शप्,दिवादिभ्यः श्यन्' इत्यादिसंग्रहः ।

उद्द्योते—**तदात्मकत्वात्**–सामान्यविशेषस्वरूपकत्वात् । **मतोः**–सामान्यविशेषवच्छब्दघटकमतुपः । नन्वेवं लक्षणपदप्रयोगो न युज्यते इत्यत आह–**शास्त्रमिति** । पाणिनीयव्याकरणमित्यर्थः ।

**( आक्षेपभाष्यम् )**

**कथंजातीयकः पुनरुत्सर्गः कर्तव्यः, कथंजातीयकोऽपवादः ? ॥**

**( उद्द्योतः )** भाष्ये **कथंजातीयक इति** । केन प्रकारेणेत्यर्थः । एतेनैवंजातीयकेन शास्त्रेण लघुशब्दोपदेशप्रवृत्तिः पाणिनेरुचितेति सूचितम् ॥

**( तत्त्वालोकः )** भाष्ये—सामान्यविशेषयोरुदाहरणे ज्ञातुं विशेषेण पृच्छति–**कथमिति** । ननूक्तार्थानामप्रयोग इति नियमस्त्वात् कथं प्रकृते एकस्मिन्नेव प्रकाररूपार्थे थमुजातीयर्प्रत्यययोः विधामिति चेन्न, एतादृशभाष्यकृत्प्रयोगेणोक्तनियमस्यानित्यतासूचनात् । अथवा प्रकारमात्रे थमुः, प्रकारवति जातीयरित्यर्थभेदाश्रयणात् । न चैकेनैव सम्भवति निर्वाहे कथमुभयमाश्रितमिति वाच्यम्, स्वतन्त्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वात्, शिंशपा वृक्ष इतिवत्तदुपपत्तेश्च ।

उद्द्योते-**एवंजातीयकेन**—उत्सर्गापवादजातीयकेन । **शास्त्रेण**–अष्टाध्यायीरूपेण ।

**( समाधानभाष्यम् )**

**सामान्येनोत्सर्गः कर्तव्यः । तद्यथा—"कर्मण्यण्" । तस्य विशेषेणापवादः । तद्यथा—"आतोऽनुपसर्गे कः" ॥**

**( तत्त्वालोकः )** भाष्ये-प्रकृतसामान्यविशेषशब्दयोः सूत्रपरतां सूचयन् तयोः क्रमश उदाहरणे आह—**सामान्येनेति । तस्य**-उत्सर्गस्य ।

**( जातिव्यक्तिपदार्थनिर्णयाधिकरणम् । )**

**( आक्षेपभाष्यम् )**

**किं पुनराकृतिः पदार्थः, आहोस्विद् द्रव्यम् ? ॥**

**( समाधानभाष्यम् )**

**उभयमित्याह ॥**

**कथं ज्ञायते ? ।**

**उभयथा ह्याचार्येण सूत्राणि पठितानि । आकृतिं पदार्थं मत्वा—"जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्" इत्युच्यते । द्रव्यं पदार्थं मत्वा "सरूपाणाम्—" इत्येकशेष आरभ्यते ॥**

**( प्रदीपः )** सकलशास्त्रव्यवस्थैकतरपक्षाश्रयणे न सिध्यतीति पक्षद्वयाश्रयणं प्रश्नपूर्वकं करोति–**किं पुनरिति** । आकृतिपक्षे केवल आश्रीयमाणे **सकृद्गतौ विप्रतिषेध** इत्यादि नोपपद्यते, केवलेपि व्यक्तिपक्षे **पुनःप्रसङ्गविज्ञाना**दित्यादि न घटते । तस्माल्लक्ष्यसिद्धये कश्चित्प्रदेशे कश्चित्पक्षः परिगृह्यते । तत्र जातिवादिन आहुः—जातिरेव शब्देन प्रतिपाद्यते, व्यक्तीनामानन्त्यात्संबन्धग्रहणासम्भवात् । सा च जातिः सर्वव्यक्तिष्वेकाकारप्रत्ययदर्शनादस्तीत्यवसीयते । तत्र गवादयः शब्दा भिन्नद्रव्यसमवेतां जातिमभिदधति । तस्यां प्रतीतायां तदावेशात्तदवच्छिन्नं द्रव्यं प्रतीयते । शुक्लादयः शब्दागु णसमवेतां जातिमाचक्षते । गुणे तु तत्संबन्धात्प्रत्ययः, द्रव्ये संबन्धिसंबन्धात् । संज्ञाशब्दानामप्युत्पत्तिप्रभृत्याविनाशात् पिण्डस्य कौमारयौवनाद्यवस्थाभेदेऽपि स एवायमित्यभिन्नप्रत्ययनिमित्ता डित्थत्वादिका जातिर्वाच्या । क्रियास्वपि जातिर्विद्यते सैव धातुवाच्या । पठति पठतः

पठन्तीत्यादेरभिन्नस्य प्रत्ययस्य सद्भावात्तन्निमित्तजात्यभ्युपगमः ॥ व्यक्तिवादिनस्त्वाहुः—शब्दस्य व्यक्तिरेव वाच्या, जातेस्तूपलक्षणभावेनाश्रयणादानन्त्यादिदोषानवकाशः ॥

**( उद्योतः ) आकृतिपक्षे इति** । तत्र उद्देश्यतावच्छेदकताक्रान्ते क्वचिच्चरितार्थयोर्द्वयोः सत्प्रतिपक्षन्यायेन विरोधस्थले उभयोरप्यप्राप्तौ **विप्रतिषेधे** परमिति विध्यर्थम्, न तु नियमार्थमिति **सकृद्गतौ**विति न सिध्यति । व्यक्तौ तु तत्तद्व्यक्तिविषययोरपि शास्त्रयोरचारितार्थ्यात्पर्यायेणोभयप्राप्तौ नियमार्थं तदिति **पुनःप्रसङ्गे**त्यादि न सिध्यतीत्यर्थः । इदं च **विप्रतिषेध**सूत्रे निरूपयिष्यते ॥ भाष्ये **जात्याख्यायामिति** । व्यक्तौ पदार्थे संपन्ना व्रीहय इति व्यक्तिबहुत्वाद्बहुवचनं सिद्धमेवेति व्यर्थं तत्स्यादिति भावः । **सरूपाणामिति** । आकृतेरेकत्वादेवैकशब्दप्रयोगोपपत्तौ तदुक्तिसंभवो व्यक्तिपक्ष एवेति भावः । न चाकृतिपक्षेऽपि अक्षाः पादा इत्याद्यर्थं स आवश्यक इति वाच्यम् । तावतापि कांचिदेकां जातिं स्वीकृत्य तस्या एव शब्दवाच्यत्वपरम्परयात्र व्यक्तिप्रत्यय इति **सरूप**सूत्रे कैयटेनैव वक्ष्यमाणत्वात् । **जातौ न जाति**रिति परेषां दर्शनं नास्माकमिति च तत्रोक्तम् ॥ **तस्यां प्रतीतायामिति** । शब्दशक्यत्वेन गृहीतायामित्यर्थः । एवम**भिदधती**त्यस्याभिधाविषयत्वेन गृह्णन्तीत्यर्थः ॥ **तदावेशात्** तत्समवायात् ॥ **प्रतीयत इति** । अविनाभावाच्छब्दजन्यबोधविषयो भवतीत्यर्थः ॥ **प्रत्ययो** ज्ञानम् ॥ **उपलक्षणभावेनेति** । शक्यतावच्छेदकत्वेनेत्यर्थः । तत्र तु न शक्तिरिति मञ्जूषायां प्रतिपादितम् ॥

**( तत्त्वालोकः )** भाष्ये—प्रकृतसामान्यविशेषशब्दयोः सूत्रपरतां सूचयन् तयोः क्रमशः उदाहरणे आह—**सामान्येनेति । तस्य—**उत्सर्गस्य उत्सर्गापवादसूत्रघटकपदानामर्थः क इति जिज्ञासया पृच्छति—**किं पुनरिति । आकृतिः**—जातिः । आक्रियते व्यवच्छिद्यते स्वाश्रयोऽनयेत्याकृतिरिति व्युत्पत्तिः । **द्रव्यम्**—व्यक्तिः । पदार्थ इत्यस्यानुषङ्गः ।

उत्तरमनुवदति तटस्थः—**उभयमिति** । उभयं ( जातिव्यक्ती पदार्थौ ) इति वदति ( सिद्धान्ती ) इत्यर्थः । लक्ष्यानुरोधात् क्वचिज्जातेः क्वचिद्व्यक्तेश्च वाचकं पदमाश्रित्याष्टाध्यायी रचिता पाणिनिनेति उत्सर्गापवादसूत्रघटकपदानां क्वचिज्जातिः क्वचिद्व्यक्तिश्चार्थ इति भावः । सूत्रकृता जातिं व्यक्तिं वा पदार्थमाश्रित्य शास्त्रं प्रणीतमित्यत्र किं प्रमाणमिति जिज्ञासया सिद्धान्तिवचनभावानभिज्ञो लक्षणैकचक्षुष्कः पृच्छति—**कथमिति । ज्ञायते इति**—उभयं पदार्थ इतीति शेषः । उत्तरयत्येकदेशी—**उभयथेति** । जातिपदार्थाश्रवणव्यक्तिपदार्थाश्रयणरूपप्रकारद्वयेनेत्यर्थः । **हि**—यतः । **आचार्येण**—पाणिनिना । ननु सूत्रद्वयस्योदाहार्यतया कथं सूत्राणीति बहुवचनान्तः सङ्गच्छते इति चेन्न, आर्षत्वाद्, अन्येषामपि उदाहरणीयसूत्राणां सम्भवाच्च । उभयथेत्यादेः व्याख्यानं करोति—**आकृतिमित्यादिना** । यदि सर्वत्र व्यक्तिरेव पदार्थः स्यात्तर्हि गावः पूज्या इत्यादौ व्यक्तिबहुत्वादेव बहुवचनस्य सिद्धतया "जात्याख्यायामि"ति सूत्रं नारभेत, यतस्तदारभतेऽतो निर्धार्यते जातिरपि पदार्थ इतीति भावः । **इतीति**—सूत्रमिति शेषः । आचार्येणेत्यस्यानुषङ्गः । **इति**—इत्यादि । **एकशेषः**—एकशेषविधायकः । योग इति शेषः । आचार्येणेत्यस्यानुषङ्गः । यदि सर्वत्र जातिरेव पदार्थः स्यात्तर्हि जातेरेकत्वात् सर्वत्रैकशब्दप्रयोगादेव निर्वाहेण एकदा सरूपानेकशब्दानामप्रसङ्गात् "सरूपाणामि"ति सूत्रं नारभेत, यतस्तदारभतेऽतो निर्णीयते व्यक्तिरपि पदार्थ इतीति भावः ।

प्रदीपे—**शास्त्रेति**—अष्टाध्यायीरूपशास्त्रेत्यर्थः । **आश्रयणे इति**—सतीति शेषः । **इति**—इति हेतोः । लक्ष्यानुरोधेनेति शेषः । **करोतीति**—सिद्धान्तीत्यादिः । अन्यतरपक्षाश्रयणे सकलशास्त्रव्यवस्थाया असिद्धिमुपपादयितुमुपलक्षणतयाऽऽह—**आकृतीति** । व्यक्तिपक्षव्यावर्त्तनायाह—**केवले इति** । परिभाषामाह—**सकृदिति । आदिना** "यद्बाधितं तद्बाधितमेवे"त्यस्य संग्रहः । जातिपक्षव्यवच्छेदायाह—**केवलेऽपीति** । केवले व्यक्तिपक्षेऽपीत्यन्वयः । आश्रीयमाणे इत्यस्यानुषङ्गः । परिभाषामाह—**पुनरिति । आदिना** "सिद्धमि"त्यस्य संग्रहः । उत्तरार्थं कथयन्नुपसंहरति—**तस्मादिति** । सकलशास्त्रव्यवस्थाया एकतरपक्षाश्रयणेऽसिद्धत्वादित्यर्थः । व्यक्तिपक्षेऽपि यत्र वने अन्यबहुवृक्षसत्त्वेऽपि आम्रव्यक्तिरेकैव तत्र लक्षणया जातिपरत्वे इह आम्राः सन्तीति प्रयोगस्य साधनाय "जात्याख्यायामि"ति सूत्रस्य, तथा जातिपक्षेऽपि हरय इत्यादौ नानार्थानुरोधात् "सरूपाणामि"ति सूत्रस्य चावश्यकतया उभयथेत्युत्तरस्यायुक्ततां सूचयन्नाह—**लक्ष्येति** । लक्ष्यानुरोध एव स्थलभेदेन जातिव्यक्त्योः पदार्थताऽश्रयणे कारणमित्याशयः । **कश्चित्पक्षः**—यथायोग्यं जातिपक्षो व्यक्तिपक्षो वा । प्रसङ्गाज्जातिव्यक्तिपक्षौ क्रमेणोपपादयितुमाह—**तत्रेति** । जातिव्यक्तिपक्षयोर्मध्ये इत्यर्थः । शब्दानां व्यक्तौ शक्तिरिति पक्षे "नागृहीतविशेषणा बुद्धिः विशेष्येषूपजायते" इति न्यायेन जातावपि शक्तेर्वाच्यत्वाद् गौरवमिति लाघवाज्जातावेव शक्तिर्वाच्या, आह च—"विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे" इतीत्याशयेनाह—**जातिरिति** । किञ्च यत्किञ्चिद्व्यक्तौ शक्तिः ? सकलव्यक्तिषु वा ? इति विकल्पे आद्यस्य शक्तिज्ञानाभावेऽपि यत्किञ्चिद्( शक्त्यनाश्रय )व्यक्तेः शाब्दबोधोदयेन व्यतिरेकव्यभिचाराद् दूषिततया द्वितीयं निराकरोति—**व्यक्तीनामिति । सम्बन्धग्रहणेति**—शक्तिज्ञानेत्यर्थः । जातिसत्त्वे मानमाह—**सा चेति । एकाकारप्रत्ययेति**—अयं गौरयं गौरित्याद्यनुगताकारप्रतीतीत्यर्थः । जातिपक्षं सामान्येनोपपाद्य विशेषतयोपपादयति—**तत्रेति** । द्रव्यगुणसंज्ञाक्रियाशब्दानां मध्ये इत्यर्थः । **भिन्नेति**—नाना( गवादी )त्यर्थः । **तस्यां**—( गोत्वादि ) जातौ । विशिष्टबुद्धिम्प्रति विशेषणज्ञानस्य कारणत्वादाह—**प्रतीतायामिति । तदिति**—जातीत्यर्थः । **गुणेति**—शुक्लादीत्यादिः । **तदिति**—( शुक्लत्वादि ) जातीत्यर्थः । **द्रव्ये**—शुक्लादिगुणवत्पटादौ । **सम्बन्धिसम्बन्धात्**—शुक्लत्वादिजातिसमवायिशुक्लादिगुणसमवायात् । प्रत्यय इत्यस्यानुषङ्गः । ननु प्रयोजनाभावाद् एकमात्रवृत्तिधर्मस्य न जातितेति निर्णयात् संज्ञाशब्दस्थले संज्ञिनः पिण्डस्यैकतया तद्वृत्तिधर्मस्य जातित्वाभावेन संज्ञाशब्दस्य जातिवाचकत्वासम्भवात् कथन्तत्र निर्वाहोऽत्र मते इत्यत आह—**संज्ञाशब्दानामपीति** । अस्य जातिर्वाच्येत्यत्रान्वयः । अत्र क्रमप्रतिपादने तात्पर्याभावादेव गुणानन्तरं क्रियां विहाय संज्ञा समुपपादितेति भावः । **अभिन्नेति**—अभिन्नप्रत्ययो निमित्तं यस्या इति व्युत्पत्तिः । **डित्थेति**—"डित्थः काष्ठमयो हस्ती डवित्थस्तन्मयो मृगः" इत्यादिकोशात् डित्थादयः संज्ञाशब्दाः । **सैव**—जातिरेव । चेति शेषः । ननु क्रियासु जातिरस्तीत्यत्र किं मानमित्यत आह—**पठतीति । तन्निमित्तजातीति**—अभिन्नप्रत्ययनिमित्तपठनत्वादिजातीत्यर्थः । गवादिशब्दानां गोत्वादिजातौ शक्तिरिति पक्षे अनन्तगवादिव्यक्तिघटितस्य गवेतरासमवेतत्वविशिष्टसकलगोसमवेतत्वादिरूपस्य गोत्वत्वादेः शक्यतावच्छेदकतायाः, गवादिविशेष्यकगोत्वादिप्रकारकशाब्दबोधम्प्रति गोत्वादिशक्तिज्ञानस्य कारणत्वेन कारणतावच्छेदकतायाश्च प्रसङ्गेनातिगौरवादाह—**शब्दस्येति । आदिना** व्यतिरेकव्यभिचारगौरवयोः संग्रहः ।

उद्द्योते—**तत्र**—जातिपक्षे । **क्वचिदिति**—व्यक्तिविशेषे परस्परपरिहारेणेति शेषः । **द्वयोरिति**—विध्योरिति शेषः । **सत्प्रतिपक्षन्यायेन**—साध्याभावव्याप्यवान् पक्षः सत्प्रतिपक्षः । यत्र शब्दो नित्यः श्रावणत्वाच्छब्दत्ववदिति वादिनः नित्यत्वव्याप्यश्रावणत्ववान् शब्द इति

परामर्शः, तथा शब्दोऽनित्यः कार्यत्वाद् घटवदिति प्रतिवादिनः अनित्यत्वव्याप्यकार्यत्ववान् शब्द इति परामर्शः, तत्र कश्चित्परामर्शेऽप्रामाण्यज्ञानात्पूर्वं परस्परप्रतिबन्धान्न काप्यनुमितिर्भवतीति न्यायेन । **विरोधस्थले इति**–क्वचिदेकत्रेत्यादिः । प्रसङ्गे परस्परप्रतिबन्धादिति शेषः । **नियमार्थमिति**–उभयोः प्राप्तावेवास्य नियमार्थत्वादिति भावः । **व्यक्तौ**–व्यक्तिपक्षे । तुरुक्तवैलक्षण्यसूचकः । **तत्तद्व्यक्तिविषययोः**–सकलव्यक्त्युद्देश्यकयोः । अस्य हेतुगर्भविशेषणता । **शास्त्रयोरिति**–व्यक्त्यन्तरे इति शेषः । **तत्**–"विप्रतिषेधे परं कार्यमि"ति सूत्रम् । **व्रीहय इति**–व्रीहय इत्यत्र । **तत्**–"जात्याख्यायामि"ति सूत्रम् । **तदिति**–सरूपसूत्रेत्यर्थः । **सः**–"सरूपाणामि"ति योगः । **तावतीषु**–विभिन्नाक्षत्वादिजातिषु । **एकामिति**–अक्षत्वादिरूपामिति शेषः । **तस्याः**–स्वीकृतायाः । **वाच्यत्वमिति**–स्वाक्रियतामिति शेषः । नन्वेवमत्राक्षत्वस्याश्रयनानाक्षत्वादिजातिबोधेऽपि व्यक्तिबोधानुपपत्तिरित्यत आह–**परम्परयेति** । तत्समवायिसमवायेनेत्यर्थः । नन्वनवस्थापाताज्जातौ न जातिरिति निर्णयात् कथं स्वीक्रियते नानाऽक्षत्वादिजातावक्षत्वत्वादिजातिरित्यत आह–**जाताविति । परेषां**–वैशेषिकाणाम् । **दर्शनं**–मतम् । **तत्र**–सरूपसूत्रे । कैयटेनैवेति शेषः । तत्र तन्त्रेणैव निर्वाहसम्भवात् कैयटेनैवेत्यनेनारुचिः सूचिता । प्रतीतायामित्यनेनाभिदधतीत्यस्यैकवाक्यतायै सिंहावलोकनन्यायेनाह–**एवमिति** । एवमग्रेऽपि । तदवच्छिन्नमित्यनेन तद्वैशिष्ट्यरूपार्थस्यैव विवक्षितत्वादनेनापि तदर्थस्यैव कथने तेन पुनरुक्तिः स्यादिति हेतोरर्थान्तरमाह–**तत्समेति** । अत एवाग्रे तत्सम्बन्धादिति कैयटो वक्ष्यति । लक्षणाश्रयणवारणायाह–**अविनाभावादिति** । व्यक्तिं विना जातिभानस्यासम्भवादिति भावः । काकवन्तो रामस्य गृहा इत्यादिस्थलीयकाकादिनिष्ठोपलक्षणताभ्रमनिराकरणायाह–**शक्यतेति** । नन्वेवं जातेरपि वाच्यत्वापत्तिरिति चेन्न, अकार्यत्वेऽपि शक्यतावच्छेदकत्वसम्भवात् । अत एव लक्ष्यतावच्छेदके न लक्षणेति नैयायिकनिर्णयः । इत्याशयेनाह–**तत्रेति** । शक्यतावच्छेदके इत्यर्थः ।

## ( शब्दनित्यत्वानित्यत्वविचारभाष्यम् )

### ( आक्षेपभाष्यम् )

### किं पुनर्नित्यः शब्दः, आहोस्वित्कार्यः ? ॥

**( प्रदीपः ) किं पुनरिति** । विप्रतिपत्त्या संशयः । केचिद्ध्वनिव्यङ्ग्यं वर्णात्मकं नित्यं शब्दमाहुः । अन्ये वर्णव्यतिरिक्तं पदस्फोटमिच्छन्ति । वाक्यस्फोटमपरे संगिरन्ते । अन्ये तु ध्वनिरेव शब्दः स च कार्यस्तद्व्यतिरेकेणान्यस्यानुपलम्भादित्याचक्षते ॥

**( उद्द्योतः ) विप्रतिपत्त्येति** । शब्दानां नित्यत्वे व्यर्थं व्याकरणशास्त्रमिति प्रश्नाशयः ॥ **केचित्** । मीमांसकाः ॥ **वर्णात्मकमिति** । पदवाक्ये च वर्णसमूहरूपे एवेति तदाशयः । अत्र मते एकं पटपदमित्याद्यनुपपत्तेराह—**अन्ये** वैयाकरणाः ॥ **अपरे** त एव मुख्याः । पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् । तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्वमिति तद्भावः ॥ **अन्ये त्विति** । वैशेषिकादयः ॥ **ध्वनिरिति** । स च वर्णावर्णात्मकत्वेन द्विविधः । एवं च कण्ठादिवच्छ्वासमपि तस्य कारणमित्याशयः ॥

**(तत्त्वालोकः)** प्रदीपे–**विप्रतिपत्त्या**—विरुद्धानेककोट्युपस्थित्या । अस्य "अथ"मित्यादिः । किमिदमित्याकारकनिष्कोटिकज्ञानस्यापि संशयत्वादिति भावः । **संशयः**–जिज्ञासाकारणीभूतज्ञानम् । विप्रतिपत्तिमेवोपपादयितुमाह–**केचिदित्यादि** । **ध्वनिव्यङ्ग्यं**–ककारादिध्वनिव्यङ्ग्यम् । पादवाक्ययोः वर्णातिरिक्तत्वं नेत्याशयेनाह–**वर्णात्मकमिति** । स्फोटमिति शेषः । असत्यवर्णविभागकस्य पदस्यैव शब्दत्वमित्याशयेनाह–**अन्ये त्विति । पदस्फोटमिति**–अत्र नित्यं शब्दमित्यनुषज्यते । ननूक्तमतद्वये घटमानयेत्येकं वाक्यमिति प्रतीतिव्यवहारयोरनुपपत्तिरित्यत आह–**वाक्यस्फोटमिति** । अत्र तु नित्यं शब्दमित्यस्य वर्णव्यतिरिक्तमित्यस्य चानुषङ्गः । **सङ्गिरन्ते**–प्रतिपादयन्ति । कार्यः–प्रागभावप्रतियोगी । तृतीयक्षणवृत्तिध्वंसप्रतियोगिताऽपि तस्य बोध्या । **तद्व्यतिरेकेणान्यस्य**–ध्वनिभिन्नतया स्फोटस्य ।

उद्द्योते–**तदाशयः**–मीमांसकाशयः । **अत्र मते**–मीमांसकमते । **आदीति**–प्रतीतिव्यवहारेति शेषः । **अन्ये इति**–अस्य "इति" इति शेषः । **वैयाकरणा इति**–अस्य "इत्यर्थ" इति शेषः । **त एव**–वैयाकरणा एव । **तेषां**–पदानाम् । **वाक्यस्यैवेति**–असत्यपदविभागकस्येत्यादिः । **तद्भावः**–मुख्यवैयाकरणाशयः । **सः**–ध्वनिः । अत्र मते व्याकरणशास्त्रमावश्यकमित्याशयेनाह–**एवञ्चेति** । ध्वनेः द्वैविध्ये चेत्यर्थः । **तस्य**–वर्णात्मकध्वनेः ।

## ( समाधानभाष्यम् )

**संग्रह एतत्प्राधान्येन परीक्षितम्—नित्यो वा स्यात्कार्यो वेति । तत्रोक्ता दोषाः, प्रयोजनान्यप्युक्तानि । तत्र त्वेष निर्णयः—यद्येव नित्यः, अथापि कार्यः, उभयथापि लक्षणं प्रवर्त्यमिति ॥**

**( प्रदीपः ) संग्रह इति** । ग्रन्थविशेषे ॥

**( उद्द्योतः ) संग्रहो** व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः ॥ भाष्ये **उभयथापीति** । एवं च निष्फलोऽयं विचार इति भावः ॥ साधुत्वज्ञानाय उभयथापि शास्त्रमावश्यकमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये–प्रकृते प्रसङ्गात्प्राप्ते शब्दनित्यत्वानित्यत्वे यदि विवेचिते अपि स्यातां तर्हि गौणतयैव शब्दानुशासनव्याख्यानस्य प्राधान्यात्, संग्रहे तु ते मुख्यतया बहुधा विवेचिते स्तोऽतः तत्रत्यनिर्णयानुसारेणैवात्र कार्यं विधेयं, न मुधा तयोर्विचारे समयो यापनीय इत्याशयेनोत्तरयति सिद्धान्ती–**संग्रहे इति** । एतत्पदार्थमाह–**नित्यो वेति । तत्र**–उभयत्र । **दोषाः**–शब्दस्य नित्यत्वे नित्यस्य । विकारासम्भवादादेशाद्यनुपपत्तिः । अनित्यत्वे तु पूर्वशब्दनाशेन पूर्वशब्दानन्तर्यरूपसंहितायाः उत्तरशब्देऽसंभवात् सन्ध्यनुपपत्तिरित्यादिदोषाः । **प्रयोजनानि**–शब्दस्य नित्यत्वे "इको यणची"त्यादिना साधुत्वमात्रसम्पादनम् । अनित्यत्वे तु नित्यस्फोटस्य व्यञ्जकध्वनिधर्मेणान्वाख्यानमित्यादिप्रयोजनानि । ननूभयत्र दोषप्रयोजनयोरुक्ततया शब्दनित्यत्वानित्यत्वयोरन्यतरस्यानिश्चयाद् व्यर्थैव तत्र तयोः परीक्षा विचारस्य निर्णयफलकत्वादित्यत आह–**तत्र त्विति** । संग्रहे एवेत्यर्थः । **यद्येव**–यद्यपि । शब्दस्य नित्यत्वानित्यत्वोभयपक्षेऽपि दोषनिरास इत्याशयेनाह–**उभयथाऽपीति** । पक्षद्वयेऽपीत्यर्थः । **लक्षणं**–व्याकरणशास्त्रम् ।

उद्द्योते–**एवञ्च**–संग्रहे उभयथा व्याकरणशास्त्रप्रवर्त्तनस्यावश्यकत्वे निर्णीते च । **अयं**–**शब्दः** नित्योऽनित्यो वेत्ययम् । ननु कथन्तत्र प्रथमं तदावश्यकतानिर्णयोक्तिरेवेत्यत आह–**साधुत्वेति** । **शास्त्रं**–व्याकरणशास्त्रम् । **तात्पर्यमिति**–व्याडेरिति शेषः ।

## ( नित्यशब्दवादेपि शास्त्रस्य धर्मजनकताधिकरणम् )

### ( आक्षेपभाष्यम् )

**कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तम्—**

( १ आक्षेपसाधकवार्तिकप्रथमखण्डम् ॥ १ ॥ )

## ॥ ॐ ॥ सिद्धे शब्दार्थसंबन्धे ॥ ॐ ॥

( व्याख्याभाष्यम् )

### सिद्धे शब्देऽर्थे संबन्धे चेति ॥

**( प्रदीपः ) कथं पुनरिति ।** किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानाम्, अथ स्मर्तेति प्रश्नः ॥ **सिद्ध इति ।** तत्र नित्यः शब्दो जातिस्फोटलक्षणो व्यक्तिस्फोटलक्षणो वा । कार्यशब्दिकानामपि मते प्रवाहनित्यतया । अर्थस्यापि जातिलक्षणस्य नित्यत्वम् । द्रव्यपक्षेऽपि सर्वशब्दानामसत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं वाच्यमिति नित्यता प्रवाहनित्यतया वा । संबन्धस्यापि व्यवहारपरम्परयानादित्वान्नित्यता ॥

**( उद्द्योतः )** अथ पाणिनिसूत्रव्याख्यानभूतं वार्तिकमवतारयति—कथं **पुनरिति ।** अत एवात्रैव पाणिनिनामग्रहणम् । इतः पूर्वं तु सवार्तिकशास्त्रान्वाख्यानप्रयोजनविषयप्रदर्शनपरो भाष्यकारस्यैव ग्रन्थ इति बोध्यम् ॥ **शब्दार्थसंबन्धानामिति ।** शब्दाश्चार्थाश्च संबन्धाश्चेति द्वन्द्वः । एवं च किमपूर्वशब्दनिष्पादनद्वारार्थविशेषसंबन्धनिष्पादकत्वं शास्त्रस्य, किं वा सिद्धशब्दार्थसंबन्धबोधकत्वमिति प्रश्नार्थ इति तात्पर्यम् ॥ **सिद्धे शब्दार्थसंबन्धे** इति वार्तिके समाहारद्वन्द्वात्सप्तमी । संबन्धश्च प्रत्यासत्त्या शब्दार्थयोरेव । त्रयाणामात्यन्तिकाविश्लेषप्रदर्शनाय समाहारनिर्देश इति बोध्यम् ॥ **व्यक्तिस्फोटेति ।** सा पदवाक्यरूपा नित्यैवेति तद्भावः । एतच्चोपपादितं प्राक् ॥ **कार्यशब्दिकानामिति ।** कार्यशाब्दिकानामिति त्वपपाठः । उत्तरपदवृद्धेर्दुर्लभत्वात् ॥ **असत्योपाधीति ।** जातिरूपेत्यर्थः । जातिर्हि तन्मते आविद्यको धर्मविशेषः । यद्वा सर्वेषां धर्माणां ब्रह्मण्यध्यस्तत्वेन शुक्तिरजतादिज्ञाने शुक्त्यादीनां विशेष्यत्ववत् सर्वत्राधिष्ठानभूतं ब्रह्मैव विशेष्यम् । विशेष्यमेव च द्रव्यमिति भावः ॥ शब्दार्थयोर्नित्यत्वपक्षे तत्संबन्धस्य नित्यत्वेऽप्यनित्यत्वपक्षे कथं संबन्धस्य नित्यत्वमत आह—**संबन्धस्येति ।** प्रवाहनित्यतया तयोरिव तस्यापि नित्यत्वमिति भावः ॥ शब्दार्थयोः संबन्धश्च शक्तिरूपं तादात्म्यमेवेत्यन्यत्र प्रपञ्चितम् ॥

**( तत्त्वालोकः )** भाष्ये—शब्दार्थसम्बन्धानां नित्यत्वमनित्यत्वं वाऽभिप्रेत्य पाणिनिरष्टाध्यायीं रचितवानित्याशयेन पृच्छति—**कथमिति । इदम्**—अष्टाध्यायीरूपम् । सूत्रवार्तिकयोः विरोधे विधास्यमानसूत्रसमर्थनवार्तिकखण्डनयोः युक्तत्वाय समपेक्षितां वार्तिककृदपेक्षया सूत्रकृत्यधिकश्रद्धां सूचयन्नाह—**भगवत इति । लक्षणं**—व्याकरणाख्यं शास्त्रं यद्यप्यत्रोत्तरयता वार्तिककृता "शब्दार्थसम्बन्धे सिद्धे ( नित्ये सति ) शब्दप्रयोगे ( च ) लोकतोऽर्थप्रयुक्ते ( अर्थज्ञापनाय प्राप्ते सति ) शास्त्रेण धर्मनियमः ( क्रियते ) यथा लौकिकवैदिकेषु" इत्यर्थकम् "सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमो यथा लौकिकवैदिकेषु" इत्येकं नवपदरूपं वार्त्तिकं प्रवर्त्तितम् । तथापि तत्र "लोकत" इति काकाक्षिगोलकन्यायेनोभयत्रान्वयन् खण्डशो वार्त्तिकं व्याख्यातुकामः तत्प्रथमखण्डमाह—**सिद्धे इति । सम्बन्धे चेति**—लक्षणं प्रवृत्तमिति शेषः । शब्दार्थसम्बन्धानां नित्यत्वं मत्वा पाणिनिरष्टाध्यायीं प्रणीतवानिति भावः ।

प्रदीपे—**आचार्यः**—पाणिनिः । **अथ**—अथवा । शब्दार्थसम्बन्धेषु सिद्धतां ( नित्यतां ) क्रमशः उपपादयितुमाह—तत्रेति । शब्दार्थसम्बन्धानां मध्ये इत्यर्थः । आविर्भावतिरोभावविषयोऽपि ककारादिध्वनिव्यङ्ग्यशब्दो नित्य उत्पादविनाशरहितत्वादित्याशयेनाह—**नित्य** इति । स किंरूप इत्याकांक्षायां वैयाकरणादिमतेनाह—**जातिस्फोटलक्षण इति ।** जातिस्फोटाः ( वर्णजातिस्फोट-पदजातिस्फोट-वाक्यजातिस्फोटाः ) लक्षणानि ( स्वरूपाणि ) यस्येति व्युत्पत्तिः । **व्यक्तिस्फोटलक्षण इति**—व्यक्तिस्फोटौ (पदव्यक्तिस्फोट-वाक्यव्यक्तिस्फोटौ) लक्षणे ( स्वरूपे ) यस्येति व्युत्पत्तिः । अनित्यवर्णव्यक्तिस्फोटासंग्रहसूचनायैव जातिव्यक्तिस्फोटयोः पार्थक्येनोक्तिः । **वा**शब्देन अखण्डपदस्फोटाखण्डवाक्यस्फोटयोः समुच्चयः । नन्वेवमपि वैशेषिकादीनां मते शब्दस्यानित्यत्वान्नैतदुत्तरं सर्वसम्मतमित्यत आह—**कार्यशब्दिकानामिति । अपिना** मीमांसकादिसमुच्चायकेन तन्मतेऽप्ययं प्रकारः सम्भवतीति सूचितम् । महाप्रलयास्वीकर्तृमतेनाह—**प्रवाहनित्यतयेति ।** अनाद्यनन्तसृष्टिखण्डप्रलयप्रवाहान्तर्गततयेत्यर्थः । नित्यः शब्द इत्यनुषज्यते । जातिरूपत्वाद् वाच्यस्य नित्यतेति जातिपक्षवादिमीमांसकमतेनाह—**अर्थस्येति ।** अभिधेयस्येत्यर्थः । अपिना शब्दसंग्रहः । **जातिलक्षणस्य**—गोत्वादिजातिरूपस्य । जगतो ब्रह्मविवर्त्ततायां मिथ्याभूतगोत्वादिजातिरूपोपाध्यवच्छिन्नगवादिरूपब्रह्मतत्त्वस्यैव निखिलगवादिशब्दवाच्यतया वाच्यस्यैव चार्थत्वादर्थो नित्य इत्याशयेनाह—**द्रव्यपक्षे इति ।** व्यक्तिपक्षे इत्यर्थः । **अपिना** जातिपक्षसंग्रहः । **इति**—इति हेतोः । अर्थस्येत्यनुषज्यते । ननु व्यक्तिपक्षवादिनोऽपि ये जगतो ब्रह्मविवर्त्ततां नाभ्युपगच्छन्ति तन्मते का गतिरित्यत आह—**प्रवाहेति ।** अर्थस्य नित्यतेति शेषः । **सम्बन्धस्य**—शब्दार्थसम्बन्धस्य । **अपिना**—शब्दार्थयोः संग्रहः ।

उद्द्योते—**अथ**—विषयप्रयोजनादिनिरूपणानन्तरम् । **पाणिनिसूत्रव्याख्यानभूतं**—पाणिनिरचिताष्टाध्यायीरूपव्याकरणशास्त्रस्य धर्मनियमार्थताप्रतिपादकम् । प्रथममिति शेषः । **अत एव**—अस्य प्रथमवार्त्तिकत्वादेव । **एवेन** पूर्वव्यावृत्तिः । अत आह—**इत इति । शास्त्रेति**—अष्टाध्यायीरूपशब्दानुशासनशास्त्रेत्यर्थः । **एवेन**—वार्तिककारव्यावृत्तिः । केचित्तु "तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः—"रक्षोहागमलघ्वसन्देहाः प्रयोजनमि"ति । एतानि रक्षादिप्रयोजनानि प्रयोजनान्तराणि च महाभाष्ये पतञ्जलिना स्पष्टीकृतानि" इति ऋक्संहिताभाष्योपोद्घातस्थसायणाचार्यवचनेन 'अथ शब्दानुशासनम्, रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इत्यादि वाक्यानि वार्तिककारस्यैव,वाक्यान्तराणि भाष्यकारस्य सन्तीति वदन्ति, तन्न, तथा सति "सिद्धे शब्दार्थसम्बन्धे" इति प्रकृतवार्त्तिकस्थसिद्धशब्दस्य मङ्गलार्थत्वोपपादनप्रसङ्गे "माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते" इति भाष्योक्तस्य "सिद्धशब्दमादितः" इत्यस्यानुपपत्तेः । "अथ शब्दानुशासनमि"ति प्रथमवाक्यस्थाथशब्दस्य मङ्गलार्थत्वाकथनेन भाष्यकृतो न्यूनतापत्तेश्च । तत्र "प्रयोजनविशेषो वररुचिना वार्तिके दर्शितः" इत्येतावन्मात्रस्य प्रक्षिप्तपाठताकल्पनेन सर्वसामञ्जस्याच्च । तथा च सकलः प्राक्तनग्रंथो भाष्यकारस्यैवेति निर्णयः ॥ ननु ब्रह्माण्डान्तर्गतपाणिनेः कथं शब्दार्थसम्बन्धत्रयात्मकब्रह्माण्डस्रष्टृत्वमित्यत आह—**एवञ्चेति ।** शब्दसम्बन्धयोः शास्त्रद्वारा पाणिनिनिष्पाद्यतामभिप्रेत्याह—**किमपूर्वेति ।** शब्दार्थसम्बन्धानां नित्यत्वं मत्वाऽऽह—**किं वेति । तात्पर्यं**—कैयटतात्पर्यम् । **समाहारद्वन्द्वात्**—समाहारद्वन्द्वनिष्पन्नात् ( शब्दार्थसम्बन्धशब्दात् ) । **त्रयाणाम्**—शब्दार्थसम्बन्धानाम् । **सा**—व्यक्तिः । **पदवाक्यरूपा**—पदवाक्यरूपैव । एवस्य भिन्नक्रमत्वात् । **एवेन**—वर्णव्यक्तिव्यावृत्तिः । **तद्भावः**—पृथङ्निर्देशभावः । **एतच्च**—पदवाक्यव्यक्तिस्फोटयोः नित्यत्वञ्च । **प्राक्**—स्फोटस्य शब्दतास्थापनावसरे । **उत्तरपदेति**—कार्यशब्दमित्याहेति व्युत्पत्तौ "तदाहेति माशब्दादिभ्य उपसंख्यानमि"ति वार्त्तिकेन ठकि निष्पन्ने कार्यशब्दिकशब्दे

इत्यादिः । अनुशतिकादिषु तस्यापाठादुभयपदवृद्धिः न सम्भवतीत्यभिप्रेत्याह–**दुर्लभत्वादिति । तन्मते**–व्यक्तिपक्षवादिवेदान्तिमते । शिष्यबुद्धिवैशद्याय प्रकारान्तरेणाह–**यद्वेति । धर्माणां**–वृत्तितावताम् । **शुक्तिरजतादिज्ञाने**–शुक्त्यध्यस्तरजतादिज्ञाने (इदं रजतमित्याद्याकारके भ्रमे)। अधिष्ठानभूतानामिति शेषः । **सर्वत्र**–सर्वत्र ज्ञाने । **द्रव्यम्**–व्यक्तिः । तथा च व्यक्तेरर्थस्य ब्रह्माभिन्नतया नित्यतेति भावः । **तदिति**–शब्दार्थेत्यर्थः । **अनित्यत्वेति**–तयोरित्यादिः । **सम्बन्धस्य**–शब्दार्थसम्बन्धस्य । **अन्यत्र**–मञ्जूषायाम् ॥

( वार्तिकघटकसिद्धशब्दार्थनिरूपणभाष्यम् )

( आक्षेपभाष्यम् )

**अथ सिद्धशब्दस्य कः पदार्थः ? ॥**

**( प्रदीपः )** सिद्धशब्दस्य नित्यानित्ययोर्दर्शनात्पृच्छति—**अथेति ॥**

**( उद्द्योतः )** भाष्ये **सिद्धशब्दस्य कः पदार्थ इति** । अत्र पदार्थशब्दो रूढः । सिद्धशब्दसंबन्धी कः पदार्थ इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये–**पदार्थः**–अर्थः (नित्योऽनित्यो वा)। अत्रार्थशब्दो न प्रयोजनपरः किन्तु वाच्यपर इति सूचनाय पदपदमिति परे।

प्रदीपे–**दर्शनादिति**–प्रयोगदर्शनादित्यर्थः । वस्तुनोरित्यादिः । संशयोदये इति शेषः ।

उद्द्योते–**रूढः**–अर्थे रूढः । **सिद्धशब्दसम्बन्धी**–सिद्धशब्दनिरूपितशक्तिमान् ।

( समाधानभाष्यम् )

**नित्यपर्यायवाची सिद्धशब्दः ॥ कथं ज्ञायते ? ॥ यत्कूटस्थेष्वविचालिषु भावेषु वर्तते । तद्यथा-सिद्धा द्यौः, सिद्धा पृथिवी, सिद्धमाकाशमिति ॥**

**( प्रदीपः ) नित्येति** । नित्यलक्षणस्यार्थस्य पर्यायेण वाचकस्तमेवार्थं कदाचिन्नित्यशब्द आह कदाचित्सिद्धशब्द इत्यर्थः ॥ **कूटस्थेष्विति** । अविनाशिषु ॥ **अविचालिष्विति** । देशान्तरप्राप्तिरहितेषु ॥

**( उद्द्योतः ) कूटस्थेष्विति** । कूटमयोघनस्तद्वत्तिष्ठन्ति ये तेषु, संसर्गिनाशेपि स्वयमनष्टेष्वित्यर्थः ॥ नन्वयोघनस्यापि तर्हि नित्यत्वं स्यादत आह—**अविचालिष्विति** । भाष्ये द्यावापृथिव्याद्यपि व्यावहारिकनित्यत्वाभिप्रायेण दृष्टान्तितम् । आकाशस्यापि व्यावहारिकनित्यत्वमेवाचार्याभिमतम् । एवं च तत्र रूढत्वान्नित्यवाचकस्यैव ग्रहणमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये–अथ सिद्धशब्दस्य कः पदार्थ इति प्रश्नस्य सिद्धशब्दस्य नित्यः पदार्थ इत्युत्तरं विशेष्यविशेषणभावव्यत्यासेनार्थतो बोधयितुमाह–**नित्येति** । नित्यपर्यायवाची सिद्धशब्द इति केन प्रकारेण ज्ञायते इत्याशयेन पृच्छति–**कथमिति** । उत्तरयति–**यदिति**–यस्मादित्यर्थः । दृष्टान्तमाह–**तद्यथेति** ।

प्रदीपे–**नित्यलक्षणस्य**–नित्यस्वरूपस्य । **वाचक इति**–सिद्धशब्द इति शेषः । अस्य नित्यवाचकता योगबाधिकया अवयवार्थानपेक्षरूढ्येति भावः । सिद्धशब्दस्य पर्यायेण तद्वाचकतामुपपादयति–**तमेवेति** । नित्यमेवेत्यर्थः । **सिद्धशब्द इति**–आहेत्यनुषज्यते ।

उद्द्योते–**अयोघनः**–लौहकारेण लौहः संस्थाप्य येन लौहमुद्गरेण ताड्यते स लोहमुद्गरोऽयोघनः । अयोघनः सम्बन्धिनाशेऽप्यनष्ट एव तिष्ठतीत्यत आह–**तद्वदिति** । **अपिना**–संसर्ग्यनाशसंग्रहः । वैशेषिकादिमते आकाशस्य पारमार्थिकनित्यता, न द्यावापृथिव्योरित्यभिप्रेत्य पार्थक्येनाह–**आकाशस्येति । एवञ्च**–सिद्धशब्दस्य नित्यवाचकत्वे च । योगाद्रूढिर्बलीयसीति न्यायेनाह–**तत्रेति** । नित्ये इत्यर्थः । **वाचकस्येति**–सिद्धशब्दस्येति शेषः । **एवेन** योगतः कार्यवाचकस्य सिद्धशब्दस्य व्युदासः ।

( आक्षेपभाष्यम् )

**ननु च भोः कार्येष्वपि वर्तते । तद्यथा—सिद्ध ओदनः, सिद्धः सूपः, सिद्धा यवागूरिति । यावता कार्येष्वपि वर्तते, तत्र कुत एतन्नित्यपर्यायवाचिनो ग्रहणम्, न पुनः कार्ये यः सिद्धशब्द इति ? ॥**

**( प्रदीपः ) ननु चेति** । सिद्धशब्दात्क्रियानिष्पन्नोऽप्यर्थोऽवगम्यत इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये–**कार्येष्विति**–अत्रानित्येष्विति वक्तव्ये कार्येष्वित्युक्तिः कार्यत्वहेतुकानित्यताज्ञापनाय । अत एव वक्ष्यति कैयटः क्रियानिष्पन्न इति । **अपिना** नित्यसंग्रहः । **वर्त्तते**–प्रयुज्यते । सिद्धशब्द इत्यनुषज्यते । दृष्टान्तमाह–**तद्यथेति । यावता**–यतः । **तत्रेति**–प्रकृतवार्त्तिके इत्यर्थः । अत इत्यादिः । **एतन्नित्यपर्यायवाचिनः**–एतेषु (नित्यकार्यवाचिषु) नित्यपर्यायवाचिनः । सिद्धशब्दस्येति शेषः । **कार्ये इति**–प्रयुज्यमान इति शेषः । **शब्द इति**–तस्य ग्रहणमिति शेषः । **इति**–समाप्तौ ।

( समाधानभाष्यम् )

**संग्रहे तावत्कार्यप्रतिद्वन्द्विभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति । इहापि तदेव ॥**

**( प्रदीपः ) संग्रहे तावदिति** । तत्र हि 'किं कार्यः शब्दोऽथ सिद्धः' इति पक्षद्वयविचारः कृतः । तत्र कार्यप्रतिपक्षार्थाभिधायी सामर्थ्यात्सिद्धशब्द इति स्थितम् । तत्समानतन्त्रत्वादिहापि तथैव युक्तमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये–प्रकृते निश्चायकमाह–**संग्रहे इति । तावदिति** वाक्यालङ्कारे । सिद्धशब्दस्येति शेषः । **कार्यप्रतिद्वन्द्विभावात्**–कार्यप्रतिपक्षिभावेनोपादानात् । **वाचिन इति**–तस्येति शेषः । **इति**–इति हेतोः । **इहापि**–प्रकृतवार्त्तिकेऽपि । **तदेव**–नित्यपर्यायवाचिनो ग्रहणमेव ।

प्रदीपे–**तत्र**–संग्रहे । **हि**–यतः । **इति**–इति विप्रतिपत्तिवाक्येन । **पक्षद्वयेति**–शब्दनित्यत्वानित्यत्वोभयकल्पेत्यर्थः । **कृतः**–उपस्थापितः । **तत्र**–तस्मिन् वाक्ये । **अर्थेति**–नित्येत्यर्थः । अन्यस्यासम्भवादाह–**सामर्थ्यादिति । तत्समानतन्त्रत्वात्**–संग्रहसदृशशास्त्रघटकत्वात् । सादृश्यञ्च शब्दानुशासनत्वेनेति भावः । **तथैव**–नित्यवाचिसिद्धशब्दस्य ग्रहणमेव ।

( समाधानान्तरभाष्यम् )

**अथवा सन्त्येकपदान्यप्यवधारणानि । तद्यथा—अब्भक्षो वायुभक्ष इति—अप एव भक्षयति, वायुमेव भक्षयतीति गम्यते । एवमिहापि सिद्ध एव, न साध्य इति ॥**

**( प्रदीपः ) अथवेति** । एवशब्दप्रयोगे द्विपदमवधारणं, द्योतकत्वेनैव शब्दस्यापेक्षणात् । यदा तु द्योतकमन्तरेण सामर्थ्यादवधारणं गम्यते तदा तदेकपदमित्युच्यते । तत्र सर्वं एवापो भक्षयन्तीत्यब्भक्षश्रुतिः ।

सामर्थ्यान्नियममवगमयत्यप एव भक्षयन्तीति । इहापि नित्यानित्यव्यतिरेकेण राश्यन्तराभावात्सिद्धशब्दोपादानान्नियमोऽवगम्यते **सिद्ध एवेति ।** कार्याणां तु पदार्थानां प्रागभावप्रध्वंसाभावयोरपि सत्त्वात् सिद्धता नास्तीति न ते सिद्धा एव ॥

**( उद्द्योतः )** ग्रन्थान्तरानालोचनेऽपि नियामकमाह—**भाष्ये अथवेति ।** एतेन तत्समानतन्त्रत्वाद्व्यक्त्येकपदार्थवादोऽपि तत्र स्यादित्यपास्तम् ॥ ननु एकपदानीत्युक्त्वाऽब्भक्ष इत्यस्य पदद्वयात्मकस्योदाहरणत्वमसङ्गतमत आह—**एवशब्देति । भाष्ये अप एवेति गम्यते इति ।** वाक्ये इव समासेऽपि सामर्थ्यात् तदतिरिक्तभक्षणाभावो गम्यत इत्यर्थः ॥ नियमप्रत्यायकसामर्थ्यं दर्शयति—**इहापीति ।** कार्यवाचिन एव ग्रहणाभावे मूलमाह—**कार्याणामिति ।** प्राक्प्रध्वंसावस्थयोरिति पाठः ॥

**( तत्त्वालोकः )** भाष्ये—**एकपदानीति**—एकं पदं येष्विति व्युत्पत्तिः । उदाहरणमाह—**तद्यथेति । इति**—इत्यनेन । **इतीति**—अवधारणमिति शेषः । एवबोध्यमाह—**न साध्य इतीति**—गम्यते इत्यनुषज्यते ।

प्रदीपे—सुप्तिङन्तं पदमित्यनुसारेणाह—**एवेति ।** अब्भक्ष एवेत्यादावित्यादिः । **द्योतकत्वेन**—अवधारणद्योतकत्वेन । **यदा त्विति**—अब्भक्ष इत्यादाविति शेषः । **द्योतकम्**—एवशब्दम् । **सामर्थ्यात्**—अब्भक्ष इत्याद्युपादानसामर्थ्यात् । **अवधारणम्**—अप एव भक्षयति ( न तदतिरिक्तम् ) इत्यादिरूपम् । **तत्**—अवधारणम् । समासे प्रदर्श्य वाक्ये दर्शयति—**तत्रेति ।** नियमाकारमेवाह—**अप एवेति । राश्यन्तराभावात्**—कल्पान्तरासम्भवात् । नियममेवाह—**सिद्ध एवेतीति । अपिना** अत्यन्ताभावादिसंग्रहः । **सिद्धता**—सिद्धतैव । **इति**—इति हेतोः । **ते**—कार्यपदार्थाः ।

उद्द्योते—**ग्रन्थेति**—संग्रहरूपेत्यादिः । **नियामकम्**—सिद्धशब्दस्यैवात्र ग्रहणमिति नियमबोधकम् । **एतेन**—अथवाकल्पानुसारेण । **तदिति**—संग्रहेत्यर्थः । **अपिना** नित्यवाचकसिद्धशब्दग्रहणस्य संग्रहः । **तत्र**—भाष्यकृतः । शक्तं पदमित्यनुसारेणाह—**पदद्वयेति । अप एवेति गम्यते इति**—अप एवेत्यादि गम्यते इत्यन्तमिति । **वाक्ये**—अपो भक्षयन्तीत्यादौ । **समासे**—अब्भक्ष इत्यादौ । **तदिति**—अबादीत्यर्थः । **नियमेति**—सिद्धस्यैवात्र ग्रहणमिति नियमेत्यर्थः । प्राक्प्रध्वंसाभावयोरिति क्वाचित्कपाठो न युक्तोऽनन्वयापत्तेरित्याशयेनाह—**प्रागिति ।**

**( समाधानान्तरभाष्यम् )**

**अथवा पूर्वपदलोपोऽत्र द्रष्टव्यः—अत्यन्तसिद्धः सिद्ध इति । तद्यथा—देवदत्तो दत्तः, सत्यभामा भामेति ।**

**( प्रदीपः ) अथवेति ।** कथं पुनर्देवदत्तशब्दे संज्ञात्वेन विनियुक्ते एकदेशः प्रयुज्यते । न ह्यसौ संज्ञात्वेन विनियुक्तः । नचैकदेशात्स्मर्यमाणस्य समुदायस्य वाचकत्वमुपपद्यते । प्रतीयमानस्य प्रत्यायकत्वासंभवादुच्चार्यमाणस्यैव वाचकत्वात् । एवं तर्ह्यनुनिष्पादिन्योऽवयवसरूपाः संज्ञा विनियोगकाले विनियुक्ता एव । लोपस्तु वर्णानां साधुत्वं मा भूदित्यन्वाख्यायते । इहापि नित्यानित्ययोर्निष्पन्नत्वाविशेषात्सिद्धश्रुतिरुपात्ता प्रकर्षं गमयति—**अत्यन्तसिद्ध इति ॥**

**( उद्द्योतः ) अथवेति ।** मनुष्यवृक्षापेक्षयाकाशादीनामप्यत्यन्तं सिद्धत्वमिति भावः ॥ **प्रतीयमानस्येति ।** एतदणुदित्सूत्रे उपपादयिष्यते ॥ **एवं तर्हीति ।** एवमेव घटपदं कलशपर्याय इत्यादिप्रयोगाः । अन्यथा पर्यायवाचीति प्रयोज्यं स्यात् ॥ **विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोप** इति लोपविधायकं तर्हि किमर्थमत आह—**लोपस्त्विति । वर्णानाम्** देइत्यादीनाम् । तत्रापि क्वचित्पूर्वपदस्यैव क्वचिदुत्तरपदस्यैव क्वचिदुभयोरिति लोकव्यवहारेण निर्णयन् । एवं वर्णानां शक्त्यभावोपि तत एव निर्णय इति तत्त्वम् ॥ **निष्पन्नत्वेति ।** विद्यमानकालसंबन्धो **निष्पन्नत्वम् ॥**

**( तत्त्वालोकः )** भाष्ये—नन्वेवम् आकाशादिषु चिरकालावस्थायित्वाशयेन नित्यसिद्धशब्दप्रयोगसम्भवेऽपि वास्तवसिद्धत्वाभावात् "तद्यथा सिद्धमाकाशमित्यादिदृष्टान्तो नोपपद्येतेत्यत आह—**अथवेति ।** "विनापि प्रत्ययं पूर्वोत्तरपदयोर्वा लोपो वाच्य" इति वार्तिकेनेति शेषः । अत्र पदार्थमाह—**अत्यन्तेति ।** दृष्टान्तमाह—**तद्यथेति ।**

प्रदीपे—ननु यस्य देवदत्तशब्दो नाम, न तु दत्तादिशब्दः, तस्य बोधनाय कथं दत्तादिशब्दः प्रयुज्यते इत्याशयेन पृच्छति—**कथमिति । संज्ञात्वेन**—संज्ञिवाचकत्वेन । **विनियुक्ते**—सङ्केतिते । **एकदेशः**—दत्तादिशब्दः । **हि**—यतः । **असौ**—एकदेशः । **एकदेशात्**—दत्तादिशब्दात् । एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति न्यायेनेति शेषः । **समुदायस्य**—देवदत्तशब्दरूपस्य । **वाचकत्वम्**—संज्ञिवाचकत्वम् । **प्रतीयमानस्य**—स्मर्यमाणस्य । शब्दस्येति शेषः । **प्रत्यायकत्वासम्भवात्**—अर्थोपस्थापकत्वासम्भवात् । उत्तरयति—**एवमिति ।** यदि उक्तयुक्त्या उच्चार्यमाणस्यैव वाचकतेत्यर्थः । **अनुनिष्पादिन्यः**—देवदत्त इति संज्ञाविधानानन्तरं संज्ञिनि प्रयोज्याः । **अवयवसरूपाः**—देवदत्तशब्दैकदेशदत्तादिसदृशाः दत्तादिशब्दाः । **संज्ञाः**—संज्ञायोग्याः । **विनियोगकाले**—( पित्रादिना ) देवदत्त इति नामकरणकाले । संज्ञात्वेन संज्ञिनीति शेषः । **विनियुक्ताः**—विनियोजिताः । अन्तर्भावितण्यर्थत्वात् । **एव**—एवेत्यभ्युपेयते । **लोपस्तु**—लोपविधायकवार्त्तिकन्तु । **भूदिति**—अपि तु तत्र दत्तादीनामपि साधुत्वं भवत्विति शेषः । **इति**—इति हेतोः । **अन्वाख्यायते**—वार्त्तिककृता प्रवर्त्त्यते । **इहापि**—प्रकृतवार्त्तिकेऽपि । **सिद्धश्रुतिः**—सिद्धशब्दश्रवणम् ।

उद्द्योते—**एतत्**—प्रतीयमानस्यार्थाप्रत्यायकत्वम् । **एवमेव**—समुदायवाच्यस्य एकदेशेनापि वाच्यत्वादेव । घटपदं कलशपदप्रतिपाद्यार्थप्रतिपादकमित्यर्थे घटपदं कलशपदपर्यायवाचीति प्रयोज्ये इति शेषः । **कलशपर्यायः**—कलशपदपर्यायः । **अन्यथा**—समुदायेन वाच्यस्य एकदेशावाच्यत्वे । **पर्यायवाचीति**—कलशपदपर्यायवाचीति । समुदायैकदेशयोः समानार्थवाचकत्वादेव पर्यायवाचिशब्दस्थाने पर्यायशब्देन निर्वाहो भवति नान्यथेति भावः । **तत्रापि**—देवदत्त इत्यत्रापि । **पूर्वपदस्यैवेति**—साधुत्वमिति शेषः । एवमग्रिमयोरपि । **तत एव**—लोकव्यवहारादेव ।

**( समाधानान्तरभाष्यम् )**

**अथवा "व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति नित्यपर्यायवाचिनो ग्रहणमिति व्याख्यास्यामः ॥**

**( प्रदीपः )** न्यायाद्वा नित्यत्वं शब्दादीनां स्थितमित्याह—**अथवेति ।** नहि संदेहमात्रादलक्षणता भवति, पुनः प्रमाणान्तरेण निश्चयोत्पादात् ॥

**( उद्द्योतः )** ननु निर्युक्तिकं व्याख्यानमयुक्तं विपरीतस्यापि संभवादत आह—**न्यायाद्वेति ।** वृद्धव्यवहारादेव पदार्थसंबन्धानां नित्यत्वं सङ्ग्रहादौ स्थितमिति आख्यानतः सिद्धशब्देन तदेवोपात्तमित्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः । **इति**—इति परिभाषानुसा-

रेण। **वाचिन इति**-सिद्धशब्दस्य प्रकृते इति शेषः। **व्याख्यास्यामः**-व्याख्यानेन व्यवस्थापयिष्यामः।

प्रदीपे-**न्यायात्**-वृद्धव्यवहारात्। **आदिना** अर्थसम्बन्धयोः संग्रहः। **स्थितम्**-स्थापितम्। **इत्याह**-इति व्याख्यानमेव प्रकृते निर्णायकमिति बोधनायाह। उक्तपरिभाषार्थमाह-**नहीति। अलक्षणता**-अबोधकता। सामान्येनाख्यानानन्तरं विशेषेणाख्यानं भवतीत्याशयेनाह—**पुनरिति। उत्पादादिति**—व्याख्यानेन विशेषबोधादिति शेषः।

उद्द्योते-**अयुक्तमिति**-अग्राह्यमित्यर्थः। अनुकूलमर्पात्यादि। कुत इत्यत आह—**विपरीतस्यापीति।** निर्युक्तिकव्याख्यानस्येति शेषः। **अत आह**-इत्यतोऽत्र व्याख्याने सयुक्तिं बोधयितुमाह। **पदार्थसम्बन्धानामिति**-पदानि चार्थाश्च सम्बन्धाश्चेति द्वन्द्वः। **तदेव**-नित्यत्वमेव। प्रकृते शब्दार्थसम्बन्धानामिति शेषः।

**(आक्षेपभाष्यम्)**

**किं पुनरनेन वर्ण्येन। किं न महता कण्ठेन नित्यशब्द एवोपात्तः यस्मिन्नुपादीयमानेऽसन्देहः स्यात्?॥**

**(प्रदीपः) वर्ण्येनेति।** प्रयत्नव्याख्यातव्येनेत्यर्थः॥

**(तत्त्वालोकः)** भाष्ये-**किं पुनरिति**-नित्यत्वबोधनातिरिक्तं प्रयोजनं सम्पाद्यमिति शेषः। **अनेन**-सिद्धशब्देन। **वर्ण्येनेति**-सन्देहनिराकरणायेत्यादिः। उपादीयमानेनेति शेषः। **किं नेति**-कुतो नेत्यर्थः। यदि तेन नित्यत्वमेव बोध्यं तर्हीत्यादिः। सदोषं वाक्यं भयादुपांशूच्यते, निर्दोषन्तु भयाभावादुच्चैरिति लोकव्यवहारानुसारेण नित्यशब्दस्य सन्देहजनकतारूपदोषाभावसूचनायाह-**महता कण्ठेनेति। उच्चैः** शब्देनेत्यर्थः। **एवेन** सिद्धशब्दव्यावृत्तिः। **उपादीयमाने**-उपादीयमानमात्रे। **असन्देहः**-सन्देहप्रागभावः। परिपालित इति शेषः।

**(समाधानभाष्यम्)**

**मङ्गलार्थम्॥**

**माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं सिद्धशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति, आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्था यथा स्युरिति॥**

**(प्रदीपः) माङ्गलिक इति।** अगर्हिताभीष्टार्थसिद्धिर्मङ्गलं तत्प्रयोजन आचार्यो माङ्गलिकः॥ **प्रथन्त इति।** अध्ययनस्याविच्छेदात्॥ **वीरपुरुषाणीति।** श्रोतॄणां परैरपराजयात्॥ **आयुष्मत्पुरुषाणीति।** शास्त्रानुष्ठाने धर्मोपचयादायुर्वर्धनात्॥ **सिद्धार्था इति।** अध्ययननिर्वृत्तिरेव तेषां सिद्धिः॥

**(उद्द्योतः) सिद्धिर्मङ्गलमिति।** तस्या मङ्गलत्वं च कार्ये कारणरूपोपचारादिति बोध्यम्॥ **तत्प्रयोजनमस्येति** प्राग्वतीयठञ्॥ तत्र मङ्गलानुष्ठानप्रयोजनान्याह—भाष्ये **मङ्गलादीनीत्यादिना॥** ग्रन्थे तन्निबन्धनस्य फलमाह-**अध्येतारश्चेत्यादिना।** आनुषङ्गिकमङ्गलसम्पत्त्यैवेत्यर्थः॥ **अध्ययननिर्वृत्तिः** तत्समाप्तिः॥ **सिद्धिः** सिद्धिविषयोऽर्थः॥ **मङ्गलार्थ**मित्यनेनैत एव वार्तिकप्रवृत्तिः सूचिता॥

**(तत्त्वालोकः)** भाष्ये-**मङ्गलार्थमिति**-अत्रार्थशब्दः प्रयोजनवाचकः। मङ्गलार्थञ्चेति पाठः। तत्र चेन नित्यत्वबोधनसंग्रहः। तथा च स्वरूपतो मङ्गलार्थम्, अर्थतो नित्यत्वबोधनार्थं सिद्धशब्दः प्रयुक्त इति फलितार्थः। अत एव "सकृदुच्चारितः शब्दः सकृदेवार्थं गमयतीति" व्युत्पत्तिविरोधो नापद्यते॥ व्याख्येयभाष्यमुक्त्वा व्याख्यानभाष्यमाह-**माङ्गलिक इति। आचार्यः**-"आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमाचरते यस्मादाचार्यस्तेन चोच्यते॥" इत्याचार्यलक्षणलक्षितो वररुचिः। **शास्त्रौघस्य**-शास्त्राणां वार्त्तिकानामोघः समूहरूपग्रन्थस्तस्य। अथवा शास्त्रमोघः वार्त्तिकसमूहात्मकग्रन्थस्तस्य। अस्य 'आदित" इत्यनेनापि सम्बन्धः। **मङ्गलार्थं**—निर्विघ्नसमाप्तिप्रचारादिसाधकमङ्गलार्थम्। **आदितः**-आदौ। **प्रयुङ्क्ते**-प्रायुंक्त। वर्तमानसामीप्ये वर्तमानवद्वेति सूत्रेण सूते लट्। कुत एवमित्यत आह—**मङ्गलादीनीति। हि**-यतः। **प्रथन्ते**—चिरं प्रख्यायन्ते। **वीरपुषाणीति**-वीराः सामर्थ्यवज्ज्ञानवन्तः पुरुषा अध्येतारो (भवन्ति) येभ्य इति व्युत्पत्तिः। एवमग्रेऽपि। **आयुष्मत्पुरुषाणि चेति**-भवन्तीत्यनुषज्यते। **स्युरिति**-तथा मङ्गलसम्पादकानि च भवन्तीति शेषः। **इति**-इत्यादि। आदिना सम्पूर्णानि च भवन्तीत्यादेः संग्रहः। अनुमीयते इति शेषः।

प्रदीपे-**अगर्हितेति**-अगर्हिता निर्विघ्ना चेयम् अभीष्टार्थ (ग्रन्थसमाप्तिप्रचारादि) सिद्धिरिति व्युत्पत्तिः। यागेन धर्मद्वारा स्वर्ग इव मङ्गलेन प्रतिबन्धकविघ्नध्वंसद्वारा समाप्त्यादिः साध्य इति भावः। **तत्प्रयोजन इति**-तत् मङ्गलं प्रयोजनमस्येति व्युत्पत्तिः। प्रथने हेतुमाह-**अध्ययनस्येति।** वीरताज्ञाने हेतुमाह-**श्रोतॄणामिति।** आयुष्मत्तायां हेतुमाह—**शास्त्रेति।** शास्त्रबोधकमित्यर्थः। **तेषाम्**—अध्येतॄणाम्।

उद्द्योते—**ननु** मङ्गलजन्यतादृशसिद्धेः कथमुक्तं मङ्गलत्वमित्यत आह—**तस्या इति।** तादृशसिद्धेरित्यर्थः। **कार्ये इति**—"आयुर्वै घृतमि"त्यत्रायुषो घृतत्वमिवेत्यादिः। **तत्**-मङ्गलम्। **इति**-इति व्युत्पत्तौ। **तत्र**-आदौ। **तन्निबन्धनस्य**-मङ्गललेखनस्य। **तदिति**-अध्ययनेत्यर्थः। **इतः**-सिद्धे शब्दार्थसम्बन्धे इत्यस्मात्॥ तत्र मङ्गलं (कल्याणजनकं) त्रिविधं कायिकवाचिकमानसिकभेदात्। तत्र कायिकं-गङ्गागारगमनादि। वाचिकं-गोपालगीतगानादि। मानसिकं-गणेशगतिध्यानादि। एवं मङ्गलं सफलम् अविगीतशिष्टाचारविषयत्वादित्यनुमानेन तस्य सफलत्वे सिद्धे-प्राचीनाः-उपस्थितत्वात् विघ्नध्वंसद्वारा समाप्तिः मङ्गलफलम्। द्वारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वम्। स्वप्रतियोगिचरमवर्णानुकूलकृतिमत्तासम्बन्धेन समाप्तिं प्रति स्वजन्यविघ्नध्वंसवत्तासम्बन्धेन मङ्गलं कारणमिति च समाप्तिमङ्गलयोः कार्यकारणभावः। तत्र विघ्नध्वंसवत्ता स्वरूपसम्बन्धेन। समाप्तिश्च चरमवर्णध्वंसरूपा। इति वदन्ति। नवीनास्तु भोगेनापि विघ्नध्वंसे समाप्तेर्जननात् तां प्रतिमङ्गलस्यान्यथासिद्धत्वात् विघ्नध्वंस एव मङ्गलफलम्। स्वरूपसम्बन्धेन विघ्नध्वंसम्प्रति स्वजन्यापूर्ववत्त्वसम्बन्धेन मङ्गलंकारणमिति च मङ्गलविघ्नध्वंसयोः कार्यकारणभाव इतिवदन्ति। विस्तरस्तु अस्मत्कृतमुक्तावलीतत्त्वालोके द्रष्टव्यः।

**(समाधानभाष्यशेषभाष्यम्)**

**अयं खलु नित्यशब्दो नावश्यं कूटस्थेष्वविचालिषु भावेषु वर्तते॥**

**किं तर्हि?॥**

**आभीक्ष्ण्येपि वर्तते। तद्यथा नित्यप्रहसितो नित्यप्रजल्पित इति। यावताभीक्ष्ण्येऽपि वर्तते तत्राप्यनेनैवार्थः स्यात्—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदे-**

हादलक्षणम्" इति। पश्यति त्वाचार्यो मङ्गलार्थश्चैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति, शक्ष्यामि चैनं नित्यपर्यायवाचिनं वर्णयितुमिति। अतः सिद्धशब्द उपात्तो न नित्यशब्दः॥

**( प्रदीपः ) नावश्यमिति।** तत्राभीक्ष्ण्येन ये शब्दाः प्रयुज्यन्ते आगोपालाङ्गनं तेषामेवान्वाख्यानं स्याद् न विरलप्रयोगाणाम्। विनापि च क्रियापदप्रयोगेणाभीक्ष्ण्यवृत्तिर्नित्यशब्दः प्रयुज्यते। यथा **आश्चर्यमनित्ये नित्यवीप्सयोरिति॥**

**( उद्द्योतः )** असंदिग्धो नित्यशब्दः किं न प्रयुक्त इत्युक्तम्। तत्रापि सन्देहमाह–भाष्ये **अयं खल्विति॥ आभीक्ष्ण्येन** बाहुल्येन। अभीक्ष्णमिति पाठेऽप्ययमेवार्थः॥ **प्रयुज्यन्त इति।** साक्षाच्छब्दे आभीक्ष्ण्यासंभवात्प्रयोगद्वारा तद् ग्राह्यम्। एवं च नित्यशब्दोपादानेऽपि सप्रयोजनकोट्यन्तरसम्भवेन तत्रापि सन्देह एवेति भावः॥ **नित्ये शब्दार्थसंबन्धे** इत्यस्य शब्दार्थसंबन्धे ज्ञाते सति नित्ये नित्यप्रयोगविषये शब्दे शास्त्रं प्रवृत्तमित्यर्थः स्यादिति तात्पर्यम्॥ नन्वाभीक्ष्ण्यवाचिनो नित्यं क्रियापदसाकाङ्क्षतया कथं केवलस्य प्रयोगोऽत आह—**विनापि चेति॥**

**( तत्त्वालोकः )** भाष्ये–**खलु**–अपि। तथा च अयं नित्यशब्दोऽपीत्यन्वयः। **अवश्यं**–केवलम्। तर्हि तेभ्योऽन्यत्र क स वर्त्तते इत्याशयेन पृच्छति–**किमिति। वर्त्तते**–स वर्त्तते। उदाहरणमाह–**तद्यथेति। यावता**–यतः। **तत्रापि**–नित्यशब्दोपादानेऽपि। अस्य "अत" इत्यादिः। **अर्थः**–निर्णयः। अनेनेत्यनेन निर्देश्यमाह—**व्याख्यानत इति।** "वर्त्तमानसामीप्ये वर्त्तमानवद्वेति सूत्रेण भूते लटि निष्पन्नमाह–**पश्यतीति।** अविचारयदित्यर्थः। यत इत्यादिः। **च**–अपि। तथा च सिद्धशब्द एवादितः प्रयुक्तो मङ्गलार्थोऽपि भविष्यतीत्यन्वयः। **एवेन** नित्यशब्दव्यावृत्तिः। **एनं**–सिद्धशब्दम्।

प्रदीपे—नन्वस्त्वाभीक्ष्ण्यवाचिन एव नित्यशब्दस्येह प्रयोगः क्षत्यभावादित्यत आह—**ततश्चेति।** आभीक्ष्ण्यार्थकनित्यशब्दप्रयोगे चेत्यर्थः। **आगोपालाङ्गनमिति**–गोपवधूपर्यन्तमित्यर्थः। आपामरमिति भावः। **एव**व्यावर्त्यमाह–**विरलप्रयोगाणामिति।** क्वाचित्कप्रयोगविषयाणां शब्दानामित्यर्थः। विद्वन्मात्रप्रयोज्यशब्दानामिति भावः। अन्वाख्यानं स्यादित्यनुषज्यते। **आभीक्ष्ण्यवृत्तिः**–आभीक्ष्ण्यवाचकः। दृष्टान्तमाह–**यथेति।**

उद्द्योते—**असन्दिग्धः**—सन्देहप्रागभावपालनप्रयोजकः। अस्य "यत" इत्यादिः। **प्रयुक्त इति**–वार्त्तिककृतेति शेषः। **उक्तमिति–पूर्वपक्षिणा,** अत इति शेषः। **तत्रापि**–नित्यशब्दोपादानेऽपि। **अयमेव**–बाहुल्येनेत्येव। **तद्**–आभीक्ष्ण्यं। **एवञ्च**–नित्यशब्देन आभीक्ष्ण्यस्यापि ग्राह्यत्वे च। **सप्रयोजनकोट्यन्तरेति**–सकलसाधुशब्दान्वाख्यानप्रयोजनककूटस्थादिवाचकतारूपद्वितीयकोटीत्यर्थः। **तत्रापि**–नित्यशब्दोपादानेऽपि। सन्देहः–अयं नित्यशब्दः आभीक्ष्ण्यवाची वा कूटस्थादिवाची वेत्याकारकः संशयः। **भाव इति**–भाष्यकृत इति शेषः। नन्वाभीक्ष्ण्यवाचिनित्यशब्दोपादाने वार्तिकस्य कोऽर्थः स्यादित्यत आह–**नित्ये इति। तात्पर्यमिति**–आभीक्ष्ण्यवाचिनित्यशब्दोपादाने दोषं दर्शयतः कैयटस्येति शेषः। **वाचिन इति**–नित्यशब्दस्येति शेषः। **केवलस्य**–क्रियापदरहितस्य। अस्य "नित्यशब्दस्येह"ति शेषः।

( सिद्धशब्दघटकपदार्थनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

अथ कं पुनः पदार्थं मत्वा एष विग्रहः क्रियते सिद्धे शब्देऽर्थे सम्बन्धे चेति ?॥

( समाधानभाष्यम् )

आकृतिमित्याह॥

कुत एतत् ?॥

आकृतिर्हि नित्या द्रव्यमनित्यम्॥

( आक्षेपभाष्यम् )

अथ द्रव्ये पदार्थे कथं विग्रहः कर्तव्यः ?॥

( समाधानभाष्यम् )

सिद्धे शब्दे अर्थसंबन्धे चेति। नित्यो ह्यर्थवतामर्थैरभिसंबन्धः॥

**( प्रदीपः )** अर्थसंबन्धे चेति। द्रव्यपक्षे द्रव्यस्यानित्यत्वादर्थग्रहणं संबन्धविशेषणार्थमुपात्तम्॥ अनित्येऽर्थे कथं संबन्धस्य नित्यतेति चेद्, योग्यतालक्षणत्वात्संबन्धस्य। तस्याश्च शब्दाश्रयत्वाच्छब्दस्य च नित्यत्वाददोषः॥

**( उद्द्योतः )** नन्वेवमर्थग्रहणं व्यर्थमत आह – **द्रव्यपक्षे इति। योग्यता** बोधजनकत्वयोग्यता तादात्म्यम्। तदुक्तं भाष्ये **नित्यो ह्यर्थवतामिति।** शब्दानामित्यर्थः॥ ननु तादात्म्यस्य संबन्धत्वे कथं तस्य नित्यत्वमिति चेन्न। नष्टभाविवस्तुनोऽपि शब्देन बोधाद्बोद्धार्थेन तस्य तादात्म्यं नित्यमित्याशयात्। शब्दवृत्तिधर्मस्यैवार्थवृत्तिधर्माभेदमापन्नस्य तादात्म्यत्वेनादोषाच्च॥ **शब्दस्य च नित्यत्वादिति।** आकाशवत्तन्निष्ठः शब्दोऽपि नित्यः। व्यञ्जकाभावात्तु न सर्वदोपलम्भ इति भावः॥

**( तत्त्वालोकः )** भाष्ये–जातिव्यक्तिपदार्थयोः प्राक् प्रक्रान्ततया संशयोदयात् पृच्छति–**अथेति।** जातिव्यक्तिपदार्थयोर्मध्ये इति शेषः। एष इत्यनेन निर्देश्यमाह–**सिद्धे इति।** उत्तरमनुवदति तटस्थः–**आकृतिमित्याहेति।** आकृतिं जातिं ( पदार्थं मत्वा एष विग्रहः क्रियते ) इति वदति ( सिद्धान्ती ) इत्यर्थः। ननु कुतो जातिपक्षे एष विग्रहः क्रियते न तु व्यक्तिपक्षे इत्याशयेन पृच्छति–**कुत इति।** यतः शब्दार्थसम्बन्धानां मध्ये प्रत्येकस्मिन् सिद्धताया नित्यताया अन्वयः जातिपक्षे सम्भवति न तु व्यक्तिपक्षे अत इत्यभिप्रायेणोत्तरयति–**आकृतिरिति।** जातिरित्यर्थः। **हि**–यतः। **द्रव्यं**–व्यक्तिः। एवमग्रेऽपि। **कथं**–किमाकारकः। **चेतीति**—आकारको विग्रहो विधेयो व्यक्तिपक्षे इति शेषः। नन्वत्र पक्षे सम्बन्धे कथं सिद्धताया अन्वय इत्यत आह–**नित्य इति। हि**–यतः। **अर्थवतामिति**–अर्थाः ( वाच्यतया ) सन्त्येषाम् ( शब्दानाम् ) इति व्युत्पत्तिः।

प्रदीपे—**द्रव्यस्य**—द्रव्यशब्दवाच्यघटादिरूपार्थस्य। **अनित्यत्वादिति**–तत्र सिद्धताया अनन्वयेऽपीति शेषः। **विशेषणार्थं**–विशेषणाय। **उपात्तम्**–कृतम्। तथा च न तस्य निष्फलतेति भावः। आश्रयानित्यत्वे आश्रितानित्यता दुर्निवारेत्याशयेन पृच्छति–**अनित्ये इति।** ( सम्बन्धाश्रये ) अर्थे अनित्ये ( सति ) इत्यन्वयः। **कथमिति**–तदाश्रितस्येति शेषः। उत्तरयति–**योग्यतेति।** सम्बन्धस्य योग्यतास्वरूपत्वादित्यर्थः। **तस्याः**–योग्यतायाः। **शब्दाश्रयेति**–शब्द आश्रयो यस्या इति व्युत्पत्तिः। तथा चार्थस्य सम्बन्धाश्रयत्वा-

भावात् तस्यानित्यत्वेऽपि सम्बन्धस्यानित्यता नापद्यते इति भावः ।

( उद्द्योते ) **एवम्**—अर्थे सिद्धताया अनन्वये । **तादात्म्यस्येति**—शब्दार्थयोरिति शेषः । **सम्बन्धत्वे इति**—सम्बन्धस्य द्वित्वात्, तादात्म्यस्यानुयोगिप्रतियोगिरूपत्वाच्च अर्थस्यानित्यत्वे सतीति शेषः । **तस्य**—सम्बन्धस्य । **बौद्धार्थेन**—बुद्धिस्थार्थेन ( नित्येन ) सह । **तस्य**—शब्दस्य । बौद्धार्थनिरूपकत्वं मतेऽप्याह—**शब्दवृत्तिधर्मस्येति** । घटादिशब्दवृत्तिघटत्वादिधर्मस्येत्यर्थः । **अर्थवृत्तिधर्माभेदम्**—घटार्थवृत्तिघटत्वादिधर्माभेदम् । तथा च शब्दार्थवृत्तिधर्मैक्यात्तादात्म्यादेव शब्दार्थरूपधर्मिणोस्तादात्म्यमित्याशयः । **लोकिङ्गः**—कपालादिः । **अपि**ना परिमाणादिसंग्रहः । ननु शब्दस्य नित्यत्वे कथन्न तस्य सर्वदोपलब्धिरित्यत आह—**व्यञ्जकेति** । नित्यस्यापि शब्दस्येत्यादिः । **तु**—एव ।

( द्रव्यपदार्थाभ्युपगमभाष्यम् )

अथवा द्रव्य एव पदार्थे एष विग्रहो न्याय्यः— सिद्धे शब्दे अर्थे संबन्धे चेति । द्रव्यं हि नित्यमाकृतिरनित्या ॥

कथं ज्ञायते ? ।

एवं हि दृश्यते लोके मृत्कयाचिदाकृत्या युक्ता पिण्डो भवति, पिण्डाकृतिमुपमृद्य घटिकाः क्रियन्ते, घटिकाकृतिमुपमृद्य कुण्डिकाः क्रियन्ते । तथा सुवर्णं कयाचिदाकृत्या युक्तं पिण्डो भवति, पिण्डाकृतिमुपमृद्य रुचकाः क्रियन्ते, रुचकाकृतिमुपमृद्य कटकाः क्रियन्ते, कटकाकृतिमुपमृद्य स्वस्तिकाः क्रियन्ते । पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः । आकृतिरन्या चान्या च भवति, द्रव्यं पुनस्तदेव । आकृत्युपमर्देन द्रव्यमेवावशिष्यते ॥

( प्रदीपः ) **द्रव्यं हि नित्यमिति** । असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः ॥ **आकृतिरिति** । संस्थानम् । ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्यत्वादनित्यत्वम्, **'आत्मैवेदं सर्वम्'** इति श्रुतिवचनात् ॥

( **उद्द्योतः** ) ननु घटादिद्रव्यस्य कथं नित्यतेत्यत आह— **असत्येति** । स च कम्बुग्रीवादिमदाकारादिरूपस्तद्व्यङ्ग्यजातिरूपो वा ॥ भाष्ये यद्याकृतिशब्देन तद्व्यङ्ग्यमुच्यते तर्हि तदभ्याविद्यकत्वेन व्यञ्जकानित्यत्वेन चानित्यमित्याह—**जातेरपीति** । अनेनैतत्प्रकरणस्थाकृतिपदस्य व्यङ्ग्यव्यञ्जकोभयपरतां सूचयति । गौतमेनाप्युक्तं **"जात्याकृतिव्यक्तयः पदार्थः"** इति ॥ भाष्ये **खदिराङ्गारसवर्णे कुण्डले भवत** इति प्रयोगादुच्यन्ते विकृतेः कर्तृत्वं बोध्यम् ॥

( **तत्त्वालोकः** ) भाष्ये —एष इत्यनेन निर्देश्यमाह—**सिद्धे इति** । कुत एवमित्यत आह—**द्रव्यमिति** । **हि**—यतः । पृच्छति—**कथमिति** । केन प्रकारेणेत्यर्थः । **ज्ञायते इति**—द्रव्यं नित्यमाकृतिरनित्येतीति शेषः । उत्तरयति—**एवमिति** । हि—(यतः) लोके एवं दृश्यते इत्यन्वयः । दृश्यमाह—**मृदिति** । मृत्तिकेत्यर्थः । **उपमृद्य**—विनाश्य । अन्तर्भावितण्यर्थत्वात् । एवमग्रेऽपि । **रुचककटकस्वस्तिकाः**—भूषणविशेषाः । **आवृत्तः**—स्वस्तिकाकृतिं विनाश्य कुट्टनादिना वर्तुलतां प्रापितः । **खदिराङ्गारसवर्णे**—खदिराग्निसमानवर्णे । रक्तरूपे इति भावः । स्वारम्भकावयवसंयोगनाशेन पूर्वद्रव्यनाशानन्तरं अवयवान्तरसंयोगान्तराद् द्रव्यान्तरोत्पाद इति वैशेषिकमतव्युदासायाह—**आकृतिरिति** । एवनित्यादिः । **तदेव**—द्रव्यमेव । यथा एक एवात्मा मनयभेदादनेकानि शरीराणि प्राप्नोतीत्यत आत्मा नित्यः शरीराण्यनित्यानि तथा द्रव्यमेव द्रव्यं नानाविधानेका आकृतीः ( संस्थानानि ) प्राप्नोत्यतः द्रव्यं नित्यमाकृतिरनित्येति भावः ।

प्रदीपे—**वाच्यमिति**—न तु घटादिद्रव्यम्, अतो नासङ्गतिरिति शेषः । **अर्थः**—भावः । वस्तुतस्तु "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमि" ति श्रुत्यनुसारेण घटकपालकपालिकाद्याकारेषु मृत एवाधिककालावस्थायित्वात् सत्यत्वेत्याशयेन द्रव्यस्य नित्यतोक्तिरित्याहुः । **ब्रह्मदर्शने**—दृष्टिसृष्टिवादिवेदान्तदर्शने । **जातेरिति**—अपिविदरादिनेति शेषः । अपिना संस्थानसंग्रहः । कुत एतज्ज्ञायते इत्यत आह—**आत्मेति** । **सर्वमिति**—नेह नानास्ति किञ्चनेति हेतुः ।

उद्द्योते— **घटादिद्रव्यस्येति**—द्रव्यशब्दवाच्यस्येति शेषः । **स च**—असत्योपाधिश्च । **तद्व्यङ्ग्यजातिरूपः**—कम्बुग्रीवादिमदाकारादिव्यङ्ग्यघटत्वादिजातिरूपः । **तद्व्यङ्ग्यम्**—आकृति ( संस्थान ) व्यङ्ग्यम् जातिरूपम् । **तदपि**—जातिस्वरूपमपि । **आविद्यकत्वेन**—अविद्यापरिणामत्वेन । **व्यञ्जकेति**—संस्थानेत्यर्थः । **अनेन**—जातेरप्यनित्यतेति कथनेन । **व्यङ्ग्यव्यञ्जकोभयेति**—जातिसंस्थानोभयेत्यर्थः । एवं द्रव्यशब्दस्य व्यक्तिपरतया आकृतिशब्दस्य जातिसंस्थानोभयपरतया च त्रयाणां व्यक्तिजातिसंस्थानानां पदार्थतायां भाष्यकैयटोभयसूचितायामन्याचार्यसम्मतिमाह—**गौतमेनेति** । जलीभवति लवणमित्यादौ च्यवन्ते प्रकृतेः कर्तृत्वादाह—**अच्यवन्ते विकृतेरिति** । तथा चात्र कुण्डलयोः कर्तृतया भवत इत्यत्र द्विवचनोपपत्तिरिति भावः ।

( आकृतिपदार्थाभ्युपगमभाष्यम् )

आकृतावपि पदार्थ एष विग्रहो न्याय्यः—सिद्धे शब्दे अर्थे संबन्धे चेति ॥

( **उद्योतः** ) आकृतिपदेन जातिरित्यभिप्रायेण भाष्ये **आकृतावपि पदार्थ इति** ॥

( **तत्त्वालोकः** ) भाष्ये —सत्याद्वयवादिवेदान्तिमतेन ब्रह्मरूपद्रव्यस्य नित्यत्वात् जातिसंस्थानयोरनित्यत्वाच्च द्रव्यपक्षे एव स विग्रहः संभवतीत्युपपाद्य सत्तात्रयाभ्युपगन्तृदृष्टिसृष्टिवादिवेदान्तिमतेन जातेः व्यावहारिकनित्यत्वात् जातिपक्षेऽपि स विग्रहः सम्भवतीत्याशयेनाह—**आकृताविति** । अथवेत्यादिः । **अपि**ना द्रव्यसंग्रहः । एष इत्यनेन निर्देश्यमाह—सिद्धे इति ।

उद्द्योते — **जातिरिति**—एव गृह्यते इति शेषः ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—आकृतिरनित्या—इति ॥

( समाधानभाष्यम् )

नैतदस्ति । नित्याऽऽकृतिः ॥

कथम् ? ॥

न क्वचिदुपरतेति कृत्वा सर्वत्रोपरता भवति । द्रव्यान्तरस्था तूपलभ्यते ॥

( **प्रदीपः** ) **न क्वचिदुपरतेति** । अनभिव्यक्तेत्यर्थः । अद्वैतेन लोके व्यवहाराभावाद् व्यवहारे चाकृतेरेकाकारपरामर्शहेतुत्वान्नित्यत्वम् ॥

( **उद्योतः** ) क्वचिदुपरतेति कृत्वा न सर्वत्रोपरतेत्यन्वयः ॥ ननूपरमो नाशस्तेनैककाले एवान्यत्र सत्त्वं विरुद्धमत आह—**अनभीति** ॥ ननु परमार्थदृष्ट्या सर्वमनित्यमत आह—**अद्वैतेनेति** ।

**नित्यत्वमिति ।** सर्वदा एकाकारपरामर्शदर्शनेन यावद्व्यवहारकालं तस्या अपि ध्रुवादित्वेन नित्यत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—प्रकृतोक्तौ पूर्वोक्त्या विरोध इत्याशयेनोक्तं स्मारयति—**ननु चेति ।** भवतेति शेषः । विरोधपरिहारायाह—**नैतदिति ।** नाकृतेः ( जातेः ) अनित्यत्वमित्यर्थः । किन्तर्हीत्यत आह—**नित्येति ।** ननु कथं ज्ञायते जातिर्नित्येतीत्याशयेन पृच्छति—**कथमिति ।** उत्तरयति—**नेति ।** आकृतिरिति शेषः । **द्रव्येति—**तु ( किन्तु ) द्रव्यान्तरस्था उपलभ्यते इत्यन्वयः । तथा च नष्टघटादिव्यक्तौ अनभिव्यक्ताऽपि घटत्वादिजातिः विद्यमानघटादावभिव्यक्तेति हेतोः व्यक्तिनाशेऽपि जातेरनाशात्तस्या नित्यत्वमिति भावः ।

प्रदीपे—**अद्वैतेन**—ब्रह्मणा । **व्यवहाराभावादिति**—जगतो व्यावहारिकी सत्ता नन्तव्येति शेषः । **आकृतेः**—( गोत्वादि ) जातेः । **एकाकारपरामर्शहेतुत्वात्**—अयं गौरयं गौरित्याद्येकाकारानुगतप्रतीतिहेतुत्वात् ।

उद्द्योते—**उपरमः**—उपरतेत्यत्रोपपूर्वकरमधात्वर्थः । **चेत्**—यदि । तर्हीति शेषः । **तत्काले**—नाशकाले । **सर्वं**—ब्रह्मातिरिक्तं सकलम् । **अनित्यमिति**—तर्हि आकृतिः कथं नित्येति शेषः । **तस्याः**—आकृतेः ( जातेः ) । **ध्रुवादित्वेन**—ध्रुवकूटस्थादित्वेन ।

### ( समाधानसाधकनित्यलक्षणभाष्यम् )

**अथवा नेदमेव नित्यलक्षणम्—ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति । तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते ॥**

**किं पुनस्तत्त्वम् ? ॥**

**तद्भावस्तत्त्वम् ॥ आकृतावपि तत्त्वं न विहन्यते ॥**

**( प्रदीपः ) अथवेति ।** असत्यत्वेऽपि तत्त्वतो लोकव्यवहाराश्रयणेन जातेर्नित्यत्वं साध्यते । त्रिविधा चानित्यता, **संसर्गानित्यता** यथा—स्फटिकस्य लाक्षाद्युपधाने स्वरूपतिरोधानेन पररूपभासः । उपधानापगमे स्वरूपप्रतिभासात्परिणामाभावः ॥ **परिणामानित्यता** यथा—बदरीफलस्य श्यामतातिरोभावे लौहित्यस्याविर्भावः ॥ **प्रध्वंसानित्यता ।** सर्वात्मना विनाशः । एतत्त्रिविधानित्यताप्रतिक्षेपेण नित्यतां प्रतिपादयितुमुक्तं **ध्रुवमित्यादि ।** तत्र **ध्रुवं कूटस्थ**मिति संसर्गानित्यता परिहृता, **अविचालीति** परिणामानित्यता, **अनपाये**त्यादिना प्रध्वंसानित्यता ॥

**( उद्द्योतः )** अथावयवसंस्थानरूपाया जातिव्यञ्जिकाया आकृतेर्यावद्व्यवहारकालं मध्ये मध्ये उत्पत्तौ नाशेऽपि प्रकारान्तरेण नित्यत्वमाह—भाष्ये **अथवेति ।** नित्यत्वलक्षणे ध्रुवपदस्यैव व्याख्यानं **कूटस्थमिति ।** रूपान्तरापत्तिर्**विचालः ।** यथा पयसो दध्यादिरूपता । **अनेन** परिणामानित्यता परास्ता । उत्पत्तेः सत्तापर्यन्तत्वाद**नुत्पत्ती**त्यनेन जन्मसत्तारूपौ भावविकारौ निरस्तौ । **अवृद्धी**त्यनेन तृतीयो वृद्धिलक्षणः । **अनुपजनेति** चतुर्थः परिणामः । **अनपायेति** पञ्चमोऽपचयः । एतद्रूपविकाररहितमिति तदर्थः ॥ **अव्ययेति** षष्ठो विनाशः । इदं च ब्रह्मविषयं नित्यत्वं यावद्व्यवहारमेकरूपस्थितपदार्थविषयं च ॥ अयमेव न नित्यशब्दार्थः, प्रवाहाविच्छेदेऽतादृश्यपि नित्यत्वव्यवहारादित्याह—भाष्ये **तदपीति ॥ यस्मिंस्तत्त्वमिति ।** यस्मिन्विहतेऽपि तद्वृत्तिधर्मो न विहन्यते इत्यर्थः ॥ प्रवाहनित्यता चानेनोक्ता । तन्नाशेऽपि तद्धर्मो न नश्यति । आश्रयप्रवाहाविच्छेदादिति भावः ॥

**(तत्त्वालोकः)** भाष्ये—**नेदमेव नित्यलक्षणमिति**—अस्ति, अपि तु अन्यदपि नित्यलक्षणमस्तीति शेषः । इदमित्यनेन निर्देश्यमाह—**ध्रुवमिति ।** ननु किमन्यत् नित्यलक्षणमित्यत आह—**तदपीति । यस्मिन्निति**—नष्टेऽपीति शेषः । **तस्य**—घटादेः । **भावः**—तद्वृत्तिधर्मरूपघटत्वादिः । उपसंहरति—**आकृतावपीति ।** अवयवसंस्थानरूपायामाकृतावित्यर्थः । नष्टायामिति शेषः । **तत्त्वम्**—तद्व्यङ्ग्यजातिरूपस्तद्वृत्तिधर्मः । **न विहन्यते इति**—आश्रयप्रवाहाविच्छेदात् , अतः संस्थानरूपाऽऽकृतिरपि नित्येति शेषः ।

प्रदीपे—**असत्यत्वे इति**—अवयवसंस्थानरूपाया आकृतेरित्यादिः । तथा च तादृशाकृतेः तत्त्वतः ( परमार्थतः ) असत्यत्वेऽपीत्यन्वयः । **जातेः**—जातिव्यञ्जकावयवसंस्थानरूपाकृतेः । ध्रुवमित्यादिलक्षणघटकविशेषणकृत्यदर्शनाय भूमिकां रचयति—**त्रिविधा चानित्यतेति ।** संसर्गानित्यतापरिणामानित्यताप्रध्वंसानित्यताभेदादिति शेषः । अनित्यतात्रयन्तत् क्रमेणोदाहर्तुमाह—**संसर्गेति । स्फटिकस्येति**—शुक्लरूपस्यापीत्यादिः । **लाक्षाद्युपधाने**—रक्तादिरूपलाक्षाजपाकुसुमाद्यात्मकोपाधिसन्निधाने । **स्वरूपेति**—निजशुक्लरूपेत्यर्थः । **पररूपेति**—उपाधिरक्तादिरूपेत्यर्थः । **उपधानापगमे**—उपाधिविगमे तु । **परिणामाभावः**—उपाधिरक्तादिरूपप्रतिभासाभावः । उपाधिसंसर्गसत्त्वे एवोपधेये रूपान्तरभासो नान्यथेति भावः । **प्रतिक्षेपेण**—निराकरणेन । **परिणामानित्यतेति**—परिहृतेत्यनुषज्यते । एवमग्रेऽपि ।

उद्द्योते—कैयटोक्तस्य यथाश्रुतार्थकत्वे पौनरुक्त्यमापद्येतातोऽन्यथा व्याचष्टे—**अथेति ।** "न क्वचिदुपरते" त्यादिना जातिरूपाया आकृतेः नित्यत्वसाधनानन्तरमित्यर्थः । **प्रकारान्तरेण**—नित्यलक्षणान्तरेण । **अनेन**—अविचालीत्यनेन । "अनपायेत्यादिना प्रध्वंसानित्यता परिहृते"ति कैयटकथनं न युक्तं, अव्ययेत्येतावन्मात्रेण निरसितुं शक्यायाः प्रध्वंसानित्यतायाः निरासाय षड्विशेषणोपादानस्य वैफल्यात् । किन्तु जायते अस्ति वर्द्धते विपरिणमते अपक्षीयते नश्यतीत्येवं रूपषड्भावविकारनिरसनाय अनपायेत्यादीनि षड्विशेषणान्युपात्तानीति बोधयितुं षड्भावविकारक्रमेणाह—**उत्पत्तेरिति । वृद्धिलक्षणः**—वृद्धिरूपः । विकारो निरस्त इति शेषः । एवमग्रेऽपि । **अपचयः**—ह्रासः । **एतद्रूपेति**—अपचयरूपेत्यर्थः । **तदर्थः**—अनपायशब्दार्थः । **इदञ्च**—उक्तद्विविधरूपञ्च । संसर्गानित्यतादित्रिविधानित्यताशून्यत्वरूपमेकम् , तथा तादृशषड्भावविकाररहितत्वरूपमपरमिति भावः । अस्य नित्यत्वमित्यनेनान्वयः । **पदार्थेति**—जात्यादिरूपेत्यादिः । **अयमेव**—उक्तद्विविधरूपवानेव । **अतादृश्यपि**—उक्तद्विविधरूपाभाववत्यपि अवयवसंस्थानरूपाकृत्यादौ । **यस्मिन्**—अवयवसंस्थानरूपे घटाद्याकारे । **तद्वृत्तिधर्मः**—घटत्वादिजातिरूपः । **प्रवाहनित्यता**—ध्वंसाप्रतियोगिसजातीयतारूपा । **अनेन**—तदपीत्यनेन । **तदिति**—अवयवसंस्थानरूपाकृतीत्यर्थः । **आश्रयेति**—धर्माश्रयेत्यर्थः ।

### ( नित्यानित्यत्वविचारस्याप्रकृतत्वबोधकभाष्यम् )

**अथवा किं न एतेन—इदं नित्यमिदमनित्यमिति । यन्नित्यं तं पदार्थं मत्वैष विग्रहः क्रियते—सिद्धे शब्देऽर्थे संबन्धे चेति ॥**

**( प्रदीपः ) यन्नित्यमिति ।** बुद्धिप्रतिभासः शब्दार्थो यदा यदा शब्द उच्चारितस्तदातदाऽर्थाकारा बुद्धिरुपजायते इति प्रवाहनित्यत्वादर्थस्य नित्यत्वमित्यर्थः ॥

**( उद्द्योतः ) यन्नित्यमिति ।** व्यक्तिजात्याकृतीनां मध्ये यन्नित्यमित्यर्थः ॥ ननु शशशृङ्गादिपदार्थानां कथं नित्यत्वं तेषां स्वरूपस्यैवाभावादत आह—**बुद्धिप्रतिभास इति ।** बाह्यः पदार्थो न

शाब्दबोधे विषयः, किंतु बौद्धः । स च प्रवाहनित्य इति भावः ॥ एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

**(तत्त्वालोकः)** भाष्ये—साधुशब्दस्यु पादनाय प्रवृत्तानामस्माकं नास्ति किमपि प्रयोजनं विषयविशेषे नित्यत्वानित्यत्वविवेचनयेत्याशयेनाह–**अथवेति** । **किमिति**–प्रयोजनमिति शेषः । **नः**–अस्माकम् । **एतेनेति**–विचारेणेति शेषः । एतेनेत्यनेन निर्देश्यमाह—**इदमिति** । एष इत्यनेन निर्देश्यमाह–**सिद्धे इति** ।

प्रदीपे-बुद्धि**प्रतिभासः**–बौद्धार्थः । एवेति शेषः । **शब्दार्थः**–शब्दजन्यबोधविषयः । तत्र हेतुमाह–**यदा यदेति** । अर्थस्य बहिः सत्त्वेऽसत्त्वे वेत्यर्थः । वक्त्रेति शेषः । **शब्दः**–गृहीतशक्तिकः । **अर्थाकारेति**–अर्थ आकारो यस्या इति व्युत्पत्तिः । **इति**–इति हेतोः । एवञ्चेति शेषः । **अर्थस्य**–बौद्धस्य । **अर्थः**–भावः ।

उद्द्योते–**पदार्थानामिति**–मध्ये कस्यापीति शेषः । **बाह्यः**–बहिर्वर्त्तमानः । **बौद्ध इति**–पदार्थ इत्यनुषज्यते । **स च**–बौद्धपदार्थश्च । **एतच्च**–बौद्धार्थस्य प्रवाहनित्यतया नित्यत्वञ्च ।

### (प्रत्याक्षेपभाष्यम्)

**कथं पुनर्ज्ञायते-सिद्धः शब्दोऽर्थः संबन्धश्चेति ! ॥**

### (१ प्रत्याक्षेपसमाधानवार्तिक द्वितीयखण्डम् ॥ २ ॥)

## ॥ * ॥ लोकतः ॥ * ॥

### (भाष्यम्)

**यल्लोकेऽर्थमर्थमुपादाय शब्दान्प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति । ये पुनः कार्या भावा निर्वृत्तौ तावत्तेषां यत्नः क्रियते । तद्यथा-घटेन कार्यं करिष्यन् कुम्भकारकुलं गत्वाह—कुरु घटं कार्यमनेन करिष्यामीति । न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाह—कुरु शब्दान्प्रयोक्ष्य इति । तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते ॥**

**(प्रदीपः) लोकत इति ।** अन्यथा कार्येषु वस्तुषु लोकव्यवहारः, अन्यथा नित्येषु । शब्दश्च व्यवहारोऽनादिवृद्धव्यवहारपरम्परा-व्युत्पत्तिपूर्वक इति शब्दादीनां नित्यत्वम् । घटादयस्त्वर्थक्रियार्थिभिरन्यत आनीयन्त उत्पादविनाशयुक्ताश्चोपलभ्यन्ते । नैवं शब्दादयः ॥ **तावत्येवार्थमिति ।** बुद्ध्या वस्तु निरूप्येत्यर्थः ॥

**(उद्द्योतः) शब्दादीनां नित्यत्वमिति ।** व्याकरणानिष्पाद्यत्वमित्यर्थः ॥ **तावत्येवेति ।** वैयाकरणकुलमगत्वैवेत्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये— नन्वर्थसम्बन्धयोः व्याकरणानिष्पाद्यत्वेन नित्यतानिर्णयेऽपि व्याकरणनिष्पाद्यशब्दे कुतो निश्चीयते नित्यतेत्याशयेन पृच्छति–**कथमिति।** उत्तरयति–**लोकत इति** । ज्ञायते इति शेषः । **यत्**–यतः । अहरहः सन्ध्यामुपासीतेति साभ्यासकथनेन सन्ध्योपासनाया आवश्यकताया इव शब्दप्रयोगकाले अर्थोपादानस्यावश्यकतायाः सूचनाय साभ्यासमाह–**अर्थमर्थमुपादायेति** । अर्थं बुद्धिविषयीकृत्यैवेत्यर्थः । **नेति**–किन्त्वित्यादिः । **एषां**–शब्दानाम् । **निर्वृत्तौ**–निष्पत्तौ । अत्र निमित्तार्थे सप्तमी । **ये इति**–अपि त्वित्यादिः । **भावाः**–पदार्थाः । घटनिष्पत्तये यत्नस्य करणम्, शब्दनिष्पत्तये तस्याकरणञ्चोदाहरणेनोपपादयितुमाह–**तद्यथेति । अनेन**–घटेन। **तद्वत्**–तस्य घटार्थं कुलालकुलगमनादिवत् । **प्रयोक्ष्ये इति**–वानित्यादिः । **तावतीति**–किन्त्वित्यादिः । समये इति शेषः । तथा च किन्तु वैयाकरणकुलगमनात्प्राक् समये एवेत्यर्थः ।

प्रदीपे—**अन्यथा**–अन्यप्रकारेण । **नित्येषु इति**–वस्तुषु लोकव्यवहार इत्यनुषज्यते । शब्दस्थले घटस्थले च भिन्नो व्यवहार इत्युपपादयितुमाह–**शब्द इति ।** शब्दसम्बन्धीत्यर्थः । **व्यवहारः**–प्रयोगरूपः । **अनादीति**–अनादिः या वृद्ध (व्युत्पन्न) व्यवहारपरम्परा, तया या व्युत्पत्तिः (शब्दज्ञानादि) तत्पूर्वक इत्यर्थः । **इति**–इति हेतोः । **तु**रुक्तवैलक्षण्यसूचकः । **अर्थक्रियार्थिभिः**–जलाहरणादिकार्यार्थिभिः । **अन्यतः**–कुलालकुलादितः । **नेति**–किन्त्वित्यादिः । **एवं**–घटादय इवान्यत आनीयन्ते उत्पादविनाशयुक्ता वोपलभ्यन्ते ।

उद्द्योते—उक्तरीत्या सिद्धेन–व्याकरणानिष्पाद्यत्वेनैव शब्दे नित्यताऽनुमीयते, अथवा जन्यभावव्यवहारविजातीयव्यवहारविषयत्वेन शब्दे जन्यभाववैजात्यनित्यत्वमनुमीयते इत्याशयेनाह—**व्याकरणेति ।**

### (आक्षेपोसंहारभाष्यम्)

**यदि तर्हि लोक एषु प्रमाणम्, किं शास्त्रेण क्रियते ?**

### (१ समाधानभूतं तृतीयखण्डम् ॥ ३ ॥)

## ॥ * ॥ लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः ॥ * ॥

### (भाष्यम्)

**लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते ॥**

**किमिदं धर्मनियम इति ! ॥**

**धर्माय नियमो धर्मनियमः, धर्मार्थो वा नियमो धर्मनियमः, धर्मप्रयोजनो वा नियमो धर्मनियमः ॥**

**(प्रदीपः)** अत्र भाष्यकारेण संभवन्तीमप्येकवाक्यतामनाश्रित्य वाक्यत्रयं व्यवस्थापितम् । **सिद्धे शब्दार्थसंबन्धे** शास्त्रं प्रवृत्तमित्येकं वाक्यम् । कथं ज्ञायत इति प्रश्ने **लोकतो** ज्ञायते इति द्वितीयम् । लोकत इत्यस्यावृत्त्या **लोकतोऽर्थप्रयुक्त** इत्यादि तृतीयम् ॥ **शब्दप्रयोग इति** प्रयोगग्रहणेन 'प्रयोगाद्धर्मो न तु ज्ञानमात्राद्' इत्युक्तं भवति । अर्थेनात्मप्रत्यायनाय प्रयुक्तोऽर्थप्रयुक्तः ॥ **धर्माय नियम इति ।** चतुर्थ्या तादर्थ्यं प्रतिपाद्यते । संबन्धसामान्ये तु षष्ठीं विधाय समासः कर्तव्यः, चतुर्थीसमासस्य प्रकृतिविकारभाव एव विधानात् ॥ **धर्मार्थं इति ।** धर्मार्थत्वान्नियम एव धर्मशब्देनाभिधीयते इति कर्मधारयः समासः ॥ **धर्मप्रयोजन इति ।** लिङादिविषयेण नियोगाख्येन धर्मेण प्रयुक्त इत्यर्थः ॥

**(उद्द्योतः)** ननु सकृदन्वितस्य **लोकत** इत्यस्य पुनरर्थ**प्रयुक्ते** इत्यनेनान्वयः कथम् । वार्तिके चैकवाक्यतयैवान्वयः प्रतीयतेऽत आह–**अत्रेति । अनाश्रित्येति ।** न्यूनतापरिहारायेत्यर्थः । **लोकत** इत्यस्य च लोकव्यवहारत इत्यर्थः ॥ **भाष्ये अर्थप्रयुक्ते इति ।** अर्थज्ञानप्रयोजनेन कृत इत्यर्थः । परस्य विशिष्टार्थबोधो भवत्विति शब्दः प्रयुज्यते, प्रयोगेणाविर्भूतशब्दज्ञानेनार्थज्ञानादिति भावः ॥ एवं प्राप्ते शब्दप्रयोगे शास्त्रेणास्येयं प्रकृतिरयं प्रत्यय इत्यादिप्रकृत्यादिविभागज्ञानद्वारा गवादय एव प्रयुक्ता धर्मजनकाः, न गाव्यादय इति नियमः क्रियत इति तात्पर्यम् ॥ **विधानादिति ।** तादर्थ्यस्य षष्ठ्यर्थत्वबोधनाय त्वेवं प्रयोग

इति भावः॥ **चतुर्थीति** योगविभागो न भाष्यारूढः। **सुप्सुपेति** समास इत्यप्यगतिकगतिरित्येवं व्याख्यातम्॥ द्वितीयपक्षात्तृतीये विशेषं दर्शयति—**लिङादीति।** प्रभाकराद्यभिमतमेतत्। तन्मते हि लिङादीनामपूर्वमेवार्थः कार्यं वाच्यम्। तदेव च तस्मिन् पुरुषं प्रयुञ्जानं नियोग इत्युच्यते। स एव धर्मस्तेन प्रयुज्यते आक्षिप्यते इति कर्मल्युडन्तः प्रयोजनशब्दः। स चासाधुनिवृत्तिरूपो नियमः। **धर्मप्रयोजन** इति षष्ठीसमासः। एवंच द्वितीये धर्मफलको नियम इत्यर्थः। तृतीये धर्मप्रयोज्य इत्यर्थ इति भेदः॥ केचित्तु **धर्माय नियम** इत्यनेन प्रत्यवायपरिहाररूपधर्मायायं नियमः॥ असाधुप्रयोगेऽधर्मोत्पत्तेः॥ **धर्मार्थो नियम** इत्यनेन धर्मस्य यज्ञादेरङ्गभूत इत्यर्थः। **नानृतं वदेदिति** क्रत्वङ्गवाक्येन क्रतुवैगुण्यस्य बोधनात्॥ **धर्मप्रयोजनो नियम** इत्यनेनैकः **शब्द** इति श्रुतेर्नियमादृष्टं पुरुषार्थकरं सूचितमित्याहुः॥

**( तत्त्वालोकः )** भाष्ये नन्नु शब्दस्य व्याकरणानिष्पाद्यत्वे व्याकरणशास्त्रस्य वैयर्थ्यमापद्येत, "अप्राप्ते शास्त्रमर्थवदि"ति न्यायादित्याशयेन पृच्छति-**यदीति। तर्हीति**-अस्य किमित्यनेनान्वयः। **एषु**-शब्देषु। **प्रमाणं**-व्युत्पत्त्याधायकम्। अथ शब्दापशब्दयोः प्रयुक्तयोरर्थस्मारकत्वसाम्येऽपि शास्त्रज्ञानपूर्वकोच्चार्यमाणशब्दस्यैव धर्मजनकता नापशब्दस्येति नियमविधायकतया शास्त्रस्य सार्थकत्वमित्याशयेनोत्तरयति-**लोकत इति।** धर्मनियम इत्यत्र कः समास इत्याशयेन पृच्छति-**किमिदमिति।**

प्रदीपे—**अत्र**-"सिद्धे शब्दार्थे"ति वार्त्तिके। **एकवाक्यताम्**-लोकव्यवहारतः शब्दार्थसम्बन्धे सिद्धे ( नित्ये ) अर्थज्ञानप्रयोजनकृते शब्दप्रयोगे च सिद्धे शास्त्रेण धर्मनियमः क्रियते इत्येकवाक्यताम्। **व्यवस्थापितमिति**-अत एव प्रश्नवाक्येषु क्रमशः प्रवृत्तम्, ज्ञायते क्रियते इति विभिन्नक्रियोक्तिरिति भावः। ननु किन्तत् वाक्यत्रयमित्यत आह-**सिद्धे इति।** कथं शास्त्रं प्रवृत्तमिति प्रश्ने इत्यादिः। **द्वितीयमिति**-वाक्यमित्यनुषज्यते। एवमग्रेऽपि। **लोकत इति**-यदि लोकतो ज्ञायते तर्हि किं शास्त्रेण क्रियते इति प्रश्ने इत्यादिः। ननु अर्थप्रयुक्तशब्दे का व्युत्पत्तिरित्यत आह-**अर्थेनेति। आत्मप्रत्यायनाय**-स्वरूपबोधनाय। **प्रतिपाद्यते इति**-किन्तु न चतुर्थीसमासो विवक्षित इति शेषः। तर्हि तत्र कः समासो विधेय इत्यत आह-**सम्बन्धेति।** कथन्न तत्र चतुर्थीसमास एव विवक्षित इत्यत आह-**चतुर्थीति। प्रकृतीति**-यूपाय दारु यूपदारु इत्यादावित्यादिः। **इति**-इति हेतोः। धर्मश्चासौ नियम इति व्युत्पत्ताविति शेषः। **लिङादिविषयेण**-लिङादिवाच्येन।

उद्द्योते—**सकृदिति**—"सिद्धे" इत्यनेनेति शेषः। **एकवाक्यतया**-उक्तरूपया। **न्यूनतेति**-वार्त्तिकघटकतत्तदंशोपादानप्रयोजनाबोधकतारूपन्यूनतेत्यर्थः। **भवत्वितीति**-हेतोरिति शेषः। ननु कथं शब्दप्रयोगेणार्थबोध इत्यत आह--**प्रयोगेणेति।** शब्दप्रयोगेण शब्दाविर्भावः, आविर्भूतश्च शब्दः परेण श्रूयते, तच्छ्रवणेन च "एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयती"ति न्यायेन तदर्थस्मरणं, ततः शाब्दबोध इति भावः। **एवम्**-उक्तरीत्या। **शब्दप्रयोगे**-साध्वसाधुशब्दप्रयोगे। **शास्त्रेणेति**-अस्य क्रियते इत्यनेनान्वयः। ननु यदि चतुर्थीसमासो न विवक्षितस्तर्हि कथं चतुर्थ्यन्ततया निर्देश इत्यत आह-**तादर्थ्यस्येति। एवं**-चतुर्थ्यन्ततया। नन्वेवमपि "चतुर्थी तदर्थार्थबलिहितसुखरक्षितैरि"ति सूत्रे चतुर्थीति योगविभागेनैव तत्र कथन्न समास इत्यत आह--**चतुर्थीतीति।** नन्वेवमपि "सुप्सुपेत्य"नेनैव तत्र समासः कुतो नेत्यत आह-**सुप्सुपेतीति। इत्येवम्**-इति हेतोः षष्ठीसमासपरत्वेन। तत्र कैयटेनेति शेषः। **तृतीये**-तृतीयपक्षे। **इदम्**-विशेषोपादानम्। तस्मिन्—तत्प्रकरणे। हि—यतः। **लिङिति**-स्वर्गकामो यजेतेत्यादाविन्यादिः। अदेव-अपूर्वमेव। **प्रयुञ्जानं**-नियोजयत्। स एव-नियोग एव। तेन-धर्मेण। स च-धर्मप्रयोजनश्च। **असाध्विति**-असाधुशब्देत्यर्थः। नियोऽयं **इति**-नियम इत्यनुषज्यते। **अयम्**-असाधुशब्दनिवृत्तिरूपः। तत्र हेतुमाह-**असाध्विति।** शब्देति शेषः। **म्लेच्छ इति**-स नियम इति शेषः। तत्र हेतुमाह-**नानृतमिति। वाक्येनेति**-अनपशब्दभाषणे इति शेषः। **शब्द इति**-सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति शेषः। **नियमादृष्टं**-नियमपालनजनितपुण्यं। **पुरुषार्थकरं**-अर्थकामादिदं।

( १ वार्तिकचतुर्थखण्डम् ॥ ४ ॥ )

## ॥ ❀ ॥ यथा लौकिकवैदिकेषु ॥ ❀ ॥

( भाष्यम् )

**प्रियतद्धिता दाक्षिणात्याः—'यथा लोके वेदे चे'ति प्रयोक्तव्ये 'यथा लौकिकवैदिके'ष्विति प्रयुञ्जते ॥ अथवा युक्त एवात्र तद्धितार्थः। यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥**

**लोके तावद् 'अभक्ष्यो ग्राम्यकुक्कुटः, अभक्ष्यो ग्राम्यसूकर' इत्युच्यते। भक्ष्यं च नाम क्षुत्प्रतिघातार्थमुपादीयते। शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुम्। तत्र नियमः क्रियते-इदं भक्ष्यमिदमभक्ष्यमिति॥ तथा—खेदात्स्त्रीषु प्रवृत्तिर्भवति। समानश्च खेदविगमो गम्यायां चागम्यायां च। तत्र नियमः क्रियते—इयं गम्येयमगम्येति ॥**

**( प्रदीपः ) प्रियतद्धिता इति।** नायपशब्दः किंतु ये लोकवेदयोर्भवा अवयवास्ते लोकवेदशब्दाभ्यामभिधातुं शक्यन्ते। आधाराधेयभावकल्पनया तु तद्धितप्रयोगः प्रियतद्धितत्वनिमित्तः। यथा कश्चिद्वनस्पतय इति प्रयुङ्क्ते कश्चिद्वानस्पत्यमिति समूहप्रत्ययान्तम्॥ **अथवेति।** नात्रावयवावयविविभागः, किं तर्हि लोकवेदव्यतिरिक्तसिद्धान्तशब्दार्थोभयरूप इत्यर्थः॥ **लौकिकः,** स्मृत्युपनिबद्धः। **वैदिकः,** श्रुत्युपनिबद्धः॥ **शक्यं चानेनेति।** शकेः कर्मसामान्ये लिङ्गसर्वनामनपुंसकयुक्ते कृत्यप्रत्ययः। ततः पदान्तरसंबन्धादुपजायमानमपि स्त्रीत्वं बहिरङ्गत्वादन्तरङ्गसंस्कारं न बाधते इति **शक्यं क्षुदि**त्युक्तम्। यदा तु पूर्वमेव विशेष्यविवक्षा तदा शक्या क्षुदिति भवत्येव। यदा तु प्रतिघातस्यैव क्षुत्कर्म शकेस्तु प्रतिघातस्तदा क्षुधं प्रतिहन्तुं शक्यमिति भवति॥ **खेदादिति।** खेदयतीति खेदो रागः, इन्द्रियनियमासामर्थ्यं वा खेदः॥

**( उद्द्योतः )** नन्वीदृशो धर्मनियमः क्व दृष्टोऽत आह भाष्ये—**यथेति॥** ननु लोकवेदयोरित्येव सिद्धे तद्धितनिर्देशोऽयुक्तोऽत आह—**प्रियतद्धिता इति॥** नन्वन्यार्थेऽन्यशब्दप्रयोगेऽपशब्दत्वं स्यादत आह—**नायमिति॥ ते लोकवेदेति।** अवयवे समुदायशब्दप्रयोगदर्शनादिति भावः॥ **आधाराधेयकल्पनया त्विति।** लोकवेदरूपसमुदायतदवयवयोरित्यादिः॥ **नात्रावयवावयविविभाग इति। तत्र भव** इत्यादिव्यवहारप्रयोजको विभागारोपोऽवयवावयविनोर्नेत्यर्थः॥ **कृतान्तेषु।** कृतान्तः सिद्धान्तः। तत्प्रतिपादकवाक्येष्वित्यर्थः॥ **भक्ष्यं च नाम**ेत्यस्य तद्भवति यदिति शेषः॥ शक्यं क्षुदिति सामानाधिकरण्यं कथं भिन्नलिङ्गत्वादत आह—**शकेरिति। तदा क्षुध**-

**मिति ॥** ननु प्रधानक्रियानिरूपितशक्तेरभिधाने गुणक्रियानिरूपितशक्तेरनभिहितायाः अभिहितवत्प्रकाशस्य स्वादुम्नि भुङ्क्ते इत्यत्र वक्ष्यमाणत्वेन कथमेतदिति चेन्न । प्रधानतिङन्तार्थक्रियानिरूपितशक्तेरेवायं स्वभावो यत्स्वसमानाधिकरणगुणशक्तेरभिहितवत्प्रकाश इत्यभिमानात् । वस्तुत इदमयुक्तमेवेति स्वादुङ्कारमित्यत्र निरूपयिष्यामः ॥ **खेद इति ।** एवं च ग्राम्यकुक्कुटपरदारादौ विशेषनिषेधस्येतराभ्यनुज्ञाफलकतया ग्राम्यकुक्कुटभक्षणपरदारगमनयोर्यथा दोषाभावो यथा च ग्राम्यकुक्कुटभक्षणपरदारगमनयोरधर्मस्तथा शास्त्रज्ञानपूर्वके गवादिप्रयोगेऽपूर्वोत्पत्तिरूपं फलं शास्त्रेण बोध्यते तेषां साधुत्वबोधनात् । अर्थादपशब्दज्ञानाधर्मजनकत्वं बोध्यते, एकनिषेधस्येतरनिषेधफलकत्वात् । यथैकनिषेधस्यान्याभ्यनुज्ञाफलकत्वमिति भावः । दृष्टान्तता त्वंशेन, वक्ष्यमाणवैदिकानां तु सर्वांशेनेति बोध्यम् ॥

**(तत्त्वालोकः)** भाष्ये—**प्रियतद्धिता इति**—प्रियास्तद्धिता येषामिति व्युत्पत्तिः । **दाक्षिणात्या इति**—अत इति शेषः । **प्रयुङ्क्ते इति**—वार्तिककारा इति शेषः । अनेन वार्त्तिककृतां निरर्थकशब्दाडम्बरकारिदाक्षिणात्यान्तर्गतत्वं सूचयता तेषामुपहासः कृतः । **अत्र**—लौकिकवैदिकेत्यनयोः । **तद्धितार्थः**—"अध्यात्मादेष्ठञिष्यते" इति वार्त्तिकविहितठञर्थः । एवञ्चोपपन्नमर्थमाह—**यथेति । कृतान्तेषु**—दृष्टान्तवाक्येषु । यथाक्रमं लौकिकं दृष्टान्तवाक्यमाह—**लोके इति । तावदिति**—वाक्यालङ्कारे । ननु किं भक्ष्यपदवाच्यमित्यत आह—**भक्ष्यमिति । अनेन**—बुभुक्षितेन । **तत्र**—क्षुन्निवृत्तिसाधनवस्तुषु । अपरन्तदाह—**तथेति । खेदादिति**—खेदनिवृत्तिसाधनताज्ञानेनेति शेषः । **स्त्रीष्विति**—पुरुषाणामिति शेषः । **तत्र**—खेदनिवृत्तिसाधनकामिनीषु ।

प्रदीपे—**अयम्**—( लोके वेदे चेत्यर्थे प्रयुक्तोऽपि ) लौकिकवैदिकेष्विति शब्दः । **अपशब्द इति**—किन्तु साधुशब्द एवेति शेषः । ननु तर्हि कथमुक्तं प्रियतद्धिता इतीत्यत आह—**किन्त्विति । अवयवाः**—दृष्टान्तत्वेनोपस्थाप्या एकदेशाः । **शक्यते इति**—अतः लोके वेदे चेत्युक्त्यैव निर्वाहे सम्भवत्यपि, तत्रेति शेषः । **प्रियतद्धितत्वनिमित्त इति**—प्रियतद्धितत्वं निमित्तं यस्येति व्युत्पत्तिः । उक्तरीत्या पर्यवसानतः समानार्थे साधुशब्दतामापन्नयोः लोके वेदे चेत्यस्मिन् लौकिकवैदिकेष्वित्यस्मिन् च यथेच्छं प्रयोक्तव्ययोरपि लघुभूतस्य लोके वेदे चेति शब्दस्य प्रयोगेण "अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः" इत्यनेन वैयाकरणप्रियतया सूचिते लाघवे सम्भवत्यपि तं विहाय गुरुभूतस्य लौकिकवैदिकेष्विति शब्दस्य प्रयोगेण गौरवाश्रयणे प्रियतद्धितत्वमेव निमित्तं नान्यदिति भावः । तत्र दृष्टान्तमाह—**यथेति । वानस्पत्यम्**—वनस्पतीनां समूहो वानस्पत्यम् । **समूहेति**—समूहार्थकेत्यर्थः । शब्दार्थोभयस्मिन् दृष्टान्ततासूचनायाह—**शब्दार्थोभयरूप इति ।** भवात्मकतद्धितार्थ इति शेषः । **शकेरिति**—शक्लृ शक्तावित्यस्माद्धातोरित्यर्थः । **क्लीलिङ्गकृत्पदान्वयात्पूर्वमिति** शेषः । **लिङ्गेति**—लिङ्गेषु सर्वनाम्ना नपुंसकेन युक्त इत्यर्थः । **कृत्यप्रत्ययः**—"शकिसहोश्चे"ति सूत्रेण यत् प्रत्ययः । **पदान्तरसम्बन्धात्**—कृत्पदसम्बन्धात् । शक्यपदस्य "या विशेष्येषु दृश्यन्ते लिङ्गसंख्याविभक्तयः । तास्ता एव हि कर्तव्याः समानार्थे विशेषणे ॥" इति नियमेनेति शेषः । **क्लीबत्वं**—क्लीलिङ्गत्वम् । अत्र विलम्बोपस्थितिकत्वम् बहिरङ्गत्वम्, तथा शीघ्रोपस्थितिकत्वमन्तरङ्गत्वमिति बोध्यम् । **संस्कारं**—सोरमादिरूपम् । **इति**—इति हेतोः । **पूर्वमिति**—कृत्यप्रत्ययादित्यादिः । **विशेष्येति**—कृत्पदान्वयेत्यर्थः । **प्रतिघात इति**—कर्मत्वनुषज्यते । **इन्द्रियनियमासामर्थ्यं**—इन्द्रियनिग्रहाशक्तिजनितदुःखं ।

उद्द्योते—**ईदृशः**—प्राप्तयोरेकविधायक एकनिषेधकः । **इत्येव**—**इत्यनेनैव** । निर्वाहे इति शेषः । **अन्यार्थे**—लोके वेदे चेत्यर्थे । **अन्यशब्द प्रयोगे**—लौकिकवैदिकेष्विति शब्दप्रयोगे । लौकिकवैदिकेष्विति शब्दस्येति शेषः । **अवयवे इति**—पटैकदेशे दग्धे पटो दग्ध इत्यादावित्यादिः । **तत्रेति**—अवयवावयविनोः विभागारोपः तत्र भव इत्यादिव्यवहारप्रयोजको नेत्यन्वयः । प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते । यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥ इति हरिकारिकानुसारेणाह—**ननु प्रधानक्रियेति ।** प्रधानशक्तिक्रियेत्यर्थः । **शक्तेः**—कर्तृत्वशक्तेः । **गुणक्रियेति**—गौणप्रतिहननक्रियेत्यर्थः । **एतत्**—कुर्वन्नित्यत्र द्वितीयाविधानम् । **गुणशक्तेः**—गुणक्रियानिरूपितशक्तेः । **अभिमानादिति**—कथा न प्रकृते शब्दमित्यत्र कृदन्ततया तिङन्तविषयकत्वाभावमानाक्रान्तत्वात् न कुर्वन्नित्यत्र द्वितीयाऽनुपपत्तिरिति भावः । अभिमानपदेन तत्रारुचेः सूचनायाह—**वस्तुत इति । इदं**—कुर्वन्नित्यत्र द्वितीयाविधानम् । **तदिति**—कुर्वत्कुटेत्यर्थः । **तेषां**—गवादीनाम् । लौकिकदृष्टान्ते एकनिषेधेनापराभ्यनुज्ञायाः, दार्ष्टान्तिके एकविधिनेतरनिषेधस्य सत्त्वात्तयोः सर्वथा दृष्टान्तदार्ष्टान्तिकभावासम्भवादाह—**अंशेनेति ।** वैदिकदृष्टान्ते दार्ष्टान्तिके चैकविधिनेतरनिषेधस्य सत्त्वादाह—**सर्वांशेनेति ।** केचित्तु लौकिकदृष्टान्ते परदारगमने अधर्मः, स्वभार्यागमने अधर्माभावः, दार्ष्टान्तिके साधुशब्दप्रयोगे धर्मः, असाधुशब्दप्रयोगे अधर्म इति दृष्टान्तदार्ष्टान्तिकयोः सर्वथा साम्याभावादाह—**अंशेनेति ।** वैदिकदृष्टान्ते पयसा वर्त्तने धर्मोऽन्यथा अधर्म इति तयोः सर्वथा साम्यसम्भवादाह—**सर्वांशेनेति ।** इति वदन्ति ॥

**( भाष्यम् )**

## वेदे खल्वपि—"पयोव्रतो ब्राह्मणो यवागूव्रतो राजन्य आमिक्षाव्रतो वैश्यः" इत्युच्यते । व्रतं च नामाभ्यवहारार्थमुपादीयते । शक्यं चानेन शालिमांसादीन्यपि व्रतयितुम् । तत्र नियमः क्रियते ।

## तथा—"बैल्वः खादिरो वा यूपः स्याद्" इत्युच्यते । यूपश्च नाम पश्वनुबन्धार्थमुपादीयते । शक्यं चानेन यत्किंचिदेव काष्ठमुच्छ्रित्यानुच्छ्रित्य वा पशुरनुबन्धुम् । तत्र नियमः क्रियते ।

## तथा "अग्नौ कपालान्यधिश्रित्याभिमन्त्रयते—भृगूणामङ्गिरसां घर्मस्य तपसा तप्यध्वम्" इति । अन्तरेणापि मन्त्रमग्निर्दहनकर्मा कपालानि सन्तापयति । तत्र च नियमः क्रियते—एवं क्रियमाणमभ्युदयकारि भवतीति ॥

**( प्रदीपः ) पयोव्रत इति ।** सत्यामर्थितायां पय एव व्रतयतीति नियमोऽयं न तु विधिः, अर्थित्वाभावे कारणाभावात् ॥

**( उद्द्योतः ) व्रतयतीति ।** अभ्यवहार्यत्वेनोपादत्ते इत्यर्थः ॥ भाष्ये **उच्छ्रित्यानुच्छ्रित्य वेति ।** सतक्ष्यासंतक्ष्य वेत्यर्थः । निखन्यानिखन्य वेत्यर्थ इत्यन्ये ॥

**( तत्त्वालोकः )** भाष्ये—**खल्वपीति** निपातसमुदायो निश्चयार्थकः । **पय इति**—क्षीरेत्यर्थः । **आमिक्षेति**—दध्याद्यम्लवस्तुयुक्ततप्तदुग्धपरिणामभूतवस्त्वित्यर्थः । ननु किं व्रतपदाभिधेयमित्यत आह—**व्रतमिति । नामेति**—तद् भवति यदिति शेषः । **शक्यमिति**—अनेन भावार्थकयत्प्रत्ययान्तेनान्वितस्य व्रतयितुमित्यस्य शालिमांसादीनीत्यत्रान्वयान्न काप्यनुपपत्तिः, न वा स्वादुमि णमुलित्यत्रत्यसिद्धान्तविरोध इति भावः । **अनेन**—ब्राह्मणादिना । **तत्र**—अभ्यवहार्यतयोपा-

देयेषु । दृष्टान्तान्तरमाह-**तथेति** । ननु को यूपपदवाच्य इत्यत आह-**यूप इति** । **नामेति**-स भवति यदिति शेषः । **शक्यमिति**-अत्र पूर्ववत् सर्वमूह्यम् । **अनेन**-पशुबन्धकेन । **तत्र**-काष्ठेषु । पुनः दृष्टान्तान्तरमाह-**तथेति** । **अधिश्रित्य**-संस्थाप्य । केन मन्त्रेणेत्यत आह-**भृगूणामिति** । **इति**-इत्यनेन मन्त्रेण । **सन्तापयति**-सन्तापयितुं शक्नोति । **तत्र**-अभिमन्त्रितानभिमन्त्रितयोः । **नियमः**-अभिमन्त्रित एव सन्ताप्य इत्याकारः । कुतः स इत्यत आह-**एवमिति** । अभिमन्त्रितस्य सन्तापनमित्यर्थः ॥

प्रदीपे—**अर्थितायां**—अभ्यवहारार्थितायां । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सती"त्यनुसारेण अभ्यवहरणक्रियामात्रनशालिपयसादीनां मध्ये शालिप्राप्तिपक्षे अप्राप्तस्य पयसः प्रापकत्वात् "पयोव्रतो ब्राह्मणः" इत्यादिविधेः नियमविधिता, न त्वपूर्वविधिता पयसः सर्वथा अप्राप्तेरभावादित्याशयेनाह-**नियम इति** । नियमविधिरित्यर्थः । **अयं**-"पयोव्रतो ब्राह्मण" इत्यादिः । **विधिः**-अपूर्वविधिः । ननु ब्राह्मणस्याभ्यवहारार्थित्वाभावे कस्यापि प्राप्तेरभावात् सर्वथा अप्राप्तस्य पयसः प्रापकतया अस्यापूर्वविधितैव कुतो नेत्यत आह—**अर्थित्वाभावे इति** । अभ्यवहारार्थित्वाभावे इत्यर्थः ।

उद्योते—**सन्तदयासन्तदय वा**-वास्यादिना संस्कृत्यासंस्कृत्य वा । **निखन्येति**-भूमावित्यादिः ।

**( दार्ष्टान्तिक उपसंहारभाष्यम् )**

**एवमिहापि समानायामर्थावगतौ शब्देन चापशब्देन च धर्मनियमः क्रियते—शब्देनैवार्थोऽभिधेयो नापशब्देनेति ॥ एवं क्रियमाणमभ्युदयकारि भवतीति ॥**

**( प्रदीपः ) समानायामिति** । यद्यपि साक्षादपभ्रंशा न वाचकास्तथापि स्मर्यमाणसाधुशब्दव्यवधानेनार्थं प्रत्याययन्ति, केचिच्चापभ्रंशाः परम्परया निरूढिमागताः साधुशब्दानस्मारयन्त एवार्थं प्रत्याययन्ति ॥ अन्ये तु मन्यन्ते—साधुशब्दवदपभ्रंशा अपि साक्षादर्थस्य वाचका इति ॥

**( उद्योतः )** ननु अपभ्रंशा न वाचका, वाच्यप्रतीत्यन्यथानुपपत्त्या कल्प्यमानशक्तेः शिष्टप्रयुक्तसंस्कृतेष्वेव कल्पनात् । तदनुसारेणैव चापभ्रंशानां साधुस्मरणेन बोधकत्वोपपत्तेः **समानाया**मित्यनुपपन्नमिति शङ्कते—**यद्यपीति ॥ तथापीति** । एवंच वाचकत्वाभावेऽप्यर्थप्रत्यायकत्वाविशेषेण **समानाया**मित्युक्तम् ॥ **निरूढिमागता इति** । ते च शक्तिभ्रमेण बोधका इति भावः ॥ शक्तिभ्रमश्चेत्थम्—केनचित् गावीति प्रयुक्ते गौरिति साधुस्मरणात् प्रयोज्यस्य बोधेऽपि तटस्थस्य गावीशब्दादेवास्य गोबोध इति भ्रमस्तन्मूलकोऽन्येषामपि भ्रम इति । वस्तुतो विनिगमनाविरहाद् भाषाशब्देष्वपि शक्तिरेवेत्याह—**अन्ये त्विति । साधुत्वं** चैतन्मते शब्दगतधर्मसाधनतावच्छेदकवैजात्यमेव । यद्यपि **साधूनेव भाषेते**ति न श्रूयते, तथापि फलनिर्देशवाक्ये तन्निर्देशादेवेदृशविधिः कल्प्यते । तत्र के साधव इत्याकाङ्क्षायामेत एव साधव इति व्याकरणेन निष्पादनात्तद्द्वारा शास्त्रेण धर्मनियमो विधीयत इति बोध्यम् ॥ भाष्ये **शब्देनैवेति** । साधुनेत्यर्थः ॥ **एवं क्रियमाणमिति** । शास्त्रज्ञानपूर्वकमुच्चार्यमाणमित्यर्थः ॥

इति शास्त्रस्य धर्मजनकताधिकरणम् ॥

---

**( तत्त्वालोकः )** भाष्ये-दृष्टान्तेषूपपादितं **दार्ष्टान्तिके योजयति-एवमिति । समानायामिति**-शब्देन चापशब्देन च समानायामर्थावगतावित्यन्वयः । **अर्थावगताविति**-भविष्यन्त्यामपीति शेषः । नियमाकारमाह-**शब्देनेति** । कुत एवमित्यत आह—**एवमिति । इति**-इति हेतोः ।

प्रदीपे—**साक्षादिति**—अपभ्रंशाः साक्षाद्वाचका नेत्यन्वयः । **अपभ्रंशाः**-अपभ्रंशशब्दाः । ज्ञाता इति शेषः । एवमग्रेऽपि । **वाचकाः**-अर्थबोधकाः । उत्तरयति-**तथापीति** । ज्ञाता अपभ्रंशशब्दा इति शेषः । **परम्परया**-प्रयोगपरम्परया । **निरूढिम्**-अर्थवाचकतया लोकप्रसिद्धिम् । **आगताः**-प्राप्ताः ।

उद्योते—**वाच्यप्रतीतीति**-वाच्यानां प्रतीतिरित्यर्थः । **कल्प्यमानशक्तेः**-कल्प्यमानायाः शक्तेः । संस्कृतेषु-साधुशब्देषु । **तदिति**—शक्तिकल्पनेत्यर्थः । **साधुस्मरणेन**-साधुशब्दस्मारणेन । **इति**-इत्याशयेन । **एवञ्च**-शक्तेः साधुशब्देष्वेव कल्पने च । अपभ्रंशशब्दानामिति शेषः । **ते च**-अपभ्रंशशब्दाश्च । ज्ञाता इति शेषः । ननु कथं शक्तिभ्रम इत्यत आह-**शक्तिभ्रम इति । इत्थम्**-अनेन प्रकारेण । प्रकारमेवाह-**केनचिदिति** । अशिक्षितेनेति शेषः । **प्रयुक्ते इति**-तच्छब्दश्रवणेनेति शेषः । **साधुस्मरणात्**-साधुशब्दस्मरणात् । **प्रयोज्यस्येति**-व्युत्पन्नस्येति शेषः । **तटस्थस्येति**-अशिक्षितस्येति शेषः । अस्य भ्रम इत्यनेनान्वयः । **अस्य**-प्रयोज्यव्युत्पन्नस्य । **तन्मूलकः**-तादृशभ्रममूलकः । भ्रान्तस्य तादृशप्रयोगेण अशिक्षितानामिति शेषः । **भ्रमः**-तादृशभ्रमः । **भाषाशब्देषु**-अपभ्रंशशब्देषु । **शक्तिरेवेति**-अत एव "समानायामि"ति भाष्यस्य, साधुशब्दाज्ञानामपि अपशब्दश्रवणेनार्थबोधस्य चोपपत्तिः । अन्यथा तेन तेषां साधुशब्दस्मरणासम्भवादर्थबोधो नोपपद्येतेति भावः । **वैजात्यम्**-व्याकरणव्यञ्जनीयं जातिविशेषरूपम् । **श्रूयते**-श्रुतिः । **फलनिर्देशवाक्ये**-एकः शब्दः सम्यग् ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग् भवतीति वाक्ये । **तन्निर्देशादेव**-साधुशब्दनिर्देशादेव । **ईदृशविधिः**-साधून् ( शब्दान् ) एव भाषेतेति विधिः । **तत्र**-विधिवाक्ये । **तद्द्वारा**-साधुशब्दव्युत्पादन द्वारा । **शास्त्रेण**-व्याकरणशास्त्रेण । **धर्मनियमः**-तादृशविधिः । **विधीयते**-उपपाद्यते । **उच्चार्यमाणम्**-साधुशब्दरूपम् ।

**( अनुपलब्धप्रयोगसाधुशब्दसाधकशास्त्रसार्थक्याधिकरणम् )**

**( २ आक्षेपवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ अस्त्यप्रयुक्तः ॥ * ॥**

**( भाष्यम् )**

**सन्ति वै शब्दा अप्रयुक्ताः । तद्यथा—ऊष, तेर, चक्र, पेचेति ॥**

**किमतो यत्सन्त्यप्रयुक्ताः ? ॥**

**प्रयोगाद्धि भवाञ्छब्दानां साधुत्वमध्यवस्यति । य इदानीमप्रयुक्ता नामी साधवः स्युः ॥**

**( प्रदीपः ) अस्त्यप्रयुक्त इति** । प्रयोगमूलत्वादस्याः स्मृतेरप्रयुक्तानामप्यन्वाख्यानादप्रामाण्यमाशङ्कते ॥

**( उद्योतः ) अस्त्यप्रयुक्त** इत्यादेः प्रकृतोपयोगमाह—**प्रयोगमूलत्वादिति । *लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः*** इत्यनेन प्रयुक्तेषु साध्वसाधुषु प्रयुक्तसाध्वन्वाख्यानेन तेषु धर्मः प्रयुक्तासाधुष्वधर्म इत्यर्थकेनेदं सूचितम् । एवंचाप्रयुक्तानामप्रयोगेणैवासाधुत्वानुमानादसाधूनामप्यनेनान्वाख्यानादप्रामाण्यमिति भावः ॥ वार्तिकोक्तनियमानुपपत्तिरेवेत्यपि बोध्यम् ॥ भाष्ये **किमत इति** । अप्रयुक्तसत्त्वं नास्माकमनिष्टं, साधुमात्रार्थत्वाद्व्याकरण-

स्येत्यर्थः ॥ उत्तरम्—**प्रयोगादिति** । तथा चाप्रयोगादसाधुत्वानुमानमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—ननु यदि प्रयुक्तानामिदमन्वाख्यानं तर्हि किमर्थमप्रयुक्ता अपि ऊष, तेर, चक्र, पेचेत्यादयोऽनेन व्युत्पाद्यन्ते इत्याशयेनाक्षिपति-**अस्त्यप्रयुक्त इति** । अत्र वार्त्तिके जात्यभिप्रायमेकवचनमित्याशयेन व्याचष्टे-**सन्तीति** । **वै** इति निश्चये । दिग्दर्शनाय कतिपयानप्रयुक्तशब्दानुदाहरति-**तद्यथेति** । आक्षेप्तुराशयं तन्मुखादेवावगन्तुं तटस्थः शङ्कते-**किमत इति** । सन्त्यप्रयुक्ताः ( शब्दा इति ) यत् ( उच्यते ) अतः किमित्यन्वयः । अप्रयुक्तशब्दसत्तया का क्षतिरिति शङ्काशयः । आक्षेपकः स्वाशयमाह **प्रयोगादिति** । व्युत्पन्नप्रयोगादित्यर्थः । **हि**-यतः । **ये**-शब्दाः ।

प्रदीपे—**ननु** "अस्त्यप्रयुक्त" इत्यादि "तनूनामि" त्यन्तग्रन्थस्य प्रकृतानुपयोगादसम्बद्धतया कथमुल्लेखोऽत्रेत्यत आह-**प्रयोगेति** । प्रयोगः शिष्टप्रयोगः मूलं निर्माणनिदानं यस्या इति व्युत्पत्तिः । **अस्याः**-व्याकरणाख्यायाः । सकललक्ष्याणि साक्षात्कृत्य तदनुसारेण असम्भवाव्याप्त्यतिव्याप्तिदोषरहितलक्षणनिर्माता लक्ष्यैकचक्षुष्कः । तथा निजरचितस्य परनिर्मितस्य वा लक्षणस्यानुसारेण लक्ष्यव्यवस्थापकः लक्षणैकचक्षुष्कः । तयोः लक्ष्यैकचक्षुष्कस्यैव श्रेष्ठतामभ्युपगच्छन्ति महाजनाः । अतः पाणिनेः लक्ष्यैकचक्षुष्कताबोधनाय "पाणिनिः शिष्टप्रयुक्तानि सकललक्ष्याणि स्मृत्वैव तद्दोषत्रयरहितलक्षणसमुदायात्मकं व्याकरणमरीरचदि"ति सूचयितुमेव शास्त्रस्येत्यपहायाह-**स्मृतेरिति** । प्रामाण्यमत इति शेषः । **अप्रयुक्तानामपि**-अप्रयुक्तशब्दानामपि । अनयेति शेषः । **अप्रामाण्यमिति**-अस्या निर्मूलत्वापातादित्यादिः । आपद्येतेतीति शेषः ।

उद्द्योते-**अनेन**—"सिद्धे"इति वार्त्तिकांशेन । **साध्वसाधुषु—शब्देषु** । **एवमग्रे**ऽपि । व्याकरणशास्त्रद्वारेति शेषः । **तेषु**—प्रयुक्तसाधुषु । **धर्मः—**धर्मजनकता । तथेति शेषः । **अधर्मः—**अधर्महेतुता । अस्तीति ज्ञायते इति शेषः । **इदं**—व्याकरणस्मृतेः प्रयोगमूलत्वम् ( **शिष्टप्रयोगविषयत्वात्तेषु** साधुताऽनुमिता तेषामन्वाख्यायकत्वम् ) । **एवञ्च**-व्याकरणशास्त्रस्य प्रयोगमूलत्वात् प्रामाण्ये च । अथवा शब्दानां शिष्टप्रयोगविषयत्वात् साधुत्वानुमाने च । **अप्रयुक्तानाम्**-अप्रयुक्तशब्दानाम् । **अप्रयोगेण**-प्रयोगविषयत्वाभावेन । **अनेन**-व्याकरणशास्त्रेण । **अप्रामाण्यमिति**-व्याकरणशास्त्रस्येत्यादिः । लोकव्यवहारत एव शब्दार्थसम्बन्धे सिद्धे ( नित्ये ) अर्थज्ञानप्रयोजनकृते शब्दप्रयोगे च सिद्धे वैयर्थ्याद् व्याकरणशास्त्रं धर्मनियामकमिति वार्त्तिककृतः । तत्र यदि व्याकरणशास्त्रेणाप्रयुक्तशब्दानामप्यन्वाख्यानं क्रियते तर्हि "विधिरत्यन्तमप्राप्तावि"ति नियमानुसारेण व्याकरणशास्त्रस्यापूर्वविधित्वेन वैयर्थ्यासम्भवात्तस्य धर्मनियामकता नोपपद्येतेत्याशयेनाह-**वार्त्तिकोक्तेति** । "शास्त्रेण धर्मनियमः" इत्यन्तवार्त्तिकोक्तस्य नियमस्यानुपपत्तिरित्यर्थः । व्याकरणशास्त्रस्याप्रयुक्तशब्दान्वाख्यायकत्वे "लौकिकानां वैदिकानाञ्चे"ति भाष्यबोधिता तस्य साधुशब्दमात्रानुशासकताऽपि नोपपद्येत, अप्रयुक्तशब्दानां सादित्वादिरूपासाधुत्वसत्वात् इत्यपि बोध्यम् ॥ **साधुमात्रार्थत्वात्**-साधुशब्दमात्रव्युत्पादनार्थत्वात् । **उत्तरं**-तटस्थं प्रत्याक्षेप्तुरुत्तरम् । **असाधुत्वानुमानम्**-अप्रयुक्तशब्दा असाधवः प्रयोगाविषयत्वादित्यनुमानम् ॥

## ( आक्षेपासंगतिभाष्यम् )

**इदं तावद्विप्रतिषिद्धम्—यदुच्यते—'सन्ति वै शब्दा अप्रयुक्ता' इति । यदि सन्ति नाप्रयुक्ताः, अथाप्रयुक्ता न सन्ति, सन्ति चाप्रयुक्ताश्चेति विप्रतिषिद्धम् । प्रयुञ्जान एव खलु भवानाह—सन्ति शब्दा अप्रयुक्ता इति । कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यात् ? ॥**

**( प्रदीपः )** यथा घटादीनां विनाप्यर्थक्रियया सत्त्वं गम्यते नैवं शब्दानां, ते हि सर्वदा व्यवहाराय प्रयुज्यमानाः सन्तः सत्त्वेनावसीयन्ते इत्याह—**इदमिति** । **कश्चेदानीमिति** । उपहासपरम् ॥

**( उद्द्योतः )** विप्रतिषिद्धत्वमुपपादयति—**यथेति** । एवंच सत्त्वे प्रयोग आवश्यक एव, अप्रयोगे च सत्त्वमेव न स्यादिति भावः ॥ ननु लक्षणवशेन सत्त्वं केनाप्यप्रयोगाच्चाप्रयुक्तत्वमिति न विरोधोऽतो भाष्ये— **प्रयुञ्जान एवेति** ॥ ननु मया प्रयुक्तश्चेत्कि, तत्र सोपहासमाह—**कश्चेदानीमिति** । स्वयमेव प्रयोगं कृत्वा **सन्ति चाप्रयुक्ता** इत्यादीनां शब्दानां प्रयोगे साधुर्योग्यः स्यादित्यर्थः । त्वत्प्रयोगेणैव प्रयुक्तत्वावगमेऽप्रयुक्तत्वोक्तिर्विरुद्धेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थः पूर्वपक्षे दूषणमाह-**इदमिति** । वाक्यालङ्कारायाह-**तावदिति** । परस्परमिति शेषः । इदमित्यनेन निर्देश्यमाह-**यदिति** । विप्रतिषिद्धतामुपपादयति-**यदीति** । **इतीति**-इदं परस्परमिति शेषः । **प्रयुञ्जान इति**-ऊष, तेरेत्यादिशब्दानित्यादिः । वचनकर्माह-**सन्तीति** । **भवज्जातीयक**-भवत्सदृशः ।

प्रदीपे-**अर्थक्रियया**-जलानयनादिव्यापारेण । **गम्यते**-ज्ञायते । **नैवं**-न तथा अर्थक्रियया विनाऽपि सत्ता ज्ञायते । कुत एवमित्यत आह-**ते इति** । शब्दा इत्यर्थः । **हि**-यतः । **सन्तः**-सन्त एव । **अवसीयन्ते**-निर्णीयन्ते ।

उद्द्योते-**एवञ्च**-शब्दसत्तायाः शब्दप्रयोगाधीनत्वे च । निमित्तार्थकसप्तम्यन्तमाह-**सत्त्वे इति** । शब्दानामित्यादिः । **प्रयोग इति, अप्रयोगे इति, सत्त्वमिति च**-तेषामित्यादिः। **लक्षणवशेन**-व्युत्पादकसूत्रादिवशेन । शब्दानामिति शेषः । **इति**-इति हेतोः । **अतः**-इत्यत आह । **मयेति**-ऊषेत्यादिशब्द इति शेषः । **चेत् किमिति**-यदि ( तर्हि तेन ) किम् ? का क्षतिरित्यर्थः । **तत्र**-तर्हि तेन किमित्यत्र । शब्दानामित्यादिभाष्यस्यार्थमाह-**स्वयमेवेति** ॥

## ( आक्षेपासंगतिबाधकभाष्यम् )

**नैतद्विप्रतिषिद्धम् । सन्तीति तावद्ब्रूमः । यदेताञ्शास्त्रविदः शास्त्रेणानुविदधते ॥ अप्रयुक्ता इतिब्रूमः । यल्लोकेऽप्रयुक्ता इति ॥ यदप्युच्यते—कश्चेदानीमन्यो भवज्जातीयकः पुरुषः शब्दानां प्रयोगे साधुः स्यादिति । न ब्रूमोऽस्माभिरप्रयुक्ता इति ॥**

**किं तर्हि ? ॥**

**लोकेऽप्रयुक्ता इति ॥**

**( प्रदीपः )** उत्तरं तु शास्त्रदृष्टया प्रकृतिप्रत्ययादिसद्भावादनुमितसत्त्वाः, व्यवहारे तु न दृश्यन्त इत्युक्तम् ॥

**(तत्त्वालोकः)** भाष्ये-प्रश्नकर्त्ता स्ववाक्ये आपादितं विरोधं निराकरोति-**नैतदिति** । न "सन्ति वै शब्दाः अप्रयुक्ताः" **इतीदं** परस्परं विरुद्धमित्यर्थः । कुतो न तन्मिथो विरुद्धमित्यत आह-**सन्तीति** । एते शब्दा इत्यादिः । **तावत्**-प्रथमम् । कुतः तत्सत्ता ज्ञातेत्यत आह-**यदिति** । यत इत्यर्थः । **एतान्**-ऊषेत्यादिशब्दान् । **शास्त्रविदः**-वैयाकरणाः । **शास्त्रेण**-व्याकरणेन । **अनुविदधते**-संस्कुर्वन्ति । अत इति शेषः । **अप्रयुक्ता इति**-तदनन्तरमित्यादिः । कथं ज्ञायते एतेऽप्रयुक्ता इत्यत

आह—**यदिति ।** यत इत्यर्थः । **लोके इति**—अर्थबोधनायैते इति शेषः । **इतीति**—अत इति शेषः । एवं विरोधं निरस्योपहासं परिहर्तुमनुवदति—**यदपीति ।** **इतीति**—तदप्यकिञ्चित्करमेवेति शेषः । कुत एवमित्यत आह—**नेति ।** यत इत्यादिः । **इतीति**—ब्रूम इति शेषः । मत्प्रयोगो न लोकप्रयोग इति भावः ।

प्रदीपे—**उत्तरन्तु**—नैतदित्युत्तरन्तु । यद्यपीति शेषः । **शास्त्रदृष्ट्या**—व्याकरणशास्त्रदृष्ट्या । **प्रकृतीति**—ऊषेत्यादिघटकेत्यादिः । **सत्त्वा इति**—ऊषेत्यादयः, तथापि इति शेषः । **व्यवहारे तु**—लोकव्यवहारे तु । ते इति शेषः । **इत्युक्तं**—इत्याशयेनोक्तम् ।

## ( आक्षेपभाष्यम् )

### ननु च भवानप्यभ्यन्तरो लोके ॥

**( तत्त्वालोकः )** भाष्ये—ननूपेत्यादीनां लोकव्यवहाराविषयता भवदुक्ता न युक्ता, तेषां लोकान्तर्भूतभवाद्दशव्युत्पन्नव्यक्तिव्यवहारविषयत्वादित्याशयेन आक्षेप्तुः लोकान्तर्गततामुपपादयति—**नन्विति ।** निश्चयेनेत्यर्थः । **च** एव । **भवान्**—आक्षेपकः । **अपि**नाऽन्यसंग्रहः । **अभ्यन्तरः**—अन्तर्भूतः ।

## ( समाधानभाष्यम् )

### अभ्यन्तरोऽहं लोके, न त्वहं लोकः ॥

**( प्रदीपः ) न त्वहं लोक इति ।** यथा लोकोऽर्थावगमाय शब्दान् प्रयुङ्क्ते नैवं मयैतेऽर्थे प्रयुक्ता अपि तु स्वरूपपदार्थका इत्यर्थः ॥

**( उद्द्योतः )** ननु लोकान्तर्भूतस्य **न त्वहं लोक इति** वचो विरुद्धमत आह—**यथेति ।** अर्थबोधाय शब्दान्प्रयुञ्जानो हि मम लोकत्वेनाभिमत **इ**त्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-उत्तरयति पूर्वपक्षी-**अभ्यन्तर इति ।**

प्रदीपे-**अर्थावगमाय**-अर्थज्ञापनाय । **एवं**-तथा । **एते**-ऊषेत्यादिशब्दाः । **अर्थे**-अर्थबोधनाय । **स्वरूपपदार्थका इति**-स्वरूपं स्वरूपमात्रं पदार्थः बोध्यं येषामिति व्युत्पत्तिः । एते मया प्रयुक्ता **इति** शेषः ।

उद्द्योते-**विरुद्धमिति**-लोकान्तर्भूतस्य लोकताया दुर्निवारत्वादिति शेषः । **अतः**-इत्यतः । **अर्थबोधाय**-अर्थज्ञापनाय । **हि**-यतः । **अभिमत इति**-अतोऽहं न लोकः, मया स्वरूपमात्रबोधनाय प्रयुक्तानामूषेत्यादीनामर्थज्ञापनायाप्रयुक्तत्वादिति शेषः । तथा च लोकशब्दस्य रूढतां विहाय पारिभाषिकतामभिप्रयतः लोकान्तर्भूतस्यापि न त्वहं लोक **इति** वचनं युक्तमेवेति भावः ।

## ( ३ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )

# ॥ ❀ ॥ अस्त्यप्रयुक्त इति चेन्नार्थे शब्दप्रयोगात् ॥ ❀ ॥

## ( भाष्यम् )

**अस्त्यप्रयुक्त इति चेत् । तन्न ॥ किं कारणम् ? ॥ अर्थे शब्दप्रयोगात् । अर्थे शब्दाः प्रयुज्यन्ते । सन्ति चैषां शब्दानामर्था येष्वर्थेषु प्रयुज्यन्ते ॥**

**( प्रदीपः ) अर्थे शब्दप्रयोगादिति ।** अर्थसद्भावः **शब्दप्रयोगे लिङ्गम्** । न हि विना शब्देनार्थप्रत्यायनमुपपद्यते ॥

**( उद्द्योतः )** भाष्ये **अर्थे शब्दप्रयोगादिति ।** अर्थविषयकज्ञानाय शब्दप्रयोगादित्यर्थः । तदाशयमाह—**अर्थसद्भाव इति ॥**

**( तत्त्वालोकः )** भाष्ये—**"अस्त्यप्रयुक्तः"** इति वार्त्तिकेनोत्थापिताया आशङ्कायाः समाधानाय वार्त्तिकमेवाह—**अस्त्यप्रयुक्त इति ।** ननूभयोः वार्त्तिकत्वे "अस्त्यप्रयुक्तः" इत्यंशः पुनरुक्तिदोषग्रस्त इति चेन्न, निषेधम्प्रति आवश्यकनिषेध्यसमर्पणाय तावदंशः वार्त्तिककारेण भाष्यकारेण वोल्लिखित इत्यभ्युपगमात् । न च पूर्वोक्तेनैव निर्वाहः, तस्य दूरस्थत्वात् ॥ अर्थे शब्दप्रयोगादित्यंशं व्याचष्टे—**अ इति ।** अर्थबोधनायेत्यर्थः । अर्थाभावे एषां शास्त्रेणोपदेशोऽपि नोपपद्येतेत्याशयेनाह—**सन्तीति । एषाम्**—ऊषेत्यादीनाम् । **अर्थेष्विति**—बुबोधयिषितेषु इमे इति शेषः ।

प्रदीपे—**अर्थसद्भावः**-अर्थप्रतीतिसद्भावः । **शब्दप्रयोगे**-शब्दप्रयोगानुमाने । **लिङ्गम्**-लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्गम्, हेतुः । कुत एवमित्याकांक्षायामन्वयव्याप्तेः सुगमतया व्यतिरेकव्याप्तिमाह-**नेति । हि**-यतः । **शब्देनेति** —प्रयुक्तेन प्रत्यक्षादिमानाभावे इति शेषः । ऊषेत्यादिशब्दाः लोकप्रयोगविषयाः तदर्थबोधजनकत्वादित्यनुमानेन तेषु प्रयुक्तत्वे सिद्धे न तेषामप्रयुक्ततेति भावः ।

## ( ४ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

# ॥ ❀ ॥ अप्रयोगः प्रयोगान्यत्वात् ॥ ❀ ॥

## ( भाष्यम् )

**अप्रयोगः खल्वप्येषां शब्दानां न्याय्यः ॥ कुतः ? ॥ प्रयोगान्यत्वाद् । यदेषां शब्दानामर्थेऽन्याञ्छब्दान्प्रयुञ्जते । तद्यथा—ऊषेत्यस्य शब्दस्यार्थे—क यूयमुषिताः, तेरेत्यस्यार्थे-क यूयं तीर्णाः, चक्रेत्यस्यार्थे—क यूयं कृतवन्तः । पेचेत्यस्यार्थे—क यूयं पक्वन्त इति ॥**

**( प्रदीपः )** इतरोऽन्यथासिद्धतामाह—**अप्रयोग इति ।** यतोऽन्ये तेषामर्थानां सन्ति वाचकास्ततो नैषामनुमानमुपपद्यते । यद्यप्यूषेत्यस्य उषिता **इति** समानार्थो न भवति परोक्षतादेर्विशेषस्यानवगमात्तथापि तत्प्रत्यायनाय पदान्तरसहितः प्रयुज्यते ॥

**( उद्द्योतः )** भाष्ये—**प्रयोगान्यत्वादिति ।** प्रयुज्यत **इ**ति प्रयोगः शब्दः सोऽन्यो यस्यार्थस्यास्ति तत्त्वादित्यर्थः । सर्वनाम्नां पर निपातः पूर्वनिपातप्रकरणानित्यत्वात् ॥ **पदान्तरसहित इति । पदान्तरं** क यूयमिति । तत्र क्वेत्यनेन साधनपारोक्ष्यं, निष्ठया भूतत्वं कर्तृत्वं च, यूयमित्यनेन मध्यमपुरुषबोध्यमाभिमुख्यं चेतनत्वं वा बहुत्वं च, वसेः साक्षाद् **गत्यर्थाकर्मके**त्यत्र निर्देशात्, तरतेर्गत्यर्थत्वात् कर्तरि क्तः ॥ नन्वाख्याते क्रियाविशेष्यको बोधोऽत्र च कर्तृविशेष्यक **इति** कथं लिडन्तसमानार्थत्वमिति चेन्न । विषयताविशेषानादरेण तथोक्तेः । **न** चाख्याते क्रियाविशेष्यकबोधे पश्यति भवति अपाक्षीद्भवतीति **भूवादि**सूत्रस्थभाष्यप्रयोगविरोधः, अतीतानागतपाककर्तृकसत्ताया वर्तमानत्वासङ्गतेरिति वाच्यम् । **वर्तमानसामीप्ये** तत्र लटः सत्त्वात् । **तरति ब्रह्महत्यां योऽश्वमेधेन यजते** इत्यादौ यत्कर्तृको यागस्तत्कर्तृकं तरणमिति बोधः । अत एव **ह्रस्वो नपुंसके** इति सूत्रे **रमते ब्राह्मणकुलमिति क्रियाप्रधान**मिति भाष्ये उक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—अप्रयोग इत्यंशं व्याचष्टे—**अप्रयोग इति । खल्वपीति** निपातसमुदायोऽवधारणार्थकः । **एषाम्**—ऊषेत्यादीनाम् । **न्याय्यः**—उचितः । प्रयोगान्यत्वादित्यंशं व्याचष्टे—**यदिति ।** यस्मादित्यर्थः । **एषाम्**—ऊषेत्यादीनाम् । **अर्थे**—अर्थबोधनाय । एवमग्रेऽपि । **प्रयुञ्जते इति**—किन्तु नेमान् शब्दानत इति शेषः । **ननु**;

क्वैवं दृष्टमित्यत आह—**तद्यथेति । इतीति**–प्रयुज्यते इति शेषः ।

प्रदीपे—**इतर इति**–वादिप्रतिवाद्यन्यस्तटस्थ इत्यर्थः । ऊषेत्याद्यर्थप्रतीतेरिति शेषः । **अन्यथासिद्धतामिति**–अन्येन प्रकारेण ( ऊषेत्यादिशब्दातिरिक्तोषिता इत्यादिशब्दप्रयोगेण ) उपपन्नतामित्यर्थः । तथा चोषेत्यादिशब्दानामर्थप्रतीतिसद्भावात् प्रयोगसद्भावानुमानं नोपपद्यते इति भावः । **अन्ये**–उषिता इत्यादयः । **तेषाम्**–ऊषेत्यादिशब्दबोध्यानाम् । **एषाम्**–ऊषेत्यादीनाम् । प्रयोगस्येति शेषः । तथा च ऊषेत्यादिशब्दाः लोकप्रयोगविषयत्वाभाववन्तः तदर्थबोधनप्रयोजनकप्रयोगविषयशब्दत्वावच्छिन्नप्रतियोगिताकभेदानुयोगित्वादित्यनुमानेन सत्प्रतिपक्षसत्त्वादुक्तानुमानानुपपत्तिरिति भावः ॥ कुत इत्यत आह—**परोक्षतादेर्विशेषस्येति ।** ऊषेत्यनेनावगम्यस्य उषितेत्यनेनेति शेषः । **तत्प्रत्यायनाय**–परोक्षतादिविशेषबोधनाय । **सहित इति**–उषिता इति भाष्यकृतेति शेषः ।

उद्द्योते—**अन्यः**—ऊषेत्यादितो भिन्नः ( उषिता इत्यादिः ) । बोधकतयेति शेषः । **तत्त्वादिति**–तदर्थवत्त्वादित्यर्थः । ऊषेत्यादीनामित्यादिः । ननु सर्वश्वेत इत्यत्रेवात्रापि "सर्वनामसंख्ययोरुपसंख्यानमि"ति वार्तिकेन सर्वनाम्नः पूर्वनिपातेन अन्यप्रयोगस्त्वादित्युचितमित्यत आह—**सर्वनाम्नामिति । पूर्वनिपातेति**–"तपर"स्तत्कालस्येत्यादिनिर्देशेनेत्यादिः । **तत्र**—पदान्तरसहितोषितेत्यादिघटकानां मध्ये । **साधनपारोक्ष्यं**–वासाद्यधिकरणपरोक्षत्वम् । प्रष्टुरित्यादिः । बोध्यते इति शेषः । एवमग्रेऽपि । **निष्ठया**–उषितादिघटकक्तादिना । **मध्यमेति**–ऊषेत्यादिघटकेत्यादिः । **आभिमुख्यमिति**–निवसित्रादेरित्यादिः । एवमग्रेऽपि । ननु वसतेः तरतेश्च कथं कर्त्तरि क्तप्रत्यय इत्यत आह—**वसेरिति । गत्यर्थाकर्मकेत्यत्र**–गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेति सूत्रे । केचित्तु आख्यातार्थविशेष्यक एव शाब्दबोधो भवति, न तु धात्वर्थविशेष्यक इति वदन्ति, तन्न युक्तमित्याशयेनाह–**नन्वाख्याते इति ।** तिङन्ते ऊषेत्यादावित्यर्थः । **अत्र**–कृदन्ते उषिता इत्यादौ । **च–तु । इति**–इति स्थितौ । **कथमिति**–पदान्तरसहितस्यापि उषिता इत्यादेरिति शेषः । **लिडन्तेति**–लिडन्तोषेत्यादीत्यर्थः । **विषयताविशेषेति**–प्रकारताविशेष्यतादिरूपेत्यादिः । विषयतासामान्यादरेणेति भावः । **तयोक्तेः**–तयोः समानार्थत्वोक्तेः । तथा च तत्समानविषयकत्वं तत्समानार्थत्वं, न तु तत्समानविशेष्यकत्वादिमत्त्वमिति भावः । **बोधे इति**–अभ्युपगते सतीति शेषः । **सत्तायाः**–विशेष्यभूतायाः । **वर्त्तमानेति**–वर्त्तमानसामीप्ये वर्त्तमानवद्वेति सूत्रेणेत्यादिः । **तत्र**–भवतीत्यत्र । आख्याते क्रियाविशेष्यकबोध एव भवतीत्यत्रोदाहरणमाह–**तरतीति । अत एव**–आख्याते क्रियाविशेष्यकबोधस्य स्वीकारादेव ।

( ५ सिद्धान्तसमानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अप्रयुक्ते दीर्घसत्त्रवत् ॥ * ॥

( भाष्यम् )

यद्यप्यप्रयुक्ताः अवश्यं दीर्घसत्त्रवल्लक्षणेनानुविधेयाः । तद्यथा दीर्घसत्त्राणि वार्षशतिकानि वार्षसहस्रिकाणि च । न चाद्यत्वे कश्चिदप्याहरति । केवलमृषिसंप्रदायो धर्म इति कृत्वा याज्ञिकाः शास्त्रेणानुविदधते ॥

**( प्रदीपः )** संप्रत्यप्रयुज्यमानानामपि पूर्वं प्रयुक्तत्वादनुशासनं कर्तव्यमित्याह—**अप्रयुक्त इति ॥ ऋषिसंप्रदाय इति ।** वेदाध्ययनमित्यर्थः ॥

**( उद्योतः )** नन्वप्रयुक्तानुशासने निर्मूलत्वाच्छास्त्रस्याप्रामाण्यं स्यादित आह—**संप्रतीति ।** पाणिनेर्व्याकरणप्रणयनकाले इत्यर्थः । पूर्वप्रयोगसत्ता च व्याकरणप्रणयनादेवानुमीयत इति भावः । इदमपि यत्र भाष्यवार्तिककाराभ्यामप्रयुक्तत्वं नोक्तं तदभिप्रायकमनुमानं बोध्यम् ॥ **वार्षशतिकानीति ।** वर्षशब्दो दिवसपरः । यथाश्रुत एव वा ॥ **आहरति ।** सामग्र्यभावादिति भावः ॥ ननु सत्त्राणां बहुयजमानकानामृषिभिर्वैसिष्ठादिभिः संप्रदायानन्त्याभावादृषिसंप्रदाय इत्ययुक्तमत आह—**वेदेति ।** भाष्ये कृत्स्नेत्यनन्तरमधीयते इति शेषः । याज्ञिकाश्च कल्पसूत्रेणान्वाचक्षत इत्यर्थः । अत्र सत्त्राणां कर्मत्वम् ॥

**( तत्त्वालोकः )** भाष्ये–**यद्यपीति**–अधुना लोकैः ऊषेत्यादय इति शेषः । **अवश्यमिति**–तथापीत्यादिः । ते इति शेषः । **लक्षणेन**–व्याकरणशास्त्रसूत्रेण । **अनुविधेयाः**–संस्कार्याः । दीर्घसत्त्रवदिति दृष्टान्तमुपपादयति–**तद्यथेति । सहस्रिकाणि चेति**–भवन्ति, अतो यद्यपीति शेषः । **आहरति**–अनुतिष्ठति । तथापीति शेषः । **शास्त्रेण**–कल्पसूत्रेण । **अनुविदधते**–अन्वाचक्षते ।

प्रदीपे—**सम्प्रतीति**–लोकैरिति शेषः । **अपीति**–ऊषेत्यादिशब्दानामिति शेषः । **पूर्वमिति**–तैरिति शेषः । **प्रयुक्तत्वादिति**–तेषाम् व्याकरणशास्त्रेणेति शेषः । **इत्याह**–इत्याशयेनाह ।

उद्द्योते—व्याकरणशास्त्रस्य प्रयोगमूलत्वादेव प्रामाण्यमित्याशयेनाह–**अप्रयुक्तानुशासने इति ।** सर्वथा अप्रयुक्तानां शब्दानामनुशासने इत्यर्थः । व्याकरणशास्त्रेण कृते सतीति शेषः । **निर्मूलत्वात्**–निर्मूलत्वापातात् । **शास्त्रस्य**–व्याकरणशास्त्रस्य । ननु कथं ज्ञायते ते पूर्वं प्रयुक्ता इतीत्यत आह–**पूर्वप्रयोगेति ।** विमतशब्दानामित्यादिः । **व्याकरणप्रणयनात्**–दिव्यदृष्टिमहर्षिपाणिनिकर्तृकतद्विषयकव्युत्पादनकरणात् । **अनुमीयते**–विमतशब्दाः शिष्टलोककर्तृकपूर्वप्रयोगविषयाः तादृशपाणिनिरचितव्याकरणशास्त्रानुशिष्टत्वात् यन्नैवं तन्नैवं यथा असाधुशब्द इत्यनुमीयते । ननु भाष्यवार्त्तिककारनिर्णीताप्रयुक्तताकशब्दानां पाणिनीयव्याकरणशास्त्रेणानुशासने कृते तस्याप्रामाण्यं दुर्वारमेव, यथोत्तरं मुनीनां प्रामाण्यमिति नियमादित्यत आह–**इदमिति । यत्रेति**–शब्दे इति शेषः । **उक्तं**–सिद्धान्तितम् । तथा च पक्षे भाष्यवार्तिककारनिर्णीताप्रयुक्तताकत्वं विशेषणीयमिति भावः । "आदित्यो वा सर्व ऋतवः, स यदैवोदेत्यथ वसन्तो, यदा सङ्गवोऽथ ग्रीष्मो, यदा मध्यन्दिनोऽथ वर्षा, यदाऽपराह्णोऽथ शरद्, यदाऽस्तमेत्यथ हेमन्तशिशिरौ" इति ब्राह्मणमूलिकायाः "समा मासा अहोरात्रास्तुल्या ब्राह्मणचोदिताः" इति वृद्धसमृद्धोक्तेरनुसारेणाह–**दिवस इति ।** जैमिनिना "सहस्रसम्वत्सरं तदायुषामसम्भवान्मनुष्येषु" इति पूर्वपक्षे "अहानि वाऽभिसंख्यत्वादि"ति सिद्धान्तिततया वार्षसहस्रिकाणीत्यत्र वर्षशब्दस्य दिवसपरताया आवश्यकता । प्रकृते तु यथाश्रुतमपि उपपत्तुं शक्नोति मनुष्याणां शताधिकायुषः सम्भवादित्याशयेनाह–**यथाश्रुत इति । सत्त्राणां**–दीर्घसत्त्राख्ययज्ञानाम् । **अधीयते इति**–द्विजा इति शेषः । चेन शेषपूर्तिं विधाय याज्ञिका इत्यादिभाष्यस्यार्थमाह–**याज्ञिकाश्चेति । अत्र**–अन्वाख्याने ।

( ६ सिद्धान्तसमानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सर्वे देशान्तरे ॥ * ॥

( भाष्यम् )

सर्वे खल्वप्येते शब्दा देशान्तरेषु प्रयुज्यन्ते ॥

**( प्रदीपः )** **सर्वे इति ।** इदमत्र तात्पर्यम्—यस्य कस्यचिद्वचनात्प्रयोगाप्रयोगौ न व्यवतिष्ठेते, अपितु शिष्टानामेव वचनात् ॥

**( तत्त्वालोकः )** भाष्ये—विमतशब्दानां प्राक्प्रयुक्तता शास्त्रानुशिष्टत्वेनानुमेयेत्यभिधाय, ऊषेत्यादिशब्दे लोकप्रयोगविषयत्वाभावानुमापकहेतोः स्वरूपासिद्धतामुद्भावयितुं सम्प्रत्यपि तेषां प्रयोगः क्वचिदस्त्येवेत्युपपादयति-**सर्वे इति । खल्वपीति** निपातसमुदायः सम्भावनार्थकः निश्चयार्थको वा । **एते**-विमता ऊषेत्यादयः । **प्रयुज्यन्ते इति**-तथा च तेषां क्वचिद्देशेऽप्रयुक्तत्वमात्रेण शास्त्राविषयता नोचिता, प्रत्युत क्वचिद्देशे प्रयुक्तत्वमात्रेण शास्त्रविषयतैव युक्तेति भावः ।

प्रदीपे—**इदमित्यनेन** निर्देश्यमाह-**यस्येति । वचनादिति**—केषाञ्चिदिति शेषः । **शिष्टानां**-यथार्थवक्तॄणां । **वचनादिति-इतीति** शेषः । तथा च सकलश्रुतिशास्त्रालोचनं विना तदप्रयुक्ततावादितया अप्रामाणिकतां भजतो भवतो वचनमपि अप्रामाणिकमेव जानीयुः जना इति भावः ।

**( आक्षेपभाष्यम् )**

**नचैवोपलभ्यन्ते ॥**

**( उद्द्योतः )** अनुपलब्ध्याऽप्रयुक्तत्वं शङ्कते—भाष्ये **न चैवेति ॥**

**(तत्त्वा०)** उद्द्योते—अभावज्ञाने योग्यानुपलब्धिः हेतुः । तत्रानुपलब्धौ योग्यता च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा । तथा च यदि ते प्रयुज्येरन् तर्हि उपलभ्येरन्, यतो नोपलभ्यन्ते अतो न प्रयुज्यन्ते ते इति ज्ञायते इत्याशयेनाह-**अनुपलब्ध्येति**-योग्यानुपलब्ध्येत्यर्थः । तेषामिति शेषः । **शङ्कते इति**-आक्षेपक इति शेषः ।

**उपलब्धौ यत्नः क्रियताम् ॥ महान् शब्दस्य प्रयोगविषयः । सप्तद्वीपा वसुमती त्रयो लोकाः, चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः, एकविंशतिधा बाह्वृच्यं नवधाथर्वणो वेदः वाकोवाक्यमितिहासः पुराणं वैद्यकमित्येतावाञ्छब्दस्य प्रयोगविषयः । एतावन्तं शब्दस्य प्रयोगविषयमननुनिशम्य 'सन्त्यप्रयुक्ता' इति वचनं केवलं साहसमात्रमेव ॥**

**(प्रदीपः) वाकोवाक्यमिति ।** वाकोवाक्यशब्देनोक्तिप्रत्युक्तिरूपो ग्रन्थ उच्यते—यथा-**"किंस्विदावपनं महद् भूमिरावपनं महद्"** इति ॥ पूर्वचरितसंकीर्तनमितिहा**सः** । वंशाद्यनुकीर्तनं **पुराणम् ॥**

**( उद्द्योतः )** [**त्रयो लोका इति ।** भूर्भुवःस्वरात्मका इत्यर्थः ॥] इतरलोकापेक्षया वसुमत्यां शब्दबाहुल्यात्तस्याः पृथग्ग्रहणम् । भुवरित्यनेनान्त्यपातालपर्यन्तसंग्रहः । स्वस्त्वनेनोपरितनसकलसंग्रहः । **रहस्यम्** उपनिषत् । मन्वादिस्मृतयो वा, वेदनिगूढार्थप्रकाशकत्वात् । एवं च देशान्तरशब्दः शाखान्तरवेदान्तरोपलक्षक इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—समाधानकरणाय ( निमित्तार्थकसप्तम्यन्तम् ) आह-**उपलब्धाविति ।** तेषामित्यादिः । **यत्नः**—सकलवेदशास्त्राध्ययनरूपः, देशान्तरगमनरूपो वा, समागतदेशान्तरव्युत्पन्नव्यक्तिमुखकशब्दश्रवणपठनरूपो वा, योगाभ्यासरूपो वा । उक्तयत्नाकरणे शाखान्तरस्थस्य देशान्तरस्थस्य वा तत्प्रयोगस्यायोग्यतया अनुपलब्धेः, अयोग्यानुपलब्धेश्चाभावाग्राहकत्वात् तदप्रयोगोक्तिर्न युक्तेति भावः । कुत इत्यत आह-**महानिति ।** कियान् शब्दप्रयोगदेशः यो महानित्यत आह-**सप्तद्वीपेति ।** सप्तद्वीपात्मकवसुमत्येव पारं प्राप्तमशक्या, का चर्चा लोकान्तरपारगमनस्येत्याशयेनाह**—त्रयो लोका इति ।** "मन्त्रब्राह्मणयोर्वेदनामधेयमि"त्यनुसारेण मन्त्रब्राह्मणात्मकसकलवेदतात्पर्येणाह-**वेदा इति । साङ्गाः**-शिक्षाकल्पव्याकरणनिरुक्तछन्दोज्योतिषसहिताः । भेदानेवाह-**एकशतमिति । बाह्वृच्यमिति**-अस्य बह्वृचानामाम्नायः ( बाह्वृच्यम् ) इति व्युत्पत्तौ बह्वृचशब्दात् "छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः" इति सूत्रेण "चरणाद्धर्माम्नाययोरिति वक्तव्यमि"ति वार्त्तिकानुसारेणाम्नाये ञ्यप्रत्यये अकारलोपादिवृद्ध्योः निष्पत्तिः । अथर्वणा ऋषिणा प्रोक्तो वेदः (आथर्वणः) इति व्युत्पत्तौ अथर्वन् शब्दात् "तेन प्रोक्तमि"ति सूत्रेणाणि "अनि"ति सूत्रेण प्रकृतिभावे णत्वादिवृद्ध्योः आथर्वणः । तमधीयते (आथर्वणिकाः) इति व्युत्पत्तौ आथर्वणशब्दात् "वसन्तादिभ्यष्ठक्" इति सूत्रेण ठकि तस्येके अकारलोपे आथर्वणिकाः । तेषामाम्नायः ( आथर्वणः ) इति व्युत्पत्तौ आथर्वणिकशब्दात् "आथर्वणिकस्येकलोपश्चे"ति वार्त्तिकेना ण इकलोपे च निष्पन्नमाह-**आथर्वण इति । वैद्यकम्**-चरकादि । शकुनाद्यागमानां वेदाङ्गज्यौतिषशेषभूतत्वात्, कल्पसूत्रादीनां गाथाधनुर्वेदगान्धर्ववेदार्थशास्त्रादीनाम् उपवेदानाञ्च यथायथं चतुर्दशविद्यास्थानान्तर्भूतत्वात्, पाखण्डाद्यागमानां काव्यनाटकादीनाञ्च साश्लीलत्वात् तेषां पृथग्गणना न कृता भाष्यकृता । वस्तुतस्तु प्रकृतभाष्यस्य दिग्दर्शनपरता, न तु परिगणनपरता । वेदप्रपञ्चस्य तु प्रधानत्वादुक्तिरिति न न्यूनतेत्याशयेनाह-**इत्येतावानिति । अननुनिशम्य**—अनालोच्य । **इतीति**-शब्दा इत्यादिः । यत्र प्रतियोग्युपलम्भजनककारणकलापसत्त्वात् यत्र स स्यात्तर्हि उपलभ्येत, नोपलभ्यते अतो नास्ति स इत्यापादयितुं शक्यते, तत्रैव तदभावनिश्चयो भवति, नान्यत्र । अत एवालोकादिसमवधाने तथाऽऽपादयितुं शक्यतया घटाभावादेः चाक्षुषप्रत्यक्षं भवति, नान्धकारादौ, तत्र तथाऽऽपादयितुमशक्यत्वात् । एवञ्च प्रकृते यदि सकलः शब्दप्रयोगदेशो भवता समालोचितः स्यात्, तदैव भवता यदि ते प्रयुज्येरन् तर्हि उपलभ्येरन्, नोपलभ्यन्ते अतो न प्रयुज्यन्ते ते इत्यापादयितुं शक्यतया तत्प्रयोगाभावः प्रमीयेत, नान्यथेत्याशयेनाह-**साहसमात्रमिति ।**

प्रदीपे—उक्तिमाह-**किं स्विदिति ।** प्रत्युक्तिमाह-**भूमिरिति । इतीति**-श्रुतिरिति शेषः ।

उद्द्योते—ननु भूरित्यनेनैव वसुमत्या ग्रहणे सम्भवत्यपि कथं कृतं तस्याः पृथग् ग्रहणमित्यत आह-**इतरेति । वसुमत्यामिति**—सप्तद्वीपवत्यामित्यादिः । **तस्याः-वसुमत्याः** । तथा च सप्तद्वीपवसुमत्यां शब्दबाहुल्यसूचनायैव तस्याः पृथग् ग्रहणमित्याशयः । भाष्यकृन्न्यूनतानिरासायाह-**भुवरित्यनेनेति । अन्त्यपातालपर्यन्तसंग्रहः**-भुवः तलवितलसुतलतलातलरसातलमहातलपातालानां संग्रहः । भाष्यकारन्यूनतापरिहारायैव पुनरप्याह-**स्वस्त्वेनेति ।** स्वरित्यनेनेत्यर्थः । **उपरितनसकलेति**-स्वर्महर्जनतपः-सत्यलोकेत्यर्थः । **देशान्तरशब्दः**-सर्वे देशान्तरे इति वार्त्तिकस्थदेशान्तरशब्दः ।

**एतस्मिंश्चातिमहति शब्दस्य प्रयोगविषये ते ते शब्दास्तत्र तत्र नियतविषया दृश्यन्ते । तद्यथा शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति, विकार एवैनमार्या भाषन्ते शव इति । हम्मतिः सुराष्ट्रेषु रंहतिः प्राच्यमध्यमेषु, गमिमेव त्वार्याः प्रयुञ्जते । दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु ॥**

**( प्रदीपः )** **विकार इति ।** जीवतो मृतावस्था विकारस्तत्रेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**हंमतिरित्यत्र** रंहतिरित्यत्र च गतिकर्मेत्यनुकर्षः ॥ **दातिर्लवनार्थे इति ।** क्तिन्नन्तं क्तिजन्तं वा । लवनेऽर्थे दातिशब्दं प्राच्याः प्रयुञ्जते, तत्रार्थे दात्रशब्दमुदीच्या इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—एक एव धातुः देशभेदेन विभिन्नार्थे

प्रयुज्यते, तथैकस्मिन्नेवार्थे देशभेदेन विभिन्नधातुः विभिन्नशब्दश्च प्रयुज्येते, अत एव सकलशब्दप्रयोगदेशाननालोच्य ऊषेत्यादिशब्दा अप्रयुक्ता इति कथनं न युक्तमित्याशयेनाह-**एतस्मिन्निति**। सप्तद्वीपवसुमत्यादावित्यर्थः। **प्रयोगविषये**-प्रयोगदेशे। **नियतविषयाः**—नियतार्थाः। उदाहरति-**तद्यथेति**। **गतिकर्मा**-गत्यर्थकः। **एनं**—शवति। **सुराष्ट्रेष्विति**-भाषितो भवतीत्यनुषज्यते। एवमग्रेऽपि। **गमिं**-गच्छति। गत्यर्थं इत्यादिः। **प्राच्येष्विति**-भाषिता भवतीति शेषः। **उदीच्येष्विति**-लवनार्थं भाषितं भवतीति शेषः।

प्रदीपे—**तत्र**-तत्रार्थे।

उद्द्योते—**तत्र**-लवने। **उदीच्या इति**-प्रयुञ्जते इति शेषः।

**ये चाप्येते भवतोऽप्रयुक्ता अभिमताः शब्दा एतेषामपि प्रयोगोदृश्यते ॥ क ? ॥ वेदे। तद्यथा— "सप्तास्ये रेवतीरेवदूष, यद्वो रेवतीरेवत्यां तमूष, यन्मे नरः श्रुत्यं ब्रह्म चक्र, यत्रा नश्चक्रा जरसं तनूनाम्" इति॥**

**( तत्त्वालोकः )** भाष्ये-ननु यदि मया आक्षेपकेन सकलशब्दप्रयोगदेशानालोचितुमशक्तेन भूयते, तर्हि भवतैव समाधात्रा आत्मानं सकलशब्दप्रयोगदेशालोचकमन्यमानेनोच्यताम् ते प्रयुक्ता अप्रयुक्ता वेतीत्यत आह—**ये चेति**। **एते**-ऊषेत्यादयः। **भवतः**-आक्षेपकस्य। **दृश्यते इति**-मया समाधात्रेति शेषः। पृच्छत्याक्षेप्ता-**क्वेति**। उत्तरयति समाधाता-**वेदे इति**। उदाहरति- **तद्यथेति**।

इति शास्त्ररचनावश्यत्वनिरूपणम् ॥

---

## ( अथ शब्दज्ञानस्य धर्मजनकताधिकरणम् )

### ( आक्षेपभाष्यम् )

**किं पुनः-शब्दस्य ज्ञाने धर्मः, आहोस्वित्प्रयोगे?॥**

**( प्रदीपः )** किं पुनरिति। **"एकः शब्दः सम्यग्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति"** इति श्रुतिः तत्र किं सम्यग् ज्ञातः कामधुग् भवति सुप्रयोगात्तु सम्यग्ज्ञातत्वानुमानमित्यर्थः, आहोस्वित्सुप्रयुक्तः कामधुग् भवति सुप्रयुक्तत्वं तु सम्यग्ज्ञानादित्यर्थ इति प्रश्नः॥

**( उद्द्योतः )** वार्तिकोक्तो धर्मनियमः श्रुतिसिद्धस्तस्यामुभयोः श्रवणात्प्रश्न इत्याह— **एकः शब्द इति**। तत्र **यदेकस्मादपूर्वं तदितरत्तदर्थमिति** ( पू० मी० ) न्यायाद् द्वयोः साम्येन फलसंबन्धाभावाद्विकल्पायोगेनैकस्य प्राधान्यमपरस्याङ्गत्वं कल्प्यम्॥ तत्र **प्रथमं वा नियम्येतेति** ( पू० मी० ११।२।४३ ) न्यायाश्रयेणाह-**तत्र किमिति॥**

**सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते।**
**पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यताम्॥**

इति न्यायेन ज्ञानस्य ज्ञेयशेषतया धर्महेतुत्वाभावात् प्रयोगाङ्गतया दृष्टार्थत्वाच्च प्रयोगस्य फलं प्रति संनिहितत्वाच्चाह-**आहोस्विदिति॥**

**( तत्त्वा० )** भाष्ये-**आहोस्वित्**—अथवा। **प्रयोगे**-**शब्दस्य** प्रयोगे धर्मः।

प्रदीपे—**सम्यग्ज्ञातः**-सम्यक्त्वेन प्रकृतिप्रत्ययादिविभागतोऽर्थविशेषपरतया ज्ञातः। प्रकृत्यादिविभागादीनां यथेच्छं कल्पनीयताया व्यवच्छेदायाह-**शास्त्रान्वित इति**। शास्त्रेण व्याकरणशास्त्राध्ययनजनितज्ञानविषयप्रकृत्यादिविभागादिना अन्वितः सम्बद्ध इति व्युत्पत्तिः। **सुप्रयुक्तः**—शिक्षाप्रतिपादितशब्दप्रयोगपद्धत्या यथास्थानप्रयत्नादि वर्णमुच्चारयता अर्थमनुसन्दधता विहितो यः अप्रभूक्ता-

दिदोषरहितः प्रयोगस्तद्विषयः। **लोके**-लोके च। **कामधुक्**-( धर्मद्वारा ) अभ्युदयप्रयोजकः। **तत्र**-श्रुतौ। **सम्यग्ज्ञात इति**-शब्द इति शेषः। **सुप्रयोगात्त्विति**-तस्येति शेषः। **सम्यग्ज्ञातत्वानुमानं**-सम्यग्ज्ञातत्वसाध्यकं 'अयं शब्दः एतेन सम्यग्ज्ञातः एतेन सुष्ठुप्रयुज्यमानत्वादिति" अनुमानम्। **सुप्रयुक्त इति**-शब्द इति शेषः। **सम्यग्ज्ञानादिति**-सम्यग्ज्ञानविषयत्वादित्यर्थः। तस्येत्यादिः। **इति**—इति जिज्ञासया।

उद्द्योते-**वार्तिकोक्तः**-"शास्त्रेणधर्मनियमः" इतिघटितवार्तिकोक्तः। **श्रुतिसिद्धः**-एकः शब्द इत्यादिश्रुतिप्रमाणितः। **तस्यां**-श्रुतौ। **उभयोः**-सम्यग्ज्ञानसुप्रयोगयोः। **इत्याह**-**इत्याशयेनाह**। **तत्र**-श्रुतौ। **यदेति**-यदा ( द्वयोः ) एकस्माद् अपूर्वं पुण्यं ( जन्यते तदा ) तदितरत् अपूर्वजनकभिन्नमपरं तदर्थं अपूर्वजनकाङ्गं भवतीत्यर्थः। **द्वयोः**-सम्यग्ज्ञानसुप्रयोगयोः। **फलेति**-कामधुक्पदार्थघटकेत्यादिः। **तत्र**-एकस्य प्रधानताया अपरस्याङ्गतायाश्च कल्पने। **प्रथमं वेति**-प्रधानतयेति शेषः। **नियम्येत**-आश्रीयेत। **सर्वत्रेति**-**हि**-यतः, आत्म ( विषयक ) विज्ञानात् अन्यत्र सर्वत्रैव विज्ञानं **संस्कारित्वेन** संस्कारजनकत्वेन **गम्यते** प्रतीयते ( अतः आत्मज्ञानातिरिक्तं ज्ञानं ) **पराङ्गं** ज्ञेयाङ्गं च ( भवति ) इत्यवधार्यतामित्यर्थः। **ज्ञानस्य**-सम्यग्ज्ञानस्य। **ज्ञेयशेषतया**-शब्दाङ्गतया। नन्वेवं वैयर्थ्यापातात् शब्दसम्यग्ज्ञानमनुपादेयं स्यादित्यत आह-**प्रयोगाङ्गतयेति**। शब्दप्रयोगद्वारेत्यर्थः। तस्येति शेषः। **दृष्टार्थत्वात्**-श्रोतृनिष्ठबोधरूपदृष्टफलार्थत्वात्। **प्रयोगस्य**-सुप्रयुक्तशब्दघटकसुप्रयोगस्य। सम्यग्ज्ञानशब्दघटकसम्यग्ज्ञानापेक्षयेति शेषः। **फलं**-कामधुक्पदार्थघटकफलम्। **सन्निहितत्वादिति**-तेनैव फलसम्बन्धस्यौचित्यादिति शेषः।

### ( प्रत्याक्षेपभाष्यम् )

**कश्चात्र विशेषः ? ॥**

### ( ७ ज्ञानपक्षदूषणवार्त्तिकम् ॥ १ ॥ )

## ॥※॥ ज्ञाने धर्म इति चेत्तथाऽधर्मः ॥※॥

### ( भाष्यम् )

**ज्ञाने धर्म इति चेत्तथाऽधर्मोऽपि प्राप्नोति। यो हि शब्दान् जानात्यपशब्दानप्यसौ जानाति। यथैव शब्दज्ञाने धर्म एवमपशब्दज्ञानेऽप्यधर्मः॥**

**( प्रदीपः ) ज्ञाने धर्म इति चेदिति।** यथा श्लेष्मणः प्रकोपनं स्नेहद्रव्यं रूक्षं तु वायोस्तथेहापि प्राप्तमिति भावः॥

**( उद्द्योतः ) यथा श्लेष्मण इति।** तथा धर्मजनकज्ञानविपरीतत्वात् तद्विपरीतजनकत्वेनापशब्दज्ञानादधर्मप्राप्तिरित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये-**अत्र**-शब्दज्ञाने धर्म **इति** शब्दप्रयोगे धर्म इति पक्षयोः। **धर्म इति**-भवतीति शेषः। **इति चेद्**-**इति** ( अभ्युपगम्यते ) यदि। **तथा**-तर्हि। **प्राप्नोति**-आपद्यते। कुत इत्यत आह-**य इति**। **हि**-यतः। व्याकरणशास्त्राध्ययने प्रवृत्तस्य परिनिष्ठितपचतीत्यादिज्ञानाय डुपचष्प्रभृत्यपशब्दज्ञानमावश्यकमित्याशयेनाह-**अपशब्दानिति**। किमेतावतेत्यत आह-**यथैवेति**। **धर्म इति**-भवेदिति शेषः। एवमग्रेऽपि। **अप्यधर्मः**-अधर्मोऽपि। **शब्दज्ञाने धर्म इति** पक्षे सुप्रयुक्त इत्यस्य सम्यङ्निर्दिष्टार्थकतयोपपत्तिः अयं शब्दोऽयमपशब्द इति ज्ञानस्य शब्दापशब्दस्वरूपनिर्देशमन्तरेणासम्भवादिति भावः।

प्रदीपे-**श्लेष्मणः**-कफस्य। **प्रकोपनं**-वर्द्धकम्। **स्नेहद्रव्यं**-स्निग्धद्रव्यं ( दध्यादि )। **रूक्षं**-स्निग्धद्रव्यविपरीतद्रव्यं ( भर्जिततण्डुलादि )। **वायोः**-कफविपरीतवातस्य। प्रकोपनमित्यनुषज्यते।

उद्द्योते—तथेहापि प्राप्तमिति कैयटोक्तं व्याचष्टे-**तथेति**। अपशब्दज्ञानस्येति शेषः। **ज्ञानेति**-शब्दज्ञानेत्यर्थः। **तद्विपरीतेति**-धर्मविपरीतेत्यर्थः। तथा चाधीतव्याकरणशास्त्रादेव धर्मजनकशब्दज्ञाने जायमाने नान्तरीयकतया अधर्मजनकापशब्दज्ञानस्यापि जायमानत्वात् तेन धर्मेण तस्याधर्मस्य क्षये सम्भवत्यपि "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमि"ति न्यायेन व्याकरणशास्त्रमनुपादेयमेव स्यादिति भावः।

( अधर्माधिक्यभाष्यम् )

**अथवा भूयानधर्मः प्राप्नोति। भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः। एकैकस्य शब्दस्य बहवोऽपभ्रंशाः। तद्यथा गौरित्यस्य गावीगोणीगोतागोपोतलिकेत्येवमादयोऽपभ्रंशाः॥**

**( तत्त्वालोकः )** भाष्ये-शब्दापेक्षया अपशब्दस्याधिक्येन अर्थापेक्षया अधिकानर्थस्यैव प्रयोजकत्वात् मधुविषसम्पृक्तान्नमिव व्याकरणशास्त्रं हेयमेव स्यादित्याशयेनाह-**अथवेति**। अध्यापकनिर्दिष्टशब्दापशब्दस्वरूपज्ञानपूर्वके व्याकरणशास्त्राध्ययने **इति** शेषः। कुत इत्यत आह-**भूयांस इति**। **हि**-यतः। **शब्दा इति**-अत **इति** शेषः। शब्दापेक्षया अपशब्दाधिक्यमुपपादयति-**एकैकस्येति**। उदाहरति-**तद्यथेति**।

## ॥ ❀ ॥ आचारे नियमः ॥ ❀ ॥

**( ८ ज्ञानपक्षे दूषणान्तरवार्त्तिकम् ॥ २ ॥ )**

**( भाष्यम् )**

**आचारे पुनर्ऋषिर्नियमं वेदयते—"तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुः" इति ॥**

**( प्रदीपः ) आचारे** प्रयोगे॥ **ऋषिर्वेदः**॥

**( उद्द्योतः ) प्रयोग इति**। एवंच प्रयोगादेवाधर्मवद्धर्मोऽपीति ज्ञानाद्धर्म **इति** वेदविरुद्धमिति भावः॥

**( तत्त्वालोकः )** भाष्ये-**नियमं**-शब्द एव प्रयोक्तव्यो नापशब्द इति नियमं। **वेदयते**-बोधयति। बोधकवेदस्वरूपमाह-**तेऽसुरा इति**।

उद्द्योते-**एवञ्च**-उक्तवेदालोचने च। तुल्ययुक्त्येति **शेषः**। **प्रयोगादेवाधर्मवद्धर्मोऽपि**-अपशब्दस्य प्रयोगादेवाधर्म **इव** शब्दस्य प्रयोगादेव धर्मोऽपि। भवतीति प्रतीयते **इति शेषः**। **इति**-इति हेतोः। **ज्ञानादिति**-शब्दस्येत्यादिः। **इति**-इति भवद्वचनम्।

इति ज्ञानपक्षनिराकरणम्॥

( अथ प्रयोगपक्षाङ्गीकारभाष्यम् )

**अस्तु तर्हि प्रयोगे॥**

**( तत्त्वालोकः )** भाष्ये-यदि शब्दज्ञाने धर्म इति पक्षे उक्तरीत्या दूषणानि प्राप्नुवन्ति, तर्हि शब्दप्रयोगे धर्म **इति** पक्ष एवास्त्वित्याशयेनाह-**अस्तु तर्हि प्रयोगे इति**। धर्म इति शेषः।

**( ९ प्रयोगपक्षे दूषणवार्तिकम् ॥ ३ ॥ )**

## ॥ ※ ॥ प्रयोगे सर्वलोकस्य ॥ ※ ॥

**( भाष्यम् )**

**यदि प्रयोगे धर्मः, सर्वो लोकोऽभ्युदयेन युज्येत॥**

**( तत्त्वालोकः ) प्रयोगे इति**। धर्म इति चेत्तर्हीत्यनुषज्यते **सर्वलोकस्येति**-धर्मः स्यादिति शेषः। **प्रयोगे**-शब्दस्य प्रयोगे **धर्म इति**-इत्यभ्युपगम्येत तर्हीति शेषः। प्रकृतपक्षे सम्यग्ज्ञान इत्यस्य सम्यक्त्वेन साधुत्वेन ज्ञात **इत्यर्थं**, शास्त्रान्वित इत्यस्य च व्याकरणशास्त्रव्युत्पादितस्वरूपमनतिक्रान्तः इत्यर्थमभिप्रेत्याह-**सर्वो लोक इति**। शब्दसाधुत्वज्ञानसाधने व्याकरणशास्त्रे कृतश्रमोऽकृतश्रमो वा सर्वोजन **इत्यर्थः**। शब्दप्रयोगजनितपुण्यद्वारेति शेषः। व्याकरणशास्त्रस्य अन्यशास्त्रस्य वाऽध्ययनद्वारा यथा कथञ्चिद्वा ज्ञातः व्याकरणशास्त्रसंस्कृतशब्दः सम्यक्प्रयुक्तः स्वप्रयोक्तारं सकलं वैयाकरणमवैयाकरणं वा स्वजनितधर्मद्वारा अभ्युदयेन योजयेदिति भावः।

( आक्षेपभाष्यम् )

**कश्चेदानीं भवतो मत्सरो, यदि सर्वो लोकोऽभ्युदयेन युज्येत ?**

**( तत्त्वालोकः )** ननु सप्रमाणमुपादेयम् अप्रमाणं हेयमितिशिष्टवचनात् प्रमाणेनैव वस्तु व्यवस्थापयन्तो वयं "सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग् भवेदि"ति निरन्तरमीश्वरं याचमानाः श्रुतिप्रमाणतः शब्दप्रयोगे सकललोकाभ्युदयप्रयोजकतामवगम्य अमन्दानन्दसन्दोहमनुभवाम इदानीं, कथं तज्ज्ञानेन भवतो हृदये जागर्त्यमर्ष **इत्या**शयेनाक्षिपति-**कश्चेति**। **भवतः**-प्रयोगे धर्म इति पक्षं दूषयतः। **मत्सरः**-द्वेषः। **इदानीं** ( अत्र ) पदार्थमाह-यदीति।

**( समाधानभाष्यम् )**

**न खलु कश्चिन्मत्सरः। प्रयत्नानर्थक्यं तु भवति। फलवता च नाम प्रयत्नेन भवितव्यम्। न च प्रयत्नः फलाद्व्यतिरेच्यः॥**

**( प्रदीपः ) न च प्रयत्न इति**। यदि प्रयत्नेन विना फलं स्यात् प्रयत्नवैयर्थ्यमापद्येतेत्यर्थः॥

**( उद्द्योतः )** भाष्ये **फलाद्व्यतिरेच्य इति**। फलवत्त्वस्यभावप्रतियोगी न कार्य **इत्यर्थः**॥ **प्रयत्नवैयर्थ्यमिति**। व्याकरणाध्ययनविषयकप्रयत्नवैयर्थ्यमित्यर्थः॥

**( तत्त्वा० )** अहमपि निरन्तरपराभ्युदयकामिताऽऽत्मिकां भारतीयमानवतां न हातुं शक्नोमीत्याशयेनोत्तरयति-**नेति**। **खल्विति**-निश्चये। **मत्सर इति**-मम तत्रेति शेषः। नन्वेवं कथन्नाभ्युपगम्यते शब्दप्रयोगे धर्म **इति** पक्ष इत्यत आह-**प्रयत्नेति**। व्याकरणाध्ययनविषयकप्रयत्नेत्यर्थः। एवमग्रेऽपि। यदि अधीतव्याकरण **इवा**नधीतव्याकरणोऽपि शब्दप्रयोगेण धर्मद्वारा अभ्युदय प्राप्नुयात्तर्हि व्याकरणाध्येतुरित्यादिः। ननु कथमुपपद्येत तस्य सार्थकतेत्यत आह—**फलवतेति**। अभ्युदयसाधकेनेत्यर्थः। स्वसार्थक्यायेत्यादिः। **नामेति**-निश्चये। तत्सत्त्वे तत्सत्त्वमित्यन्वय, तदभावे तदभाव **इति** व्यतिरेकाभ्यां सर्वत्र कार्यकारणभावो निश्चीयते, तथा तत्सत्त्वे तदभाव इत्यन्वयव्यभिचारेण तदभावे तत्सत्त्वमिति व्यतिरेकव्यभिचारेण वा सवत्र कार्यकारणभावाभावो निर्णीयते। एवञ्च व्याकरणाध्ययनविषयकप्रयत्नस्य अन्वयव्यतिरेकाभ्याम् अभ्युदयसाधकताया उपपत्त्यैव तस्य सार्थकता सम्पद्येत। अत एव तस्य तत्साधकताया विघटकस्य यत्र ( अनधीतव्याकरणे ) प्रयत्नाभावः तत्र फलम् ( शब्दप्रयोगेण धर्मद्वारा अभ्युदयः ) इति व्यतिरेकव्यभिचारस्योपपादकः शब्दप्रयोगे धर्म **इति** पक्षो नाभ्युपगन्तव्य **इत्या**शयेनाह-**नचेति**।

प्रदीपे—**विनेति**—अपि अनधीतव्याकरणस्य शब्दप्रयोगेण धर्मद्वारेति शेषः । **स्यादिति**—तर्हि अधीतव्याकरणस्येति शेषः ।

उद्द्योते—**फलवदिति**—प्रयत्न इत्यादिः । तथा च फलवद्वृत्तियोऽभावस्तत्प्रतियोगितायाः प्रयत्ने समुपपादकः पक्षो नाङ्गीकार्य इति भावः ।

**( समाधानबाधकभाष्यम् )**

**ननु च ये कृतप्रयत्नास्ते साधीयः शब्दान्प्रयोक्ष्यन्ते, त एव साधीयोऽभ्युदयेन योक्ष्यन्ते ॥**

**( उद्योतः ) साधीय इति ।** क्रियाविशेषणम् । शास्त्रसंस्कारवतां प्रभूतशब्दप्रयोगजन्यबहुपुण्यद्वारा बहुतराभ्युदयफलत्वमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—ननु शब्दप्रयोगे धर्म इति पक्षेऽपि व्याकरणाध्ययनविषयकप्रयत्नस्य बहुतराभ्युदयेनान्वयव्यतिरेकसम्भवात् तस्य तत्साधकताया उपपत्त्या सार्थकता सम्भवत्येवेत्याशयेनाह—**ननु चेति ।**

उद्द्योते—**साधीय इति**—प्रथमं साधीय इति । **क्रियेति**—प्रयोक्ष्यन्ते इतीत्यादिः । द्वितीयं साधीय इत्यभ्युदयविशेषणमिति भावः । **शास्त्रसंस्कारवतां**—यत्नपूर्वकाध्ययनावाप्तव्याकरणशास्त्रज्ञानजनितसंस्कारवताम् । **बहुतरेति**—बहुतराभ्युदयः फलं येषामिति व्युत्पत्तिः ।

**( समाधानसाधकभाष्यम् )**

**व्यतिरेकोऽपि वै लक्ष्यते । दृश्यन्ते हि कृतप्रयत्नाश्चाप्रवीणाः, अकृतप्रयत्नाश्च प्रवीणाः । तत्र फलव्यतिरेकोऽपि स्यात् ॥**

**( प्रदीपः ) व्यतिरेक इति ।** परिहासः ॥

**( उद्द्योतः )** भाष्ये **तत्र फलव्यतिरेक इति ।** कौशलव्यतिरेकवत् फलव्यतिरेकोऽपि स्यादिति तस्य व्याकरणाध्ययनं व्यर्थमेव स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—ननु व्याकरणशास्त्राध्ययनविषयकप्रयत्नस्य बहुतराभ्युदयसाधकताया अपि निश्चये प्रतिबन्धकौ अन्वयव्यतिरेकव्यभिचारौ स्त एवेत्याशयेनाह-**व्यतिरेक इति ।** विपरीतः ( प्रयत्नसत्त्वे बहुशब्दप्रयोगजनितबहुपुण्यद्वारा बहुतराभ्युदयस्याभावः, तथा प्रयत्नासत्त्वे तद्द्वारा बहुतराभ्युदयसत्त्वम् ) इत्यर्थः । **वै** इति वाक्यालङ्कारे । कुत इत्याकांक्षायाम् केचिद्वैयाकरणाः निश्चितशब्दसाधुत्वाः सन्तोऽपि प्रतिभारहिततया व्यवहारप्रत्युत्पन्नमतित्वाभावात् शब्दप्रयोगेऽकुशला भवन्ति, तथा केचिदनधीतव्याकरणा अपि यथाकथञ्चिदवगतसाधुशब्दाः सन्तः शब्दप्रयोगे निपुणा भवन्तीत्याशयेन वैपरीत्यमेवोपपादयितुमाह-**दृश्यन्ते इति । हि**—यतः । **अप्रवीणाः**—कौशलरहिताः । अस्य शब्दप्रयोगे इत्यादिः । एवमग्रेऽपि । **प्रवीणा इति**—अत इति शेषः । **तत्र**—अप्रवीणकृतप्रयत्नप्रवीणाकृतप्रयत्नेषु । **फलव्यतिरेकोऽपि**—फलवैपरीत्यमपि ।

उद्द्योते—**कौशलव्यतिरेकवत्**—शब्दप्रयोगनिपुणतावैपरीत्यमिव । **इति**—इति हेतोः । **तस्य**—अधीतव्याकरणशास्त्रस्य । **व्याकरणाध्ययनम्**—व्याकरणाध्ययनविषयकप्रयत्नः ।

**( पक्षद्वयनिराकरणोपसंहारभाष्यम् )**

**एवं तर्हि—नापि ज्ञान एव धर्मो नापि प्रयोग एव ॥ किं तर्हि ? ।**

**( तत्त्वालोकः )** भाष्ये—उक्तरीत्या दूषितत्वादुक्तं पक्षद्वयं निराकुर्वन्नुपसंहरति- **एवमिति ।** यदि तत्र पक्षद्वये दोष इत्यर्थः । **नापि**—नैव । एवमग्रेऽपि । **एवेति**—धर्म इति फलतीति शेषः । शब्दे केवलसम्यग्ज्ञाते केवलसुप्रयुक्ते वा न धर्म इति निर्णीतेऽपि पृच्छति- **किन्तर्हीति ।** तर्हि क्व धर्म इत्यर्थः ।

**( १० सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ शास्त्रपूर्वके प्रयोगेऽभ्युदयस्तत्तुल्यं वेदशब्देन ॥ * ॥**

**( भाष्यम् )**

**शास्त्रपूर्वकं यः शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यते । तत्तुल्यं वेदशब्देन । वेद शब्दा अप्येवमभिवदन्ति "योऽग्निष्टोमेन यजते य उ चैनमेवं वेद" "योऽग्निं नाचिकेतं चिनुते य उ चैनमेवं वेद" ॥**

**( प्रदीपः ) तत्तुल्यमिति ।** वेदः शब्दो यस्यार्थस्य स वेदशब्दस्तस्य यथा ज्ञात्वानुष्ठानं तथा शब्दानामपि प्रकृत्यादिविभागज्ञानपूर्वकः प्रयोग इत्यर्थः ॥

**( उद्द्योतः ) शास्त्रपूर्वके इति ।** व्याकरणाध्ययनपूर्वके इत्यर्थः ॥ तत्र वेदाङ्गत्वादेतद्व्याकरणाध्ययनपूर्वकप्रयोगे एव धर्म इति प्रामाणिकाः ॥ **वेदः शब्द इति ।** बोधक इत्यर्थः । प्रमाणमित्यर्थो वा ॥ **तस्य यथेति ।** तस्य यथा **य उ चैनमेवं वेदेति** ग्रन्थेन वेदतो ज्ञात्वानुष्ठानं फलायोक्तम् । तथास्यापि शास्त्रज्ञानपूर्वकः प्रयोगः फलायेत्येकः **शब्द** इत्यादिनोक्तमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—ननु सम्भवे सति सकलोद्देश्यतावच्छेदकनिष्ठप्रयोजकता निरूपिता प्रयोज्यता विधेयवृत्तिः भवतीति सिद्धान्तः । अत एव यथा पुत्रवित्तलोकत्रयवान् सुखीत्यादौ सुखवृत्तिप्रयोज्यतानिरूपिताप्रयोजकता पुत्रवित्तलोकत्रयनिष्ठतयैवोपपद्यते, न तु पुत्रमात्रनिष्ठतया, न वा धनमात्रनिष्ठतया, न वा लोकमात्रनिष्ठतया, न वा पुत्रवित्तोभयनिष्ठतया, न वा पुत्रलोकोभयनिष्ठतया, न वा वित्तलोकोभयनिष्ठतया । तथा एकः शब्द इत्यादिश्रुतावपि कामधुक्त्वनिष्ठप्रयोज्यतानिरूपितप्रयोजकता सम्यग्ज्ञातत्वशास्त्रान्वितत्वसुप्रयुक्तत्वत्रयनिष्ठतयैवोपपद्यते, न तु तदन्यतमनिष्ठतया, न वा तदुभयनिष्ठतयेत्याशयेन समाधातुं ज्ञाने धर्म इति वार्तिके ज्ञानशब्देनाभिहिते सम्यग्ज्ञातत्वशास्त्रान्वितत्वे शास्त्रशब्देनाभिदधत् सिद्धान्तवार्तिकमुपस्थापयति- **शास्त्रपूर्वके इति ।** व्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वके इत्यर्थः । **प्रयोगे**—शब्दप्रयोगे । धर्मद्वारेति शेषः । **अभ्युदयः**—फलम् । वेदशास्त्राध्ययनजनितकर्मस्वरूपफलसाधनज्ञानपूर्वके एव कर्मानुष्ठाने फलं भवतीत्याशयेनाह-**तदिति ।** व्याकरणशास्त्रमात्रबोध्यप्रकृतिप्रत्ययविभागादिकशब्दात्मकं वस्त्वित्यर्थः । **वेदशब्देन**—स्वतः प्रमाणभूतवेदशास्त्रमात्रबोध्यस्वरूपसाधनफलककर्मणा । **शास्त्रपूर्वकमिति**—क्रियाविशेषणम् । एवमग्रेऽपि । ननु कर्मणः तादृशज्ञानपूर्वकानुष्ठानमेव सफलं भवतीत्यत्र किं प्रमाणमित्यत आह-**वेदशब्दा इति ।** वेदानां शब्दा इति, वेदाश्चामी शब्दा इति वा व्युत्पत्तिः । **अपि**—एव । **एवं**—यथा मया व्याख्यातं तथा । वेदशब्दानेवाह-**योऽग्निष्टोमेनेति ।** द्वितीयं **वेदेति**—इत्यादय इति शेषः ।

प्रदीपे-**अर्थस्य**-अग्निष्टोमादिरूपकर्मणः । **यथेति**-स्वरूपसाधनफलानीति शेषः । **अनुष्ठानमिति**-सफलमिति शेषः । **प्रयोग इति**-सफल इति शेषः ।

उद्द्योते-शास्त्रान्तरभ्रमनिराकरणायाह-**व्याकरणेति**। व्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वके इत्यर्थः। ननु व्याकरणशब्देन नवविधव्याकरणानां मध्ये किं व्याकरणमत्र विवक्षितमित्यत आह-**तत्रेति**। नवविधव्याकरणानां मध्ये इत्यर्थः। एतस्य पाणिनीयव्याकरणस्येति शेषः। **एतदिति**-पाणिनीयव्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वकशब्दप्रयोगे इत्यर्थः। **तस्य**-वेदशब्दस्य ( अग्निष्टोमादिरूपकर्मणः )। **वेदत इति**-स्वरूपसाधनफलानीति शेषः। **उक्तम्**-इत्युक्तम्। **अस्यापि**-शब्दस्यापि। **शास्त्रेति**-व्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वक इत्यर्थः। तथा च "एकः शब्दः·······सुप्रयुक्तः स्वर्गे लोके कामधुग् भवतीति वाक्यात् फलार्थतयाऽवगतेन शब्दप्रयोगेण स्वकर्मीभूतशब्दसंस्कारस्यापेक्षितत्वात् "सम्यग्ज्ञातः" इत्यनेन तदङ्गतया ज्ञाने विनियुक्ते, तत्राप्रामाणिकत्वशङ्कानिराकरणाय "शास्त्रान्वितः" इत्यनेन तत्र व्याकरणशास्त्रसमर्थिततया अभिधानात् व्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वकशब्दप्रयोगेण धर्मद्वारा अभ्युदयो भवतीति फलितार्थः। ननु "य उ चैनमि"त्यत्रापि चकारात् ज्ञानानुष्ठानयोः साम्येन फलसम्बन्धो भवतु, तथा तद्दृष्टान्तेन प्रकृतेऽपि शब्दज्ञानप्रयोगयोः साम्येन फलसम्बन्धो भवत्विति चेन्न, ज्ञानेनानुष्ठाने उपकारदर्शनात् तयोः गुणप्रधानभावस्यावश्यकतया पक्षान्तराश्रयणात्। नचात्मज्ञानस्येव शब्दज्ञानस्यापि स्वातन्त्र्येण फलसाधनता भवत्विति वाच्यम्, सर्वत्रैव हि विज्ञानं संस्कारित्वेन गम्यते। पराङ्गं चात्मविज्ञानादन्यत्रेत्यवधार्यतामिति वचनेन, "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति श्रुत्या सामर्थ्येन चात्मज्ञानातिरिक्तज्ञानस्य पारार्थ्यावगमात्, अत्यन्ताशेषभूतात्मज्ञानस्य "तरति शोकमात्मविदि"त्यादिना बोधितायाः शोकतरणोपलक्षितात्मस्वरूपं प्रति स्वतन्त्रकल्पसाधनतायाः उपपत्तावपि अन्यत्र तस्या असंभवात्, सर्वत्र ज्ञानमात्रेण कार्योपपत्तौ बह्वायाससाध्यानुष्ठानस्य वैयर्थ्यापत्तेश्चेति भावः।

( व्याख्यान्तरभाष्यम् )

**अपर आह—तत्तुल्यं वेदशब्देनेति। यथा वेदशब्दा नियमपूर्वमधीताः फलवन्तो भवन्त्येवं यः शास्त्रपूर्वकं शब्दान्प्रयुङ्क्ते सोऽभ्युदयेन युज्यत इति॥**

( **प्रदीपः** ) **अपर आहेति**। वेदश्चासौ शब्दश्च वेदशब्द इति कर्मधारयः॥

( **तत्त्वालोकः** ) भाष्ये—वेदशब्दशब्देन कर्मबोधनाय लक्षणाया बहुव्रीहेर्वाङ्गीकारे गौरवात् तस्य वेदशब्दपरतैवेत्युपपादयितुं प्रतिपाद्यभेदात् प्रतिपादकं भेदेन व्यपदिशन्नाह-**अपर आहेति**। **नियमपूर्वम्**-"आहूतश्चाप्यधीयीते"त्यादिधर्मशास्त्रबोधितब्रह्मचर्यादिनियमपूर्वकम्। **फलवन्तः**-ज्योतिष्टोमादिकर्मस्वरूपसाधनफलबोधनेन फलवन्तः। **शास्त्रपूर्वकम्**-व्याकरणशास्त्राध्ययनजनितप्रकृतिप्रत्ययविभागादिज्ञानपूर्वकम्। **शब्दान्**-श्रीवंशीधरः पठतीत्यादिलौकिकशब्दान्। अर्थबोधनायेति शेषः। **अभ्युदयेन**-व्याकरणादिगतनियमापूर्वहेतुकाभ्युदयेन।

प्रदीपे—वेदशब्दशब्दे व्युत्पत्तिपूर्वकं समासमाह-**वेदश्चेति**।

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु—ज्ञान एव धर्म इति॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्ॐज्ञाने धर्म इति चेत्तथाऽधर्मॐइति॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः, शब्दप्रमाणका वयम्, यच्छब्द आह तदस्माकं प्रमाणम्। शब्दश्च शब्दज्ञाने धर्ममाह, नापशब्दज्ञानेऽधर्मम्॥ यच्च पुनरशिष्टाप्रतिषिद्धम्, नैव तद्दोषाय भवति, नाभ्युदयाय। तद्यथा हिक्कितहसितकण्डूयितानि नैव दोषाय भवन्ति, नाभ्युदयाय॥**

( **उद्द्योतः** ) भाष्ये **प्रमाणमिति**। प्रामाणिकमित्यर्थः॥ **शब्दश्च शब्दज्ञाने इति**। **एकः शब्दः सम्यग् ज्ञात** इत्यादिः॥ **हेलयो हेलय** इत्यादि तु अपशब्दप्रयोगेऽधर्ममाह, न तु ज्ञाने इति भावः॥ यद्यपि तत्र **प्रयुक्त** इत्यप्युक्तं, तथाप्यवैयाकरणस्य सम्यक् प्रयोगादपि धर्माभावेन ज्ञानमेव तद्धेतुः। प्रयोगस्तु तस्य द्वारमिति भावः॥

( **तत्त्वालोकः** ) भाष्ये—केवलस्य शब्दज्ञानस्यापि धर्मद्वारा अभ्युदयसाधकतोपपद्यते इत्याशयेन पक्षान्तरमाह-**अथवेति**। **ज्ञान एव**-शब्दज्ञानेऽपि। केवले इत्यादिः। तत्र पक्षे कथितं दोषं स्मारयति-**ननु चेति**। परिहरति-**नेति**। तत्र पक्षे इति शेषः। **एषः**-अपशब्दज्ञानेन अधर्मप्रसक्तिरूपः। कुत इत्यत आह-**शब्दप्रमाणका इति**। यत इत्यादिः। शब्दः प्रमाणं येषामिति व्युत्पत्तिः। कर्मस्वरूपसाधनफलेषु सन्निकर्षाभावात् प्रत्यक्षस्य, व्याप्तिग्रहाभावात् अनुमानस्य च विषयतायाः असंभवादाह-**यच्छब्द इति**। यद्यपि शब्दोऽपि अर्थबोधने शक्तिग्रहसापेक्षः, तथापि स्वर्गकामो यजेतेत्यादिवाक्यं गृहीतशक्तिकपदार्थं बोधयन्नलौकिकमपि सम्बन्धमाकांक्षादिमहिम्ना बोधयति। अस्माकं सर्वदा परोक्षोऽपि धर्मादिः मन्वादिभिः यथावेदशास्त्रमेव साक्षात्क्रियते, अत एव वेदानुसारितया तदीयस्मृतिरपि प्रमाणभूतेति भावः। अशिष्टश्चासोऽप्रतिषिद्धश्चेति व्युत्पत्तौ कर्मधारयसमासेन निष्पन्नमाह-**अशिष्टाप्रतिषिद्धमिति**। अविहितानिषिद्धमित्यर्थः। **नाभ्युदयाय**-नाप्यभ्युदयाय। एवमग्रेऽपि। अविहितानिषिद्धव्यवहारे पुण्यपापे नेति समुपपादयितुं दृष्टान्तमाह-**तद्यथेति**।

उद्द्योते—ननु "तेऽसुरा हेलयो हेलय"इत्यादिना अपशब्दज्ञानेऽपि अधर्मस्योक्तत्वात् कथमुच्यते शब्दो नापशब्दज्ञाने अधर्ममाहेति इत्यत आह-**हेलयो हेलय इति**। **ज्ञाने**-अपशब्दज्ञाने। तथा च "न म्लेच्छितवै" इत्यादिः अपशब्दप्रयोगस्यैव निषेधं बोधयति न न त्वपशब्दज्ञानस्येति फलितार्थः। ननु व्याकरणशास्त्राध्ययने प्रवृत्तानां पचतीत्यादिशब्दज्ञानाय डुपचष्प्रभृत्यपशब्दानां प्रयोगोऽप्यावश्यक इति चेन्न, व्याकरणाध्येतॄणां पचतीत्यादिज्ञानाय डुपचषित्यादिज्ञानस्यैवापेक्षितत्वात्। नापि तेषां पचतीत्यादिव्युत्पादनाय डुपचषित्यादिप्रयोगस्यावश्यकत्वेऽपि काचन क्षतिः, डुपचषित्यादीनां शब्दस्वरूपपरत्वेन अनुकरणतया साधुत्वस्योपपत्तेः। अन्यथा हेलयो हेलय इत्यादिश्रुतिपाठोऽपि प्रत्यवायं जनयेदिति भावः॥ **तत्र-एकः शब्दः** इत्यादिश्रुतौ। तथा च एकः शब्द इत्यादिशब्देनैव शब्दज्ञानप्रयोगयोः धर्मद्वारा अभ्युदयसाधकतायाः बोधनात् "शब्दश्च शब्दज्ञाने धर्ममाहे"ति कथनं न युक्तमिति भावः। **सम्यगिति**-शब्दस्येत्यादिः। **धर्मेति**-स्वर्गादिजनकेत्यादिः। **ज्ञानमिति**-तस्येत्यादिः। **तद्धेतुः**-स्वर्गादिसम्पादकधर्महेतुः। **प्रयोगः**-शब्दप्रयोगः। **तस्य**-शब्दज्ञानस्य।

( समाधानान्तरभाष्यम् )

**अथ वाभ्युपाय एवापशब्दज्ञानं शब्दज्ञाने। यो ह्यपशब्दाञ्जानाति शब्दानप्यसौ जानाति। तदेवं 'ज्ञाने धर्मः' इति ब्रुवतोऽर्थादापन्नं भवति—'अपशब्दज्ञानपूर्वके शब्दज्ञाने धर्मः' इति॥**

**( प्रदीपः ) अथवेति ।** अपशब्दज्ञाननान्तरीयकत्वाच्छब्दज्ञानस्य पृथक् फलमपशब्दज्ञानस्य नास्तीत्यर्थः ॥

**( उद्द्योतः )** भाष्ये **अभ्युपाय एवेति ।** अपशब्दज्ञाननान्तरीयकं शब्दज्ञानमिति शब्दज्ञानेन फले जननीये सहकारित्वैवापशब्दज्ञानस्य न पृथक्फलतेति भावः ॥ **अपशब्दज्ञानम्** अपशब्दत्वेन तज्ज्ञानम् ॥ एवं शब्दज्ञाने इत्यपि ॥ अपशब्दत्वेन तज्ज्ञाने हि तद्भिन्नत्वेन शब्दज्ञानं भवति ॥ **यो ह्येति** भाष्यस्य य एव अपशब्दान् जानाति असावेव शब्दान् जानातीति तज्ज्ञानसमानाधिकरणशब्दज्ञानादेव धर्म इति न ततो विपरीतफलकल्पना युक्तेति भावः ॥ तदाह—**अपशब्दज्ञाननान्तरीयकत्वादिति ।** बहुव्रीहिः । न हि वह्न्यानयननान्तरीयकं ततः पात्रानयनं पृथक्फलं भवति ॥

**( तत्त्वालोकः )** भाष्ये—अथामिक्षाया वैश्वदेव्यामिक्षेतिवचनेन वैश्वदेवयागे विनियोगस्येव आमिक्षानान्तरीयकतयोत्पन्नवाजिनस्यापि वाजिभ्यो वाजिनमितिवचनेन वाजियागे विनियोगस्य दर्शनात् प्रकृतेऽपि शब्दज्ञानस्य एकः शब्द इति वचनेन कामधुक्त्वे विनियोगस्येव शब्दज्ञाननान्तरीयकतयोत्पन्नापशब्दज्ञानस्यापि क्वचित् साक्षाद्विनियोगाय साक्षाद्विनियोजकप्रमाणाभावेऽपि तस्य कल्पना क्रियेतेत्यत आह—**अथवेति । अभ्युपायः**–सहकारिकारणम् । **हि**–एव । **अप्यसौ**–असावेव । उपसंहरति–**तदेवमिति । आपन्नं**–प्राप्तम् । किं प्राप्तमित्यत आह–**अपशब्देति ।**

प्रदीपे—**अपशब्देति**–अपशब्दज्ञानं नान्तरीयकं यस्येति व्युत्पत्तिः । तथा च शब्दज्ञानस्य अपशब्दज्ञाननान्तरीयकत्वात् अपशब्दज्ञानस्य ( शब्दज्ञानस्य फलात् ) पृथक् फलं नास्तीत्यन्वयः ।

उद्द्योते—यद्यपि शब्दापशब्दज्ञानयोरेकशास्त्राध्ययनजनितता, तथापि शब्दज्ञानस्य एकः शब्द इति श्रुत्या फले विनियोगे सति अपशब्दज्ञानस्यापि क्वचित् फले साक्षाद्विनियोगाय साक्षाद्विनियोजकप्रमाणकल्पनापेक्षया तस्य परम्परया शब्दज्ञानफले विनियोगाय फलवच्छब्दज्ञानाङ्गत्वविनियोजकप्रमाणकल्पनैव युक्ता फलवत्सन्निधाविति न्यायात् । आमिक्षावाजिनयोस्तु तत्र तत्र विनियोजकं शास्त्रमस्तीति ततो वैषम्यमनेत्याशयेनाह–**अपशब्देति ।** अपशब्दज्ञानं नान्तरीयकं यस्येति व्युत्पत्तिः । **इति**–इति हेतोः । **ज्ञानस्येति**–किन्त्विति शेषः । **पृथक्फलता**–शब्दज्ञानफलपृथक्फलता । यथाकथञ्चिज्ज्ञातस्य गाव्याद्यपशब्दज्ञानस्य शब्दज्ञानानभ्युपायत्वादाह—**अपशब्दत्वेनेति । तज्ज्ञानम्**–अपशब्दज्ञानम् । उक्तकारणादेवाह–**एवमिति ।** तदुपपादयति–**अपशब्दत्वेनेति । तज्ज्ञाने**–अपशब्दज्ञाने । सतीति शेषः । **हि**–यतः । **तद्भिन्नत्वेन**–अपशब्दभिन्नत्वेन । नन्वेवं भाष्यविरोध इत्यत आह–**यो ह्येति भाष्यस्येति ।** यो ह्येत्यादिभाष्यस्येत्यर्थः । भाव इत्यत्रान्वयः । हेरपेक्षैवार्थकतामभिप्रेत्याह–**य एवेति । इति**—इति स्थितौ । **तज्ज्ञानेति**–अपशब्दज्ञानेत्यर्थः । **इति**–इति हेतोः । **ततः**–शब्दज्ञानफलात् । अपशब्दज्ञानस्येत्यादिः । **तदाह**–शब्दापशब्दज्ञानयोः समानफलकत्वमाह । उदाहरति–**नहीति । वह्न्यानयनेति**–वह्न्यानयनस्य नान्तरीयकमिति व्युत्पत्तिः । **ततः**—यतः वह्न्यानयनं ततः । **पृथक्फलं**–वह्न्यानयनफलात् पृथक्फलकं । तदुभयं समानफलकमेवेति भावः ।

## ( समाधानान्तरभाष्यम् )

**अथ वा कूपखानकवदेतद्भविष्यति । तद्यथा कूपखानकः कूपं खनन्यद्यपि मृदा पांसुभिश्चावकीर्णो भवति । सोऽप्सु संजातासु तत एव तं गुणमासादयति । येन च स दोषो निर्हण्यते; भूयसा चाभ्युदयेन योगो भवति ॥ एवमिहापि यद्यप्यपशब्दज्ञानेऽधर्मस्तथापि यस्त्वसौ शब्दज्ञाने धर्मस्तेन च स दोषो निर्घानिष्यते भूयसा चाभ्युदयेन योगो भविष्यति ॥**

**( प्रदीपः ) दोष इति ।** उत्कृष्टधर्मफलावाप्तौ स्वल्पमधर्मफलमुत्पन्नमप्यनुत्पन्नकल्पं भवतीत्यर्थः ॥

**( उद्द्योतः ) तुष्यतु दुर्जन** इति न्यायेनापशब्दज्ञानस्य विपरीतत्वमात्रेणाधर्मसाधनत्वमभ्युपगम्यापि भाष्ये समाध्यन्तरमाह—**अथ वा कूपेति । मृद्** आर्द्रा । **पांसुः** शुष्का । यत्कर्मनान्तरीयककर्मजन्यो यो विपरीतत्वमात्रेण कल्प्योऽवैधो दोषः स तत्कर्मजन्यफलनाश्यो यथा कूपखनननान्तरीयकशरीरव्यापारजन्यो मृल्लेपस्तत्फलजलनाश्य इति सामान्यतो दृष्टानुमानात्तन्नाशानुमानमिति बोध्यम् ॥ **उत्कृष्टधर्मेति** । धर्मस्य विधिबोध्यत्वादुत्कृष्टत्वम् । अधर्मस्य तु वचनाबोध्यत्वेन विपरीतत्वमात्रेण कल्प्यस्याल्पत्वेन तत्फलधर्मनाश्यत्वम् ॥ यागीयहिंसाया **न हिंस्यादि**तिवचनेन दुष्टताबोधनाद्दुष्टत्वमेवेत्यन्यत्र विस्तरः ॥

**( तत्त्वालोकः )** भाष्ये—**कूपखानकवदिति**–अत्र कूपं खनतीति विग्रहे कर्मण्यणि प्रसक्ते वासरूपन्यायेन ण्वुल् । अनित्यसमासत्वात् कूपस्य खानक इति स्वपदविग्रहः । ननु "शिल्पिनि ष्वुन्" इति सूत्रेण ण्वुल् बाध्येतेति चेन्न, अत्र खननकर्तृत्वमात्रस्य विवक्षया शिल्पित्वस्याविवक्षणात् । कूपखानकेन तुल्यमिति तृतीयासमर्थाद्वति । **एतत्**–अपशब्दज्ञानम् । दृष्टान्तं कूपखानकन्यायमुपपादयति—**तद्यथेति । अवकीर्णः**–लिप्तः । **सः**–कूपखानकः । तथापीत्यादिः । **तत एव**—अद्भ्य एव । **तं गुणम्**–अत्यन्तं स्नानादिरूपेष्टसाधनम् । कर्मणि लकारेण कर्तुस्तृतीयामभिप्रेत्याह–**येनेति ।** स्नानादिनेत्यर्थः । कूपखानकस्येति शेषः । **सः**–कर्दमधूलिलेपरूपः । **निर्हण्यते**–निराक्रियते । **योग इति**–तस्येत्यादिः । दार्ष्टान्तिकम् अपशब्दज्ञानमुपपादयति—**एवमिति । इहापि**–शब्दज्ञानस्थलेऽपि । **यद्यपीति**–व्याकरणाध्येतुरितिशेषः । **तथापीति**–तस्येति शेषः । कर्मणि लकारेण कर्तरि तृतीयामभिप्रेत्याह–**तेनेति ।** शब्दज्ञानजनितधर्मेणेत्यर्थः । **सः**–अपशब्दज्ञानजनितः । तस्येत्यादिः । **निर्घानिष्यते**–निराकरिष्यते । **अभ्युदयेनेति**–तस्येति शेषः ।

प्रदीपे—**उत्कृष्टेति**–यथा भोजनेन उत्कृष्टतृप्त्यवाप्तौ पाकेन स्वल्पं दुःखमुत्पन्नमपि अनुत्पन्नकल्पं भवति तथा शब्दज्ञानेनेत्यादिः । **स्वल्पमिति**–अपशब्दज्ञानेनेत्यादिः ।

उद्द्योते—**अपशब्दज्ञानेति**–शब्दज्ञाननान्तरीयकेत्यादिः । **विपरीतेति**–शब्दज्ञानेत्यादिः । **अधर्मेति**—शब्दज्ञानसाध्यधर्मविपरीतेत्यादिः । **समाध्यन्तरं**–समाधानविशेषम् । मृत्पदेन कर्दममभिप्रेत्याह–**आर्द्रेति ।** मृदिति शेषः । पांसुपदेन धूलिमभिप्रेत्याह–**शुष्केति ।** मृदिति शेषः । ननु शब्दज्ञाननान्तरीयकापशब्दज्ञानजनिताधर्मस्य शब्दज्ञानजनितधर्मनाश्यता केन प्रमाणेन ज्ञायते इत्यत आह–**यत्कर्मेति । विपरीतत्वमात्रेण कल्प्यः**–यद्यत्कर्म स्वनान्तरीयककर्मविपरीतं तत्तत्कर्म स्वनान्तरीयककर्मजनितफलविपरीतफलजनक यथा कूपखनननान्तरीयकशरीरव्यापार इति व्याप्तिज्ञानजनितानुमित्योपपाद्यः । **अवैधः**–निषेधवचनाबोधितः । उपलक्षणतयाह—**दोष इति । तत्फलेति**—कूपखननफलेत्यर्थः । **तन्नाशानुमानम्**–शब्दज्ञाननान्तरीयकापशब्दज्ञानजन्याधर्मः शब्दज्ञानजन्यधर्मनाश्यः शब्दज्ञाननान्तरीयकापशब्दज्ञानजन्यत्वादित्यनुमितिः । ननु पूर्वमधर्मभूयस्त्वस्योक्ततया सम्प्रति तदल्पत्वोक्ति-

रयुक्तेन्यत आह-**धर्मस्येति । विधीति**-वाक्येति शेषः । **वचनेति**—निषेधेत्यादिः । **तत्फलेति**-शब्दज्ञानफलेत्यर्थः । नन्वेवं यागनान्तरीयकहिंसाजन्याधर्मस्यापि यागजनितधर्मनाश्यतोपपद्येतेत्यत आह—**यागीयेति । अन्यत्र**-शास्त्रदीपिकादौ ।

( द्वितीयदूषणनिरासभाष्यम् )

यदप्युच्यते—॥आचारे नियमः॥ इति ॥

याज्ञे कर्मणि स नियमोऽन्यत्रानियमः । एवं हि श्रूयते—'यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः प्रत्यक्षधर्माणः परापरज्ञाः विदितवेदितव्या अधिगतयाथातथ्याः ।' ते तत्रभवन्तो यद्वा नस्तद्वा न इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे पुनः कर्मणि नापभाषन्ते ॥ तैः पुनरसुरैर्याज्ञे कर्मण्यपभाषितम्, ततस्ते पराभूताः ॥

**( प्रदीपः ) प्रत्यक्षधर्माण इति ।** योगजप्रत्यक्षेण सर्वं विदितवन्तः ॥ **परापरज्ञा इति ।** विद्याविद्याविभागज्ञाः ॥

**( उद्द्योतः )** भाष्येऽ**न्यत्रानियम इति ।** यज्ञे सुशब्दप्रयोगाद्धर्मोऽपशब्दप्रयोगादधर्म इति तत्रैव तयोः प्रयोगनियमः । तदतिरिक्तस्थले तु सुशब्दापशब्दयोः प्रयोगेऽनियमः । योऽपि यज्ञे दोषः सोऽपि तदङ्गभूतसंकल्पोहादिविषये एव । श्रुतौ **हेलयो हेलयो नश्यध्वमित्यूह** एव ॥ **विदितवेदितव्या** इत्यनेन श्रवणमनननिदिध्यासनसंपदुक्ता ॥ **अधिगतयाथातथ्या** इत्यनेन साक्षात्कार उक्तः । याथातथ्ये स्वार्थे ष्यञ् । वेदितव्यस्य यद्यथातथास्वरूपं सत्यं स्वरूपं शुद्धचिदानन्दरूपं तदधिगतं प्रत्यक्षेण प्राप्तं यैरित्यर्थः ॥ **याज्ञे पुनरिति ।** अनेन तत्त्वज्ञानिनामपि कर्माधिकारं सूचयति ॥ **प्रयुञ्जत** इति वर्तमानसमीपे भूते लट् । एवं **नापभाषन्त** इत्यपि । अत एव **तन्नामानो** बभूवुरित्यर्थः ॥

**( तत्त्वालोकः ) भाष्ये—शब्द**ज्ञाने धर्म इति पक्षे उक्तं द्वितीयदूषणं निराकर्तुं स्मारयति-**यदपीति ।** भवता वार्तिककृतेति शेषः । परिहरति-**याज्ञे इति ।** तत्र मयोच्यते इत्यादिः । **सः**-शब्दप्रयोगविषयकः । **नियम इति**-न म्लेच्छितवै इत्यस्य यज्ञप्रकरणे पाठादिति शेषः । **अन्यत्र**-यज्ञातिरिक्तस्थले । अपशब्दप्रयोगनिषेधकवाक्याभावादिति शेषः । **अनियम इति**-शब्दापशब्दप्रयोगयोरित्यादिः । यज्ञे नियमोऽन्यत्रानियम इति व्यवहारेणोपपादयितुमाह—**एवं हीति । श्रूयते**-श्रुतिः । श्रुतेः स्वरूपमाह-**यर्वाण इति । याथातथ्या इति**-इतीति शेषः । **ते**-तादृशा ऋषयः । **तत्रभवन्तः**-पूज्याः । यतः यज्ञातिरिक्तस्थले यद्वा यद्वस्तु तद्वा तद्वस्तु वर्ततां नोऽस्माकं किमित्यर्थविवक्षयेति शेषः । **प्रयुञ्जते**-प्रयुक्तवन्तः । अतस्ते यर्वाणस्तर्वाणनामका अपि सम्पन्ना इति शेषः । **याज्ञे इति**-ते एवेत्यादिः । **नापभाषन्ते**-न यर्वाणस्तर्वाण इति भाषन्ते । किन्तु यद्वानस्तद्वान इत्येव प्रयुञ्जते इति शेषः । **तैः**-हेलयो हेलय इति वादिभिः । यत इत्यादिः । **अपभाषितम्-हे** अरयो हे अरय इति वक्तव्ये हेलयो हेलय इति भाषितम् । **ते**-हेलयो हेलय इति वादिनोऽसुराः । **पराभूताः**-पराभवमापुः ।

प्रदीपे—**योगजप्रत्यक्षेण**-अलौकिकेन श्रुत्यादिप्रतिपाद्ययोगाभ्यासजनितधर्मविशेषरूपयोगजसन्निकर्षेण । **विदितवन्तः**-साक्षात्कृतवन्तः । परा वेदबोध्यब्रह्मविद्या विद्या, अपरा व्याकरणादिबोध्यलौकिविद्या अविद्येत्याशयेनाह-**विद्याविद्येति ।**

उद्द्योते—यतः एकः शब्द इत्यादिविधेः शब्दमात्रसंयोगात् पुरुषार्थतैव न क्रत्वर्थता, तथा "न म्लेच्छितवै" "आहिताग्निरपशब्दं प्रयुज्य प्रायश्चित्तीयान्" इत्यादिनिषेधप्रायश्चित्तविध्योः ज्योतिष्टोमप्रकरणपठितत्वात् क्रत्वर्थतैव न पुरुषार्थता, अतः शब्दज्ञाने धर्म इति पक्षे न विरोध इत्याशयेनाह-**यज्ञे इति । धर्म इति**-तथेति शेषः । **इति**-इति हेतोः । **तत्रैव**-यज्ञे एव । **तयोः**-शब्दापशब्दयोः । **तदिति**-यज्ञेत्यर्थः । एवमग्रेऽपि । **श्रुताविति**-यदुक्तमिति शेषः । **ऊह इति**-सोऽसुराणामित्यादिः । **श्रवणेति**-आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति श्रुतिसूचितेत्यादिः । **साक्षादिति**-आत्मेत्यादिः । यथा तथैव याथातथ्यमित्याशयेनाह-**याथातथ्ये इति । वेदितव्यस्येति**-आत्मन इति शेषः । **प्राप्तं**-प्राप्तेऽपि अप्राप्तताज्ञानं निराकृतम् । जपाकुसुमसन्निहितस्फटिकस्थले आरुण्यभ्रमाधिष्ठानस्फटिकतत्त्वे साक्षात्कृतेऽपि स्फटिकाधिष्ठानकारुण्यभ्रमस्य सोपाधिकतया अनुवृत्तिरिव, अन्तःकरणसन्निहितात्मस्थलेऽपि जगद्भ्रमाधिष्ठानात्मतत्त्वे साक्षात्कृतेऽपि आत्माधिष्ठानकजगद्भ्रमस्य सोपाधिकतया अनुवृत्तिरुपपद्यते । तथा च तत्त्वज्ञानिनामपि कर्मणि सत्यताभ्रमेण श्रद्धोदीयादित्याशयेनाह-**कर्माधिकारमिति ।** केचित्तु तत्त्वज्ञानिनां जगद्भ्रमानुवृत्तावपि जगति मिथ्यात्वनिश्चयसत्त्वेन कर्मणि सत्यताभ्रमो नोदीयादिति न तेषां कर्माधिकार इति वदन्ति । **एवं**-वर्तमान समीपे भूते लटि । **अत एवेति**-यत एव यर्वाणस्तर्वाण इति प्रयुक्तवन्त इत्यादिः । **तन्नामानः**-यर्वाणस्तर्वाणनामकाः ।

इति शब्दज्ञानस्य धर्मजनकतानिर्णयप्रकरणम् ।

---

( अथ व्याकरणपदार्थनिरूपण आक्षेपभाष्यम् )

अथ व्याकरणमित्यस्य शब्दस्य कः पदार्थः ॥

**( प्रदीपः ) अथेति ।** उक्तमिदं **न चान्तरेण व्याकरण**मित्यादि । तत्र पक्षद्वयेऽपि दोषदर्शनात् पदार्थप्रश्नः ॥

**( उद्द्योतः )** व्याकरणपदार्थविचारस्य सङ्गतिं दर्शयितुमाह—**उक्तमिदमिति ।** आदिना **तस्मादध्येयं व्याकरण**मित्यादि पुनः पुनरुक्तिर्गृह्यते ॥

**( तत्त्वालोकः )** भाष्ये—**पदार्थः**-अर्थः । अत्रार्थशब्दो वाच्यपर एव न तु प्रयोजनपर इति सूचनायैव पदरहितमर्थ इत्यपहाय पदसहितमर्थं इत्याहेति भावः ।

प्रदीपे—**उक्तमिति**-भाष्यकृतेत्यादिः । इदमित्यनेन निर्देश्यमाह-**न चेति । तत्र**-व्याकरणपदार्थे । **पक्षद्वये**-सूत्रशब्दोभयपक्षे ।

( समाधानभाष्यम् )

सूत्रम् ॥

( ११ सूत्रपक्षे आक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः ॥*॥

( भाष्यम् )

सूत्रे व्याकरणे षष्ठ्यर्थो नोपपद्यते—'व्याकरणस्य सूत्रम्' इति ॥ किं हि तदन्यत्सूत्राद् व्याकरणम्, यस्यादः सूत्रं स्यात् ॥

**( प्रदीपः ) षष्ठ्यर्थ इति ।** द्वाभ्यामपि शब्दाभ्यामष्टाध्याय्याः प्रतिपादनाद्व्यतिरेकाभावः । सामान्यविशेषशब्दतया तु **द्वयोः** सह-

प्रयोगो न विरुध्यते, यदा त्वष्टाध्याय्येकदेशः सूत्रशब्देनोच्यते, तदा षष्ठ्यर्थोऽप्युपपद्यते ॥

**( उद्द्योतः )** ननु सूत्रसमुदायस्य व्याकरणस्येदं सूत्रमित्युपपद्यतेऽत आह—**द्वाभ्यामिति ।** सूत्रपदेनाप्यष्टाध्याय्येव यदोच्यते तदापीष्यतेऽयं प्रयोगः, स न सिध्येदित्यर्थः ॥ किमुच्यते—**षष्ठ्यर्थोऽनुपपन्न** इति, पर्यायतया सहप्रयोगोऽपि न स्यादत आह—**सामान्यविशेषेति ।** सूत्रं सामान्यं व्याकरणं विशेषः । सूत्रशब्देनाष्टाध्याय्येव, तदेकदेशे तु योगव्यवहार एव **योगे योगे उपतिष्ठत** इत्यादौ ॥ **यदा त्विति । सूत्राणि चाप्यधीयान** इति भाष्ये वक्ष्यमाणत्वादिति भावः । वस्तुत एकदेशस्य सूत्रत्वेऽपि तस्यापि साक्षात्परम्परया वा व्याकरणत्वात्षष्ठ्यर्थानुपपत्तिरेवेति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**सूत्रमिति**—व्याकरणपदार्थ इति शेषः।

वार्त्तिककारः सूत्रस्य व्याकरणपदार्थत्वे प्रथमं दूषणमाह–**सूत्रे इति । व्याकरणे**–व्याकरणपदार्थे । सतीति शेषः । **षष्ठ्यर्थः**–स्वस्वामिभावरूपः । क्वेत्यत आह–**व्याकरणस्येति । इति**–इत्यत्र । नन्वत्र पक्षे तत्र षष्ठ्यर्थः कथं नोपपद्यते इत्यत आह—**किमिति ।** ( अस्मिन् कल्पे ) **हि**–यतः सूत्रादन्यत् किन्तत् **व्याकरणं**–व्याकरणपदार्थः ( स्यात् ) इत्यन्वयः । **सूत्रमिति**–इत्यभिप्रायेण प्रयुक्ततया व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थ इति शेषः । **स्यात्**–उपपद्येत । अर्थात् अत्र पक्षे तत्र षष्ठ्यर्थोपपादकं सूत्रभिन्नं किञ्चिदपि व्याकरणपदार्थो नास्तीति भावः ।

प्रदीपे – **शब्दाभ्यामिति**–सूत्रव्याकरणाभ्यामित्यादिः । **अष्टाध्याय्याः**–पाणिनिप्रणीतसूत्रसमुदायरूपायाः । **व्यतिरेकाभावः**—अभेदः । प्रतिपाद्याभेदेन प्रतिपादकाभेदात्तयोरित्यादिः । तथा च तत्र षष्ठ्यर्थोऽनुपपन्न एवेति भावः । **सामान्येति**—सूत्रव्याकरणशब्दयोरित्यादिः । **द्वयोः**—सूत्रव्याकरणशब्दयोः । ननु भवन्मते तत्र षष्ठ्यर्थः कथमुपपद्यते इत्यत आह—**यदेति । उच्यते इति**—अष्टाध्यायी च व्याकरणशब्देनोच्यते, समुदाय एकदेशभिन्न इति च स्वीक्रियते इति शेषः । **तदेति**—तत्रेति शेषः ।

उद्द्योते—**इतीति**—विवक्षणेन प्रयुक्ततया तत्र षष्ठ्यर्थ इति शेषः । **अपीति**—अस्य यदेत्यनेनान्वयः । **उच्यते इति**—व्याकरणपदेन च शब्द एव, लक्ष्यलक्षणसमुदाय एव वोच्यते इति शेषः । **अयं**—व्याकरणस्य सूत्रमित्ययम् । **स इति**—सूत्रव्याकरणशब्दयोरेकार्थवाचकत्वे इत्यादिः । **षष्ठ्यर्थ इति**—तत्रेत्यादिः । **पर्यायतया**—एकार्थप्रतिपादकतया । सूत्रव्याकरणशब्दयोरित्यादिः । **अपिना**—षष्ठ्यर्थसंग्रहः । **सूत्रं**—सूत्रशब्दः । **व्याकरणं**—व्याकरणशब्दः । कुत इत्यत आह–सूत्रशब्देनेति । यत इत्यादिः । **अष्टाध्याय्येव**—सामान्याष्टाध्याय्येव । व्याकरणशब्देन च विशेषाष्टाध्याय्येवोच्यते अत इति शेषः । नन्वेवमष्टाध्याय्येकदेशे कस्य शब्दस्य प्रयोग इत्यत आह–**तदेकदेशे इति ।** अष्टाध्याय्येकदेशे इत्यर्थः । **योगव्यवहारः**—योगशब्दप्रयोगः । कुत इत्यत आह—**योगे इति । इत्यादाविति**—तथा दर्शनादिति शेषः । **वक्ष्यमाणत्वादिति**—सूत्रशब्देन अष्टाध्याय्येकदेशस्येत्यादिः । **एकदेशस्येति**—अष्टाध्याय्या इत्यादिः । **तस्यापि**—अष्टाध्याय्येकदेशस्यापि । **व्याकरणत्वात्**—व्याकरणपदार्थत्वात् । तत्रेति शेषः ।

## ( १२ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ शब्दाप्रतिपत्तिः ॥ * ॥

### ( भाष्यम् )

**शब्दानां चाप्रतिपत्तिः प्राप्नोति—'व्याकरणाच्छब्दान्प्रतिपद्यामहे' इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥**

**किं तर्हि ? ॥**

**व्याख्यानतश्च ॥**

**( प्रदीपः ) शब्दाप्रतिपत्तिरिति ।** न हि व्याख्यानरहितसूत्रमात्रश्रवणाच्छब्दाः प्रतीयन्ते ॥

**( उद्द्योतः )** समुदायस्यातिरिक्तत्वेऽपि दोषमाह—भाष्ये '**शब्दाप्रतिपत्तिरिति ।** व्याकरणाच्छब्दान्प्रतिपद्यामह इति शब्दविषयव्यवहारासिद्धिः प्राप्नोतीत्यर्थः । यतः केवलसूत्रेभ्यः शब्दप्रतिपत्तिर्न दृश्यते, व्याकरणस्य शब्दप्रतिपत्तिहेतुत्वं च लोकसिद्धम् । व्याकरणाच्छब्दान्प्रतिपद्यामह इति व्यवहारात् । सेयं प्रतिपत्तिसाधनता सूत्राद्व्यावर्तमाना तद्व्याप्यां व्याकरणशब्दवाच्यतां व्यावर्तयतीति भावस्तदाह—**न हीति ॥**

**( तत्त्वालोकः )** भाष्ये—वार्त्तिककारः सूत्रस्य व्याकरणपदार्थत्वे द्वितीयं दूषणमाह – **शब्देति ।** अत्र पक्षे इत्यादिः । **अप्रतिपत्तिः**—व्याकरणप्रयोज्यप्रतिपत्तिविषयकव्यवहारानुपपत्तिः । तादृशव्यवहारस्वरूपमाह— **व्याकरणादिति ।** कुत इत्यत आह – **नेति । हि**—यतः । **प्रतिपद्यन्ते इति**–अत इति शेषः । पृच्छति—**किमिति ।** तर्हि कुतः शब्दान् प्रतिपद्यन्ते इत्यर्थः । उत्तरयति– **व्याख्यानतश्चेति ।** व्याख्यानसहितात् चकारसमुच्चितात् सूत्रात् व्याकरणपदवाच्यात् शब्दान् प्रतिपद्यन्ते इत्यर्थः ।

प्रदीपे—नन्वत्र पक्षे तादृशव्यवहारः कथं नोपपद्यते इत्यत आह–**नेति । हि**—यतः । **प्रतीयन्ते इति**—अत इति शेषः ।

उद्द्योते—**समुदायस्येति**—अष्टाध्यायीतदेकदेशयोः व्याकरणसूत्रशब्दाभ्यां वाच्यत्वेऽभ्युपगते इत्यादिः । **अतिरिक्तत्वेऽपीति**–एकदेशत इत्यादिः । स्वीकृते तत्र षष्ठ्यर्थोपपत्तेः सम्भवात् वार्त्तिककृदत्रपक्षे द्वितीयमिति शेषः । **इतीति**—अस्य व्यवहारेऽन्वयः । **शब्दविषयेति**–व्याकरणप्रयोज्यशब्दप्रतिपत्तिविषयकेत्यर्थः । कुत इत्यत आह–**यत इति ।** ननु व्याकरणस्य शब्दप्रतिपत्तिप्रयोजकता कथं सिद्धेत्यत आह—**व्याकरणस्येति । हेतुत्वं**—प्रयोजकत्वम् । ननु कथन्तस्य तत् लोकसिद्धमित्यत आह—व्याकरणादिति । **व्यवहारात्** – लोकव्यवहारात् । तस्य तत् लोकसिद्धमिति शेषः । फलितमाह– **सेयमिति । प्रतिपत्तीति**—शब्देत्यादिः । **तद्व्याप्यां**—शब्दप्रतिपत्तिसाधनताव्याप्याम् । व्यापकाभावे व्याप्याभाव इति नियमात् सूत्रे इत्यादिः । **तदाह**—तदाशयेनाह ।

### ( आक्षेपसाधकभाष्यम् )

**ननु च तदेव सूत्रं विगृहीतं व्याख्यानं भवति ॥**

**( तत्त्वालोकः )** भाष्ये—आक्षिपति—**नन्विति । च**–अपि । अस्य व्याख्यानमित्यनन्तरमन्वयः । **तदेव**—व्याकरणपदवाच्यतया विवक्षितमेव । **विगृहीतं**—विभक्तम् । **भवतीति**—तथा च सूत्रव्याख्यानयोरभेदेऽपि भेदविवक्षया व्याख्यानसाहित्यं भजत्सूत्रमेव शब्दप्रतिपत्तिं जनयेदिति स लोकव्यवहारः उपपद्येतैवेति भावः ।

### ( आक्षेपबाधकभाष्यम् )

**न केवलानि चर्चापदानि व्याख्यानम्–'वृद्धिः, आत्' ऐज्' इति ॥**

**किं तर्हि ? ॥**

उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति ॥

**( प्रदीपः ) समुदितमिति ।** समुदायादेवार्थावसायोत्पादादित्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**चर्चापदानि ।** चर्च्यमानानि विभज्यमानानीत्यर्थः ॥ **वाक्याध्याहार इति ।** वाक्यघटक दानीं सूत्रान्तरे श्रुतानां स्वरितत्वप्रतिज्ञयाध्याहारः कल्पनमित्यर्थः । यद्वा वाक्याध्याहार इत्यनेन वार्तिकव्याख्यानां सूत्रतात्पर्यविषयता वाक्यैकदेशन्यायेन सूचिता ॥

**( तत्त्वालोकः )** भाष्ये –परिहरति—**नेति ।** वृद्धिरादैजित्यस्य माङ्गलिकवृद्धिपदघटितत्वात् अष्टाध्याय्यादिमसूत्रतया तत्रैव विभज्यमानपदस्वरूपमाह—**वृद्धिरिति ।** पृच्छति-**किमिति**-व्याख्यानमिति शेषः । उत्तरयति-**उदाहरणमिति ।**

प्रदीपे—ननु कुतः तत्समुदितमेव व्याख्यानपदवाच्यमित्यत आह-**समुदायादिति ।** उदाहरणादीनामित्यादिः । **अवसायेति**—निश्चयेत्यर्थः ।

उद्द्योते-**विभज्यमानानीति**-पदानीति शेषः । **वाक्येति**-वृत्तीत्यर्थः । **कल्पनमिति**-वृत्तावित्यादिः । यथाश्रुतार्थानुरोधेनाह-**यद्वेति । न्यायेन**-वाक्ये वाक्यैकदेश इति न्यायेन । यथा "अनान्नवतिनगरीणामुपसंख्यानमि"ति वार्त्तिकस्य "न पदान्ताट्टोरनामि"ति सूत्रस्थनिर्विभक्तिकानाम्पदेन शेषपूर्त्तित्वसूचनमिति भावः ।

### ( पक्षान्तरभाष्यम् )

एवं तर्हि शब्दः ।

**( उद्द्योतः ) शब्द इति ।** लक्ष्यमित्यर्थः । अत्र पक्षे षष्ठ्यर्थ उपपद्यते । शब्दाप्रतिपत्तिहेतुता तु तदवस्था ॥

**( तत्त्वालोकः )** भाष्ये-एकदेशी यक्षानुरूपो बलिरिति न्यायेन व्याकरणमित्यत्र व्याक्रियते इतीति कर्मव्युत्पत्तौ ल्युडित्यभिप्रयन्नाह-**एवमिति ।** यदि सूत्रस्य व्याकरणपदार्थत्वे दोष इत्यर्थः ।**शब्द इति**-एव व्याकरणपदार्थोऽस्त्विति शेषः ।

उद्द्योते-**लक्ष्यमिति**-अष्टाध्याय्या व्युत्पाद्यमित्यादिः । तथा च शब्दान्तरेण व्याकरण-पदवाच्यताप्रसक्तिः । सूत्रन्त्वत्र पक्षे शब्दव्युत्पादकत्वेनोपचाराद् व्याकरणमित्युच्यते इति भावः ॥ सूत्रस्य व्याकरणपदार्थत्वे आपादितं दोषद्वयं शब्दस्य तत्त्वे नापद्यते इति भ्रमनिराकरणायाह-**अत्रेति । षष्ठ्यर्थ इति**-यद्यपि तत्रेत्यादिः । **शब्देति**-तादृशव्यवहारानुपपत्तिहेतुतेत्यर्थः । तथापीत्यादिः । **तदिति-शब्देन** शब्दप्रतिपत्तेरसंभवादित्यादिः ।

### ( १३ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ शब्दे ल्युडर्थः ॥ * ॥

### ( भाष्यम् )

**यदि शब्दो व्याकरणं ल्युडर्थो नोपपद्यते—व्याक्रियन्ते शब्दा अनेनेति व्याकरणम् । नहि शब्देन किंचिद् व्याक्रियते ॥**

**केन तर्हि ? ॥**

**सूत्रेण ॥**

**( प्रदीपः ) शब्द इति ।** करणे ल्युड् विधीयते । शब्दश्च व्याक्रियमाणत्वात्कर्म न तु करणमिति भावः ॥

**( उद्द्योतः )** ननु राजभोजना इतिवत्कर्मणि ल्युटि न दोषोऽत आह—**करणे इति ।** कर्मणि स तु काचित्क इति भावः ॥

**( तत्त्वालोकः )** भाष्ये-वार्त्तिककारोऽत्र पक्षे प्रथमं दूषणमाह-**शब्दे इति । व्याकरणं**-व्याकरणपदार्थः । तर्हीति शेषः । **ल्युडर्थः**-करणत्वम् । क्वेत्यत आह-**व्याक्रियन्ते इति । व्याकरणमिति**-इत्यत्रेति शेषः । नन्वत्र पक्षे तत्र ल्युडर्थः कुतो नोपपद्यते इत्यत आह-**नेति । हि**-यतः । **व्याक्रियते इति**-अत इति शेषः । पृच्छति-**केनेति ।** तर्हि केन किञ्चिद्व्याक्रियते इत्यर्थः । उत्तरयति-**सूत्रेणेति ।** किञ्चिद् व्याक्रियते इति शेषः ।

प्रदीपे-**करणे इति**-व्याकरणमित्यत्रेत्यादिः । ननु तत्र कर्मण्येव ल्युट् कुतो न विधीयते इत्यत आह-**शब्दश्चेति ।** सूत्रेणेति शेषः । **कर्मेति**-व्याकरणक्रियाया इत्यादिः । कर्मत्वकरणत्वयोः गुणप्रधानरूपत्वात् व्याकरणक्रियायाः कर्मणः शब्दस्य तस्याः करणत्वं न सम्भवतीत्याशयेनाह-**न तु करणमिति ।**

उद्द्योते-**राजभोजना इति**-भुज्यन्ते (शालयः) इति भोजनाः, राज्ञः भोजनाः राजभोजना इति व्युत्पत्तिः । **इतिवत्**-इतिघटकभोजना इत्यत्रेव । व्याकरणमित्यत्रापीति शेषः । कर्मणि ल्युटोऽगतिकगतित्वादत्र कर्मणि ल्युट् न विधीयते इत्याशयेनाह-**कर्मणीति । सः**-ल्युट् ।

### ( १४ आक्षेपान्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ भवे च तद्धितः ॥ * ॥

### ( भाष्यम् )

भवे च तद्धितो नोपपद्यते—'व्याकरणे भवो योगो वैयाकरणः' इति । नहि शब्दे भवो योगः ॥

क्व तर्हि ?

सूत्रे ॥

**( प्रदीपः ) भवे चेति ।** शब्देऽप्यन्वाख्यापकत्वेन भवो योग इति चेन्मीमांसादियोगस्यापि शब्दं प्रति विचारकत्वाद्वैयाकरणत्वप्रसङ्गः ॥

**( तत्त्वालोकः )** भाष्ये-वार्तिककारः शब्दस्य व्याकरणपदार्थत्वे द्वितीयं दोषमाह-**भवे चेति । भवे इति**-अत्र पक्षे इत्यादिः । अर्थे इति शेषः । **च तद्धितः**-तद्धितश्च । क्वेत्यत आह-**व्याकरणे इति । इति**-इत्यत्र । कुत इत्यत आह-**नेति । हि**-यतः । **योग इति**-अत इति शेषः । पृच्छति-**क्वेति ।** क्व तर्हि भवो योग इत्यर्थः । उत्तरयति-**सूत्रे इति ।** भवो योग इति शेषः ।

प्रदीपे—**अन्वाख्यापकत्वेन**-संस्कारकत्वेन । **योग इति**-उपपद्यते इति शेषः । **चेदिति**-न, तथा सति हीति शेषः । **शब्दं**-वेदशब्दम् ।

### ( १५ आक्षेपान्तरवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ प्रोक्तादयश्च तद्धिताः ॥ * ॥

### ( भाष्यम् )

प्रोक्तादयश्च तद्धिता नोपपद्यन्ते ॥ पाणिनिना

प्रोक्तं पाणिनीयम् । आपिशलं काशकृत्स्नमिति । नहि पाणिनिना शब्दाः प्रोक्ताः ॥

किं तर्हि ? ॥

सूत्रम् ॥

**( तत्त्वालोकः )**—वार्त्तिककारोऽत्र पक्षे तृतीयं दूषणमाह-**प्रोक्तेति । प्रोक्तादयः**-प्रोक्तार्थकादयः । अत्र पक्षे इत्यादिः । **च तद्धिताः**-तद्धिताश्च । क्वेत्यत आह-**पाणिनिनेति । इति**-इत्यादौ । कुत इत्यत आह-**नेति । हि**-यतः । **प्रोक्ता इति**-अत इति शेषः । पृच्छति-**किमिति ।** तर्हि किं पाणिनिना प्रोक्तमित्यर्थः । उत्तरयति-**सूत्रमिति ।** पाणिनिना प्रोक्तमिति शेषः ।

### ( आक्षेपभाष्यम् )

किमर्थमिदमुभयमुच्यते ❀भवे❀ ❀प्रोक्तादयश्च तद्धिताः❀ इति । न ❀प्रोक्तादयश्च तद्धिताः❀ इत्येव भवेऽपि तद्धितश्चोदितः स्यात् ? ॥

**( तत्त्वालोकः )** प्रोक्तार्थकादितद्धितमध्ये भवार्थकतद्धितस्याप्यन्तर्भावसम्भवात्पौनरुक्त्यमापादयति-**किमर्थमिति । इदमित्यनेन** निर्दिश्यन्तदुभयमाह-**भवे इति ।** भवे च तद्धित इति पाठः । **नेति**-किमित्यादिः । **इत्येव**-इत्यनेनैव । **चोदितः**-आपादितः । अनुपपन्नतयेत्यादिः ।

### ( परिहारभाष्यम् )

पुरस्तादिदमाचार्येण दृष्टम् ❀भवे च तद्धितः❀ इति, तत्पठितम् । तत उत्तरकालमिदं दृष्टम् ❀प्रोक्तादयश्च तद्धिताः❀ इति, तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ॥

**( प्रदीपः ) न चेदानीमिति ।** लक्षणप्रपञ्चाभ्यां मूलसूत्रवद्वार्तिकानामुपपत्त्या दोषाभावः ॥

**( उद्द्योतः ) लक्षणप्रपञ्चाभ्यामिति ।** यथा कर्मधारयप्रकरणे अलुक्प्रकरणे च । विजिगीषुकथायां हि अभिहिताभिधानमशक्तिसूचकत्वाद्दोषाय । **इह** तु व्युत्पादनार्थत्वान्न दोषकृदिति भावः ॥ **पूर्वं सामान्ये** उक्ते पश्चाद्विशेषकथनं प्रपञ्चार्थमिति युज्यते, अत्र तु विपरीतमिति न तत्साम्यमित्यन्ये ॥

**( तत्त्वालोकः )** भाष्ये—आशङ्कितं तत्र पौनरुक्त्यं परिहरति-**पुरस्तादिति ।** पूर्वकालमित्यर्थः । **आचार्येण**-वार्त्तिककृता । **दृष्टम्**—स्मृतम् । **इद**मित्यनेन निर्दिश्यमाह-**भवे चेति । तत्**-भवे च तद्धित इति । अतः पूर्वकालमित्यादिः । **ततः**-भवे च तद्धित इति वार्त्तिकप्रणयनात् । **इद**मित्यनेन निर्दिश्यमाह-**प्रोक्तेति । तत्**-प्रोक्तादयश्च तद्धिता इति । अत उत्तरकालमित्यादिः । **इदानीं**-द्वितीयवार्त्तिकप्रणयनकाले । **सूत्राणि**-वार्त्तिकानि । सूत्रपदस्य यथाश्रुतार्थकत्वानुपपत्त्या वार्तिके लक्षणाकरणात् ।

प्रदीपे—**लक्षणप्रपञ्चाभ्यां**—सामान्यसूत्रत्वविशेषसूत्रत्वाभ्याम् । **मूलसूत्रवत्**-पाणिनीयसूत्राणामिव । सामान्यवार्त्तिकत्वविशेषवार्त्तिकत्वाभ्यामिति शेषः । **उपपत्त्या**-पृथगभिधानोपपत्त्या । **दोषाभावः**-पौनरुक्त्यदूषणापत्त्यभावः ।

उद्द्योते—**कर्मधारयप्रकरणे इति**-विशेषणं विशेष्येण बहुलमिति सामान्यसूत्रस्य **विशेषसूत्रभूतत्वादेव** तदग्रिमसूत्राणि सङ्गतानि इति शेषः । **अलुक्प्रकरणे चेति**-अलुगुत्तरपदे इति लक्षणस्य प्रपञ्चभूतत्वादेव तदग्रिमसूत्राण्युपपन्नानि, तथा प्रकृतेऽपि एकस्य सामान्यवार्त्तिकस्य विशेषवार्त्तिकभूतत्वादेवापरं वार्त्तिकं सङ्गमिष्यते इति शेषः । ननूक्तार्थानामप्रयोग इति न्यायेन तत्रात्र च कथितकथनं कथन्न दोषाधायकं भवतीत्यत आह-**विजिगीषुकथायामिति ।** जल्पे इत्यर्थः । **हि**-एव । **अशक्तिसूचकत्वात्**-अनभिहिताभिधानासामर्थ्यबोधकत्वात् । अभिधातुरित्यादिः । **दोषाय**-प्रतिवाद्यूहितपुनरुक्तिदोषाय । भवतीति शेषः । **इहेति**-तत्त्वबुभुत्सुकथायां, तत्र चेति शेषः । **व्युत्पादनार्थत्वात्**-शब्दव्युत्पादनप्रयोजनकत्वात् । अभिहिताभिधानमित्यादिः । **दोषकृत्**-पुनरुक्तिदोषाधायकम् । वेदसदृशा महर्षय आचार्याः यतः तत्त्वव्युत्पादनाय व्याख्येयेऽर्थे तात्पर्यवन्तो भवन्ति, अतस्ते ईदृशलाघवमगणयन्तः स्वोक्तं न निवर्त्तयन्ति, इत्येतावन्मात्रेण तथाभिधानस्य युक्तत्वेऽपि कैयटेनोक्ता दृष्टान्तद्वारा तदुपपत्तिरसङ्गतेत्याशयेनाह-**पूर्वमिति ।** यतः अष्टाध्यायीस्थकर्मधारयप्रकरणादावित्यादिः । **कथनमिति**-अतः तत्र विशेषकथनमिति शेषः । **इति**-इति वक्तुम् । **विपरीतं**-पूर्वं भवे च तद्धित **इति** विशेषे उक्ते पश्चात् प्रोक्तादयश्च तद्धिता इति सामान्यकथनम् । **इति**-इति हेतोः । **तत्साम्यम्**-तत्रत्यकर्मधारयप्रकरणादिसाम्यम् ।

### ( प्रथमाक्षेपकबाधकभाष्यम् )

अयं तावददोषः—यदुच्यते ❀शब्दे ल्युडर्थः❀ इति । नावश्यं करणाधिकरणयोरेव ल्युड्विधीयते ॥

किं तर्हि ? ॥

अन्येष्वपि कारकेषु—"कृत्यल्युटो बहुलम्" इति । तद्यथा प्रस्कन्दनं प्रपतनमिति ॥

**( प्रदीपः ) प्रस्कन्दनमिति ।** यद्यप्ययं भीमादिस्तथापि **कृत्यल्युटो बहुल**मित्यस्यैव **भीमादयोऽपादान** इत्ययं प्रपञ्च **इति** भावः ॥

**( तत्त्वालोकः )** भाष्ये—शब्दस्य व्याकरणपदार्थत्वे उक्तं प्रथमदूषणं परिहरति-**अयमिति । तावदिति**-वाक्यालङ्कारे । तथा च ( अत्र पक्षे ) **शब्दे** ल्युडर्थ इति ( वार्त्तिकेन ) यत् ( व्याकरणमित्यत्र ल्युडनुपपत्तिरूपं दूषणम् ) उच्यते, अयम् अदोषः ( दोषो नोपद्यते ) इत्यन्वयः । ननु कथमत्र पक्षे स दोषो नोपपद्यते इत्यत आह-**नावश्यमिति ।** यतो नेत्यर्थः । **विधीयते इति**-अत **इति** शेषः । पृच्छति-**किमिति ।** तर्हि क्व ल्युड् विधीयते इत्यर्थः । उत्तरयति-**अन्येष्विति ।** करणाधिकरणभिन्नेष्वित्यर्थः । **अपिना** करणाधिकरणयोः संग्रहः । **इति**-इत्यनेन । ल्युट् विधीयते इति शेषः । उदाहरति-**तद्यथेति । इति**-इत्यादौ । तथा च व्याकरणमित्यत्र अगत्यैव कर्मणि ल्युड् विधीयते इति नात्र पक्षे तत्र ल्युडनुपपत्तिरूपो **दोष इति** भावः ।

प्रदीपे—**अयं**-प्रस्कन्दनमित्यादिः । **भीमादिरिति**-भीमादिगणान्तर्गततया भीमादयोऽपादाने इत्यनेन निष्पन्न **इति** तस्य कृत्यलुटो बहुलमित्यस्योदाहरणतयाऽभिधानं न सङ्गच्छते इति भावः । **तथापीति**-यत इति शेषः । **प्रपञ्च इति**-अतस्तस्य कृत्यल्युटो बहुलमित्यस्योदाहरणतयाऽभिधानमुपपद्यते इत्याशयः ।

### ( करणल्युट्समर्थनभाष्यम् )

अथ वा शब्दैरपि शब्दा व्याक्रियन्ते । तद्यथा गौरित्युक्ते सर्वे संदेहा निवर्तन्ते, नाश्वो न गर्दभ इति ॥

**( प्रदीपः ) गौरित्युक्ते इति ।** सास्नादिमति यदा कंचित्प्रति

'अथ गौः' इत्युच्यते तदा तत्र वाचकान्तराणां निवृत्तिः कृता भवति एवमेकस्मिन्नुदाहरणे उपन्यस्ते सर्वाणि तत्सदृशानि शब्दान्तराणि प्रतीयन्ते ॥

**(उद्द्योतः) प्रतीयन्त इति ।** एवंच विपरीतव्यावृत्तिः सदृशसंग्रहश्च व्याकृतिरिति भावः ॥ एतेन शब्दप्रतिपत्तिरप्यत्र पक्षे उद्धृता॥

**( तत्त्वालोकः )** भाष्ये—ननु शब्दे ल्युडर्थ इति वार्तिकेन अत्र पक्षे व्याकरणमित्यत्र यत्किञ्चिदर्थकस्य ल्युटोऽनुपपत्तिः नोक्ता, किन्तु करणार्थकल्युट इत्यतः अत्र पक्षे तत्र करणार्थकल्युट उपपादनायाह—**अथवेति ।** उदाहरति—**तद्यथेति ।** वक्त्रा सास्नादिमत्यर्थे अयमिति शेषः । **सर्वे**—गोपदतदतिरिक्ताश्वादिपदवाच्यताविषयकाः । श्रोतुस्तत्रेत्यादिः । कुत एवमित्यत आह—**नाश्व इति ।** नाश्वपदवाच्य इत्यर्थः । तस्मिन् श्रुते तत्रायमित्यादिः । **न गर्दभः**—न गर्दभपदवाच्यः । **इति**—इत्यादेः । अयं गोपदवाच्य इत्यस्य च निश्चयस्योत्पादादिति शेषः । तथा चात्र पक्षे तत्र करणेऽपि ल्युडुपपद्यते इति नात्र पक्षे तत्र स दोष इति भावः ।

प्रदीपे—**सास्नेति**-यदा ( केनचिद् व्युत्पन्नेन ) कश्चित् ( जिज्ञासुं ) प्रति सास्नादिमति ( अर्थे ) इति योजना । **तत्र**-सास्नादिमत्यर्थे । श्रोतुरित्यादिः । **वाचकान्तराणाम्**-अश्वादिपदानाम् वाच्यतायाः संशयस्येति शेषः । **भवतीति**-गोपदस्य च वाच्यतायाः निश्चयः कृतो भवतीति शेषः । **प्रतीयन्ते इति**-तथा सर्वाणि तद्विपरीतानि शब्दान्तराणि व्यावर्त्यन्ते इति शेषः । यथा सुद्ध्युपास्य इत्यस्मिन्नुपन्यस्ते प्रद्ध्युपास्यः, दध्युन्नयनमित्यादीनि प्रतीयन्ते, तथा महेशः, दैत्यारिरित्यादीनि व्यावर्त्यन्ते इति भावः ।

उद्द्योते—**एवञ्च**-एकशब्दोपन्यासेन तत्सदृशप्रतीतेः तद्विसदृशव्यावृत्तेश्चोपपत्तौ । **विपरीतेति**-उपन्यस्तशब्दविपरीतशब्देत्यर्थः । **सदृशेति**-उपन्यस्तशब्दसदृशशब्देत्यर्थः । **एतेन**-एकस्मिन् शब्दे उपन्यस्ते तत्सदृशशब्दान्तराणि प्रतीयन्ते इत्युपपादनेन । **शब्दप्रतिपत्तिः**-व्याकरणाच्छब्दान् प्रतिपद्यामहे इति व्याकरणप्रयोज्यशब्दप्रतिपत्तिविषयकव्यवहारानुपपत्तिः । **अपिना** व्याकरणमित्यत्र करणार्थकल्युटोऽनुपपत्तिः सगृह्यते । **अत्र पक्षे**-शब्दो व्याकरणपदार्थ इति पक्षे ।

### ( अनुद्धृतदोषप्रदर्शकभाष्यम् )

**अयं तर्हि दोषः—❀ भवे ❀ ❀ प्रोक्तादयश्च तद्धिताः' ❀ इति ॥**

**( तत्त्वालोकः )** अत्र पक्षे दोषदातोपसंहरति-**अयमिति । तर्हि**-अत्र पक्षे आपन्नानां सूत्रपक्षोक्तदोषद्वयस्य, व्याकरणशब्दे करणल्युडनुपपत्तेश्चोक्तरीत्या निराकरणे सति । अत्र पक्षे इति शेषः । **दोष इति**-अवशिष्यते इति शेषः । अयमित्यनेन निर्देश्यमाह-**भवे इति ।** भवे च तद्धित इति पाठः । **इति**-इति वार्त्तिकद्वयसूचितः ।

### ( समाधानभाष्यम् )

**एवं तर्हि—**

**( १९ सिद्धान्तवार्तिकम् ॥ १६ ॥ )**

## ॥ ❀ ॥ लक्ष्यलक्षणे व्याकरणम् ॥ ❀ ॥

### ( भाष्यम् )

**लक्ष्यं च लक्षणं चैतत्समुदितं व्याकरणं भवति ॥ किं पुनर्लक्ष्यम् , किं वा लक्षणम् ? ॥**

**शब्दो लक्ष्यः, सूत्रं लक्षणम् ॥**

**( उद्द्योतः )** व्यावर्त्यव्यावर्तकरूपलक्षणस्यातिप्रसक्तत्वात्पृच्छति —**भाष्ये किं पुनरिति ॥**

**( तत्त्वालोकः )** भाष्ये-सिद्धान्ती समाधानायोपक्रमते—**एवं तर्हीति ।** उक्तरीत्या सूत्रशब्दोभयव्याकरणपदार्थत्वे दूषिते सतीत्यर्थः । वार्त्तिककारः सिद्धान्तभूतं तृतीयपक्षमुपस्थापयति-**लक्ष्यलक्षणे इति ।** अत्र द्विवचनेन व्याकरणत्वस्य व्यासज्यवृत्तिता सूचिता । साच एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगितारूपेति भावः । **व्याकरणं**-व्याकरणपदार्थः । **लक्षणञ्चेति-इति** लक्ष्यलक्षणे इति शेषः। **एतत्समुदितमिति**-एतयोः समुदितं ( रूपम् ) इति व्युत्पत्तिः । **व्याकरणमिति**—व्याकरणशब्दस्य योगरूढ्या लक्ष्यलक्षणसमुदायपरता । अत्र पक्षे वृक्षस्य शाखेत्यत्रेव व्याकरणस्य सूत्रमित्यत्रापि समुदायावयवयोर्भेदविवक्षया षष्ठ्यर्थोपपत्तिः । तथा लक्ष्यलक्षणसमुदायात् शब्दप्रतिपत्तेः जायमानतया व्याकरणाच्छब्दान् प्रतिपद्यामहे **इति** व्याकरणप्रयोज्यशब्दप्रतिपत्तिविषयकव्यवहारस्योपपत्तिः । एवं तादृशसमुदायस्य व्याक्रियारूपक्रियाकरणतया व्याकरणमित्यत्र करणे ल्युटोऽप्युपपत्तिः । तथा समुदायस्यैकदेशाभिन्नतया भवार्थे प्रोक्तार्थे च तद्धितानामप्युपपत्तिरिति अत्र पक्षे न कश्चन प्रागुक्तो दोष इति भावः । उत्तरयति **शब्द इति । लक्षणमिति**-तथा च नातिव्याप्तिरिति भावः ।

### ( समाधानबाधकभाष्यम् )

**एवमप्ययं दोषः—समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवे नोपपद्यते । सूत्राणि चाप्यधीयान इष्यते—वैयाकरण इति ॥**

**( तत्त्वालोकः )** शङ्कते – **एवमपीति ।** सूत्रशब्दोभयसमुदायस्य व्याकरणपदार्थत्वेऽपीत्यर्थः । अयमित्यनेन निर्देश्यमाह-**समुदाये इति ।** शब्दसूत्रसमुदाये इत्यर्थः । **अवयवे**-तदेकदेशे सूत्रे । ननु तेन का क्षतिरित्यत आह-**सूत्राणीति ।** सूत्रमात्राणीत्यर्थः । **चाप्यधीयाने**-अधीयानेऽपि च । **इष्यते इति**-वैयाकरण इति ( प्रयोगः ) इष्यते इत्यन्वयः । तथा सति तत्र तत्प्रयोगस्यानुपपत्तिरिति भावः ।

### ( समाधानसाधकभाष्यम् )

**नैष दोषः । समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते । तद्यथा पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तम् , घृतं भुक्तम् , शुक्लो नीलः कपिलः कृष्ण इति ॥ एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेष्वपि वर्तते ॥**

**( प्रदीपः ) पूर्वे पञ्चाला इति ।** जनपदान्तरनिवृत्तिविवक्षायामेकदेशेऽपि समुदायरूपारोपात्प्रयोगः ॥ **तैलमिति ।** यदौषधसंस्कृता घृततैलमात्रा भवति तदेदमुदाहरणम् । आकृतिवाचित्वे तु घृततैलशब्दयोः संस्थानप्रमाणनिरपेक्षा सर्वत्र मुख्या वृत्तिः ॥ **शुक्ल इति ।** अशुक्लेऽप्यवयवेऽवयवान्तरस्य शौक्ल्यात्समुदायस्य शुक्लत्वे सत्या ( तस्या ) रोपात्प्रयोगः ॥

**( उद्द्योतः ) जनपदान्तरेति ।** भावप्रधानो निर्देशः ॥ **यदेति । मात्रा ।** परिच्छिन्नोंऽशः । औषधसंस्कृते तत्र समुदाये घृतादिशब्दस्य रूढिरिति भावः ॥ **अशुक्लेऽप्यवयवे इति ।** 'प्रयोग' इत्यनेनान्वेति ॥ **आरोपादिति** समुदायस्य शुक्लत्वे अशुक्लावयवे प्रयोगे च हेतुः । तत्र समुदाये शुक्लत्वारोपे हेतु**रवयवान्तरस्य शौक्ल्या**

दिति । वनैकदेशे 'पुष्पितं वनम्' इतिवदेकदेशेऽपि शुक्ले 'शुक्लः पटः' इति व्यवहार इति बोध्यम् ॥

**(तत्त्वालोकः)** भाष्ये—समाधत्ते-**नैष इति** । अत्र पक्षे इत्यादिः । कुत इत्यत आह-**समुदायेष्विति** । **हि**-यतः समुदायेषु प्रवृत्ताः शब्दा इत्यन्वयः । **अवयवेष्विति**-लक्षणयेत्यादिः । **वर्त्तन्ते**-प्रयुज्यन्ते । उदाहरति-**तद्यथेति** । **इति**-इत्यादि । दार्ष्टान्तिकोपपादनायाह-**एवमिति** । एवमयं व्याकरणशब्दः समुदायेषु (शब्दसूत्रसमुदायेषु) प्रवृत्त इत्यन्वयः । **अवयवेष्विति**-तदेकदेशसूत्रेष्वित्यर्थः । लक्षणयेत्यादिः । **वर्त्तते**-प्रयोक्तुं शक्यते । तथा चात्र-पक्षे सकलदोषपरिहारात् समीचीनत्वमेवेति भावः ।

प्रदीपे—जनपदान्तरम् (देशान्तरम्) अस्त्येषामिति व्युत्पत्तौ जनपदान्तरशब्दात् अर्श आद्यजित्यनेनाचि निष्पन्नं जनपदान्तरशब्दमभिप्रेत्याह-**जनपदान्तरेति** । पूर्वशब्दविवक्षितलोकानामित्यादिः । **एकदेशे**-पञ्चालदेशवर्त्तिलोकसमुदायैकदेशे पूर्वशब्दविवक्षितलोके । **समुदायरूपेति** – पञ्चालशब्दबोध्यपञ्चालदेशवर्त्तिलोकसमुदायत्वेत्यर्थः । **प्रयोग इति**-एवम् उत्तरे पञ्चाला इति प्रयोगोऽप्युपपाद्यः । **इदं**-तैलं भुक्तं घृतं भुक्तमितिद्वयम् । **आकृतीति**-घृततैलशब्दयोराकृति (जाति) वाचित्वे तु (तयोः) सर्वत्र (समुदाये एकदेशे वा) संस्थानप्रमाण (आकारपरिमाण) निरपेक्षा मुख्या (गौणीभिन्ना) वृत्तिः (शक्तिः) इत्यन्वयः । **अशुक्ले इति**-अवयवान्तरस्य शौक्ल्यात् (शुक्लाशुक्लतन्तुरूपावयवसमुदायात्मकपटे शुक्लत्वस्य) आरोपात् समुदायस्य (तादृशावयवसमुदायरूपपटस्य) शुक्लत्वे सति अशुक्लेऽप्यवयवे तस्य (शुक्लत्वस्यारोपात् शुक्ल इति) प्रयोगः (उपपद्यते) इत्यन्वयः । एवं नील इत्यादि प्रयोगोऽप्युपपाद्य इति भावः ।

उद्द्योते—**निर्देश इति**-तथा च तस्य जनपदान्तरत्वेत्यर्थः । **परिच्छिन्नोऽशः**-परिमितो भागः । **तत्र**-घृतादौ । **समुदाये**-अवयवसमुदायरूपे । **प्रयोगे**-शुक्ल इति प्रयोगे । एकत्रारोपितस्यान्यत्रारोपासम्भवात् प्रकारान्तरेण भाष्यं योजयन्नाह-**वनैकदेशे इति** । पुष्पिते वनत्वारोपादिति शेषः । **इति वत्**-इति व्यवहार इव । **एकदेशे**-पटैकदेशे । **शुक्ले**-वास्तवशुक्ले । पटत्वारोपादिति शेषः ।

**(प्रथमपक्षाभ्युपगमभाष्यम्)**

**अथ वा पुनरस्तु सूत्रम् ॥**

**(तत्त्वालोकः)**—सूत्रं व्याकरणमितिलोकव्यवहारानुरोधात् सिंहावलोकनन्यायेन सूत्रं व्याकरणपदार्थ इत्युक्तमाद्यपक्षं युक्तमवलोक्य तं समर्थयते-**अथवेति** । **सूत्रमिति**-व्याकरणपदार्थ इति पक्ष एवेति शेषः ।

**(प्रथमाक्षेपस्मारणभाष्यम्)**

**ननु चोक्तम् ❀सूत्रे व्याकरणे षष्ठ्यर्थोऽनुपपन्नः❀ इति ॥**

**(तत्त्वालोकः)** तत्र पक्षे उक्तं प्रथमदोषं स्मारयति-**ननु चेति** ।

**(प्रथमाक्षेपनिरासभाष्यम्)**

**नैष दोषः, व्यपदेशिवद्भावेन भविष्यति ॥**

**(प्रदीपः)** **व्यपदेशिवद्भावेनेति** । यथा राहोः शिर इत्येकस्मिन्नपि वस्तुनि शब्दार्थभेदाद्भेदव्यवहारः, एवमिहापि व्याकरणशब्देन शास्त्रस्य व्याकृतिक्रियायां करणरूपत्वमुच्यते सूत्रशब्देन तु समुदायरूपतेति भेदव्यवहार उपपद्यते ॥

**(उद्द्योतः)** **शब्दार्थभेदादिति** । अनेकावस्थायुक्तं शिरो राहुशब्दार्थः यत्किंचिदेकावस्थायुक्तं तच्च शिरःशब्दार्थः । तादृशराहुशब्दार्थस्य तादृशशिरः पदार्थोऽवयव इति षष्ठ्यर्थोपपत्तिरिति भावः ॥ **सूत्रशब्देन तु समुदायरूपतेति** । अनेकावस्थायुक्तस्य तस्य व्याकृतिक्रियाकरणावस्थाविशिष्टमवयव इति तद्रूपावयवस्यायं समुदाय इत्यर्थः ॥ ईदृशस्थले विकल्पात्मकं ज्ञानं वस्तुशून्यमेव । व्यपदेशिवद्भावविषयेऽप्येवमेव **"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"** इति योगसूत्रे पतञ्जल्युक्तेरित्यन्ये ॥

**(तत्त्वालोकः)** भाष्ये—परिहरति-**नेति** । तत्र पक्षे इत्यादिः । **एषः**-व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थानुपपत्तिरूपः । कुत इत्यत आह- **व्यपदेशिवद्भावेनेति** । मुख्यव्यवहारतुल्यत्वकरणेन तत्र षष्ठ्यर्थोपपत्तिः भविष्यतीत्यर्थः ।

प्रदीपे— **इतीति**-अस्य भेदव्यवहार इत्यनेनान्वयः । **इहापि**-व्याकरणस्य सूत्रमित्यत्रापि । **शास्त्रस्य**-सूत्रसमुदायरूपस्य । **समुदायरूपतेति**-सूत्राणामित्यादिः । उच्यते इति शेषः । **इति**-इति हेतोः ।

उद्द्योते— **तत्**-शिरः । **तादृशराहुशब्दार्थस्य**-अनेकावस्थायुक्तशिरोरूपराहुपदार्थस्य । अवयविन इति शेषः । **तादृशशिरः पदार्थः**-यत्किञ्चिदेकावस्थायुक्तशिरोरूपशिरः शब्दार्थः । **इतीति**-रूपेण अवयवावयविभावरूपसम्बन्धस्य विवक्षया राहोः शिर इत्यत्रेति शेषः । ननु सूत्रव्याकरणशब्दाभ्यामष्टाध्यायी प्रतिपाद्यते इति पूर्वोक्त्या सूत्रशब्देन तु समुदायरूपतेत्यन्तप्रकृतोक्तिः विरुद्धेत्यत आह-**अनेकेति**। **तस्य**-सूत्रसमुदायरूपस्य वयविनः । **विशिष्टं**-विशिष्टसूत्रसमुदायरूपः। **इति**-इति हेतोः । व्याकरणस्य सूत्रमित्यस्येति शेषः । **तद्रूपावयवस्य**-व्याकृतिक्रियाकरणावस्थाविशिष्टसूत्रसमुदायरूपावयवस्य । **अयम्**-अनेकावस्थायुक्तः । **समुदायः**-सूत्रसमुदायरूपावयवी । तयोः अमुख्येऽपि भेदे औपाधिकभेदस्य, अवयवावयविभावरूपसम्बन्धस्य च कल्पनायाः तुल्यतया दृष्टान्तदार्ष्टान्तिकभावोपपत्तिः, न तु विशेष्यादितुल्यतयेति भावः । **ईदृशस्थले**-राहोः शिरः, व्याकरणस्य सूत्रमित्यादिस्थले । **विकल्पात्मकमिति**-विकल्प आत्मा (नाम) यस्येति व्युत्पत्तिः । वस्तुशून्यं विकल्पात्मकं ज्ञानमेवेत्यन्वयः । **एवमेव**-वस्तुशून्यं विकल्पात्मकं ज्ञानमेव । ननु विकल्पात्मकज्ञानस्य किं लक्षण मित्यत आह-**शब्दज्ञानेति** ।

**(द्वितीयाक्षेपस्मारणभाष्यम्)**

**यदप्युच्यते ❀शब्दाप्रतिपत्तिः❀ इति । नहि सूत्रत एव शब्दान्प्रतिपद्यन्ते ॥ किं तर्हि ? ॥ व्याख्यानतश्चेति ॥ परिहृतमेतत्—तदेव सूत्रं विगृहीतं व्याख्यानं भवतीति ॥**

**(तत्त्वालोकः)**—सूत्रं व्याकरणपदार्थ इति पक्षे उक्तं द्वितीयदोषं स्मारयति-**यदपीति** । **उच्यते**-उपपाद्यते । **चेति**-चेत्यनेन । तत्रोक्तद्वितीयदोषस्य कृतमेव परिहारं स्मारयति-**परिहृतमिति** । **एतत्**-तत्राशङ्कितं द्वितीयदूषणम् । **इति**-इत्यनेन ।

**(परिहारबाधकस्मारणभाष्यम्)**

**ननु चोक्तम्—न केवलानि चर्चापदानि व्याख्यानम्—वृद्धिः आत् ऐजिति, ॥**

**किं तर्हि ? ॥**

**"उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति" इति ॥**

**(तत्त्वालोकः)** तत्रापादितद्वितीयदूषणस्य यः परिहारः स्मारितः, तस्य बाधकतया तत्रोक्तं स्मारयति—**ननु चेति**।

(परिहारसाधकभाष्यम्)

अविजानत एतदेवं भवति। सूत्रत एव हि शब्दान् प्रतिपद्यन्ते॥ आतश्च सूत्रत एव। यो ह्युत्सूत्रं कथयेन्नादो गृह्येत॥

**(प्रदीपः) सूत्रत एवेति।** पदच्छेदादिभिः सूत्रार्थस्यैवाभिव्यञ्जनात्॥ **आत** इति निपातः। अतश्च हेतोरित्यर्थः। **नाद इति।** नैनदित्यर्थः॥ अथवा नादोऽर्थरहितत्वाद् घोषमात्रमेवेत्यर्थः॥

**(उद्द्योतः)** भाष्ये—**अविजानत इति।** मन्दबुद्धेरित्यर्थः॥ **सूत्रत एवेति।** एतन्मूलमेव पठ्यते "**सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्तिके**" इति॥

**(तत्त्वालोकः)** भाष्ये—तत्रोक्तद्वितीयदोषस्य स्मारितं परिहारं समर्थयते—**अविजानत इति।** विचारेणेति शेषः। **एतत्**—शब्दज्ञानम्। **एवम्**—उदाहरणादिसमुदायरूपव्याख्यानसहितसूत्रात्। कुतः तादृशविचारवतो मन्दबुद्धितोच्यते इत्यत आह—**सूत्रत एवेति।** हि—यतः। **प्रतिपद्यन्ते इति**—अत इति शेषः। अन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—**आतश्चेति। एवेति**—शब्दान् प्रतिपद्यन्ते इत्यनुषज्यते। कुत इत्यत आह—**य इति। हि**—यतः। **उत्सूत्रमिति**—उत् (उद्गतं) सूत्रं यस्मादिति व्युत्पत्तिः।

प्रदीपे—सूत्रत एव शब्दान् प्रतिपद्यन्ते इत्यत्र हेतुमाह—**पदच्छेदेति। आदिना** उदाहरणादिसंग्रहः। **एतत्**—उत्सूत्रकथनम्। **अर्थेति**—उत्सूत्रकथनस्येत्यादिः।

उद्द्योते—**एतन्मूलमेव**—सूत्रत एव शब्दान् प्रतिपद्यन्ते इत्येतन्मूलकमेव।

(इति व्याकरणपदार्थनिरूपणम्॥)



(अथ वर्णोपदेशप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

अथ किमर्थो वर्णानामुपदेशः?।

**(प्रदीपः) किमर्थ इति।** नहि वर्णोपदेशेन कस्यचित्साधुशब्दस्यानुशासनमिति भावः॥

**(उद्द्योतः)** ननु लोकप्रसिद्धमातृकापाठेनैव वर्णज्ञानसंभवान्माहेश्वरो वर्णसमाम्नायः किमर्थ इति पृच्छति—भाष्ये **किमर्थ इति।** पाणिनये महादेवकृत इत्यर्थः॥ ननु साधुत्वान्वाख्यानं फलमत आह—**नहीति॥**

**(तत्त्वालोकः)** भाष्ये—**किमर्थः**—किम्प्रयोजनकः। **वर्णानाम्**—अइउ (ण्) इत्यादीनाम्।

उद्द्योते—ननु वर्णज्ञानस्यैव वर्णोपदेशप्रयोजनतेति कथं तस्य प्रयोजनशङ्केत्यत आह—**लोकेति। मातृकेति**—"ककहरा" शब्दवाच्या "अ आ इ ई" इत्यादिवर्णसमुदायरूपेत्यर्थः। **माहेश्वरः**—महेश्वरप्रणीतः। **वर्णसमाम्नायः**—अइउणित्यादिरूपः। **इति**—**इत्याशयेन**। **ननु** गुरोः शिष्यं प्रति जायमाने व्यवहारविशेषे उपदेशशब्दप्रयोगस्य दर्शनात् प्रकृते उपदेशशब्दप्रयोगो नोपपद्यते सकलाया अष्टाध्याय्याः पाणिनिप्रोक्तत्वादित्यत आह—**पाणिनये इति।** तथा च पाणिनिरूपशिष्यम्प्रति महादेवरूपगुरोः ढक्कानिनादद्वारा जायमाने अ इ उणित्याद्यभिव्यक्तिरूपप्रयोगे उपदेशपदव्यवहारो युक्त एवेति भावः। **साधुत्वेति**—शब्दानामित्यादिः। **फलमिति**—वर्णोपदेशस्येत्यादिः।

(१७ समाधानवार्तिकम्॥ १॥)

॥ * ॥ वृत्तिसमवायार्थ उपदेशः॥ * ॥

(भाष्यम्)

वृत्तिसमवायार्थो वर्णानामुपदेशः॥

किमिदं वृत्तिसमवायार्थ इति?।

वृत्तये समवायो वृत्तिसमवायः। वृत्त्यर्थो वा समवायो वृत्तिसमवायः। वृत्तिप्रयोजनो वा समवायो वृत्तिसमवायः॥

का पुनर्वृत्तिः?॥

शास्त्रप्रवृत्तिः॥

अथ कः समवायः?॥

वर्णानामानुपूर्व्येण संनिवेशः॥

अथ क उपदेशः?॥

उच्चारणम्॥

कुत एतत्?॥

दिशिरुच्चारणक्रियः। उच्चार्य हि वर्णानाह—उपदिष्टा इमे वर्णा इति॥

**(प्रदीपः) वृत्तिसमवायार्थ इति।** लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः। धर्मनियमवत्समासः॥ **वृत्त्यर्थ इति।** शास्त्रप्रवृत्तिप्रत्यासन्नत्वं समवायस्य दर्शयति। **इग्यण** इत्यादौ हि **यथासंख्यशास्त्रं** वर्णसंनिवेशमात्रादेवावतिष्ठते॥ **वृत्तिप्रयोजन इति।** पारम्पर्येण शास्त्रप्रवृत्तावस्याङ्गत्वम्। सति हि समवाये इत्संज्ञा। तत **आदिरन्त्येने**ति [प्रत्याहारः।] ततो **हलोप** इत्यादिशास्त्रप्रवृत्तिः।

**(उद्द्योतः)** उत्तरम्—**वृत्तिसमवायार्थ इति।** वृत्तिः शास्त्रप्रवृत्तिस्तदुपयोगी समवायो वर्णगतः क्रमविशेषः, स बोध्यत्वेनार्थः प्रयोजनं यस्य स तथोक्तः। सति ह्यक्षरसमाम्नायेऽजादिसंज्ञाभिर्लाघवेन शास्त्रप्रवृत्तिरि**ग्यण** इत्यादौ **यथासङ्ख्य**प्रवृत्तिश्चेति भावः। अनेनास्य शास्त्रबहिर्भूतत्वं सूचितम्। अत एव **मङ्गलार्थं महतः शास्त्रौघस्यादितो वृद्धिशब्दं पठतीति** वक्ष्यति। अन्यकर्तृकत्वं च सूचितम्। पाणिनिशास्त्रप्रवृत्त्यर्थं उपदेश इत्युक्ते उपदेशे **गुरुकर्तृ**कतायाः स्वरसतः प्रतीतेः, सिद्धोच्चारणेपि मन्त्रोपदेश इत्यादावुपदेशव्यवहारात्॥ **अनुबन्धकरणार्थ** इत्यत्र करणपदेनेतरस्य सिद्धत्वसूचनात्। तत्करणं चोपदेशकर्तृकर्तृकमेव प्रत्यासत्तेरित्याहुः॥ भाष्ये—**किमिदमिति।** कोऽयं समास इति प्रश्नः। **धर्मनियमवदिति।** षष्ठीसमासः। पक्षत्रयभेदमुपपादयति—**शास्त्रेति।** आद्यतात्पर्यं तूक्तं **लाघवेन शास्त्रप्रवृत्त्यर्थ इ**ति। ननु नेदमाद्योच्चारणमस्यानादित्वात् तत्कथमुपदेशत्वव्यवहारोऽत आह—भाष्ये **उच्चारणमिति।** ढक्कानिनादेनाभिव्यक्तिरित्यर्थः।

**(तत्त्वालोकः)** भाष्ये—वार्तिककारः वर्णोपदेशस्य प्रथमं प्रयोजनमाह—**वृत्तीति।** पृच्छति—**किमिदमिति।** समसनमिति शेषः। **इति**—इतिघटकवृत्तिसमवायेत्यत्र। उत्तरयति—**वृत्तये इति।** वृत्ति-

पदेन स्थितेः शक्तिलक्षणान्यतरस्य च वाच्यतया संशयोदयात् पृच्छति-**का पुनरिति । वृत्तिः**-वृत्तिपदार्थः । उत्तरयति-**शास्त्रेति । समवायशब्देन** समुदायस्य समवायसम्बन्धस्य च वाच्यतया संशयोदयात् पृच्छति-**अथ क इति । समवायः**-समवायशब्दार्थः । उत्तरयति—**वर्णानामिति ।** उपदेशशब्दस्य देशसमीपस्थवाचकत्वसंशयात् पृच्छति-**अथ क इति । उपदेशः**-उपदेशपदार्थः । उत्तरयति-**उच्चारणमिति** । पृच्छति-**कुत इति । एतत्**-उच्चारणम् । उपदेशपदार्थ **इति** शेषः । उत्तरयति **दिशिरिति ।** दिश धातुरित्यर्थः । **उच्चारणक्रिय इति**-उच्चारणं क्रिया यस्येति व्युत्पत्तिः । अत **इति** शेषः । ननु कुतो दिशेरुच्चारणक्रियता प्रतीयते **इ**त्यत आह-**उच्चार्येति । हि**-यतः । **आहेति**-उच्चारयितेति शेषः । **इतीति**-अत **इति** शेषः ।

प्रदीपे—वृत्तिसमवायेत्यत्र प्रथमव्युत्पत्त्यनुसारेण चतुर्थीसमासो न भवति, तस्य प्रकृतिविकृतिभाव एव विधानात् । तथा च तत्र चतुर्थ्या तादर्थ्ये प्रतिपादिते सम्बन्धसामान्ये षष्ठीं विधाय ( षष्ठी ) समासः कर्तव्य **इ**त्याशयेनाह **लाघवेनेति ।** प्रत्याहारद्वारेत्यादिः । **प्रवृत्त्यर्थ इति**-समवाय इति शेषः । **अर्थः**-वृत्तिसमवायेत्यस्यार्थः । तत्र द्वितीयव्युत्पत्त्या कर्मधारयसमासो विवक्षितः, वृत्त्यर्थ ( समवाय ) स्य वृत्तिशब्देनाभिधानादित्यभिप्रायेणाह-**शास्त्रेति । प्रत्यासन्न-त्वम्** उपयोगित्वम् । **हि** यतः । तत्र तृतीयव्युत्पत्त्या अङ्गाङ्गिभावसम्बन्धे षष्ठीं विधाय ( षष्ठी । समासो विधेय **इ**ति सूचितमित्याशयेनाह-**पारम्पर्येणेति ।** प्रत्याहारद्वारेत्यर्थः । **अस्य**-समवायस्य । पारम्पर्यमेवोपपादयितुमाह-**सतीति । हि**-यतः । **इति**-इत्यनेन ।

उद्द्योते—**स तथोक्तः**-वर्णोपदेशः वर्णगतक्रमविशेषेण कृतः । **हि**-यतः । आद्यसमासफलमाह-**लाघवेनेति ।** द्वितीयसमासफलमाह—**इण्यण इति ।** तृतीयसमासप्रयोजनेत्संज्ञादिप्रवृत्तिसमुच्चयायाह-**चेति अनेन**-उक्तार्थकवृत्तिसमवायेति वार्तिकेन । **अस्य**-अ **इ** उणित्याद्यात्मकवर्णसमाम्नायस्य । **शास्त्रेति**-अष्टाध्यायीत्यर्थः । **अत एव**-तादृशवर्णसमाम्नायस्य शास्त्रबहिर्भूतत्वादेव । **वृद्धिशब्द**-प्रथमाध्यायप्रथमपाद प्रथमसूत्रवृद्धिरादैजितिघटकम् । **अन्येति**—वृत्तिसमवायेति वार्त्तिकेन वर्णसमाम्नायस्येत्यादिः । वर्णसमाम्नायस्य पाणिनिभिन्नशिवोपदिष्टत्वे हेतुमाह-**पाणिनीति ।** ननु शिवकर्तृके अनादिसिद्धवर्णसमासाम्नायस्य ढक्कानिनादद्वाराऽभिव्यञ्जनरूपोच्चारणे कथमुपदेशपदप्रयोग इत्यत आह-**सिद्धेति ।** सिद्धमन्त्रादीत्यर्थः । **उपदेशव्यवहारात्**-उपदेशपदप्रयोगात् । ननु **केन** वर्णसमाम्नायस्य सिद्धत्वं सूचितमित्यत आह-**अनुबन्धेति । इतरस्य**-अनुबन्धातिरिक्तवर्णसमाम्नायस्य । ननु तर्हि अनुबन्धाः केन कृता **इ**त्यत आह-**तदिति ।** अनुबन्धेत्यर्थः । **उपदेशकर्तृकर्तृकमेव**-वर्णसमाम्नायोपदेशकर्तृशिवकर्तृकमेव । **आद्येति**-प्रथमसमासेत्यर्थः । **इति**-इत्यनेन । **इदम्**-वर्णसमाम्नायोच्चारणम् । **अस्य**-वर्णसमाम्नायस्य । **तत्कथम्**-तर्हि कथम् । वर्णसमाम्नायस्योच्चारणे **इति** शेषः । **अभिव्यक्तिरिति**-वर्णसमाम्नायस्येत्यादिः । तथा च पाणिनिरूपशिष्यं प्रति महादेवरूपगुरुकर्तृके वर्णसमाम्नायस्य प्रथमे ढक्कानिनादद्वाराऽभिव्यञ्जनरूपे उच्चारणे उपदेशपदप्रयोगो युक्त एवेति भावः ।

## ( १८ वर्णोपदेशप्रयोजनान्तरवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अनुबन्धकरणार्थश्च ॥ * ॥

### ( भाष्यम् )

**अनुबन्धकरणार्थश्च वर्णानामुपदेशः-अनुबन्धानासङ्क्ष्यामीति । नह्यनुपदिश्य वर्णाननुबन्धाः शक्या आसङ्क्तुम् । स एष वर्णानामुपदेशो वृत्तिसमवायार्थश्चानुबन्धकरणार्थश्च । वृत्तिसमवायश्चानुबन्धकरणं च प्रत्याहारार्थम् । प्रत्याहारो वृत्त्यर्थः ॥**

**( प्रदीपः ) प्रत्याहारार्थमिति ।** प्रत्याहारशब्देनाणादिकाः संज्ञा उच्यन्ते ॥

**( उद्द्योतः )** फलान्तरमाह—**अनुबन्धकरणार्थश्चेति ।** अनुबन्धबोधनार्थ **इ**त्यर्थः । येनाकारस्य विवृतगुणत्वसंग्रहः । उपलक्षणत्वेन वा । अनुबन्धत्वं च समुदायान्यत्वे सति नान्यथेति तात्पर्यम् ॥ ननु प्रत्याहारशब्देन सूत्रं चेत् तादर्थ्यमनुबन्धानामनुपपन्नमत आह-**प्रत्याहारशब्देनेति ।** अधिकरणव्युत्पत्त्या अर्शआद्यचा वेति **भावः** ॥ भाष्ये—**वृत्त्यर्थ इति ।** लाघवेन शास्त्रप्रवृत्त्यर्थ इत्यर्थः ॥ एतेन प्रत्याहारद्वारा समवायस्य वृत्त्यर्थत्वं दर्शितम् ॥

**( तत्त्वालोकः )** भाष्ये—वार्तिककारेण वर्णोपदेशस्य द्वितीयप्रयोजनाभिधानायोक्त अनुबन्धेति वार्तिकं व्याचष्टे-**अनुबन्धेति ।** नन्वनुबन्धा उपदेशकल्पना **इ**ति कुतो ज्ञायते **इ**त्यत आह-**अनुबन्धानिति । आसङ्क्ष्यामि**-करिष्यामि । **इतीति**-उपदेशकव्यवहारादिति शेषः । ननु अनुबन्धकरणाय वर्णोपदेशस्य कुत आवश्यकतेत्यत **आह-नेति । हि**-यतः । **शक्या इति**-अत **इ**ति शेषः । दार्ढ्याय पुनराह—**स एष इति ।** ननु वृत्तिसमवायानुबन्धकरणयोरेव किं प्रयोजनमित्यत आह-**वृत्तीति ।** ननु प्रत्याहार एव किम्प्रयोजनक **इ**त्यत आह-**प्रत्याहार इति ।**

उद्द्योते—**फलान्तरमिति**-द्वितीयप्रयोजनमित्यर्थः । वार्तिककारः वर्णोपदेशस्येत्यादिः । **विवृत गुण संग्रहः**-विवृतत्वगुण समुच्चयः । तथा चाकारस्य विवृतत्वगुणबोधनार्थोऽपि वर्णोपदेश **इति** भावः । **उपलक्षणत्वेन वेति**-अनुबन्धशब्दस्येत्यादिः । अकारस्य विवृतगुणत्वसंग्रह **इ**त्यनुषज्यते । नन्वकारस्य विवृतत्वगुणस्यानुबन्धत्वमेव कुतो नेत्यत आह-**अनुबन्धत्वमिति । चेत्**-यदि । उच्यते तर्हीति **शेषः** । **तादर्थ्यं**-प्रत्याहारप्रयोजनकत्वम् । **अधिकरणव्युत्पत्त्या**-प्रत्याह्रियन्ते वर्णा एष्विति व्युत्पत्त्या । **अर्शेति**-प्रत्याहारोऽस्ति एषामिति व्युत्पत्तौ प्रत्याहारशब्दादित्यादिः । **वेति**-निष्पन्नेनेति शेषः । **समवायस्य**-वर्णगतक्रमविशेषस्य । **वृत्त्यर्थता**-शास्त्रप्रवृत्त्यर्थता ।

## ( १९ ) वर्णोपदेशप्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ इष्टबुद्ध्यर्थश्च ॥ * ॥

### ( भाष्यम् )

**इष्टबुद्ध्यर्थश्च वर्णानामुपदेशः—'इष्टान्वर्णान् भोत्स्यामहे' इति । नह्यनुपदिश्य वर्णानिष्टा वर्णाः शक्या विज्ञातुम् ॥**

**( प्रदीपः ) इष्टबुद्ध्यर्थश्चेति ।** सति ह्युपदेशे कलादिदोषरहिता **ये** वर्णा निर्दिष्टास्तथैव प्रयोक्तव्या इत्युक्तं भवति ॥

**( उद्द्योतः ) भोत्स्यामहे इति ।** अन्तर्भावितण्यर्थः । बोधयिष्यामह **इ**त्यर्थः ॥ एवं **विज्ञातु**मित्यस्य विज्ञापयितुमित्यर्थः ॥ **सति ह्युपदेशे इति ।** एवं च व्याकरणाध्येतॄणामक्षरसमाम्नाय**ेनैवा**वश्यकेनेष्टवर्णज्ञाने सिद्धे न तदर्थं मातृका पाठनीयेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—वार्तिककारः वर्णोपदेशस्य तृतीयप्रयोजनमाह-**इष्टेति । इष्टबुद्ध्यर्थः**—कलत्वादिदोषरहितेष्टवर्णबोध-

नार्थः। ननु तादृशेष्टवर्णा उपदेशमन्तरा बुबोधयिषिता इति कुतो ज्ञायते इत्यत आह—इष्टानिति। इतीति—वर्णोपदेशकव्यवहारादिति शेषः। नन्विष्टवर्णबोधनाय वर्णोपदेशस्य कुत आवश्यकतेत्यत आह—नेति। हि—यतः। विज्ञातुमिति—अत इति शेषः।

प्रदीपे—सति हि उपदेशे इति—यतः वर्णोपदेशे सतीत्यर्थः। अस्य इत्युक्तं भवतीत्यनेनान्वयः। निर्दिष्टा इति—शिक्षादिषु इत्यादिः। ते इति शेषः। भवतीति—अतः वर्णोपदेशः कृत इति शेषः।

उद्द्योते—अन्तरितिः—यत इत्यादिः। बोधेति—अत इत्यादिः। एवम्—अन्तर्भावितण्यर्थतया। वर्णोपदेशस्य किं प्रयोजनमिति प्रश्ने कृतस्य समाधानत्रयस्याशयमाह—एवञ्चेति। वर्णोपदेशस्य तादृशफलत्रयसत्त्वे चेत्यर्थः। तदर्थं—व्याकरणाध्येत्रर्थम्।

( २० आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः ॥ * ॥

( भाष्यम् )

इष्टबुद्ध्यर्थश्चेति चेदुदात्तानुदात्तस्वरितानुनासिकदीर्घप्लुतानामप्युपदेशः कर्तव्यः। एवंगुणा अपि हि वर्णा इष्यन्ते ॥

( प्रदीपः ) एकश्रुत्या हि सूत्राणां पाठात्सर्वेषामुदात्तादीनामुपदेशः कर्तव्य इत्याह—इष्टबुद्ध्यर्थश्चेति चेदिति।

( उद्द्योतः ) एकश्रुत्येति। त्रैस्वर्यपाठे तु द्वयोरेव कर्तव्यता वदेदित्यर्थः। तेषां लोकतः सिद्धौ तु दोषरहितानामपि तत एव सिद्धेरुपदेशवैयर्थ्यापत्तिरिति भावः॥ त्रैस्वर्येण पाठेपि अन्यतमपाठेऽन्यस्य कर्तव्यत्वाभिप्रायेण सर्वेषां ग्रहणमित्यन्ये॥

( तत्त्वालोकः ) भाष्ये—आक्षेपाय वार्त्तिककृतोपस्थापितं इष्टेति वार्त्तिकं व्याचष्टे—इष्टबुद्ध्यर्थश्चेति। उपदेशकैरित्यादिः। वर्णोपदेशः कृत इति शेषः। चेत्—यदि। अभ्युपगम्यते तर्हि तैः उदात्तत्वादिगुणकवर्णज्ञापनायेति शेषः। कुत इत्यत आह—एवं गुणा इति। एवम् ( उदात्तत्वादयः ) गुणा येषामिति व्युत्पत्तिः। हि—यतः। इष्यन्ते इति—ज्ञेयतयेत्यादिः। अत इति शेषः।

प्रदीपे—एकश्रुत्या हि—एकस्वरेणैव। एककाले इत्यादिः। सूत्रपाठाय स्वराश्रयणे विनिगमनाविरहादाह—सर्वेषामिति।

उद्द्योते—त्रैस्वर्यपाठे-त्रैस्वर्येण उदात्तानुदात्तस्वरितेति स्वरत्रयेण पाठे। सूत्राणामित्यादिः। एककाले स्वरत्रयेण सूत्राणां पाठासम्भवात् येनैकस्वरेण तेषां पाठः, तस्यैकस्वरस्योच्चारणादेव सिद्धतामभिप्रेत्याह—द्वयोरिति। येनैकस्वरेण सूत्राणां पाठः तदेकस्वरातिरिक्तयोः स्वरयोरित्यर्थः। तेषां—उदात्तादीनाम्। ज्ञानस्येति शेषः। दोषरहितानामिति—वर्णानामिति शेषः। ततः—लोकतः। ज्ञानस्येत्यादिः। उपदेशेति—वर्णोपदेशेत्यर्थः। सिद्धान्तमतमाह—त्रैस्वर्येणेति। सूत्राणामिति शेषः। अपिना एकस्वरेण सूत्राणां पाठे इत्यस्य संग्रहः। एककाले स्वरत्रयेण सूत्राणां पाठासम्भवात्, सूत्रपाठाय स्वराश्रयणे विनिगमनाविरहाच्चाह—अन्यतमपाठे इति। तत्स्वरत्रयान्यतमस्वरेण पाठे इत्यर्थः। सूत्राणामित्यादिः। अन्यस्य—यदा येन स्वरेण सूत्राणां पाठस्तदा तदतिरिक्तस्य। स्वरस्येति शेषः।

( २१ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ आकृत्युपदेशात्सिद्धम् ॥ * ॥

( भाष्यम् )

अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति। तथेवर्णाकृतिः। तथोवर्णाकृतिः॥

( प्रदीपः ) आकृत्युपदेशादिति। उपात्तोऽपि विशेषो नान्तरीयकत्वाज्जातिप्राधान्यविवक्षायां न विवक्ष्यत इत्यर्थः॥

( उद्द्योतः ) आकृत्युपदेशे किमित्यकारादिह्रस्वव्यक्तिविशेषोपादानं तदुपादाने व्यक्त्यन्तरग्रहणानापत्तिश्चेत्यत आह—उपात्त इति। नान्तरीयकत्वं च तं विना जातेरुच्चारयितुमशक्यत्वात्॥

( तत्त्वालोकः ) भाष्ये—वार्तिककारः समाधत्ते—आकृत्युपदेशादिति। वर्णगतजात्युपदेशादित्यर्थः। वर्णोपदेशेन विवक्षितादित्यादिः। उदात्तत्वादिगुणकवर्णानां बोधनमिति शेषः। सिद्धमिति—तथा च उदात्तादिज्ञापनाय तदुपदेशः कर्तव्यो न भवतीति शेषः। आकृतीति वार्तिकं विशेषतो व्याचष्टे—अवर्णेति। अवर्णोपदेशेनेत्यादिः। एवमग्रेऽपि। अवर्णकुलं—अवर्णसमूहम्। इवर्णाकृतिरिति—उपदिष्टा सर्वमिवर्णकुलं ग्रहीष्यतीति शेषः। एवम ग्रेऽपि।

प्रदीपे—उपात्त इति—जातिप्राधान्यविवक्षायां ( मुख्यतया वर्णगतजात्युपदेशविवक्षायां ) नान्तरीयकत्वात् ( अकारादिह्रस्वव्यक्तिविशेषोपादानं विना तद्गतजातेरुपदेष्टुमशक्यतया तदुपादानस्यावश्यकत्वात् ) उपात्तोऽपि ( गौणतयोपदिष्टोऽपि ) विशेषः ( अकारादिह्रस्वव्यक्तिविशेषः ) न विवक्ष्यते इत्यन्वयः। तथा च व्यक्तिविशेषोपादानसामर्थ्यात् उपात्तव्यक्तिविशेषभिन्नव्यक्तिग्रहणस्यानुपपत्तिः सम्भाव्यमाना परिहृतेति भावः।

उद्द्योते—आकृत्युपदेशे—वर्णगतजात्युपदेशे। विवक्षिते इति शेषः। किमिति—कुतो हेतोः। तदुपादाने—अकारादिह्रस्वव्यक्तिविशेषोपादाने। क्रियते इत्यादिः। कृते सति तदुपादान ( करण ) सामर्थ्यात् इति शेषः। व्यक्त्यन्तरेति—उपात्तव्यक्तिविशेषभिन्नव्यक्तीत्यर्थः। नान्तरीयकत्वमिति—तदुपादानस्येत्यादिः। तम्—अकारादिह्रस्वव्यक्तिविशेषम्।

( २२ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधः ॥ * ॥

( भाष्यम् )

आकृत्युपदेशात्सिद्धमिति चेत् संवृतादीनां प्रतिषेधो वक्तव्यः॥

के पुनः संवृतादयः ?॥

संवृतः, कलो, ध्मात, एणीकृतो, ऽम्बूकृतो, ऽर्धको, ग्रस्तो, निरस्तः, प्रगीत, उपगीतः, क्ष्विण्णो, रोमश, इति॥ अपर आह—

"ग्रस्तं निरस्तमवलम्बितं निर्हतमम्बूकृतं ध्मातमथो विकम्पितम्।

संदष्टमेणीकृतमर्धकं द्रुतं विकीर्णमेताः स्वरदोषभावनाः'' इति ॥

अतोऽन्ये व्यञ्जनदोषाः ॥

**( प्रदीपः ) संवृतादीनामिति ।** एकारादीनां संवृतत्वं दोषो नत्वकारस्य तस्य संवृतगुणत्वात्, तत्र संध्यक्षरेषु विवृततमेषूच्चार्येषु संवृतत्वं दोषः । **कलः** स्थानान्तरनिष्पन्नः काकलिकत्वेन प्रसिद्धः । **ध्मातः** श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव लक्ष्यते । **एणीकृतोऽविशिष्टः** किमयमोकार अथौकार इति यत्र संदेहः । **अम्बूकृतो** यो व्यक्तोऽप्यन्तर्मुख इव श्रूयते । **अर्धको** दीर्घोऽपि ह्रस्व इव । **ग्रस्तो** जिह्वामूले निगृहीतः, अव्यक्त इत्यपरे । **निरस्तो** निष्ठुरः । **प्रगीतः** सामवदुच्चारितः । **उपगीतः** समीपवर्णान्तरगीत्यानुरक्तः । **क्ष्विण्णः** कम्पमान इव । **रोमशो** गम्भीरः । **अवलम्बितो** वर्णान्तरासंभिन्नः । **निर्हतो** रूक्षः **सन्दष्टो** वर्धित इव । **विकीर्णो** वर्णान्तरे प्रसृतः । एकोऽप्यनेकनिर्भासीत्यपरे । **स्वरदोषभावना इति ।** स्वरदोषगोत्राणि । अनन्ता हि दोषा प्रशक्तिप्रमादकृताः ॥

**( उद्द्योतः ) संवृतादीनामिति** भाष्ये तादृशदोषसहितानामाकृतिग्रहणात्प्राप्तस्य ग्रहणस्य प्रतिषेधो वक्तव्य इत्यर्थः ॥ तदाह— **एकारादीनां संवृतत्वमिति ॥ अविशिष्ट इति ।** संश्लिष्टः संदिग्ध इति यावत् ॥ **ह्रस्व इवेति ।** तद्वत्कालसङ्कोचेनोच्चारित इत्यर्थः । **निष्ठुर इति ।** त्वरित इत्यन्ये ॥ **गोत्राणीति ।** स्वरदोषजातय इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-वर्णगतजात्युपदेशात् स्थानां उदात्तत्वादिगुणकवर्णानां शैयत्वेन ग्रहणमिव अनिष्टानां संवृतत्वादिदोषकवर्णानामपि तथा ग्रहणं प्राप्नोति । अतस्तस्य प्रतिषेधो वक्तव्य इत्याशयेन वार्त्तिककार आक्षिपति-**आकृतीति । सिद्धमिति**-उदात्तत्वादिगुणकवर्णानां ग्रहणमित्यादिः । **चेत्**-यदि । अभ्युपगम्यते तर्हीति शेषः । **संवृतादीनाम्**-संवृतत्वादिदोषसहितवर्णानाम् । वर्णगतजात्युपदेशात् प्राप्तस्य ग्रहणस्येति शेषः । संवृतत्वादिदोषवद्वर्णजिज्ञासया पृच्छति-**के पुनरिति ।** नाम्ना संवृतादीन् निर्दिशन्नुत्तरयति-**संवृत इति । इतीति**-संवृतादिपदेन बोध्या इति शेषः । प्रतिपाद्यभेदात् प्रतिपादकभेदविवक्षयाऽऽह-**अपर इति । इतीति**-ग्रस्तत्वादिदोषसहितवर्णानिति शेषः । **अतः**-संवृतादितः ।

प्रदीपे—**एकारादीनामिति**-आकारादीनामिति भावः । **अकारस्येति**-संवृतत्वं दोष इति शेषः । कुत इत्यत आह-**तस्येति ।** अकारस्येत्यर्थः । **तत्र**-एकारादिषु । **स्थानान्तरेति**-स्वस्थानभिन्नस्थानेत्यर्थः । **ह्रस्व इति**-य इत्यादिः । लक्ष्यते इति स इति शेषः । **अविशिष्टः**-भेदक विशेषरहितः । अत एवाह-**किमिति । अथौकारः**-अथवा औकारः । **सन्देह इति**-स इति शेषः । **श्रूयते इति**-स इति शेषः । **दीर्घ इति** य इत्यादिः । **इवेति**-स इति शेषः । **कम्पेति**-य इत्यादिः । **इवेति**-स इति शेषः । **वर्धित इति**-य इत्यादिः । **इवेति-स इति** शेषः । **एकोऽपीति**-य इत्यादिः । सन्निति शेषः । **निर्भासीति**-स इति शेषः । **हि**-यतः ।

उद्द्योते-**तादृशेति**-संवृतत्वादीत्यर्थः । संवृतत्वगुणकह्रस्वावर्णग्रहणस्य प्रतिषेध्यताया व्यवच्छेदायाह-**दोषेति । संहितानामिति**-वर्णानामिति शेषः । **आकृतिग्रहणात्**-वर्णगतजात्युपदेशकरणात् । **तदाह**-तदाशयेनाह । **तद्वत्**-ह्रस्ववत् । **जातयः**-समूहाः ।

( सिद्धान्तिभाष्यम् )

नैष दोषः ॥

( २३ समाधानवार्तिकम् ॥ ७ ॥ )

## [ ॥ * ॥ गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिः ॥ * ॥ ]

( भाष्यम् )

गर्गादिबिदादिपाठात्संवृतादीनां निवृत्तिर्भविष्यति ॥

**( उद्द्योतः )** भाष्ये **गर्गादिबिदादिपाठादिति ।** संवृतादिदोषरहितानामेव तत्र पाठादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये-उत्तरयति-**नेति । एषः**-वर्णगतजात्युपदेशप्रयुक्तसंवृतत्वादिदोषवद्वर्णग्रहणप्रतिषेधवक्तव्यतारूपः । कुत इत्याकांक्षायां वार्त्तिककारः समाधत्ते-**संवृतादीनां**-संवृतत्वादिदोषसहितवर्णानाम् । **भविष्यतीति**-अत इति शेषः ।

उद्द्योते-**संवृतादिदोषरहितानां**-संवृतत्वादिदोषरहितवर्णघटितगर्गादिबिदादीनाम् । **तत्र**-गर्गादिबिदादिगणयोः । **पाठात्**-पाठसामर्थ्यात् ।

( आक्षेपभाष्यम् )

अस्त्यन्यद् गर्गादिबिदादिपाठे प्रयोजनम् ॥ किम् ? ॥

समुदायानां साधुत्वं यथा स्यादिति ॥

**( प्रदीपः ) अस्त्यन्यदिति ।** गर्ग इत्यादिनैव संनिवेशेन गर्गादीनां साधुत्वं यथा स्याद् गार्ग्य इत्यादीनां मा भूत् । ततश्च तद्गतानामेवाकारादीनां दोषनिवृत्तिः कृता स्यात्, न तु समुदायान्तरस्थानाम् । यद्यपि प्रत्ययविध्यर्थो गर्गादीनां पाठस्तथापि प्रसङ्गात्समुदायसाधुत्वार्थोपि भवति ॥

**( उद्द्योतः ) साधुत्वमिति ।** निवृत्तकलादिदोषवत्त्वमित्यर्थः ॥ **गार्ग्य इत्यादीनामिति ।** तत्रत्यानां कलादिदोषनिवृत्तिर्न स्यादित्यर्थः । तदाह—**ततश्चेति ॥** परे तु **समुदायानाम**त्प्रकृतिकयञन्तसमुदायानां साधुत्वं यथा स्यादित्यर्थं पाठश्चरितार्थो न कलादिदोषं निवर्तयेदित्येव भाष्यार्थः । **पाठश्चैव विशेष्यत** इत्यग्रिमभाष्यस्वरसादित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये-आक्षिपति-**अस्तीति । अन्यत्**-संवृतत्वादिदोषवद्वर्णनिवृत्तिभिन्नम् । गर्गादिबिदादिगणयोरिति शेषः । **गर्गादिबिदादिपाठे**-संवृतत्वादिदोषरहितवर्णघटितगर्गादिबिदादिपाठस्य, गर्गादिबिदादिपाठस्य वा । ननु तत्र ( तादृश ) गर्गादिबिदादिपाठस्य सदोषवर्णनिवृत्तिभिन्नं किं प्रयोजनमित्याशयेन पृच्छति-**किमिति ।** अन्यत् तस्य प्रयोजनमिति शेषः । उत्तरयति-**समुदायानामिति ।** गर्गादिबिदादिसमुदायानामित्यर्थः । **साधुत्वं**-कलत्वादिदोषरहितवर्णघटिततावत्त्वम्, यञादिप्रत्ययप्रकृतितावत्त्वं वा । **स्यादिति**-अत्र ( तादृश ) गर्गादिबिदादिपाठस्य प्रयोजनमिति शेषः ।

प्रदीपे-**सन्निवेशेन**-आनुपूर्व्या । **मा भूत्**-न भवतु । साधुत्वं ( कलत्वादिदोषरहितवर्णघटिततावत्त्वम् ) इत्यादिः । **इति तत्र** तादृशगर्गादिपाठस्य प्रयोजनमिति शेषः । ननु कुतस्तस्य तत्प्रयोजनमुपपद्यते इत्यत आह-**तत इति ।** ( तत्र ) तादृशगर्गादिपाठादित्यर्थः । यत इत्यादिः । **तद्गतानां**-गर्ग इत्यादिघटकानां । **दोषेति**-कलत्वादीत्यादिः । गार्ग्यादिसमुदायानां तत्र पाठाभावादाह-**न त्विति । समुदायान्तरस्थानां**-गार्ग्य इत्यादिघटकानाम् । अत इति शेषः । **यद्यपीति**-गर्गादिभ्यो यञिति सूत्रेण गर्गादिशब्देभ्य इति शेषः ।

**गर्गेति**—तत्रेत्यादिः। **समुदायसाधुत्वेति**—गर्ग इत्यादिसमुदायकलत्वादिदोषरहितवर्णघटितत्वेत्यर्थः। स इत्यादिः।

उद्द्योते-**निवृत्तकलादिदोषवत्त्वं**-कलत्वादिदोषरहितवर्णघटितत्वम्। साधुत्वस्यैदृशार्थकरणेन गार्ग्य इत्यादीनां साधुत्वस्य सत्वेऽपि नासङ्गतिः, न वा प्रकृतानुकूलता तस्येति भावः। **तत्रत्यानां**—गार्ग्य इत्यादिस्थानाम्। अकारादीनामिति शेषः। **कलादीति**—कलत्वादीत्यर्थः। **स्यात्**-भवतु। **तदाह**—तदाशयेनाह। कैयटोक्तभाष्यार्थस्यासाङ्गत्यं सूचयन् स्वमतेन भाष्यार्थमाह-**परे त्विति। एतदिति**—गर्गादीत्यर्थः। **चरितार्थ इति**-सामर्थ्याभावादिति शेषः। **कलादीति**-कलत्वादीत्यर्थः।

### ( समाधानैकदेशिभाष्यम् )

## एवं तर्ह्यष्टादशधा भिन्नां निवृत्तकलादिकामवर्णस्य प्रत्यापत्तिं वक्ष्यामि ॥

**( प्रदीपः ) निवृत्तकलादिकामिति।** अकारस्य संवृतत्वान्निवृत्तसंवृतत्वादिकामिति नोक्तम्। अकारस्य निदर्शनार्थत्वात्सर्ववर्णानां शास्त्रान्ते प्रत्यापत्तिरित्यर्थः॥

**( उद्द्योतः ) निदर्शनार्थत्वादिति।** तत्रावर्णस्य **अ अ** इति कृतैव, तद्वत्तदनन्तरमन्येषामपि करिष्यामीति भावः॥ एतेनावर्णप्रत्यापत्तेः कृतत्वाद्वक्ष्यामीत्यनुपपन्नमिति परास्तम्॥

**( तत्त्वालोकः )** भाष्ये-एकदेशी समाधत्ते-**एवं तर्हीति।** वर्णगतजात्युपदेशात् प्राप्तस्य संवृतत्वादिदोषवद्वर्णग्रहणस्य प्रतिषेधे कर्तव्यत्वेन प्राप्ते इत्यर्थः। वर्णसमाम्नाये निर्दिष्टानामकारादिवर्णानां प्रत्येकमष्टादश भेदाः सन्तीत्याशयेनाह—अष्टादशधेति। **निवृत्तकलादिकां**-कलत्वादिदोषनिवृत्तिसहितां (शुद्धां)। **प्रत्यापत्तिं**-प्रतिविधिं। **वक्ष्यामि**—करिष्यामि।

प्रदीपे—**ननु** संवृतादीनामिति भाष्यानुसारेण निवृत्तसंवृतत्वादिकामिति कुतो नावादीत्यत आह—**अकारस्येति। संवृतत्वात्**—संवृतत्वगुणकत्वात्। नन्ववर्णमात्रताद्दृशप्रत्यापत्तिकरणात् सर्वत्र निर्वाहासम्भवेन तदतिरिक्तवर्णताद्दृशप्रत्यापत्तिकरणाकथनान्न्यूनताऽपद्यते इत्यत आह-**अकारस्येति।** अवर्णनिर्देशस्येत्यर्थः। **निदर्शनार्थत्वात्**-दिग्दर्शनार्थत्वात् अष्टादशधाभिन्नामित्युक्तिसत्त्वेऽपि अवर्णपदं वर्णमात्रस्योपलक्षणं, न त्वकारादिचतुष्टयमात्रस्येत्याशयेनाह-**सर्ववर्णानामिति। शास्त्रान्ते**-अष्टाध्याय्यन्ते। **प्रत्यापत्तिरिति**-करिष्यते, तथा च कलत्वादिदोषसहितानकारादीनुद्दिश्य शुद्धा अकारादयो विधास्यन्ते इति शेषः।

उद्द्योते-**तत्र**-वर्णानां मध्ये, अष्टाध्याय्यन्ते वा। **इति**-इत्यनेन। ताद्दृशप्रत्यापत्तिरिति शेषः। **तद्वत्**-अवर्णस्येव। **तदनन्तरं**-अ अ इत्यनन्तरम्। **अन्येषामपि**-अवर्णभिन्नवर्णादीनामपि। ताद्दृशप्रत्यापत्तिमिति शेषः। **एतेन**-अवर्णोपलक्षितवर्णादीनां ताद्दृशप्रत्यापत्तेः करिष्यमाणत्वेन। **इति**-इति कथनम्।

### ( आक्षेपभाष्यम् )

## सा तर्हि वक्तव्या ॥

**( उद्द्योतः )** भाष्ये—**सा तर्हि वक्तव्येति।** तथा च प्रत्यापत्त्याश्रयणे गौरवमिति भावः॥

**( तत्त्वालोकः )** भाष्ये-**सा**-ताद्दृश प्रत्यापत्तिः। सर्ववर्णानां शास्त्रान्ते इत्यादिः। **तर्हि**-वर्णानां संवृतत्वादिदोषनिवृत्तये सर्ववर्णानां ताद्दृशप्रत्यापत्तेराश्रयणे। **वक्तव्या**-कर्तव्या। भवतीति शेषः।

उद्द्योते-**तथा च**-सर्ववर्णानां शास्त्रान्ते ताद्दृशप्रत्यापत्तेः कर्तव्यत्वे च। वर्णगतसंवृतत्वादिदोषनिवृत्तये सर्ववर्णानामिति शेषः।

### ( २४ एकदेशिसमाधानवार्तिकम् ॥ ८ ॥ )

## ॥ * लिङ्गार्था तु प्रत्यापत्तिः ॥ * ॥

### ( भाष्यम् )

## लिङ्गार्था सा तर्हि भवति ॥

**( उद्द्योतः ) लिङ्गार्था त्विति** ॥ अनुबन्धस्थानीयतत्तद्धात्वादिगतकलादिलिङ्गनिवृत्यर्थेत्यर्थः॥ नाकृतिनिर्देशप्रयुक्तदोषपरिहारमात्रप्रयोजना प्रत्यापत्तिः, किं तु सर्वानुबन्धेत्संज्ञाशास्त्राद्यकरणफलिकापीति न गौरवमिति भावः॥

**( तत्त्वालोकः )** भाष्ये-यत्फलाय धात्वादिषु अनुबन्धाः पठ्यन्ते, तत्फलाय तत्रानुबन्धानपठित्वा धात्वादिघटकवर्णा एव कलत्वादिदोषसहिताः पठिष्यन्ते, तेन वर्णगतजात्युपदेशेन च धात्वादिषु अन्यत्र च प्राप्तस्य कलत्वादिदोषसहितवर्णानां ग्रहणस्य निवृत्तिः सर्ववर्णानां शास्त्रान्ते ताद्दृशप्रत्यापत्तिकरणेन करिष्यते। तथा च अनुबन्धेत्संज्ञालोपशास्त्राद्यपि न कर्तव्यं भवतीति सर्ववर्णानां शास्त्रान्ते ताद्दृशप्रत्यापत्तिकरणे न गौरवमापद्यते इत्याशयेन वार्त्तिककारः समाधत्ते-**लिङ्गेति। लिङ्गार्था**-लिङ्गार्थाऽपि। **सा**-ताद्दृशप्रत्यापत्तिः। सर्ववर्णानां शास्त्रान्ते कृतेत्यादिः। तु शब्दार्थमाह-**तर्हीति।** वर्णगतजात्युपदेशप्राप्तसंवृतत्वादिदोषवद्वर्णग्रहणनिवृत्तये सर्ववर्णानां शास्त्रान्ते ताद्दृशप्रत्यापत्तेराश्रयणे इत्यर्थः। **भवति**-भविष्यति। तथा च ताद्दृशप्रत्यापत्तेः ताद्दृशफलद्वयवत्त्वान्न तत्र गौरवमित्यर्थः।

उद्द्योते-**अनुबन्धेति**-(तत्तद्धात्वादिषु अनुबन्धपाठस्य फलाय) अनुबन्धस्थानीयतया तत्तद्धात्वादि ( घटकवर्णेषु ) गतानां कल (त्वा)-दिलिङ्गानां निवृत्यर्थापीत्यर्थः। **नाकृतीति**—न वर्णगतजातीत्यर्थः। तथा चेत्यादिः। **दोषेति**-संवृतत्वादिदोषवद्वर्णग्रहणापत्तिरूपदूषणेत्यर्थः। **अपि**—ना धात्वादिघटकवर्णगतकलत्वादिदोषनिवृत्तिफलिकायाः संग्रहः। **इति**—इति हेतोः। तत्रेति शेषः। **भाव इति**—वार्त्तिककृत इत्यादिः।

### ( आक्षेपभाष्यम् )

## तत्तर्हि वक्तव्यम् ॥

**( उद्द्योतः )** तदेव विवृणोति—**तत्तर्हीत्यादिना।** धात्वादिगतकलादिलिङ्गमित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये-प्रत्यापत्तिपक्षे अनुबन्धानाम् इत्संज्ञालोपशास्त्रादीनाञ्च कर्तव्यत्वाभावान्न गौरवमिति वार्त्तिककाराशयांशमजानन् शङ्कते-**तदिति। तर्हि**-प्रत्यापत्तिपक्षे गौरववारणाय उक्तरीत्या ताद्दृशप्रत्यापत्तेः ताद्दृशफलद्वयवत्त्वाश्रयणे। **वक्तव्यमिति**-भवतीति शेषः। तथा च तत्र गौरवं तदवस्थमेवेति भावः।

उद्द्योते-**तदेव**-उक्तभाष्यानुसारमेव। तस्य वक्तव्यमिति शेषः। **विवृणोति**-आक्षिपति। तत्पदार्थमाह-**धात्वादीति।** धात्वादि( घटकवर्ण )गततया कलत्वादि ( दूषणरूप ) लिङ्गमित्यर्थः।

### ( समाधानभाष्यम् )

## यद्यप्येतदुच्यते। अथवैतर्हि अनेकमनुबन्धशतं नोच्चार्यमित्संज्ञा च न वक्तव्या, लोपश्च न वक्तव्यः। यदनुबन्धैः क्रियते तत्कलादिभिः करिष्यते ॥

**( प्रदीपः ) यदनुबन्धैरिति।** यथा स्वरितत्वमधिकारार्थमेवमात्मनेपदार्थं कलादिकं प्रतिज्ञाय **कलाद्वात्मनेपद**मित्यादि करिष्यते न त्वनुदात्तङित इत्यादि॥ ननु चानुबन्धाभावे कथमणादिकाः संज्ञा

उपपद्यन्ते ॥ आदिरन्त्येनेत्यत्रादिः कलैः सहेत्युक्त्वा अ उ इत्यादिकाः संज्ञाः करिष्यन्ते स्वरसन्धिश्चासन्देहाय न करिष्यते इत्यदोषः ॥

**( उद्द्योतः )** अथवैतर्हीत्यस्य तथापीत्यर्थः ॥ **अनेकमनुबन्धशतमिति ।** एकैकस्यानुबन्धस्य शतश उच्चारणं तादृशाश्चानेक उच्चारणीया इत्यर्थः ॥ **यथेति ।** एधस्यादयोऽनुदात्तङितः कलदोषयुक्ताः पाठ्याः । स्वरितञितश्च ध्माताः । तत्र **'कलादात्मनेपदम्' 'ध्मातात्कर्तृगामिनि क्रियाफले'** इति सूत्रे कार्ये । एवं टकितौ कलध्मातौ पठित्वाद्यन्तौ कलध्माताविति पाठ्यम् । एवं ड्वितोर्द्धकदोषयुक्तान् पठित्वा **अर्धकात् क्त्रिरिति । ड्वितश्च** ग्रस्तान्पठित्वा **ग्रस्तादथुच्** इत्यादि बोध्यम् । एते च कलादयः प्रक्रियादशायामेव । प्रयोगे तु शुद्ध एव, शास्त्रान्ते प्रत्यापत्तिकरणात् । **आदिः कलैः सहेति** पाठः ॥

**( तत्त्वालोकः )** भाष्ये-उक्तवार्त्तिककाराशयेन समाधत्ते-**यद्यपीति । एतत्-**धात्वादिघटकवर्णगततया कलत्वादिदूषणरूपलिङ्गम् । **उच्यते-**वक्तव्यं भवति । **अनेकमिति-**यतः प्रत्यापत्तिपक्षे इत्यादिः । **उच्चार्यमिति-**भवतीति शेषः । एवमग्रेऽपि । अतः तत्र पक्षे न गौरवमिति भावः । नन्वेवं तत्र तत्रानुबन्धकरणफलं कथमुपपद्येतेत्यत आह-**यदिति ।** फलं तत्र तत्रेति शेषः । **क्रियते-**प्राप्यते । पठितैरित्यादिः । एवमग्रेऽपि । **तदिति-**फलं तत्र तत्रेति शेषः । **करिष्यते-**प्राप्स्यते ।

प्रदीपे—**अधिकारार्थमिति-**प्रतीज्ञायते पाणिनिनेति शेषः । **इत्यादीति-**करिष्यते इति शेषः । **अनुबन्धेति-**अ इ उणित्यादावित्यादिः । **संज्ञाः-**प्रत्याहाराः । समाधत्ते-**आदिरिति । उक्त्वेति-**अणित्यादिप्रत्याहारस्थाने इति शेषः । ननु स्वरसन्धेः प्राप्त्या कथम् अ उ इत्यादिकाः प्रत्याहारा निष्पत्स्यन्ते इत्यत आह-**स्वरसन्धिरिति । असन्देहायेति-**संहिताया अविवक्षयेति शेषः ।

उद्द्योते—नन्वनेकमनुबन्धशतमित्यत्र अनेकपदोक्तार्थस्य शतपदेनोक्त्या पौनरुक्त्यमापद्यते इत्यत आह-**एकैकस्येति । तादृशा इति-**तादृशाः ( शतश उच्चार्या अनुबन्धाः ) अनेके उच्चारणीयाश्चेत्यन्वयः । अत एव नेत्यस्योभयत्र सम्बन्धः । प्रत्यापत्तिपक्षानङ्गीकारे एव तेषां वक्तव्यतया गौरवं, न तु प्रत्यापत्तिपक्षे इति भावः । धर्मिकल्पनातो धर्मकल्पना न्याय्येति **न्यायेन** एधस्यादिषु अनुदात्तङकाराद्यनुबन्धकरणापेक्षया कृतानां एकारैकारादिव्यक्तीनां कलत्वादिदोषसाहित्येन पठनमेव वरमित्याशयेनाह-**एधेति । ध्माताः-**ध्मातत्वदोषयुक्ताः । पाठ्या इति शेषः । **तत्र-**अनुदात्तङित आत्मनेपदम्, स्वरितञितः कर्तृगामिनि क्रियाफले इति सूत्रयोः स्थाने । **कलध्मातौ-**कलत्वध्मातत्वदोषसहितौ । **पठित्वेति-**आद्यन्तौ टकितावित्यत्रेति शेषः । **अर्धकादिति-**ड्वितः क्त्रिरित्यत्रेत्यादिः । **इतीति-**पाठ्यमिति शेषः । **ग्रस्तान्-**ग्रस्तत्वदोषसहितान् । **पठित्वेति-**ट्वितोऽथुजित्यत्रेति शेषः । **आदिना-**डुकृञित्यस्य स्थाने "कृ" इति द्विदोषस्य, ढ्रलोप इत्यादौ अण इत्यादेः स्थाने अ ओरित्यादेश्च संग्रहः । **एते चेति-**यथा यथान्यासपक्षे अकारस्य विवृतता प्रक्रियामात्रविषया न तु प्रयोगसमवायिनी तथेत्यादिः । कुत एवमित्यत आह-**शास्त्रान्ते इति । करणादिति-**अ अ इत्यस्यैव पठितानां सकलशुद्धवर्णानामपि अनुबन्धादिनेव कलादिनाऽपि शास्त्रीयसकलकार्यनिर्वाहाय सम्पूर्णमष्टाध्याय्यीं प्रत्येवासिद्धत्वादिति शेषः ।

**( आक्षेपभाष्यम् )**

**सिद्ध्यत्येवम् । अपाणिनीयं तु भवति ॥**

**( उद्द्योतः )** भाष्ये—**अपाणिनीयमिति ।** वर्णसमाम्नायसमर्थनाय प्रवृत्तस्य एकदोषपरिहाराय सकलशास्त्रस्य व्याख्यानसापेक्षगुरुप्रकारेणान्यथाकरणे **वृश्चिकभियेत्या**दिन्याय आपततीति भावः ॥

**( तत्त्वालोकः )** भाष्ये-प्रत्यापत्तिपक्षे दोषमाह-**सिद्ध्यतीति-**यद्यपीत्यादिः । **एवं-**कलत्वादिदोषसहितवर्णघटिततया धात्वादीनां पाठे तथा शास्त्रान्ते सकलवर्णानां शुद्धानां पाठे । शास्त्रीयसकलकार्यमिति शेषः । **अपाणिनीयमिति-**तथापि कलत्वादिदोषसहितवर्णपठनम्, तथा शास्त्रान्ते शुद्धसकलवर्णपठनमित्यादिः । तस्य पुण्यजनकतानोपपद्येतेति भावः ।

उद्द्योते-**समर्थनायेति-**वर्णोपदेशप्रयोजनकथने इति शेषः । **एकदोषेति-**उदात्तत्वादिगुणकवर्णबोधनप्रयोजनकवर्णगतजात्युपदेशप्रयुक्तसंवृतत्वादिदोषवद्वर्णग्रहणप्रतिषेधवक्तव्यत्वरूपेत्यादिः । **आदिना-**"पलायितस्य सर्पमुखे पातः" इत्यस्य संग्रहः ।

**( सिद्धान्तिभाष्यम् )**

**यथान्यासमेवास्तु ॥**

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम् ॐआकृत्युपदेशात्सिद्धमिति चेत्संवृतादीनां प्रतिषेधःॐइति ॥**

**( समाधानभाष्यम् )**

**परिहृतमेतत् ,—गर्गादिबिदादिपाठात् संवृतादीनां निवृत्तिर्भविष्यति—इति ॥**

**( समाधानबाधकभाष्यम् )**

**ननु चान्यद् गर्गादिबिदादिपाठे प्रयोजनमुक्तम् । किम् ? । समुदायानां साधुत्वं यथा स्यादिति ॥**

**( समाधानसाधकभाष्यम् )**

**एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, कलादयश्च निवर्त्यन्ते ॥**

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ।**

**लभ्यमित्याह ॥**

**कथम् ? ॥**

**द्विगता अपि हेतवो भवन्ति । तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिता इति । तथा वाक्यान्यपि द्विष्ठानि भवन्ति—श्वेतो धावति, अलम्बुसानां यातेति ॥**

**( प्रदीपः )** **उभयमिति ।** यथाभूता गर्गादिस्था अकारादयस्तथाभूता एव सर्वत्र प्रयोक्तव्या इति प्रतिपाद्यते इत्यर्थः ॥ **द्विगता इति ।** द्वावर्थौ गताः प्रयोजनद्वयसंपादका इत्यर्थः ॥ **तथा वाक्यान्यपीति ।** शब्दस्याप्यर्थवद् द्विगतत्वमित्यर्थः ॥

**( उद्द्योतः )** नन्वपठितेषु दोषनिवृत्तिर्न कृता स्यादत आह—**यथाभूता इति ।** गर्गाद्यकारादिषु एकरूपेण पठितेषु तज्जातीया एव ते सर्वत्र साधव इत्यनुमातुं शक्यत इति भावः ॥ **भाष्ये पाठश्चैवेति विशेष्यते** तत्तत्प्रत्ययवैशिष्ट्येन बोध्यते इत्यर्थः ॥ **द्विष्ठानीत्यस्य** द्वयोरर्थयो स्तिष्ठन्तीत्यर्थं इत्याह—**शब्दस्यापीति ।** तत्र कः कीदृशो धावतीति प्रश्ने—श्वेत इति उत्तरम् । श्वा इत इति च्छेदेन क इत्यस्योत्तरम्, श्वेत इति च्छेदेन कीदृश इत्यस्योत्तरमिदम् ॥ एवं केषां जनपदानां गन्ता को वा समर्थ इति प्रश्ने उत्तरम्—**अलमित्यादि ।** अलंबुसा देशविशेषाः । बुसानां पलालवर्णानां याता प्राप्तिमान् अलं समर्थ इति चार्थः । **पातेति** क्वचित्पाठः । पा रक्षणे इत्यस्य रूपम् ॥

**( तत्त्वालोकः )** भाष्ये-समाधत्ते-**यथेति ।** ननु तर्हीत्यादिः । आक्षेप्ता यथान्यास पक्षेदत्तं दोषं स्मारयति-**ननु चेति** । समाधाता

तत्र कृतं परिहारं स्मारयति-**परिहृतमिति ।** **एतत्**-वर्णगतजात्युपदेशप्रयुक्तसंवृतत्वादिदोषवद्वर्णग्रहणप्रतिषेधवक्तव्यत्वरूपदूषणम् । **इति**-इत्यनेन । आवेता कृतां तत्परिहारानुपपत्तिं स्मारयति-**ननु चेति ।** समाधत्ते-**एवमिति । अनेन**-गर्गादिबिदादिगणयोः संवृतत्वादिदोषरहितवर्णघटितगर्गादिबिदादिपाठेन । ननु किमुभयमनेन क्रियते इत्यत आह-**पाठ इति ।** पाठोऽस्ति अस्येति व्युत्पत्तौ अर्श आद्यजित्यनेनाचि निष्पन्नोऽयं पाठशब्दः । अत एवास्य गर्गादिबिदादिरित्यर्थः । **एव**-अपि । **कलादय इति**-कलत्वादय इत्यर्थः । गर्गादिबिदादिघटकाकारादिवर्णस्थिता इत्यादिः । **च**-चापि । पृच्छति-**कथमिति ।** उत्तरमनुवदति तटस्थः-**लभ्यमित्याहेति ।** ( एकेनापि यत्नेनोभयं ) लभ्यमिति ( सिद्धान्ती ) वदतीत्यर्थः । पृच्छति-**कथमिति । समाधत्ते-द्विगता इति ।** यत इत्यादिः । **भवन्तीति**-अत इति शेषः । उदाहरति-**तद्यथेति । इतीति**-अत्र आम्रमूले जलदानस्य आम्रसेकपितृतृप्तिरूपोभयप्रयोजनसम्पादकतेति भावः । वाक्यान्याह-**श्वेत इति ।**

प्रदीपे—**एवेति**-अकारादय इति शेषः । **अर्थ इति**-कलादयश्च निवर्त्यन्ते इत्यस्येत्यादिः । **गता इति-इति** व्युत्पत्तिरिति शेषः ।

उद्द्योते—**अपठितेषु**-अत्र पठितशब्दघटकवर्णेषु । गर्गादिबिदादिगणयोरित्यादिः । **एकरूपेण**-शुद्धरूपेण । **तज्जातीयाः**-गर्गादिघटकाकारादि सदृशाः । सन्त्वित्यादिः । **ते**-अकारादयः । **तत्र**-वाक्येषु । **श्वेत इति**-धावतीति शेषः । **श्वेति**-तत्रेत्यादिः । **उत्तरमिति**-श्वेतीति शेषः । **इदं**-श्वेत इति । **अलम्बुसा इति**-तत्रेत्यादिः **विशेषा इति**-इति व्याख्यानेन तत्प्रथमप्रश्नोत्तरं जातमिति शेषः । **इति चेति**-व्याख्यानेन तद्द्वितीयप्रश्नोत्तरं जातमितीति शेषः ।

**( भाष्यम् )**

**अथ वा इदं तावदयं प्रष्टव्यः—केमे संवृतादयः श्रूयेरन्निति ? ॥**

**आगमेषु ।**

**आगमाः शुद्धाः पठ्यन्ते ॥**

**विकारेषु तर्हि ॥**

**विकारा अपि शुद्धाः पठ्यन्ते ॥**

**प्रत्ययेषु तर्हि ॥**

**प्रत्यया अपि शुद्धाः पठ्यन्ते ॥**

**धातुषु तर्हि ॥**

**धातवोऽपि शुद्धाः पठ्यन्ते ॥**

**प्रातिपदिकेषु तर्हि ॥**

**प्रातिपदिकान्यपि शुद्धानि पठ्यन्ते ॥**

**यानि तर्हि ग्रहणानि प्रातिपदिकानि ॥**

**एतेषामपि स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः । शशः षष इति मा भूत् । पलाशः पलाष इति मा भूत् । मञ्चको मञ्चक इति मा भूत् ॥**

**'आगमाश्च विकाराश्च प्रत्ययाः सह धातुभिः ।**
**उच्चार्यन्ते ततस्तेषु नेमे प्राप्ताः कलादयः' ॥ १ ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥**

**( प्रदीपः ) अथ वेति ।** केवलानां वर्णानां लोके प्रयोगाभावाद्धात्वादीनां च शुद्धानां पाठात् तत्स्थत्वाच्च वर्णानां न कश्चिद्दोषः ॥ **यानि तर्हीति ।** डित्थादीनि ॥ **एतेषामपीति ।** शिष्टप्रयुक्तत्वेनोणादीनां पृषोदरादीनां च साधुत्वाभ्यनुज्ञानात्सर्वेषामत्र सङ्ग्रहः सिद्धः ॥

**इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ १ ॥**

**( उद्द्योतः ) केवलानामिति ।** एवं च कलादिदोषाणां न कुत्रापि प्रसक्तिरिति भावः ॥ भाष्ये **यानि तर्हि ग्रहणानीति ।** कार्यविधावकृतानुवादानीत्यर्थः ॥ **उपदेश इति । ङ्याप्प्रातिपदिका**दित्यादावनुवादरूपेण ग्रहणमित्यर्थः ॥ एतेनो**देशश्च प्रातिपदिकानां नोपदेश** इत्यादेश्च इति सूत्रस्थभाष्यविरोध इत्यपास्तम् ॥ नन्वेवमतिप्रसङ्गः स्यादत आह—**शिष्टेति ।** एवं **संवृतादीनां प्रतिषेध** इत्यस्मिन् प्रत्याख्याते **इष्टबुद्ध्यर्थ** इत्यपि प्रत्याख्यातप्रायमेवेत्यलम् ॥

**इति शिवभट्टसुतसतीगर्भसंभवनागोजीभट्टेन कृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पाद आद्यमाह्निकम् ॥**

**( तत्त्वालोकः )** भाष्ये—वर्णोपदेशस्य वृत्तिसमवायार्थताऽनुबन्धकरणार्थते एव, न तु इष्टबुद्ध्यर्थतेत्याशयेनेष्टबुद्धेरन्यथोपपादनायाह-**अथवेति । तावदिति**-वाक्यालङ्कारे । **अयं**-वर्णोपदेशप्रयोजनवादिनो मम प्रतिपक्षी । इदमित्यनेन निर्देश्यमाह-**क्वेति । इमे**-येषां संवृतत्वादीनां निवृत्तये मया ( वर्णोपदेशप्रयोजनवादिना ) यत्नो विधेयः ते अमी । **संवृतादयः**-संवृतत्वादयः । प्रतिपक्षी-उत्तरयति-**आगमेष्विति ।** इमे संवृतत्वादयः श्रूयेरन्नित्यनुषज्यते । एवमग्रेऽपि । वर्णोपदेश प्रयोजनवादी उत्तरयति-**आगमा इति ।** तत्रैषां संवृतत्वादीनां श्रवणस्य वारणायेत्यादिः । एवमग्रेऽपि । **प्रातिपदिकानीति**-तेषु **इमे** संवृतत्वादयः श्रूयेरन्निति शेषः । स उत्तरयति—**एतेषामिति ।** अग्रहणप्रातिपदिकानामित्यर्थः । किमर्थं इत्यत आह-**शश इति । भूदिति**-इत्यर्थ इति शेषः । एवमग्रेऽपि । उपसंहरति—**आगमाश्चेति । उच्चार्यन्ते इति**-शुद्धा इत्यादिः । **ततः**-आगमादीनां शुद्धानामुच्चारणात् । **तेषु**-आगमादिषु ।

प्रदीपे—**तत्स्थत्वात्**-धात्वादिस्थत्वात् । **दोष इति**-कलत्वादिरूप इत्यादिः । कश्चित् श्रूयेतेति शेषः । **उणादीनां**-उणादिनिष्पन्नानाम् । **सर्वेषामिति**-साधुशब्दानामेवेति शेषः । **अत्र**-अनुवादरूपेण ग्रहणे । अत्र निमित्तार्थे सप्तमी ।

उद्द्योते—**एवञ्च**-शुद्धानां धात्वादीनां पाठे च । **दोषाणामिति**-श्रवणस्येति शेषः । **एतेन**-अत्रोपदेशशब्दस्य "अनुवादरूपेण ग्रहणमित्यर्थकरणेन । **एवं**-कार्यविधावकृतानुवादानां शब्दानाम् अनुवादरूपेण ग्रहणे कर्तव्ये । असाधुशब्देष्वपि अनुवादरूपेण ग्रहणस्येति शेषः । **एवं**-शुद्धधात्वादीनां पाठे न सर्वत्र कलत्वादिदोषश्रवणप्रसक्तौ निवारितायाम् । **इत्यस्मिन्निति**-वार्त्तिके इति शेषः । **इत्यपीति**-वार्त्तिकमिति शेषः । तथा च वर्णोपदेशस्य प्रयोजनद्वयमेव, न तु तृतीयं प्रयोजनमिति फलितम् ।

**इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे प्रथममाह्निकम् ।**

**॥ इति भगवत्पतञ्जलिमुनिविरचितं प्रथमं पस्पशाह्निकम् ॥**

# अथ द्वितीयं प्रत्याहाराह्निकम् ।

## ( शिवसूत्रम् )

## अइउण् ॥ १ ॥

**( २५ विवृतोपदेशप्रतिज्ञावार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ अकारस्य विवृतोपदेश आकारग्रहणार्थः ॥ * ॥

**( भाष्यम् )**

**अकारस्य विवृतोपदेशः कर्तव्यः ।**

**किं प्रयोजनम् ? ।**

**आकारग्रहणार्थः । अकारः सवर्णग्रहणेनाऽऽकारमपि यथा गृह्णीयात् ॥**

**( प्रदीपः ) अइउण् ॥** सर्ववर्णानविशेषेण विचार्य विशेषेणात्र विचारः क्रियते—**अकारस्येति ।** अत्राकारादीनां स्वरूपेणानुकार्येण वा सतोऽप्यर्थवत्त्वस्याविवक्षितत्वाद्विभक्त्यनुत्पत्तिः । स्वरसन्धिस्तु न प्रवर्तते वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात् ॥ तत्राकारस्य संवृतत्वाद्दीर्घप्लुतयोर्विवृतत्वात्प्रयत्नभेदात्सवर्णसंज्ञाया अप्रसङ्गात्प्रदेशेष्वकारेण दीर्घप्लुतयोर्ग्रहणं न प्राप्नोतीति विवृतत्वमस्योपदिश्यते । विवृतस्य गुणस्योपदेशो विवृतोपदेशः । तत्र गुणस्य नित्यसापेक्षत्वादकारापेक्षत्वेऽपि समासः । यथा—देवदत्तस्य गुरुकुलमिति ॥ **आकारग्रहणार्थ इति ।** विवृतोपदेश आकारग्रहणार्थं इति सामानाधिकरण्येन निर्देशादाकारग्रहणं विवृतोपदेशस्य प्रयोजनमिति सामर्थ्यादवगमाच्चोद्यानुरूपमुत्तरं न भवतीति न चोदनीयम् ॥ **सवर्णग्रहणेनेति । येन शास्त्रेणाणुदित्सवर्णस्येत्यनेन** सवर्णा गृह्यन्ते तेन कारणेनेत्यर्थः॥

**( उद्द्योतः )** ननु चतुर्दशसूत्र्याः प्रयोजनमुक्तमेव तत्किं पुनरत्र तद्ग्रहणेनेत्याशङ्क्याह—**सर्वेति ॥ विशेषेण ।** तत्तद्रूपेण ॥ प्रत्येकं वर्णेभ्यो विभक्तिमाशङ्क्याह—**स्वरूपेणेति ।** शब्दजन्यज्ञानविषयो हि शब्दस्यार्थः । एवं च स्वरूपमपि स्वजन्यबोधविषयत्वेनार्थः । अनुकार्यमर्थ इति तु स्पष्टमेव । एवं विद्यमानस्याप्यर्थवत्त्वस्याविवक्षितत्वाद**र्थवत्सूत्रे**ऽग्रहणादित्यर्थः । स्वरूपस्य **श्रोत्रगृहीतस्यैव शाब्दे भा**नोपपत्तौ न तत्र शक्तिः कल्प्या । अनुकार्यं च सादृश्येनोपस्थापयतीति न तत्रापि वृत्तिः । वृत्त्यार्थबोधकत्वं चार्थवत्त्व**मर्थवत्सूत्रे** निविष्टमिति भावः ॥ अनुकरणत्वभङ्गान्न विभक्तिरिति तत्त्वम् । सौत्रत्वाद्वा । कारप्रत्ययोऽपि बाहुलकान्न ॥ **स्वरसंधिस्त्विति ।** सौत्रत्वात्संहिताया अविवक्षणाद्वेति भावः ॥ **अजादिसंज्ञानामनिष्पादादिति** तु चिन्त्यं, वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां यणादीनां सुध्युपास्य इत्यादौ तटस्थ इत्योद्देश्यतावच्छेदकाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेर्दुर्वारत्वात् । अन्यथा **तुल्यास्यप्रयत्न**मित्यादौ सवर्णदीर्घादि न स्यात् ॥ **अत्र** सूत्रे ॥ तत्रेति पाठेऽप्ययमेवार्थः ॥ वाक्यापरिसमाप्तिन्यायेनेह ग्रहणकशास्त्राप्रवृत्तेः सावर्ण्येऽपि नात्र तद्ग्रहणमिति व्यर्थो विवृतोपदेशोऽत आह—**प्रदेशेष्विति । अकः सवर्णे** इत्यादौ । तत्राप्यकारः संवृत एवेति भावः ॥ ननु विवृतपदस्य गुणिपरत्वे सविशेषणत्वात्समासो न स्यादत आह—**विवृतस्य गुणस्येति ॥** भाष्ये **कर्तव्य** इत्यस्य प्रतिज्ञेय इत्यर्थः । एतेन तस्योच्चारयितुमशक्यत्वमित्यपास्तम् ॥ भाष्ये **किं प्रयोजनम्** इत्यत्र उद्दिश्येत्यध्याहारः । कर्तव्य इत्यनुषङ्गश्च ॥ नन्वाकारग्रहणं सवर्णग्रहणनेवेति भेदाभावात्कथं तस्य करणत्वमत आह—**येन शास्त्रेणेति ॥**

**( तत्त्वालोकः )** भाष्ये-**अकारस्य**—अइउणिति सूत्रवटकाकारस्य । शुक्लादिशब्दस्येव विवृतादिशब्दस्यापि गुणगुणिनोः प्रयोगो भवतीति प्रकृते विवृतशब्दं गुणपरतया प्रयुञ्जान आह—**विवृतोपदेश इति ।** नन्वेवमपि अकारस्य विवृतता, "विवृतकरणाः स्वराः, तेभ्य एओ विवृततरौ, ताभ्यामैऔ, ताभ्यामप्याकारः । संवृतोऽकार" इति शिक्षावाक्येन आकारस्य च विवृततरतेति प्रयत्नभेदात् तयोः सावर्ण्यमनुपपन्नमेवेति चेन्न, अत्र विवृतपदस्य लक्षणया विवृततरपरताया आश्रयणात् । अथवा अकारस्य विवृतत्वप्रतिज्ञानसामर्थ्यात्तस्य विवृततरेणाप्याकारेण सावर्ण्यस्योपपत्तिः । वस्तुतस्तु आकारस्य विवृततैव त्रिमुनिसम्मता, "स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतं, तेभ्योऽपि विवृतावेङौ ताभ्यामैऔ तथैव चे'ति शिक्षावाक्यात् । तथा च लक्षणाऽपि नाश्रयणीया भवति । न्यासकारादिमताभिप्रायेणोक्तस्य प्रागुक्तशिक्षावाक्यस्य तु यथाश्रुताननुकूलत्वादनुपादेयतयाऽऽविरोधः । अथवा नाज्झलाविति पठतः पाणिनेः मते विवृततरादिप्रयत्नानामभावात् अन्येन विवृततरत्वेनाभिप्रेतस्याप्याकारस्याकारेण विवृतत्वमात्रेण सवर्णता । नचैवमेङैचोः सावर्ण्यप्रसङ्गः, तथा सति तयोः वर्णसमाम्नाये पृथङ्निर्देशस्य वैयर्थ्यापातात् ॥ **आकारग्रहणार्थं इति**—अकारेणेत्यादिः । स कर्तव्य इति शेषः । कथितमेव स्पष्टयति—अकार इति ।

प्रदीपे—**अविशेषेण**—सामान्यरूपेण । अस्य प्रथमाह्निके इति शेषः । **अत्र**—द्वितीयाह्निके । **अत्र**—अइउणित्यादिसूत्रे । **वेति**—अर्थेनेति शेषः । **विभक्तीति**—तेभ्य इत्यादिः । केचित्तु अकारादीनां चादिषु पाठान्निपातत्वेनाव्ययत्वात्तेभ्यो जातायाः विभक्तेर्लुगिति वदन्ति । वस्तुतस्तु अइउणित्यादीनां श्रुततया "सुपां सुलुगि" त्यनेन तेभ्यो निष्पन्नायाः विभक्तेर्लुगिति भावः । **स्वरेति**—अत्रेत्यादिः । **भेदादिति**—अकारस्य दीर्घप्लुताभ्यां सहेति शेषः । **इति**–इति हेतोः । **अस्य**—अकारस्य । **तत्र**—अकारस्य विवृतोपदेश इत्यत्र । **गुणस्य**—विवृतरूपस्य । **समासः**—विवृतस्योपदेशेन समासः । **इति**—इत्यत्र । अस्य देवदत्तापेक्षिणोऽपि गुरोः कुलेन समास इति शेषः । **निर्देशादिति**—अकारेणेति शेषः । **चोदयेति**—प्रश्नेनेत्यर्थः । **चोदनीयम्**—शङ्कनीयम् ।

उद्द्योते—**प्रयोजनं**—वृत्तिसमवायादिरूपम् । **तद्ग्रहणेन**—चतुर्दशसूत्रविषयकविचारारम्भेण । **अर्थः**–स्वस्यार्थः । **अनुकार्यमिति**–अनुकरणस्य अइत्यादेरिति शेषः । **एवमिति**–स्वरूपाद्यर्थेनाकारादाविति शेषः । **तत्र**–स्वरूपे । अनुकार्यानुकरणयोरभेदविवक्षायामाह–**अनुकार्यमिति ।** अनुकरणमिति शेषः । तस्य कर्तृता । **तत्रापि**–अनुकार्येऽपि । नन्वीदृशार्थवत्त्वादेव तेषां कुतो न प्रातिपदिकतेत्यत

आह—**चुरयेति ।** तयोर्भेदविवक्षायामाह—**अनुकरणेति ।** अ-इत्यादी-नामित्यादिः । **विभक्तिरिति**-भेभ्य इत्यादिः । ननु अ-इत्यादिभ्यः कारप्रत्ययः कुतो नेत्यत आह—**कारेति ।** वर्णात्कार इत्यत्र रोगाख्यायां ण्वुल्बहुलमिति सूत्रतो बहुलमित्यनुवर्त्तते इत्याशयेनाह—**बाहुलकादिति ।** केचित्तु तत्र इक्श्तिपौ धातुनिर्देशे इत्यतो निर्देश इत्यनुवर्त्तते । तेन येनोच्चार्यमाणवर्णेन प्रयोगस्थवर्णो निर्देश्यः ( प्रतिपाद्यः ) तस्मात्कार प्रत्यय इति तत्त्वार्थः । तथा चात्रानुपूर्वीसम्पादनमात्रे तात्पर्यं, न तु राम इत्यादौ दृष्टानामकारादीनां प्रतिपादने इति कारप्रत्ययो नेति वदन्ति । **संहितायाः**—"वाक्ये तु सा विवक्षामपेक्षते" इति वाक्यात् विवक्षाधीनायाः । ननु अ-इत्यादिभ्यो विभक्तिर्नोत्पद्यते इति मते तेषां पदत्वाभावेन अइउणित्यादीनां वाक्यत्वाभावात् कथमत्र वाक्यीयाऽविवक्षेति चेन्न, तत्र वाक्यपदेन परिनिष्ठितसमुदायस्य ग्रहणात् । **तटस्थे**-उपजीव्योपजीवकभावानाक्रान्ते । **इह**-सूत्रे । **अत्र**-सूत्रे । **तदिति**-आकारेत्यर्थः । अकारेणेत्यादिः । **गुणिपरत्वे**-अकारस्य विवृतस्य विवृतगुणवत उपदेश इत्येवं तस्य गुणिपरत्वे । **तस्य**-विवृतगुणस्य । **अशक्यत्वमिति**-इति विधिवैयर्थ्यमिति शेषः । **कर्तव्य इति**-स इत्यादिः । **तस्य**-सवर्णग्रहणस्य ।

## ( आक्षेपभाष्यम् )

## किं च कारणं न गृह्णीयात् ? ॥

**( प्रदीपः ) किं च कारणमिति ।** आकृतिपक्षाश्रयेण ग्रहणकशास्त्रस्य प्रत्याख्यानादाकारस्याप्यत्वजातिसद्भावात् सिद्धं ग्रहणमिति भावः । अत्र च ***निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्*** इति प्रथमा कृता । तेन कस्मात्कारणादित्यर्थः संपद्यते ॥

**( उद्द्योतः )** नन्वाकृतिभेदात् कथं तत्पक्षेऽप्यकारेणाकारग्रहणमत आह—**आकारस्यापीति ।** केवलकण्ठ्यत्वे सति स्वरत्वमत्वजातिव्यञ्जकमिति दीर्घप्लुतयोरपि सेति भावः ॥ प्रातिपदिकार्थमात्रे प्रथमायां यथाश्रुतेऽन्वयो न जायतेऽत आह—**अत्र चेति ॥**

**( तत्त्वालोकः )** भाष्ये-जातिपक्षमाश्रित्याक्षिपति-**किं च कारणमिति ।** अकारेणाऽकारमिति शेषः ।

प्रदीपे—**सिद्धमिति**-तेन तस्येति शेषः । **अत्र**-कारणमित्यत्र, उद्द्योते—**तत्पक्षेऽपि**-आकृतिपक्षेऽपि । **इति**-इति हेतोः । **सा**-अत्वजातिः ।

## ( समाधानभाष्यम् )

## विवारभेदात् ॥

**( प्रदीपः ) विवारभेदादित्यत्र** तु कारणशब्दप्रयोगाभावात्प्रायग्रहणादसर्वनाम्नो वा प्रथमाद्वितीययोरभावाद् **विभाषा गुणेऽस्त्रियामिति** पञ्चमी विहिता ॥ विवारयति विकासयति आस्यमिति विवारः प्रयत्नः ॥ व्यक्तिपक्षे ग्रहणकशास्त्रारम्भाद्दोषापत्तिः ॥

**( उद्द्योतः )** उत्तरेऽपि तर्हि प्रथमा कुतो नेत्यत आह—**प्रयोगाभावादिति ।** निमित्तादिशब्दप्रयोगाभावेऽपि तदर्थे गम्यमाने स्यादेव विभक्तिरत आह—**प्रायग्रहणादिति । विभाषा गुणे इति । निमित्तेत्यादिवार्तिके** सर्वासामित्यैतन्न पञ्चमीतृतीयाविधायकं, किं तु **हेताविति विभाषागुणेति** सिद्धयोस्तयोरन्याभिरबाधायानुवादकमेवेति भावः ॥ **विवारयतीति । स** चाभ्यन्तरप्रयत्नः ॥ **दोषापत्तिरिति ।** दण्डाढकमित्यादौ दीर्घानापत्तिर्दोष इत्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये-व्यक्तिपक्षमवलम्ब्य समाधत्ते-**विवारेति ।** विवारेण भेदादित्यर्थः । कर्तृकरणे इति समासः ।

उद्द्योते-**उत्तरे इति**-यदि प्रश्ने प्रथमेत्यादिः । **तदर्थे**-निमित्तार्थे । **विभक्तिः**-प्रथमा । **तयोः**-तृतीयापञ्चम्योः । **अन्याभिः**-प्रथमाऽऽदिभिः । ननु विवारस्य बाह्यान्तर्गततया सवर्णसंज्ञायामग्रहणादुक्तरासङ्गतिरित्यत आह-**स चेति ।** विवारश्चेत्यर्थः । तथा च विवारपदं विवृतपरमिति भावः । **आदिना** इहाग्निदत्तेत्यस्य प्लुतेन सह दीर्घस्थलस्य संग्रहः ।

## ( आक्षेपभाष्यम् )

किमुच्यते—विवारभेदादिति, न पुनः कालभेदादपि । यथैव ह्ययं विवारभिन्नः, एवं कालभिन्नोऽपि ? ॥

**( प्रदीपः )** व्यक्तिपक्षे भेदान्तरसद्भावादाह—**किमुच्यत इति**

**( उद्द्योतः )** ननु प्रयत्नभेदेऽपि जातिसद्भावात्स्यादेव ग्रहणमत उक्तम्—**व्यक्तिपक्ष इति ॥**

**( तत्त्वालोकः )** भाष्ये—व्यक्तिपक्षे सतोः विवृतकालभेदयोः विवृतभेदमात्रस्योपादानात् भाष्यकृतो न्यूनतेत्याशयेनाक्षिपति-**किमुच्यते इति । अपि**—इत्यपि - **हीति** वाक्यालङ्कारे । **अयं**—आकारः ।

प्रदीपे—**भेदान्तरसद्भावात्**-विवृतभेदभिन्नकालभेदस्यापि सत्त्वात् । **आह**-न्यूनतामाह ।

उद्द्योते—**जातीति**-अत्वजातीत्यर्थः । **ग्रहणमिति**-अकारेण आकारस्येत्यादिः ।

## ( समाधानभाष्यम् )

सत्यमेव तत् । वक्ष्यति "तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्रास्यग्रहणस्य प्रयोजनम्—आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति । बाह्यश्च पुनरास्यात्कालः तेन स्यादेव कालभिन्नस्य ग्रहणम्, न पुनर्विवारभिन्नस्य ॥

**( प्रदीपः ) बाह्यश्चेति ।** प्रयत्नाभिनिर्वृत्तत्वात्कालस्य प्रयत्नत्वमभ्युपगम्य शङ्का, बाह्यत्वेन परिहारः । प्रसिद्धपरिमाणवस्त्वन्तरगतपरिच्छेदकक्रियान्तरापेक्षणात्कालव्यवहारस्य बाह्यत्वं कालस्य । यथा व्रीहेः प्रस्थादिव्यवहारः परिमाणद्रव्यकृतः, एवमत्रापि मात्रादिव्यपदेशो निमेषादिक्रियाभेदकृतः ॥ अथ वा नाभिप्रदेश एव विशिष्टप्रयत्नारम्भाद्दीर्घादिनिष्पत्त्या नाभेश्चास्याद्बाह्यत्वात्कालस्य बाह्यत्वम् । विवृतत्वादीनां चास्य वर्तिप्रयत्ननिष्पाद्यत्वादाभ्यन्तरत्वम् । द्रुतादिवृत्तयस्तु यथा न भेदिकास्तथा **तपर**सूत्रे वक्ष्यते ॥

**( उद्द्योतः )** ननु कालस्य व्यापकत्वाद् बाह्यत्वेन समाधानमयुक्तम् ॥ किं च कालो न प्रयत्न इति तद्भेदे कथं सवर्णत्वाप्राप्तिरत आह—**प्रयत्नाभिनीति ।** बाह्यत्वं व्युत्पादयति—**प्रसिद्धेति ।** प्रसिद्धपरिमाणयद्वस्त्वन्तरगतं परिच्छेदकक्रियान्तरं परिच्छेद्यक्रियापेक्षयान्यत्तदपेक्षणादित्यर्थः । एवं च बाह्यपरिच्छेदकक्रियापेक्षया बाह्यत्वोक्तिरिति भावः ॥ क्रियैव कालो नातिरिक्त **इति मते इदम् ॥** अतिरिक्तः क्षणसमूहः काल इति मते परिहरति —**अथ वेति ।** अयं भावः । नाभिप्रदेशावच्छिन्नयत्नेन प्रेरितो वायुस्तत्स्थानाभिघातोत्तरं वर्णाभिव्यञ्जक इति शिक्षादौ स्पष्टम् । वायोरल्पत्वाधिक्यानि च ह्रस्वत्वदीर्घत्वादिरूपकालव्यञ्जकानीति ॥ ननु ह्रस्वदीर्घयोः कालभेदाद्**तोभिस** इत्यादौ दीर्घग्रहणवद्विलम्बितवृत्त्योच्चारितस्य ह्रस्वाकारस्यापि द्रुतम-

ध्यापेक्षया कालाधिक्याद् ऐस्भावविधायके ग्रहणानापत्तिरत आह—द्रुतादीति ॥

**( तत्त्वालोकः )** भाष्ये-**सत्यमेव**-युक्तमेव । **तत्**-कालभेदानुपादानं कुत इत्यत आह-**वक्ष्यतीति** । यत इत्यादिः । फलितमाह-**बाह्यश्चेति** ।

प्रदीपे—**अभिनिर्वृत्तेति**-जन्येत्यर्थः । **परिमाणद्रव्येति**-परिमाणकद्रव्येत्यर्थः । **अत्र**-अकारादौ । **मात्रादिव्यपदेशः**-एकमात्रिकत्वादिव्यवहारः ।

उद्द्योते—**व्यापकत्वादिति**-आभ्यन्तरताया अपि सम्भवादिति शेषः । **इति**-इति स्थितौ । **तद्भेदे**-कालभेदे । **प्रसिद्धपरिमाणं**-लोकप्रसिद्धपरिमाणकम् । **वस्त्वन्तरगतं**-नयनप्रदेशगतम् । **क्रियान्तरं**-निमेषोन्मेषादिरूपम् । **परिच्छेदयक्रियेति**-उच्चारणक्रियेत्यर्थः । **क्रियैव**-परिच्छेदकनिमेषोन्मेषादिरूपनयनप्रदेशगतक्रियैव । **शिक्षादाविति**-आत्मा बुद्ध्या समेत्यार्थान्मनो युङ्क्ते विवक्षया । मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥ मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ॥ सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः । वर्णाञ्जनयते तेषां विभागः पञ्चधा स्मृतः ॥ इत्यादिनेत्यादिः ।

**( आक्षेपभाष्यम् )**

**किं पुनरिदं विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते, आहोस्वित् संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यते ? ॥**

**( प्रदीपः ) किं पुनरिति ।** किं सूत्रकारेणैव विवृतोपदेशः कृतो वार्तिककारेण तु तस्य प्रयोजनमुक्तम्, अथाकृत एव विवृतोपदेशो वार्तिककृता चोद्यत्वेनोपन्यस्त इति प्रश्नः । दुरवधारत्वादुपदिष्टोऽपि विवृतो व्याख्यानेन विना न शक्यते ज्ञातुमिति प्रत्यक्षेऽप्यकारे प्रश्नोऽयं नासमञ्जसः ।

**(उद्द्योतः)** उपदिश्यमानस्येत्यत्र वार्तिककृतः कर्तृत्वे पक्षयोर्भेदो न स्यादत आह—**किं सूत्रकारेणेति । सूत्रकारो** महेश्वरो वेदपुरुषो वा '**येनाक्षरसमाम्नायमि**त्याद्यैतिह्यादित्याहुः ॥ ननु प्रत्यक्षतोऽकारे श्रुते तद्गतगुणस्यापि ज्ञातत्वात्प्रश्नोऽयमसङ्गतोऽत आह—**दुरवधारत्वादिति ।** विवृतत्वादीनां श्रोत्रेन्द्रियग्राह्यत्वाभावादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**विवृतस्य**-गुणस्य । अस्य सूत्रकृता अकारे इत्यादिः । **अन्वाख्यायते इति**-उच्यते इत्यर्थः । वार्तिककृतेति शेषः । **संवृतस्य**-संवृतगुणवतोऽकारस्य । अस्य सूत्रकृतेत्यादिः । **विवृतेति**-गुणेति शेषः । **चोद्यते**-प्रतिज्ञायते । अस्य वार्तिककृतेति शेषः । प्रदीपे—**तस्य**-विवृतोपदेशस्य । **चोद्यत्वेन**-प्रतिज्ञेयत्वेन ।

उद्द्योते—सिद्धान्तमतेनाह-**वेदपुरुष इति** । पाणिनिरित्यर्थः । तस्य कर्तृताबोधके स्मृतित्वाभावादाह-**ऐतिह्यादिति** । **तदिति** अकारेत्यर्थः ।

**( समाधानभाष्यम् )**

**विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते ॥**

**कथं ज्ञायते ? ॥**

**यदयम्-"अ अ"-इत्यकारस्य विवृतस्य संवृतताप्रत्यापत्तिं शास्ति ॥**

**( प्रदीपः )** तत्र प्रत्यापत्त्या पूर्वः पक्ष आश्रितः । अन्यथा शास्त्रान्ते प्रत्यापत्तिवचनमनर्थकं स्यात्, स्वरूपप्रच्यवाभावात् ॥

**( उद्द्योतः ) अन्यथा** संवृतत्वे । स्वरूपप्रच्यवे हि पुनः संवृतविधानं युक्तं स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये-समाधाता प्रथमपक्षं स्वीकुर्वन्नुपस्थापयति-**विवृतस्येति । कथमिति**-प्रथमपक्ष इति शेषः । **यत्**-यस्मात् । **अयं**-सूत्रकारः । **इति**-इत्यनेन । **प्रत्यापत्तिं**-प्रतिविधिं । **शास्तीति**-अत इति शेषः । यदि सूत्रकारोऽकारस्य विवृततां नोपादेक्ष्यत्तर्हि कथं विवृतत्वमुद्दिश्य संवृततां प्रतिव्यधास्यदिति ज्ञायते प्रथमपक्षस्तदभिमत इतीति भावः । नच विवृताकारेण ग्रहणात् दीर्घादीनामपि संवृतताप्रतिविधानापत्तिः, अद्-अ-इति निर्देशात् ॥

प्रदीपे—**तत्र**-विवृताकारे । **प्रत्यापत्त्या**-संवृतताप्रतिविधिसामर्थ्येन । **पूर्वः**-प्रथमः । यदयमित्यादिभाष्येणान्वयेन साधितां अ-अ-इत्यस्य प्रथमपक्षज्ञापकतां व्यतिरेकेण व्यवस्थापयति-**अन्यथेति** । **शास्त्रान्ते**-अष्टाध्याय्यन्ते । **प्रत्यापत्तिवचनम्**-विवृताकारे संवृतताप्रतिविधायक अ अ इति सूत्रम् । कुत इत्यत आह-स्वरूपप्रच्यवेति । संवृतत्वविगमेत्यर्थः । अकारे इत्यादिः ।

उद्द्योते-**संवृतत्वे इति**-अकारस्येत्यादिः । **हि**-यतः । प्रथमपक्षे समाश्रिते तु अकारे संवृततायाः प्रच्युततया तत्र तस्याः प्रतिविधानाय सार्थकं अ अ-इति सूत्रमिति भावः ।

**( समाधानबाधकभाष्यम् )**

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ॥**

**अतिखट्वः अतिमाल इत्यत्रान्तर्यतो विवृतस्य विवृतः प्राप्नोति, संवृतः स्यादित्येवमर्था प्रत्यापत्तिः ॥**

**( प्रदीपः ) अस्ति ह्यन्यदिति ।** प्रयोग एव प्राप्ते विवृतत्वे संवृतत्वप्रत्यापत्तिः स्यादित्यज्ञापकमेतदित्यर्थः ॥ नन्विहासति विवृतोपदेशे सावर्ण्याभावादकारेणाकारस्याग्रहणादच्त्वाभावात्कथमतिखट्व इति ह्रस्वः ॥ नैष दोषः, **उदीचामातः स्थाने** इति ज्ञापकाद्भवत्याकारस्य ह्रस्वः ॥

**( उद्द्योतः ) प्रयोग एवेति ।** अतिखट्व इत्यादिप्रयोगे ह्रस्वे-नान्तरतम्याद्विवृतोऽकारः प्राप्तः संवृत एव भवत्वित्यर्थं प्रत्यापत्तिवच इति भावः । **नन्विति । अचश्चेत्युक्तेरच एव** ह्रस्वत्वेन भाव्यमिति भावः । **गोस्त्रियोरित्यत्रै**तद्वारणार्थमेवोपस्थितिः स्यादिति तात्पर्यम् ॥ **उदीचामात इति ॥** न चापोन्यतरस्यामिति ह्रस्वे चरितार्थमिदम् । न चात्राच्परिभाषोपतिष्ठते, फलाभावादिति वाच्यम् । शास्त्रस्याल्पविषयतापत्तेर्गोशब्दसाहचर्येण स्वांशेऽप्यचश्चेत्यस्याप्रवृत्तेश्च । तदंशे हि फलाभावान्न प्रवर्तते इति दिक् ।

**( तत्त्वालोकः )** भाष्ये-अ अ-इत्यस्य प्रथमपक्षज्ञापकतां विघटयितुमाह-नेति । **एतत्**-अ अ-इति सूत्रम् । **अस्तीति**-प्रथमपक्षस्येति शेषः । कुत इत्यत आह-**अस्तीति** । **हि**-यतः । **एतस्य**-अ अ-इत्यस्य । **किमिति**-अन्यदिति शेषः ।

प्रदीपे—**प्रयोगे एव**-अतिखट्व इत्यादिप्रयोगे एव । अस्य अकारस्येति शेषः । **इति**-इति हेतोः । **एतत्**-अअ-इति । **इह**-आक्षरसमाम्नायिकाकारे । **इति**-इत्यत्र । अस्य गोस्त्रियोरित्यनेनेति

शेषः। **भवतीति**-अन्यथा आकारस्थानिकाकारस्याभावात् उदीचामिति सूत्रमेव व्यर्थं स्यादिति भावः।

उद्द्योते-**एतद्वारणार्थं**-अतिखट्व इत्यादावाकारादेः ह्रस्वतावारणार्थं। **उपस्थितिः**-अच्परिभाषोपस्थितिः। **नचेति**-अस्य वाच्यमित्यनेनान्वयः। **इदं**-उदीचामिति सूत्रं। **नच**-नहि। **अत्र**-आपोऽन्यतरस्यामित्यत्र। **शास्त्रस्य**-उदीचामिति सूत्रस्य। **तदंशे**-गोशब्दांशे। **हि**-यतः **फलेति**-व्यावर्त्यैत्यर्थः। ओकारस्याऽत्वेनेत्यादिः। **प्रवर्त्तते इति**-अच्परिभाषेत्यादिः।

## ( समाधानसाधकभाष्यम् )

**नैतदस्ति। नैव लोके न च वेदेऽकारो विवृतोऽस्ति॥**

**कस्तर्हि ?।**

**संवृतः, योऽस्ति स भविष्यति। तदेतत्प्रत्यापत्तिवचनं ज्ञापकमेव भविष्यति 'विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायते' इति॥**

**( प्रदीपः ) नैव लोक इति।** प्रयुक्तानामनुशासनात् प्रयोगे च विवृतस्याकारस्यासंभवात्संवृत एव भविष्यतीति प्रत्यापत्तिर्ज्ञापिकैव।

**( तत्त्वालोकः )** भाष्ये—अ अ-**इत्यस्य** प्रथमपक्षज्ञापकतया विघटकं तस्योक्तप्रयोजनकत्वं खण्डयन् तस्य तज्ज्ञापकत्वं साधयति-**नेति। एतत्**-अ अ-**इत्यस्योक्तप्रयोजनकत्वं**। कुत **इत्यत** आह-**नैवेति।** यत इत्यादिः। **अस्तीति**-अत **इति** शेषः। **तत्**-तस्मात् ( अ अ-इत्यस्योक्तप्रयोजनकत्वाभावात् )। **एतत्**-अअ-इति। ज्ञाप्यमाह-**विवृतस्येति। इति-इत्यस्य।**

प्रदीपे-**असम्भवादिति**—आनन्तर्यैस्यासम्भवग्रस्ततयेति शेषः। **इति-इति** हेतोः।

## ( आक्षेपभाष्यम् )

**कः पुनरत्र विशेषः—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायेत, संवृतस्योपदिश्यमानस्य वा विवृतोपदेशश्चोद्येतेति ?॥**

**( प्रदीपः ) कः पुनरिति।** विवृतोपदेश इत्यत्र कृत इति वा, कर्तव्य इति वा वाक्यशेषाध्याहारे न कश्चिद्विशेष इत्यर्थः॥

**( उद्द्योतः )** नन्वाद्यपक्षे प्रयोजनान्वाख्यानमात्रपरत्वं, द्वितीये विवृतोपदेशपरत्वमपीति विशेषस्य स्पष्टत्वमत आह—**विवृतोपदेश इत्यत्रेति॥**

**( तत्त्वालोकः )** भाष्ये-**अत्र**-अनयोः। अस्य इतेरनन्तरमन्वयः।

प्रदीपे-प्रथमपक्षाभिप्रायेणाह-**कृत इति।** द्वितीयपक्षाशयेनाह-**कर्तव्य इति।**

उद्द्योते-**द्वितीये इति**-पक्षे इति शेषः।

## ( समाधानभाष्यम् )

**न खलु कश्चिद्विशेषः। आहोपुरुषिकामात्रं तु भवानाह—संवृतस्योपदिश्यमानस्य विवृतोपदेशश्चोद्यत इति। वयं तु ब्रूमो—विवृतस्योपदिश्यमानस्य प्रयोजनमन्वाख्यायत इति॥**

**( प्रदीपः ) आहोपुरुषिकेति।** अहो अहं पुरुष इत्यहङ्कारवानहोपुरुषस्तस्य भाव इति मनोज्ञादित्वाद्वुञ्। अहंकारवत्वमित्यर्थः

**( उद्द्योतः ) पुरुषिकेत्यत्र** वुञः प्राग् **मयूरव्यंसका**दित्वात्समासः। **अहो इति** अहमित्यर्थे। तत्र प्रयोजनान्वाख्यानमित्येव न्याय्यः, प्रत्यापत्तेः। अकर्तृके आज्ञापादनाभावाच्चेत्याहुः॥

**( तत्त्वालोकः )** भाष्ये-**खल्विति**-वाक्यालङ्कारे।

उद्द्योते-**तत्र**-तयोः ( पक्षयोः )। **अकर्त्तृके**-अपौरुषेये ( अहरणित्यादिवेदे )।

## ( ॥ २६ ॥ धात्वादिषु विवृतत्वप्रतिज्ञावार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः सवर्णग्रहणार्थः ॥ * ॥

## ( भाष्यम् )

**तस्यैतस्याक्षरसमाम्नायिकस्य विवृतोपदेशादन्यत्रापि विवृतोपदेशः कर्तव्यः॥**

**कान्यत्र ?। धातुप्रातिपदिकप्रत्ययनिपातस्थस्य॥**

**किं प्रयोजनम् ?। सवर्णग्रहणार्थः। आक्षरसमाम्नायिकेनास्य ग्रहणं यथा स्यात्॥**

**किं च कारणं न स्यात् ?।**

**विवारभेदादेव॥**

**( प्रदीपः ) तस्येति।** यदा प्रत्याहारे विवृतोऽकार उपदिष्टस्तदा प्रयत्नभेदात्तेन संवृतस्याकारस्य ग्रहणाभावादच्कार्यं न स्यादिति तत्सिद्ध्यै सर्वस्याकारस्य विवृतत्वं कर्तव्यमित्यर्थः। तेन शाम्यतेत्यादौ दीर्घादि सिध्यति॥ ननु च सर्वेषामकाराणां यत्सामान्यं तदनुकरणमत्राकारः। तस्य च विवृतत्वे प्रतिज्ञायमाने सर्वेषां तत्प्रतिज्ञातं भवतीति किमुच्यते-तस्य विवृतोपदेशादिति॥ एवं तर्हि यदा कस्यचिदेवाकारस्येदमनुकरणं स्वरूपपदार्थको वाऽकारस्तदेदमुच्यत इत्यदोषः।

**( उद्द्योतः )** प्रत्यापत्त्या **अइउण्**इत्यत्रैव प्रक्रियादशायां सर्वत्र कारो विवृतः प्रतिज्ञात इत्यजानन् शङ्कते—**भाष्ये तस्य विवृतोपदेशादिति। तस्येत्यस्य** वर्णसमाम्नायस्थस्येत्यर्थः॥ **संवृतस्येति** धात्वादिस्थस्येत्यर्थः॥ ननु **अइउण्**इत्यादौ कस्यानुकरणमित्यत्र निगमकाभावादाह—**स्वरूपपदेति।** स्वरूपपदार्थकत्वं यथा तथोक्तम्॥ भाष्ये **विवारभेदादिति।** प्रयत्नभेदादित्यर्थः॥ ग्राहकस्य विवृतत्वाद् ग्राह्यस्य संवृतत्वादिति भावः॥

**( तत्त्वालोकः )** भाष्ये-**एतस्य**-अकारस्य। **अन्यत्रापि**-अन्यविद्यमानस्यापि ( अकारस्य )। **विवृतोपदेशः कर्तव्य इति**-अ अ इत्यस्य **इह** शास्त्रे यावानकारः स सर्वोपि प्रक्रियायां **विवृत इ** सामान्यापेक्षज्ञापकता बोध्येति भावः। **क्वान्यत्र**-कुत्रान्यत्र विद्यमानस्य। अत एव **प्रश्नोत्तरयोरनुरूपता**। **अस्य**-धात्वादिस्थस्य ( अकारस्य )। अस्य अकारेणेत्यादिः। **नेति**-अन्यथा तेन तस्य ग्रहणमित्यादिः।

प्रदीपे-**तेन**-प्रत्याहारस्थविवृताकारेण। अस्य धात्वादिस्थस्ये शेषः। **अजिति**-तत्रेत्यादिः। **इति-इति** हेतोः। **तत्सिद्ध्यै**-तत्कार्यसिद्ध्यै। **दीर्घादीति**-अकारादेरित्यादिः। **सिध्यतीति**-अन्यथा शमामष्टानामित्यत्र अचश्चेति परिभाषाया बाधादनुपस्थितौ

लोऽन्त्यपरिभाषाया उपस्थित्या तेन शाम्यतीत्यादावन्त्यस्यैव दीर्घः स्यान्न त्वकारस्येति भावः। जातिपक्षाभिप्रायेणाशङ्कते-**ननु चेति । यदिति**-अत्वरूपमिति शेषः। **अत्र**-वर्णसमान्नाये। **तस्य**-वर्णसमाम्नायस्थाकारस्य। **तत्**-विवृतत्वं। **इति**-इति हेतोः। **इति**-इत्यादि। व्यक्तिपक्षाभिप्रायेण समाधत्ते-**एवमिति । इदं**-वर्णसमाम्नायस्थमकाररूपं वस्तु। **अकारः**-वर्णसमाम्नायस्थः। **इदं**-तस्य विवृतोपदेशादित्यादि।

उद्द्योते-**उक्तमिति**-द्वितीयाह्निकादिमोद्द्योते इत्यादिः।

**( धात्वादिषु विवृतत्वप्रतिज्ञाबाधकभाष्यम् )**

**आचार्यप्रवृत्तिर्ज्ञापयति-भवत्याक्षरसमाम्नायिकेन धात्वादिस्थस्य ग्रहणमिति । यदयम् "अकः सवर्णे दीर्घः" इति प्रत्याहारेऽको ग्रहणं करोति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**न हि द्वयोराक्षरसमाम्नायिकयोर्युगपत्समवस्थानमस्ति ॥**

**( प्रदीपः ) यदयमिति ।** अत्र हि ककारेण चिन्हेन प्रत्याहारस्थो विवृतो निर्दिष्टः, तेन च संवृतस्याग्रहणे **इकः सवर्णे** इति वक्तव्यम्॥ **न हि द्वयोरिति ।** यद्यप्येकोऽपि विवृतो नास्ति, तथापि द्व्यधिष्ठानत्वादेकादेशस्य द्वयोरित्युक्तम्।

**( उद्द्योतः ) प्रत्याहारे इति ।** संग्राहके शास्त्र इत्यर्थः॥ **वक्तव्यमिति ।** एवंच प्रयत्नभेदेनासवर्णस्यापि अत्वजात्याक्रान्तस्य विवृतेनाकारेण ग्रहणं ज्ञाप्यत इत्यर्थः॥ **यद्यप्येकोऽपीति ।** प्रत्युच्चारणं वर्णान्यत्वादाक्षरसमाम्नायिकस्य प्रयोगेऽभावादिति भावः॥ **आदिरन्त्येनेत्यस्य** चान्त्यसदृशेन सहोच्चार्यमाण आदिसदृश इत्यार्थः। तत्र ककारादिचिन्हेनागादिशब्दस्थस्तत्सदृशत्वाद्विवृत एव। सादृश्यं च व्यक्तिभेदे सति सर्वधर्मसाम्यप्रयुक्तं ग्राह्यम्। तस्य च प्रयोगस्थेऽभावेप्यनेन तद्ग्रहणं ज्ञाप्यत इति तात्पर्यम्॥ केचित्तु देवदत्त अजस्तीत्यादौ प्रत्याहारलिङ्गेनैक आक्षरसमाम्नायिकोऽस्ति तदर्थं भाष्ये **द्वयोरित्युक्तमित्युक्तमित्याहुः**॥ भाष्ये **युगपत्समवस्थानमिति ।** अस्य **प्रयोगे इत्यादिः**॥

**( तत्त्वालोकः )** भाष्ये-एकदेशी समाधत्ते-**आचार्येति । आक्षरसमाम्नायिकेनेति**-विवृताकारेणेति शेषः। धात्वादिस्थस्येति संवृताकारस्येति शेषः। कुत इत्यत आह-**यदिति ।** यत इत्यर्थः। **अयम्**-पाणिनिः। **अकः**-ककारात्मकचिन्हानुमितवर्णसमाम्नायस्थविवृताकारस्य। **करोतीति**-अत इति शेषः। **हि**-यतः। आक्षरसमाम्नायिकयोः-विवृताकारयोः। **अस्तीति**-अत इति शेषः।

प्रदीपे-**अत्र हि**-"अक" इत्यत्र हि। **विवृतः**-अकारः। **तेन**-निर्दिष्टेन। **संवृतस्य**-धात्वादिस्थाकारस्य। **विवृत इति**-अकारः प्रयोगे इति शेषः। **द्व्यधिष्ठानत्वात्**-द्वयोः स्थाने जायमानत्वात्।

उद्द्योते-नन्वकः प्रत्याहारतया प्रत्याहारे अक इत्यनुपपन्नमित्यत आह-**संग्राहके इति । शास्त्रे**-सूत्रे। **जात्याक्रान्तस्येति**-धात्वादिस्थसंवृताकारस्याक्षरसमाम्नायिकेनेति शेषः। **आक्षरसमाम्नायिकस्य**-विवृताकारस्य। ननु प्रत्युच्चारणं वर्णानां भेदे अगित्यादावाक्षरसमाम्नायिकाकारभिन्नोऽकार इति कथमगित्यादिप्रत्याहारसिद्धिरित्यत आह-**आदिरिति । इत्यादीति**-अत्रादिना अनुबन्धान्यमध्यगानां स्वस्य च संज्ञा स्यादित्यस्य संग्रहः। **तत्र**-"अक" इत्यत्र। **शब्दस्थः**-अकारः। **तदिति**-आक्षरसमाम्नायिकविवृताकारेत्यर्थः। **एवेति**-इति प्रतीयते इति शेषः। **तस्य**-( प्रत्याहारस्थविवृताकारेण ) सर्वधर्मसाम्यस्य। **प्रयोगस्थे**-संवृताकारे। अनेन प्रत्याहारस्थविवृताकारेण। **तदिति**-प्रयोगस्थसंवृताकारेत्यर्थः। **केचित्**-भाष्यतत्त्वविदः। **लिङ्गेन**-चकारादिना। **अस्तीति**-उभयत्रेत्यादिः। **प्रयोगे इति**-एकत्रेत्यादिः।

**( धात्वादिषु विवृतत्वप्रतिज्ञासाधकभाष्यम् )**

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ।**

**यस्याक्षरसमाम्नायिकेन ग्रहणमस्ति, तदर्थमेतस्स्यात् खट्वाढकं मालाढकमिति । सति प्रयोजने न ज्ञापकं भवति । तस्माद्विवृतोपदेशः कर्तव्यः ॥**

**( प्रदीपः ) नैतदिति ।** अक इत्यकारेण विवृतेन दीर्घस्य विवृतस्य ग्रहणादज्ञापकमेतदित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये-पूर्वपक्षी तस्य तज्ज्ञापकतां विघटयति-**नेति । एतत्**-"अक" इत्यत्र ककारूपचिन्हबललब्धविवृताकारोपादानं। **ज्ञापकमिति**-तस्येत्यादिः। कुत इत्यत आह-**अस्तीति । हि**-यतः। **एतस्य**-( तत्र ) तादृशविवृताकारस्य। **किमिति**-अन्यत् इति शेषः। **यस्येति**-विवृतदीर्घस्येति शेषः। **आक्षरसमाम्नायिकेन**-विवृताकारेण। **अस्ति**-संभवति। **तदर्थं**-तद्ग्रहणार्थं। **एतत्**-( तत्र ) विवृताकारोपादानं। **इति**-इत्यत्र। **तस्मात्**-( तस्य ) तज्ज्ञापकत्वाभावात्। धात्वादिस्थाकारस्येति शेषः।

प्रदीपे **इति**-इत्यत्रत्येन। **अज्ञापकमिति**-तस्येत्यादिः। **एतत्**-( तत्र ) विवृताकारोपादानम्।

**( आक्षेपभाष्यम् )**

**क एष प्रयत्नश्चोद्यते, विवृतोपदेशो नाम । विवृतो वोपदिश्येत, संवृतो वा । कोन्वत्र विशेषः ? ॥**

**( प्रदीपः ) क एष यत्न इति ।** धात्वादयः पठितास्तत्राकारो विवृतः पठ्यतां न हि किंचिद् गौरवं भवति तत्किमुच्यते—अन्यत्रापि विवृतोपदेशः कर्तव्य इतीति प्रश्नः॥

**( तत्त्वालोकः )** भाष्ये-एकदेशी शङ्कते-**क एष इति । चोद्यते**-क्रियते। अस्य वार्त्तिककृतेति शेषः। एष इत्यनेन निर्देश्यमाह-**विवृतेति ।** धात्वादिस्थाकारस्येत्यादिः। **विवृत इति**-स इत्यादिः। **अत्र**-धात्वादावश्यकर्तव्ये विवृतसंवृतयोरकारयोरन्यतरोच्चारणे। न कोऽपि विशेष इति भावः।

प्रदीपे-**तत्र**-तस्मात् धात्वादिषु

**( समाधानभाष्यम् )**

**स एष सर्व एवमर्थो यत्नः क्रियते । यान्येतानि प्रातिपदिकान्यग्रहणानि तेषामेतेनाभ्युपायेनोपदेशश्चोद्यते, तद् गुरु भवति । तस्माद्वक्तव्यम्—'धात्वादिस्थश्च विवृत' इति ।**

**( प्रदीपः ) यानीति ।** प्रतिपदपाठस्याशक्यत्वात्तस्य **विवृतोपदेशादित्यनेन** सर्वस्याकारस्य विवृतोपदेशः कार्यतया चोद्यत इत्यर्थः॥ **धात्वादिस्थ इति ।** अग्रहणप्रातिपदिकार्थे विवृतत्वेऽवश्यचोदनीये

धात्वादिस्थस्यापि संवृतस्यैव पठितस्य कार्यार्थं विवृतत्वं प्रतिज्ञेयम्। अन्यथा दोषरूपविवृतोच्चारणे प्रयत्नस्य गौरवं स्यात् ॥

**( उद्द्योतः ) एवमर्थं इति ।** वृत्ताविवंशब्दः प्रकारवति वर्तते इति बहुव्रीहिः ॥ **प्रातिपदिकानीति ।** धातुप्रत्यययोरप्युपलक्षणं बोध्यम्। सर्वाण्यग्रहणानि प्रातिपदिकादीनि विवृताकारयुक्तानि पठनीयानीत्यर्थः॥ **तद् गुरु भवति । तस्मादिति ।** यतः सर्वोच्चारणं गुरु अतो धात्वादिस्थ इति वाच्यमित्यर्थः॥ ननु धातूनां बहुधा पाठाद् धात्वादीति अयुक्तमत आह—**अग्रहणेति ।** प्रातिपदिकेत्युपलक्षणम् ॥ **धात्वादिस्थस्यापीति ।** पठितधात्वादिस्थस्यापीत्यर्थः। एतेनाग्रहणधात्वादीत्येव वक्तुमुचितमित्यपास्तम् ॥ **संवृतस्यैवेति ।** एवञ्च धात्वादिस्थश्च विवृतवत् कार्यं लभत इत्यतिदेशोऽयमिति भावः ॥ **अन्यथेति ।** गुणोच्चारणाद्दोषोच्चारणे यत्नाधिक्यमिति भावः।

**( तत्त्वालोकः )** भाष्ये-सिद्धान्ती उत्तरयति-**स एष इति । क्रियते इति**-तेनेति शेषः। **यानीति**-यदीत्यादिः। **एतेन**-विवृताकारसहिततया पाठरूपेण। **चोद्यते**-क्रियते। **तत्**-सर्वेषां विवृताकारसाहित्येन पठनं। अस्य तर्हीत्यादिः। **विवृत इति**-अकार इत्यादिः।

प्रदीपे—**प्रतिपदेति**-विवृताकारसाहित्येन अग्रहणप्रातिपदिकादीनामित्यादिः। **कार्यतया**-प्रतिज्ञेयतया। **चोद्यते**-कथ्यते। **विवृतत्वे इति**-अकारस्येत्यादिः। **चोदनीये**-प्रतिज्ञेये। **पठितस्येति**-अकारस्येति शेषः। **दोषरूपविवृतोच्चारणे**-दोषरूपविवृतत्वसाहित्येनाकारोच्चारणे। **स्यादिति**-प्रतिपत्त्याश्रयणप्रयुक्तमपि गौरवमिति भावः।

उद्द्योते—ननु एवंशब्दस्य प्रकारवाचितया अर्थशब्देन सामानाधिकरण्याभावात् तस्य तेन कथं समास इत्यत आह—**वृत्ताविति । इति**-इति हेतोः। अस्य तयोः सामानाधिकरण्यात् एवम् एतत्प्रकारकः अर्थः प्रयोजनं यस्येति व्युत्पत्ताविति शेषः। **सर्वोच्चारणं**-सर्वेषां विवृताकारसाहित्येन पठनं। **धात्वादिस्थ इति**-संवृताकारो विवृत इति शेषः। **उपलक्षणमिति**-धातुप्रत्यययोरपीत्यादिः। **धात्वादिस्थश्चेति**-संवृताकार इति शेषः। **विवृतवत्**-विवृताकारवत्। **गुणोच्चारणात्**-संवृतगुणसहिताकारोच्चारणात्। **दोषोच्चारणे**-विवृतदोषसहिताकारोच्चारणे।

**( ॥ २७ ॥ प्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )**

## ॥※॥ दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थः ॥※॥

**( भाष्यम् )**

**दीर्घप्लुतवचने च संवृतनिवृत्त्यर्थो विवृतोपदेशः कर्तव्यः दीर्घप्लुतौ संवृतौ मा भूतामिति । वृक्षाभ्याम्, देवदत्ता ३ इति ।**

**( प्रदीपः )** विवृतत्वप्रतिज्ञाने प्रयोजनान्तरमाह—**दीर्घेति ।** असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य स्थाने सावर्ण्यात्संवृतयोरेव दीर्घप्लुतयोः प्रसङ्ग इत्यर्थः।

**( तत्त्वालोकः )** भाष्ये—**दीर्घप्लुतवचने इति**-ह्रस्वस्य स्थाने सुपि चेत्यनेन दीर्घः दूराद्धूते चेत्यनेन प्लुतो वा उच्यते विधीयते यत्र ( प्रयोगे ) तत्रेत्यर्थः। अधिकरणे ल्युट्। **विवृतेति**-धात्वादिस्थसंवृताकारस्येत्यादिः। संवृतनिवृत्त्यर्थं इत्यंशं व्याचष्टे-**दीर्घप्लुताविति ।** संवृताकारस्थाने प्राप्तावित्यादिः। **इति-**इति हेतोः। उदाहरति-**वृक्षेति । इति**-इत्यत्र।

प्रदीपे—**विवृतत्वेति**-धात्वादिस्थसंवृताकारस्येत्यादिः। **आहे-ति**-सिद्धान्त्युक्तं श्रुत्वा आहोपुरुषिकयैकदेशीति शेषः। **असतीति**-तस्येत्यादिः। **प्रसङ्ग इति**-इति तत्र तौ मा भूतामिति धात्वादिस्थसंवृताकारस्य विवृतता प्रतिज्ञेयेति शेषः।

**( निराकरणभाष्यम् )**

**नैव लोके न च वेदे दीर्घप्लुतौ संवृतौ स्तः । कौ तर्हि ? ॥ विवृतौ ॥ यौ स्तस्तौ भविष्यतः ।**

**( प्रदीपः ) नैव लोक इति ।** असत्यपि सावर्ण्ये लिङ्गादकारस्य संवृतस्य विवृतौ दीर्घप्लुतौ भविष्यतः। यदयम**तो दीर्घो यञि अतो रोरप्लुतादप्लुत** इत्याहेति भावः।

**( उद्द्योतः )** ननु संवृतयोस्तयोरभावेऽपि संवृतस्य विवृतौ न स्यातामेव। आन्तरतम्याभावात्। न चैको यणिव एच इगिवानन्तरतमावपि भविष्यतः। सामर्थ्येन तत्र तथाङ्गीकारेऽपि खट्वाढकमित्यादौ चरितार्थस्याकः **सवर्णे** इत्यादेर्विषये तथा कल्पने मानाभावादत आह—**असत्यपीति । सावर्ण्ये इति ।** आन्तरतम्ये इत्यर्थः। एवं **चातो दीर्घ** इति, **अतो रोरि**त्यत्राप्लुतादित्यतो विशेषणं च सामान्यापेक्षं ज्ञापकमिति भावः।

**( तत्त्वालोकः )** भाष्ये—लोकवेदयोः संवृतदीर्घप्लुतयोरभावादेव तत्र तयोरप्राप्तिरिति तत्र तयोः निवृत्तये तस्य विवृतता न प्रतिज्ञेयेत्याशयेन सिद्धान्ती तन्निराकरोति-**नैवेति ।**

प्रदीपे—**सावर्ण्ये इति**-संवृताकारस्य विवृतदीर्घप्लुताभ्यां सहेत्यादिः। **लिङ्गादिति**-( वक्ष्यमाणात् ) तस्मादित्यादिः। लिङ्गमाह—**यदिति । अयं**-पाणिनिः।

उद्द्योते—**तयोः**-दीर्घप्लुतयोः। **आन्तरेति**-तस्य ताभ्यां सहेत्यादिः। **अनन्तरेति**-तस्येत्यादिः। **भविष्यत इति**-तौ तत्रेत्यादिः। **तत्र**-यणादिविषये। **तथाङ्गीकारेऽपि**-अनन्तरतमादेशस्वीकारेऽपि। **तथा कल्पने**-अनन्तरतमादेशकल्पने।

**( एकदेशिप्रयोजनसाधकभाष्यम् )**

**'स्थानी प्रकल्पयेदेतावनुस्वारो यथा यणम् ।**
**संवृतः स्थानी संवृतौ दीर्घप्लुतौ प्रकल्पयेद् ।**

**अनुस्वारो यथा यणम् । तद्यथा-सँय्यन्ता सँव्वत्सरः यँल्लोकं तँल्लोकमिति-अनुस्वारः स्थानी यणमनुनासिकं प्रकल्पयति ।**

**( उद्द्योतः )** संवृतदीर्घादिवदनुनासिकयवलानामपि वेदलोकयोरसत्त्वं मन्यमान आह—[ भाष्ये ] **स्थानी प्रकल्पयेदित्यादि ।**

**( तत्त्वालोकः )** भाष्ये—स्थानीत्याद्यंशं व्याचष्टे-**संवृत इति ।** अनुस्वार इत्याद्यंशं व्याचष्टे-**तद्यथेति । इति**-इत्यत्र।

उद्द्योते—**मन्यमान इति**-एकदेशीति शेषः।

**( निराकरणभाष्यम् )**

**विषम उपन्यासः । युक्तं यत्सतस्तत्र प्रक्लृप्तिर्भवति । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च । दीर्घप्लुतौ पुनर्नैव लोके नैव च वेदे संवृतौ स्तः ॥ कौ तर्हि ? । विवृतौ, यौ स्तस्तौ भविष्यतः ॥**

**( प्रदीपः ) सतस्तत्रेति ।** अशक्यत्वाद्दीर्घप्लुतयोः संवृतयोरुच्चारणस्येत्यर्थः।

**( उद्द्योतः )** तद्वत् संवृतौ दीर्घप्लुतावपि कुतो न सन्तावित्यत आह—**अशक्यत्वादिति ॥** केचित्तु शिष्टसंमतत्वात्ते सन्तः । इमौ तु न तथेति भाव इत्याहुः ॥ **सन्ति हि यण इ**ति [ भाष्ये ] यण इति बाहुल्याभिप्रायेण, रेफस्यानुनासिकत्वाभावादिति बोध्यम् ।

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती प्रकृते दृष्टान्तदार्ष्टान्तिकयोः महावैषम्योपपादनेन दृष्टान्तं विघटयति-**विषम इति । तत्र**-अनुनासिकयण्विषये । **हि**-यतः ।

उद्द्योते—**तद्वत्**-अनुनासिकयण्वत् । **ते**-अनुनासिकयणः । **इमौ**-संवृतदीर्घप्लुतौ । **तथा**-शिष्टसम्मतौ । **यण इतीति**-बहुवचनान्त इति शेषः । **प्रायेणेति**-प्रयुक्तः, न तु साकल्याभिप्रायेणेति शेषः । कुत इत्यत आह-**रेफस्येति ।**

**( आक्षेपभाष्यम् )**

**एवमपि कुत एतत्–तुल्यस्थानौ प्रयत्नभिन्नौ भविष्यतः, न पुनस्तुल्यप्रयत्नौ स्थानभिन्नौ स्याताम् ईकार ऊकारो वेति ? ॥**

**( प्रदीपः ) एवमपीति ।** असति विवृतत्वप्रतिज्ञाने संवृतस्याकारस्य संवृतावेवेकारोकारौ प्राप्नुतः, **ख्वृतः संवृता अन्यत्राभंवसाम्न** इति कैश्चिदीकारोकारयोः संवृतत्वस्याभ्युपगमात् ॥

**( उद्द्योतः )** नन्वीकारोकारयोः कथं संवृतत्वमत आह-**ख्वृतः संवृता इति ।** ईऊऋत इत्यर्थः ॥ क्वचित्तु **ख्वत** इति पाठः । ईकारोकाराकारा इत्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—एकदेशी शङ्कते-**एवमिति ।** अनन्तरतमादेशस्वीकारे इत्यर्थः । **तुल्येति**-संवृताकारस्य स्थाने इत्यादिः । **प्रयत्नभिन्नाविति**-विवृतदीर्घप्लुतावाकाराविति शेषः । **स्यातामिति**-संवृतदीर्घप्लुताविति शेषः ।

प्रदीपे—**असतीति**-धात्वादिस्थसंवृताकारस्येत्यादिः । **इति**-इति वचनेन । **कैश्चित्**-छन्दोगविशेषैः ।

**( समाधानभाष्यम् )**

**वक्ष्यति "स्थानेऽन्तरतमः" इत्यत्र स्थान इत्यनुवर्तमाने पुनः स्थानेग्रहणस्य प्रयोजनम् 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयो भवति' इति ॥**

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**वक्ष्यतीति ।** यत इत्यादिः । **भवतीति**-अतस्तत्र तथा भवतीति शेषः । एवं धात्वादिस्थसंवृताकारे विवृतत्वप्रतिज्ञानस्यैकदेशयुक्तं प्रयोजनान्तरं निराकृतं सिद्धान्तिनेति भावः ।

( इति विवृतत्वप्रतिज्ञानिरूपणम् )

---

**( वर्णसमाम्नाये जातिपक्षाधिकरणम् )**

**( २८ पूर्वपक्षयाक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनण्त्वात् ॥ ॥

**( भाष्यम् )**

**तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति— "अस्य च्वौ" "यस्येति च" ॥ किं कारणम् ? । अनण्त्वात् । न ह्येतेऽणः येऽनुवृत्तौ ॥ के तर्हि ? । येऽक्षरसमाम्नाये उपदिश्यन्ते ॥**

**( प्रदीपः ) तत्रानुवृत्तिनिर्देश इति ।** अकः **सवर्णे दीर्घ** इत्यादावयमेवाकारोऽनुकृत इति ककारादिना चिह्नेन ज्ञायते । ततश्चाण्त्वादस्य ग्राहकत्वमस्तु । **अस्य च्वावि**त्यादौ त्वकारस्यानण्त्वाद् ग्राहकत्वं न प्राप्नोतीत्यर्थः ॥ वृत्तिः शास्त्रस्य लक्ष्ये प्रवृत्तिस्तदनुगतो निर्देशोऽनुवृत्तिनिर्देशः ॥

**( उद्द्योतः )** एवंचाग्रप्रयोजनार्थमेव सर्वत्राकारस्य विवृतत्वं प्रतिज्ञेयमिति स्थिते शङ्कते [ भाष्ये ] **तत्रानुवृत्तीति ॥** एतद्विशेषणोपादानस्य फलमाह—**अकः सवर्ण इति ॥ अनण्त्वादिति ।** अक्षरसमाम्नायेऽपठितत्वादाकारस्यैवानण्त्वमित्यर्थः ॥ प्रत्युच्चारणं वर्णभेदेऽपि **अक** इत्यादौ ककारेण चिन्हेनैतदनुकरणत्वानुमानमिति भावः॥ **तदनुगत इति ।** साक्षाल्लक्ष्यसंस्कारकबोधजनक इत्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—**हि**-यतः । **तर्हीति**-अण इति शेषः ।

प्रदीपे—**अयमेव**-आक्षरसमाम्नायिक एव । **तस्य**-अकघटकस्य । **ग्राहकत्वमिति**-सवर्णानामित्यादिः ।

उद्द्योते—**आद्येति**-सवर्णग्रहणेत्यर्थः । **शङ्कते इति**-व्यक्तिपक्षे इदं, न तु जातिपक्षे **इति** स एव दुष्ट इति प्रतिपादयितुमित्यादिः । **एतदनुकरणेति**-वार्णसमाम्नायिकाकारानुकरणेत्यर्थः । तदनुगततया अक इत्यादावपि सत्त्वादाह-**साक्षादिति ।** प्रत्याहारमद्वारीकृत्येत्यर्थः । अक इत्यादौ तु तद्द्वारा सेति भावः ।

**( २९ एकदेशिसमाधानवार्तिकम् ॥ २ ॥ )**

## ॥ * ॥ एकत्वादकारस्य सिद्धम् ॥ * ॥

**( भाष्यम् )**

**एकोऽयमकारो यश्चाक्षरसमाम्नाये, यश्चानुवृत्तौ यश्च धात्वादिस्थः ।**

**( प्रदीपः ) एकत्वादकारस्येति ।** एकैवाकारव्यक्तिः, उदात्तादिभेदप्रतिभासस्तु व्यञ्जकध्वनिकृतः, खड्गतैलादर्शादिभेदे प्रतिबिम्बप्रतिभासभेदवत् । अकारस्य निदर्शनार्थत्वादिकारादीनामप्यैक्यं बोद्धव्यम् ।

**( उद्द्योतः )** ननूदात्तादिविरुद्धधर्माध्यासाद्भेदः स्यादत आह—**उदात्तादीति ॥ प्रतिबिम्बप्रतिभासभेदवदिति ।** भिन्नभिन्नाकारप्रतिबिम्बप्रतिभासवदित्यर्थः ॥ **इकारादीनामपीति । सर्व**ध्वनिभिरेकस्य स्फोटस्यैव तत्तद्रूपेणाभिव्यञ्जनात् । तत्तद्रूपाभिव्यक्तिकृतश्च परस्परं भेदव्यवहारोऽपीति भावः ।

**( तत्त्वालोकः )** भाष्ये—एकदेशी उत्तरयति-एकत्वादिति । **अनुवृत्तौ**-प्रत्याहारमद्वारीकृत्य लक्ष्यसंस्कारकबोधजनकनिर्देशे ।

प्रदीपे-**आदर्शेति**-दर्पणेत्यर्थः । **निदर्शनेति**-दिग्दर्शनेत्यर्थः ।

उद्द्योते—अकारादीनां प्रत्येकमेकत्वमात्रेण निर्वाहसम्भवेऽपि सर्ववर्णानामेकत्वमिति सिद्धान्तरीत्या आह-**सर्वेति ।** तथा च धात्वादिस्थसंवृताकारो न विवृतत्वेन प्रतिज्ञेय आक्षरसमाम्नायिकाभिन्नत्वादनुवृत्तिस्थवदिति भावः ।

( ३० आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अनुबन्धसङ्करस्तु ॥ * ॥

( भाष्यम् )

अनुबन्धसङ्करस्तु प्राप्नोति । "कर्मण्यण्" "आतोऽनुपसर्गे कः" इति केऽपि णित्कृतं प्राप्नोति ॥

**( प्रदीपः ) अनुबन्धसङ्कर इति ।** एकत्वे काण्टादीनां भेदाभावाद्गोदादौ ङीबादिः प्राप्नोति ।

**( उद्द्योतः )** [ भाष्ये ] **अनुबन्धसंकर इति ।** अस्यानुबन्धकार्यसंकर इत्यर्थः ॥ **ङीबादीति । टिड्ढेत्यादिना ।** आदिना णित्त्वप्रयुक्तयुक् । पर्यायेण कित्त्वणित्त्व प्रयुक्तकार्ययोरप्यविरोध इति भावः ।

**( तत्त्वालोकः )** भाष्ये—अकाराणामेकत्वे अनुबन्धकार्यसङ्कररूपं प्रथमदोषमाह-**अनुबन्धेति ।** अकाराणामेकत्वे सतीत्यादिः ।

प्रदीपे—**एकत्वे इति**-अकारादीनामित्यादिः । सतीति शेषः । **भेदेति**-सानुबन्धस्वरूपे भेदेऽपि निरनुबन्धस्वरूपे इत्यादि ।

उद्द्योते—**युक्**-आतो युक् चिण्कृतोरित्यनेन ।

( ३१ द्वितीयाक्षेपवार्तिकम् ॥ ४ ॥ )

॥*॥ एकाजनेकाज्ग्रहणेषु चानुपपत्तिः ॥*॥

( भाष्यम् )

एकाजनेकाज्ग्रहणेषु चानुपपत्तिर्भवति ॥ तत्र को दोषः ? ॥ किरिणा गिरिणेत्येकाजलक्षणमन्तोदात्तत्वं प्राप्नोति । इह च घटेन तरति घटिक इति द्व्यज्लक्षणः ठन् न प्राप्नोति ॥

**( प्रदीपः ) किरिणेति । न गोश्वन्त्सावर्णेति** प्रतिषेधादकारो नोदाहृतः ॥ **घटेनेति ।** एक एवाकारो द्विरुच्चार्यत इति द्व्यच्त्वाभावः । ठंस्तु बाहुलकादिषु कृतार्थः ।

**( उद्द्योतः )** [ भाष्ये ] **अनुपपत्तिरिति ।** इष्टव्यवस्थाया इति भावः ॥ अव्याप्त्यतिव्याप्त्योः प्रसङ्गादिति तात्पर्यम् ॥ **प्रतिषेधादिति । सावेकाच इति** प्राप्तस्येत्यर्थः ॥ **ठंस्त्विति । नौद्व्यचष्ठन्निति** विहितः ॥

**( तत्त्वालोकः )** भाष्ये—तत्र इष्टानुपपत्तिरूपं द्वितीयदोषमाह—**एकाजिति । तत्र**-एकाजनेकाज्ग्रहणेषु । अस्य एकाच् अनेकाच् वा गृह्यते येषु तेष्वित्यर्थः । अधिकरणेऽत्र ल्युट् । **इति**-इत्यत्र ।

प्रदीपे—**इति**-इत्यनेन । **इति**-इति हेतोः । **कृतार्थः**-चरितार्थः । उद्द्योते—**अव्याप्त्यतिव्याप्त्योः**-घटिक इत्यत्राव्याप्तेः, किरिणेत्यादावतिव्याप्तेश्च । **इति**-इत्यनेन ।

( ३२ तृतीयाक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ द्रव्यवच्चोपचाराः ॥ * ॥

( भाष्यम् )

द्रव्यवच्चोपचाराः प्राप्नुवन्ति । तद्यथा—द्रव्येषु नैकेन घटेनानेको युगपत्कार्यं करोति । एवमिममकारं नानेको युगपदुच्चारयेत् ॥

**( प्रदीपः ) द्रव्यवदिति ।** उपचारो व्यवहारः यथैकेन घटेनोदकाहरणादिक्रियां युगपदनेको न करोति, तथैवैकमकारं युगपदनेको नोच्चारयेदित्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—तत्र व्यवहारविरोधरूपं तृतीयदोषमाह-**द्रव्यवदिति । द्रव्येषु**-घटादिषु ।

( ३३ प्रथमाक्षेपनिराकरणवार्तिकम् ॥ ६ ॥ )

॥ ❀ ॥ विषयेण तु नानालिङ्गकरणात्सिद्धम् ॥ ❀ ॥

( भाष्यम् )

यदयं विषये विषये नानालिङ्गमकारं करोति—"कर्मण्यण्" "आतोऽनुपसर्गे क" इति । तेन ज्ञायते-नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात् नानालिङ्गकरणमनर्थकं स्याद्, एकमेवायं सर्वगुणमुच्चारयेत् ॥

**( प्रदीपः ) विषयेणेति ।** वार्तिककारेण करणत्वेन सामान्यरूपतया चाभेदेन विषयो निर्दिष्टः । भाष्यकारस्त्वधिकरणत्वं व्यक्तिभेदाद्वीप्सां च प्रतिपादयति—**विषये विषय इति । सर्वगुणमिति ।** गुणा अनुबन्धाः, कार्याश्रितत्वादुपकारकत्वात् । तत्र कर्मणि कण्टिति ब्रूयादित्यर्थः ॥

**( उद्द्योतः ) करणत्वेनेति ।** अधिकरणस्य करणत्वविवक्षयेत्यर्थः । **सामान्यरूपतयेति ।** विषयत्वरूपेणेत्यर्थः ॥ **भाष्यकारस्त्विति ।** एकविषये नानालिङ्गकरणादर्शनाद्विषयभेदेन तदित्यत्र तात्पर्यम् ॥ गुणा उदात्तादय इति भ्रमं व्यावर्तयति · **गुणा अनुबन्धा इति ॥** तेषां गुणत्वमुपपादयति—**कार्येति ॥**

**( तत्त्वालोकः )** भाष्ये—एकदेशो अकाराणामेकत्वे आपादितं अनुबन्धकार्यसङ्कररूपं प्रथमदोषं परिहरति-**विषयेणेति । यत्**-यस्मात् । **अयं**-पाणिनिः । एवमग्रेऽपि । **नानालिङ्गं**-विभिन्नानुबन्धचिह्नितम् । **इति**-इत्यादौ । **हीति**-वाक्यालङ्कारे । **स्यादिति**-अनुबन्धकार्यसङ्कर इत्यादिः । तर्हि अकारे इति शेषः । **एकमेवेति**-तथेत्यादिः । अकारमिति शेषः । **सर्वगुणं**-सर्वानुबन्धचिह्नितम् ।

प्रदीपे—**चाभेदेन**-एकत्वेन च । अनुबन्धानां कुतः कार्याश्रितत्वमित्यत आह-**उपकारकेति ।** संसर्गिभेदकं यदन्यत् सव्यापारं प्रतीयते । गुणत्वं परतन्त्रत्वात्तस्य शास्त्रे व्यवस्थितम् ॥ इत्यनुसारेण भेदकत्वादनुबन्धानां गुणत्वमिति भावः । **तत्र**-सकलानुबन्धचिह्निताकारस्योच्चारणीयत्वे ।

उद्द्योते—**नानेति**-अकारे इत्यादिः । **तत्**-अकारे । विभिन्नानुबन्धचिह्नितताकरणं । **तेषाम्**-अनुबन्धानाम् ।

( ज्ञापकनिराकरणभाष्यम् )

नैतदस्ति ज्ञापकम् । इत्संज्ञाप्रक्लृप्त्यर्थमेतत्स्यात् । न ह्ययमनुबन्धैः शल्यकवच्छक्य उपचेतुम् । इत्संज्ञायां हि दोषः स्याद् । आयम्य हि द्वयोरित्संज्ञा स्यात् ॥

कयोः ? ॥

आद्यन्तयोः ॥

**( प्रदीपः ) शल्यकवदिति ।** शल्यकः प्राणिविशेषः । स यथा कण्टकतुल्यैः पत्त्रैर्व्याप्यते । नैवं सर्वानुबन्धयुक्तोऽकारः शक्यो निर्देष्टुम् । आद्यन्तयोरेवेत्संज्ञाविधानान्मध्यपातिनां श्रवणप्रसङ्गात् । इत्संज्ञैवायच्छते व्याप्रियत इत्येककर्तृकत्वादायम्येत्युक्तम् ॥

**( उद्द्योतः ) व्याप्रियते ।** विषयत्वेन गृह्णातीत्यर्थः ॥ **एककर्तृकत्वादिति ।** स्यादित्यनेनेत्संज्ञारूपैककर्तृकत्वादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—अकारे विभिन्नानुबन्धचिह्निततकारणस्य अनुबन्धकार्यसङ्कराभावज्ञापकत्वं विघटयति–**नेति । एतत्**–अकारे विभिन्नानुबन्धचिह्निततकारणम् । एवमग्रेऽपि । **ज्ञापकमिति**–अनुबन्धकार्यसङ्कराभावस्येत्यादिः । कुत इत्यत आह–**इत्संज्ञेति ।** यत इत्यादिः । **प्रक्लृप्तीति**–सिद्धीत्यर्थः । **स्यादिति**–अत इति शेषः । **हि**–यतः । **अयम्**–अकारः । कुत इत्यत आह–**इत्संज्ञायामिति ।** तथा कृते इत्यादिः । कृतायामिति शेषः । **हि**–यतः । **दोषः**–मध्यपातिश्रवणरूपः । कुत इत्यत आह–**आयस्येति ।** व्यावृत्य ( स्वविषयत्वं सम्पाद्य ) इत्यर्थः । **हि**–यतः । **आद्यन्तयोरिति**–न तु मध्यपातिनामिति भावः ।

प्रदीपे—**पञ्चैरिति**–एतेन शल्यकस्य पक्षिता द्योत्यते । वस्तुतस्तु सर्वाङ्गव्यापकण्टकः पञ्चनखो मृगः शल्यकपदवाच्य इति भावः । कुत इत्यत आह–**आद्यन्तयोरिति । इति**–इति हेतोः । अस्य ( आद्यन्तयोः विषयीकरणरूपस्य ) व्यापारस्येति शेषः ।

उद्द्योते—**विषयत्वेनेति**–आद्यन्तावित्यादिः ।

( आक्षेपनिराकरणवार्तिकव्याख्यान्तरभाष्यम् )

**एवं तर्हि—**

**॥ विषयेण तु पुनर्लिङ्गकरणात्सिद्धम् ॥ ।**

**यदयं विषये विषये पुनर्लिङ्गमकारं करोति—"प्राग्दीव्यतोऽण्" "शिवादिभ्योऽण्" इति तेन ज्ञायते-नानुबन्धसङ्करोऽस्तीति । यदि हि स्यात्पुनर्लिङ्गकरणमनर्थकं स्यात् ॥**

**( प्रदीपः ) एवं तर्हीति । विषयेणे**त्येतदन्यथा व्याचष्टे नानाशब्दमपनीय पुनःशब्दं पठित्वा । यद्यनुबन्धसंकरः स्यादकारमेव शिवादिभ्यो विदध्यात् ॥ अथोच्येत—णित्कृतमेव यथा स्यात् ञित्कृतं मा भूदिति नियमार्थमेतत् स्यात् । तन्न, नियमाद्विधेर्बलीयस्त्वात् ॥

**( उद्द्योतः )** नानेति स्थिते कथमन्यथाव्याख्यानमत आह—**नानाशब्दमिति ॥ नियमादिति ।** ज्ञापकत्वे हि विध्यर्थत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**पुनर्लिङ्गं**–पुनरनुबन्धचिह्नितम् । शेषं पूर्ववत् ।

प्रदीपे—**अकारमिति**–तर्हीत्यादिः । **एतत्**–अकारस्य पुनरनुबन्धचिह्निततकरणम् । **बलीयस्त्वादिति**–तथा च तस्य विधित्वमाश्रित्य अनुबन्धकार्यसङ्कराभावज्ञापकतैव मन्तव्येति भावः ।

( प्रथमव्याख्याभ्युपगमभाष्यम् )

**अथवा पुनरस्तु—**

**॥विषयेण तु नानालिङ्गकरणात्सिद्धम्॥ इत्येव ॥**

( ज्ञापकनिराकरणस्मारणभाष्यम् )

**ननु चोक्तम्—इत्संज्ञाप्रक्लृप्त्यर्थमेतत् स्याद् इति ॥**

( ज्ञापकसाधकभाष्यम् )

**नैष दोषः, लोकत एतत्सिद्धम् । तद्यथा लोके कश्चिदेवं देवदत्तमाह–इह मुण्डो भव, इह जटिलो भव, इह शिखी भवेति यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपतिष्ठते । एवमयमकारो यल्लिङ्गो यत्रोच्यते तल्लिङ्गस्तत्रोपस्थास्यते ॥**

**( प्रदीपः ) अथवेति ।** न ब्रूमः–सर्वगुणमुच्चारयेदिति, किं तु यथा लोके–इह मुण्डो भव इह नग्नो भवेति यद्गुणको यत्रोच्यते तद्गुण एव तत्र भवति, एवमिहापि याभ्यः प्रकृतिभ्यो यदनुबन्धविशिष्टो विधीयते तासु तदनुबन्धनिमित्तमेव कार्यं संपादयति ॥

**( उद्द्योतः ) यथा लोके इति ।** प्रभ्वाज्ञया गूढचारादिरिति शेषः ॥ एवंच लोकव्यवहारदृष्टान्तेनैवासंकरः सिद्ध इत्यर्थः ॥ **यत्र** देशे काले वा ॥ **तद्गुण एवेति ।** भाष्येऽपि–**तल्लिङ्गस्तत्रेति** सावधारणं व्याख्येयमिति भावः ॥ [ अत्र वाक्यत्रयेऽपि तु शब्दः पूर्वपक्षव्यावृत्तौ ॥ ]

**( तत्त्वालोकः )** भाष्ये—नाना ( अनुबन्धरूप ) लिङ्गकरणस्यैव अनुबन्धकार्यसङ्कराभावज्ञापकतेति पुनरुत्थापयति–**अथवेति । तस्य** तज्ज्ञापकतायाः कृतं निराकरणं स्मारयति–**ननु चेति ।** लोकतः अनुबन्धकार्यसङ्कराभावं साधयति–**नेति । एषः**–अनुबन्धकार्यासङ्करासिद्धिरूपः । कुत इत्यत आह–**लोकत इति । एतत्**–अनुबन्धकार्यासङ्करणम् । लोकतः तस्य सिद्धिमुपपादयति–**तद्यथेति ।**

प्रदीपे—**सर्वेति**–अकारमित्यादिः । **भवेतीति**–रूपेणेति शेषः । **इह**–व्याकरणशास्त्रे । **विधीयते इति**–अकार इत्यादिः ।

उद्द्योते—**गूढचारेति**–गुप्तचरेत्यर्थः । **असङ्करे इति**–अनुबन्धकार्यस्येत्यादिः । **वाक्यत्रये**–विषयेण तु नानेति प्रथमवाक्ये, विषयेण तु पुनरिति द्वितीयवाक्ये, लोकाभिप्रायके विषयेण तु नानेति तृतीयवाक्ये च ।

( द्वितीयाक्षेपानुवादभाष्यम् )

**यदप्युच्यते ॥एकाजनेकाज्ग्रहणेषु चानुपपत्तिः॥ इति ॥**

( २४ द्वितीयाक्षेपनिराकरणवार्तिकम् ॥ ७ ॥

**॥ ॥ ॥ एकाजनेकाज्ग्रहणेषु चावृत्तिसंख्यानात् ॥ ॥ ॥**

( भाष्यम् )

**एकाजनेकाज्ग्रहणेषु चावृत्तेः संख्यानादनेकाच्त्वं भविष्यति । तद्यथा–"सप्तदश सामिधेन्यो भवन्ति" इति "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यावृत्तितः सप्तदशत्वं भवति । एवमिहाप्यावृत्तितोऽनेकाच्त्वं भविष्यति ॥**

**( प्रदीपः ) आवृत्तिसंख्यानादिति ।** यथा विकृतियागे त्रयोदश सामिधेन्यः प्रथमोत्तमयोस्त्रिरावृत्त्या सप्तदश संपद्यन्ते । तथा घटेन तरतीति द्व्यज्लक्षणः ठन् भवति ॥ ननु मुख्ये विषये कृतार्थत्वाद्वचनस्य गौणं द्व्यच्त्वं कथं कार्यस्य निमित्तम् ? उच्यते–**गोद्व्यच** इत्यत्राश्वशब्दप्रतिषेधाल्लिङ्गादावृत्तिभेदेनापि भेदाश्रयकार्यप्रवृत्तिः ॥

**( उद्द्योतः ) यथा विकृतियागे इति ।** तत्र हि प्राप्तसामिधेन्यनुवादेन सप्तदशत्वं विहितम् । तच्च **त्रिः प्रथमा**मित्यादिवाक्यबोधितया प्रथमोत्तमयोस्त्रिरावृत्त्यैवेति भावः ॥ **त्रिरावृत्त्येति । आवृत्तिः** पुनरुच्चारणम् । तज्जन्यसङ्ख्यया सप्तदशत्ववदत्रानेकाच्त्वमिति भावः ॥ [ **लिङ्गादिति ।** अनेन लिङ्गेन श्रुतिस्मृतिसिद्धत्वादस्य व्यवहारस्य गौणत्वमेव नेति ज्ञाप्यत इति भावः ] ॥ [ भाष्ये ] **आवृत्तेः संख्यानाद् ।** गणनादित्यर्थः ।

तिरिक्तसादृश्याभावादित्याशयात्। तदाह—**नास्त्येति ॥** दानादीनां कथं लौकिकत्वेनोपन्यासोऽत आह—**स्मार्तत्वादिति ॥ अस्वस्थेनेति ।** आस्तिकत्वे सत्यपीति भावः ॥ **माल्यगुणकण्ठ इति ॥** मालायां साधूनि माल्यानि पुष्पाणि तैर्युक्तो गुणः सूत्रं कण्ठे यस्येत्यर्थः। **गड्वादित्वा**त्परनिपातः ॥ **अकार्यं हीति । इह** लोके भीरुणेत्यर्थः ॥ [ अर्थभेदेन साधुत्वे दृष्टान्तमाह—**अस्वेति ॥** ]

**( तत्त्वालोकः )** भाष्ये—**एवमिति**—ब्राह्मणमिति शेषः। **अनुहन्ति**—तमनुकृत्य ब्राह्मणं हन्ति। **हत इति**—ब्राह्मणमित्यादिः। **अपीति**—एवमित्यर्थः। सुरामिति शेषः। **अनुपिबति**—तमनुकृत्य सुरां पिबति। **पिबत इति**—सुरामित्यादिः। अनुकार्यविजातीयानुकरणस्य अनुकरणत्वे सत्यपि अनुकार्यसमानफलकत्वाभावमाह—**यस्त्विति**।

प्रदीपे—**भाष्यकारस्त्विति**—लकारोपदेशस्य अशक्तिजे ति शेषः। **तस्याः**—सुरापानादिरूपायाः। **अस्वगोण्यादिवदिति**—यथा अस्वशब्दो वाहने असाधुः, निर्धने तु साधुः, गोणीशब्दश्च गवि असाधुः, आवपने तु साधुरित्यर्थः।

उद्द्योते—**एकेति**—तदौषधमिवेदमौषधमित्यादावित्यादिः। **सादृश्येन**—सादृश्यरूपतया। तथा च अनुकार्यब्राह्मणहननाद्यनुकरणब्राह्मणहननाद्योः पातित्यजनकतावच्छेदकं ब्राह्मणहननत्वादेव, न त्वनुकार्यत्वमनुकरणत्वं वेति तयोः तदवच्छेदकत्वाभावप्रतिपादन एवात्र तात्पर्यं, न तु तत्र तयोरभावे इति भावः। नास्तिकत्वे सति तु स्वस्थेनापि चित्तेनाकार्यं क्रियते इत्यत आह—**आस्तिकत्वे इति । साधुत्वे इति**—लृतकशब्दस्येत्यादिः। तथा चानुकरणस्यादुष्टत्वेन अशक्तिजानुकरणार्थं लकारोपदेशः कर्तव्य इति भाष्यकृदभिप्रायः।

### ( प्रयोजनप्रत्याख्यानभाष्यम् )

**एवमिहापि य एवमसावपशब्दं प्रयुङ्क्ते इति तस्यानुकुर्वन्नपशब्दं प्रयुञ्जीत, सोऽप्यपशब्दभाक् स्यात् ॥**

**( उद्द्योतः )** भाष्ये प्रयोजनप्रत्याख्यानवादी शङ्कते—**एवमिहापीति ॥**

**( तत्त्वालोकः )** भाष्ये—**एवम्**-ब्राह्मणहननानुहननसुरापानानुपानादिवत्। उद्द्योते—**प्रयोजनेति**—लकारोपदेशस्येत्यादिः।

### ( समाधानभाष्यम् )

**अयं त्वन्योपशब्दपदार्थकः शब्दो, यदर्थ उपदेशः कर्तव्यः । न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यतेऽपशब्दपदार्थकः शब्दोऽपशब्दो भवतीति, अपशब्द इत्येव तस्यापशब्दः स्यात् । न चैषोऽपशब्दः ॥**

**( प्रदीपः ) अपशब्द इत्येवेति ।** अस्य हि गाव्यादयोऽपभ्रंशा वाच्याः ॥

**( उद्द्योतः )** प्रयोजनवादी समाधत्ते—**अयं त्वन्य इति ॥ अस्य हीति ।** एवं च तत्तदर्थे व्याकरणाननुगतत्वमपशब्दत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये - **अयं**—लृतकः। **अन्यः**—अपशब्दान्यः। **उपेति**—लकारस्येत्यादिः। कुत इत्यत आह—**न चेति**। अन्वयमुखेनोक्त्वा व्यतिरेकमुखेनाह—**अवश्यमिति । एतत्**—लृतक इति। **एवम्**—अपशब्दभिन्नशब्दत्वेन। **हि**—यतः। **एषः**—लृतकशब्दः।

उद्द्योते—**प्रयोजनेति**—तस्येत्यादिः।

### ( प्रयोजनभाष्यम् )

**अयं खल्वपि भूयोऽनुकरणशब्दोऽपरिहार्यः, यदर्थ उपदेशः कर्तव्यः—साध्वलृकारमधीते मध्वलृकारमधीत इति ॥**

**( प्रदीपः ) अयमिति ।** असाधोरनुकरणमित्येतदप्यत्र नास्तीति भावः ॥

**( उद्द्योतः )** भाष्ये-तुष्यतु दुर्जनन्यायेन साध्वनुकरणार्थत्वं लकारोपदेशस्याह—**अयं खल्वपीति ।** यद्यप्यर्थशून्यवर्णानां न साधुत्वम्, तथापि वर्णोच्चारविधानेन तेषां साधुत्वमिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—**उपेति**—तस्येत्यादिः। **मधु**—मनोहरम्।

प्रदीपे—**अत्र**—साध्वलृकारमधीते इत्यादौ।

उद्द्योते—**तेषाम्**—अर्थशून्यलवर्णानाम्।

### ( खण्डनभाष्यम् )

**कस्थस्य पुनरेतदनुकरणम् ? ॥**

**क्लृपिस्थस्य ॥**

**यदि क्लृपिस्थस्य, क्लृपेश्च लत्वमसिद्धम् । तस्यासिद्धत्वादृकार एवाच्कार्याणि भविष्यन्ति ॥**

**( तत्त्वालोकः )** भाष्ये—साध्वनुकरणार्थताऽपि लकारोपदेशस्य न युक्तेत्याशयेन पृच्छति—**कस्थेति।** सिद्धान्ती समाधत्ते—**क्लृपिस्थेति।** खण्डयिता आह—**यदीति । क्लृपिस्थस्येति**—लकारस्यैतदनुकरणं तर्हीति शेषः। **तस्य**—लत्वस्य।

### ( प्रयोजनभाष्यम् )

**भवेत्तदर्थेन नार्थः स्यात् । अयं त्वन्यः क्लृपिस्थपदार्थकः शब्दः, यदर्थ उपदेशः कर्तव्यः ॥**

**( प्रदीपः ) भवेदिति ।** प्रयोगस्थस्येदमनुकरणम्। प्रयोगे च नास्ति **पूर्वत्रासिद्ध**मिति भावः ॥

**( उद्द्योतः ) भवेत्तदर्थेनेति ।** तदर्थेन क्लृपिस्थलकारार्थेन लकारस्योपदेशेन प्रयोजनं न भवति—एवं यद्यपि भवेत्तथापि तदनुकरणार्थेनार्थ इत्यर्थः। ननु क्लृपिस्थस्यासिद्धत्वात्कथं तदनुकरणमत आह—**प्रयोगस्थस्येति ॥ प्रयोगे** अनुकरणप्रयोगे। शास्त्रे तदीयकार्ये वाऽसिद्धत्वं पौर्वापर्यस्य तत्रैव संभवात्। न चैवं प्रकृते **इति** भावः।

**( तत्त्वालोकः )** भाष्ये—लकारोपदेशप्रयोजनवादी आह—**भवेदिति । उपेति**—तस्येत्यादिः।

प्रदीपे—**प्रयोगस्थस्येति**—लकारस्येति शेषः।

उद्द्योते —**प्रयोजनमिति**—तस्येत्यादिः। **तदनुकरणार्थेन**—क्लृपिस्थलकारानुकरणार्थेन। अस्य तेन तस्येति शेषः। **क्लृपिस्थस्येति**—लस्येति शेषः। **तदनुकरणं**—क्लृपिस्थलकारानुकरणम्। नन्वनुकार्यप्रयोगे कार्यप्रवृत्तिसमये पूर्वत्रासिद्धमित्यस्य प्रवृत्तिसत्त्वेन कथं प्रयोगे तदप्रवृत्त्युक्तिरित्यत आह—**अनुकरणेति । तत्रैव**—शास्त्रे एव।

### ( खण्डनभाष्यम् )

**न कर्तव्यः । इदमवश्यं कर्तव्यम्—"प्रकृतिवदनुकरणं भवति" इति ॥ किं प्रयोजनम् ? ॥ 'द्विः पचन्त्वित्याह' "तिङ्ङतिङः" इति निघातो यथा स्यात् । 'अग्नी इत्याह' "ईदूदेद्द्विवचनं प्रगृह्यम्" इति प्रगृह्यसंज्ञा यथा स्यात् ॥**

**( प्रदीपः ) प्रकृतिवदिति ।** तत्र यथा क्लपेर्लत्वस्यासिद्धत्वादृकारद्वारेण लकारस्याच्कार्यं तथानुकरणस्यापीत्यर्थः । **द्विरिति ।** पचन्तु पचन्त्विति केनचिदुक्ते **द्विः पचन्त्वित्यनुकरणम्** । एतच्च क्रियासाधनाद्यनभिधानात्तिङन्तं न भवति । एवमग्नी इत्यनुकरणं द्व्यर्थानभिधानान्न **द्विवचनान्तम्** ॥ ननु गम्ऌ सृप्ऌ इत्यादिस्थस्य यदानुकरणं तदा कथं प्रकृतिवद्भावः । **धुताधूलृदित इ**ति लकारे परतो यथादेशकरणादित्संज्ञानुवादाच्च धात्वनुबन्धस्य लकारस्याच्कार्याण्यनुमीयन्ते ततस्तदनुकरणस्य सिद्धः प्रकृतिवद्भावः ॥

**( उद्द्योतः ) ऋकारद्वारेणेति ।** ऋकारबुद्धयेत्यर्थः ॥ भाष्ये—**द्विः पचन्त्विति ।** पचन्त्विति द्विराहेत्यन्वयः । असत्यतिदेशे तिङन्तत्वाभावे हेतुमाह—**एतच्चेति । द्व्यर्थेति ।** एतदर्थमेव द्विवचनमित्यन्वयार्थसंज्ञाकरणम् ॥ **नन्विति ।** एवं च पाठाभावे मूलस्यैवाच्त्वाभावात्कथं तदनुकरणेऽच्कार्यमिति तदर्थं उपदेश आवश्यक इति भावः ॥ **अनुमीयन्त इति ।** इदं चिन्त्यम् । आनुमानिकवचनेन कृतस्य वर्णस्य प्रत्याख्यानायोगात् । तस्माद्गम्ऌ इत्यादिस्थ लृकारो धर्माजनकत्वान्न साधुरिति वक्तुं युक्तम् । एवं चा**शक्तिजानुकरणे**ति वार्तिकेऽशक्तिजपदं व्यर्थमिति कैयटतात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—तत्प्रयोजनखण्डक आह—**नेति** । तदर्थं लकारोपदेश इति **शेषः** । कुत इत्यत आह—**इदमिति ।** यत इत्यादिः । **इत्याहेति—इ**त्यत्रेति शेषः । **इति—इ**त्यनेन ।

प्रदीपे—**तत्र**—अनुकार्ये । एवं प्रकृतिवदित्यतिदेशाश्रयणेन लृकारोपदेशस्य साध्वनुकरणार्थत्वे भाष्यकृता खण्डिते तदसाधुत्वं सूचयन् कश्चिदेकदेशविषयतया तस्य तदर्थत्वं प्रतिपादयितुमाह—**नन्विति । यदेति—**लृकारस्येत्यादिः । उत्तरयति—**धुतेति । इति—**इत्यनेन । **तदनुकरणस्य—**गम्ऌप्रभृतिस्थलृकारानुकरणस्य ।

उद्द्योते—**अतिदेशे इति—**प्रकृतिवदित्यतिदेशे इत्यर्थः । पचन्त्वित्यनुकरणस्येति शेषः । **एतदर्थ—**द्व्यर्थाभिधानार्थम् । **पाठेति—**वर्णसमाम्नाये लृकारस्येत्यादिः । **मूलस्यैव—**अनुकार्यस्यैव लृकारस्य । **तदनुकरणे—**लृकारानुकरणे । **इति—**इति हेतोः । **तदर्थः—**अनुकरणार्थः । **उपेति—**तस्येत्यादिः । **कृतस्य—**उपदिष्टस्य । **युक्तमिति—**तथा च गम्ऌप्रभृतिस्थलृकारानुकरणस्य दुष्टत्वेन शास्त्राविषयत्वान्न साध्वनुकरणार्थता लकारोपदेशस्येति भावः ।

**( खण्डनोपसंहारभाष्यम् )**

**यदि—प्रकृतिवदनुकरणं भवतीत्युच्यते, अपशब्द एवासौ भवति कुमार्य् लृतक इत्याह ब्राह्मण्यॢतक इत्याह । अपशब्दो ह्यस्य प्रकृतिः ॥**

**( उद्द्योतः )** एवं साध्वनुकरणार्थत्वे लकारोपदेशस्य **प्रकृति**वदित्याश्रयणेन खण्डिते तेनैवाशक्तिजानुकरणार्थत्वमपि खण्डयति पूर्वपक्षी भाष्ये **यदि प्रकृतिवदिति ॥**

**( तत्त्वालोकः )** भाष्ये—**उच्यते इति—**न्नहीति शेषः । **असौ—**लृतकः । **इत्याहेति—**इत्यादाविति शेषः । **हि—**यतः ।

उद्द्योते—**तेनैव—**प्रकृतिवदित्यतिदेशाश्रयणेनैव । अस्य तस्येति शेषः ।

**( प्रयोजनभाष्यम् )**

**न चापशब्दः प्रकृतिः । नह्यपशब्दा उपदिश्यन्ते । न चानुपदिष्टा प्रकृतिरस्ति ॥**

**( प्रदीपः ) न चापशब्द इति ।** सिद्धान्तवादी । प्रकरणाद्धि शास्त्रीया प्रकृतिराश्रीयते, शास्त्रनिबन्धनं च कार्यमतिदिश्यते, अपशब्दश्च न शास्त्रीया प्रकृतिरनुपदिष्टत्वात् । नचापशब्दत्वं शास्त्रीयं कार्यं नापि तदतिदेष्टुं शक्यम् । नहि साधोरसाधुत्वातिदेशो युक्तिमान् । तदेवं भाष्यकारेणा**शक्तिजानुकरणार्थत्वं लृकारोपदेशस्य** स्थापितम् ॥

**( उद्द्योतः )** ननु मा भूदपशब्दोपदेशः प्रकृतित्वं तु कथं नेत्यत आह—**प्रकरणाद्धिति ।** अतिदेशस्य शास्त्रीयत्वमनेन दर्श्यते । तत्र च प्रत्यासत्त्या शास्त्रीयप्रकृत्यादेरेव ग्रहणमुचितमिति भावः ॥ उपलक्षणं भाष्यमित्याह—**शास्त्रनिबन्धनं चेति ॥ नापि तदतिदेष्टुमि**त्यादि चिन्त्यम् । अब्राह्मणे ब्राह्मणत्वाद्यतिदेशवत्संभवादिति कश्चित् ॥ **तदेवमिति ।** अशक्तिजस्य शास्त्रीयप्रकृतित्वाभावान्न तदनुकरणेऽतिदेशप्रवृत्तिरित्यपशब्दत्वाभावा**दच्कार्यसिद्ध्यर्थं लृकारोपदेश** इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तस्याशक्तिजानुकरणार्थतां स्थापयति—**न चेति ।** हि—यतः ।

प्रदीपे—**वादीति**—आहेति शेषः । हि—यतः । **तत्**—अपशब्दत्वम् । **हि**—यतः । **तत्**—तस्मात् । **एवम्**—उक्तरीत्या ।

उद्द्योते—**कथमिति**—तस्येत्यादिः । ननु प्रकृत्यादिलक्षणस्य शास्त्रेऽकृततया तत्प्रकरणाभावात् कथं प्रकरणेन प्रकृत्याश्रयणमित्यत आह—**अतिदेशस्येति । अनेन**—प्रकृतिवदिति वचनेन । **तत्र**—प्रकृतिवदिति वचनेऽतिदेशे वा । **सम्भवात् ।** साधौ असाधुत्वातिदेशसम्भवात् । **अशक्तिजस्य**—अपशब्दस्य । **अतिदेशेति**—प्रकृतिवदित्यतिदेशेत्यर्थः । **इति**—इति हेतोः । अस्य अशक्तिजानुकरणस्येति शेषः । **अजिति**—तत्रेत्यादिः ।

( इत्यशक्तिजानुकरणखण्डनमण्डनम् )

**( ४१ तृतीयप्रयोजनप्रत्याख्यानवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ एकदेशविकृतस्यानन्यत्वात्प्लुत्यादयः ॥ * ॥

**( भाष्यम् )**

**"एकदेशविकृतमनन्यवद्भवति" इति प्लुत्यादयोऽपि भविष्यन्ति ॥**

**( प्रदीपः ) एकदेशविकृतस्येति ।** ऋकारे रेफभागस्य ले कृते स एव ऋकार इति प्रत्यभिज्ञानादिति भावः ॥

**( उद्द्योतः )** इदानीं प्लुत्याद्यर्थत्वं तस्य परिहरति भाष्ये—**एकदेशेति ॥ रेफभागस्येति ।** वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पक्षे इत्यर्थः ॥ **प्रत्यभिज्ञानादिति ।** एवं च छिन्नपुच्छश्वदृष्टान्तेन लोकन्यायसिद्धमस्य ऋत्वमित्यर्थः । व्याख्यानभाष्ये **अनन्यवद् इ**त्यस्यान्यवन्नेत्यर्थः । अन्यसादृश्यस्यापि निषेधे तत्त्वं दृढीकृतम् ॥

**( तत्त्वालोकः )** भाष्ये—**विकृतमिति**—अत्र कर्मणि क्ते **बहु**व्रीहिः । सामान्ये नपुंसकञ्च । **इति**—इत्यनेन ।

उद्द्योते—**तस्य**—लकारोपदेशस्य । **अस्य**—लकारस्य । अनन्यवदित्यस्य अन्यभिन्नवदित्यर्थकतयाऽस्य वैयर्थ्यं स्यादित्यत आह—**व्याख्यानेति ।** अपिना अन्यत्वस्य समुच्चयः ।

**( प्रयोजनबाधाक्षेपभाष्यम् )**

**यदि 'एकदेशविकृतमनन्यवद्भवति' इत्युच्येत, "राज्ञः क च" राजकीयम् "अल्लोपोऽन" इति लोपः प्राप्नोति ॥**

( तत्त्वालोकः ) भाष्ये—एवं तत्प्रयोजनखण्डकसिद्धान्त्येकदेशिना तस्य तदर्थत्वे निराकृते तत्प्रयोजनवादिसिद्धान्त्येकदेशी शङ्कते—यदीति । उच्यतेति—तर्हीति शेषः । क चेति—इत्यनेन कादेशाक्षिप्तत्वे इति शेषः । कीयमिति—इत्यत्रेति शेषः । इति—इत्यनेन । अस्य अकारस्येति शेषः ।

( प्रत्याख्यातृसमाधानभाष्यम् )

एकदेशविकृतमनन्यवत् षष्ठीनिर्दिष्टस्य ॥

( प्रदीपः ) षष्ठीनिर्दिष्टस्येति । राज्ञः क चेत्यत्र राजन्शब्दः षष्ठीनिर्दिष्टो न त्वन् इति लोपाभावः ॥

( उद्द्योतः ) सिद्धान्त्येकदेशी वर्ति दृष्ट्वा स्थानिवत्सूत्रमनेनोपन्यस्तमित्याशयेनाह—षष्ठीनिर्दिष्टस्येति ॥ तत्संबन्ध्येकदेशविकृतमादेशरूपमित्यर्थः । नन्वल्लोपोऽन इत्यत्रापि षष्ठीनिर्दिष्ट एवेत्यत आह—राज्ञ इति । येन विकारेण यस्य विकृतस्य यद्रूपमेकदेशविकृतन्यायेन प्राप्यते तद्रूपावच्छिन्नस्य तेन रूपेण तद्विकारविधौ षष्ठीनिर्दिष्टस्येति तदर्थं इति भावः ॥

( तत्त्वालोकः ) भाष्ये —तत्प्रयोजनखण्डकसिद्धान्त्येकदेशी—समाधत्ते—एकदेशेति । प्रदीपे —इति—इति हेतोः । अस्य अकारस्येति शेषः ।

उद्द्योते—सिद्धान्तीति—तत्प्रयोजनखण्डकेत्यादिः । वर्तिम्—अनन्यवदित्यत्र वतिम् । अनेन—तत्प्रयोजनवादिना । तदिति—षष्ठीनिर्दिष्टेत्यर्थः । येन—ककाररूपादेशेन । यस्य—अकः । यद्रूपम्—अन्त्वम् । तद्रूपावच्छिन्नस्य—अन्त्वावच्छिन्नस्य अनः । नन्वन्त्वावच्छिन्नस्यानो राजन्त्वेन षष्ठीनिर्दिष्टत्वमस्त्येवेत्यत आह—तेन रूपेणेति । अस्मात्रनिष्ठान्त्वेन रूपेण । तद्विकारेति—ककाररूपादेशात्मकविकारेत्यर्थः । निर्दिष्टस्येति—एकदेशे विकृतमनन्यवद् भवतीति शेषः । तदर्थः—प्रकृतवार्त्तिकार्थः ।

( प्रयोजनवादिभाष्यम् )

यदि—षष्ठीनिर्दिष्टस्येत्युच्यते, 'क्लृ३प्तशिख' इति प्लुतो न प्राप्नोति। नह्यत्र ऋकारः षष्ठीनिर्दिष्टः ॥ कस्तर्हि ? ॥ रेफः ॥

( प्रदीपः ) यद्येवं कृपो रो ल इत्यत्रापि ऋकारः षष्ठ्या न निर्दिष्ट इत्यनन्यत्वं न प्राप्नोतीत्याह—यदीति ॥

( उद्द्योतः ) भाष्ये प्लुतो न प्राप्नोतीति द्विर्वचनादेरप्युपलक्षणम् ॥ कस्तर्हि रेफ इति । कृप इति त्ववयवषष्ठीति भावः ॥

( तत्त्वालोकः ) भाष्ये-उच्यते इति—तर्हीति शेषः । इति—इत्यत्र । हि—यतः । अत्र—लत्वविधौ ।

प्रदीपे—एवमिति—तर्हीति शेषः । इति—इति हेतोः । आहेति—तत्प्रयोजनवादिसिद्धान्त्येकदेशीति शेषः । उद्द्योते—इति—इत्यत्र ।

( प्रत्याख्यातृभाष्यम् )

ऋकारोऽप्यत्र षष्ठीनिर्दिष्टः ॥ कथम् ? ॥ अविभक्तिको निर्देशः—कृप उः रः लः "कृपो रो ल" इति ॥

( उद्द्योतः ) कृप उरिति ॥ कृपे रेफस्य लस्तदवयवऋकारस्य च लकारघटित आदेश इत्यर्थः । स्थानिनिर्देश एव तादृशादेशकल्पक इति भावः ॥ एतेन तस्यावयवषष्ठ्यन्तत्वेन स्थानषष्ठीनिर्दिष्टत्वाभावादिदं चिन्त्यमित्यपास्तम् ॥

( तत्त्वालोकः ) भाष्ये—तत्प्रयोजनखण्डक आह—ऋकार इति । अत्र—लत्वविधौ । अविभक्तिक इति—यत इत्यादिः ।

उद्द्योते—ननु ल इत्युक्त्या कथं लकारघटितादेश इत्यत आह—स्थानीति । उरित्यनेनेत्यादिः । तादृशेति—लकारघटितेत्यर्थः । एतेन—उरित्यस्य स्थानषष्ठ्यन्तत्वाश्रयणेन । तस्य—उरित्यस्य । इदं—ऋकारस्य षष्ठीनिर्दिष्टत्वकथनम् ।

( प्रत्याख्यातुरेव भाष्यम् )

अथवा पुनरस्तु अविशेषेण ॥

( प्रदीपः ) अथवेति । षष्ठीनिर्दिष्टस्येति नापेक्ष्यते ॥

( उद्द्योतः ) ननु स्थानिवत्सूत्रे हि तथा। प्रकृते च न तेनातिदेश उच्यते, किं तु छिन्नपुच्छश्वदृष्टान्तेन प्रत्यभिज्ञयाऽनन्यत्वमुच्यते । तत्र षष्ठीनिर्दिष्टस्येति वक्तुमेवाशक्यमित्याशयेनाह भाष्ये—अथवेति ॥

( तत्त्वालोकः ) भाष्ये—अविशेषेणेति—वार्त्तिकमिदमिति शेषः।

प्रदीपे—नेति—विशेष इत्यादिः । उद्द्योते—तथा—षष्ठीनिर्दिष्टस्येति विशेष आश्रयितुं शक्यः । तेन—स्थानिवत्सूत्रेण । आहेति—तत्प्रयोजनखण्डक एवेति शेषः ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तं-"राज्ञः क च" राजकीयम् "अल्लोपोनः" इति प्राप्नोतीति ॥

( तत्त्वालोकः ) भाष्ये—तत्प्रयोजनवादी अविशेषेण तदाश्रयणे दत्तं दोषं स्मारयति-ननु चेति ।

( आक्षेपबाधकभाष्यम् )

नैष दोषः । वक्ष्यत्येतत्—"※ श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम् ※" इति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते—"अल्लोपोनः" नकारान्तस्येति ।

( प्रदीपः ) नकारान्तस्येति । न च राजन्शब्दः कादेशे कृते नकारान्तो भवति, श्वेव पुच्छे छिन्ने न पुच्छवानिति भावः ॥

( उद्द्योतः ) ननु कादेशेऽन्त्वमिवैकदेशविकृतन्यायेन नकारान्तत्वमपि कुतो नेत्यत आह—न च राजन्निति । एकदेशपदं न ससंबन्धिकतयोपस्थितावयवविधर्मः एव विकारविशिष्टे आरोप्यते, न त्ववयव एव, लोकव्यवहारादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्प्रयोजनखण्डकः तं निराकरोति—नैष इति । कुत इत्यत आह-वक्ष्यतीति । यत इत्यादिः । तत्—तस्मात् । अल्लोपोऽन इति-इत्यत्रेति शेषः ।

( प्रयोजनबाधाक्षेपभाष्यम् )

इह तर्हि क्लृ३प्तशिख "अनृत" इति प्रतिषेधः प्राप्नोति ॥

( तत्त्वालोकः ) भाष्ये—तत्प्रयोजनवादी सिद्धान्त्येकदेशी प्लुत्यर्थस्तदुपदेश आवश्यक इत्याशयेन शङ्कते—इहेति । तर्हि—एकदेशेतिन्यायाश्रयणे । शिख इति-इत्यत्रेति शेषः । इति-इत्यंशेन । अस्य प्लुतस्येति शेषः ।

( ४६ प्रत्याख्यातृसमाधानवार्तिकम् ॥ ४ ॥ )

॥ ※ ॥ रवत्प्रतिषेधाच्च ॥ ※ ॥

( भाष्यम् )

रवत्प्रतिषेधाच्चैतत्सिध्यति । "गुरोररवतः" इति वक्ष्यामि ॥

**( प्रदीपः ) अरवत इति ।** रोऽस्यास्ति नित्यमिति नित्ययोगे मतुप् । तेन ऋकार एव रवान् न तु वर्तक इत्यादावृकारः । न रवानरवानिति समासः । नित्ययोगप्रतिपादनाय बहुव्रीहिर्न कृतो—**गुरोररस्येति ॥**

**( उद्द्योतः )** भाष्ये **इह तर्हीति । एकदेशविकृतन्यायेन** ऋत्वादिति भावः ॥ **रोऽस्यास्तीति ।** इदं चिन्त्यम्—अवयवादावेव मत्वर्थो नानन्तरादाविति वर्तक इत्यादौ रवत्त्वस्योपपादयितुमशक्यत्वान्नित्ययोगपर्यन्तधावनमफलमिति ॥

**( तत्त्वालोकः )** भाष्ये—तत्प्रयोजनखण्डक एकदेशी समाधत्ते—**रवदिति । एतत्**—लृकारस्य प्लुतत्वम् । **गुरोरिति**—गुरोरनृतस्येत्यस्य स्थाने इत्यादिः ।

उद्द्योते—**न्यायेनेति**—लृकारस्येति शेषः । **इतीति**—इति हेतोरित्यर्थः । प्रकृतेऽवयवे मतुप्यपीति शेषः । **रवत्त्वस्येति**—ऋकारे इत्यादिः । **इतीति**—इति हेतोरित्यर्थः । तथा च क्लृतशिख इत्यत्र लृकारस्य रवत्त्वाभावात् प्लुतो भविष्यत्येवेति तस्य न तदर्थताऽपीति भावः । नचैकदेशेति न्यायेन तत्र रवत्ता सेत्स्यति, लोके छिन्नपुच्छस्य पुच्छवत्ताया अदर्शनात् ।

( आक्षेपभाष्यम् )

यदि 'अरवतः' इत्युच्यते, होतृ + ऋकारः 'होतृ३कारः' अत्र न प्राप्नोति ॥

**( तत्त्वालोकः )** भाष्ये—तत्प्रयोजनवादी सिद्धान्त्येकदेशी प्रकृतन्यासेऽपि दोषमाह—**यदीति ।** अनृत इत्यत्रेति शेषः । **उच्यते इति**—तर्हीति शेषः ।

( आक्षेपबाधकभाष्यम् )

"गुरोररवतो ह्रस्वस्य" इति वक्ष्यामि ॥

**( प्रदीपः ) ह्रस्वस्येति ।** तेन ह्रस्वस्यैव रवतः प्लुतनिषेधो, न दीर्घस्य ॥

**( तत्त्वालोकः )** भाष्ये—तत्प्रयोजनखण्डक एकदेशी आह—**गुरोरिति ।** तत्रेति शेषः ।

( सिद्धान्तिभाष्यम् )

स एष सूत्रभेदेन लृकारोपदेशः प्लुत्याद्यर्थः सन्प्रत्याख्यायते, सैषा महतो वंशस्तम्बाल्लट्वानुकृष्यते ॥२॥

**( प्रदीपः )** वार्तिककारस्य लृकारप्रत्याख्यानं निष्प्रयोजनमित्याह—**सैषेति** ॥ २ ॥

**( उद्द्योतः )** भाष्ये **स एष इति** प्लुत्याद्यर्थं विद्यमान लकारोपदेशोऽ**रवतो ह्रस्वस्येति** गुर्न्यासरूपसूत्रभेदेन प्रत्याख्यायत इति यत्तदयुक्तमित्यर्थः ॥ कुत इत्यत आह—**सैषेति ।** यतः सैषा प्रत्याख्यानात्मिका उक्तिर्महतो वंशस्तम्बाल्लट्वानुकर्षिभिन्नेत्युक्ते **यथा महतो** वंशस्तम्बाल्लट्वानुकर्षणमयुक्तमेवम् लकारप्रत्याख्यानमिति गम्यते । तदाह—**निष्प्रयोजनमिति ।** सूत्रभेदपरिकल्पनं विना क्लृप्तशिखे प्लुतसाधनस्याशक्यत्वान्निष्प्रयोजनमित्यर्थः । **वंशस्तम्बादिति ।** ल्यब्लोपे पञ्चमी । तमवलम्ब्येत्यर्थः । **लट्वा** पक्षिविशेषः फलविशेषो वा । तद्यथा बह्वायाससाध्यमल्पफलं न युक्तं तथा लृकारोपदेशप्रत्याख्यानमपीत्यर्थः ॥ २ ॥

**( तत्त्वालोकः )** भाष्ये—तत्प्रयोजनवादी सिद्धान्ती आह—**स एष इति ।**

उद्द्योते—**प्रत्याख्यानेति**—लृकारेत्यादिः । **प्रत्याख्यानमिति**—अयुक्तमिति शेषः । "लट्वा करञ्जभेदे स्यात् फले मद्ये खगान्तरे" इति विश्वकोशानुसारेण प्रकृतोपयोगिनमर्थमाह—**पक्षीति ।**

---

( शिवसूत्रे )

एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥

( संध्यक्षरेषु अतपरत्वस्थापनभाष्यम् )

इदं विचार्यते—'इमानि संध्यक्षराणि तपराणि वोपदिश्येरन् 'एत् ओत् ङ्' 'ऐत् औत् च्' इति, अतपराणि वा यथान्यासम्—' इति ॥

**( प्रदीपः ) एओङ् ॥ ऐऔच् ॥ इदं विचार्यत इति ।** तपरातपरसन्ध्यक्षरोपदेशो विचार्यत इत्यर्थः ॥ तत्रोपदिश्येरन्नित्यत्रासत्त्वभूता यद्यपि क्रियाभिधीयते, तथापि बुद्धया परामृष्टा सत्त्वरूपतामापादिता विचारक्रियायां कर्मभावमनुभवति । यथा पश्य मृगो धावतीति सरणं दर्शने ॥

**( उद्द्योतः ) एओङ् ॥ ३ ॥ ऐऔच् ॥ ४ ॥ विचार्यत इति ।** कृत्वाचिन्तान्यायेनायं विचार इति बोध्यम् ॥ इदंपदार्थमाह—**तपरेति ॥ असत्त्वभूतेति ।** एवं चेदमा परामर्शोऽनुपपन्न इति भावः ॥ **बुद्धया परामृष्टेति ।** उपदेशपदार्थभूतेत्यर्थः ॥ **कर्मभावमिति ।** इदंपदवाच्यत्वेनेति भावः ॥ **यथेति ।** इदं चिन्त्यम् । कर्तृकर्मेतरकारकाभाववत्त्वस्यैवासत्त्वपदार्थत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—तुल्यन्यायत्वात् प्रकृतसूत्रद्वयस्य एकदैव विचारमारभते—**एओङिति । इमानि**—ए, ओ, ऐ, औ, इत्याकाराणि । **इति**—इत्येवम् । **यथेति**—उपदिश्येरन्नित्यादिः ।

प्रदीपे—**इत्यत्र**—इत्यनेनात्र । **क्रिया**—तदुपदेशक्रिया । धावतीति—धावतीत्यत्र । **दर्शने इति**—कर्म भवतीति शेषः ।

उद्द्योते—**कृत्वा चिन्तान्यायेनेति**—तेषां तपराणामुपदेशो युक्तोऽतपराणां वेति चिन्तां ( संशयं ) स्वयं विधायेत्यर्थः । प्रवर्तित इति शेषः । **इदमेति**—तदुपदेशस्येति शेषः । क्रियायां "पच्यादयः क्रिया भवतिक्रियायाः कर्त्र्यो भवन्ती"ति भूवादिसूत्रभाष्येण कर्तृत्वस्य, "क्रियाऽपि क्रिययेप्सिततमा भवति । कथा क्रियया । संदर्शनक्रियया प्रार्थनक्रियया अध्यवस्यतिक्रियये"ति सम्प्रदानसंज्ञासूत्रभाष्येण कर्मत्वस्य चाङ्गीकारादाह—**कर्तृकर्मेति ।**

( भाष्यम् )

कश्चात्र विशेषः ? ॥

**( प्रदीपः ) कश्चात्रेति ।** कार्ये को विशेष इति प्रश्नः ॥

**( उद्द्योतः )** पक्षद्वये स्वरूपवैलक्षण्यस्यानुभवसिद्धत्वेन तद्विषयः प्रश्नोऽनुचितोऽत आह—**कार्ये इति ॥**

**( तत्त्वालोकः )** भाष्ये—**अत्र**—तेषां तपराणामतपराणां वोपदेशे । उद्द्योते— **तद्विषयः**—विशेषविषयकः ।

**( ४७ तपरपक्षदूषणवार्तिकम् ॥ १ ॥**

## ॥ ❀ ॥ संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणम् ॥ ❀ ॥

**( भाष्यम् )**

संध्यक्षरेषु तपरोपदेशश्चेत्तपरोच्चारणं कर्तव्यम् ।

**( प्रदीपः ) तपरोपदेशश्चेदिति ।** यद्यप्युपदेश उच्चारणं तथापि तपरोपदेशे फलं चेदस्ति ततस्तपरोच्चारणं कर्तव्यमित्यर्थः । **संध्यक्षराणीत्**यन्वर्था पूर्वाचार्यसंज्ञा संधीयमानावयवत्वात् ॥

**( उद्द्योतः )** भेदाभावादुद्देश्यविधेयभावोऽनुपपन्न इत्याशङ्क्य परिहरति—**यद्यपीत्यादि ॥ फलं चेदिति ।** प्रदाने घञिति भावः ॥ फलस्यैव करणत्वविवक्षया करणे घञित्यन्ये ॥ **सन्धीयमानावयवत्वादिति ।** अइउणिति शिष्यमाणवर्णसदृशावयवसन्धानेनास्य निष्पन्नत्वादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**तपरोपदेश इति**—सफल इति शेषः । **चेदिति**—यदीत्यर्थः । तर्हीति शेषः ।

प्रदीपे—**उच्चारणमिति**—इति तपरोपदेशतपरोच्चारणयोः भेदाभावादुद्देश्यविधेयभावोऽनुपपन्न इति शेषः । तथा**पीति**—तेषामिति शेषः । **इत्यर्थं इति**—तथा च तयोः भिन्नत्वात् स उपपद्यते इति शेषः । **सन्ध्यक्षरेति**-तेषामित्यादिः ।

उद्द्योते—**भेदेति**—तयोरित्यादिः । **सम्प्रदाने**-( तपराः ) उपदिश्यन्ते यस्मै इति व्युत्पत्तौ । **करणे**-( तपराः ) उपदिश्यन्ते येनेति व्युत्पत्तौ । **अइउणिति**-अइउणित्यादौ अनुशिष्यमाणा ये वर्णाः तत्सदृशा येऽवयवाः रमेशो गङ्गोदकम् देवैश्वर्यम् कृष्णौत्कण्ठ्यमित्यादिप्रयोगस्थाः तेषां सन्धा न तत्र अस्यैचो निष्पन्नत्वादित्यर्थः ।

**( ४८ तपरत्वपक्षदूषणवार्तिकम् ॥ २ ॥ )**

## ॥ ❀ ॥ प्लुत्यादिष्वज्विधिः ॥ ❀ ॥

**( भाष्यम् )**

प्लुत्यादिष्वजाश्रयो विधिर्न सिध्यति ॥ गो३त्रात नौ४त्रात इत्यत्र "अनचि च" इत्यच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं न प्राप्नोति । इह च प्रत्यङ्ङै४तिकायन उदङ्ङौ४पगव इति "अचि" इति ङमुडागमो न प्राप्नोति ॥

**( प्रदीपः ) प्लुत्यादिष्विति ।** प्लुतसंज्ञामभ्युपगम्याच्कार्याणि न सिध्यन्तीत्युच्यते ॥

**( उद्द्योतः )** भाष्ये **प्लुति**ग्रहणं त्रिमात्रपरम् । आदिना चतुर्मात्रग्रहणम् ॥

**( तत्त्वालोकः )** भाष्ये—वक्ष्यमाणोभयसंग्रहायाह—**अजाश्रय इति ।** अत एव च प्लुत्यादिष्वित्यत्र न परसप्तमी, किन्तु विषयसप्तमीत्यभिप्रायेणोदाहरति—**गो३त्रात इति ।** अत्र तृजन्तस्य सम्बोधने निष्पन्ने गुरोरनृत इत्यनेन प्लुतः । **नौ४त्रात इति**—अत्र "प्लुतावैच इदुतावि"त्यनुसारेण औकारस्योत्तरभागे उकारे तेन प्लुते कृते तस्य त्रिमात्रतया तस्य पूर्वभागस्याकारस्यैकमात्रतया च चतुर्मात्रतेति भावः । **इति**—इत्यनेन । **इति**—इत्यर्थकेन । **इति**—इत्यत्र । **इतीति**—अस्य सत्वेनेति शेषः । **न प्राप्नोतीति**—तेषां तपरत्वेनोपदेशे कृते त्रिमात्रादीनामनच्त्वादिति शेषः ।

प्रदीपे—**प्लुतसंज्ञा**—प्लुतं प्लुतसंज्ञाञ्च । प्लुतस्य प्लुतसंज्ञापूर्वकत्वात् ।

**( ४९ तपरत्वपक्षदूषणवार्तिकम् ॥ ३ ॥ )**

## ॥ ❀ ॥ प्लुतसंज्ञा च ॥ ❀ ॥

**( भाष्यम् )**

प्लुतसंज्ञा च न सिध्यति ॥ ऐ३तिकायन औ३पगव "ऊकालोऽज्झ्रस्वदीर्घप्लुतः" इति प्लुतसंज्ञा न प्राप्नोति ॥

**( प्रदीपः )** प्लुत एव न प्राप्नोतीति दर्शयितुमाह—**प्लुतसंज्ञा चेति ।** त्रिमात्रस्याचः प्लुतसंज्ञा विधीयते, तपरत्वे च त्रिमात्रस्याग्रहणादच्त्वाभावः । तत्रैचां प्लुतो विधीयमान इकारोकाराभ्यां गृहीत ईकार ऊकारश्च स्यात् ।

**( उद्द्योतः ) नन्वोमभ्यादाने** इत्यादिना**न्तरतम**परिभाषासंस्कृतेनैजरूपप्लुतविधानादनच्त्वेपि तेषां प्लुतसंज्ञा भविष्यतीत्यत आह—**तत्रैचामिति ।** ताभ्यामपि तेषां यथाकथंचिदान्तरतम्यसत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**औपगव इति**—इत्यत्रेति शेषः । **इति**—इत्यनेन । प्रदीपे—**तपरत्वे**-एचां तपरत्वेनोपदेशे ।

उद्द्योते—**तेषाम्**—एचाम् । **ताभ्याम्**—ईकारोकाराभ्याम् ।

**( अतपरपक्षाभ्युपगमभाष्यम् )**

सन्तु तर्ह्यतपराणि ।

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तेषामतपरत्वेनोपदेश इति द्वितीयपक्षमवलम्बते-**सन्त्विति**-सन्ध्यक्षराणीति शेषः । **तर्हि**—तेषां तपरत्वेनोपदेश इति प्रथमपक्षे दूषिते ।

**( ५० अतपरपक्षदूषणवार्तिकम् ॥ ४ ॥ )**

## ॥ ❀ ॥ अतपर एच इग्घ्रस्वादेशे ॥ ❀ ॥

**( भाष्यम् )**

यद्यतपराणि "एच इग्घ्रस्वादेशे" इति वक्तव्यम् ॥ किं प्रयोजनम् ? ॥ एचो (ङो) ह्रस्वादेशशासनेष्वर्ध एकारोऽर्ध ओकारो वा मा भूदिति ॥

**( प्रदीपः ) अतपर इति ।** असतीह तपरत्वे एकारौकाराभ्यां मात्रिकयोरर्धैकारार्धौकारयोर्ग्रहणादच्त्वाद्ध्रस्वत्वाद्विधानं स्यादिति सूत्रं कर्तव्यम् । तपरत्वे तु तयोरग्रहणात्प्राप्त्यभावः ॥

**( उद्द्योतः )** भाष्ये **अर्धं एकार इति ।** मात्रिकत्वेनार्धत्वम् । समांशवाचिनोऽपि पुंस्त्वमेतद्भाष्यप्रामाण्यात् ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी आह—**अतपरे इति ।** अतपरत्वे इत्यर्थः । तेषामित्यादिः । **अतपराणीति**—तानीत्यादिः । तर्हीति शेषः । **वक्तव्यमिति**—भवतीति शेषः । **इति**—इति हेतोः ।

प्रदीपे—**इह**—सन्ध्यक्षरेषु । **इतीति**—इति हेतोरित्यर्थः । अ**निष्ट**वारणायेति शेषः । **सूत्रम्**—एच इगिति सूत्रम् । **तपरत्वे इति**—तेषामित्यादिः । **तयोः**—एकमात्रिकयोस्तयोः । अस्य ताभ्यामित्यादिः । **अभाव इति**—तथा ताभ्यां गृहीतयोः द्विमात्रिकयोस्तयोः ह्रस्वत्वाभा-

वादेवाप्राप्तिरिति तत्रैकारौकारावेव भविष्यत इति तत्सूत्रं न कर्तव्यं भवतीति शेषः।

उद्द्योते—ननु स्वरूपतोऽर्धे एकार इत्यादि प्रयोगो न युज्यते इत्यत आह—**मात्रिकत्वेनेति।** द्विमात्रस्य वर्णसमाम्नायस्थैचोऽपेक्षया तस्य अर्धत्वाङ्गीकारात् फलितेन एकमात्रिकत्वेनेत्यर्थः। **वाचिनोऽपि**—अर्धशब्दस्य।

**( प्रतिबन्दीसमाधानभाष्यम् )**

**ननु च यस्यापि तपराणि, तेनाप्येतद्वक्तव्यम्। इमावैचौ समाहारवर्णौ—मात्राऽवर्णस्य; मात्रेवर्णोवर्णयोस्तयोर्ह्रस्वादेशशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ; मा कदाचिदवर्णो भूदिति॥**

**( प्रदीपः ) ननु चेति।** सूत्रारम्भं प्रति न कश्चिद्विशेष इत्यर्थः। अतपरत्वे एच इति वक्तव्यं, तपरत्वे स्वैच इति। एचोर्विश्लिष्टावर्णत्वात्संश्लिष्टावर्णावैचैकाराधौकारौ न भवतः॥

**( उद्द्योतः ) भाष्ये तेनाप्येतद्वक्तव्यम्।** इत्यत्र एतच्छब्देन नियामकं सूत्रं परामृश्यते॥ सूत्रन्यासभेदेऽपि गुरुलाघवकृतो विशेषो नास्तीत्याह—**सूत्रारम्भं प्रतीति॥ विश्लिष्टेति।** उपलभ्यमानेत्यर्थः॥ **संश्लिष्टेति।** स्पष्टमनुपलभ्यमानेत्यर्थः। एवं चैङ्विषये नावर्णप्राप्तिः। अर्धैङोस्तु तपरनिर्देशेऽनच्त्वाद् ह्रस्वत्वमेव नेति भावः॥ एङोः शुद्धतालव्यादित्वमेवेति न तयोः स्थानेऽवर्णप्राप्तिरिति तत्त्वम्॥ **संश्लिष्टावर्णा**विति कैयटस्याप्यत्रैव तात्पर्यम्॥

**( तत्त्वालोकः )** भाष्ये—तदतपरत्ववादी स्वमते गौरवाभावं शङ्कते—**ननु चेति। यस्यापीति**—मते तानीति शेषः। **एतत्**—ऐच इग्घ्रस्वादेशे इति। कुत इत्यत आह—**इमाविति। वर्णाविति**—तत्रेति शेषः। **तयोरिति**—ऐचोरित्यर्थः। अत इत्यादिः। **मेति**—तत्रेत्यादिः। **इति**—इति हेतोः।

प्रदीपे—**सूत्रेति**—पक्षद्वये इत्यादिः। सूत्रयोः विशेषमाह—**अतपरत्वे इति।** तेषामित्यादिः।

उद्द्योते—ननु पक्षद्वये सूत्रयोः भिन्नस्वरूपत्वात् "एतदि"ति कथनमसङ्गतमित्यत आह—**नियामकं सूत्रमिति। एवं च**—एङोः सश्लिष्टावर्णत्वे च। **तपरेति**—तपरसन्ध्यक्षरेत्यर्थः। **इति**—इति हेतोः। अस्य स्थानभेदादिति शेषः। **तयोः**—एङोः। **अत्रैव**—एङोः स्थानद्वयनिवृत्तिपूर्वकशुद्धतालव्यादित्वे **एव**।

**( प्रतिबन्दीनिराकरणभाष्यम् )**

**प्रत्याख्यायत एतत्,—"❀ ऐचोश्चोत्तरभूयस्त्वात् ❀" इति॥**

**( प्रदीपः ) ऐचोश्चेति।** अर्धमात्रावर्णस्याध्यर्धमात्रेवर्णोवर्णयोर्भूयसा च व्यपदेशो मल्लग्रामादिवदितीकारोकारावेव भविष्यतः॥

**( उद्द्योतः )** भाष्ये **प्रत्याख्यायत एतदिति। एतत्** ऐज्विषये **ऐच इगिति** सूत्रम्। वर्तमानसामीप्ये लट्॥ **भूयसा चेति।** तद्द्वारकभूयःस्थानसाम्यादित्यर्थः॥ [ इदं च मतमष्टमेऽपि भाष्ये स्पष्टम्॥ शब्दपरविप्रतिषेधेनोत्तरभागसदृश इति विवरणोक्तं तु चिन्त्यम्। अन्तरङ्गत्वेन पूर्वसदृशस्यैवापत्तेः। स्पष्टं चेदं '**नित्यः परयणादेशः**' इत्यादिना '**अचः परस्मिन्—**' इत्यत्र भाष्ये॥ ]

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तत्तपरत्ववादिमते उत्तरमाह—**प्रत्याख्यायते इति।** कुत इत्यत आह—**ऐचोश्चेति।**

प्रदीपे—**वर्णयोरिति**—अत इति शेषः। **इति**—इति न्यायेन। अस्य ऐचोरिति शेषः।

उद्द्योते—**इदं च मतम्**—अर्धमात्राऽवर्णस्य, अध्यर्धमात्रेवर्णोवर्णयोरिति मतम्। **अष्टमेऽपि भाष्ये**—प्लुतावैच इदुतौ इति सूत्रभाष्येऽपि।

**( समाधानसिद्धान्तिभाष्यम् )**

**यदि प्रत्याख्यानपक्षः, इदमपि प्रत्याख्यायते—"❀ सिद्धमेङः सस्थानत्वात् ❀" इति॥**

**( प्रदीपः ) सिद्धमेङ इति।** अर्धैकाराधौकारौ न स्तः, तत्र तालव्य एकार ओष्ठ्य ओकार इति तयोः स्थाने इकारोकारावेव भविष्यतः॥

**( उद्द्योतः )** भाष्ये **इदमपीति।** एङ्विषयमपीत्यर्थः॥ **सस्थानत्वादिति।** इकारोकाराभ्यां समानस्थानत्वादित्यर्थः। तदाह—**तालव्य इति।** तालव्य एवेत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—तदतपरत्ववादी सिद्धान्ती आह—**यदीति।** तत्तपरत्ववादिमते तस्येति शेषः। **पक्ष इति**—तर्हीति शेषः। कुत इत्यत आह—**सिद्धमिति।**

प्रदीपे—**तत्र**—एङोः। **इति**—इति हेतोः। अस्य—स्थानसाम्यादिति शेषः। **तयोः**—एङोः।

उद्द्योते—**विषयमिति**—एच इगिति सूत्रमिति शेषः। तथा च तदतपरत्वेऽपि तत्सूत्रं प्रत्याख्यातमिति नास्ति तयोः विशेष इति भावः।

**( आक्षेपभाष्यम् )**

**ननु चैङः सस्थानतरावर्ध एकारोऽर्ध ओकारः॥**

**( तत्त्वालोकः )** भाष्ये—तत्तपरत्ववादी तदतपरत्वपक्षे तत्सूत्रावश्यकतां दर्शयति—**ननु चेति।** यत इति शेषः। **ओकार इति**—च स्तोऽतः तदतपरत्ववादिना तत्सूत्रमारब्धव्यमिति शेषः।

**( समाधानभाष्यम् )**

**न तौ स्तः। यदि हि तौ स्यातां तावेवायमुपदिशेत्॥**

**( प्रदीपः ) तावेवेति।** ताभ्यामुपदिष्टाभ्यां दीर्घप्लुतयोरपि ग्रहणं सिध्यतीति भावः। गुणसंज्ञायां तु दीर्घावेकारौकारौ निर्देश्यौ॥

**( उद्द्योतः )** भाष्ये **तावेवेति।** लाघवादिति भावः॥ **ग्रहणमिति।** प्रदेशेष्विति शेषः॥ नन्वेवं मात्रिकयोरेव गुणसंज्ञा स्यादत आह—**गुणेति।** एवमपि अत्र ह्रस्वपाठेऽर्धमात्रालाघवं भवति॥

**( तत्त्वालोकः )** भाष्ये—तदतपरत्ववादी स्वपक्षे तत्सूत्रावश्यकतां खण्डयति—**नेति। तौ**—अर्धैकारौकारौ। **हि**—यतः। **स्यातामिति**—तर्हीति शेषः। **अयं**—शिवः पाणिनिर्वा।

प्रदीपे—**ताभ्यां**—एकमात्रिकाभ्याम् एकारेण ओकारेण च। **अपीति**—एकारौकारयोरिति शेषः।

उद्द्योते—**प्रदेशेषु**—एचोऽयवायाव इत्यादिषु। **एवेति**—एकारस्य ओकारस्य चेति शेषः। **एवमपि**—गुणसंज्ञायां दीर्घयोरेकारौकारयोः निर्देशेऽपि। **अत्र**—वर्णसमाम्नाये। **ह्रस्वपाठे**—ह्रस्वयोः एकारस्य ओकारस्य च पाठे। **अर्धमात्रेति**—सिद्धान्तपक्षे वर्णसमाम्नाये दीर्घयोः ए. ओ. इत्यनयोः पाठे तयोः मात्राचतुष्टयं, अदेङिति पाठे एङित्यस्य सार्धमात्राद्वयमिति सङ्कलनया सार्धषण्मात्राः। प्रकृतपक्षे तत्र ह्रस्वयोः ए. ओ इत्यनयोः पाठे तयोः मात्रा द्वयम्, अदेओ इति पाठे ए, ओ, इत्यनयोः दीर्घतया मात्राचतुष्टयमिति सङ्कलनया षडैव मात्रा इत्यत्र पक्षे अर्धमात्रालाघवमस्त्येवेति भावः।

( आक्षेपभाष्यम् )

ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—सुजाते एश्वसूनृते, अध्वर्यो ओद्रिभिः सुतम्, शुक्रं ते एन्यद्, यजतं ते एन्यत्—इति ॥

( प्रदीपः ) सुजात इति । अन्तःपादस्थस्याव्यपरस्याकारस्यार्धमेकारमर्धमोकारं च विदधति ॥

( उद्द्योतः ) अकारस्यार्धमिति । सुजाते ए अश्वेति अकारलेखस्तु प्रामादिकः ॥

( तत्त्वालोकः ) भाष्ये—तत्तपरत्ववादी वर्णसमाम्नाये ह्रस्वयोः ए. ओ. इत्यनयोरनुपदेशः तयोरसत्त्वे न प्रमाणं लक्ष्यविरोधादिति शङ्कते—ननु चेति । इति—इत्यत्र ।

प्रदीपे—अन्त इति—अत्रेत्यादिः । उद्द्योते—इति—इत्यत्र ।

( समाधानभाष्यम् )

पारिषदकृतिरेषा तत्रभवताम् । नैव हि लोके नान्यस्मिन्वेदेऽर्ध एकारोऽर्ध ओकारो वास्ति ॥

( प्रदीपः ) पारिषदकृतिरिति । गीतिवशात्तथोच्चारणमित्यर्थः ॥

( उद्द्योतः ) शास्त्रविशेषाध्यायिनां समवायः परिषत् पर्षद्वा तत्र भवा कृतिरित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—तदतपरत्ववादी तत्परिहरति—पारिषदेति । एषा—ह्रस्वयोः ए, ओ, इत्यनयोः स्थापना । हि—यतः ।

प्रदीपे—तथा—ह्रस्वयोः ए, ओ, इत्यनयोः । उच्चारणमिति—न तु तयोः सत्त्वादिति न तयोरसत्त्वाङ्गीकारे लक्ष्यविरोध इति शेषः ।

( ५१ अतपरपक्षदूषणवार्तिकम् ॥ ९ ॥ )

## ॥ ※ ॥ एकादेशे दीर्घग्रहणम् ॥ ※ ॥

( भाष्यम् )

एकादेशे दीर्घग्रहणं कर्तव्यम्—"आद्गुणो दीर्घः" "वृद्धिरेचि दीर्घः" इति ॥ किं प्रयोजनम्? ॥ आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति । खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकं, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति ॥

( प्रदीपः ) आन्तर्यत इति । अन्यस्यासम्भवादिदमत्र नास्ति प्लुतश्च विषये स्मृत इति ॥

( उद्द्योतः ) तदेवमतपरतपरवादिमतसाधारण्येनैच इगिति सूत्रस्य कर्तव्यताकर्तव्यते उपपाद्यातपरवादिमतेऽसाधारणदूषणमाह—भाष्ये एकादेशे इति । एकः पूर्वपरयोर्दीर्घ इति सूत्रं कार्यमित्यर्थः ॥ अन्यस्यासंभवादिति । अयं भावः—यथा स्थाघ्वोरित्यत्रातपरत्वे स्थाघ्वोर्दीर्घस्य स्थाने घुमास्थेत्येव दीर्घेकारे सिद्धे पुनर्वचनमदीर्घार्थमित्यविशेषाद् ह्रस्वप्लुतयोः प्रसक्ते तदुक्तं प्लुतश्च विषयेति । एवं च दूराद्धूतादिविषयेऽप्यनेनैव प्लुते पक्षेऽनुवाददोषस्तत्र, इह तु प्लुत एव प्राप्नोतीति खट्वा इन्द्र इत्यादिविषयकशास्त्रवैयर्थ्यमेवेत्यनुवाददोषः सोऽढश्च एवेति वैषम्यमिति ॥ [ वस्तुतोऽस्य टित्वाभावादेतद्विषये प्लुताप्रवृत्तेश्चिन्त्यमेवेदमिति स्थाघ्वोरिति सूत्रे निरूपयिष्यामः ॥ ]

( तत्त्वालोकः ) भाष्ये—एकादेशे—एकादेशस्य विधेयतया नियम्यतया वा बोधके सूत्रे । इति—इति रूपेण । "इष्यत एव चतुर्मात्रः प्लुतः" इति "प्लुतावैच इदुतावि"ति सूत्रभाष्यानुसारेणाह—चतुर्मात्रा इति । इति—इति हेतोः । इति—इत्यादौ ।

उद्द्योते—आहेति—तत्तपरत्ववादीति शेषः । अतपरत्वे इति—इ, इत्यस्येत्यादिः । इत्येव—इत्यनेनैव । इति—इति हेतोः । अविशेषात्—अनान्तर्याविशेषात् । अस्य तत्रेति शेषः । प्लुतयोरिति—इकारयोरिति शेषः । अनेनैव—प्लुतश्चेत्यनेनैव । पक्षे—दूराद्धूतादिविषये । तत्र—स्थाघ्वोरिच्चेत्यत्र । इति—इति हेतोः ।

( आक्षेपभाष्यम् )

तत्त ह दीर्घग्रहणं कर्तव्यम् ॥

( तत्त्वालोकः ) भाष्ये—मध्यस्थः पृच्छति—तद्धिति । तर्हि—एचामतपरत्वेनोपदेशे । अस्य तत्रेति शेषः ।

( समाधानभाष्यम् )

न कर्तव्यम् । उपरिष्टाद्योगविभागः करिष्यते—"अकः सवर्णे" एको भवति ॥ ततो—"दीर्घः" दीर्घश्च स भवति, यः स 'एकः पूर्वपरयोः' इत्येवं निर्दिष्ट इति ॥

( उद्द्योतः ) ( भाष्ये यः स इति प्रसिद्ध्यर्थकम् ॥ )

( तत्त्वालोकः ) भाष्ये—एकदेशी समाधत्ते—नेति । कुत इत्यत आह—उपरीति । यत इत्यादिः । योगविभागं दर्शयति—अक इति । एकः—इत्येको योगः । दीर्घ इति—इत्यपरो योग इति शेषः । अपरयोगस्यार्थमाह—दीर्घश्चेति । तथा च तेनैव नियमेन सर्वत्रेष्टं सिद्ध्यतीति भावः ।

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—पशुं, विद्धं, पचन्तीति ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती तथान्यासे योगविभागे च दोषमाशङ्कते—इहेति । तर्हीति—तादृशनियमाङ्गीकारे इत्यर्थः । दीर्घ इति शेषः ।

( समाधानभाष्यम् )

नैष दोषः । इह तावत्पशुमिति, "अम्येकः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्—यथाजातीयकः पूर्वस्तथाजातीयक उभयोर्यथा स्यादिति ॥

विद्धमिति । पूर्व इत्येवानुवर्तते ॥ अथवाचार्यप्रवृत्तिर्ज्ञापयति—नानेन सम्प्रसारणस्य दीर्घो भवतीति । यदयं हल उत्तरस्य सम्प्रसारणस्य दीर्घत्वं शास्ति ॥

पचन्तीति । "अतो गुणे परः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यद्रूपग्रहणं करोति, तस्यैतत्प्रयोजनम्—यथाजातीयकं परस्य रूपं तथाजातीयकमुभयोर्यथा स्यादिति ॥

( प्रदीपः ) अम्येक इति । प्रथमयोरिति सिद्ध एतदपि किम-

र्थमुच्यते इति चेद्, **वा छन्दसीत्यत्रानुवृत्त्यर्थम्**। तस्मात् पूर्वश्रुतिः पूर्वरूपार्था। सैवोत्तरत्रानुवर्तत इति विद्धमिति पूर्वरूपं भविष्यति ॥ **अथवेति। विधिनियमसंभवे विधिरेव बलीयानिति** विधेर्बलीयस्त्वान्नियमो न भवति हल एव दीर्घत्वं यथा स्याद्, उत इत्यादौ मा भूदिति ॥

**( उद्द्योतः ) वा छन्दसीत्यत्रेति। वा छन्दसीत्यस्यात्रानु**वृत्त्यर्थमित्यर्थः ॥ **पूर्वरूपार्थेति।** पूर्वव्यक्त्यात्मकपूर्वरूपार्थेत्यथः ॥ भाष्ये **पर इतीयतेति** ह्रस्वत्वादिरूपमिति भावः ॥ सिद्धान्ते तु रूपग्रहणं स्पष्टार्थमेव, अस्य भाष्यस्य पूर्वपक्ष्युक्तित्वात् ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी तमुद्धरति-**नैष इति। तावदिति**-वाक्यालङ्कारे। **अयं**-पाणिनिः। एवमग्रेऽपि। **विद्धमितीति**-सिद्ध मति शेषः। **पूर्व इति**-यतः सम्प्रसारणाच्चेत्यत्रेत्यादिः। **अनेन**-नियमेन। **यत्**-यस्मात्।

प्रदीपे—**इति**-इत्यनेन। अस्य तस्मिन्निति शेषः। **एतत्**-अमीति। **सैव**-पूर्वश्रुतिरेव। **उत्तरत्र**-सम्प्रसारणाच्चेत्यत्र। **इति**-इति हेतोः। **इति**-इत्यत्र। **इति**-इत्यनेन। नियमाकारमाह-**हल इति।** हलः परस्येत्यर्थः। तथा च विद्धमित्यादौ दीर्घवारणेन दोषस्तदवस्थ एवेति भावः।

## ( आक्षेपभाष्यम् )

**इह तर्हि खट्वर्श्यो मालर्श्य इति दीर्घवचनादकारो न, अनान्तर्यादेकारौकारौ न ॥ [ तत्र को दोषः ? ॥ ] विगृहीतस्य श्रवणं प्रसज्येत ।**

**( उद्द्योतः ) अकारो नेति।** रपरत्वेपि द्विमात्रत्वरूपदीर्घत्वासम्भव एव ॥ **विगृहीतस्येति।** दीर्घश्रुतिपरिभाषयोर्विरोधेन जातिपक्षे व्यक्तिपक्षे वा तद्विषयकलक्षणानुपप्लवादिति भावः।

**( तत्त्वालोकः )** भाष्ये—तदतपरत्ववादी तत्र दोषमुपन्यस्यति-**इहेति। तर्हि**-आद् गुणो दीर्घ इत्यादिकरणे। **दीर्घ इति**-तत्रेत्यादिः। **तत्रेति**-तर्हीत्यादिः। **विगृहीतस्य**-खट्वा ऋश्य इत्याद्याकारकस्य।

उद्द्योते—**रपरत्वेऽपीति**-अकारस्येत्यादिः। सार्धैकमात्रिकत्वेनेति शेषः। **परिभाषेति**-स्थानेऽन्तरतम इतीत्यादिः।

## ( समाधानभाष्यम् )

**न ब्रूमो—यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति। किं तर्हि ? ॥ यत्र क्रियमाणे न दोषस्तत्र कर्तव्यमिति।**

**( तत्त्वालोकः )** भाष्ये एवम् एकादेशे इति वार्त्तिके दूषिते वार्त्तिककृदनुयायी तत्तपरत्ववादी आह-**न ब्रूम इति। यत्र**-आद् गुण इत्यादौ। अस्य दीर्घग्रहणे इति शेषः। **तत्रेति**-तद्दिति शेषः। एवमग्रेऽपि। **यत्रेति**-तस्मिन्निति शेषः।

## ( आक्षेपभाष्यम् )

**क्व च क्रियमाणे न दोषः ? ॥**

**( तत्त्वालोकः )** भाष्ये—तदतपरत्ववादी पृच्छति-**क्व चेति।** तस्मिन्निति शेषः।

## ( समाधानभाष्यम् )

**संज्ञाविधौ । वृद्धिरादैज् दीर्घः, अदेङ् गुणो दीर्घ इति ॥**

**( तत्त्वालोकः )** भाष्ये—तादृशः तत्तपरत्ववादी समाधत्ते—**संज्ञाविधाविति।** एवञ्च एकादेशे इत्यस्य एकादेशविधिमूलभूतसंज्ञाविधावित्यर्थकतया सङ्गतिः।

## ( आक्षेपभाष्यम् )

**तत्तर्हि दीर्घग्रहणं कर्तव्यम् ॥**

**( तत्त्वालोकः )** भाष्ये—पुनरपि मध्यस्थः तत्त्वं ज्ञातुं पृच्छति-**तत्तर्हीति।** संज्ञाविधावित्यनुषज्यते।

## ( सिद्धान्तिसमाधानभाष्यम् )

**न कर्तव्यम् ।**

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**नेति।**

## ( आक्षेपभाष्यम् )

**कस्मादेवान्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥**

**( तत्त्वालोकः )** भाष्ये—मध्यस्थः पृच्छति—**कस्मादिति।**

## ( समाधानभाष्यम् )

**तपरे गुणवृद्धी ॥**

**( प्रदीपः ) तपरे इति।** तपरसंज्ञिसहचरिते गुणवृद्धिसंज्ञे इत्यर्थः।

**( उद्द्योतः )** ननु गुणवृद्धिसंज्ञयोस्तपरत्वाभावात्पूर्वोक्तदोषापरिहृतेश्च भाष्यमयुक्तमित्याशङ्क्याह-**तपरसंज्ञेति।** तपरशब्दनिर्दिष्टे सज्ञिनि गुणवृद्धिसंज्ञे प्रवर्तेते इत्यर्थः। एवं च त्रिमात्रादीनां तत्र संज्ञितयाऽनिर्देशान्नोक्तदोष इति भावः॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**तपरे इति।** यत इत्यादिः। उद्द्योते—**तत्र**-गुणवृद्धिसंज्ञयोः।

## ( आक्षेपभाष्यम् )

**ननु च तः परो यस्मात्सोऽयं तपरः ॥**

**( उद्द्योतः )** भाष्ये **ननु चेति।** एवं चेऐचौ न तपराविति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**ननु** तपरशब्दे बहुव्रीहिरेवेति अदातोस्तपरत्वेऽपि एङैचोस्तत्त्वाभावादुक्तदोषस्तदवस्थ एवेति तत्तपरत्ववादी शङ्कते-**ननु चेति।**

## ( समाधानभाष्यम् )

**नेत्याह, तादपि परस्तपर इति ॥**

**( प्रदीपः ) तादपीति।** तन्त्रन्यायाश्रयणादेकस्यैव द्विशक्तित्वादेकशेषाश्रयणाद्वाऽनेकार्थाभिधानमिति भावः।

**( उद्द्योतः ) नेत्याहेति।** स एव तपर इति नेत्याहेत्यर्थः ॥ अर्थभेदेन शब्दभेदे-**तन्त्रन्यायेति।** तद्भेदेऽपि शब्दैक्यपक्षे आह-**एकस्यैव द्विशक्तित्वादिति ॥ एकशेषेति।** समाहारद्वन्द्वविषये एकशेषाभावेनैकवचनानुपपत्त्येदं चिन्त्यम् ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थः तदतपरत्ववादिनः सिद्धान्तिन उत्तरमनुवदति—**नेत्याहेति।** कुत इत्यत आह-**तादिति।** **अपिना** तः परो यस्मात्तस्य संग्रहः। **इति**-इति हेतोः। अत्र पञ्चमीबहुव्रीहिसमासयोः सत्त्वेति भावः।

उद्द्योते—**सः**-तः परो यस्मात्सः। **आह**-स आह। **शब्दभेदे इति**-आहेति शेषः। **तद्भेदे**-अर्थभेदे। **चिन्त्यमिति**—वस्तुतस्तु प्रकृते एकशेषशब्दस्यावृत्तिपरतया तत्समञ्जसमिति भावः।

( आक्षेपभाष्यम् )

यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्- यवः स्तवः; लवः पव इत्यत्र न स्यात् ॥

( तत्त्वालोकः ) भाष्ये—तत्तपरत्ववादी एकदेशी शङ्कते-**यदीति । तपर इति**-तर्हीति शेषः । **स्तव इति-**इतीति शेषः । **स्यादिति**-उकारस्य तपरत्वादिति शेषः ।

( समाधानभाष्यम् )

नैष तकारः ॥ कस्तर्हि ? ॥ दकारः ॥

( तत्त्वालोकः ) भाष्ये—तदतपरत्ववादी सिद्धान्ती परिहरति-**नेति । एषः**-ऋदोरबित्यत्र विद्यमानः ।

( आक्षेपभाष्यम् )

किं दकारे प्रयोजनम् ? ॥

( प्रदीपः ) बहुव्रीहिवादी चोदयति—**किं दकार इति ।**

( तत्त्वालोकः ) प्रदीपे—**बह्विति**-तत्रेत्यादिः ।

( प्रतिबन्दीसमाधानभाष्यम् )

अथ किं तकारे ? । यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपीति ॥

( प्रदीपः ) समासद्वयवादी तं प्रत्याह-**अथ किं तकार इति ।** तत्र केवलबहुव्रीहिवादिनो निष्प्रयोजनं तपरत्वम्, ऋकारस्यानणृत्वाद्भिन्नकालानां ग्रहणाप्रसङ्गाद्गुणानां चाभेदकत्वात्तत्प्राप्त्यर्थत्वाभावात् । अथ तवासन्देहार्थो मुखसुखार्थो वा तकार एवं मम दकार **इत्यर्थः** ॥ **तित्स्वरित**मित्यत्रत्यभाष्येणास्य विरोधः । तत्र हि-**तिति प्रत्ययग्रहणं** चोदितम्, इह मा भूत्-**दिव उत्** द्युभ्यामिति, ततो दित्त्वाश्रयणेन प्रत्याख्यातम् , **तपर** सूत्रे च तकारश्चर्त्वभूतो निर्दिश्यते । तेन तत्कालस्य ग्राहको दकारः'-इत्युक्तम् । इह च दकाराभ्युपगमेन लवादिषु दोषः परिहृतः ॥ अत्राहुः-थकारस्थानिको धकारस्थानिको वा दकारोऽत्र विवक्षितः-**कस्तर्हि, दकार इति ।**

( उद्द्योतः ) **सुखमुखार्थ** इति पाठे मयूरव्यंसकादित्वात्समासः । ननु एचैजिति संज्ञायास्तात्परत्वेऽपि संज्ञिनामिकारादीनां किमागतमिति चेत्, न । तपरशब्दबोध्योऽपि वर्णस्तत्कालस्यैव संज्ञेत्यर्थान्न दोषः ॥ **गुणानां चेति ।** अणसु गुणानां तत्त्वाभावेऽपि अनणृत्वादेव दीर्घादिविषये तत्त्वमिति भावः ॥ ननु दित्त्वे **दिव उदि**त्यत्र तत्कालग्रहणं न स्यादत आह-**तपरसूत्रे चेति ॥ इहेति । तप**रसूत्रे दकारानाश्रयणेन चेत्यपि बोध्यम् ॥ **थकारस्थानिक इति ।** तस्य चैतद्दृष्ट्याऽसिद्धत्वान्न तत्र **तपर**सूत्रप्रवृत्तिरिति भावः ॥

( तत्त्वालोकः ) प्रदीपे—**समासेति**-तत्रेत्यादिः । **तं**-बहुव्रीहिवादिनम् । **तवेति**-तत्रेति शेषः । **तपरत्वमिति-ऋ**दोरित्यत्र **ऋ**कारस्येत्यादिः । **अनण्त्वादिति**-तेनेति शेषः । **कालानामिति-ऋ**काराणामिति शेषः । **तत्प्राप्तीति-ऋ**दोरितिप्राप्तीत्यर्थः । तस्य भिन्नकालगुणकेषु तेषु इत्यादिः । **असन्देहेति**-तत्रेत्यादिः । **शङ्कते-तिदिति । अस्य**-भाष्यस्य । हि-यतः । कुत इत्यत आह-**इहेति । इतीति**—अत इति शेषः । **दित्त्वेति-**दिव उदित्यनेन विहितोकारे इत्यादिः । **प्रत्येति**-तिति प्रत्ययग्रहणमितीत्यादिः । उत्तरयति-**अत्राहुरिति । इति-**इत्यत्र ।

उद्द्योते—**अणुस्विति**-अणुदित्सूत्रे अणग्रहणसामर्थ्यादित्यादिः । **तत्त्वेति**-अभेदकत्वेत्यर्थः । एवमग्रेऽपि । **दित्त्वे**-उकारस्य दित्त्वे । **तत्कालेति**-तेनेत्यादिः । **एतद्दृष्ट्या**-तपरसूत्रदृष्ट्या । **तत्र**-ऋदोरित्यत्र ।

( इति सन्ध्यक्षरेष्वतपरपाठनिर्णयः ॥ )

( अथ वर्णैकदेशग्रहणाग्रहणनिर्णयः ॥ )

( भाष्यम् )

इदं विचार्यते—य एते वर्णेषु वर्णैकदेशा वर्णान्तरसमानाकृतय एतेषामवयवग्रहणेन ग्रहणं स्याद्वा न वेति ॥ कुतः पुनरियं विचारणा ? ॥ इह हि समुदाया अप्युपदिश्यन्ते, अवयवा अपि । अभ्यन्तरश्च समुदायेऽवयवः, तद्यथा वृक्षः प्रचलन् सहावयवैः प्रचलति । तत्र समुदायस्थस्यावयवस्यावयवग्रहणेन ग्रहणं स्याद्वा न वेति जायते विचारणा ॥

( प्रदीपः ) **वर्णान्तरसमानाकृतय इति ।** आकारादिष्वकारादिसदृशा अवयवा ऋकारऌकारयो रेफलकारसदृशाववयवौ सन्ध्यक्षरेष्वकारेकारोकारसदृशाः, तत्र केवलवर्णकार्यमवयवेषु भवति न वेति विचारः ॥ **इह हि समुदाया अपीति ।** ऋऌएओऐऔ इति ॥ **अवयवा अपीति ।** अइउण्ऋऌगिति ॥ तत्र समुदायपरे निर्देशे सन्निहिता अप्यवयवा नान्तरीयकत्वादेजादिसंज्ञां न लभन्ते, अवयवपरे च निर्देशे समुदायो न संज्ञाभाक् यथा हयवेत्यादावनच्कस्य हलो दुःखेनोच्चार्यत्वान्निर्दिष्टोऽप्यकारोऽन्यत्र प्राधान्येन निर्देशाद्धलादिसंज्ञां न प्रतिपद्यते इति दध्यत्रेत्यादावनच्क एव यणादेशः प्रवर्तते । तत्रासत्यामप्यैजादिसंज्ञायामयादयः समुदायादेशा अपि नान्तरीयकत्वादवयवान्निवर्तयन्ति । एवं स्थिते अग्न इन्द्र इत्यादौ यत्रावयवकार्यं प्राप्नोति समुदायकार्यं च तत्रान्तरङ्गत्वात्तत्र च साक्षाच्चोदितत्वात्प्रत्यक्षत्वात्परत्वाच्चावयवकार्यप्रसङ्गः । अवयवावगतिपूर्वकत्वाद्धि समुदायावगमस्य समुदायकार्यं बहिरङ्गम् । अयादीनां चावकाशः-**अग्न आयाहीति ॥** नन्वत्रापि यणादेशोऽवयवस्य प्राप्नोति ॥ **येन नाप्राप्ते** इति वा **मध्येऽपवादा** इति वा यण एवायादयो बाधकाः स्युः । तत्र यथा दधीन्द्र इत्यत्र दधिशब्दस्थ इकारः सवर्णदीर्घत्वं प्रतिपद्यते, एवमैकारस्थोऽपि प्रतिपद्येत । प्रत्याहारे **एओङ्ऐऔ**जित्यत्रावयवानां प्राधान्येनानिर्देशादित्येवं **ग्रहणपक्षाशङ्काबीज**मुपन्यस्तम् । इदानीम**ग्रहणपक्षाशङ्काबीज**मुपन्यस्यते—**अभ्यन्तरश्चेति ।** तिरोहितत्वादवयवानां समुदायकार्ये पारतन्त्र्यात् स्वकार्यस्याप्रयोजकत्वान्नरसिंहवज्जात्यन्तरयोगाद्वर्णान्तरसारूप्यमात्रेण तत्कार्याप्रवर्तनादित्यर्थः ।

( उद्द्योतः ) **अवयवग्रहणेना**वयवसदृशवर्णग्रहणेन ग्रहणं स्यान्न वेति भाष्यार्थः । तत्फलितमाह—**तत्र केवलेति ॥** नन्वकारेण एङवयवग्रहणसन्देहवद् अकारादीनामेङादिसंज्ञा प्राप्नोतीति विचारोऽपि कुतो नेत्यत आह—**तत्र समुदायेति ।** अत एव प्राटतीत्यादौ न पररूपम् ॥ तत्र दृष्टान्तमाह—**अवयवपरे चेति ।** यथावयवपरे निर्देशे समुदायो न संज्ञाभाग् एवं समुदायपरे निर्देशेऽवयवा न तद्भाज इत्यर्थः । तदुपपादयति—**यथेति ॥ अन्यत्रेति ।** सर्वस्यावयवस्यान्यत्र पृथङ्निर्देशे समुदायनिर्देशः स्वपर एव, सर्वस्यावयवस्यान्यत्रानिर्देशे तु समुदायनिर्देशोऽनिर्दिष्टावयवपर इति विवेकः । नन्वेजादिसंज्ञानामवयवावृत्तित्वे कथमेचो निवर्तकेनायादिना तदवयवस्य निवृत्तिरत आह—**तत्रासत्यामपीति ।** तन्निवृत्तिं विना समुदायनिवृत्तेः कर्तुमशक्यत्वादिति भावः ॥ **अवयवकार्यं** दीर्घः ॥ **समु-**

**दायकार्यमत्** ॥ **तत्र च साक्षादिति** । दीर्घे । अयादिकार्ये हि समुदायव्यवधानेनावयवो नोदितो न साक्षादिति भावः ॥ साक्षाच्चोदितत्वं प्रत्यक्षत्वे हेतुः ॥ नन्वयादिष्वनवकाशोऽत आह—**अयादीनामिति** ॥ **नन्विति** । ततश्च विध्यन्तरपूर्वकोऽयादिः सर्वस्य बाधकः स्यादिति भावः ॥ परिहरन्ति—**एवेति** ॥ **प्राधान्येनानिर्देशादिति** । अस्यैत्रादिसंज्ञाभावेऽपि स्वरूपाकारेण ग्रहणं स्यादिति शेषः ॥ भाष्ये **अभ्यन्तरश्चेति** । तदुच्चारणं विना समुदायोच्चारणस्याशक्यत्वादित्यर्थः ॥ तदाह—**तद्यथा वृक्ष इति** ॥ तदुपपादयति—**तिरोहितत्वादित्यादिना** ॥ **समुदायकार्ये पारतन्त्र्यादिति** । समुदायसंपादनरूपे कार्ये पारतन्त्र्यादित्यर्थः ॥ **स्वकार्यस्याप्रयोजकत्वादिति** । स्वकार्यनिरूपितप्रयोजकत्वाभावादित्यर्थः ॥ तत्प्रयोजकत्वाभावे हेतुः—**नरसिंहवदिति** । तदवयवे नरत्वाद्यभाववदेतदवयवेऽप्यत्वाद्यभाव इति भावः ॥

**( तत्त्वालोकः )** भाष्ये - **वर्णेषु**—आकारादिषु । **वर्णैकदेशाः**—आकाराद्यवयवाः । **वर्णान्तरेति**—अकारादीत्यर्थः । **अवयवग्रहणेन**—अकाराद्यवयव-सदृशवर्णग्राहकशब्देन । ननु "कोटिद्वयस्य निश्चानं विचार इति कथ्यते । विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते" । इति पदमञ्जर्युक्तेः कोटिद्वयानुपस्थितौ कथमयं विचार इत्याशयेन पृच्छति—**कुत इति** । उत्तरयति—**इहेति** । वर्णसमाम्नाये इत्यर्थः । **हि**—यतः । **अवयवाः**—अवयवाश्च । **तद्यथा**—अत एव । **तत्रेति**—अत इत्यादिः ।

प्रदीपे—**सदृशा इति**—अवयवा इत्यनुषज्यते । समुदायमप्याकारं वर्णसमाम्नायानुपदिष्टत्वात् परित्यज्य गणयति—**ऋलिति** । **अवयवपरे इति**—यथेत्यादिः । **समुदाय इति**—नान्तरीयकत्वात् सन्निहितोऽपीत्यनुषज्यते । **अन्यत्र**—अइउणित्यत्र । **इति**—**इति** हेतोः । **तत्र**—अवयवे । **तत्र**—अग्ने इन्द्र इत्यादौ । **साक्षादिति**—अवयवस्येत्यादिः । **हि**—यतः । **अत्रापि**—अग्ने आयाहीत्यत्रापि । **इति**—इत्यनेन । **तत्र**—अग्ने इन्द्र इत्यादौ । **अपीति**—इकारः दीर्घत्वमिति शेषः । **तिरोहितेति**—समुदाये इत्यादिः । **तत्कार्येति**—स्वसदृशवर्णान्तरकार्येत्यर्थः ।

उद्द्योते—**पररूपमिति**—एङि पररूपमित्यनेनेत्यादिः । **तद्भाजः**—संज्ञाभाजः । **अन्यत्र**—अइउणित्यादौ । **समुदायनिर्देशः**—ऋ लृ इत्यादिसमुदायनिर्देशः । **समुदायनिर्देशः**—ह्य इत्यादिसमुदायनिर्देशः । **अनिर्दिष्टावयवपरः**—ह् य् इत्याद्यनिर्दिष्टावयवपरः । **तदवयवस्य**—एजवयवस्य । **तन्निवृत्तिम्**—अवयवनिवृत्तिम् । **विध्यन्तरेति**—गुणादीत्यादिः । **अस्य** अवयवस्य । **तदुच्चारणम्**—अवयवोच्चारणम् । **तदवयवे**—नरसिंहावयवे । **एतदवयवे**—एजाद्यवयवे ।

## ( भाष्यम् )

**कश्चात्र विशेषः ? ।**

**( तत्त्वालोकः )** भाष्ये—पृच्छति—**कश्चेति** । **अत्र**—पक्षद्वये ।

### ( ४२ ग्रहणपक्ष आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षरविधिप्रतिषेधः ॥ * ॥

## ( भाष्यम् )

**वर्णैकदेशा वर्णग्रहणेन चेत्संध्यक्षरे समानाक्षराश्रयो विधिः प्राप्नोति । स प्रतिषेध्यः ॥ अग्ने इन्द्र, वायो उदकम्, "अकः सवर्णे दीर्घः" इति दीर्घत्वं प्राप्नोति ॥**

**( प्रदीपः ) समानाक्षरेति** । समानशब्देन पूर्वाचार्यनिर्देशादकोऽभिधीयन्ते । **दश समाना** इति वचनात् । तेन समानकार्यं प्राप्नोतीत्यर्थः ॥

**( उद्द्योतः ) वचनादिति** । अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ दश समाना इति पूर्वव्याकरणवचनादित्यर्थः ॥ **समानकार्यम्** । अग्रूपसमानाक्षरकार्यमित्यर्थः । **सवर्णकार्यमिति** । पाठे सवर्णदीर्घरूपकार्यमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये - तेन तस्य ग्रहणमिति पक्षे दूषणमाह—**वर्णेति** । **चेदिति**—यदीत्यर्थः । गृह्यन्ते, तर्हीति शेषः । **उदकमिति**—इत्यादाविति शेषः । **इति**—इत्यनेन । अस्य अयादितः परत्वादिति शेषः ।

### ( ४३ आक्षेपान्तरवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ दीर्घे ह्रस्वविधिप्रतिषेधः ॥ * ॥

## ( भाष्यम् )

**दीर्घे ह्रस्वाश्रयो विधिः प्राप्नोति, स प्रतिषेध्यः । आलूय, प्रलूय "ह्रस्वस्य पिति कृति तुक्" इति तुक् प्राप्नोति ॥**

**( तत्त्वालोकः )** भाष्ये—पुनः तत्र पक्षे दोषमाह—**दीर्घे इति** । दीर्घघटको यो ह्रस्वः ह्रस्वसदृशः तं स्थानित्वेन निमित्तत्वेन वा आश्रित्य यो विधिः ह्रस्वस्य ह्रस्वोत्तरस्य वा प्राप्तस्तस्य प्रतिषेधो वक्तव्य इत्यर्थः । **प्रलूयेति**—इत्यादाविति शेषः । **इति**—इत्यनेन ।

## ( आक्षेपबाधकभाष्यम् )

**नैष दोषः, आचार्यप्रवृत्तिर्ज्ञापयति 'न दीर्घे ह्रस्वाश्रयो विधिर्भवति' इति । यदयं दीर्घाच्छे तुकं शास्ति ॥**

**( उद्द्योतः )** भाष्ये **दीर्घाच्छे इति** । दीर्घस्य च्छे तुगिति हि तदर्थः ॥ ननु ह्रस्वस्येत्यत्राच इत्येव सिद्धे ह्रस्वग्रहणसामर्थ्यादेव तुगनेति चेन्न । पदलाघवाभावादित्याशयात् ॥

**( तत्त्वालोकः )** भाष्ये—दोषं द्वितीयं परिहरन्ति—**नैष इति** । कुत इत्यत आह—**आचार्येति** । यत इत्यादिः । कुतः सा तज्ज्ञापयतीत्यत आह—**यदिति** । यस्मादित्यर्थः । **अयं**—पाणिनिः ।

उद्द्योते—**हीति** वाक्यालङ्कारे । **इत्येव**—इत्यनेनैव । **एवेति**—तत्रेति शेषः ।

## ( आक्षेपसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम्, अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥ 'किम् ? ॥' "पदान्ताद्वा" इति विभाषां वक्ष्यामीति ॥**

**( उद्द्योतः ) अस्ति हीति** । तत्र दीर्घादित्यस्याभावे कुट्यच्छायेत्यादावपि विकल्पः स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—दीर्घग्रहणस्य तज्ज्ञापकतां खण्डयति—**नेति** । **एतत्**—दीर्घग्रहणम् । **ज्ञापकमिति**—तस्येत्यादिः । **हि**—यतः । **एतस्य**—दीर्घादित्यस्य । **किमिति**—अन्यदिति शेषः । **इति**—इत्यनेन । तथा च तत्र दीर्घग्रहणस्य पदान्ताद्वेत्यत्रानुवृत्त्यर्थत्वेन सामर्थ्याभावात् न तस्य ज्ञापकतेति भावः ।

( आक्षेपबाधकभाष्यम् )

यत्तर्हि योगविभागं करोति । इतरथा हि "दीर्घात्पदान्ताद्वा" इत्येव ब्रूयात् ॥

( तत्त्वालोकः ) भाष्ये—तस्य ज्ञापकान्तरमाह-**यदिति । करोतीति**-तत् तस्य ज्ञापकमिति शेषः । **हि**-यतः ।

( आक्षेपभाष्यम् )

इह तर्हि-खट्वाभिः, मालाभिः, "अतो भिस ऐस्" इत्यैस्भावः प्राप्नोति ॥

( तत्त्वालोकः ) भाष्ये—एवं सति ज्ञापकस्य सजातीयापेक्षत्वात तेनावारितं दीर्घे इति वार्तिकस्य लक्ष्यमाह-**इहेति । मालभिः**-मालाभिरिति । **इति**-इत्यनेन ।

( आक्षेपबाधकभाष्यम् )

तपरकरणसामर्थ्यान्न भविष्यति ॥

( तत्त्वालोकः ) भाष्ये—तदपि निराकरोति-**तपरेति ।** अत्रेत्यादिः । **न**-तत्र स न ।

( आक्षेपभाष्यम् )

इह तर्हि—याता वाता "अतो लोप आर्धधातुके" इत्यकारलोपः प्राप्नोति ॥

( तत्त्वालोकः ) भाष्ये—पुनः तस्य तादृशं लक्ष्यान्तरमाह-**इहेति । वाता**-वातेति । **इति**-इत्यनेन ।

( आक्षेपबाधकभाष्यम् )

ननु चात्रापि तपरकरणसामर्थ्यादेव न भविष्यति ॥

( तत्त्वालोकः ) भाष्ये—तदपि खण्डयति-**ननु चेति । एवेति**-तत्र स इति शेषः ।

( आक्षेपसाधकभाष्यम् )

अस्ति ह्यन्यत्तपरकरणे प्रयोजनम् ॥ किम् ? ॥ सर्वस्य लोपो मा भूदिति ॥

( तत्त्वालोकः ) भाष्ये—अतो लोप इत्यत्र तपरकरणस्य सामर्थ्यं विघटयति-**अस्तीति ।** अत्रेति शेषः । **किमिति**-अन्यदिति शेषः । **सर्वस्येति**-तस्यातपरत्वे तेन सवर्णग्रहणात् सम्पूर्णस्य आकारस्येत्यर्थः । **मा भूदिति**-किन्त्वाकारघटकस्य अकारस्य लोपो यथा स्यादिति शेषः ।

( प्रयोजनबाधकभाष्यम् )

अथ क्रियमाणेऽपि तपरे परस्य लोपे कृते पूर्वस्य कस्मान्न भवति ? ॥

( तत्त्वालोकः ) भाष्ये—तत्र तपरकरणप्रयोजनासिद्धिं शङ्कते-**अथेति ।** तत्रेति शेषः । **परस्य**-आकारघटकस्य अकारस्य । **पूर्वस्य**-तस्य । अस्य लोप इति शेषः । तथा च फलतः सर्वस्य आकारस्य लोपप्रसक्तिरिति भावः ।

( प्रयोजनसाधकभाष्यम् )

परलोपस्य स्थानिवद्भावादसिद्धत्वाच्च ॥

( प्रदीपः ) **असिद्धत्वाच्चेति ।** असिद्धवदत्राभादित्यनेन ।

( उद्द्योतः ) **असिद्धवदिति । चिणो लुङ्न्यायेनेति** भावः ।

( तत्त्वालोकः ) भाष्ये—तां परिहरति-**परेति ।** तथा च तत्र तपरकरणसत्त्वे आकारघटकस्य एकस्य अकारस्य लोपो भवति, तदसत्त्वे तु सम्पूर्णस्य आकारस्य लोपः प्रसज्यते इति तत्र तपरकरणं सार्थकमेवेति भावः ।

उद्द्योते—**चिण इति**-यथा अकारिततरामित्यत्र चिणो लुगित्यनेन तप्रत्ययलुकि, चिणः परत्वात् तरामित्यत्रापि तस्मिन् प्रवृत्ते, तेन कृतस्य तप्रत्ययलुकोऽसिद्धता स्वीक्रियते, तथा प्रकृतेऽपि अतो लोप इत्यनेन परलोपे, पूर्वत्रापि तस्मिन् प्रवृत्ते, तेन कृतस्य परलोपस्यासिद्धताऽङ्गीक्रियते इति भावः ।

( समाधानसाधकभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'नाकारस्थस्याकारस्य लोपो भवति' इति । यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥ कथं कृत्वा ज्ञापकम् ? ॥ कित्करणे एतत्प्रयोजनम्- कितीत्याकारलोपो यथा स्यादिति । यद्याकारस्थस्याकारस्य लोपः स्यात् , कित्करणमनर्थकं स्यात् । परस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपे हि सिद्धं रूपं स्याद्—गोदः कम्बलद इति । पश्यति त्वाचार्यो—नाकारस्थस्याकारस्य लोपः स्यादिति, अतः ककारमनुबन्धं करोति ॥

( तत्त्वालोकः ) भाष्ये—दीर्घे इति वार्तिकस्य यातेत्यादिलक्ष्यं वारयितुं ज्ञाप्यान्तरमवलम्बते-**एवमिति । यत्**-यस्मात् । **अयं**-पाणिनिः । **इति**-इत्यत्र । **कृत्वेति**-तत् तस्येति शेषः । **किदिति**-तत्रेत्यादिः । **कितीति**-कितीत्यनेन । **स्यादिति**-तर्हि तत्रेति शेषः । **हि**-यतः ।

( समाधानबाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । उत्तरार्थमेतत्स्यात्-"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

( उद्द्योतः ) भाष्ये **उत्तरार्थमेतदिति । इह किंचित्त्रपो इतीति** न्यायस्तु नाश्रितः । अत्र केवलाकारोच्चारणे उत्तरत्र ककाराकारयोरुच्चारणे गौरवादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्र कित्करणस्य तज्ज्ञापकतां विघटयति-**नेति । एतत्**-तत्र कित्करणम् । **ज्ञापकमिति**-तस्येत्यादिः । कुत इत्यत आह-**उत्तरेति ।**

उद्द्योते—**इह किञ्चित्त्रपो इतीति** न्यायस्तु लण्सूत्रे मयोपपादयिष्यते । **अत्र**-आतोऽनुपसर्गे इत्यत्र । **उत्तरत्र**-तुन्दशोकयोरित्यत्र ।

( समाधानसाधकभाष्यम् )

यत्तर्हि "गापोष्टक्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥

( प्रदीपः ) **यत्तर्हीति ।** नन्वसति कित्वे आकारस्थस्याकारस्य लोपे कृते द्वयोरकारयोः पररूपस्य धातुं प्रत्यन्तवद्भावाच्छन्दोगायेत्यत्रातो धातोरित्याकारलोपप्रसङ्गः । नैष दोषः, **सन्निपात**परिभाषया लोपो न भविष्यति । अकारं ह्याश्रित्य यशब्दः कृतो लोपस्यानिमित्तम् । दीर्घत्वं तु **कष्टायेति** निपातनाद्भवति ॥

( उद्द्योतः ) **सन्निपातेति ।** न च दीर्घेणैव स निवर्तितो, दीर्घेऽप्यत्वजातिसंबन्धसत्त्वेन न तथा सन्निपातक्षतिः । लोपे तु तस्यापि

निवृत्तेस्तद्विरोधस्य स्पष्टत्वादिति भावः ॥ परे तु जातिपक्षे तपरसूत्रं व्याप्यजातिनिर्देशस्यैव बोधकमिति यत्वनिमित्तसन्निपातस्य दीर्घेण निवृत्तिर्नातैव न कस्याप्यनुवृत्तिस्तस्माद्व्याप्यात्वजातिमदादिसंनिपातनिमित्तो दीर्घो न स्वसंनिपातविघातकलोपनिमित्तम्। सन्निपातपरिभाषायाश्च स्वप्रवृत्तेः प्राङ् निमित्तभूतो यादृशः सन्निपातः स्वातिरिक्ततद्विघातकस्य स्वयमनिमित्तमित्यर्थः। मात्राकालिकत्वसमानाधिकरणव्यापकजातिनिर्देशपक्षेऽप्यङ्गसंज्ञा तन्निमित्तं स्यादिति क्रमेजन्तसूत्रवक्ष्यमाणभाष्यरीत्या यादेशनिमित्तसंनिपातस्य न लेशतोऽपि सत्त्वेति वदन्ति॥ प्रागर्त्तं तदॢकार इत्यादौ 'रो रि' तोलीति तु नापादितं, तस्याभितोऽभ्यागमस्त्वेन तेन व्यवधानात तदप्राप्तेः॥

**( तत्त्वालोकः )** भाष्ये—एवं सति तस्य अनन्यथासिद्धं ज्ञापकमाह-यत्तद्दीति। इति-इत्यत्र। करोतीति-तत् तस्य ज्ञापकमिति शेषः।

प्रदीपे—तस्य तज्ज्ञापकताप्रयोजकम् अनन्यार्थत्वं विघटयितुं शङ्कते-नन्विति। तस्येति शेषः। अकारस्य-उत्तरभागस्य। अन्तवद्भावादिति-धात्ववयवत्वे, तस्य सुपि चेत्यनेन दीर्घे, तस्यैककदेशविकृतन्यायेन धात्ववयवत्वादिति शेषः। इति-इत्यनेन। तस्य क्विपे सति तु तत्र "आतो लोप इटी" त्यनेनालोपे, प्रत्ययाकारस्य सुपि चेत्यनेन दीर्घेऽपि तत्र धात्ववयवत्वाभावात् "आतो धातो" रित्यस्याप्राप्तिरिति भावः। हि-यतः। ननु तया तत्र दीर्घत्वाप्राप्तिरपि कुतो नेत्यत आह-दीर्घत्वमिति। तत्रेत्यादिः।

उद्योते—नचेति-अस्य निवर्त्तित इत्यनेनान्वयः। सः-अकारः। तथा-दीर्घत्वे। तस्यापि-अत्वस्यापि। तद्विरोधस्य-सन्निपातपरिभाषाविरोधस्य। व्याप्येति-अत्वादीति शेषः। इति-इति हेतोः। सन्निपातस्य-ह्रस्वाकारेऽसन्निपातस्य। यञादीति-प्रत्ययेति शेषः। तद्विघातकस्य-स्वप्रवृत्तिनिमित्तभूततादृशसन्निपातविघातकस्य। तथा च स्वेन तद्विघाते न सा परिभाषा प्रवर्त्तते इति भावः। ननु भाष्यकृता ऋकारऌकारयोरपि दोषोद्भावनं कुतो न कृतमित्यत आह-प्रातरिति। तस्य-ऋकारादेः। तेन-अचा। तदप्राप्तेः-रोरीत्याद्यप्राप्तेः।

## ( ५४ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ एकवर्णवच्च ॥ * ॥

### ( भाष्यम् )

एकवर्णवच्च दीर्घो भवतीति वक्तव्यम् ॥ किं प्रयोजनम्? ॥ वाचा तरतीति व्यञ्लक्षणष्ठन्मा भूदिति। इह च वाचो निमित्तम्, "तस्य निमित्तं संयोगोत्पातौ" इत्यनुवर्तमाने "गोद्व्यच" इति द्व्यच्लक्षणो यन्मा भूदिति ॥

**( प्रदीपः ) एकवर्णवदिति।** अवयवसंख्याश्रयेण वाक्शब्दस्य द्व्यच्त्वात्तन्निमित्तं कार्यं प्राप्नोतीत्येकवर्णवदित्यतिदेशः क्रियते॥

**( तत्त्वालोकः )** भाष्ये—वर्णैकदेशाः वर्णग्रहणेन गृह्यन्ते इत्यत्र पक्षे दोषान्तरमाह-एकेति। द्व्यच्लक्षणकार्यस्य प्रतिषेधो वाच्य इति भावः। तेन दीर्घे एकवर्णत्वसिद्धत्वेऽपि नातिदेशवैयर्थ्यम्। तरतीति-तरतीत्यर्थे। तरतीत्यधिकारे नौद्व्यचष्ठन्निति विहित इति शेषः। इति-इति हेतोः। निमित्तम्-निमित्तमित्यर्थे। इति-इत्यस्मिन्। इति-इत्यनेन। इति-इति हेतोः। प्रदीपे—इति-इति हेतोः।

### ( आक्षेपबाधकभाष्यम् )

अत्रापि गोनौग्रहणं ज्ञापकम्—'दीर्घाद् द्व्यज्लक्षणो विधिर्न भवति' इति ॥

**( प्रदीपः ) गोनौग्रहणं ज्ञापकमिति।** सामान्येन ज्ञापकं वर्णावयवाश्रयकार्याभावस्येति अग्न एहीत्यादावेङः पदान्तादतीत्यापि न भवति॥

**( उद्द्योतः )** अग्ने इन्द्रेत्यादौ सवर्णदीर्घव्यावृत्तये आह—सामान्येनेति ॥ गोद्व्यचोऽसङ्ख्येति गोग्रहणं नौद्व्यचष्ठन्निति नौग्रहणम्॥ वर्णावयवाश्रयकार्याभावस्येति। वर्णावयवेषु भेदेनाप्रतिभासमानेषु वर्णाश्रयकार्याभावस्येत्यर्थः। तेन मातॄणामित्यादौ णत्वादिसिद्धिः। भेदेन प्रतिभासात्॥

**( तत्त्वालोकः )** भाष्ये-तत् परिहरति-अत्रेति। प्रदीपे-इति-इति हेतोः। उद्योते—इति-इत्यत्र। एवमग्रेऽपि। भेदेनेति तत्र वर्णावयवस्येत्यादिः। तथा च तेषां तेन ग्रहणमित्यत्र पक्षे न कोऽपि दोष इति सिद्धम्।

### ( सर्वाक्षेपपरिहारभाष्यम् )

अयं तु सर्वेषामेव परिहारः—

## ( ५५ सिद्धान्तसमाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ नाव्यपवृक्तस्यावयवे तद्विधिर्यथा द्रव्येषु ॥ * ॥

### ( भाष्यम् )

नाव्यपवृक्तस्यावयवस्यावयवाश्रयो विधिर्भवति यथा द्रव्येषु। तद्यथा द्रव्येषु "सप्तदश सामिधेन्यो भवन्ति" इति न सप्तदशारत्निमात्रं काष्ठमग्नावभ्याधीयते ॥

**( प्रदीपः ) नाव्यपवृक्तस्येति।** व्यपवर्गो व्यपवृक्तं भेदः। तेनाव्यपवृक्तस्याभिन्नबुद्धिविषयस्यैकत्वालम्बनज्ञानग्राह्यस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः पृथग्भूतवर्णविधिर्न भवतीत्यर्थः॥ अव्यपवृक्तस्यावयवस्येति। व्यधिकरणे षष्ठ्यौ, अव्यपवृक्तस्य समुदायस्य योऽवयवस्तस्येत्यर्थः। न हि संभवमात्रेण कार्याणि क्रियन्ते, अपि तु यत्र तद्बुद्धिरस्ति तत्रैवेत्यर्थः। माषा न भोक्तव्या इति निषेधस्तु मिश्रेऽपि प्रवर्तते॥ तत्र तद्बुद्धिस्तद्रसास्वादनसंभवात्॥ सप्तदशेति। सामिधेनीशब्द ऋचां वाचकः साहचर्यात्काष्ठेषु वर्तते। तत्र सप्तदशशब्दस्ते काष्ठे सप्तदश काष्ठानीति बुद्धेरभावान्न तस्याभ्याधानम्॥

**( उद्द्योतः )** सामान्यापेक्षज्ञापकं विनापि न्यायेन निर्वाहमाह—भाष्ये—अयन्त्विति। अभिन्नबुद्धिविषयस्येत्यस्य व्याख्या—एकत्वालम्बनज्ञानग्राह्यस्येति ॥ समुदायस्य योऽवयव इति। वर्णसमुदायस्येत्यर्थः। व्यधिकरणे इति। सामानाधिकरण्येनान्वयेऽव्यपवृक्तस्येति व्यर्थं, सर्वस्याप्यवयवस्यावयविनाऽव्यपवृक्तत्वादिति भावः॥ भाष्ये अवयवाश्रयः। अवयवसदृशस्वतन्त्रवर्णाश्रयः॥ उक्तेऽर्थे युक्तिमाह—न हीति। ननु सामिधेनीशब्दस्य ऋक्षु शक्तत्वेन काष्ठमग्नावाधीयत इति भाष्यमयुक्तमत आह—साहचर्यादिति। तदावेयत्वेनेति भावः। तत्र सप्तदशेति। यद्यपि एकैका समिदरत्निमात्रमिति मिलितानां सप्तदशानां समिधां सप्तदशार-

त्निमात्रत्वं भवति, एकस्यापि तावत्त्वमस्ति, तथाप्यव्यपवृक्तसमुदायावयवत्वात् न व्यपवृक्ताश्रयकार्यप्रसङ्ग इति भावः ॥

**(तत्त्वालोकः)** भाष्ये—**द्रव्येषु**-द्रव्येष्विति । **इति**-इत्येतावता । प्रदीपे—**मिश्रेषु**-माषमिश्रिततण्डुलादिषु । कुत इत्यत आह-**तत्रेति** । माषमिश्रिततण्डुलादिष्वित्यर्थः । यत इत्यादिः । **तद्बुद्धिः**-माषबुद्धिः । अन्य अस्तीति शेषः । तत्र हेतुमाह-**तद्रसेति** । माषरसेत्यर्थः । **तस्य**-सप्तदशहस्तकाष्ठस्य । अस्य अग्नाविति शेषः ।

उद्द्योते—**सामान्येति**-तयोः गोनौग्रहणस्य तादृशेत्यादिः । **ज्ञापकं**-ज्ञापकत्वम् । **न्यायेन**-न्यायेनात्र । **सामानाधिकरण्येनेति**-अव्यपवृक्तस्यावयवे इत्यादिः । **अन्वये इति**-अवयवस्य विशेषणमिति शेषः । **मात्रत्वं**-प्रमाणत्वम् । **एकस्यापि**-सप्तदशहस्तकाष्ठस्य । **तावत्त्वं**-सप्तदशारत्निमात्रत्वम् ।

( दृष्टान्तवैषम्यभाष्यम् )

**विषम उपन्यासः, प्रत्यृचं चैव हि तत्कर्म चोद्यते । असंभवश्चाग्नौ वेद्यां च ॥**

**( प्रदीपः ) असंभव इति** । अर्धचतुर्हस्ता हि वेदिः ॥

**( उद्द्योतः )** न ह्यव्यपवृक्तत्वमात्रनिबन्धनं तदनभ्याधानं, किं तु असंभवनिबन्धनमित्याह—**भाष्ये विषम इति** । आहितपुनर्ग्रहणस्य निषिद्धत्वादेकस्य काष्ठस्य प्रत्यृचमाधानं न संभवतीति भावः॥ युक्त्यन्तरमाह—**असंभवश्चेति** ॥ तमुपपादयति—**अर्धचतुर्हस्तेति** । अर्धेन चतुर्हस्तेति तृतीयातत्पुरुषः । समिधोऽग्निवेदिबहिर्भावनिषेधाच्चासम्भव इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—एकदेश्युक्तं तं दृष्टान्तं सिद्धान्ती विघटयति-**विषम इति** । **हि**-यतः । **तत्कर्म**-समिध आधानं कर्म । **असम्भव इति**-सप्तदशहस्तकाष्ठाधानस्येत्यादिः । प्रदीपे – **हि**-यतः ।

उद्द्योते—**तदनभ्याधानं**-सप्तदशहस्तकाष्ठस्यैकस्य अग्नावनभ्याधानम् ।

( दृष्टान्तान्तरभाष्यम् )

**यथा तर्हि "सप्तदश प्रादेशमात्रीराश्वत्थीः समिधोऽभ्यादधीत" इति न सप्तदशप्रादेशमात्रं काष्ठमग्नावभ्याधीयते ॥**

**( प्रदीपः ) यथा तर्हीति** । अल्पप्रमाणत्वात्स्यात्संभव इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी दृष्टान्तान्तरमाह-**यथेति** । **इति**-इत्येतावता । प्रदीपे—**अल्पेति**-तस्येत्यादिः ।

( दृष्टान्तवैषम्यभाष्यम् )

**अत्रापि प्रतिप्रणवं चैतत्कर्म चोद्यते । तुल्यश्चासंभवोऽग्नौ वेद्यां च ॥**

**( तत्त्वालोकः )** भाष्ये—पूर्वदृष्टान्तस्येव अस्य दृष्टान्तस्यापि निराकरणमाह-**अत्रेति** । दृष्टान्ते इति शेषः । **च**- हि । **एतत्कर्म**-समिधोऽग्नौ आधानं कर्म । आहितपुनर्ग्रहणस्य निषिद्धतया एककाष्ठस्य प्रतिप्रणवं तत्राधानं न संभवतीत्याशयः । **तुल्यश्चेति**-पूर्वदृष्टान्तेनात्र दृष्टान्ते इत्यादिः । सप्तदशप्रादेशमात्रकाष्ठाधानस्येति शेषः । **वेद्याम्**-अर्धचतुर्हस्तायाम् । **चेति**-समिधोऽग्निवेदिबहिर्भावनिषेधादिति । शेषः ।

( सिद्धान्तिदृष्टान्तभाष्यम् )

**यथा तर्हि "तैलं न विक्रेतव्यम्" "मांसं न विक्रेतव्यम्" इति व्यपवृक्तं च न विक्रीयते, अव्यपवृक्तं गावः सर्षपाश्च विक्रीयन्ते । तथा "लोमनखं स्पृष्ट्वा शौचं कर्तव्यम्" इति व्यपवृक्तं स्पृष्ट्वा नियोगतः कर्तव्यम्, अव्यपवृक्ते कामचारः ॥**

**( प्रदीपः ) अव्यपवृक्तमिति** । व्यपवर्गस्याभावेनेत्यर्थः ॥

**( उद्द्योतः ) अव्यपवृक्तमिति** । अर्थाभावेऽव्ययीभावः ॥ तदाह – **व्यपवर्गस्येति** । वस्तुतस्तत्पुरुष एवायं, व्यपवृक्तभिन्नतैलमांसरूपा गावः सर्षपाश्चेत्यर्थः । नञाव्ययीभावस्याभावादित्यग्रे वक्ष्यते ॥ भाष्ये **कामचार इति** । स्पर्शे कामचारस्तेन शौच भाव इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये – सिद्धान्ती दृष्टान्तमाह-**यथेति** । **इति**-इति निषेधवचनसत्त्वेन । **अव्यपवृक्तमिति**-अत्र तृतीयाया अभावः । किन्त्वित्यादिः । **इति**-इति विधिवाक्येन । **कामचार इति**-स्पृष्टे इत्यादिः । विधेय इति शेषः ।

उद्द्योते - **अयमिति**-अव्यपवृक्तमित्यत्रेत्यर्थः । तथा चेति शेषः । **स्पर्शे**-अव्यपवृक्तस्पर्शे ।

( आक्षेपभाष्यम् )

**यत्र तर्हि व्यपवर्गोऽस्ति ॥ क्व च व्यपवर्गोऽस्ति ?॥ सन्ध्यक्षरेषु ॥**

**( प्रदीपः ) यत्र तर्हीति** । ऐ औ इत्यत्र हि स्फुटोऽकारप्रतिभासोऽस्ति ॥

**( उद्द्योतः )** एङोः संश्लिष्टावर्णत्वेन व्यपवर्गस्यास्पष्टत्वात्सन्ध्यक्षरग्रहणमैजभिप्रायमित्याह—**ऐ औ इति** ॥

**( तत्त्वालोकः )** भाष्ये - नन्वेवं समाधानस्य अव्यपवृक्तेष्वाकारादिषु सम्भवेऽपि व्यपवृक्तेष्वैकारादिषु दोषस्तदवस्थ एवेत्याशयेन शङ्कते-**यत्रेति** ।

( २६ समाधानवार्तिकम् ॥ १० ॥

॥ * ॥ **सन्ध्यक्षरेषु विवृतत्वात्** ॥ * ॥

( भाष्यम् )

**यदत्रावर्णम्, विवृततरं तदन्यस्मादवर्णाद् । ये अपीवर्णोवर्णे, विवृततरे ते अन्याभ्यामिवर्णोवर्णाभ्याम् ॥**

**( प्रदीपः ) विवृतत्वादिति** । अकारस्य विवृतोपदेशादत्र प्रकर्षो विवक्षितः । तदाह—**विवृततरमिति** । तत्र प्रयत्नभेदादसावर्ण्याद्कारेण संध्यक्षरावयवस्य ग्रहणं नास्तीत्यर्थः । तदेवमाकारादिस्थस्यावयवस्य भेदेनाग्रहणादग्रहणम् । संध्यक्षरस्थस्य त्वसावर्ण्यात् । ऋकारस्थस्तु रेफो भेदेन प्रतिभासाद्गृह्यते इति तुडादिसिद्धिः ॥

**( उद्द्योतः ) अकारस्येति** । यद्यप्यैचो विवृततमास्तथापि विवृततरत्वमस्त्येवेति भावः ॥ प्रयत्नभेदादेव एङैचोः परस्परं सावर्ण्याभावः । एङो विवृततरत्वादैचो विवृततमत्वादिति बोध्यम् ॥ **तुडादीति** । आनृजे इत्यत्र नुट् । आदिना चक्लृपे इत्यत्र लत्वम्, मातृणामित्यादौ णत्वं चेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—समाधत्ते-**सन्ध्यक्षरेष्विति** । **अत्र**—ऐ, औ, इत्यत्र । **अन्यस्मात्**-"अक" इत्यादिस्थात् । एवमग्रेऽपि ।

प्रदीपे—अत्र-प्रकृतवार्त्तिकस्थविवृतशब्दे । उपसंहरति—तदेवमिति । ग्रहणपक्षे इति शेषः । सन्ध्यक्षरस्थस्य त्विति-भेदेन ग्रहेऽपि तेनेति शेषः । असावर्ण्यादिति-अग्रहणमिति शेषः । इति-इति हेतोः ।

उद्द्योते—तथापीति-तेषामिति शेषः । विवृत पेक्षया अकर्षमात्रे तात्पर्यमिति भावः । बोध्यमिति-तथा च न ग्रहणपक्षे काप्यनुपपत्तिरिति भावः ।

( तत्त्वालोकः ) भाष्ये—तत्परिहरति-यस्येति । कुत इत्यत आह-द्विहलिति । तत्रेत्यादिः । तस्मादिति-तत्रेति शेषः । इत्येव-इत्येव हेतोः ।

( आक्षेपभाष्यम् )

**यदि न क्रियते, आटतुः, आटुरित्यत्रापि प्राप्नोति॥**

( तत्त्वालोकः ) भाष्ये—तत्र तदकरणे तस्यातिव्याप्तिं शङ्कते—यदीति । तत्र द्विहल्ग्रहणमिति शेषः । क्रियते इति-तर्हि तस्य आनृधतुरित्यादावव्याप्तिनिवारणेऽपि तदिति शेषः ।

( अग्रहणपक्षाभ्युपगमभाष्यम् )

**अथवा पुनर्न गृह्यन्ते ।**

( प्रदीपः ) अथवेति । नरसिंहवद्वर्णान्तरत्वात्सादृश्याच्च प्रत्यभिज्ञानात्तत्त्वासिद्ध्या पृथगुपलभ्यानां वर्णानां समुदाये नास्ति सत्त्वम् । समुदायवाचोयुक्तिरपि तत्र वर्णान्तरे न तात्त्विकी, भ्रान्तिवशात्त्ववयवसद्भावाश्रयेण प्रवृत्ता ॥

( उद्द्योतः ) सादृश्याच्चेति । चस्त्वर्थे । समुदाये सन्ध्यक्षरादौ ॥ सत्यपि गोसादृश्ये गवये गोत्वस्येव सन्ध्यक्षराद्यवयवेषु अत्वादिजातेरभावादकारादिग्रहणेन ग्रहणं नेति भावः ॥ ऐकारादीनामेकेच्छाप्रयत्नजन्यत्वेनैकत्वमेव अकारादिवत् । अत एवैषां पदवत्र वर्णसमूहत्वेन प्रतिभास इति तदेवाह—समुदायवाच इति ॥ भ्रान्तिवशादिति । भ्रान्तिगृहीतावयवसद्भावाश्रयेणेत्यर्थः । एवं च भ्रान्तिरेव ग्रहणपक्षे बीजमिति भावः ॥ अत एव गोनौग्रहणं चरितार्थम् ॥

( तत्त्वालोकः ) भाष्ये—अग्रहणपक्षेऽपि आनृजे इत्यादौ नुडादिविशेषवचनं विनैव सुसाधमित्यभिप्रायेणाह-अथवेति ।

प्रदीपे—नरेति-सन्ध्यक्षरादीनामित्यादिः । सादृश्याच्चेति-उदवयवानाम् अकारादिनेत्यादिः । तत्रेति शेषः । तत्त्वेति-अत्वादिजातीत्यर्थः । तत्र-सन्ध्यक्षरादौ । तु-हि ।

उद्द्योते—अवयवेषु इति-अकारादिसादृश्येऽपीति शेषः । ग्रहणमिति-तेषामित्यादिः । भावः—सत्त्वमित्यन्तकैवटाशयः । तत्र युक्त्यन्तरमाह—ऐकारादीति । अत एव-एषामेकत्वादेव । एषां-सन्ध्यक्षरादीनाम् । अत एव-अग्रहणपक्षसत्त्वादेव ।

( ८७ अग्रहणपक्षदूषणवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणम् ॥ * ॥**

( भाष्यम् )

**अग्रहणं चेन्नुड्विधिलादेशविनामेषु ऋकारग्रहणं कर्तव्यम् । "तस्मान्नुड् द्विहलः" ऋकारे चेति वक्तव्यम् ॥ इहापि यथा स्यात्—आनृधतुः, आनृधुरिति । यस्य पुनर्गृह्यन्ते 'द्विहलः' इत्येव तस्य सिद्धम् ॥**

( उद्द्योतः ) [ वार्तिके ] विनामो णत्वम् ॥

( तत्त्वालोकः ) भाष्ये—अग्रहणपक्षे दूषणमाह-अग्रहणमिति । चेदिति-यदीत्यर्थः । तर्हीति शेषः । कुत इत्यत आह-इहेति । यस्येति-मते इति शेषः । एवमग्रेऽपि । इत्येव-इत्यनेनैव । सिद्धम्-तत्सिद्धम् । एवमग्रेऽपि ।

( अग्रहणपक्षदूषणोद्धारभाष्यम् )

**यस्यापि न गृह्यन्ते, तस्याप्येष न दोषः । द्विहल्ग्रहणं न करिष्यते । तस्मान्नुड् भवतीत्येव ॥**

( आक्षेपबाधकभाष्यम् )

**अश्नोतिग्रहणं नियमार्थं भविष्यति—अश्नोतेरेवावर्णोपधस्य नान्यस्यावर्णोपधस्येति ॥ [नुड्विधिः]॥**

( प्रदीपः ) अश्नोतेरेवेति । सामान्येनावर्णोपधौ निवर्त्यते, न त्वश्नातिरेव सामान्यापेक्षत्वान्नियमज्ञापकस्य ॥

( उद्द्योतः ) ननु विकरणविशेषनिर्देशेन श्नाविकरणनिवृत्त्यर्थं सूत्रं स्यादत आह—न त्वश्नातिरेवेति । तथा हि सति नाश्न इत्येव वदेदिति भावः ॥ नियमज्ञापकस्य नियमबोधकस्य ॥

( तत्त्वालोकः ) भाष्ये—तस्यातिव्याप्तिनिरासायाह-अश्नोतीति ।

उद्द्योते—तथा हि सति-यतः अश्नातेरेव निवर्त्यत्वे सति । वदेदिति-न तु द्विहल इतीति शेषः ।

( आक्षेपवार्तिकखण्डभाष्यम् )

**लादेशे च ऋकारग्रहणं कर्तव्यम् । "कृपो रो लः" ऋकारस्य चेति वक्तव्यम् । इहापि यथा स्यात्—क्लृप्तः क्लृप्तवानिति । यस्य पुनर्गृह्यन्ते, र इत्येव तस्य सिद्धम्॥**

( तत्त्वालोकः ) भाष्ये—अग्रहणमितिवार्त्तिकांशं व्याचष्टे-लादेशे इति । कुत इत्यत आह-इहेति । इत्येव-इत्यनेनैव ।

( आक्षेपनिरासभाष्यम् )

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । ऋकारोऽप्यत्र निर्दिश्यते ॥ कथम् ? ॥ अविभक्तिको निर्देशः—कृप, उः, रः, लः = "कृपो रो लः" इति ॥ अथवा उभयतः स्फोटमात्रं निर्दिश्यते-रश्रुतेर्लश्रुतिर्भवतीति ॥ [ लादेशः ] ॥**

( प्रदीपः ) अविभक्तिक इति । तत्र ऋकारनिर्देशसामर्थ्याद् द्विभागं प्रकल्प्यादेशो विधीयते ॥ स्फोटमात्रमिति । जातिस्फोट इत्यर्थः ॥ ततश्चान्तर्भूतानन्तर्भूतरेफलकारव्यङ्ग्यं सामान्यं स्थान्यादेशभावेना श्रीयते ॥

( उद्द्योतः ) नन्वखण्डवर्णपक्ष ऋकारप्रश्लेषेऽपि कथं सिध्यतीत्यत आह—तत्र ऋकारेति । एवं च रेफपदेन तत्सदृश आरोपितरेफत्ववानपि गृह्यत इति फलितम् ॥ मात्रशब्दः सामान्याभिप्राय इत्याह—जातीति । जातिश्चावयवानवयवसाधारणीत्याशयेनाह—ततश्चेति । एवंविधा च रत्वलत्वजातिरेवेत्यतिप्रसङ्गो न । स्थान्यादेशभावश्च जातेर्व्यक्तिद्वारको बोध्यः । वस्तुतः स्फोट एव श्रोत्रग्राह्यः । वायुनिष्ठरत्वादिना च तस्याभिव्यक्तिः । एवं च साक्षाद्रत्ववतोऽभावेन कल्पत इत्यत्राप्यप्रवृत्तावस्य वैयर्थ्यापत्तिः ॥ एवं च रेफावभासिनः स्फोटस्य

प्रसङ्गे लकारावभासः स्फोट इत्यर्थः ॥ एवं च कृपावपि तत्प्रवृत्तिः सम्भवत्येव । तत्रापि रेफावभाससत्त्वात् । आकारादौ तु नैवं ह्रस्वावभास इति न तत्राकारावभासप्रयुक्तकार्यापत्तिः । तदुक्तम् **रश्रुतेरित्यादि । यत्तु** स्वतन्त्रास्वतन्त्रसाधारणजातिपरतयैतद्भाष्यव्याख्यानम् । तन्न । तादृशजातौ मानाभावात् । नरसिंहदृष्टान्तानुपपत्तेश्च । सादृश्यात्तु प्रत्यभिज्ञेत्यादिस्वोक्तिविरोधापत्तेश्च । किं चैवं मति **रजातेरित्येव** भगवान्वदेत् ॥ किं च तादृशजातिसत्त्वे वर्णैकदेशानामपि तज्जातिमत्त्वेन वर्णग्रहणेन ग्रहणपक्षस्यैव सिद्ध्या ग्रहणपक्षमुक्त्वाऽथ **वा न गृह्यन्त** इति पक्षे तत्समाधानपरभाष्यासङ्गतेः । अत एवाष्टमे **रषाभ्या**मिति सूत्रे—यथा नरसिंहावयवानां नरत्वसिंहत्वजातियोगाभावात्पुरुषमृगराजाभ्यामेकाकृतियोगाभावः, एवं वर्णवर्णैकदेशयोरपीति कैयट आहेति वदन्ति ॥

**( तत्त्वालोकः )** भाष्ये—तत् खण्डयति—**यस्येति** । कुत इत्यत आह—**ऋकार इति** । यत इत्यादिः । अत्र—कृपो रोल इत्यत्र । **कृप इति**—अस्य लुप्तषष्ठीकस्य तन्त्रेणावृत्त्या वा ऋकारे रेफे चान्वयः । तथा च कृपेः रेफस्य ल इति, कृपिघटकऋकारावयवो यो रेफः रेफसदृशः तस्य ल इति च तदर्थः । एवञ्च न तत्रानुपपत्तिरिति भावः । **उभयतः**—उद्देश्यविधेययोः ।

प्रदीपे-**तत्र**-कृपो रोल इत्यत्र । **विभागमिति**-अखण्डेऽपि ऋकारे इत्यादिः । **आदेशः**-रेफस्य लादेशः ।

उद्द्योते—**पक्षे इति**-तत्रेति शेषः । **कथमिति**-तदिति शेषः । **तत्सदृशः**-रेफसदृशः । **सामान्येति**-जातीत्यर्थः । **इति**-इति हेतोः । **तस्य**-स्फोटस्य । **रत्ववतः**-वायोः । **अस्य**-कृपो रो ल इत्यस्य । **तत्प्रवृत्तिः**-कृप इत्यस्य प्रवृत्तिः । **तत्रापि**-कृपावपि । **इति**-इति हेतोः । **तत्र**-आकारादौ । ऋकारावयवे रत्वादिजात्यभ्युपगमे नरसिंहावयवे नरत्वजातेरनभ्युपगमे च ऋकारादिनरसिंहयोः दृष्टान्तदार्ष्टान्तिकते नोपपद्येते इत्याशयेनाह—**नरेति । प्रत्यभिज्ञेति**—न तु समानजातिमत्त्वादिति शेषः । **तादृशेति**-अवयवानवयवसाधारणेत्यर्थः ।

**( आक्षेपवार्तिकखण्डभाष्यम् )**

**विनामे ऋकारग्रहणं कर्तव्यम् । "रषाभ्यां नो णः समानपदे" ऋकाराच्चेति वक्तव्यम् । इहापि यथा स्यात्-मातॄणां पितॄणामिति । यस्य पुनर्गृह्यन्ते रषाभ्यामित्येव तस्य सिद्धम् ॥**

**( तत्त्वालोकः )** भाष्ये —अवशिष्टम् अग्रहणमितिवार्त्तिकभागं व्याचष्टे-**विनेति** । कुत इत्यत आह-**इहेति । इत्येव**-इत्यनेनैव ।

**( अग्रहणवादिभाष्यम् )**

**न सिध्यति । यत्तद्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति ॥**

**( प्रदीपः ) यत्तदिति ।** रेफाद्भक्तेरिति समानाधिकरणे पञ्चम्यौ ॥

**( तत्त्वालोकः )** भाष्ये —तत् निराकरोति अग्रहणवादी-**नेति** । तस्य तदिति शेषः । कुत इत्यत आह-**यत्तदिति** । यदित्यर्थः । यत इत्यादिः । **भक्तेः**-भागात् । **तेन**-अचा । **नेति**-तत्र तदिति शेषः ।

**( ग्रहणवादिभाष्यम् )**

**मा भूदेवम् । अड्व्यवाय इत्येव सिद्धम् ॥**

**( प्रदीपः ) अड्व्यवाये इति ।** ऋकारेण यथा दीर्घो गृह्यते एवमृकारभागोऽपीत्यर्थः ॥

**( उद्द्योतः ) ऋकारेणेति ।** ऋकारावयवस्य रेफस्यैव तदजभागस्यापि केनचिदकारादिना ग्रहणादट्त्वमिति मन्यते ॥

**( तत्त्वालोकः )** भाष्ये-ग्रहणवादी स्वेष्टं साधयति-**मा भूदिति** । न भवतीत्यर्थः । कुत इत्यत आह-**अडिति । इत्येवेति**-इत्यनुवृत्तिसत्त्वादेत्यर्थः । तस्य तेन तदिति शेषः । प्रदीपे—**भागः**-अच् । उद्द्योते—**रेफस्येव**-रेफस्य रेफेणेव । **तदिति**-ऋकारावयवेत्यर्थः ।

**( अग्रहणवादिभाष्यम् )**

**न सिध्यति । वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते, ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चापि रेफात्परं भक्तेः, न तत्क्वचिदपि व्यपवृक्तं दृश्यते ॥**

**( प्रदीपः ) न सिध्यतीति ।** तस्य भागस्य स्फुटप्रतिभासाविषयत्वाज्जात्यभिव्यक्तिहेतुत्वाभावाच्चेति भावः ॥

**( उद्द्योतः ) जात्यभिव्यक्तीति ।** अत्वादिजातीत्यर्थः ॥ एवं च न केनाप्यचा तद्ग्रहणमिति भावः । अत्र जात्यभिव्यक्तिहेतुत्वाभावे स्फुटप्रतिभासाविषयत्वं हेतुः । चो हेतौ । अतो न सिध्यतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—अग्रहणवादी तत् खण्डयति-**नेति** । तस्य तेन तदिति शेषः । कुत इत्यत आह-**वर्णेति** । यत इत्यादिः । **वर्णाः**-वर्णसदृशाः । प्रदीपे—**तस्य भागस्य**-ऋकारावयवस्य अज्भागस्य । उद्द्योते—**तदिति**-ऋकारावयवाजित्यर्थः । **अत्र**-ऋकारावयवाचि ।

**( ग्रहणवादिभाष्यम् )**

**एवं तर्हि योगविभागः करिष्यते, "रषाभ्यां नो णः समानपदे" ततः-'व्यवाये' व्यवाये च रषाभ्यां नो णो भवतीति । ततः-'अट्कुप्वाङ्नुम्भिः' इति ।**

**इदमिदानीं किमर्थम् ? ।**

**नियमार्थम्—'एतैरेवाक्षरसमाम्नायिकैर्व्यवाये, नान्यैः' इति ॥**

**( प्रदीपः ) एतैरेवेति ।** आकारादयोऽप्यकारादिभिः प्रत्यायितत्वादाक्षरसमाम्नायिकाः । भक्तिस्तु न प्रत्याय्या न च प्रत्यायिकेति नियमेन न निवर्त्यते ॥

**( उद्द्योतः )** नन्वाकारादिभिर्व्यवायेऽपि न स्यादाक्षरसमाम्नायिकत्वाभावादत आह-**आकारादयोऽपीति ॥ भक्तिस्त्विति** । असवर्णत्वादनुपदेशाच्चेति भावः ।

**( तत्त्वालोकः )** भाष्ये—ग्रहणवादी पुनः स्वेष्टं साधयति-**एवमिति । रषाभ्यामिति**-प्रथममित्यादिः । **इति**-इति हेतोः ।

प्रदीपे— **भक्तिः**-ऋकारावयवाज्भक्तिः । **इति**-इति हेतोः । अस्य सा तेनेति शेषः ।

उद्द्योते— **न स्यादिति**-रेफषकाराभ्यां परस्य नकारस्य णत्वमित्यादिः । तेषामिति शेषः । तस्याः प्रत्याय्यत्वाभावे हेतुमाह-**असवर्णत्वादिति** । तस्याः प्रत्यायकत्वाभावे हेतुमाह-**अनुपदेशादिति** ।

**( अग्रहणवादिभाष्यम् )**

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यृकारान्नो णत्वमिति । यदयं क्षुभ्नादिषु नृनमनशब्दं पठति ॥**

**( उद्द्योतः )** भाष्ये - **नृनमनशब्दमिति ।** संज्ञाभूतमित्यभिप्रायः। गन्धर्वगानमित्यादौ सुबुत्पत्तेः पूर्वं समासेपि णत्ववारणायाखण्डपदे इत्यर्थके समानपद इत्यत्र पदस्यार्थबोधकस्यैव ग्रहणेन सखण्डत्वेऽसंज्ञायां णत्वप्राप्त्यभावादिति बोध्यम् । **छन्दस्यृ**दित्यस्य तु नात्र प्राप्तिः। ईदृशे विषयेऽवग्रहाभावादित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—अग्रहणवादी सिद्धान्ती स्वमते गौरवं निराकरोति-**यस्येति ।** एकदेशी आह-**यदिति ।** यस्मादित्यर्थः ।

उद्द्योते—**अत्र**-नृनमनशब्दे । **ईदृशे विषये**-संज्ञाविषये ।

**( ग्रहणवादिभाष्यम् )**

**नैतदस्ति ज्ञापकम् । वृद्ध्यर्थमेतत्स्यात्–नार्नमनिः॥**

**( तत्त्वालोकः )** भाष्ये—ग्रहणवादी तस्य तज्ज्ञापकतां विघटयति-**नेति । एतत्**-क्षुभ्नादिषु नृनमनशब्दस्य पठनम् । **वृद्ध्यर्थं**-वृद्धौ कृतायां रेफात् परस्य नस्य णत्वप्राप्तौ तन्निवृत्त्यर्थम् । **मनिरिति**-इत्यत्रेति शेषः ।

**( अग्रहणवादिभाष्यम् )**

**यत्तर्हि तृप्नोतिशब्दं पठति ॥**

**( तत्त्वालोकः )** भाष्ये—अग्रहणवादी सिद्धान्ती अनन्यथोपपन्नं तज्ज्ञापकमुपस्थापयति-**यत्तर्हीति ।** तत्रेति शेषः । **पठतीति**-तत् तस्य ज्ञापकमिति शेषः । अत्र वृद्धिः न सम्भवतीति भावः ।

**( एकदेशिभाष्यम् )**

**यच्चापि नृनमनशब्दं पठति ॥**

**( तत्त्वालोकः )** भाष्ये—एकदेशी स्वोक्तं तस्य तज्ज्ञापकत्वं समर्थयति-**यच्चापीति ।** तत्रेति शेषः । **पठतीति**-तदपि तस्य ज्ञापकमिति शेषः ।

**( बाधकस्मारणभाष्यम् )**

**ननु चोक्तम्—वृद्ध्यर्थमेतत्स्यात् ॥**

**( तत्त्वालोकः )** भाष्ये—ग्रहणवादी स्वकृतं तस्य तद्विघटनं स्मारयति-**ननु चेति । स्यात्**-स्यादिति ।

**( समाधानभाष्यम् )**

**बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ॥ अथवा उपरिष्टाद्योगविभागः करिष्यते—"ऋतः" नो णो भवति । ततः—"छन्दस्यवग्रहात्" ऋत इत्येव ॥**

**( उद्द्योतः )** **बहिरङ्गा वृद्धिरिति ।** त्रिपाद्यामपि बहिरङ्गपरिभाषा प्रवर्तत इति वार्तिकमतेनैतत् । भाष्यमते तु तृप्नोतिशब्दपाठस्यैव ज्ञापकता बोध्या । **ऋतो नो ण इति ।** मातॄणामित्यादौ दीर्घस्य बहिरङ्गासिद्धत्वाण्णत्वम् । यद्वा **प्रशास्तॄणा**मिति निर्देशाण्णत्वम् । अत्र तपरत्वं मुखसुखार्थमेव । उत्तरत्राऽप्येवमेव । फलाभावाद् । ध्वनितं चेदं वृत्तौ ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी तस्य समाधानमाह-**बहिरङ्गेति ।** तथा च वृद्धेरसिद्धत्वात् रेफात्परत्वाभावेन नस्य णत्वाप्राप्तौ क्षुभ्नादिषु नृनमनशब्दपाठः व्यर्थः सन् तज्ज्ञापक एवेति भावः । स प्रकारान्तरेण समाधत्ते-**अथवेति ।** 'छन्दस्यृदवग्रहादि'ति सूत्रे ऋदिति "सुपां सुलुगि" त्यनेन लुप्तपञ्चमीकमित्यभिप्रेत्याह-**ऋत इति ।**

उद्द्योते—**एतत्**-समाधानम् । **निर्देशादिति**-वस्तुतस्तु निर्देशस्यास्य सौत्रत्वेनोपपन्नत्वात् इष्टासाधकत्वे तत्साधनाय ग्रहणपक्षे योगविभागनियमाद्याश्रयणेन गौरवात्, तस्यायुक्तत्वे अग्रहणपक्षयुक्ततां भजते इति भावः । **अत्र**-ऋत इत्यत्र । **उत्तरत्र**-छन्दस्यवग्रहादित्यत्र । **फलेति**-दीर्घात्परस्यापि उक्तरीत्या णत्वसिद्धिसत्त्वेनेत्यादिः । **इदं**-तस्य मुखसुखार्थत्वम् ।

**( ५८ आक्षेपवार्तिकम् ॥ १२ ॥ )**

## ॥ * ॥ प्लुतावैच इदुतौ ॥ * ॥

**( भाष्यम् )**

**एतच्च वक्तव्यम् । यस्य पुनर्गृह्यन्ते गुरोष्टेरित्येव प्लुत्या तस्य सिद्धम् ॥**

**( प्रदीपः )** **गुरोष्टेरिति ।** ऐकारो गुरुस्तस्य टेरिति सिद्धम् तन्त्रन्यायाश्रयणाच्च गुरोरपि स्थाने प्लुतो भवति देवदत्तेति ॥

**( उद्द्योतः )** ननु गुर्ववयवटेरित्यर्थाङ्गीकारे गुरुरूपटेः प्लुतो स्यादत आह—**तन्त्रेति ।** स्थानषष्ठ्यन्तावयवषष्ठ्यन्तयोर्गुरुशब्दयोरित्यर्थः । गुर्ववयवटित्वं चैच एव संभवति, नान्यस्य आकारादेः, तदवयवस्य व्यपवृक्तत्वाभावादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—ग्रहणवादी अग्रहणपक्षे गौरवं दर्शयति **एतच्चेति ।** अग्रहणपक्षे इति शेषः । **इत्येव**-इत्यनेनैव । ऐचः प्लुतिप्रसङ्गे तदवयवाविदुतौ प्लुतौ भवत इत्यर्थकस्य ऐचां चतुर्मात्रत्वसाधकस्य प्लुतावैच इति सूत्रस्यावश्यकर्तव्यत्वाद् गौरवमग्रहणपक्षे ग्रहणपक्षे तु गुरोरैचोऽवयवस्य टेरिकारादेः प्लुतिः गुरोरनृत इत्यनेनैव सिद्धेति लाघवमित्याशयः । प्रदीपे—**टेः** इकारस्य । **गुरोः**-गुरुरूपटेः

**( आक्षेपबाधकभाष्यम् )**

**यस्यापि न गृह्यन्ते तस्याप्येष न दोषः । क्रियत एतन्न्यास एव ॥**

**(प्रदीपः)** **क्रियत एतन्न्यास एवेति ।** अवश्यकर्तव्यतां दर्शयति व्यपवृक्तत्वेपि भागयोर्विवृततरत्वात् प्रयत्नभेदादिकारोकाराभ्यामग्रहणादच्त्वाभावात् ॥

**( उद्द्योतः )** **अच्त्वाभावादिति ।** तन्मूलटित्वाभावाच्चेत्यपि बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—अग्रहणवादी सिद्धान्ती तत्सूत्रस्यावश्यकर्तव्यत्वाद् आवश्यकं गौरवं न दोषायेति प्रतिपादयति-**यस्येति । एषः**-तत्सूत्रकरणप्रयुक्तगौरवनिमित्तकः । कुत इत्यत आह-**क्रियत इति ।** यत इत्यादिः । तथा च यतः एतत् न्यासे ( सूत्रपाठे ) क्रियते एवेत्यन्वयः ।

प्रदीपे— **अवश्येति**- तत्सूत्रस्येत्यादिः । **भागयोः**-ऐज्भागयोरिकारोकारयोः । **भावादिति**-तत्र गुरोरनृत इत्यस्याप्राप्तेरिति शेषः ।

**( ५९ आक्षेपवार्तिकम् ॥ १३ ॥ )**

## ॥ * ॥ तुल्यरूपे संयोगे द्विव्यञ्जनविधिः ॥ * ॥

**( भाष्यम् )**

**तुल्यरूपे संयोगे द्विव्यञ्जनाश्रयो विधिर्न सिध्यति-कुक्कुटः पिप्पली पित्तमिति । यस्य पुनर्गृह्यन्ते तस्य द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥**

( प्रदीपः ) **तुल्यरूप इति** । तुल्यरूपावयवत्वात्संयोगस्तुल्यरूपस्तस्यैकवर्णत्वं पूर्वपक्षे, सिद्धान्ते तु वर्णद्वयरूपता । आशूच्चारणात्तु भ्रान्तमेकत्वज्ञानमिति शिष्टसमाचारः ॥

( उद्द्योतः ) **संयोग इति** । संयोगसंज्ञार्ह इत्यर्थः । **तस्यैकवर्णत्वमिति** । एवं च संयोगसंज्ञा न स्यादिति भावः ॥ **संयोगे इति** भाष्यं तु संयोगार्ह इत्यर्थपरमिति तात्पर्यम् ॥ **शिष्टसमाचारः** । शिष्टव्यवहारः ॥

( तत्त्वालोकः ) भाष्ये—ग्रहणवादी अग्रहणपक्षे दोषान्तरमाह—**तुल्येति** । **संयोगे**-क्क् इत्यादौ । **विधिः**-संयोगसंज्ञा । **इतीति**-इत्यत्रेत्यर्थः । अतः अग्रहणपक्षे तत्र संयोगसंज्ञाया वक्तव्यत्वाद् गौरवमिति शेषः । **तस्येति**-तत्रेति शेषः । **तकाराविति**-इति हेतोः सा सिद्ध्यतीति ग्रहणपक्षे तत्र तस्या अवक्तव्यत्वात् लाघवमिति शेषः ।

प्रदीपे—**तस्य**-संयोगस्य क्क् इत्यादेः । **आश्विति**-तस्येत्यादिः ।

उद्द्योते—**शिष्टेति**-शास्त्रकारकल्पितप्रक्रियादशायामित्यादिः । परमार्थदशायान्तु "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चने"ति वाक्यपदीयोक्तथ्या स्फोटं सिद्धान्तयतो नास्य पूर्वपक्षस्यावसर इति भावः ।

( आक्षेपबाधकभाष्यम् )

**यस्यापि न गृह्यन्ते तस्यापि द्वौ ककारौ, द्वौ पकारौ, द्वौ तकारौ ॥ कथम् ? ॥ मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥**

( उद्द्योतः ) [ भाष्ये ] **मात्राकालोऽत्रेति** । बहुव्रीहिः, संयोगोऽन्यपदार्थः ॥ मात्रिकव्यञ्जनाभावेऽनुपदिष्टत्वं हेतुः । कुक्कुट इत्याद्युच्चारणं तु न उपदेशः ॥ **अनुपदिष्टत्वं** नाम अक्षरसमाम्नायेऽपठितत्वं ग्राहकशास्त्रेणागृहीतत्वं च ॥ **अनुपदिष्टं** सत् सत्त्वेन कथं शक्यं विज्ञातुमित्यर्थः । एवं चानुपदिष्टस्यासत्त्वात् तत्प्रतिपत्तिरशक्येत्याह—**असच्चेति** । कचित्तु असच्चेत्यादिग्रन्थो न दृश्यते ॥ अनेन ऌकारापाठे तस्यासत्त्वशङ्कया तयोः सावर्ण्यविधिरप्यशक्य इति सूचितम् ॥

( तत्त्वालोकः ) भाष्ये—अग्रहणवादी स्वपक्षे तं निराकरोति—**यस्येति** । **तस्यापीति**-तत्रेति शेषः । **अत्र**-क्क् इत्यादौ । **न च**-न हि । कुत इत्यत आह-**अनुपेति** ।

उद्द्योते—**अनेन**-अनुपदिष्टमित्यादि ग्रन्थेन । **तस्य**-ऌकारस्य । **तयोः**-ऋऌवर्णयोः ।

( आक्षेपसाधकभाष्यम् )

**यद्यपि तावदत्रैतच्छक्यते वक्तुं यत्रैतन्नास्ति-'अणु सवर्णान् गृह्णाति' इति । इह तु कथम्-सय्ँ यन्ता, सव्ँ वत्सरः, यल्ँ लोकम् , तल्ँ लोकमिति यत्रैतदस्त्यण् सवर्णान् गृह्णातीति ?॥**

( उद्द्योतः ) **यत्रैतदस्तीति** भाष्ये **हलोऽनन्तरा** इत्यत्र यकारादिभिरस्य ग्रहणे हल्द्वयाभाव इति भावः ॥

( तत्त्वालोकः ) भाष्ये—एवमग्रहणपक्षे उक्तदोषवारणेऽपि अन्यत्र दोषोऽस्त्येवेति ग्रहणवादी आह—**यद्यपीति** । **तावदिति**-वाक्यालङ्कारे । **अत्र**-कुक्कुट इत्यादौ ।

उद्द्योते—**अस्येति** । य्ँय् इत्यादेरित्यर्थः । अण्त्वादिति शेषः ।

( आक्षेपबाधकभाष्यम् )

**अत्रापि मात्राकालो गृह्यते । न च मात्रिकं व्यञ्जनमस्ति । अनुपदिष्टं सत्कथं शक्यं विज्ञातुम् । असच्च कथं शक्यं प्रतिपत्तुम् ॥ ४ ॥**

( प्रदीपः ) **अत्रापीति** । सानुनासिकनिरनुनासिकौ द्वावत्र वर्णावित्यर्थः ॥

( उद्द्योतः ) **सानुनासिकेति** । **अणुदित्शास्त्रं** हि विद्यमानस्य लोकसिद्धस्य सवर्णस्य ग्राहकमेव, न त्वप्रसिद्धसवर्णकल्पकमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—अग्रहणवादी तत्रोक्त परिहारमेव अत्रातिदिशति—**अत्रेति** । य्ँय् इत्यादावित्यर्थः ।

उद्द्योते—ननु ग्रहणकशास्त्रगृहीतस्वरूपमुपदिष्टवन्तु य्ँय् इत्यादावपि वर्त्तते एवेति कथमुच्यतेऽस्यानुपदिष्टतेत्यत आह-**अणुदिति** ।

---

## ( शिवसूत्रम् )

## हयवरट् ॥ ५ ॥

### ( अथ हकारस्य द्विरुपदेशाधिकरणम् )

( आक्षेपभाष्यम् )

**सर्वे वर्णाः सकृदुपदिष्टाः, अयं हकारो द्विरुपदिश्यते—पूर्वश्चैव परश्च । यदि पुनः पूर्व एवोपदिश्येत, पर एव वा । कश्चात्र विशेषः ? ॥**

( प्रदीपः ) **हयवरट्** ॥ **पूर्वश्चेति** । पूर्वपरोच्चारणक्रियाभेदादेकस्यैव हकारस्य पूर्वपरव्यपदेशः ॥

( उद्द्योतः ) **हयवरट्** ॥ **नन्वयं हकार** इत्यनेनैकत्वं हकारस्य सूचितमिति कथं तद्विरुद्धं **पूर्वश्चे**त्यादिना भेदाश्रयणमत आह—**पूर्वपरेति** । एतद्भाष्यादेकत्वं **वर्णानामि**त्येव पक्षो भगवतः संमत इति ज्ञायते ॥ **भाष्ये यदि पुनरिति** । न चैवं परहकाराभावे लकारस्याप्यभावेन तन्त्राद्याश्रयणेन **हलन्त्यमि**त्यत्रान्योन्याश्रयपरिहारो वक्ष्यमाणो विरुध्येतेति वाच्यम् । **रन्त्यं हरिति** न्यासेन **लन्त्यं हलिति** न्यासेन वा तत्परिहाराल्लाघवाभावेऽपि एवं कर्तुं **शक्यं** न वेत्येवं विचारतात्पर्यात् । यद्वा **हलन्त्य**मित्यस्यैवावृत्त्या हबोधकसूत्रसमुदायान्त्यमित्यर्थः ॥ परे तु परहकाराभावेऽपि **"ऌ" इत्येव** सूत्रं कार्यं प्रातिशाख्यादिप्रसिद्धहलादिप्रत्याहारसिद्ध्यर्थम् । तदर्थे रान्तस्यापि शक्तिकल्पने गौरवात् । **हलन्त्य**मित्यस्यावृत्त्या 'हल्प्रत्याहारबोधकसूत्रसमुदायान्त्यमिद' इत्यप्यर्थ इत्यदोष इत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**क इति**-तर्हीत्यादिः ।

उद्द्योते—**इति**-इति हेतोः । **तद्विरुद्धम्**-एकत्वविरुद्धम् । **लकारस्य**-अनुबन्धरूपस्य । **तत्परिहारात्**-अन्योन्याश्रयपरिहारात् । तदुभयाभावे लाघवादाह-**यद्वेति** । **तदर्थे**-हलर्थे । **रान्तस्य**-हरित्यस्य ।

( ६० पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणम् ॥ * ॥

( भाष्यम् )

**हकारस्य परोपदेशेऽड्ग्रहणेषु हग्रहणं कर्तव्यम्**

"आतोऽटि नित्यम्" "शश्छोटि" "दीर्घादटि समानपादे" हकारे चेति वक्तव्यम् ॥ इहापि यथा स्यात् महाँ हि सः ॥

( प्रदीपः ) शश्छोटीति । हकारपरस्य शकारस्यासम्भवात् प्रसङ्गोच्चारितमेतत् ॥

( उद्द्योतः ) अड्ग्रहणेष्विति । अट् गृह्यते येषु सूत्रेष्वित्यर्थः ॥ शश्छोटीत्यस्योदाहरणादाने बीजमाह—हकारपरस्येति । न च तच् श् हित्याद्युदाहरणसंभवः । शास्त्रबोधितं सौत्रं च विहाय हलामुच्चारणार्थाचं विनोच्चारणस्यासाधुत्वेन तादृशोदाहरणाभाव इत्याशयात् । अत्र च भाष्ये एतदुदाहरणादानमेव मानम् । आतोऽटिदीर्घादटीत्युभयोरुदाहरणं महाँ हि स इति । अट्कुप्विति सूत्रेऽपि ग्रहणफलमर्हेणेति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये हकारे चेति—अस्य प्रत्येकमन्वयः । सः—स इति ।

उद्द्योते—सूत्रेष्विति—तेष्विति शेषः । तादृशेति—हकारपरकशकारघटितेत्यर्थः । अत्र च—हकारपरकशकारकोदाहरणाभावे च । एतदिति—शश्छोटीत्यस्येत्यर्थः । महाँ हि स इति—अत्र "दीर्घादटि समानपादे" इत्यनेन नकारस्य रुत्वे, "आतोऽटि नित्यमि" त्यनेनानुनासिकत्वे, "भो भगो अघो" इत्यनेन यत्वे "हलि सर्वेषामि"त्यनेन यलोपः । ग्रहणेति—हकारग्रहणेत्यर्थः ।

( ६१ पूर्वत्रानुपदेशे दूषणवार्तिकम् ॥ २ ॥ )

॥ ❀ ॥ उत्त्वे च ॥ ❀ ॥

( भाष्यम् )

उत्त्वे च हकारग्रहणं कर्तव्यम् । "अतो रोरप्लुतादप्लुते हशि च" हकारे चेति वक्तव्यम् । इहापि यथा स्यात्—पुरुषो हसति, ब्राह्मणो हसतीति ॥

( प्रदीपः ) उत्त्वे चेति । अशत्वमपि न प्राप्नोतीति वक्तव्यं भो हसतीति रोर्यत्वार्थम् ॥

( उद्द्योतः ) अशत्वमपीति । इदमिश्त्वस्याप्युपलक्षणम् । तेन लिलिहिढ्वे इत्यादौ विभाषेट इति ढत्वविकल्पसिद्धिरिति केचित् ॥ भाष्ये हशि चेति सिद्धान्तरीत्या निर्देशः । इदानीं तु यशि चेति सूत्रम् ॥

( तत्त्वालोकः ) प्रदीपे—अशत्वमिति—परमात्रहकारोपदेशे हकारस्येत्यादिः । इतीति—इति हेतोरित्यर्थः । तत्र हकारग्रहणमिति शेषः । इति—इत्यत्र ।

उद्द्योते—इति—इत्यनेन । इदानीम्—केवलपरहकारोपदेशसमये ।

( पूर्वोपदेशाङ्गीकारभाष्यम् )

अस्तु तर्हि पूर्वोपदेशः ।

( ६२-६३ परत्रानुपदेशे दूषणवार्तिके ॥ ३-४ ॥ )

। ❀ ॥ पूर्वोपदेशे किंत्त्वक्सेड्विधयो झल्ग्रहणानि च ॥ ❀ ॥

( भाष्यम् )

यदि पूर्वोपदेशः किंत्त्वं विधेयम्—स्निहित्वा स्नेहित्वा सिस्निहिषति सिस्नेहिषति "रलोऽव्युपधाद्धलादेः—" इति कित्त्वं न प्राप्नोति ॥

क्सविधिः—क्सश्च विधेयः—अधुक्षत् अलिक्षत् "शल इगुपधादनिटः क्सः" इति क्सो न प्राप्नोति ॥

इड् विधिः । इट् च विधेयः—रुदिहि । वलादिलक्षण इण् न प्राप्नोति ॥

झल्ग्रहणानि च ॥

किम् ? ॥

अहकाराणि स्युः ॥

तत्र को दोषः ? ॥

"झलो झलि" इतीह न स्यात्—अदाग्धाम् अदाग्धम् । तस्मात्पूर्वश्चैवोपदेष्टव्यः परश्च ॥

( उद्द्योतः ) अहकाराणि स्युरिति । अतस्तत्र हकारग्रहणं कर्तव्यमिति भावः ॥ अदाग्धामिति । धत्वस्यासिद्धत्वादिति भावः ।

( तत्त्वालोकः ) भाष्ये—किंत्त्वेति—अत्रेतरेतरयोगद्वन्द्वेन क्रमानुसारिपूर्वनिपातेन च निर्दिष्टे किंत्त्वक्सेड्विति पृथक्पदे "सुपां सुलुगि" त्यनेन जसो लुक् । तथा विधिशब्दे कर्मणि किः । कित्त्वमिति—तर्हीत्यादिः । सिस्नेहिषतीति—इत्यत्र हात्परयोरिति शेषः । इति—इत्यनेन । प्राप्नोतीति—अतोऽत्र हाच्चेति वाच्यमिति शेषः । एवमग्रेऽपि अलिक्षदिति । इत्यत्रेति शेषः । इति—इत्यनेन । रुदिहि—रुदिहीत्यत्र । अदाग्धम्—अदाग्धमित्यत्र । तस्मात्—एवमुभयत्र पूर्वोपदेशस्य, चतुर्थे परोपदेशस्य च फलस्य दर्शितत्वात् ।

उद्द्योते—तत्र—झल्घटितसूत्रेषु ।

( उपसंहारभाष्यम् )

यदि च किंचिदन्यत्राप्युपदेशे प्रयोजनमस्ति, तत्राप्युपदेशः कर्तव्यः ॥

( प्रदीपः ) यदि च किंचिदिति । प्रयोजनार्थो हि वर्णानामुपदेशो न स्वरूपप्रतिपत्त्यर्थः ॥

( उद्द्योतः ) स्वरूपप्रतिपत्त्यर्थं एवाक्षरसमाम्नाय इति भ्रमं वारयति—भाष्ये यदि च किंचिदिति । तद्व्याचष्टे—प्रयोजनार्थ इति । शास्त्रीयप्रयोजनार्थ इत्यर्थः । एवं चाद्यहकारस्याण्णोरपि प्रयोजनं सूचितम् । अत एव मह्या हसन्तीति पुंयोगादिति सूत्रे भाष्यप्रयोगः सङ्गच्छते । एतेन पूर्वहकारोपदेशप्रयोजनवार्तिके न्यूनता परिहृता ॥ कर्तव्य इत्यस्य स्यादिति शेषः । उपदेशोऽत्रोच्चारणमात्रम् ॥ अन्यत्रापि । प्रत्याहारान्तरे । सर्वथा हकारस्य द्वेधोपदेशः कर्तव्य इत्यत्रास्य तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—तत्रेति—तर्हीत्यादिः । प्रदीपे—हि—यतः । उद्द्योते—अपीति—ग्रहणे इति शेषः । प्रयोजनेति—प्रदर्शनेति शेषः । स्यादिति—अत्र सम्भावनायां लिङ् । तथा च यदि अन्यत्रापि एतदुपदेशफलमभविष्यत् तर्हि तदनुरोधेन तत्राप्येतदुपादेक्ष्यत् । यतो न तथा, अतो न तथा । किन्तु प्रदर्शितफलानुरोधेन तस्य द्वेधैवोपदेशः कृत इति भावः । अस्य—प्रकृतग्रन्थस्य ।

( इति हकारस्य द्विरुपदेशाधिकरणम् )

( अथ रेफोपदेशस्थानाधिकरणम् )

इदं विचार्यते—अयं रेफो यकारवकाराभ्यां पूर्व एवोपदिश्येत-हरयवडिति, पर एव वा यथान्यासमिति । कश्चात्र विशेषः ? ॥

( प्रदीपः ) इदमिति । उभयत्रापि दोषप्रयोजनसद्भावात्प्रश्नः ॥

( उद्द्योतः ) दोषप्रयोजनेति । अन्यतरपक्षीयदोष एवान्यतरपक्षे प्रयोजनमिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—अत्र-पक्षद्वये ।

( ६४ यथान्यासोपदेशदूषणवार्तिकम् ॥ ५ ॥ )

॥ ※ रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः ॥ ※ ॥

( भाष्यम् )

रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णानां प्रतिषेधो वक्तव्यः ॥

अनुनासिकस्य—स्वर्नयति प्रातर्नयति । "यरोऽनुनासिकेऽनुनासिको वा" इत्यनुनासिकः प्राप्नोति ॥

द्विर्वचनस्य—मद्रह्रदः भद्रह्रदः "यरः" इति द्विर्वचनं प्राप्नोति । परसवर्णस्य—कुण्डं रथेन; वनं रथेन "अनुस्वारस्य ययि-" इति परसवर्णः प्राप्नोति ॥

( प्रदीपः ) स्वर्नयतीति । णकारोऽत्र प्राप्नोति । न ह्यत्र सवर्णग्रहणमस्ति ॥ मद्रह्रद इति । द्विर्वचने कृते तस्यासिद्धत्वाद् रो रीति रेफलोपो नास्ति,हलो यमामिति लोपस्तु पाक्षिक इति पक्षे रेफद्वयश्रवणप्रसङ्गः॥ कुण्डं रथेनेति। अनुनासिकेनैव परसवर्णेन भाव्यमिति नियमाभावाद्रेफः प्राप्नोति, तस्य चासिद्धत्वाद् रो रीति लोपो नास्ति ॥

( उद्द्योतः ) णकारोऽत्रेति । स्थानेऽन्तरतमत्वादिति भावः ॥ ननु रेफस्य सवर्णाभावात्कथमत्रानुनासिकोऽत आह—न ह्यत्रेति ॥ ननु द्वित्वेऽपि रो रीति हलो यमामिति वा लोपान्न दोषोऽत आह—द्विर्वचन इति ॥

( तत्त्वालोकः ) भाष्ये—अनुनासिकस्येति-प्रतिषेधो वक्तव्य इत्यनुषज्यते । एवमग्रेऽपि । प्रातर्नयतीति-इत्यत्र, यतः तत्रेति शेषः। एवमग्रेऽपि । इति-इत्यनेन । एवमग्रेऽपि ।

प्रदीपे—अत्र-रेफे । हि-यतः । अत्र-अनुनासिकविधौ । तस्य-द्विर्वचनस्य । इति-इति हेतोः । तस्य-रेफस्य ।

उद्द्योते—अत्र-रेफे ।

( इति यथान्यासे दूषणानि ॥ )

( यकारात्पूर्वत्रपाठाभ्युपगमभाष्यम् )

अस्तु तर्हि पूर्वोपदेशः ।

( ६५-६६ पूर्वोपदेशदूषणवार्तिके-६-७ )

॥ ※ ॥ पूर्वोपदेशे किन्त्वप्रतिषेधो व्यलोपवचनं च ॥ ※ ॥

( भाष्यम् )

यदि पूर्वोपदेशः किन्त्वं प्रतिषेध्यम् । देवित्वा दिदेविषति "रलोऽव्युपधादि"ति किन्त्वं प्राप्नोति ॥

( तत्त्वालोकः ) भाष्ये—किन्त्वमिति-तर्हीत्यादिः । दिदेविषतीति-इत्यत्र, यतस्तत्रेति शेषः ।

( दूषणनिराकरणभाष्यम् )

नैष दोषः, नैवं विज्ञायते—'रलः व्युपधाद्' इति ॥

किं तर्हि ? ॥

"रलः अव् व्युपधाद्" इति ॥

'किमिदम् अव् व्युपधाद्' इति ? ॥

अवकारान्ताद्व्युपधादव्व्युपधादिति ॥

( उद्द्योतः ) भाष्ये-अव्व्युपधादिति । अव् इति लुप्तपञ्चमीकम् ॥ ननु पूर्वोपदेशे इग्यण इत्यादौ यथासङ्ख्यनिर्वाहः कथमिति चेन्न । संज्ञाविधानसामर्थ्येन तत्र तद्भावितपक्षाश्रयणान्न दोषः ॥

( तत्त्वालोकः ) भाष्ये—कुत इत्यत आह-नैवमिति । यत इत्यादिः । तथा च दिवित्यस्य रलन्तत्वेऽपि अवकारान्तत्वाभावान्न ततः परस्य किन्त्वापत्तिरिति भावः ।

( भाष्यम् )

व्यलोपवचनं च ॥ व्योश्च लोपो वक्तव्यः । गौधेरः, पचेरन्, यजेरन्, 'जीवे रदानुः'—जीरदानुः । वलीति लोपो न प्राप्नोति ॥

( तत्त्वालोकः ) जीरदानुरिति—इत्यत्र, यतस्तत्रेति शेषः ।

( दूषणनिराकरणभाष्यम् )

नैष दोषः, रेफोऽप्यत्र निर्दिश्यते—"लोपो व्योर्वलि" इति रेफे च वलि चेति ॥

( तत्त्वालोकः ) तत्र व्यलोपानुपपत्तिं परिहरति-नैष इति । कुत इत्यत आह-रेफ इति । यत इत्यादिः । एवञ्च ओसृघटकसकारस्य रुत्वे रोरीति लोपे च व्योर्वलीति निर्देश इति भावः ।

( यथान्यासाऽभ्युपगमभाष्यम् )

अथ वा पुनरस्तु परोपदेशः ॥

( तत्त्वालोकः ) एवं पूर्वोपदेशसमर्थनसम्भवेऽपि तत्र तत्र पाणिनीयन्यासपरिवर्त्तनेन इह शास्त्रे पुण्यजनकता भज्येतेत्यत आह—अथवेति ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् ※रेफस्य परोपदेशेऽनुनासिकद्विर्वचनपरसवर्णप्रतिषेधः※ इति ॥

( समाधानभाष्यम् )

अनुनासिकपरसवर्णयोस्तावत्प्रतिषेधो न वक्तव्यः, रेफोष्मणां सवर्णा न सन्ति ॥

( प्रदीपः ) रेफोष्मणामिति । अनुनासिकपरसवर्णविधाने हि स्थानेऽन्तरतमपरिभाषोपस्थानाद्दोषाभावः । नहि रेफस्य णकारोऽन्तरतमो, नाप्यनुस्वारस्य रेफः ॥

( उद्द्योतः ) भाष्ये रेफोष्मणामिति । विजातीया इति शेषः । तेन सजातीयेषु सत्स्वपि न दोषः ॥ ननु माभूद्रेफस्य विजातीयः

सवर्णस्तथाप्यनुनासिकविधौ सवर्णग्रहणाभावादनुनासिकः स्यादेवेत्यत आह—**अनुनासिकपरेति ॥ नहि रेफस्येति ॥** न च रेफस्य णकारः स्थानेनान्तरतमो भवत्येवेति वाच्यम्। **स्थानेऽन्तरतमे इति** सप्तम्यन्तपाठे स्थानप्रयत्नोभयान्तरतमस्पर्शे चिन्मात्रमित्यादौ चरितार्थोऽनुनासिकविधिः प्रयत्नासदृशे रेफे न प्रवर्तते इति भावात् ॥ **नापीति ।** यद्यप्यन्तरतमानन्तरतमयोः प्राप्तावन्तरतम एवेति **स्थानेन्तरतम** इत्यनेन नियमः, कुण्डं रथेनेत्यादौ चानन्तरतमस्यैव प्राप्तिरितीदमयुक्तम्। तथापि संभवदनुस्वारान्तरतमकेऽङ्कित इत्यादौ चरितार्थ; पर सवर्णविधी रेफे न प्रवर्तते इति भावः। इदं जातिपक्षे इति केचित् ॥ वस्तुतो व्यक्तिपक्षेऽपि तादृशव्यक्तौ चरितार्थोऽस्यां व्यक्तौ न प्रवर्तते इति वक्तुं शक्यम्। तद्ध्वदयतां**कोयणचीत्**यत्र कैयटः—"द्रव्येऽपि पदार्थे उत्सर्गापवादभावः संदिग्धत्वाश्रयो त्येव' इति ॥ केचित्तु **स्थानेन्तरतम** इति सप्तम्यन्तपाठप्रत्याख्यानपरभाष्यविरोधेनास्या युक्तेरसंभवदुक्तिकत्वम्। किं चैवं सति ऊष्मग्रहणं भाष्ये व्यर्थं स्यात्। तस्मादनुनासिकविधौ सवर्णपदापकर्षपरं भाष्यं **रेफोष्मणामि**ति। अस्य चानुनासिकोऽनुस्वारान्तरतमश्च सवर्णो नास्तीत्यर्थः। अत एव महिष्मानित्यादौ सूत्ररीत्या स्थानप्रयत्नोभयान्तरतमऋकारसम्भवेऽपि नानुनासिकः, **नाज्झला**विति निषेधेन सवर्णत्वाभावादिति भाष्याशय इत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये— **रेफोष्मणामिति**–यत इत्यादिः।

उद्द्योते—**सत्स्विति**–सवर्णेष्वित्यादिः। **स्यादेवेति**-तथा अनुनासिकेनैव परसवर्णेन भाव्यमित्यत्र नियामकाभावात् परसवर्णः सजातीयो रेफः स्यादेवेति शेषः। **इति**–इति हेतोः। ननु व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदेन अनन्तरतमविषयकशास्त्रस्याचारितार्थ्यात्कथमिदमित्यत आह-**इदमिति ।** तथा च शास्त्रस्यैकत्वात् तस्य अन्तरतमपरिभाषासहकारेण जातिद्वारा अन्तरतमव्यक्तिमात्रे चारितार्थ्येऽपि न क्षतिरिति भावः। व्यक्तिपक्षेऽपि अन्तरतमपरिभाषैकवाक्यतया अन्तरतमलक्ष्यविषयक एव लक्षणविशेषो न तु सकलव्यक्तिविषयक इत्याशयेनाह-**वस्तुत इति । तादृशव्यक्तौ**–अन्तरतमव्यक्तौ। **अस्यां व्यक्तौ**–अनन्तरतमव्यक्तौ। प्रागुक्तं सकलं दूषयितुमाह-**केचित्त्विति ।** भाष्यतत्त्वविदस्त्वित्यर्थः। "अनुस्वारस्ये"ति सूत्रे "पर" इति लुप्तषष्ठ्यन्तं पृथक् पदं, "सवर्ण" इति च पृथक्पदमित्याशयेनाह-**सवर्णपदेति ।**

## ( भाष्यम् )

**द्विर्वचनेऽपि। नेमौ रहौ कार्यिणौ द्विर्वचनस्य ॥ किं तर्हि ? ॥ निमित्तमिमौ रहौ द्विर्वचनस्य। तद्यथा 'ब्राह्मणा भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम्' इति। नेदानीं तौ भुञ्जाते ॥**

**( प्रदीपः ) नेमौ रहाविति ।** हकारवद्रेफोऽपि न कार्यीत्यर्थः। तत्रैकवाक्यतायां सामान्यविशेषविध्योर्लोकव्यवहारादेव शब्दार्थसंबन्धपरिज्ञानात्सामान्यविधेर्विशेषविधिर्बाधकः। प्रत्यक्षश्च विशेषविधिः, सामान्यविधिस्त्वनुमेय इति रेफस्य कार्यित्वं निमित्तत्वेन बाध्यते। दध्युदकादौ तु स्थानित्वेन निमित्तत्वमिकस्**तस्मादित्युत्तरस्ये**त्यादेशापकान्न बाध्यते। लक्ष्यस्थित्यपेक्षणाद्वा बाध्यबाधकभावो न ॥ क्वचिदपेक्षा नास्ति। यथा—चिचीषतीति दीर्घत्वद्विर्वचनयोः ॥

**( उद्द्योतः )** नन्वयत्वादप्रसक्तद्वित्वस्य हस्य ग्रहणमयुक्तमत आह—**हकारवदिति ।** ननु एककर्तृकयोर्भोजनपरिवेषणयोर्युगपदसम्भवादस्तु तत्र बाधः, प्रकृते तु लक्ष्यभेदेन भिन्नवाक्यावगतनिमित्तकार्यिभावः किं न स्यात्। यथाऽवगतकार्यित्वस्यापि इको निमित्तत्वं दध्युदकादावत आह—**तत्रेति ।** लक्ष्यभेदेन कार्यित्वनिमित्तत्वसंभवेऽपीत्यर्थः ॥ **सामान्यविशेषविध्योरेकवाक्यताया**मित्यन्वयः। **शब्दो** वाक्यात्मा। **अर्थ**स्तदर्थः। **संबन्धः** प्रतिपाद्यप्रतिपादकभावः। तेषां परिज्ञानं तद्यथा लोकव्यवहारादेव, तथा तयोर्बाध्यबाधकभावः संभवेऽपि भवतीत्येतदपि लोकव्यवहारादेव **ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याये**त्यादिरूपादवगतमित्यर्थः। विशेषसंनिधाने सामान्यशब्दस्य तद्व्यतिरिक्तपरत्वं च तद्बीजम् ॥ **परिज्ञानवदिति** पाठः। एवं चा**चोरहाभ्या**मित्यत्र सामान्यविशेषविधित्वाभावेऽपि तत्र बाधे यद्बीजं तत्प्रकृतेऽप्यस्त्येवेत्याह — **प्रत्यक्षश्चेति ।** अविलम्बितप्रतीतिकत्वं **प्रत्यक्षत्वम् ।** विलम्बिततत्कत्वं चा**नुमेयत्वम् ॥ लक्ष्येति ।** ज्ञापकाल्लक्ष्यानुरोधाद्वा सत्यपि सामान्यविशेषभावे क्वचिद्बाधकत्वं विशेषविधेर्नाश्रीयते जातिव्यक्तिपक्षयोरुभयोरपीति भावः ॥ **क्वचिदपेक्षा नास्तीति ।** बाध्यबाधकभावस्येति शेषः ॥ **यथेति ।** बाध्यबाधकभावाभावे दृष्टान्तोऽयम्। न तु कार्यित्वनिमित्तत्वयोः समावेशे इति बोध्यम् ॥ **केचित्तु तक्रकौण्डिन्यन्यायो**ऽपि सामान्यविषयानाक्रान्तविषयाभावरूपानवकाशत्वमूलक एव। अस्ति च प्रकृते तत्। न ह्येतद्बोध्यनिमित्तत्वं सामान्ययत्वप्रयुक्तकार्यित्वानाक्रान्ते क्वचिदप्यस्ति सर्वत्राचः परत्वा**दनचीत्**यस्य प्राप्तेरतोऽर्युको लक्ष्यानुरोधात्सामान्ये न कार्यित्वबाधः। **न चैवमिको यणित्यादौ,** मत्वर्थ इत्यादौ सामान्यप्राप्तनिमित्तत्वाभावेन कार्यित्वस्य चारितार्थ्यादिति भाष्याभिप्रायमाहुः ॥

**( तत्त्वालोकः )** भाष्ये—**द्विर्वचनेऽपीति**–प्रतिषेधो न वक्तव्य इत्यनुषज्यते। **नेमाविति**–यत इत्यादिः। **कार्यिणौ**–साक्षात् कार्यिणौ। **निमित्तमिति**–अत्र निमित्तत्वस्य तुल्यत्वादेकवचनमिति भावः। **इति**–इति कथिते। **इदानीम्**–ब्राह्मणभोजनकाले। **तौ**–माठरकौण्डिन्यौ। उद्देशक्रमेण परिहारस्य वक्तव्यत्वेऽपि अनुनासिकपरसवर्णयोरेकेन परिहरणीयत्वात्तौ निर्दिश्य द्विर्वचननिर्देशः कृत इति भावः।

प्रदीपे— **इति**–इति हेतोः। **इति**–इत्यत्र।

उद्द्योते— **बाध इति**–तत्काल इत्यादिः। तत्र कर्तृकालयोरैक्यं क्रियामात्रे भेदः। अत्र तु देशशास्त्रयोर्भेद इति वैलक्षण्यसूचनायाह–**त्विति ।** तवल्कार इत्यादौ लक्ष्यैक्येऽपि लृकारादेः निमित्तत्वकार्यित्वोभयदर्शनेन तयोरविरोधादाह–**भिन्नेति । तयोः**–सामान्यविशेषविध्योः। **सम्भवे इति**–देशकालभेदेनेत्यादिः। **तद्व्यतिरिक्तेति**–विशेषव्यतिरिक्तेत्यर्थः। **तद्बीजम्**–विशेषविधेः सामान्यविधिबाधकत्वे बीजम्। **तत्कत्वम्**–प्रतीतिकत्वम्। **समावेशे इति**–सनीत्यादिः। **केचितु**–भाष्यतत्त्वविदस्तु। **तत्**–मूलम्। **हि**–यतः। **अच्युकः**–अजन्तर्गतोकः। **सामान्ये**–सामान्यान्तर्गतत्वेऽपि। **कार्यित्वबाध इति**–कार्यित्वेन बाध इत्यर्थः। तन्निमित्तत्वस्येति शेषः। **नचैवम्**–नह्येवम्।

( इति रेफोपदेशस्थानाधिकरणम्। )

---

## ( अथायोगवाहोपदेशाधिकरणम् )

## ( भाष्यम् )

**इदं विचार्यते—इमेऽयोगवाहा न क्वचिदुपदिश्यन्ते, श्रूयन्ते च। तेषां कार्यार्थ उपदेशः कर्तव्यः ॥ के पुनरयोगवाहाः ? ॥ विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारनासिक्ययमाः ॥ कथं पुनरयोगवाहाः ? ॥ यदयुक्ता वहन्ति, अनुपदिष्टाश्च श्रूयन्ते ॥**

(प्रदीपः) **इम इति।** विधानादेषां साधुत्वं स्यात्। प्रत्याहारप्रतिबद्धं तु कार्यं न प्राप्नोति॥ **के पुनरिति।** तत्स्वरूपप्रश्नः॥ **कथमिति।** प्रवृत्तिनिमित्तप्रश्नः। **अयुक्ता** इत्यस्यैव हेतुकथनम् **अनुपदिष्टाश्चे**ति। **अयुक्ताः** प्रत्याहारलक्षणेन पाठाभावादसंबद्धा इत्यर्थः। उपदेशो द्विविधः पाठो ग्रहणकशास्त्रेण प्रत्यायनं च। स द्विविधोऽप्येषां नास्तीत्यर्थः॥ चशब्दो हेतौ। यतोऽनुपदिष्टास्ततोऽयुक्ता इत्यर्थः। क्वचित्तु चशब्दो न पठ्यते॥

(उद्द्योतः) ननु **कार्यार्थ** इत्यत्र कार्यं साधुत्वं चेत् खरवसानयोरित्यादिना सिद्धमत आह—**विधानादिति। उपदिश्यन्त** इति पाठे भाष्ये वर्तमानसामीप्ये लट्। उपदिष्टा इत्यर्थः॥ **प्रवृत्तिनिमित्तेति।** प्रकृते भासमानवैशिष्ट्यप्रतियोगिरूपः प्रकारस्तमर्थं इति भावः। केन प्रवृत्तिनिमित्तेनायोगवाहशब्दवाच्यत्वैषामित्यत्र तात्पर्यम्॥ नन्वनुपदिष्टाश्चेति चकारश्रवणादनुच्चारितत्वमयोगवाहशब्दस्य प्रवृत्तिनिमित्तान्तरमित्याभाति, तदयुक्तम्। अनुपदेशपदार्थस्यानुच्चारणस्य तत्राभावात्। प्रयोगेषूच्चारितत्वात्। न च प्रत्याहारसूत्रानुच्चारितत्वं तथा, **यदयुक्ता** इत्यनेनैव तदर्थलाभेन पौनरुक्त्यापत्तेरत आह—**अयुक्ता इत्यस्यैव हेतुकथनमिति।** प्रत्याहारबोधकलक्षणेनायुक्ता इत्यन्वयः। तद्व्याचष्टे—**पाठाभावादिति।** ग्रहणकशास्त्रेण प्रदेशे प्रवर्तमानेन यो वर्णस्तेषां ग्राहकस्तस्य पाठाभावादित्यप्यर्थः॥ **एषां नास्तीति।** अतोऽयुक्ता इत्यर्थः। एवं चाक्षरसमाम्नायेऽयुक्ताः सन्तो वहन्ति प्रयोगं निर्वाहयन्तीत्ययोगवाहपदव्युत्पत्तिर्दर्शिता॥ **न पठ्यत इति।** तत्र यत इत्यध्याहार्यमिति भावः॥

(तत्त्वालोकः)—भाष्ये—"अयोगवाहानामि"ति वार्तिकावताराय विचारमारभते—**इदमिति।** नन्वेवं ते न सन्त्येवेत्यत आह—**श्रूयन्ते चेति।** लक्ष्ये, विसर्जनीयस्य स इत्यादिलक्षणे चेति शेषः। **कर्तव्यः**—कर्तव्य इति। **नासिक्येति**—हुँ इत्यर्थः। **यत्**—यः। **वहन्ति**—प्रयोगं निर्वाहयन्ति। **श्रूयन्ते इति**—अतोऽयोगवाहा इति शेषः। तथा च वर्णसमाम्नायेऽकारादिवदनुपदिष्टत्वात् तत्रोपदिष्टैराकारादिवदगृहीतत्वाच्च अविद्यमानः योगः सम्बन्धः प्रत्याहारेषु येषां ते अयोगाः प्रत्याहारसम्बन्धशून्याः। वाहयन्ति संस्कर्तत्यादिप्रयोगं निर्वाहयन्ति इति वाहाः। अयोगाश्च ते वाहाश्चेति अयोगवाहाः। प्रत्याहारसम्बन्धशून्यत्वे सति प्रयोगनिर्वाहकतया श्रूयमाणा इत्यर्थः।

प्रदीपे—**एषाम्**—अयोगवाहानाम्। एवमग्रेऽपि। **प्रतिबद्धम्**—सम्बद्धम्।

उद्द्योते—**चेदिति**—तर्हीति शेषः। **सिद्धम्**—तत्सिद्धम्। **एषाम्**—विसर्जनीयादीनाम्। **तत्र**—अयोगवाहेषु। **तथा**—प्रवृत्तिनिमित्तम्। **तदर्थलाभेनेति**—प्रत्याहारसूत्रानुच्चारितत्वरूपार्थलाभेनेत्यर्थः। अनुपदिष्टाश्चेत्यनेन तस्येति शेषः। **प्रदेशे**—इको यणचीत्यादौ। **तेषाम्**—अयोगवाहानाम्। **ग्राहक इति**—सम्भवेदिति शेषः।

(भाष्यम्)

**क्व पुनरेषामुपदेशः कर्तव्यः?॥**

(६७ सिद्धान्तवार्तिकम्॥८॥)

## ॥※॥ अयोगवाहानामट्सु णत्वम् ॥※॥

(भाष्यम्)

**अयोगवाहानामट्सूपदेशः कर्तव्यः॥**

**किं प्रयोजनम्?॥ णत्वम्। उरःकेण, उर≍केण, उरःपेण, उर≍पेण। "अड्व्यवाये" इति णत्वं सिद्धं भवति॥**

(उद्द्योतः) भाष्ये **उरःकेणेति।** उरः कायतीति सुबुत्पत्तेः पूर्वं समासेऽपि **सोपदादा**विति न सत्वम्। **पाशकल्पककाम्येष्वेव** तत्प्रवृत्तेः।

(तत्त्वालोकः) भाष्ये—**अट्स्वति**—अकारानन्तरमिकारात्प्रागिति शेषः। तेन तेषामिण्स्वनन्तर्भावात् पयःस्वित्यादौ इण्कोरित्यधिकृत्य विधीयमानम् आदेशप्रत्यययोरित्यनेन षत्वं न भवति। **उर≍पेणेति**—इत्यादाविति शेषः।

उद्द्योते—**इति**—इत्यत्र। अपिना सुबुत्पत्युत्तरं समासे तत्र तत्प्रवृत्तिरेवेति समुच्चि। **तत्प्रवृत्तेः**—सोऽपदादावित्यस्य प्रवृत्तेः।

(६८ सिद्धान्तवार्तिकम्॥९)

## ॥※॥ शर्षु जश्भावषत्वे ॥※॥

(भाष्यम्)

**शर्षूपदेशः कर्तव्यः॥ किं प्रयोजनम्? जश्भावषत्वे। अयमुब्जिरुपध्मानीयोपधः पठ्यते। तस्य जश्त्वे कृते उब्जिता उब्जितुमित्येतद् रूपं यथा स्यात्॥**

(प्रदीपः) **शर्ष्विति।** शर्षु पाठे झल्त्वमिति **झलां जश् झशी**ति जश्त्वं सिध्यति॥

(उद्द्योतः) ननु शराम् जशो भवन्तीति लक्षणाभावाच्छर्षु पाठस्य न जश्भावः प्रयोजनमत आह—**शर्षु पाठे इति॥**

(तत्त्वालोकः) भाष्ये—अयोगवाहानां हकारस्येवानेकत्र पाठः कार्य इत्याशयेनाह—**शर्ष्विति।** च तेषामिति शेषः। **तस्येति**—तदीयोपध्मानीयस्येति शेषः।

प्रदीपे—**पाठे इति**—तेषामित्यादिः शेषश्च। **इति**—इति हेतोः। झलां जशोऽन्ते इत्यस्यापत्तिस्तु न शङ्क्या, एतद्दृष्ट्या विसर्गादीनामसिद्धत्वात्।

(उपध्मानीयोपधदूषणभाष्यम्)

**यद्युब्जिरुपध्मानीयोपधः पठ्यते, उब्जिजिषतीत्युपध्मानीयादेरेव द्विर्वचनं प्राप्नोति। दकारोपधे पुनर "न न्द्राः संयोगादयः" इति प्रतिषेधः सिद्धो भवति॥**

(प्रदीपः) **उपध्मानीयादेरिति।** यदि द्विर्वचने पूर्वत्र कर्तव्ये जश्त्वमसिद्धमथापि **पूर्वत्रासिद्धीयमद्विर्वचन** इति सिद्धं सर्वथोबिब्जिषतीति प्राप्नोति॥

(उद्द्योतः) **यदीति।** पूर्वत्र द्विर्वचने इत्यन्वयः॥ ननु पूर्वं द्वित्वे जश्त्वात्पूर्वमेव **हलादिः शेषे** कथमुपध्मानीयस्याभ्यासे जश्त्वं, झल्परत्वाभावात्। **अभ्यासे चर्चे**त्यनेन **स्थानेऽन्तरतम्यात्प्रकृतिचरां चर एवेति** उपध्मानीय एव स्यादिति चेच्चिन्त्यमेवैतत्। उपध्मानीय श्रवणापादनेनापि भाष्यसामञ्जस्यात्। अन्त्ये तु द्वित्वे कृतेऽपि द्वित्वाश्रयस्य कार्ये कर्तव्येऽसिद्धत्वं नेत्यपि **पूर्वत्रासिद्धीयमित्यस्यार्थ** इति परत्वाज्जश्त्वे कृत एव **हलादिः शेष** इत्याशयान्न दोषः॥

(तत्त्वालोकः) भाष्ये—एतत् दूषयति—**यदीति।** **पठ्यते इति**—तर्हीति शेषः। **इति**—इत्यत्र। **उपध्मानीयादेः**—जश्त्वस्यासिद्धत्वात् अजादेर्द्वितीयस्येति सूत्रेण उपध्मानीयजकारविशिष्टस्य। **प्राप्नोतीति**—तथा च उबिब्जिषतीत्यनिष्टं रूपं प्रसज्यते इति भावः।

**पुनरिति**-तस्मिन् पठिते इत्यादिः। तत्रेति शेषः। **भवतीति**-तथा च जिस् इत्यस्य द्वित्वे दस्य वत्वे च उब्जिजिषतीति इष्टरूपं सिद्ध्यतीत्याशयः।

प्रदीपे—**प्राप्नोतीति**-न तु उब्जिजिषतीति इति शेषः।

उद्द्योते—पूर्वत्रासिद्धीयमिति परिभाषाया उभौ साभ्यासस्येत्यनेनानित्यतायाः ज्ञापनात्तदप्रवृत्तिपक्षे शङ्कते-**नन्विति**। **जश्त्वादिति**-अस्य काकाक्षिगोलकन्यायेन उभयत्र पूर्वमित्यत्रान्वयः। **चेदिति**-तर्हीति शेषः। **एतत्**-उब्बिजिषतीत्यस्यापादनम्। **अन्त्ये तु**-तत्परिभाषाप्रवृत्तौ तु। **इति**-इति हेतोः। **न दोष इति**-एवञ्च भाष्ये उपध्मानीयशब्दस्य स्थान्यादेशसाधारणतेति उपध्मानीयादेर्द्वित्वे इष्टरूपासिद्धौ भाष्यकैयटयोस्तात्पर्यमिति भावः।

## ( दकारोपधदूषणभाष्यम् )

**यदि दकारोपधः पठ्यते, का रूपसिद्धिः-उब्जिता उब्जितुमिति ? ॥**

**( तत्त्वालोकः )** पृच्छति-**यदीति**। स इति शेषः। **केति**-कीदृशीत्यर्थः। तर्हीत्यादिः। **इति**-इत्यत्र।

## ( दकारोपधदूषणनिराकरणभाष्यम् )

**असिद्धे भ उदुजेः। इदमस्ति—"स्तोः श्चुना श्चुः" इति, ततो वक्ष्यामि "भ उदुजेः" उदुजेः श्चुना सन्निपाते भो भवतीति ॥**

**( तत्त्वालोकः )** समाधत्ते-**असिद्धे इति**। पूर्वत्रासिद्धमित्यसिद्धप्रकरणे इत्यर्थः। **भ उदुजेरिति**-इति वाच्यमिति शेषः। **भ उदुजेः**-भ उदुजेरिति। **सन्निपाते**-योगे।

## ( आक्षेपभाष्यम् )

**तत्तर्हि वक्तव्यम् ॥**

## ( समाधानभाष्यम् )

**न वक्तव्यम्, निपातनादेव सिद्धम्। किं निपातनम् ? ॥ "भुजन्युब्जौ पाण्युपतापयोः" इति ॥**

**( प्रदीपः ) निपातनादिति**। द्विर्वचनं कथम्। निपातनाद्वाक्यशेषोऽनुमीयते-असिद्धप्रकरणे स्तोश्चुरित्यत्रोदुजेर्भ इति। तत्र **न न्द्राः** इति दकारस्य द्विर्वचननिषेधः कर्तव्यो न तु द्विर्वचनमिति **पूर्वत्रासिद्धीयमद्विर्वचन** इत्यस्याप्रवृत्त्या भत्वस्यासिद्धत्वादिष्टद्विर्वचनसिद्धिः। अथापि न वाक्यशेषानुमानं, निपातनमेव प्रतिपादकं, तथापि दकारोपदेशसामर्थ्याद्द्विर्वचने कृते दकारस्य बत्वं प्रवर्तते ॥

**( उद्द्योतः ) द्विर्वचनं कथमिति ॥** बकाररहितस्येति शेषः ॥ ननु निपातनाल्लक्षणमात्रं स्यान्न तु प्रदेशविशेषावच्छिन्नमत आह—**अथापीति**। न चाभ्युद्ग इत्यादौ दकारोच्चारणं सार्थकं; **नैतदुब्जे रूप**मिति भाष्योक्त्या दोषाभावात्। उपतापातिरिक्तविषयेऽस्माद् घञ् नानभिधानादिति तदाशयः ॥ **अकुत्वविषये निपातन**मिति पक्षान्तरे त्वाद्यमेव समाधानम् ॥

**( तत्त्वालोकः )** भाष्ये—कुत इत्यत आह-**निपातनादिति**। यत इत्यादिः। **सिद्धम्**-तत्सिद्धम्।

प्रदीपे—घञन्तस्य अकुत्वविषयकवचने बकारपाठरूपनिपातनादेव तत्र बत्वं भाष्यकृताऽवादीत्याशयेन शङ्कते-**द्विर्वचनमिति**। समाधत्ते-**निपातनादिति**। **अथापि**-अथ यद्यपि। **एवेति**-तत्र बत्वस्येति शेषः।

उद्द्योते-**प्रदेशविशेषेति**-असिद्धप्रकरणेत्यर्थः। **अस्मात्**-उब्जेः। **आद्यमिति**-अभ्युद्ग इत्यादेः उब्जेः रूपतया तत्र दकारोच्चारणस्य सार्थक्यात्तत्रेत्यादिः।

## ( समाधानबाधकभाष्यम् )

**इहापि तर्हि प्राप्नोति-अभ्युद्गः समुद्ग इति ॥**

**( तत्त्वालोकः )** प्राप्नोतीति-बत्वमित्यादिः।

## ( समाधानसाधकभाष्यम् )

**अकुत्वविषये तन्निपातनम्॥ अथवा नैतदुब्जे रूपं, गमेरेतद् ड्युपसर्गाड्डो विधीयते। अभ्युद्गतोऽभ्युद्गः समुद्गतः समुद्ग इति ॥**

**( प्रदीपः ) अकुत्वविषय इति**। विशिष्टविषयमनुमानमित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**तदिति**-बत्वेत्यर्थः। **एतत्**-अभ्युद्ग इत्यादि। **गमेरिति**-किन्त्वित्यादिः। **इति**-इत्यत्र।

प्रदीपे—**विशिष्टेति**—विशेषविषयकवाक्यशेषानुमानमित्यर्थः। तथा च कुत्वाभावनिपातनस्योपतापविषयत्वेन घञ्मात्रविषयत्वाभावात् तद्विषये तत्र श्चुना योगे बत्वमिति पर्यवस्यति। तेन अभ्युद्ग इत्यादौ घञ्विषयत्वेऽपि उपतापाविषयत्वात् "चजोः"ति कुत्वविषयत्वेन तत्र श्चुनाऽयोगात् बत्वं न। उपतापविषयत्वात् उब्जिजिषतीत्यादिसिद्धिश्च। एवञ्चायोगवाहानां शर्षूपदेशस्य जश्त्वरूपं प्रयोजनम् उपध्मानीयोपधोब्जिस्वीकर्तृवार्तिककारमतेऽस्ति, दकारोपधतदङ्गीकर्तृभाष्यकारमते तु नास्तीति फलितम्।

## ( प्रयोजनभाष्यम् )

**षत्वं च प्रयोजनम्। सर्पिःषु। धनुःषु। 'शर्व्यवाये' इति षत्वं सिद्धं भवतीति "नुम्विसर्जनीयशर्व्यवायेऽपि" इति विसर्जनीयग्रहणं न कर्तव्यं भवति ॥**

**( तत्त्वालोकः )** भाष्ये—शर्षु जश्भावषत्वे **इति** वार्तिके जश्भावपदं व्याख्याय षत्वपदं व्याचष्टे-**षत्वं चेति**। शर्षु तदुपदेशस्येति शेषः। **धनुःष्विति**-इत्यादाविति शेषः। **इति**-इत्यनेन। **इति**-तथा। **इति**-इत्यत्र।

## ( आक्षेपभाष्यम् )

**नुमश्चापि तर्हि ग्रहणं शक्यमकर्तुम्।**

**कथं, सर्पींषि धनूंषि ?।**

**अनुस्वारे कृते 'शर्व्यवाये' इत्येव सिद्धम् ॥**

**( तत्त्वालोकः ) ग्रहणमिति**—तत्रेत्यादिः। **इत्येव**-इत्यनेनैव।

## ( समाधानभाष्यम् )

**अवश्यं नुमो ग्रहणं कर्तव्यम्। अनुस्वारविशेषणं नुम्ग्रहणम्, नुमो योऽनुस्वारस्तत्र यथा स्याद्, इह मा भूत्-पुंस्विति ॥**

**( प्रदीपः ) अवश्यमिति**। अनुस्वारस्य शर्त्वात्तद्व्यवाये षत्वे सिद्धे नुम्ग्रहणं नियमार्थम्—**नुमो योऽनुस्वारस्तत्रैव यथा स्यादन्यत्र** मा भूत्—पुंस्विति ॥

**( उद्द्योतः ) अनुस्वारस्य शर्त्वादिति**। यद्यपि इण्कवर्गाभ्यामुत्तरो नुमा व्यवहितः सकारः सुहिन्सु इत्यादौ संभवति, तथापि तदनभिधानमिति भावः। पुंस्वित्यत्र **संपुङ्कानामित्येतत्प्रवृत्तिपरविव-**

रणग्रन्थस्तु चिन्त्य एव । तस्य **समस्सुटि, पुमः खय्यम्परे, कानाम्रेडिते** इति सूत्रत्रयमात्रविषयत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**अवश्यमिति**—तत्रेत्यादिः । कुत इत्यत आह—**अनुस्वारेति** । यत इत्यादिः । ननु तत् तद्विशेषणमेव किमर्थमित्यत आह—**नुम इति । पुंस्विवतीति**—इति नियमार्थमिति शेषः ।

प्रदीपे—**पुंस्विति**—पुंस्वितीति ।

उद्द्योते—**तदिति**—सुड्ङिस्त्दित्यस्यैत्यर्थः । **तस्य**—संपुङ्कानामित्यस्य ।

**( भाष्यम् )**

अथवाऽविशेषेणोपदेशः कर्तव्यः ॥

**( प्रदीपः ) अविशेषेणेति** । प्रयोजनविशेषमनपेक्ष्य सकलप्रयोजनोद्देशेन यत्र यत्र प्रदेशे प्रयोजनसिद्धिस्तत्र तत्रोपदेशः कार्य इत्यर्थः ॥

**(उद्द्योतः)** ननु सूत्रविशेषानाश्रयणे तत्प्रत्याहारासंनिवेशात्कथं तन्निबन्धनकार्यप्रवृत्तिरत आह—**प्रयोजनविशेषमिति ॥ अविशेषेणेति** भाष्यस्य प्रयोजनविशेषनिर्देशं विनेत्यर्थं इति भावः ॥ **यत्र यत्रेत्यादि** यथत्प्रयोजनसिद्धिरुद्देश्या तत्तद्विषयसकलप्रयोजनोद्देशेनेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**उपदेश इति**—अयोगवाहानामित्यादिः । एवं प्रदीपेऽपि ।

उद्द्योते—**सूत्रेति**—अयोगवाहानामुपदेशायेत्यादिः । **तत्प्रत्याहारेति**—अडादिप्रत्याहारेत्यर्थः । तेषामित्यादिः । **तन्निबन्धनेति**—अडादिप्रत्याहारनिबन्धनेत्यर्थं । तत्रेत्यादिः । **तत्तद्विषयेति**—तत्तत्प्रदेशस्थेत्यर्थः । अनेन प्रदीपे सकलप्रयोजनोद्देशेनेत्यस्य उपदेश इत्यनेनान्वयः सूचितः । तथा च अट्शरोरेव तेषामुपदेशेन सकलफलानां सिद्धत्वात् तयोरेव तेषां स कार्य इति भावः ।

**( भाष्यम् )**

किं प्रयोजनम् ? ॥

**( ६९ सिद्धान्तवार्तिकम् ॥ १० )**

## ॥ * ॥ अविशेषेण संयोगोपधासंज्ञाऽलोन्त्यद्विर्वचनस्थानिवद्भावप्रतिषेधाः ॥ * ॥

**(भाष्यम्)**

अविशेषेण संयोगसंज्ञा प्रयोजनम् उ३ꣳजकः "हलोऽनन्तराः संयोगः" इति संयोगसंज्ञा, "संयोगे गुर्विति" गुरुसंज्ञा, "गुरो"रिति प्लुतो भवति ॥

**( प्रदीपः ) उ३ꣳजक इति** । उपध्मानीयस्य जश्त्वे कृते संयोगसंज्ञायां तस्यासिद्धत्वात्संयोगसंज्ञाभावाद्गुरुत्वाभावात् प्लुतो न स्यात् ॥

**( उद्द्योतः ) जश्त्वे कृते संयोगसंज्ञायामिति** । कार्यकालपक्षे इदम् ॥

**( तत्त्वालोकः )** भाष्ये —उपध्मानीयोपधोब्जिसत्रीकर्तृवार्तिककारमतेनाह—**अविशेषेणेति** । तेषामुपदेशस्येति शेषः । **उब्जक इति**—इत्यत्रेति शेषः ।

प्रदीपे—**तस्य**—जश्त्वस्य ।

**( प्रयोजनभाष्यम् )**

उपधासंज्ञा च प्रयोजनम्—दुष्कृतं, निष्कृतं, दुष्पीतं निष्पीतम् "इदुदुपधस्य चाप्रत्ययस्ये"ति षत्वं सिद्धं भवति ॥

**( उद्द्योतः )** भाष्ये **इदुदुपधस्येति** । विसर्गस्यालत्वे ह्युपधात्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**चेति**—अयं वार्तिककारमतेन पूर्वपरसमुच्चायकः । भाष्यकारमतेन तु वक्ष्यमाणमात्रसंग्राहक इति भावः । **निष्पीतमिति**—इत्यादौ, यतस्तत्रेति शेषः ।

**( प्रयोजननिरासभाष्यम् )**

नैतदस्ति प्रयोजनम् । न इदुदुपधग्रहणेन विसर्जनीयो विशेष्यते ॥

किं तर्हि ? ॥

सकारो विशेष्यते—इदुदुपधस्य सकारस्य यो विसर्जनीय इति ॥

अथ वोपधाग्रहणं न करिष्यते, इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः—इदुद्भ्यामुत्तरस्य विसर्जनीयस्येति ॥

**( उद्द्योतः ) इदुदुपधस्य सकारस्येति** । विसर्गस्थान्युपलक्षणमेतत् । अत एव निरोपि निष्कृतमिति सिध्यति । **अत एव** वक्ष्यमाणपक्षान्तरेणाविरोधः । निष्कृतमित्यादौ सुकुत्पत्तेः पूर्वं—समासेऽपि **इणः ष** इति न । पाशकल्पककाम्येष्वेव तत्प्रवृत्तेः ॥

**( तत्त्वालोकः )** भाष्ये—**एतत्**—उपधासंज्ञारूपम् । कुत इत्यत आह—**नेति** । यत इत्यादिः । **इति**—इत्येवम् । लाघवादाह—**अथवेति** । तत्रेति शेषः । **इदुद्भ्यामिति**—इदं तृतीयान्तम् । तु—यतः । **परम्**—परत्वेन । **इति**—इत्येवम् । एतावता 'इदुद्भ्यामप्रत्ययस्ये'ति न्यासः सूचितः ।

उद्द्योते—**स्थानीति**—रेफेत्यर्थः । **एतत्**—सकारपदम् । तथा च इदुतोः रेफरूपमन्त्यमलमादाय उपधात्वं वाच्यं, न तु विसर्गरूपमन्त्यमलमादायेति विसर्गस्य अल्त्वाभावेऽपि न काऽपि क्षतिरिति भावः । **अपिना** निसः इत्यस्य संग्रहः । **वक्ष्यमाणेति**—अथवेत्यादिनेत्यादिः । **तत्प्रवृत्तेः**—इणः ष इत्यस्य प्रवृत्तेः ।

**( प्रयोजनभाष्यम् )**

अलोन्त्यविधिश्च प्रयोजनम्—वृक्णस्तरति प्लक्षस्तरति "अलोऽन्त्यस्य" विधयो भवन्तीत्यलोन्त्यस्य सत्वं सिद्धं भवति ॥

**( तत्त्वालोकः ) प्लक्षस्तरतीति**—इत्यादौ, यतस्तत्रेति शेषः । **विधयः**—आदेशाः । **इति**—इति विध्येकवाक्यतया लब्धेनार्थेन । **भवतीति**—तद् विसर्गस्यालत्वे एव सम्भवतीति भावः ।

**( प्रयोजननिराकरणभाष्यम् )**

एतदपि नास्ति प्रयोजनम्—"निर्दिश्यमानस्यादेशा भवन्ति" इति विसर्जनीयस्यैव भविष्यति ॥

**( तत्त्वालोकः ) निर्दिश्येति**—यत इत्यादिः । **इति**—इति परिभाषाबलेन । **एवेति**—सत्त्वमिति शेषः ।

**( प्रयोजनभाष्यम् )**

द्विर्वचनं प्रयोजनम्—उर ꣳꣳ कः : । उर ꣳꣳ पः : ।

"अनचि च" अच उत्तरस्य यरो द्वे भवत इति द्विर्वचनं सिद्धं भवति ॥

( उद्द्योतः ) द्विर्वचनं प्रयोजनमिति । विसर्गजिह्वामूलीयादेर्द्विरुच्चारणे विशेषस्याग्रहाद् उच्चारणस्य कर्तुमशक्यत्वाच्च शास्त्रप्रतिमात्रेणैतत्प्रयोजनकथनमिति संतोष्टव्यम् ॥

( तत्त्वालोकः ) भाष्ये—भाष्यकारमतेन प्रथममनन्यथासिद्धं प्रयोजनमाह—द्विर्वचनमिति । अत एवात्र चकारो न प्रयुक्तः । उर प इति—इत्यादौ, यतस्तत्रेति शेषः । चेति—इत्यनेनेति शेषः । इति—इत्यर्थकेन ।

( प्रयोजनभाष्यम् )

स्थानिवद्भावप्रतिषेधश्च प्रयोजनम्—यथेह भवति—उरःकेण, उरःपेणेति "अड्व्यवाय" इति णत्वम्; एवमिहापि स्थानिवद्भावात्प्राप्नोति—व्यूढोरस्केन महोरस्केनेति । तत्र "अनल्विधौ" इति प्रतिषेधः सिद्धो भवति ॥

( प्रदीपः ) महोरस्केनेति । पूर्वत्रासिद्धीये न स्थानिवदिति निषेधोऽचः परस्मिन्पूर्वविधावित्यस्य, न तु स्थानिवदादेश इत्यस्य ॥

( उद्द्योतः ) ननु सोऽपदादाविति सत्वस्य स्थानिवत्त्वं पूर्वत्रासिद्धीये इति निषेधान्नेत्यत आह पूर्वत्रेति ॥

( तत्त्वालोकः ) भाष्ये—भवतीति—तथा च वार्तिककृता तेषामविशेषेणोपदेशस्य प्रयोजनपञ्चके उक्ते, भाष्यकृता द्वयोः खण्डितत्वात् प्रथमस्य उञ्जेर्दोषपदत्वाङ्गीकारेण अनभिप्रेतत्वाच्च फलद्वयं, विशेषतया चरमफलं तस्य पर्यवस्यतीति भावः ।

( इत्ययोगवाहोपदेशाधिकरणम् ॥ )

---

( अथ वर्णार्थवत्ताधिकरणम् )

( भाष्यम् )

किं पुनरिमे वर्णा अर्थवन्तः, अहोस्विदनर्थकाः ?

( प्रदीपः ) इदानीमन्यदपि वर्णगतं वस्तु विचार्यते—किं पुनरिति । पक्षद्वयेऽपि प्रतिवर्णं विभक्त्युत्पत्त्यनुत्पत्तिज्ञानं विचारस्य प्रयोजनम् ॥

( उद्द्योतः ) इमे इत्यनेन न हयवरट्सूत्रस्था एव गृह्यन्ते, किं तु वर्णमात्रमित्याह—इदानीमिति । अर्थवन्त इति साध्यम् । वर्णा इति पक्षः । पक्षतावच्छेदकमेव हेतुः । धातुप्रातिपदिकेत्यादिस्तु दृष्टान्तः ॥ अनुत्पत्तिज्ञानम् । अनुत्पत्त्युपायज्ञानम् ॥

( तत्त्वालोकः ) प्रदीपे—अन्यत्—अर्थवत्त्वानर्थकत्वरूपम् । विचार्यते इति—अनेनात्र भाष्यादौ "इदं विचार्यते" इति पाठस्य भूतलुप्तता सूचिता । उद्द्योते—पक्षतावच्छेदकम्—वर्णत्वम् ।

( ७० अर्थवत्तासाधकप्रथमवार्तिकम् ॥ ११ ॥ )

॥ * ॥ अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥ * ॥

( भाष्यम् )

अर्थवन्तो वर्णाः । कुतः ? ॥

धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनात् ॥

धातव एकवर्णा अर्थवन्तो दृश्यन्ते—एति, अध्येति, अधीत इति ॥

प्रातिपदिकान्येकवर्णान्यर्थवन्ति—आभ्याम्, एभिः, एषु ॥

प्रत्यया एकवर्णा अर्थवन्तः,—औपगवः, कापटवः ॥

निपाता एकवर्णा अर्थवन्तः,—अ अपेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, ए अपक्राम । धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनान्मन्यामहे—अर्थवन्तो वर्णाः—इति ।

( उद्द्योतः ) भाष्ये धातव इत्यादि । प्रक्रियाश्रयप्रकृतिप्रत्ययानां वाचकत्वमित्येवंरूपवर्णस्फोटाश्रयेण । अयं च शास्त्रव्यवहारमात्रोपयोगी । एतद्वासनावशादेव लोकव्यवहारेऽपि शास्त्रज्ञास्तथा व्यवहरन्ति धर्मे चैवंविधज्ञानस्योपयोग इति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—इति—इत्यत्र । अर्थवन्तीति—दृश्यन्ते इत्यनुषज्यते । एवमग्रेऽपि । एष्विति—इत्यत्रेत्यनुषज्यते । एवमग्रेऽपि । उपसंहरति—धात्विति ।

उद्द्योते—अयं—वर्णस्फोटः । एतदिति—वर्णस्फोटेत्यर्थः । तथा—प्रकृतिप्रत्ययविभागेन । एवं विधेति—प्रकृतिप्रत्ययविभागपूर्वकेत्यर्थः ।

( ७१ अर्थवत्तासाधकद्वितीयवार्तिकम् ॥ १२ ॥ )

।*॥ वर्णव्यत्यये चार्थान्तरगमनात् ॥*॥

( भाष्यम् )

वर्णव्यत्यये चार्थान्तरगमनान्मन्यामहेऽर्थवन्तो वर्णा इति । कूपः सूपो यूप इति । कूप इति ककारेण कश्चिदर्थो गम्यते । सूप इति ककारापाये सकारोपजने चार्थान्तरं गम्यते । यूप इति ककारसकारापाये यकारोपजने चार्थान्तरं गम्यते । तेन मन्यामहे—यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति ॥

( प्रदीपः ) वर्णव्यत्यय इति । एकस्य वर्णस्याभ्युपगमेऽन्यापगमो व्यत्ययः ॥ स ककारस्येति । तस्यैवान्वयव्यतिरेकावनुविधत्तेऽर्थावसाय इत्यर्थः ॥

( उद्द्योतः ) हेत्वन्तरमाह - वर्णव्यत्यये चेति ॥ ननु कूपादौ न सिद्धादाविव वर्णव्यत्ययोऽत आह—एकस्येति ॥ तस्यैवान्वयेति । ऊपशब्दस्य तु तदीयशक्तिबोधकत्वरूपं द्योतकत्वं प्रादिवत् । अत एव तेषामिवैषामपि प्रातिपदिकसंज्ञापादनं करिष्यते ॥

( तत्त्वालोकः ) भाष्ये—इति—इत्यत्र । इति—इत्यनेन । एवमग्रेऽपि ।

प्रदीपे—तस्यैव—ककाराद्यन्यतमस्यैव । अनुविधत्ते—आश्रयति । अर्थावसायः—अर्थनिर्णयः ।

उद्द्योते—हेत्वन्तरमिति—साधारणं हेतुमुक्त्वा असाधारणम्

अन्वयव्यतिरेकरूपमित्यादिः । **अत एव**-द्योतकत्वेन अर्थवत्त्वादेव । **तेषां**-कादीनाम् । **एषाम्**-ऊपादीनाम् ।

( ७२ अर्थवत्तासाधकतृतीयवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ वर्णानुपलब्धौ चानर्थगतेः ॥ * ॥

( भाष्यम् )

**वर्णानुपलब्धौ चानर्थगतेर्मन्यामहेऽर्थवन्तो वर्णा इति । वृक्ष ऋक्षः, काण्डीर आण्डीरः । वृक्ष इति सवकारेण कश्चिदर्थो गम्यते, ऋक्ष इति वकारापाये सोऽर्थो न गम्यते । काण्डीर इति सककारेण कश्चिदर्थो गम्यते, आण्डीर इति ककारापाये सोऽर्थो न गम्यते ॥**

( प्रदीपः ) **वर्णानुपलब्धौ चेति** । अर्थान्तरावगमात्प्रकृतोऽर्थो न गम्यत इति विवक्षितम् ॥

( उद्द्योतः ) तृतीयहेतुमाह—**वर्णानुपलब्धौ चेति** ॥ अनर्थगतेरित्यस्य तद्वर्णसत्तायां योऽर्थस्तदर्थानवगतेरित्यर्थ इत्याह—**अर्थान्तरेति** ॥

( तत्त्वालोकः ) **आण्डीर इति**—इत्यत्रेति शेषः । **इति**-इत्यनेन । एवमग्रेऽपि ।

( आक्षेपभाष्यम् )

**किं तर्ह्युच्यते—'अनर्थगतेः' इति । न साधीयो ह्यत्रार्थस्य गतिर्भवति ॥**

( प्रदीपः ) इतरस्त्वर्थावगत्यभावमात्रमनेनोक्तमिति मत्वा पृच्छति—**किं तर्हीति** । **न साधीय इति** । परमतापेक्षया प्रकर्ष आरोप्यते । यथा न किंचिदयं तत्र करोतीत्युक्ते कश्चिदाह सुतरामयं करोतीति ॥

( उद्द्योतः ) प्रश्नमुपपादयति—भाष्ये **न साधीय इति** । नञि काकुः ॥ **परमतापेक्षयेति** । परेणानर्थगतेरित्युक्तत्वादिहार्थगतिरस्तीत्यभ्युपगमस्य परमते कटाक्षेण अन्यस्थलीयार्थगत्यपेक्षयात्रातिशयेनार्थगतिरस्तीति विवक्षेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**हि**-यतः । तथा च अतदर्थगतेरिति वक्तव्यमिति भावः ।

प्रदीपे—**अनेन**-अनर्थगतेरित्यनेन ।

( समाधानभाष्यम् )

**एवं तर्हीदं पठितव्यं स्याद्—"*वर्णानुपलब्धौ चातदर्थगतेः*" इति ॥**

**किमिदम्—अतदर्थगतेरिति ॥**

**तस्यार्थस्तदर्थः, तदर्थस्य गतिस्तदर्थगतिः, न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥ अथवा सोऽर्थस्तदर्थस्तदर्थस्य गतिस्तदर्थगतिर्न तदर्थगतिरतदर्थगतिरतदर्थगतेरिति ॥**

( प्रदीपः ) **एवं तर्हीति** । प्रकृतोऽर्थो न गम्यतेऽर्थान्तरं तु गम्यत इत्यर्थः ॥ **तस्यार्थ इति** । तस्य वर्णस्य ॥ परं प्रति वर्णानामर्थवत्त्वमसिद्धमिति कथं तस्येति वर्णः परामृश्यत इत्याह—**सोऽर्थ इति** । प्रकृतोऽर्थ इत्यर्थः ॥

( उद्द्योतः ) तच्छब्दार्थमाह—**वर्णस्येति** ॥ परे तु तच्छब्देन तद्वर्णघटितपरामर्शे न कश्चिद्दोषः ॥ अत एव पूर्वं भाष्ये **सककारेण कश्चिदर्थो गम्यत** इत्युक्तमित्याहुः ॥ लाघवेन तु कर्मधारयमाह—भाष्ये **सोऽर्थ इति** । **प्रकृतोऽर्थः** । तस्मिन्वर्णे सति योऽर्थः प्रतीयते स इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—तुष्यतु दुर्जन **इति** न्यायेन इतरोक्तमभ्युपगम्य परः समाधत्ते-**एवं तर्हीति** । इष्टार्थस्य स्पष्टप्रतिपत्तये इति शेषः । इतरः प्रकृते न सः, असः, असश्चासौ अर्थः अतदर्थः, अतदर्थस्य गतिः अतदर्थगतिरिति समासमभिप्रेत्य पृच्छति-**किमिदमिति** ।

प्रदीपे—**इति**-इति हेतोः । **कथमिति**—तत्प्रतीति शेषः । **इति**-इत्यनेन । **इत्याह**-इत्यत आह ।

उद्द्योते—**घटितेति**-समुदायेति शेषः । **प्रतीयते इति**-समुदायेनेत्यादिः ।

( आक्षेपभाष्यम् )

**स तर्हि तथा निर्देशः कर्तव्यः ? ॥**

( तत्त्वालोकः ) न्यासान्तरं प्रत्याख्यापयितुं तटस्थः पृच्छति—**स तर्हीति** । **तथा**-तत्पदघटितः ।

( सिद्धान्तभाष्यम् )

**न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा—उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः खरमुखः । एवमतदर्थगतेरनर्थगतेरिति ॥**

( प्रदीपः ) **उष्ट्रमुख इति** । गतार्थत्वादप्रयोग एव द्वितीयमुखशब्दस्य लोपोऽभिधीयते । अत्र हि उष्ट्रो मुखमस्येत्येव विग्रहः ॥ न च प्राणी प्राण्यन्तरस्य मुखं भवतीति विशिष्टावयववृत्तिरुष्ट्रशब्दः सादृश्यान्मुखं विशिनष्टि । एवमिहाप्यनर्थगतेरित्यत्रार्थशब्देन प्रक्रान्तोऽर्थ उच्यते, नार्थमात्रमित्यर्थः ॥

( उद्द्योतः ) ननु दृष्टान्ते **सप्तम्युपमानपूर्वे**ति वचनेनोत्तरपदलोपेऽपि प्रकृते तच्छब्दलोपः केन । किं च तच्छब्द उत्तरपदमपि न । तच्छब्देन नञः समासाभावादत आह—**गतार्थत्वादिति** । तथा च तद्वदत्रापि लक्षणेति भावः ॥

( तत्त्वालोकः ) भाष्ये—तस्य व्याख्यानविशेषेणैव इष्टार्थलाभ इत्यभिप्रायेण सदृष्टान्तं समाधत्ते-**नेति** । **उत्तरेति**-यत इत्यादिः । **तत्**-उत्तरपदलोपनम् । **अस्येति**-स इति शेषः । **खरमुख इति**—इत्यत्रेति शेषः । **इति**-इत्यत्रापि ।

प्रदीपे—**हि**-यतः । **इति**-इति हेतोः । **विशिष्टावयववृत्तिः**—विलक्षणाकृतिकमुखरूपावयवे लक्षणया वृत्तिः ।

उद्द्योते—**प्रकृते**-अनर्थगतेरित्यत्र । **तद्वत्**-उष्ट्रमुख इत्यत्रोष्ट्रशब्दस्य विचित्रमुखे लक्षणावत् । **अत्रापि**-अनर्थगतेरित्यत्रापि अर्थशब्दस्य प्रक्रान्तार्थे ।

( ७३ अर्थवत्तासाधकचतुर्थवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ संघातार्थवत्त्वाच्च ॥ * ॥

( भाष्यम् )

**संघातार्थवत्त्वाच्च मन्यामहेऽर्थवन्तो वर्णा इति । येषां संघाता अर्थवन्तोऽवयवा अपि तेषामर्थवन्तः ॥ [ येषां पुनरवयवा अनर्थकाः समुदाया अपि तेषाम-**

नर्थकाः । ] तद्यथा एकश्चक्षुष्मान्दर्शने समर्थः तत्समुदायश्च शतमपि समर्थम्, एकश्च तिलस्तैलदाने समर्थः तत्समुदायश्च खार्यपि तैलदाने समर्था ॥ येषां पुनरवयवा अनर्थकाः, समुदाया अपि तेषामनर्थकाः । तद्यथा—एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमप्यसमर्थम्, एका च सिकता तैलदानेऽसमर्था तत्समुदायश्च खारीशतमप्यसमर्थम् ॥

( उद्द्योतः ) चतुर्थहेतुमाह—भाष्ये **सङ्घातार्थवत्त्वाच्चेति** । एका सिकतेति भाष्यप्रयोगादेव सिकताशब्दस्यैकवचनान्तत्वमपि ॥

( तत्त्वालोकः ) वृक्ष इति सङ्घातः, अर्थवदवयवकः, अर्थवत्त्वात्, यो योऽर्थवान् स स अर्थवदवयवकः यथा चक्षुष्मदादिसङ्घातः, तथा चायं, तस्मात् तथा । अथवा यन्नैवं तन्नैवं, यथा अन्धादिसमुदायः, न चायं तथा, तस्मान्न तथा, इत्यनुमानप्रयोगमभिप्रेत्याह-**सङ्घातेति**।

( अर्थवत्तादूषणभाष्यम् )

यदि तर्हीमे वर्णा अर्थवन्तः । अर्थवत्कृतानि प्राप्नुवन्ति ॥

कानि ? ॥

"अर्थवत्प्रातिपदिकम्" इति प्रातिपदिकसंज्ञा, "प्रातिपदिकाद्" इति स्वाद्युत्पत्तिः, "सुबन्तं पदम्" इति पदसंज्ञा ॥

तत्र को दोषः ? ॥

"पदस्य" इति नलोपादीनि प्राप्नुवन्ति—धनं वनमिति ॥

( प्रदीपः ) **नलोपादीनीति** । श्रवणं तु विभक्तेर्न भवति, यतो यदैवावयवानां प्रातिपदिकसंज्ञा प्रवर्तते तदैव समुदायस्यापि । तत्र तदन्तर्गतत्वाद्विभक्तेर्लुका भवितव्यम् । समासग्रहणेन च तुल्यजातीयस्य सुबन्तावयवसमुदायस्य प्रातिपदिकसंज्ञा निवार्यते, न त्वर्थवत्समुदायमात्रस्य । येनैव चार्थेन समुदायस्यार्थवत्त्वं तेनैव तदवयवानामपीति विभक्त्युत्पत्तिश्चोद्यते ॥

( उद्द्योतः ) **तदन्तर्गतत्वादिति** । इदं चिन्त्यम् । **इत्थंभूतलक्षण** इति सूत्रस्थस्वग्रन्थविरोधात् । तत्र हि—संज्ञाप्रवृत्त्युत्तरकालजातविभक्तेस्तन्मध्यपतितत्वेऽपि तदवयवत्वं नेत्युक्तम् । तस्मादन्तरङ्गत्वादवयवप्रातिपदिकत्वे तन्निमित्तसुपि तदनन्तरं कृदन्तत्वनिमित्तकप्रातिपदिकत्वे सुब्लोप इति वक्तुं युक्तम् । धनतीत्यादौ तु न तदापत्तिः । धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तदप्राप्तेः । धात्वादेस्तदवयवत्वं तु व्यपदेशिवद्भावेन बोध्यम् । वस्तुत **इत्थंभूतेति** सूत्रस्थकैयटोक्तिरयुक्तेति तत्रैव निरूपयिष्याम इति न दोषः ॥ धकारे जश्त्वमादिपदार्थः ॥ **सुबन्तावयवसमुदायस्येति** । सुबन्तावयवेति बहुव्रीहिस्ततः कर्मधारयः । इदमुपलक्षणम्—भेदे सति यदर्थयोः संसर्गस्तद्वारकार्थवत्समुदायस्य, तेन तिङन्तसमुदायस्य व्यावृत्तिः । प्रकृते न भेद इत्याह—**येनैव चेति** ॥

( तत्त्वालोकः ) भाष्ये—**तर्हीति**-अस्य अर्थवत्कृतानीत्यनेनान्वयः । **प्राप्नुवन्तीति**-एवमित्यादिः । **तत्र**-तेषु सत्सु । **इति**-इत्यत्र । प्रदीपे—**तदैवेति**-ननु एकाज्द्विर्वचनन्यायेन समुदायस्यैव सा संज्ञा स्यान्नत्ववयवानामिति चेन्न, यत्र समुदायकार्येणावयवानामभ्युपकारस्तत्रैव तन्न्यायप्रवृत्तेरभ्युपगततया प्रकृते समुदायप्रातिपदिकत्वेन विभक्त्यादिरूपोपकारस्यावयवेष्वभावात् तदप्रवृत्तेः । न चैवमपि संख्याकर्मादेरभावादवयवेभ्यो न विभक्तिरिति वाच्यम्, अर्थवत्त्वे सति तत्र संख्यादेरपि सम्भवात् ॥ **तत्र**-समुदायस्य तत्संज्ञायां सत्याम् । **तदिति**-समुदायेत्यर्थः । एवमग्रेऽपि । **विभक्तेः**-तदन्तर्गतायाः । **समासेति**-कृत्तद्धितेति सूत्रे इत्यादिः । **इतीति**-इति हेतोरित्यर्थः । अवयवेभ्य इति शेषः ।

उद्द्योते—हि-यतः । **तदिति**—समुदायेत्यर्थः । एवमग्रेऽपि । **तन्निमित्तसुपि**-अवयवप्रातिपदिकत्वनिमित्तसुपि । **तदनन्तरं**-तन्निमित्तसुबनन्तरम् । **तदापत्तिः**-सुबापत्तिः । **धात्विति**-अर्थवदिति सूत्रे इत्यादिः । **तत्र**-धनतीत्यादौ । **तदप्राप्तेः**-प्रातिपदिकसंज्ञाया अप्राप्तेः। **तदवयवत्वं**-धात्वाद्यवयवत्वम् । **इति**-इति हेतोः । **आदीति**-नलोपादीनीति **भाष्ये** इत्यादिः । **न भेदः**—न समुदायार्थभिन्नार्थवत्त्वम् अवयवानाम् ।

( ७४ अर्थवत्तायां दोषनिराकरणवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ संघातस्यैकार्थ्यात्सुबभावो वर्णात् ॥ * ॥

( भाष्यम् )

संघातस्यैकत्वमर्थः । तेन वर्णात्सुबुत्पत्तिर्न भविष्यति ॥

( प्रदीपः ) तत्र परिहारमाह—**संघातस्येति** । वृक्ष इत्यत्रैकत्वं विभक्त्या द्योत्यते । तच्चैकमित्येकैव विभक्तिरुत्पद्यते । **यथा** बहवो द्रष्टारो दृश्यमर्थमेकेनैव प्रदीपेन पश्यन्ति । सा चोत्पद्यमाना समुदायादेव तन्त्रेण सर्वानुग्राहिण्युत्पद्यते समुदायद्विर्वचनवत् । पदसंज्ञा तु समुदायस्यैव भवति, न प्रत्येकम् । **यस्मात् प्रत्ययविधि**रित्यनुवर्तनादसुबन्तत्वाद् ॥

( उद्द्योतः ) **तच्चैकमिति** । **सङ्घातस्यैकत्व**मिति भाष्यस्य सङ्घातस्याप्येकत्वमर्थः । एवं च विभक्तिः समुदायादेवेति भावः ॥ ननु समुदायादुत्पद्यमाना विभक्तिः सर्ववर्णसंबन्धिनी चेत् प्रतिवर्णं पदत्वं प्राप्नोतीत्यत आह—**पदसंज्ञा त्विति** । यतश्चार्थबोधनाय विभक्त्युत्पत्तिस्तस्य संज्ञा प्रवर्तते न त्वेषामिति भावः ॥ केचित्तु विभक्तिः प्रकृत्यर्थगतप्रकृतिबोध्यसङ्ख्याद्योतिका । सङ्ख्या च समुदायस्यैवार्थो, न प्रत्येकवर्णानामिति न तेभ्यः स्वाद्युत्पत्तिः । **एकत्वं सङ्घातस्यार्थं इति** भाष्यस्वरसात् ॥ प्रकृत्यंशे वर्णव्यत्ययापाययोः सङ्ख्यान्तरानुपजननात्सा समुदायस्यैवार्थं इति तद्भावः । न चाव्ययेभ्य इवैकवचनं दुर्वारम् । सङ्ख्यारहितार्थप्रतिपादकेषु तथास्वीकारेपि वस्तुतः सङ्ख्यावत्यर्थे सङ्ख्यानभिधायकस्वाद्युत्पत्तौ मानाभावात् । एवं चैषां प्रकृतित्वमेव नेति **न केवला प्रकृति**रित्यस्यापि न विषयः । एतेन प्रत्येकं पदसंज्ञानुग्रहाय द्विर्वचनवैषम्यात् । स्यादेव प्रत्येकं सुबुत्पत्तिरित्यपास्तमित्याहुः ॥

( तत्त्वालोकः ) प्रदीपे—**तच्च**-एकत्वञ्च । **एकमिति**-सङ्घातावयवयोरिति शेषः । **इति**-इति हेतोः । **सा**-विभक्तिः । **द्विर्वचनेति**-नच समुदायविभक्त्या अवयवानां विभक्तिमत्त्वाभावात् तुल्योपकारासत्त्वे कथमिदमिति वाच्यम्, सङ्घातावयवयोरेकैकत्वार्थकत्वेन समुदायविभक्त्या अवयवगतैकत्वस्यापि उक्ततया तत्संभवात् । **असुबन्तेति**-अवयवानामित्यादिः ।

उद्द्योते—**अपिना** अवयवानामित्यस्य संग्रहः । समुदायावय-

वयोरनतिरिक्तत्वात् । एवेन अवयवानां व्यावृत्तिः । चेदिति-तर्हीति शेषः । यतः-समुदायात् । एषाम्-अवयवानाम् । कैयटोक्तौ वक्ष्यमाणारुच्या सिद्धान्तमतेनाह-केचित्त्विति । पञ्चकं प्रातिपदिकार्थ इत्याशयेनाह-प्रकृतिबोध्येति । इति-इति हेतोः । तेभ्यः-प्रत्येकवर्णेभ्यः । सा-संख्या । तद्भावः-भाष्याशयः । एकवचनमिति-औत्सर्गिकैकवचनमित्यर्थः । अवयवेभ्योऽपीत्यादिः । तथेति-औत्सर्गिकैकवचनेत्यर्थः । एषाम्-अवयवानाम् । इति-इति हेतोः ।

( ७५ अनर्थकतासाधकप्रथमवार्तिकम् ॥ १६ ॥ )

॥ * ॥ अनर्थकास्तु प्रतिवर्णमर्थानुपलब्धेः ॥ * ॥

( भाष्यम् )

अनर्थकास्तु वर्णाः ॥

कुतः ? ॥

प्रतिवर्णमर्थानुपलब्धेः । नहि प्रतिवर्णमर्था उपलभ्यन्ते ॥

किमिदं प्रतिवर्णमिति ? ॥

वर्णं वर्णं प्रति प्रतिवर्णम् ॥

( प्रदीपः ) अनर्थकास्त्विति । धात्वादिव्यतिरिक्ता वर्णाः पक्षीक्रियन्तेऽन्यथा शास्त्रविरोधः प्राप्नोति ॥ किमिति । असमासशङ्कया प्रश्नः, समासेन तूत्तरम् । तेनैव वीप्सा द्योतितेति द्विर्वचनं न भवति ॥

( उद्द्योतः ) अनुमानेन साधितामर्थवत्तां प्रत्यक्षविरोधेन दूषयति—अनर्थकास्त्विति ॥ सर्ववर्णानां पक्षत्वे हेतोर्भागासिद्धत्वं स्यादत आह—धात्वादीति ॥ विपक्षे बाधकमाह—अन्यथेति ॥ वर्णव्यत्ययेत्यादिहेतोरर्थानुपलब्धेरिति हेतोश्च धात्वाद्यतिरिक्तवर्णविषयत्वे एव सङ्गतेरित्यपि बोध्यम् ॥ असमासशङ्कयेति । तथा च वीप्सा न प्रतीयेतेति भावः ॥ तेनैवेति । वीप्सायां तस्य विधानादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—अर्थानुपलब्धेरिति-यदि प्रतिवर्णम् अर्था भवेयुः ताह ते तथोपलभ्येरन्, यतस्ते तथा नोपलभ्यन्ते, अतस्ते न सन्तीति निश्चीयते । योग्यानुपलब्धेरभावग्राहकत्वात् ।

प्रदीपे—अन्यथेति-सकलवर्णानां पक्षत्वे इत्यर्थः । धातुरूपवर्णानां शास्त्रेणार्थवत्तायाः बोधनादिति शेषः । समासेनेति-वीप्सार्थकेनेत्यादिः । एवञ्च प्रतिशब्दस्यानेकार्थत्वात् संशयेन समुदायद्वाराऽवयवे प्रश्नः, वीप्सा प्रतिशब्दबोध्येत्युत्तरमिति भावः । तेनैव-समासेनैव । इति-इति हेतोः ।

उद्द्योते—साधितामिति-वर्णानामिति शेषः । विपक्षे—सर्ववर्णानां पक्षत्वे । तथा च-असमासे च । तस्य-समासस्य ।

( ७६ अनर्थकत्वसाधकद्वितीयवार्तिकम् ॥ १७ ॥ )

॥ * ॥ वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनात् ॥ * ॥

( भाष्यम् )

वर्णव्यत्ययापायोपजनविकारेष्वर्थदर्शनान्मन्यामहे-अनर्थका वर्णा इति ॥ वर्णव्यत्यये-कृतेस्तर्कः, कसेः सिकताः, हिंसेः सिंहः । वर्णव्यत्ययो नार्थव्यत्ययः ॥ अपायो लोपः—हतः, घ्नन्ति, घ्नन्तु, अघ्नन् । वर्णापायो नार्थापायः ॥ उपजन आगमः—लविता, लवितुम् । वर्णोपजनो नार्थोपजनः ॥ विकार आदेशः-घातयति घातकः । वर्णविकारो नार्थविकारः ॥ यथैव वर्णव्यत्ययापायोपजनविकारा भवन्ति तद्वदर्थव्यत्ययापायोपजनविकारैर्भवितव्यम् । न चेह तद्वद् । अतो मन्यामहे—अनर्थका वर्णा इति ॥

( प्रदीपः ) वर्णव्यत्ययेति । यदुक्तम्—*वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः *इति, तस्यानैकान्तिकत्वमुद्भाव्यते ॥

( उद्द्योतः ) ननु वर्णव्यत्ययादिष्वर्थदर्शनं नार्थवत्त्वाभावसाधकमत आह—यदुक्तमिति । एवंचार्थवत्त्वसाधकहेतौ व्यभिचारप्रदर्शनद्वारानर्थकतासाधकत्वमस्य ॥ भाष्ये अर्थदर्शनादित्यस्य वर्णव्यत्ययाद्यभावे योऽर्थस्तस्यैव दर्शनादित्यर्थः ॥ नार्थव्यत्यय इत्यस्य नार्थान्तरावगतिः, किं तु तस्यैवावगतिरित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—विकारेष्विति-सत्स्वपीति शेषः । क्रमेणोदाहरति-वर्णव्यत्यये इत्यादिना । सिंह इति-इत्यत्रेति शेषः । एवमग्रेऽपि । अपायशब्दस्य शास्त्रप्रसिद्धं पर्यायमाह-लोप इति । उप समीपे जायते इत्युपजनस्तस्य तादृशं पर्यायमाह-आगम इति । भावरूपः अन्यथाभावः विकार इत्यभिप्रायेण तस्य तादृशं पर्यायमाह—आदेश इति । उपसंहरति-यथैवेति । वर्णानामर्थवत्त्वे इत्यादिः । न-चेति-यत इत्यादिः । अत इति-तत्र अर्थवत्त्वसाधकहेतोर्व्यभिचारादिति शेषः ।

प्रदीपे—अनैकान्तिकत्वं-सव्यभिचारत्वम् । उद्भाव्यते इति-वर्णेषु अनर्थकत्वस्य साधनायेति शेषः ।

उद्द्योते—दर्शनमिति-विरोधादिति शेषः । अस्य-वर्णव्यत्ययापायेत्यादेः ।

( तटस्थाक्षेपभाष्यम् )

उभयमिदं वर्णेषूक्तम्—अर्थवन्तोऽनर्थका इति च ॥ किमत्र न्याय्यम् ?

( समाधानभाष्यम् )

उभयमित्याह ॥ कुतः ?

स्वभावतः । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिः शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति कृत्वा सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्—यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽतोऽन्येऽनर्थका इति । स्वाभाविकमेतत् ॥

( प्रदीपः ) उभयमित्याहेति । यत्रान्वयव्यतिरेकाभ्यामर्थवत्ता शक्यते कल्पयितुं तत्रैवासावभ्युपगन्तव्या, न सर्वत्रेत्यर्थः ॥

( उद्द्योतः ) उभयस्य न्याय्यत्वं विषयभेदेनेत्याह—यत्रान्वयेति । यथा एति इत इत्यादौ ॥ न सर्वत्र कूपादावित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—स्वभावतः-स्वाभाविकशक्त्यशक्तिम-

त्वात्। केषाञ्चिद्वर्णानां स्वाभाविकशक्तिमत्त्वेन अर्थवत्त्वेऽपि सर्वेषां नार्थवत्ता, केषाञ्चित् स्वाभाविकाशक्तिमत्त्वेन अनर्थकत्वेऽपि सर्वेषां नानर्थकतेत्यत्र दृष्टान्तमाह-**तद्यथेति**। **समानमिति**-अस्य उभयत्र क्रियायामन्वयः। **इदानीम्**-अर्थोपार्जनसमये। **अनर्थकैरिति**-न च भवितुं शक्यमित्यनुषज्यते। **एतत्**-तदुभयम्।

प्रदीपे—**असौ**-अर्थवत्ता।

उद्द्योते—वर्णत्वावच्छेदेन अर्थवत्त्वानर्थकत्वयोः न्याय्यत्वस्य दुर्वचत्वादाह-**विषयभेदेनेति**। समुदायस्य तदर्थवत्त्वसम्पादनेन कृतार्थानां समुदायस्थवर्णानां फलवत्सन्निधाविति न्यायात् न पृथक्तदर्थवत्ता कल्प्यते इत्याशयेनाह-**कूपादाविति**।

(आक्षेपभाष्यम्)

**कथं य एष भवता वर्णानामर्थवत्तायां हेतुरुपदिष्टः-'अर्थवन्तो वर्णा धातुप्रातिपदिकप्रत्ययनिपातानामेकवर्णानामर्थदर्शनाद्वर्णव्यत्यये चार्थान्तरगमनाद्वर्णानुपलब्धौ चानर्थगतेः संघातार्थवत्त्वाच्च' इति ? ॥**

**(तत्त्वालोकः)**—एवं निर्णयमवगम्य तटस्थः पूर्वपक्षिणं पृच्छति-**कथमिति**। तथा निर्णयसत्त्वे इत्यादिः। एवञ्च **इत्येष यो** हेतुः स तथानिर्णयसत्त्वे कथं (सिद्धान्तिनं प्रति किमुत्तरमभिसन्धाय) भवता (पूर्वपक्षिणा) वर्णानामर्थवत्तायाम् उपदिष्ट इत्यन्वयः। **हेतुरिति**-अत्र जातावेकवचनम्।

(समाधानभाष्यम्)

**संघातान्तराण्येवैतान्येवंजातीयकानि अर्थान्तरेषु वर्तन्ते—कूपः सूपो यूप इति। यदि हि वर्णव्यत्ययकृतमर्थान्तरगमनं स्यात्, भूयिष्ठः कूपार्थः सूपे स्यात्, सूपार्थश्च कूपे, कूपार्थश्च यूपे, यूपार्थश्च कूपे, सूपार्थश्च यूपे, यूपार्थश्च सूपे। यतस्तु खलु न किंचित्सूपस्य वा यूपे, यूपस्य वा कूपे, कूपस्य वा यूपे, सूपस्य वा कूपे, कूपस्य वा सूपे, यूपस्य वा सूपे। अतो मन्यामहे—संघातान्तराण्येतान्येवंजातीयकान्यर्थान्तरेषु वर्तन्त इति। इदं खल्वपि—भवता वर्णानामर्थवत्तां ब्रुवता साधीयोऽनर्थकत्वं द्योतितम्। यो हि मन्यते—यः कूपे कूपार्थः स ककारस्य, यः सूपे सूपार्थः स सकारस्य, यो यूपे यूपार्थः स यकारस्येति। ऊपशब्दस्तस्यानर्थकः स्यात् ॥**

**(प्रदीपः) संघातान्तराणीति**। तदुक्तं—

**'न कूपसूपयूपानामन्वयोऽर्थस्य विद्यते।**
**अतोऽर्थान्तरवाचित्वं संघातस्यैव गम्यते ॥' इति।**

**(उद्द्योतः) न कूपसूपेति**। वर्णानामर्थवत्त्वे ऊपशब्दस्य त्रिष्वन्वयादर्थान्वयः स्यान्न च दृश्यतेऽतः समुदायान्तरत्वप्रयुक्तमेवार्थान्तरत्वं तदर्थानवगतिश्च न तु व्यत्ययादिकृतमित्यर्थः॥ **ननु** ककारसकारयकाराणामेवार्थवत्त्वमूपस्तु शक्त्युद्बोधक एवेति कस्यार्थस्य सत्ता तत्र तत्रापाद्यत इति चेत्तर्हि मन्मतेव वर्णानामर्थवत्त्वम्। तत्रैव पदे ऊपयोरर्थाभावात्। किं च सङ्ख्या समुदायस्यैवार्थ इत्यपि नियन्तुमशक्यं, कूपगतैकत्वस्य यूपादिभिरप्रतीत्या संख्ययापि कादिभिरन्वयव्यतिरेकसत्त्वाद्। द्विर्वचनेन वैषम्यं तु प्रागुक्तमेव। तस्मात्समुदायस्यैवार्थवत्त्वम्। तदेव ध्वनयन्नाह—**भाष्ये इदं खल्वपीति**॥

**(तत्त्वालोकः)** भाष्ये—पूर्वपक्षिणि मूकीभूते सिद्धान्त्येव तटस्थं प्रति समाधानमाह-**संघातेति**। हि-यतः। **स्यादिति**-तर्हीति शेषः। **सूपार्थश्चेति**-भूयिष्ठ इत्यनुषज्यते। एवमग्रेऽपि। **कूपे इति**-स्यादित्यनुषज्यते। एवमग्रेऽपि। **खल्विति** निश्चये। **इदं खल्वपीति**-इदं युक्त्यन्तरमपि निश्चितं तत्रोच्यते इत्यर्थः। तदेवाह-**भवतेति**। हि-यतः।

उद्द्योते—त्रिषु-कूपसूपयूपेषु। **अर्थान्वय इति**-अन्योऽन्यस्मिन्नित्यादिः। **न च दृश्यते**-न हि इतरेतरस्मिन् तेषामर्थानामन्वयः दृश्यते। **इति**-इति स्थितौ। **चेत्तर्हि**-चेन्न, यतस्तर्हि। **संख्येति**-अत्र संख्याया इति पाठः। **द्विर्वचनेन**-एकाज्द्विर्वचनेन।

(आक्षेपभाष्यम्)

**तत्रेदमपरिहृतम्—*संघातार्थवत्त्वाच्च* इति ॥**

(समाधानभाष्यम्)

**एतस्यापि प्रातिपदिकसंज्ञायां परिहारं वक्ष्यति ॥**

**(प्रदीपः) एतस्यापीति**। **'दृष्टो ह्यतदर्थेन गुणेन गुणिनोऽर्थभावः'** सुराङ्गवद्रथाङ्गवच्चेति॥

**(उद्द्योतः) दृष्टो हीति**। अतदर्थेन रथाङ्गेन गुणिनो रथस्य यथार्थवत्ता तथा प्रकृतेपीति भावः।

**(तत्त्वालोकः)** भाष्ये—**एतस्य**-संघातार्थवत्त्वाच्चेत्यस्य। **परिहारम्**-अवयवस्यानर्थकत्वेऽपि समुदायस्यार्थवत्तेत्येवंरूपम्।

उद्द्योते—**तथेति**-यथा रथाङ्गानां प्रत्येकं गमनाजनकत्वेऽपि समुदायस्य रथस्य गमनजनकता, यथा च सुराङ्गानां प्रत्येकम् उन्मादाजनकत्वेऽपि समुदायस्य सुराया उन्मादजनकता, तथा शब्दाङ्गानां प्रत्येकम् अनर्थकत्वेऽपि समुदायस्य शब्दस्यार्थवत्ता। एवञ्च संघातार्थवत्त्वस्य व्यभिचारित्वादिष्टासाधकतेति भावः।

इति वर्णानामर्थवत्ताधिकरणम्॥

---

(अथ प्रत्याहारेष्वित्संज्ञकग्रहणाभावाधिकरणम्)

(भाष्यम्)

**अइउण् ऋऌक् एओङ् ऐऔच्।**

**(तत्त्वालोकः)** भाष्ये—प्रासङ्गिकशङ्कया प्रत्याहारेऽनुबन्धानामिति श्लोकवार्त्तिकं खण्डशो व्याख्यातुम् आसक्तानुबन्धसूत्राणि निर्दिशति-**अइउणित्यादिना**।

(७७ आक्षेपवार्तिकम् ॥ १८ ॥)

**॥ * ॥ 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' ॥ * ॥**

(भाष्यम्)

**य एतेऽक्षु प्रत्याहारार्था अनुबन्धाः क्रियन्ते, एतेषामज्ग्रहणेन ग्रहणं कस्मान्न भवति ? ॥**

**किं च स्यात् ? ॥**

**दधि णकारीयति, मधु णकारीयति, "इको यणचि" इति यणादेशः प्रसज्येत ॥**

**(उद्द्योतः)** भाष्ये **अज्ग्रहणेष्विति**। **प्रत्याहारेऽक्षरसमाम्ना-**

**येऽजुग्रहणेषु** अच्प्रत्याहारग्राहकेषु पठितानामनुबन्धानां प्रत्यासत्त्याज्जु ग्रहणं कुतो नेत्यर्थः ॥ तत्फलितार्थमाह-- **य एते अज्जु इति ।** तद्बोधकसूत्रेषु प्रागुक्तेषु ॥ **प्रत्याहारार्थास्**तदुपकारकाः ॥ **अजुग्रहणेन** अच्शब्देन ॥ अणगादिप्रत्याहारेषु तेषां ग्रहणे फलाभावं **मनसि** निधायाज्**ग्रहणेने**त्युक्तम् । न च हशादौ टग्रहणस्यापत्तिः । हल्षु उच्चारणार्थाकारोच्चारणेनोच्चारणार्थवर्णहीनहलां हल्घटितप्रत्याहारे ग्रहणाभावस्य वक्तुं शक्यत्वात् ॥

**( तत्त्वालोकः )** भाष्ये--प्रासङ्गिकशङ्कया "प्रत्याहारेऽनुबन्धानामि"ति श्लोकवार्तिकं खण्डशो व्याख्यातुम् आसक्तानुबन्धसूत्राणि निर्दिशति—**अइउणित्यादिना । किं चेति**-यदि तेषामनुबन्धानाम् अच्शब्देन ग्रहणं स्यात्तर्हीत्यादिः । **मधु णकारीयतीति**-इत्यादाविति शेषः । उद्द्योते—**ग्राहकेष्विति**-सूत्रेष्विति शेषः । **तेषाम्**-अनुबन्धानाम् ।

**( ७८ सिद्धान्तसमाधानवार्तिकखण्डम् ॥ १९ ॥ )**

## ॥ ❋ ॥ आचारात् ॥ ❋ ॥

**( भाष्यम् )**

**किमिदमाचारादिति ? ॥**

**आचार्याणामुपचारात् । नैतेष्वाचार्या अच्कार्याणि कृतवन्तः ॥**

**( प्रदीपः ) आचारादिति ।** आचारो व्यवहारः । **वृषिमृषिकृषेरिति** यण् न कृतः ॥

**( तत्त्वालोकः )** भाष्ये—**एतेषु**-अनुबन्धेषु परेषु ।

प्रदीपे—**इतीति**-इत्यत्रेत्यर्थः । ककारे परे इति शेषः । तथा चात्र यणकरणरूपेण आचार्यव्यवहारेण अज्जु अनुबन्धानामग्रहणं ज्ञापितमिति भावः ।

**( ७९ सिद्धान्तसमाधानवार्तिकखण्डम् ॥ २० ॥ )**

## ॥ ❋ ॥ 'अप्रधानत्वात्' ॥ ❋ ॥

**( भाष्यम् )**

**अप्रधानत्वाच्च । न खल्वप्येतेषामज्जु प्राधान्येनोपदेशः क्रियते ॥**

**क तर्हि ? ॥**

**हल्षु ॥**

**कुत एतत् ? ॥**

**एषा ह्याचार्यस्य शैली लक्ष्यते—यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति—अचोऽज्जु हलो हल्षु ॥**

**( प्रदीपः ) अप्रधानत्वादिति । प्रधानाप्रधानसंनिधौ प्रधानमेव कार्याणां प्रयोजक**मिति परार्थानाम**नुबन्धानाम**च्संज्ञा न प्रवर्तत **इत्यर्थः ॥ शैलीति । शीले भवा शैली** समवधानपूर्विका **प्रवृत्तिः** । यथा लोके ब्राह्मणैः सह ब्राह्मणा भोज्यन्ते क्षत्रियैः सह **क्षत्रिया इति एवमिहाप्याचार्येण वर्णा निर्दिष्टा इत्यर्थः** ॥

**( उद्द्योतः ) प्राधान्येन** प्रत्याहारेषु ग्रहणार्थत्वेन । **परार्थेति ।** अजादिस्वरूपबोधनार्थत्वेन **परार्थत्वम् ।** यथाकारादयः संज्ञिविशेषसमर्पणायोपात्ता न तथा णादय **इत्यर्थः** ॥ अप्रधानत्वमप्याचार्याचारेण साधयति—[ भाष्ये ] **आचार्यस्येति ।** आचार्यशब्देनानादिः शब्दपुरुषः । एवं चान्यत्र संज्ञिविशेषसमर्पणायोपात्तत्वादितामसन्निहितत्वमेवेति भावः ।

**( तत्त्वालोकः )** भाष्ये—**एतेषाम्**-अनुबन्धानाम् । **तर्हीति**-तेषां प्राधान्येनोपदेश इति शेषः । **हि**-यतः ।

प्रदीपे—**इति**-इति लौकिकन्यायेन । **इति**-इति व्यवहारः । **वर्णा इति**-सजातीयेषु सजातीयाइत्यादिः ।

उद्द्योते—**तथेति**-संज्ञिविशेषसमर्पणायोपात्ता इति शेषः । **शब्दपुरुषः**-शिवः । **अन्यत्र**-हल्षु । **इतामिति**-अनुबन्धानामित्यर्थः । अज्जिवति शेषः । आचार्याचारेण ज्ञापितस्यैव अज्जु अनुबन्धानामग्रहणस्य प्रधानेति लोकन्यायेन दृढीकृतत्वात् एक एव हेतुरत्रेति वार्तिककृदाशयः । किन्तु भाष्यकृता सचकारं व्याख्यातत्वात् प्रकृते हेतुद्वयमेव बोध्यम् ।

**( ८० सिद्धान्तसमाधानवार्तिकखण्डम् ॥ २१ )**

## ॥ ❁ ॥ 'लोपश्च बलवत्तरः' ॥ ❋ ॥

**( भाष्यम् )**

**लोपः खल्वपि तावद्भवति ॥**

**( प्रदीपः ) लोपश्चेति ।** परत्वान्नित्यत्वाद्वा **आदिरन्त्येनेत्यनेना**च्संज्ञाविधानकालेनुबन्धानां लोपादसन्निधानादच्संज्ञा न प्रवर्तते । अनुबन्धा ह्युच्चारण एव सन्ति इत्संज्ञाप्रतिबद्धं च कार्यमसन्त एव प्रतिपादयन्ति, स्वतस्तु न किंचित्कार्यं प्रतिपद्यन्ते ॥

**( उद्द्योतः ) परत्वा**दित्याद्यन्तरङ्गत्वोपलक्षणम् । एवंच पूर्वमनुबन्धलोपा**दादिरन्त्येने**ति संज्ञाविधानकालेऽसंनिधानादित्यन्वयः । एवं चानुबन्धसदृशभिन्नानामेव मध्यगसदृशानां ग्राह्यतां बोधयतीति भावः ॥ भाष्ये **लोपः खल्वपि तावदिति ।** सर्वतः प्रथममित्यर्थः ॥ यत्तु एवमपि **लणि**त्यकारस्य हल्षु ग्रहणापत्ते**राचारा**दित्येव समाधिरत्र युक्त **इ**ति ॥ तन्न । **अतो लान्तस्ये**ति सूत्रे लकारोच्चारणेन **लण्**सूत्रस्थस्यानुनासिकत्वाभावज्ञापनात् । एवंच तस्यानुबन्धत्वमेव न, किंतूच्चारणार्थत्वमेव । अत एव **भाष्येऽइउणि**त्यादिसू**त्र**चतुष्टयोपादानेनैवैतद्विचारप्रवृत्तिः कृता । श्लोके चाज्**ग्रहणेष्वि**त्येवोक्तम् । **उरण्रपर**सूत्रे च लपरत्वस्योपसंख्यानमेव कार्यमिति **तुल्यास्य**सूत्रे वक्ष्यते ॥

**( तत्त्वालोकः )** भाष्ये—बलवत्तरलोपाच्चेत्याशयेनाह—**लोपश्चेति ।** प्रदीपे—**परत्वादिति** "आदिरन्त्येने"त्येतदपेक्षया "तस्य लोप" इत्यस्येत्यादिः । **नित्यत्वादिति**-कृताकृतप्रसङ्गित्वेनेत्यादिः । **प्रतिबद्धं**-सम्बद्धम् ।

उद्द्योते—**एवञ्च**-परत्वान्नित्यत्वाद्वाऽन्तरङ्गत्वाद्वा तस्य तद्बाधकत्वे च । **सर्वतः**—सकलसंज्ञातः । **एवमपीति**-लोपस्य बलवत्त्वेऽपीत्यर्थः। हल्प्रत्याहारसिद्धेः पूर्वमच्पदार्थसिद्ध्यभावेन "उपदेशेऽजि"त्यस्य वाक्यार्थाभावात् लण्घटकाकारस्येत्संज्ञालोपयोरभावेनेति शेषः। **तस्य**-लण्सूत्रस्थाकारस्य । तथा च तस्य विचारकोटिप्रविष्टत्वाभावात् समाधानाविषयत्वेऽपि न क्षतिरिति भावः । एवञ्च अनुबन्धाः ( अच् ) प्रत्याहारजन्यबोधविषयत्वाभाववन्तः आचार्यकर्तृकाच्सन्धिनिमित्तत्वेनानाश्रितत्वात्, अप्रधानत्वाच्च, लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वाच्चेति अनुमानप्रयोग. सिद्धः ।

( ८१ सिद्धान्तसमाधानरीत्यन्तरवार्तिकम् ॥ २२ ॥ )

**॥ ❀ ॥ ऊकालोऽजिति वा योगस्तत्कालानां यथा भवेत् । अचां ग्रहणमच्कार्यं तेनैषां न भविष्यति ॥ ❀ ॥**

( भाष्यम् )

**अथवा योगविभागः करिष्यते—"ऊकालोऽच्" उ ऊ ऊ३ इत्येवं कालोऽज्भवति । ततो "ह्रस्वदीर्घप्लुतः" ह्रस्वदीर्घप्लुतसंज्ञश्च भवति—ऊकालोच् ॥**

**( प्रदीपः )** ऊकालोऽजिति । सिद्धेऽच्त्वे योगविभागेन कालविशेषावच्छिन्नस्याच्त्वं नियम्यते ततोऽनुबन्धानामूकालत्वाभावादच्त्वाभावः ॥

**( उद्द्योतः )** भाष्ये **तत्कालानामचां ग्रहणमच्पदेन यथा स्या**दिति योगविभागः कार्यं इत्यन्वयः ॥ **सिद्धेऽच्त्व इति ।** अकारादीनामुपदेशात्सवर्णग्रहणाच्चेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—न्यायव्यवहाराद्यनभिज्ञं प्रति समाधानान्तरमाह-**ऊकालोऽजितीति । तत्कालानाम्**—उ ऊ उ३ इत्येवं कालानाम् । **ग्रहणमिति**-अच्संज्ञायामित्यादिः । **अच्कार्यम्**—अच्संज्ञारूपकार्यम् । **तेन**-ऊकालत्वाभावेन । **एषाम्—**अनुबन्धानाम् । **अथवेति**-ऊकालोऽज्ह्रस्वदीर्घप्लुत इत्यत्रेति शेषः ।

प्रदीपे—**सिद्धे इति**-आदिरन्त्येनेत्यनेनैवेत्यादिः । **अच्त्वम्**—अच्संज्ञाबोध्यत्वम् । **ततः**-तादृशस्य तत्त्वनियमनात् ।

उद्द्योते—**इति**-इति हेतोः ।

( आक्षेपभाष्यम् )

**एवमपि कुक्कुट इत्यत्रापि प्राप्नोति ॥**

**( प्रदीपः ) एवमपीति ।** ककाराकृतेरुपदेशान्मात्रिकस्याच्त्वं मन्यते ॥

**( उद्द्योतः )** ननु ककारद्वयस्य मात्रिकवर्णत्वं कथम् , एकस्यैव ऋलृगित्यत्रोपदेशादत आह—**ककाराकृतेरिति** ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी तत्र दोषमाह-**एवमपीति । अपीति**-क्क् इत्यस्य ऊकालत्वादच्त्वमिति शेषः ।

प्रदीपे—**मात्रिकस्येति**-क्क् इत्यस्य ऊकालत्वादिति शेषः ।

( समाधानभाष्यम् )

**तस्मात्पूर्वोक्त एव परिहारः ॥**

**( प्रदीपः )** अत्र च यद्यप्ययं परिहारोऽस्ति, **द्वावेतौ ककारौ, न च वर्णद्वयेनैका जातिर्व्यज्यते** इति । तथापि पूर्वमेव **मात्राकालोऽत्र गम्यते । न च मात्रिकं व्यञ्जनमस्ती**त्युक्तत्वात्पुनरिह **नोक्तः** ॥

**( उद्द्योतः ) न च वर्णद्वयेनेति ।** जातिरपि स्वपर्याप्त्यधिकरणव्यङ्ग्यैव तद्द्वारैव च कार्यभागिति भावः ॥

**( तत्त्वालोकः )** भाष्ये-सिद्धान्ती तं परिहरति-**तस्मादिति ।** यतोऽत्र "न च मात्रिकं व्यञ्जनमस्ती"ति एओङिति सूत्रोक्तरीत्या न दोषप्राप्तिरित्यादिः । **पूर्वोक्त एव**-एओङिति सूत्रोक्त एव । अस्य **अत्रेति शेषः** ।

प्रदीपे—**कत्वादिजातिः** प्रत्येकं पर्याप्ता, न तु द्वित्वादिवत् व्यासज्यवृत्तिरित्याशयेनाह-**न चेति । पुनरिहेति**-तेनैवात्र परिहारसम्भवादित्यादिः । स "द्वावेताविति" परिहार इति शेषः ।

उद्द्योते—**तद्द्वारा**-स्वपर्याप्त्यधिकरणद्वारा ।

( भाष्यम् )

**एष एवार्थः ॥ अपर आह—**

**॥ ❀ ॥ ह्रस्वादीनां वचनात् प्राग्यावत्तावदेव योगोऽस्तु । अच्कार्याणि यथा स्युस्तत्कालेष्वच्सु कार्याणि ॥ ❀ ॥**

**( उद्द्योतः )** भाष्ये **एष एवार्थ इति ।** अपर आहेत्यादिना वार्तिककृतोक्त इत्यर्थः ॥ **ह्रस्वादीनामिति । ह्रस्वदीर्घप्लुत** इत्यतः प्राग्यावद् **ऊकालोऽजिति** तावदेवास्तु पृथक्सूत्रम् । फलं दर्शयति—**अच्कार्याणीति ।** अज्निमित्तकार्याणि । तत्कालेष्वच्सु कर्तुमर्हाणि यथा स्युरित्यन्वयः ॥

**( तत्त्वालोकः )** भाष्ये-एवम् ऊकालोऽजितीति समाधानस्यादुष्टत्वादेव तत् ऋष्यन्तरवचनेन समर्थयति-**एष एवेति । तत्कालेषु**-ऊकालेषु ।

( इति प्रत्याहारेष्वितां ग्रहणाभावाधिकरणम् ॥ )

---

( 'अणुदित्' सूत्रेऽण्पदप्रयोजनाधिकरणम् ॥ )

( आक्षेपभाष्यम् )

**अथ किमर्थमन्तःस्थानामण्सूपदेशः क्रियते ? ।**

**( प्रदीपः ) अथ किमर्थमिति ।** अणुदित्सवर्णस्येति कस्मान्न कृतमिति प्रश्नः ॥ **इण्ग्रहणेन** ग्रहणार्थस्त्वन्तःस्थानामत्रावश्यकर्तव्य उपदेशो—गीर्ष्वित्यादौ मूर्धन्यो यथा स्यादिति ॥

**( उद्द्योतः )** अणः + सुष्ठूपदेशः = **अणसूपदेशः** = अणशब्दोच्चारणम् । तदन्तःस्थानां बोधकम् **अणुदिदि**त्यत्र किमर्थं क्रियत इत्यर्थो भाष्यस्येत्याह—**अणुदिदिति ॥ अण्सु** अण्मध्ये । तेनात्र स्थाने किमर्थ उपदेश इति तु नार्थ इत्याह—**इण्ग्रहणेनेति ॥**

**( तत्त्वालोकः )** भाष्ये—प्रसङ्गात् यरलवानामण्मध्ये उपदेशस्य प्रयोजनं पृच्छति-**अथेति ।** प्रदीपे-**अत्र** -अक्षरसमाम्नाये यथास्थानम् । **इति**-इति हेतोः । उद्द्योते-**अत्र स्थाने**-वर्णसमाम्नाये यथास्थानम् ।

( समाधानभाष्यम् )

**इह सय्ँय्ँयन्ता सव्ँव्ँवत्सरः यल्ँल्ँलोकं तल्ँल्ँलोकमिति परसवर्णस्यासिद्धत्वादनुस्वारस्यैव द्विर्वचनम् । तत्र परस्य परसवर्णे कृते तस्य यय्ग्रहणेन ग्रहणाद् पूर्वस्यापि परसवर्णो यथा स्यात् ॥**

**( उद्द्योतः ) इह सय्ँय्ँयन्ते**त्यादिभाष्यं **गुणा भेदका** इति पक्षे । भेदकत्वपक्षे चेदमेवाण्ग्रहणं मानमिति भावः । यथास्थितसूत्रन्यासे **इदम्** । जातिपक्षेणाण्ग्रहणप्रत्याख्याने तु न कश्चिद्विचारः । एवं **गुणा अभेदका** इति न्याय्यपक्षेपि न विचार इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये-समाधत्ते—**इहेति । परसवर्णस्येति**-द्विर्वचनापेक्षयेत्यादिः । **अनुस्वारस्येति**-अपवादे परसवर्णे तिरोहिते पूर्वमित्यादिः । **पूर्वेण**-मस्य परसवर्णस्य च व्यावृत्तिः । **परस्य**-अनुस्वा-

रयोः परस्य । तस्य-सानुनासिकस्य यँ इत्यस्य । अणुदित्सूत्रं अण्ग्रहणाकरणे वर्णसमाम्नायपठितनिरनुनासिकयकारघटितयग्ग्रहणेन तस्याग्रहणात् तस्मिन् परे पूर्वस्य परसवर्णो न स्यादिति भावः । पूर्वस्येति-तस्मिन् परे इत्यादिः ।

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । वक्ष्यत्येतत् ,—*द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम्* इति । यावता सिद्धत्वमुच्यते परसवर्ण एव तावद्भवति ॥**

( उद्द्योतः ) भाष्ये वक्ष्यत्येतदिति । सिद्धत्ववचनं चावश्यकम् । अन्यथा परस्यानुस्वारस्य वा पदान्तस्येति परसवर्णे तस्यासिद्धत्वात्पूर्वस्यानुस्वारस्य ययीत्यस्याप्राप्तौ रूपासिद्धयापत्तेः ॥

( तत्त्वालोकः ) भाष्ये-परसवर्णत्वमिति-इदं "पूर्वत्रासिद्धीयमद्विर्वचने" इति परिभाषाया अप्युपलक्षणमिति भावः । यावता-यतः । परेति-अत इत्यादिः । एवेन द्वित्वव्यावृत्तिः । इदानीं परसवर्णस्य यग्ग्रहणेनाग्रहणात् । तावदिति-वाक्यालङ्कारे ।

( समाधानसाधकभाष्यम् )

**परसवर्णे तर्हि कृते तस्य यग्ग्रहणेन ग्रहणाद्द्विर्वचनं यथा स्यात् ॥**

( उद्द्योतः ) तर्हि द्विर्वचनसिद्धिरेव फलमित्याह—परसवर्णे तर्हीति ॥

( तत्त्वालोकः ) भाष्ये—तस्य-सानुनासिकयँ इत्यस्य । उद्द्योते—तर्हि-एवं तस्य प्रथमप्रयोजने खण्डिते । अस्य तत्रेति शेषः । फलमिति-तस्येत्यादिः ।

( समाधानबाधकभाष्यम् )

**मा भूद् द्विर्वचनम् ॥**

( तत्त्वालोकः ) तस्य द्वितीयमपि प्रयोजनं निकारोत्येकदेशी—मा भूदिति ।

( समाधानसाधकभाष्यम् )

**ननु च भेदो भवति-सति द्विर्वचने त्रियकारकम् , असति द्विर्वचने द्वियकारकम् ॥**

( प्रदीपः ) ननु च भेद इति । श्रुतिकृतोऽस्त्येव भेदः सूक्ष्मत्वात्तु दुर्लक्ष्यः ॥

( उद्द्योतः ) ननु न भेदोऽनुपलब्धेरत आह-श्रुतिकृत इति ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते-ननु चेति । तत्र द्विर्वचनकरणाकरणयोः उच्चारणे रूपे वेति शेषः ।

प्रदीपे—स्त्विति-स इति शेषः ।

उद्द्योते—"व्यञ्जनपरस्यैकस्यानेकस्य वोच्चारणे विशेषो नास्ति" इति भाष्यमनुसृत्याह-अनुपलब्धेरिति ।

( समाधानबाधकभाष्यम् )

**नास्ति भेदः, सत्यपि द्विर्वचने द्वियकारकमेव ॥**

**कथम् ? ॥**

**"हलो यमां यमि लोपः" इत्येवमेकस्य लोपेन भवितव्यम् ॥**

( तत्त्वालोकः ) खण्डयितैकदेशी आह-नास्तीति । कुत इत्यत आह-सत्यपीति । यत इत्यादिः ।

( समाधानसाधकभाष्यम् )

**एवमपि भेदः । सति द्विर्वचने कदाचिद्द्वियकारकम् , कदाचित् त्रियकारकम् । असति द्वियकारकमेव ॥ स एष कथं भेदो न स्यात् ? ॥ यदि नित्यो लोपः स्यात् । विभाषा च स लोपः ॥**

( उद्द्योतः ) भाष्ये यदि नित्यो लोपः स्यादिति । तदा भेदो न स्यादित्यर्थः ॥ विभाषा चेति । चस्त्वर्थे ॥

( तत्त्वालोकः ) सिद्धान्ती उत्तरयति-एवमपीति । द्विर्वचने सति एकस्य लोपे कृतेऽपीत्यर्थः । तत्र द्विर्वचनकरणाकरणयोरिति शेषः । लोपस्य वैकल्पिकत्वाभिप्रायेणाह-कदाचिदिति । असति-असति द्वित्वे । प्रश्नपूर्वकं भेदमुपसंहरति-स एष इति । प्रश्नस्यासम्भावनारूपमुत्तरमाह -यदीति । असम्भावनामेव दर्शयति-विभाषेति ।

( समाधानबाधकैकदेशिभाष्यम् )

**यथाऽभेदस्तथास्तु ॥**

( उद्द्योतः ) एकदेश्याह— यथाऽभेद इति । यथा द्विर्वचनप्रवृत्त्यप्रवृत्त्योर्भेदो न भवति तथैवास्तु । मानुवृत्तद् विभाषाग्रहणमिति भावः ॥

( समाधानसाधकसिद्धान्तिवार्तिकम् )

**॥ * ॥ अनुवर्तते विभाषा, शरोऽचि यद्बारयत्ययं द्वित्वम् ॥ * ॥**

( भाष्यम् )

**यदयं "शरोऽचि" इति द्विर्वचनप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो- ऽनुवर्तते विभाषेति ॥**

( तत्त्वालोकः ) अनुवर्तत इति—झयो होऽन्यतरस्यामिति सूत्रादित्यादिः । कथं ज्ञायते इत्यत आह-शरोचीति । शरोऽचीत्यनेनेत्यर्थः । यत्-यस्मात् । एवमग्रेऽपि । अयम्-आचार्यः । एवमग्रेऽपि । तत्-तस्मात् ।

( जिज्ञासाभाष्यम् )

**कथं कृत्वा ज्ञापकम् ?**

( तस्यैव हेतुसूचकमुत्तरार्धम् )

**॥ * ॥ नित्ये हि तस्य लोपे प्रतिषेधार्थो न कश्चित्स्यात् ॥ * ॥**

( भाष्यम् )

**यदि नित्यो लोपः स्यात्, प्रतिषेधवचनमनर्थकं स्यात् । अस्त्वत्र द्विर्वचनम्, "झरो झरि सवर्णे" इति लोपो भविष्यति । पश्यति त्वाचार्यः—विभाषा सलोप इति ततो द्विर्वचनप्रतिषेधं शास्ति ॥**

( उद्द्योतः ) तृतीयो ज्ञापकमुपन्यस्यति— अनुवर्तत इत्यादिना । झरो झरीति लोपे इत्यर्थः । मध्यस्थतया हलो यमामित्यस्यापि वैकल्पिकत्वं सिद्धमिति भावः ।

( तत्त्वालोकः ) हि-यतः । तस्य-शरः । एवमग्रेऽपि । लोपे-झरो झरीति लोपे । एवमग्रेऽपि । स्यादिति-तर्हीति शेषः । कुत

इत्यत आह-**अस्त्विति**। यत इत्यादिः। **अत्र**-गीर्ष्वित्यादौ। स लोपः-झरो झरीति लोपः।

**( समाधानबाधकभाष्यम् )**

नैतदस्ति ज्ञापकम्। नित्येपि तस्य लोपे स प्रतिषेधोऽवश्यं वक्तव्यः। यदेतद् "अचो रहाभ्याम्" इति द्विर्वचनम् लोपापवादः स विज्ञायते ॥

कथम् ? ॥

यर इत्युच्यते ॥ एतावन्तश्च यरः। यदुत झरो वा यमो वा। यदि चात्र लोपः स्याद्द्विर्वचनमनर्थकं स्यात् ॥

किं तर्हि तयोर्योगयोरुदाहरणम् ? ॥

यदकृते द्विर्वचने त्र्यञ्जनः संयोगः—प्रत्तम् अवत्तम् आदित्यः ॥ इहेदानीं कर्त्ता हर्त्तेति द्विर्वचनसामर्थ्याल्लोपो न भवति। एवमिहापि लोपो न स्यात्कर्षति वर्षतीति। तस्मान्नित्येऽपि लोपेऽवश्यं स प्रतिषेधो वक्तव्यः ॥

**( उद्द्योतः ) लोपापवाद इति**। यद्यपि हर्यनुभव इत्यादौ तदुदाहरणे लोपेऽप्राप्तेपि द्विर्वचनमारभ्यते तथापि कृते द्वित्वे पश्चाल्लोपेऽपि द्विर्वचनं व्यर्थमित्याशयेनापवादत्वोक्तिरिति भावः ॥ **तयोर्योगयोः**। लोपविधायकयोः ॥ **प्रत्त**मित्यादौ दाधातोः क्ते आतस्तकारोऽच उपसर्गादित्यनेन। आदित्ये आदित्याद्भवाद्यर्थण्यान्ताण्ण्यः ॥

**( तत्त्वालोकः )** स एकदेशी निराकरोति-**नैतदिति**। कुत इत्यत आह-**नित्ये इति**-यत इत्यादिः। **सः**-शरोऽचीति। **लोपापवादः स इति**-तस्य लोपापवादत्वाभावे सर्वत्र लोपस्य प्रवृत्या क्वचिदपि द्वित्वश्रवणासम्भवात् द्वित्वविधिवैयर्थ्यापात इति तस्य लोपापवादता। ततश्च कर्षतीत्यादौ द्विषकारश्रवणनिवृत्तये शरोऽचीति द्वित्वप्रतिषेधवचनमावश्यकमिति भावः। **कथमिति** स लोपापवाद इतिशेषः। **यर इति**-यत इत्यादिः **उच्यते इति**-द्वित्वविधावित्यादिः। कियन्त इत्य। आह-**यदुतेति**। **अत्रेति**-झरो झरीत्यनेन हलो यमामित्यनेन वेति शेषः। **स्यादिति**-तर्हीति शेषः। **तर्हि**-तस्य लोपापवादत्वे। **त्र्यञ्जनः संयोग इति**-त्रीणि व्यञ्जनानि यस्यावयवाः स त्र्यञ्जनः, संयोगः समुदाय इत्यर्थः। बहूनां समवाये द्वयोर्द्वयोरेव संयोगसंज्ञेति सिद्धान्तिततया यथाश्रुतस्यायुक्तत्वात्। **इदानीं**—लोपस्य नित्यत्वे।

**( उपसंहारभाष्यम् )**

तदेतदत्यन्तं संदिग्धं वर्तते—आचार्याणां विभाषानुवर्तते नवेति ॥ ५ ॥

**( प्रदीपः ) तदेतदिति**। ज्ञापकत्वमस्य विघटयति ॥ आचार्योपदेशपारम्पर्यात्तु ज्ञायते—अनुवर्तते विभाषेति। तस्मात्त्रिव्यञ्जनसंयोगश्रवणायाणुदिदिति णकारेण प्रत्याहारः कृतो न चकारेणेति स्थितम् ॥ ५ ॥

**( उद्द्योतः )** तद्व्याचष्टे—**ज्ञापकत्वमस्य विघटयतीति**। सर्वथाऽसंभवीत्युपसंहरतीत्यर्थः ॥ ज्ञापकेन तदनुवृत्तिं साधयतस्तत्खण्डनेऽनुवृत्तिः संदिग्धैवेति भावः ॥ **लण्सूत्रे विभाषा सलोप** इत्युक्तेराह—**आचार्येति**। अण्ग्रहणाज् ज्ञापकादित्यपि कश्चित्। तत्तु वार्तिककृताण्ग्रहणप्रत्याख्यानान्नोक्तम् ॥ ५ ॥

**( तत्त्वालोकः )** भाष्ये—कृततज्ज्ञापकत्वखण्डनं प्रकृते योजयन्नुपसंहरति-**तदिति**। तस्मादित्यर्थः। यस्मात् लोपस्य नित्यत्वेऽपि शरोऽचीति द्वित्वप्रतिषेधवचनं वक्तव्यमित्यादिः।

प्रदीपे—**ज्ञापकत्वं**-लोपविधायकसूत्रे विभाषानुवर्तनज्ञापकत्वम्। **अस्य**-शरोऽचीत्यस्य। **इति**-इत्यत्र।

उद्द्योते—**तदनुवृत्तिमिति**-विभाषाऽनुवृत्तिमित्यर्थः। तत्रेत्यादिः। **तत्खण्डने**-ज्ञापकखण्डने।

---

# ( शिवसूत्रम् )

# लण् ॥ ६ ॥

**( व्याख्यानत इति परिभाषाधिकरणम् )**

**( आक्षेपभाष्यम् )**

अयं णकारो द्विरनुबध्यते पूर्वश्चैव परश्च। तत्राण्ग्रहणेष्विण्ग्रहणेषु च संदेहो भवति—पूर्वेण वा स्युः, परेण वेति ॥

**( प्रदीपः )** लण् ॥ ६ ॥ संदेहो भवतीति। किं प्रत्यासत्तिराश्रीयतेऽथ व्याप्तिरिति संदेहः ॥

**( उद्द्योतः )** लण् ॥ ६ ॥ किमिति। क्व प्रत्यासत्तिः, क्व व्याप्तिरिति सन्देह इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एव**-अपि। अयं मध्यमणिन्यायेनोभयत्रान्वेति। **पूर्वेणेति**-णकारेणेति शेषः। एवमग्रेऽपि। **स्युरिति**—अण्ग्रहणानि इण्ग्रहणानि चेत्यादिः।

प्रदीपे—**किमिति**-णकाराश्रयणे इति शेषः। **प्रत्यासत्तिः**—सामीप्यम्। **अथ**-अथवा। **व्याप्तिः**-अधिकव्यापनम्। तथा च अणपदम् अकारादिपूर्वणकारान्तबोध्यवर्णवृत्तिजात्यवच्छिन्नबोधतात्पर्येणोच्चारितम् अथवा अकारादि परणकारान्तबोध्यवर्णवृत्तिजात्यवच्छिन्नबोधतात्पर्येणेति सन्देहः फलितः। एवमिण् विषयेऽपि ऊह्यो विधेयः।

**( प्रत्याक्षेपभाष्यम् )**

कतमस्मिंस्तावदण्ग्रहणे संदेहः ? ॥

**( उद्द्योतः )** भाष्ये **कतमस्मिन्निति**। वक्ष्यमाणरीत्या सर्वत्र निर्णायकसत्वात्प्रश्नः ॥ **कतरस्मिन्निति** पाठेपि डतरादिविधौ उपाधिप्रत्याख्यानान्न दोष इति बोध्यम् ॥

**(तत्त्वालोकः)** उद्द्योते-**उपाधीति**-द्वयोरेकस्येत्येवं रूपेत्यादिः।

**( प्रत्याक्षेपसमाधानभाष्यम् )**

"ढ्लोपे पूर्वस्य दीर्घोऽणः" इति ॥

**(तत्त्वा०) इतीति**—इत्यत्रेत्यर्थः। अण्ग्रहणे सन्देह इति शेषः।

**( ८२ सिद्धान्तिसमाधानवार्तिकम् ॥ १ ॥ )**

## [ ॥ * ॥ असंदिग्धम् ॥ * ॥ ]

**( भाष्यम् )**

असंदिग्धम्—पूर्वेण, न परेण ॥

**( तत्त्वालोकः )**—"असन्दिग्धं, पराभावात्, सवर्णेऽण् तपरं ह्युऋत्। य्वोरन्यत्र परेणेण् स्यात्, व्याख्यानाच्च द्विरुक्तितः" इति श्लोकवार्तिकं समाधानाय खण्डशो व्याचष्टे-**असन्दिग्धमिति**। **पूर्वेणेति** तत्राणित्यादिः। एवमग्रेऽपि। **परेण**-परेणेति। एवमग्रेऽपि।

( हेत्वाक्षेपभाष्यम् )

कुत एतत् ? ॥

( ८३ सिद्धान्त्येकदेशिहेतुवार्तिकम् ॥ २ ॥ )

॥ * ॥ पराभावात् ॥ * ॥

( भाष्यम् )

नहि ढ्लोपे परेऽणः सन्ति ॥

( उद्द्योतः ) नहि ढ्लोप इति । वर्ढेत्यादौ गुणोऽसिद्ध इति भावः ॥

( तत्त्वालोकः ) भाष्ये—पराभावात्—ढरेफलोपनिमित्तपरकस्य पूर्वणकारघटिताणग्राह्यभिन्नस्य परणकारघटिताणग्राह्यस्य अभावात् । हि—यतः । ढ्लोपे—ढरेफलोपनिमित्तपरकाः । परेऽणः—पूर्वणकारघटिताणग्राह्यभिन्नाः परणकारघटिताणग्राह्याः । ढरेफलोपनिमित्तपरकाः पूर्वणकारघटिताणग्राह्या एव सन्तीति भावः ।

उद्द्योते—ननु वृहूधातोस्तृचि ऊदित्त्वादिड्भावे गुणे रपरे ढत्वधत्वष्टुत्वढलोपेषु कृतेषु रेफस्य दीर्घे स्थानसाम्यादृकारे जाते ढलोपस्यासिद्धत्वात् "उपधायाश्च"तीत्त्वे रपरे पूर्वेण सह "आद्गुण" इति गुणे कृते वेढेंति यथा स्यादित्येतदर्थं परणकारेणाणग्रहणं स्यादित्यत आह—वर्ढेत्यादाविति । अन्तरङ्गपरिभाषया पूर्वं इति शेषः । तथा च वर्ढेत्याद्येव रूपमिष्टं न तु वेर्ढेत्यादीति भावः ।

( हेतुनिरासभाष्यम् )

ननु चायमस्ति—आतृढ आवृढ इति ॥

( तत्त्वालोकः ) अयं—ढलोपनिमित्तपरकः पूर्वणकारकाणग्राह्यभिन्नः परणकारकाणग्राह्यः ऋकारः । इति—इत्यत्र ।

( सिद्धान्तिसमाधानभाष्यम् )

एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्याद् "ढ्लोपे पूर्वस्य दीर्घोऽचः—" इत्येव ब्रूयात् ॥ अथ वैतदपि न ब्रूयाद् । अचो ह्येतद्भवति—ह्रस्वो दीर्घः प्लुत इति ॥

( उद्द्योतः ) दीर्घोऽच इत्येवेति । मात्रालाघवाभावेपि संग्राह्यलाघवायासंदेहाय चेति भावः ॥ [ भाष्ये अचो हीति । अचश्चेति परिभाषणादिति भावः ॥ ]

( तत्त्वालोकः ) भाष्ये—पूर्वेणेति—तत्राणित्यादिः । हि—यतः । स्यादिति—तत्राणित्यादिः । तर्हि तत्रेति शेषः । हि—यतः ।

( आक्षेपभाष्यम् )

अस्मिंस्तर्ह्यण्ग्रहणे संदेहः—"केऽणः" इति ॥

( समाधानभाष्यम् )

असंदिग्धं पूर्वेण, न परेण ॥

कुत एतत् ? ॥

पराभावात् ॥

न हि के परेऽणः सन्ति ॥

( प्रदीपः ) नहि के पर इति । नन्वश्वपोपानदुपानत्केति ह्रस्वे कर्तव्ये 'नहो धः' इत्यस्यासिद्धत्वादस्ति के परतो इकारः तथा गोध्केत्यादौ रेफः ॥ अत्राहुः । न त्वु न इत्यत्र नेति योगविभागेन धत्वादीनामसिद्धत्वाभावात्तेषु च कृतेषु इकारादीनामभावः ॥

( उद्द्योतः ) तथा गोध्केति । विसर्गस्यासिद्धत्वादिति भावः ॥ तेषु च कृतेष्विति । परत्वादिति भावः । योगविभागस्य भाष्यानारूढत्वाद्गोकेत्यादिभाष्यात्के परे इति भाष्याच्च तेषामनभिधानं वक्तुं युक्तम् ॥

( तत्त्वालोकः ) भाष्ये—पराभावात्—कपरकस्य पूर्वणकारकाणग्राह्यभिन्नस्य परणकारकाणग्राह्यस्य अभावात् । हि—यतः । के—कपरकाः । परेऽणः—पूर्वणकारकाणग्राह्यभिन्नाः परणकारकाणग्राह्याः । एवमग्रेऽपि ।

प्रदीपे—इति—इत्यत्र । रेफ इति—कपरक इत्यादिः । तेषु—धत्वादिषु । उद्द्योते—तेषाम्—अश्वोपानदुपानत्केत्यादीनाम् ।

( हेतुनिरासभाष्यम् )

ननु चायमस्ति—गोका नौकेति ॥

( तत्त्वालोकः ) अयं—कपरकः पूर्वणकारकाणग्राह्यान्यः परणकारकाणग्राह्य ओकारः । इति—इत्यत्र ।

( सिद्धान्तिभाष्यम् )

एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्यादण्ग्रहणमनर्थकं स्यात् । "केऽचः" इत्येव ब्रूयाद् । अथवैतदपि न ब्रूयात् । अचो ह्येतद्भवति—ह्रस्वो दीर्घः प्लुत इति ॥

( तत्त्वालोकः ) पूर्वेणेति—तत्राणित्यादिः । हि—यतः । स्यादिति—तत्राणित्यादिः । तर्हि तत्रेति शेषः । हि—यतः ।

( आक्षेपभाष्यम् )

अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥

( समाधानभाष्यम् )

असंदिग्धं पूर्वेण, न परेण ॥

कुत एतत् ? ॥

पराभावात् । न हि पदान्ताः परेऽणः सन्ति ॥

( प्रदीपः ) न हि पदान्ता इति ॥ ननु च भोभगोइत्यत्राश्ग्रहणस्य प्रयोजनं वक्ष्यते वृक्षव् करोतीत्यत्र हलि सर्वेषामिति लोपो मा भूद् इति । [ तत्र वृक्षं वृश्चतीति क्विपि कृते वृक्षवृश्चमाचष्टे इति णिचि टिलोपे च कृते वृक्षवयतेर्विचि कृते वृक्षव् इति भवति । क्विपि तु क्वौ लुप्तं क्वौ विधिं प्रति च न स्थानिवदिति निषेधात्संप्रसारणप्रसक्तौ लोपोव्योर्वलीति वलोपप्रसङ्गश्च । विचि तु स्थानिवद्भावाद्वलनिमित्तो लोपो न भवति । हलि सर्वेषामित्यनेन तु लोपे क्रियमाणे पूर्वत्रासिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधाद्वलोपः प्राप्तोऽश्ग्रहणानुवृत्त्या निवर्त्यते ॥ ] तत्कथमुच्यते—न हि पदान्ता इति ॥ उच्यते—अप्रगृह्यस्येति पर्युदासेनाच एवानुनासिकेन भाव्यं न तु हल इत्युक्तं—न हि पदान्ता इति । कार्यभाज इत्यर्थः ॥

( उद्द्योतः ) न हि पदान्ता इति । पदानामेवानुनासिकोऽवसाने जायत इत्याश्रित्येदमुक्तम् । न तु तत्र पदान्ताधिकारोऽस्ति ॥ लोप इति । अश्ग्रहणं इको विशेषणादिति भावः ॥

[ **निषेधात्संप्रसारणप्रसङ्ग इति ।** चिन्त्यमिदम् । णौ परतस्तत्प्रकृतिभूतप्रातिपदिकस्य टिलोपविधानेन वृश्चतेः स्थानित्वे मानाभावेन वकारे **एकदेशविकृत**न्यायेन वृश्चतित्वस्य दुर्लभत्वात् । अर्धाधिकविकारेण प्रत्यभिज्ञाभावाच्च । अत एव राजकीयमित्यादौ **अल्लोपो न ।** व्रश्च एव टिलोपस्थानित्वे तु प्रकृतिभावापत्तिः । एतेन विचि **एकदेशविकृत**न्यायेन वृश्चतित्वात्षत्वापत्तिः । न च णिलोपस्य स्थानिवत्त्वान्न षत्वम् । पूर्वत्रासिद्धीये तन्निषेधादिति परास्तम् ॥ न च **व्रश्चेति** सूत्रे पदाधिकारेण व्रश्चान्तत्व**मेकदेशविकृत**न्यायेन सुलभमिति वाच्यम् । **स्कोरि**ति सूत्रादन्ते ग्रहणमनुवर्त्य वैयधिकरण्येनैवान्वयाश्रयणेनादोषात् । अत एवान्तेग्रहणं चरितार्थम् । अर्धाधिकविकाराच्च । एवं च वृक्षभृज्जो णिजन्तात्क्विपि वृक्षम् इत्यादौ षत्वं नेत्याहुः ॥ **वलोपप्रसङ्गश्चेति ।** इदमुपलक्षणं क्वौ विधौ स्थानिवत्त्वनिषेधादूठ्प्रसङ्गश्चेत्यपि बोध्यम् ॥] **पर्युदासेनेति ।** क्रियमाणेऽप्यण्ग्रहणे इत्यर्थः ॥ भाष्येपि न सत्त्वं निषिध्यते किं तु कार्यित्वमेवेत्याह—**कार्यभाज इति ।** एवं चानुनासिकप्राप्तियोग्याः पदान्ता न सन्तीत्यर्थः ॥ वस्तुतोऽस्या अग्रे सिद्धान्त्युक्तित्वेन तदज्ञानेनैव पूर्वपक्षस्यौचित्येनैवं भाष्यव्याख्यानमनुचितम् , पूर्वपक्षस्य संदेहस्य चानुत्थानात् ॥ तस्मादष्टमाध्यायस्थं भाष्यमेकदेश्युक्तिरित्येवोचितम् । व्याख्यातं च तत्रोपाध्यायैरित्थमेव ॥

**( तत्त्वालोकः )** भाष्ये—**पराभावात्**—पदचरमावयवीभूतस्य पूर्वणकारकाण्ग्राह्याभिन्नस्य परणकारकाण्ग्राह्यस्य अभावात् । हि—यतः ।

प्रदीपे—**निषेधादिति**—णिलोपस्य स्थानिवद्भावेत्यादिः । **सम्प्रसारणेति**—ग्रहिज्येत्यनेनेत्यादिः । **स्थानिवद्भावादिति**—णिलोपस्येत्यादिः । **स्थानिवत्त्वेति**—णिलोपस्येत्यादिः । **इत्युक्तम्**—इत्याशयेनोक्तम् ।

उद्द्योते—नन्वेवमपि लौकिकन्यायेन वकारे वृश्चतित्वं स्यादित्यत आह—**अर्धाधिकेति ।** ऋश्च इत्यस्य लोपेनेत्यर्थः । **प्रत्यभिज्ञेति**—वृश्चतित्वेत्यादिः । **अत एव**—अर्धन्यूनविकारे प्रत्यभिज्ञासत्त्वेन लौकिकन्यायप्रवृत्त्यङ्गीकारेऽपि अर्धप्रभृतिविकारे तदसत्त्वेन तत्प्रवृत्त्यनङ्गीकारादेव । **प्रकृतिभावेति**—प्रकृत्यैकाजिति सूत्रेणेत्यादिः । कैयटोक्तिं खण्डयितुमाह—**वस्तुत इति ।** **अस्याः**—अप्रगृह्यस्येत्याद्युक्तयुक्तेः । **पूर्वपक्षस्येति**—अष्टमाध्यायस्थस्येति शेषः । **तस्मादिति**—वृक्षवादिसाधनपरमिति शेषः ।

**( हेतुनिरासभाष्यम् )**

**ननु चायमस्ति—कर्तृ हर्तृ इति ॥**

**( उद्द्योतः )** भाष्ये **कर्तृ हर्त्रिति** एचामप्युपलक्षणम् । अत एवाचोऽप्रगृह्यस्येत्युक्तम् । अन्यथाऽकोऽप्रगृह्यस्येति वदेत् ॥

**( तत्त्वालोकः )** भाष्ये—**अयं** पदान्तः तादृशः **ऋ**कारः । **इति**—इत्यत्र ।

उद्द्योते—अग्ने, वायो, पचै, वायौ, इत्यादौ पदान्तानां पूर्वणकारकाण्ग्राह्याणां परणकारकाण्ग्राह्याणां सम्भवादाह—**एचामिति ।** **अत एव**—तस्य तदुपलक्षणत्वादेव । **अन्यथा**—तस्य तदुपलक्षणत्वाभावे ।

**( सिद्धान्तिभाष्यम् )**

**एवं तर्हि सामर्थ्यात्पूर्वेण, न परेण । यदि हि परेण स्याद्, अण्ग्रहणमनर्थकं स्याद् "अचोऽप्रगृह्यस्यानुनासिकः" इत्येव ब्रूयात् । अथवैतदपि न ब्रूयात् , अच एव हि प्रगृह्या भवन्ति ॥**

( प्रदीपः ) **अचोऽप्रगृह्यस्येति ।** हलो हि न भाव्यमित्यत्राण्ग्रहणसामर्थ्यात्पूर्वेणेति स्थितम् ॥

**( तत्त्वालोकः )** भाष्ये-**पूर्वेणेति**—तत्राणित्यादिः । हि—यतः । **स्यादिति**—तत्राणित्यादिः । तर्हि तत्रेति शेषः । अप्रगृह्यस्येति पर्युदासादाह—**अच एवेति ।** हि—यतः ।

प्रदीपे—हि-यतः । **भाव्यमिति**—अनुनासिकेनेत्यादिः । **इति**-इत्यतः ।

**( आक्षेपभाष्यम् )**

**अस्मिंस्तर्ह्यण्ग्रहणे संदेहः-"उरण्रपरः" इति ॥**

**( समाधानभाष्यम् )**

**असंदिग्धं पूर्वेण, न परेण ॥**

**कुत एतत् ? ॥**

**पराभावात् ।**

**न ह्यः स्थाने परेऽणः सन्ति ॥**

**( तत्त्वालोकः )** **पराभावात्**—ऋकारस्थानिकस्य तादृशस्य अभावात् ।

**( हेतुनिरासभाष्यम् )**

**ननु चायमस्ति-कर्त्रर्थं हर्त्रर्थमिति ।**

**( तत्त्वालोकः )** **अयं**—ऋस्थानिकः पूर्वणकारकाण्ग्राह्यः परणकारकाण्ग्राह्यः रेफः । **इति**—इत्यत्र ।

**( आपत्तिप्रश्नभाष्यम् )**

**किं च स्याद् यद्यत्र रपरत्वं स्याद् ? ॥**

**( तत्त्वालोकः )** उरणित्यत्र परणकारकाणमभ्युपेत्य पृच्छति—**किं चेति ।** **अत्र**—रेफे । **स्यादिति**—तर्हीति शेषः ।

**( आपत्तिदर्शनभाष्यम् )**

**द्वयो रेफयोः श्रवणं प्रसज्येत ॥**

**( आपत्तिबाधकभाष्यम् )**

**"हलो यमां यमि लोपः" इत्येवमेकस्यात्र लोपो भविष्यतीति ॥**

**( आपत्तिसाधकभाष्यम् )**

**विभाषा स लोपः, विभाषाश्रवणं प्रसज्येत ॥**

**( तत्त्वालोकः )** **सः**—हलो यमामिति ।

**( आपत्तिबाधकभाष्यम् )**

**अयं तर्हि नित्यो लोपः "रो रि" इति ॥**

**( उद्द्योतः )** भाष्ये **रो रीति ।** त्रिपाद्यां बहिरङ्गासिद्धत्वाभावादिति भावः ॥

**( आपत्तिसाधकभाष्यम् )**

**पदान्तस्येत्येवं सः ॥**

**( तत्त्वालोकः )** **सः**—रोरीति लोपः । एवमग्रेऽपि ।

**( आपत्तिबाधकभाष्यम् )**

**न शक्यः स पदान्तस्येत्येवं विज्ञातुम् । इह हि**

लोपो न स्यात्, -जॄधेर्लङ् अजर्वाः, पास्पर्द्धेः अपास्पाः इति ॥

( प्रदीपः ) अजर्वा इति । जॄधेर्यङ्लुकि रुगागमेऽभ्यासस्य कृते लङि सिपि शब्लुकि गुणरपरत्वसिब्लोपभष्भावजश्त्वरुत्व-रलोपदीर्घत्वेषु रूपम् ॥

( उद्द्योतः ) भषभावः । एकाचो बशो भषित्यनेन । तत्र ह्येकाच इति झषन्तस्येति च धातोरित्यपेक्षया व्यधिकरणषष्ठीति भावः ॥ रुत्वम् । ढ्रश्चेत्यनेन ॥

( तत्त्वालोकः ) भाष्ये—हीति—यत इत्यर्थः । तर्हीति शेषः ।

( आपत्तिसाधकभाष्यम् )

इह तर्हि-मातॄणां पितॄणामिति रपरत्वं प्रसज्येत ॥

( तत्त्वालोकः ) तर्हि—कर्त्रर्थमित्यादौ रेफस्य रपरत्वात् प्रसक्तयोः रेफयोरेकस्य रोरीति लोपेन रेफद्वयश्रवणप्रसङ्गवारणेऽपि । रपरत्वम्—ऋस्थानिकदीर्घॠकारस्य केवलपरणकारका ग्राह्यस्य रपरत्वात् रेफद्वयश्रवणम् ।

( आपत्तिबाधकभाष्यम् )

आचार्यप्रवृत्तिर्ज्ञापयति-नात्र रपरत्वं भवतीति । यदयम् "ॠत इद्धातोः" इति धातुग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम् ? ।

धातुग्रहणस्यैतत्प्रयोजनम्-इह मा भूत् मातॄणां पितॄणामिति । यदि चात्र रपरत्वं स्याद्धातुग्रहणमनर्थकं स्याद् । रपरत्वे कृतेऽनन्त्यत्वादित्त्वं न भविष्यति । पश्यति त्वाचार्यो-नात्र रपरत्वं भवतीति । ततो धातुग्रहणं करोति ॥

( तत्त्वालोकः ) अत्र—दीर्घॠकारे । यत्—यस्मात् । अयम्—आचार्यः । इति—इत्यत्र । कृत्वेति—तस्य तदिति शेषः । इहेति—इत्वमिति शेषः । स्यादिति—तर्हि तत्रेति शेषः । कुत इत्यत आह—रपरत्वे इति । यत इत्यादिः । अनन्त्यत्वादिति—ॠकारस्येत्यादिः ।

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि न प्राप्नोति-चिकीर्षति जिहीर्षतीति ॥

( प्रदीपः ) इहापि तर्हीति । धातुग्रहणेन हि लिङ्गेनाधातोरेव रपरत्वं निवर्तितम् । धातोस्तु रपरत्वे सत्यनन्त्यत्वान्न प्राप्नोतीति प्रश्नः ।

( उद्द्योतः ) भाष्ये इहापि तर्हि इत्यस्य—ॠत इत्वमिति शेषः ॥ ननु धातुग्रहणेन ॠकारस्य दीर्घो न रपर इति ज्ञापनादज्झनेति दीर्घस्याप्यरपरत्वात् कथमत्रेत्त्वाप्राप्तिरत आह—धातुग्रहणेनेति ॥

( तत्त्वालोकः ) प्रदीपे—हि—यतः । एवेति—ॠकारस्यैति शेषः । धातोस्त्विति—अत इत्यादिः । तस्येति शेषः । प्राप्नोतीति—इत्वमित्यादिः ।

( आपत्तिबाधकभाष्यम् )

मा भूदेवम् । "उपधायाश्च" इत्येवं भविष्यति ॥

( तत्त्वालोकः ) इत्येवमिति-इत्वं चिकीर्षतीत्यादाविति शेषः ।

( आपत्तिसाधकभाष्यम् )

इहापि तर्हि प्राप्नोति-मातॄणां पितॄणामिति ॥ तस्मात्तत्र धातुग्रहणं कर्तव्यम् ॥

( प्रदीपः ) इहापीति । तस्माद्धातुग्रहणस्य सप्रयोजनत्वान्न ज्ञापकत्वमित्यर्थः ॥

( उद्द्योतः ) भाष्ये तस्मात्तत्रेति न च इह किंचित्त्रपो इतीति न्यायेन ज्ञापकत्वमप्यस्त्विति वाच्यम् । गृह्वत्य देरनुकरणे प्रकृतिवदनुकरणमित्यस्याभावे प्रोयडीत्यादावित्त्वाभावार्थमिहापि तदावश्यकत्वात् । गत्यन्तराभावे एव तन्न्यायेन ज्ञापकत्वाश्रयणाच्च । तदाह—तस्मादिति । एवं च रपरत्वेऽपि मातॄणामित्यादौ उपधायाश्चेतीत्ववारणेन धातुग्रहणस्य चारितार्थ्येन रपरत्वनिवृत्तौ न ज्ञापकतेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—तर्हीति—उपधायाश्चेतीत्वमिति शेषः । तस्मादिति—उपधायाश्चेत्यत्र धातुग्रहणसम्बन्धाद्येति शेषः । तत्र-ॠत इदित्यत्र । तथा च तत्र धातुग्रहणस्य अधातोः ॠकारस्य रपरत्वं नेति ज्ञापकत्वासम्भवात् उरणित्यत्र परणकारेणाणग्रहणे मातॄणामित्यादौ रपरत्वं प्राप्नोत्येवेति भावः ।

उद्द्योते—इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् । स्वरो वै श्रूयमाणेऽपि लुप्ते किं न भविष्यति । रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि । नुड्वाच्य उत्तरार्थं तु इह किंचित् त्रपो इति ॥ इति इकोऽचि विभक्ताविति सूत्रस्थभाष्ये स्पष्टीकृतेन "इह किञ्चित् त्रपो इति" न्यायेन यथा इकोऽचीति सूत्रस्थाचीत्यस्य अस्थिदधीत्युत्तरसूत्रार्थमावश्यकत्वेऽपि इकोऽचीति सूत्रेऽचीति करणेन न लुमतेति निषेधस्यानित्यत्वज्ञापनात् त्रपो इत्यत्र गुणः साधितः । तथा ॠत इद्धातोरितिसूत्रस्थधातुग्रहणस्य उपधायाश्चेत्युत्तरसूत्रार्थमावश्यकत्वेऽपि ॠत इदित्यत्र धातोरितिकरणेन अधातोः ॠकारस्य रपरत्वं नेति ज्ञापनात् मातॄणामित्यादौ रपरत्वं न प्रसज्यते इत्याशयकेनाह—नचेति । तदावश्यकत्वात्—धातुग्रहणावश्यकत्वात् । तन्न्यायेन-इह किंचित् त्रपो इतीतिन्यायेन ।

( सिद्धान्तिसमाधानभाष्यम् )

एवं तर्हि-सामर्थ्यात्पूर्वेण, न परेण । यदि परेण स्याद्, अण्ग्रहणमनर्थकं स्याद् "उरृपरः" इत्येव ब्रूयात् ॥

( उद्द्योतः ) भाष्ये सामर्थ्यात्पूर्वेणेति । न च गम्लेत्यादौ यणादेशे लपरत्वार्थमेव परेणाण्ग्रहणं स्यादिति सामर्थ्यं कथम् । ॠकारांशे हल्रूपाणि रो रीति प्रवृत्त्या फलाभावेन तत्साहचर्याद् लृकारांशेपि हल्रूपाणि अप्रवृत्तिरित्याशयात् । रलयोः समानश्रुतित्वेन तत्रापि रो रीत्यस्य प्रवृत्तेरित्यन्ये ॥ लृकारे यण्घटितप्रयोगानभिधानमेवैतद्भाष्यप्रामाण्यादित्यन्ये ॥

( तत्त्वालोकः ) भाष्ये—पूर्वेणेति-उरणित्यत्राणित्यादिः । स्यादिति—तत्राणित्यादिः । तर्हि तत्रेति शेषः । ह्कारयकारवकाराणाम् उः स्थाने अविधानात्, रेफस्य तत्र विहितत्वेऽपि तत्र रोरीत्यनेन निर्वाहाच्चाह—इत्येवेति ।

( आक्षेपभाष्यम् )

अस्मिंस्तर्ह्यण्ग्रहणे सन्देहः—"अणुदित्सवर्णस्य चाप्रत्ययः" इति ।

( समाधानभाष्यम् )

असन्दिग्धं परेण, न पूर्वेण ॥

( हेत्वाक्षेपभाष्यम् )

कुत एतत् ? ।

( ८४ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सवर्णेऽण् तपरं ह्यृकृतम् ॥ * ॥

( भाष्यम् )

यदयम् "उरृत्" इत्यृकारे तपरकरणं करोति, तज्ज्ञापयत्याचार्यः—परेण, न पूर्वेणेति ॥

( प्रदीपः ) सवर्णे इति । अचीकृतदिति ऋकारस्य ऋकार एव यथा स्यात् ॠकारो मा भूदित्येवमर्थं तपरत्वं क्रियते । यदि च पूर्वेण णकारेणाण्ग्रहणं स्यादृकारोऽनण्त्वाद्भिन्नकालस्य ग्राहक एव न भवतीति ऋकारो नैव स्थानी, नाप्यादेशः प्रसजतीति किं तपरत्वेन । कृतं तज्ज्ञापकं परेणाण्ग्रहणस्य ॥

( उद्द्योतः ) भाष्ये—सवर्णेणतपरमिति । यदुरत्सूत्रे तपरं करोति तज्ज्ञापकं सवर्णेऽण्ग्रहणं परणकारकमिति वार्तिकाक्षरार्थः ॥ इत्येवमर्थमिति । ह्रस्वो यथा स्याद् दीर्घो मा भूदित्येवमर्थमित्यर्थः ॥ ऋकार इति । उद्देश्यसमर्पक इत्यर्थः । न च भाव्यमानत्वेन सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम्, तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थत्वेनापूर्वबोध्यत्वाभावेन चाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानतापीत्यन्यत् ॥

( तत्त्वालोकः ) भाष्ये—सवर्णे इति—सवर्णग्राहकसूत्रे इत्यर्थः । परेणेति शेषः । हि—यतः । यत्—यस्मात् । अयम्—आचार्यः । इति—इत्यत्र । तत्—तस्मात् । परेणेति—अणुदिदित्यत्राणित्यादिः । प्रदीपे—इति-इत्यत्र । तपरत्वमिति—उरृदित्यत्र ऋकारस्येत्यादिः । यदि चेति—अणुदित्सूत्रे इति शेषः । स्यादिति—तर्हीति शेषः । इति-इति हेतोः । किमिति—तत्र तस्येति शेषः । तत्—तत्र ऋकारे तपरकरणम् । परेणेति—अणुदित्सूत्रे इत्यादिः ।

उद्द्योते—तज्ज्ञापकमिति-अत्र बहुव्रीहिः । तद्वैयर्थ्यम्—तत्र तस्य तपकरणवैयर्थ्यम् । अभ्यनुज्ञानेति—प्रतिप्रसवेत्यर्थः ।

( आक्षेपभाष्यम् )

इण्ग्रहणेषु तर्हि सन्देहः ॥

( तत्त्वालोकः ) भाष्ये—तर्हि-एवमण्ग्रहणेषु निर्णयेऽपि ।

( समाधानभाष्यम् )

असन्दिग्धम् परेण, न पूर्वेण ॥

( तत्त्वालोकः ) परेणेति—इणित्यादिः । पूर्वेण—पूर्वेणेति ।

( हेतुजिज्ञासाभाष्यम् )

कुत एतत् ? ॥

( ८५ सिद्धान्तहेतुवार्तिकम् ॥ ४ ॥ )

॥ * ॥ य्वोरन्यत्र परेणेण् स्यात् ॥ * ॥

( भाष्यम् )

यत्रेच्छति पूर्वेण, सम्प्रसारणग्रहणं तत्र करोति—य्वोरिति । तच्च गुरु भवति ॥

कथं कृत्वा ज्ञापकम् ? ।

तत्र विभक्तिनिर्देशे सम्प्रसारणग्रहणे चार्धचतस्रो मात्राः, प्रत्याहारग्रहणे पुनस्तिस्रो मात्राः । सोयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यः—परेण, न पूर्वेणेति ॥

( प्रदीपः ) अर्धचतस्र इति । अर्धेन चतस्रः । चतुर्थी हि मात्रा तत्रार्धेति ॥

( उद्द्योतः ) भाष्ये सम्प्रसारणेति । आदेशेन तौ निवर्त्येत्यर्थः । अर्धचतुर्था इति वक्तुमुचितमत आह—अर्धेनेति ॥ भाष्ये—तिस्रो मात्रा इति । 'इणः' इति पदच्छेदाभिप्रायेणेदम् । तदुक्तम्—विभक्तिनिर्देशे इति । संहितायां तु सार्धमात्राद्वयमेवेति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—यत्रेति—इणमिति शेषः । ग्रहणमिति—इकारोकारयोरित्यादिः । करोतीति—यथेति शेषः । तत्र—य्वोरिति निर्देशे । प्रत्याहारग्रहणे—इण इति निर्देशे । सोऽयम्—आचार्यः । यत्—यस्मात् । तत्—तस्मात् । परेणेति—इणित्यादिः ।

प्रदीपे—हि—यतः ।

उद्द्योते—आदेशेन-यणा । तौ—इकारोकारौ ।

( आक्षेपभाष्यम् )

किं पुनर्वर्णोत्सत्ताविवार्यं णकारो द्विरनुबध्यते ? ॥

( प्रदीपः ) किं पुनरिति । वर्णोत्सत्तिर्वर्णोच्छेदः । वर्णान्तरमनुबन्धः किं न क्रियते इत्यर्थः ॥

( उद्द्योतः ) अणादिग्रहणेषूक्तैर्महद्भिर्यत्नैः सन्देहपरिहारे प्रतिपत्तिगौरवमिति लाघवाय वर्णान्तरमेव किं नानुबध्यत इत्याशयेनाह—भाष्ये किं पुनरिति ॥

( तत्त्वालोकः ) उद्द्योते—इति—इति हेतोः ।

( ८६ समाधानवार्तिकम् ॥ ५ ॥ )

[ ॥ * ॥ व्याख्यानाच्च द्विरुक्तिः ॥ * ॥ ]

( भाष्यम् )

एतज्ज्ञापयत्याचार्यो—भवत्येषा परिभाषा—"व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्" इति । "अणुदित्सवर्णस्य-" इत्येतत्परिहाय पूर्वेणाण्ग्रहणम्, "परेणेण्ग्रहणम्" इति व्याख्यास्यामः ॥ ६ ॥

( प्रदीपः ) व्याख्यानत इति । न्यायादागमाद्वा शब्दशक्तिरनुसरणीयेत्यर्थः ॥ ६ ॥

( उद्द्योतः ) एतत् वक्ष्यमाणम् । आचार्यःशिवः । ननु ज्ञापितेति प्रवर्तकतया निवर्तकतया वा नास्य चारितार्थ्यमत आह—न्यायादिति । उक्तो न्यायः ॥ आगम उपदेशपरम्परा । तत्सिद्ध एवायमर्थो णकारानुबन्धनरूपस्वव्यवहारेण बोध्यत इत्यर्थः । एवञ्च व्याख्यानेनैव—पूर्वणकारेण केचित् केचित्परणकारेणेति निर्णये ज्ञापकानुसरणक्लेशो वृथेति सूचितम् ॥ ६ ॥

( तत्त्वालोकः ) भाष्ये—व्याख्यानाच्चेति—व्याख्यानादेव इमे पूर्वेण इमे परेणेति निर्णयमिति णकारद्विरनुबन्धीकरणात् ज्ञायते इत्यर्थः । परिहायेति—सर्वत्रेति शेषः ।

उद्द्योते—इति-इति हेतोः । अस्य—व्याख्यानत इत्यस्य । उक्त इति—ज्ञापकसामर्थ्यान्यतररूप इति शेषः । उपदेशेति—परेणैवेण्ग्रहाः सर्वे पूर्वेणैवाण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकं परेण तु ॥ इतीत्यादिः । तत्सिद्धः—न्यायागमसिद्धः । अयं—व्याख्यानत इति । व्यवहारेण—व्यवहारद्वयेन । निर्णये इति-सम्भवतीति शेषः ।

( शिवसूत्रे )

## ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥

( आक्षेपभाष्यम् )

किमर्थमिमौ मुखनासिकावचनावुभावनुबध्येते, न ञकार एवानुबध्येत ? ॥

( तत्त्वालोकः ) इमौ—मकारञकारौ । ञमङणनझभञित्येव विधेयमित्याशयेनाह—ञकार एवेति ।

( प्रत्याक्षेपभाष्यम् )

कथं—यानि मकारेण ग्रहणानि ? ॥

( तत्त्वालोकः ) कथमिति—तर्हीति शेषः ।

( प्रत्याक्षेपसमाधानभाष्यम् )

[ सन्तु ञकारेण ॥ ]

( आक्षेपभाष्यम् )

[ कथं ] "हलो यमां यमि लोपः" इति ॥

( इष्टापत्तिभाष्यम् )

[ अस्तु ञकारेण ] "हलो यञां यञि लोपः" इति ॥

( इष्टापत्तिबाधकभाष्यम् )

नैवं शक्यम् । झकारभकारपरयोरपि झकारभकारयोर्लोपः प्रसज्येत ॥

( तत्त्वालोकः ) नैवमिति—कर्तुमिति शेषः । एवमग्रेऽपि । झकारेति—यतः तथासतीत्यादिः ।

( इष्टापत्तिसाधकभाष्यम् )

न झकारभकारौ झकारभकारयोः स्तः ॥

( उद्द्योतः ) ञमङणनम् ॥ ७ ॥ झभञ् ॥ ८ ॥ भाष्ये—न झकारेत्यादि । अव्यवहितहल्मात्रानुकरणं तु सूत्रादन्यत्र नास्तीति हयवरट्सूत्रे प्रपञ्चितम् ॥

( तत्त्वालोकः ) भाष्ये-झकारभकारयोः—झकारभकारपरकौ ।

( आक्षेपभाष्यम् )

कथं—"पुमः खय्यम्परे" इति ? ॥

( तत्त्वालोकः ) कथमिति—तर्हीति शेषः । एवमग्रेऽपि ।

( इष्टापत्तिभाष्यम् )

एतदप्यस्तु ञकारेण "पुमः खय्यञ्परे" इति ॥

( इष्टापत्तिबाधकभाष्यम् )

नैवं शक्यम् । झकारभकारपरेपि हि खयि रुः प्रसज्येत ॥

(तत्त्वालोकः) हीति—यत इत्यर्थः । तर्हीति शेषः । एवमग्रेऽपि ।

( इष्टापत्तिसाधकभाष्यम् )

न झकारभकारपरः खयस्ति ॥

( आक्षेपभाष्यम् )

कथं—"ङमो ह्रस्वादचि ङमुण्नित्यम्" इति ? ॥

( इष्टापत्तिभाष्यम् )

एतदप्यस्तु ञकारेण "ङञो ह्रस्वादचि ङञुण्नित्यम्" इति ॥

( इष्टापत्तिबाधकभाष्यम् )

नैवं शक्यम् । झकारभकारयोरपि हि पदान्तयोर्झकारभकारावागमौ स्याताम् ॥

( उद्द्योतः ) झकारभकारयोरपि हि पदान्तयोरिति । पदान्तयोस्तयोः सतोस्ततः परस्याजादेः पदस्य झभौ स्यातामित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—आगमाविति—झुट्भुट्शब्दाभ्यामितिशेषः ।

( इष्टापत्तिसाधकभाष्यम् )

न झकारभकारौ पदान्तौ स्तः ॥

( प्रदीपः ) झभञ् ॥ न झकारेति । [ झकारस्य ] भकारस्य [ च ] पदान्तस्य जश्त्वेन भाव्यमिति तस्य भावः । उज्झेर्झकारः संयोगान्तस्येति लुप्यते इति तस्याप्यभावः ।

( तत्त्वालोकः ) प्रदीपे—तस्य-प्रत्याख्यातुः । इति—इति हेतोः । तस्य—झकारस्य । अपिना भकारस्येति गृह्यते ।

( इष्टापत्तिबाधकैकदेशिभाष्यम् )

एवमपि पञ्चागमास्त्रय आगमिनो वैषम्यात्संख्यातानुदेशो न प्राप्नोति ॥

( उद्द्योतः ) एवमपि पञ्चागमा इति । लक्ष्यसंस्कारकालिकं संख्यासाम्यं यथासंख्यसूत्रप्रवृत्तौ निमित्तमिति मन्यते ॥

( तत्त्वालोकः ) भाष्ये—पञ्चानाम् आगमानां ङञ्बोध्यत्वादाह—पञ्चेति । पञ्चानाम् आगमिनां ङञ्बोध्यत्वेऽपि पदान्तयोः झभयोरभावात् त्रय एवागमिनोऽवशिष्यन्ते इत्याशयेनाह-त्रय इति ।

( इष्टापत्तिसाधकैकदेशिभाष्यम् )

सन्तु तावद्येषामागमानामागमिनः सन्ति । झकारभकारौ पदान्तौ न स्त इति कृत्वा आगमावपि न भविष्यतः ॥

( प्रदीपः ) सन्तु तावदिति । उद्देशानुदेशाभ्यां संख्यासाम्याद्यथासंख्ये लब्धे प्रयोगे यस्यागमस्यागमी विद्यते स प्रवर्तते नान्य इत्यर्थः ॥

( उद्द्योतः ) सिद्धान्ती तु प्रतिपत्तिकालिकमेव संख्यासाम्यं तत्प्रवृत्तौ निमित्तमित्याह—सन्त्विति । येषामागमानामागमिनः सन्ति ते भवन्तु इत्यर्थः ॥ अनुदेशः प्रतिनिर्देशः । भगवता तु स्पष्टप्रतिपत्तयेऽनुबन्धद्वयमदर्शि ॥ ७ ॥ ८ ॥

( तत्त्वालोकः ) उद्द्योते—प्रतिपत्तीति—विध्यर्थेत्यादिः । तत्प्रवृत्तौ—यथासंख्यसूत्रप्रवृत्तौ ।

---

( अथाक्षरशब्दनिर्वचनम् )

( आक्षेपभाष्यम् )

अथ किमिदमक्षरमिति ।

( प्रदीपः ) किमिदमिति । अक्षरसमाम्नाय इति व्यवहाराद्यो वा इमां स्वरशोऽक्षरश इति चोक्तत्वात्प्रश्नः ॥

( उद्द्योतः ) इति व्यवहारादिति । अइउण्सूत्रेऽयं व्यवहारो भाष्ये ॥ प्रश्न इति । तद्घटकीभूताक्षरपदार्थावगमायेति भावः ॥

( तत्त्वालोकः ) भाष्ये—अक्षरशब्दनिर्वचनपरवार्तिकानि क्रमशोऽवतारयितुं पृच्छति—अथ किमिदमिति । अक्षरशब्दप्रवृत्तिनिमित्तभूतं वस्तु किमित्यर्थः ।

( ८७ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ 'अक्षरं न क्षरं विद्यात्' ॥ * ॥

( भाष्यम् )

**न क्षीयते न क्षरतीति वाऽक्षरम् ॥**

( प्रदीपः ) अक्षरं न क्षरमिति । क्रियाशब्दोऽयं नित्यस्यार्थस्य वाचक इति दर्शयति । अत्र क्षियः क्षरतेर्वा विनाशार्थस्य नञ्पूर्वस्य रूपम् । तच्च ब्रह्मतत्त्वं परमार्थतो नित्यम् । व्यवहारनित्यतया तु वर्णपदवाक्यस्फोटानां जातिस्फोटस्य वा ॥

( उद्द्योतः ) भाष्ये-अक्षरमित्यस्य न क्षरमिति विग्रहप्रदर्शनम् ॥ तच्चेति । अक्षरं चेत्यर्थः ॥ ब्रह्मतत्त्वस्यैव तत्त्वे हेतुगर्भविशेषणमाह—परमार्थतो नित्यमिति । यतस्तत् प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपनित्यत्ववदित्यर्थः नन्वेवं प्रकृते किमायातमत आह—व्यवहारनित्यतया चेति । सर्वेषां शब्दानामाकाशादिवत् सृष्ट्यादावुत्पत्तिः प्रलये च नाश इत्यर्थः । एवं च व्यवहारनित्यत्वात्तत्त्वब्रह्मसादृश्यवतां तेषां पदादिरूपाणामयं वर्णसमाम्नायः शास्त्रप्रवृत्तिद्वारा बोधक इत्यक्षरसमाम्नाय इति चतुर्दशसूत्रीविषयव्यवहारोपपत्तिः । एवं च शब्दे औपचारिकोऽक्षरपदप्रयोग इति भावः ॥ न्यायादिनयेऽप्याह—जातिस्फोटस्य वेति ॥

( तत्त्वालोकः ) प्रदीपे—अयम्-अक्षर इत्याकारकः । रूपमिति—डरच्प्रत्यये इत्यादिः । जातिस्फोटस्य वेति—तेषु औपचारिकोऽक्षरशब्दप्रयोग इति शेषः ।

उद्द्योते – तत्त्वे-अक्षरत्वे । तत्-ब्रह्मतत्त्वम् । नित्यत्ववदिति-अतः तदक्षरमिति शेषः । शब्दे इति—ध्वनावित्यर्थः । नित्यस्फोटाभिव्यञ्जकत्वादिति शेषः । तथा च अक्षरशब्दप्रवृत्तिनिमित्तम् अविनाशित्वमिति भावः ।

( ८८ सिद्धान्तसमाधानान्तरवार्तिकम् ॥ २ ॥

## ॥ * ॥ 'अश्नोतेर्वा सरोऽक्षरम्' ॥ * ॥

( भाष्यम् )

**अश्नोतेर्वा पुनरयमौणादिकः सरन् प्रत्ययः । अश्नुते इत्यक्षरम् ॥**

( प्रदीपः ) अश्नोतेर्वेति । सरन्प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणं सर इति । तत्रार्थमश्नुते व्याप्नोतीत्यक्षरं पदं वाक्यं वा ॥

( उद्द्योतः ) भाष्ये अश्नोतेर्वेति ॥ तद्व्याचष्टे—अर्थमश्नुते इति । वर्णानामनर्थकत्वेन चिन्त्यमिदम् । नानादेशेषु युगपदेकस्यैव शब्दस्याभिव्यक्तिदर्शनेन स्फोटस्यापि व्यापकत्वमिति भाष्यार्थ इत्यन्ये ॥

( तत्त्वालोकः ) भाष्ये—अथवा व्यापकत्वम् अक्षरशब्दप्रवृत्तिनिमित्तमित्युपपादयति—अश्नोतेर्वेति ।

प्रदीपे – सर इतीति-सरोक्षरमित्यत्र, पद्यानुरोधादिति शेषः ।

( ८९ सिद्धान्तसमाधानान्तरवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ 'वर्णं वाहुः पूर्वसूत्रे' ॥ * ॥

( भाष्यम् )

**अथवा पूर्वसूत्रे वर्णस्याक्षरमिति संज्ञा क्रियते ॥**

( प्रदीपः ) वर्णं वाहुरिति । रूढिरियं वर्णस्येत्यर्थः ॥ पूर्वसूत्रे इति । व्याकरणान्तरे वर्णा अक्षराणीति वचनात् ॥

( उद्द्योतः ) ननु न्यायादिनयेऽव्याप्यवृत्तिषु विनाशिषु वर्णेषु कथं तद्व्यवहारोऽत आह—वर्णं वाहुरिति ॥ चवटितः पाठोऽत्र प्रामादिकः । व्याख्यानभाष्ये अथवेत्युक्तेः ॥ नन्वनन्तरोक्तयोगाभावात्कथं तेषु प्रयोगोऽत आह—रूढिरिति । तदुक्तं भाष्ये—अक्षरमिति संज्ञेति ॥ व्याकरणान्तरे इति । पूर्वसूत्रशब्दे षष्ठीतत्पुरुष इति भावः ॥ एवं चाक्षरसमाम्नाय इत्यस्य श्रुतिरूपो वर्णसंघात इत्यत्र तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—अथवा वर्णत्वम् अक्षरशब्दप्रवृत्तिनिमित्तमिति व्युत्पादयति—वर्णं वेति । अक्षरमिति शेषः ।

प्रदीपे—इयम्-अक्षरमिति संज्ञा ।

उद्द्योते—तद्व्यवहारः—व्यापकाविनाश्यर्थकाक्षरशब्दप्रयोगः । अनन्तरोक्तेति—अव्यवहितपूर्वोक्तेत्यर्थः । तेषु—वर्णेषु अव्याप्यवृत्तिविनाशिषु । वर्णेति—नित्यव्यापकेत्यादिः ।

( इत्यक्षरशब्दनिर्वचनम् ॥ )

( अथाक्षरसमाम्नायोपदेशप्रयोजनम् )

( ९० प्रश्नवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ 'किमर्थमुपादिश्यते' ॥ * ॥

( भाष्यम् )

**अथ किमर्थमुपदेशः क्रियते ।**

( प्रदीपः ) किमर्थमिति । वर्णानां साधुत्वस्याप्रतिपाद्यत्वात्पदस्यैव साधुत्वान्वाख्यानात्प्रश्नः ॥

( उद्द्योतः ) भाष्ये उपदिश्यत इति । अक्षरसमाम्नायोपदेशः किमर्थं इत्यर्थः ॥ पूर्वं कृतोऽप्ययं विचारः कञ्चिद्विशेषं वक्तुं पुनः क्रियते ॥

( तत्त्वालोकः ) भाष्ये—एवं श्लोकवार्तिकस्य पादत्रये व्याख्याते चतुर्थपादेन उत्तरश्लोकवार्तिकावतारणाय प्रयोजनप्रश्नं करोति वार्त्तिककारः—किमर्थमिति । अक्षरसमाम्नाय इति शेषः । उपदेश इति-वर्णसमाम्नायस्येत्यादिः ।

( ९१ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ 'वर्णज्ञानं वाग्विषयो यत्र च ब्रह्म वर्तते ॥ तदर्थमिष्टबुद्ध्यर्थं लघ्वर्थं चोपदिश्यते' ॥ २ ॥ * ॥

( भाष्यम् )

**सोयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत्प्रतिमण्डितो वेदितव्यो ब्रह्मराशिः,**

**सर्ववेदपुण्यफलावाप्तिश्चास्य ज्ञाने भवति, मातापितरौ चास्य स्वर्गे लोके महीयेते ॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

( इति माहेश्वरीयं विधिशेषप्रकरणम् ॥ )

---

**( प्रदीपः ) वर्णज्ञानमिति।** वर्णा येन शास्त्रेण ज्ञायन्ते तद्वाचो विषयः, शास्त्रेण वाग्विसीयते अवबध्यते, शास्त्रेण तस्याः परिज्ञानादित्यर्थः ॥ **यत्र चेति।** ब्रह्म वेदः पदे वर्तते। तस्य च शास्त्रं विषयः, लौकिकानां वैदिकानां च शास्त्रं विषय इत्यर्थः ॥ **तदर्थमिति।** शास्त्रप्रवृत्त्यर्थमित्यर्थः ॥ **इष्टबुद्ध्यर्थमिति।** कलादिदोषरहितवर्णज्ञानार्थमित्यर्थः ॥ **लध्वर्थमिति।** अनुबन्धकरणार्थमित्यर्थः ॥ **वाक्समाम्नाय इति।** एतावद्भिरेव वर्णैर्वाग्व्यवहार इत्यर्थः ॥ **पुष्पितः फलित इति।** दृष्टादृष्टफलाभ्यामभ्युदयनिःश्रेयसाभ्यां च ॥ **चन्द्रतारकवदिति।** अनादित्वान्नित्यत्वं वाग्व्यवहारस्य सूचयति ॥ **ब्रह्मराशिरिति।** ब्रह्मतत्त्वमेव शब्दरूपतया प्रतिभातीत्यर्थः ॥ **सर्ववेदेति।** सर्ववेदाध्ययनकृतस्य पुण्यस्य यत्फलं तत्प्राप्नोतीत्यर्थः ॥ **मातापितराविति।** माहात्म्यातिशयः शास्त्रस्य प्रत्याहारमात्रफलाख्यानद्वारेणान्वाख्यायते ॥ **महीयेते इति।** पूजां प्राप्नुत इत्यर्थः। महीयशब्दः कण्ड्वादियगन्तः ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥ २ ॥

---

**( उद्द्योतः ) येन शास्त्रेणेति।** चतुर्दशसूत्र्यात्मकेन तन्मूलकपाणिनिव्याकरणेन चेत्यर्थः ॥ **तत् शास्त्रम् ॥ वाचो विषयः।** वन्धनं प्रतिपादकमित्यर्थः ॥ भाष्ये **यत्र चेत्यनेन** वाक् परामृश्यते इत्याह—**पदे वर्तत इत्यादिना ॥ शास्त्रं विषय इति।** प्रतिपादकमित्यर्थः ॥ वर्णधार्म **शास्त्रं** वाचो विषयः ॥ का सा वाग्? **यत्र ब्रह्म च वर्तते।** चात्पुराणादि इति भाष्याक्षरार्थः ॥ **तदर्थमित्येतद्व्याचष्टे—शास्त्रप्रवृत्त्यर्थमिति ॥ कलादीति।** इदं प्रयोजन पस्पशान्ते दूषितम् ॥ **अनुबन्धकरणार्थमिति। लध्वर्थमित्यक्षराणामत्रार्थे** स्वारस्यं चिन्त्यम्। अनुबन्धकरणमूलकप्रत्याहारद्वारा लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थो वा ॥ **वाक्समाम्नायः।** वाक्सङ्ग्रहोपाय इत्यर्थः ॥ तदाह—**एतावद्भिरेवेति।** दृष्टफलेनाभ्युदयेन वा पुष्पितः। अदृष्टफलेन निःश्रेयसेन वा फलितः ॥ **वाग्व्यवहारस्येति।** तत्संग्राहकस्य चतुर्दशसूत्रीरूपस्येत्यर्थः ॥ यथाश्रुते हि भाष्येऽक्षरसमाम्नायोद्देशेन प्रवृत्तविशेषणानामन्यपरतया योजने भाष्यविरोधः। अत एवैतत्प्रतीकमुपादाय हरिणा **"अस्याक्षरसमाम्नायस्य वाग्व्यवहारजनकस्य न कश्चित्कर्तास्त्येवमेव वेदे पारंपर्येण स्मर्यमाणम्"** इति व्याख्यातम् ॥ **ब्रह्मतत्त्वमेवेति।** तदुक्तं नन्दिकेश्वरेण—

'अकारः सर्ववर्णाग्र्यः प्रकाशः परमेश्वरः ॥'

इत्यादिना सर्ववर्णानां महेश्वररूपता वर्णेभ्य एव च महदादिसृष्टिरित्यर्थपरतया चतुर्दशसूत्री योजिता ॥ तदाह—**सर्ववेदेत्यादि ॥** अन्ये तु **वर्णज्ञानं** चतुर्दशसूत्र्यात्मकं शास्त्रं **वाचो** वेदशास्त्रपुराणरूपायाः सकलवाचो **विषयो** बन्धनम्। **यत्र च** वर्णसमाम्नाये **ब्रह्म** बोध्यतया **वर्तते**। व्याख्याता चैषा चतुर्दशसूत्री ब्रह्मपरतया नन्दिकेश्वरेण। **तदर्थं** सकलवाग्ज्ञानार्थं ब्रह्मबोधनार्थं च। अनेन सकलवेदाध्ययनेन यत् फलं तदक्षरसमाम्नायज्ञानेन सूचितम्। तद्वक्ष्यति—**सर्ववेदेत्यादि** ॥ **सोयमित्यादि** भाष्यग्रन्थश्चैतच्छ्लोकपूर्वार्धस्यैव व्याख्यानपरः। तत्र **वर्णज्ञानमित्यस्य** व्याख्या **सोयमक्षरसमाम्नाय इति। वाग्विषय** इत्यस्य व्याख्या **वाक्समाम्नाय** इति, सर्ववाग्मूलत्वात्। तदध्ययनतन्मूलव्याकरणाध्ययनाभ्यां **पुष्पितः। फलितः** तदर्थभावनया जनिततत्त्वज्ञानरूपफलः। **चन्द्रतारकवत् प्रतिमण्डित** इत्यनेनास्यानादित्वं सूचयति। तादृशोयं ब्रह्मराशिर्वेदितव्यः। बोध्यबोधकयोरभेदात् ॥ **सर्ववेदेति।** सर्ववेदाध्ययनजन्यपुण्यफलस्य चित्तशुद्धिरूपस्य प्राप्तिरस्य ज्ञानेऽध्ययनमात्रे, भवति। इदमेव पूर्वं पुष्पितत्वम्। तादृशपुत्रवत्त्वेन च मातापित्रोः स्वर्गे पूजा भवति। यथा कृतराजसूययुधिष्ठिररूपपुत्रेण पाण्डोः स्वर्गे पूजेति। **इष्टबुद्ध्यर्थमित्यादि** तु प्राग्व्याख्यातत्वान्न व्याख्यातमित्याहुः ॥

इति कालोपनामकशिवभट्टसुतसतीगर्भजनागेशभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

---

**( तत्त्वालोकः )** भाष्ये—अक्षरसमाम्नायोपदेशप्रयोजनबोधनपरं सम्पूर्णं श्लोकवार्त्तिकमाह—**वर्णज्ञानमिति। उपदिश्यते इति**—अक्षरसमाम्नाय इत्यादिः। **अस्य**—अक्षरसमाम्नायस्य। **अस्य**—अक्षरसमाम्नायाध्येतुः।

प्रदीपे—**तस्याः**—वाचः। **तस्य**—पदस्य। **एतावद्भिः**—**अक्षरसमाम्नायोपदिष्टैः। शब्दरूपतया**—नामरूपतया। **शास्त्रस्य**—व्याकरणशास्त्रज्ञानस्य। **साप्नोति**—ज्ञानेति शेषः।

( उद्द्योते ) **तन्मूलकेति**—चतुर्दशसूत्रमूलकेत्यर्थः। एवमग्रेऽपि। **इदं**—कलादिदोषरहितवर्णज्ञानरूपम्। **अत्रार्थे**—अनुबन्धकरणार्थमित्यत्रार्थे। **तत्संग्राहकस्य**—वाग्व्यवहारसंग्राहकस्य। **हि**—यतः। **अन्यपरतया**—वाग्व्यवहारपरतया। **एतत्प्रतीकं**—चन्द्रतारकवदिति इत्येतत्प्रतीकम्। **तदध्ययनेति**—अक्षरसमाम्नायाध्ययनेत्यर्थः। **तदर्थेति**—अक्षरसमाम्नायतन्मूलकपाणिनीयव्याकरणार्थेत्यर्थः। **अस्य**—अक्षरसमाम्नायस्य। **इदमेव**—चित्तशुद्धिप्रयोजकत्वमेव। **तादृशेति**—अक्षरसमाम्नायाध्येत्रित्यर्थः।

इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे द्वितीयमाह्निकम्।

**इति भगवत्पतञ्जलिमुनिविरचितं द्वितीयं प्रत्याहाराह्निकम्।**

## अथ पाणिनीयं विधिशेषप्रकरणम् ।

( १—वृद्धिसंज्ञासूत्रम् १ । १ । ३ । १ ॥ )

# वृद्धिरादैच् ( १ । १ । १ ) ॥

**( उद्द्योतः )** **वृद्धिरादैच्** ॥ द्विपदं सूत्रं, **कुतमनयोः साधुत्व**मिति भाष्यदर्शनात् । अन्यथोद्देश्यानेकत्वाद् वृद्धिशब्दस्यावृत्तिर्वाक्यार्थबोधाय कार्या स्यात् । द्वन्द्वे तु समाहारस्यैकस्योद्देश्यस्य शब्दतः संभवात् तां विनापि सिद्ध्यति । न च समाहारे टच्प्रसङ्गः, समासान्तविधेरनित्यत्वात् । **प्रतेरंश्वादय** इति सूत्रेंऽश्वादिगणे राजन्शब्दपाठाल्लिङ्गात् । अन्यथा **राजाह** इति टचासिद्धे किं तेन ॥ यद्वा पदत्रयं, पस्पशायां भाष्ये **वृद्धिः, आद्; ऐजिति** पदविभागदर्शनात् । वृद्धिशब्दस्त्वावृत्त्या योज्यः । अत्र पक्षेऽनयोरिति भाष्यं खण्डयोरित्यर्थकम् ॥

**( तत्त्वालोकः )** उद्द्योते—पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपश्च समाधानं व्याख्यानं षड्विधं मतम् ॥ इत्याप्तवाक्यानुसारेणादौ पदच्छेदमाह—**द्विपदमिति** । इदमिति शेषः । **अन्यथा**—तस्य त्रिपदसूत्रत्वे । **उद्देश्येति**—आदैजपेत्यादिः । **द्वन्द्वे**—आदैजित्यत्र द्वन्द्वे । **ताम्**—आवृत्तिम् । **विनापीति**-वाक्यार्थबोध इति शेषः । **अन्यथा**—समासान्तविधेः नित्यत्वे । **तेन**—राजन् शब्दस्य अंश्वादिगणे पाठेन ॥ हरदत्तानुरोधादाह**—यद्वेति** । अत्रेति **शेषः** । **आवृत्त्येति**—नचैवं प्रकृते वाक्यभेदरूपदोषापत्तिः, वाक्यभेदस्य अपूर्वभेदकल्पनावारणाय वेदमात्रे दूषकत्वात् । **अत्र पक्षे**—तत्र पदत्रयमिति पक्षे । **खण्डयोः**—उद्देश्यविधेयरूपभागयोः । तथा चात्र पक्षे न तभाष्यविरोधः ।

### ( असाधुत्वनिराकरणाधिकरणम् )

### ( आक्षेपभाष्यम् )

कुत्वं **कस्मान्न भवति "चोः कुः, पदस्य"** इति ? ॥

**( प्रदीपः )** **वृद्धिरादैच्** ॥ १ ॥ **कुत्वं कस्मान्न भवतीति** । अनेकशक्तेः शब्दस्य शक्त्यवच्छेदेन संज्ञिनि विनियोगान्नित्यत्वाच्च सर्वसंज्ञानां लौकिकत्वादादैच्छब्दस्यानुकरणशब्दत्वाज्जातिशब्दत्वाद्वा शास्त्रप्राप्तिरस्तीति प्रश्नः । तत्र कुशब्दः पञ्चसु वर्णेष्वासक्तरूपो वाचकत्वेन विनियुक्त इति कुशब्दे वाचकशब्दस्वरूपे प्रवृत्तिनिमित्ते भावप्रत्ययः ।

**( उद्द्योतः )** असाधुशब्दोच्चारणे पाणिनेरश्रद्धेयतापत्त्या तदुक्तपदानां साधुत्वं विचारयति—**भाष्ये कुत्वमित्यादि** । ननु ऐच्छब्दस्यादिरन्त्येनेत्यनेन कृत्रिमतया लौकिकवैदिकबहिर्भूतत्वेन कथं सुबादिशास्त्रप्राप्तिः । लौकिकत्वं च लोकेऽर्थबोधनाय प्रयुक्तशब्दत्वमत **आह— अनेकेति** ॥ **नित्यत्वाच्चेति** । चो हेतौ । यतः शब्दार्थसंबन्धस्य नित्यत्वात्सर्वसंज्ञानां नित्यत्वमतो लौकिकत्वाच्छास्त्रप्राप्तिरित्यन्वयः ॥ **लोके**ऽर्थान्तरेऽप्रसिद्धानामपि संज्ञानां नित्यत्वमिति बोधयितुं **सर्वशब्दः** ॥ नन्वेवं **वृद्धिरादैजि**त्यादीनां वैयर्थ्यमत **आह— शक्तीति** । **शक्त्यवच्छेदः** तत्संकोचः । **विनियोगो** विशेषे नियमः । अभिमतातिरिक्तार्थान्तरव्युदासाय च सः ॥ परिसंख्यायां चात्र शास्त्रे प्रायेण नियमव्यवहार इति बोध्यम् । यद्वा—**शक्त्यवच्छेदः** शक्तिनिश्चयः **'शब्दार्थस्यानवच्छेदे'** इत्यादाववच्छेदशब्दस्य तदर्थकत्वदर्शनात् । फलरूपे हेतौ तृतीया ॥ **विनियोगः** उपदेशः । शक्तिनिश्चयफलकोपदेशादित्यर्थः । एवं च तत्सङ्केतकरणरूपप्रकरणादर्थान्तराप्रतीतिरिति बोध्यम् ॥ **इदमेव** युक्तं, सर्वार्थवाचकत्वेपि सङ्केतरूपत्वेनाज्ञानशक्तिबोधकतया विधित्वसंभवेनैषां नियमार्थत्वासंभवात् ॥ **नन्वेवं** लौकिकार्थबोधो न स्यादत उक्तम्—**अनेकशक्तेरि**ति । स्वशास्त्रे एव प्रकरणान्न्यार्थाबोध इति भावः । अनेकस्मिन्ननेका **वा** शक्तिरस्येति विग्रहः । अन्ये **सर्वनाम्नो वृत्तिमात्र** इति पुंवत्त्वम् । **कोपधप्रतिषेधे तद्धितवुग्रहणाद्वा 'स्त्रिया'** इति पुंवत्त्वम् । आश्रयभेदादेव शक्तिभेद **इति** मते आद्यः । निरूपकभेदाद्भेदे द्वितीयः । नित्ये शब्दार्थसंबन्धे पुरुषव्यापारात्प्रागवाचकस्य न पुरुषव्यापारेण वाचकता शक्या कर्तुमतः **सर्वे सर्वार्थवाचका** इत्यभ्युपगमादनेकशक्तित्वावसायः । तादात्म्यमेव च शब्दार्थयोः शक्तिः । अत्र पक्षे गौणमुख्यविभागः प्रसिद्ध्यप्रसिद्धिमूलः । **'अन्याय्योऽनेकार्थत्वमिति'** त्वश्रद्धेयमेवेति निरूपितं मञ्जूषायाम् । अत्र लौकिकशब्दत्वं साध्यम् । शास्त्रीयसंज्ञात्वसमानाधिकरणं नित्यत्वं हेतुः । अतो न वैदिकेषु व्यभिचारः । **सर्वसंज्ञाना**मिति वदता सूचितमिदम् ॥ **अपूर्वाः संज्ञाः क्रियन्त** इति पक्षेपि लौकिकत्वं साधयति—**अनुकरणेति** । अयमपि लौकिकत्वे हेतुः, **आदिरन्त्येने**त्यनेन संज्ञात्वेन विनियुक्तस्यैच्शब्दस्यानुकरणं सूत्रे, लक्षणया तेनैवोपस्थापितयोरैकारौकारयोस्तात्पर्यवशाच्छाब्दबोधविषयतेति बोध्यम् । अनुकरणे च सर्वशब्दानां साधुत्वेन शास्त्रविषयतेति भावः ॥ **यत्त्वैजि**त्याद्यन्वावयवद्वारा समुदायानुकरणमिति । तन्न । तथा **सत्यादिरन्त्येनेति** सूत्रवैयर्थ्यापत्तेः । वृद्धिशब्दादेः शास्त्रविषयताया एवमप्यनुपपादनाच्च ॥ नन्वनुकरणत्वानुभवः । किं च **त्रयी शब्दानां प्रवृत्ति**रिति पक्षे उक्तहेतुद्वयस्याप्यभावोऽत आह—**जातीति** । वैयाकरणव्यवहाराच्च तत्सिद्धिरिति भावः ॥ अत्र पक्षे जातिबोधार्थमेव संज्ञासूत्राणीति बोध्यम् । अत्रापि पक्षे लौकिकत्वं संज्ञापक्षवदेव बोध्यम् ॥ **हरदत्तस्तु**—वृद्धिशब्दो वृधेर्भावे क्तिन्नन्तः । अभेदोपचाराच्च वृद्धियुक्तादैक्षु वृत्तिः । लक्षणयैव सिद्धे सूत्रं नियमार्थं, वृद्धियुक्तप्लुतदीर्घैकारादीनां बोधो मा भूदिति त्रयीपक्षे सूत्रार्थमाह ॥ तन्न । **अदेङ्गुण** इत्यादावसंभवात् ॥ ननु कुत्वमित्यत्र संज्ञात्वपक्षे ककारादिपञ्चकगतप्रवृत्तिनिमित्ताभावाद्भावप्रत्ययोऽनुपपन्नः । किं चात्र ककारस्य प्राप्तिर्न तु कुवृत्तिधर्मस्येतिकुत्वमित्यसङ्गतमत आह-**तत्रेति** । **आसक्तरूपः** सम्बद्धस्वरूपः । एवं **च कुशब्दः** कुशब्दवत्ककारादिषु शक्त इत्येवं शक्तिग्रहात्कुशब्दस्य प्रवृत्तिनिमित्तत्वम् । सम्बन्धश्चानादिव्यवहारसिद्धतादात्म्यम् । तादात्म्येन कुशब्दं प्रवृत्तिनिमित्तीकृत्य शक्तित्वेन तस्य ग्रहे बाधकाभावात् ॥ केचित्तु शब्दस्य स्वरूपं कुशब्दत्वं सामान्यं तत्कादिष्वारोपितं प्रवृत्तिनिमित्तं तद्व्यक्तिश्च वाच्यैत्याहुः ॥ तेन च कुत्वशब्देन स्वार्थाश्रयः ककारो लक्ष्यते इति **ककारः कस्माच्चेति** चोद्यपर्यवसानम् ॥ वस्तुतः कुत्वकुपदयोर्भेत्वमसंज्ञापदयोश्च पर्यायतेति **ऋलृक्** सूत्रे निरूपितमिति न कश्चिद्दोषः ॥

**( तत्त्वालोकः )** भाष्ये—**कुत्वमिति**—अत्र चकारस्येत्यादिः । **कस्मादिति**—हेतोरिति शेषः । प्रदीपे—**शास्त्रेति**—कुत्वशास्त्रेत्यर्थः । **तत्र**—भाष्ये । **इति**—इति हेतोः ।

उद्द्योते—**आपत्त्येति**—तथा च तदीयशास्त्रस्याप्रामाण्यापत्तिरिति भावः । **तदिति**—पाणिनीत्यर्थः । **साधुत्वमिति**-तावत्, भाष्यकार इति शेषः । **इत्यनेनेति**—सङ्केतितत्वेनेति शेषः । **एवम्**—आदैज्वृद्ध्यादिशब्दार्थसम्बन्धस्य नित्यत्वे । **अभिमतेति**—आदैजादीत्यादिः । **अर्थान्तरेति**—वर्द्धनादीत्यादिः । **सः**—तथा विनियोगः । सिद्धान्तमाह—**यद्वेति** । **तदर्थकत्वेति**—निश्चयार्थकत्वेत्यर्थः । **तत्सङ्केतेति**—वृद्ध्यादिशब्दसङ्केतेत्यर्थः । स्वरूपसत्याः शक्तेः शाब्दबोधे नोपयोगः, किन्तु ज्ञाताया एवेत्याशयेनाह—**बोधकतयेति** । **एषां**—संज्ञासूत्राणाम् । **एवं**—शास्त्रेण शक्तिनिर्णये सति । **लौकिकेति**—वृद्ध्यादिशब्देन वर्द्धनादीत्यादिः । **अन्त्ये**—अनेका शक्तिरिति विग्रहे । **आद्य इति**—विग्रह इति शेषः । एवमग्रेऽपि । **भेदे**—शक्तिभेदे । **अत्र पक्षे**—सर्वे सर्वार्थवाचका इति पक्षे । **इदम्**—अत्रेत्यादि । नन्वेवं सूत्रस्थैचा अनुकार्योपस्थितावपि ऐकारादिबोधो न स्यात्' "उच्चारितः शब्द एवे"ति भाष्योक्तेरित्यत आह—**लक्षणयेति** । स्ववाच्य वाच्ये इत्यादिः । **तेनैव**—सूत्रस्थैचैव । तात्पर्यज्ञानस्य शाब्दबोधे कारणतेत्याशयेनाह—**तात्पर्येति** । **द्वारेति**—अनुकरणेत्यादिः । ऐऔजितीति शेषः । तथा च अनुकरणेन लोपस्य बलवत्तरत्वात् चस्यासन्निधानेन ऐकारौकारावेव उपतिष्ठेते इति भावः । **वृद्धिशब्देति**—आदैज्बोधकेत्यादिः । **च तत्सिद्धिः**—वृद्धित्वादिजातिसिद्धिश्च । **चेन** महासंज्ञायाः जातित्वसिद्धेः संग्रहः । **अत्र पक्षे**—त्रयी शब्दानामिति पक्षे । एवमग्रेऽपि । **सूत्रार्थं**—सूत्रप्रयोजनम् । **कुशब्दवत्ककारादिषु**—सङ्केतसम्बन्धेन कुशब्दवन्तो ये ककारादयः तेषु । **तस्य**—तादात्म्यस्य । **चोद्येति**—प्रश्नेत्यर्थः ।

( समाधानभाष्यम् )

**भत्वात् ॥**

**( तत्त्वालोकः )** भाष्ये—परिहरति—**भत्वादिति** । भत्वेन पदत्वस्य बाधादिति भावः ।

( आक्षेपभाष्यम् )

**कथं भसंज्ञा ?**

**( तत्त्वालोकः )** ननु यचि भमिति निमित्ताभावान्न प्रवर्तेतेति सा कथमित्याशयेन शङ्कते—**कथमिति** ।

( समाधानभाष्यम् )

**"अयस्मयादीनि च्छन्दसि" इति ॥**

( समाधानबाधकभाष्यम् )

**छन्दसीत्युच्यते, न चेदं छन्दः ॥**

**( तत्त्वालोकः )** भाष्ये—छन्दसीति—तत्रेत्यादिः । **इदं**—वृद्धिसंज्ञासूत्रम् ।

( समाधानसाधकभाष्यम् )

**छन्दोवत्सूत्राणि भवन्ति ॥**

**( प्रदीपः )** **छन्दोवदिति** । न वैशेषिकादिसूत्राणि, अपि त्वङ्गस्य व्याकरणसूत्राण्येव । इष्टिश्चेयम्—**छन्दोवदिति** ॥

**( उद्द्योतः )** **अङ्गत्वात्** । पदपदार्थबोधनद्वारा वेदोपकारकत्वात् । मुखं व्याकरणमित्यादिनाङ्गत्वनिरूपणाच्च । प्रधानं च षट्स्वङ्गेषु व्याकरणमिति पस्पशायां भाष्योक्तेश्च ॥ अस्यामिष्टौ नार्षत्वं प्रयोजकं, नैषेष्टिरस्ति 'छन्दोवत्कवयः कुर्वन्ती'ति सूत्र्याख्याविति सूत्रे भाष्योक्तेः । तस्मादङ्गत्वमेव प्रयोजकमिति भावः ॥ ननु छन्दसि विहितस्य सूत्रे कथं प्रवृत्तिरत आह— **इष्टिरिति** । तथा च भाष्यकारीयातिदेशात्सूत्रेषु छन्दःकार्यप्रवृत्तिरिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**इष्टिरिति**—भाष्यकृत इत्यादिः ।

उद्द्योते—**अङ्गत्वेति**—व्याकरणस्येत्यादिः । **अस्यामिष्टौ**—एतदिष्टिप्रवृत्तौ । **आर्षत्वमिति**—व्याकरणसूत्राणामित्यादिः । **अङ्गत्वमेवेति**—तेषां तत्रेति शेषः । **सूत्रे इति**—सूत्रेष्वित्यर्थः । मुख्यच्छन्दःसुसाफल्यात् छन्दउपकारकत्वेनोपचरितच्छन्दस्त्वकेष्वित्यादिः । **अतिदेशात्**—छन्दोवदित्यतिदेशात् ।

( आक्षेपभाष्यम् )

**यदि भसंज्ञा, "वृद्धिरादैजदेङ्गुणः" इति जश्त्वमपि न प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये **जश्त्वमपीति** । संहितया पाठे इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**इतीति**-संहितापाठे इति शेषः ।

( समाधानभाष्यम् )

**उभयसंज्ञान्यपि छन्दांसि दृश्यन्ते । तद्यथा 'स सुष्टुभा स ऋक्वता गणेन' पदत्वात्कुत्वम्, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वाज्जश्त्वम्, भत्वात्कुत्वं न भविष्यति ॥**

**( उद्द्योतः )** **उभयसंज्ञान्यपीति** । उभे संज्ञे येषामिति विग्रहः । संज्ञाद्वयहेतुककार्यदर्शनेन तद्वत्त्वकल्पनेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—उभयसंज्ञान्यपीति वक्तव्यमिति वार्त्तिकानुसारेणाह—**उभयसंज्ञानीति** । **गणेनेति**—इत्यत्रेति शेषः ।

उद्द्योते—**तद्वत्त्वेति**—संज्ञाद्वयवत्त्वेत्यर्थः ।

( इत्यसाधुत्वनिराकरणम् ॥ )

---

( अथ तद्भावितपक्षनिराकरणाधिकरणम् । )

( उभयपक्षस्वरूप-तद्भावितपक्षदूषणभाष्यम् )

**किं पुनरिदं तद्भावितग्रहणम्—वृद्धिरित्येवं ये आकारैकारौकारा भाव्यन्ते, तेषां ग्रहणम्, आहोस्विदादैज्मात्रस्य ? ॥**

**किं चातः ? ॥**

**यदि तद्भावितग्रहणम्, शालीयो मालीय इति वृद्धलक्षणश्छो न प्राप्नोति । आम्रमयम्, शालमयम्, वृद्धिलक्षणो मयण्न प्राप्नोति । आम्रगुप्तायनिः, शालगुप्तायनिः, वृद्धलक्षणः फिञ् न प्राप्नोति ॥**

**( प्रदीपः )** **किं पुनरिति** । उभयथा शास्त्रे दर्शनात्पक्षद्वयेऽपि दोषसंभवात्प्रश्नः ॥

**( उद्द्योतः )** ननु सूत्रादादैज्मात्रग्रहणपक्ष एव प्रतीयत इति प्रश्नानुपपत्तिरत आह—**उभयथेति** । लुगादिसंज्ञासु तद्भावितपक्षस्य, लोपसंज्ञायामदर्शनमात्रस्येति भावः ॥ ननु टिघुभादिसंज्ञास्वतद्भावितानामेव ग्रहणं दृश्यते, इति सोपि पक्षः शङ्कितुमुचित इति चेत् ॥ न । तत्र हि तद्भावितासंभवादतद्भावितानामेव ग्रहणम्, न च तथा

प्रकृते इति **उभयथेत्युक्तम्** । वृद्धिशब्दे तन्त्राद्यङ्गीकारे तद्भावितग्रहणम्, वृद्धिशब्दैकत्वे द्वितीयः पक्ष इति भावः ॥ भाष्ये **वृद्धिलक्षणो मयडिति । नित्यं वृद्धशरादिभ्य** इत्यस्य वृद्धसंज्ञाद्वारा वृद्धिलक्षणत्वं बोध्यम् ॥ **वृद्धलक्षण'** इति पाठे एषां वृद्धित्वाभावेन समुदायानां वृद्धत्वाभावादित्यर्थः ॥ **फिञिति । उदीचां वृद्धादगोत्रादिति** । न च **प्राचामवृद्धा**दिति फिनाप्येतत्सिद्धं, पुंवद्भावनिषेधोऽप्याम्रगुप्तायनीभार्य **इत्यादौ जातेश्चे**ति सिद्ध इति वाच्यम् । आम्रगुप्तायनेरपत्यं युवेत्यर्थेऽणो **ण्यक्षत्रियार्षञित** इति लुकि आम्रगुप्तायनिरित्येव रूपं पितरि पुत्रे **चेष्यते**, फिनि तु ञितः परत्वाभावान्न सिध्येत् । न चा**ब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यान**मिति तत्सिद्धिः । ब्राह्मणगोत्रे तदप्रवृत्तेः ॥

**( तत्त्वालोकः )** भाष्ये—ननु किं वृद्धिरादैजित्यत्र वृद्धिपदमावर्त्य, **एकं** वृद्धिपदं वृद्धिशब्देन विहितपरं सदादैज्विशेषणम्, अपरं तत् संज्ञापरमिति रीत्या वृद्धिशब्देन विहिता ये आदैचः ते वृद्धिसंज्ञका इत्यर्थः । अथवा आदैज्मात्रं वृद्धिसंज्ञकमित्यर्थ इत्याशयेन पृच्छति—**किं पुनरिति । इदं**—वृद्धिसंज्ञासूत्रम् । **तद्भावितग्रहणमिति**—अत्र तेन वृद्धिशब्देन भाविताः विहिता ये ( आदैचः ) ते गृह्यन्ते अनेनेति व्युत्पत्तिः । तदनुसारेण तदर्थमाह—**वृद्धिरित्येवमिति ।** शब्दोच्चारणेनेति शेषः । **भाव्यन्ते**—विधीयन्ते । **अत इति**—प्रश्नादभिप्रेतं भवत इति शेषः । प्रष्टा स्वाभिप्रेतं प्रकटयति—**यदीति ।** इदमिति शेषः। **ग्रहणमिति**—तर्हीति शेषः । **इति**—इत्यत्र । **वृद्धीति**—इत्यत्रेत्यादिः । एवमग्रेऽपि ।

उद्द्योते—**इति**-इति हेतोः । **इति सोऽपि पक्षः**—इति हेतोः अतद्भावितपक्षोऽपि । **तत्र हि**—यतः टिघुभादिसंज्ञासु । **न च**—न तु । **तथा**—अतद्भावितपक्षसम्भवः । **इति**—इति हेतोः । **उक्तमिति**—न तु त्रैधेतीति शेषः । **आदिना** आवृत्तिसंग्रहः । **द्वितीयः**—आदैज्मात्रग्रहणमिति । **एषाम्**—आम्रादिघटकानामाकाराणाम् । **एतत्**—आम्रगुप्तायनिरित्यादि ।

**( आदैज्मात्रग्रहणे दूषणभाष्यम् )**

**अथादैज्मात्रस्य ग्रहणम्, सर्वो भासः सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोति ॥ इह च तावती भार्या यस्य तावद्भार्यः यावद्भार्यः "वृद्धिनिमित्तस्य" इति पुंवद्भावप्रतिषेधः प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये **एष विधिरिति ।** पूर्वपदान्तोदात्तत्वमित्यर्थः ॥ तावद्भार्ये **आसर्वनाम्न** इत्यात्वस्य वतुर्निमित्तमिति पुंवत्वनिषेधप्राप्तिः ॥

**( तत्त्वालोकः )** भाष्ये—**अथेति**-यदीति शेषः । **ग्रहणमिति**—तर्हीति शेषः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरोऽन्तोदात्त **इष्ट** एवेति बहुव्रीहित्वसंशयनिराकरणाय विग्रहं प्रदर्शयति—**सर्वो भास इति । इति**—इत्यत्र । **प्राप्नोतीति**—किन्त्वत्र समासान्तोदात्तत्वमिष्टमिति भावः । **यावद्भार्यः**—यावद्भार्य इति । उद्द्योते—**इति**—इति हेतोः ।

**( सिद्धान्तभाष्यम् )**

**अस्तु तर्हि—आदैज्मात्रस्य ग्रहणम् ॥**

**( उद्द्योतः )** यदि प्रथमपक्षे दोषो दुरुद्धरो**ऽस्तु तर्ही**त्यन्वयः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती द्वितीयपक्षं स्वीकरोति—**अस्त्विति ।** उद्द्योते—**प्रथमपक्षे**—तद्भावितग्रहणपक्षे । **दोषः**—आवृत्त्यादिरूपः।

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम्-सर्वो भासः सर्वभास इति "उत्तरपदवृद्धौ सर्वं च" इत्येष विधिः प्राप्नोतीति ॥**

**( समाधानभाष्यम् )**

**नैष दोषः । नैवं विज्ञायते—उत्तरपदस्य वृद्धिरुत्तरपदवृद्धिरुत्तरपदवृद्धाविति ॥**

**कथं तर्हि ? ॥**

**"उत्तरपदस्य" इत्येवं प्रकृत्य या वृद्धिस्तद्वत्युत्तरपदे, इत्येवमेतद्विज्ञायते ॥ अवश्यं चैतदेवं विज्ञेयम् । तद्भावितग्रहणे सत्यपीह प्रसज्येत—सर्वः कारकः सर्वकारक इति ॥**

**( प्रदीपः ) उत्तरपदस्येत्येवमिति ।** तत्र हि **वृद्धौ सर्वं चे**त्यप्युच्यमाने वृद्धिमात्रस्योत्तरपदस्याभावात्सामर्थ्याद्वृद्धिमदुत्तरपदं ग्रहीष्यत इत्यतिरिच्यमानमुत्तरपदग्रहणं सामर्थ्यादुत्तरपदाधिकारमवगमयति ॥

**( उद्द्योतः ) तद्वत्युत्तरपदे इति ।** समासाक्षिप्तोत्तरपदशब्देन सामानाधिकरण्यायो**त्तरपदस्ये**त्येवं वृद्धिर्यस्मिन्निति बहुव्रीहिरिति भावः ॥ तत्राधिकारलक्षणायां बीजमाह—**तत्र हीति ॥** न च श्व श्रवतीति श्वौः सर्वस्य श्वौः सर्वौरित्यादौ वृद्धिरूपोत्तरपदसंभवः । न चैकादेशे व्यपवर्गाभावः । **नेन्द्रस्ये**ति निषेधेन पूर्वोत्तरपदसंबन्धिकार्यस्यैकादेशात्प्राक् प्रवृत्तिस्वीकारात् । तथा च सर्वशब्दान्तोदात्तत्वे शेषनिघातेन औकारस्यानुदात्तत्वे एकादेशस्य **स्वरितो वानुदात्ते** इति पाक्षिकः स्वरितः स्यादिति वाच्यम् ॥ तादृशानामभिधाने दृढतरमानाभावात् । स्वरितत्वाद्वाधिकारलाभ इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**नैवमिति**—यत इत्यादिः । उत्तरपदवृद्धाविति शेषः । **तर्हीति**—विज्ञायते इति शेषः । **प्रकृत्य**—अधिकृत्य। **एतत्**—उत्तरपदवृद्धाविति । **तद्भावितेति**—अन्यथेत्यादिः । **इहेति**-एतदिति शेषः । तथा च पक्षद्वये एतस्य एवंविज्ञेयताया आवश्यकतया सिद्धान्त्यभिमतद्वितीयपक्षे एतस्य एवंविज्ञेयताया आश्रयणेन न गौरवमिति भावः ।

प्रदीपे—**तत्र**—उत्तरपदवृद्धौ सर्वं चेत्यत्र । **हि**—यतः । **इत्यपि**-इत्यस्मिन्नपि । **सामर्थ्यादिति**—वृद्धिपदोपादानेत्यादिः । वृद्धिपदेनेति शेषः । **इति**—इति हेतोः ।

उद्द्योते—**शब्देनेति**—अन्यपदार्थस्येति शेषः । **बहुव्रीहिरिति**-न च व्यधिकरणबहुव्रीहिः असाधुः, अयं हेतुः साध्याभाववदवृत्तिरित्यादौ तदङ्गीकारात् । **नचेति**—अस्य वाच्यमित्यनेनान्वयः । **तादृशानां**-सर्वौरित्यादीनाम् । तुष्यतु दुर्जन इति न्यायेन तदभ्युपेत्याह—**स्वरितत्वाद्वेति ।** उत्तरपदशब्दे स्वरितत्वप्रतिज्ञया तदधिकारावगतिरिति भावः ।

**( द्वितीयदूषणनिराकरणभाष्यम् )**

**यदप्युच्यते-इह तावती भार्या यस्य तावद्भार्यः यावद्भार्य इति च "वृद्धिनिमित्तस्य-" इति पुंवद्भावप्रतिषेधः प्राप्नोतीति ॥ नैष दोषः । नैवं विज्ञायते—वृद्धेर्निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तस्येति ॥**

**कथं तर्हि ? ॥**

वृद्धेर्निमित्तं यस्मिन्सोऽयं वृद्धिनिमित्तः वृद्धिनिमित्तस्येति ॥

किं च वृद्धेर्निमित्तम् ? ॥

योऽसौ ककारो ञकारो णकारो वा ॥

अथवा यः कृत्स्नाया वृद्धेर्निमित्तम् ॥

कश्च कृत्स्नाया वृद्धेर्निमित्तम् ? ॥

यस्त्रयाणामाकारैकारौकाराणाम् ॥

( प्रदीपः ) वृद्धेर्निमित्तं यस्मिन्निति । निमित्तशब्दोपादानसामर्थ्याद्व्यधिकरणपदो बहुव्रीहिराश्रीयतेऽन्यथा वृद्धेस्तद्धितस्येत्येव ब्रूयात् । वृद्धिनिमित्तत्वाच्च तद्धितस्य तद्धित एव वृद्धिशब्देनाभिधास्यते । अथवा वृद्धेः संबन्धी यस्तद्धित इति वैयधिकरण्येन संबन्ध आश्रयिष्यते ॥ योऽसौ ककार इति । कञादिषु सत्सु वृद्धिर्भवतीति तेषामेव निमित्तत्वम् ॥ अथवेति । निमित्तशब्दोपादानादेवाश्रितबहुत्वसंख्यो वृद्धिशब्दः समस्यते, वृद्धीनां निमित्तं वृद्धिनिमित्तमिति ।

( उद्द्योतः ) अन्यथा वृद्धेरिति । वृद्ध्यात्मकतद्धिताभावाद्वृद्धिनिमित्तग्रहणम् [ मिति भावः ॥ नन्वर्शः शब्दादर्शआचचि टाप्यर्शसेत्यादौ वृद्धिरूपसंभव इत्यरुचेराह—अथवेति ॥ ] व्यधिकरणबहुव्रीह्याश्रयणसामर्थ्यादेव व्यपदेशिवद्भावाप्रवृत्तिरिति भावः ॥ तेषामेवेति । एवशब्दोऽप्यर्थे । विशिष्टस्य निमित्तत्वे विशेषणानामपि तत्त्वमिति भावः ॥ ननु वृत्तावभेदैकत्वसंख्यावगतेर्बहुवचनान्तेन विग्रहोऽनुपपन्नोऽत आह—निमित्तेति । तत्र कार्त्स्न्यं प्रतिपत्तिकालिकं न प्रयोगसमवायीति न पारिषद्याभार्ये दोषः । न च वैयाकरणभार्येऽपि निषेधापत्तिः, इष्टापत्तेः । अत एवादैज्मात्रस्येति पक्षेऽत्र दोषानुद्भावनम् । तद्भावितानामेवेति पक्षेऽपि न य्वाभ्यामिति सूत्रे ऐजंशेऽपि वृद्धिपदसंबन्धेन निषेधप्रवृत्तिरत्र सूपपादा । अत एव देविकाशिंशपेति सूत्रे भाष्यकृता तत्संबंधो दर्शित इत्याहुः ॥ आदैज्मात्रग्रहणादेव मालादीनां चेति सार्थकम् । अन्यथास्याऽवृद्धत्वाद्प्रस्थेऽवृद्धमित्येव सिद्धे किं तेन ॥

( तत्त्वालोकः ) भाष्ये—एवं द्वितीयपक्षे प्रथमदोषं परिहृत्य द्वितीयदोषं निराकरोति—यद्पीति । नैवमिति—यत इत्यादिः । तर्हीति—विज्ञायते इति शेषः । निमित्तस्येतीति—एवं विज्ञायते इति शेषः ।

प्रदीपे—अन्यथा—व्यधिकरणपदबहुव्रीह्यस्वीकारे । येन वृद्धिरूपतद्धिताभावादित्यस्य संग्रहः । वृद्धेरिति—स्वनिमित्तत्वसम्बन्धेनेति शेषः । सम्बन्धः—अन्वयः । इति—इति हेतोः । तेषामेवेति—कञादीनामेवेत्यर्थः । वृद्धेरिति शेषः । इति—इत्यत्र ।

उद्द्योते—वृद्ध्यात्मकेति—वृद्धिशब्देनेत्यादिः । शब्दादिति—स्त्रियां मत्वर्थे इति शेषः । वृद्धिरूपेति—एकादेशे अन्तवद्भावेन तद्धितत्वादित्यादिः । तद्धितेति शेषः । नन्वेवमपि तावद्भार्य इत्यादौ व्यपदेशिवद्भावेन वतोरेव वृद्धिनिमित्तत्वाद् दोष एवेत्यत आह—व्यधिकरणेति । तत्त्वं—निमित्तत्वम् । तत्र—वृद्धौ । इति—इति हेतोः । दोष इति—अप्रसङ्ग इत्यर्थः । तद्धितस्य आकारमात्रप्रवर्त्तकत्वादित्यादिः । अत्र—वैयाकरणभार्ये इत्यत्र । पक्षद्वये फलैक्यायाह—तद्भावितानामेवेति । ग्रहणमिति शेषः । अत्र—वैयाकरणभार्ये इत्यत्र । तत्सम्बन्धः—वृद्धिपदसम्बन्धः । द्वितीयपक्षे पाणिनिसम्मतिं दर्शयति—आदैजिति । अन्यथा—तद्भावितग्रहणे । अस्य—मालादेः । तेन—मालादीनां चेत्यनेन । तथा च—"आवृत्तौ गौरवापत्तेः, शालीयादेरसिद्धितः । मालादीनां चेति लिङ्गाद् व्याप्तिन्यायात्तथैव च ॥ भाविसंज्ञात्वविज्ञाने गौरवाच्चेह निश्चितम् । आदैज्मात्रस्याविशेषाद्वृद्धिसंज्ञा विधीयते" ॥

( इति तद्भावितपक्षनिराकरणम् ॥ )

---

( अथ संज्ञासूत्रत्वसाधनाधिकरणम् )

( ९१ आक्षेपवार्तिकप्रथमखण्डम् ॥ १ ॥ )

## ॥*॥ संज्ञाधिकारः संज्ञासंप्रत्ययार्थः ॥*॥

( भाष्यम् )

"अथ संज्ञा" इत्येवं प्रकृत्य वृद्ध्यादयः शब्दाः पठितव्याः ॥

किं प्रयोजनम् ? ॥

संज्ञासंप्रत्ययार्थः । वृद्ध्यादीनां शब्दानां 'संज्ञा' इत्येष संप्रत्ययो यथा स्यात् ॥

( प्रदीपः ) संज्ञाधिकार इति वार्तिकम् । तस्य व्याख्यानमथसंज्ञेत्येवमिति । अथशब्दः संज्ञायाः प्रस्तावद्योतनार्थः ॥ वृद्ध्यादीनामिति । संप्रत्यय इत्येतदपेक्षया कर्मणि षष्ठी । वृद्ध्यादयः संज्ञात्वेन यथा प्रतीयेरन्नित्यर्थः ॥

( उद्द्योतः ) वार्तिकमिति । सूत्रेऽनुक्तदुरुक्तचिन्ताकरत्वं वार्तिकत्वम् ॥ एतेन सूत्रव्याख्यानाय प्रवृत्तस्य कात्यायनस्यायुक्ता दुरुक्तचिन्तेत्यपास्तम् ॥ प्रस्तावेति । वार्तिकेऽधिकारशब्दोक्तः स इति भावः ॥ वृद्ध्यादीनां संज्ञात्वाद्भेदनिबन्धनषष्ठ्यनुपपन्नेत्यत आह—संप्रत्यय इति ॥ भाष्ये संज्ञेत्येष इति । शब्दार्थज्ञानानामितरेतराध्यासादिदं नानुपपन्नम् ॥

( तत्त्वालोकः ) भाष्ये—वृद्धिरादैजित्यादीनां संज्ञासूत्रत्वसिद्धये पूर्वपक्षवार्त्तिकं खण्डशो व्याचष्टे—संज्ञाधिकार इति । कर्तव्य इति शेषः । प्रकृत्य—अधिकारसूत्रं कृत्वा । वृद्ध्यादयः शब्दाः—वृद्ध्यादिपदघटितानि सूत्राणि । सम्प्रत्ययः—ज्ञानम् ।

प्रदीपे—संज्ञेतिवार्त्तिकव्याख्यानभाष्ये अथशब्दाधिक्यात् अपव्याख्यानभ्रमो मा भूदिति हेतोराह—अथशब्द इति ।

उद्द्योते—सः—प्रस्तावः । इदं—संज्ञेत्येष सम्प्रत्यय इति ।

( ९२ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * ॥ इतरथा ह्यसंप्रत्ययो यथा लोके ॥ * ॥

( भाष्यम् )

अक्रियमाणे हि संज्ञाधिकारे वृद्ध्यादीनां संज्ञेत्येष संप्रत्ययो न स्यात् ॥

इदमिदानीं बहुसूत्रमनर्थकं स्यात् ॥

अनर्थकमित्याह ॥

कथम् ? ॥

'यथा लोके' लोके ह्यर्थवन्ति चानर्थकानि च वाक्यानि दृश्यन्ते । अर्थवन्ति तावत्—'देवदत्त गाम-

भ्याज शुक्लां दण्डेन' देवदत्त गामभ्याज कृष्णाम्' इति। अनर्थकानि—'दश दाडिमानि षडपूपाः कुण्डमजाजिनं पललपिण्डः अधरोरुकमेतत्कुमार्याः स्फैयकृतस्य पिता प्रतिशीनः' इति ॥

( **प्रदीपः** ) **यथा लोके इति ॥** कात्यायनेनासंप्रत्यये लोको दृष्टान्तत्वेनोपात्तः। भाष्यकारस्तु वाक्याध्याहारेणानर्थकत्वे लोकं दृष्टान्तत्वेन योजयति—**बहुसूत्रमिति।** बहुव्रीहिः। प्रकरणं चान्यपदार्थः। समाहारे द्विगुर्वा ॥ **अर्थवन्ति चेति।** यथा लोकोऽर्थवन्ति प्रयुङ्क्ते एवमनर्थकान्यपीत्यर्थः। यावदासत्त्वमाचर्यस्य न साधितं तावदनर्थकत्वशङ्का झटिति, समन्वयानवगमाद्वा ॥ **दश दाडिमानीति।** पदार्थानां समन्वयाभावादत्रानर्थक्यम् ॥

( **उद्द्योतः** ) **भाष्यकारस्त्विति।** अधिकारं विनाऽसंप्रत्यये दृष्टान्तस्य लौकिकस्याभावादर्थापरिज्ञाने दृष्टान्तानुपयोगाच्चेति तद्भावः ॥ **वाक्याध्याहारेणेति । इदमिदानीमिति** वाक्याध्याहारेणेत्यर्थः ॥ ननु द्विगौ अकारान्तोत्तरपदत्वात् स्त्रीत्वे ङीप्स्यादत आह—**बहुव्रीहिरिति ।** अन्यपदार्थस्याशाब्दत्वाद्बहुव्रीहिर्दुर्ज्ञेयोऽत आह—**समाहारे इति।** पात्रादित्वात्स्त्रीत्वाभावः। अत एव त्रिसूत्रीत्यादि सङ्गच्छते। बहुसूत्रशब्दस्यैव तत्र पाठादित्यभिमानः ॥ नन्वनर्थकदृष्टान्तेऽर्थवन्तीत्यादि व्यर्थमत आह—**यथेति।** यद्यप्यन्वितार्थकपदसमूह एव **वाक्यम्।** तथापि भाष्ये पदसमूहे एव वाक्यशब्दः प्रयुक्तोऽतोऽनर्थकानि वाक्यानीति न विरुद्धम् ॥ **झटिति** विनाचार्याचारादिज्ञानेन ॥ **पदार्थानाम्** कुण्डमजाजिनमित्यादीनाम्। स्फ्यकृतोऽपत्यं **स्फैयकृतः ॥**

( **तत्त्वालोकः** ) भाष्ये—संज्ञाधिकाराकरणे दोषमाह—**इतरथेति। हि**—यतः। **इदं**—प्रकरणम्। **इदानीं**-संज्ञासम्प्रत्ययाभावे। **बहुसूत्रमिति**—अत्र बहूनि ( संज्ञा ) सूत्राणि यस्मिन्निति, बहूनां ( संज्ञा ) सूत्राणां समाहार इति वा व्युत्पत्तिः। **आह**—यदाह। **कथं**—तत् कथम्। सार्थकविधिसूत्रकर्तृकर्तृकसंज्ञासूत्राणां कथमनर्थकतेति प्रष्टुः भावः। यथा लोके सार्थकवाक्यप्रयोक्तृप्रयोक्तृकवाक्यस्यापि अनर्थकता दृश्यते, तथा शास्त्रे सार्थकविधिसूत्रप्रणेतृप्रणेतृकसंज्ञासूत्राणामपि अनर्थकता स्यादित्याशयेन समाधाता आह—**यथेति। हि**-यतः। **अभ्याज** -प्रेरय। **अधरोरुकं**—चण्डातकम्। **प्रतिशीनः**—कृशः।

प्रदीपे—**तावदिति**—लोकदृष्टान्तेनेति शेषः। ननु केनचित् दृष्टान्तेन कचित् शङ्का नोचितेत्यत आह—**समन्वयेति।** पदार्थानां परस्परामित्यादिः। **पदार्थानामिति**—मिथ इति शेषः। **अत्र**—दश दाडिमानीत्यादौ। **आनर्थक्यमिति** —न तु पदानामर्थशून्यत्वादिति शेषः। तेन पदानामर्थवत्त्वेऽपि नानुपपत्तिरिति भावः।

उद्द्योते—**अधिकारं**—संज्ञाधिकारम्। **तद्भावः**—वाक्याध्याहारकरणाशयः। अनर्थकवाक्यस्य लोके सत्त्वात् अनर्थकत्वे लोको दृष्टान्तः सम्भवतीति भावः। **इति वाक्येति**—इत्यादिवाक्येत्यर्थः। अत एवेत्यस्यार्थमाह—**बहुसूत्रेति। तत्र**—पात्रादौ।

( ९३ आक्षेपान्तरवार्तिकम् ॥ २ ॥ )

॥ * ॥ संज्ञासंज्ञ्यसंदेहश्च ॥ * ॥

( भाष्यम् )

क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्यः ॥ कुतो ह्येतत्—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति। न पुनरादैचः संज्ञा, वृद्धिशब्दः संज्ञीति ? ॥

( **तत्त्वालोकः** ) यत्नान्तरस्यापि विधेयतामाह—**संज्ञेति।** संज्ञासंज्ञिविषयकसन्देहनिवर्त्तकः कश्चन शब्दो वक्तव्य इत्यर्थः। परा संज्ञा, पूर्वः संज्ञीति वक्तव्यमिति भावः। **हि**—यतः। **एतदिति**—ज्ञायेतेति शेषः।

( आक्षेपनिराकरणभाष्यम् )

यत्तावदुच्यते-'संज्ञाधिकारः कर्तव्यः संज्ञासंप्रत्ययार्थः' इति ॥ न कर्तव्यः।

( **तत्त्वालोकः** ) पूर्वाक्षेपवार्त्तिकं खण्डयितुमनुवदति—**यत्तावदिति। न कर्तव्य इति**—तत्रोच्यते स इत्यादिः। **इतीति** शेषः।

( ९४ सिद्धान्तवार्तिकप्रथमखण्डम् ॥ ३ ॥ )

॥ * ॥ आचार्याचारात्संज्ञासिद्धिः ॥ * ॥

( भाष्यम् )

आचार्याचारात्संज्ञासिद्धिर्भविष्यति ॥

किमिदम्—आचार्याचारादिति ? ॥

आचार्याणामुपचारात्।

( **प्रदीपः** ) **आचार्याचारादिति।** आचार्याणां व्यवहारादित्यर्थः ॥

( **उद्द्योतः** ) **उपचारो** नाम गौणी वृत्तिरिति भ्रमं व्युदस्यति—**व्यवहारादिति।** अनेन व्यवहाराच्छक्तिग्रह उक्तः। स च शक्तिग्राहकशिरोमणिः ॥

( **तत्त्वालोकः** ) भाष्ये—ननु तर्हि कथं संज्ञासम्प्रत्यय इत्यत आह—**आचार्येति।** आचार्याणां वृत्तिकृतां व्यवहारादेव इमानि संज्ञासूत्राणीति निश्चयो भविष्यतीति न "अथ संज्ञा" इत्यधिकारसूत्रं कर्त्तव्यमित्याशयः। उद्द्योते—**स च**—व्यवहारश्च।

( सिद्धान्तवार्तिकद्वितीयखण्डम् ॥ ३ ॥ )

॥ * ॥ यथा लौकिकवैदिकेषु ॥ * ॥

( भाष्यम् )

तद्यथा लौकिकेषु वैदिकेषु च कृतान्तेषु ॥ लोके तावन्मातापितरौ पुत्रस्य जातस्य संवृतेऽवकाशे नाम कुर्वाते-देवदत्तो यज्ञदत्त इति। तयोरुपचारादन्येऽपि जानन्ति इयमस्य संज्ञेति ॥ वेदे याज्ञिकाः संज्ञां कुर्वन्ति—स्फ्यो यूपश्चषाल इति। तत्रभवतामुपचारादन्येऽपि जानन्ति—इयमस्य संज्ञेति ॥

( **उद्द्योतः** ) भाष्ये **वेदे याज्ञिका इति।** यज्ञकाण्डद्रष्टार ऋषय इत्यर्थः। वेदकर्तृत्ववत्संज्ञाकर्तृत्वं तेषां द्रष्टव्यम् ॥

( **तत्त्वालोकः** ) भाष्ये—**कृतान्तेषु**—कृतसिद्धान्तेषु। **संवृते**-श्रोतृजनासन्निहिते। **तयोः**-मातापित्रोः। **उपचारात्**—व्यवहारात्। **कुर्वन्ति**-पश्यन्ति। **स्फ्यः**—खादिरं खड्गसदृशं यज्ञसाधनकाष्ठम्। **यूपः**-तक्षणादिसंस्कृतं पशुनियोजनकाष्ठम्। **चषालः**-यूपाग्रे स्थाप्यमानं यूपवलयसंज्ञकं काष्ठम्। **तत्रभवताम्**—पूज्यानां याज्ञिकानाम्।

उद्द्योते—**कर्तृत्वेति**—द्रष्टृत्वेत्यर्थः।

( दार्ष्टान्तिकभाष्यम् )

एवमिहापि—इहैव तावत्केचिद्व्याचक्षाणा आहुः—वृद्धिशब्दः संज्ञा, आदैचः संज्ञिन इति ॥ अपरे पुनः "सिचि वृद्धिः" इत्युक्त्वाऽऽकारैकारौकारानुदाहरन्ति । तेन मन्यामहे—यया प्रत्याय्यन्ते सा संज्ञा, ये प्रतीयन्ते ते संज्ञिन इति ॥

( प्रदीपः ) वृद्धिशब्दः संज्ञेति । वृद्धिशब्दस्य प्रत्यायनशक्तिर्व्याख्यानेनैव प्रकाश्यते । यथादैचां वर्णानामिति वर्णत्वम् ॥ अपर इति । प्रदेशाद्वा संज्ञासंज्ञ्यभिव्यक्तिः । संज्ञासूत्रार्थाद्वा प्रदेशार्थस्य व्यवस्थेति भावः ॥

( उद्द्योतः ) भाष्ये इहैवेति । वृद्धिरादैच्सूत्रे एवेत्यर्थः ॥ असत्याः शक्तेर्व्याख्यानेनोत्पादयितुमशक्यत्वादाह—वृद्धिशब्दस्येति । प्रत्यायनशक्तिः प्रत्यायने बोधजनने कारणीभूता शक्तिः । भाष्ये उदाहरन्तीति । वृद्धिरादैजिति सूत्रार्थकथनार्थं तत्प्रदेशत्वेन सिचि वृद्धिरित्युक्त्वा तदुदाहरणत्वेनाकार्षीद् अच्चैषीदश्रौषीदित्युदाहरन्तीत्यर्थः । एवं च वृद्धिशब्दस्य प्रत्यायकत्वमादैचां प्रत्याय्यत्वं निर्णीय वृद्धिरादैच्सूत्रस्य संज्ञाबोधकत्वं वृद्धिशब्दस्य संज्ञात्वं च निर्णयन्तीति भावः ॥ तेन अपराचार्योक्तोदाहरणेन ॥

( तत्त्वालोकः ) भाष्ये-इहापि—व्याकरणशास्त्रेऽपि ।

प्रदीपे-व्याख्यानेनैवेति—नच व्याख्यानाच्छक्तिज्ञानं शक्तिज्ञानाच्च व्याख्यानमित्यन्योन्याश्रयः, यस्माद्व्याख्यानाद्यच्छक्तिज्ञानं तस्माच्छक्तिज्ञानात्तद्व्याख्यानस्याभावात् ।

( आक्षेपान्तरानुवादभाष्यम् )

यदप्युच्यते—क्रियमाणेऽपि संज्ञाधिकारे संज्ञासंज्ञिनोरसंदेहो वक्तव्य इति ॥

( तत्त्वालोकः ) वक्तव्य इतीति—तत्रोच्यते स न वक्तव्य इतीति शेषः ।

( ९५ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ * ॥ संज्ञासंज्ञ्यसंदेहश्च ॥ * ॥

( भाष्यम् )

संज्ञासंज्ञिनोश्चासंदेहः सिद्धः ॥

कुतः ? ॥

आचार्याचारादेव । उक्त आचार्याचारः ॥

( तत्त्वालोकः ) नन्वेवं कुतः संज्ञासंज्ञिनोरसन्देहः सिद्ध्येदित्यत आह—संज्ञेति । आचार्येतिवार्तिकोक्तहेतुरनुवर्तते—आचार्याचारादिति । एवः हेतुसुलभताद्योतकः । वृत्तिकारव्यवहारात् एकस्य संज्ञात्वे, अपरस्य संज्ञित्वे निर्णीते का संज्ञा कः संज्ञीति सन्देह एव नोदेतीति भावः ।

( ९६ सिद्धान्तहेतुवार्तिकप्रथमखण्डम् ॥ ५ ॥ )

॥ * ॥ अनाकृतिः ॥ * ॥

( भाष्यम् )

अथवाऽनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥

( प्रदीपः ) अनाकृतिरिति । आकृत्या साहचर्याद्भेदो लक्ष्यते । तेनायमर्थः—वृद्धिशब्द एकत्वात्संज्ञा, आदैचां बहुत्वात्संज्ञित्वम् । लाघवार्थं हि संज्ञाकरणम् । यथा सर्वादीनि सर्वनामानीत्यनेकस्यैका संज्ञा क्रियते, न त्वेकस्यानेका संज्ञा, प्रयोजनाभावात् ॥ आकृतिमत इति । अवस्थाभेदेष्वपि स एवायमिति प्रत्यभिज्ञानिमित्तकं देवदत्तत्वादिकं सामान्यमस्तीत्याकृतिमत इत्युक्तम् ॥

( उद्द्योतः ) नन्वाकृतिर्जातिस्तद्भेद आदैच्ष्वपि तदभावस्तु न वृद्धिशब्देऽपीत्यत आह—आकृत्येति । बहुव्रीहिरिति भावः ॥ अनाकृतिरित्येतन्न्यायसिद्धमित्याह—लाघवार्थमिति ॥ नन्वेकस्यापि तव्यादेरनेकाः कृत्कृत्यप्रत्ययसंज्ञाः क्रियन्तेऽत आह-प्रयोजनेति । सति हि प्रयोजने तथा, प्रकृते तु न तथा, प्रयोजनाभावादिति भावः ॥ प्रत्यभिज्ञानिमित्तकम् । प्रत्यभिज्ञाप्रमाणकमित्यर्थः । वस्तुतो भाष्ये आकृतिमत इत्यस्य भेदवत इत्यर्थः । अवस्थाभेदेन च तत्रारोपितः सः । आरोपितभेदेन च जातिसत्त्वे न मानम् । अत एव देवदत्तेत्यादौ न ङीषिति कश्चित् ॥

( तत्त्वालोकः ) भाष्ये—एकस्य आचार्याचाररूपहेतोरुक्तत्वात् "अनाकृतिर्लिङ्गेन वा"इत्यत्रत्यवाशब्दस्य उभयत्रान्वयमभिप्रेत्याह—अथवेति । संज्ञादिसन्देहस्य "अनाकृतिः" इत्येतावन्मात्रकथनेन अनिवृत्तेः संज्ञादिपदाध्याहारेण तद् व्याचष्टे—अनाकृतिः संज्ञेति । हि—यतः । इतीति—अनाकृतिरिति शेषः ।

प्रदीपे-साहचर्यात्—यत्राकृतिः तत्र भेद इत्याकारकात् । हि—यतः । सामान्यं—जातिः । इति—इति हेतोः ।

उद्द्योते—नन्विति—अनाकृतिरित्यत्रेति शेषः । जातिरिति—नञर्थो यदि भेदस्तर्हीति शेषः । अपीति—इति तेष्वपि संज्ञात्वप्रसङ्गः, यद्यत्यन्ताभावस्तर्हि प्रत्युच्चारणं शब्दा भिद्यन्ते इति सिद्धान्ते वृद्धिशब्दे वृद्धिशब्दत्वरूपजातिसत्त्वादिति शेषः । अपीति—इति तत्रापि संज्ञात्वाप्रसङ्ग इति शेषः । बहुरिति—अनाकृतिपदे इत्यादिः । हि—यतः । तथा—एकस्य अनेका संज्ञा क्रियते । तत्र—देवदत्ते । सः—भेदः ।

( सिद्धान्तहेतुवार्तिकद्वितीयखण्डम् ॥ ५ ॥ )

॥ * ॥ लिङ्गेन वा ॥ * ॥

( भाष्यम् )

अथ वा—किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा संज्ञेति । वृद्धिशब्दे च तल्लिङ्गं करिष्यते, नादैच्छब्दे ॥

( प्रदीपः ) लिङ्गेन वेति । कलादिना वर्णदोषेणेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये-लिङ्गेन वेति—असन्देह इत्यनुषज्यते ।

( आक्षेपभाष्यम् )

इदं तावदयुक्तम् । यदुच्यते—आचार्याचारादिति ॥

किमत्रायुक्तम् ? ॥

तमेवोपालभ्य 'अगमकं ते सूत्रम्' इति, तस्यैव पुनः प्रमाणीकरणमित्येतदयुक्तम् । अपरितुष्यन् खल्वपि भवाननेन परिहारेण "*अनाकृतिर्लिङ्गेन वा*" इत्याह ॥

**( प्रदीपः ) तमेवोपालभ्येति** । यो हि सूत्रकारमुपालभते— **अगमकं ते सूत्रमिति**, स कथं वृत्तिकारान्प्रामाण्येनाश्रयतीत्यर्थः ॥ **अपरितुष्यन्निति** । त्वयापि परिहारान्तरं ब्रुवताऽऽचार्याचारो न प्रमाणत्वेनाश्रित इत्यर्थः ॥

**( उद्द्योतः ) स कथं वृत्तिकारानिति** । **तस्यैवेति** भाष्यस्य तदीयस्यैवेत्यर्थ इति भावः ॥

**( तत्त्वालोकः )** भाष्ये प्रथमहेतुं खण्डयति—**इदं तावदिति** । **किमिति** शब्दार्थयोरित्यादिः । **तमेव**—सूत्रकारमेव । **उपालभ्य**—विनिन्द्य । **अगमकं**—पदार्थमिथःसंसर्गाबोधकत्वादनर्थकम् । **अनेन**—आचार्याचारादित्यनेन ।

प्रदीपे—**वृत्तिकारान्**—वृत्तिकाराचारान् । **परिहारान्तरम्**—अनाकृतिर्लिङ्गेन वेति ।

उद्द्योते-**तदीयस्यैवेति**—आचारस्येति शेषः ।

( तृतीयहेतौ गौरवाक्षेपभाष्यम् )

**तत्रापि वक्तव्यम् ॥**

**( प्रदीपः ) तत्रापीति** । **लिङ्गेन वेत्येत**द्वक्तव्यमित्यर्थः **अनाकृतिः संज्ञेत्येत**त्तु न्यायसिद्धत्वान्न वक्तव्यम् ॥

**( उद्द्योतः ) लिङ्गेन वेत्येतदिति** । लिङ्गासङ्गः इत्थंलिङ्गा संज्ञेति च वक्तव्यमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-तृतीयहेतुं दूषयति—**तत्रापीति** ।

प्रदीपे—द्वितीयहेतुः युक्त एवेत्याह—**अनाकृतिरिति** ।

उद्द्योते-**लिङ्गेति**—प्रतिसंज्ञं कलादीत्यादिः । तथा च संज्ञाधिकारासन्देहयोः करणापेक्षया लिङ्गेन वेति पक्षाश्रयणे न लाघवं, यत्नद्वयस्योभयत्र कर्तव्यत्वादिति भावः ।

( तृतीयहेतुस्वीकारे लाघवप्रदर्शकभाष्यम् )

**यद्यप्येतदुच्यते । अथवैतर्हि इत्संज्ञा न वक्तव्या । लोपश्च न वक्तव्यः । संज्ञालिङ्गमनुबन्धेषु करिष्यते । न च संज्ञाया निवृत्तिरुच्यते । स्वभावतः संज्ञा संज्ञिनं प्रत्याय्य स्वयं निवर्तते । तेनानुबन्धानामपि निवृत्तिर्भविष्यति ॥**

**( प्रदीपः )** अथवैतर्हीति । एवं सतीत्यर्थः । ङकारादिष्वनुबन्धेषु कलादिकमासज्यते । ततश्च तेषां संज्ञात्वे सति **ङानुदात्तमनेपदमि**ति करिष्यते । संज्ञाश्च संज्ञिनं प्रत्याय्य स्वयं निवर्तन्त इतीत्संज्ञा लोपश्च न वक्तव्यौ भवत **इत्यर्थः** ।

**( उद्द्योतः ) ङकारादिष्वति** । धात्वादिपठितेष्वित्यर्थः । ननु संज्ञालिङ्गे कृतेऽपीत्संज्ञाद्यभावे कथं तेषां निवृत्तिरत आह—**भाष्ये स्वभावतः संज्ञेति** ॥ तद्व्याचष्टे—**संज्ञाश्च संज्ञिनमिति** ॥

**( तत्त्वालोकः )** भाष्ये—संज्ञाधिकारासन्देहयोराश्रयणापेक्षया तृतीयहेतोराश्रयणे लाघवं दर्शयति—**यद्यपीति** । **एतत्**—प्रतिसंज्ञं कलादिलिङ्गासञ्जनम्, **इत्थं लिङ्गा संज्ञेति** च । **अथवेति**-तथापीत्यादिः ।

प्रदीपे—**संज्ञालिङ्ग**मितिभाष्यस्यार्थमाह-**ङकारेति** । **तेषां**-ङकाराद्यनुबन्धानाम् । **इतीति—इति** हेतोरित्यर्थः । अनुबन्धनिवृत्तये इति शेषः ।

उद्द्योते **तेषाम्—**अनुबन्धानाम् ।

( आक्षेपभाष्यम् )

**सिध्यत्येवम् । अपाणिनीयं तु भवति ॥**

**( उद्द्योतः )** भाष्ये **अपाणिनीयं त्विति** । अनन्तस्थलेषु दोषविशिष्टपठने आनुनासिक्यादिवत् प्रतिज्ञाकरणे च दुर्ज्ञेयत्वादिति भावः॥

**( तत्त्वालोकः )** भाष्ये—एवमुपपादितलाघवकमपि तृतीयहेत्वाश्रयणं दूषयति—**सिद्ध्यतीति** । यद्यपीत्यादिः ।

उद्द्योते—अपाणिनीयत्वापत्तिः इष्टाऽपि न कर्तुं शक्यते इत्यत्र हेतुमाह—**अनन्तेति** ।

( सिद्धान्तिभाष्यम् )

**यथान्यासमेवास्तु ॥**

**( तत्त्वालोकः ) यथान्यासमिति**—तर्हीत्यादिः । इत्संज्ञादिकमिति शेषः ।

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—"*संज्ञाधिकारः संज्ञासंप्रत्ययार्थ इतरथा ह्यसंप्रत्ययो यथा लोके*" इति ॥**

**( तत्त्वालोकः )** तथा च अनाकृतिरिति समाधानस्यासार्वत्रिकत्वात, लिङ्गेन वेति समावेशश्च संज्ञाधिकाराद्याश्रयणेन साम्यात, प्रथमोपस्थिततया संज्ञाधिकारादिकरणमेव वरमित्याशयेन स्मारयति—**ननु चेति** ।

( समाधानभाष्यम् )

**न च यथा लोके, तथा व्याकरणे । प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण ॥**

**किमतो यदशक्यम् ? ॥**

**अतः संज्ञासंज्ञिनावेव ॥**

**( प्रदीपः ) प्रमाणभूत इति** । प्रामाण्यं प्राप्त इत्यर्थः । भू प्राप्तावित्यस्याऽऽधृषाद्वेति णिजभावे रूपम् । वृत्तिविषये च प्रमाणशब्दः प्रामाण्ये वर्तते ॥ **दर्भपवित्रेति** । प्रमादाभावं दर्शयति । **प्राङ्मुख इति** । प्राच्या अभ्युदयहेतुत्वात् ॥ **महतेति** मनःप्रणिधानं दर्शयति ॥ एतच्च सर्वमागमाद्बोद्धव्यम् । एवमानर्थक्ये परिहृते संज्ञासंप्रत्ययाय पक्षान्तराणि प्रश्नमुखेन प्रतिक्षिपति—**किमत इति** ॥

**( उद्द्योतः )** ननु भवतेर्जन्मार्थत्वेनाभूततद्भावप्रतीत्या च्वौ सति प्रमाणीभूत इति स्यात् तदविवक्षायां तु प्रमाणमाचार्यः, प्रकारान्तरेण भूत इति अर्थः स्यादत आह—**प्रामाण्यमिति** । **वृत्तिविषये** इति प्रकृताभिप्रायम् ॥ **प्रमादः** पिशाचादिसंबन्धः ॥ **आगमः** संप्रदायः प्रकृतभाष्योक्तिर्वा ॥ **भाष्ये अनर्थकेनेति** । बोध्यार्थरहितेनेत्यर्थः । तेन पारायणे सर्वेषामदृष्टार्थत्वेपि दृष्टप्रयोजनराहित्यरूपमनर्थकत्वं वर्णपदसूत्राणामस्त्येवेति न वक्ष्यमाणसूत्रादिप्रत्याख्यानासङ्गतिः ॥ **संज्ञासंप्रत्ययाय** संज्ञात्वनिश्चयाय ॥ **भाष्ये किमत इति** । **अत**—एतादृशकर्तृकत्वात्किं कथमर्थवत्त्वं **( यद् )** यतस्तद् **( अशक्यम् )** अशक्यनिरूपणमित्यक्षरार्थः ॥

**( तत्त्वालोकः )** भाष्ये—दृष्टान्तविघटनेन, स्मारितं दूषयति—**न च यथेति** । यथा लोके, न च तथा व्याकरणे **इत्यन्वयः** । भ्रमप्रमादविप्रलिप्साकरणापाटवादिरूपः वक्तृदोष एव वाक्यानर्थक्यप्रयोजक **इति** लोके तत्सत्त्वात् दश दाडिमानीत्यादिवाक्यानामानर्थक्यं, शास्त्रे

तु तदसत्वात् सूत्राणामानर्थक्यं न सम्भवतीति भावः । शास्त्रे तदसत्त्वमुपपादयति—**प्रमाणेति ।** अनेन भ्रमाभावः सूचितः । विप्रलिप्साऽभावमाह—**आचार्य इति । दर्भेति**—कुशेत्यर्थः। भूम्यशुद्धिप्रयुक्तचित्तविक्षेपाभावमाह—**शुचाविति ।** शुद्धभूमावित्यर्थः । जनवार्त्तादिप्रयुक्तव्यासङ्गाभावमाह—**अवकाश इति** जनासन्निहितदेशे इत्यर्थः । **तत्र**—सूत्रेषु । **सूत्रेणेति**—वृद्धिरादैजित्यनेनेति शेषः । **एवेति**—प्रकृतसूत्रेण प्रतीयेते इति शेषः ।

प्रदीपे—ननु प्राप्त्यर्थकभूधातोः चुरादिण्यन्ततया प्रमाणभावित इति स्यादित्यत आह—**भू प्राप्ताविति ।** "प्राचीं देवा अभजन्त" इति श्रुत्यनुसारेणाह—**प्राच्या इति । एतच्च**—दर्भग्रहणादि च ।

उद्द्योते—**तदविवक्षायामिति**—जन्मार्थकत्वाविवक्षायामित्यर्थः। भवतेरित्यादिः । सत्तार्थकत्वविवक्षणे इति शेषः। **अस्त्येवेति**—अस्त्येवेति हेतोः । **तत्**—अर्थवत्त्वम् ।

( आक्षेपभाष्यम् )

**कुतो नु खल्वेतत्—संज्ञासंज्ञिनावेवेति । न पुनः साध्वनुशासनेऽस्मिन्शास्त्रे साधुत्वमनेन क्रियते ? ।।**

**( उद्द्योतः )** **साध्वनुशासन इति ।** अनेन साधुत्वपक्षस्याकाण्डता वारिता ॥

**( तत्त्वालोकः )**—वृद्धिरादैजित्यस्य वृद्धिपदादैच्पदयोः साधुत्वप्रतिपादकत्वेऽपि अर्थवत्वसम्भवात् तस्य योः संज्ञासंज्ञित्वप्रतिपादकतैवेति कथं निर्णीयते इत्याशयेन पूर्वपक्षी शङ्कते—**कुतो न्विति । शास्त्रे इति**—क्षय्यजय्यौ शक्यार्थे इत्यनेनेव अनयोरिति शेषः । **क्रियते**—क्रियते इति ।

( आक्षेपनिराकरणभाष्यम् )

**कृतमनयोः साधुत्वम् ॥**

**कथम् ?**

**वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात् क्तिन्प्रत्ययः आदैचोऽप्यक्षरसमाम्नाये उपदिष्टाः ।।**

**( प्रदीपः )** **कृतमनयोरिति ।** आदैच्छब्दस्य द्वन्द्वत्वादनयोरिति द्विवचननिर्देशः ॥ **आदैच इति ।** तेषां च द्वन्द्वनिर्देशोऽयमादैच्छब्द इत्यर्थः ॥

**( उद्द्योतः )** **द्वन्द्वत्वादिति ।** **अनयो**रित्यस्य पदयोरिति विशेष्यम् ॥ पदानामेव साधुत्वान्वाख्यानादिति भावः ॥ भाष्ये **अविशेषेणेति ।** प्रत्ययविशेषमनादायेत्यर्थः ॥ ननु वर्णसमाम्नाये आकाराद्युपदेशेऽप्यादैच्छब्दस्य किमागतमत आह—**तेषां चेति ।** संज्ञाग्रहणद्वारेणेति शेषः ॥ **तपर इति आदिरन्त्येने**ति च तेषां कृतयोरादैच्संज्ञयोर्द्वन्द्वनिर्देशेन द्वन्द्वशास्त्रेण कृतं साधुत्वमित्यर्थः । ऐजित्यपि तन्मूलकादिरन्त्येनेत्यनेन बोधितमित्याशयेन भाष्ये-**ऽक्षरसमाम्नाये उपदिष्टा** इत्युक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती उत्तरयति—**कृतमिति ।** अलाक्षणिकं हि कार्यं निपातनेन क्रियते इति भावः । **अस्मै**—जिज्ञासवे । आदैजित्यस्य अर्थमात्रपरत्वज्ञापनाय बहुवचनान्तमाह—**आदैचोऽपीति ।** अविशेषेणेत्यनुषज्यते ।

उद्द्योते—**तेषाम्**-आकारस्य ऐकारौकारयोश्च । **अपिना**—आकारादिसमुच्चयः । **तन्मूलकेति**—अक्षरसमाम्नायमूलकेत्यर्थः ।

( आक्षेपभाष्यम् )

**प्रयोगनियमार्थं तर्हीदं स्यात्—वृद्धिशब्दात्परे आदैचः प्रयोक्तव्या-इति ॥**

**( प्रदीपः )** **प्रयोगनियमार्थमिति ।** आदैज्वृद्धिरिति प्रयोगो मा भूदित्यर्थः ॥

**( तत्त्वा० )** भाष्ये—एवमस्य अनयोः साधुत्वबोधकत्वे खण्डिते पूर्वपक्षी अस्य विधेयान्तरम् शङ्कते—**प्रयोगेति । इदं**—प्रकृतसूत्रम् । अस्य ते प्राग्धातोरिति वदिति शेषः । अत्र प्रयोगनियमशब्देन पौर्वापर्यनियम एवाभिप्रेतः न साधुभाषणनियम इत्याशयेनाह—**वृद्धीति ।**

( आक्षेपनिराकरणभाष्यम् )

**नेह प्रयोगनियम आरभ्यते ।। किं तर्हि ? । संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति । तद्यथा-आहर पात्रम् , पात्रमाहरेति ।।**

**( प्रदीपः )** **नेहेति ।** प्रयुज्यत इति प्रयोगस्तत्र स्वतन्त्रस्य पदस्य प्रयुज्यमानस्य नियमो नारभ्यते, अपि तु पदावयवस्य प्रकृतिप्रत्ययोपसर्जनागमादिरूपस्य । लोके च केवल एव वृद्धिशब्दः प्रयुज्यत इति न तस्यानेन नियमः क्रियते, लोके प्रयुक्तानामिदमनुशासनम् ॥

**( उद्द्योतः )** ननूपसर्जनं पूर्वं परश्चेत्यादिभिः प्रयोगनियम आरभ्यत एवेत्यत आह—**प्रयुज्यत इति ॥ स्वतन्त्रस्येति ।** गत्युपसर्गनिरासः । त हि द्योतकत्वात्परतन्त्रौ ॥ **पदावयवस्येति ।** आदिना द्योतकाः ॥ युक्त्यन्तरमाह—**लोके चेति,** शिष्टलोकाभिप्रायम्, प्रयुक्तानां चेदमनुशासनमिति भावः ॥ **केवलः** आदैच्पदासंबद्धः ॥ भाष्ये **संस्कृत्येति ।** साधुत्वेनान्वाख्यायेत्यर्थः ॥ **अभिसंबन्धः** पौर्वापर्यलक्षणः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तद् खण्डयति—**नेहेति । इह**—व्याकरणशास्त्रे । **तेषां**—पदानाम् ।

प्रदीपे—**तत्र**— युज्यमानानां मध्ये । **इति**—इति हेतोः । **तस्य**—वृद्धिशब्दप्रयोगस्य । **अनेन**—प्रकृतसूत्रेण **लोके इति**—यत इत्यादिः । उद्द्योते-**तौ**-गत्युपसर्गौ **ह**—यतः । **द्योतकत्वात्**—स्वसमभिव्याहृतपदनिष्ठवृत्त्युद्बोधकत्वात् ।

( आक्षेपभाष्यम् )

**आदेशास्तर्हीमे स्युः । वृद्धिशब्दस्यादैच आदेशाः ।।**

**( तत्त्वालोकः )**—एवम् अस्य प्रयोगनियमार्थत्वे दूषिते पूर्वपक्षी पक्षान्तरं शङ्कते—**आदेशा इति । इमे**—आदैचः ।

( आक्षेपनिराकरणभाष्यम् )

**षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते । न चात्र षष्ठीं पश्यामः ।।**

**( प्रदीपः )** **षष्ठीनिर्दिष्टस्येति ।** स्थानशब्दोऽर्थवाची तिष्ठन्त्यस्मिञ्शब्दा इति स्थानम् । न च वृद्धिशब्दार्थमादैचो वक्तुं शक्तास्तेनात्र षष्ठ्यर्थाभावादिति तात्पर्यम् । तथा हि षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावो यथा **'नाभि नभं च' परशुं परशुं च'** इति ॥

**( उद्द्योतः )** षष्ठ्यभावेपि **नाभि नभ**मित्यादावादेशदर्शना-

दाह—**स्थानेति । षष्ठीस्थाने** इति—सूत्रगत इति शेषः । तत्र हि सूत्रे स्थानशब्दोऽधिकरणव्युत्पत्त्यार्थवाची भावव्युत्पत्त्या प्रसङ्गवाची च तन्त्रेणोपादीयते । अन्यथा केवलार्थशब्दं प्राप्तिशब्दं वोपाददीत। एवं च—याऽनियोगा षष्ठी सा प्रसङ्गनिरूपितसंबन्धार्थिकैवेत्येकोऽर्थः। द्वितीये तु षष्ठीशब्दो लक्षणया स्थानिपरः। स्थाने इति सप्तमी वाच्यस्वार्थस्याधिकरणत्वविवक्षया बोध्या । योगशब्दश्च युज्यत इति व्युत्पत्त्या आदेशवाची ततोऽर्शआद्यच्। तेन स्थानी स्वार्थाभिधानसमर्थादेशवानित्यर्थ इति भावः ॥ भाष्यस्य तु षष्ठीनिर्दिष्टस्य स्थानिनो योऽर्थस्तस्य वाचका उच्यन्ते । न चात्रादैचु षष्ठीनिर्दिष्टस्य स्थानिनोऽर्थानभिधेयत्वेन पश्याम इत्यर्थः ॥ **षष्ठ्यर्थाभावादिति** षष्ठीबोध्यस्थान्यर्थाभिधानसामर्थ्याभावादिति भावः ॥ **तदर्थसद्भावादिति ।** आदेशस्य स्थान्यर्थबोधनसामर्थ्यसद्भावादित्यर्थः ॥ वस्तुतस्तु स्थानं प्रसङ्ग एव। स चार्थवत एव । अर्थप्रत्यायनाय शब्दप्रयोगात्। एवं चार्थप्रयुक्त एव स्थान्यादेशयोः संबन्ध इति स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति वदन्ति ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तदपि खण्डयति—**षष्ठीति। अत्र**—वृद्धिशब्दे। प्रदीपे-**अत्र**—आदैचु।

उद्द्योते—**तत्र**—षष्ठीस्थाने योगेत्यत्र। **हि**—यतः। **अन्यथा**—केवले अर्थे प्रसङ्गे वा विवक्षिते। **व्युत्पत्त्येति**—कर्मेत्यादिः। **वाचका इति**—आदेशा इति शेषः। **एवेति**—अनेन अर्थनिरासः। **स च**—प्रसङ्गश्च। **इति**—इति हेतोः। तथा च षष्ठीनिर्दिष्टस्येति भाष्यस्य बाहुल्याभिप्रायकत्वात् "नामि नभञ्जे"त्यादेः नानुपपत्तिरिति भावः।

## ( आक्षेपभाष्यम् )

**आगमास्तर्हीमे स्युर्वृद्धिशब्दस्यादैच आगमाः ॥**

**( तत्त्वालोकः )**—एवमादेशपक्षे खण्डिते पूर्वपक्षी आगमपक्षमुत्थापयति—**आगमा इति ।**

## ( आक्षेपनिरासभाष्यम् )

**आगमा अपि षष्ठीनिर्दिष्टस्यैवोच्यन्ते । लिङ्गेन च । न चात्र षष्ठीं, न खल्वप्यागमलिङ्गं पश्यामः ॥**

**( प्रदीपः ) आगमा अपीति ।** अत्राप्यर्थोऽपेक्ष्यते। अनागमकानामर्थे सागमका इत्यर्थः ॥ **लिङ्गेन चेति ।** देशविशेषप्रतिपत्तये टकारादिलिङ्गं तत्र क्रियत इत्यर्थः ॥

**( उद्द्योतः ) अत्रापीति ।** वस्तुतोऽवयवषष्ठ्यैवागमा उच्यन्ते इत्यर्थो भाष्यस्य ॥ कलादिलिङ्गभ्रमव्यावृत्तये आह-**देशेति । देशवि**शेषप्रतिपत्त्यर्थयत्नसाध्यागमप्रतीतिर्यत्लाभावे नेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तमपि खण्डयति—**आगमा इति ।** प्रदीपे—ननु "न य्वाभ्यामि'त्यादौ षष्ठ्यभावेऽपि आगमत्वं दृश्यते इत्यत आह—**अत्रापीति । अर्थः**—आगमी आगम्यर्थाभिधानसमर्थागमवान् भवतीत्यर्थः। ननु आगमस्यानर्थकत्वात् कथम् आगम्यर्थाभिधानसामर्थ्यमित्यत आह-**अनागमकानामिति। तत्र**-आगमे।

उद्द्योते—**वस्तुत इति**—लिङ्गशून्यस्थले इति शेषः। **प्रतीतिरिति**—न य्वाभ्यामित्यादौ पूर्वादिग्रहणात्मकलिङ्गरूपयत्नेनागमत्वप्रतीतिरिति भावः।

## ( सिद्धान्तसमाधानभाष्यम् )

**इदं खल्वपि भूयः सामानाधिकरण्यमेकविभक्तित्वं च । द्वयोश्चैतद्भवति ॥**

**कयोः ? ॥**

**विशेषणविशेष्ययोर्वा संज्ञासंज्ञिनोर्वा ॥**

**तत्रैतत्स्याद्विशेषणविशेष्ये इति ॥**

**तच्च न, द्वयोर्हि प्रतीतपदार्थकयोर्लोके विशेषणविशेष्यभावो भवति। न चादैच्छब्दः प्रतीतपदार्थकः। तस्मात्संज्ञासंज्ञिनावेव ॥**

**( प्रदीपः ) इदं खल्वपीति ।** विशेषणविशेष्यभावनिराकरणेन संज्ञापक्षं स्थापयति ॥ देवदत्तः पचतीत्यस्ति सामानाधिकरण्यं न त्वेकविभक्तित्वम्, गोरश्व इत्यस्त्येकविभक्तित्वं न तु सामानाधिकरण्यमित्युभयोरुपादानम्। संज्ञासंज्ञिनोरप्यस्ति विशेषणविशेष्यत्वं प्रसिद्ध्यप्रसिद्धिवशात्तु भेदेनोपादानम्। तत्तु सामानाधिकरण्यं शब्दयोरेव केचिदिच्छन्ति। द्वाभ्यां शब्दाभ्यां भिन्नप्रवृत्तिनिमित्ताभ्यामेकस्याधिकरणस्याभिधेयस्य प्रतिपादनाद्विशेषणविशेष्यार्थप्रतिपादनाच्च विशेषणविशेष्यत्वम् ॥ अन्ये तु नीलमुत्पलमिति प्रवृत्तिनिमित्तयोर्जातिगुणयोरेकमधिकरणमाश्रय इति सामानाधिकरण्यं विशेषणविशेष्यभावं चार्थयोरेव मन्यन्ते ॥ **न चादैच्छब्द इति ।** न ह्यस्य कश्चिल्लौकिकोऽर्थः प्रसिद्ध इत्यर्थः ॥

**( उद्द्योतः ) इदं खल्वपीति** भाष्यं पूर्वोक्तपक्षाणामसम्भवं प्रतिपादयति ॥ [ तद्व्याचष्टे—**विशेषणेति** ॥ ] **अस्ति सामानाधिकरण्यमिति ।** न च तादृशे संज्ञासंज्ञित्वसम्भावनेति भावः ॥ **इत्युभयोरिति ।** विशेषणविशेष्यत्वसंज्ञासंज्ञित्वसम्भावनास्थलप्रदर्शनायेत्यर्थः ॥ **संज्ञासंज्ञिनोरपीति ।** वृद्ध्यादिसंज्ञा हि स्वरूपेणैव संज्ञिनं सजातीयाद्यागान्तराद्विजातीयाच्च होमादेर्व्यवच्छिनत्तीति विशेषणम्। संज्ञी च व्यवच्छेद्यः सन्विशेष्यः। विषयताविशेषरूपमपि तत्तयोरस्त्येवेति भावः॥ **प्रसिद्धीति। द्वयोर्हि प्रतीते**त्यादिना भाष्ये उक्तमेतत्। यद्वा सत्यपि व्यवच्छेद्यव्यवच्छेदकभावे संज्ञासंज्ञिनोर्विशेष्यविशेषणभावो लोके न प्रसिद्ध इत्यर्थः ॥ ननु सामानाधिकरण्यं नाम द्वयोः शब्दयोरेकाभिधेयसम्बन्धः। तत्तु न युक्तम्। सामानाधिकरण्यस्य शब्दधर्मत्वेन विशेषणत्वादेश्चार्थधर्मत्वेन विशेषणविशेष्ययोः सामानाधिकरण्यमिति भाष्यासङ्गतेः। संज्ञासंज्ञिनोरेकाभिधेयसम्बन्धाभावेन संज्ञासंज्ञिनोर्वा सामानाधिकरण्यमित्यस्याप्यसङ्गतेरत आह—**तत्त्विति ॥ भिन्नप्रवृत्ती**त्यनेन पर्यायनिरासः ॥ वस्तुत इदं चिन्त्यम्। अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानीत्यादौ नामन्त्रिते समानाधिकरणे इत्यस्य व्यावृत्तये तत्र सामान्यवचनग्रहणमिति तत्सूत्रस्थभाष्यविरोधापत्तेः। युगपदधिकरणवचनतापक्षे पट्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणपुंवद्भावशङ्कापरभाष्यविरोधापत्तेश्च ॥ विशेषणत्वादिकं चोपपद्यत इत्याह—**विशेषणेति ।** भाष्ये **संज्ञासंज्ञिनो**रित्यत्र संज्ञिपदेन संज्ञिसमर्पकः शब्दोऽभिप्रेतः। संज्ञाशब्दे च शब्दः प्रवृत्तिनिमित्तं संज्ञिनि तत्सम्बन्धात्। संज्ञिबोधकशब्दे च संज्ञिगततत्तद्धर्मः प्रवृत्तिनिमित्तम् । एवं च वृद्धिशब्दवदभिन्ना आदैच इति बोधः। वृद्धिशब्दवत्त्वं च लोकसिद्धतादात्म्येनेत्याशयः ॥ **अन्ये त्विति।** संज्ञासंज्ञिनोस्तूक्तं प्रवृत्तिनिमित्तमिति सामानाधिकरण्यम्। एकविभक्तिकत्वं त्वत्र पक्षे शब्दद्वारा बोध्यम्। विभक्तिशब्देन शक्तिर्वा। भाष्ये **संज्ञासंज्ञिनोरित्यस्य** तत्प्रवृत्तिनिमित्तयोरित्यर्थः॥ अन्ये त्विति मतेऽरुचिबीजं तु **प्रतीतपदार्थकयोरिति** बहुव्रीहिस्वरसभङ्गः ॥ **विशेषणविशेष्यभावो भवतीत्यस्य** तदर्थप्रतिपादकत्वं भवतीत्यर्थः ॥ ननु वैयाकरणानामादैच्छब्दः प्रतीतपदार्थक एवेत्यत आह—**न हीति ।**

वृद्धिशब्दार्थान्वययोग्य इति शेषोऽत्र द्रष्टव्यः ॥ केचित्तु वृद्ध्यादिशब्दाः शब्दपरा एव । वृद्धिशब्दाभिन्ना आदैच इति बोधः । तदुक्तं हरिणा—

"वृद्ध्यादयो यथा शब्दाः स्वरूपोपनिबन्धनाः ।
आदैच्प्रत्यायितैः शब्दैः सम्बन्धं यान्ति संज्ञिभिः ॥"

इति । सामानाधिकरण्यं चैकविशेष्यकप्रतीतिजनकत्वमित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती प्रतिपादयति—**इदमिति । खल्वपीति**—अयं निश्चयार्थकः । **भूय इति**—पुनरित्यर्थः । अत्र संज्ञासंज्ञिभावनिर्णये दृढतरं प्रमाणमिति शेषः । **द्वयोरिति**—यत इत्यादिः । शङ्कते—**तत्रेति ।** तयोरित्यर्थः । समाधत्ते—**तच्चेति । विशेषणविशेष्ये** इत्येतच्चेत्यर्थः । हि-यतः । **लोके इति**-मध्यमणिन्यायेन पूर्वत्र परत्र चान्वेति । **तस्मादिति** —विशेषणविशेष्ययोरसम्भवेन परिशेषादिति शेषः । **एवेति**—अनेन प्रतिपाद्यते इति शेषः ।

प्रदीपे—**इत्यस्ति**—इत्यत्रास्ति । **इति—**इति हेतोः । **उभयोः**—सामानाधिकरण्यैकविभक्तिकत्वयोः । **संज्ञेति**—यद्यपीत्यादिः । **प्रसिद्धयप्रसिद्धिवशात्**—लोके प्रसिद्धयोरेव विशेषणविशेष्यभावः, संज्ञासंज्ञिभावस्तु अप्रसिद्धयोरपीति भेदात् । **भेदेनेति**—विशेषणविशेष्यभावसंज्ञासंज्ञिभावयोरित्यादिः । समानमधिकरणमभिधेयं ययोरिति व्युत्पत्त्यनुसारेणाह—**तरिवति । प्रतिपादनादिति**—इदं पूर्वनिर्दिष्टेन सामानाधिकरण्यमित्यनेनान्वेति । **प्रतिपादनाच्चेति-शब्दयो**रेवेति शेषः । समानमधिकरणमाधारः ययोरिति व्युत्पत्त्यनुसारेणाह—**अन्येत्विति । इति—**इत्यत्र । **जातिगुणयोः**-उत्पलत्वजातिनीलगुणरूपार्थयोः । **इति**—इति हेतोः । **अस्य**—आदैच्छब्दस्य ।

उद्द्योते—**तादृशो**—देवदत्तः पचतीत्यत्र । अनेनात्र विशेषणविशेष्यभावसम्भावना सूचिता । गौरश्व इत्यत्र तु न कस्यापि सम्भावनेति भावः । हि—यतः । **इति**—इति हेतोः । **तत् तयोः**—विशेषणविशेष्यत्वं, संज्ञासंज्ञिनोः । **संज्ञासंज्ञिनोरिति**—अस्य मध्यमणिन्यायेन पूर्वत्र परत्र चान्वयः । **इदं**—भिन्नप्रवृत्तिनिमित्ताभ्यामिति विशेषणम् । **तत्सूत्रस्येति**—"नामन्त्रिते" इति सूत्रस्येत्यर्थः । भवन्मते तत्र भिन्नप्रवृत्तिनिमित्तासत्वात् सामानाधिकरण्यासम्भवेन तदप्रासेराह—**विरोधेति ।** एवमग्रेऽपि । **तत्सम्बन्धात्**—शब्दसम्बन्धात् । **इति**—इति हेतोः । **अत्र पक्षे**—अन्येत्विति पक्षे । **वृद्धीति**—लोकप्रसिद्धेत्यादिः । **केचित्तु**—सिद्धान्तिनस्तु । **स्वरूपोपनिबन्धनाः**—स्वरूपबोधकाः । **शब्दैः**—आकारादिभिः ।

## ( सिद्धान्तभाष्यम् )

**तत्र त्वेतावान्सन्देहः—कः संज्ञी का संज्ञेति ॥ स चापि क सन्देहः ? ॥ यत्रोभे समानाक्षरे ? यत्र त्वन्यतरल्लघु सा संज्ञा, यद्गुरु स संज्ञी ॥**

**कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्राप्ययं नावश्यं गुरुलघुतामेवोपलक्षयितुमर्हति ॥ किं तर्हि ? ॥ अनाकृतितामपि । अनाकृतिः संज्ञा, आकृतिमन्तः संज्ञिनः । लोकेऽपि ह्याकृतिमतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

**( उद्द्योतः )** भाष्ये **यत्रोभे इति ।** प्रत्यय अनीयरित्यादौ ॥ लघ्वर्थमित्यस्य लाघवार्थमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—एवमत्र संज्ञासंज्ञिभावे निर्णीतेऽपि विशेषं वक्तुमुपक्रमते सिद्धान्ती—**तत्रेति ।** अत्र संज्ञापक्षे स्थापिते इत्यर्थः । **सन्देह इति**—स्यादिति शेषः । **उभे**—उद्देश्यविधेये । **लघ्विति**—अल्पाक्षरमित्यर्थः । तत्रेति शेषः । **गुरु**—बह्वक्षरम् । **हि**—यतः । ननु सर्वनामसर्वनामस्थानादौ लाघवाभावात् कथं संज्ञासंज्ञिनिर्णय इत्यत आह—**तत्रापीति ।** संज्ञासंज्ञिनिर्णयेऽपीत्यर्थः । **अयम्**—आचार्यः । **उपलक्षयितुम्**—निर्णायकत्वेन अभ्युपगन्तुम् । अदूषितत्वादाह—**अनाकृतीति ।** अपिना लाघवसमुच्चयः । तथा च संज्ञासंज्ञिनिश्चयाय लाघवानाकृतितयोरन्यतरत् द्वयं वा यथासम्भवमाश्रयणीयमिति न च क्वचनानुपपत्तिरिति भावः ।

## ( समाधानान्तरभाष्यम् )

**अथवाऽऽवर्तिन्यः संज्ञा भवन्ति । वृद्धिशब्दश्चावर्तते, नादैच्छब्दः । तद्यथा—इतरत्रापि देवदत्तशब्द आवर्तते, न मांसपिण्डः ॥**

**( प्रदीपः ) आवर्तिन्य इति ।** देवदत्तादिशब्दा हि दानादिप्रतिपादनायावर्तन्ते ॥

**( उद्द्योतः ) न मांसपिण्ड इति ।** दूरस्थस्यापि नामोच्चारणमात्रेण दानादिसम्भवादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—ननु यद्यनाकृतिशब्देन अखण्डपदत्वं विवक्षितं तर्हि सर्वनामादिसंज्ञासु अनुपपत्तिरेव अन्यतरस्याप्यसंभवादित्यत आह—**अथवेति । आवर्तिन्यः**—प्रदेशेषु पुनः पुनरुच्चार्यमाणाः । संज्ञी संज्ञाधीनप्रतिपत्तिकत्वात् स्वरूपतः उच्चारितोऽपि न भवतीति भावः । न केवलं शास्त्रे एवैवं किन्तु लोकेऽपीत्याह—**तद्यथेति ।** उद्द्योते-दूरस्थं पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभाक् ॥ इति स्मृत्यनुसारेणाह—**दूरस्थस्येति ।**

## ( समाधानान्तरभाष्यम् )

**अथवा पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा ॥ कुत एतत् ? । सतो हि कार्यिणः कार्येण भवितव्यम् । तद्यथा—इतरत्रापि सतो मांसपिण्डस्य देवदत्त इति संज्ञा क्रियते ॥**

**( प्रदीपः ) अथवेति ।** सत्यसति वा संज्ञिनि बुद्ध्या विषयीकृते शब्देन पूर्वं निर्दिष्टे संज्ञा प्रवर्तत इत्यर्थः ॥ ततश्चादेङ् गुण इत्यादावदेङादयः संज्ञिनो गुणादयः संज्ञाः ॥

**( उद्द्योतः ) सतो हीत्यादिना** न भावरूपं विवक्षितमभावस्यापि लोपादिसंज्ञादर्शनात् । नापि विद्यमानत्वं प्रत्ययविधौ संज्ञाविशिष्टस्यापि विधानादत आह—**बुद्ध्येति ।** अत एव **सावर्णिर्भविता मनुरित्यादौ** न दोषः । एवं च सच्छब्देन पूर्वं बुद्ध्या विषयीकृतत्वं विवक्षितमित्यर्थः ॥ बुद्धिसत्तासमाविष्ट एव चार्थः शब्देन बोध्यत इति सिद्धान्तात् । तत्त्वं हि पूर्वोच्चारितस्यैव भवतीत्याह—**शब्देन पूर्वमिति ॥**

**( तत्त्वालोकः )** भाष्ये—ननु संज्ञाया अपि नावृत्तिनियमः, "पुमानयं जनिष्यते असौ नामेति नामधेयं गृह्णाति यत्तद्गुह्यमेव भवति" इति गृह्ये गुह्यस्यापि नाम्नो दर्शनादित्यत आह—**अथवेति ।** "यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । सिद्धं धर्मिणमुद्दिश्य साध्यो धर्मो विधीयते ॥" इति न्यायानुसारेणाह—**सत इति ।**

**हि**—यतः। न केवलं शास्त्रे एवैवं, किन्तु लोकेऽपीत्याह—**तथथेति**।

प्रदीपे—अज्ञातस्यानुवादासम्भवादाह—**बुद्धयेति**। **शब्देन**—स्वरूपेण संज्ञाद्वारेण वा। **निर्दिष्टे इति**—उद्देश्ये इति शेषः। **प्रवर्त्तते**—विधीयते। उद्द्योते—**रूपमिति**—सत्त्वमिति शेषः। **विद्यमानत्वं**—विद्यमानत्वरूपम्। **तत्त्वं**—पूर्वं बुद्ध्या विषयीकृतत्वम्।

( आक्षेपभाष्यम् )

**कथं "वृद्धिरादैज्" इति ? ॥**

**( तत्त्वालोकः )**—नन्वेवं प्रकृतसूत्रे वैपरीत्यमापद्येतेत्याशङ्कते नाह—**कथमिति**।

( समाधानभाष्यम् )

**एतदेकमाचार्यस्य मङ्गलार्थं मृष्यताम्। माङ्गलिक आचार्यो महतः शास्त्रौघस्य मङ्गलार्थं वृद्धिशब्दमादितः प्रयुङ्क्ते। मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषकाणि भवन्त्यायुष्मत्पुरुषकाणि चाध्येतारश्च वृद्धियुक्ता यथा स्युरिति ॥ सर्वत्रैव हि व्याकरणे पूर्वोच्चारितः संज्ञी, परोच्चारिता संज्ञा "अदेङ् गुणः" इति यथा ॥**

**( प्रदीपः )** इह तु मङ्गलार्थोऽन्यथा पाठक्रमः, आर्थस्त्वन्यथा क्रमः। अन्ये तु सिद्धिहेतवो भविष्यन्ति ॥ **अपृक्त एकाल्प्रत्यय इति** परिभाषा, न संज्ञेति नास्ति व्यभिचारः। अपृक्तशब्देन ह्येकाकी कथ्यत इत्यनेनानियमेन ग्रहणे प्राप्ते नियमः क्रियते ॥

**( उद्द्योतः )** **भाष्ये माङ्गलिको** मङ्गलप्रयोजनः ॥ **महतः** अर्थतः ॥ एकैकं सूत्रं शास्त्रमिति **शास्त्रौघस्येत्युक्तम्** ॥ **मङ्गलादीनी**त्यादिना स्वप्रयोजनं श्रोतृप्रयोजनं चोक्तम् ॥ **प्रथन्ते** विस्तृतानि भवन्ति। तेन समाप्तिरर्थाक्षिप्ता ॥ **आर्थस्त्वन्यथेति**। आदैज् वृद्धिरित्याकारः। आनुपूर्वीज्ञानस्यासत्तिविषया हेतुत्वादिति भावः ॥ कथं तर्हि वृद्धिशब्दस्य संज्ञात्वप्रतीतिरत आह—**अन्ये त्विति** लाघवादयः। **आदैचो** वृद्धिपदाभिन्ना **इत्यर्थः**। एवञ्चानुपूर्वीव्यत्यासेन विलम्बेन बोधजनकशब्दोच्चारणं मङ्गलार्थं क्षम्यतामिति बोध्यम्। अत्रैकशब्दः प्रथमार्थकः प्रथमं तथाकरणं मङ्गलार्थमेव। एवं चान्यत्रापि तथाकरणमुद्देश्यविधेयभावेनान्वये तादृशस्यैव साधुत्वमिति भ्रमवारणार्थमित्याहुः ॥ **परिभाषेति**। तदा हि **यत्रापृक्तपदं तत्रैकाल्त्याद्युपतिष्ठत** इत्यर्थात्प्राथम्यं युक्तमेवेत्यर्थः ॥ वस्तुत **इदं वृद्धिसूत्रेऽपि** सुवचम्। किं चैवम**पृक्तसंज्ञाया**मित्यादि भाष्यवार्तिकव्यवहारानुपपत्तिः ॥ केचित्तु परिभाषात्वेपि **एकाल्प्रत्यय** इत्येतदुद्देशेनापृक्तपदवद्देशस्थत्वं विधेयम् पदपरत्वार्थं तथापि लक्षणावश्यकत्वेन सामानाधिकरण्यान्वयार्थं तावत्पर्यन्तलक्षणाया उचितत्वात्। पदत्रयाध्याहारे गौरवाच्च। एवं च परिभाषात्वेऽप्युद्देश्यत्वेन तस्यैव पूर्वपाठो युक्तः। आनुपूर्वीव्यत्यासाद्दोषस्तूभयोः सम इति वदन्ति ॥

**( तत्त्वालोकः )** भाष्ये—लाघवादीनां संज्ञासंज्ञिव्यवस्थापकतां जानताऽपि आचार्येणात्र कृते पाठव्यत्यये विशेषकारणमित्याह—**एतदिति**। हि—यतः। **भवन्तीति**—चेत्यादिः। **इति**—इति हेतोः। अत्रत्यार्थक्रमानुसारेण शास्त्रदृष्टान्तमाह—**सर्वत्रैवेति**। **हिरिति**—निश्चये। **इति**—इत्यादौ।

प्रदीपे-**अन्यथा**—वृद्धिरादैजित्याकारः। **अन्ये इति**—**पूर्वोच्चारितः** संज्ञी परोच्चारिता संज्ञेत्यस्मादित्यादिः। **सिद्धीति**—अत्र संज्ञासंज्ञिव्यवस्थेत्यादिः। **इति नास्ति**—इति हेतोरत्र नास्ति। हि—यतः। **इत्यनेन**—इति हेतोः अपृक्तेतिसूत्रेण। अस्य क्रियते इत्यनेनान्वयः।

उद्द्योते-**शास्त्रमिति**—शास्त्रमिति हेतोः। **आसत्तीति**—उपस्थितीत्यर्थः। **तथाकरणं**—**पूर्वं** संज्ञोच्चारणकरणम्। एवमग्रेऽपि। **अन्यत्रापि**—आर्धधातुकं शेष इत्यादावपि। **तादृशस्य**—पूर्वमुद्देश्यस्य, परं विधेयस्य चोच्चारणस्य। **तदा**—परिभाषात्वे। **हि**—यतः। **इत्यर्थादिति**—अपृक्तशब्दोच्चारणस्येति शेषः। कैयटोक्तं खण्डयति—**वस्तुत इति**—अस्य वदन्तीत्यनेनान्वयः। **इदं**—परिभाषात्वम्। **एवम्**—अपृक्तसूत्रस्य परिभाषात्वे। तस्य परिभाषात्वमभ्युपेत्यापि खण्डयति—**केचिदिति**। **पदपरेति**—अपृक्त इत्यस्य अपृक्तेत्यादिः। **तथापि**—परिभाषात्ववादिनोऽपि। **तावदिति**—अपृक्तपदवद्देशस्थेत्यर्थः। **पदत्रयेति**—यत्र, तत्र, उपतिष्ठते, इतीत्यादिः। **तस्यव**—एकाल्प्रत्यय इत्यस्यैव। **उभयोः**—वृद्धिसूत्रापृक्तसूत्रयोः।

( सिद्धान्तिभाष्यम् )

**दोषवान्खल्वपि संज्ञाधिकारः। अष्टमेऽपि हि संज्ञा क्रियते—"तस्य परमाम्रेडितम्" इति। तत्रापीदमनुवर्त्यं स्यात् ॥**

**( उद्द्योतः )** भाष्ये **अनुवर्त्यं स्यादिति**। तच्चासम्बद्धबहुव्यवायादशक्यमिति भावः।

**( तत्त्वालोकः )** भाष्ये—न केवलमुक्तकारणादेव संज्ञाधिकारो न क्रियते, अपितु दोषवत्त्वादपीत्याह—**दोषेति**। **हीति**—यत इत्यर्थः। **अष्टमे** इत्यादिः। **इदम्**—अथ संज्ञेत्यधिकारसूत्रम्।

उद्द्योते-**तच्च**—अनुवर्त्तनञ्च।

( समाधानान्तरभाष्यम् )

**अथवाऽस्थानेऽयं यत्नः क्रियते। न हीदं लोकाद्भिद्यते। यदीदं लोकाद्भिद्येत ततो यत्नार्हं स्यात्। तद्यथा—अगोज्ञाय कश्चिद्गां सक्थनि कर्णे वा गृहीत्वोपदिशति-अयं गौरिति। न चास्मायाचष्टे 'इयमस्य संज्ञा' इति। भवति चास्य सम्प्रत्ययः ॥**

**( प्रदीपः )** **अस्थान इति**। अन्तरेणापि संज्ञाशब्दप्रयोगं लोकव्यवहारवदत्र संज्ञासंज्ञिसंबन्धः सिध्यतीत्यर्थः ॥

**( उद्द्योतः )** **अस्थाने** अनवसरे। **भिद्यते** विलक्षणं भवतीत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—विधीयमानोऽपि संज्ञाधिकारो निष्फलत्वादयुक्त इत्याह—**अथवेति**। **अयं**—संज्ञाधिकारः। **हि**—यतः। **इदं** संज्ञाकरणम्। **लोकात्**—लोकव्यवहारात्। **अस्मै**—अगोज्ञाय। **सम्प्रत्ययः**—संज्ञासंज्ञिज्ञानम्। प्रदीपे-**अत्र**—प्रकृतसूत्रादौ।

उद्द्योते—**अनवसरे**—निवर्त्यसन्देहशून्यसमये।

( आक्षेपभाष्यम् )

**तत्रैतत्स्यात्-'कृतस्तत्र पूर्वैरभिसम्बन्धः' इति ॥**

**( उद्द्योतः )** **अभिसम्बन्धः** संज्ञासंज्ञिभावः। ततो ज्ञातुं शक्य इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**तत्र**—लोके। **एतत्**—शास्त्रतो वैषम्यम्। **कृतः**—व्यवहृतः। **इति**—इति हेतोः। उद्द्योते-**ततः**—पूर्वेषां संज्ञासंज्ञिभावव्यवहारात्। **अस्य लोके स इति शेषः**।

( समाधानभाष्यम् )

इहापि कृतः पूर्वैरभिसम्बन्धः ॥

कैः ? ।

आचार्यैः ॥

( तत्त्वा० ) तयोः वैषम्यं खण्डयति— इहेति । शास्त्रे इत्यर्थः ।

( आक्षेपभाष्यम् )

तत्रैतत्स्यात्—यस्मै तर्हि सम्प्रत्युपदिशति तस्याकृत इति ॥

( उद्द्योतः ) तस्याकृत इत्यस्य तेनाज्ञात इत्यर्थः । तथा च तेन कथं प्रतिपत्तुं शक्य इति भावः ॥

( तत्त्वालोकः ) भाष्ये—पुनः तयोः वैषम्यं शङ्कते—तत्रेति । शास्त्रे इत्यर्थः । उद्द्योते- कथमिति—संज्ञासंज्ञिभाव इति शेषः ।

( समाधानभाष्यम् )

लोकेऽपि हि यस्मै सम्प्रत्युपदिशति तस्याकृतः । अथ तत्र कृतः, इहापि कृतो द्रष्टव्यः ॥

( उद्द्योतः ) अथ तत्रेति । अनुमानादिना ज्ञात इत्यर्थः ।

( तत्त्वालोकः ) भाष्ये—पुनस्तयोः वैषम्यं निराकरोति—लोके इति । तत्र —लोके । इह—शास्त्रे ।

उद्द्योते-आदिना-अयं गौरित्यादिवाक्यप्रयोगसामर्थ्यादिसंग्रहः ।

( इति संज्ञाधिकारसंज्ञासंज्ञिसन्देहापाकरणाधिकरणम् )

---

( अन्योन्याश्रयपरिहाराधिकरणम् )

( ९८ अथान्योन्याश्रयाक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सतो वृद्ध्यादिषु संज्ञाभावात्तदाश्रय इतरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥

( भाष्यम् )

सतः संज्ञिनः संज्ञाभावात् । तदाश्रये संज्ञाश्रये संज्ञिनि वृद्ध्यादिष्वितरेतराश्रयत्वादप्रसिद्धिः ॥

का इतरेतराश्रयता ? ॥ सतामादैचां संज्ञया भवितव्यम्, संज्ञया चादैचो भाव्यन्ते । तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते । तद्यथा—नौर्नावि बद्धा नेतरत्राणाय भवति ॥

( प्रदीपः ) सतो वृद्ध्यादिष्विति । विधौ चायं दोषो नानुवादे—वृद्धिर्यस्येत्यादौ । तत्र च संज्ञाविधानस्य चरितार्थत्वान्मृजेर्वृद्धिरित्यादौ वृद्धिशब्द एवादेशः प्राप्नोति ॥

( उद्द्योतः ) सतो वृद्ध्यादिष्विति । सतो निष्पन्नस्य संज्ञाभावात् संज्ञासंबन्धात् तदाश्रये संज्ञाश्रये संज्ञया संज्ञिविधायके शास्त्रे मृजेर्वृद्धिरित्यादौ ॥ वृद्ध्यादिषु वृद्ध्यादिपदेषु ॥ इतरेतराश्रयत्वादप्रसिद्धिर्वाक्यार्थाप्रसिद्धिरित्यर्थः । अविद्यमाने संबन्धस्य वक्तुमशक्यत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—आदैज्मात्रस्य वृद्धिसंज्ञेति सिद्धान्तपक्षे दोषमाह—सत इति । संज्ञिनि—संज्ञिविधायके शास्त्रे । तत्—तस्मात् । एतत्—संज्ञासंज्ञिद्वयरूपम् । तत्रेष्टापत्तिं निराकरोति—इतरेतरेति । कर्णधारशून्यं नौद्वयं मिथः सम्बद्धं परस्परस्य परतीरप्रापणाय न समर्थं भवतीत्याशयेनाह—नौरिति ।

प्रदीपे-विधौ—मृजेर्वृद्धिरित्यादौ । ननु संज्ञाविधानसामर्थ्यात् विधौ भाविसंज्ञाश्रयणेन नायं दोष इत्यत आह—तत्रेति । अनुवादे इत्यर्थः ।

( इतरेतराश्रयिदृष्टान्तभाष्यम् )

ननु च भो इतरेतराश्रयाण्यपि कार्याणि दृश्यन्ते । तद्यथा—नौः शकटं वहति, शकटं च नावं वहति ॥

( प्रदीपः ) ननु च भो इति । नौशकटस्याभिमतदेशान्तरप्राप्तिरितरेतराश्रयेति चोद्यम् ॥

( उद्द्योतः ) वहनक्रियायामितरेतराश्रयत्वाभावेपि तत्फलतीत्याह—नौशकेति ॥

( तत्त्वालोकः ) भाष्ये—इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते इत्यस्य व्यभिचारं शङ्कते—ननु चेति । प्रदीपे-नौशकटस्येति—अत्र सेनाङ्गत्वादेकवद्भावः । उद्द्योते-तत्फलतीति—देशान्तरप्राप्तिरूपफले इतरेतराश्रयत्वसत्त्वात् वहनक्रियायामपि इतरेतराश्रयत्वं पर्यवस्यति ।

( दृष्टान्तनिरासभाष्यम् )

अन्यदपि तत्र किंचिद्भवति जलं स्थलं वा । स्थले शकटं नावं वहति । जले नौः शकटं वहति ॥

( तत्त्वालोकः ) तत्र व्यभिचारं परिहरति—अन्यदपीति । अन्यदेवेत्यर्थः ।

( इतरेतराश्रयिदृष्टान्तान्तरभाष्यम् )

यथा तर्हि त्रिविष्टब्धकम् ॥

( तत्त्वालोकः ) पुनस्तस्य व्यभिचारं शङ्कते—यथेति । त्रिविष्टब्धकम्—मिथः सम्बद्धास्त्रयो वेणवः । परस्पराश्रिता अपि ते परस्परं धारयन्तीति भावः ।

( दृष्टान्तान्तरनिराकरणभाष्यम् )

तत्राप्यन्ततः सूत्रकं भवति ॥

( प्रदीपः ) सामग्र्यन्तरानुप्रवेशेन चोत्तरम् ॥

( उद्द्योतः ) सामग्र्यन्तरेति । कारणान्तरेत्यर्थः ॥ सूत्रकं कीलकादि ॥ न च सामान्यलक्षणया भूतभाविसकलविषयकशक्तिग्रहः संभवत्येव । अन्यथा तत्रापि तत्तद्बोद्धबुद्धौ असंनिहितसकलाकारविषयकशक्तिग्रहासंभवेनानुवादेपि दोषः स्यात् । सामान्यलक्षणानङ्गीकारेपि शक्तिग्रहबोधादीनां समानप्रकारकत्वेनैव कार्यकारणभावाभ्युपगमान्न दोष इति वाच्यम् । जातिप्रकारकशक्तिग्रहस्य स्वाश्रयीभूतसकलव्यक्तिबोधकत्वेप्यनुत्पन्ने जात्याश्रयत्वसंबन्धस्य वक्तुमशक्यतया भाविव्यक्तेर्जात्याश्रयत्वाभावात् तद्बोधासंभवेन मृजेर्वृद्धिरित्यत्र तज्ज्न्योत्पत्तिज्ञप्त्योः परस्पराश्रय इति भावात् । वृद्धिरादैजित्यस्य विद्यमानेषु बुद्धिस्थेषु चारितार्थ्येन भाविनामुद्देश्यत्वासंभवेन तत्र वृद्धिपदस्य शक्तिग्रहासंभवाच्च ॥

(तत्त्वालोकः) भाष्ये-तत्रापि व्यभिचारं खण्डयति-तत्रापीति ।

उद्द्योते-नचेति—भाकादावाकारे श्रुते सति आत्व—इति शेषः । सामान्यलक्षणयेति—प्रत्यासत्त्येति शेषः । शक्तीति—वृद्धिशब्देत्यादिः । अन्यथा—उक्तप्रकारानभ्युपगमे । तत्रापि—शब्दनित्यत्ववादिनोऽपि । स्वेति—जातीत्यर्थः । तद्बोधेति—भाविव्यक्ति-

गोवेत्यर्थः। तज्जन्येति—वृद्धिशब्दजन्येत्यर्थः। भावात्—"सतो वृद्धयादिषु"ति वदतो वार्तिककृतदेराशयात्। तत्र—भाविषु।

( आक्षेपोपसंहारभाष्यम् )

**इदं पुनरितरेतराश्रयमेव ॥**

( तत्त्वालोकः ) इदं तत्र तत्र अन्योन्याश्रये वारितेऽपि प्रकृते सोऽनिवार्य एवेत्युपसंहरति-इदमिति। संज्ञासंज्ञिद्वयरूपमिति शेषः।

( ९८ अन्योन्याश्रयवारकसिद्धान्तिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु नित्यशब्दत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ॥**

**नित्यशब्दत्वात्। नित्याः शब्दाः, नित्येषु शब्देषु सतामादैचां संज्ञा क्रियते, न च संज्ञया आदैचो भाव्यन्ते ॥**

( प्रदीपः ) सिद्धं त्विति। न हि मृजेरपूर्व आकारो भाव्यते किं तु मृजाद्युपदिष्टे मार्ष्टीत्यादीनामसाधुत्वबुद्धिः प्राप्नोतीति तेषां साधुत्वान्वाख्यानं क्रियते ॥

( उद्द्योतः ) यद्यप्यस्य सूत्रस्य शाटकं वयेत्यादाविव भाविसंज्ञाविधानेन सिध्यति, यथा च तत्रोत्पत्त्यनन्तरं गृहीतशक्तिकशाटकसादृश्याच्छाटकपदशक्तिग्रहस्तथा प्रकृतेपि, स्पष्टं चेदमिग्यण इति सूत्रे भाष्ये। तथाप्यत्र वास्तवमेव परिहारमाह—भाष्ये सिद्धं त्विति। एतच्च मञ्जूषायां विस्तरेण निरूपितम् ॥

( तत्त्वालोकः ) भाष्ये—एवं प्राप्तमत्रान्योन्याश्रयं परिहरति—सिद्धमिति। प्रदीपे—इति तेषाम्—इति हेतोः मार्ष्टीत्यादीनाम्। उद्द्योते—सिद्ध्यतीति—विधिप्रदेशे वाक्यार्थबोध इत्यादिः। तत्र—शाटकं वय इत्यत्र।

( आक्षेपभाष्यम् )

**यदि तर्हि नित्याः शब्दाः, किमर्थं शास्त्रम् ? ॥**

( तत्त्वालोकः )—शब्दानां नित्यत्वे शास्त्रवैयर्थ्यमिति शङ्कते—यदीति।

( ९९ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥ * ॥

( भाष्यम् )

**निवर्तकं शास्त्रम् ॥**

**कथम् ? ॥**

**मृजिरस्मायविशेषेणोपदिष्टः तस्य सर्वत्र मृजिबुद्धिः प्रसक्ता। तत्रानेन निवृत्तिः क्रियते मृजेरक्ङित्सु प्रत्ययेषु मृजिप्रसङ्गे मार्जिः साधुर्भवतीति ॥**

( तत्त्वालोकः ) शब्दानां नित्यत्वेऽपि न शास्त्रवैयर्थ्यमिति समाधत्ते—निवर्तकमिति। अस्मै—साधुशब्दजिज्ञासवे। अविशेषेण—प्रत्ययविशेषानाश्रयणेन। उपदिष्टः—धातुपाठे उपदिष्टः। तस्य—साधुशब्दबुभुत्सोः। सर्वत्र—क्ङिदक्ङित्सु प्रत्ययेषु। तत्र—तद्बुद्धौ प्रसक्तायाम्। अनेन—मृजेरिति सूत्रेण। क्ङिति चेति निषेधविषयपरिहारेण विधिप्रवृत्तेराह—अक्ङित्स्विति।

( इत्यन्योन्याश्रयनिराकरणाधिकरणम्। )

---

( अथ समुदितसंज्ञानिराकरणाधिकरणम् )

( १०० आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ वृद्धिगुणसंज्ञयोः प्रत्येकं वचनम् ॥ * ॥

( भाष्यम् )

**वृद्धिगुणसंज्ञयोः प्रत्येकं ग्रहणं कर्तव्यम् ॥ प्रत्येकं वृद्धिगुणसंज्ञे भवत इति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**समुदाये मा भूतामिति ॥**

( प्रदीपः ) प्रत्येकमिति। यद्यपि नित्यशब्दत्वेनैतदपि व्यवतिष्ठते तथापि न्यायव्युत्पादनायोपन्यासः॥ समुदाये मा भूतामिति। अन्यथा मृजेर्वृद्धिरित्यादौ समुदाय आदेशः प्राप्नोति। समुदायावयवसन्निधौ क्व तात्पर्यं कस्य च नान्तरीयकत्वमिति विचार्यते॥

( उद्द्योतः ) न्यायेति। वक्ष्यमाणन्यायद्वयेत्यर्थः॥ ननु वृद्धिर्यस्येत्यादौ समुदायासंभवात् प्रत्येकमेव संज्ञेत्यत आह—अन्यथेति। एवं च तमादाय तत्रापि संभवः। द्वन्द्वनिर्देशात्समुदायस्यैव स्यादिति भावः॥ समुदायेति। "मातापित्रोर्मृतेहनी"तिवद्बोधे साहित्यं न तु क्रियानिष्पत्तौ इति भावः॥

( तत्त्वालोकः ) प्रदीपे—एतदपि—प्रत्येकमपि। अन्यथा—समुदायस्य संज्ञित्वे।

( उद्द्योते ) न्यायद्वयेति—ब्राह्मणभोजनन्यायगर्गदण्डनन्यायेत्यर्थः। तम्—समुदायरूपादेशम्। तत्रापि—वृद्धिर्यस्येत्यादावपि। संभवः—समुदायसम्भवः। द्वन्द्वेति—आदैजित्यादीत्यादिः।

( १०१ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ अन्यत्र सहवचनात्समुदाये संज्ञाप्रसङ्गः ॥ * ॥

( भाष्यम् )

**अन्यत्र सहवचनात्समुदाये वृद्धिगुणसंज्ञयोरप्रसङ्गः। यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम्। तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति ॥**

( प्रदीपः ) अन्यत्रेति। यत्नसाध्या समुदायप्रतिपत्तिरिति यत्नाभावे न भवतीत्यर्थः॥ ननु सहग्रहणं नियमार्थं स्यात्समुदायस्यैव समाससंज्ञा यथा स्यान्नावयवानामिति॥ नैतदस्ति, उभयत्रतात्पर्याभावाद्युगपदुभयत्र प्रसङ्गाभावाल्लिङ्गत्वमेव सहग्रहणस्यान्यत्र समुदाये तात्पर्यं नास्तीत्यस्यार्थस्य॥ उभे अभ्यस्तं सहेति। अत्र सहग्रहणं वार्तिककारस्य कर्तव्यत्वेन स्थितम्। भाष्यकारस्तूभेग्रहणस्यैतत्प्रयोजनं स्थापयिष्यति॥

**( उद्द्योतः )** उभयत्रेति । समुदायेऽवयवे चेत्यर्थः ॥ उभयत्र तात्पर्याभावे हेतुर्गुणभावादिति । फलाभावादिति भावः ॥ यद्यपि पर्यायः प्राप्नोति, तथापि समासविधिनियमोभयपरत्वे गौरवमित्यतो लिङ्गत्वकल्पनमेवोचितमित्यत्र तात्पर्यम् ॥ **भाष्यकारस्त्विति ।** तदेकदेशीत्यर्थः । **द्वे** इत्यनुवृत्त्यैव सिद्धे **उभेग्रहणं** सहार्थकमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तत्र प्रत्येकग्रहणशंकां प्रथमं ज्ञापकेन निराकरोति—**अन्यत्रेति ।** गुणादितोऽन्यत्र सहसुपेत्यादाविल्यर्थः । **इति—**इत्यादौ ।

प्रदीपे—**इति**—इति हेतोः । **न भवति**—अत्र सा न भवति । **सहेति** —सह सुपेत्यत्रेत्यादिः । **प्रसङ्गेति—**समाससंज्ञाया इत्यादिः । **एतत्प्रयोजनं—**सहग्रहणप्रयोजनम् ।

**( १०२ आक्षेपवारकसिद्धान्तिवार्तिकम् ॥ ६ ॥ )**

## ॥ * ॥ प्रत्यवयवं च वाक्यपरिसमाप्तेः ॥ * ॥

**( भाष्यम् )**

**प्रत्यवयवं च वाक्यपरिसमाप्तिर्दृश्यते । तद्यथा देवदत्तयज्ञदत्तविष्णुमित्रा भोज्यन्तामिति । न चोच्यते प्रत्येकमिति । प्रत्येकं च भुजिः परिसमाप्यते ॥**

**( प्रदीपः ) प्रत्यवयवं** चेति । अत्र वाक्यशब्देन वाक्यार्थः फलमुच्यते । तच्च देवदत्तादीनां भोजनम् । तस्य चैतदेव रूपं यत्प्रत्येकपरिसमाप्तया संपद्यतेऽन्नादनादिरूपत्वात्तृप्तिफलत्वाच्च भोजनस्य । नाट्यक्रिया तु समुदाये समाप्यते गीतादिक्रियासमुदायरूपत्वात्तस्याः । संयोगसंज्ञा त्वन्वर्थत्वात्समुदाये प्रवर्तते । वृद्धिसंज्ञा तु लक्ष्ये पृथगादैचां दर्शनाद् **मालादीनां** चेति लिङ्गाच्च प्रत्येकं व्यवतिष्ठते ॥

**( उद्द्योतः )** न ज्ञापकादेव, किं तु युक्तितोऽपि प्रत्येकं सञ्ज्ञेत्याह—भाष्ये **प्रत्यवयवमिति ॥** ननु प्रत्येकं वाक्यपरिसमाप्तिमुपक्रम्य प्रत्येकं भुजिसमाप्त्युक्तिरयुक्ता, न हि भुज्यर्थोऽत्र वाक्यार्थः । किं तु ण्यन्तार्थोऽत आह—**अत्रेति ।** वाक्यार्थस्तु अत्र प्रयोजकव्यापारस्तस्य समुदायविषयत्वसंभवात्फलग्रहणम् । तच्च प्रयोज्यव्यापाररूपमित्याह—**तच्चेति ॥** ननु विशिष्टपरिमाणस्यादनीयस्य भोजनक्रिया समुदायपर्याप्तेत्यपि वक्तुं शक्यमत आह—**तृप्तिफलत्वाच्चेति ॥** सर्वापि क्रिया प्रत्येकं समाप्यत इति भ्रमो न कार्य इत्याह—**नाट्येति ॥ गीतादीति ।** आदिना नृत्तवाद्यादि ॥ **अन्वर्थत्वात् संयुज्यन्ते वर्णा अत्रेति ॥** लक्ष्यानुसारात्तत्र समुदाये वाक्यपरिसमाप्तेराश्रयणमिति तत्त्वम् ॥ प्रकृतेऽन्यतरन्यायाश्रयणे हेतुमाह—**वृद्धिसंज्ञेति ॥ लिङ्गादिति । प्रस्थेऽवृद्धमिति** निषेधबाधनार्थं हि तदिति भावः ॥ न च नामधेयरूपमालादीनामाद्युदात्तार्थं तत्, तस्य **वा नामधेयस्येति** पक्षे वृद्धत्वादिति वाच्यम् । **अभिव्यक्तेति** न्यायेन तत्राप्रवृत्तेः ॥

**( तत्त्वालोकः )** भाष्ये—अधुना तां लोकयुक्तितः परिहरति—**प्रत्यवयवमिति ।** भुजिः—भुज्यर्थः ।

प्रदीपे—**अत्र**—भाष्ये । **तच्च**—फलञ्च । **तस्य च**—भोजनस्य च । **प्रत्येकपरिसमाप्त्या**—सामर्थ्यात् प्रत्येकं भुजिक्रियापर्यवसानेन । **तस्याः**—नाट्यक्रियायाः ।

उद्द्योते—**अयुक्तेति**—भुजेः धातुपरत्वात्, वाक्यस्य च पदसमूहपरत्वादित्यादिः । ननु भुजिवाक्यशब्दयोः अर्थपरत्वात् कथं सा अयुक्तेत्यत आह—**नहीति । तच्च**—फलञ्च । **तत्र**—संयोगसंज्ञायाम् । **अन्यतरन्यायेति**—ब्राह्मणभोजनन्यायगर्गदण्डनन्यायान्यतरब्राह्मणभोजनन्यायेत्यर्थः । **तत्**—मालादीनां चेति सूत्रम् । समुदायस्य संज्ञायां तु मालादौ समुदायाभावेन संज्ञाऽभावात् वृद्धत्वाभावेन पूर्वेणापर्युदासात्तेनैव सिद्धे मालादीनाञ्चेतिसूत्रारम्भो व्यर्थ एव स्यादित्याशयः । **तस्य**—नामधेयरूपमालादेः । **अभिव्यक्तेति**—अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यो न शब्देषु तदुक्तिषु इति । **तत्र**—नामधेयरूपमालादौ ।

**( आक्षेपभाष्यम् )**

**ननु चायमप्यस्ति दृष्टान्तः—"समुदाये वाक्यपरिसमाप्तिः" इति । तद्यथा—'गर्गाः शतं दण्ड्यन्ताम्' इति । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥**

**( प्रदीपः ) गर्गाः शतं दण्ड्यन्तामिति ।** अत्र शतस्येप्सिततमत्वात् प्राधान्यम्, अपादानस्थानप्राप्ता गर्गा गुणकर्म, **न च गुणभेदे प्रधानस्य भेद** इति शतदण्डनं समूहे परिसमाप्यते ॥ **अर्थिनश्चेति,** शतस्य प्राधान्यं प्रतिपाद्यते । दण्डपरायां हि चोदनायां शतस्य प्राधान्यमतो वाक्यादवगम्यते ॥

**( उद्द्योतः )** समुदाये समाप्तौ युक्तिमाह—**अत्र शतस्येति ।** एवं चाकथितसूत्रे दण्डिरपि परिगणनीय इति भाव इत्येके ॥ उद्देश्यत्वरूपमार्थं प्राधान्यं शतस्येत्यनुद्देश्यत्वेन गर्गा गुणकर्म । **दण्डेश्च** स्वसंप्रदानकदानानुकूलव्यापारानुकूलव्यापारः शासनरूपोऽर्थः । शासनं नियन्त्रणम् । तत्र ण्यन्त इव **कर्तुरित्युभयोः** कर्मत्वम् । कर्तृप्रत्ययसमभिव्याहारे धात्वर्थप्रधानव्यापारविशेषणफलाश्रयत्वेन गर्गाणां शाब्दं प्राधान्यम् । तत्रैव प्रधाने कर्मणि लकारः । **"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्"** इत्युक्तेः । दुहादिष्वस्याप्रामाणिकः पाठ इति वक्ष्यते ॥ **अपादानस्थानप्राप्ता** इत्यनेन चानुद्देश्यत्वमात्रमभिप्रेतमिति परे ॥ **शतस्य प्राधान्यमिति ।** शारीराभिहननलक्षणादण्डव्यावर्तनेनेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—ननु प्रत्येकस्य समुदायस्य वा संज्ञेति संशयनिराकरणाय लोकयुक्तिः नाश्रयणीया मिथोविरुद्धद्विविधलोकयुक्तिसत्त्वेन तस्य सन्देहस्य तदवस्थतापातादित्याशयेनाह—**ननु चेति । दृष्टान्तः**—सदृष्टान्तः—**न च**—न तु ।

प्रदीपे **इति**—इति हेतोः । **समूहे**—गर्गसमूहे ।

उद्द्योते—**समुदाये इति** —समुदायपरिसमाप्तिदृष्टान्ते इत्यादिः । **एके** इत्यनेन तत्रारुचेः सूचनात् स्वाभिमतमाह—**उद्देश्यत्वेति । इति—**इति हेतोः । **तत्र**—दण्डने । नन्वेवं "प्रधानकर्मण्याख्येये" इति वचनात् प्रधानत्वेन शतरूपकर्मणि लकारो युक्त इत्यत आह—**कर्तृप्रत्ययेति । तत्रैवेति—**शाब्दप्राधान्ये एवेत्यर्थः । शब्दशास्त्रे शाब्दप्राधान्यार्थप्राधान्ययोः शाब्दप्राधान्यस्यैव प्राधान्येन ग्रहणादिति भावः । **दुहादीति**—तथा चेत्यादिः । **अस्य**—दण्डेः **अभिप्रेतमिति**—एवञ्च ईप्सिततमत्वादित्यस्य उद्देश्यत्वादित्यर्थ इति भावः ।

**( समाधानभाष्यम् )**

**सत्येतस्मिन्दृष्टान्ते यदि तत्र सह ग्रहणं क्रियते, इहापि प्रत्येकमिति वक्तव्यम् । अथ तत्रान्तरेण सहग्रहणं सहभूतानां कार्यं भवति, इहापि नार्थः प्रत्येकमिति वचनेन ॥**

**( प्रदीपः ) अथ तत्रान्तरेणेति ।** न्यायादन्वर्थत्वाच्च समास-

संज्ञायाः समुदाये परिसमाप्तौ सिद्धायां योगविभागार्थं तत्र सहग्रहणं स्थितमिति तन्नान्तरेणेत्युक्तम् ॥

( उद्द्योतः ) नन्वन्तरेणापीति वाच्ये सार्वकालिकासत्त्वप्रतिपादकमपिशब्दरहितमयुक्तमत आह—न्यायादिति । शतदण्डनन्यायेत्यर्थः ॥ योगविभागेति । तिङन्तसमासावेति भावः ॥

( तत्त्वालोकः ) भाष्ये—एवम् आक्षेपे कथिते सिद्धान्ती निर्णयमाह—सतीति । सत्यपीत्यर्थः । एतस्मिन्—गर्गदण्डनरूपे । तत्र—सह सुपेत्यत्र । क्रियते इति—ब्राह्मणभोजनन्यायप्रवृत्तिसंभवादिति शेषः । इहेति—तर्हि गर्गदण्डनन्यायप्रवृत्तिसम्भवादित्यादिः । यदि लौकिकन्याय आश्रयणीयस्तर्हि उभयत्र, अर्धजरतीयस्यायुक्तत्वादिति भावः । ब्राह्मणभोजनन्यायात्, मालादीनाञ्चेति ज्ञापकाच्चेष्टसिद्धिमभिप्रेत्याह— इहेति । तर्हीत्यादिः । प्रदीपे—इति—इति हेतोः ।

( इति समुदायसंज्ञानिराकरणाधिकरणम् । )

---

( अथ तपरग्राह्यनिराकरणीयाधिकरणम् )

( आक्षेपभाष्यम् )

अथ किमर्थमाकारस्तपरः क्रियते ? ॥

( प्रदीपः ) अथ किमर्थमिति । किमाकृतिपक्षे भिन्नकालनिवृत्त्यर्थमथवा व्यक्तिपक्षे गुणान्तरयुक्तानां ग्रहणार्थमिति प्रश्नः ॥

( उद्द्योतः ) भाष्ये किमर्थमिति । चतुर्थीतत्पुरुषः ॥

(तत्त्वालोकः) भाष्ये-किमर्थमिति-वृद्धिरादैजित्यत्रेति शेषः । प्रदीपे—भिन्नकालेति । अत्र बहुव्रीहिः । व्यक्तिपक्षे आकारस्यानण्त्वात् तेन सवर्णानां ग्रहणस्याप्रसङ्गादाह—गुणान्तरेति ।

( १०३ सिद्धान्तसमाधानवार्तिकम् ॥ १ ॥ )

॥ ॐ ॥ आकारस्य तपरकरणं सवर्णार्थम् ॥ ॐ ॥

( भाष्यम् )

आकारस्य तपरकरणं क्रियते ॥

किं प्रयोजनम् ? ॥

सवर्णार्थम् ॥ "तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥

केषाम् ? ॥

उदात्तानुदात्तस्वरितानाम् ॥

( प्रदीपः ) आकारस्येति । व्यक्तिः पदार्थो, भेदकाश्च गुणा इति दर्शने यद्गुणस्यैवोच्चारणं तद्गुणस्यैव संज्ञाप्रसङ्गे गुणान्तरयुक्तानामपि संज्ञाप्रतिपत्त्यर्थं तपरत्वमित्यर्थः ॥

( उद्द्योतः ) तपरकरणं क्रियत इति । पाकं पचतीतिवत् सामान्यविशेषभावेन सहप्रयोगः ॥ आत्वजातेर्भिन्नकालावर्णवृत्तित्वाभावाद् द्वितीयमाश्रयति-व्यक्तिरिति ॥ यद्गुणस्येत्यादिर्बहुव्रीहिः ॥

( तत्त्वालोकः ) भाष्ये—तपरेति—तपरत्वेत्यर्थः । सवर्णेति—सवर्णग्रहणेत्यर्थः । प्रदीपे— दर्शने—मते । उद्द्योते आदिना—तद्गुणस्येत्यस्य संग्रहः ।

( कारणजिज्ञासाभाष्यम् )

किं च कारणं न स्यात् ? ॥

( प्रदीपः ) किं च कारणमिति । अभेदका हि गुणाः, मुण्डेन हि कृते चौर्ये कुन्तलित्वावस्थायामपि चौरोयमिति व्यपदिश्यत इति प्रश्नः ॥

( उद्योतः ) भाष्ये किं च कारणमिति । निमित्तकारणहेतुष्विति हेतौ प्रथमा ॥

( तत्त्वालोकः ) प्रदीपे—हि—यतः । इति—इति हेतोः ।

( १०४ कारणप्रदर्शकैकदेशिवार्तिकम् ॥ २ ॥ )

॥ ॐ ॥ भेदकत्वात्स्वरस्य ॥ ॐ ॥

( भाष्यम् )

भेदका उदात्तादयः ॥

कथं पुनर्ज्ञायते—भेदका उदात्तादय इति ? ॥

एवं हि दृश्यते लोके,—य उदात्ते कर्तव्येऽनुदात्तं करोति खण्डिकोपाध्यायस्तस्मै चपेटां ददाति अन्यत्त्वं करोषीति ॥

( तत्त्वालोकः ) भाष्ये—भेदकत्वात्—उपात्तविजातीयनिवर्तकत्वात् । हि—यतः । खण्डिकोपाध्यायः—अथर्वणवेदाध्यापकः । चपेटां—करतलसंयोगम् । करोषीतीति—वदन्निति शेषः ।

( भाष्यम् )

अस्ति प्रयोजनमेतत् ॥ किं तर्हि ? ॥ इति—

( उद्द्योतः ) अस्ति प्रयोजनमेतदिति काका सूचितमाशयं पृच्छति— किं तर्हीति । कितर्ह्येति प्रश्ने, इति इदं वक्तव्यमित्यर्थः ॥

( तत्त्वालोकः ) उद्द्योते—पृच्छति—प्रश्नपूर्वकं प्रतिपादयति ।

( १०५ कारणप्रदर्शकवार्तिकन्यासान्तरम् ॥ २ ॥ )

[ ॥ ॐ ॥ भेदकत्वाद्गुणस्य ॥ ॐ ॥ ]

( भाष्यम् )

भेदकत्वाद्गुणस्येति वक्तव्यम् ॥

किं प्रयोजनम् ? ॥

आनुनासिक्यं नाम गुणः, तद्भिन्नस्यापि ग्रहणं यथा स्यात् ॥

किं च कारणं न स्यात् ? ॥

भेदकत्वाद्गुणस्य । भेदका गुणाः ॥

कथं पुनर्ज्ञायते—भेदका गुणा इति ? ॥

एवं हि दृश्यते लोके, एकोऽयमात्मा = उदकं नाम, तस्य गुणभेदादन्यत्वं भवति—अन्यदिदं शीतम्, अन्यदिदमुष्णमिति ।

( प्रदीपः ) भेदकत्वादिति । सर्वगुणसंग्रहार्थं गुणग्रहणं कर्तव्यमित्यर्थः ॥ एकोऽयमिति । उदकत्वजातियोगादत्रैकत्वं न विवक्षितं किं तर्हि विशिष्टभाजनस्थमेकमुदकद्रव्यम् । तदेव च गुणान्तरयोगादन्यत्वेन लोके व्यपदिश्यते ॥

**( उद्द्योतः )** तदाह—**भेदकत्वादित्यादि** ॥ जात्यात्मनैकत्वे व्यक्तिभेदादेवोपपत्तेर्न गुणभेदकृतभेदे इदमुदाहरणं स्यादत आह—**उदकत्वेति** । आत्मशब्दो द्रव्यवाची भाष्ये ॥

**( तत्त्वालोकः )** भाष्ये—**तद्भिन्नस्य**—तेन आनुनासिक्याख्यगुणवत्त्वेन भिन्नस्य प्रकृतसूत्रोपात्ताकारभिन्नस्य आकारस्य । **हि**—यतः । प्रदीपे—पृच्छति—**किमिति** । विवक्षितमिति शेषः । समाधत्ते—**विशिष्टेति** ।

उद्द्योते—**तदाह**—इदं वक्तव्यमित्यनेन यन्निर्दिष्टं तदाह । **जातीति**-उदकत्वेत्यादिः । **व्यक्तिभेदादेवेति**—जातिप्रयुक्तव्यक्तिभेदोदाहरणत्वादेवेत्यर्थः । विवक्षिते इत्यादिः । अस्येति शेषः । **भेदे**—व्यक्तिभेदे ।

## ( अभेदकत्वाक्षेपसिद्धान्तिभाष्यम् )

**ननु च भो अभेदका अपि गुणा दृश्यन्ते । तद्यथा देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति ॥**

**( उद्द्योतः )** **बालो युवेति** । भाष्ये **स्वामाख्यां न जहाती**त्यनुकर्षः । एतेनाभेदकत्वे प्रत्यभिज्ञा प्रमाणं दर्शितम् ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती गुणानामभेदकत्वपक्षम् उत्थापयति—**ननु चेति** । उद्द्योते—**एतेनेति**—गुणानामिति शेषः ।

## ( आक्षेपभाष्यम् )

**उभयमिदं गुणेषूक्तम्—भेदकाः, अभेदका इति । किं पुनरत्र न्याय्यम् ? ॥**

**( प्रदीपः )** **उभयमिति** । आम्नायशब्दा नियतस्वरा इति वेदे गुणानां भेदकत्वम् । लोके तूभयथा व्यवहारः, गोपिण्डो हि वत्साद्यवस्थाभेदात् क्रयविक्रयादिषु मूल्यादिभेदाद्भेदेन व्यवह्रियते, स एवायमिति प्रत्यभिज्ञानादभेदेनापि ॥ इति प्रश्नः-**किं पुनरिति** । **अत्रेति** । शास्त्रे ॥

**( उद्द्योतः )** ननु गुणेषूभयाङ्गीकारे खण्डिकोपाध्याय(स्य)चपेटादानं विरुध्येतेति चेन्न, यत **उभयमिति** लोकमात्रविषयमिति न विरोध इत्याह—**आम्नायेति** ॥ ननूभयोरपि न्याय्यत्वप्रतिपादनेन **किं पुनरत्र न्याय्य**मिति प्रश्नोऽयुक्तोऽत आह—**शास्त्रे इति** । अत्रेति निर्धारणसप्तमी नेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी सिद्धान्तिनं पृच्छति—**उभयमिति** ।

प्रदीपे—**आम्नायेति**-वेदेत्यर्थः । **नियतेति**—'मन्त्रे त्रैस्वर्यं ब्राह्मण एकश्रुतिः बह्वृचानां, तैत्तरीयाणां तूभयत्रापि त्रैस्वर्यं मित्यादिनेत्यादिः । **इति**—इति हेतोः । **उभयथा**—गुणानां भेदकत्वेन अभेदकत्वेन च । **हि**—यतः । **नापीति**—व्यवह्रियते इत्यनुषज्यते । एवं नाप्यन्तेन पूर्वप्रतीकं व्याख्याय, उत्तरप्रतीकावतरणमाह—**इतीति** । इत एव हेतोरित्यर्थः ।

उद्द्योते—**इति न**—इति हेतोः न । **अत्रेति**- अत्रेत्यत्र ।

## ( सिद्धान्तसमाधानभाष्यम् )

**अभेदका गुणा इत्येव न्याय्यम् ॥**

**कुत एतत् ? ।**

**यदयम्-"अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः" इत्युदात्तग्रहणं करोति तज्ज्ञापयत्याचार्योऽभेदका गुणा इति । यदि हि भेदका गुणाः स्युः, उदात्तमेवोच्चारयेत् ॥**

**( प्रदीपः )** **उदात्तमेवेति** । तस्माद्गुणरहितस्योच्चारणाभावान्नान्तरीयकत्वादुच्चार्यमाणोऽपि गुणः प्रयत्नमन्तरेण न विवक्षित इत्यर्थः ॥ यद्येवं कथमन्यत्रोक्तमुदात्तनिपातनं करिष्यत इति यावता तत्राप्यविवक्षा प्राप्नोति ॥ नैष दोषः, तत्रापि स्थानेन्तरतमवचनादादेशस्य यः स्वरः प्राप्तस्तस्मिन्नुच्चारयितव्य उदात्तोच्चारणं प्रयत्नेन विवक्षार्थं विज्ञायते । एवमनुनासिकस्य प्रयत्नाधिक्येनोच्चारं तद्विवक्षार्थमेव । उञः ऊँ इति यथा । अन्ये त्वाहुः—एकश्रुत्या सूत्राणि पठ्यन्त इति क्वचिदुदात्तोच्चारणं तद्विवक्षार्थमिति ॥

**( उद्द्योतः )** **इत्येव न्याय्यमिति** । विधेयाण्भिन्नविषये इति शेषः । तत्रैतत्कृतस्यापि **अप्रत्यय** इति निषेधात् । अतस्तथैव ज्ञापकमुपन्यस्यति—**यदयमिति** ॥ प्रयत्नं स्वशब्देनोपादानरूपम् ॥ **कथमिति** । यथा वध्यादेशे उदात्तनिपातनेन **एकाच** इति सूत्रस्थमेकाज्ग्रहणं न कार्यमिति ॥ **यः स्वरः प्राप्त इति** । हन्तेरनुदात्तत्वादनुदात्त इत्यर्थः । न चैवमस्थ्यादीनामाद्युदात्तत्वेनादेशानङः स्थान्यनुरूपेऽनुदात्ते उच्चारणीये उदात्तोच्चारणं विवक्षार्थमिति ज्ञापितेऽपि व्यर्थमुदात्तग्रहणमिति वाच्यम् । परमास्थिशब्दादावन्तोदात्ते उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावादित्याशयात् ॥ नन्वेवमपि चतसर्याद्युदात्तनिपातनसामर्थ्याच्चतस्र इत्यत्र **चतुरः शसी**त्यस्याप्रवृत्तिरिति भाष्योक्तमनुपपन्नम् । चतुःशब्दस्य **त्रः संख्याया** इत्याद्युदात्ततया तत्स्थानिकचतसरि स्थानिस्वरेणाद्युदात्तोच्चारणोपपत्त्या **चतुरः शसी**त्येतद्बाधकत्वायोगादत आह—**अन्ये त्विति** । एकश्रुतिश्च **विभाषा छन्दसी**ति वैकल्पिकी, तत्पाठे क्वचिदुदात्तोच्चारणं विवक्षार्थम् । त्रैस्वर्येण पाठमभिप्रेत्य तु प्रकृतसूत्रस्थं ज्ञापकमित्यविरोधः ॥ अन्ये त्वित्यस्वरसबीजं तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तद्रूपाद्यत्नात् तत्र तत्रोदात्तादिविवक्षा । तिसृचतसृ इत्यत्रापि द्वन्द्वप्रयुक्तेऽन्तोदात्ते उच्चारणीये आद्युदात्तोच्चारणं विवक्षार्थम् । संपूर्णाष्टाध्यायी आचार्येणैकश्रुत्या पठितेत्यत्र न मानम् । क्वचित्कस्यचित्पदस्यैकश्रुत्या पाठो यथा **दाण्डिनायना**दिसूत्रे ऐक्ष्वाकेति । एतावदेव भाष्याल्लभ्यते ॥ यद्यप्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत् , तथापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते—**अभेदका इति** । एवेन भेदका गुणा इत्यस्य व्यावृत्तिः । **यत्**—यस्मात् । **इति**—इत्यत्र । **तत्**—तस्मात् । **हि**—यतः । **स्युरिति**—तर्हि तत्रेति शेषः । **उच्चारयेदिति**—अनङोऽकारमित्यादिः । न तु उदात्तशब्दमिति शेषः ।

प्रदीपे—**गुणरहितस्य**—उदात्तशब्दरहितस्य उदात्तस्य । **गुणः**—उदात्तादिः । **एवमिति**—तर्हि भाष्यकारेणेति शेषः । **यावता**—यतः । **विज्ञायते इति**—तथा च अनुदात्तत्वप्रयुक्तणत्वनिषेधाप्राप्त्या "एकाच" इति सूत्रे एकाज्ग्रहणाकार्यत्वोक्तिः युक्तैवेति भावः । प्रसङ्गादाह—**एवमिति** । लाघवेन प्राप्तानुनासिकोपदेशं विहाय गौरवेणेति शेषः । **इति**—इत्यत्र । **इति**—इति हेतोः ।

उद्द्योते—**तत्र**—विधेयाणि । **एतत्कृतस्य**—गुणाभेदकत्वकृ-

तस्य। तथैव—विधेयाणुभिन्नविषयकमेव । यथेति—हन्त्यादेशवधेः स्थानिवद्भावेनानुदात्तत्वादित्प्रतिषेधे प्राप्ते तद्वारणायेति शेषः। स्थानित्वेनेति—अन्त्यरथेत्यादिः। त्वदुक्तरीत्येति शेषः। भाष्योक्त-"त्रिचतुरोः" "चतुरः शसि" इत्यत्रत्यभाष्योक्तम्। तत्पाठे—एकश्रुत्या पाठे। तद्रूपात्—उदात्तादिनिपातनरूपात्।

( आक्षेपभाष्यम् )

**यदि तर्ह्यभेदका गुणा अनुदात्तादेरन्तोदात्ताच्च यदुच्यते तत्स्वरितादेः स्वरितान्ताच्च प्राप्नोति ॥**

( प्रदीपः ) अनुदात्तादेरिति। अजुपलक्षणार्थानुदात्तश्रुतिः स्यादिति प्रश्नः॥

( उद्द्योतः ) स्वरितादेरिति भाष्ये उपलक्षणम्—उदात्तादेरन्तानुदात्ताच्च प्राप्नोतीत्यपि बोध्यम्॥

( तत्त्वालोकः ) भाष्ये—गुणाभेदकत्ववाद्येकदेशी आह—यदीति। यद्यभेदका गुणास्तर्हीत्यन्वयः।

प्रदीपे—एवं सति अनुदात्तत्वस्य गुणत्वेनाव्यावर्त्तकत्वादाह—अजिति। उद्द्योते—उपलक्षणमिति—अच इत्यादिः। तथा चाविशेषादिति शेषः।

( समाधानभाष्यम् )

**नैष दोषः। आश्रीयमाणो गुणो भेदको भवति। तद्यथा—'शुक्लमालभेत' 'कृष्णमालभेत'। तत्र यः शुक्ल आलब्धव्ये कृष्णमालभते, न हि तेन यथोक्तं कृतं भवति॥**

( प्रदीपः ) उत्तरे त्वज्ग्रहणमेव कुर्यादित्यभिप्रायः॥

( उद्द्योतः ) आश्रीयमाण इति। शब्देन निपातनेन वाश्रीयमाण इत्यर्थः॥ नन्वेवमनुदात्तादिग्रहणं व्यर्थं स्यादत आह-अजिति॥

( तत्त्वालोकः ) भाष्ये—गुणाभेदकत्ववादी सिद्धान्ती खण्डयति—नैष दोष इति। यत इति शेषः।

प्रदीपे—उत्तरे तु—उत्तरवादिनेतु। अस्य अभिप्राय इत्यनेनान्वयः। उद्द्योते—आश्रीयमाणः—कार्यान्वयित्वेनोपात्तः।

( एकदेशिसमाधानभाष्यम् )

**असंदेहार्थस्तर्हि तकारः। ऐजित्युच्यमाने संदेहः स्यात्=किमिमावैचावेव, आहोस्विदाकारोऽप्यत्र निर्दिश्यत इति?॥**

( तत्त्वालोकः ) एवं गुणभेदकत्ववाद्येकदेशिनोपपादिते अत्रत्याकारतपरत्वस्य भिन्नगुणकसवर्णग्रहणार्थत्वे गुणाभेदकत्ववादिसिद्धान्तिना खण्डिते एकदेशी तस्य प्रयोजनान्तरमाह—असन्देहेति। ऐजिति—यतः असति तकारे इत्यादिः। अपिना पैचोः संग्रहः।

( समाधानबाधकभाष्यम् )

**संदेहमात्रमेतद्भवति। सर्वसंदेहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम्' इति। त्रयाणां ग्रहणमिति व्याख्यास्यामः। अन्यत्रापि ह्ययमेवंजातीयकेषु संदेहेषु न कंचिद्यत्नं करोति। तद्यथा-"औतोम्शसोः" इति॥**

( प्रदीपः ) व्याख्यानत इति। प्रस्थेऽवृद्धमित्यादावुदात्तत्वे सिद्धे मालादीनां चेति मालाशब्दस्य वृद्धार्थत्वादुपादानस्याकारप्रश्लेषनिश्चय इत्यर्थः॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती तदपि खण्डयति—सन्देहेति।

प्रदीपे—प्रस्थेऽवृद्धमिति—अत्राकारप्रश्लेषे इत्यादिः। मालादिशब्दस्येति शेषः।

( सिद्धान्तिसमाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा मा भूवन्निति। खट्वा इन्द्रः खट्वेन्द्रः, खट्वा उदकं खट्वोदकम्, खट्वा ईषा खट्वेषा, खट्वा ऊढा खट्वोढा, खट्वा एलका खट्वैलका, खट्वा ओदनः खट्वौदनः, खट्वा ऐतिकायनः खट्वैतिकायनः, खट्वा औपगवः खट्वौपगव इति॥**

( प्रदीपः ) इदं तर्हीति। ननु भाव्यमानत्वादैचोऽत्र ग्राहका न भविष्यन्ति। नैतदस्ति। न ह्यत्र संज्ञाविधावैचो भाव्यन्ते, किं त्वैजिभरणत्वात्त्रिमात्रचतुर्मात्राणां ग्रहणात्तत्प्रसङ्गाद्वृद्धिगुणविधौ च तेषामपि प्रसङ्गात्तन्निषेधाय तपरत्वम्॥

( उद्द्योतः ) ऐजर्थं तपर( त्व )मित्याह—इदं तर्हीति भाष्ये। चतुर्मात्रोऽपि प्लुतः प्लुतावैच इति सूत्रे भाष्ये स्पष्टः॥ कार्यकालमाश्रित्य नोदयति—नन्विति। अयं भावः—तत्पक्षे मृजेर्वृद्धिरित्यादावुपस्थितं वृद्धिरादैजिति पदैकवाक्यतयान्वेति। एवं वृद्धिपदं तु प्रत्यभिज्ञामात्रफलकमनुवाद एव। एवं च भाव्यमानत्वं स्पष्टमेवेति॥ उत्तरस्य त्वयं भावः—अनुवादत्वकल्पनापेक्षया तत्रोपस्थितं वृद्धिरादैजिति तत्रैव शक्तिग्रहं संपाद्य वाक्यभेदेन मृजेर्वृद्धिरित्यस्यार्थं बोधयति। ज्योतिष्टोमेन यजेतेत्यादौ तु शक्तिग्राहकवाक्यान्तराभावादगत्या विधावेव सामानाधिकरण्यान्नामधेयत्वावगतिः कल्प्यते। न तु विद्यमाने शक्तिग्राहके तथाकल्पनमुचितं पदस्यानुवादकत्वकल्पनं चेति॥ यत्तु-कार्यकालपक्षे वृद्धिरादैजित्यादिर्यत्र वृद्धिपदं तत्रादैजित्युपतिष्ठत इत्यर्थः। यथा च ज्योतिष्टोमादिपदानां यागविधावेव सामानाधिकरण्यान्नामधेयत्वावगतिस्तथेहापि मृजेर्वृद्धिरित्यादौ सामानाधिकरण्यान्नामधेयत्वावगतिः। उपस्थापकेन वृद्ध्यादिपदेन उपस्थाप्यस्य वृत्त्या बोधनात्परं संज्ञासूत्रत्वावगतिरिति॥ तन्न, कार्यकालं संज्ञापरिभाषं यस्येत्युपस्थितमिदं भवति-'यचि भम्' इतीति ष्यङः संप्रसारणमिति सूत्रस्थभाष्येण कार्यकालं संज्ञापरिभाषं प्रगृह्यः प्रकृत्येत्युपस्थितमिदं भवति-'ईदूदेद्द्विवचनं प्रगृह्य'मिति ईदूदेदिति सूत्रस्थभाष्येण च विरोधात्। त्वद्रीत्या ह्युपस्थितमिदं भवति यचीतीत्येव वक्तव्यं स्यात्। अथ संज्ञेत्यादिप्रकृतसूत्रस्थवार्तिकविरोधश्च। प्रकारान्तरेणात्यन्तप्रत्याख्यानपरभाष्यविरोधश्च। किंच मृजेर्वृद्धिरित्यादिसूत्रस्थवृद्ध्यादिपदानां तदुपस्थितिसंपत्त्या चारितार्थ्येन स्वोपस्थापितपदार्थेऽन्वये मानाभावात् तत्रैकपरिभाषानुपस्थित्यापत्तिः, वृद्धिपदेनाविधानात्॥ मृजेर्वृद्धिरित्यादौ इकपदोपस्थापकस्यापि विधेयाकांक्षासत्त्वाद् विधिविषये एव तत्प्रवृत्तेश्च भवत्वोन्वयः। एवं च ज्योतिष्टोमवाक्याद्वैलक्षण्येनात्र नामधेयता दुरुपपादा। किं चोपस्थाप्यार्थस्य वृत्त्या बोधनात्संज्ञासूत्रत्वं वा इको गुणेत्यादिवदुपस्थापकत्वात्परिभाषात्वं वेत्यत्र विनिगमकाभावः॥ वृद्ध्यादिपदे वृत्त्या बोधनं च दुरुपपादम्। अनुवादेऽपि संज्ञासूत्रोपस्थितिरणोऽप्रगृह्यस्य वृद्धिर्यस्येत्यादिविषये भाष्ये स्पष्टेति दिक्॥

( तत्त्वालोकः ) भाष्ये—एवं सिद्धान्तिना स्वोपात्ततत्प्रयोजन

द्वयखण्डनेन मूकीभूते एकदेशिनि स्वयं सिद्धान्ती वार्तिककवठके "सवर्णार्थमि"त्यत्र अर्थशब्दस्य निवृत्तिवाचिनामभिप्रेत्य ऐचोऽण्त्वात्प्रसक्तायाः सवर्णग्राहकताया निवृत्तये तत्र तपरकरणमित्याह—इदमिति। अदेङित्यत्रापि एङोऽण्त्वात् प्राप्तायाः सवर्णग्राहकताया निवृत्त्यर्थं तपरकरणमिति सूचयन् गुणोदाहरणपूर्वकं वृद्धयुदाहरणं दर्शयति—खट्वेति।

प्रदीपे—हि—यतः। ऐजिति—एङोऽपि उपलक्षणम्। तेषां—त्रिमात्रचतुर्मात्राणाम्। तन्निषेधाय—एङा, ऐचा च सवर्णग्रहणनिषेधाय।

उद्द्योते—ऐजर्थम्—ऐचा सवर्णग्रहणनिवृत्त्यर्थम्। ननु चतुर्मात्रस्य कस्याप्यभावात् कथं तदुपादानमित्यत आह—चतुर्मात्र इति। तत्पक्षे—कार्यकालपक्षे। अन्वेतीति—तथा च वृद्धिसंज्ञाविशिष्टा ऐचो भवन्तीति वाक्यार्थः। नन्वेवम् एकवृद्धिपदस्य वैयर्थ्यमित्यत आह—एकमिति। तत्रैवेति—तत्रैव वाक्यभेदेन शक्तिग्रहं सम्पाद्येत्यन्वयः। उपस्थाप्यस्य—ऐजादेः। तदुपस्थितीति—ऐजाद्युपस्थितीत्यर्थः। इक्पदोपस्थापकस्यापि—वृद्ध्यादिपदस्य। विधेयेति—उद्देश्यस्येत्यादिः। एवेति—अनेन अनुवादविषयव्यावृत्तिः। तत्प्रवृत्तेः—इको गुणवृद्धीति परिभाषासूत्रप्रवृत्तेः।

(आक्षेपभाष्यम्)

**अथ क्रियमाणेऽपि तकारे कस्मादेव त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशा न भवन्ति ? ॥**

(तत्त्वालोकः)—तपरसूत्रे "तपर" इत्यत्र पञ्चमीसमासमजानन्नेकदेशी शङ्कते—अथेति।

(समाधानभाष्यम्)

**"तपरस्तत्कालस्य" इति नियमात् ॥**

(तत्त्वालोकः) तत्र पञ्चमीसमासमभिप्रयन् सिद्धान्ती समाधत्ते—तपर इति।

(समाधानबाधकभाष्यम्)

**ननु तः परो यस्मात्सोऽयं तपरः ॥**

(तत्त्वालोकः) तत्र पञ्चमीसमासाज्ञानम् एकदेशी प्रकटयति—नन्विति।

(समाधानसाधकभाष्यम्)

**नेत्याह। तादपि परस्तपरः ॥**

(तत्त्वालोकः) तत्राभिप्रेतं पञ्चमीसमासमपि सिद्धान्ती प्रकटयति—नेत्याहेति। तत्र बहुव्रीहिसमास एव न इत्याहेत्यर्थः। अत एव व्याख्यानाश्रयणेनाह—तादपीति। यत इत्यादिः। अपिना बहुव्रीहिसमाससंग्रहः।

(इष्टानुपपत्तिसाधकभाष्यम्)

**यदि तादपि परस्तपरः "ऋदोरप्" इतीहैव स्यात्—यवः स्तवः, लवः पव इत्यत्र न स्यात् ॥**

(तत्त्वालोकः) तत्र पञ्चमीसमासाभ्युपगमे एकदेशी दोषमाह—यदीति। तपर इति—तदीति शेषः।

(अनुपपत्तिबाधकभाष्यम्)

**नैष तकारः ॥**

**कस्तर्हि ? ॥**

**दकारः ॥**

(तत्त्वालोकः) सिद्धान्ती तं परिहरति—नैष इति। दकार इति—षस्थानिको धस्थानिको वेत्यादिः।

(आक्षेपभाष्यम्)

**किं दकारे प्रयोजनम् ? ॥**

(तत्त्वालोकः) एकदेशी पृच्छति—किमिति।

(प्रतिबन्द्या समाधानभाष्यम्)

**अथ किं तकारे ? । यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि । वृद्धिरादैच् ॥ १ ॥**

(प्रदीपः) एवं स्थिते चोदयन्ति—यद्यैजर्थस्तकारस्तेनाकारस्य संबन्धाभावात् कथमादित्येतत्पदम् ॥ उच्यते—तात्पर्येणैजर्थत्वं तकारस्योच्यते आनुषङ्गिकं त्वाकारार्थत्वं तकारस्योच्यते। ज्ञापकद्वारेण ह्याकारप्रश्लेषे विज्ञायमाने प्रतिपत्तिगौरवं भवति। सति तु तकार आकारस्य स्वरूपप्रतिपत्तिः स्पष्टा भवतीति तकारसहितस्याकारस्यासंदिग्धानुकार्यप्रतिपादनार्थत्वाद्विभक्तेरुत्पत्तौ सत्यामादित्येतत्पदं सिद्धम् ॥१॥

(उद्द्योतः) भाष्ये किं तकार इत्यस्य तादपि परस्तपर इत्यनङ्गीकुर्वत इति शेषः ॥ संबन्धाभावादिति। शेषशेषिभावाभावादित्यर्थः। तान्तस्य पदत्वाभावे जश्त्वं न स्यादिति भावः ॥ आनुषङ्गिकं फलं दर्शयति—ज्ञापकद्वारेणेति ॥ १ ॥

(तत्त्वालोकः) भाष्ये—तत्र बहुव्रीहिमात्रवादिनो भवतः निष्प्रयोजनं तत्र तपरत्वं, ऋकारस्यानण्त्वेन सवर्णग्रहणाप्रसङ्गादित्याशयेन सिद्धान्ती प्रतिबन्द्या समाधत्ते—अथेति।

प्रदीपे—एवं स्थिते—वृद्धिरादैजित्यत्र तकारे स्थिते। तेनेति—तकारेणेत्यर्थः। तदीत्यादिः। हि—यतः। इति—इति हेतोः।

उद्द्योते—नन्वाकारस्य तकारेणाव्यवहितोत्तरत्वसम्बन्धसत्त्वात् कथमुच्यते तस्य तेन सम्बन्धाभाव इत्यत आह—शेषेति। तादर्थ्येन हि शेषत्वं नाश्रयाश्रयिभावतः। राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् इत्यनुसारेण तकारस्य आकारार्थत्वाभावे तयोः शेषशेषिता नास्तीति भावः।

---

(२ इकपरिभाषासूत्रम् ॥ १ । १ । ३ । आ० २ ॥)

## इको गुणवृद्धी ॥ १ । १ । ३ ॥

(योगविभागप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**इग्ग्रहणं किमर्थम् ? ॥**

(प्रदीपः) इको गुणवृद्धी ॥ ३ ॥ इग्ग्रहणमिति वक्ष्यमाणज्ञापकवशादाकारादिनिरासादिक एव गुणवृद्धी भविष्यत इति प्रश्नः ॥

(उद्द्योतः) इको गुण—॥ ३ ॥ गुणवृद्धिग्रहणस्योत्तरत्र निषेध्यसमर्पणायावश्यकत्वेऽपि इक्पदस्येकः स्थान इत्यर्थार्थमावश्यकत्वेऽपि योगविभागविषयकोयं प्रश्नो भाष्ये इग्ग्रहणमिति ॥

**( तत्त्वालोकः )** प्रदीपे—**इति**—इति हेतोः।

उद्द्योते—**उत्तरत्र**—न धातुलोप आर्धधातुके इत्यत्र। **योगविभागविषयकः**—'इको गुणवृद्धी न धातुलोप आर्धधातुके" इत्येकयोगविधानेनैव इष्टोपपत्तेः कथमत्र योगविभाग इत्याशयकः।

**( १०५ समाधानवार्तिकम् ॥ १ ॥ )**

## ॥ ॐ ॥ इग्ग्रहणमात्सन्ध्यक्षरव्यञ्जननिवृत्त्यर्थम् ॥ ॐ ॥

**( भाष्यम् )**

**इग्ग्रहणं क्रियते ॥**

**किं प्रयोजनम् ? ॥**

**आकारनिवृत्त्यर्थं सन्ध्यक्षरनिवृत्त्यर्थं व्यञ्जननिवृत्त्यर्थं च ॥**

**( प्रदीपः )** **आत्सन्ध्यक्षरेति**। आकारादीनां स्थानित्वस्य निवृत्त्यर्थमित्यर्थः॥

**( उद्द्योतः )** ननु इग्ग्रहणेनाकारादीनां निवृत्तिरशक्या कर्तुमत आह—**स्थानित्वस्येति** ॥

**( तत्त्वालोकः )** प्रदीपे—आत्सन्ध्यक्षरव्यञ्जनपदस्य आत्सन्ध्यक्षरव्यञ्जनस्थानित्वे लक्षणया आह—**आकारेति**।

**( प्रथमप्रयोजनोपपादनभाष्यम् )**

**आकारनिवृत्त्यर्थं तावद्—याता वाता। आकारस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति ॥**

**( प्रदीपः )** आकारस्याङ्गान्त्यस्य वृद्धिविधावभावाद्विशेषाभावाच्चाकारस्य **यातो लोप इति** लोपविधानादाकारस्य गुणप्रसङ्गमुदाहरति—**यातेति** ॥

**( उद्द्योतः )** ननु आकारस्य वृद्ध्युदाहरणादाने गुणांशे च अकारोदाहरणादाने किं बीजमत आह—**आकारस्येति**। **वृद्धिविधौ** सिचिवृद्धिविधौ। अयासीदित्यादौ अपवादत्वात्सगिड्भ्यां सा बाध्यते इति भावः॥ इतरवृद्धिविधौ संभवेऽप्याह—**विशेषाभावादिति**। **अकारस्येति**। **व्यल्लोपाविति** पूर्वविप्रतिषेधेनातो लोपस्य वृद्धिगुणबाधकत्वादिति भावः॥ पुत्रीयतीत्यादौ त्वविशेष इति बोध्यम्॥ **आकारस्य गुणेति**। **सार्वधातुकार्धधातुकयोरित्यनेन**॥

**( तत्त्वालोकः )** प्रदीपे—**विशेषाभावात्**—आकारस्य कृतायामकृतायां वा वृद्धौ विशेषाभावात्, अथवा "अचः" इति निर्दिष्टस्थानिकत्वेन इक्परिभाषायाः सत्त्वेऽसत्त्वे वा विशेषाभावात्। **विधानादिति**—तस्य च गुणवृद्ध्योरप्रसङ्गादिति शेषः।

उद्द्योते—**सा**—सिचि वृद्धिः। **इतरेति**—अचो ञ्णितीति इत्यर्थः। **संभवे**—अङ्गान्त्याकारसंभवे। **बाधकत्वादिति**—एवञ्च चिकीर्षितेत्यादौ अङ्गान्त्यस्यातोऽसंभव इत्याशयः। **अविशेष इति**—गुणे, रूपे इत्यादिः।

**( द्वितीयप्रयोजनोपपादनभाष्यम् )**

**सन्ध्यक्षरनिवृत्त्यर्थम्—ग्लायति म्लायति। सन्ध्यक्षरस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति ॥**

**( प्रदीपः )** **ग्लायतीति**। एचां द्विमात्रत्वाविशेषात् प्रयत्नाभिन्याभावादैकारोपदेशेऽप्येकारो गुणः स्यात्॥

**( उद्द्योतः )** नन्वैकारोच्चारणसामर्थ्याद् गुणो नेत्यत आह—**एचामिति**। सर्वेषां विवृत एव प्रयत्न इत्यभिमानः॥

**( तत्त्वालोकः )** प्रदीपे—**ओकारो गुणः स्यादिति**—एवञ्च गुणे कर्तव्ये अनुस्वारादेरसिद्धतया ऽनवितेत्यादि प्रसज्येत। यद्यपि व्यञ्जनस्य मात्रिकेनैव गुणेन भवितव्यं, तथापि स्थानत आन्तर्यस्य प्राबल्यात् तस्य ओकारेणैव गुणेन भूयेतेत्याशयः।

**( तृतीयप्रयोजनोपपादनभाष्यम् )**

**व्यञ्जननिवृत्त्यर्थम्—उम्भिता उम्भितुम् उम्भितव्यम्। व्यञ्जनस्य गुणः प्राप्नोति। इग्ग्रहणान्न भवति ॥**

**( प्रदीपः )** **उम्भितेति**। भकारस्यौष्ठ्यत्वादोकारो गुणः स्यात्॥

**( प्रथमप्रयोजननिराकरणभाष्यम् )**

**आकारनिवृत्त्यर्थेन तावन्नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति—नाकारस्य गुणो भवतीति। यदयम् "आतोऽनुपसर्गे कः" इति ककारमनुबन्धं करोति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**कित्करण एतत्प्रयोजनम्—कितीत्याकारलोपो यथा स्याद्। यदि चाकारस्य गुणः स्यात्, कित्करणमनर्थकं स्याद्। गुणे कृते द्वयोरकारयोः पररूपेण सिद्धं रूपं स्याद्—गोदः कम्बलद इति। पश्यति त्वाचार्यो—नाकारस्य गुणो भवतीति, ततः ककारमनुबन्धं करोति ॥**

**( प्रदीपः )** **पररूपेणेति**। अतो लोपस्तु न भवत्यार्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानात्॥

**( उद्द्योतः )** **आर्धधातुकोपदेश इति**। गुणनिष्पन्नश्च तदुत्तरकालिक इति भावः॥

**( तत्त्वालोकः )** भाष्ये—ज्ञापकाश्रयणेन प्रयोजनानि क्रमशः खण्डयति—**आकारेति**। उद्द्योते-**तदुत्तरेति**—आर्धधातुकोपदेशोत्तरेत्यर्थः। अकार इत्यादिः।

**( द्वितीयप्रयोजननिराकरणभाष्यम् )**

**सन्ध्यक्षरनिवृत्त्यर्थेनापि नार्थः। उपदेशसामर्थ्यात्सन्ध्यक्षरस्य गुणो न भवति ॥**

**( प्रदीपः )** **उपदेशसामर्थ्यादिति**। प्रतिपत्तिलाघवार्थमेकारमेवोपदिशेदित्यर्थः॥

**( उद्द्योतः )** **प्रतिपत्तिलाघवम्** प्रक्रियालाघवम्। "तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च॥" इति पाणिनीयशिक्षोक्तेः प्रयत्नलाघवमपि बोध्यम्॥

**( तत्त्वालोकः )** प्रदीपे—**एवेति**—अनेन ऐकारव्यावृत्तिः।

**( तृतीयप्रयोजननिराकरणभाष्यम् )**

**व्यञ्जननिवृत्त्यर्थेनापि नार्थः। आचार्यप्रवृत्तिर्ज्ञापयति—न व्यञ्जनस्य गुणो भवतीति। यदयं जनेर्डं शास्ति ॥**

**कथं कृत्वा ज्ञापकम् ? ।**

**डित्करण एतत्प्रयोजनम्—डितीति टिलोपो यथा**

स्याद् । यदि व्यञ्जनस्य गुणः स्याद् , ङित्करणमनर्थकं स्याद् । गुणे कृते त्रयाणामकाराणां पररूपेण सिद्धं रूपं स्यादुपसरजो मन्दुरज इति । पश्यति त्वाचार्यो-न व्यञ्जनस्य गुणो भवतीति । ततो जनेर्डं शास्ति ॥

( प्रदीपः ) यदयं जनेरिति । यद्येवं मिदेर्गुणो विधीयमानो ज्ञापकेन व्यञ्जनस्य निरस्तत्वादिग्ग्रहणाभावाच्च सर्वादेशः प्राप्नोति । मिद इमिदिरित्याश्रयणादिकारस्यैव भविष्यतीत्यदोषः ॥

( उद्द्योतः ) इग्ग्रहणेति । ततश्च मिदेरिति नावयवषष्ठी, किंतु स्थानषष्ठीति सर्वादेशो गुणः स्यादित्यर्थः ॥

( तत्त्वालोकः ) प्रदीपे—ज्ञापकबलेन आकारादिस्थानित्वनिवृत्ते. इष्टोपपत्त्या इक्परिभाषां प्रत्याचक्षाणं प्रति शङ्कते—यदीति । एवमिति । ज्ञापकप्रभावात् इष्टोपपत्त्या इक्परिभाषाया अभाव इत्यर्थः । तर्हीति शेषः । समाधत्ते—मिद इति । इत्यदोषः—इति हेतोरदोषः । उद्द्योते—इति—इत्यत्र । इति—इति हेतोः ।

( प्रथमप्रयोजनबाधकज्ञापकनिराकरणभाष्यम् )

नैतानि सन्ति ज्ञापकानि । यत्तावदुच्यते—कित्करणं ज्ञापकं नाकारस्य गुणो भवतीति, ।। उत्तरार्थमेतत्स्यात्—"तुन्दशोकयोः परिमृजापनुदोः" इति ॥

( प्रदीपः ) यत्तावदिति । विशेषप्रतिपादनाय सकलज्ञापकाक्षेपः । केचिदाहुः—टकः कित्त्वेन ज्ञापकेनाकारनिवृत्त्यर्थत्वे निराकृते यदप्युच्यत इति ज्ञापकाक्षेपो ग्रन्थच्छायां न पुष्णाति । तस्मादार्थेन क्रमेण सर्वज्ञापकभङ्गोपन्यासं कृत्वा यथासंभवं ज्ञापकसमर्थनं कर्तव्यम् ।

( उद्द्योतः ) भाष्ये नैतानि सन्ति ज्ञापकानीति । छत्रिन्यायेन ॥ ननु नैतानि सन्ति ज्ञापकानीति प्रतिज्ञायाग्रे ज्ञापकसमर्थनमयुक्तमित्यत आह— विशेषेति । 'टकः कित्वं ज्ञापकम् । यं विधिं प्रति' इत्यादिविशेषप्रतिपादनायेत्यर्थः ॥ शङ्कते—केचिदिति ॥ यदप्युच्यते इति समुच्चयार्थापिशब्देनेति शेषः ॥ आर्थेन सामर्थ्यप्राप्तेन ॥ भङ्गेति । भङ्गसदृश इति भावः ॥

( तत्त्वालोकः ) भाष्ये—इक्परिभाषाऽरम्भवादी आद्यान्त्ययोः साफल्यं मध्यमस्यातिप्रसक्तत्वञ्चाभिप्रेत्य प्रतिजानीते—नैतानीति । उत्तरार्थमिति—तदयुक्तं, यत इत्यादिः । एतत्—कित्करणम् । स्यादिति—तथा च तुन्दपरिमृज इत्यादौ गुणाभाव उपपद्यते इति भावः ।

प्रदीपे—"नैतानी"त्यादिना प्रक्रान्तसकलज्ञापकखण्डनमहाप्रकरणे तत्तज्ज्ञापकोपन्यासेन तत्तज्ज्ञापकनिराकरणावान्तरप्रकरणविच्छेदेऽपि तादृशमहाप्रकरणस्याविच्छेदात् केषाञ्चिदुक्तध्येऽरुचिं सूचयन्नाह—केचिदिति । टक इति—ज्ञापकखण्डनप्रकरणे इत्यादिः । ज्ञापकेनेति—तस्येत्यादिः । आकारेति—तस्येत्यादिः । पुष्णातीति—ज्ञापकखण्डनप्रकरणविच्छेदादिति शेषः । सर्वज्ञापकभङ्गेति—"अपनुदो"रित्यग्रे "यदप्युच्यते उपदेशे"त्यादि "न प्राप्नुवन्ती"त्यन्तस्य, "यदप्युच्यते जने"रित्यादि "ओकारः प्राप्नोती"त्यन्तस्य चेत्यर्थः । ज्ञापकेति—'यत्तर्हीं'त्यादि "करोती"त्यन्तेन, "नैष" इत्यादि "निमित्तमेवे"त्यन्तेन चेत्यादिः ।

उद्द्योते—ननु त्रयाणां मध्ये उपदेशसामर्थ्यस्य अज्ञापकतया द्वयोः ज्ञापकत्वात् कथं ज्ञापकानीत्यत्र बहुवचनमित्यत आह—छत्रीति । यथा छत्रिणो यान्तीत्यत्र एकसाथवाहित्वेन छत्र्यच्छत्रिसमुदाये छत्रिशब्दप्रयोगाद्बहुवचनोपपत्तिः, तथा प्रकृतेऽपि एककार्यकारित्वेन ज्ञापकाज्ञापकसमुदाये ज्ञापकशब्दप्रयोगात्तदुपपत्तिरित्याशयः ।

( प्रथमप्रयोजनबाधकज्ञापकान्तरभाष्यम् )

यत्तर्हि "गापोष्टग्" इत्यनन्यार्थं ककारमनुबन्धं करोति ॥

( तत्त्वालोकः ) एवमाद्यज्ञापके खण्डिते तस्य ज्ञापकान्तरमाह—यत्तर्हीति । अनन्यार्थम्—आकारलोपमात्रार्थम् । करोतीति—तज्ज्ञापकमिति शेषः । अत्र कित्करणं सामग इत्यादावाकारलोपार्थं, यद्याकारस्य गुणः स्यात्तर्हि द्वयोरकारयोः पररूपेण सामग इत्यादेः सिद्धौ तत् व्यर्थं स्यादित्याशयः ।

( द्वितीयप्रयोजनबाधकसामर्थ्यदूषकभाष्यम् )

यदप्युच्यते—उपदेशसामर्थ्यात्संध्यक्षरस्य गुणो न भवतीति ॥ यदि—यद्यत्संध्यक्षरस्य प्राप्नोति, तत्तदुपदेशसामर्थ्याद्बाध्यते । आयादयोऽपि तर्हि न प्राप्नुवन्ति ॥

( प्रदीपः ) आयादयोऽपीति । ऐकारोच्चारणस्याविकृतरूपश्रवणार्थत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—यदीति—तदप्ययुक्तं, यत इत्यादिः । तर्हीति—तस्येति शेषः ।

( सामर्थ्यदूषणनिराकरणभाष्यम् )

नैष दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव नासौ बाध्यते । गुणं च प्रत्युपदेशोऽनर्थकः, आयादीनां पुनर्निमित्तमेव ॥

( प्रदीपः ) यं विधिमिति । आयादेशस्यैकार एव निमित्तमित्यायादेशो न बाध्यते । न हि ग्लायित्येवं पाठः शक्यः कर्तुम् , तथा ग्लायत इत्यादिरूपासिद्धिप्रसङ्गात् । न ध्याख्येति निपातनाच्चात्वं गुणवन्न बाधिष्यते ॥

( उद्द्योतः ) ग्लायत इत्यादीति । आदिना जग्लावित्यादि ॥ नन्वेवमात्वमपि बाध्येत । न हि तस्य ऐकारो निमित्तं ग्ले इति पाठेऽपि सुकरत्वाद् अत आह—न ध्याख्येति । ध्या इति कृतात्वनिर्देशेनैकारोच्चारणस्यात्त्वाबाधकत्वज्ञापनादिति भावः ॥ न चास्य सौत्रत्वम् । बाधकत्वमङ्गीकृत्य सौत्रत्वकल्पनापेक्षयाऽबाधकत्वज्ञापनस्य लघुत्वादित्याहुः ॥ न च रैशब्दादिभ्य आचारक्विपि रायतीत्यादौ सन्ध्यक्षरस्य गुणः स्यादिति वाच्यम् । एजन्तेभ्य आचारक्विभाव एतद्भाष्यप्रामाण्यादित्यदोषात् ॥ गुणवदिति । वैधर्म्ये दृष्टान्तः ॥

( तत्त्वालोकः ) भाष्ये—एवमुपदेशसामर्थ्याभ्युपगमे दत्तामनुपपत्तिं परिहरति—नैष इति । यमिति—यत इत्यादिः । बाध्यत इति—उपदेशसामर्थ्यादित्यादिः । एवमग्रेऽपि । एवेति—उपदेश इति शेषः । असाविति—विधिरिति शेषः । अनर्थक इति—"ग्ले"इत्यस्यापि सुपठत्वादिति भावः । पुनरिति—स इति शेषः ।

प्रदीपे—इति—इति हेतोः । यकारद्वयश्रवणप्रसङ्गमभिप्रेत्याह—असिद्धीति । उद्द्योते-तस्य-आत्वस्य । अस्य-कृतात्वनिर्देशस्य । इत्यदोषात्—इति हेतोरदोषात् ।

( तृतीयप्रयोजनबाधकज्ञापकनिराकरणभाष्यम् )

यदप्युच्यते—जनेर्डवचनं ज्ञापकम् ?—न व्यञ्ज-

**नस्य गुणो भवतीति ॥ सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति। न च जनेर्गुणेन सिद्धयति। कुतो ह्येतत्—जनेर्गुण उच्यमानोऽकारो भवति, न पुनरेकारो वा स्यादोकारो वेति ? ॥**

( तत्त्वालोकः ) सिद्धे इति—तदप्ययुक्तम् : यत इत्यादिः। असिद्धिमुपपादयति—कुत इति। हि—यतः।

( ज्ञापकसाधकभाष्यम् )

**आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्य मात्रिकोऽकारो भविष्यति ॥**

( तत्त्वालोकः ) एवं तृतीयज्ञापकविघटनाय प्रतिपादितामसिद्धिमिक्परिभाषाप्रत्याख्याता परिहरति—आन्तर्यत इति। अत्यन्ताधिककालापेक्षया स्वल्पाधिककाल एवान्तरतमो भवतीत्याशयः।

( ज्ञापकबाधकभाष्यम् )

**एवमप्यनुनासिकः प्राप्नोति ॥**

( तत्त्वालोकः ) तदारम्भवादी पुनरसिद्धिं प्रतिपादयति—एवमिति।

( ज्ञापकसाधकभाष्यम् )

**पररूपेण शुद्धो भविष्यति ॥**

( प्रदीपः ) पररूपेणेति। रूपग्रहणस्येदमेव प्रयोजनम्—यादृक् परस्य रूपं तादृगेव यथा स्यादिति ॥

( उद्द्योतः ) ननु पररूपेऽपि गुणानामभेदकतया कदाचित्सानुनासिकोऽपि स्यादत आह—रूपग्रहणस्येति ॥ परे तु अत्र पररूपशब्देन परशब्देन वा यदुपस्थितं रूपं प्रयोगस्थं तस्य ग्रहणम्, स्थाने जायमानः किंगुणक इत्याकाङ्क्षायामन्तरतमपरिभाषयोभयगुणकः। प्रकृते चोभयान्तरतमासंभवात् परशब्देन यद्गुणस्योपस्थितिस्तद्गुणक एव भविष्यतीति भाष्याशयाद्रूपग्रहणस्येत्यादि चिन्त्यम्। गुणानां शब्दत्वादिवत् शब्दस्वरूपत्वाभावेन व्यावृत्त्यसंभवश्च रूपग्रहणेनेत्याहुः॥

( तत्त्वालोकः ) भाष्ये—तत्प्रत्याख्याता पुनस्तां परिहरति—परेति।

( ज्ञापकबाधकभाष्यम् )

**एवं तर्हि गमेरप्ययं डो वक्तव्यः। गमेश्च गुण उच्यमान आन्तर्यत ओकारः प्राप्नोति ॥ तस्मादिग्ग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) गमेरप्ययमिति। सप्तम्यां जनेर्ड इत्यतोऽन्येष्वपि दृश्यत इत्यत्र डोऽनुवर्तमानो गमेरपि विधीयत इत्यज्ञापकं डित्वमिति व्यञ्जननिवृत्त्यर्थं सूत्रं स्थितम् ॥

( उद्द्योतः ) ननु गमेरप्ययं ड इति भाष्यमनुपपन्नं, गमो 'गमश्चान्तात्यन्ताध्वदूरपारेति' सूत्रे पठितेनान्यत्रापि दृश्यत इति वार्तिकेन नगोऽग इत्यादौ डस्य सत्त्वादत आह—सप्तम्यामिति। सप्तम्यां जनेरित्युत्तरं पठितेऽन्येष्वपि दृश्यत इति सूत्रे दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वेन तेनैव प्रकृत्यन्तरादपि डे सिद्धेऽन्तात्यन्तेति प्रकरणस्थं वार्तिकं न कार्यमिति भावः॥ भाष्ये आन्तर्यत ओकार इति। स्थानत आन्तर्यादिति भावः॥ ननु तनोतेर्डः सन्वच्चेति डित्करणान्न व्यञ्जनस्य गुण इति चेन्न। उणादीनामव्युत्पत्तिपक्षाङ्गीकारात्॥ नचैवमपि स्थानप्रयत्नान्तरतमेषु इकारादिषु चरितार्थानि गुणादिशास्त्राणि व्यञ्जने न प्रवर्तन्त इति वाच्यम्। ईशादौ शकारे तथाप्यतिप्रसङ्गात्। सूत्रमते स्थानप्रयत्नैक्यादिति भाष्याशयः। स्थानेन्तरतमे इति सप्तम्यन्तपाठस्य भाष्ये प्रत्याख्यानेनास्या युक्तेरसंभवदुक्तिकत्वाच्च ॥

( तत्त्वालोकः ) भाष्ये-एवं सति तस्य व्यञ्जनस्थानित्वनिवृत्त्यर्थतायाः खण्डकं तृतीयज्ञापकं डित्वाभावे इष्टानुपपत्तेः प्रतिपादनेन विघटयन् योगविभागेन इक्परिभाषासूत्रारम्भं व्यवस्थापयति- एवमिति। गमेरिति-यत इत्यादिः। उपसंहरति—तस्मादिति। अतः डित्वस्य तदर्थमवश्यवक्तव्यत्वात् तस्य ज्ञापकत्वासम्भवेन व्यञ्जनस्थानित्वनिवृत्तेरन्यथा असम्भवादित्यर्थः।

प्रदीपे--इति--इति हेतोः। एवमग्रेऽपि। उद्द्योते—भाष्यं—भाष्यस्थम् अयमिति।

( इति योगविभागप्रयोजननिरूपणाधिकरणम् )

---

( अथ इक्पदोपस्थापकलिङ्गाधिकरणम् )

( आक्षेपभाष्यम् )

**यदीग्ग्रहणं क्रियते, द्यौः, पन्थाः, सः, इममिति, एतेऽपीकः प्राप्नुवन्ति ॥**

( उद्द्योतः ) भाष्ये एतेपीति। औकारादयः॥ एषूदाहरणेष्विकः प्राप्नुवन्तीत्यन्वयः॥ स इत्यत्र तु न स्यादेवेति भावः॥ त्यदादीनाम इत्यत्र त्यदादीनामिति तु तदोः सः सावित्युत्तरार्थं स्यात् संज्ञोपसर्जनव्यावृत्त्यर्थं च स्यादिति बोध्यम्॥

( तत्त्वालोकः ) भाष्ये—एवं योगविभागेन इक्परिभाषासूत्रस्य गुणवृद्धिमात्रविषयकत्वे व्यवस्थापिते तत्खण्डयिता दोषमाह—यदीति। क्रियते इति—तर्हीति शेषः। इति—इत्यत्र।

( १०६ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ संज्ञया विधाने नियमः ॥ * ॥

( भाष्यम् )

**संज्ञया ये विधीयन्ते तेषु नियमः ॥**

( प्रदीपः ) संज्ञयेति। गुणवृद्ध्यनुवृत्त्यैव गुणवृद्ध्योरिकः सिद्ध (स्थानि) त्वाद्द्वितीयं गुणवृद्धिग्रहणमाश्रितगुणवृद्धिशब्दव्यापारार्थं विज्ञायते। तेन गुण इत्येवं यो गुणः वृद्धिरित्येवं या वृद्धिरिति विज्ञायते। अथवा गुणवृद्धिमात्रग्रहणे गुणवृद्ध्यधिकारादेव सिद्धे पुनर्गुणवृद्धिग्रहणं गुणवृद्धिशब्दव्यापाराश्रयणार्थं विज्ञायते ॥

( उद्द्योतः ) आश्रितेति। आश्रितो गुणवृद्धिशब्दव्यापार उच्चारणं येषु आदेशेषु विधीयमानेषु तदर्थमित्यर्थः॥ तेनेति॥ इत्येवमित्यध्याहृत्य स्वरूपपदार्थकेनान्वयेन विशेषणादीदृशार्थलाभ इति भावः॥ अत एव संबन्धानुवृत्तिप्रदर्शनपरभाष्ये गुणवृद्धी इत्युच्चार्य गुणवृद्धिग्रहणमनुवर्तत इति उक्तम्॥ उपक्रमस्थगुणवृद्धिग्रहणसामर्थ्यादित्येतद्भाष्यस्वारस्यादाह-अथवेति। पुनरुपादानसामर्थ्यादित्यं गुणवृद्धिग्रहणं गुणवृद्धिशब्दविहितगुणवृद्धिलाक्षणिकमिति भावः॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते—संज्ञयेति। गुणवृद्धिसंज्ञयेत्यर्थः। ये—आदेशाः। नियमः—नियामकोऽयं परिभाषारूपो योगः। प्रदीपे—गुणवृद्धीति—गुणवृद्धिसंज्ञासूत्राभ्यामित्यादिः

उद्द्योते—अन्यतरेण—गुणवृद्ध्यन्यतरेण । ततोऽत्रानुवर्त्तमानयोः असमस्तैकवचनान्तगुणवृद्ध्योः, असम्भवात्, पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमात्, सामानाधिकरण्येनान्वये समानवचनताऽपि न्याय्येति नियमाच्च अत्रत्यसमस्तद्विवचनान्तगुणवृद्धिपदार्थसमुदाये तद्विशेषणगुणवृद्ध्योश्च सामानाधिकरण्येनान्वयो न सम्भवतीत्याशयेनाह—उपक्रमेति । तत इत्यादिः ।

(आक्षेपभाष्यम्)

**किं वक्तव्यमेतत् ? ॥**

(तत्त्वालोकः) उक्तभावानभिज्ञ आह—किमिति । एतत्—संज्ञयेति विशेषणमपूर्वम् ।

(समाधानभाष्यम्)

**नहि, ॥**

**कथमनुच्यमानं गंस्यते ? ॥**

**गुणवृद्धिग्रहणसामर्थ्यात् ॥**

(आक्षेपसाधकभाष्यम्)

**कथं पुनरन्तरेण गुणवृद्धिग्रहणमिको गुणवृद्धी स्याताम् ? ॥**

(समाधानसाधकभाष्यम्)

**प्रकृतं गुणवृद्धिग्रहणमनुवर्तते ॥**

**क्व प्रकृतम् ? ॥**

**"वृद्धिरादैजदेङ्गुणः" इति ॥**

(तत्त्वालोकः) प्रकृतमिति—तदुपपत्तये इत्यादिः । समस्तद्विवचनान्तस्य तस्याप्रकृतत्वात् पृच्छति—क्वेति । असमस्तैकवचनान्तमेव तत् गुणवृद्धिसंज्ञासूत्रद्वयादनुवर्त्तते इत्याशयेनाह—वृद्धिरिति । इति—इत्यत्र ।

(आक्षेपभाष्यम्)

**यदि तदनुवर्तते "अदेङ्गुणो वृद्धिश्च" इत्यदेङां वृद्धिसंज्ञाऽपि प्राप्नोति ॥**

(प्रदीपः) अदेङामिति । पूर्वसूत्रे संज्ञासंज्ञिसंबन्धायोपात्तो यादृशो वृद्धिशब्दस्तादृश एवोत्तरत्रानुवर्तते इत्यदेङामित्युक्तम् । तेनैतन्न चोदनीयं, वृद्धिशब्दोऽनुवर्तमान आदैचः प्रत्याययतीत्यादैचां गुणसंज्ञा प्राप्नोतीति ॥

(उद्द्योतः) यादृश इति । स्वरूपपदार्थक इत्यर्थः ॥ नन्वेवं सति उत्तरत्र निषेध्यसमर्पणार्थं गुणवृद्धिग्रहणस्य चारितार्थ्येन सामर्थ्यं दुरुपपादम् । अनुवर्तमानस्य स्वरूपपरत्वेन निषेध्यसमर्पकत्वाभावादिति चेन्न ॥ न । आगन्तूनामन्ते निवेश इति न्यायेनादेङ्सूत्रे गुणपदोत्तरं वृद्धिपदोपस्थित्या तत्साहचर्येण तत्र सूत्रे स्वरूपपरत्वं तस्य, उत्तरत्र तु योग्यतयाऽर्थपरत्वम् । इक इति सूत्रेऽपि न धातुलोपेत्यादिसाहचर्येणार्थपरत्वमिक इति षष्ठीनिर्देशाच्चेति भाष्याशयात् ॥

(तत्त्वालोकः) भाष्ये—अनुवृत्तेः धाराप्रवाहन्यायेनाभ्युपगमात् ततोऽत्रानुवृत्तवृद्धिपदस्य मध्ये सम्बन्धाद् दोषं शङ्कते—यदीति । अनुवर्त्तते इति—तर्हीति शेषः ।

प्रदीपे—ननु शब्दाधिकारे संज्ञासूत्रादन्यत्र संज्ञाशब्दानां संज्ञिपरतेति नियमेन आदैचां गुणसंज्ञा प्राप्नोतीत्येव वक्तव्यमित्यत आह—पूर्वसूत्रे इति । सम्बन्धाय—सम्बन्धबोधनाय । अर्थाधिकारमभिप्रेत्याह—तादृश एवेति । इति—इति हेतोः ।

उद्द्योते—उत्तरत्र—न धातुलोप इत्यादौ । एवमग्रेऽपि । तत्साहचर्येण—गुणपदसाहचर्येण । तत्र सूत्रे—अदेङ्सूत्रे । तस्य—वृद्धिपदस्य । अर्थेति—तस्येत्यादिः । षष्ठी—स्थानषष्ठी ।

(समाधानभाष्यम्)

**संबन्धमनुवर्तिष्यते—"वृद्धिरादैच्" । "अदेङ्गुणः" इति वृद्धिरादैच् । ततः—"इको गुणवृद्धी" इति, गुणवृद्धिग्रहणमनुवर्तते, आदैजदेङ्ग्रहणं निवृत्तम् ॥**

(प्रदीपः) संबन्धमिति । संबध्यत इति संबन्धं, कर्मणि घञ् । नपुंसकस्याभिधेयत्वान्नपुंसकनिर्देशः । आदैज्ग्रहणसंबद्धं वृद्धिग्रहणमदेङ्गुण इत्यत्रानुवर्तते, तेनादेङ्भिर्न संबध्यते । इह त्वनुवृत्तमादैचो जहाति । कान्तारोत्तरणाय सार्थस्येव त्यागोपादाने ॥

(उद्द्योतः) नपुंसकस्येति । घञजपः पुंसीति तु प्रायिकमिति भावः ॥ यत्तु भावविषयमेवैतदिति । तन्न । मांसं भक्ष्योऽस्येति कर्मण्यणिति सूत्रस्थभाष्यप्रयोगविरोधात् ॥ तेनेति । अत्रादैजित्यनुवृत्तिर्न स्वकार्याय, किं तु वृद्धिशब्दस्यान्यसंबन्धनिवृत्तये इति भावः॥ भाष्ये वृद्धिरादैजदेङ्गुण इति सूत्रक्रमनिर्देशः । पुनर्वृद्धिरादैजित्यभिधानमदेङित्यत्र संबन्धानुवृत्तिं दर्शयितुम् ॥ इको गुणवृद्धी इत्युक्तिस्तु यथान्यासाभिप्रायेण ॥ आदैजदेङ्ग्रहणमिति । स्वरितत्वाप्रतिज्ञानेनादेङ्ग्रहणवदादैजित्यपि निवृत्तमित्यर्थः ॥ क्वचित्तु आदैज्ग्रहणं निवृत्तमित्येव पाठः ॥

(तत्त्वालोकः) भाष्ये—समाधत्ते—सम्बन्धमिति । नैष दोषः । यत इत्यादिः ।

प्रदीपे—नपुंसकस्य—वृद्धिग्रहणस्य । तेनेति—वृद्धिग्रहणमिति शेषः । इह त्विति—इको गुणवृद्धीत्यत्र त्वित्यर्थः । (गुण) वृद्धिग्रहणमिति शेषः । यथा धनवान् दुर्गममार्गोत्तरणाय रक्षापुरुषान् सह नयति, तीर्णे च दुर्गमार्गे तान् परित्यजति तथा प्रकृतेऽपीत्याशयेनाह—कान्तारेति ।

उद्द्योते—एतत्—घञ् । अत्र—अदेङ् गुण इत्यत्र । अन्येति—अदेङित्यर्थः । सम्बन्धानुवृत्तिम्—आदैच्सम्बद्धवृद्धिग्रहणानुवृत्तिम् ।

(समाधानान्तरभाष्यम्)

**अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः ॥**

(प्रदीपः) अथवेति । वृद्धिशब्दस्येहाकाङ्क्षावशादुपस्थानं नत्वदेङित्यत्र ॥

(उद्द्योतः) ननु मण्डूकस्य चेतनत्वात्तथा गतिसंभवेऽपि शब्दस्य कथं सेत्यत आह—वृद्धिशब्दस्येति । स्वरितत्वासङ्गादनुवर्तमानस्यापीति शेषः ॥ इहेति । इक इति सूत्र इत्यर्थः । अदेङित्यत्र तु न सम्बन्धः । गुणसंज्ञासम्बन्धेनादेङां निराकाङ्क्षत्वादिति बोध्यम्॥

(तत्त्वालोकः) भाष्ये—ननु "अदेङि"ति सूत्रे आदैच्सम्बद्धवृद्धिपदस्यानुवृत्तौ "इक" इति सूत्रेऽपि तस्यैवानुवृत्तिः स्यादितीष्टं नोपपद्येतेत्यत आह—अथवेति ।

उद्द्योते—तथा—उत्प्लुत्य । शब्दस्येति—अचेतनत्वादिति शेषः । सा—उत्प्लुत्य गतिः । सम्बन्ध इति—वृद्धिशब्दस्येत्यादिः ।

( एकदेशिसमाधानान्तरभाष्यम् )

**अथवैकयोगः करिष्यते—"वृद्धिरादैजदेङ्गुणः" ततः "इको गुणवृद्धी" इति। न चैकयोगेऽनुवृत्तिर्भवति ॥**

**( प्रदीपः )** **अथवैकयोग इति।** एको भवतिरध्याह्रियते। वृद्धिरादैजदेङ्गुणो भवतीत्येकवाक्यत्वं संपद्यते। यद्यपि प्रतिपत्तिकाले भवतिक्रिया भिद्यते, तथाप्येककाला प्रतिपत्तिरित्यादैच्संबद्धा वृद्धिसंज्ञाऽदेङ्सम्बद्धा गुणसंज्ञेति नास्ति वृद्धिसंज्ञाया अदेङ्भिः सम्बन्धः ॥

**( उद्द्योतः )** नन्वेकयोगत्वं नैकार्थत्वं, भिन्नविषयसंज्ञाद्वयविधानात्। नापि निरन्तरपाठः, तस्येदानीमपि सत्त्वेन **करिष्यत** इत्यस्यासङ्गतेः। **णेरणा**वित्यादौ एकयोगेऽप्यनुवृत्तिदर्शनाच्चात आह—**एक इति** ॥ **प्रतिपत्तिकाले** लक्ष्यसंस्कारकवाक्योपप्लवकाले ॥ **एककालेति।** आदैज् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञो भवतीति संग्राहकवाक्यार्थबोध एककाल इति भावः ॥ समूहालम्बनात्मक एको वाक्यार्थबोध इति तात्पर्यम् ॥ यद्वादैज् वृद्धिसंज्ञोऽदेङ्गुणसंज्ञश्च भवत इत्येको वाक्यार्थबोध इति तात्पर्यम्। **प्रतिपत्ति**र्वाक्यार्थबोधः। **णेरणा**वित्यादौ अवान्तरवाक्यार्थभेदान्न दोषः ॥ केचित्तु एककाला प्रतिपत्तिर्भवतु। तावतापि स्वरितत्वगुणप्राप्तवृद्धिपदसंबन्धाभावः कुत इति चिन्त्यम्। न च स्वविषयवाक्यजबोधानन्तरं निराकाङ्क्षतयान्यत्रान्वयाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गो न ह्येतदेकयोग इति वाच्यम्। व्यवधाननिबन्धनायामनेकसंबन्धाप्राप्तावनेकसंबन्धाय स्वरितत्वासङ्ग इत्यस्यापि वक्तुं शक्यत्वात् ॥ तस्मादयमत्र भाष्यार्थः—**तदधीते तद्वेदे**त्यत्र द्विस्तद्ग्रहणादेकयोगेऽनुवृत्त्यभावः—इति। स्पष्टं चेदं **तदस्मिन्नस्ती**ति सूत्रे भाष्ये। एकयोगत्वं च द्वयोः संहितापाठ एव ॥ वस्तुत एकयोगेऽप्यनुवृत्तिर्भवति, **तदस्यास्त्यस्मिन्निति** सूत्रे द्विस्तद्ग्रहणाभावात्, **तदधीत** इति सूत्रे तु बालानां सुखबोधाय द्विस्तद्ग्रहणमित्यप्युक्तं तत्रैव। अतोऽत्र भाष्येऽयं समाधिरेकदेशिन इत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**अनुवृत्तेः** मण्डूकप्लुतिन्यायेनाभ्युपगमे मध्यमे सम्बन्धाभावकल्पनायां गौरवादाह—**अथवेति। गुणः—**"गुणः" इति।

प्रदीपे—विभिन्नसंज्ञिसम्बद्धसंज्ञाद्वयस्य अध्याहृतभवतिक्रियया युगपत्तन्त्रेणान्वयमभिप्रेत्याह—**एककालेति। इति—**इति हेतोः।

उद्द्योते—**इदानीं**—भिन्नसूत्रसंहितापाठकाले। तादृशबोधस्यादृष्टचरत्वात् भवत इत्यस्याध्याहाराभिप्रायेणाह—**यद्वेति।** कैयटोक्तं खण्डयति—**केचित्त्विति। तत्रैव—**"तदस्मिन्नस्ती"ति सूत्र भाष्ये एव।

( समाधानान्तरभाष्यम् )

**अथवा—**

**❀अन्यवचनाच्चकाराकरणाच्च प्रकृतापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति❀ ॥**

**अन्यस्याः संज्ञाया वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृताया वृद्धिसंज्ञाया गुणसंज्ञा बाधिका भविष्यति। यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥**

**( प्रदीपः )** **अथवान्यवचनादिति।** यथा कप्रत्ययेनाण् बाध्यतेऽसंदिग्धत्वादनवकाशत्वात्तात्पर्याच्च कविधेः। अणस्तु विपर्ययात्। **पवमदेङ्गुण** इत्यत्र वृद्धिग्रहणमनुवृत्तं सत्संदिह्यते-किमुत्तरार्थमिहास्यानुवृत्तिरथेहार्थापीति। सावकाशा च वृद्धिसंज्ञा, तात्पर्यं च नास्ति। गुणसंज्ञा तु तात्पर्यादसन्देहान्निरवकाशत्वाच्च वृद्धिसंज्ञासम्बन्धमदेङां बाधते। प्रत्ययसंज्ञा तु संज्ञिविशेषेणासंयुक्ताधिकारेणैव विधीयमाना कृत्यादिसंज्ञाविषयेऽपि प्रवर्तते ॥

**( उद्द्योतः )** ननु वृद्धिगुणसंज्ञयोः सामान्यविशेषत्वाभावात्कथमुत्सर्गापवादसाम्यमत आह—**यथेति। आत** इत्युपादानादेव **तद्विषये** कस्यासंदिग्धत्वम्। अत एव तदतिरिक्तावकाशविरहस्तदुद्देशेनैव प्रवृत्तिरूपं तात्पर्यं च ॥ ननु गुणसंज्ञया वृद्धिसंज्ञावत् कृत्यादिसंज्ञयापि प्रत्ययसंज्ञा बाध्येतेत्यत आह—**प्रत्ययेति।** न तव्याद्याकाङ्क्षया प्रत्ययसंज्ञायाः संबन्धः। येन सन्निहितकृत्यादिसंज्ञया निराकाङ्क्षत्वान्न प्रत्ययसंज्ञया संबन्धः स्यात्। किं तु संज्ञाकाङ्क्षया ॥ **सा हि** स्वस्य बहुविषयत्वलाभाय कतिपयानन्तरविषयलाभेऽपि पुनः पुनर्विषयान्तरमाकाङ्क्षते। बहुविषयत्वं चास्याः संज्ञिविशेषासंबन्धेनाधिकारकरणादवसीयत इति भावः ॥ प्रकृते तु न तथेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—"तदस्यास्त्यस्मिन्नि"त्येकयोगेऽपि अनुवृत्तिदर्शनादाह—**अथवेति।** व्याख्येयभाष्यमाह—**अन्येति।** व्याख्यानभाष्यमाह—**अन्यस्या इति। गुण**रूपाया इत्यर्थः। अदेङ्सूत्रे इत्यादिः। **अनुकर्षणेति**—**वृद्धिपदे**त्यादिः।

प्रदीपे—**विपर्ययात्**—सन्दिग्धत्वात्, सावकाशत्वात्, अतात्पर्याच्च। **सत्**—तदपि। **उत्तरेति**—"इक"इति सूत्रेत्यर्थः। **चेन**—"सन्दिग्धा" इति समुच्चीयते। अदेङुद्देशेनानुवृत्तेरभावादाह—**तात्पर्यमिति** —

उद्द्योते—**तद्विषये**—आदन्तधातुविषये। **कस्य**—कप्रत्ययस्य। **तदतिरिक्तेति**—आदन्तधात्वतिरिक्तेत्यर्थः। तस्येत्यादिः। **तदुद्देशेन**—आदन्तधातूद्देशेन। **अपि प्रत्ययसंज्ञा**—प्रत्ययसंज्ञाऽपि। **निराकांक्षेति**—तव्यादीनामित्यादिः। **सा** -प्रत्ययसंज्ञा। **अस्याः**—प्रत्ययसंज्ञायाः।

( समाधानान्तरभाष्यम् )

**अथवा वक्ष्यत्येतद्—"अनुवर्तन्ते च नाम विधयः। न चानुवर्तनादेव भवन्ति। किं तर्हि? यत्नाद्भवन्ति" इति ॥**

**( प्रदीपः )** **अथवेति। विभाषा तिलमाषोमे**त्यत्र ह्युमाभङ्गयोरधान्यत्वात्खञोऽप्राप्तौ चोदितायां खञ्ग्रहणस्यानुवृत्तिराश्रिता, अनुवर्तमानश्च खञ् यत्नाभावाद् व्रीहिशाल्यादिभिर्न संबध्यते, अपि तु विभाषाश्रुत्या यत्नेन तिलादिभिरेव संबध्यते। तथेहापि वृद्धिग्रहणम**देङ्गुण** इत्यत्रानुवर्तमानमपि यत्नाभावाददेङ्भिर्न संबध्यते। **इह** तु पुनर्गुणवृद्धिग्रहणं यत्नो भवति ॥

**( उद्द्योतः )** **खञोऽप्राप्ताविति।** यत्ता मुक्ते इति शेषः। **मण्डूकगतयोऽधिकारा** इत्यस्यैव 'स्वरितलिङ्गेनानुवर्तमानं यत्राकाङ्क्षा, तत्रैव संबध्यते' इति विशेषमभिधातुमयं पक्षः। स च संबन्धाय तत्र विभाषाग्रहणरूपं यत्नविशेषं कुर्वतः सूत्रकृतोऽप्यभिमतः। अस्य विशेषस्य प्रागकथनं तु एतद्विशेषद्वारा पुनस्तत्परामर्शेन तत्रैव परिहारे मुख्यताबोधनायेति बोध्यम् ॥ **इह त्विति।** अकर्तव्यत्वविशिष्टपुनर्गुणवृद्धिग्रहणं यत्न इत्यर्थः। अनुवृत्तौ हि तदकर्तव्यं भवतीत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—आकडारसूत्रेण अन्यत्र संज्ञानां बाध्यबाधकभावाभावज्ञापनादाह—**अथवेति। वक्ष्यतीति**—विभाषा तिलेति सूत्रे भाष्यकार इत्यादिः। **च**—एव। **नामेति**—निश्चये। **विधयः—**

वेशीयमानाः । न च—न हि । भवन्तीति—ते सम्बद्धा इति शेषः ।

प्रदीपे—विभाषाश्रुत्या—विभाषापदश्रुतिरूपेण । अत्र विभाषा पदं समुच्चयार्थकं न तु विकल्पार्थकं, महाविभाषयैव विकल्पसिद्धेरिति भावः । इहापीति—अस्य अनुवर्त्तमानमपीत्यनेनान्वयः । इह—"इक" इति सूत्रे ।

उद्द्योते-अथवा मण्डूकेतिपक्षेण पुनरुक्तता अत्र पक्षे नास्तीत्याह—मण्डूकेति । स च—विशेषश्च ॥ तत्रेति—देहलीदीपन्यायेन पूर्वत्र परत्र चान्वेति । नन्वयं विशेषः पूर्वत्रैव कुतो नोक्त इत्यत आह—अस्येति । तत्परामर्शेन—अथवा मण्डूकेति परामर्शेन । नन्वत्र पुनर्गुणवृद्धिग्रहणस्य न यत्नता, तथा सति तदनुवृत्तिवैयर्थ्यापाता-दित्यत आह—अकर्त्तव्यत्वेति । हि—यतः । तत्—पुनर्गुणवृद्धि-ग्रहणम् ।

( समाधानान्तरभाष्यम् )

**अथवा—उभयं निवृत्तम् । तदपेक्षिष्यामहे ॥**

( प्रदीपः ) अथवेति । अपेक्षालक्षणं लौकिकमधिकारमाश्रयति । समुदायस्य चापेक्षायां नास्त्येतद् अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति गुणस्यैवापेक्षा युक्तेति । समुदायस्य भेदाभावात् ॥

( उद्द्योतः ) भाष्ये—उभयं निवृत्तमिति । स्वरितलिङ्गाना-सङ्गेनानुवृत्तिरेव निवृत्तिरित्यर्थः ॥ अपेक्षेति । इक इत्येतावन्मात्र-स्येतराकाङ्क्षत्वात् । समुदायापेक्षायां च लक्ष्यानुसार एव बीजम् । अनन्तरस्येति न्यायेन गुणस्यैवापेक्षा युक्तेत्येतत्रास्तीत्यन्वयः । समुदायत्वं च युगपद्वृद्धौ संनिधानात् क्रमेणासंनिधानाच्चेति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—उभयम्—आदैजदेङ्ग्रहणम् । तत्—गुणवृद्धिग्रहणम् ।

प्रदीपे—गुणमात्रापेक्षानिषेधे हेतुमाह—समुदायस्येति । वृद्धि-गुणेत्यादिः । अपेक्षालक्षणलौकिकाधिकारस्य एकापेक्षाविषयत्वाद्, आनन्तर्यस्य च भेदसापेक्षत्वादित्याशयः ।

उद्द्योते—स्वरितेति—अनुवृत्तिप्रयोजकेत्यादिः । ननु न तयोः समुदायः शब्देनोपात्त इत्यत आह—समुदायत्वमिति ।

( इतीक्पदोपस्थापकलिङ्गाधिकरणम् )

---

( अथ परिभाषात्वसाधकाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयमलोन्त्यशेषः, आहोस्विदलोन्त्यापवादः ? ॥**

( प्रदीपः ) किं पुनरिति । उभयथा संभवादोषदर्शनाच्च प्रश्नः । तत्राङ्गस्य गुण इति षष्ठीनिर्देशाल्लिङ्गादलोन्त्यस्येत्युपतिष्ठते गुणश्रुत्या त्विक इति । तत्र यदि पूर्वमिकाऽङ्गं विशेष्यते—इगन्ताङ्गस्य गुणो भवतीति, स च भवन्नलोन्त्यस्येत्यन्त्यस्य भवति, तदा सोऽस्य शेषो भवति । यदा त्वङ्गस्येति पूर्वमेवान्त्यमलं षष्ठी नीयते—अङ्गान्त्यस्य गुण इति, पश्चादिकान्त्योऽल् विशेष्यते, तदा तस्यायं विशेषणत्वात्तच्छेषो भवति ॥ अथ त्वङ्गस्येति गुणवृद्धिविधौ न स्थानषष्ठी, किं तर्ह्यंगापेक्षयाऽवयवषष्ठी, तदा स्थानषष्ठ्यभावादलोन्त्यस्येत्यस्यानुपस्थानमिति तदपवादपक्षो भवति । अप्राप्त्यनुमानमेव हि बाधो, वचनेन प्राप्तस्य बाधायोगात् । ततश्चाङ्गावयवस्य यत्र तत्र स्थितस्यैको गुणवृद्धी इत्यर्थः संपद्यते, समुच्चयस्त्वसंभवान्नोपन्यस्तः । न हि युगपद्द्वौ षष्ठ्यर्थौ संभवतः—स्थानेयोगोऽवयवयोगश्चेति विकल्पोऽपि न भवत्येकत्वात्षष्ठ्यर्थस्य । तस्मात्तच्छेषतदपवादपक्षावेवात्राशङ्कितौ ॥

( उद्द्योतः ) षष्ठीति । स्थानषष्ठीत्यर्थः ॥ षष्ठी स्थान इति परिभाषया तत्त्वनिर्णयः । अस्य च सूत्रस्य वृद्धिगुणशब्दाभ्यां विधीयमानौ वृद्धिगुणाविकः स्थाने इत्यर्थेऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्तेरुभयोरपि समकालप्रवृत्तिकता बोध्या । गुणश्रुत्येत्यस्य गुणशब्देन विधेयत्वबोधिकयेत्यर्थः ॥ तत्र यदीति । बुद्धेः क्रमिकत्वा-द्विशेषणविशेष्यभावे कामचाराच्चेति भावः ॥ सोऽस्येति । इगन्त-स्येति षष्ठ्यास्तेनान्त्येल्युपसंहारादेतद्विशेषणत्वमेतत्परिच्छेदकं तस्येति भावः ॥ तदा तस्यायं विशेषणत्वादिति । तच्छेषशब्दे तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषाविति भावः ॥ [ भाष्ये—'( इको ) गुणवृद्धि' इति पूर्वपरान्वयि, तेनैतद्द्वयलाभ इति भावः ॥ परिच्छेद्यपरिच्छेदक-भावकृत एव च शेषशेषित्वव्यवहार इति बोध्यम् ॥ ] अथ त्विति । अवान्तरवाक्यार्थबोधकालेऽनिर्णीतार्थकत्वेन स्थानषष्ठीत्वसंभावनया तत्प्रवृत्तावपि पश्चादिक इत्यस्योपस्थितौ मिदेरित्यादौ योग्यत्वेन तत्साहचर्येण चान्यत्राप्यवयवषष्ठीत्वनिर्णये तदसंबन्ध इति भावः ॥ बाधायोगादिति । आत्यन्तिकबाधायोगादित्यर्थः । पाक्षिकस्तु बाधः षोडशीग्रहणादौ भवत्येवेति बोध्यम् ॥ समुच्चय इति । मिदेरन्त्य-स्यैकश्चेत्येवमाकारः ॥ न हीति । प्रत्ययर्थशब्दनिवेशेनैकस्य नानेका-भिधायकत्वम् । तन्त्रे आवृत्तौ च न मानमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—अयम्—"इक" इति योगः । एव-मग्रेऽपि । अलोऽन्त्यशेष इति—अत्र बहुव्रीहिः षष्ठीतत्पुरुषो वा । अलोऽन्त्यापवाद इति—अत्र षष्ठीतत्पुरुषः ।

प्रदीपे—तत्र—सार्वधातुकार्धधातुकयोरित्यादौ । तत्र—तयोरुपस्थितौ । इति—इति रूपेण । स च—गुणश्च इगन्ताङ्गस्यान्त्याल इत्यर्थाभिप्रायेणाह—भवतीति । सः—अलोऽन्त्यस्येति योगः । अस्य—"इक" इति योगस्य । इकः अङ्गान्त्याल इत्यर्थाशयेनाह—विशेष्यते इति । तस्य—अलोऽन्त्यस्येति योगस्य । अयम्—"इक" इति योगः । भावादिति—तत्रेति शेषः । इति—इति हेतोः । नन्वपवादो नाम बाधः । स च संशय इव नात्यन्तं प्रवृत्तस्य नाप्यत्यन्तमप्रवृत्तस्य सम्भवतीति कथन्तस्यानेन बाध इत्यत आह—अप्राप्तीति । अवयव-षष्ठ्यां स्थानषष्ठीत्वभ्रमेण प्रवृत्तस्यापि तस्य, अनेन प्रवृत्तेन तत्रावयव-षष्ठीत्वनिश्चये स्थानषष्ठीरूपनिमित्ताभावात् अप्राप्तिरेवानुमीयते इति भावः । ततश्च-अलोऽन्त्यस्येत्यस्याप्रवृत्तौ च । अङ्गेति-मिदाद्यङ्गेत्यर्थः । भाष्यकृतो न्यूनतां निराकरोति—समुच्चय इति । हि—यतः ।

उद्द्योते—तस्येति—स्थानषष्ठीत्वेत्यर्थः । ननु गुणपदश्रवणरूप-लिङ्गेन इक्सूत्रस्य प्राक्प्रवृत्तिः, स्थानषष्ठीत्वनिर्णयेन अलोऽन्त्यसूत्रस्य अवान्तरवाक्यार्थबोधोत्तरं प्रवृत्तिरिति अनयोरेककाले कथं प्रवृत्तिरि-त्यत आह—अस्येति । इदं प्रवृत्तेरित्यनेनान्वेति । तेन—अलोऽन्त्य-सूत्रेण । एतदिति—इक्सूत्रेत्यर्थः । एतद्द्वयेति—बहुव्रीहिषष्ठीतत्पुरु-षद्वयेत्यर्थः । तत्प्रवृत्तौ—अलोऽन्त्यसूत्रप्रवृत्तौ । इत्यादाविति—इग-न्ताङ्गस्य, अङ्गान्त्येको वा अभावादिति शेषः । तदसम्बन्धः—अलोऽ-न्त्यसूत्रासम्बन्धः । पाक्षिक इति—द्वितीयवचनेन पूर्ववचन-प्राप्तस्येत्यादिः ।

( प्रत्याक्षेपभाष्यम् )

**कथं चायं तच्छेषः स्यात्, कथं वा तदपवादः ? ॥**

( तत्त्वालोकः ) गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यादिति न्यायेन अनयोः परस्परमसम्बन्धादनेकयोगव्यवहितत्वाच्च

कथं शेषशेषिभावादीत्याशयेन तटस्थः पूर्वपक्षिणं पृच्छति—कथमिति। च—तु।

( प्रत्याक्षेपसमाधानभाष्यम् )

यद्येकं वाक्यम्—तच्चेदं च, अलोन्त्यस्य विधयो भवन्ति—'इको गुणवृद्धी अलोन्त्यस्य' इति। ततोऽयं तच्छेषः॥ अथ नानावाक्यम्—तच्चेदं च, 'अलोन्त्यस्य विधयो भवन्ति', 'इको गुणवृद्धी अन्त्यस्य चानन्त्यस्य च' इति। ततोऽयं तदपवादः॥

( प्रदीपः ) यद्येकमिति। अनेकयोगव्यवहितयोरप्येकस्मिन्कार्यप्रदेशे स्वस्वनिमित्तसन्निधापितयोरङ्गाङ्गिभावाद्विशेषणविशेष्यभावादेकवाक्यतोपपत्तिः॥ अथ नानेति। अङ्गस्येतीगपेक्षयाऽवयवषष्ठ्यामिकः स्थानित्वात्तद्विशेषणत्वादङ्गस्यानुपस्थानमलोन्त्यस्येत्यस्य। ततश्चानयोर्भिन्नविषयत्वान्नानावाक्यत्वम्॥

( उद्द्योतः ) अनेकयोगेति। एवं चैकं वाक्यमिति भाष्यमयुक्तमिति भावः॥ उत्तरम्—एकस्मिन्नित्यादि। अङ्गाङ्गिभावश्च गुणगुणिभाव इत्याह—विशेषणेति॥ इकः स्थानित्वादिति। सा च नालोन्त्यसूत्रप्रवृत्तौ निमित्तमल्समुदायोऽस्यस्थानषष्ठीत्वाभावात्। अङ्गस्येति च न स्थानषष्ठीति भावः॥ [ तदाह—] तद्विशेषणत्वादिति। अवयवित्वेन विशेषणत्वादित्यर्थः॥ नानावाक्यत्वमिति। अत्र पक्षे पुगन्तेत्यादि नियमार्थमिति बोध्यम्।

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी स्वाशयं प्रकटयति—यद्येकमिति। तच्च—अलोऽन्त्यस्येति च। इदञ्च—इको गुणवृद्धी इति च। विधयो भवन्तीति—अनेन विधिप्रदेशे पृथग्वाक्यार्थबोधः सूचितः। तच्छेषमाह—इक इति। तद्बाधकमाह—इक इति। द्वयोः भिन्नवाक्यतां स्पष्टयति—अन्त्यस्य चेति।

प्रदीपे—तद्विशेषणत्वादिति—अङ्गस्य तद्विशेषणत्वादित्यन्वयः।

उद्द्योते—अनेकयोगेतीति-शङ्कनमित्यादिः। ननु अवयवषष्ठीमादायैव तस्योपस्थानं कुतो नेत्यत आह—सा चेति। अवयवषष्ठी चेत्यर्थः। नन्वेवमपि अङ्गस्येति षष्ठीमादायैव तस्य तत् कथन्नेत्यत आह—अङ्गस्येतीति। तदाह—अन्तिममाह।

( भाष्यम् )

कश्चात्र विशेषः?।

( तत्त्वालोकः ) तटस्थः पक्षद्वये विशेषं पृच्छति—कश्चेति। अत्र—अनयोः तच्छेषतदपवादपक्षयोः।

( १०७ तच्छेषपक्षदूषणवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणम् ॥ * ॥

( व्याख्याभाष्यम् )

वृद्धिगुणावलोन्त्यस्येति चेन्मिदिमृजिपुगन्तलघूपधर्च्छिदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं कर्तव्यम्॥

"मिदेर्गुणः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

"मृजेर्वृद्धिः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

पुगन्तलघूपधस्य गुणः, "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

ऋच्छेर्लिटि गुणः "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

"ऋदृशोऽङि गुणः" "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

क्षिप्रक्षुद्रयोर्गुणः "इक इति वक्तव्यम्" अनन्त्यत्वाद्धि न प्राप्नोति॥

( प्रदीपः ) वृद्धिगुणाविति। मिदादीनामनिगन्तत्वादलोन्त्यस्येत्येतदङ्गमिग्ग्रहणं न सन्निपततीति तेषु प्रदेशेष्विग्ग्रहणं कर्तव्यम्॥

( उद्द्योतः ) मिदादीनामिति। गुणादिविधौ परिभाषाद्वयस्य परस्परं संबन्धापरित्यागेनोपस्थानं तच्छेषत्वम्। तत्रैकस्या असंभवे द्वितीयापि न प्रवर्तत इति भावः॥ भाष्ये अनन्त्यत्वाद्धीति। तच्छेषपक्षेऽनन्त्यत्वादिको गुणो न प्राप्नोतीत्यर्थः॥

( तत्त्वालोकः ) भाष्ये-पूर्वपक्षी तच्छेषपक्षदूषकवार्तिकम् उपस्थापयति—वृद्धीति। अलोऽन्त्यस्येति—इक इति शेषः। चेदिति—तर्हीति शेषः। मिदेर्गुण इति—इत्यत्रेति शेषः। एवमग्रेऽपि। हि—यतः। एवमग्रेऽपि। लिटि गुण इति—लिटि गुणविधायके "ऋच्छत्यृतामित्यत्रेत्यर्थः। क्षेपिष्ठः क्षोदिष्ठ इत्यत्र क्षिप्रक्षुद्राभ्यामिष्ठनि "स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः" इति सूत्रेण यणादिपरस्य रेफस्य लोपे अवशिष्टे क्षिपादौ हलन्ते इकारस्यानन्त्यत्वादनेन गुणो न प्राप्नोतीत्याशयेनाह—क्षिप्रक्षुद्रयोरिति। गुणः—गुणविधायके स्थूलेति सूत्रे।

प्रदीपे—एतदङ्गमिति—अत्र तन्त्रेण बहुव्रीहिषष्ठीतत्पुरुषौ। इतीति—इति हेतोरित्यर्थः। उक्तवाक्यार्थासम्भवेन इकारादेः गुणाद्यप्रसङ्गादिति शेषः। तेषु—मिदेर्गुण इत्यादिषु।

उद्द्योते——तत्रेति—तयोर्मध्ये इत्यर्थः। इकोऽन्त्यत्वाभावादिति शेषः। एकस्याः—अलोऽन्त्यपरिभाषायाः। द्वितीया—इक्परिभाषा। तच्छेषपक्षे इति-सार्वेत्यादौ स्वीक्रियमाणे सत्यत्रेति शेषः।

( १०७ तच्छेषदूषणान्तरवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सर्वादेशप्रसङ्गश्चानिगन्तस्य ॥ * ॥

( एकदेशिव्याख्याभाष्यम् )

सर्वादेशश्च गुणोऽनिगन्तस्य प्राप्नोति। याता वाता॥

किं कारणम्?॥

"अलोन्त्यस्य" इति षष्ठी चैव ह्यन्त्यमिकमुपसंक्रान्ता, अङ्गस्येति च स्थानषष्ठी। तद्यदिदानीमनिगन्तमङ्गं तस्य गुणः सर्वादेशः प्राप्नोति॥

( प्रदीपः ) दोषान्तरमप्याह—सर्वादेशप्रसङ्गश्चेति। अङ्गस्येत्येतद्वदेन सर्वाङ्गेषु व्याप्रियते। तत्रेगन्तेष्वेवालोन्त्यस्येति विधिरन्यत्र तु षष्ठ्यन्तेऽस्यानुपसंहाराद्याता वातेति सर्वादेशो गुणः प्राप्नोति॥

( उद्द्योतः ) अङ्गस्येति च स्थानषष्ठीति । अङ्गस्य स्थाने गुणो भवति । स च यत्रान्त्य इक् तत्रान्त्यस्येक इत्यर्थं इत्यभिमानस्तदाह—भेदेनेति । शास्त्रस्य बहुविषयत्वायेत्यर्थः ॥ तत्रेगन्तेष्वेवेति । तच्छेषत्वादिति भावः ॥ अन्यत्र अनिगन्तविषये गुणशास्त्रे ॥

( तत्त्वालोकः ) भाष्ये—चैव-चापि । हि-यतः । अन्त्यमिति-अङ्गस्येत्यादिः । स्थानषष्ठीति—भेदेन व्यापृता, अनिगन्तेषु अन्त्येऽलि अनुपसंहृता चेति शेषः । तत्-तस्मात् ।

प्रदीपे—चकारस्वारस्यादेकदेशिमतमाह-दोषान्तरमिति । भेदेन-प्रतिलक्ष्यं सार्वधातुकार्धधातुकयोरिति लक्षणभेदेन । सर्वाङ्गेषु—सार्वधातुकार्धधातुकान्यतराव्यवहितपूर्वत्वविशिष्टेषु इगन्तेषु अनिगन्तेषु च अङ्गेषु । तत्र—लक्ष्यभेदेन भिन्नानां तेषां लक्षणानां मध्ये । इगन्तेषु—इगन्तविषयकगुणशास्त्रेषु । अलोऽन्त्येति—इक्परिभाषासहितेत्यादिः । षष्ठ्येति -अङ्गस्येति स्थानषष्ठ्येत्यर्थः । अयोग्यत्वात् इक्परिभाषाऽनुपस्थितौ अलोऽन्त्यपरिभाषाया अप्यनुपस्थानादित्यादिः । इति-इत्यत्र । उद्द्योते—स च —गुणश्च । तस्यैकदेशयुक्तत्वादाह—अभिमान इति ।

( दूषणोद्धारभाष्यम् )

नैष दोषः, यथैव ह्यलोन्त्यस्येति षष्ठी अन्त्यमिकमुपसंक्रान्ता, एवमङ्गस्येत्यपि स्थानषष्ठी । तद्यदिदानीमनिगन्तमङ्गं तत्र षष्ठ्येव नास्ति, कुतो गुणः कुतः सर्वादेशः ॥

( प्रदीपः ) यथैव हीति । अङ्गस्येति षष्ठ्युच्चारितैवान्त्यमलं नीतेति नास्या अपरं रूपमस्तीति नास्ति सर्वादेशगुणप्रसङ्गः ॥

( उद्द्योतः ) अन्त्यमलमिति । इक्परिभाषाशेषभूतालोन्त्यपरिभाषयैत्यर्थः ॥ अङ्गस्येत्यपि स्थानषष्ठीति भाष्येऽन्त्यमिकमुपसङ्क्रान्तेत्यनुकर्षः । एवं च संग्राहकवाक्यस्येगन्तमात्रविषयकत्वादनिगन्तविषयकलक्षणाभाव एव । आवृत्तौ च न मानमिति भावः । अत एव गापोष्टकः कित्वं मार्थकम् ॥

(तत्त्वालोकः) भाष्ये—सिद्धान्त्येकदेशी तच्छेषपक्षदूषणानि निराकरोति—नैष इति । हि—यतः । तत् –तस्मात् । तत्र षष्ठी–तद्विषयकस्थानषष्ठीघटितलक्षणम् । विषयत्वस्य सप्तम्यर्थत्वात् , षष्ठीपदस्य स्थानषष्ठीघटितलक्षणे लक्षणाश्रयणाच्च ।

प्रदीपे—अङ्गान्त्यवान्त्याल इक इत्यर्थाभिप्रायेणाह-नीतेति । इति-इति हेतोः । एवमग्रेऽपि । अस्याः-अङ्गस्येति षष्ठ्याः ।

उद्द्योते—संग्राहकवाक्यस्य-अङ्गस्येत्यादिवचनस्य । अत एव-अनिगन्तविषयकताद‍ृशलक्षणाभावादेव ।

( वार्तिकसमन्वयान्तरभाष्यम् )

एवं तर्हि नायं दोषसमुच्चयः ॥

किं तर्हि ? ।

पूर्वापेक्षोऽयं दोषः । ह्यर्थे चायं चः पठितः—

❀मिदिमृजिपुगन्तलघूपधाच्छदृशिक्षिप्रक्षुद्रेष्विग्ग्रहणं सर्वादेशप्रसङ्गो ह्यनिगन्तस्य❀इति ।

मिदेर्गुणः 'इक' इति वचनादन्त्यस्य न, 'अलोन्त्यस्य' इति वचनादिको न । उच्यते च गुणः । स सर्वादेशः प्राप्नोति ॥ एवं सर्वत्र ॥

( प्रदीपः ) पूर्वापेक्षोऽयमिति । मिदादिष्विग्ग्रहणं कर्तव्यमित्यत्रैवार्थे हेतुत्वेनेदमुपात्तमित्यर्थः ॥ उच्यते चेति । मिदेरिति चोदनया ।

( उद्द्योतः ) हिश्च हेत्वर्थे इत्याह—मिदादिष्विति ॥

( तत्त्वालोकः ) भाष्ये—एवं सति पूर्वपक्षी असङ्गतिनिवारणाय द्वितीयवार्तिकं प्रथमवार्तिकशेषत्वेन सङ्क्रमयति—एवं तर्हीति । एवं सतीत्यर्थः । अयं—द्वितीयवार्तिकबोध्यः । पूर्वापेक्षः—तत्र इग्ग्रहणाकरणापेक्षः । ननु चकारस्य समुच्चयार्थकत्वाभावे कोऽर्थ इत्यत आह—ह्यर्थ इति । एवं सति फलितं वार्तिकयोरेकाकारं स उपन्यस्यति—मिदीति । यतः ( मिदेरित्यादिवक्ष्यमाणरीत्या ) अनिगन्तस्य सर्वादेशप्रसङ्गः, अतः मिदेरित्यादौ इक इति वक्तव्यमिति भावः । तथा च मिथः एकवाक्यतापन्नयोरेतयोः अनिगन्तेऽप्रवृत्तौ "षष्ठी स्थाने योगे"त्यस्याः प्रवृत्तिः स्यादित्याशयेनाह—स सर्वेति । सर्वत्र—मृज्यादौ । प्रदीपे—इदम्-अनिगन्तस्य सर्वादेशप्रसञ्जनम् । चोदनया—सूत्रेण ।

( इति तच्छेषपक्षदूषणम् । )

---

( अथ तदपवादपक्षाभ्युपगमभाष्यम् )

अस्तु तर्हि तदपवादः ॥

( तत्त्वालोकः ) एवं प्रथमतच्छेषपक्षे दूषणान्यभिधाय द्वितीयतदपवादपक्षेऽपि दूषणान्यभिधातुमुपक्रमते—अस्त्विति ।

( १०४ तदपवादपक्षदूषणवार्तिकम् ॥ ४ ॥ )

## ॥ ❀ ॥ इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधः ॥ ❀ ॥

( भाष्यम् )

इङ्मात्रस्येति चेज्जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्वनन्त्यप्रतिषेधो वक्तव्यः ॥

जुसि गुणः-स यथेह भवति-'अजुहवुः अबिभयुः' इति । एवम् 'अनेनिजुः पर्यवेविषुः' अत्रापि प्राप्नोति ॥

सार्वधातुकार्धधातुकयोर्गुणः-स यथेह भवति-'कर्ता हर्ता नयति तरति' इति । एवम् 'ईहिता ईहितुम् ईहितव्यम्' इत्यत्रापि प्राप्नोति ॥

ह्रस्वस्य गुणः-स यथेह भवति-'हे अग्ने हे वायो' इति । एवम् 'हे अग्निचित् हे सोमसुद्' इत्यत्रापि प्राप्नोति ॥

जसि गुणः-स यथेह भवति-'अग्नयो वायवः' इति । एवं 'अग्निचितः सोमसुतः' इत्यत्रापि प्राप्नोति ॥

ऋतो ङिसर्वनामस्थानयोर्गुणः-स यथेह भवति-'कर्तरि कर्तारौ कर्तारः' इति । एवं 'सुकृति सुकृतौ सुकृतः' इत्यत्रापि प्राप्नोति ॥

घेर्ङिति गुणः-स यथेह भवति—'अग्नये वायवे' इति। एवम् 'अग्निचिते सोमसुते' इत्यत्रापि प्राप्नोति ॥

ओर्गुणः-स यथेह भवति-'बाभ्रव्यो माण्डव्यः' इति। एवं 'सुश्रुत्-सौश्रुतः' इत्यत्रापि प्राप्नोति ॥

**(प्रदीपः) इग्मात्रस्येति।** यद्यङ्गस्येतीगपेक्षयावयवषष्ठी तदाऽलोन्त्यस्येत्यस्य निमित्ताभावादनुपस्थानम्, स्थानषष्ठी हि तस्योपस्थाने निमित्तम्। ततश्चाङ्गावयवस्यान्त्यस्यानन्त्यस्य चेको गुणः प्राप्नोतीति दोषः। **ह्रस्वस्य गुण इति** समानन्यायत्वादेवदुक्तम्। अङ्गस्यावयवो यो ह्रस्वस्तस्य गुण इति। न त्वत्रेक्परिभाषोपतिष्ठते, निर्दिष्टस्थानिकत्वात् ॥ **अन्ये** त्वाहुः—अत्रापि परिभाषोपस्थाने सति ह्रस्वेनेग्विशेष्यते ह्रस्वस्येको गुणो यथा स्याद् दीर्घस्य मा भूदिति ॥ **ओर्गुण** इत्यत्राप्यस्या उपस्थानमनन्त्यस्याप्युकारस्य गुणार्थम्। असति ह्यस्या उपस्थानेऽङ्गस्येति स्थानषष्ठी स्यादङ्गञ्चोकारेण विशेष्यत इत्युकारान्तस्यैवाङ्गस्य गुणः स्यात् ॥

**(उद्द्योतः) अनन्त्यस्य चेक इति।** यद्यपि **जुसि चे**त्यादीनां प्रधानभूतेग्विशेषणत्वे **तस्मिन्निति** परिभाषया व्यवहितस्यैको न भविष्यति, तथापि प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया **जुसि चे**त्यादिभिरप्यङ्गमेव विशेष्यत इत्यभिप्रायः ॥ **समानन्यायेति।** गुणप्रकरणावैरूप्याय सर्वत्राङ्गस्येत्यवयवषष्ठ्येव स्यादिति भावः ॥ **निर्दिष्टेति।** अनियमे नियमकारिणीत्वात्परिभाषाया इति भावः ॥ **अन्ये त्विति।** अयं भावः—न ह्यनियम इति श्रुतिः स्मृतिर्वा, किं तु परिभाषा लिङ्गवती फलवती चेति नियमः, फलं चेतरव्यावृत्तिवदितरसंग्रहोपीति **ह्रस्वस्ये**त्यस्याङ्गविशेषणत्वव्यावर्तनेनावयवषष्ठीत्वबोधनेनानन्त्यस्यापि गुणसम्पादनमेव फलं स्यात्। अकारे तु गुणागुणयोर्न विशेष इति ॥ तदेतद्ध्वनयति—**अनन्त्यस्याप्युकारस्येति ॥** नन्वेवं ह्रस्वग्रहणं व्यर्थमत आह—**दीर्घस्येति।** घिसंज्ञा वर्णयोरेवेति पक्षे ङिति गुणस्याग्निचिते इत्यादौ प्रसङ्गो बोध्यः ॥

**(तत्त्वालोकः)** भाष्ये—**मात्रेति**-अनेन अलोऽन्त्यपरिभाषाव्यावृत्तिः। **चेदिति**—तर्हीति शेषः। **अत्रापि**—इत्यत्रापि। अनन्त्यस्यैकः अङ्गावयवत्वादिति भावः। वार्तिकस्यादिपदसंग्राह्यं सूत्रत्रयं क्रमश उपस्थापयति-**जसीति।** प्रकृतेः हलन्तत्वबोधनायाह-**सुश्रुदिति।**

प्रदीपे—**इति-**इत्यत्र। **हि**—यतः। **तस्य**-अलोऽन्त्यस्येत्यस्य। **ततश्च**-"अङ्गस्ये"त्यस्य, "इक" इत्यस्य चोपस्थितेश्च। **इति-**इति हेतोः। तथा च मिदेरित्यादौ इक इति न वक्तव्यं भवतीति भावः। **अत्र**—ह्रस्वस्य गुण इत्यत्र। उक्तपक्षे "इग्मात्रस्येति" वार्तिकस्वारस्यभङ्गादाह-**अन्ये त्विति। परिभाषा**-इक्परिभाषा। **अस्याः**-इक्परिभाषायाः। **हि**-यतः। **इति-**इति हेतोः।

उद्द्योते-**इक इति**-गुण इति शेषः। **अनियम इतीति**—अनियमे नियमकारिणी परिभाषा इतीत्यर्थः। **इति-**इति हेतोः। **फलमिति**—अत्रेक्परिभाषोपस्थानस्येत्यादिः। ननु अग्निचिदादेर्घ्यन्तत्वादघित्वाच्च भाष्ये घेर्ङितीत्यस्योपन्यासो न युक्त इत्यत आह-**घिसंज्ञेति।**

**(भाष्यम्)**

नैष दोषः।

**(तत्त्वालोकः)** एवं तदपवादपक्षे दत्तानि दूषणानि सिद्धान्त्येकदेशी निराकरोति—**नैष दोष इति। नैते दोषा इत्यर्थः।** जातावेकवचनसत्त्वात्। यत इति शेषः।

(१०९ सिद्धान्त्येकदेशिवार्तिकम् ॥ ६ ॥)

**॥ * ॥ पुगन्तलघूपधग्रहणमनन्त्यनियमार्थम् ॥ * ॥**

**(भाष्यम्)**

पुगन्तलघूपधग्रहणमनन्त्यनियमार्थं भविष्यति-पुगन्तलघूपधस्यैवानन्त्यस्य नान्यस्यानन्त्यस्येति ॥

**(प्रदीपः) पुगन्तेति।** भेत्तेत्यादौ गुणे सिद्धे पुनः श्रुतिर्नियमार्थेति गुरूपधस्येहितेत्यादौ न भविष्यति, नापि हे अग्निचिदित्यादावुभयनियमाश्रयणादिति भावः ॥ ननु च भेत्तेति दकारस्य ह्लेपयतीति पकारस्य च यथा स्यादिति विध्यर्थमेतत्स्यात् ॥ नैतदस्ति, पुकि अन्तः पुगन्तो, लघ्वी उपधा लघूपधा ततः समाहारद्वन्द्वनिर्देश इत्यन्त्यस्य गुणेन न भाव्यम् ॥

**(उद्द्योतः)** पुनः **श्रुतिः** पुनर्गुणविधानम् ॥ **ननु चेति।** बहुव्रीहिसमासः सामर्थ्यादिक्परिभाषानुपस्थितिश्चेति भावः ॥ भिदो दकारोच्चारणं तु भिन्नो भित्तमित्यादौ चरितार्थम्, क्नोः कित्त्वेनानिग्लक्षणत्वेपि निषेधप्रवृत्तेः। पुग्विधानमपि क्ष्मापयतीत्यादौ यलोपार्थम्। ओकाररूपगुणार्थं च चरितार्थमित्याशयः ॥ **पुकीति।** लाघवात्तत्पुरुषे निर्णीते **निषादस्थपतिन्यायेन** नियमार्थत्वं न दोषावहमित्यर्थः ॥ **ननु** पुगन्तग्रहणं दापयत्यादौ अनन्त्यस्यानिकोपि गुणार्थं स्यादिति कथं नियमार्थत्वमिति चेन्न। गुणे उपधावृद्ध्या विशेषाभावात्।

**(तत्त्वालोकः)** प्रदीपे—**गुणे सिद्धे इति**-अत्र पक्षे सार्वधातुकार्धधातुकयोरित्यनेनेत्यादिः। पुगन्तलघूपधस्य चेत्यनेनेति शेषः। **इति-**इति हेतोः। **उभयेति**—सार्वधातुकार्धधातुकयोर्यदि गुणस्तर्हि पुगन्तलघूपधस्यैवेति, पुगन्तलघूपधस्य यदि गुणस्तर्हि सार्वधातुकार्धधातुकयोरेवेति चोभयेत्यर्थः। **यथेति**-गुण इत्यादिः। **एतत्**—"पुगन्ते"त्यनेन पुनर्गुणविधानम्। **इति-**इति हेतोः। **भाव्यमिति।** अनन्त्यस्य चेकः "सार्वधातुके"त्यनेन गुणः सिद्ध इति तस्य नियमार्थता युक्तैवेति भावः।

उद्द्योते—**बहुव्रिति**-पुगन्ते लघूपधे च शब्दे इत्यादिः। **सामर्थ्यात्**—"पुगन्ते"ति सूत्रारम्भसामर्थ्यात्। ननु भिदो दकारस्य पुकः पकारस्य च गुणे तत्र दकारोच्चारणं पुग्विधानञ्च व्यर्थं स्यादित्यत आह—**भिद इति।** ननु तत्रापि दस्य गुणः कथं नेत्यत आह-**क्नोरिति। निषेधेति**-क्ङिति चेतीत्यादिः।

**(नियमदूषणभाष्यम्)**

प्रकृतस्यैव नियमः स्यात् ॥

किं च प्रकृतम्? ॥

"सार्वधातुकार्धधातुकयोः" इति ॥ तेन भवेदिह नियमान्न स्याद् 'ईहिता ईहितुम् ईहितव्यम्' इति। ह्रस्वाद्योर्गुणस्त्वनियतः सोऽनन्त्यस्याऽपि प्राप्नोति ॥

**(प्रदीपः) प्रकृतस्येति।** एकेन वाक्येन नियमद्वयस्यालाभात्प्रकृतस्यैव गुणस्य नियमः स्यात् पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोरिति, न तु सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति ॥

**(उद्द्योतः) प्रकृतस्यैवेति।** अनन्तरस्यैवेत्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—नियमेन दोषोद्धारो न सार्वत्रिक

इत्याशयेनाह—प्रकृतस्येति । भवेत्-इति भवेत् । अस्य स्यादित्यनेनानुयोगितया अन्वयः ।

प्रदीपे—प्रकृतस्यैवेति–अन्यतरस्य लभ्यत्वे "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति" न्यायेनेत्यादिः। अत्रत्यैवकारस्यावर्त्यमाह—न त्विति ।

( नियमान्तरदूषणभाष्यम् )

**अथाप्येवं नियमः स्यात्—पुगन्तलघूपधस्य सार्वधातुकार्धधातुकयोरेवेति ॥ एवमपि सार्वधातुकार्धधातुकयोर्गुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति—ईहिता ईहितुम् ईहितव्यमिति ।**

( प्रदीपः ) अथापीति । अनन्तरस्य विधिर्वेति परिभाषा यदि नाश्रीयते इत्यर्थः ॥

( उद्द्योतः ) नन्वनन्तरस्येति न्यायविरुद्धोऽयं नियम इत्यत आह—अनन्तरस्येति । लक्ष्यानुसारश्चानाश्रयणे बीजं बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—अथापीति । एकेन वाक्येन नियमद्वयस्यालाभादप्रकृतस्येति शेषः । ईदृशनियमाभ्युपगमेन ह्रस्वाद्योर्गुणविषये दोषवारणेऽपि तादृशनियमवारणीयदोषकविषये दोषस्तदवस्थ एवेत्याशयेनाह—एवमपीति । इति-इत्यत्र ।

उद्द्योते—सारश्चेति-तस्या इति शेषः ।

( उभयविधनियमदूषणभाष्यम् )

**अथाप्युभयतो नियमः स्यात्—पुगन्तलघूपधस्यैव सार्वधातुकार्धधातुकयोः । सार्वधातुकार्धधातुकयोरेव पुगन्तलघूपधस्येति॥ एवमप्ययं जुसिगुणोऽनियतः सोऽनन्त्यस्यापि प्राप्नोति-'अनेनिजुः पर्यवेविषुः' इति ॥**

( प्रदीपः ) अथापीति । अभ्युपेत्यवादेनोच्यते आवृत्त्यादिन्यायाश्रयणेन वा । एकस्मिंस्तु वाक्ये नियमद्वयं न लभ्यते॥ अनेनिजुरिति । अत्र लघूपधं चाङ्गं सार्वधातुकं चास्तीति जुसि चेति गुणः प्राप्नोति । हेपिचव्य हे बुद्धे हे बुद्ध्य इत्यादौ चालघूपधत्वादनन्त्यस्य गुणोऽपरिहृतः ॥

( उद्द्योतः ) अभ्युपेत्यवादः क्लेशेनाङ्गीकार इत्याहुः॥ पिचव्येति । उगवादित्वायत् । उवर्णान्तस्याङ्गस्यैको गुण इति व्याख्यानमभिप्रेत्यात्र दोषोपन्यासः ॥ परंतु सौश्रुत इत्यत्रापि प्राप्नोतीति भाष्याननुगुणा सा व्याख्येति चिन्त्योऽयं कैयट इत्याहुः ॥ क्वचित्तु कैयटपुस्तके पिचव्य इति न दृश्यत एव ॥

(तत्त्वा०)भाष्ये-उभयतः-उभयोः प्रकृताप्रकृतयोः। इति-इत्यत्र।

प्रदीपे—आवृत्त्यादिन्यायाश्रयणकारणमाह—एकस्मिन्निति । इति-इति हेतोः । भाष्यस्योपलक्षणताबोधनायाह-हे पिचव्येति ।

उद्द्योते—उगवादित्वादिति-पिचुशब्दस्येत्यादिः । तस्माद्धितार्थे इति शेषः । अत्र-हे पिचव्येत्यत्र । एवमिमं कैयटं सङ्गमय्य दूषयति-परन्त्विति । इति-इति हेतोः । आहुरित्यनेन सूचिताया अरुचेः बीजं प्रतिपादयति-क्वचित्त्विति ।

( इति तदपवादपक्षदूषणप्रकरणम् )

---

( अथासंबद्धपरिभाषापक्षनिराकरणाधिकरणम् )

( भाष्यम् )

**एवं तर्हि—नायं तच्छेषः, नापि तदपवादः । अन्यदेवेदं परिभाषान्तरमसंबद्धमनया परिभाषया ॥**

( प्रदीपः ) एवं तर्हीति । परस्परानपेक्षयोः स्वस्वनिमित्तप्रयुक्तसन्निधानयोर्द्वयोः परिभाषयोः प्रदेशेषु स्वस्वकार्यप्रतिपादनम् । तत्र यदि कथंचिदेकविषये सन्निपातो भवति, नैतावता परस्परापेक्षा भवतीत्यर्थः ॥ अन्यदेवेति । अन्तरशब्दो विशेषवाचीत्यन्यान्तरशब्दयोरविरुद्धः प्रयोगोऽपर्यायत्वात् ॥

( उद्द्योतः ) तच्छेष इति शब्दोऽसंभवदुक्तिकत्वग्रस्तोऽपीत्याह-परस्परेति । विशेषणविशेष्यभावमात्रेण शेषशेषिव्यवहारो न क्वापि दृष्टचर इति भावः ॥ अत एवाग्रे एतत्पक्षीक्तदूषणोद्धारेऽपि नायं तच्छेष इत्युक्तिः सङ्गच्छते ॥ सन्निपात इति । जायमानोपि संनिपातः सावकाशत्वेन विप्रतिषेधोदयायैव न तच्छेषत्वोपयोगी । अत एव नापवादत्वमपि । उक्तदोषाच्चेति भावः ॥ असंबद्धमनयेति भाष्यस्य शेषशेषिभावानापन्नमुत्सर्गापवादभावानापन्नं चेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—अथ क्रोष्ट्रीयाभिमतं पूर्वविप्रतिषेधपक्षं दूषयितुमुत्थापयति-एवमिति । तर्हि—तच्छेषतदपवादपक्षयोर्दुष्टत्वे । अयम्-इको गुणेति योगः । अन्यदिति-किन्त्वित्यादिः । अन्यदित्यस्यार्थमाह—असम्बद्धमिति । अयं स्वतन्त्रः परिभाषाविशेष इति भावः । प्रदीपे—द्वयोः-अलोऽन्त्यस्य, इको गुणवृद्धीत्यनयोः । विषये इति-प्रदेशे इत्यर्थः । तयोरिति शेषः । इति-इति हेतोः ।

( भाष्यम् )

**परिभाषान्तरमिति च मत्वा क्रोष्ट्रीयाः पठन्ति—**

**॥ * ॥ नियमादिको गुणवृद्धी भवतो विप्रतिषेधेन ॥ * ॥**

**इति ॥ यदि चायं तच्छेषः स्यात्तेनैव तस्यायुक्तो विप्रतिषेधः। अथापि तदपवादः, उत्सर्गापवादयोरप्ययुक्तो विप्रतिषेधः ॥ तत्र नियमस्यावकाशः—"राज्ञः क च" राजकीयम् । "इको गुणवृद्धी" इत्यस्यावकाशः—'चयनं चायको लवनं लावकः' इति । इहोभयं प्राप्नोति-'मेद्यति मार्ष्टि' इति । "इको गुणवृद्धी" इत्येतद्भवति विप्रतिषेधेन ॥**

( प्रदीपः ) चयनमिति । अलोन्त्यपरिभाषायाः प्रयोजनाभावादत्रानुपस्थानमित्याशयः ॥ चायक इति । कथमिक्परिभाषात्रोपतिष्ठते यावताऽच इति स्थानी निर्दिष्टः॥ अत्राहुः, अच इत्यस्याङ्गविशेषणतयोपयोगादचः स्थानित्वाभावाद्वृद्धिग्रहणेन लिङ्गेनेक्परिभाषात्राप्युपतिष्ठत एव ॥ मेद्यतीति । इक इति वचनादिकारस्य प्राप्नोत्यलोन्त्यस्येति वचनादकारस्य ॥

( उद्द्योतः ) नियमादिति । अलोन्त्यपरिभाषायाः पूर्वाचार्यसंज्ञा नियम इति । तेनैव तस्यायुक्त इति । स्वाङ्गेन स्वस्येत्यर्थः । शेषशेषिणोरभेदं मत्वा तेनैवेत्याद्युक्तम् ॥ नन्वङ्गस्येति स्थानषष्ठीदर्शनात्सार्वधातुकेत्यादावप्यलोन्त्यपरिभाषाप्रवृत्त्या कथमिक्परिभाषायाश्रयणमित्यवकाशोऽत आह—अलोन्त्येति । अङ्गेनेको विशेषणेन पुगन्तेत्यादिनियमेन च तत्प्रयोजनसिद्धेरिति भावः ॥ अत्राहुरिति । अचा विशेषिताङ्गेनेको विशेषणसंभवात्प्रापयति । गावावित्यादि त्वेव न जानातीति भावः ॥

( तत्त्वालोकः ) भाष्ये—अत्र क्रोष्ट्रीयसम्मतिं दर्शयति—परिभाषेति । इदमित्यादिः । च-एव । नियमात्-अलोऽन्त्यसूत्रात् । इति-इति पूर्वविप्रतिषेधवार्तिकम् । ननु तच्छेषतदपवादपक्षयो-

रपि विप्रतिषेधसंभवात् कथमिदं वार्त्तिकं विप्रतिषेधपक्षाश्रय कमेवेत्यत आह—**यदि चेति । स्यादिति**-तर्हीति शेषः । मिथो नैरपेक्ष्येण लब्धावकाशयोरेकत्र समावेशः तुल्यबलविरोधरूपविप्रतिषेधः । तस्य मिथ एकवाक्यतापन्नयोरसम्भवादाह—**अयुक्त इति । तदपवाद इति**-स्यात्तर्हीति शेषः । तस्य एकत्राप्राप्तयोरसम्भवादाह—**अयुक्त इति ।** एवं तच्छेषतदपवादपक्षयोः विप्रतिषेधानुपपत्तिं प्रतिपाद्य विप्रतिषेधपक्षमुपपादयति-**तत्रेति ।** वार्त्तिकोक्तयोर्मध्ये इत्यर्थः । **विप्रतिषेधेन**-पूर्वविप्रतिषेधेन । वार्त्तिकांशस्य "**इकोगुणवृद्धी भवत**" इत्यस्य **इको** गुणवृद्धी, इत्येतद्भवतीति व्याख्यानेन प्रतीयते तत्र विधेयगतद्वित्वस्य सूत्रे आरोपाद् "**भवत**" इत्यवादीति ।

प्रदीपे—**अत्र**-"सार्वधातुके"त्यादौ । **अत्र**-अचो ञ्णितीत्यत्र । **इक्परिभाषेति**—अनिगङ्गनिरासायेति भावः ।

उद्योते—नन्वेवम् अनन्त्येऽतिप्रसङ्ग इत्यत आह-**पुगन्तेति । तदिति**-अलोऽन्त्यपरिभाषेत्यर्थः । **अचेति**-हलन्तत्व्यवच्छेदायेति भावः।

( विप्रतिषेधबाधकभाष्यम् )

**नैष युक्तो विप्रतिषेधः । "विप्रतिषेधे परम्" इत्युच्यते । पूर्वश्चायं योगः, परो नियमः ॥**

( **प्रदीपः** ) **नैष युक्त इति ।** इष्टसिद्धये इत्यर्थः । यथोद्देशपक्षे च परिभाषयोः पौर्वापर्यम्, न तु कार्यकालतायाम् ॥

( **उद्योतः** ) **इष्टेति ।** इष्टसिद्धिफलकत्वमेव हि तस्य युक्तत्वमिति भावः ॥ **नतु कार्येति ।** द्वयोरप्येकदेशस्थत्वेन परत्वासंभवादिति भावः ॥ वस्तुतः कार्यकालपक्षेपि पाणिन्युच्चारणरूपपाठकृतं परत्वमस्त्येव । अन्यथैकत्र प्रयोगरूपदेशे सर्वेषां मेलनेन परत्वस्योच्छेद एव स्यात् । प्रयोगसाधनफलकान्येव शास्त्राणि । न चैवं कार्यकालपक्षमादाय त्रिपाद्यामेषां प्रवृत्तिर्यथोद्देशे तु पूर्वाण्येतानि प्रति त्रिपाद्या असिद्धत्वेनाप्रवृत्तिरेव स्यादिति भाष्याद्युक्तं विरुध्येतेति वाच्यम् । परिभाषायाः सिद्धत्वेन तत्पक्षेऽसिद्धेनापि कार्येण स्वार्थं तदाकर्षणसंभवादित्यष्टमे उपपादयिष्यमाणत्वाद् । ध्वनितं चेदं **तस्मिन्निति निर्दिष्ट** इत्यत्र भाष्यकैयटयोरिति चिन्त्यमेतत् ॥

( **तत्त्वालोकः** ) भाष्ये—सिद्धान्तीमं विप्रतिषेधं खण्डयति—**नैष इति ।** एकदेशी तत्र हेतुमाह—**विप्रतिषेधे इति ।** यत इत्यादिः।

उद्योते—**तस्य**-विप्रतिषेधस्य । **एवं**-कार्यकालपक्षेऽपि पाणिन्युच्चारणरूपपाठकृतपौर्वापर्याभ्युपगमे। **तत्पक्षे**—कार्यकालपक्षे । **इति**-इति हेतोः ।

( विप्रतिषेधसाधकभाष्यम् )

**इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।**

( **तत्त्वालोकः** ) विप्रतिषेधवादी **एकदेश्युक्तहेतुं** निराकरोति—**इष्टेति ।**

( विप्रतिषेधबाधकभाष्यम् )

**एवमप्ययुक्तो विप्रतिषेधः । द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः ॥**

( **प्रदीपः** ) **द्विकार्ययोग इति ।** द्वाभ्यां कार्याभ्यां योगो यस्य स्थानिनः स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

( **उद्योतः** ) ननु **द्विकार्ययोग** इत्यस्य **द्वाभ्यां कार्याभ्यामन्यस्य योग इत्यर्थः**, उत द्वयोः परस्परेण **योग इत्यर्थः** । उभयथापि त्रिपदतत्पुरुषो दुर्लभः । कर्मधारयपूर्वपदकोपि न, दिक्सङ्ख्ये इति नियमेन तस्य दुर्लभत्वादत आह—द्वाभ्यामित्यादि ॥ अत्रापि पक्षे विप्रतिषेधशब्देन सामानाधिकरण्यानुपपत्तेराह—**विप्रतिषेधेति ॥**

( **तत्त्वालोकः** ) भाष्ये—सिद्धान्ती निजोक्तं द्रढयति—**एवमपीति ।** एष इति शेषः । एकदेशी तत्र हेतुमाह—**द्विकार्येति । हि**—यतः । **अत्र**—मेद्यतीत्यादौ । **एकः**—इकारदकारान्यतरादिरूपः ।

उद्योते—विधायकासत्त्वादाह—**दुर्लभ इति । कर्मधारयपूर्वपदकः**—विशेषणमितिसमस्तपूर्वपदकषष्ठीतत्पुरुषः । **तस्य**-कर्मधारयस्यैव । **अत्रापि पक्षे**—त्रिपदव्यधिकरणबहुव्रीहिपक्षेऽपि ।

( विप्रतिषेधसाधकभाष्यम् )

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः ॥**

**किं तर्हि ? ॥**

**असंभवोऽपि । स चास्त्यत्रासंभवः ॥**

**कोऽसावसंभवः ? ॥**

**इह तावद्—'वृक्षेभ्यः प्लक्षेभ्यः' इति—एकः स्थानी, द्वावादेशौ, न चास्ति संभवः यदेकस्य स्थानिनो द्वावादेशौ स्याताम् । इहेदानीं—'मेद्यति मेद्यतः, मेद्यन्ति' इति द्वौ स्थानिनौ, एक आदेशः, न चास्ति संभवः—द्वयोः स्थानिनोरेक आदेशः स्यादित्येषोऽसंभवः । सत्येतस्मिन्नसंभवे युक्तो विप्रतिषेधः ॥**

( **प्रदीपः** ) **नावश्यमिति ।** द्विकार्ययोगत्वाभावे **केवलोप्य**संभवो विप्रतिषेध इत्यर्थः ॥ **इह तावदिति ।** दीर्घत्वं यञ्यनन्तरे विधीयते, एत्वं च झल्यनन्तरे । न च संभवोस्ति यद् द्वयोः स्वेन स्वेन निमित्तेनानन्तर्यं स्यात् ॥ **इहेदानीमिति ।** मिदेरित्येका षष्ठी सा यद्यवयवसंबन्धे तदेकारस्य गुणेन भाव्यम् । अथ स्थानषष्ठी **तदालोन्त्यस्येति** वचनादकारस्य । न चास्ति संभवो युगपदुभयोर्गुणस्येत्यर्थः ॥

( **उद्योतः** ) द्विकार्ययोगेप्यसंभवसत्त्वादाह—**केवलोपीति ।** ननु आ ए इति ए आ इति वादेशसंभवोस्त्येवेत्यत आह—**न चेति ॥ द्वयोरिति ।** कार्ययोरित्यर्थः । अनन्तरे यञि दीर्घः साधुरनन्तरे झलि एत्वं साधुरित्यर्थ इति भावः ॥ **अद्गुण** इत्यादौ द्वयोः स्थानिनोरेकादेशस्य संभवादाह-**मिदेरिति ॥ न चास्ति संभवो युगपदिति ।** युगपद्वाक्यार्थद्वयबोधाभावादिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—विप्रतिषेधवादी एकदेश्युक्तहेतुं खण्डयति—**नावश्यमिति ।** न नियत इत्यर्थः। असम्भवमात्रेण विप्रतिषेधे दृष्टान्तमाह—**इहेति ।**

( विप्रतिषेधबाधकभाष्यम् )

**एवमप्ययुक्तो विप्रतिषेधः । द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति । अनवकाशश्चायं योगः ॥**

( **तत्त्वालोकः** ) सिद्धान्ती स्वोक्तं पुनः द्रढयति—**एवमपीति ।** असंभवमात्रसत्त्वेऽपीत्यर्थः । एष इति शेषः । स्वयं तत्र हेतुमाह—**द्वयोरिति । हि**—यतः । **समवस्थितयोः**—युगपदेकत्र प्राप्तयोः । **अयम्**—इको गुणेति

( विप्रतिषेधसाधकभाष्यम् )

**ननु च—इदानीमेवास्यावकाशः प्रक्लृप्तः-चयनं चायको लवनं लावक इति ॥**

**( तत्त्वालोकः )** विप्रतिषेधवादी आह— **ननु चेति ।**

( विप्रतिषेधबाधकभाष्यम् )

**अत्रापि नियमः प्राप्नोति । नाप्राप्ते नियमेऽयं योग आरभ्यते । यावता च नाप्राप्ते नियमेऽयं योग आरभ्यते, ततस्तस्यापवादोऽयं योगो भवति । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ॥ अथापि कथंचिद् "इको गुणवृद्धी" इत्यस्यावकाशः स्यात् । एवमपि यथेह विप्रतिषेधादिको गुणो भवति मेद्यति मेद्यतः मेद्यन्ति, इति, एवमिहापि स्यात्—अनेनिजुः पर्यवेविषुरिति ॥**

**( प्रदीपः ) एवमपीति ।** यदीदं नारभ्येत गुणवृद्धी कस्य स्याताम्, **अलोन्त्यस्येति** चेत्, **येन नाप्राप्तिन्यायेन** तदपवादत्वाद्वि प्रतिषेधानुपपत्तिरित्यर्थः । एवं च क्रोष्ट्रीयमतमसंबद्धपरिभाषान्तरपक्षश्च नोपपद्यते ॥

**( उद्द्योतः ) ननु उक्तरीत्या प्रयोजनाऽभावादलोन्त्यस्याप्रवृत्तौ** 'अत्रापि नियमः प्राप्नोती" त्यसङ्गतमित्यत आह—**यदीदमिति ।** एतदभावे संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सर्वत्राङ्गस्येति स्थानषष्ठ्येव । कृते त्वस्मिन्नवयवषष्ठी सेति भावः ॥ **अथापि कथंचिदिति** भाष्यस्य उक्त एवाशयः ॥ **क्रोष्ट्रीयमतं** विप्रतिषेधः । **असंबद्धपरिभाषापक्षश्च** तदुपजीव्यः । तत्र विप्रतिषेधरहितोऽन्त्यस्त्वयुक्त एव । क्व संनिपातः क्वान्यतरत्यागः स च कस्येत्यत्र विनिगमकाभावेन सर्वेष्टासिद्धेः । तस्माद् द्वयमप्येकपक्षभूतमेव बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती आह—**अत्रापीति ।** चयनमित्यादावपीत्यर्थः । पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायेनेति शेषः । **नाप्राप्ते इति**—अवश्यंप्राप्ते इत्यर्थः । यत इत्यादिः । **यावता**—यतः । **तस्य**—नियमस्य । **कथञ्चित्**—चयनमित्यादावफलत्वान्नियमानुपस्थित्या ।

प्रदीपे—**इदम्**—इको गुणेति सूत्रम् । **गुणेति**—तर्हीत्यादिः । **अपवादेति**—अस्येत्यादिः ।

उद्द्योते—**भावादिति**—चयनमित्यादाविति शेषः । **एतदभावे**-इको गुणेति सूत्राभावे । **तत्र**—तयोर्मध्ये । कुत इत्यत आह—**क्वेति ।** तयोरिति शेषः । **स च**—त्यागश्च ।

( इत्यसंबद्धपरिभाषापक्षनिरासाधिकरणम् ॥ )

---

( अथ सिद्धान्तभूतपदोपस्थितिपक्षनिरूपणम् )

( सिद्धान्तिभाष्यम् )

**एवं तर्हि—वृद्धिर्भवति गुणो भवतीति यत्र ब्रूयाद् 'इकः' इत्येतत्तत्रोपस्थितं द्रष्टव्यम् ॥**

**किं कृतं भवति ? ॥**

**द्वितीया षष्ठी प्रादुर्भाव्यते ॥ तत्र कामचारः—गृह्यमाणेन चेकं विशेषयितुम्, इका वा गृह्यमाणम् । यावता कामचारः, इह तावन्मिदिमृजिपुगन्तलघूपधच्छिदृशिक्षिप्रक्षुद्रेषु गृह्यमाणेनेकं विशेषयिष्यामः—एतेषां य इगिति । इहेदानीं जुसिसार्वधातुकार्धधातुकह्रस्वाद्योर्गुणेष्विका गृह्यमाणं विशेषयिष्यामः—एतेषां गुणो भवति 'इकः' इगन्तानामिति ॥**

**( प्रदीपः )** एवं तर्हीति । प्रदेशार्थत्वादनयोः परिभाषयोर्गुणत्वात्परस्परेण संबन्धाभावात्प्रदेशवाक्यपर्यालोचनया वाक्यार्थस्यावस्थानमित्यर्थः ॥

**( उद्द्योतः ) प्रदेशार्थत्वादिति । परस्परेण संबन्धाभावा**दित्यन्तेन तच्छेषत्वाभाव उक्तः । पदोपस्थितिपक्षे च विधेयसमर्पकत्वेन गृहीतगुणादिपदश्रुतिरस्या लिङ्गमित्येषान्तरङ्गा । तत्त्वेन ग्रहश्च प्रथमाया विधेयविभक्तित्वेन तदन्तत्वेन पदज्ञानकाल एव । तदुक्तं भाष्ये—**गुणो भवतीति । यत्रेत्यादि ॥** नियमस्तु स्थानषष्ठीलिङ्गक इति अवान्तरवाक्यार्थबोधोत्तरकालिकत्वेन बहिरङ्गः ॥ एवं च मिदादावुपस्थितेक्परिभाषायाः सामानाधिकरण्यासंभवाद्वैयधिकरण्यान्वये वृत्ते निमित्ताभावादेवालोन्त्यस्येत्यस्यानुपस्थितिः । **सार्वधातुकार्धधातुकयोरि**त्यादौ सामानाधिकरण्यान्वयेऽ**लोन्त्यस्ये**त्यनेनान्त्यस्यादेशव्यवस्था ॥ एतेनैकस्या अप्रवृत्तौ अपरापि न प्रवर्तेतेत्यपास्तम् ॥ **पर्यालोचनयेति ।** प्रदेशे सति संभवे परिभाषाद्वयैकवाक्यतया वाक्यार्थः । अन्यथा त्विक्परिभाषागर्भ एव अस्या अन्तरङ्गत्वादित्यर्थः ॥ भाष्ये—**वृद्धिर्भवतीत्यादि । इति** शब्दो यत्रेत्यर्थः ॥ **इक इत्येतदिति ।** सूत्रे **इक** इति षष्ठ्यन्तानुकरणमित्यर्थः ॥ अनुवृत्तस्य स्वरूपपरत्वेन **गुणशब्दो** भवतीत्याद्यर्थः स्यादतः पुनरत्र गुणवृद्धिग्रहणम् । अनुवृत्तस्यार्थपरत्वं तु न । शब्दाधिकारापत्तेः । उभाभ्यां च गुणशब्दवान् गुणो यत्रेत्यादिरर्थस्तदुक्त**मिति यत्रे**त्यादि । गुणपदं यत्र वर्तते इत्याद्यर्थस्तु न, **अतोगुण** इत्यादावप्यापत्तेः । भवतिक्रियाया अन्तरङ्गत्वाच्च । अस्मादेव गुणवृद्धिग्रहणादत्र विधीयेत इत्यस्य तदर्थकस्य भवतीत्यस्य वाध्याहार **इति** बोध्यम् । एतन्मूलकमे**वानुवादे परिभाषा नोपतिष्ठते** इति । अत एव **तदे**तद्विषयमे**वाचश्चे**त्येतद्विषयमेव च । **अचोञ्णितीत्या**दौ तु वाक्यार्थबोधकाले श्रौतात्पदेनैवाकाङ्क्षाशान्तौ लिङ्गोपस्थितस्य दुर्बलतयानन्वय इति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—अथ सिद्धान्ती निर्दुष्टं पदोपस्थितिपक्षमुपन्यस्यति—**एवमिति ।** अङ्गस्येति प्रथमषष्ठ्यन्तपदाभिप्रायेणाह—**द्वितीया षष्ठीति ।** द्वितीयं षष्ठ्यन्तं पदमिक इत्यर्थः । **तत्र** विशेषणविशेष्यभावे । **यावता**—यतः । **कामचार इति**—अत इति शेषः । अनुवृत्तस्याङ्गस्येत्यस्य सूत्रभेदेन भेदमभिप्रेत्य बहुवचनान्तमाह—**एतेषामिति ।** अङ्गानामित्यर्थः । एवमग्रेऽपि । अत्र षष्ठ्यन्तयोः व्यधिकरणसम्बन्धः सूचितः ॥ अत्र षष्ठ्यन्तयोः समानाधिकरणसम्बन्धसूचनायाह—**इगन्तानामिति ।**

उद्द्योते—**अस्याः**—इक्परिभाषोपस्थितेः । **इति—इति** हेतोः । **एषा**—इक्परिभाषा । **तत्त्वेन**—विधेयसमर्पकत्वेन । **चेति**—यत इत्यर्थः । असति बाधके इति शेषः । **तदुक्तं**—तस्मादुक्तम् । **इति**—इति हेतोः । **मिदादाविति**—अन्तरङ्गत्वादिति शेषः । **सामानेति**—अङ्गस्येत्यनेनेत्यादिः । **वैयधिकरण्येति**—अङ्गस्येति षष्ठ्या अवयवार्थकत्वेनेत्यादिः । **निमित्तेति**—स्थानषष्ठीरूपेत्यादिः । **परिभाषाद्वयैकवाक्यतया**—परिभाषाद्वयस्य विधिवाक्येन सह वाक्यैकवाक्यतया पदैकवाक्यतया वा । **एवेति**—प्रदेश इति शेषः । **इति**

ब्दः—विधेयसमर्पकगुणादिशब्दः । **उभाभ्यां**—अनुवृत्तपठिताभ्याम् । **तदर्थकस्य**—विधीयते इत्यर्थकस्य । **तत्**—"अनुवादे" इति । न्वेवम् अचो ञ्णितीत्यादावपि गुणादिपदश्रवणात् इक्परिभाषोपतिष्ठेतेत्यत आह—अचो ञ्णितीति । **लिङ्गोपस्थितस्येति**—गुणादिशब्दश्रुतिरूपलिङ्गोपस्थितस्येक इत्यस्येत्यर्थः । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति न्यायेनेति शेषः ।

**( तच्छेषपक्षोक्तदूषणनिराकरणभाष्यम् )**

**अथवा सर्वत्रैवात्र स्थानी निर्दिश्यते । इह तावन्मिदेरित्यविभक्तिको निर्देशः—मिद् एः मिदेरिति ॥ अथवा षष्ठीसमासो भविष्यति—मिद इः मिदिः मिदेरिति ॥**

**पुगन्तलघूपधस्येति । नैवं विज्ञायते—पुगन्ताङ्गस्य लघूपधस्य चेति ॥**

**कथं तर्हि ? ॥**

**पुकि अन्तः पुगन्तः, लघ्वी उपधा लघूपधा, पुगन्तश्च लघूपधा च पुगन्तलघूपधम्, पुगन्तलघूपधस्येति । अवश्यं चैतदेवं विज्ञेयम्, अङ्गविशेषणे सतीह प्रसज्येत भिनत्ति छिनत्तीति ॥**

**ऋच्छेरपि प्रश्लिष्टनिर्देशोऽयम्—ऋच्छति ऋ ऋ ऋताम् = "ऋच्छत्यृताम्" इति ॥**

**दृशेरपि योगविभागः करिष्यते,—"उरङि गुणः" उः अङि गुणो भवति । ततो "दृशेः" दृशेश्चाङि गुणो भवति । उरित्येव ॥**

**क्षिप्रक्षुद्रयोरपि "यणादिपरं गुणः" इतीयता सिद्धम् । सोऽयमेवं सिद्धे सति यत्पूर्वग्रहणं करोति तस्यैतत्प्रयोजनम्-इको यथा स्यादनिको मा भूदिति ॥**

**( प्रदीपः ) अथवेति ।** तच्छेषपक्षोक्त**दोष**परिहारः । **क्षिप्रक्षुद्रयोरपीति ।** अत्र च योगविभागः क्रियते **स्थूलादीनां यणादिपरं लुप्यते,** ततः **पूर्वस्य च गुण इति** । अत्र च स्वरितत्वात् क्षिप्रक्षुद्रशब्दावेवानुवर्तेते, स्थूलादयो निवृत्ताः, तेषां तु यणादिलोपे सत्योर्गुण इति गुणो भवतीति । **असिद्धवदत्राभा**दित्यसिद्धत्वमनित्यत्वान्न भवति । तत्र क्षिप्रक्षुद्रयोर्यण आदिः पकारो दकारश्च तस्माद्यणादेः परं लुप्यते, तस्मादेव च यणादेः पूर्वस्य गुण इति सिद्धम्—क्षेपिष्ठः क्षोदिष्ठ इति ॥ **यणादिपरमिति** पञ्चमीसमासः ॥ यदि तर्हि पुगन्तलघूपधस्येति स्थानी निर्दिश्यते तच्छेषपक्षाश्रयणाच्चात्रेक्परिभाषा नोपतिष्ठते तदा तस्य गुणस्थानिलक्षणत्वाद् भिन्नं छिन्नमित्यादौ **क्ङिति चेति** गुणनिषेधो न प्राप्नोति । यथा **लैगवायन इति ॥ नैष दोषः, क्नुसनोः** कित्त्वविधानाज् ज्ञापकादनिग्लक्षणत्वेऽपि लघूपधगुणस्य प्रतिषेधो भविष्यति ॥

**( उद्द्योतः ) ( पुकि अन्त इति ) ।** सुप्सुपेति समासः । भिनत्तीत्यत्र गुणापादनं **क्ङितीत्यस्य निमित्तसप्तमीत्वाद्** । **इकः** सार्वधातुकार्धधातुकयोरिति विशेषणमिति तु न युक्तम् । **तस्याकांक्षो**त्थिताकाङ्क्षत्वात् ॥ भाष्ये **यणादि परं गुण इति । यणादिपरं** लुप्यतेऽवशिष्टस्य गुण इत्यर्थेन क्षिप्रादेः सर्वादेशो गुणः सिद्धः । स्थूलादौ तु **ओर्गुण इत्येव** सिद्धमिति भावः ॥ **ननु पूर्वस्येत्युक्तावपि** यणपेक्षादेः परमित्यर्थे पूर्वस्य गुण इत्यनेनापि तत एव पूर्वस्य गुणापत्तौ स्थूलादिषु थकारादेर्गुणः स्यात् । यणादिर्यस्य तद्रूपं परं लुप्यते ततः पूर्वस्य च गुण इत्यर्थे क्षिप्रक्षुद्रयोरन्त्यस्य व्यञ्जनस्य गुणः स्यादत आह—**अत्रचेति ॥ अनित्यत्वादिति ।** आसन्नित्यत्र लोपनिवृत्त्यर्थाच् **श्नसोरल्लोप** इति तपरकरणादित्यर्थः । तथा हि । अस् अन्तीति स्थिते परत्वादल्लोपे तस्यासिद्धत्वात्पुनः प्रसङ्गेनाटि विकारान्यानुपूर्व्यैक्याभावेन **लक्ष्ये लक्षणस्ये**ति न्यायाप्राप्तौ प्राप्तलोपवारणार्थं तपरत्वमाटोऽसिद्धत्वे व्यर्थं **सत्तदनित्यत्वे** ज्ञापकम् । न चाटोप्यनापत्तिः । तत्रानित्यत्वे मानाभावात् । **तस्मादेव चेति ।** पूर्वत्वस्यावध्याकाङ्क्षायां परत्वेऽवधित्वेन क्लृप्तत्वादुपस्थितत्वाच्च तस्यैवावधित्वमिति भावः । तद्ध्वनयन्व्याचष्टे—**पञ्चमीसमास इति । सुप्सुपे**त्यनेन अवयवभूते यणादीत्यत्र समुदिते चेत्यर्थः । न चैवं ह्रस्वशब्दे रस्वशब्दस्यापि लोपापत्तिः, स्थूलादिसाहचर्येणोपान्त्ययणादेः परस्यैव लोपादित्याहुः ॥ **पक्षाश्रयणाच्चेति ।** परिभाषाणामनियमे नियमकारिणीत्वाच्चेत्यपि बोध्यम् । एवं दमापयति इत्यादौ **पुगन्तेति** गुणे उपधावृद्धिरिति न दोषः ॥ **क्नुसनोरिति ।** एतत्क्ङिति चेति सूत्रे उपपादयिष्यते ॥

**( तत्त्वालोकः )** भाष्ये—**सर्वत्र**—बहुषु । **एवः**—निर्दिश्यते इत्यनेनानुयोगितयाऽन्वेति । **अत्र**—मिदेर्गुण इत्यादिषु । तथा च तैरिको गुणाय तेषु इक इति न वक्तव्यमिति भावः । लाघवादाह—**अथवेति । एतत्**—पुगन्तलघूपधस्येति । **अङ्गेति**—यत इत्यादिः । तथा च तस्य पुगन्तलघूपधाङ्गावयवेको गुण इति नार्थः, किन्तु अङ्गावयवपुगन्तलघूपधयोः गुण इत्यर्थ इति भावः । **ऋच्छेरपीति**—स्थानी निर्दिष्टः । यत इति शेषः । एवं दृशेरपीत्यत्रापि । **क्षिप्रक्षुद्रयोरपीति**—सिद्ध । यत इति शेषः ।

प्रदीपे—**तच्छेषेति**—एकदेशिनः तच्छेषपक्षस्थापनायेत्यादिः । **वस्तुतस्तु** तत्पक्षोक्तस्य मृज्यंशे दोषस्यापरिहारात्, असम्बद्धानामेकवाक्यत्वासम्भवात्, **गुरुभूतयोगविभागादेः** तत्पक्षे आश्रयणेन गौरवाच्च तच्छेषपक्षो न युक्तः, किन्तु पदोपस्थितिपक्ष एवेति भावः । **स्वरितेति**—एकदेशे उभयत्रेत्यादिः । नन्वेवं तेषां गुणासम्बन्धे स्थवीयानित्यादि कथं सिद्ध्येदित्यत आह—**तेषामिति ।** स्थूलादीनामित्यर्थः । **असिद्धत्वमिति**—यणादिपरलोपस्येत्यादिः । **परं**—वर्णरूपम् । शङ्कते—**यदीति** ।

उद्द्योते—**तस्य**—सार्वधातुकार्धधातुकयोरित्यस्य । **तत एव**—यणपेक्षादेरेव । **लोपेति**—आट इत्यादिः । **विकारेति**—आगमेति भावः । **प्राप्तेति**—आट इत्यादिः । **तदनित्यत्वे**—असिद्धवदित्यस्यानित्यत्वे । **अनापत्तिः**—अप्राप्तिः । **तत्र**—आटि । ज्ञापकस्य सामान्यापेक्षत्वे आटो लोपवारणाय कृतस्य तपरत्वस्य वैयर्थ्यप्रसङ्गेन तस्य विशेषापेक्षताया आश्रयणादिति भावः । **तस्यैवेति**—यणादेरेवेत्यर्थः । पूर्वत्वे इति शेषः । **समुदिते**—यणादिपरमित्यत्र । **शङ्कते इति**—अथवेत्यादिना कृततच्छेषपक्षोक्तदूषणोद्धारमध्ये क्रमप्राप्तमृज्यंशदोषस्यापरिहारेण तत्र प्रसज्यमानस्य दुरुद्धरताभ्रमस्य निवारणायैकदेशीत्यादिः ।

**( वृद्धिपदप्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अथ वृद्धिग्रहणं किमर्थम् ? ॥**

**( उद्द्योतः )** भाष्ये शङ्कते—**अथ वृद्धिग्रहणमिति ।**

**( प्रत्याक्षेपभाष्यम् )**

**किं विशेषेण वृद्धिग्रहणं चोद्यते न पुनर्गुणग्रहण-**

मपि । यदि किञ्चिद्गुणग्रहणस्य प्रयोजनमस्ति, वृद्धिग्रहणस्यापि तद्भवितुमर्हति । को वा विशेषः ? ॥

( तत्त्वालोकः ) तटस्थ एकदेशिनमाक्षिपति- किमिति । अस्तीति-तर्हीति शेषः ।

( प्रत्याक्षेपसमाधानभाष्यम् )

अयमस्ति विशेषः । गुणविधौ न क्वचित्स्थानी निर्दिश्यते, तत्रावश्यं स्थानिनिर्देशार्थं गुणग्रहणं कर्तव्यम् । वृद्धिविधौ पुनः सर्वत्रैव स्थानी निर्दिश्यते "अचो ञ्णिति" "अत उपधायाः" "तद्धितेष्वचामादेः" इति ॥

( प्रदीपः ) गुणविधाविति । क्वचिन्न निर्दिश्यत इति नञो व्यवहितेन सम्बन्धः । क्वचिन्निर्दिश्यत एव, ओर्गुण इत्यादौ ।

( उद्द्योतः ) न क्वचित्स्थानी निर्दिश्यते इत्युक्त्या—सर्वत्रैव न निर्दिश्यते-इति प्रतीयते, क्वचिदादिपदप्राग्वर्तिनञः क्वचिदादिपदबोध्याधिकरणादौ सर्वत्राभावप्रतीतेर्व्युत्पत्तिसिद्धत्वात्तच्चायुक्तमत आह-क्वचिदिति ॥

(तत्त्वालोकः) भाष्ये - एकदेशी स्वाशयं प्रकटयति—अयमिति । तत्र—अनिर्दिष्टस्थानिकगुणविधौ । सर्वत्रेति—बहुष्वित्यर्थः । सिचि वृद्धिरित्यादौ स्थान्यनिर्देशात् ।

( समाधानभाष्यम् )

अत उत्तरं पठति—

( ११० सिद्धान्तिसमाधानवार्तिकप्रथमखण्डम् ॥ ६ ॥ )

## ॥ * ॥ वृद्धिग्रहणमुत्तरार्थम् ॥ * ॥

वृद्धिग्रहणं क्रियते ॥ किमर्थम् ? । उत्तरार्थम् । "क्ङिति" इति प्रतिषेधं वक्ष्यति । स वृद्धेरपि यथा स्यात् ॥

( उद्द्योतः ) भाष्ये सिद्धान्त्याह—वृद्धिग्रहणमुत्तरार्थमिति ।

( तत्त्वालोकः ) भाष्ये—उत्तरार्थम्—उत्तरस्य निषेधसूत्रस्य स्वविषये प्रवृत्तये तस्येग्लक्षणतासम्पादनार्थम् ।

( पूर्वपक्षिभाष्यम् )

कश्चेदानीं क्ङित्प्रत्ययेषु वृद्धेः प्रसङ्गः । यावता "ञ्णिति" इत्युच्यते ? ॥

( उद्द्योतः ) पूर्वपक्ष्याह—कश्चेत्यादि ॥

( ११० सिद्धान्तिसमाधानवार्तिकद्वितीयखण्डम् ॥ ७ ॥ )

## ॥ * ॥ तच्च मृज्यर्थम् ॥ * ॥

( भाष्यम् )

मृजेर्वृद्धिरविशेषेणोच्यते । सा क्ङिति मा भूत् मृष्टः मृष्टवानिति ॥

( उद्द्योतः ) अविशेषेणोच्यते । सा क्ङितीति ॥ प्रत्ययविशेषानाश्रयणमत्राविशेषः ॥

(तत्त्वालोकः) भाष्ये—तच्च—उत्तरार्थञ्च । मृज्यर्थमिति—वृद्धिग्रहणं कर्तव्यमिति शेषः । तथा च वृद्धिग्रहणं मृष्ट इत्यादौ मृजेर्वृद्धिरिति प्राप्तवृद्धेः क्ङितीत्यनेन निषेधाय तस्येग्लक्षणत्वसम्पादनार्थं कर्तव्यमित्यर्थः । उद्द्योते—ननु धातुना प्रत्ययसामान्यस्याक्षेपादविशेषेत्यसङ्गतमित्यत आह—प्रत्ययविशेषेति ।

( १११ सिद्धान्तिसमाधानान्तरवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ इहार्थं चापि ॥ * ॥

( भाष्यम् )

इहार्थं चापि मृज्यर्थं वृद्धिग्रहणं कर्तव्यम् । मृजेर्वृद्धिरविशेषेणोच्यते । सेको यथा स्यात्, अनिको मा भूदिति ॥

( प्रदीपः ) मृजेर्वृद्धिरिति । तत्र हि सूत्रेऽभिमतस्थान्यनुपादानादलोन्त्यपरिभाषयान्त्यस्यैव स्यादित्यर्थः ॥

( उद्द्योतः ) उत्तरस्याविशेषेणेत्यस्य स्थानिविशेषानुच्चारणेनेत्यर्थः ॥ तदाह तत्र हि सूत्र इति ॥

( तत्त्वालोकः ) भाष्ये—मृज्यर्थ—मृजेर्वृद्धिरित्यस्येग्लक्षणत्वसम्पादनार्थम् । अपिना पूर्वसमुच्चयः । अनिकः—अन्त्यस्य ।

प्रदीपे- तत्र—मृजेर्वृद्धिरित्यत्र । अभिमतेति—ऋकाररूपेत्यादिः । अलोऽन्त्येति—इह वृद्धिग्रहणासत्त्वे स्थानषष्ठीसत्त्वेनेत्यादिः । अन्त्यस्य—जकारस्य । उद्द्योते—उत्तरस्य-द्वितीयस्य ।

( ११२ अन्यथोपपत्तिवार्तिकम् ॥ ९ ॥

## ॥ * ॥ मृज्यर्थमिति चेद्योगविभागात्सिद्धम् ॥ * ॥

( व्याख्याभाष्यम् )

मृज्यर्थमिति चेद्योगविभागः करिष्यते—"मृजेर्वृद्धिरचः" । ततः—"ञ्णिति" ञिति णिति च वृद्धिर्भवति 'अचः" इत्येव ॥

(तत्त्वालोकः) एवन्तस्य प्रयोजनद्वये श्रुते पूर्वपक्षी प्रत्यासत्त्या व्युत्क्रमेण द्वितीयप्रयोजनं खण्डयति—मृज्यर्थमिति । इहार्थमित्यादिः । चेदिति—न, यत इति शेषः ।

( अन्यथोपपत्तिबाधकभाष्यम् )

यद्यचो वृद्धिरुच्यते, 'न्यमाट्' अटोऽपि वृद्धिः प्राप्नोति ॥

( प्रदीपः ) अटोऽपीति । नन्वडागमात्पूर्वमेव परत्वाद्वृद्धिर्भविष्यतीति लक्षणस्य प्रवृत्तत्वादटि कृते पुनर्लक्षणं न प्रवर्तिष्यते ॥ एवं तर्हि विप्रतिषेधानपेक्षयैवात्र चोद्यपरिहारावुक्तौ ॥

( उद्द्योतः ) अडागमात्पूर्वमिति । लादेशेषु कृतेष्वडिति पक्षे—इदम् ॥ अटि कृते इति । विकारान्वानुपूर्व्या भेदेन लक्ष्यभेदाच्चिन्त्यमिदम् ॥परत्वादित्यपि चिन्त्यं, द्वयोर्यौगपद्यासम्भवात् ॥ एवं तर्हीति । लावस्थायामडिति पक्षे इति भावः ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती आह-यद्यच इति । न्यमाडिति—तर्हीत्यादिः । इत्यत्रेति शेष. ।

प्रदीपे- इति इति हेतोः । पुनरिति—लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरिति न्यायसत्त्वेनेत्यादिः ।

( ११२ अन्यथोपपत्तिसाधकशेषवार्तिकम् ॥ १० ॥ )

॥ * ॥ अटि चोक्तम् ॥ * ॥

( भाष्यम् )

किमुक्तम् ? ॥

'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवति' इति ॥

( उद्द्योतः ) भाष्ये अनन्त्यविकारे इति। तयापि सिध्यतीत्यभिमानः ॥ सिद्धान्ते तदन्यार्थमिग्ग्रहणे कृते तेनैवाटो व्यावृत्तिसिद्धौ सा नैतदर्थेति च्यङ इति सूत्रे वक्ष्यत इति न विरोधः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी आह—अटि चेति।

उद्द्योते—तया—अनन्त्येति परिभाषया। तेन—इग्ग्रहणेन। सा—अनन्त्येति परिभाषा। एतदर्था—अटो व्यावृत्त्यर्था।

( ११३ सिद्धान्तवार्तिकम् ॥ ११ ॥ )

॥ * ॥ वृद्धिप्रतिषेधानुपपत्तिस्त्विक्प्रकरणात् [ तस्मादिग्लक्षणा वृद्धिः ] ॥ * ॥

( भाष्यम् )

वृद्धेस्तु प्रतिषेधो नोपपद्यते।

किं कारणम् ?।

इक्प्रकरणात्। इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैवं सति मृजेरिग्लक्षणा वृद्धिर्भवति। तस्मान्मृजेरिग्लक्षणा वृद्धिरेषितव्या ॥

( उद्द्योतः ) तस्मान्मृजेरिति। निषेधस्य सिद्धये योगविभागमकृत्वा स्थानिसमर्पणायास्या एवोपस्थितिरङ्गीकार्येति भावः ॥

( तत्त्वालोकः ) भाष्ये—एवं तस्यैहार्थत्वे खण्डिते उत्तरार्थताया अप्यनुपपन्नतया मृष्ट इत्यादौ दोष एवेत्याशयेन सिद्धान्ती आह—वृद्धीति। एवं—तस्यैहार्थत्वाभावे। उपसंहरति—तस्मादिति। एवन्तस्यैहार्थत्वे समुपपन्ने उत्तरार्थताऽपि समुपपन्नेति भावः।

उद्द्योते—अस्याः—इक्परिभाषायाः। एवेन गुरुभूतनियमादिव्यावृत्तिः।

( इक्परिभाषानुपस्थितिसूचकभाष्यम् )

एवं तर्हि—इहान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते—परिमृजन्ति परिमार्जन्ति परिमृजन्तु परिमार्जन्तु परिममृजतुः परिममार्जतुरित्याद्यर्थम् ॥ तदिहापि साध्यम्। तस्मिन् साध्ये योगविभागः करिष्यते—"मृजेर्वृद्धिरचो" भवति ॥

ततः—"अचि क्ङिति" अजादौ च क्ङिति मृजेर्वृद्धिर्भवति। परिमार्जन्ति परिमार्जन्तु परिममार्जतुः ॥

किमर्थमिदम् ?।

नियमार्थम्, अजादावेव किति, नान्यत्र ॥

कान्यत्र मा भूत् ? ॥

मृष्टः मृष्टवानिति ॥

ततो "वा" वाचि क्ङिति मृजेर्वृद्धिर्भवति। परिमृजन्ति परिमार्जन्ति परिममृजतुः परिममार्जतुरिति ॥

( उद्द्योतः ) संक्रम इति। गुणवृद्धिप्रतिषेधविषयक्ङितः प्राचां संज्ञा। "अचि" इत्येव वचनम्। आदाविति तु तदादिपरिभाषालब्धार्थानुवादः। अत एवाग्रे वक्ष्यति—ततोऽचि क्ङितीति। एवं च ममृजे यूयं ममृजेत्यादौ विकल्पो भवत्येव ॥ एतेनादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिस्तेन पूर्वोदाहृतेषु न वृद्धिरिति हरदत्तोक्तमपास्तम् ॥ तुन्दपरिमृज इत्यत्र यदि वृद्ध्यभाव इष्टस्तर्हि व्यवस्थितविभाषया नेति बोध्यम् ॥ अजादावेवेति। विपरीतनियमस्तु न। इष्टानुरोधात् ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी प्रयोजनद्वयं निराकरोति—एवमिति। इह—मृजिविषये। तत्—परिमृजन्तीत्यादि रूपम्। इहापि—अस्मिन् व्याकरणेऽपि। मृजेर्वृद्धिरचः, अचि क्ङिति, वा, इति योगस्य क्रमशः विभागत्रयं दर्शयति—मृजेरिति।

( इक्परिभाषोपस्थितिसूचकभाष्यम् )

इहार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते सेको यथा स्याद्, अनिको मा भूदिति ॥

( उद्द्योतः ) उत्तरार्थत्वे खण्डिते सिद्धान्त्याह—इहार्थमेवेति। [ सिचि वृद्धौ स्थानिविशेषानाश्रयणरूपोऽविशेषः ]

( तत्त्वालोकः ) भाष्ये—सिजर्थं—सिज्निमित्तकवृद्धेरिक्स्थानिकत्वसम्पत्त्यर्थम्।

उद्द्योते—उत्तरार्थत्वे खण्डिते इति-एवन्तस्य मृजर्थे इत्यादिः। मृजर्थेहार्थत्वस्यापि खण्डनादिति शेषः। उत्तरार्थतां विना इहार्थत्वस्य दुर्वचत्वात्। वस्तुतस्तु तस्य मृजर्थेहार्थत्वोत्तरार्थत्वयोः अतिगुरुभूतयोगविभागनियमादिसमाश्रयणेन खण्डनमपेक्ष्य स्वीकरणमेव वरमिति भावः।

( इक्परिभाषानुपस्थितिभाष्यम् )

कस्य पुनरनिकः प्राप्नोति ? ॥

( उद्द्योतः ) तत् खण्डयति पूर्वपक्षी—कस्य पुनरित्यादि ॥

( इक्परिभाषोपस्थितिभाष्यम् )

अकारस्य। अचिकीर्षीत् अजिहीर्षीत् ॥

( तत्त्वालोकः ) तत् समाधत्ते सिद्धान्ती- अकारस्येति।

( इक्परिभाषानुपस्थितिभाष्यम् )

नैतदस्ति। लोपोऽत्र बाधको भविष्यति ॥

( प्रदीपः ) अचिकीर्षीदिति। पूर्वविप्रतिषेधादतो लोपो यथा चिकीर्षक इत्यादौ ॥

( उद्द्योतः ) पूर्वविप्रतिषेधेति ॥ ण्यल्लोपावियङ्ङित्यादि ॥ चिकीर्षक इति। अन्यथा ह्यत्र परत्वाद्वृद्धौ युकि चिकीर्षायक इति स्यात् ॥

(तत्त्वालोकः) भाष्ये—पूर्वपक्षी तत् निराकरोति—नैतदिति। लोप इति—यत इत्यादिः।

प्रदीपे—पूर्वपक्षग्रन्थप्रतीकमादाय उत्तरपक्षग्रन्थस्य 'लोपोऽत्रे' त्यादेरर्थमाह- पूर्वेति। वृद्धेरिग्लक्षणत्वे अभ्युपगतेऽनभ्युपगते चेत्यादिः। उद्द्योते—अन्यथा—वृद्धेरिग्लक्षणत्वं स्वीकृत्य पूर्वविप्रतिषेधानङ्गीकारे।

( इक्परिभाषोपस्थितिभाष्यम् )

आकारस्य तर्हि प्राप्नोति—अयासीत् अवासीत् ॥

( तत्त्वालोकः )—सिद्धान्ती आह—आकारस्येति ।

( इक्परिभाषानुपस्थितिभाष्यम् )

नास्त्यत्र विशेषः सत्यां वृद्धावसत्यां वा ।

( प्रदीपः ) अयासीदिति । परत्वादत्र सगिटोः कृतयोरनन्त्यत्वादाकारस्य नास्ति वृद्धिप्रसङ्ग इति यद्यपि परिहारोऽस्ति, तथापि विशेषाभावेन परिहृतत्वान्नायमाश्रितः ॥

( उद्द्योतः ) परत्वादत्रेति । अपवादत्वादित्यर्थः । परशब्द उत्कृष्टवाची ॥

( तत्त्वालोकः ) भाष्ये—तत् खण्डयति पूर्वपक्षी—नास्तीति । प्रदीपे—पूर्वपक्षग्रन्थप्रतीकमादाय उत्तरपक्षग्रन्थस्य "नास्त्यत्रे" त्यादेरर्थमाह—परत्वादिति । अत्र—अयासीदित्यादौ । अयं—परिहारः । उद्द्योते—तस्योदक्षरत्वनिराकरणायाह—परेति ।

( इक्परिभाषोपस्थितिभाष्यम् )

संध्यक्षरस्य तर्हि प्राप्नोति ॥

( तत्त्वालोकः ) सिद्धान्ती आह—संध्यक्षरेति ।

( इक्परिभाषानुपस्थितिभाष्यम् )

नैव संध्यक्षरमन्त्यमस्ति ॥

( उद्द्योतः ) भाष्ये नैव सन्ध्यक्षरमिति । वृद्धियोग्यमिति शेषः । उपदेश आत्वविधानादिति भावः ॥ अन्त्यमिति । अङ्गस्य वृद्धिरित्यर्थेऽलोन्त्यपरिभाषाप्रवृत्तेरिति भावः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी तत् खण्डयति—नैवेति । उद्द्योते—कुत इत्यत आह—उपदेशे इति ।

( इक्परिभाषोपस्थितिभाष्यम् )

ननु चेदमस्ति ढलोपे कृते उदवोढाम् उदवोढम् उदवोढेति ॥

( तत्त्वालोकः )—सिद्धान्ती तत् समाधत्ते—ननु चेति ।

( इक्परिभाषानुपस्थितिभाष्यम् )

नैतदस्ति । असिद्धो ढलोपः । तस्यासिद्धत्वान्नैतदन्त्यं भवति ॥

( प्रदीपः ) उदवोढामिति । ढलोपादीनामसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः, ततो ढलोपादिषु कृतेषु ढलोपस्यासिद्धत्वादोकारस्य न भविष्यति ॥ गोशब्दादाचारक्विपि क्वतेऽगवीदिति संध्यक्षरमन्त्यमस्ति तस्य कस्माद्वृद्धिर्न भवति । उच्यते—सिचि वृद्धिरित्यत्र धातुग्रहणमृत इद्धातोरित्यत औपदेशिकधातुग्रहणार्थमनुवर्तत इत्यदोषः ॥

( उद्द्योतः ) ढलोपस्यासिद्धत्वादिति । पूर्वं हलन्तलक्षणाया वृद्धेर्जातत्वेनेदानीं सिचि वृद्धिरित्यस्य प्राप्त्या लक्ष्ये लक्षणस्येत्यस्याप्रवृत्तिरिति भावः ॥ धातुग्रहणमिति । सिचा तदाक्षेपे सिद्धे इति भावः ॥ एवंच कव्यादिभ्य आचारक्विपि अकवायीदित्यादौ वृद्धिर्नेति लभ्यते ॥ माधवस्तु वृद्धि मनुते । बहुलं छन्दसीत्यतो बहुलग्रहणानुवृत्त्या सन्ध्यक्षरान्तनामधातौ वृद्धिर्न, अन्यत्र भवत्येवेति तदाशयः ॥ तेन सेशब्दादिभ्य आचारक्विपि न वृद्धिरित्यलम् । वस्तुतस्तु नैव संध्यक्षरमिति, एवमेतद्भाष्यप्रामाण्येन सन्ध्यक्षरान्तेभ्य आचारक्विबेव नेत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी तत् खण्डयति—नैतदिति । असिद्ध इति—यत इत्यादिः । प्रदीपे—पूर्वपक्षग्रन्थप्रतीकमादाय उत्तरपक्षग्रन्थस्य "असिद्ध" इत्यादेरर्थमाह—ढलोपादीनामिति । इति—इत्यत्र । इत्यदोषः—इति हेतोरदोषः । उद्द्योते—तदाक्षेपे—धात्वाक्षेपे । वृद्धिमिति—तत्रेत्यादिः । अन्यत्र—अकवायीदित्यादौ । तदाशयः—माधवाशयः ।

( इक्परिभाषोपस्थितिभाष्यम् )

व्यञ्जनस्य तर्हि प्राप्नोति अभैत्सीत् अच्छैत्सीत् ॥

( तत्त्वालोकः )—सिद्धान्ती आह—व्यञ्जनस्येति ।

( इक्परिभाषानुपस्थितिभाष्यम् )

हलन्तलक्षणा वृद्धिर्बाधिका भविष्यति ॥

( उद्द्योतः ) हलन्तलक्षणा वृद्धिर्बाधिकेति भाष्ये—इग्ग्रहणाभावे येन नाप्राप्तिन्यायेनेति भावः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी तत् खण्डयति—हलन्तेति ।

( इक्परिभाषोपस्थितिभाष्यम् )

यत्र तर्हि सा प्रतिषिध्यते—"नेटि" इति अकोषीद् अमोषीत् ॥

( तत्त्वालोकः ) सिद्धान्ती आह—यत्रेति । तत्र व्यञ्जनस्य प्राप्नोतीति भावः । सा—हलन्तलक्षणा वृद्धिः ।

( इक्परिभाषानुपस्थितिभाष्यम् )

सिचिवृद्धेरप्येष प्रतिषेधः ॥

कथम् ? ॥

लक्षणं हि नाम ध्वनति भ्रमति मुहूर्तमपि नावतिष्ठते ॥

( प्रदीपः ) लक्षणं हीति । नेटीति लक्षणमविशेषेण वृद्धिमात्रस्य निषेधं कथयतीति ध्वनतीत्युच्यते । यो ह्यव्यक्तं कथयति स ध्वनतीत्युच्यते । एवमिहाप्यस्या एव वृद्धेर्निषेध इति नास्ति व्यक्तिः ॥ स्यादेतत्—प्रतिषेधस्यैकनिषेध्ये चरितार्थत्वात्पुनः प्रतिषेध्यान्तरे प्रवृत्तिर्न स्यादित्याह—भ्रमतीति । सर्वत्र व्याप्रियत इत्यर्थः । स्यादेतत्—यावदेकनिषेधेऽस्य व्यापारस्तावदेव द्वितीयो विधिः प्रवृत्तः, प्रवृत्तस्य च निषेधोऽशक्यः कर्तुमित्याह—मुहूर्तमिति । उभयत्रापि व्यापारान्नैकत्र विश्राम्यतीत्यर्थः ॥

( उद्द्योतः ) इत्याहेति । इत्याशङ्कायामाहेत्यर्थः ॥ नैकत्रेति । बाध्यसामान्यचिन्तेयम् । नेटीत्यत्र हलन्तस्येत्यनुवर्त्य हलन्तस्य या वृद्धिः प्राप्ता सा सर्वापि नेत्यर्थः । तेनालावीदित्यादौ न दोष इति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी तत् निराकरोति—सिचीति । एषः—नेटीति योगः । ननु "अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा" इति न्यायेन हलन्तलक्षणवृद्धेरेव तेन निषेधो युक्तः, न तु सिचिवृद्धेरित्याशयेन पृच्छति—कथमिति । हि—यतः ।

प्रदीपे-इति—इति हेतोः । हि—यतः । अव्यक्तमिति—अविशेषमित्यादिः । अस्याः—हलन्तलक्षणायाः । इति—इत्यस्य ।

यक्तिः—अभिव्यक्तिः। एकनिषेध्ये—हलन्तलक्षणवृद्धौ। प्रतिषेध्यान्तरे—सिचि वृद्धौ। अस्य—नेटीति निषेधशास्त्रस्य। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् तस्य युगपदेवोभयत्र प्रवृत्तिरित्याशयेनाह—उभयत्रेति।

उद्द्योते—चिन्तेति—अत्र पक्षे "अनन्तरस्ये"ति न्यायो न प्रवर्त्तत इति भावः।

( इक्परिभाषानुपस्थितिभाष्यम् )

अथवा "सिचि वृद्धिः परस्मैपदेषु" इति सिचि वृद्धिः प्राप्नोति। तस्या हलन्तलक्षणा वृद्धिर्बाधिका। तस्या अपि "नेटि" इति प्रतिषेधः॥

( प्रदीपः ) तस्या अपीति। अपिशब्दात्सिचि वृद्धेरपि॥

( उद्द्योतः ) बाध्यविशेषचिन्तायामाह—भाष्ये अथवेति। व्याचष्टे—अपिशब्दादिति।

( तत्त्वालोकः ) प्रदीपे—अष्टावसरन्यायेनाह—अपीति।

उद्द्योते—चिन्तायामिति—पक्षे "अनन्तरस्ये"ति न्यायप्रवृत्त्या नेटीत्यनेन हलन्तलक्षणवृद्धेरेव निषेध्यत्वात् पूर्वपक्षी तत्खण्डनायेति शेषः। नन्वत्र पक्षे तत्र सिचि वृद्धिः दुर्वारैवेत्यत आह—तदिति। विशेषचिन्तनमित्यर्थः।

( इक्परिभाषोपस्थापकभाष्यम् )

अस्ति पुनः क्वचिदन्यत्रापि अपवादे प्रतिषिद्धे उत्सर्गोऽपि न भवति ? ॥

( उद्द्योतः ) स्वप्रतिषेध्यहलन्तलक्षणवृद्धिप्रतिषेधद्वारा अष्टावसरन्यायेन सिचि वृद्धेरप्यभावः प्रतिपाद्यते इत्यर्थस्तद्ध्वनयन्नाह—भाष्ये अस्ति पुनः क्वचिदित्यादि॥

( तत्त्वालोकः ) भाष्ये—तटस्थः पूर्वपक्षिणं पृच्छति—अस्तीति। उद्द्योते—स्वप्रतिषेध्येति—नेटीत्यनेनेत्यादिः।

( इक्परिभाषानुपस्थापकभाष्यम् )

अस्तीत्याह, सुजाते अश्वसूनृते, अध्वर्यो अद्रिभिः सुतम्, शुक्रं ते अन्यदिति। पूर्वरूपे प्रतिषिद्धेऽयादयोऽपि न भवन्ति॥

( प्रदीपः ) अस्तीत्याहेति। नान्तः पादमव्यपर इति पाठमाश्रित्यैवमुक्तम्॥ यद्येवं वृक्षावित्यत्र नादिचीत्यनेन पूर्वसवर्णदीर्घवद् वृद्धेरपि निषेधप्रसङ्गः। नैष दोषः, संयोद्धावित्यादेर्ज्ञापकादनन्तरस्यैव नादिचीति निषेधात्॥

( उद्द्योतः ) ननु तत्र प्रकृतिभावेन साक्षादेवोत्सर्गापवादयोर्निवृत्तिर्न त्वपवादेन बाधादुत्सर्गस्येत्यत आह—नान्त इति। भाष्ये न भवन्तीति। अष्टावसरन्यायेनेति भावः॥ पूर्वसवर्णदीर्घवद्वृद्धेरपीति। अवर्णादिचि यद्यत्प्राप्तं तन्नेति बाध्यसामान्यचिन्तारूपाश्रयेणेयं शङ्का॥ ज्ञापकाद्बाध्यविशेषचिन्तैवाश्रीयते इत्युत्तरम्॥ पूर्वसवर्णदीर्घे निषिद्धे वृद्धेरपीति पाठे अष्टावसरन्यायानित्यत्वेन क्वचिदपवादनिवृत्तावपि तद्विषये उत्सर्गप्रवृत्तिर्ज्ञाप्यते इति भावः॥

परे त्वथवेति भाष्यं पूर्वपक्षयुक्तित्वात्प्रौढ्या। अष्टावसरन्यायस्तु नास्त्येवोक्तनिर्देशात्। अत एव नान्तः पादमिति सूत्रे एङोऽतीत्यनुवर्त्य एङोऽति यद्यत्प्राप्नोति तस्य निषेध इत्यर्थमाश्रित्य सर्वनिषेधकत्वं तस्योक्तमिति वदन्ति॥

( तत्त्वालोकः ) भाष्ये-पूर्वपक्षी उत्तरयति—अस्तीति। इतिइत्यादौ। प्रदीपे-वृक्षाविति—तर्हीत्यादिः।

उद्द्योते-प्रकृत्यान्तःपादमव्यपरे इति पाठमभिप्रेत्य शङ्कते—नन्विति। तद्विषये—अपवादविषये। तस्य—"नान्त" इत्यस्य

( प्रयोजनान्तरभाष्यम् )

उत्तरार्थमेव तर्हि सिजर्थं वृद्धिग्रहणं कर्तव्यम्। सिचि वृद्धिरविशेषेणोच्यते सा क्ङिति मा भूत् न्यनुवीत् न्यधुवीत्॥

( उद्द्योतः ) इहार्थत्वे पूर्वपक्षिणा द्वेधा प्रौढ्यापि खण्डिते सिद्धान्ती तदभ्युपेत्याप्याह—उत्तरार्थमेवेति॥ नुधूधातू कुटादी॥

( तत्त्वालोकः ) भाष्ये-उत्तरार्थमिति—वृद्धिग्रहणं न्यनुवीदित्यादौ प्राप्तायाः सिचि वृद्धेः क्ङितीत्यनेन निषेधाय तस्येग्लक्षणत्वसम्पादनार्थमित्यर्थः। उद्द्योते—द्वेधा—बाध्यसामान्यचिन्तापक्षेण, अष्टावसरन्यायेन च। तत्र द्वितीयस्य प्रौढित्वमुपपादितं, प्रथमस्य तत् वक्ष्यमाणमित्याशयः।

( प्रयोजनान्तरनिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम्। अन्तरङ्गत्वादत्रोवङादेशे कृतेऽनन्त्यत्वाद्वृद्धिर्न भविष्यति॥

( प्रदीपः ) अन्तरङ्गत्वादिति। उवङादेशः सिचमेवापेक्षते, वृद्धिस्तु सिच्परस्मैपदे॥

( उद्द्योतः ) भाष्ये अनन्त्यत्वादिति। अचोऽनन्त्यत्वादित्यर्थः॥ नन्विक्परिभाषाभावेऽनन्त्यात्माश्रस्य सा प्राप्नोतीति अनन्त्यत्वादित्यसङ्गतमिति चेत्। न, हलन्तेषु हलन्तलक्षणया बाधेनास्या वृद्धेरजन्त एव व्यवस्थितेरित्याशयात्॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी तत् खण्डयति—नैतदिति। अन्तरङ्गेति—यत इत्यादिः। प्रदीपे-सिचम्—इडादिसिचम्।

उद्द्योते—सा—सिचि वृद्धिः। इति—इति हेतोः।

( सिद्धान्तिभाष्यम् )

यदि तर्हि सिच्यन्तरङ्गं भवति—'अकार्षीत्, अहार्षीत्, गुणे कृते रपरत्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति॥

( उद्द्योतः ) सिद्धान्त्याह—यदि तर्हीति॥ अत्र यदीत्यनेनापवादत्वात्तद्विषयेऽन्तरङ्गप्रवृत्तिरेव वक्तुमशक्येति ध्वनितम्॥ इत उत्तरग्रन्थस्तु सिद्धान्त्याशयानभिज्ञपूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरिति बोध्यम्॥

( तत्त्वालोकः ) भाष्ये—यदीति—यदि सिचि ( परे ) अन्तरङ्गं ( पूर्वं ) भवति, तर्हीत्यन्वयः।

उद्द्योते-अपवादत्वादिति—सिचि वृद्धेरित्यादिः। इत उत्तरेति—"मा भूदि"त्यादिः "कृतेऽपी"त्यन्त इत्यादिः।

( पूर्वपक्षिभाष्यम् )

मा भूदेवम्। "हलन्तस्य—" इत्येवं भविष्यति।

( तत्त्वालोकः ) भाष्ये—मा भूदेवमिति—यत इति शेषः। एवमग्रेऽपि।

( दूषणभाष्यम् )

इह तर्हि—न्यस्तारीत् न्यदारीत्। गुणे कृते रपर-

त्वे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ॥

( दूषणनिराकरणभाष्यम् )

मा भूदेवम् । "ल्रान्तस्य" इत्येवं भविष्यति ॥

( दूषणभाष्यम् )

इह तर्हि अलावीत् अयावीत् । गुणे कृतेऽवादेशे चानन्त्यत्वाद्वृद्धिर्न प्राप्नोति । हलन्तलक्षणायाश्च "नेटि" इति प्रतिषेधः ॥

( दूषणनिराकरणभाष्यम् )

मा भूदेवम् । "ल्रान्तस्य" इत्येवं भविष्यति ॥

( निराकरणबाधकभाष्यम् )

"ल्रान्तस्य" इत्युच्यते, न चेदं ल्रान्तम् ॥

( निराकरणसाधकभाष्यम् )

"ल्रान्तस्य" इत्यत्र वकारोऽपि निर्दिश्यते ॥

किं वकारो न श्रूयते ? ॥

लुप्तनिर्दिष्टो वकारः ॥

**( प्रदीपः ) लुप्तनिर्दिष्ट इति ।** लोपो व्योर्वलीति भावः ॥ किमत्र प्रमाणमिति चेदभियुक्तस्मरणमेव ॥

**( उद्द्योतः ) लुप्तनिर्दिष्ट** इत्यत्र पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थे **मयूरव्यंसकादित्वात्समासः ।** न च गुणे **वार्णादाङ्गमिति** न्यायेनावं बाधित्वा वृद्धौ आवादेशेऽलावीदित्यादेः सिद्धौ वप्रश्लेषो व्यर्थ इति वाच्यम् । **सिचि वृद्धिरित्यस्यापवादत्वाज्ज्ञानेनैव** एतत्परिभाषाऽज्ञानेनैवास्य प्रवृत्तेरदोषात् । न च वकारप्रश्लेषेऽश्वीदशावीदिति **शव** धातोर्नित्यवृद्ध्यापत्तिः । अस्या एकदेश्युक्तित्वेन **तदज्ञाने**नैवास्य भाष्यस्य प्रवृत्तेः जिरिचिर्याद्यज्ञानवद् इत्याहुः ॥ एतद्भाष्यप्रामाण्यात्स धातुः पवर्गीयान्तो ववयोः समानश्रुतित्वाल्लोके दन्त्योष्ठ्यश्रुतिरित्यन्ये ॥

**(तत्त्वालोकः)** उद्द्योते-**एतत्परिभाषेति-वार्णादाङ्गं** बलीय **इति** परिभाषेत्यर्थः । **अस्य—**अवादेशस्य । **अस्याः—वकारप्रश्लेषोक्तेः । तदज्ञानेन-**शवधात्वज्ञानेन । **स धातुः—**शव धातुः ।

( निराकरणबाधकभाष्यम् )

यद्येवम्—मा भवानवीत्, मा भवान् मवीद् अत्रापि प्राप्नोति ॥

**( उद्द्योतः )** अवेरादि वृद्ध्यवृद्ध्योरविशेष इति **आणुनिवृत्तये भाष्ये** माङ् प्रयुक्तः । एकादेशे पुनरप्यविशेषस्तदवस्थ इति **भवानि**त्युक्तं मवौ तु प्रयोजनान्तरासत्त्वेऽप्येकरूप्याय तत्प्रयोगः ॥

**( तत्त्वालोकः )** भाष्ये—**यद्येवमिति**—तर्हीति शेषः । **अत्रापीति—**उभयत्र नित्या वृद्धिरिति शेषः । अनयोराद्ये "नेटी"ति निषेधः, अन्त्ये च "अतो हलादेरि"ति विकल्प **इष्यते इति** भावः ।

उद्द्योते—**इति—**इति हेतोः । एवमग्रेऽपि । **तत्प्रयोगः—**मवि प्रयोगः ।

( निराकरणसाधकभाष्यम् )

अविमव्योर्नेति वक्ष्यामि ॥

( आक्षेपभाष्यम् )

तद्वक्तव्यम् ।

**( तत्त्वालोकः )** भाष्ये-**तत्**-अविमव्योर्नेति । **वक्तव्यमिति—**एवञ्च गौरवमिति भावः ।

( समाधानबाधकभाष्यम् )

न वक्तव्यम् । 'णिश्विभ्यां तौ निमातव्यौ' । यद्यप्येतदुच्यते । अथवैतर्हि णिश्व्योः प्रतिषेधो न वक्तव्यो भवति । गुणे कृतेऽयादेशे च यान्तानां नेत्येव प्रतिषेधो भविष्यति ॥

**( प्रदीपः ) णिश्विभ्यामिति ।** णिश्विग्रहणमकृत्वाऽविमवी प्रतिषेधार्थं वक्तव्यौ । एवं सति गौरवाभावः ॥ **निमातव्याविति ।** मेङो रूपम् । परिवर्तनीयावित्यर्थः ॥

**( उद्द्योतः ) अविमव्योर्ने**ति निषेधश्च मध्येऽपवादन्यायेन**अतो**·**ल्रान्तस्येत्यस्यैव** । तेन**अतोहलादे**रिति विकल्पो भवत्येवेति बोध्यम् । **सिचि वृद्धिरिति** सूत्रं तु अचैषीदित्यादौ गुणे कृते चरितार्थ**मेतन्मते** इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—गौरवं निराकरोति—**नेति ।** ननु तर्हि कथन्तत्रेष्टसिद्धिरित्यत आह—**णिश्वीति ।** ह्म्यन्तक्षणेति सूत्रे **इत्या**दः । **तौ**—अविमवी । उक्तं विवृणोति—**यद्यपीति ।** तत्रेति शेषः । **एतत्—**अविमवी **इत्येतत्** । **अथवैतर्हि—**तथापि । नन्वेवं कथं णिश्व्योः प्रतिषेध उपपद्यत इत्यत आह—**गुणे इति ।** नोनयतीति चङि प्रतिषिद्धे औनयीत् अश्वयीदित्यादावन्तरङ्गत्वादित्यादिः ।

उद्द्योते-तत्र णिश्व्योः स्थाने पठितयोः अविमव्योः मध्येऽपवादन्याय आश्रीयते, न तु ह्म्यन्तक्षणेत्यादिष्विति अर्धजरतीयतया **तत्रा**रुचेः सूचनायाह—**एतन्मते इति ।**

( भाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—न सिच्यन्तरङ्गं भवति-इति । यदयम् "अतो हलादेर्लघोः" इत्यकारग्रहणं करोति ॥

कथं कृत्वा ज्ञापकम् ? ॥

अकारग्रहणस्यैतत्प्रयोजनम् । इह मा भूत्—अकोषीत्, अमोषीत् । यदि सिच्यन्तरङ्गं स्याद्,

अकारग्रहणमनर्थकं स्याद् । गुणे कृतेऽलघुत्वाद्वृद्धिर्न भविष्यति । पश्यति त्वाचार्यो 'न सिच्यन्तरङ्गं भवति' इति । ततोऽकारग्रहणं करोति ॥

**( तत्त्वालोकः )** भाष्ये—**यत्**—यस्मात् । **इति**—इत्यत्र **स्यादिति—**तर्हि तत्रेति शेषः । कुत इत्यत आह **गुणे इति ।** तत्रान्तरङ्गत्वादित्यादिः ।

( ज्ञापकनिराकरणभाष्यम् )

नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ? ॥

यत्र गुणः प्रतिषिध्यते तदर्थमेतत्स्यात् । न्यकुटीत्, न्यपुटीत् ॥

**( उद्द्योतः )** नैतदस्ति ज्ञापकमिति । न्युकुटीदित्यादावन्तरङ्गतया वृद्धिबाधकगुणस्य निषेधेऽपि अष्टावसरन्यायेन न वृध्यभावः । सिद्धान्ते न्यायाभावादिति भावः ॥

**( तत्त्वा० )** भाष्ये-**एतत्**—प्रकारग्रहणम् । **अस्त्यन्यदिति**—यत इत्यादिः । **तदर्थं**—तत्र वृध्यभावार्थम् ।

उद्द्योते—ननु अष्टावसरन्यायेन न्यकुटीदित्यादावपि वृद्धयभावस्य सिद्धत्वात् युक्ता तस्य तज्ज्ञापकता कथं खण्ड्यत इत्यत आह—**न्यकुटीदिति । न्यायेति**—अष्टावसरन्यायेत्यर्थः ।

**( ज्ञापकान्तरभाष्यम् )**

यत्तर्हि ञिश्व्योः प्रतिषेधं शास्ति । तेन 'नेहान्तरङ्गमस्ति' इति दर्शयति ॥

**( उद्द्योतः ) यत्तर्हि णिश्व्योरिति ।** ननु णिश्विस्थानेऽविमवी इति वदन्तं प्रति णिश्विप्रतिषेधस्य ज्ञापकत्वाभिधानमयुक्तमिति चेत् । न । ज्ञापकत्वे संभवति निमानासंभव इत्याशयात् ॥

**( तत्त्वालोकः )** भाष्ये – **इह**—सिचि । **दर्शयति**—बोधयति । सिच्यन्तरङ्गाभावे गुणादितः प्राक्प्राप्ताया वृद्धेः वारणाय णिश्विग्रहणं सार्थकमिति भावः ।

**( पूर्वोक्तज्ञापकस्थिरीकरणभाष्यम् )**

यच्च करोत्यकारग्रहणं लघोरिति कृतेऽपि ॥

**( प्रदीपः )** न सिचीति न्यायादप्येतत्सिध्यति—**येन नाप्राप्तिन्यायेनान्तरङ्गस्य** वृध्या बाधनात् । प्रयोजनं च चिरिरिजिर्योर्यङ्लुगन्तानां च नयत्यादीनामचिरायीद् अजिरायीद् अनेनायीद् अचेचायीद इत्यादौ सिचि वृद्धिः । अन्यथा गुणायादेशयोः कृतयोर्ग्लान्तत्वाद्वृद्धिप्रतिषेधः स्यात् ॥

**( उद्द्योतः ) यच्च करोतीति ।** इग्ग्रहणाभावेऽकोषीदित्यादौ व्यञ्जनस्य वृद्धिवारणाय बाध्यविशेषचिन्तापक्षे त्वया सिचिवृद्धयपवादहलन्तलक्षणाया निषेधे तेन न्यायेन सिचि वृद्धयप्राप्तेः स्वीकारेण त्वद्रीत्या ज्ञापकमेवेति भावः ॥ एतेन सिच्यन्तरङ्गाभावेऽपि परत्वाद्गुणस्य वृद्धिबाधकताया दुर्वारत्वेनाकोषीदित्यादौ लघुत्वाभावादेव वृध्यभावेऽत इति व्यर्थमेवेत्यन्त्यं ज्ञापकमसङ्गतम् । तथा णिश्व्योर्गुणे वार्णपरिभाषयाऽयादेशं बाधित्वा प्राप्तवृद्धेर्निषेधाय णिश्विग्रहणमप्यावश्यकमित्याद्यमप्यसङ्गतमित्यपास्तम् ॥ एकदेशयुक्तित्वेनादोषात् ॥ एतदेव ध्वनयन्—'**यदि तर्हि' इति** सिद्धान्त्युक्तौ यद्यन्तर्भावसूचितं [ 'कृतेऽस्य चारितार्थ्येऽपि स्वप्राप्तिकाले प्राप्तस्य **येन नाप्राप्तिन्यायेन** बाधः' **इत्येतदाह—न्यायादपीत्यादि ।** बाध्यसामान्यचिन्तया च सकलान्तरङ्गबाध इति बोध्यम् । एवञ्च न ज्ञापकोपयोगः । नापि ज्ञापकसम्भवो, नापि प्रयोजनं, वार्णपरिभाषयाऽचिरायीदित्यादौ गुणे कृतेऽयादेशात्पूर्वं वृद्धिप्राप्तेः । न वा वकारप्रश्लेषस्य फलं, नाप्यविमव्योः प्रतिषेधस्येति शवधातौ वृद्धिविकल्प एवेति बोध्यम् ] ॥

**( तत्त्वा० )** भाष्ये-सिंहावलोकनन्यायेन निरस्तज्ञापकत्वस्यापि तस्य तज्ज्ञापकतां समर्थयते—**यच्चेति ।**

प्रदीपे—**अपिना**—ज्ञापकसमुच्चयः । न्यायमाह—**येनेति । अन्तरङ्गस्य**—गुणस्य । अपिना तत्समुच्चयाय ज्ञापकप्रयोजनमाह—**प्रयोजनमिति । अन्यथा**—सिच्यन्तरङ्गप्रवृत्तौ ।

उद्द्योते—**निषेधे**—नेटीत्यनेन निषेधे । **तेन न्यायेन**—अष्टावसरन्यायेन । **त्वद्रीत्येति**—न्यकुटीत्यादावपि तेन न्यायेन वृद्धयप्राप्तौ तत्राकारग्रहणं सिच्यन्तरङ्गाभावस्येति शेषः । **यद्यन्तर्भावसूचितमिति**—यद्यन्तर्भावेन सूचितमित्यर्थः, अस्य इत्येतदित्यनेनान्वयः । **कृते**—गुणे कृते । **अस्य**—वृद्धिशास्त्रस्य । **प्राप्तस्येति**—गुणादेरिति शेषः । **येन नाप्राप्ते** इत्यस्य स्वविषये स्वेतरेण प्राप्तस्य सर्वस्य स्वेन बाध इत्यर्थमभिप्रेत्याह—**बाध्यसामान्येति ।** सिद्धान्ते अष्टावसरन्यायासत्त्वेन न्यकुटीदित्यादौ अन्तरङ्गतया वृद्धिबाधकगुणनिषेधे प्राप्तवृद्धेः वारणाय तत्राकारग्रहणस्य, औनयीदित्यादौ अन्तरङ्गत्वात्कृतेऽपि गुणे "वार्णादि"ति परिभाषया अयादेशात्प्राक् प्राप्ताया वृद्धेः वारणाय तत्र णिश्विग्रहणस्य च सार्थक्यमभिप्रेत्याह—**नापि ज्ञापकेति ।**

**( सिद्धान्तिवार्तिकोपसंहारखण्डम् )**

## ॥ * ॥ तस्मादिग्लक्षणा वृद्धिः ॥ * ॥

**( भाष्यम् )**

तस्मादिग्लक्षणा वृद्धिरास्थेया ॥

**( उद्द्योतः )** एवं च न्यनुवीदित्यादौ उवङं बाधित्वा प्राप्ताया वृद्धेर्निषेधायेग्लक्षणा सिचिवृद्धिरास्थेयेत्युपसंहरति सिद्धान्ती—**तस्मादिति** भाष्ये । इग्लक्षणत्वेन निषेधायाकोषीदित्यादावनिको गुणव्यावृत्तये चेति भावः ॥ बाध्यसामान्यचिन्ता अष्टावसरन्यायश्चैकदेशयुक्तिर्न तु सिद्धान्तः ॥ अत एव न्यस्तारीदित्युपक्रम्य **हलन्तलक्षणायाश्च नेटीति** प्रतिषेध इत्युक्तमित्यलम् ॥

**(तत्त्वालोकः)** भाष्ये—**तस्मात्**-यस्मात् न्यनुवीदित्यादौ उवङं-बाधित्वा अकोषीदित्यादौ व्यञ्जनस्य च वृद्धिः प्राप्नोति **तस्मात्** । **इग्लक्षणा**—**इक्** लक्षणं-स्थानी यस्याः सा । **आस्थेया**—स्वीकार्या ।

उद्द्योते—**निषेधायेत्यनेन** तस्योत्तरार्थतामुपसंहृत्य **व्यावृत्तये** इत्यनेन इहार्थता उपसंहृतेति भावः । अष्टावसरन्यायस्य एकदेशयुक्तत्वस्य साधिततया बाध्यसामान्यचिन्तायाः एकदेशयुक्तत्वं प्रतिपादयति-**अत एवेति ।**

( इति पदोपस्थितिस्थापनाधिकरणम् ॥ )

---

**( अथ स्वतन्त्रविधित्वनिराकरणाधिकरणम् )**

**( ११४ आक्षेपवार्तिकप्रथमखण्डम् ॥ १२ ॥ )**

## ॥ * ॥ षष्ठ्याः स्थानेयोगत्वादिग्निवृत्तिः ॥ * ॥

**( भाष्यम् )**

षष्ठ्याः स्थानेयोगत्वात्सर्वेषामिकां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति दधि मधु ॥

**( प्रदीपः ) षष्ठ्या इति ।** स्वतन्त्रमिदं गुणवृद्ध्योर्विधायकमिति पूर्वः पक्षः ॥

**( उद्द्योतः ) विधायकमिति । इको यणचीत्यादि** तु स्वविषयेऽस्य बाधकमिति न तद्वैयर्थ्यरूपो दोषः ॥ भाष्ये **इङ्निवृत्तिरि**त्यस्य **गुणवृद्धिरूपादेशेने**त्यादिः ॥

( तत्त्वालोकः ) भाष्ये—षष्ठ्याः—इक इत्यत्र षष्ठ्याः । इक इति षष्ठ्यन्तमर्थपरं न तु अनुकरणमिति तत्र षष्ठ्या अनिर्धारितसम्बन्धविशेषत्वात् षष्ठी स्थाने योगेति प्रवर्त्तते इत्याशयेनाह—स्थाने योगेति । प्रदीपे—विधिनियमसम्भवे विधिरेव बलीयानिति न्यायेनाह—विधायकमिति ।

उद्द्योते—अस्य—इको गुणेत्यस्य । इति—इति हेतोः । तद्द्वयर्थ्येति—यणूशास्त्रवैयर्थ्येत्यर्थः । गुणेति—अनेन विधीयमानेत्यादिः ।

( अस्य स्वतन्त्रत्वे दूषणभाष्यम् )

पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥

( उद्द्योतः ) पुनर्वचनं 'मिदेर्गुण' इत्यादिरूपम् ॥

( तत्त्वालोकः ) भाष्ये – इदानीम्—अस्य स्वातन्त्र्येण गुणवृद्धिविधायकत्वे । उद्द्योते—आदिना—सार्वधातुकार्धधातुकयोः, मृजेर्वृद्धिः, सिचि वृद्धिः परस्मैपदेषु इत्यादिसंग्रहः ।

( ११४ स्वतन्त्रत्वे दूषणसमाधानवार्तिक २ यखण्डम् ॥ १३ ॥ )

## ॥ * ॥ अन्यतरार्थं पुनर्वचनम् ॥ * ॥

( भाष्यम् )

अन्यतरार्थमेतत्स्यात्—सार्वधातुकार्धधातुकयोर्गुण एवेति ॥

( प्रदीपः ) अन्यतरार्थमिति ॥ नन्वनिकोऽपि यथा स्यादिति विध्यर्थं स्यात्, न तु नियमार्थम्, नियमाद्विधेर्बलीयस्त्वात् ॥ एवं मन्यते-द्वितीयं गुणवृद्धिग्रहणमनुवर्तते, तेन गुणवृद्धिप्रदेशेषु इक इत्यस्योपस्थानान्नास्त्यनिकः प्रसङ्गः ॥

( उद्द्योतः ) नियमाद्विधेरिति । प्राप्तबाधादिरूपदोषापत्त्या परिसंख्यारूपो नियमो गुरुरिति भावः ॥ द्वितीयमिति । केवलविधायकत्वेऽनुवृत्त्यैव सि इहत्यगुणवृद्धिग्रहणमनर्थकं स्यादिति भावः ॥ यातीत्यादिनिर्देशैर्गुरोरपि नियमस्याश्रयणमित्यन्ये ॥

( तत्त्वालोकः ) भाष्ये - अन्यतरार्थं—पर्यायेण सर्वत्र प्राप्तयोरनेन गुणवृद्ध्योः तत्तन्निमित्ते "सार्वधातुकार्धधातुकयोः गुण एव न वृद्धिः, मृजेर्वृद्धिरेव न गुण" इत्यादिरूपेण अन्यतरस्य विधानाय अन्यतरस्य च निवृत्त्यर्थम् । एतत्—पुनर्वचनम् ।

प्रदीपे-शङ्कते—नन्विति । पुनर्वचनमिति शेषः । उत्तरयति—एवमिति । तस्य वाक्यभेदेन विधायकत्वोपस्थापकता चेति भावः ।

उद्द्योते—आदिना स्वार्थहानिपरार्थकल्पनयोः परिग्रहः । दोषेति—दोषत्रयेत्यर्थः । निर्देशैरिति—अनिको वारणसंभवे इति शेषः ।

( ११५ आक्षेपवार्तिकप्रथमखण्डम् ॥ १४ ॥ )

## ॥ * ॥ प्रसारणे च ॥ * ॥

( भाष्यम् )

प्रसारणे च सर्वेषां यणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति-याता वाता ॥

( प्रदीपः ) प्रसारणे चेति । तुल्यन्यायत्वादुपन्यासः । इग्यण इत्यत्र यण इति स्थानषष्ठी । तेन यणः स्थाने इग्भवति, स च संप्रसारणसंज्ञ इति वाक्यार्थः स्यात् । वाक्यभेदेन च कार्यद्वयं विधीयते ॥

( उद्द्योतः ) तुल्यन्यायेति । षष्ठीदर्शनरूपो न्यायः ॥ वाक्यभेदेनेति । ष्यङः संप्रसारणमित्यादिनिर्देशाय सामान्येन संज्ञाविधानार्थं वाक्यभेद आवश्यक इति भावः ॥

( तत्त्वालोकः ) भाष्ये—प्रसारणे चेति—सम्प्रसारणसंज्ञाविधायकसूत्रैकदेशे यण इत्यत्र षष्ठ्याः स्थानेयोगत्वात्तेन विधीयमानेग्रूपादेशेनेत्यर्थः । प्रदीपे—नन्वनन्तरस्यैति न्यायेन "इग्यण" इति विहितस्यैव संप्रसारणसंज्ञा स्यान्न तु "ष्यङः" इत्यादिविहितस्येत्यत आह—वाक्यभेदेन चेति ।

( स्वातन्त्र्ये दूषणभाष्यम् )

पुनर्वचनमिदानीं किमर्थं स्यात् ? ॥

( तत्त्वालोकः ) पुनर्वचनं—वचिस्वपीत्यादिरूपम् । इदानीम्—अस्य स्वतन्त्रतया इग्विधायकत्वे ।

( ११५ स्वातन्त्र्ये दूषणनिराकरणवार्तिक २ यखण्डम् ॥ १५ ॥ )

## ॥ * ॥ विषयार्थं पुनर्वचनम् ॥ * ॥

( भाष्यम् )

विषयार्थमेतत्स्यात्, वचिस्वपियजादीनां कित्येवेति ॥

( उद्द्योतः ) विषयार्थमित्यस्य निमित्तनियमार्थमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये - एतत्—पुनर्वचनम् ।

( ११६ आक्षेपवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ उरण्रपरे च ॥ * ॥

( भाष्यम् )

उरण्रपरे च सर्वेषामृकाराणां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—कर्तृ हर्तृ ॥

( प्रदीपः ) कर्तृ हर्तृ इति । अन्तरतमस्याभावात्सर्वेऽप्यणः पर्यायेण प्राप्नुवन्ति ॥

(तत्त्वा०) भाष्ये—समानषष्ठीदर्शनत्वात् स्वतन्त्रतया अविधायकत्वाय उपन्यस्यति—उरण्रपरे चेति । उरणित्यत्र ऋरिति षष्ठ्याः स्थानेयोगत्वात्तेन विधीयमानाण्रूपादेशेनेत्यर्थः । उरण् भवति स च रपरो भवतीति वाक्यार्थः । वाक्यभेदेन च कार्यद्वयं विधीयते ।

( ११७ सर्वाक्षेपनिराकरणसिद्धान्तवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ॥

षष्ठ्यधिकारे इमे योगाः कर्तव्याः । एकस्तावत् क्रियते तत्रैव । इमावपि योगौ षष्ठ्यधिकारमनुवर्तिष्येते ॥

( प्रदीपः ) सिद्धमिति । स्वातन्त्र्यमेषां निवर्तयति । तेन यत्र षष्ठी तत्रैषामुपस्थानम् । अङ्गस्य वच्यादीनामत इद्धातो-

रित्यादौ ॥ **इमावपीति ।** स्वरितत्वादनयोरन्तरालवर्तिभिश्चायोग्यत्वात्संबन्धाभावः ॥

**( उद्द्योतः )** गुणादिविधावपि अधिकारलब्धा षष्ठीत्याह—**अङ्गस्येति ।** तत्रो**रण् रपर इ**त्यत्र षष्ठीत्यनुवर्त्य पूर्वोक्तार्थः सुलभः। एतयोरपि तत्रानुवृत्त्या षष्ठीति संबन्धेन तदर्थलाभः ॥ तत्रानुवर्तनं यदि लौकिकोऽधिकारस्तर्हि स आकाङ्क्षानिबन्धनः। **न च षष्ठीस्थान** इत्यस्याकाङ्क्षेत्यत आह—**स्वरितत्वादिति ॥** लक्ष्यानुरोधाच्चेत्यपि बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**षष्ठ्यधिकारे**—षष्ठी स्थानेयोगेति सूत्रस्थषष्ठ्यधिकारे। **एकः**—उरण् रपर **इ**ति। **तत्र**—षष्ठ्यधिकारे। **इमौ**—**इ**को गुणवृद्धी, **इग्यणः** सम्प्रसारणमित्येतौ।

प्रदीपे—**तेन**—षष्ठ्यधिकारस्थत्वेन। तथा च **इ**को **गुणे**त्यस्य यत्र स्थानषष्ठीनिर्दिष्टस्य गुणवृद्धिशब्दाभ्यां गुणवृद्धी विधीयेते तत्रेक **इ**ति षष्ठ्यन्तं पदमुपतिष्ठते इत्यर्थः। एवम् इग्यण इत्यस्य यत्र स्थानषष्ठीनिर्दिष्टस्य सम्प्रसारणं विधीयते तत्रेग्यण **इ**त्युपतिष्ठते **इ**त्यर्थः। एवम् उरणित्यस्य यत्र स्थानषष्ठीनिर्दिष्टस्य उरण् विधीयते तत्र रपर **इ**त्युपतिष्ठते इत्यर्थः। एवञ्चैषां न स्वतन्त्रतया तत्तद्विधायकता, किन्तु विधिप्रदेशे तत्तदुपस्थापकतैव। संज्ञा तु अर्थापत्तिमूलकवाक्यान्तरेण साध्येत्याशयः। उपस्थानस्थानानि निर्दिशति—**अङ्गस्येत्यादिना ।** नन्वेवमनयोः मध्यवर्त्तिभिः सम्बन्धः कुतो नेत्यत आह—**अनयोरिति ।** उद्द्योते—**षष्ठीत्याह**—षष्ठीत्यस्य सूचनाय, सार्वधातुकेत्यादौ निर्देश्ये आह। **तत्र**—तेषु। **तत्र**—षष्ठ्यधिकारे। **तत्रेति**—नन्वित्यादिः। बहुषु स्वरितत्वकल्पने गौरवादाह—**लक्ष्येति ।**

**( भाष्यम् )**

**अथवा—षष्ठ्यधिकारे इमौ योगावपेक्षिष्यामहे ॥**

**( प्रदीपः ) अथवेति । षष्ठीस्थाने योगे**त्यत्र योगविभागः करिष्यते—**"षष्ठी,"** यदेतदनुक्रान्तं तद्, यत्र षष्ठी, तत्रोपतिष्ठत **इ**त्यर्थः। तत्र **योग्यत्वादनयोरेवापेक्षा नान्येषाम्**। ततः—**"स्थानेयोगा" इति,** षष्ठीत्येतदुपतिष्ठते ॥

**( उद्द्योतः ) षष्ठीति । योगविभागे च षष्ठीति** सूत्रं साकाङ्क्षमिति लौकिकोऽपेक्षालक्षणोऽधिकार **इ**ति भावः ॥ **योग्यत्वादिति ।** व्याख्यानाच्चेत्यपि बोध्यम् ॥ **उपतिष्ठत इति ।** अनुवर्तेत इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—एवं शास्त्रीयमधिकारमुपपाद्य लौकिकं तमुपपादयति—**अथवेति ।**

प्रदीपे—ननु षष्ठीपदस्य स्थानेयोगेत्यनेन सम्बद्धतया अनयोराकांक्षाऽभावात् कथमाकांक्षालक्षणो लौकिकोऽधिकार **इ**त्यत आह—**षष्ठी स्थाने इति ।**

**( समाधानान्तरभाष्यम् )**

**अथवेदं तावदयं प्रष्टव्यः—"सार्वधातुकार्धधातुकयोर्गुणो भवति" इतीह कस्मान्न भवति—याता वाता ? ॥ इदं तत्रापेक्षिष्यते—"इको गुणवृद्धी" इति ॥ यथैव तर्हि इदं तत्रापेक्षिष्यते, एवमिहापि तदपेक्षिष्यामहे "सार्वधातुकार्धधातुकयोः" इति ॥ इको गुणवृद्धी ॥३॥**

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥ ३ ॥

---

**( प्रदीपः ) अथवेति । अन्यतरार्थं पुनरिति** वदताऽवश्यमेवं संबन्धः कर्तव्यो—'यत्र गुणवृद्धिशब्दोच्चारणेन गुणवृद्धी विधीयेते तत्रेक इति उपतिष्ठते' इति। अन्यथा याता वातेत्यादिषु विध्यर्थत्वे संभवति कथमन्यतरार्थं पुनर्वचनं स्यादित्युच्यते। अवश्यकर्तव्यायां चापेक्षायामेकवाक्यतयैवापेक्षास्तु। तेनैकरूप एवार्थो, न तु वाक्यभेदेन स्वातन्त्र्यं पारतन्त्र्यं च ॥ **तदपेक्षिष्यामह इति ।** अस्य स्वातन्त्र्यं निरसितुमित्यर्थः ॥ ३ ॥

इत्युपाध्याय**जैयटपुत्रकैयट**कृते महाभाष्यप्रदीपे प्रथमाध्यायप्रथमपादे तृतीयमाह्निकम् ॥ ३ ॥

---

**( उद्द्योतः ) अन्यतरार्थमिति ।** केवले विधित्वे पुनर्गुणवृद्धिग्रहणवैयर्थ्यमुक्तमेव ॥ **न तु वाक्यभेदेनेति ।** एकवाक्यत्वे संभवति तस्यायुक्तत्वमिति भावः। एतेने**ग्यण** इत्यपि व्याख्यातम्। तत्रापि संज्ञाविधाने इगनुवाद्यः। अनुवाद्यत्वं च ष्यङः **संप्रसारण**मित्यादीनां सार्थक्यायावश्यकम्। एवं चैकरूप्यायानुवाद्यत्वमेवास्तु। **न तु** विधेयत्वं **वचिस्वपी**त्यादीनां नियामकत्वापादकमिति **बोध्यम् ॥** **तदपेक्षिष्यामह इति ।** एवं च यथा विधेः स्थान्याकाङ्क्षा, तथास्यापि स्वसंबन्धिविधेयबोधकशास्त्रापेक्षेति एकवाक्यतैवेति भावः। एवं च स्वातन्त्र्यं दूरापास्तमेव। तदाह—**अस्येति ।** आवृत्तौ तु न मानमिति शिवम् ॥ ३ ॥

इति श्री**शिवभट्ट**सुत**सतीगर्भजनागोजी ( नागेश ) भट्ट**कृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

---

**( तत्त्वालोकः )** भाष्ये—एवमेषां स्वातन्त्र्यं सम्भाव्य प्रकारद्वयेन समाहितम्। वस्तुतस्तु एषां स्वातन्त्र्यमेव नेति प्रतिवन्द्या साधयति—**अथवेति । अयम्**—एषां स्वातन्त्र्यवादी। **इ**दमित्यनेन निर्देश्यमाह—**सार्वधातुकेति ।** उत्तरयति—**इदमिति । तत्र**—सार्वधातुकेत्यत्र। **इ**दमित्यनेन निर्देश्यमाह—**इक इति । इहापि—इ**को गुणेत्यत्रापि। तदित्यनेन निर्देश्यमाह—**सार्वेति**

प्रदीपे—**विध्यर्थत्वे इति**—सार्वधातुकेत्यस्येत्यादिः। **अपेक्षायामिति**—तत्र तत्र तस्य तस्येत्यादिः। **अस्य**—इको गुणेत्यस्य।

उद्द्योते—**केवले इति**—**इ**को गुणेत्यस्येत्यादिः। **तस्य**—वाक्यभेदस्य। **तत्रापि**—इग्यण **इ**त्यत्रापि। **अस्यापि**—**इ**को गुणेत्यस्यापि। नन्वावृत्त्या भवतु द्वितीयोऽर्थ **इ**त्यत आह—**आवृत्तौ त्विति ।**

**इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे तृतीयमाह्निकम् ।**

**इति भगवत्पतञ्जलिमुनिविरचितं पाणिनीयं विधिशेषप्रकरणम् ।**

( ३ परिभाषासूत्रम् ॥ १ । १ । ४ । आ १ सू० )

## न धातुलोप आर्धधातुके ॥ १ । १ । ३ ॥

**( प्रदीपः ) न धातुलोप आर्धधातुके ॥ ४ ॥** गुणवृद्ध्योः प्राधान्यादयं निषेधो, न तु तद्गुणभावादिक्परिभाषायाः। **दीधीवेवीटा-मिति** चासंबद्धं परिभाषाया निषेधे स्यात् ॥ कृत्स्नस्य धातोर्लोपे गुणवृद्धिप्रसङ्गाभावादनर्थको निषेधः स्यादिति सामर्थ्याद्धात्वेकदेश-लोपोऽत्र धातुलोपोऽभिमतोऽवयवक्रिययापि समुदायस्य व्यपदेश-दर्शनात्। यथा पटो दग्ध इति । अथवा समुदायशब्दोऽवयवे तद्रूपारोपाद्वर्तते ॥

**( उद्द्योतः ) न धातु ॥ ४ ॥ प्राधान्यादिति ।** प्राधान्यं च संस्कार्यत्वरूपम् ॥ **असंबद्धमिति । अलोन्त्यस्येत्य**नेनापि इक एव प्रसक्त्या परिभाषानिषेधे वैयर्थ्यम् ॥ **कृत्स्नस्येति । दुरीणो लोपेश्चे**ति रक्संनियोगेन कृत्स्नधातुलोपोऽस्तीति तदसंभवो **नोक्तः** ॥ **अथवेति ।** आद्यपक्षे अवयवधर्मस्य समुदाये आरोपोऽन्त्ये समुदाय-धर्मस्य प्रवृत्तिनिमित्तस्य अवयवे आरोपितत्वमिति भेदः ॥

**( तत्त्वालोकः )** प्रदीपे—**तद्गुणभावात्**-तयोः इक्परि-भाषोपस्थितये प्रदेशप्रदर्शनलिङ्गतया गुणभूतत्वात्। कुत इत्यत आह—**दीधीति। इति**—इति हेतोः । **सामर्थ्यात्**—निषेधसामर्थ्यात्। **यथेति**—पटैकदेशे दग्धे इति शेषः। **इति**—इत्यत्र। **तद्रूपा-रोपात्**—समुदायरूपारोपात्। उद्द्योते—**इति**—इति हेतोः। **तद्-सम्भवः**—कृत्स्नधातुलोपासम्भवः। **अवयवधर्मस्य**—क्रियारूपस्य।

( पदकृत्यनिर्वचनाधिकरणम् )

( आक्षेपभाष्यम् )

### धातुग्रहणं किमर्थम् ? ॥

**( प्रदीपः ) धातुग्रहणमिति ।** उपसर्जनस्यापि यथा परामर्श-स्तथा **केषां शब्दानामित्यत्र** प्रतिपादितम् ॥ विनापि धातुग्रहणेन लोपविशेषणमार्धधातुकग्रहणं विज्ञास्यते। अनुबन्धलोपस्य चानैमित्ति-कत्वाद्भवितेति गुणनिषेधो न भविष्यतीति प्रश्नः ॥

**( उद्द्योतः ) परामर्शः**-शब्देन पृथगुपादानम् ॥ **प्रतिपादित-मिति ।** बुद्ध्या पृथङ् निष्कर्षादिति भावः ॥ **लोपविशेषणमिति ।** सूत्रे श्रुतत्वादिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—प्रश्नबीजमाह—**विनापीति । इति**—इत्यत्र। **इति**—इति हेतोः।

( समाधानभाष्यम् )

### इह मा भूत्-लूञ् लविता लवितुम्, पूञ् पविता पवितुम् ॥

**( प्रदीपः )** सिद्धान्ते तु गुणवृद्धिविशेषणमार्धधातुकग्रहणमित्य-भिप्रायः ॥ अनुबन्धो न धात्वेकदेशो, यस्मादुपदेश एवेत्संज्ञा। प्रयोगे तु लूशब्द एव धातुसंज्ञः। केवलमसौ ञित्कार्यं लभते। लूशब्दस्यैव हि क्रियावाचित्वमिति तस्यैव धातुसंज्ञा युक्ता ॥

**( उद्द्योतः )** सिद्धान्ते त्विति । निषेध्यत्वेन गुणवृद्ध्योः शब्दप्राधान्याल्लोपस्य तद्विशेषणत्वादिति भावः ॥ न च लोपशब्दो-धिकरणघञन्तः। **अदर्शनं लोप** इत्यादौ भावसाधनस्यैव प्रसिद्धत्वात्॥ गणे सानुबन्धस्य पाठाद् विशिष्टस्यैव धातुत्वं स्यादत आह—**अनुबन्ध इति ॥ यस्मादिति ।** उपदेशपदाभावेऽपि अन्तरङ्गत्वात्सर्वतः पूर्व सा। धातुसंज्ञा तु प्रत्ययविशेषे विधित्सित **इति** भावः ॥ धातुसंज्ञेत्सं-ज्ञयोः समकालत्वेऽपि न क्षतिरित्याह—**लूशब्दस्यैवेति ।** अन्वयव्य-तिरेकाभ्यां तस्यैव क्रियावाचित्वावगमात्। गणपठितक्रियावाचिनां च धातुत्वविधानादिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**इत्संज्ञेति**—अनुबन्धस्येत्यादिः। **असौ**—लूशब्दः। **हि**—यतः। **इति**—इति हेतोः। **तस्यैव**—लूश-ब्दस्यैव। उद्द्योते—"सर्वो हि गुणमुल्लङ्घ्य प्रधानेनैव सम्बध्यते" **इति** न्यायेनाह—**शाब्देति ।** अश्रुतत्वेऽपीत्यादिः। **तद्विशेषणत्वात्**—निषेधविशेषणत्वात्। अस्य उपक्षीणतया आर्धधातुकरूपविशेषणस-म्बन्धयोग्यत्वाभावादिति शेषः। **घञन्त इति**—सन् आर्धधातुक-विशेषणमिति शेषः। **एवेति**—तस्येति शेषः। **गणे इति**—नन्वित्यादिः। **सा**—इत्संज्ञा। **संज्ञयोरिति**—अविरोधेन धातुसंज्ञाया इत्संज्ञोत्तर-भावित्वे मानाभावात्तयोरिति शेषः। **तस्यैव**—लूशब्दस्यैव। नन्वेव-मपि केवलगणपठितानां धातुसंज्ञाविधानेन सानुबन्धकस्य तस्य सा स्यादेवेत्यत आह—**गणपठितेति ।**

( आक्षेपभाष्यम् )

### आर्धधातुक इति किमर्थम् ? ॥

**( तत्त्वालोकः )** नन्वत्रार्धधातुके इत्यस्यासत्त्वेऽपि धातुलोप इत्यत्र धातोर्लोपो यस्मिन्निति बहुव्रीहौ धातुलोपनिमित्ते गुण-वृद्धी न स्त इत्यर्थे रोरवीतीत्यत्र लुकोऽनैमित्तिकत्वाद् गुणनिषेधाप्रा-प्तिरित्याशयेन शङ्कते—**आर्धधातुकेति ।**

( समाधानभाष्यम् )

### 'त्रिधा बद्धो वृषभो रोरवीति' ( ऋ.सं. ४।५८।३ )॥

**( प्रदीपः ) रोरवीतीति ।** सत्यार्धधातुकग्रहणे शब्दवत्त्वादन्य-पदार्थस्य बहुव्रीहिरसंदिग्धो भवति नान्यथा ॥ क्रमेण सूत्रप्रत्याख्याना-यार्धधातुकस्य च लोपविशेषणत्वे धातुग्रहणानर्थक्यप्रतिपादनाय प्रत्यु-दाहरणोपन्यासः ॥

**( उद्द्योतः ) रोरवीतीति ।** यङ्लुगन्तस्य रूपम् ॥ **शब्दव-त्त्वात्** शब्देनोपादानात् ॥ **नान्यथेति ।** अन्यथाऽन्तरङ्गत्वात्तत्पुरुष एव स्यादित्यर्थः ॥ ननु पदप्रयोजनचिन्ता वृत्तिकारस्योचिता, न भाष्यकारस्येत्यत आह—**क्रमेणेति ।** तत्तत्पदप्रयोजनखण्डनक्रमेणे-त्यर्थः ॥ **क्रममेवाह—आर्धधातुकस्य चेति ॥**

**( तत्त्वालोकः )** उद्द्योते—रुधातोः यङि अनैमित्तिकत्वेनान्तर-ङ्गत्वात्तल्लुकि अन्तरङ्गत्वाद्द्वित्वेऽभ्यासकार्ये "भूवादि"सूत्रेण धातुत्वा-ल्लटि तिपि शपि "चर्करीतम्" इत्यस्यादादौ पाठात्तल्लुकि "यङो वा' इत्यनेन तस्येटि तन्निमित्ते गुणेऽवादेशे च "रोरवीति" इति

निष्पन्नमित्यभिप्रेत्याह—**यङ्लुगन्तस्येति** । **अन्यथा**—आर्धधातुकग्रहणेऽसति। **स्यादिति**—तथा च धातोर्लोपे सति गुणवृद्धी न स्त इत्यर्थे रोरवीतीत्यत्र धात्वंशयङो लुक्सत्त्वात् गुणनिषेध आपद्येतेति बहुव्रीहिलाभाय आर्धधातुकग्रहणमावश्यकमिति भावः।

## ( अथार्धधातुकपदार्थान्वयविचाराधिकरणम् )

### (आक्षेपभाष्यम् )

**किं पुनरिदमार्धधातुकग्रहणं लोपविशेषणम्—'आर्धधातुकनिमित्ते लोपे सति ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति।**

**आहोस्विद् गुणवृद्धिविशेषणमार्धधातुकग्रहणम्—'धातुलोपे सत्यार्धधातुकनिमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवतः' इति ? ॥**

**( प्रदीपः ) किं पुनरिति ।** आर्धधातुकग्रहणं लोपविशेषणं वा, गुणवृद्धिविशेषणं वा, बहुव्रीहिपक्षे तूभयविशेषणं वेति पक्षत्रयसंभवात् प्रश्नः ॥

**( उद्द्योतः ) लोपविशेषणम् ।** श्रुतत्वात् ॥ **गुणादिविशेषणम् ।** प्राधान्यात् ॥ तत्र लोपविशेषणत्वे 'आर्धधातुके परे पूर्वस्य धात्वंशस्य लोपे' इति वाच्योऽर्थस्तत्फलितमुक्तम्—**भाष्ये आर्धधातुकनिमित्ते लोप इति ।** एवं गुणवृद्धिविशेषणत्वे 'आर्धधातुके परे प्रत्यासत्त्या पूर्वस्य धातोर्गुणवृद्धी' इति वाच्योऽर्थः । अनुवादेऽपि **'इको गुणवृद्धी' 'अचश्चेति'** परिभाषातिरिक्तपरिभाषाणां प्रवृत्तिस्वीकारात् । तत्फलितमुक्तम्—**आर्धधातुकनिमित्ते ये इति ॥ प्राप्नुत** इत्यनेन प्रसक्तस्यैव निषेध इति सूचयति ॥ **बहुव्रीहीति ।** उभयानुग्रहायेति भावः ॥ यद्यपि धातुलोप इति समस्तमार्धधातुकविशेषणं तथापि विशेषणशब्दः परिच्छेदकपर इति न दोषः ॥

**(तत्त्वालोकः)** प्रदीपे—**आर्धधातुकेति**—तत्पुरुषपक्षे इत्यादिः। भाष्यस्योपलक्षणत्वादाह—**बहुव्रीहीति ।** कण्ठतोऽस्य कोटेरनुक्तिस्तु बहुव्रीहिपक्षस्य निर्दुष्टतासूचनायेति भावः।

उद्द्योते—**आर्धधातुकविशेषणमिति**—एवञ्चोभयविशेषणमित्यसङ्गतमिति भावः । **इति**—इति हेतोः।

### ( विशेषप्रश्नभाष्यम् )

**किं चातः ? ॥**

**( तत्त्वालोकः )** अन्यतरपक्षे विशेषं पृच्छति—**किं चात इति ।**

### विशेषदर्शनभाष्यम् )

**यदि लोपविशेषणम्, 'उपेद्धः, प्रेद्धः' अत्रापि प्राप्नोति ।**

**अथ गुणवृद्धिविशेषणम्, 'क्नोपयति' अत्रापि प्राप्नोति ॥**

**( तत्त्वालोकः )** अन्यतरपक्षे दोषरूपं विशेषं दर्शयति—**यदीति । विशेषणमिति**—तर्हीति शेषः। एवमग्रेऽपि । **अत्रापीति**—इन्धेः क्ते तन्निमित्ते "अनिदिताम्" इति नलोपे धस्त्वे प्रोपयोगे आद्गुण इति गुणे निष्पत्स्यमानयोः अनयोरपीत्यर्थः । आद्गुण इति गुणस्य निषेध इति शेषः । **अत्रापीति**—क्नूयधातोः णिचि "अर्त्तिह्री"ति पुकि तन्निमित्ते "लोपो व्योरि"ति यलोपे णिजूपार्धधातुकनिमित्तके "पुगन्ते"ति गुणे निष्पत्स्यमाने अस्मिन्नपीत्यर्थः । पुगन्तेति गुणस्य निषेध इति शेषः ।

### ( उभयेष्टापत्तिभाष्यम् )

**यथेच्छसि तथास्तु ॥**

**( तत्त्वालोकः )** सिद्धान्ती उभयथा दोषाणां सुपरिहरतासूचनाय यथेच्छमङ्गीकरोति—**यथेति ।**

### ( प्रथमपक्षाङ्गीकारभाष्यम् )

**अस्तु लोपविशेषणम् ॥**

### ( आक्षेपभाष्यम् )

**कथम्—'उपेद्धः प्रेद्धः' इति ? ॥**

**( प्रदीपः ) प्रेद्ध इति । नन्वाद्गुणो**ऽनिग्लक्षण इति तन्निषेधो न भविष्यति ॥ परिहारान्तराभिधानादेतन्नाश्रितमित्यदोषः ॥

**( उद्द्योतः ) नन्वाद्गुण इति ॥** नन्विकस्थानिकत्वादयमपि इग्लक्षणः । न चात्राप्यनुवृत्तमिक इति स्वरूपपरम् । उत्तरसूत्रे इव स्वरूपपदार्थकत्वव्यवस्थापकचशब्दाभावादिति चेत् । न, । **इको गुणवृद्धी** इति संपूर्णमनुवर्त्य यत्रेदं तत्र **न धात्वित्युप**तिष्ठत इत्यर्थेनास्यापि परिभाषात्वाङ्गीकार इति भावात् । यद्वा यत्रेदं तद्विहिते गुणवृद्धी नेत्यर्थः । तद्वक्ष्यति **'यत्रेक्परिभाषा व्याप्रियते तत्रायं निषेधः'** इति **इक्प्रकरणा**दिति भाष्यप्रतीके॥ अर्थाधिकारेण स्वरूपपरस्यैवेक इत्यस्यानुवर्तनाद्वा ॥

**( तत्त्वा० )** भाष्ये-आद्यपक्षोक्तदूषणोद्धाराय पृच्छति-**कथमिति ।** प्रदीपे—**इति**—इति हेतोः। अस्य "अनेन इग्लक्षणेने"ति शेषः। **एतत्**—परिहरणम्। **इति**—इति हेतोः।

उद्द्योते-**अयं**—न धातुलोप इति योगः। **अत्रापि**—न धातुलोप इति सूत्रेऽपि । **उत्तरसूत्रे**—क्ङितिचेति सूत्रे । **अस्यापि**—न धातुलोप इति सूत्रस्यापि । **तद्वक्ष्यति**—तस्माद् वक्ष्यति।

### ( समाधानभाष्यम् )

**बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

**( प्रदीपः ) बहिरङ्ग इति ।** यदा पूर्वं प्रत्ययः, पश्चादुपसर्गयोगस्तदा प्रतिषेधोऽन्तरङ्गो गुणो बहिरङ्गः ॥ यदा तु पूर्वमुपसर्गयोगस्तदा गुणोऽन्तरङ्गः पश्चात्प्रत्ययोत्पत्तौ निषेधो बहिरङ्गः । सर्वथा बहिरङ्गस्यासिद्धत्वादिष्टसिद्धिः । ननु **नाजानन्तर्ये** इति निषेधात् कथं परिभाषाप्रवृत्तिः ॥ यत्र कार्यविधावानन्तर्येणाचोराश्रयणं तत्र निषेधादनुपस्थानं परिभाषाया यथाऽक्षयरिति । तत्र **ह्रीको यणचीति** वचनादिगचोराश्रयणम् । अस्मिंस्तु प्रतिषेधसूत्रे नास्त्यचोराश्रयणमित्यदोषः ॥

**( उद्द्योतः ) यदेति । पूर्वं धातुः साधनेनेति** सिद्धान्तपक्षे इत्यर्थः ॥ **यदा त्विति । पूर्वं धातुरुपसर्गेणेति** पक्षे पूर्वमेव जातस्य निषेधायोगादिति भावः ॥ **बहिरङ्गस्यासिद्धत्वादिति ।** द्वितीये बहिरङ्गनिमित्तस्यासिद्धत्वाद् विधिप्रवृत्तिकालेऽनिष्पन्नत्वात् निषेधाप्राप्त्येष्टसिद्धिरित्यर्थः ॥ एतेन 'जातस्य बहिरङ्गस्यान्तरङ्गे कर्तव्येऽनेनासिद्धत्वप्रतिपादनेऽपि जातेऽन्तरङ्गे पश्चात्प्राप्तबहिरङ्गस्यानेनासिद्धत्वप्रतिपादने मानाभावः फलाभावो ज्ञापकविरोधश्चे'त्यपास्तम् ॥ परं स्वयं पक्षः **सुट्कात्पूर्वं** इत्यादिसूत्रेषु **भाष्ये** दूषित इति भाष्यो-

क्तमेव सम्यक् ॥ नन्विति । इयं च षत्वतुकोरिति सूत्रेण ज्ञापिता । अन्यथा बहिरङ्गासिद्धत्वेनैव सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ अचोरिति । द्वित्वमविवक्षितम्, धर्मिग्राहकमानस्य तथैव सत्त्वात् । अनुपस्थानमिति । अस्यात्रेत्यादिः ॥ तत्र हीति । ततश्च यण्यूडसिद्धो नेत्यर्थः ॥ "तेनासिद्धपरिभाषाया अनित्यत्वं ज्ञाप्यते । अत एव भाष्ये—विप्रतिषेधसूत्रभिन्नस्थले न काप्येतदुल्लेखो यथाऽसिद्धपरिभाषाज्ञापकं विप्रतिषेधसूत्रे उक्तमपि पुनर्वाहऊठ् सूत्रे उक्तमिति" विवरणकृतः ॥ अस्मिन्निति । निषेधस्य प्राप्तिपूर्वकत्वात्पश्चात्प्रवर्तमाने इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये-सिद्धान्ती प्रथमपक्षोक्तदोषपरिहारं दर्शयति—बहिरङ्ग इति ।

प्रदीपे—एकदेशिपक्षमाह—यदा त्विति । योग इति—पश्चात्प्रत्यय इति शेषः । उपत्ताविति—तन्निमित्ते नलोपे च सति प्रवृत्तियोग्य इति शेषः । अत्र पक्षे भाष्यविरोधं निराकरोति—सर्वथेति । परिभाषेति—अन्तरङ्गपरिभाषेत्यर्थः । उत्तरयति—यत्रेति । आनन्तर्येण—अन्यप्रतियोगिकानन्तर्येण । इति—इत्यत्र । हि—यतः । इगचोः—निमित्तभूताच्प्रतियोगिकानन्तर्यानुयोगिनोऽङ्गपरस्येकः । इति—इति हेतोः ।

उद्द्योते—जातस्येति—गुणस्येति शेषः । आद्ये जातस्य समकालप्राप्तस्य वा बहिरङ्गगुणस्यासिद्धत्वेन निषेध्याभावात् निषेधो नेत्यर्थस्य स्पष्टत्वादाह—द्वितीये इति । द्वितीये त्वित्यर्थः । बहिरङ्गनिमित्तस्य—बहिरङ्गनिषेधनिमित्तनलोपनिमित्तकस्य । निषेधस्तु लोलुवादावेकपदाश्रितगुणाभावाय सफल इत्याशयः । अयं पक्षः—पूर्वं धातुरुपसर्गेणेति पक्षः । इति—इति हेतोः । इयं—नाजानन्तर्यपरिभाषा । सूत्रेण—सूत्रस्थतुग्ग्रहणेन । तेन—तत्रत्यतुग्ग्रहणेन । एतदुल्लेखः—तज्ज्ञापकनाजानन्तर्यपरिभाषोल्लेखः ।

( लाघवभाष्यम् )

**यद्येवं, नार्थो धातुग्रहणेन ॥**

( तत्त्वालोकः ) आद्यपक्षे लाघवमपि दर्शयति—यदीति । एवमिति—तत् लोपविशेषणमित्यर्थः । तर्हीति शेषः ।

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति लूञ् लविता लवितुम् ? ।**

( तत्त्वालोकः ) तटस्थः पृच्छति—इहेति । धातुग्रहणाभावे निषेध इत्यादिः ।

( समाधानभाष्यम् )

**आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

( तत्त्वालोकः ) सिद्धान्ती समाधत्ते—आर्धधातुकेति । यत इत्यादिः । एषः—अनुबन्धलोपः ।

( द्वितीयपक्षस्वीकारभाष्यम् )

**अथवा—पुनरस्तु गुणवृद्धिविशेषणम् ॥**

( तत्त्वालोकः )—सिद्धान्ती "यथेच्छसि तथास्त्वि"ति स्वोक्त्यनुरोधेन द्वितीयपक्षमपि समर्थनायोपस्थापयति—अथवेति ।

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—क्नोपयतीत्यत्रापि प्राप्नोतीति ॥**

( उद्द्योतः ) क्नूयृ धातोर्णिचि पुकि लोपो व्योरिति यलोपः ।

( तत्त्वालोकः ) भाष्ये—द्वितीयपक्षोक्तदोषोद्धाराय स्मारयति—ननु चेति ।

( समाधानभाष्यम् )

**नैष दोषः,**

**निपातनात्सिद्धम् ॥**

**किं निपातनम् ? ॥**

**"चेले क्नोपेः" इति ॥**

( तत्त्वालोकः ) सिद्धान्ती द्वितीयपक्षोक्तदूषणोद्धारं दर्शयति—नैष इति । कुत इत्यत आह—निपातनादिति । यत इत्यादिः ॥ तत्र वर्णमात्राश्रयेऽन्तरङ्गे यलोपे कर्तव्ये बहिरङ्गपुकोऽसिद्धत्वात् अप्राप्तस्य यलोपस्योपपत्त्यै समाश्रितेन निपातनेनैव गुणोऽपि सेत्स्यतीत्यर्थः । एवं निर्दुष्टतया व्यवस्थापिते पक्षद्वये आद्यः लघुभूतः तत्र धातुग्रहणासत्त्वात्, द्वितीयस्तु गुरुभूतः तत्र तदावश्यकत्वादिति बोध्यम् ॥

( इत्यार्धधातुकपदार्थान्वयविचाराधिकरणम् )

---

( अथ परिगणनाधिकरणम् )

( भाष्यम् )

**परिगणनं कर्तव्यम्—**

( तत्त्वालोकः ) परिगणनमिति—पक्षद्वये येषां लोपे निषेध इष्टस्तेषामित्यादिः ।

( ११८ परिगणनपूर्वपक्षवार्तिकम् ॥२॥ )

**॥ * ॥ यङ्यक्क्यवलोपे प्रतिषेधः ॥ * ॥**

( भाष्यम् )

**यङ्यक्क्यवलोपे प्रतिषेधो वक्तव्यः ॥**

**यङ—बेभिदिता मरीमृजः ॥**

**यक्—कुसुभिता मगधकः ॥**

**क्य—समिधिता दृषदकः ॥**

**वलोपे—जीरदानुः ॥**

( प्रदीपः ) यङ्यक्क्यवलोप इति । व इत्यत्राकारोऽपि विवक्षितः । तेन धातुपाठे योऽकारान्तः पठितस्तस्य ग्रहणम् । अन्यथा स्रिविः कथं निवार्येत ॥ बेभिदितेति । बेभिद्यशब्दात्तृच्, इट्, यस्य हल इति यलोपः ॥ मरीमृज इति । यङोऽचि चेति यङो लुक् ॥ कुसुभमगधशब्दौ कण्ड्वादिगणपठितौ धातू ताभ्यां यक्, ण्वुल्तृचौ, यस्य हल इति यलोपः ॥ समिद्दृषच्छब्दाभ्यां क्यजन्ताभ्यां प्रत्ययौ ण्वुल्तृचौ । क्यस्य विभाषेति यलोपः ॥

( उद्द्योतः ) वाक्यकारः सूत्रेऽव्याप्त्यतिव्याप्तिपरिहाराय परिगणनमाह—भाष्ये परिगणनमिति ॥ अत्र यस्य हल इति लोपः समुदायलोप इति मत्वा यक्क्ययोः परिगणनं बेभिदितेत्युदाहरणं च बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—यङिति—तथा च पक्षद्वये धातुग्रहणमपनीय "न यङ्यक्क्यवलोप आर्धधातुके" इति सूत्रं कर्त्तव्यमिति

भावः। जीरदानुः—जीवधातोः "जीवे रदानुरि" त्यनेन रदानुप्रत्यये 'लोपो व्योरि'ति वलोपे निष्पन्नः।

प्रदीपे—अकारान्तः—जीवघटको वः। अन्यथा—अकाराविवक्षणे। यङोऽचीति—यङन्तान्मरीमृज्यशब्दात्पचाद्यचीत्यादिः।

(भाष्यम्)

किं प्रयोजनम्? ॥

(११८ परिगणनसाधकवार्तिकद्वितीयखण्डम् ॥ २ ॥)

॥ * ॥ नुम्लोपस्त्रिव्यनुबन्धलोपेऽप्रतिषेधार्थम् ॥ * ॥

(भाष्यम्)

नुम्लोपे स्त्रिव्यनुबन्धलोपे च प्रतिषेधो मा भूदिति ॥

नुम्लोपे—अभाजि, रागः, उपबर्हणम् ॥

स्त्रिवेः—आस्त्रेमाणम् ॥

अनुबन्धलोपे—लूञ् लविता लवितुम् ॥

(प्रदीपः) नुम्लोप इति। नुमिति नकारस्य पूर्वाचार्यसंज्ञा॥ उपबर्हणमिति। बृहि वृद्धौ इदित्वान्नुम्, बृंहेरच्यनिटीति वार्तिकेन नलोपः॥ आस्त्रेमाणमिति। अस्त्रेमाणमित्यपि वेदे पठ्यते। तत्र नञ्पूर्वात् स्त्रिवेर्मनिन् प्रत्ययो वकारलोपः॥ ऊडादेशश्छान्दसत्वाद्वकारस्य न भवति॥ परिगणने सति धातुग्रहणं न कर्तव्यं भवतीत्यनुबन्धलोपः प्रयोजनत्वेन पठितः॥

(उद्द्योतः) ननु भञ्जिरञ्जयोरौपदेशिकनस्यैव 'भञ्जेश्च चिणि' 'रञ्जेश्च' घञि चेत्यादिना लोप इति नुम्लोप इत्यसङ्गतमत आह—नुमितीति॥ नन्वनिदिद्बृहिणा इदं सिद्धमत आह—बृहि वृद्धाविति। स नास्त्येवेति पूर्वपक्ष्याशयः॥ ऊडादेश इति। ज्वरत्वरस्त्रिवीत्यनेन।

(तत्त्वालोकः) प्रदीपे—ननु परिगणनासत्त्वेऽपि धातुग्रहणादेव अनुबन्धलोपे प्रतिषेधाभावस्य सिद्धत्वात् कथमिदं परिगणनप्रयोजनमित्यत आह—परिगणने इति। इति—इति हेतोः। उद्द्योते—इदम्—उपबर्हणमितिरूपम्। सः—अनिदिद्बृहधातुः।

(आक्षेपभाष्यम्)

यदि परिगणनं क्रियते, 'स्यदः, प्रश्रथः, हिमश्रथः' इत्यत्रापि प्राप्नोति ॥

(उद्द्योतः) भाष्ये इत्यत्रापि प्राप्नोतीति। वृद्धिरिति शेषः॥ न प्राप्नोतीति पाठे—निषेध इति शेषः॥

(तत्त्वालोकः) भाष्ये—तटस्थः शङ्कते—यदीति। क्रियते इति—तर्हीति शेषः। एतेषां परिगणनानन्तर्गततया निषेधाप्रवृत्तेः वृद्धिः प्राप्नोतीत्याशयेनाह—स्यद इति।

(समाधानभाष्यम्)

वक्ष्यत्येतद् *निपातनात्स्यदादिषु* इति ॥

(उद्द्योतः) निपातनादिति॥ 'स्यदो जवे' 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति निपातनम्। अस्य नलोपमात्रफलकत्वे नलोपविधानेनैव सिद्धे निपातनवैयर्थ्यापत्तिरिति भावः॥

(तत्त्वालोकः) भाष्ये—पूर्वपक्षी समाधत्ते—वक्ष्यतीति। अनुपदं वार्तिककार इति शेषः।

उद्द्योते—ननु निपातनं नलोपमात्रार्थं, न तु वृद्ध्यभावार्थमित्यत आह—अस्येति। निपातनस्येत्यर्थः। आपत्तिरिति—तथा च निपातनेन स्वसार्थक्याय नलोपवृद्ध्यभावोभयं ज्ञाप्यते इति भावः।

(आक्षेपभाष्यम्)

तत्तर्हि परिगणनं कर्तव्यम् ॥

(तत्त्वालोकः) तटस्थः पृच्छति— तत्तर्हीति।

(परिगणनप्रत्याख्यानभाष्यम्)

न कर्तव्यम् ॥

(तत्त्वालोकः) सिद्धान्ती उत्तरयति—न कर्तव्यमिति।

(आक्षेपभाष्यम्)

नुम्लोपे कस्मान्न भवति? ॥

(तत्त्वालोकः) तटस्थः पुनः पृच्छति—नुम्लोपे इति। नलोपे इत्यर्थः। प्रतिषेध इति शेषः।

(११९ सिद्धान्तसमाधानवार्तिकम् ॥ ३ ॥)

॥ * ॥ इक्प्रकरणान्नुम्लोपे वृद्धिः ॥ * ॥

(भाष्यम्)

इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः। न चैषेग्लक्षणा वृद्धिः ॥

(प्रदीपः) इक्प्रकरणादिति। तेन यत्रेक्परिभाषा स्थान्यन्तरनिवृत्तये व्याप्रियते तत्रायं निषेधः॥

(उद्द्योतः) तेनेति। अन्यथौर्गुण इत्यादावपि परिभाषाप्रवृत्तौ तस्यापीग्लक्षणत्वे लैगवायन इत्यादौ निषेधः स्यादिति भावः॥ यत्रेक्परिभाषेति। न चेक इत्यनुवर्त्य 'इको न ते' इत्येव व्याख्यानमुचितमिति वाच्यम्। मरीमृजः सरीसृप इत्यादाविकः प्रत्ययाव्यवहितपूर्वत्वाभावान्निषेधानापत्तेः। तदाह भाष्ये इग्लक्षणयोरिति। यथैतदर्थलाभस्तथोक्तम्। इक्परिभाषालक्षणयोरिति तदर्थः॥

(तत्त्वालोकः) भाष्ये—सिद्धान्ती समाधत्ते—इगिति। यत इत्यादिः। तथा च यतः स्थानिनियामकेक्परिभाषां प्रस्तुत्य निषेधारम्भः, अतः निषेधमात्रस्य इक्परिभाषाविषयकत्वेन नुम्लोपे अभाजीत्यादौ निषेधाविषयत्वात् वृद्धिरित्यर्थः। एषा—नुम्लोपे अभाजीत्यादौ जायमाना। प्रदीपे-तेन-स्थानिनियामकेक्परिभाषाप्रस्तावेन।

उद्द्योते-अन्यथा—स्थानिनियामकेक्परिभाषाप्रस्तावं विना इक्परिभाषाप्रवृत्त्यभ्युपगमे। परिभाषा—इक्परिभाषा। तस्यापि—ओर्गुण इत्यादेरपि। ते—गुणवृद्धी। प्रत्ययेति—आर्धधातुकेत्यादिः।

(आक्षेपभाष्यम्)

यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः 'स्यदः, प्रश्रथः हिमश्रथः' इत्यत्र न प्राप्नोति।

इह च प्राप्नोति-'अवोदः, एधः, ओद्मः' इति ॥

(तत्त्वालोकः) प्रतिषेध इति—तर्हीति शेषः। न प्राप्नोतीति—प्रतिषेध इति शेषः। प्राप्नोतीति—प्रतिषेध इति शेषः।

( १२० सिद्धान्तसमाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ निपातनात्स्यदादिषु ॥ * ॥

( भाष्यम् )

**निपातनात्स्यदादिषु प्रतिषेधो भविष्यति, न च भविष्यति ॥**

( तत्त्वालोकः ) भविष्यतीति—अवोदादिष्विति शेषः ।

( आक्षेपभाष्यम् )

**यदीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, स्निव्यनुबन्धलोपे कथम् ? ॥**

( तत्त्वालोकः ) प्रतिषेध इति—तर्हीति शेषः । कथमिति—गुणस्येग्लक्षणत्वादित्यादिः । अप्रतिषेध इति शेषः ।

( १२१ सिद्धान्तसमाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ प्रत्ययाश्रयत्वादन्यत्र सिद्धम् ॥ * ॥

( भाष्यम् )

**आर्धधातुकनिमित्ते लोपे प्रतिषेधः । न चैष आर्धधातुकनिमित्तो लोपः ॥**

( प्रदीपः ) प्रत्ययाश्रयत्वादिति । लोपविशेषणमार्धधातुकग्रहणमित्यर्थः ॥

( उद्द्योतः ) लोपेति । प्रत्ययाश्रयत्वादिति भाष्यस्य लोपे आर्धधातुकप्रत्ययनिमित्तकत्वाश्रयणादित्यर्थ इति भावः ॥

( तत्त्वालोकः ) भाष्ये—अन्यत्र—स्निव्यनुबन्धलोपे । एषः—आस्रेमाणमित्यत्र स्निवेः वकारस्य लोपो व्योरिति वलमात्रनिमित्तको लोपः, तथा लवितेत्यादावनैमित्तिकोऽनुबन्धलोपः ।

उद्द्योते—ननु "प्रतिषेधस्यार्धधातुकप्रत्ययनिमित्तकत्वादि"ति वार्त्तिकार्थे गुणवृद्धिविशेषणमार्धधातुकग्रहणमिति पक्षलाभेन तत्र धातुग्रहणसत्त्वात् लवितेत्यादौ दोषवारणेऽपि आस्रेमाणमित्यत्र दोष एवेत्यत आह—प्रत्ययाश्रयेति । तथा च परिगणने पक्षद्वये साम्येऽपि तदभावे प्रथम एव युक्तो धातुग्रहणाकरणलाघवात्, न तु द्वितीयः तत्करणगौरवादिति पर्यवस्यति ।

( आक्षेपभाष्यम् )

**यद्यार्धधातुकनिमित्ते लोपे प्रतिषेधः, 'जीरदानुः' ( ऋ० सं० ५।८३।१ ) अत्र न प्राप्नोति ॥**

( प्रदीपः ) जीरदानुरिति । वर्णनिमित्तोऽत्र वकारलोपो न प्रत्ययनिमित्तः ॥

( उद्द्योतः ) न प्रत्ययेति । प्रत्ययस्याश्रुतत्वादनाक्षिप्तत्वाच्चेति भावः ॥

( तत्त्वालोकः ) भाष्ये—प्रतिषेध इति—तर्हीति शेषः । न प्राप्नोतीति—प्रतिषेध इति शेषः ।

( १२२ सिद्धान्तसमाधानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ रकि ज्यः सम्प्रसारणम् ॥ * ॥

( भाष्यम् )

**नैतज्जीवे रूपम्, रक्येतज्ज्यः संप्रसारणं भवति ॥**

( प्रदीपः ) रकि ज्य इति । एवं च जीरेत्यवग्रहः सिध्यति । बहुव्रीहित्वाच्च जीरदानुशब्दे रेफाकार उदात्तः ॥

( उद्द्योतः ) अवश्यं जीरदानुशब्दस्यैवमेव व्युत्पत्तिः कार्येत्याह—एवं चेति । अवान्तरपदत्वे सत्येवावग्रह इत्युत्सर्गादिति भावः ॥ ननु रदानुप्रत्यये रेफाकार उदात्तः, समासे त्वन्तोदात्तः स्यादत आह—बहुव्रीति । जीरस्य प्रत्ययस्वरेणान्तोदात्तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरेणेत्यर्थः ॥ जीवेर्विचि तु गुणनिषेधो भवत्येव ॥ एतेनार्धधातुकत्वेन यत्र लोपे निमित्तता तत्रैव लोपे निषेध इत्यपास्तम् ॥ वार्तिकविरोधात् । यङोऽचि चेत्यत्रापि तत्त्वेनानिमित्तत्वाल्लोलुव इत्याद्यसिद्ध्यापत्तेश्च ॥ धिन्व्यादिभ्यस्तु विकल्पभाव एव ॥

( तत्त्वालोकः ) भाष्ये—एतत्—जीरदानुरिति । रूपमिति—किन्त्विति शेषः ।

उद्द्योते—एतेनेत्यस्यार्थमाह—वार्त्तिकेति । "वलोपे प्रतिषेध" इति वार्त्तिकेत्यर्थः । तस्य वार्त्तिकस्य खण्डितत्वादाह—यङोऽचीति । तत्त्वेन—आर्धधातुकत्वेन । सूत्रपरिगणनयोः प्रत्याख्यानपरभाष्यप्रामाण्यादाह—धिन्व्यादीति । अन्यथा परिगणनसत्त्वे सूत्राभावे वा गुणः, परिगणनाभावे सूत्रसत्त्वे वा गुणनिषेध इति फलभेदापत्तिरिति भावः ।

( एकदेशिभाष्यम् )

**यावता चेदानीं रकि, जीवेरपि सिद्धं भवति ॥**

( उद्द्योतः ) भाष्ये यावता चेदानीमिति । किस्त्वेन गुणनिषेधादिति भावः । अत्र वलोपो लोपो व्योरित्यनेन ॥ इदं च यथाश्रुतसूत्रमते । वलोपप्रत्याख्याने तु रकि ज्य इत्येव शरणम् ॥

( तत्त्वालोकः ) भाष्ये—यावता—यतः । इदानीं—परिगणनप्रत्याख्यानकाले । सिद्धमिति—वदित्यादिः । भवतीति—अतः जिनातेः रकि तत्सिद्ध्ये सम्प्रसारणपूर्वरूपदीर्घविधानक्लेशाङ्गीकारो न युक्त इति भावः ।

उद्द्योते—अस्या उक्तेः एकदेश्युक्तितासूचनायाह—इदञ्चेति ।

( पूर्वपक्षभाष्यम् )

**कथमुपबर्हणम् ? ॥**

( तत्त्वालोकः ) "नुम्लोपे कस्मान्न भवती"ति प्रश्नग्रन्थेन उपस्थितेषु अभाजि, रागः, उपबर्हणमित्येषु "इक्प्रकरणादि" त्युत्तरग्रन्थेन अभाजि राग इत्यनयोरेव समाहितत्वात् पृच्छति—कथमिति ।

( सिद्धान्तिभाष्यम् )

**बृहिः प्रकृत्यन्तरम् ॥**

( प्रदीपः ) बृहिरिति । बृह बृहि वृद्धाविति पाठात् ॥

( तत्त्वालोकः ) भाष्ये—उपबर्हणमित्यस्य अनिदिद्बृहेः रूपतया तत्र नलोपाभावेन गुणनिषेधप्राप्तिरेव नेत्याशयेन सिद्धान्ती समाधत्ते—बृहिरिति ।

( आक्षेपभाष्यम् )

**कथं ज्ञायते—बृहिः प्रकृत्यन्तरमिति ? ॥**

( तत्त्वालोकः ) अनिदिद्बृहिमजानन् शङ्कते—कथमिति ।

( सिद्धान्तिभाष्यम् )

**अचीति हि लोप उच्यते, अनजादावपि दृश्यते—निबृह्यते ।**

अनिटीति चोच्यते, इडादावपि दृश्यते-निबर्हिता निबर्हितुमिति।

अजादावपि न दृश्यते-बृंहयति बृंहकः॥

(तत्त्वालोकः) हीति—यत इत्यर्थः। "बृंहेरच्यनिटी"ति वार्त्तिकेनेति शेषः। उच्यते इति—किन्त्विति शेषः। एवमग्रेऽपि। दृश्यते इति—लोप इति शेषः। एवमग्रेऽपि। बृंहक इति—तथा चाव्याप्त्यतिव्याप्तिदर्शनात् तत्तद्रूपसिद्धये तद्वार्तिकं नाश्रयणीयं, किन्तु प्रकृत्यन्तरमेवेति भावः।

(उपसंहारभाष्यम्)

तस्मान्नार्थः परिगणनेन॥

(आक्षेपभाष्यम्)

यदि परिगणनं न क्रियते 'भेद्यते, छेद्यते' अत्रापि प्राप्नोति॥

(प्रदीपः) भेद्यत इति। गुणो णिलोपश्चार्धधातुकनिमित्त इति पक्षद्वयेऽपि दोषः। अपवादविषयपरिहाराच्चान्तरङ्गोऽपि गुणोऽत्र न प्रवर्तत इत्युपन्यासः॥

(उद्द्योतः) पक्षद्वयेऽपीति। तन्त्रेणोभयविशेषणत्वपक्षेऽपीत्यपि बोध्यम्॥ गुणो ण्याश्रयः। णिलोपो यगाश्रयः॥ अपवादेति। प्रकल्प्य चापवादविषयमिति परिभाषयेति भावः॥ एतेन "गुणप्रतिषेधौ यत्र समानकालौ, तत्र चरितार्थो निषेधो नान्तरङ्गं गुणं बाधितुं क्षमत" इत्यपास्तम्॥ न च भेद्यते इत्यत्राचः परस्मिन्निति णिलोपस्य स्थानिवत्त्वेन तत्राभावातिदेशस्य च सत्त्वेन स्थानिनि णिचि सति अभवतो निषेधस्य लोपेऽप्यभावातिदेशान्न दोष इति वाच्यम्। स्थानिवद्भावाश्रयणे सूत्रप्रत्याख्यानमेवेति, तदनाश्रयणेन सूत्रवत् तदनाश्रयणेनैवायं दोष इत्याशयात्॥

(तत्त्वालोकः) भाष्ये—क्रियते इति—तर्हीति शेषः। अत्रापीति—भिदादेः ण्यन्तात्कर्मणि लटि तङि यकि नित्यत्वात्पूर्वं णिलोपे प्रत्ययलक्षणेन प्राप्नुवतो लघूपधगुणस्यानेन निषेध इति शेषः।

प्रदीपे—इति—इति हेतोः।

उद्द्योते—तृतीयपक्षे दोषं योजयितुं तयोः विभिन्ननिमित्तकत्वमाह—गुण इति। तदनाश्रयणेन—स्थानिवद्भावानाश्रयणेन।

(समाधानभाष्यम्)

नैष दोषः। धातुलोप इति नैवं विज्ञायते—'धातोर्लोपो धातुलोपो धातुलोपे' इति॥

कथं तर्हि?॥

'धातोर्लोपो यस्मिंस्तदिदं धातुलोपं धातुलोपे' इति॥

(प्रदीपः) कथं तर्हीति। बहुव्रीहौ सत्यैकार्धधातुकनिमित्तत्वं लोपस्य गुणवृद्ध्योश्चाश्रितमिति भेद्यते इत्यादौ भिन्ननिमित्तत्वाद्गुणो न निषिध्यते॥

(तत्त्वालोकः) प्रदीपे—श्रुतान्यपदार्थपरित्यागेनाश्रुतान्यपदार्थकल्पनाया अन्याय्यत्वात् भाष्यकृतो नपुंसकप्रयोगेण आर्धधातुकस्यैवान्यपदार्थत्वेनाश्रयणीयतायाः सूचनादाह—बहुव्रीहाविति। गुणवृद्ध्योः—निषेध्ययोः। इति—इति हेतोः। भिन्नेति—लोपगुणयोरित्यादिः।

(उपसंहारभाष्यम्)

तस्मादिग्लक्षणा वृद्धिः॥

(उद्द्योतः) भाष्ये तस्मादिग्लक्षणा वृद्धिरिति। प्रतिषेध्येति शेषः। अत एवाभाजीत्यादिसिद्धिरिति भावः॥

(तत्त्वालोकः) भाष्ये—पूर्वपक्षिणः प्रश्नावसरदानाय विवेचितमुपसंहरति—तस्मादिति। यस्मात् सर्वे दोषा निरस्तास्तस्मादित्यर्थः। उद्द्योते—अत एव—इग्लक्षणवृद्धेः प्रतिषेध्यत्वाङ्गीकारादेव। अन्यथा बहुव्रीहिस्वीकारेऽपि तत्र नलोपवृद्ध्योरेकनिमित्तकत्वात् प्रतिषेधो दुष्परिहर एवेत्याशयः।

(इति परिगणनाधिकरणम्)

---

(अथेग्लक्षणत्वे दोषनिराकरणाधिकरणम्)

(आक्षेपभाष्यम्)

यदि तर्हीग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः, पापचकः, पापठकः, मगधकः, दृषदकः' अत्र न प्राप्नोति॥

(तत्त्वालोकः) पूर्वपक्षी तयोरिग्लक्षणत्वाभ्युपगमेऽनुपपत्तिं दर्शयति—यदीति। पापचक इति—अत्र पचादेः यङि द्वित्वादिकार्ये "दीर्घोऽकितः" इति दीर्घे ण्वुलि तस्याकि "अतो लोप" इत्यलोपे "यस्य हल" इति यलोपः। मगधक इति—अत्र मगधात् कण्ड्वादियकि ण्वुलादिः। दृषदक इति—अत्र दृषदः "सुप" इति क्यचि सः। अत्रेति—"अत उपधाया" इति वृद्धेरनिग्लक्षणत्वात् निषेध इति शेषः।

(१२३ सिद्धान्तिसमाधानवार्तिकम्॥ ७॥)

॥ * ॥ अल्लोपस्य स्थानिवत्त्वात् ॥ * ॥

(भाष्यम्)

अकारलोपे कृते तस्य स्थानिवत्त्वाद् गुणवृद्धी न भविष्यतः॥

(उद्द्योतः) अकारलोप इति। अतो लोप इत्यनेन। यङ्लुगन्ताण्ण्वुलि तु सूत्रमतेऽपि निषेधो न, आर्धधातुकनिमित्तलोपाभावात्॥

(तत्त्वालोकः) भाष्ये—सिद्धान्तिना पूर्वं सूत्रसमर्थनाय स्थानिवद्भावमनाश्रित्य परिहारे कृतेऽपि इदानीमगत्या तमाश्रित्योत्तरमुच्यते—अल्लोपस्येति। अकारलोप इति—परत्वात् "यस्य हल" इति यकारलोपोत्तरमित्यादिः। उद्द्योते—भावादिति—तथा च तत्र पापाचक इत्याद्येव रूपमित्याशयः।

(इतीग्लक्षणत्वे दोषनिराकरणम्)

---

(अथ सूत्रप्रत्याख्यानाधिकरणम्)

(१२४ सिद्धान्तवार्तिकम्॥ ८॥)

॥ * ॥ अनारम्भो वा ॥ * ॥

(भाष्यम्)

अनारम्भो वा पुनरस्य योगस्य न्याय्यः॥

( आक्षेपभाष्यम् )

कथं 'बेभिदिता मरीसृजकः कुसुभिता समिधिता' इति ? ॥

( तत्त्वालोकः ) आरम्भवादी पूर्वपक्षी पृच्छति—कथमिति । तद्दीति शेषः । इतीति—अत्र प्रतिषेध इति शेषः ।

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुण वृद्धी न भविष्यतः ॥

( उद्द्योतः ) मरीसृजक इति । अत्राल्लोपस्य स्थानिवत्त्वे क्ङित्यजादौ वेष्यत इति विकल्पो न, व्यवस्थितविभाषाश्रयणात् ॥

( तत्त्वालोकः ) भाष्ये—प्रत्याख्याता सिद्धान्ती उत्तरयति—अत्रापीति । भावादिति—इडाद्यार्धधातुकादिनिमित्तके इति शेषः ।

उद्द्योते—इतीति—लुप्ताकारनिमित्तक इति शेषः ।

( आक्षेपभाष्यम् )

यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः ॥

क्व च स्थानिवद्भावो नास्ति ? ॥

यत्र हलचोरादेशः, लोलुवः पोपुवः मरीमृजः सरीसृप इति ॥

( प्रदीपः ) यत्र हलचोरादेश इति । लुका कृत्स्नो यङ् लुप्यत इत्याशयः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी शङ्कते—यत्रेति । तटस्थः पृच्छति—क्व चेति । पूर्वपक्षी समाधत्ते—यत्रेति ।

प्रदीपे—"यङोऽचि"त्यनेन समुदायस्य लुको विवक्षितत्वादाह—लुकेति । यङन्तेभ्यो लोलूयादिभ्यः पचाद्यचि तेनेत्यादिः । कृत्स्नः—साच्कः ।

( समाधानभाष्यम् )

अत्राप्यकारलोपे कृते तस्य स्थानिवद्भावाद् गुण-वृद्धी न भविष्यतः ॥

( प्रदीपः ) अत्रापीति । कृतेऽप्यकारलोपे एकदेशविकृतमनन्यवद्भवतीति यकारः प्रत्ययसंज्ञो भवत्येवेति भावः ॥

( उद्द्योतः ) नन्वेवं लुकशास्त्रं व्यर्थं स्यादत आह—कृतेऽपीति । अवशिष्टे तच्चरितार्थमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते—अत्रेति ।

उद्द्योते—एवम्—अकारलोपे कृते । लुक्शास्त्रं—प्रत्ययापेक्षि "यङोऽची"ति शास्त्रम् । तत्—लुक्शास्त्रम् ।

( समाधानबाधकभाष्यम् )

लुकि कृते न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये लुकि कृते इति । अनवकाशत्वादन्तरङ्गानपीति न्यायाच्च लुकि कृते ऽतोलोपो न प्राप्नोतीत्यर्थः ।

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी खण्डयति—लुकीति ।

( समाधानसाधकभाष्यम् )

इदमिह संप्रधार्यम्—लुक् क्रियतामल्लोप इति । किमत्र कर्तव्यम् ? ॥ परत्वादल्लोपः ॥

( उद्द्योतः ) इतर आशयानभिज्ञ आह—परत्वादिति ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समर्थयति—इदमिति । क्रियतामिति—वेति शेषः । पूर्वपक्षी शङ्कते—किमत्रेति ।

( समाधानबाधकभाष्यम् )

नित्यो लुक् । कृतेऽप्यल्लोपे प्राप्नोति, अकृतेऽपि प्राप्नोति ॥

( प्रदीपः ) नित्यो लुगिति । लुक्शास्त्रप्रवृत्तिर्नित्या ।

( उद्द्योतः ) ननु यस्य लोपः कृतस्तस्य लुगप्राप्तेराह—लुक्शास्त्रेति ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी निराकरोति—नित्य इति ।

( समाधानसाधकभाष्यम् )

लुगप्यनित्यः ॥ कथम् ? । अन्यस्य कृतेऽल्लोपे प्राप्नोति, अन्यस्याकृते ॥ शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति" ॥

( तत्त्वालोकः ) सिद्धान्ती समर्थयति—लुगिति । भवतीति—यद्व्यक्तौ पूर्वं प्राप्तिः, तद्व्यक्तावेव पुनः प्राप्तौ कृताकृतप्रसङ्गित्वान्नित्यता भवतीति भावः । तथा च द्वयोरनित्ययोः परत्वादल्लोपः सेत्स्यति ।

( समाधानबाधकभाष्यम् )

अनवकाशस्तर्हि लुक् ॥

( प्रदीपः ) अनवकाश इति । नाप्राप्ते लोपे लुगारम्भात् ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी निराचष्टे—अनवकाश इति । तर्हि—अनित्यत्वे । प्रदीपे—नाप्राप्ते—अवश्यंप्राप्ते । अनेन येननाप्राप्तिन्यायः सूचितः ।

( समाधानसाधकभाष्यम् )

सावकाशो लुक् ॥

कोऽवकाशः ? ॥

अवशिष्टः ॥

( प्रदीपः ) सावकाश इति । भिन्नविषयौ लुग्लोपौ । अकारस्य लोपो, यकारस्य लुक् । ततश्च नास्ति येन नाप्राप्तिन्यायः ॥

( तत्त्वालोकः ) भाष्ये सिद्धान्ती समर्थयति—सावकाश इति । अवशिष्टः—अल्लोपावशिष्टो यकारः ।

( अभ्युपेत्य समाधानभाष्यम् )

अथापि कथंचिदनवकाशो लुक् स्यादेवमपि न दोषः । अल्लोपे योगविभागः करिष्यते—"अतो लोपः" । ततो "यस्य" यस्य च लोपो भवति । अत इत्येव ॥

किमर्थमिदम् ? ॥

लुकं वक्ष्यति तद्बाधनार्थम् ॥

ततो "हलः" हल उत्तरस्य यस्य च लोपो भवतीति ।

( प्रदीपः ) अथापीति । यङोऽचि चेत्यत्र यकाराकारसमुदायस्य यङ इति निर्दिष्टस्य विवक्षितत्वादवयवे च यङ्व्यपदेशस्य गौणत्वादिति भावः ॥

( उद्द्योतः ) गौणत्वादिति । अतिदेशविषये गौणत्वाङ्गीकारे-

ऽतिदेशवैयर्थ्यापत्तेरिदं चिन्त्यम् ॥ किंच भिन्नविषयेऽपि बाध्यबाधकभावो दृष्टः, यथा स्यथोऽिलिटीति संप्रसारणस्य वकारे चारितार्थ्येऽपि हलादिः शेषबाधकता। भाष्यकारोऽपि **सिद्धचोऽन्त्यादित्यस्य** विषयभेदेऽपि प्रत्ययपरत्वबाधकतां वक्ष्यति॥ तस्मात्कृते चारितार्थ्येऽपि तत्प्राप्तिकालेऽवश्यं प्राप्त्याऽपवादत्वं भवत्येवेत्याशयः॥ **असंभव एव बाधकत्वमिति** वार्तिकानुयायिना **सावकाशो लुगित्युक्ते** स एव अथापीत्यादिति तदुक्तिः—**कथंचिदिति ॥ भाष्ये अत इत्येवेति।** **अलोन्त्यपरिभाषया** अत इत्यनुवृत्तेर्वेति भावः॥ अयं च लुकोपवादः। एवं चार्धादवशिष्टस्य लुगिति बोध्यम्। अत्र च **अस्त्रोरोपधेति** सूत्रादन्यतरस्यांग्रहणस्य मण्डूकप्लुत्याऽनुवर्तनेन योगविभागस्येष्टसिद्ध्यर्थत्वेन च क्वचिदेव पृथगल्लोपो न सर्वत्रेति बोध्यम्॥ मरीमृज इत्यत्र विकल्पस्तु न। व्यवस्थितविभाषाश्रयणात्। यद्वा तत्र विकल्प इष्ट एव। तदर्थं सूत्रकृतोऽप्येतत्कल्पनावश्यकत्वं मनसि निधायैव तामाश्रित्य सूत्रप्रत्याख्यानमेव वरमिति भाष्याशयः॥ लोलुवादौ उवङि अनादिष्टादचः पूर्वस्य विधेरभावेन स्थानिवत्त्वाभावेऽपि नोपधागुणः, अचः पूर्वत्वेन दृष्टलोलूशब्दात्परस्य गुणे कर्तव्ये पञ्चमीसमासेनाल्लोपस्य स्थानिवद्भावसंलभ्यात्। निमित्तत्वेनाश्रितात्पूर्वस्मादित्यर्थे तु न मानम्। अतिप्रसङ्गस्य तदनित्यत्वेनैव परिहारात्। भाष्यादुक्तत्वादनित्यत्वाभावेऽपि पूर्वस्मात्परस्याव्यवहितस्यैव ग्रहणेन **द्वे** गौरित्यत्रादोषः। अचः पूर्वत्वांशे स्वरग्रहणाद्भाष्यप्रामाण्याच्चाव्यवधानांशबाधेऽप्यत्र तद्बाधे मानाभावात्। अतिदेशप्रवृत्तिप्राक्कालिकं च तदंशेऽव्यवधानं निविष्टम्। किं चाशास्त्रीयस्यापि तस्य **तत्स्थानापन्नस्तद्धर्मलाभ** इति लोकन्यायेनातिदेश इति **स्थानिवत्सूत्रे** वक्ष्यते। लोलू इत्यस्य लोलुवादेशस्तस्य च गुणघटितो लोलोवित्यादेश इत्याहुः॥ दरीदृश इत्यत्राङ्निमित्तगुणस्तु न अस्याङस्तकैककगोचरत्वेन लाक्षणिकतया अङ्ग्रहणेनाग्रहणात्॥ अत एव दरीदृशक इत्यादौ यङन्ताण्वुलि अङ्निमित्तगुणाभावः। जंगमक इत्यादौ यङन्ताण्वुलि उपधालोपश्च अनङीति निषेधाप्रवृत्तेः॥ जङ्गम इत्यादौ तूक्तयुक्त्या समुदायलुगेवेति न दोषः॥ निजेगिल इत्यादौ **ग्रो यङीति** नित्यलत्वमिष्टमेव। सूत्रमतेऽपि **न लुमतेति** निषेधस्यानित्यत्वाद् यङ्परत्वमस्ति। **न वेति विभाषेति** सूत्रे **भाष्ये** चेदं ध्वनितमिति तत्रैव निरूपयिष्यामः॥ यदि जरीगृह्यादेः सास्मर्यतेश्चाचि सम्प्रसारण**यङ्चेति**गुणाविष्टौ, तर्हि सूत्रमतेपि **न लुमतेति** निषेधानित्यत्वेन साधनीयौ। भाष्यप्रामाण्यादिष्टाविति गम्यते। अत एव पृथगल्लोपे यङो विषयापहाराभावेन अजेर्व्यादेशे यणि वेव्य इति स्यादित्यपास्तम्। योगविभागस्य काचित्कत्वेन तत्र लुक एव प्रवृत्त्याऽक्षतेः॥ पुर्वादिभ्यो वान्तेभ्यो विजनास्त्येव। अनभिधानात्। इदं च **लोपो व्योरिति** सूत्रे भाष्येपि ध्वनितम्। एतद्भाष्यविरुद्धप्रयोगाणां भाष्यानुक्तानामनभिधानमित्यन्ये। **न चैवं न धातुलुक्यचीत्येव** सिद्धे आर्धधातुकग्रहणं व्यर्थमिति वाच्यम्। **लोपार्धधातुक** इत्येव षष्ठीतत्पुरुषेण लोपनिमित्तार्धधातुक इत्यर्थेन लूञादेर्ण्यावृत्तिसिद्धौ धातुग्रहणवत्तस्यापि सत्त्वात्॥ **भाष्ये लुकं वक्ष्यतीति।** लुगतोलोपापवादः। अपवादश्च प्रायेण पश्चाद्भावीति भविष्यन्निर्देशः॥

**( तत्त्वालोकः )** भाष्ये—तुष्यतु दुर्जन इति न्यायेन तमभ्युपेत्य स समाधत्ते—**अथापीति।** कुत इत्यत आह—**अल्लोपे इति।** अल्लोपनिमित्तमित्यर्थः। यत इत्यादिः। **योगेति**—यस्य हल इत्यत्रेत्यादिः। अतो लोप इत्यनेनैव तत्राल्लोपसिद्धिमभिप्रेत्य पृच्छति—**किमर्थमिति।** उत्तरयति—**लुकमिति।**

उद्द्योते—**वक्ष्यतीति**—श्नमादाविति भावः। **तस्मात्**—अतिदेशेत्यादिना, किञ्चेत्यादिना च अथापीत्यस्य, सावकाश इत्यस्य च कैयटीयव्याख्यायाः खण्डितत्वात्। **इत्याशय इति**—अनवकाशस्तद्धींति भाष्यस्येति शेषः। सत्यपि संभवे बाधनं भवति, अस्ति च सम्भवो यदुभयं स्यादिति न्यायेनेति भावः। **कथंचिदितीति**—अन्यमताभ्युपगम एव क्लेश इति भावः। अतो लोप इत्यत्र तदसंबन्धायाह—**मण्डूकेति।** प्रकृतसूत्राभावे प्राचोक्तदोषान् तदुक्तरीत्या क्रमशः परिहरति—**मरीमृज इति। विकल्प इति**—वृद्धीत्यादिः। व्यवस्थितविभाषाणां परिगणितत्वादाह—**यद्वेति। तदर्थं**—विकल्पार्थम्। **एतदिति**—पृथगल्लोपरूपेत्यर्थः। फलभेदवारणायेत्याशयः। नन्वेवं लोलुवादावुवङि उपधागुण आपद्येतेत्यत आह—**लोलुवादाविति।** कैयटाद्युक्तिं दूषयति—**निमित्तेति।** नन्वेवं द्वे गौरित्यत्रातिप्रसङ्ग इत्यत आह—**अतिप्रसङ्गेति। तदनित्यत्वेन**—पञ्चमीसमासानित्यत्वेन। **अदोषः**—वृद्धेः स्थानिवत्त्वेन सम्बुद्धिलोपरूपो दोषो न। नन्वेवं तत्र तस्मिन्निति प्रवर्त्तते इति सिद्धान्तो भज्येतेत्यत आह—**अच इति। भाष्येति**—चिकीर्षक इत्युदाहरणपरभाष्येत्यर्थः। नन्वतिदेशप्रवृत्युत्तरं पूर्वस्माद्व्यवहितपरत्वं बाधितमित्यत आह—**अतिदेशेति।** ननु पञ्चमीसमासस्य प्रत्याख्याने अनित्यत्वे वा लक्ष्यविशेषपरत्वे वा लोलुवादावनिर्वाह इत्यत आह—**किं चेति। तस्य**—प्रनादिष्टादचः पूर्वत्वरूपधर्मस्य। **वक्ष्यते इति**—स्वं रूपमित्यस्याविषये इत्याशयः। नन्वेवमपि अत्रोवङ आदेशत्वेन स्थानिद्वारा अनादिष्टादचः पूर्वत्वसंभवेऽपि तस्य कार्याविधानात् अल्लोपस्य स्थानिवद्भावो न संभवति, उकारस्य कार्यविधानेऽपि तस्यानादेशत्वात् स्थानिद्वारा तत्त्वमेव न संभवतीत्यत आह—**लोलू इति। लोलुवेति**—स्थानिवद्भावादचः पूर्व इत्याशयः। **इत्यादेश इति**—एवञ्चास्मिन् विधेयेऽल्लोपस्य स्थानिवत्त्वसंभवात् नोपधागुण इति स्थितिः। अशास्त्रीयधर्मातिदेशे मानाभावादत्रारुचिसूचनायाह—**आहुरिति। उक्तेति**—योगविभागस्येष्टसिद्ध्यर्थत्वेन पृथगल्लोपस्य काचित्कत्वेनेत्यर्थः। **दोषः**—उपधालोपः। नन्वेवं निजेगिल इत्यादौ नित्यलत्वमापद्येत, पृथगल्लोपपक्षे तु विकल्प इष्यते इत्यत आह—**निजेगिल इति। आदेश इति**—ततो यङि द्वित्वेऽभ्यासगुणे अचि प्रत्यये अलोपेऽवशिष्टस्य तु लुकीति शेषः। **लुक एवेति**—स्वञ्च प्रत्ययलक्षणासत्त्वेन विषयापहाराद्यदेशस्याभावेनाहलादित्वात् यङेव नेत्याशयः। नन्वेवमपि पुर्वादिवान्तधातोः विचि "लोपो व्योरिति" वलोपे सूत्रसत्त्वे गुणनिषेधेन पूः, पुरौ, इत्यादिरूपाणि जायमानानि सूत्राभावे नोपपद्येरन्नित्यत आह—**पूर्वादिभ्य इति। अनुक्तानामिति**—उक्तप्रकारद्वयान्यतरप्रकारेणासाधनीयानामिति शेषः। **एवं**—तादृशानामनभिधाने। **तस्यापि**—आर्धधातुकग्रहणस्यापि। तथा चोभयमदृष्टार्थमेवेति भावः।

**( आक्षेपभाष्यम् )**

**इहापि तर्हि परत्वाद्योगविभागाद्वा लोपो लुकं बाधेत—"कृष्णो नोनाव वृषभो यदीदम् ( ऋ. सं. १। ७९।२ )" नोनूयतेर्नोनाव ॥**

**( तत्त्वालोकः )** पूर्वपक्षी शङ्कते—**इहापीति। नोनूयतेरिति**—णु धातोः यङि द्वित्वादिकार्ये अभ्यासगुणे "सन्ये"ति धातुत्वाल्लिडादिकार्ये "अमन्त्रे" इति निषेधादामभावे यङो लुकि वृद्ध्यादिकार्ये नोनावेति सिद्ध्यति। तत्र पृथगल्लोपे तस्य स्थानिवत्त्वात्तेन व्यवधाने णलपरत्वाभावाद् वृद्धिर्न सेत्स्यतीति भावः।

**( समाधानभाष्यम् )**

**समानाश्रयो लुग्लोपेन बाध्यते ॥**

कश्च समानाश्रयः ? ॥

यः प्रत्ययाश्रयः, अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ॥

(प्रदीपः) समानाश्रय इति । तुल्यकालत्वादिति भावः ॥ नोनावेत्यत्र तु बहुलग्रहणानुवृत्त्याऽनैमित्तिकोऽन्तरङ्गो लुक् प्रागेव प्रत्ययोत्पत्तेर्भवति ॥

(उद्द्योतः) ननु भिन्नाश्रययोरपि दीर्घवृद्ध्योरियायेत्यादौ बाध्यबाधकभावो दृष्ट इत्यत आह—तुल्यकालेति ॥ बहुलेति । यङोऽचि चेति चकारेण ॥ अन्तरङ्ग इति । प्राक्प्रवृत्तिकत्वमन्तरङ्गत्वम् । न हि तदापवादप्रवृत्तिरिति भावः ॥

(तत्त्वालोकः) भाष्ये—सिद्धान्ती समाधत्ते—समानेति । तटस्थः शङ्कते—कश्चेति । सिद्धान्ती उत्तरयति—य इति । "यङोऽचि चेत्यत्र "यङोऽची"ति पूर्वांशेन अच्प्रत्ययनिमित्तको यङो लुक् क्रियते तथा "चे"ति परांशेन अनैमित्तिको यङो लुक् विधीयते । एवञ्च लोलुव इत्यादौ लोलूयेत्यादियङन्तात् पचाद्यचि कृते पूर्वांशेन यङ्लुक्, अतो लोप इत्यनेन अलोपस्य च प्रापणात् समानकालिकतया लुक् लोपेन बाध्यते । नोनावेत्यत्र तु णुधातोः यङि, तस्य परांशेन लुकः प्राप्त्या अकारस्य चार्धधातुकपरत्वाभावाल्लोपाप्रवृत्त्या असमानकालिकत्वाल्लुको लोपेनाबाधात् लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वादिकार्ये अभ्यासगुणे "चर्करीतं चे"त्यस्यादादौ पाठेन यङ्लुगन्तस्य भ्वादित्वात् भूवादिसूत्रेण धातुत्वाल्लिङादिकार्ये उक्तनिषेधादामभावे वृद्ध्यादिरित्याशयः ।

(आक्षेपभाष्यम्)

कथम्—स्यदः प्रश्रथः हिमश्रथः 'जीरदानुः (ऋ. सं. ५।८३।१)' निकुचित इति ?

(तत्त्वालोकः) एवं स्थानिवत्त्वाभावे बेभिदितेत्यादौ अलोपस्य स्थानिवत्त्वाद् गुणादिवारणेऽपि स्यद इत्यादौ कथन्तद्वारणमित्याशयेन पृच्छति पूर्वपक्षी—कथमिति ।

(१२५ समाधानवार्तिक(भाष्य)म् ॥ १ ॥)

॥ * ॥ उक्तं शेषे ॥ * ॥

(भाष्यम्)

किमुक्तम् ? ॥

* निपातनात्स्यदादिषु * ।

[ * प्रत्ययाश्रयत्वादन्यत्र सिद्धम् * । ]

* रकि ज्यः सम्प्रसारणम् * इति ॥

निकुचितेऽप्युक्तम् ।

किम् ? ।

सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥ न धातुलोप० ॥ ४ ॥

(प्रदीपः) निकुचित इति । कित्त्वसंयोगेन नलोपे सत्युदुपधत्वमिति निमित्तमकित्त्वस्य न भवति ॥ यदि तर्ह्यकारलोपः क्रियते, तदा जङ्गम इत्यत्र तस्य स्थानिवद्भावादुपधालोपः प्राप्नोति ॥ नैष दोषः, अनङीति प्रतिषेधात् ॥ अनर्थकोऽयमङिति चेत् । लोपस्यापि तर्ह्यप्राप्तिरजादौ प्रत्यये तस्य विधानात् ॥ ननु लोलुवादिषूवङादयः स्थानिवद्भावेन न सिद्ध्यन्ति तेषां स्थानिवद्दर्शनात् । सम्भवमात्रेणाप्यतिदेशो भवतीत्यदोषः ॥ ४ ॥

(उद्द्योतः) अकित्त्वस्येति । उदुपधाद्भावादिकर्मणोरिति विहितस्येत्यर्थः ॥ एवञ्चाकित्त्वाभावे क्ङितीति चेत्येव निषेधः सिद्धो निकुचित इति भाव । सन्निपातः संबन्धः ।—तद्विघात इति कर्मण्यण् । अजादौ प्रत्यये इति । यायावतेः क्विपि यातिरित्यादौ आलोपानापत्तेवरेग्रहणस्य वैयर्थ्याच्च चिन्त्यमेतत् । अस्य समाधानं त्वस्माभिरुक्तमेव ॥ संभवेति । अत एव न पदान्तसूत्रे वरेग्रहणं चरितार्थम् । तत्यकारे यदि स्यात्यकारलोपस्तदा संभव उवङादेरिति भावः ॥ ४ ॥

(तत्त्वालोकः) भाष्ये—सिद्धान्ती समाधत्ते—उक्तमिति । स्मृतमध्योपात्तत्वात् प्रकृतानुपयुक्तमप्युपन्यस्यति—प्रत्ययेति ।

प्रदीपे—कित्त्वेति । कुच् धातोः क्ते इत्यादिः । इतीति—इति इतोरित्यर्थः । तदिति शेषः । अकारेति—यङ्लुकः पृथगित्यादिः । तस्य—अल्लोपस्य । उपधेति—"गमहनजने"ति सूत्रेणेत्यादिः । लोपस्य—उपधालोपस्य । तस्य—उपधालोपस्य । तेषाम्—उवङादीनाम् । अस्य सतीति शेषः । इति—इति हेतोः ।

(४ परिभाषासूत्रम् ॥ १ । १ । ४ आ २ ॥)

क्क्ङिति च ॥ १ । १ । ५

(अथ सप्तम्या निमित्तार्थकत्वाधिकरणम्)

(१२५ आक्षेपवार्तिकम् ॥ १ ॥)

॥ * ॥ क्क्ङिति प्रतिषेधे तन्निमित्तग्रहणम् [ उपधारोरवीत्यर्थम् ] ॥ * ॥

(आक्षेपभागव्याख्याभाष्यम्)

क्क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यम् । क्क्ङिन्निमित्ते ये गुणवृद्धी प्राप्नुतस्ते न भवत इति वक्तव्यम् ॥

(प्रदीपः) क्क्ङिति च ॥ ५ ॥ क्क्ङिति प्रतिषेध इति । इक इत्यनुवर्तते, गुणवृद्धी इति च । तत्र यदीक् क्ङितीत्यनेन विशेष्यते कक्ङिति परतो य इगिति, तदा तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानान्निर्दिष्टग्रहणस्य चानन्तर्यार्थत्वाच्चितं स्तुतमित्यादावेव निषेधः स्याद्, न तु भिन्नो भिन्नवानित्यादाविति तन्निमित्तग्रहणं कर्तव्यम् ॥ यदा तु क्ङिद्ग्रहणं गुणवृद्धिविशेषणम्, तदा परसप्तम्या अप्रसङ्ग एव । न हि विहितयोर्निषेधः, अपि त्वनभिनिर्वृत्तयोरेवेति परिभाषानुपस्थानान्निमित्तसप्तम्येव क्ङितीति भवति, क्ङिन्निमित्ता हि तयोः प्रवृत्तिः ॥

(उद्द्योतः) क्क्ङिति च ॥ ५ ॥ तत्र यदीति । तस्मिन्नितिपरिभाषानुग्राह्येत्यर्थः ॥ यदात्विति । निषेध्यत्वेन तयोः प्राधान्यादिति भावः ॥ नहीति ॥ अनभिनिर्वृत्ते पूर्वपरव्यवहारस्य कर्तुमशक्यत्वात्तदनुपस्थानम् । निर्वृत्तनिषेधे तु देवदत्तहन्तृहतन्यायेन चितमित्यादाविकः श्रवणं न स्यादिति भावः ॥ निमित्तेति । अत्र यस्य च भावेनेति सप्तमी । सा च ज्ञापकत्वार्थिका । ज्ञापकत्वं च संबन्धं विनाऽनुपपन्नं सद् विधिशास्त्रस्तन्निमित्तत्वमादाय पर्यवस्यति । एवं च निमित्ततया क्क्ङिद्भाष्ये गुणवृद्धी नेत्यर्थः । तदाह—क्क्ङिन्निमित्ता हि तयोः प्रवृत्तिरिति ॥ केचित्तु सिद्धसाध्यसमभिव्याहारन्यायेन निमित्तत्वं फलति इत्याहुः ॥ परे तु—क्ङितीत्येतद् गुणवृद्धिविशेषणमेव । भवनक्रियातदभावयोरमूर्तत्वेन क्ङित्परत्वासंभवात् । इक इत्यस्याप्यनुवृत्त्यनुक्तेः । अनुवृत्तावपि तस्य शब्दपरत्वात् । तस्मान्निमित्तग्रहणाभावे क्ङितीति सप्तम्या निर्दिष्टे पूर्वस्येत्युपस्थित्या क्ङिति

अव्यवहिते पूर्वस्य ये गुणवृद्धी प्राप्नुतस्ते नेत्यर्थः। अनुवादे परिभाषा नोपतिष्ठत इति क्ङितीको गुणवृद्धी अचश्चेति सूत्रद्वयविषयमेवेत्युक्तम्। भाष्ये तस्य निषेधस्यानुपलम्भाच्च। तद्दर्शयति—भाष्ये—क्ङित्यनन्तरो गुणभाव्यस्तीति। निमित्तग्रहणे तु तत्सामर्थ्यात्परिभाषानुपस्थानम्, तत्प्रत्याख्याने तु लिङ्गादिना तदनुपस्थानम्॥ संभवन्त्यां परसप्तम्यां यस्य चेति सप्तम्या असंभवाच्च। उपपदविभक्तेरिति न्यायात्॥ सिद्धसाध्यसमभिव्याहारन्यायस्यापि तस्मिन्निति शास्त्रेण बाध एव। अत एव निमित्तग्रहणप्रयोजनावसरे-हत इत्युदाहरिष्यति। कैयटोक्तरीत्या इक्पदानुवृत्त्यैव निमित्तग्रहणमिति वार्तिकस्योक्तिसंभवेन तत्प्रयोजनदानानुक्तिसंभवः स्पष्ट एवेत्याहुः॥

(तत्त्वालोकः) भाष्ये—क्ङिति प्रतिषेध इति—क्ङिति यः प्रतिषेधस्तस्मिन्नित्यर्थः। अथवाऽत्र क्ङितीति स्वरूपपरम्।

प्रदीपे—इक इत्यनुवर्त्तते इति। अत्र सूत्रे "इको गुणवृद्धी" इति सूत्रादित्यादिः। तथा "न धातुलोप" इति सूत्रान्नेत्यनुवर्त्तते इति भावः। अत्र "इको गुणवृद्धी" इत्यनुवर्त्तते इति वक्तव्ये विभागेनोक्तिः वक्ष्यमाणपक्षद्वयोपपादनाय, एकं शब्दपरम्, अपरमर्थपरमिति सूचनाय चेत्याशयः। आनन्तर्येति—अव्यवहितत्वेत्यर्थः। इति—इति हेतोः। हि—यतः। अनभिनिर्वृत्तयोः—अनिष्पन्नयोः। इति—इति हेतोः। परिभाषेति—"तस्मिन्निति" परिभाषेत्यर्थः। इति—इत्यत्र। हि—यतः। तयोः—गुणवृद्ध्योः।

उद्द्योते-तयोः—गुणवृद्ध्योः। तदिति—तस्मिन्निति परिभाषेत्यर्थः। अत्र—क्ङितीत्यत्र। आहुरिति—तथा च निमित्तग्रहणं न कर्तव्यमिति भावः। विशेषणमेवेति—निषेध्यत्वेन तयोः प्रधानत्वादिति भावः। ननु गुणवृद्धितोऽपि प्राधान्यात् भवनक्रियायास्तदभावस्य वा तद्विशेषणमुचितमित्यत आह-भवनेति। तस्य-इक इत्यस्य। तस्य—"अनुवादे" इत्यस्य। ननु निमित्तग्रहणे कृतेऽपि तस्मिन्निति परिभाषोपस्थित्या भिन्न इत्यादौ दोष एवेत्यत आह—निमित्तेति। तदिति- निमित्तग्रहणेत्यर्थः। लिङ्गादिना—क्नोः कित्करणादिना। तदिति—तस्मिन्निति परिभाषेत्यर्थः। निमित्तग्रहणाभावे निमित्तार्थलाभो न सम्भवतीत्याह- सम्भवन्त्यामिति।

(भाष्यम्)

किं प्रयोजनम्?॥

(१२९ आक्षेपवार्तिकप्रयोजनखण्डम् १)

॥ * ॥ उपधारोरवीत्यर्थम् ॥ * ॥

(प्रयोजनखण्डव्याख्याभाष्यम्)

उपधार्थं रोरवीत्यर्थं च॥

(प्रदीपः) उपधारोरवीत्यर्थमिति। उपधाया अपीकः प्रतिषेधार्थम्, रोरवीतेर्यङ्निमित्त प्रतिषेधनिवृत्त्यर्थम्। अत्र हि तिब्निमित्तो गुणो, न यङ्निमित्तः॥

(उद्द्योतः) उपधाया अपीति। उपधायां रोरवीतौ चार्थः प्रयोजनं प्रवृत्तिनिवृत्तिभ्यां प्रतिषेधो यस्य तत्तन्निमित्त ग्रहणमिति भाष्यार्थं इति भावः॥ उपधारोरवीतिभ्यामित्युपधारोरवीत्यर्थमित्यर्थेन नित्यसमास इत्यन्ये॥

(तत्त्वालोकः) प्रदीपे—अत्र—रोरवीतीत्यत्र। हि—यतः।

(प्रथमप्रयोजनसमन्वयभाष्यम्)

उपधार्थं तावत्—भिन्नः भिन्नवानिति॥

किं पुनः कारणं न सिध्यति॥

क्ङितीत्युच्यते। यत्र क्ङित्यनन्तरो गुणभावीनास्ति तत्रैव स्यात्—चितम्, स्तुतम्। इह तु न स्याद्-भिन्नः भिन्नवानिति?॥

(तत्त्वालोकः) सिद्धयतीति—निमित्तग्रहणाभावे अत्र तस्य प्रतिषेधे इत्यत्रेति शेषः। समाधत्ते—क्ङितीति। यत इत्यादिः। यत्रेति—अतः तस्मिन्निति परिभाषोपस्थित्येत्यादिः। अनन्तरः—अव्यवहितः। स्यादिति—प्रतिषेध इति शेषः।

(प्रथमप्रयोजनबाधकभाष्यम्)

ननु च-यस्य गुण उच्यते, तं क्ङित्परत्वेन विशेषयिष्यामः। पुगन्तलघूपधस्य चाङ्गस्य गुण उच्यते। भिन्नं, तच्चात्र क्ङित्परम्॥

(प्रदीपः) ननु चेति। आकाङ्क्षया पुगन्तलघूपधस्येति सन्निधानं मन्यते। तथाहि 'क्ङिति गुणवृद्धी न भवतः' इत्युक्ते कस्येत्याकाङ्क्षायां 'यस्य प्राप्ते' इत्यस्ति पुगन्तलघूपधस्यापेक्षा॥ अथवा क्ङितीतिप्रत्ययग्रहणात्प्रत्ययेनाङ्गं सन्निधाप्यते। ततश्च क्ङिति भिन्नमित्यादौ लघूपधस्यानन्तर्यात्सिद्धो निषेधः॥

(उद्द्योतः) नन्वसंनिहितं पुगन्ताङ्गादि कथं तत्परत्वेन विशेष्यमत आह—आकाङ्क्षयेति॥ ननु निषेध्ये गुणवृद्धी प्रति क्ङित्परेरूपं निषेधविषयं प्रति चाकाङ्क्षा नाङ्गं प्रतीत्यत आह—अथवेति। निषेध्यगुणादेरप्रत्यये कस्क्ङित्यप्रसङ्गेन प्रत्ययग्रहणमिति भावः॥ एवं च प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वात्तस्यैव तद्विशेषणमिति भावः॥

(तत्त्वालोकः) भाष्ये—भिन्नं—भिन्नमित्यत्र। तच्च—तादृशाङ्गञ्च। अत्र—भिन्नमित्यत्र। प्रदीपे-इतीति—इत्यस्येत्यर्थः। अत्रेति शेषः। इत्यस्ति—इति वचनादस्ति।

उद्द्योते-तत्परत्वेन—क्ङित्परत्वेन। विशेष्यं—विशेषणीयम्। निषेध्ये इति—निषेधस्येत्यादिः। तस्यैव—अङ्गस्यैव। तत्—क्ङितीति।

(प्रथमप्रयोजनसाधकभाष्यम्)

पुगन्तलघूपधस्येति नैवं विज्ञायते—पुगन्तस्याङ्गस्य लघूपधस्य चेति॥

कथं तर्हि?॥

पुकि अन्तः पुगन्तः। लघ्वी उपधा लघूपधा। पुगन्तश्च लघूपधा च पुगन्तलघूपधं पुगन्तलघूपधस्येति॥ अवश्यं चैतदेवं विज्ञेयम्। अङ्गविशेषणे हि सतीहापि प्रसज्येत—भिनत्ति, छिनत्तीति॥

(प्रदीपः) लघूपधेति। ततश्च समुदायस्यानिर्देशादवयवस्य चेको व्यवधानात्तदवस्थैवाप्राप्तिरित्यर्थः॥

(उद्द्योतः) आद्यव्याख्यायां परिहारभाष्यं योजयति—ततश्च समुदायस्येति॥ द्वितीये त्विदं बोध्यम्—नाक्षिप्तविशेषणत्वं न्याय्यमिति॥ भाष्ये- अङ्गविशेषणे हीति। पुगन्तलघूपधस्येत्यस्य बहुव्रीहिणाऽङ्गविशेषणत्वे इत्यर्थः॥

(तत्त्वालोकः) भाष्ये—अत्र तत्पुरुषः प्रकृतार्थं एव न अपि त्वन्यार्थोपीत्याह—अवश्यमिति। एतत्—पुगन्तलघूपधस्येति। हि-यतः। प्रसज्येतेति—नकाराकारेणाङ्गस्य लघुपधत्वाद् भकारछकारेकारस्य तिपं निमित्तीकृत्य गुण इत्यादिः। निमित्तस्यापि अङ्गविशेषण-

त्वात् न येन नाप्राप्तमिति न्यायेन निर्वाहसम्भव इति भावः ।

उद्द्योते-आद्येति—ननु चेत्यस्य कैयटीयायामित्यादिः । कैयटीयन्यूनतां निराकरोति—द्वितीये त्विति । तत्र तदीये द्वितीयव्याख्याने त्वित्यर्थः ।

( द्वितीयप्रयोजनसमन्वयभाष्यम् )

**रोरवीत्यर्थं च । 'त्रिधा बद्धो वृषभो रोरवीति' ॥**

( तत्त्वालोकः ) भाष्ये—एवं तन्निमित्तग्रहणस्योपधार्थत्वं व्यवस्थाप्य रोरवीत्यर्थत्वमपि साधयति—**रोरवीत्यर्थं चेति ।**

( आक्षेपभाष्यम् )

**यदि तन्निमित्तग्रहणं क्रियते, शचङन्ते दोषः, रियति पियति धियति प्रादुद्रुवत् प्रासुस्रवत् । अत्र न प्राप्नोति ॥**

( प्रदीपः ) तन्निमित्तपक्षस्यापि दुष्टतामाह—**शचङन्ते दोष इति ।** सार्वधातुकनिमित्तस्य गुणस्य निषेधेऽपि लघूपधलक्षणस्य निषेधाप्रसङ्ग इत्यर्थः । **रियतिपियतिधियतीति ।** रि पि गतौ धि धारणे इति तुदादौ पाठः ॥

( उद्द्योतः ) यदीत्यनेन न स्वपक्षस्योपादेयतोच्यते । किं तूभयोः साम्यमुच्यत इत्याह—**तन्निमित्तपक्षस्यापीति ॥ सार्वधातुकनिमित्तस्य ।** शनिमित्तस्य ॥ **लघूपधलक्षणस्य** निर्निमित्तस्य ॥

( तत्त्वालोकः ) भाष्ये—**क्रियते इति**—तर्हीति शेषः । **प्राप्नोतीति**—प्रतिषेध इति शेषः ।

प्रदीपे—रि श इत्यादेः लघूपधत्वादाह—**लघूपधेति ।**

उद्द्योते—**स्वपक्षस्य**—तन्निमित्तग्रहणाभावपक्षस्य **उभयोः**—तन्निमित्तग्रहणाग्रहणपक्षयोः ।

( १२६ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ शचङन्तस्यान्तरङ्गलक्षणत्वात्**

**[ सिद्धम् ] ॥ * ॥**

( भाष्यम् )

**अन्तरङ्गलक्षणत्वादत्रेयङुवङोः कृतयोरनुपधात्वाद् गुणो न भविष्यति ॥**

( उद्द्योतः ) भाष्ये **अन्तरङ्गलक्षणत्वादिति ।** प्राधान्येनाच एव यत्रानन्तर्याश्रयणं तत्रैव **नाजानन्तर्ये** इति निषेधप्रवृत्तेस्तस्या अभावाच्चेति भावः ॥ नन्वदुद्रुवदित्यत्र **सार्वधातुकेति** गुणात्पूर्वं नित्यत्वाच्चङि **द्विर्वचनेऽचीति** निषेधादुवङभावे द्वित्वात्परत्वाल्लघूपधगुणो दुर्वार इति चेन्न । अन्तरङ्गत्वाद्द्वित्वस्यैव प्रवृत्तेः । ओर्णोतेर्द्वित्वकरणेनोपधाकार्यस्य द्वित्वात्प्राबल्यबोधनेऽपि न क्षतिः । ज्ञापकस्य सजातीयापेक्षत्वेनोपधाकार्यस्य यत्र द्वित्वसमाननिमित्तता द्वित्वनिमित्तचङ्निमित्तता वा तत्रैव तत्प्राबल्यबोधनादित्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**अन्तरङ्गलक्षणत्वादिति**—पूर्वोपस्थितनिमित्तकत्वेन तयोरन्तरङ्गत्वादित्यर्थः । शचङन्तस्येत्यत्र अधिकरणस्य सम्बन्धित्वेन विवक्षायां षष्ठीमभिप्रेत्याह—**अत्रेति ।** शचङन्ते इत्यर्थः ।

उद्द्योते—**आनन्तर्येति**—अन्यप्रतियोगिकानन्तर्येत्यर्थः । प्रकृते च अन्तरङ्गे अचो न प्राधान्येनाश्रयणं, बहिरङ्गे च नाच एवाश्रयणमित्याशयः । **तस्याः**—नाजानन्तर्यपरिभाषायाः । **तत्प्राबल्येति**—उपधाकार्यप्राबल्येत्यर्थः ।

( तन्निमित्तग्रहणस्य निर्दोषत्वोपसंहारभाष्यम् )

**एवं क्रियते चेदं तन्निमित्तग्रहणम् । न च कश्चिद्दोषो भवति ॥**

( तत्त्वालोकः ) भाष्ये—**एवमिति**—उपधारोरवीत्यर्थमिति शेषः । **न चेति**—तस्मिन् क्रियमाणे इति शेषः ।

( फलान्तरप्रदर्शकभाष्यम् )

**इमानि च भूयस्तन्निमित्तग्रहणस्य प्रयोजनानि हतो हथः उपोयते औयत लौयमानिः पौयमानिः नेनिक्त इति॥**

( प्रदीपः ) **हतो हथ इति ।** यथैवादिप्रभृतिभ्यः **शप इति** शब्निवर्त्यते एवमकारोपि निषेधेन निवर्त्स्यतेत्याशयः ॥ नन्विग्लक्षणोयं गुणो न भवतीति निषेधाप्रसङ्गः, सत्यम् । परिहारान्तरसम्भवान्नैतदाश्रितम् ॥

( उद्द्योतः ) भूयः पुनरर्थे ॥ **एवमकारोऽपीति ।** 'क्ङिति परे गुणवृद्धी न प्रयोक्तव्ये' इति सूत्रार्थः । तत्र यथा चितमित्यादावसतो गुणादेः प्रागभावः पाल्यते । एवं सतोपि निवृत्तिः साध्येन—**सतोऽपि** निवृत्तेरदिप्रभृतिभ्य इत्यादौ दृष्टत्वादिति भावः ॥ **नन्विति ।** तथा **चेक** इत्यनुवृत्तिसामर्थ्यादसत एवाप्रयोगः प्रतिपाद्यत इति भावः ॥ **नेनिक्ते** इत्यत्र **निजां त्रयाणां गुणः** श्लावित्यभ्यासस्य गुणः ॥

( तत्त्वालोकः ) भाष्ये—एवं तन्निमित्तग्रहणस्य मुख्यफलानि प्रतिपाद्य गौणफलानि दर्शयति—**इमानि चेति ।**

प्रदीपे-**अकारोपीति**—हनुधस्क इत्यादिः । तन्निमित्तग्रहणाभावे इति शेषः । **इति—इति** हेतोः । **एतत्**—परिहरणम् ।

उद्द्योते—ननु बहूनीत्यर्थे भूयांसीति वक्तव्ये कथं भूय इत्युच्यते इत्यत आह—**पुनरिति ।** तथा च भूय इत्यस्याव्ययत्वान्नानुपपत्तिरित्याशयः । तादृशयोस्तयोरप्रयोगो द्वेधा, एकः सतोर्निवृत्त्या, अपरः असतोः प्रागभावपरिपालनेन । तयोरन्त्यमाह—**तत्रेति । प्रथममाह—एवमिति । सतोऽपीति**—अकारादेरिति शेषः । तन्निमित्तग्रहणे तु हत इत्यादावकारस्य ङित्तसाद्यनिमित्तकत्वात् उपोयते इत्यादावोकारौकारयोः यगनिमित्तकत्वात् नेनिक्ते इत्यत्रैकारस्य ङित्तेऽनिमित्तकत्वान्नानेन निवृत्त्यापत्तिरिति भावः । **सतोऽपीति**—शप इति शेषः । **अप्रयोग इति**—क्ङिति चेत्यनेनेति शेषः ।

( फलान्तरप्रत्याख्यानभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । इह तावद्—हतो हथ इति । प्रसक्तस्यानभिनिर्वृत्तस्य प्रतिषेधेन निवृत्तिः शक्या कर्तुम् । अत्र च धातूपदेशावस्थायामेवाकारः ॥**

( प्रदीपः ) **प्रसक्तस्येति ।** सामान्यलक्षणेन विशेषलक्षणापरामर्शेन यत्प्राप्तं पुनर्विशेषलक्षणपरामर्शेनात्मस्वरूपेणानभिनिर्वृत्तं तस्य निवृत्तिः क्रियते । परमार्थतस्तूत्सर्गापवादयोरेकवाक्यतायामप्राप्त्यनुमानं बाध इति सिद्धान्तः ॥ चितमित्यादौ च प्रसक्तानभिनिर्वृत्तगुणनिषेधे वचनस्य चरितार्थत्वाद्धतो हथ इति भूताकारनिवृत्तावव्यापारः । **अदिप्रभृतिभ्य इत्यनेन** तु गत्यन्तराभावात्सत्त्वेव प्रक्रियादशायां शब्निवर्त्यते ॥ नन्वेवं भवत इत्यादौ प्रसक्तोऽनभिनिर्वृत्त एव शकारः कस्मादनेन न निवर्त्यते, नैष दोषः, शब्भवतीत्यस्यां चोदनायां गुणरूपेणाचोदनान्नायं गुणनिषेधविषयः ॥

( उद्द्योतः ) प्रसक्तत्वानभिनिर्वृत्तत्वयोर्विरोधमाशङ्क्याह—**सामान्येति ॥ निवृत्तिः ।** अनभिनिर्वृत्तिः ॥ विहितप्रतिषिद्धयोर्विकल्प-

स्तर्हि स्यादत आह—**परमार्थेति**। गुणविध्येकवाक्यतया क्ङिद्भिन्नसार्वधातुकादौ गुण इत्यर्थात् क्ङिति तयोरप्राप्तिरेवेति भावः॥ सा च पर्युदासविषया। यद्वा प्रसज्यप्रतिषेधेन वाक्यार्थबोधे तदंशे सामान्यशास्त्रजज्ञानस्याप्रामाण्यं कल्प्यते। एकवाक्यताफलसम्पत्तेस्त्वेक**वाक्यतायामि**त्युक्तमिति द्रष्टव्यम्॥ **भूताकारेति**। सिद्धाभावपरिपालनेनैव सिद्धौ असिद्धाभावविधाने गौरवादिति भावः॥ **प्रक्रियायामिति**। वस्तुतस्तत्रापि लुग्द्वारानुत्पत्तिरेवान्वाख्यायते इति बोध्यम्॥ **नैष इति**। एकान्ता अनुबन्धा इति भावः। **अयमेव न्याय्य इति तस्यलोप** इति सूत्रे वक्ष्यति॥

**( तत्त्वालोकः )** भाष्ये—**सन्तीति**—गौणानि तस्येति शेषः। **इतीति**—न प्रयोजनमिति शेषः। कुत इत्यत आह—**प्रसक्तस्येति**। यत इत्यादिः। **अनभिनिर्वृत्तस्य**—अनिष्पन्नस्य। **अत्र**—हतो हथ इत्यत्र।

प्रदीपे—**एकवाक्यतायामिति**—फलितायामिति शेषः। **निषेधे इति**-सतीति शेषः। **इति**—इत्यत्र। **अनेन**-क्ङिति चेत्यनेन। **अयं**-शब्कारः।

उद्द्योते—**तर्हि**—निषेधस्य प्राप्तिपूर्वकत्वात् सामान्यशास्त्रप्राप्तस्यैव गुणादेरनेन निषेध्यत्वे सति। **गुणेति**—क्ङिति चेत्यस्येत्यादिः। नेत्यनुवृत्तस्य क्ङिद्विशेष्यतां गुणादिनिमित्तसार्वधातुकादिविशेषणताञ्चाभिप्रेत्याह—**क्ङिद्भिन्नेति**। **तयोः**—गुणवृद्ध्योः। ननु तयोर्विधेयभेदात्कथमेकवाक्यतेत्यत आह—**सा चेति**। एकवाक्यता चेत्यर्थः। नन्वसमस्तप्रयोगे नञोऽत्यन्ताभावाद्यर्थकत्वात् कथं पर्युदासार्थकतेत्यत आह—**यद्वेति**। **तदंशे**। क्ङिदंशे। **अप्रामाण्यमिति**—नानेन शास्त्रस्याप्रामाण्यमापतति, सामान्यशास्त्रमात्रालोचनेन तस्य सर्वविषयकताभ्रमानन्तरं विशेषशास्त्रालोचनात् सङ्कोचेन विशेषविषयकतायाः कल्पनादित्याशयः। **अयमेव**—एकान्ता अनुबन्धा इति पक्ष एव।

**( भाष्यम् )**

**इह चोपोयते औयत लौयमानिः पौयमानिरिति। बहिरङ्गे गुणवृद्धी, अन्तरङ्गः प्रतिषेधः। असिद्धं बहिरङ्गमन्तरङ्गे॥**

**( प्रदीपः ) उपोयत इति**। वेञो यकि सम्प्रसारणे कृते उभयपदाश्रितत्वाद्बहिरङ्गो गुणः। औयतेत्यादौ बहिरङ्गाश्रयत्वाद्वृद्धिर्बहिरङ्गा॥

**( तत्त्वालोकः )** प्रदीपे **बहिरङ्गाश्रयत्वात्** बहिर्भूतलङपेक्षत्वात् **लौयमान्यादौ** बहिर्भूतञिदादिनिमित्तकत्वाद् वृद्धेः बहिरङ्गतेति **भावः**।

**( भाष्यम् )**

**नेनिक्त इति। परेण रूपेण व्यवहितत्वान्न भविष्यति॥**

**( प्रदीपः ) नेनिक्ते इति**। क्ङित्परत्वेनाङ्गस्य विशेषणादङ्गस्य च कार्यित्वात्पूर्वः पक्षः। उत्तरस्त्वभ्यासस्य कार्यित्वात्तस्य च परेण रूपेण व्यवधानादिति॥

**( उद्द्योतः ) कार्यित्वादिति**। अङ्गस्य गुणो भवति, स च तत्सम्बन्ध्यभ्यासके इत्यर्थ इत्यभिमानः॥ **उत्तरस्त्विति**। पक्ष इति शेषः॥ क्ङित्परस्य यस्य गुणः प्राप्तस्तस्य नेति सूत्रार्थ इति भावः॥

**( तत्त्वालोकः )** भाष्ये-**इति**—इत्यत्र। **परेण रूपेण**—निजित्यनेन। **भविष्यतीति**। प्रतिषेध इति शेषः। प्रदीपे **तस्य** अभ्यासस्य। उद्योते-स च गुणश्च। **तदिति**—अङ्गेत्यर्थः। **अभिमान इति**—प्रयोजनदातुरित्यादिः। निजाम् अङ्गसम्बन्ध्यभ्यासस्य गुण इति "निजामि"ति सूत्रार्थेन यस्य गुणः प्राप्तस्तस्य क्ङितीति विशेषणमित्यभिप्रेत्याह-क्ङित्परेति। **सूत्रेति**—क्ङिति चेतीत्यादिः।

**( अथ तन्निमित्तग्रहणप्रत्याख्यानभाष्यम् )**

**उपधार्थेन तावन्नार्थः। धातोरिति वर्तते। धातुं क्ङित्परत्वेन विशेषयिष्यामः॥**

**( प्रदीपः )** धातुं क्ङित्परत्वेनेति। न धातुलोप इत्यत्रोपसर्जनेऽपि धातौ धातुशब्दमात्रस्य स्वरितत्वादिहानुवृत्तिरित्यर्थः॥

**( उद्द्योतः )** भाष्ये धातुं क्ङिदिति। परत्वेन निर्दिष्टं यत् क्ङिदिति तद्धातुं प्रति विहितमिति विशेषयिष्यामः। तथा च धातुविहितं क्ङिद् यतः कुतश्चित्परं तदवयवस्य गुणो नेति सूत्रार्थ इत्यर्थः॥ तद् ध्वनयन्नाह—**मत्वा प्रश्न इति**॥

**( तत्त्वालोकः )** भाष्ये—एवन्तस्य गौणफलानि निराकृत्य मुख्यफलानि खण्डयति—**उपधेति**। **अर्थः**—तस्य प्रयोजनम्। कुत इत्यत आह—**धातोरिति**। यतोऽत्रेत्यादिः। वर्तते-अनुवर्त्तते।

प्रदीपे—**उपसर्जने**—समासे गुणभूते। **धातौ**—धातुपदे। **धातुशब्दमात्रस्य**-लुप्तषष्ठ्यन्तस्य। **इहेति**-शब्दाधिकाररीत्येति भावः।

उद्द्योते—क्ङित् परत्वेनेति पृथक्पदे इत्याशयेनाह—**परत्वेनेति**। क्ङितीत्यत्रत्यसप्तम्येत्यादिः। **आह**—वक्ष्यति। तस्य विभक्तिप्रतिरूपकत्वात्। **मत्वा प्रश्न इतीति**—द्वयोः प्रतीकम्।

**( आक्षेपभाष्यम् )**

**यदि धातुर्विशेष्यते, विकरणस्य न प्राप्नोति—चिनुतः सुनुतः लुनीतः पुनीत इति॥**

**( प्रदीपः ) यदीति**। क्ङित्यनन्तरस्य धातोर्गुणवृद्धी न भवत इति वाक्यार्थं मत्वा प्रश्नः॥

**( तत्त्वालोकः )** भाष्ये—क्ङित्परत्वे बहुव्रीहिनिष्पन्नमेकं पदमित्याशयेनाह—**यदीति**। क्ङित्परत्वेनेति शेषः। **विकरणस्येति**—तर्हीत्यादिः। श्न्वादेरधातुत्वात् ङित्त्वनिमित्तको निषेध इति शेषः।

**( समाधानभाष्यम् )**

**नैष दोषः। विहितविशेषणं धातुग्रहणम्—धातोर्यो विहित इति॥**

**( तत्त्वालोकः )** दोष इति—यत इति शेषः।

**( आक्षेपभाष्यम् )**

**धातोरेव तर्हि न प्राप्नोति॥**

**( प्रदीपः ) धातोरेवेति**। धातोर्विहितस्य क्ङित्यनन्तरे नेति मत्वा प्रश्नः॥

**( तत्त्वालोकः )** प्रदीपे—**मत्वेति**—वाक्यार्थमित्यादिः।

**( समाधानभाष्यम् )**

**नैवं विज्ञायते—धातोर्विहितस्य क्क्ङतीति॥**

**कथं तर्हि?**

**धातोर्विहिते क्क्ङतीति॥**

**( प्रदीपः ) धातोर्विहित इति**। धातोर्विहिते क्क्ङत्यनन्तरो यो धातुर्विकरणो वा तस्य प्रतिषेध इत्यर्थः॥

( उद्द्योतः ) धातुर्विकरणो चेति । धातुना विहितविशेषणत्वलब्धमेतदुभयम् ॥

( समाधानान्तरभाष्यम् )

**अथवा—कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्र द्रष्टव्यम् "पुगन्तलघूपधस्य गुणो भवति" इत्युपस्थितमिदं भवति "क्ङिति न" इति ।**

( प्रदीपः ) अथवेति । यत्र गुणवृद्धी विधीयेते, तत्र 'क्ङिति न' इत्युपतिष्ठते इत्येवमियं परिभाषा भवति । तत्र पुगन्तलघूपधस्येत्यत्रास्या उपस्थाने सति येन नाव्यवधानमिति भिन्नमित्यादौ निषेधो भविष्यति ॥

( उद्द्योतः ) येन नेति । पुगन्तलघूपधेनि तत्पुरुष इति भावः ॥ श्रुतत्वात्सार्वधातुकादिकं क्ङितीति च पुगन्तादीनामेव विशेषणमित्यभिमानः ॥

( तत्त्वालोकः ) भाष्ये—धातुग्रहणस्य सूत्रस्य च प्रत्याख्यानात् समाधानान्तरमाह—अथवेति । इति—इत्यत्र ।

प्रदीपे—क्ङिति चेत्यस्य गुणवृद्धिलिङ्गकत्वात् परिभाषात्वं साधयति—यत्रेति । इयं—क्ङिति चेति । अस्याः—क्ङिति चेति परिभाषायाः । इति—इति न्यायेन । उद्द्योते—बहुव्रीहौ दोषतादवस्थादाह—तत्पुरुष इति । एवेनाङ्गव्यावृत्तिः ।

( समाधानान्तरभाष्यम् )

**अथवा यदेतस्मिन्योगे क्ङिद्ग्रहणं क्रियते तदनवकाशम् । तस्यानवकाशत्वाद् गुणवृद्धी न भविष्यतः ॥**

( प्रदीपः ) अथवेति । मा भूत्परिभाषा, तथापि प्रतिषेधस्य प्रतिषेध्यापेक्षायां यावन्तो यादृशाः प्रतिषेद्धव्यास्तावन्ति प्रतिषेधसूत्राणीति पुगन्तलघूपधगुणे प्रतिषेध्येऽनवकाशः प्रतिषेधो व्यवहितेऽपि प्रवर्तते ॥ अथवा यथोद्देशपक्षाश्रयेण भाष्यम् । तथाहि—प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति यदेतस्मिन्नित्युक्तम् ॥

( उद्द्योतः ) प्रतिषेध्यापेक्षायामिति । गुणवृद्धिश्रुत्या तद्रूपप्रतिषेध्याकाङ्क्षायां यावद्गुणवृद्धिविधायकशास्त्रविषयकनिषेधवाक्यानां व्यक्तिपक्षे विनिगमनाविरहादुपप्लुव इत्यर्थः ॥ प्रधानानीति । अनेन तद्विषयकनिषेधोपप्लवे बीजं दर्शितमित्याहुः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वोत्तरसूत्रसाहचर्यात् क्ङिति चेत्यस्य निषेधत्वस्यैवौचित्येन परिभाषात्वस्यायुक्तत्वात् समाधानान्तरमाह—अथवेति । प्रदीपे यदेतस्मिन् योगे इतिभाष्यस्वारस्यादाह—अथवेति । गुणवृद्धयोः निषेध्यत्वेन प्राधान्यात् निषेधस्य गुणत्वात् "प्रतिप्रधानं गुणावृत्तिरि"ति न्यायप्रवृत्तिमभिप्रेत्याह—प्रधानानीति । इति—इत्याशयेन । उद्द्योते—व्यक्तिपक्षयथोद्देशपक्षयोः दुर्बलत्वादत्रारुचिसूचनायाह—आहुरिति ।

( समाधानान्तरभाष्यम् )

**अथ वाचार्यप्रवृत्तिर्ज्ञापयति—'भवत्युपधालक्षणस्य गुणस्य प्रतिषेधः' इति । यदयं "त्रसिगृधिधृषिक्षिपेः क्नुः" "इको झल् हलन्ताच्च" इति क्नुसनौ कितौ करोति ॥**

**कथं कृत्वा ज्ञापकम् ? ॥**

**कित्करण एतत्प्रयोजनम्—गुणः कथं न स्याद् इति । यदि चात्र गुणप्रतिषेधो न स्यात् , कित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो—भवत्युपधालक्षणस्यापि गुणस्य प्रतिषेध—इति । ततः क्नुसनौ कितौ करोति ॥**

( प्रदीपः ) अथवेति । लिङ्गान्निर्दिष्टाङ्गविकला तस्मिन्निति परिभाषोपतिष्ठत इत्यर्थः ॥ अनेकपरिहारोपन्यासो न्याय व्युत्पादनार्थः ॥

( उद्द्योतः ) अङ्गविकलेति । पूर्वस्य परस्य वेति सन्देहेन तदुपस्थितेररिति भावः । न चैवं नेनिक्ते इत्यत्रापि निषेधः स्यात् । येन-नेति न्यायेनैकवर्णव्यवधाने एव निषेधप्रवृत्तेर्बोधनात् ॥ न्यायव्युत्पादनेति । न्यायव्युत्पत्तिस्तत्प्रतिपत्तिः श्रोतॄणां तदुत्पादनायेत्यर्थः ॥ भाष्ये हलन्ताच्चेति ॥ नन्वेतद्विहितकित्त्वस्य न ज्ञापकत्वम् । दिद्वक्षतीत्यादावमागमनिषेधेन धिप्सतीत्यादौ नलोपेन च चारितार्थ्यात् । इको झलित्यपि न, तद्विषये इकः क्ङित्परत्वस्यैव संभवादिति चेन्न । "सृजिदृशोर्झल्यमकिति" "इको झल्" "दम्भे"रिति लघुन्यासेन सिद्धे सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वेन ज्ञापकसाम्राज्यात् । रुदविदमुषां क्त्वासनोर्मृडमृदगुधकुषक्लिशां क्त्वः कित्त्वविधानं च ज्ञापकं बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—तस्या एवारुचेराह—अथवेति । यत्—यस्मात् कथं नेति—कथमपि नेत्यर्थः । स्यादिति —तर्हीति शेषः ।

उद्द्योते—दिदृक्षतीति—अत्र परस्मैपदासम्भवात् सिसृक्षतीति पाठ आश्रयणीयः । इत्यपि न—इति विहितकित्त्वमपि ज्ञापकं न ।

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

**रोरवीत्यर्थेनापि नार्थः । क्ङितीत्युच्यते, न चात्र क्ङितं पश्यामः ॥**

(तत्त्वालोकः) अर्थः—तस्य प्रयोजनम् । क्ङितीति—यत इत्यादिः । अत्र—रोरवीतीत्यत्र ।

( आक्षेपभाष्यम् )

**प्रत्ययलक्षणेन प्राप्नोति ॥**

( तत्त्वालोकः ) प्राप्नोतीति—यङ्निमित्तः प्रतिषेध इत्यादिः ।

( समाधानभाष्यम् )

**"न लुमता तस्मिन्" इति प्रत्ययलक्षणप्रतिषेधः ।**

**अथापि "न लुमताङ्गस्य" इत्युच्यते, एवमपि न दोषः ॥**

**कथम् ? ।**

**न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते ॥**

**किं तर्हि ? ॥**

**योऽसौ लुमता लुप्यते तस्मिन्यदङ्गं तस्य यत्कार्यं तन्न भवतीति ॥ अथाप्यङ्गाधिकारः प्रतिनिर्दिश्यते । एवमपि न दोषः ॥**

**कथम् ? ॥**

**"कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्र द्रष्टव्यम् । "सार्वधातुकार्धधातुकयोर्गुणो भवति" इत्युपस्थितमिदं भवति "क्ङिति न" इति ॥**

**( उद्द्योतः )** अङ्गाधिकार इति । स्वरितलिङ्गासङ्गेनेति भावः ॥ **कार्यकालमिति** । तथा च तत्रोपस्थितत्वादिदमप्याङ्गमङ्गाधिकारस्थैकवाक्यतापन्नत्वादिति भावः ॥ स्वरितत्वासङ्गवशात्तदधिकारपठितमिव तदधिकारस्थैकवाक्यतापन्नमपि गृह्यते इति तात्पर्यम् ॥ निषेधेऽपि परिभाषासादृश्यात्परिभाषात्वमुक्तम् । सादृश्यं च निषेध्याकाङ्क्षया तदेकवाक्यतामात्रेणेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—वार्तिककारमतेनाह—**न लुमतेति** । लुमता लुप्ते तन्निमित्तकं पूर्वस्य कार्यं नेति तदर्थः । तस्य खण्डितत्वात्सूत्रकारमतेनाह—**अथापीति** । **न**—न हि । **यत्कार्यमिति**—तन्निमित्तकमाङ्गमनाङ्गं वेति शेषः । तुष्यतु दुर्जन इति न्यायेनाभ्युपेत्याह—**अथापीति** । **कार्येति**—यत इत्यादिः । **इति**—इत्यत्र ।

उद्द्योते—**स्वरितेति** । अङ्गपदे इत्यादिः । **तत्र**—"सार्वधातुके"ति विधिसूत्रे । **इदम्**—"क्ङिती"ति परिभाषासूत्रम् । **स्वरितत्वेति**—स्वरितेनाधिकं कार्यमिति "स्वरितेने"त्यर्थादित्याशयः । **तदिति**—अङ्गेत्यर्थः । नन्वस्य निषेधसूत्रता, न तु परिभाषासूत्रतेत्यत आह—**निषेधेऽपीति** । पर्युदासविषयैकवाक्यताया निराकृतत्वादाह—**निषेध्येति** । तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहार इत्याशयः ।

( समाधानान्तरभाष्यम् )

## अथवा छान्दसमेतद् । दृष्टानुविधिश्छन्दसि भवति ॥

**( उद्द्योतः )** छान्दसमिति । **यङोऽचि चे**ति चेन **बहुलं छन्दसी**त्यनुकृष्य यङो लुग्विधानादित्यर्थः । न च **हुश्नुवो**रिति सूत्रस्थेन हुश्नुवोरित्यस्य भाषायां यङ्लुक्सत्ताज्ञापकपरभाष्येणोवर्णान्तेभ्यो यङ्लुग्भाषायामप्यस्तीति लभ्यते । अन्यथा ज्ञापितेऽप्यचारितार्थ्यं स्पष्टमेवेति वाच्यम् । तत्प्रामाण्येनाजादौ कङ्कित क्वचित्तत्सत्ताङ्गीकारेऽपि सर्वत्र भाषायां तत्सत्त्वे मानाभावात् । तत्रत्यभाष्यस्यैकदेशयुक्तित्वाच्च ॥

**( तत्त्वालोकः )** भाष्ये—न लुमतेत्यस्यानित्यत्वादस्य परिभाषात्वेनाप्रसिद्धत्वाच्चाह—**अथवेति** । **एतत्**—रोरवीतीति । **दृष्टानुविधिः**—दृष्टमनुलक्ष्यविधिः ।

उद्द्योते—**अन्यथेति**—उवर्णान्तानेकाच्त्वस्य तयोरसम्भवादिति शेषः । **तदिति**—तत्रत्यभाष्येत्यर्थः । **तदिति**—भाषायां यङ्लुगित्यर्थः । **तदिति**—यङ्लुगित्यर्थः । **तत्रत्येति**—हुश्नुवोरिति सूत्रस्थेत्यर्थः ।

( समाधानान्तरभाष्यम् )

## अथवा बहिरङ्गो गुणोऽन्तरङ्गः प्रतिषेधः । "असिद्धं बहिरङ्गमन्तरङ्गे ॥

**( प्रदीपः )** बहिरङ्ग इति । ततश्चासिद्धत्वादसत्त्वान्निषेधानुपपत्तिरित्यर्थः ॥

**( उद्द्योतः ) गुणो बहिरङ्ग इति** । गुणस्य बहिरङ्गता, बहिर्भूतसार्वधातुकाश्रयत्वात् ॥ नन्वसिद्धस्यानिष्पन्नस्यैव निषेधः क्रियते, तत्राह—**असत्त्वादिति** । शास्त्रासिद्धत्वादत्रासत्त्वबुद्ध्या प्रतियोगिज्ञानाभावान्निषेधानुपपत्तिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—छान्दसत्वस्यागतिकगतित्वादाह—**अथवेति** । उद्द्योते—**बहिरिति**—निषेधनिमित्तयङ इत्यादिः । गुणनिमित्तसार्वधातुकाद् अन्तर्भूतयङ्निमित्तकत्वात्प्रतिषेधस्यान्तरङ्गतेत्याशयः । **अत्र**—गुणे ।

( समाधानान्तरभाष्यम् )

## अथवा पूर्वस्मिन्योगे यदार्धधातुकग्रहणं, तदनवकाशम् । तस्यानवकाशत्वाद् गुणो भविष्यति ॥

**( प्रदीपः ) अथवेति** । ननु बहुव्रीह्यर्थमुभयविशेषणायार्धधातुकग्रहणं स्यादिति कथमनवकाशत्वम् ॥ उच्यते—विनाप्यार्धधातुकग्रहणेन बहुव्रीहिर्लभ्यते । **यथैकाचो द्वे** इत्यत्र । रोरवीतीत्यत्रानैमित्तिकत्वाल्लोपस्य **गुणनिषेधः पूर्वेण** न प्राप्नोतीत्यार्धधातुकग्रहणसामर्थ्यात्सूत्रान्तरप्राप्तोऽपि निषेधो बाध्यत इत्यर्थः ॥ यङ्निमित्तश्च निषेधोऽन्तरङ्गत्वाद्बाध्यते, न सार्वधातुकनिमित्त इति रोरुत इत्यादौ निषेधो भवत्येव ॥ एतच्च छान्दसत्वमभ्युपेत्य यङ्लुको भाष्यकारेणोक्तम् ॥ भाषाविषयत्वे तु यङ्लुको बहूनि प्रयोजनान्यार्धधातुकग्रहणस्य संभवन्ति । तोतोर्ति, तोथोर्ति, दोदोर्ति, दोधोर्ति, जोहोर्ति, गोमोर्ति, इत्यादिषु तुर्वीथुर्वीदुर्वीधुर्वीत्यादिभ्यो यङ्लुकि तिपि वकारच्छकारयो **राल्लोप** इति लोपे कृतेऽसत्यार्धधातुकग्रहणे बहुव्रीहावप्याश्रिते **न धातुलोप** इति गुणनिषेधः प्राप्नोति, स माभूदित्येवमर्थमार्धधातुकग्रहणं स्याद् । अनेन चात्र व्यवधानान्नास्ति निषेध इति सति प्रयोजने कथमनवकाशं स्यात् ॥

**( उद्द्योतः )** उभयविशेषणाय **बहुव्रीह्यर्थ**मित्यन्वयः ॥ **यथेति** । **प्रथमस्ये**त्येतत्कर्मधारयेऽपि विशेष्यं शक्यं कर्तुमिति न तद् बहुव्रीहित्वगमकमिति भावः ॥ ननु सूत्रान्तरप्राप्तनिवृत्तिः कथं तत्राह—**सामर्थ्यादिति** । अयमाशयः—**आर्धधातुके** इति योगो विभज्यते, धातुलोप इति वर्तते षष्ठीत्युपपत्तश्च । एवं च **धात्वेकदेशलोपे सति** प्रत्यासत्त्याऽन्तरङ्गतया च **लुप्तधात्वेकदेशनिमित्तो गुणवृद्धिनिषेधश्चेदार्धधातुक एवे**ति नियमस्तत्सामर्थ्यादिति ॥ तद् ध्वनयन्नाह—**यङ्निमित्तश्चे**ति ॥ **भाषेति** । **हुश्नुवोः सार्वधातुक** इत्यत्र हुश्नुग्रहणादिति भावः ॥ **इत्यादिभ्य** इत्यादिना हुर्छा मुर्छा ॥ **राल्लोप इति** । तत्र हि क्क्ङितीति नानुवर्तते । तदनुवृत्तिपक्षे तोतोर्मीत्याद्युदाहरणम् ॥ नन्वेवमपि **क्क्ङिति चे**ति निषेधोऽत्र दुर्वार इति तद्वारणं विनाऽस्य चारितार्थ्यं कथमत आह—**अनेनेति** । बहिरङ्गराल्लोपस्यान्तरङ्गे यङाश्रये प्रतिषेधे कार्येऽसिद्धत्वाद् द्वाभ्यां व्यवधानात्तदप्राप्तिः । सनः कित्त्वेन तु एकव्यवधानमेवाश्रितमिति भावः ॥ वस्तुतस्तु भाष्यप्रामाण्यादेषां प्रयोगाणां लोकेऽभाव इत्येवाश्रयणीयम् ॥

**( तत्त्वालोकः )** भाष्ये—निषेधस्य निषेध्यापेक्षितया निषेध्यस्य बहिरङ्गत्वे निषेधस्यापि बहिरङ्गत्वादाह—**अथवेति** । **पूर्वस्मिन्**—न धातुलोप इत्यस्मिन् ।

प्रदीपे—**उभयविशेषणाय**—लोप-गुणवृद्धिविशेषणाय । अन्यथा तेषामेकनिमित्तकता न लभ्येतेत्याशयः । **इति**—इति हेतोः । **रोरवीतीति**—तथा चेत्यादिः । आर्धधातुकग्रहणं विना बहुव्रीहिलाभे चेति तदर्थः । **पूर्वेण**—"न धातुलोप" इत्यनेन । **इति**—इति हेतोः । **आर्धधातुकेति**—रोरवीतीत्यत्र गुणनिषेधव्यावृत्त्यर्थं क्रियमाणेत्यादिः । **सूत्रान्तरेति**—क्ङिति चेतीत्यर्थः । **इति**—इति हेतोः । **इत्यादाविति**—सार्वधातुकनिमित्त इति शेषः । अत्र समाधानेऽरुचिसूचनायाह—**एतच्चेति** । समाधानमिति शेषः । **छान्दसत्वमिति** यङ्लुकश्छान्दसत्वमभ्युपेत्येत्यन्वयः । **इत्यादिभ्य इति**—अनैमित्तिके इति शेषः । छकारवद्धात्वाशयेनाह—**छकारेति प्राप्नोतीति**—उभयोरेकनिमित्तकत्वादित्याशयः । **अनेन**—क्ङिति चेत्यनेन । **सतीति**—उक्तरीत्येति भावः । उद्द्योते—**प्राप्तेति**—निषेधेति शेषः । **आर्धेति**—लोलुव इत्यादौ धात्वंशलोपनिमित्तस्यार्धधातुकस्यैव संभ-

वात् "धातुलोप" इत्यत्र बहुव्रीहिणार्धधातुकस्यैवान्यपदार्थत्वेन लाभादार्धधातुकग्रहणस्याधिक्यादित्यादिः । वर्त्तते—अनुवर्त्तते । तत्पुरुषश्चेति—तत्राश्रीयते इति शेषः । शब्दाधिकारपक्षत्वेत्याशयः । उदाहरणमिति—तत्र अनुनासिकादिप्रत्ययपरत्वात् राल्लोप इत्यस्य प्रवृत्तेरित्याशयः । दुर्वार इतीति—तेन तद्वारणं वृथा स्यादितीति शेषः । बहिरङ्गेति—तिबाश्रयत्वादित्यादिः । तदप्राप्तिः—क्ङिति चेति निषेधाप्रवृत्तिः । ननूक्तज्ञापकादनेकान्यव्यवधानेऽपि प्राप्तिरित्यत आह—सन इति ।

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—'लैगवायनः' 'कामयते' ? ॥

( तत्त्वालोकः ) "तद्धितेति" वार्तिकमवतारयति-इहेति । क्ङित्प्रयुक्तो गुणवृद्धिनिषेध इति शेषः । लैगवायन इति—अत्र लिगोः नडादिभ्य इति फकि, किति चेति वृद्धौ, ओर्गुण इति गुणेऽवादेशादि । कामयते इति—अत्र कमेर्णिङि उपधावृद्ध्यादि ।

( १२७ सिद्धान्तसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥❀॥ तद्धितकाम्योरिक्प्रकरणात् ॥❀॥

( भाष्यम् )

इग्लक्षणयोर्गुणवृद्ध्योः प्रतिषेधः । न चैते इग्लक्षणे ॥

( प्रदीपः ) इग्लक्षणयोरिति । इक इत्येवं ये गुणवृद्धी तयोर्निषेध इत्यर्थः ॥

( उद्द्योतः ) नन्विग्लक्षणयोरित्युक्तावपि लैगवायने इकःस्थानिकत्वेनेग्लक्षणत्वात्स्यादेव गुणनिषेधोऽत आह—इक इतीति । अर्थाधिकारानुरोधेन पदपरमेवेक इति भावः ॥

( तत्त्वालोकः ) भाष्ये—इक्परिभाषाप्रस्तावेन निषेधारम्भादाह—इग्लक्षणेति । यत इत्यादिः । एते—तद्धितकाम्योः जायमाने गुणवृद्धी । उद्द्योते—अपि—कामयते इत्यत्र वृद्धिनिषेधवारणेऽपि ।

इति निमित्तार्थत्वनिराकरणम् ॥

---

( अथ स्थानिवत्त्वप्राप्तदोषवारणम् )

( १२८ आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ ❀ ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्गः ॥ ❀ ॥

( भाष्यम् )

लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावः प्राप्नोति—अचिनवम् असुनवम् अकरवम् ॥

( प्रदीपः ) लकारस्येति । अनुबन्ध इत्संज्ञकत्वाल्लोपात्स्थानिनि न सन्निधीयत इत्यनल्विधाविति निषेधो न प्रवर्तते । 'पिद् ङिन्न भवति' 'ङिच्च पिन्न भवती'ति भाष्यकारस्य कल्पना, न वार्तिककारस्येति दोषोपन्यासः ॥

( उद्द्योतः ) लोपादिति । पदार्थोपस्थितिकाल एवान्तरङ्गत्वाल्लोपप्रवृत्तिरिति भावः ॥ पिद् ङिन्नेति । सार्वधातुकमित्यत्रापिदिति योगविभागेन प्रसज्यप्रतिषेधेनायमर्थो लभ्यते । तत्र योगविभागसामर्थ्यात् स्थानिवत्त्वप्राप्ता अन्या वा ङित्त्वप्राप्तिः सर्वा प्रतिषिध्यत इत्याशयः ॥ भाष्ये स्थानिवद्भावः प्राप्नोतीति । तथा चाचिनवमित्यादौ गुणनिषेधप्रसङ्ग इति भावः ॥

( तत्त्वालोकः ) भाष्ये—वार्त्तिककारमतेनाह-लकारस्येति । स्थानिवद्भावः-स्थानिवद्भावेन ङित्त्वम् ।

प्रदीपे—नन्वल्विधाविति निषेधात् कथं स्थानिवद्भाव इत्यत आह—अनुबन्ध इति । इति—इति हेतोः । न प्रवर्त्तते इति—न त्वपीति लिङ्गादिति भावः ननु पिद् ङिन्नेति निषेधात् । कथं लादेशेषु स्थानिवद्भावेन ङित्वमित्यत आह—पिद् ङिन्नेति ।

उद्द्योते—अयमर्थः—पिद् ङिन्न, ङिच्च पिन्नेत्ययमर्थः । गुणेति—ङिन्निमित्तक इत्यादिः ।

( १२९ एकदेशिसमाधानवार्तिकम् ॥ ५ ॥ )

## ॥ ❀ ॥ लकारस्य ङित्त्वादादेशेषु स्थानिवद्भावप्रसङ्ग इति चेद्यासुटो ङिद्वचनात्सिद्धम् ॥ ❀ ॥

( भाष्यम् )

यदयं यासुटो ङिद्वचनं शास्ति तज्ज्ञापयत्याचार्यो—न ङिदादेशा ङितो भवन्तीति ॥

( तत्त्वालोकः ) यदयमिति–यासुटि ङिति कार्याभावात् अवयवेऽचरितार्थतया समुदायस्यैव ङित्वात् , तत्र स्थानिवत्त्वेन तस्य लाभे विधानं व्यर्थं सज्ज्ञापकमित्याशयः । ङिदादेशाः-स्थानिवत्त्वमात्रातिदिष्टङित्वा ङकारेत्कादेशाः । तेन तसाद्यादेशा ङितो भवन्त्येवेत्याशयः ।

( आक्षेपभाष्यम् )

यद्येतज्ज्ञाप्यते, कथं—"नित्यं ङितः" "इतश्च" इति ? ॥

( प्रदीपः ) कथं नित्यं ङित इति ॥ ननु ङितो लकारस्येति तत्रार्थः स्थितो, न तु ङित आदेशस्येति । अन्यथा पचावः पचन्तीति लोपः स्यात् ॥ एवं मन्यते—यासुटो ङित्त्वेन ज्ञापकेन स्थानिन एव लकारस्य ङिद्व्यपदेश उच्छिद्यते । ङकारोच्चारणं तु लुङ्लङ्लृङ्क्षिपत्यादौ विशेषणार्थं स्यात् ॥

( उद्द्योतः ) ननु ङित इति । तथा च न स्थानिवत्त्वेन ङित्वं प्रार्थ्यमिति भावः ॥ ङिद्व्यपदेश इति । स्थानिलसंबन्धिङत्त्वेऽसज्ञाभाव एवं ज्ञाप्यते । लस्येत्यस्य लवदितस्येति व्याख्या कार्येत्यर्थः ॥

( तत्त्वालोकः) भाष्ये—ज्ञापकस्य सामान्यापेक्षत्वमभिप्रेत्य ह—यदीति । कथमिति--तर्हीत्यादिः । आदेशस्य स्थानिवत्त्वेनाङित्वात् भवेत् भवेमेत्यादाविसलोपौ न स्यातामित्याशयः ।

प्रदीपे—पचन्तीतीति—पचन्तीत्यत्रेत्यर्थः । सकारेकारयोरिति शेषः । सार्वधातुकमपिदिति ङित्वादित्याशयः । नन्वेवं ङकारोच्चारणं व्यर्थं स्यादित्यत आह—ङकारेति ।

( समाधानभाष्यम् )

ङितो यत्कार्यं तद्भवति, ङिति यत्कार्यं तन्न भवतीति ॥

( प्रदीपः ) ङितो यदिति । स्थानिवद्भावेन लादेशे ङिति यत्कार्यं पूर्वस्य तन्न भवतीति ज्ञाप्यते, न तु स्थानिन एव ङिद्व्यपदेश उच्छिद्यते । अन्यथा नित्यं ङित इत्येतन्निर्विषयं स्यात् ॥

**( उद्द्योतः )** **यत्कार्यं पूर्वस्येति** । प्राप्तमिति शेषः ॥ **नन्विति** । प्रथमोपस्थितेत्संज्ञाशास्त्रबाधापेक्षया स्थानिवत्त्वबाध एव युक्त इति भावः ॥ युक्त्यन्तरमप्याह—**अन्यथेति** । लङ्लिङादेर्ङिद्व्यपदेशस्योच्छिन्नत्वादित्यर्थः । ङित आदेशस्येत्यर्थस्तु नेत्युक्तमेव ॥

**( तत्त्वालोकः )** भाष्ये—ज्ञापकस्य विशेषापेक्षत्वमभिप्रेत्याह—**ङित इति** । प्रदीपे-**स्यादिति**-एवञ्च निर्विषयस्य नित्यं ङित इत्यस्य बाधापेक्षया सविषयस्य स्थानिवद्भावस्य बाध एव युक्त इत्याशयः ।

उद्द्योते—ननु ङित आदेशस्येत्यर्थेन न तस्य निर्विषयतेत्यत आह—ङित इति ।

**( आक्षेपभाष्यम् )**

**कि वक्तव्यमेतत् ? ।**

**( समाधानभाष्यम् )**

**न हि ।**

**( आक्षेपभाष्यम् )**

**कथमनुच्यमानं गंस्यते ? ।**

**( समाधानभाष्यम् )**

**यासुट एव ङिद्वचनात् । अपर्याप्तश्चैव हि यासुट् समुदायस्य ङित्त्वे, ङितं चैनं करोति । तस्यैतत्प्रयोजनम् ङितो यत्कार्यं तद्यथा स्याद्, ङिति यत्कार्यं तन्मा भूदिति ॥ क्क्ङिति च ॥ ५ ॥**

**( प्रदीपः )** **यासुट एवेति** । ङितो यत्कार्यं तद्यासुटो न किंचिदतिदेष्टव्यमस्ति, किंतु ङिति यत्कार्यं विधीयते संप्रसारणादिकं तदतिदिश्यते । तच्चेत्स्थानिवद्भावेन स्यादतिदेशोऽनर्थकः स्यादित्यतिदेशः क्रियमाणो ङिति यत्कार्यं तदभावस्यैव ज्ञापकः ॥ **अपर्याप्तश्चेति** । समुदायस्य ङिद्व्यपदेशे कर्तव्ये यासुडसमर्थः । यासुट एव ह्यनेन ङित्त्वं क्रियते, न समुदायस्य । **क्ङिति चेत्यत्र** तन्निमित्तग्रहणस्य प्रत्याख्यातत्वादगुणनिमित्तेऽपि यासुटि ङिति गुणनिषेधः सिध्यति । यदि समुदाये स्थानिवद्भावेन ङित्कार्यमभविष्यद्, यासुटो ङित्त्वं न व्यधास्यद् । विहितं तज् ज्ञापयति—ङिति यत्कार्यं तल्लादेशे न भवतीति ॥ केषांचित्पाठः—**सुपर्याप्तश्चैव हीति** । तत्रावयवङित्त्वद्वारेण समुदाये ङित्त्वं विधीयत इति व्याख्येयम् ॥ एवं हि क्क्ङितीति निमित्तसप्तमीपक्षेऽपि गुणनिषेधः सिद्ध्यति । अस्मिन्पक्षे **ङितं चैनं करोतीति** समुदायः परामृश्यते ॥ ५ ॥

**( उद्द्योतः )** **तदभावस्यैवेति** । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः । भाष्ये **यासुट एवेत्यस्य** 'न समुदायस्य' इत्यर्थः । एवस्यावधारणार्थत्वात् । यदि समुदायस्य ङित्त्वं स्यात्तदा ङितो यत्कार्यं तदपि तत्र प्राप्तियोग्यमिति तदभावमपि ज्ञापयेत् । तथा हि **नित्यं ङित** इत्यादेर्ङित आदेशस्येत्येवार्थः । पचावः पचन्तीत्यादौ तु न दोषः । **सार्वधातुकमपिदित्यत्रानुवृत्त**ङिदित्यस्य लुप्तसप्तमीकतया ङितीव कार्यस्यैवातिदेशादिति भावः ॥ न च यासुटि ङिति किं कार्यं प्राप्नोति तन्निमित्तग्रहणेन निषेधाप्राप्तेरिति वाच्यम् । संप्रसारणप्राप्तेः । न हि तत्र प्रत्यय इत्यस्तीत्याहुः ॥ नन्ववयवे कृतस्य लिङ्गस्य समुदायविशेषकत्वाद्यासुड् ङिदित्युक्तावपि समुदायस्य ङित्त्वं भवत्येव । अत एव तन्निमित्तग्रहणेऽपि निषेधः सिध्यति । तच्च स्थानिवत्त्वेन सिद्धमिति व्यर्थं ङित्त्वं स्थानिनो ङिद्व्यपदेशोच्छेदेऽपि ज्ञापकं स्यात् ङितो यत्कार्यं तदभावस्यापि वा ज्ञापकं स्यादत आह—भाष्ये **अपर्याप्तश्चैवेति** । अस्य ङित्त्वस्य केवले आगमे संप्रसारणविधानेन चरितार्थत्वात् । अवयवेऽचरितार्थस्यैव च समुदायविशेषकत्वम् । अत एव **पठिता विद्येत्यादौ** ङीब् नेति भावः ॥ **ङितं चैनमि**त्यवयवमित्यर्थः ॥ **यासुट एव हीति** । यासुड् ङिदिति सामानाधिकरण्यात् । यासुट्पदस्य स्वविधानाय स्वरूपपरस्य ङित्त्वसंबन्धे तदादिलक्षणायां मानाभाव इति भावः ॥ **प्रत्याख्यातत्वादिति** । स्वरितत्वप्रतिज्ञानात्समुदायगतनिमित्तत्वस्यावयवे आरोपादपि निषेधप्रवृत्तिरित्यन्ये ॥ **यदि समुदाये इति** ॥ ननु स्थानिवत्त्वेन समुदायस्य ङित्त्वे यासुटः कथं ङित्त्वमिति चेत् । न तन्ङित्त्वसाध्यफलस्य तावतापि सिद्धेरिति भावः ॥ **केषांचिदिति** । अत्र पाठे—**यासुट एवेत्येवकारः** प्रसिद्ध्यर्थकः । केवलयासुटो ङित्त्वं व्यर्थं गुणनिषेधे तन्निमित्तग्रहणात् । संप्रसारणमपि धात्वाक्षिप्ते प्रत्यये एव । एवं च सामर्थ्यात्समुदायविशेषकं तदिति भावः ॥ **ङितं चैनमिति** स्थानिवत्त्वेन ङित्त्वे सिद्धेऽपीति शेषः ॥ **ङितो यत्कार्यमित्यादि** । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ नहि यासुड्विशिष्टस्य ङित्त्वप्रयुक्तं किंचिदनेन ङित्त्वेन प्राप्नोति । **नित्यं ङित** इत्यस्य च ङित्लस्येत्येवार्थात् । आदेशस्य ङित इत्यर्थे तु दोष उक्त एव । **सार्वधातुक**मित्यादौ ङिदित्यस्य उपमेये प्रथमादर्शनेन सप्तम्यन्ततायाअन्याय्यत्वादिति भावः ॥ नन्विदं ङित्त्वं स्तुयादित्यादावनिग्लक्षणवृद्धिबाधनार्थं चिनुयुरित्यादौ **जुसि चेति** निषेधार्थं च चरितार्थमिति चेत् । न, **ङिच्च पिन्नेति** भाष्योक्तकल्पनयैव सिद्धेः । एतदर्थमेव हि **भाष्ये** तत्स्वीकारः ॥ यत्तु—संज्ञापूर्वकविधेरनित्यत्वेन वृद्धिवारणमत एवोत औदिति नाधूशीति ॥ तन्न । अस्यार्थस्य भाष्यास्पृष्टत्वात् । **ज्ञाजनोर्जेत्यस्याङ्गवृत्तपरिभाषाज्ञापकत्वपरभाष्यासङ्गतेश्च** । अनयैवान्यथासिद्धेः । **जुसि चेत्यत्र क्सस्याचीत्यतोऽचीत्यनुवृत्त्याजादौ** जुसि गुणविधानान्न चिनुयुरित्यत्र दोषः ॥ एवं च अत्रत्यपूर्वपक्षसिद्धान्तावेकदेशिन एवेति बोध्यम् ॥ ५ ॥

**( तत्त्वालोकः )** भाष्ये **तस्येति—**पूर्वोक्तपद्धत्या स्थानिनो ङिद्व्यपदेशोच्छेदने तस्यासामर्थ्यादित्याशयः । **तत्रेति**—स्थानिवत्त्वेनेत्यादिः । प्रदीपे—**स्यादिति**—तर्हीति शेषः । **हि**—यतः । नन्वेवं तस्य फलाभाव इत्यत आह—**क्ङितीति** । सार्वधातुकत्वादेरभावादाह—**अगुणेति** । **अभविष्यदिति**—तर्हीति शेषः ।

उद्द्योते—यादृशकार्यप्राप्त्यर्थमतिदेशः तादृशकार्यमेव स्थानिवत्त्वेन न भवतीति तेन ज्ञाप्यते इत्याशयेनाह—**ज्ञापकस्येति** । **स्यादिति**—"ङिच्चे"ति चकारेणानुकृष्टयासुटः तदादिलक्षणयेत्याशयः । **तत्र**—यासुड्विशिष्टे । **अस्य**—यासुटः । **अत एव**—तत्राचरितार्थस्यैव तद्विशेषकत्वादेव अन्यथा टितोऽवयवत्वसम्पादकस्यापीटष्टित्वस्य समुदायविशेषकत्वात् टिड्ढेति ङीप् स्यादित्याशयः । ननु पूर्वोक्तपद्धत्या समुदायस्य ङित्त्वमित्यत आह—**यासुट्पदस्येति** । ननु तन्निमित्तग्रहणस्य प्रत्याख्यानेऽपि तदर्थोऽभिमत एवेत्यत आह—**स्वरितत्वेति** । स्वरितेनाधिकं कार्यमिति "स्वरितेने"त्यर्थादित्याशयः । **तन्ङित्त्वेति**—यासुड्ङित्त्वेत्यर्थः । **फलस्य**—गुणनिषेधादेः । **तावतापि**—समुदायङित्त्वेनापि । **सप्तम्यन्तेति**—लुप्तेत्यादिः । उपमानोपमेययोः समानविभक्तिकतानियमादित्याशयः । **अनिग्लक्षणेति**—"उतो वृद्धि" रितीत्यादिः । **निषेधार्थं—**गुणस्य निषेधबाधकस्य निषेधार्थम् । पुनर्ङित्त्वादित्याशयः । **एतदर्थं**—स्तुयादित्याद्यर्थम् । **हि**—यतः । **तदिति**—तत्कल्पनेत्यर्थः । कौस्तुभायुक्तिं निराकरोति—**यत्त्विति** । **ज्ञाजनोर्जेत्यस्य**—ज्ञाजनोर्जेतिघटकादेशसम्बन्धिदीर्घोच्चारणस्य । **अनयैव**—संज्ञापूर्वको विधिरनित्य इति परिभाषयैव । द्वितीयदूषणं परिहरति—**जुसि चेति**—उपसंहरति—**एवं चेति** भाष्योक्तप्रकारेणैव निर्वाहे चेत्यर्थः । वस्तुतस्तु **यासुटो** ङित्त्वस्य स्तुयादित्याद्यर्थतया साफल्यान्न ज्ञापकतेत्याशयः ॥ ५ ॥

( ५ परिभाषासूत्रम् ॥ १ । १ । ४ । ३ ॥ )

## दीधीवेवीटाम् ॥ १ । १ । ६ ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ? ॥**

( **तत्त्वालोकः** )—दीधीति—अत्रेड् आगमः, न धातुः । ननु धातुसाहचर्यात् सोऽपि धातुरेव गृह्यतेति चेन्न, "क्ङिति चे"ति सूत्रे क्त्वोऽर्थग्रहणेन सहचरितपरिभाषाया अनित्यत्वबोधनात् । तस्यागमत्वादेव आगमापेक्षया प्रकृतेरभ्यर्हितत्वात् दीध्यादेरेव पूर्वनिपातः । धातुत्वे तु प्रकृतित्वाविशेषादल्पाच्तरत्वेन तस्यैव पूर्वनिपातः प्रसज्येत । नन्वत्र "दीधीङ् दीप्तिदेवनयोः" 'वेवीङ् वेतिना तुल्ये' इत्यनयोरेव कुतो ग्रहणं न तु "दीङ् क्षये" 'धीङ् अनादरे' "वेञ् तन्तुसन्ताने" "वी गत्यादिषु" इत्येषामिति चेन्न अवयवप्रसिद्ध्यपेक्षया समुदायप्रसिद्धेर्बलवत्त्वात्, "दीधीवेव्योरि"ति वार्तिके द्विवचनदर्शनात्, भाष्ये आदीध्यनम् आवेव्यनमित्याद्युदाहरणदर्शनाच्च ॥

( समाधानभाष्यम् )

**गुणवृद्धी मा भूतामिति । आदीध्यनम् आदीध्यकः । आवेव्यनम् आवेव्यकः ॥**

( **तत्त्वालोकः** ) आदीध्यनमित्यादिषु गुणादौ निषिद्धे "एरनेकाच" इति यण् । आदीध्यक आवेव्यक इति—एते शुद्धाभ्यामेव ण्वुलि रूपे न तु ण्यन्ताभ्याम् । "आदीधयतेरादीधकः आवेवयतेरावेवकः" इति "नाग्लोपी"ति सूत्रस्थभाष्यात् ।

( दीधीवेवीप्रत्याख्यानभाष्यम् )

**अयं योगः शक्योऽकर्तुम् ॥**

**कथम् ? ॥**

( **तत्त्वालोकः** ) भाष्ये—एकदेश्युक्तं दीधीवेव्योरेव फलं श्रुत्वाऽसहमानः सिद्धान्ती वैषम्यादिदः फलमश्रुत्वैवाह—**अयमिति** । कर्मणि घञमभिप्रेत्याह—**योग इति** । दीधीवेवीरूपयुग्ममित्यर्थः । अत एव "कथमि"ति प्रश्ने वार्तिककारो वक्ष्यति—**दीधीवेव्योरिति** ।

( १३० सिद्धान्तवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ दीधीवेव्योश्छन्दोविषयत्वाद् दृष्टानुविधित्वाच्च छन्दसश्छन्दस्यदीधेद् दीधयुरिति च गुणदर्शनादप्रतिषेधः ॥ * ॥

( भाष्यम् )

**दीधीवेव्योश्छन्दोविषयत्वात् । दीधीवेव्यौ छन्दोविषयौ । दृष्टानुविधित्वाच्छन्दसः । दृष्टानुविधिश्च छन्दसि भवति । अदीधेददीधयुरिति च गुणस्य दर्शनादप्रतिषेधः अनर्थकः प्रतिषेधः अप्रतिषेधः । "प्रजापतिर्वै यत्किंचन मनसादीधेत्", "होत्राय वृतः कृपयन्नदीधेत् ( ऋ० सं० १०।६८।७ )" "अदीधयुर्दाशराज्ञे वृतासः ( ऋ० सं० ७।३३।५ )" ॥**

( **प्रदीपः** ) दीधीवेवी ॥ ६ ॥ **छन्दोविषयत्वादिति** । भाषायामेतयोः प्रयोगाभावात् ॥ **दृष्टानुविधित्वाच्चेति** । यद्यपि भाषायामपि दृष्टमेवानुविधीयते सिद्धे शब्दार्थसंबन्ध इति न्यायात् । तथाप्यादीध्यनमित्यादिप्रयोगश्छन्दसि नास्ति दृष्टस्यैव छन्दस्यनुविधानमित्यर्थो, न तु च्छन्दस्येव दृष्टानुविधानमिति । अथवा दृष्टानुविधिरित्यस्यायमर्थः—गुणश्छन्दसि दृश्यते न तु सर्वत्र गुणनिषेध इति ॥ **अदीधेदिति** । लङ् व्यत्ययेन तिप् ॥ **अदीधयुरिति** । **जक्षित्यादयः** षडित्यभ्यस्तत्वाज्जुसादेशो झेः ॥

( **उद्द्योतः** ) **दीधी** ॥ ६ ॥ **भाषायामिति** । अनन्यभावो हि विषयशब्दार्थ इति भावः ॥ **दृष्टस्यैवेति** । भाषायां तु संप्रति प्रयोगेऽदृष्टस्यापि व्याकरणान्तरानुसारेण शिष्टप्रयोगादिना वाऽवगतसाधुत्वस्याप्यनुविधानमित्यर्थः ॥ एवं च वेदे आदीध्यनमित्यादिलक्ष्याभावादसंभवदुक्तिकं सूत्रमिति भावः ॥ **अथवेति** । एवं च लक्षणस्याव्याप्तिप्रतिपादकं भाष्यमिति भावः ॥ **व्यत्ययेनेति** । दीधीङो ङित्वात् ॥ परस्मैपदोपलक्षणं तिबिति ॥

( **तत्त्वालोकः** ) भाष्ये—**वृतास इति**—यद्यपि "**नि वे वेति पलितो दूतः**" ( ऋ० ३।५५।९ ) इत्यादौ वेवीङोऽपि गुणो दृश्यते, तथापि तस्य यङ्लुगन्तवेतिनापि निर्वाहसम्भवादनुक्तिरिति भावः ।

प्रदीपे—**एतयोः**—दीधीवेव्योः । **अपिना** वेदसमुच्चयः । **आदीध्यनमित्यादि** "**नास्ती**"त्यन्तग्रन्थः "**दृष्टानुविधानमिती**"त्यस्माद्ग्रे योजनीयः । **गुण इति**—क्वचिदिति शेषः ।

उद्द्योते—प्रयोगाभावे हेतुमाह—**अनन्येति** । **हि**—यतः लक्ष्यैकचक्षुष्कमतेनाह—**व्याकरणेति** । लक्ष्यैकचक्षुष्कमतेनाह—**शिष्टप्रयोगेति** । प्रथमहेत्वभिप्रायेणाह—**एवञ्चेति** । उक्तभाष्यस्य तथार्थकत्वे चेत्यर्थः । **सूत्रं**—दीधीवेवीत्यंशः । द्वितीयहेत्वभिप्रायेणाह—**एवञ्चेति** । केचित्तु वार्तिककारमते हेतुद्वयं, भाष्यकारमते चैकमेव हेतुमभिप्रयन्ति ।

( आक्षेपभाष्यम् )

**भवेदिदं युक्तमुदाहरणम्—अदीधेदिति । इदं त्वयुक्तम्—अदीधयुरिति । अयं जुसि गुणः प्रतिषेधविषय आरभ्यते, स यथैव "क्ङिति च" इत्येतं प्रतिषेधं बाधते, एवमिममपि बाधेत ॥**

( **तत्त्वालोकः** )—तटस्थ आक्षिपति—**भवेदिति** । **इदमिति**—प्रकृतनिषेधे सत्यपि गुणो दृश्यते इत्यस्येत्यादिः । एवमग्रेऽपि । कुत इत्यत आह—**अयमिति** । यत इत्यादिः । **इममपि** । "दीधी"ति प्रतिषेधमपि । तथा च न द्वितीयोदाहरणमस्याव्याप्तिविषय इति भावः ।

( समाधानभाष्यम् )

**नैष दोषः, जुसि गुणः प्रतिषेधविषय आरभ्यमाणस्तुल्यजातीयं प्रतिषेधं बाधते ॥**

**कश्च तुल्यजातीयः प्रतिषेधः ?**

**यः प्रत्ययाश्रयः । प्रकृत्याश्रयश्चायम् ॥**

( **प्रदीपः** ) **प्रकृत्याश्रयश्चायमिति** । ततश्चान्तरङ्गत्वादनेनैव भाव्यमित्यर्थः ॥

( **उद्द्योतः** ) **अन्तरङ्गत्वादिति** । नन्वेवं बहिरङ्गस्य जुसि गुणस्य कथमनेन निषेध इति चेद् । न । सर्वस्यापि गुणस्य प्रत्ययाश्रयत्वेन बहिरङ्गतयान्तरङ्गनिषेध्याभावादिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—सिद्धान्ती समाधत्ते—**नैष दोष इति** । यत इति शेषः । **तुल्यजातीयं**—जुस्निमित्तकम् ।

प्रदीपे—नन्वेवं जुसि गुणे प्रकृतनिषेधबाधकता अपवादत्वाद-दनुपपन्नाऽपि परत्वात् कुतो नोपपद्यते इत्यत आह—**ततश्चेति ।** तस्य तुल्यजातीयप्रतिषेधबाधकत्वे चेत्यर्थः । **एवेन** जुसि गुणव्यावृत्तिः ।

उद्द्योते—**निषेधः**—निषेधप्रसङ्गः । **अन्तरङ्गेति**—अन्तरङ्गस्य निषेध्यस्याभावादित्यर्थः ।

( समाधानान्तरभाष्यम् )

**अथवा—येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'क्ङिति' नेत्येतस्मिन्प्रतिषेधे जुसि गुण आरभ्यते । अस्मिन्पुनः प्राप्त चाप्राप्ते च ॥**

**( प्रदीपः ) येन नाप्राप्त इति ।** कार्यविशेषचिन्तापेक्षायामयं न्यायो, न तु कार्यसामान्यं बाध्यमित्यस्य पेक्षायामेतन्न्यायावतारः ॥

**( उद्द्योतः )** सर्वत्रैतन्न्यायानाश्रयणे हेतुमाह—**कार्यविशेषेति ।** यच्छब्देन तत्तद्रूपेण कार्याणां परामर्शादिति भावः । केचित्तु—सामान्यचिन्ताविषयेऽप्येत न्यायं योजयन्ति । तदा **येने**त्यस्य स्वेतरेणेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—तुल्यजातीयतायाः सर्वत्रानियामकत्वादाह—**अथवेति । नाप्राप्ते**—अवश्यं प्राप्ते ।

( आक्षेपभाष्यम् )

**यदि तर्ह्ययं योगो नारभ्यते । कथं—दीध्यदिति ? ॥**

**( प्रदीपः ) कथं दीध्यदीति ।** लेट् तिप् । **इतश्च लोपः परस्मैपदेष्वि**तीकारलोपः । **लेटोऽडाटा**वित्यडागमः ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी शङ्कते—**यदीति । योगः**—दीधीवेवीरूपयुग्मम् । **दीध्यदिति**—अनेन गुणनिषेधे "एरनेकाच" **इति** यणि सिद्ध्यति, अन्यथा दीधयदिति प्रसज्येतेति भावः ।

( १३१ सिद्धान्तसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ दीध्यदिति च श्यन्व्यत्ययेन ॥ * ॥**

( भाष्यम् )

**दीध्यदिति च श्यन् व्यत्ययेन भविष्यति ॥**

**( प्रदीपः ) श्यन्व्यत्ययेनेति ।** श्यनो ङित्त्वाद्गुणाभावः । **यीवर्णयोर्दीधीवेव्योरि**तीकारलोपः ॥ क्वचित्तु **शव्यत्ययेनेति** पाठः । तत्र शस्य ङित्त्वाद्गुणाभावः । **एरनेकाच इति** यणादेशः ॥

**( उद्द्योतः )** [ क्वचित्तु शो व्यत्येति पाठः ॥ ]

**( तत्त्वालोकः )** भाष्ये—**दीध्यदिति**—दीध्यदित्यत्र । **चो** वाक्यालङ्कारे ।

( एकदेशिप्रत्याख्यानभाष्यम् )

**इटश्चापि ग्रहणं शक्यमकर्तुम् ॥**

**( तत्त्वालोकः )**—एवं सिद्धान्तिना कृतं दीधीवेवीग्रहणप्रत्याख्यानमभ्युपेत्याहमहमिकान्यायेनैकदेशी आह—**इटश्चापीति ।**

( आक्षेपभाष्यम् )

**कथम्—अकणिषम्, अरणिषम्, कणिता श्वः, रणिता श्व इति ? ॥**

**( उद्द्योतः )** भाष्ये **अकणिषमिति ।** सिजन्तस्याङ्गस्य मिपोऽमि लघूपधगुणः प्राप्नोति ॥ **श्वःप्रयोगो लुडर्थः । तत्र हि** तिपो डादेशे टिलोपे च तास्प्रत्ययान्तमङ्गं भवति । तृचि त्वनङ्गत्वान्न गुणप्राप्तिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती शङ्कते—कथमिति ।

उद्द्योते—**अनङ्गत्वादिति**—तान्तस्येत्यादिः ।

( समाधानभाष्यम् )

**"आर्धधातुकस्येड्वलादेः" इत्यत्र इडित्यनुवर्तमाने पुनरिड्ग्रहणस्य प्रयोजनम्—इड् इडेव यथा स्याद्, यदन्यत्प्राप्नोति तन्मा भूदिति ॥**

**किं चान्यत्प्राप्नोति ? ॥**

**गुणः ॥**

**( प्रदीपः ) इडित्यनुवर्तमाने इति । नेड्वशि कृती**त्यतः ॥

**( उद्द्योतः )** भाष्ये **पुनरिड्ग्रहणस्येति ॥** न च नेत्यस्य निवृत्त्यर्थं तत्; स्पष्टं चेदं **नेड्वशी**त्यत्र भाष्ये **इति** वाच्यम् । **क्वचिदेकदेशोऽप्यनुवर्तत** इति न्यायेन **नेड्वशी**त्यत्रत्यनञो निवृत्तिसिद्धेरिति भावः ॥ वस्तुतस्त्वत्रत्यमिदं भाष्यमेकदेश्युक्तिः । **आर्धधातुकस्येति** सूत्रस्थेड्ग्रहणस्य **नेड् वशीति** सूत्रे भाष्ये प्रत्याख्यानात् । तत्करणेन नियमरूपगुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ **अङ्गस्ये**त्यनुवृत्तावपि अङ्गाधिकारविहितविकारस्यैव व्यावृत्तेः शब्दमर्यादयाऽलाभाच्च । अन्त्येऽपि सिद्धत्ववचनस्य ज्ञापकत्वाश्रयणे गौरवमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—एकदेशी समाधत्ते—**आर्धधातुकेति ।**

उद्द्योते—भाष्यान्तरविरोधपरिहाराय शङ्कते—**नचेति । तत्**—तत्र पुनरिड्ग्रहणम् । **भाव इति**—एवञ्च तत्रत्यपूर्वपक्षभाष्यमेकदेश्युक्तिरित्याशयः । **इदम्**—इटश्चापीत्यादि । ननु विनिगमकाभाव इत्यत आह—**तत्करणेनेति ।** वक्ष्यमाणे 'आङ्गं यत्कार्यमि'ति समाधाने दोषमाह—**अङ्गस्येति ।** तादृशे "अथवे"ति समाधाने दूषणमाह—**अन्त्येऽपीति ।** अथवेति पक्षेऽपीत्यर्थः । **सिद्धत्वेति**—सिज्लोप एकादेश **इ**तीत्यर्थः ।

( आक्षेपभाष्यम् )

**यदि नियमः क्रियते, 'पिपठिषतेरप्रत्ययः पिपठीः' दीर्घत्वं न प्राप्नोति ॥**

**( प्रदीपः ) पिपठीरिति ।** पिपठिषतेः क्विप् । **अतो लोप इ**त्यकारलोपः । षत्वस्यासिद्धत्वात्**ससजुषो रु**रिति रुत्वम् । **पूर्वत्रासिद्धे न स्थानिवदि**त्यल्लोपस्य रुत्वे स्थानिवद्भावाभावः ॥

**( उद्द्योतः ) क्विबिति । अप्रत्यय इ**त्यस्याश्रूयमाणः प्रत्यय **इ**त्यर्थः । कृदन्तत्वात्प्रातिपदिकत्वे स्वादयः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती **शङ्कते—यदीति । क्रियते इति**—तर्हीति शेषः । **दीर्घत्वमिति—"र्वोरुपधाया" इ**त्यनेनेत्यादिः ।

प्रदीपे—**षत्वस्येति—पूर्वत्रासिद्धमि**त्यनेनेति शेषः । **रुत्वे**—पदान्तत्वप्रयुक्ते रुत्वे ।

( समाधानभाष्यम् )

**नैष दोषः । आङ्गं यत्कार्यं तन्नियम्यते । न चैतदाङ्गम् ॥**

**( प्रदीपः ) आङ्गमिति । अङ्गस्येत्यनुवर्तनादङ्गाधिकारविहितं** यद्रूपान्तरमिटस्तदेव निवार्यते—**इडेव यथा स्यादिति नियमेनेय**त्यर्थः ॥

र्वोरुपधाया इति च दीर्घत्वं नाङ्गम् । यत्तु **ग्रहोऽलिटि दीर्घ** इति दीर्घत्वं, तद्वचनाद्भवति ॥ पिपठिषि ब्राह्मणकुलानीत्यत्र त्वकारलोपस्य स्थानिवद्भावाद् झलन्तत्वाभावान्नुमभावस्तेन पिपठीर्षाति कथं **सान्त-महतः संयोगस्येति** दीर्घत्वमिति न चोदनीयम् । **क्वौ विधिं प्रति न स्थानिवदि** यत्रो व्यवस्थापयिष्यते, न तु **क्वौ लुप्तं न स्थानिवदिति** ॥

**( उद्द्योतः )** **झलन्तत्वाभावादिति** । स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नेति द्रष्टव्यम् । ननु क्वौ लुप्तस्य स्थानिवत्त्वनिषेधादल्लोपस्य स्थानिवत्त्वं दुर्लभमत आह—**क्वाविति** ।

**( तत्त्वालोकः )** भाष्ये—एकदेशी उत्तरयति-**नैष दोष इति** । यत इति शेषः ।

प्रदीपे—**तदेवेति**—साजात्यादित्याशयः । **नाङ्गं**—नाङ्गाधिकारविहितम् । नन्वेवमग्रहीदित्यत्र ग्रहोऽलिटीति आङ्गदीर्घो न स्यादित्यत आह—**यत्विति** । **तेन**—नुमभावेन । **क्वौ विधिमिति**—"न पदान्ते"त्यत्रेत्यादिः । तथा च नुमः क्विनिमित्तकविधित्वाभावादल्लोपस्य स्थानिवत्त्वं सुलभमिति भावः ।

उद्द्योते—ननु तस्य स्थानिवत्वादजन्तलक्षणो नुम् स्यादित्यत आह-**स्वविधाविति** । **लुप्तस्येति**-"क्विलुगुपधे"ति वचनेनेति शेषः ।

**( समाधानान्तरभाष्यम् )**

**अथवा असिद्धं दीर्घत्वं तस्यासिद्धत्वान्नियमो न भविष्यति ॥ दीधीवेवीटाम् ॥ ६ ॥**

**( प्रदीपः )** **अथवेति** । इडेवेत्यस्मिन्नियमे दीर्घत्वस्यासिद्धत्वान्नास्ति नियमेन व्यावृत्तिः । ततश्च शास्त्रदृष्ट्याऽविकृतरूप एवेट्, प्रयोग एव तु विकृतः । अलावीदित्यत्र तु **सिज्लोप एकादेशे सिद्ध** इत्यसिद्धत्वनिषेधवचनात् सवर्णदीर्घत्वं भवति ॥ ६ ॥

**( उद्द्योतः )** **अलावीदित्यत्रेति** ॥ न च समार्ष्टेत्यत्र **ह्रस्वादङ्गादिति** सिज्लोपाय सिद्धत्ववचनं चरितार्थं, सिद्धत्वे हि परत्वात्सिज्लोपे ततो वृद्धिः । अन्यथा पूर्वं वृद्धौ स न स्यादिति वाच्यम् । **लावस्थायामडिति** पक्षे सर्वतो वृद्धेरन्तरङ्गत्वेन तत्पक्षे सिज्लोपाप्राप्त्या तदेकवाक्यत्वेन पक्षान्तरेऽपि सिज्लोपाभावस्यैवौचित्येन समार्ष्टेत्येव रूपस्यौचित्यात्सत्यभिधाने ॥ **सिज्लोप एकादेशे** इति तु सिज्लोपोत्तरप्राप्तसवर्णदीर्घरूपैकादेशविषयमेवेति बोध्यम् । वस्तुतो नियमस्यैकदेशयुक्तित्वाद्विफलोयं विचार इति तत्त्वम् ॥ ६ ॥

**( तत्त्वालोकः )** भाष्ये—एवं तस्य नियमेन निवृत्तिं सम्भाव्य समाधाय चाधुना संभावनामेव निराकरोति—**अथवेति** ।

प्रदीपे—**दीर्घत्वस्य**—त्रिपादीस्थ "र्वोरि" ति दीर्घत्वस्य । नन्वेवम् अलावीदित्यत्र सवर्णदीर्घस्य पूर्वकल्पे अनाङ्गत्वाद्व्यावृत्त्यसंभवेऽपि अत्र कल्पे व्यावृत्तिः स्यादित्यत आह—**अलावीदिति** । **वचनात्**—वचनसामर्थ्यात् ।

उद्द्योते—वचनसामर्थ्यं खण्डयति—**नचेति** । **हि**—यतः । **अन्यथा**—तस्यासिद्धत्वे । **स इति**—सिज्लोप इत्यर्थः । ह्रस्वात्परत्वाभावादित्यादिः । नन्वेवं 'सिज्लोप' इत्यस्य का गतिरित्यत आह—**सिज्लोप इति** । **तत्त्वमिति**—तथा च दीधीवेवीग्रहणप्रत्याख्यानमेव सिद्धान्तिसम्मतं न तु इड्ग्रहणप्रत्याख्यानं तस्येटो गुणप्रतिषेधायावश्यकत्वादिति भावः ॥ ६ ॥

( ६ संयोगसंज्ञासूत्रम् ॥ १ । १ । ४ आ. ४ ॥ )

# हलोऽनन्तराः संयोगः ॥ १ । १ । ७ ॥

**( अनन्तरपदार्थनिरूपणाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अनन्तरा इति । कथमिदं विज्ञायते—अविद्यमानमन्तरं येषामिति, आहोस्विदविद्यमाना अन्तरैषामिति?॥**

**( प्रदीपः )** **हलोऽनन्तराः** ॥ ७ ॥ **कथमिति** किमन्तरशब्दस्य नञा बहुव्रीहिः, अथ अन्तराशब्दस्येति प्रश्नः । **अन्तरं** विवरं वर्णशून्यकाल इत्यर्थः ॥ **अविद्यमाना इति** । मध्ये येषामन्ये वर्णा अविद्यमाना इत्याधेयस्य निषेधो न त्वाधारस्य ॥

**( उद्द्योतः )** **हलोऽनन्तराः** ॥ ७ ॥ **अन्तरा**शब्दो मध्ये इत्यर्थे ॥ **नत्वाधारस्येति** । कालमात्रस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी वाक्यार्थबोधे पदार्थज्ञानस्य कारणत्वात् पृच्छति-**अनन्तरा इति** । **कथं**-किमर्थकम् ।

प्रदीपे—**प्रश्न इति**-किमाधारकालमात्रनिषेध उताधेयवर्णमात्रनिषेध इति भावः । अनेकार्थकान्तरशब्दस्य अन्यार्थस्य प्रकृतेऽसम्भवादाह-**विवरमिति** । विवरशब्देन मूर्त्तद्रव्यरहितदेशभ्रमवारणायाह—**वर्णशून्येति** । **आधेयस्य**-वर्णमात्रस्य ।

उद्द्योते—अत्र तराशब्दोऽधिकरणशक्तिप्रधानोऽव्ययमित्याशयेनाह—**मध्ये इति** । नन्वाधारनिषेधं विना आधेयनिषेधस्यासंभवात् आधेयनिषेधेन आधारनिषेधस्य प्राप्तेः कथमुच्यते "न त्वाधारस्ये"तीत्यत आह—**कालेति** । **मात्र**पदेन वर्णव्यावृत्तिः ।

**( प्रत्याक्षेपभाष्यम् )**

**किं चातः ? ॥**

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**यदि विज्ञायते—अविद्यमानमन्तरं येषामिति, । अवग्रहे संयोगसंज्ञा न प्राप्नोति-'अप्स्वित्यप्ऽसु' ( ऋ० सं० पद० १।२३।१६ ) इति । विद्यते ह्यत्रान्तरम् ॥**

**अथ विज्ञायते—अविद्यमाना अन्तरैषामिति, न दोषो भवति ॥**

**( प्रदीपः )** **अवग्रह इति** । अर्धमात्राकालोऽवग्रह इष्यते । अर्धमात्राकालं स्थित्वा वर्णान्तरं समुच्चार्यते तत्र **गुरोरनृत** इति प्लुतो न भवेत् ॥

**( उद्द्योतः )** **अर्धेति** । वर्णाद्वर्णोच्चारणेऽर्धमात्राकालस्य नियतत्वात्तदधिकोऽर्धमात्राकाल इत्यर्थः ॥ अत एव **मात्राकालोऽवग्रह** इति प्रातिशाख्यान्तरैरविरोधः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी उत्तरयति—**यदीति** । **अवग्रहे इति**—तर्हीत्यादिः । **अथ**-यदि । **न दोष इति**-तर्हीत्यादिः । आधेयवर्णमात्रस्य निषेधादाधारकालमात्रव्यवधानेऽपि संयोगसंज्ञा सिद्ध्यतीत्यर्थः । प्रदीपे—**अर्धमात्राकालमिति**-यत्रेत्यादिः । **तत्रेति**-संयोगसंज्ञाया अभावात् गुरुसंज्ञाया अभावेनेति शेषः ।

**( द्वितीयपक्षाभ्युपगमभाष्यम् )**

**यथा न दोषस्तथास्तु ।**

**( प्रथमपक्षाभ्युपगमभाष्यम् )**

**अथवा पुनरस्तु अविद्यमानमन्तरं येषामिति ॥**

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—अवग्रहे संयोगसंज्ञा न प्राप्नोति—'अप्स्वित्यप्ऽसु' इति । विद्यते ह्यत्रान्तरमिति ॥

( आक्षेपबाधकभाष्यम् )

नैव दोषो न प्रयोजनम् ॥

**( प्रदीपः ) नैव दोष इति ।** दोषनिवृत्तये संज्ञा क्रियते, प्रयोजनाभिनिर्वृत्तये वा, इह चोभयाभावः । अधिकरणवृत्तेर्दूराद्धूते संबन्धाभावात् । **विचार्यमाणाना**मित्यादौ तु **वाक्यस्य टेरि**त्यनुवर्तते, **न गुरोरनृत** इति । अप्सव्यशब्दे दोष इति चेद्, नैवंविधे विषये प्रकृत्यवयवस्यावग्रहं पदकाराः कुर्वन्ति ॥ अप्सुयोनिरित्यादावपि समासघटकपदानामन्तोऽवगृह्यते इति सुशब्दात्पूर्वस्य नास्त्यवग्रहः ॥

**( उद्द्योतः ) नैव दोष** इत्यादेः संज्ञाऽभावे न दोषः । संज्ञायां च न प्रयोजनमित्यर्थ इत्याह—**दोषनिवृत्तये इत्यादि ॥ अप्सव्यशब्दे इति ।** अप्सुशब्दाद्दिगादियति **अपो योनियन्मतुष्वि**त्यलुक् ॥ **प्रकृत्यवयवस्य** तद्धितप्रकृत्यवयवस्य । अत्र च वैदिकसंप्रदाय एव शरणम् ॥ **अन्तोऽवेति ।** समासे समस्यमानपदान्ते एवावग्रहः । अयमपि वैदिकसंप्रदाय एव ॥

**( तत्त्वालोकः ) भाष्ये—**सिद्धान्ती उत्तरयति—**नैवेति ।**

प्रदीपे—**इह**—अप्सु इत्यत्र । **वृत्तेरिति**—अप्स्वित्यस्येति शेषः । **दूराद्धूते—**"गुरोरनृत" इत्यत्रानुवृत्तेन "दूराद्धूते" इत्यनेनोपलक्षिते सम्यग्बोधने । ननु तत्र ''विचार्यमाणाना''मित्यनेन प्लुतसिद्धये अपेक्षिता गुरुसंज्ञा संयोगसंज्ञायाः प्रयोजनं स्यादित्यत आह—**विचार्येति ।** तथा च अप्स्वित्यस्यावाक्यत्वात् तत्र तस्याप्रवृत्तिरिति भावः । **अप्सव्यशब्दे दोष इति—**अप्सव्यशब्दात् संबोधने हे अप्सव्य इत्यत्र दूराद्धूतसम्बन्धसत्वेऽपि अवग्रहात् संयोगसंज्ञाया अभावात् गुरुसंज्ञाया अभावेन प्लुतानुपपत्तिरित्यर्थः । नन्वेवमपि अप्सुयोनिरित्यादौ दूराद्धूतसम्बन्धसत्वेऽपि अवग्रहात् संयोगसंज्ञाया अभावेन गुरुसंज्ञाया अभावात् प्लुतो न स्यादित्यत आह—**अप्स्विति । इति—**इति हेतोः । **पूर्वस्य**—अप्शब्दस्य ।

उद्द्योते—**संज्ञेति-**संयोगसंज्ञेत्यर्थः । **शब्दादिति-**भवार्थे इति शेषः । **अलुगिति-**सप्तम्या इत्यादिः । "ओर्गुण" इति गुणो "वान्तो यी" त्यवादेशश्चेति शेषः । **तद्धितप्रकृत्यवयवस्य-**तद्धितप्रत्ययप्रकृतिभूताप्सुशब्दावयवभूताप्शब्दस्य । अवान्तरपदे अवग्रहस्यानियमादाह-**अत्र चेति ।**

( अथ प्रत्येकं संयोगसंज्ञानिराकरणाधिकरणम् )

( १३२ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ संयोगसंज्ञायां सहवचनं यथान्यत्र ॥ * ॥

( भाष्यम् )

संयोगसंज्ञायां सहग्रहणं कर्तव्यम् । "हलोनन्तराः संयोगः सह" इति वक्तव्यम् ॥ किं प्रयोजनम् ? । सहभूतानां संयोगसंज्ञा यथा स्यादेकैकस्य मा भूदिति ॥ यथान्यत्र । तद्यथान्यत्रापि यत्रेच्छति सहभूतानां कार्यं, करोति तत्र सहग्रहणम् । तद्यथा "सह सुपा" "उभे अभ्यस्तं सह" इति ॥

**( प्रदीपः ) संयोगसंज्ञायामिति ।** वृद्धिसंज्ञावदानन्तर्यव्यवस्थितानां हलां प्रत्येकं संयोगसंज्ञा प्राप्नोति ॥

**( उद्द्योतः )** नन्वनन्तरग्रहणादेकैकस्य संज्ञा दुर्लभेत्यत आह—**आनन्तर्येति ।** एवं च तदुपलक्षणमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये-**इच्छतीति-**आचार्य इति शेषः । वर्तमानसामीप्ये लट् । एवं करोतीत्यत्रापि । दृष्टान्तयोराद्येऽभिप्रेते भूतप्रतिपत्तिः, अन्त्ये च भावित्वस्य । अत एव "उभे" इत्यत्र सहग्रहणस्यासिद्धत्वेऽपि नानुपपत्तिरिति भावः । प्रदीपे—अत्र सहग्रहणाभावे दोषमाह-**वृद्धीति ।** उद्द्योते—**एवं चेति-**आनन्तर्येण व्यवस्थितानां, न त्वानन्तर्यविशिष्टानामित्यर्थकानन्तर्येत्याद्युक्तौ चेत्यर्थः । **तत्**-आनन्तर्यम् ।

( दूषणप्रश्नभाष्यम् )

किं च स्याद् यद्येकस्य संज्ञा स्यात् ? ।

**( प्रदीपः ) किं च स्यादिति ।** द्वयोरानन्तर्ये एकैकस्यापि संयोगसंज्ञायां गुरुसंज्ञाप्रतिबद्धकार्यसिद्धिरिति प्रश्नः ॥

**( उद्द्योतः ) संज्ञाप्रतिबन्धेति** पाठे कर्मणि घञ् बोध्यः । **संज्ञाप्रतिबद्धेति** पाठः सुगम एव ॥

**( तत्त्वालोकः )** भाष्ये-तटस्थः पृच्छति-**किं चेति ।** प्रदीपे—**प्रतिबद्धकार्येति-**सम्बद्धकार्यस्य शिक्षेत्यादौ "गुरोश्च हल" इत्यप्रत्ययस्येत्यर्थः । तथा च तत्र सहग्रहणाभावे कोऽन्यो दोष इत्याशयः ।

( दोषप्रदर्शनभाष्यम् )

इह निर्यायात्, निर्वायात्, "वान्यस्य संयोगादेः" इत्येत्वं प्रसज्येत ॥

इह च संहृषीष्टेति, "ऋतश्च संयोगादेः" इतीट् प्रसज्येत ॥

इह च संह्रियत इति, "गुणोऽर्तिसंयोगाद्योः" इति गुणः प्रसज्येत ॥

इह च दृषत्करोति, समित्करोतीति, "संयोगान्तस्य" इति लोपः प्रसज्येत ॥

इह च शक्ता वस्तेति, "स्कोः संयोगाद्योरन्ते च" इति लोपः प्रसज्येत ॥

इह च निर्यातो निर्वातः "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येत ॥

**( प्रदीपः ) निर्यायादिति ।** सति रेफे यकारः संयोग इत्येत्वप्राप्तिः ॥ ननु समुदायस्यापि संज्ञित्वेऽचो **रहाभ्यां द्वे** इति यकारस्य द्विर्वचने कृते कस्मादेत्वं न भवति यथा निर्म्लेयादिति । एत्वे कर्तव्ये **पूर्वत्रासिद्ध**मिति द्विर्वचनस्यासिद्धत्वान्नायं दोषः ॥

**शक्तेति** तकारे झलि परतः ककारः संयोगो भवत्यादिश्चेति लोपप्रसङ्गः ॥

**( उद्द्योतः ) कस्मादिति ।** बहूनां संनिधानेऽविशेषेण द्वयोर्बहूनां च संज्ञायाः सिद्धान्तयिष्यमाणत्वादिति भावः ॥ परिहरति-**एत्वे इति । पूर्वत्रासिद्धीयमद्विर्वचने** इति तु द्विर्वचने कार्येन्यस्यासिद्धत्वं नेत्यर्थकम्, न तु द्विर्वचनस्य तदभावप्रतिपादकमिति भावः ॥

**संयोगो भवत्यादिश्चेति ।** प्रत्येकं संज्ञापक्षे स्कोः संयोगावयवत्वासंभवेन षष्ठीसमासासंभवाल्लाघवाच्च कर्मधारय एवेति भावः ॥ आदिशब्दश्च पूर्व [ भूत ] समीपवाची । आदित्वं च प्रत्यासत्त्या संयोगत्वाक्रान्तवर्णान्तरापेक्षयैवेति पदान्तांशे संयोगादिग्रहणचारितार्थ्यं बोध्यम् ॥ अन्यथा ह्यर्कयतेरप्रत्ययेऽग्' इत्यादावन्तकस्यापि लोपः स्यात् ॥

**( तत्त्वालोकः )** भाष्ये-आक्षेपको दोषान् दर्शयति-**इहेति । संह्वषीष्टेति**-संपूर्वाद्धरतेराशीर्लिङि तङि रूपम् । तत्र "उश्चे"ति किस्त्वाद् गुणो न । **प्रसज्येतेति**-तथा च तत्र लिङोऽझलादित्वेनाकित्त्वाद्गुणे संहरिषीष्टेति आपद्येतेत्याशयः । **संह्वियत इति**-सामान्यशिष्टरिङं प्रबाध्येति शेषः । **गुणः**-संयोगादित्वेन विशेषविहितो गुणः । तथा च तत्र संहर्यत इति स्यादिति भावः । **संयोगान्तस्येति**-अत्र बहुव्रीहिः, पदश्चान्यपदार्थः, अलोऽन्त्यस्येति चोपतिष्ठते । तथा च दृषत्करोतीत्यादौ कसन्निधौ संयोगत्वादन्त्यदस्य लोपः स्यादित्याशयः । प्रदीपे-**इत्येत्वप्राप्तिः**-इति हेतोरेत्वप्राप्तिः । **निर्म्लेयादिति**-निर्म्लेयादित्यत्र । **इति लोपेति**-इति हेतोः लोपेत्यर्थः । उद्द्योते—**तदिति**-असिद्धत्वेत्यर्थः । ननु शक्तेत्यादौ तृचस्तकारे झलि परे यौ कसौ न तौ संयोगयोरादी इति कथन्तयोः "झल् परो यः संयोगः ततः पूर्वयोः कसयोर्लोप" इत्यर्थकेन "स्कोरि" त्यनेन लोपप्रसङ्ग इत्यत आह-**प्रत्येकमिति । षष्ठीति**-संयोगाद्योरित्यत्रेत्यादिः । परव्यावृत्तये आह—**पूर्वेति ।** अत्र भूतपदमनावश्यकम् । **आदित्वं**-पूर्वसमीपत्वम् । **स्यादिति**-"रात्सस्ये"ति नियमादत्र संयोगान्तलोपाप्रवृत्तिः । स चोर्गित्यादौ सावकाश इति भावः ।

## ( दोषबाधकभाष्यम् )

**नैष दोषः । यत्तावदुच्यते—इह तावन्निर्यायात् निर्वायात् "वान्यस्य संयोगादेः" इत्येत्वं प्रसज्येतेति ॥ नैवं विज्ञायते—संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥**

**कथं तर्हि ? ।**

**संयोगावादी यस्य सोऽयं संयोगादिः संयोगादेरिति । एवं तावत्सर्वमाङ्गं परिहृतम् ॥**

**( प्रदीपः ) संयोगाविति ।** कथं वृत्तावुपसर्जनार्थस्य द्वित्वावगतिरिति चेद् । आदिग्रहणसामर्थ्यात् । अन्यथा संयोगादिति वक्तव्यं स्यात् । संयोगात्परो य आकारस्तदन्तस्याङ्गस्यैत्वमित्यर्थलाभात् ॥

**( उद्द्योतः ) कथं वृत्ताविति ।** अयं पूर्वपक्षोऽयुक्तः, संयोगस्य द्वित्ववत्त्वेन प्रतीतेरेवाभावात् । संयोगत्वेनैवानेकसंयोगप्रतीतेः । न हि वृत्तावनेकबोध उपसर्जनात्वेति भाष्यसंमतम् । संख्याविशेषानवगमस्यैव भाष्यकृतोक्तत्वात् । नत्वनेकानवगम इति तेनोक्तमिति विभाव्यताम् ॥ **संयोगात्पर इति ।** न चाङ्गावयवसंयोगग्रहणायादिग्रहणम् । तत्र यद्यपि दरिद्रातौ न फलम् । आर्धधातुकविवक्षायां तस्यालोपविधानात्, तथापि खट्वादिभ्य आचारक्विबन्तेभ्यो लिङि खट्वायादित्यादौ एत्ववारणं फलमिति वाच्यम् । **स्यसिच्**सूत्रादुपदेशपदानुवृत्त्या घुमास्थाद्यन्यस्यौपदेशिकस्यैव ग्रहणेन नामधातुष्वेत्वाप्रवृत्तेरिति भावः ॥ खट्वादिभ्य **आतो धातो**रिति सूत्रस्थभाष्यप्रामाण्येनाचारक्विपोऽभावाच्च । सिद्धान्ते तु निर्यायादित्यादिवारणायाङ्गाद्यवयवसंयोगग्रहणाय तदिति बोध्यम् ।

**( तत्त्वालोकः )** भाष्ये-तटस्थः ताम् परिहरति-**नैष दोष इति ।** नैते दोषा इत्यर्थः, जातावेकवचनसत्त्वात् । अन्यथासिद्धेरिति शेषः । तामेव प्रत्येकमाह—**यदिति । तावत्**-प्रथमम् । **नैवमिति**-तत्रोच्यते, तत्रेत्यादिः । एवमग्रेऽपि । **संयोगः**-एकवचनान्तेन समासादेकसंयोगः । द्विवचनान्तेन समासमभिप्रेत्याह-**संयोगाविति ।** न चैवं स्त्यायादित्यादौ त्रयाणां संयोगत्वादव्याप्तिः, बहूनां समवधानेऽपि द्वयोरेव संयोगसंज्ञास्वीकारादिति भावः । **सर्वं**-"ऋतश्च संयोगादेः" "गुणोऽर्तिसंयोगाद्योरि" त्यादिना विधीयमानम् । उद्द्योते—**पूर्वपक्ष इति**-अनेनोत्तरपक्षो युक्त एवेति सूचितम् । "**संयोगावि**"ति फलितार्थकथनपरं, विग्रहस्त्वेकवचनान्तेनैवेत्याशयेनाह-**संयोगस्येति । संयोगत्वेनेति**-आदिग्रहणसामर्थ्यादिति भावः। **प्रतीतेरिति**-तथा च बहूनां सन्निधाने बहूनामपि संयोगसंज्ञास्वीकारे स्त्यायादित्यादौ नाव्याप्तिरिति भावः । तत्र बीजमाह-**न हीति । उक्तत्वादिति**-एवञ्चैकत्वस्याप्यनवगम इत्याशयः । **तेन**-भाष्यकृता । सिद्धान्तं द्रढयितुं शङ्कते-**न चेति । अङ्गावयवेति**-अङ्गस्य प्रथमावयवेत्यर्थः । **तस्य**-दरिद्रातेः । **अप्रवृत्तेरिति**-तेषामुपदेशाभावादित्याशयः । **भाष्येति**-"आतो नापः" इति वार्तिकप्रत्याख्यानपरभाष्येत्यर्थः । **सिद्धान्ते तु**-समूहे संयोगसंज्ञायां तु । **इत्यादिवारणाय**-इत्यादावेत्ववारणाय । **तत्**-आदिग्रहणम् ।

## ( द्वितीयदूषणोद्धारभाष्यम् )

**यदप्युच्यये—इह च दृषत्करोति समित्करोति "संयोगान्तस्य"—इति लोपः प्रसज्येतेति ॥ नैवं विज्ञायते—संयोगोऽन्तो यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥**

**कथं तर्हि ? ।**

**संयोगावन्तौ यस्य तदिदं संयोगान्तं संयोगान्तस्येति ॥**

**( प्रदीपः ) संयोगावन्ताविति ।** अत्रापि संयोगस्य लोप इत्येव संयोगेन पदस्य विशेषणात्तदन्तविधौ लब्धेऽन्तग्रहणमाश्रितसंख्याभेदः संयोगो यथा गृह्येतेत्येवमर्थं विज्ञायते ॥

**( तत्त्वालोकः )** प्रदीपे—**अत्रापि**-संयोगान्तस्य लोप इत्यत्रापि । **इत्येव**-इत्येतावतैव । शेषविचारोऽत्राग्रे च यथासंभवं पूर्ववद्बोध्यः ।

## ( तृतीयदूषणोद्धारभाष्यम् )

**यदप्युच्यते—इह च शक्ता वस्तेति "स्कोः संयोगाद्योः"-इति लोपः प्रसज्येतेति ॥ नैवं विज्ञायते—संयोगावादी संयोगादी संयोगाद्योरिति ॥ कथं तर्हि ? ॥**

**संयोगयोरादी संयोगादी संयोगाद्योरिति ॥**

**( प्रदीपः ) संयोगयोरिति ।** षष्ठीसमास आश्रीयत इत्यर्थः । संयोगयोरिति द्विवचननिर्देशः स्कोर्द्वित्वात्तत्समीपयोरपि हलोर्द्वित्वात्कृतः । तेनायमर्थः-झलि परतो यः संयोगः पदान्ते च यः संयोगस्तस्यादिः समीपो यः सकारः ककारश्च तयोर्लोप इति । **न चैवं** सति शक्ता वस्तेत्यत्र लोपः प्राप्नोति ॥

**( उद्योतः )** भाष्ये--**आदी इति ।** यद्यपि मुख्यादित्वमुभयोर्व्याहतं तथाप्येक आदिशब्दो गौण इति भावः ॥ पूर्ववद्द्विवचनान्तसमासेन दोषपरिहार इति न भाष्यार्थः । उभयत्रापि **द्विवचनो**पादानादत आह—**षष्ठीति ।** एवं च झलर्शेऽपि संयोगादिविशेषणमर्थवद्भवतीति भावः ॥ आदिशब्दश्च ना(च)वयववाची असंभवादित्याह—**समीप इति ।** झलादिविशेष्यस्य संयोगस्योपसर्जनत्वेऽपि

सौत्रत्वादवृत्तिः । न च शक्तेत्यत्र व्यपदेशिवद्भावेन स्वस्यापि स्वसमीपत्वेन दोषस्तदवस्थः । आदिग्रहणसामर्थ्याद् व्यपदेशिवद्भावाप्रवृत्तेः ॥

**( तत्त्वालोकः )** प्रदीपे—**कृत इति**-तथा च न उपसर्जनद्वित्वप्रतिपादनपरभाष्यमित्याशयः । उद्द्योते—**उभयोः**-संयोगयोः **उभयत्रापि**-हेयोपादेययोरपि । **झलंशेऽपीति**-उपसर्जनस्यापि संयोगस्य, विशेषणीकृते एवेति शेषः । अपिना पदान्तांशे इति समुच्चीयते ननु सविशेषणानां वृत्तिर्नेति निषेधात् कथमत्र वृत्तिरित्यत आह—**झलादीति**। आदिना पदान्तसंग्रहः ।

( चतुर्थदूषणोद्धारभाष्यम् )

**यदप्युच्यते—इह च निर्यातो निर्वात इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं प्रसज्येतेति ॥ नैवं विज्ञायते—संयोग आदिर्यस्य सोऽयं संयोगादिः संयोगादेरिति ॥**

**कथं तर्हि ? ॥**

**संयोगावादी यस्य सोयं संयोगादिः संयोगादेरिति ।**

**( प्रदीपः ) संयोगादेरात इति ।** अत्रापि संयोगादात इत्येव संयोगात्परो य आकारस्तदन्ताद्धातोर्नत्वमिति सिद्धे आदिग्रहणं द्वित्वसंख्याश्रयणार्थम् ॥

( आक्षेपभाष्यम् )

**कथं कृत्वा एकैकस्य संयोगसंज्ञा प्राप्नोति ॥**

**( प्रदीपः ) कथं कृत्वेति ।** संयोगसंज्ञाया अन्वर्थत्वात्संयुज्यन्तेऽस्मिन्वर्णा इति समुदायः संयोग इत्यर्थस्याश्रयणात्सहग्रहणं न कर्तव्यमित्यर्थः ॥

**( उद्योतः )** वस्तुतस्तु प्रत्येकं संज्ञेति पक्षो वाच्यवृत्त्या सूत्रान्न लभ्यत एवेति व्युत्पादयितुं गूढाशयः पृच्छति—भाष्ये **कथं कृत्वेति**। तमेवालाभं व्याचष्टे—**संयोगेति ।** एवंचान्वर्थसंज्ञाविरोधात्प्रत्येकं वाक्यपरिसमाप्तिन्यायो नात्राश्रयितुं शक्यत इति व्यर्थं सहेतीति भावः ॥ किं च श्रुतमानन्तर्यं प्रत्येकसंज्ञावादिनोपलक्षणमाश्रयितव्यम् । विशेषणत्वमेवोचितं, तत्त्वे संभवति उपलक्षणत्वस्यान्याय्यत्वात् । किं चाचन्तग्रहणसामर्थ्याद्विवचनान्तेनैव विग्रह इत्यर्थस्य नियमेनालाभः । बहुवचनान्तेनापि संभवादित्याहुः ॥ वस्तुतोऽन्वर्थसंज्ञा चिन्त्या, तदाश्रयणे घटपटौ संयुज्येते यत्रेत्यादौ संयोगानुयोगिप्रतियोग्यतिरिक्तस्यैवान्यपदार्थतया प्रतीतेर्व्युत्पन्नत्वेन तद्व्यतिरिक्ततद्घटितपदवाक्यरूपसमुदायस्य संज्ञापत्तावनिष्टापत्तेः । तस्मान्महासंज्ञाकरणं प्राचामनुरोधेनेत्येव ज्यायः ॥ अत एव भगवता गर्गदण्डनन्यायमाश्रित्य सहग्रहणं प्रत्याख्यातं, न तु महासंज्ञयेत्यलम् ॥

**( तत्त्वालोकः )** प्रदीपे—**आश्रयणादिति**—प्रत्येकं संयोगसंज्ञाया अलाभादिति शेषः । उद्द्योते—**वस्तुतस्त्विति**-एवं प्रत्येकं संयोगसंज्ञामभ्युपेत्य तत्र दोषपरिहारेण सहग्रहणस्याफलत्वं प्रतिपादयिष्यतेत्यादिः । **संज्ञा**-संयोगसंज्ञा । **एवेतीति**-अफलं सहग्रहणमितीति शेषः । **गूढाशय इति**-सिद्धान्तीति शेषः । **इति**-इति हेतोः । अस्य दूष्यत्वादाह-**किं चेति । उचितं**-त्रूचितम् । **तत्त्वे**-विशेषणत्वे । दोषपरिहारासङ्गतिमप्याह-**किं चेति । सम्भवादिति**-एवञ्च पाक्षिकवक्ष्यमाणदोषापत्तिरित्याशयः । आहुरितिसूचितारुचिबीजं प्रकाशयति-**वस्तुत इति ।**

( समाधानभाष्यम् )

**प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टा' इति । तद्यथा वृद्धिगुणसंज्ञे प्रत्येकं भवतः ॥**

**( तत्त्वालोकः )** आक्षेप्ता प्रत्येकं संयोगसंज्ञासाधकदृष्टान्तमुपस्थापयति-**प्रत्येकमिति ।**

( समाधानबाधकप्रतिबन्दीसिद्धान्तिभाष्यम् )

**ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्तिः' इति । तद्यथा—गर्गाः शतं दण्ड्यन्ताम् । अर्थिनश्च राजानो हिरण्येन भवन्ति । न च प्रत्येकं दण्डयन्ति ॥**

( सहग्रहणप्रत्याख्यानभाष्यम् )

**सत्येतस्मिन्दृष्टान्ते यदि तत्र प्रत्येकमित्युच्यते, इहापि सहग्रहणं कर्तव्यम् । अथ तत्रान्तरेण प्रत्येकमितिवचनं प्रत्येकं गुणवृद्धिसंज्ञे भवतः, इहापि नार्थः सहग्रहणेन ॥**

**( तत्त्वालोकः )** एवं निजप्रतिदृष्टान्तेन प्रतिबन्द्या आक्षेप्तृदृष्टान्तं प्रदूष्य निर्णेतुकामः सिद्धान्ती आह-**सतीति** । सत्यपीत्यर्थः । **एतस्मिन्**-ब्राह्मणभोजनरूपे । **तत्रेति**-वृद्धिगुणसंज्ञासूत्रे इत्यर्थः । एवमग्रेऽपि । वार्त्तिककृता स्पष्टार्थमिति शेषः । **इहापीति**-तर्हि सत्यपि गर्गदण्डनन्याये इत्यादिः । वार्त्तिककृता स्पष्टार्थमिति शेषः । **अथ**-यदि । **भवत इति**-ब्राह्मणभोजनन्यायादिति भावः । **इहेति**-तर्हि गर्गदण्डनन्यायेनेष्टसिद्धिसंभवादित्यादिः ।

( आक्षेपभाष्यम् )

**अथ यत्र बहूनामानन्तर्यं, किं तत्र द्वयोर्द्वयोः संयोगसंज्ञा भवति, आहोस्विदविशेषेण ॥**

**( प्रदीपः ) आहोस्विदिति ।** द्वयोरित्यस्य विशेषस्यानाश्रयणाद्बहूनामेवेत्यर्थः । यथा पपाचेत्यत्र समुदायस्यैकाचो द्विर्वचनं नावयवस्यैकाचः । यदा तु द्वयोरेव हलोरान्तर्यं तदा द्वयोर्भवत्येव । हल इति जातौ बहुवचननिर्देशात् ॥

**( उद्योतः )** नन्वविशेषेणेत्यस्य द्वयोर्बहूनां चेति नार्थः । अस्याविशेषस्याग्रे वक्ष्यमाणत्वात् । मस्जौ दोषदानासङ्गतेश्चात आह—**द्वयोरित्यस्येति ।** अत एव भाष्ये—**समुदाये संयोगादिलोप** इति वक्ष्यति ॥ तत्र युक्तिमाह—**यथेति ॥ हल इति जाताविति ।** वस्तुतो हलौ च हलश्चेत्येकशेषः । **स्वरितादिति** सूत्रेऽनुदात्तानामित्यत्र भाष्ये तथैव वक्ष्यमाणत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—बहूनां समवधाने संयोगसंज्ञा "द्वयोर्द्वयोरेव, बहूनामेव वा, बहूनामपि द्वयोर्द्वयोरपीति वा" इति त्रयः पक्षाः सम्भवन्ति। तत्रान्तिमपक्षौ दूषयित्वा वर्णव्यवधानानाश्रयणस्वारस्येन प्रथमपक्षं व्यवस्थापयितुकामः एकदेशिना चरमपक्षस्योत्थापयिष्यमाणत्वात् आदिमपक्षावुत्थापयति-**अथेति । द्वयोर्द्वयोः**-द्वयोर्द्वयोरेव । प्रदीपे—अयं पक्षो बहूनां सन्निधाने एवेत्यभिप्रायेणाह-**यदेति ।** वर्णग्रहणे जातिग्रहणादाह-**जाताविति ।** उद्योते—**अस्य**-द्वयोर्बहूनाञ्चेत्यस्य । **असङ्गतेरिति**-तथा सति सजयोः संयोगत्वेन सलोपसिद्धेरिति भावः । **तत्र**-बहूनामेवेति पक्षे । अनन्तरा इति विशेषणेनैकवचनान्तस्यासंभवादाह-**हलौ चेति ।**

( भाष्यम् )

कश्चात्र विशेषः ? ।

( १३३ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समुदाये संयोगादिलोपो मस्जेः ॥ * ॥

( भाष्यम् )

समुदाये संयोगादिलोपो मस्जेर्न सिद्ध्यति । मङ्क्ता मङ्क्तुम् ॥

इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति, "वान्यस्य संयोगादेः" इत्येवं न प्राप्नोति ॥

इह च संस्वरिषीष्टेति, "ऋतश्च संयोगादेः" इतीट् न प्राप्नोति ॥

इह च संस्वर्यते इति, "गुणोऽर्तिसंयोगाद्योः" इति गुणो न प्राप्नोति ॥

इह च गोमान्करोति यवमान्करोतीति, "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति ॥

इह च निर्ग्लानो निर्म्लान इति, "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति ॥

**( प्रदीपः ) मङ्क्तेति।** मस्जिनशोर्झलीति नुमि कृते नसजानां संयोगसंज्ञा, न तु सजयोरिति सलोपाप्रसङ्गः ॥ **निर्ग्लेयादिति।** यः संयोगी नासावङ्गादिः । यश्चाङ्गादिर्गकारलकारसमुदायो नासौ संयोगः ॥

**( उद्द्योतः )** [भाष्ये **'पूर्वं धातुरुपसर्गेण'** इत्याश्रित्य क्वचित् क्वचिच्च वाक्यसंस्कारपक्षाश्रयेण दोषोपन्यासः ॥ ]

**( तत्त्वालोकः )** भाष्ये—**समुदाये**-समुदाये एव संयोगसंज्ञाभ्युपगमे । तस्योपलक्षणत्वादाह-**इह च निर्ग्लेयादीत्यादि । लोपः**-तलोपः, प्रदीपे—**इति**-इति हेतोः । **यः संयोग इति**-रगलसमुदाय इति शेषः । उद्योते—**क्वचित्**-स्थलचतुष्टये । **क्वचिच्च**-गोमान् करोतीत्यत्र च । पूर्वं धातुः साधनेनेति सिद्धान्तपक्षे स्थलचतुष्टये, पदसंस्कारपक्षे गोमान् करोतीत्यादौ च दोषस्यासंभवादिति भावः ।

( प्रथमपक्षाभ्युपगमभाष्यम् )

अस्तुतर्हि-द्वयोर्द्वयोः संयोगः ॥

( १३४ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ द्वयोर्हलोः संयोग इति चेद्द्विर्वचनम् ॥ * ॥

( भाष्यम् )

द्वयोर्हलोः संयोग इति चेद्द्विर्वचनं न सिद्ध्यति । इन्द्रमिच्छति इन्द्रीयति । इन्द्रीयतेः सन् इन्दिद्रीयिषति । "न न्द्राः संयोगादयः" इति द्विर्वचनं न प्राप्नोति ॥

**( प्रदीपः ) इन्दिद्रीयिषतीति ।** अत्र द्वौ संयोगौ नदौ दरौ च, तत्र दकारस्य संयोगादित्वाद् द्विर्वचननिषेधप्रसङ्गः ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**-तर्हीति शेषः । **इति द्विर्वचनम्**-इत्यनेन निषेधात् दकारसहितस्य द्वित्वम् ।

( १३५ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ न वाज्विधेः ॥ * ॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ?

अज्विधेः । न्द्राः संयोगादयो न द्विरुच्यन्ते । अजादेरिति वर्तते ॥

**( प्रदीपः ) न वाज्विधेरिति ।** अजाश्रयः प्रतिषेधविधिः । अजादेरिति कर्मधारयः । तेनाच आदेः परेऽनन्तरा न्द्रा न द्विरुच्यन्ते । इन्द्रशब्दे तु दकारो नकारेण व्यवहितत्वाद् द्विरुच्यत एव ॥

**( उद्योतः ) परेऽनन्तरा इति । तस्मादित्युत्तरस्येत्यस्योपस्थितेरिति** भावः । चन्द्रीयतेः सनोऽभिधाने **यथेष्टं नामधातुष्विति** द्वितीयैकाचो द्वित्वं नकारसहितस्यैव । आद्यवयवाचः परत्वाभावेनैतन्निषेधाप्रवृत्तेरिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**वर्त्तते**-अनुवर्त्तते । प्रदीपे-अर्थान्तरभ्रमनिरासाय अज्विधेरित्यस्यार्थमाह—**अजाश्रय इति ।**

( आक्षेपभाष्यम् )

अथ यद्येवं बहूनां संयोगसंज्ञा, अथापि द्वयोर्द्वयोः, किं गतमेतदियता सूत्रेण । आहोस्विदन्यतरस्मिन्पक्षे भूयः सूत्रं कर्तव्यम् ?

**( तत्त्वालोकः )** एवं द्वयोर्द्वयोरेवेति पक्षस्य निर्दुष्टत्वेऽपि सूत्रे हल इति बहुवचनान्तसत्वात् सूत्रतस्तस्यालाभ एवेत्याशयेन शङ्कते-**अथेति । गतम्**-अवगतम् । एवमग्रेऽपि । **एतत्**-पक्षद्वयम् । **आहोस्विदिति**-अन्यतरस्मिन् पक्षे इयता सूत्रेणावगते इति शेषः । **पक्षे**-पक्षावगतिनिमित्तम् । **भूयः**-इतो गुरुतरम् ।

( समाधानभाष्यम् )

गतमित्याह ॥

कथम् ? ॥

यदा तावद्बहूनां संयोगसंज्ञा, तदैवं विग्रहः करिष्यते-'अविद्यमानमन्तरमेषाम्' इति ॥

**( प्रदीपः ) अविद्यमानमिति ।** बहूनां चाविवरत्वे समुदायद्विर्वचनवद्बहूनामेव संयोगसंज्ञा न द्वयोर्द्वयोः ॥

**( उद्योतः ) बहूनां चाविवरत्वे** इति । **बहूनां चानन्तरत्वे** इति क्वचित्पाठः ॥ नन्वत्र विग्रहे कमित्यादौ कमयोः संयोगसंज्ञा स्यात्तयोर्मध्ये वर्णशून्यकालरूपच्छिद्राभावादिति चेन्न । वर्णशून्यकालव्यवायमात्रवारणे फलाभावात्सामर्थ्येन वर्णकालव्यवायोऽपि व्यावर्त्यत इत्यदोषः ॥ **द्विर्वचनवदिति ।** एषामिति बहुवचनादिति न भ्रमितव्यम् । तस्य सूत्रे **हल** इतिवत्सत्त्वात् । अन्तराशब्देन विग्रहेऽपि तत्सत्त्वाच्च । अन्यथा द्वयोर्न स्यात् । किं त्वन्तरशब्देन विग्रहाद्बहूनां समवधाने तेषामप्यनन्तरत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—यथाश्रुतसूत्रादेव पक्षद्वयमवगतमित्याह-**गतमिति । यदेति**-यत इत्यादिः । **बहूनां**-बहूनामेव । **अन्तरं**-वर्णशून्यकालः । प्रदीपे—**बहूनां चेति**-बहूनां सन्निधाने द्वयोर्द्वयोरित्यादिः । उद्योते-**मध्ये इति**-वर्ण ( काल ) सत्वेन विशेषणाभावेऽपि विशिष्टाभाव इति नियमादिति शेषः । **वर्णशून्येति**-यत इत्या-

दिः । एषामितीति—बहूनामेवेतीत्यादिः । तस्य-एषामिति बहुवचनस्य । इतिवत्-इति बहुवचनस्येव । सत्वात्-अविवक्षया सत्वात् । तत्सत्वात्-एषामिति बहुवचनसत्वात् । अन्यथा-एषामिति बहुवचनात् बहूनामेवेत्यस्याभ्युपगमे । द्वयोरिति-यत्र द्वावेव तत्रेत्यादिः । तेषां-बहूनाम् । अपिना द्वयोर्द्वयोरित्यस्य संग्रहः । तथा च द्वयोर्द्वयोः बहूनां चाविशेषेण संयोगसंज्ञायां प्राप्तायाम् एकाज्द्विर्वचनन्यायेन बहूनामेवेत्यस्याभ्युपगम इति भावः ।

( समाधानशेषभाष्यम् )

**यदा द्वयोर्द्वयोः संयोगसंज्ञा, तदैवं विग्रहः करिष्यते—'अविद्यमाना अन्तरैषाम्' इति द्वयोश्चैवान्तरा कश्चिद्विद्यते वा न वा ॥**

**( प्रदीपः ) अविद्यमान इति ।** मध्ये य आधेयः स द्वयोरेव मध्ये भवतीति संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद्बहुषु द्वयोर्द्वयोः संयोगसंज्ञा भवतीति पक्षः ॥ **द्वयोश्चैवान्तरेति । अन्तरान्तरेण युक्ते** इति द्वितीया कस्मादत्र न भवति । उच्यते—यदा मध्यापेक्षया नियतावधिरूपत्वं विवक्ष्यते त्वां च मां चान्तरा कमण्डलुः' अग्नी अन्तरा धवखदिरावन्तरेति, तदा द्वितीया ॥ यदा तु नियतावधित्वं न विवक्ष्यतेऽपि तु संबन्धमात्रं तदा षष्ठ्येव भवति । तदा हि न ज्ञायते—किं तयोरेवावधित्वमुतान्यसहितयोरित्यवधिनियमाभावाद् द्वितीयाया युक्तग्रहणान्नियतावधिविवक्षाविषयाया अभावः ॥

**( उद्द्योतः )** संसर्गविप्रयोगावेव भाष्ये दर्शयति—**द्वयोश्चैवेति ।** विद्यत इत्यन्तं दृष्टान्तार्थम् । **अवत्साधेनु**रित्यादौ विप्रयोगोऽपि विशेषावगतिहेतुर्दृष्टः । अन्तरा विद्यत इति न विद्यत इति वा यत्तद् द्वयोरेवेत्यर्थः ॥ **नियतावधिरूपतेति ।** अवधित्वं हि अन्यासहितत्वे एव तयोर्नियमेन भवति, अन्यसाहित्ये तु न तत्रावधित्वस्य नियमेन प्रतीतिः, अवधित्वविवक्षायामेव च द्वितीयेति भावः ॥ यस्य च नियमेनावधित्वं तस्यैवावधित्वविवक्षा शब्देनेति तात्पर्यम् । नियतत्वमन्यासहितत्वं, तद्वैशिष्ट्येन यावधिरूपता सा विवक्षिता यदा भवतीत्यक्षरार्थः । अन्यथा अवधित्वविवक्षायां द्वितीया, तत्त्वाविवक्षायां षष्ठीत्यर्थस्यैव शब्दतो लाभेन नियतेति कथनमधिकं स्यादिति बोध्यम् । **युक्तग्रहणादिति ।** न च तदभावेऽन्तरान्तरेणशब्दाभ्यां द्वितीयापत्तिः । तयोरव्ययत्वेन विशेषाभावात् । न च प्रथमाबाधनेन **सपूर्वायाः प्रथमाया** इत्यस्याप्रवृत्त्यर्थम् । व्यवस्थितविभाषया तस्य सुपरिहरत्वात् । तस्माद्युक्तग्रहणं संबन्धविशेषस्य प्रतिपादनाय अवधित्वस्य प्रतियोगित्वस्य वा । तेन प्रयोगमन्तरेणेत्यपि सिद्धम् । एवं च संबन्धमात्रविवक्षायां षष्ठ्येवेति भावः ॥

**( तत्त्वालोकः )** भाष्ये-**द्वयोर्द्वयोः**-द्वयोर्द्वयोरेव । **अविद्यमाना इति** वर्णा इति शेषः । **अन्तरा**-मध्ये । प्रदीपे—**आधेयः**-वर्णः । **इति**-इति हेतोः । **द्वयोर्द्वयोः**-द्वयोर्द्वयोरेव । **मध्यापेक्षया**-मध्यरूपाधिकरणापेक्षया । अस्य "निरूपकयोरि"ति शेषः । **इति**-इत्यत्र । प्रकृताभिप्रायेणाह-**यदा त्विति ।** तदपेक्षया तयोरिति शेषः । **हि**-यतः । **इति**-इति हेतोः । उद्योते—**दृष्टान्तार्थमिति**-तथा च प्रथमो वाशब्द इवार्थे, द्वितीयश्चाप्यर्थे इति भावः । चो यदर्थक इत्याशयेन समुदितवाक्यार्थमाह-**अन्तरेति ।** अत्र वाशब्दस्तन्त्रेण इवाप्योरर्थे । तथा च यथा अन्तरा विद्यते इति यत् तद् द्वयोरेव, तथा अन्तरा न विद्यते इत्यपि यत् तद् द्वयोरेवेत्यर्थः । मध्यत्वनिरूपकौ द्वावेव भवतो, न बहव इति भावः । **हि**-यतः । **तयोः**-निरूपकयोः । ननु स्थाल्या पच्यते इत्यादौ अन्यस्यापि अन्यरूपेण विवक्षा दृश्यते इत्यत आह—**यस्य चेति । तदभावे**-युक्तग्रहणाभावे । **तयोः**-अन्तराऽन्तरेणशब्दयोः । **अप्रवृत्त्यर्थमिति**-युक्तग्रहणमिति शेषः । **तस्य**-"सपूर्वाया" इत्यस्य । कैयटोक्तावधिपदस्योपलक्षणत्वादाह—**प्रतियोगीति ।**

( आक्षेपभाष्यम् )

**एवमपि बहूनामेव प्राप्नोति । यान् हि भवानत्र षष्ठ्या प्रतिनिर्दिशति, एतेषामन्येन व्यवाये न भवितव्यम् ॥**

**( प्रदीपः ) यान् हीति ।** एषामिति बहुवचननिर्देशादिति न बोध्यम्, बहुत्वस्याविवक्षणाद् । अन्यथा शिक्षेत्यादौ द्वयोर्न स्यात् । तस्माद्योऽसावनन्तरा स द्वयोर्भवति न वेति यदुक्तं तत्रोच्यते—यदा द्वयोर्द्वयोरन्तरा न भवति तदा बहवोऽनन्तरा इति तेषामेव प्राप्नोति । यदा हि बहूनां मध्ये भिन्नजातीयोऽज् भवति तदा मा भूत् । तदभावे तु प्रवर्तितव्यमेव बहूनां संज्ञया समुदायद्विर्वचनवदित्यर्थः ॥

**( उद्द्योतः )** ननु भाष्ये **द्वयोरि**ति षष्ठीद्विवचननिर्दिष्टस्य द्वित्वाद् **यान्हि**-इति बहुवचननिर्देशोऽनुपपन्न इति चेन्न । प्रकृते द्वयोरित्यनेन न केवलौ वर्णौ निर्दिष्टौ । तथा सति तयोरेवावधित्वे द्वितीयापत्तिः । किं त्वन्यसहितावपि अत एव षष्ठी । एवं च त्रयाणां समवधाने द्वयोः समुदाययोरवधित्वविवक्षणेन द्वयोः समुदाययोरनन्तरत्वे तत्समुदायवर्तिहलां बहुत्वात्तदुपपत्तिः । अनन्तरा इत्यनेन च न विद्यतेऽन्तरा यौ वर्णौ तौ, यौ च समुदायावन्तरा न विद्यते तौ च गृह्यन्ते एकशेषादिति न दोषः । तत्सर्वमभिप्रेत्याह—**यदा द्वयोर्द्वयोरिति ।** द्व्यवयवकसमुदाययोरित्यर्थः । **यान्** वर्णान् द्वयोः समुदाययोरित्यर्थक**षष्ठ्या प्रतिनिर्दिशती**ति भाष्यार्थ इति भावः ॥ अनन्तरा इत्यस्यात्र पक्षे व्यावर्त्यं दर्शयन् पूर्वोक्तमेवार्थं दृष्टान्तेनोपपादयितुमाह—**यदा हि बहूनामिति ।** न च स्पष्टेत्यादौ रेफपकारयोर्वर्णयोरन्तरा कस्यचित्सत्त्वेऽपि सरौ रपौ चेति समुदायौ तयोश्चान्तरा न कश्चिदिति तेषां संयोगत्वं स्यादिति वाच्यम् । वर्णयोरन्तरा विद्यमानत्वेनान्तरत्वाभावात् । सर्वविधानन्तरत्वस्यैव निमित्तत्वादित्याहुः

**( तत्त्वालोकः )** भाष्ये—एवं विग्रहद्वयेन यथाश्रुतसूत्रादेव बहूनां समवधाने पक्षद्वये प्राप्ते निर्णेतुकाम आह-**एवमपीति**—संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वेऽपीत्यर्थः । **हि**-यतः । **अन्येन**-अचा । **व्यवाये इति**-सति, संयोगसंज्ञयेति शेषः ।

प्रदीपे—**बहुत्वस्येति**-तत्र, सत्रस्थ-हल इत्यत्रेवेत्यादिः । **द्वयोर्न**—द्वयोः संयोगसंज्ञाप्रयुक्तगुरुत्वप्रयुक्ताप्रत्ययो न । **इति तेषामेव**-इति हेतोः बहूनामेव । **हि**-यतः । **तदभावे**-मध्ये अचोऽभावे ।

उद्योते—**बहुवचननिर्देशः**-बहुवचनान्तेन प्रतिनिर्देशः । **प्रकृते इति**-यत इत्यादिः । तदुपपत्तिरित्यत्र चान्वयः । **तयोरेव**-केवलवर्णयोरेव । **अपिना**-केवलसमुच्चयः । **एवञ्च**-तथा निर्देशे च । हल इत्यत्रेवानन्तरा इत्यत्रापि एकशेष इत्याह-**अनन्तरा इति । वर्णाविति**-केवलाविति भावः । अवधित्वविवक्षणेन द्वितीया । एवमग्रेऽपि ।

( समुदायसंज्ञाभ्युपगमभाष्यम् )

**अस्तु तर्हि समुदाये संज्ञा ॥**

**( तत्त्वालोकः )** भाष्ये—एवं बहूनां समवधाने द्वयोर्द्वयोः बहूनाञ्चानन्तरत्वे एकाज्द्विर्वचनन्यायेन बहूनामेवेति निर्णीते सिद्धान्तो आह-**अस्त्विति । समुदाये इति**-एवेति शेषः ।

( समुदायसंज्ञादूषणस्मारणभाष्यम् )

**ननु चोक्तं—*समुदाये संयोगादिलोपो मस्जेः* इति ॥**

( समुदायसंज्ञादूषणनिराकरणसिद्धान्तिभाष्यम् )

**नैष दोषः । वक्ष्यत्येतत्—"*अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम्*" इति ।**

( प्रदीपः ) **अन्त्यात्पूर्व इति ।** तच्चानुषङ्गलोपार्थमवश्यं वक्तव्यम् । अन्त्यादचः परे नुमि सत्यनुपधात्वान्मग्न इत्यत्र नलोपो न स्यात् । कृतेऽपि संयोगादिलोपे तस्यासिद्धत्वादनुपधात्वमेव नकारस्य ॥

( उद्द्योतः ) **अनुषङ्गो** नकारः । तल्लोपोऽ**निदिता**मित्यनेन ॥

( तत्त्वालोकः ) भाष्ये –सिद्धान्ती तं निराकरोति–**नैष दोष इति ।** यतः "मिदचोऽन्त्यात्पर" इति सूत्रे वार्त्तिककार इति शेषः ।

( समुदायसंज्ञादूषणनिराकरणैकदेशिभाष्यम् )

**अथवाऽविशेषेण संयोगसंज्ञा विज्ञास्यते-द्वयोरपि, बहूनामपि तत्र द्वयोर्या संयोगसंज्ञा, तदाश्रयो लोपो भविष्यति ॥**

( प्रदीपः ) **अविशेषेणेति ।** बहुष्वनन्तरेषु द्वयोर्द्वयोरपि भवति बहूनामपीत्ययमिदानीमविशेषः । कार्यार्थत्वात्संयोगसंज्ञाया विरोधाभावादेकया संज्ञया सर्वेषामनुग्रहासिद्ध्या द्विर्वचनेन वैषम्यादविशेषेणेत्युक्तम् ॥

( उद्द्योतः ) **बहूनामपीति ।** न्यायतः सूत्रात्सम्भवमात्रेणेदमुक्तम् । न तु फलोदाहरणमस्य न्याय्यमस्ति । ध्वनितं चेद**मङ्गेन संयोगादि**मिति ग्रन्थेन भाष्ये ॥ ननु द्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यादिति कथमेतत्पक्षोत्थानमत आह**—कार्येति ।** द्विर्वचनं हि श्रवणार्थमेव न शास्त्रीयकार्यार्थम् । एकस्याचो बह्ववयवत्वं युगपद्विरुद्धं च । एकेन द्वित्वेन सर्वानुग्रहश्चेति वैषम्यम् ॥

( तत्त्वालोकः ) भाष्ये —एकदेशी अन्त्यात्पूर्व" इति वार्तिकाकरणजलाघवमभिप्रेत्य तृतीयपक्षमुत्थापयति–**अथवेति । तत्र**-तयोर्मध्ये । **लोपः**-संयोगादिलोपः ॥ अनुषङ्गलोपार्थम् "अन्यात्पूर्व" इति वार्तिकस्यः संयोगादिलोपसिद्धत्वज्ञापकस्य वाऽवश्याश्रयणीयतयाऽयं पक्षः गौरवदूषित एव ।

प्रदीपे—**द्वयोर्द्वयोरिति**–विनिगमनाविरहेण द्वयोर्द्वयोरेव, बहूनामेववेतिविशेषाश्रयणासम्भवादिति भावः । **संयोगसंज्ञाया इति**–अस्य मध्यमणिन्यायेनोभयत्रान्वयः । बहुष्विति शेषश्च । **संज्ञया**–संयोगसंज्ञया ।उद्द्योते**—न्यायेनेति**-विनिगमकेनेति भावः । **बह्ववयवत्वं**–बहूनामवयवत्वम् ।

( समुदायसंज्ञापक्षोक्तदूषणान्तरनिराकरणसिद्धान्तिभाष्यम् )

**यदप्युच्यते—'इह च निर्ग्लेयात् निर्ग्लायात् निर्म्लेयात् निर्म्लायादिति "वान्यस्य संयोगादेः" इत्येवं न प्राप्नोति' इति ॥ अङ्गेन संयोगादिं विशेषयिष्यामः—अङ्गस्य संयोगादेरिति ॥ एवं तावत्सर्वमाङ्गं परिहृतम् ॥**

**यदप्युच्यते—इह च गोमान्करोति यवमान्करोतीति "संयोगान्तस्य लोपः" इति लोपो न प्राप्नोति' इति ॥ पदेन संयोगान्तं विशेषयिष्यामः–पदस्य संयोगान्तस्येति ॥**

**यदप्युच्यते—'इह च निर्ग्लानो निर्म्लान इति "संयोगादेरातो धातोर्यण्वतः" इति निष्ठानत्वं न प्राप्नोति' इति ॥ धातुना संयोगादिं विशेषयिष्यामः—धातोः संयोगादेरिति ॥**

( प्रदीपः ) बहूनां संनिधौ बहूनामेव संयोगसंज्ञेत्यस्मिन्पक्षे आश्रीयमाणे मस्जेर्दोषो**ऽन्त्यात्पूर्व** इति परिहृतः । शेषान्दोषान्परिहर्तुमाह**—यदप्युच्यत इति । पाठक्रमादर्थक्रमो बलीयानिति–मस्जेरन्त्यात्पूर्व** इत्यस्यानन्तरमिदं द्रष्टव्यम् ॥ निर्ग्लेयादित्यादिषु यद्यपि त्रयो हलः सन्निहितास्तथापि कार्यार्थत्वात्संज्ञायाश्चिपु कार्याभावादङ्गपदधात्ववयवस्य संयोगस्य तेषु तेषु लक्षणेष्वाश्रितत्वात्समुदाये कार्याभावे चावयवानां स्वकार्यारम्भाद् द्वयोरेव संज्ञा प्रवर्तत इति भाष्यार्थः ॥ व्याख्यानान्तरमत्र क्लिष्टत्वान्नोक्तम् ।

( उद्द्योतः ) ननु पक्षान्तरेण व्यवधानादासत्यभाव इत्यत आह**—पाठेति ।** शब्दस्यार्थस्यत्वायनाङ्गत्वेन गुणत्वात्तदीयः क्रम आर्थक्रमविरोधे दुर्बल इति भावः ॥ **अङ्गपदधात्ववयवेति । संयोगादे**रित्यादावाद्यन्तशब्दयोरवयववाचितयेति भावः ॥ अयमाशयः–अङ्गादेरादावन्ते वा व्यञ्जनत्रयाभावात् त्रयाणां फलाभावात्संज्ञाऽप्राप्तौ कथं द्वयोर्न स्यादिति ॥ यद्यपि सामानाधिकरण्यान्वयेऽपि अङ्गाद्यवयवस्यैव संयोगस्याश्रयणं नाऽयस्येति **अङ्गेन संयोगादिं विशेषयिष्याम** इत्यनुपपन्नं तथापि संयोगरूपमादिमङ्गेन परिच्छेत्स्यामोऽङ्गावयवसंयोगस्यैव बहुव्रीहिणाश्रयणमित्यर्थ इति न दोषः । एवंच **बहूनामपी**त्याश्रयणे फलाभाव इति स्पष्टमेवोक्तम् । क्लिष्टकल्पनया तादृशसयोगानयनं तु नानभिधानादित्याशयः॥अदादिषु **षस स्वप्ने** इत्येव पाठो न तु **षस सस्ति स्वप्न** इति एतद्भाष्यप्रामाण्याज्ज**क्षित्यादि**सूत्रस्थभाष्यप्रामाण्याच्चेति बोध्यम् ॥ **व्याख्यानान्तरमिति ।** पाठक्रमाबाधायैव व्याचक्षते**—न प्राप्नोती**तीत्यत्रेतिशब्दो यस्मादर्थे उत्तरान्वयी, यस्मादङ्गेन संयोगादिर्विशेष्यतेऽङ्गावयवः संयोगो गृह्यते इत्यर्थः । एवं च बहूनामेव संयोगत्वे यः संयोगो नासावङ्गावयवो यश्चाङ्गावयवो नासौ संयोगस्तस्मादेत्वं न प्राप्नोतीति यदपि—तदप्यसत् । यतोऽविशेषेण संज्ञोच्यते इति शेष इति ॥ तत् क्लिष्टम् । शेषपूरणात् । इतेः स्वरसतो वाक्यसमाप्त्यर्थतायाः प्रतीयमानत्वाच्च । **एवं तावत्सर्वमाङ्गं परिहृत**मित्यस्यास्वारस्याच्च ॥

( तत्त्वालोकः ) भाष्ये—**न प्राप्नोतीति–**तदपि न, यत इति शेषः । एवमग्रेऽपि । **सर्वम्**–"ऋतश्च संयोगादेः" "गुणोऽर्त्तिसंयोगाद्योरि"त्यादिना आपाद्यमानम् ।

प्रदीपे—**द्वयोरेवेति**–एवेन बहूनामेवेत्यस्य बहूनामपीत्यस्य च व्यावृत्तिः । उद्द्योते–**पक्षान्तरेण**-अथवेति पक्षेण । ननु मस्जेरन्ते व्यञ्जनत्रयमस्तीत्यत आह-**त्रयाणामिति ।** द्वयोरेव संयोगसंज्ञया कार्यसिद्धेरिति भावः । **कथमिति–**फलसत्त्वात्, अन्यथा शास्त्रवैयर्थ्यापाताच्चेति भावः । **तदपीति**–उच्यते इति शेषः । ननु शेषपूरणं सिद्धान्तेऽपीत्यत आह-**इतेरिति ।** ननु निपातानामनेकार्थत्वान्नेदं दूषणमित्यत आह–**एवमिति ।** एवञ्च बहूनां समवधाने बहूनामेवेति पक्षस्य निष्फलत्वात्, अथवा पक्षस्य गौरवदूषितत्वाच्च द्वयोर्द्वयोरेवेति पक्ष एव युक्त इति भावः ।

( इति समुदायसंज्ञापक्षस्थापनम् )

( अथानन्तरशब्दार्थनिरूपणम् )
( १३६ आक्षेपवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ स्वरानन्तर्हितवचनम् ॥ * ॥**

( भाष्यम् )

**स्वरैरनन्तर्हिता हलः संयोगसंज्ञा भवन्तीति वक्तव्यम् ॥**

**किं प्रयोजनम् ?**

**व्यवहितानां मा भूत् । पचति पनसम् ॥**

**( प्रदीपः ) पचति पनसमिति ।** हल इति वचनादचा सह सकारमकारयोर्मा भूत्संज्ञा तयोरेव तु प्राप्नोति । ततश्च सलोपप्रसङ्गः ॥

**( उद्द्योतः ) हल इतीति ।** तद्धि असावित्यादौ **स्कोरि**ति सलोपवारणायावश्यकमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**हल इति**-अनन्तरा इत्यादिः । तस्य अनन्तरव्यवहारविषया इत्यर्थः । अत एव च तस्य भाष्येऽनुल्लेखः । **व्यवहितानामिति**-स्वरैरित्यादिः ।

प्रदीपे— **तयोरेवेति**-तयोस्तु प्राप्नोत्येवेत्यन्वयः ।

उद्द्योते—नन्वचा सह हलःसंयोगसंज्ञायामपि दोषाभावात् हल इति व्यर्थमित्यत आह-**तदिति ।** हल इतीत्यर्थः । **हि**-यतः । **इत्यादाविति**-सावित्यस्य संयोगत्वादिति शेषः ।

**( आक्षेपबाधकभाष्यम् )**

**ननु चानन्तरा इत्युच्यते । तेन व्यवहितानां न भविष्यति ॥**

**( १३६ आक्षेपसाधनवार्तिक २ यखण्डम् ॥ ६ ॥ )**

**॥ * ॥ दृष्टमानन्तर्यं व्यवहितेऽपि ॥ * ॥**

**( भाष्यम् )**

**व्यवहितेऽप्यनन्तरशब्दो दृश्यते । तद्यथा—'अनन्तराविमौ ग्रामौ' इत्युच्यते, तयोश्चैवान्तरा नद्यश्च पर्वताश्च भवन्तीति ॥**

**( आक्षेपबाधकभाष्यम् )**

**यदि तर्हि व्यवहितेऽप्यनन्तरशब्दो भवति । आनन्तर्यवचनमिदानीं किमर्थं स्यात् ? ॥**

**( १३७ आक्षेपसाधकवार्तिकम् ॥ ७ ॥**

**॥ * ॥ आनन्तर्यवचनं किमर्थमिति चेदेकप्रतिषेधार्थम् ॥ * ॥**

**( भाष्यम् )**

**एकस्य हलः संयोगसंज्ञा मा भूदिति ॥**

**किं च स्यात् यद्येकस्य हलः संयोगसंज्ञा स्याद् ? ।**

**इयेष उवोष, "इजादेश्च गुरुमतोनृच्छः" इत्याम् प्रसज्येत ॥**

**( प्रदीपः ) एकप्रतिषेधार्थमिति ।** अनन्तरा इत्यनेन संज्ञाया विषयो निर्दिश्यते । यत्रानन्तरव्यवहारस्तत्र संज्ञा । नचैकाकिन्यनन्तरव्यवहार इति भावः । एकप्रतिषेधस्य च प्रयोजनम् इयेषेत्यादाविजादे**रि**त्यामो निवृत्तिः । **गुरुमद्वचन**मियायेत्यादिनिवृत्त्यर्थं स्यात् ॥

**( उद्द्योतः ) नचेति ।** आनन्तर्यस्य सप्रतियोगिकत्वादिति भावः ॥ प्रकृते चान्यस्य प्रतियोगिनोऽनुपादानादुपस्थितहलेव प्रतियोगित्वेनाश्रीयत **इति** बोध्यम् ॥ भाष्ये **उवोषेति** प्रसङ्गोच्चारितम् । तस्य विकल्पितास्कत्वात् । उवोखेति कवर्गद्वितीयान्तो वा पाठः ॥ **इयायेति ।** इण् लृ इत्यस्यामवस्थायां व्यपदेशिवद्भावादिजादित्वमस्ति, गुरुमत्त्वं तु न । न चेयङि कृते गुरुमदिजादित्वादाम् स्यादिति वाच्यम् । लिङ्धातुसंनियोगेन संपन्नस्य गुरुमदिजादित्वस्य तद्विघातकत्वाभावादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी उत्तरयति-**आनन्तर्येति ।** हल इत्यत्र हल् च हलौ च हल श्चेत्येकशेषमभिप्रेत्याह-**एकस्येति । किं च**-किं-तर्हि । **प्रसज्येतेति**-षस्य संयोगत्वे इकारादेः गुरुत्वादिति भावः ।

प्रदीपे—ननु अनन्तरा इत्यनेन कथमेकप्रतिषेधोऽवगम्यते इत्यत आह-**अनन्तरा इति ।**

उद्द्योते—नन्वन्यं प्रतियोगित्वेनाश्रित्यैकस्मिन्ननन्तरव्यवहारः कुतो नेत्यत आह-**प्रकृते चेति ।** तथा च तदर्थमनेकहल्ग्रहणमावश्यकमिति भावः । **तस्येति**-"उषविदजागृभ्य" इत्यनेनेति शेषः ।

**( १३८ समाधानवार्तिकम् ॥ ८ ॥ )**

**॥ * ॥ न वाऽतज्जातीयव्यवायात् ॥ * ॥**

**( भाष्यम् )**

**न वा एष दोषः ॥**

**किं कारणम् ? ।**

**अतज्जातीयस्य व्यवायात् । अतज्जातीयकं हि लोके व्यवधायकं भवति ॥**

**( तत्त्वालोकः )** भाष्ये—अनन्तरा इत्यनेनैव स्वरैर्व्यवहितेषु संज्ञाया अप्रसङ्गात् "स्वरानन्तर्हितवचनं" न कार्यमित्याशयेन सिद्धान्ती आह-**न वेति । एषः**-"स्वरे"तिवचनाभावे स्वरैर्व्यवहितेषु संज्ञाप्रसङ्गरूपः । हि-यतः ।

**( अनुयोगभाष्यम् )**

**कथं पुनर्ज्ञायते—ऽतज्जातीयकं लोके व्यवधायकं भवतीति ? ॥**

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी पृच्छति-**कथमिति ।** केन व्यवहारेणेत्यर्थः ।

**( उत्तरभाष्यम् )**

**एवं हि कश्चित् कश्चित्पृच्छति—'अनन्तरे एते ब्राह्मणकुले' इति । स आह—'नानन्तरे, वृषलकुलमनयोरन्तरा' इति ॥**

**( प्रदीपः ) वृषलकुलमिति ।** यद्यपि ब्राह्मणकुलमपि तयोर्व्यवधायकं तथापि भिन्नजातीयकमव्यवधायकमिति यदुक्तं तदनेन निवर्त्यते ॥

**( उद्द्योतः ) कुल**मत्र गृहम् ॥ **ब्राह्मणकुलमपी**ति । तत्तद्रूपेण ग्रहणे तस्यापि विजातीयत्वादिति भावः ॥ भाष्य **अनयोरन्तरेति** षष्ठ्युपादानादन्यसहितयोरवधित्वसूचनात्तत्तद्रूपेणाग्रहणबोधनात् ब्राह्मणकुलस्याव्यवधायकत्वमेवेत्यन्ये ॥ **भिन्नजातीये** त । **तयोश्चान्तरा नद्यश्च पर्वताश्च भवन्तीति** भाष्येणेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तं व्यवहारं दर्शयति-**एवमिति । हि**—यतः । प्रदीपे- **तयोः** -ब्राह्मणकुलयोः । उद्द्योते—**तस्यापि**-ब्राह्मणकुलस्यापि ।

**( आक्षेपभाष्यम् )**

**किं पुनः कारणं कश्चिदतज्जातीयं व्यवधायकं भवति, कश्चिन्न ? ॥**

**( तत्त्वालोकः )** लोके प्रकृतोक्तव्यवहारेण अतज्जातीयस्य वृषलकुलस्य व्यवधायकत्वं, प्रागुक्तव्यवहारेणातज्जातीयस्य नद्यादेरव्यवधायकत्वमित्यत्र किं विनिगमकमित्याशयेन पूर्वपक्षी पृच्छति–**किं पुनरिति ।**

**( समाधानभाष्यम् )**

**सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥**

**( तत्त्वालोकः )** सिद्धान्ती उत्तरयति-**सर्वत्रैवेति ।**

**( आक्षेपभाष्यम् )**

**कथम्—अनन्तराविमौ ग्रामाविति ? ॥**

**( तत्त्वालोकः )** एवं सति अतज्जातीयस्य नद्यादेः व्यवधायकत्वात् पूर्वोक्तव्यवहारः कथमुपपद्यते इत्याशयेन पूर्वपक्षी पृच्छति-**कथमिति ।**

**( समाधानभाष्यम् )**

**ग्रामशब्दोयं बह्वर्थः । अस्त्येव शालासमुदाये वर्तते, तद्यथा—ग्रामो दग्ध इति । अस्ति वाटपरिक्षेपे वर्तते, तद्यथा—ग्रामं प्रविष्ट इति । अस्ति मनुष्येषु वर्तते, तद्यथा—ग्रामो गतो ग्राम आगत इति । अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते, तद्यथा-ग्रामो लब्ध इति ॥ तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते तमभिसमीक्ष्यैतत्प्रयुज्यते-अनन्तराविमौ ग्रामाविति । सर्वत्रैव ह्यतज्जातीयकं व्यवधायकं भवति ॥ हलोनन्तराः ॥ ७ ॥**

**( प्रदीपः ) ग्रामशब्दोऽयमिति ।** केचिदर्थभेदेन शब्दभेदमिच्छन्ति । प्रत्यभिज्ञानं तु सामान्यनिबन्धनम् ॥ अन्ये तु एकशब्दत्वं, तत्र चानेकशक्तियोग एकशक्तित्वं वेति दर्शनविकल्पः ॥ तत्र यदा एकशब्दत्वपक्षस्तदा **तद्यः सारण्यके** इतिभाष्यं शक्तिभेदादुपचरितभेदाश्रयम् ॥ भेदपक्षे तु **ग्रामशब्दोयं बह्वर्थ** इति भाष्यम् । अभिन्नसामान्यनिमित्तैकत्वाध्यवसायाश्रयम् ॥ **तद्यः सारण्यक इति ।** ततश्च ग्रामशब्दार्थे नदीनां पर्वतानां चान्तर्भावाद्व्यवधायकत्वाभावादानन्तर्यं ग्रामयोरुच्यते । **ग्रामे नाध्येय**मित्यत्र तु ग्रामशब्दो वाटपरिक्षेपवृत्तिः । शुचौ देशेऽध्ययनप्रतिपादनतात्पर्यात् । ततश्च सीमन्यधीयत एव ॥ ७ ॥

**( उद्द्योतः ) ग्रामशब्दोऽयमित्यस्य तद्यः सारण्यक** इत्यस्य चाविरोधायाह--**केचिदिति । अन्याय्यश्चानेकार्थत्व**मिति तदाशयः । **सामान्यं** च ग्रामशब्दत्वादि ॥ **अन्ये त्विति ।** व्यक्तिभेदकल्पनायां गौरवमिति तदाशयः ॥ **तत्र चेति ।** निरूपकभेदाच्छक्तिभेद इति भावः ॥ **एकेति ।** समवायैकत्वनये रसो रूपवानित्यादिप्रयोगवदन्यार्थबोधकालेऽन्यार्थबोधो वारणीयः । तदर्थसंबन्धेन शक्त्यग्रहात् । तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार **इति** भावः ॥ **तत्र यदेति ।** एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम् ॥ **ग्रामशब्दोऽयं बह्वर्थ** इति तु मुख्यार्थमेव । अत्र सर्वार्थनिरूपितवृत्तीनां **वर्तते** इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः । तत्र वर्तनक्रियाऽस्तिक्रियायाः कर्त्री । शालासमुदायादौ ग्रामशब्दस्य वृत्तिरस्तीत्यर्थः । **वाटपरिक्षेपो** नाम शालासमुदायरक्षणाय सर्वतो मार्गप्रतिरोधकं यत्परितः क्षिप्यते तदुच्यते ॥ सारण्यकससीमकवृत्तित्वत्र न गृह्यते इत्याह—**शुचाविति । सीमनीति च** ॥ ७ ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**ग्रामेति ।** उपसंहरति–**सर्वत्रैवेति ।** तथा च व्यवहिते अनन्तरशब्दप्रयोगो नेतिभावः ॥

प्रदीपे—नन्वेवं कथं प्रत्यभिज्ञानमित्यत आह—**प्रत्यभिज्ञानमिति । सामान्येति**—एकत्वेति शेषः । **एकशब्दत्वमिति**—अर्थभेदेऽपीत्यादिः । इच्छन्तीति शेषः । **तत्र चेति**—पक्षे इति शेषः । तयोः पक्षयोः विरोधं निराकरोति—**तत्रेति ।** तयोः पक्षयोर्मध्ये इ यर्थः । अनेकशक्तियोगपक्षे आह—**शक्तिभेदादिति ।**

उद्द्योते—**प्रयोगवदिति**—प्रयोगो यथा वारणीयस्तथेत्यर्थः । वारणे हेतुमाह—**तदर्थेति** । एवञ्चात्र पक्षे न सर्वप्रतीत्यापत्तिः । नन्वेवं नानार्थताव्यवहारो नोपपद्येतेत्यत आह—**तत्तदर्थेति ।** कैयटीयन्यूनतां निराकरोति – **एकशक्तित्वेति । अत्र**—एषु वाक्येषु । अनन्वयं परिहरति—**तत्रेति ।** तयोर्मध्ये इत्यर्थः । तस्य सार्वत्रिकत्वाभिप्रायेणाह—**शालेति ।**

---

**( ७ अनुनासिकसंज्ञासूत्रम् ॥ १ । १ । ४ आ० ४ ॥ )**

# मुखनासिकावचनोऽनुनासिकः ॥ १ । १ । ८ ॥

**( मुखनासिकावचनशब्दार्थनिरूपणम् )**

**( आक्षेपभाष्यम् )**

**किमिदं 'मुखनासिकावचनः' इति ? ॥**

**( प्रदीपः ) मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥** प्राण्यङ्गत्वात्समाहारद्वन्द्वे ह्रस्वत्वेन भाव्यम्, अवचनमिति नञ्समासाश्रयणेऽर्थो न संगच्छते इति प्रश्नः—**किमिदमिति ॥**

**( उद्द्योतः ) मुखना० ॥ ८ ॥ प्राण्यङ्गत्वादिति ।** एतेनेतरेतरयोगद्वन्द्वे रूपसिद्धिरित्यपास्तम् ॥ **अर्थ इति ।** अभिमतोऽर्थ इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी पृच्छति—**किमिति ।** कथंनिष्पत्तिकमित्यर्थः ।

प्रदीपे—**द्वन्द्वे इति** - अभिमतार्थोपपत्तावपीति शेषः । अभिमतशब्दो नोपपद्यते इति भावः । **आश्रयणे इति**—अभिमतशब्दोपपत्तावपीति शेषः ।

उद्द्योते—यत्किञ्चिदर्थसङ्गतेः सम्भवादाह—**अभिमत इति ।** मुखनासिकाभ्यामुच्चार्यमाणस्यानुनासिकसंज्ञारूप इत्यर्थः ।

**( समाधानभाष्यम् )**

**मुखं च नासिका च मुखनासिकम् । मुखनासिकं वचनमस्य सोयं मुखनासिकावचनः ॥**

**( तत्त्वालोकः )** सिद्धान्ती उत्तरयति—**मुखं चेति ।**

**( आक्षेपभाष्यम् )**

**यद्येवं मुखनासिकवचन इति प्राप्नोति ॥**

**( तत्त्वालोकः )** पूर्वपक्षी शङ्कते—**यद्येवमिति ।** तर्हीति शेषः ।

**( समाधानभाष्यम् )**

**निपातनाद्दीर्घत्वं भविष्यति ॥**

( प्रदीपः ) **निपातनादिति** । प्रसङ्गेनास्य लौकिकशब्दस्य साधुत्वं क्रियते । निपातनानां च बाधकत्वान्मुखनासिकवचन इति न भाव्यम् । अबाधकत्वपक्षे तु भाव्यमेव ॥

( उद्द्योतः ) सौत्रत्वादिति कुतो नोक्तमित्यत आह- **प्रसङ्गेनेति । अबाधकत्वेति । पक्षे**त्वित्यनेनाबाधकत्वस्वीकर्तृवृत्तिमतमसङ्गतमित्युक्तम् । भाष्यकृदसंमतरूपापत्तेः । **बाधकान्येव निपातनानी**ति **सर्वादि**सूत्रे भाष्ये उक्तेः ।

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते-**निपातनादिति** । प्रदीपे—सौत्रत्वादित्यस्यानुक्तौ हेतुसूचनायाह—**लौकिकेति । इति**—इत्यनेन ।

( समाधानान्तरभाष्यम् )

**अथ वा-मुखनासिकमावचनमस्य सोयं मुखनासिकावचनः ॥**

( तत्त्वालोकः ) निपातनस्यागतिकगतित्वादाह—**अथवेति** ।

( आक्षेपभाष्यम् )

**अथ किमिदमावचनमिति ? ॥**

( तत्त्वालोकः ) पूर्वपक्षी पृच्छति—**किमिति** । किमर्थकमित्यर्थः ।

( समाधानभाष्यम् )

**ईषद्वचनमावचनमिति, किंचिन्मुखवचनं किंचिन्नासिकावचनम् ।**

( प्रदीपः ) **ईषद्वचनमिति** । भागस्य मुखेनोच्चारणाद्भागस्य नासिकया । अस्मिन्पक्षे मुखनासिकवचन इत्यपि भवति । यो हीषदुच्यते स उच्यते एव । यथा ईषच्छुक्लोऽपि शुक्ल एव ॥

( उद्द्योतः ) **अस्मिन् पक्ष इति** । आङ्रहितस्येति शेषः । वस्तुत आद्यपक्षैकवाक्यतया आङ्रहितैतत्पदाभ्यां समासस्यानभिधानमेवेत्याहुः ॥ ननु भागस्य मुखाद्युच्चार्यत्वेन मुखनासिकं वचनमुच्चारणकरणं यस्य वर्णस्येत्यर्थको मुखनासिकवचन इति प्रयोगस्तत्रासङ्गतोऽत आह—**यो हीति** ।

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते—**ईषदिति** । ईषद्वचनमित्यनेन आंशिकावचनभ्रमनिवारणायाह—**किञ्चिदिति** । उद्द्योते—**आद्यपक्षेति**—कृत्स्नो वर्णो मुखेन नासिकया चोच्चार्यते इत्याद्यपक्षेत्यर्थः । **एतत्पदाभ्यां**—मुखनासिकवचनपदाभ्याम् । **समासस्य**—बहुव्रीहेः ।

( समासान्तरभाष्यम् )

**मुखद्वितीया वा नासिका वचनमस्य सोयं मुखनासिकावचनः ॥**

( प्रदीपः ) **मुखद्वितीयेति** । मुखसहायेत्यर्थः । तत्र नासिका मुखसाहचर्यान्मुखशब्देनोच्यते । मुखं च तन्नासिका च मुखनासिका । सा वचनमस्येति ॥

( उद्द्योतः ) **सहायेति** । अव्युत्पन्नो द्वितीयशब्दः सहायवाचीत्यर्थः ॥ **शाकपार्थिवादित्वादु**त्तरपदलोपे शब्दानित्यत्वापत्तिरत आह—**तत्रेति** ॥ परन्त्विदं चिन्त्यं, भाष्यकृतैवंरीत्या तदप्रत्याख्यानात् ॥

( तत्त्वालोकः ) भाष्ये—ननु सम्पूर्णवर्णस्य मुखादिवचनत्वोपपादकेन "अकुहे" त्यादिना द्वितीयपक्षो विरुध्येतेत्यत आह—**मुखद्वितीयेति** । मुखं द्वितीयं यस्या इति व्युत्पत्तिः ।

उद्द्योते—ननु द्वितीयशब्दस्य पूरणप्रत्ययान्तत्वे कथमुभयवचनस्येत्यस्य लाभ इत्यत आह—**अव्युत्पन्न इति** ।

( समाधानान्तरभाष्यम् )

**मुखोपसंहिता वा नासिका वचनमस्य सोयं मुखनासिकावचनः ॥**

( प्रदीपः ) **मुखोपसंहितेति** । मुखस्य च नासिकायाश्च यदन्तरालं स्थानान्तरमेवानुनासिकस्य दर्शयति । तत्र सामीप्यान्मुखं च तन्नासिका चेत्युभाभ्यामन्तरालं व्यपदिश्यते । पदसंस्कारपक्षे तु मुखनासिकापदनिरपेक्षं वचनमित्येतत्पदं लिङ्गसर्वनामनपुंसकाश्रयेण संस्क्रियते । पश्चात्स्त्रीत्वस्य पदान्तरसंबन्धेन प्रतीयमानत्वाद्बहिरङ्गत्वान्ङीष्प्रत्ययो न भवति । यदा तु स्त्रीत्वाश्रयेण वचनीतिपदं व्युत्पाद्यते तदा मुखनासिकावचनीक इत्येव भवति ॥ अत्र चानेकदर्शनम् । अनुनासिकस्य पूर्वः परो वा भागो मुखेनोच्चार्यते भागो नासिकया, तत्र नासिकावचनभागानुरागवशाद् मुखवचनोऽपि भागो नासिकावचन इव लक्ष्यते । यथा सँय्यन्तेत्यत्रानुनासिकयकारानुरागाद् अकारोनुनासिक इव प्रतिभाति ॥ अत्र च प्रासादवासिन्यायो नास्ति, भागस्यैव मुखेन नासिकया चोच्चारणान्न तु समग्रस्य ॥ अन्येषां तु दर्शनं मुखनासिकान्तरालं स्थानान्तरमेवास्येति । अत्रापि नास्ति प्रासादवासिन्यायः ॥ यदा सर्व एव वर्णो मुखेन नासिकया चोच्चार्यते तदा प्रासादवासिन्यायेन भाष्यकारो मुखग्रहणं प्रत्याचष्टे । यथा आम्रेणोखया च पक्वः सूप उभाभ्यां व्यपदिश्यते ॥

( उद्द्योतः ) **मुखस्य चेति** । उपशब्दसामर्थ्यादिति भावः । यद्यपि वचनशब्दे कर्मणि ल्युटि मुखनासिकेनावचनो मुखनासिकया वचन, इति वा तत्पुरुषोऽपि वक्तुं शक्यः तथापि कर्मणि तस्य बाहुलकलभ्यत्वात्करणे ल्युटा बहुव्रीहिरेवाश्रितो भाष्ये ॥ तत्रान्त्ययोर्नासिकाशब्दसामानाधिकरण्यात्स्त्रीत्वविशिष्टस्यैव करणत्वेन ल्युटि ङीपि **नद्यृतश्चे**ति कबापत्तिरत आह—**पदसंस्कारेति** ॥ भागस्य मुखेनोच्चारणाननुभवादाह—**अत्रेति** ॥ **तस्यादित** इति सूत्रस्वरसाद्वर्णानां सखण्डत्वमित्याशयः ॥ ये तु तत्तद्देशावच्छिन्नवाय्वभिघातस्य तत्तद्वर्णजनकत्वात्स्थानानां करणत्वमेव । स्थानव्यवहारस्तु वर्णजनकवायुसंयोगाधारत्वाद्वर्णाधारत्वमारोप्य । अत एवोत्तरसूत्रे भाष्ये **अस्यन्त्यनेन वर्णानित्यास्य**मिति करणे व्युत्पत्तिर्दर्शितेति वदन्ति ॥ तन्मते प्रासादवासिदृष्टान्तासङ्गतेराह—**आम्रेण चेति** । एतेन कण्ठादिकं तु स्थानं, नासिका तु करणमिति मन्दोक्तमपास्तम् । अत एवात्र सूत्रे हरिणा—**"स हि वर्णो न मुखेनव" नापि नासिकयैव चात्मवृत्तिं लभते, किं तु वायुनानुपरतशक्तिनाऽन्यतरकरणमभिहत्यान्यतरकरणेऽभिहन्यमाने आत्मव्यक्तिं लभते"** इत्युक्तम् ॥

( तत्त्वालोकः ) भाष्ये—अस्य भिन्नस्थानकत्वादाह—**मुखोपसंहितेति** ।

प्रदीपे—**यदन्तरालमिति**—तदिति शेषः । नन्वेवं कथं मुखनासिकापदप्रयोग इत्यत आह—**तत्रेति** । सत्रे इत्यर्थः । वाक्यसंस्कारपक्षे आह—**यदा त्विति । अत्र च**—अनुनासिकविषये च । **दर्शनं**—मतम् । तत्र प्रथमं द्वितीयपक्षेणाह—**अनुनासिकस्येति** । विनिगमनाविरहादाह—**परो वेति । भागः**—अवशिष्टः । **तत्र—**

तयोर्मध्ये। चतुर्थपक्षेणाह—**अन्येषामिति** । प्रथमतृतीयपक्षाभ्यामाह—**यदेति** ।

उद्द्योते—प्रथमद्वितीयपक्षाभिप्रायेणाह—**नासिकेनेति** । तृतीयचतुर्थपक्षाशयेनाह—**नासिकयेति । तस्य**—ल्युटः। ननु वर्णानामखण्डत्वात् कथमिदमित्यत आह—**तस्यादित इति । तत्तद्देशेति**—आस्यीयतत्तत्प्रदेशेत्यर्थः। **स्थानानां**—वर्णाभिव्यक्तिजनकानां कण्ठादीनाम् । **उत्तरसूत्रे**—"तुल्यास्ये"ति सूत्रे । **असङ्गतेरिति**—तस्य वास्तविकाधारविषयत्वादिति भावः । **एतेन**—उक्तभाष्यात् कण्ठादीनामपि करणत्वस्यैव प्रतीयमानत्वेन । अस्य ङादीनामिति शेषः। **स हि**—ङादिर्हि । तस्य कण्ठादीनां स्थानत्वे तु अत्र करणपदप्रयोगो न संगच्छेतेत्याशयः ।

( पदकृत्यनिर्वचनायाक्षेपभाष्यम् )

**अथ मुखग्रहणं किमर्थम् ? ॥**

( समाधानभाष्यम् )

**'नासिकावचनोऽनुनासिकः' इतीयत्युच्यमाने यमानुस्वाराणामेव प्रसज्येत । मुखग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**( प्रदीपः ) यमानुस्वाराणामेवेति ।** प्रासादवासिन्यायानवतारपक्षे इति भावः । तत्र विधिप्रदेशेषु यमानुस्वारा एवादेशाः स्युः । **विड्वनोरनुनासिकस्या**दित्यादिषु त्वनुवादप्रदेशेषु यमानुस्वाराणामसंभवादप्रतिपत्तिः स्यात् ॥

**( उद्द्योतः )** **यमो** नाम वर्गपञ्चमे परे वर्गाद्यचतुष्टयान्यतमसदृशो वर्णः ॥ **आदितश्चत्वारो वर्णा** इति विवरणेऽपि चतुःशब्दस्य चतुःसदृशे लक्षणा बोध्या । अत एवायोगवाहत्वप्रतिपादक**हयवरट्**सूत्रस्थभाष्याविरोधः ॥ **न्यायानवतारेति । कचटतपानामेवे**त्येवकारोऽप्यत्रैव पक्षे नासिकाया आस्यबाह्यत्वपक्षे च बोध्यः ॥ **अप्रतिपत्तिरिति** । अत्र **विड्वनोर्जम्** इति वक्तुं शक्यम् । **यरोऽनुनासिक** इत्यत्र त्वप्रतिपत्तिः । तत्र **अमि अम्वे**त्युक्ते सकलेष्टासिद्धेः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रसज्येतेति**—अनुनासिकसंज्ञेत्यादिः। एवमग्रेऽपि ।

प्रदीपे—**विधिप्रदेशेषु**—अणोऽप्रगृह्यस्यानुनासिक इत्यादिषु ।

**उद्द्योते—अविरोध इति**—अन्यथा तेषां स्वत एवाक्षरसमाम्नायिकत्वात् तदर्थमयोगवाहत्वप्रतिपादनं न सङ्गच्छेतेत्याशयः । **अत्रैव पक्षे**—तदनवतारपक्षे एव । **एवेन** तदवतारप्रथमतृतीयपक्षव्यावर्त्तनात् सम्भवाच्चाह—**नासिकाया इति** । यदेतन्नूं इत्यब्रवीदित्यादावनुनासिकानुपपत्तिमभिप्रेत्याह—**सकलेष्टासिद्धेरिति** ।

( आक्षेपभाष्यम् )

**अथ नासिकाग्रहणं किमर्थम् ? ॥**

( समाधानभाष्यम् )

**'मुखवचनोनुनासिकः' इतीयत्युच्यमाने कचटतपानामेव प्रसज्येत । नासिकाग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**( प्रदीपः ) कचटतपानामिति** । पक्मिति चकारलोपप्रसङ्गः, ओदनपगित्यत्रा**नुनासिकस्य क्विझलोः क्ङिती**ति दीर्घप्रसङ्गः ॥

**( उद्द्योतः ) चकारलोपेति** । निष्ठावत्वकुत्वयोरसिद्धत्वात् पचेर**नुदात्तोपदेशवनती**त्यनेनेति भावः ॥

( मुखग्रहणप्रत्याख्यानभाष्यम् )

**मुखग्रहणं शक्यमकर्तुम् ॥**

**( तत्त्वालोकः )** वर्णानां हलां वा स्वभावतो निरवयवत्वेनाखण्डत्वस्य सिद्धान्तितत्वाद् द्वितीयपक्षस्यासम्भवमभिप्रेत्याह—**मुखग्रहणमिति** । तद्विनाऽपि सकलेष्टसिद्धेरिति शेषः ।

( आक्षेपभाष्यम् )

**केनेदानीमुभयवचनानां भविष्यति ? ॥**

**( तत्त्वालोकः ) इदानीं**—मुखग्रहणाभावे । **भविष्यतीति**—अनुनासिकसंज्ञेत्यादिः ।

( समाधानभाष्यम् )

**प्रासादवासिन्यायेन । तद्यथा-केचित्प्रासादवासिनः, केचिद् भूमिवासिनः, केचिदुभयवासिनः । [ तत्र ] ये प्रासादवासिनो गृह्यन्ते ते प्रासादवासिग्रहणेन । ये भूमिवासिनो गृह्यन्ते ते भूमिवासिग्रहणेन । ये तूभयवासिनः, गृह्यन्त एव ते प्रासादवासिग्रहणेन भूमिवासिग्रहणेन च ॥ एवमिहापि केचिन्मुखवचनाः, केचिन्नासिकावचनाः, केचिदुभयवचनाः । तत्र ये मुखवचना गृह्यन्ते ते मुखग्रहणेन । ये नासिकावचना गृह्यन्ते ते नासिकाग्रहणेन । ये उभयवचना गृह्यन्त एव ते मुखग्रहणेन नासिकाग्रहणेन च ॥**

**( प्रदीपः ) प्रासादवासिन्यायेनेति** । अयं न्यायः क्रियाशब्देष्वेव, न रूढिशब्देषु ॥

**( उद्द्योतः )** ननु प्रासादवासिन्यायेन मुखग्रहणप्रत्याख्यानवत्सूत्रमेव कुतो न प्रत्याख्यायते इत्यत आह—**अयमिति** । योगेन ह्युभयग्रहणं स रूढिषु नास्तीत्यर्थः । अनुनासिकशब्दस्य च रूढिशब्दत्वम् । तस्य क्रियाशब्दत्वं तु वक्तुमशक्यम्, अनु पश्चान्नासिका व्याप्रियते यस्मिन्निति योगस्य यमङणनेषु निरूपयितुमशक्यत्वात् । विनिगमनाविरहेण युगपदुभयोर्व्यावृत्तेः ॥ एतेनानु पश्चान्नासिकां गत इत्यर्थको नासिकामनुगत इति योगोपि परास्तः । यथाकथंचिद्योगोपपादने तु रूढिरेव फलितेति दिक् ॥ ८ ॥

**( तत्त्वालोकः )** भाष्ये- **एवेना**ग्रहणव्यावृत्तिः । एवमग्रेऽपि ।

उद्द्योते—**प्रत्याख्यायते इति**—अनुनासिकशब्दस्य यौगिकत्वादिति भावः । **हि**—यतः । **स**—योगः । **तस्य**—अनुनासिकशब्दस्य । योगस्य क्रियान्तर्भावेणैव वक्तव्यत्वादाह—**क्रियेति । विनिगमनेति**—तत्रेत्यादिः । **उभयोः**—मुखनासिकयोः । **व्यावृत्तेरिति**—अत्र व्याप्तेरिति पाठो युक्तः । नन्वनोरभिहत्येत्यर्थेन, गत इत्यस्याभिव्यञ्जित इत्यर्थेन च द्वितीययोगः सम्भवतीत्यत आह—**यथाकथञ्चिदिति** । अत्र क्रियाप्रवृत्तिनिमित्तकत्वेन प्रसिद्धशब्दघटितत्वं क्रियाशब्दत्वम् । तस्य वचनशब्दघटितनासिकावचनशब्दे सत्त्वेन तत्र प्रासादवासिन्यायप्रवृत्त्या मुखग्रहणप्रत्याख्यानं सम्भवति । अनुनासिकशब्दे तादृशशब्दाघटितत्वात् तस्यासत्त्वेन तत्र प्रकृतन्यायाप्रवृत्त्या सूत्रप्रत्याख्यानं न सम्भवतीति भावः ॥

( आक्षेपभाष्यम् )

**भवेदुभयवचनानां सिद्धम् । यमानुस्वाराणामपि प्राप्नोति ॥**

**( तत्त्वालोकः )** शङ्कते—**भवेदिति** । एवं मुखग्रहणाभावे प्रासादवासिन्यायेनेत्यादिः । **सिद्धमिति**—भावक्तान्तम् । अस्य अनुनासिकसंज्ञाया इत्यादिः । किन्तु सेति शेषः ।

**( समाधानभाष्यम् )**

नैव दोषो न प्रयोजनम् ॥

**( प्रदीपः ) नैव दोष इति ।** अनुवादे तावद् यमानुस्वाराणामसंभव एव । विधावप्यान्तरतम्यान्मुखवचनस्योभयवचनो भविष्यति न तु केवलो नासिकावचनः ॥ ८ ॥

**( तत्त्वालोकः )** भाष्ये—इष्टापत्त्या परिहरति—**नैवेति** ।

**( १३९ अन्योन्याश्रयपरिहारायाक्षेपवार्तिकम् ॥ १ ॥ )**

## [ ॥ * ॥ इतरेतराश्रयं तु ॥ * ॥ ]

**( भाष्यम् )**

इतरेतराश्रयं तु भवति ॥

का इतरेतराश्रयता ? ।

सतोनुनासिकस्य संज्ञया भवितव्यम् । संज्ञया च नामानुनासिको भाव्यते ॥ तदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्प्यन्ते ॥

**( तत्त्वालोकः )** भाष्ये—**इतरेति**—इत आरभ्य प्रायः सकलभाष्यस्य प्रकृतोपयोगिपदमात्रपरिवर्त्तनव्यतिरिक्तस्य वृद्धिसंज्ञासूत्रोक्तस्यैव भाष्यकृताऽनूदितत्वात्तस्य व्याख्या तत एवावगन्तव्या ।

**( सिद्धान्तसमाधानवार्तिकम् )**

## ॥ * ॥ अनुनासिकसंज्ञायामितरेतराश्रये उक्तम् ॥ * ॥

**( प्रश्नभाष्यम् )**

किमुक्तम् ? ॥

**( समाधानभाष्ये १८ सिद्धान्तिवार्तिकम् )**

*सिद्धं तु नित्यशब्दत्वात्* इति ।

**( प्रकृतोपयुक्तव्याख्याभाष्यम् )**

नित्याः शब्दाः । नित्येषु शब्देषु सतोऽनुनासिकस्य संज्ञा क्रियते । न संज्ञयाऽनुनासिको भाव्यते ॥

**( आक्षेपभाष्यम् )**

यदि तर्हि नित्याः शब्दाः । किमर्थं शास्त्रम् ? ॥

**( ९१ सिद्धान्तवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ किमर्थं शास्त्रमिति चेन्निवर्तकत्वात्सिद्धम् ॥ * ॥

**( भाष्यम् )**

निवर्तकं शास्त्रम् ॥

कथम् ? ॥

आङ्समायविशेषेणोपदिष्टोऽननुनासिकः । तस्य सर्वत्राननुनासिकबुद्धिः प्रसक्ता । तत्रानेन निवृत्तिः क्रियते-छन्दस्यचि परत आङोऽननुनासिकस्य प्रसङ्गेऽनुनासिकः साधुर्भवतीति ॥ मुखनासिकावचनोऽनुनासिकः ॥ ८ ॥

---

**( सवर्णसंज्ञाप्रकरणम् )**

**( ८ सवर्णसंज्ञासूत्रम् ॥ १ । १ । ४ आ. सू. ६ ॥ )**

# तुल्यास्यप्रयत्नं सवर्णम् ॥ १ । १ । ९ ॥

**( तुल्यास्यप्रयत्नपदार्थनिरूपणाधिकरणम् )**

**( आक्षेपभाष्यम् )**

[ किमिदं तुल्यास्यप्रयत्नमिति ? ॥ ]

**( समाधानभाष्यम् )**

तुलया संमितं तुल्यम् । आस्यं च प्रयत्नश्च आस्यप्रयत्नम् । तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवति ॥

**( प्रदीपः ) तुल्यास्यप्रयत्नम् ॥ १ ॥** चत्वारोऽत्र पक्षाः संभवन्ति—द्वन्द्वगर्भो बहुव्रीहिः, त्रिपदो बहुव्रीहिः, तुल्यास्यशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिः, आस्यप्रयत्नशब्दयोस्तत्पुरुषस्ततो बहुव्रीहिरिति । तत्र द्वन्द्वगर्भो बहुव्रीहिरिति पक्षे वार्तिकस्यावतार इति तमेव भाष्यकारः पूर्वं दर्शयति-**तुलया संमितमिति** । व्युत्पत्त्यर्थमेव तुलोपादीयते । रूढिशब्दस्त्वयं सदृशपर्यायः । यथा प्रवीणः कुशलः प्रतिलोमोऽनुलोम इत्यवयवार्थाभावः, एवं तुल्यशब्देऽपि ॥

**( उद्द्योतः ) तुल्यास्यप्र० ॥ ९ ॥ तत्पुरुष इति** । तुल्यास्यशब्दयोर्मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानस्तत्पुरुषः । आस्यप्रयत्नशब्दयोश्च **साधनं कृते**त्यनेन समासः ॥ ननु स्थानादिकं न तुलया संमीयतेऽत आह - **व्युत्पत्त्यर्थमेवेति** ॥

**( तत्त्वालोकः )** भाष्ये—**आस्यप्रयत्नमिति**—अत्र "जातिप्राणिनाम्" त्येकवद्भावः । तथा "तुल्यम् आस्यप्रयत्नं यस्य तत् तुल्यास्यप्रयत्नमि" ति शेषः ॥ द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायेन तुल्यपदस्योभयत्रान्वयात् सूत्रार्थमाह—**तुल्यास्यमिति** ।

प्रदीपे—**त्रिपदः**—तुल्य आस्ये प्रयत्नो यस्येति व्यधिकरणत्रिपदः । **तत्र**—तेषां पक्षाणां मध्ये । **वार्त्तिकस्य**—"सवर्णसंज्ञायां भिन्नदेशेष्वि" ति वार्त्तिकस्य । **इति**—इति हेतोः । **तमेव**—द्वन्द्वगर्भबहुव्रीहिमेव । **अयं**—तुलाशब्दः । **इति**—इत्यत्र ।

**( आक्षेपभाष्यम् )**

किं पुनरास्यम् ? ।

**( प्रदीपः ) किं पुनरास्यमिति ।** किं मुखम्, अथ तत्र भवं ताल्वादिकं स्थानमिति प्रश्नः ॥

**( उद्द्योतः ) किं मुखमिति ।** अतद्धितान्ततद्धितान्तास्यशब्दविषये सन्देह इत्याशयः ॥

**( तत्त्वालोकः )** प्रदीपे—**तत्र**—मुखे ।

**( समाधानभाष्यम् )**

लौकिकमास्यम् । ओष्ठात्प्रभृति प्राक्काकलकात् ॥

**( प्रदीपः ) लौकिकमिति ।** पशुरपत्यं देवतेत्यादिवत् प्रसिद्धमित्यर्थः ॥ यद्यपि ताल्वादिकमपि लौकिकमास्यम्, तथापि तत्र

योगवशादास्यशब्दो वर्तत इति झटिति न तत्प्रसिद्धमिति मुखमेव प्रसिद्धत्वाल्लौकिकमुक्तम् । तस्यैव च प्राथम्याद् ग्रहणं युक्तमित्यर्थः ॥ **ओष्ठादिति । काकलकं** हि नाम ग्रीवायामुन्नतप्रदेशः ॥

**( उद्द्योतः )** तद्धितान्तमपि लौकिकमेव न वैदिकमित्यत आह—**पशुरिति ॥ झटिति ।** पदश्रवणमात्रेणेत्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**तत्र**—ताल्वादिके । **इति**—इति हेतोः । **तत्**—ताल्वादिकम् । **इति**—इति हेतोः । **तस्यैव**—मुखस्यैव । तथा चात्रास्यपदार्थः मुखं, आस्यशब्दश्चातद्धितान्त इति भावः।

**( आक्षेपभाष्यम् )**

**कथं पुनरास्यम् ? ।**

**( प्रदीपः ) कथं पुनरिति ।** यदि निमित्तवशात्प्रवर्तते ततस्ताल्वादिष्वपि प्रवर्तिष्यत इति प्रश्नः ॥

**( उद्द्योतः ) निमित्तवशात्** अवयवार्थवशात् ॥

**( तत्त्वालोकः )** प्रदीपे—मुखवाचिनोऽपि आस्यशब्दस्य साधुत्वायावयवार्थोऽवश्यमाश्रयणीय इत्याशयेनाह—**यदीति ।** आस्यशब्दो मुखे इति शेषः ।

**( समाधानभाष्यम् )**

**अस्यन्त्यनेन वर्णानिति आस्यम् ॥ अन्नमेतदास्यन्दत इति वास्यम् ॥**

**( प्रदीपः ) अस्यन्त्यनेनेति ।** सत्यपि निमित्ते रूढिवशान्मुखे एव तत्प्रवर्तते न ताल्वादिष्वित्यर्थः । **कृत्यल्युट** इति करणे ण्यत् । असनमत्र जातिस्फोटपक्षेऽभिव्यक्तिः, व्यक्तिस्फोटपक्षे तूत्पत्तिः ॥ **अन्नमेतदिति ।** आङ्पूर्वात्स्यन्दते**रन्येष्वपि दृश्य**ते इति डः । एतदास्यं कर्माऽन्नं कर्तृ, आस्यन्दते द्रवीकरोति, अन्नप्रक्षेपणेन मुखस्य द्रवत्वोत्पादनात् ।

**( उद्द्योतः ) जातिस्फोटेति । वर्णानिति** वर्णपदं बोधकपरम् । तत्र जातेर्बोधकत्वे तस्या नित्यत्वादभिव्यक्तिरसनं तदाश्रयव्यक्तीनां वाचकत्वे तूत्पत्तिरिति भावः ॥ अतएव **वर्णानिति** बहुवचनं सङ्गच्छते । एकैव व्यक्तिस्तत्तद्रूपेणाभिव्यक्ता वाचिकेति पक्षे तदसङ्गतिः स्पष्टैव ॥ क्वचित्तु **व्यक्तिस्फोटपक्षेऽभिव्यक्तिः । जातिस्फोटपक्षे तूत्पत्तिरिति** पाठः ॥ अयमेव सांप्रदायिकः पाठः ॥ **'एकैव व्यक्तिर्वाचिका कत्वादिकं तु ध्वनिनिष्ठं ध्वनिविशेषव्यङ्ग्यं वा । सा च नित्या'** इति व्यक्तिस्फोटवादः तदाभिव्यक्तिः स्पष्टैव । बहुवचनं त्वेकस्यैव बहुरूपत्वादारोपितबहुत्वमादाय नेयम् ॥ **'व्यक्तयोऽनन्ता जन्याश्च । तत्र जातिरेव शक्ता'** इति जातिस्फोटवादः तदोत्पत्तिरित्यर्थः । **अन्येष्वपी**ति दृशिग्रहणाद्धात्वन्तरादपि स इति भावः॥

**( तत्त्वालोकः )** प्रदीपे—अवयवार्थस्य शब्दव्युत्पत्तिनिमित्तत्वेऽपि न शब्दप्रवृत्तिनिमित्ततेत्याशयेनाह—**सत्यपीति । तत्**—आस्यपदम् । **स्यन्दतेरिति**—अन्तर्भावितण्यर्थात् कर्मणि आस्यन्द्यते (द्रवीक्रियते) इति ( आस्यम् ) इति विग्रहे इति शेषः । एवम्फलितार्थपरकभाष्यस्य अक्षरार्थमाह—**एतदिति ।** तथा चास्यपदं मुखे योगरूढमिति भावः ।

उद्द्योते—**इति**-इत्यत्र । **तस्याः**—जातेः । **तदिति**—जातीत्यर्थः । **तदसङ्गतिः**—वर्णानिति बहुवचनासङ्गतिः । **वाद इति**—यदेति शेषः । एवमग्रेऽपि । **सः**—डः ।

**( आक्षेपभाष्यम् )**

**अथ कः [ पुनः ] प्रयत्नः ॥**

**( प्रदीपः ) कः प्रयत्न इति ।** किं प्रयतनं प्रयत्नः, अथ प्रारम्भो यत्नस्येति प्रश्नः ॥

**( तत्त्वालोकः )** प्रदीपे—**अथ**—अथवा ।

**( समाधानभाष्यम् )**

**प्रयतनं प्रयत्नः । प्रपूर्वाद्यततेर्भावसाधनो नङ् प्रत्ययः ।**

**( प्रदीपः ) भावसाधन इति ।** भावेऽभिधेये नङ्प्रत्ययः क्रियते । तेन नङ्शब्दस्य भावः साधनं भवति ॥

**( उद्द्योतः )** ननु साधनशब्देन कारकशक्तिरभिधीयते इति भावस्य साधनत्वमनुपपन्नमत आह—**भावे इति ॥ नङ् । यजयाचे**त्यनेन ॥

**( तत्त्वालोकः )** भाष्ये—लोके यत्नप्रयत्नयोः पर्यायतया प्रसिद्धेराद्यपक्षमेव स्वीकरोति—**प्रयतनमिति ।** यत्नमात्रमित्यर्थः ।

प्रदीपे—**तेन**—प्रत्ययस्यार्थप्रयुक्तत्वात् नङ्प्रत्यये भावस्य प्रयोजकत्वेन ।

**( आक्षेपभाष्यम् )**

**यदि लौकिकमास्यम् । किमास्योपादाने प्रयोजनम् । सर्वेषां हि तत्तुल्यम् ? ॥**

**( प्रदीपः ) किमास्योपादान इति ।** आस्य एव सर्ववर्णानां निष्पादादिति भावः ॥ नासिकापि न बाह्या वर्णोत्पत्तिनिमित्तम् । किं तर्ह्यास्यान्तश्चर्म विततमस्ति तत्संबद्धा रेखा नासिका तस्यां वाय्वभिघाताद्वर्णोत्पत्तिः, विसर्जनीयस्यैकीयमतेनोरस्यत्वात्सावर्ण्याभावेऽपि न दोषः ॥

**( उद्द्योतः )** ननु तुल्यावास्यप्रयत्नमात्रौ येषां जनकावित्यर्थे नासिकास्थानञञादिनिवृत्त्यर्थमास्योपादानं स्यादत आह—**नासिकापीति ।** एवं चास्यग्रहणे कृतेऽपि तद्व्यावृत्तिर्दुरुपपादेति भावः । वस्तुतस्तु अवधारणगर्भसमासे ह्रस्वाकारादिभिर्ह्रस्वाकारादीनां सावर्ण्यानापत्तिः । तज्जनकवायुसंयोगा[दी]नामपि तुल्यत्वात् । अवधारणागर्भसमासे त्वनुनासिकव्यावृत्तिरपि दुरुपपादैवेति भाष्याशयः ॥ एवंच नासिकाया बाह्यत्वेऽपि न क्षतिः । अतएव **मुखनासिकेति** सूत्रे मुखं च नासिका चेति, मुखद्वितीया नासिकेति च विग्रहप्रदर्शनं भाष्ये । नह्यवयवावयविविषये एवं प्रयोगः सचेतसाम् । सहस्तो देवदत्त इत्यादौ विद्यमानवाची सहशब्दः । अत एव **मुखवचनोऽनुनासिक इतीयत्युच्यमाने कचटतपानामेव प्रसज्येते**ति भाष्ये **'एव'** शब्दः सङ्गच्छते । अन्यथा यमादीनां ञादीनां च मुखवचनत्वात्तदसङ्गतिः स्पष्टैव । आस्यानन्तर्गतत्वे तु न दोषः । मुखमात्रवचनत्वाभावात् । प्रासादवासिन्यायप्रदर्शकभाष्येणापि ध्वनितमेतत् । कैयटोक्तास्यान्तर्गतत्वपक्षे तु सूत्रे मुखपदं मुखावयवपरम् । **ब्राह्मणवसिष्ठ**न्यायेन च नासिकातिरिक्तावयवग्रहणम् । एवकारश्चाप्यर्थः । दृष्टान्तोऽप्येकांशेन बोध्य इति ॥ नन्वेवमपि विसर्जनीयव्यावृत्तये तत्स्यादत आह—**विसर्जनीयस्येति ।** ततश्चान्येषां कण्ठादिस्थान एवेति भावः॥ उरस्यमतेऽप्याह—**सावर्ण्याभावेऽपीति ॥**

**( तत्त्वालोकः )** भाष्ये—सिंहावलोकनन्यायेनाह—**यदीति । किमिति**—तर्हीत्यादिः । **सर्वेषां**—वर्णानाम् । **हि**—यतः । **तत्**—आस्यम् ।

प्रदीपे—**बाह्येति**—आस्यत इत्यादिः ।

उद्द्योते—**आदिना**—यमानुस्वारयोः, अन्तस्थापञ्चमयुक्तहका-

...स्य च संग्रहः। **एवञ्च**—नासिकाया आस्यान्तर्गतत्वे च। **तद्व्यावृत्तिः**—तादृशञङादिव्यावृत्तिः। **बाह्यत्वे इति**—आस्यत इत्यादिः। **अत एव**—नासिकाया आस्यबाह्यत्वादेव। एवमग्रेऽपि। व्यभिचाराभासं परिहरति—**सहस्त इति। अन्यथा**—नासिकाया आस्यान्तर्गतत्वे। **तदसङ्गतिः**—तत्रैवकारासङ्गतिः। **एतत्**—नासिकाया आस्यबाह्यत्वम्। **एवमपि**—ङञाद्यव्यावर्त्तकत्वेऽपि। **तत्**—आस्यपदम्। "अयोगवाहा विज्ञेया आश्रयस्थानभागिनः" इति शिक्षावचनानुरोधेनाह—**कण्ठादीति।**

( समाधानभाष्यम् )

वक्ष्यत्येतत्—प्रयत्नविशेषणमास्योपादानमिति।

( प्रदीपः ) **वक्ष्यतीति।** नास्यपरीक्षावसर इति भावः॥

( उद्द्योतः ) ननु इदानीमेव किं नोच्यतेऽत आह—**नास्येति॥**

( १४० आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्यात् ॥ * ॥

( भाष्यम् )

सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गो भवति। जबगडदशाम्॥

किं कारणम्?॥

प्रयत्नसामान्यात्। एतेषां हि समानः प्रयत्नः॥

( प्रदीपः ) **सवर्णसंज्ञायामिति।** द्वन्द्वे प्रयत्नस्यास्येनाविशेषणात्तुल्यप्रयत्नयोस्तुल्यत्वाद्भिन्नस्थानानामपि प्रसङ्गः। भाष्ये शकारः प्रत्याहारपाठवशात्पठितः। अत्र प्रत्याहारे जबगडदानां शकारेणेत्यर्थः। शकारस्य तु विवृतत्वात्स्पर्शानां स्पृष्टत्वादप्रसङ्ग एव। तत्र ऊर्ज इत्यादौ **झरो झरीति** लोपप्रसङ्गः॥

( उद्द्योतः ) **द्वन्द्वे प्रयत्नस्यास्येनाविशेषणादित्यस्यो**पयोगमाह—नः। **अत्रेति।** एतद्वर्णसमूहसाध्यप्रत्याहारे इत्यर्थः। ऊर्ग् भवतीति तस्माज्जात ऊर्ग्जः॥

( तत्त्वालोकः ) भाष्ये—**संज्ञायामिति**—अत्र सम्बन्धिनो वैषयिकाधिकरणत्वविवक्षया सप्तमी। **भिन्नदेशेषु**—भिन्नस्थानेषु। **जबगडदशामिति**—मिथः सावर्ण्यं प्राप्नोतीति शेषः। **प्रयत्नेति**—अभ्यन्तरप्रयत्नेत्यर्थः। एवमग्रेऽपि। **हि**—यतः।

प्रदीपे—**प्रसङ्गः**—सावर्ण्यप्रसङ्गः। **प्रत्याहारपाठवशात्**—जशामिति प्रत्याहारपाठाभिप्रायात्। **अप्रसङ्गः**—सावर्ण्यस्याप्रसङ्गः।

( १४१ न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं त्वास्ये तुल्यदेशप्रयत्नं सवर्णम् ॥ * ॥

( भाष्यम् )

सिद्धमेतत्।

कथम्?॥

आस्ये येषां तुल्यो देशः प्रयत्नश्च ते सवर्णसंज्ञा भवन्तीति वक्तव्यम्॥

( तत्त्वालोकः ) न्यासान्तरेण उत्तरयति—**सिद्धमिति।** **आस्ये**—मुखे। तथा च स्थानभेदान्न दोष इति भावः।

( आक्षेपभाष्यम् )

एवमपि किमास्योपादाने प्रयोजनम्। सर्वेषां हि तत्तुल्यम्?॥

( प्रदीपः ) **एवमपीति।** आस्ये येषां तुल्यो देश इत्यास्येन देशो विशेष्यते। तत्र व्यभिचाराभावादास्येन देशस्य विशेषणमयुक्तमित्यर्थः॥

( उद्द्योतः ) **आस्ये इति।** देशविशेषणवैयर्थ्याभिप्रायेण प्रश्न इति भावः। न च नासिकाया आस्यानन्तर्गतत्वपक्षे तद्व्यावृत्तये देशविशेषणमावश्यकमिति वाच्यम्। अनुनासिकाकारादौ कण्ठादिषु वाय्वभिघातादभिव्यक्तेषु वर्णेषु नासिकाभिघातेनानुनासिक्यं धर्म उत्पद्यते इत्यनुभवेन **वृद्धिरादै**च्सूत्रस्थाद् **भेदकत्वाद् गुणस्येति वाच्यम्।** [ आनुनासिक्यसङ्ग्रहार्थं ] **तद्यथैकोऽयमात्मे**त्यादि भाष्यकैयटात् तथैव लाभेन च तेषु नासिकाया देशत्वाभावस्य क्लृप्तत्वाज् ञादिष्वपि तथैवेत्यभिमानात्। देशपदेन ताल्वादिस्थानमेवोच्यते इति जबगडादिषु न दोषः॥

( तत्त्वालोकः ) भाष्ये—**एवमपि**—तादृशन्यासेऽपि।

उद्द्योते—**तद्व्यावृत्तये इति**—नासिकास्थानञङादिव्यावृत्तये इत्यर्थः। आस्यमिति शेषः। **अनुनासिकाकारादौ**—अनुनासिकाकारादिविषये। अस्य अनुभवेनेत्यनेनान्वयः। **तेषु**—अनुनासिकाकारादिषु। ननु देशपदेन प्रदेशग्रहणे पूर्वोक्तदोष एवेत्यत आह—**देशेति। एवे**नास्यव्यावृत्तिः। **इति**—इति हेतोः।

( समाधानभाष्यम् )

प्रयत्नविशेषणमास्योपादानम्। सन्ति ह्यास्याद्बाह्याः प्रयत्नाः। ते हापिता भवन्ति। तेषु सत्स्वसत्स्वपि सवर्णसंज्ञा सिद्धा भवति॥

के पुनस्ते?॥

विवारसंवारौ, श्वासनादौ, घोषवदघोषता, अल्पप्राणता, महाप्राणतेति॥

तत्र वर्गाणां प्रथमद्वितीया विवृतकण्ठाः, श्वासानुप्रदाना अघोषाश्च। एकेऽल्पप्राणाः, अपरे महाप्राणाः॥

तृतीयचतुर्थाः संवृतकण्ठा नादानुप्रदाना घोषवन्तः। एकेऽल्पप्राणाः, अपरे महाप्राणाः॥

यथा तृतीयास्तथा पञ्चमा आनुनासिक्यवर्जम्। आनुनासिक्यमेषामधिको गुणः॥

( प्रदीपः ) **प्रयत्नविशेषणमिति॥** तस्य संभवव्यभिचारसद्भावादित्यर्थः। बाह्यप्रयत्नव्युदासाच्चत्वार आभ्यन्तरा गृह्यन्ते। स्पृष्टेषत्स्पृष्टताविवृततासंवृतताख्याः॥

( उद्द्योतः ) भाष्ये—**प्रयत्नविशेषणमिति॥ देशप्रयत्न**मिति द्वन्द्वस्तु सौत्रत्वात्साधुरिति भावः॥ **स्पृष्टतेत्यादि।** आस्यान्तर्गततत्तत्स्थानेषु जिह्वाग्रादीनां वर्णाभिव्यक्तिजनकस्पर्शेषत्स्पर्शदूरावस्थानसमीपावस्थानरूपाभ्यन्तरकार्यकारिप्रयत्नविशेषा एतैः पदैरुच्यन्ते। तेषां चास्यवृत्तित्वमास्यान्तर्गततत्तत्स्थानेषु वायुसंयोगजन-

कत्वेनेति बोध्यम् । **आस्ये** इत्यस्य 'यत्कार्यं, तज्जनक' इति शेषो वा ॥ **भाष्ये ते हापिता इति** । सवर्णसंज्ञा स्वनिमित्तत्वेन बाह्यप्रयत्नाञ्जहातीति तया ते स्वनिमित्तत्वं हापिता इत्यर्थः ॥ **विवारसंवारौ** कण्ठबिलस्य विकाससङ्कोचौ । विवृतः कण्ठो यैः । श्वासोऽनुप्रदीयते यैरित्यर्थः । **नादो** वर्णोत्पत्त्यनन्तरभावी अनुरणनरूपः शब्दः ॥ [ **एके** उक्तवाक्ययोः प्रथमोपात्ताः ] **यथा तृतीया** इत्यनेन तेषामल्पप्राणत्वं बोधितम् । देशविशेषणमप्यास्यग्रहणमावश्यकमिति गूढाशयेनाह—**भाष्ये आनुनासिक्यमेषाम धिको गुण इति** । अयं भावः—अत्र देशपदेन ताल्वादिस्थानमुच्यते । स्थानशब्देन च योगरूढ्या वर्णाभिव्यञ्जकवायुसंयोगानुयोगि ताल्वाद्युच्यते । तत्र यद्यपि अकारादीनां गुणमात्रजनिका नासिका, स्वरूपस्य कण्ठादिभिरेवाभिव्यक्तिसिद्धेः । तथापि यादीनां स्वरूपस्य न केवलताल्वादिना नापि केवलनासिकयाऽभिव्यक्तिरिति विनिगमनाविरहादुभयावच्छिन्नवायुसंयोगस्यैव तज्जनकत्वात्तेषां नासिकापि स्थानम् । न चैवं त्वङ् करोषींयादौ चरितार्थं परसवर्णशास्त्रं संयन्तेत्यादौ न प्रवर्तेत । उक्तरीत्या यादीनां नासिकास्थानत्वाभावेन स्थानत आन्तर्याभावादिति वाच्यम् । **स्थानेऽन्तरतमे** इति सप्तम्यन्तपाठस्य दूषितत्वेनास्या युक्तेर्गर्भस्रावात् ॥ अनुनासिककारादीनामपि सा स्थानमिति त्वयुक्तमेव । एवं हि उत्पादकसामग्रीभेदात्कचयोरिव स्वरूपभेदस्यैवापत्तौ अभेदकगुणपक्षेऽपि निरनुनासिकैः सानुनासिकग्रहणानापत्तिः । एवं च यावत्स्थानसाम्ये सवर्णसंज्ञेति सिद्धान्ते नासिकारूपदेशभेदात्ककारादीनामप्राप्तसावर्ण्यसिद्धये आस्येन देशविशेषणमावश्यकम् । नासिकायां आस्यान्तर्गतत्वेऽपि **मुखनासिके**तिसूत्रे नासिकातिरिक्तावयवकमुखस्यैव ग्रहणेन तत्साहचर्यादत्राप्यास्यपदेन तादृशस्यैव ग्रहणं बोध्यम् । अन्यथाऽत्र स्थाने एतत्कथनवैयर्थ्यापत्तिः । आस्यग्रहणव्यावर्त्यानां सावर्ण्यानुपयुक्तानां प्रदर्शनमेव ह्यत्र प्रक्रान्तम् ॥ न चेदं प्रयत्नविशेषणास्यग्रहणव्यावर्त्यमेवास्तु, अनुनासिकयकारादीनां यादिभिः सावर्ण्यं च व्यावर्त्यम्, तत्फलं च सय्यँन्ता सँय्यँन्ता... तन्नमतीत्यादौ **अनुस्वारस्य ययी**त्यनेन यकारलकारयोरनुनासिकयोरभाव इति वाच्यम् । अनुस्वारस्य नासिकास्थानत्वेन स्थानतोऽन्तरतमयोर्नयोरेव प्रवृत्तेः । अनुनासिकयादीनां तु उक्तरीत्या न नासिका स्थानमित्यदोषात् इदमेव ध्वनयितुं **गुण** इत्युक्तम् । **गुण**पदेन च सावर्ण्यानुपयोगिन आन्तरतम्यपरीक्षोपयोगिनो विवारादय उच्यन्ते । एवंच तत्सादृश्यादत्रापि गुणशब्दप्रयोगः । अत एव बाह्यप्रयत्नानुपक्रम्याऽ**मोनुनासिका न ह्रावि**ति शिक्षायामुक्तम् । अत ए**वोदात्तादिभिः सहैकादश बाह्यप्रयत्ना** इति कैयटो वक्ष्यति । उदात्तादीनामपि वृद्धिसंज्ञासूत्रशेषे गुणत्वेन व्यवहारात् । अत एव **'एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति । बाह्यं ह्यास्यात्स्थानमवर्णस्य' 'एवमपि व्यपदेशो न प्रकल्पते आस्ये येषां तुल्यो देशः'** इति भाष्यं स्वरसतः सङ्गच्छते । अन्यथा प्रयत्नविशेषणमात्रस्योक्तेर्देशविशेषणत्वाभावेन तदसङ्गतिः स्पष्टैव । आस्येन देशविशेषणाभावान्न दोष इत्येव वक्तव्ये **सर्वमुखे**त्यादिसमाधानस्यापि निर्दलत्वापत्तिश्च ॥ **एके** इत्यनेन सर्वमतं तु कण्ठस्थानमिति ध्वनयति ॥

**( तत्त्वालोकः )** भाष्ये—तत्र संभवस्य स्पष्टतया व्यभिचारमाह—**सन्तीति** । **हि**—यतः । तथा विशेषणफलमाह—**हापिता इति** । **घोषवदघोषता**—घोषवत्ता, अघोषता । **इति**ना उदात्तादिसप्तानां संग्रहः । यद्यपि घोषाघोषाल्पप्राणमहाप्राणेति प्रयत्नचतुष्टयेनैव प्रक्रिया निर्वहति, तथापि शिक्षानुरोधेनेतरेषामुक्तिः । **अपरे**—द्वितीयाः । **अपरे**—चतुर्थाः । **एषां**—पञ्चमानाम् ।

प्रदीपे—**तस्य**—तत्र ।

उद्द्योते—नन्वेवं न्यासान्तरस्य तुल्यस्थानम् आस्ये तुल्यप्रयत्नञ्च सवर्णमित्यर्थसम्भवात् कथन्तत्र द्वन्द्व इत्यत आह—**देशेति** । नन्वेतेषामाभ्यन्तरत्वं स्पृष्टत्वादि च कथमित्यत आह—**आस्येति** । **एतैः**—स्पृष्टतादिभिः । तेषां मुख्यस्य आस्यवृत्तित्वस्याभावादाह—**तेषां चेति** । अत्र पक्षे आस्ये इत्यस्य व्यस्तत्वेन तदसम्भवादाह—**आस्ये इति** । **तया**—सवर्णसंज्ञया । **ते**—बाह्यप्रयत्नाः । **विवृत इति**—विवाराख्यबाह्यप्रयत्नयोगादिति भावः । **अनु प्रदीयते**—वर्णनिष्पत्तेरनु पश्चात् प्रदीयते । **अनुरणनरूपः**—घण्टानिर्ह्रादादिषु स्पष्टमुपलभ्यमानसदृशः । **प्रथमोपात्ताः**—प्रथमास्तृतीयाश्च । **तेषां**—पञ्चमानाम् । **अपिना** प्रयत्नविशेषणसमुच्चयः । **अत्र**—तादृशन्यासे । **तत्र**—अनुनासिकानां मध्ये । **मात्र**पदेन स्वरूपव्यावृत्तिः । यादीनां गुणविभक्तस्वरूपानुपलम्भादाह—**तथापीति** । **तेषां**—यादीनाम् । **अपिना** कण्ठादिसमुच्चयः । चोक्तं निराचष्टे—**अनुनासिकेति** । **अपिना**—यादिसंग्रहः । **सा**—नासिका । **उत्पादकेति**—एकस्थान, स्थानद्वयरूपेत्यादिः । **स्वरूपेति**—सानुनासिकनिरनुनासिकयोरित्यादिः । **अपिना** भेदपक्षसंग्रहः । प्रकृतमाह—**एवं चेति** । यादीनामुभयस्थानकत्वे चेत्यर्थः । नन्वेवमपि नासिकाया आस्यान्तर्गतत्वात् कथमिष्टसिद्धिरित्यत आह—**नासिकाया इति** । अपिना आस्यानन्तर्गतत्वसंग्रहः । **ग्रहणेनेति**—मुखपदेनेत्यादिः । **अन्यथा**—तस्य देशविशेषणत्वानावश्यकत्वे । **अत्र स्थाने**—बाह्यप्रयत्नकथनावसरे । **एतत्**—आनुनासिक्यमेषामिति । **हि**—यतः । **इदम्**—आनुनासिक्यम् । **एवेन** देशविशेषणव्यावृत्तिः । **तत्फलं**—तेषां तैः सावर्ण्याभावफलम् । **उक्तरीत्या**—नासिकायास्तत्र गुणजनकतेत्युक्तरीत्या । ननु आनुनासिक्ये न लोकप्रसिद्धगुणत्वमित्यत आह—**गुणपदेनेति** । **एवञ्च**—विवादीनां गुणत्वे च । **अत्रापि**—आनुनासिक्येऽपि । **अत एव**—तस्य तथा गुणत्वादेव । **तदसङ्गतिः**—तादृशभाष्यासङ्गतिः । **अपिना** व्यपदेशिवदितिसमाधानसंग्रहः । **एके इत्यनेन**—भाष्यकैयटोभयस्थेन ।

**( आक्षेपभाष्यम् )**

**एवमप्यवर्णस्य सवर्णसंज्ञा न प्राप्नोति, बाह्यं ह्यास्यात्स्थानमवर्णस्य ॥**

**( प्रदीपः ) बाह्यं ह्यास्यादिति** । काकलकस्याधस्तादुपजत्रुस्थानमवर्णस्यैक इच्छन्ति । सति च बाह्यदेशसंभवे तद्व्यवच्छेदायास्येन देशो विशेष्यत इति प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**एवमपि**—बाह्यप्रयत्नवारणाय आस्यस्य प्रयत्नविशेषणत्वेऽपि । **अवर्णस्येति**—अष्टादशभेदभिन्नस्यावर्णस्येत्यर्थः । मिथ इति शेषः । **हि**—यतः ।

**( समाधानभाष्यम् )**

**सर्वमुखस्थानमवर्णम् एक इच्छन्ति ॥**

**( प्रदीपः ) सर्वमुखेति** । अवर्णनिष्पत्तौ सर्वमेव मुखं व्याप्रियत इति नास्य बाह्यस्थानता ॥

**( तत्त्वालोकः )** भाष्ये—मतान्तरेणोत्तरयति—**सर्वमुखेति** । अत्र बहुव्रीहिः ।

प्रदीपे—**इति**—इति हेतोः । **अस्य**—अवर्णस्य ।

**( आक्षेपभाष्यम् )**

**एवमपि व्यपदेशो न प्रकल्पते—'आस्ये येषां तुल्यो देशः' इति ॥**

**( प्रदीपः ) एवमपीति ।** अवर्णस्यास्यमेव देशो न त्वास्ये देशः ॥

**( तत्त्वालोकः )** भाष्ये—**एवमपि**—अवर्णस्य सर्वमुखस्थानकत्वेऽपि । **व्यपदेशः**—भेदेन व्यवहारः । अभेदे आधाराधेयभावस्यानुपपत्तेरिति भावः ।

**( समाधानभाष्यम् )**

**व्यपदेशिवद्भावेन व्यपदेशो भविष्यति ॥**

**( प्रदीपः ) व्यपदेशिवद्भावेनेति ।** सर्वावस्थायुक्तमास्यमास्यशब्देनोच्यते, देशशब्देन तु विशिष्टैवावस्था वर्णोत्पादनहेतुः । तत्र बुद्धिकृतभेदाश्रयेण व्यपदेशः ।

**( तत्त्वालोकः )** भाष्ये—**व्यपदेशिवद्भावेनेति**—"व्यपदेशिवदेकस्मिन्नि" ति परिभाषयेत्यादिः ।

प्रदीपे—**सर्वावस्थेति**—आरोपितेत्यादिः । **हेतुरिति**—उच्यते इत्यनुषज्यते ।

**( आक्षेपभाष्यम् )**

**सिध्यति । सूत्रं तर्हि भिद्यते ॥**

**( तत्त्वालोकः )** एवं न्यासान्तरे अन्यदोषे वारिते पूर्वपक्षी आह—**सिध्यतीति** । यद्यपि न्यासान्तरेणेत्यादिः । **तर्हि**—तथापि । तत्र सूत्रभेदरूपो दोषो वर्त्तते एवेति भावः ।

**( सिद्धान्तिसमाधानभाष्यम् )**

**यथान्यासमेवास्तु ॥**

**( तत्त्वालोकः )** सिद्धान्ती उत्तरयति—**यथान्यासमिति ।** तर्हीत्यादिः ।

**( आक्षेपभाष्यम्**

**ननु चोक्तम् ❀ सवर्णसंज्ञायां भिन्नदेशेष्वतिप्रसङ्गः प्रयत्नसामान्याद् ❀ इति ॥**

**( तत्त्वालोकः )** तत्र दत्तं दोषं स्मारयति—**ननु चेति ।**

**( सिद्धान्तिसमाधानभाष्यम् )**

**नैष दोषः ॥ न हि लौकिकमास्यम् ॥**

**किं तर्हि ? ।**

**तद्धितान्तमास्यम् । आस्ये भवमास्यम् । "शरीरावयवाद्यत्" ॥**

**किं पुनरास्ये भवम् ? ॥**

**स्थानं करणं च ॥**

**( प्रदीपः ) नहीति ।** प्राथमकल्पिकमित्यर्थः । यौगिकस्य तु व्यवहितस्य ग्रहणम् ॥ **स्थानमिति ।** ताल्वादि ॥ **करणमिति ।** स्पृष्टतादि, जिह्वाया अग्रोपाग्रमध्यमूलानि वा ॥ यद्येवं प्रयत्नग्रहणं न कर्तव्यं तस्याप्यास्ये भवत्वाद् आस्यग्रहणेन ग्रहणात् ॥ सत्यमेतत्, प्रत्येकं तु व्यापारनिरासार्थमुभयोरुपादानम्, तेन द्वयोस्तुल्यत्वे सवर्णसंज्ञा भवति ॥

**( उद्द्योतः ) व्यवहितस्येति ।** यद्यपि रूढिर्योगापहारिणी, तथाप्यास्यपदोपादानसामर्थ्याद्व्यवहितस्यापि ग्रहणमिति भावः ॥ **ताल्वादीति ।** शिक्षायां तेन रूपेणैव वर्णस्थानत्वकथनादिति भावः । एतेन ताल्वादिषूर्ध्वाधरभागभेदादुदात्तादीनां सवर्णसंज्ञा न प्राप्नोति इत्यपास्तम् । आस्यभवशब्देन तद्रूपावच्छिन्नस्यैव ग्रहणेनादोषात् ॥ ननु प्रयत्नपदेनैव तद्ग्रहणसिद्धिरत आह—**जिह्वाया अग्रेत्यादि ॥ प्रत्येकं त्विति ।** प्रत्येकनिरूपितसादृश्यग्रहणनिरासार्थमित्यर्थः । यद्यपि ज्ञापकेनापि प्रत्येकव्यापारनिरासः सुकरः, तथापि यावदास्यभवैक्यविवक्षायां ह्रस्वदीर्घयोः सावर्ण्यानापत्तिः ॥ तत्तज्जनकवायुसंयोगानामतुल्यत्वात् । अतः प्रयत्नपदमास्यपदेन स्थानमात्रग्रहणार्थम् । **स्थानं करणं चेति** भाष्ये करणपदेन वायुसंयोगोऽपि । प्रयत्नग्रहणाच्च नातिप्रसङ्ग इति तात्पर्यम् । अत एव यावत्स्थानैक्यपरेण **'नैतौ तुल्यस्थानाविति'** भाष्येण न विरोध इति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—तं समाधत्ते—**नैष इति । हि**—यतः ।

प्रदीपे—**प्राथमकल्पिकं**-प्राथमिकप्रतीतिविषयः । **ताल्वादीति**-अत्र—तालुन आदिस्ताल्वादिः ( कण्ठः ), तालु आदिर्येषां तानि ताल्वादीनि । ताल्वादिश्च ताल्वादीनि च ताल्वादि, "नपुंसकमनपुंसकेने" त्येकशेषः । तेन कण्ठसंग्रहः । **एवमिति**—तर्हीति शेषः । **तस्यापि**—प्रयत्नस्यापि । **तुल्यत्वे इति**—एवेति शेषः ।

उद्द्योते—**तेन**—तालुत्वादिना । एतेनेत्यस्यार्थमाह—**आस्येति। तदिति**—तालुत्वादीत्यर्थः । **तदिति**—स्पृष्टतादीत्यर्थः । कैयटोक्तं खण्डयति—**यद्यपीति । ज्ञापकेन**—"यञु येकेषामि" ति ज्ञापकेन । **अपिना**-युक्त्यन्तरसंग्रहः । **अपिना** जिह्वाग्रादिसमुच्चयः । **अत एव**-आस्यपदेन स्थानमात्रग्रहणादेव । न च प्रकृतभाष्येण विरोधः, तस्य सकलास्यभवप्रदर्शनमात्रपरतया सर्वास्यभवग्रहणपरत्वाभावात् ॥

**( आक्षेपभाष्यम् )**

**एवमपि प्रयत्नोऽविशेषितो भवति ॥**

**( प्रदीपः ) अविशेषित इति ।** आस्येनेत्यर्थः । द्वन्द्वपक्ष एवात्र स्थित इति प्रश्नः । ततश्च बाह्याः प्रयत्ना न त्यक्ताः स्युः ॥

**( तत्त्वालोकः )** भाष्ये-**एवमपि**-तद्धितान्तास्यशब्दाश्रयणेऽपि ।

प्रदीपे—**द्वन्द्वपक्षः**—द्वन्द्वगर्भबहुव्रीहिपक्षः । **इति**-इति हेतोः । **ततः**—आस्येन प्रयत्नेऽविशेषिते । तथा च शादिभिश्छादीनां सावर्ण्यमापद्येतेति भावः ।

**( समाधानभाष्यम् )**

**प्रयत्नश्च विशेषितः ॥**

**कथम् ? ॥**

**न हि प्रयतनं प्रयत्नः ॥**

**किं तर्हि ॥**

**प्रारम्भो यत्नस्य प्रयत्नः ॥**

**( प्रदीपः ) प्रारम्भो यत्नस्येति ।** तत्र पूर्वं स्पृष्टतादयश्चत्वारः पश्चान्मूर्ध्नि प्रतिहते निवृत्ते प्राणाख्ये वायौ विकारादयो बाह्या एकादश प्रयत्ना उत्पद्यन्ते ॥

**( उद्द्योतः )** भाष्ये **प्रारम्भो यत्नस्येति ।** अत्र यत्नस्येति निर्धारणे षष्ठी । जातौ चैकवचनम् । **आरम्भ इति** कर्मणि घञ् । यत्नानां मध्ये प्रथमं वर्णोत्पत्तेः पूर्वमारभ्यमाण इत्यर्थः ॥ अत्रापि नासिकाया अग्रहणं पपारितरीत्यैवेति बोध्यम् । अत्रेदं बोध्यम्—शब्दप्रयोगेच्छयोत्पन्नयत्नान्नाभिप्रदेशात्प्रेरितो वायुर्वेगान्मूर्धपर्यन्तं गत्वा ततः प्रतिनिवृत्तो यत्नविशेषसहायेन तत्तत्स्थानेषु जिह्वाग्रादिस्पर्शपूर्वकं तत्तत्स्थानान्याहत्य वर्णानभिव्यनक्ति । ततो यत्नविशेषसहायेन परावृत्तिसमये गलविवरादीनां विकासादीन्करोति । तत्र ये तत्तत्स्थानाभि-

घातका यत्नास्ते आस्यान्तर्गततत्तत्कार्यकारित्वाद् **'आस्ये प्रयत्नाः'** इत्युच्यन्ते—, **'आभ्यन्तरा'** इति **'प्रारम्भ'** इति च। गलबिलादिविकासादिकराश्चास्यबहिर्भूतदेशे कार्यकरत्वाद्बाह्या इति ।। एवं मात्राकालिकत्वादिकमपि वायवयत्नमहत्त्वकृतमिति नाभिप्रदेशात्प्रेरकयत्न एव कश्चिद्विलक्षणोऽल्पं वायुं प्रेरयति कश्चिदधिकमिति तस्य यत्नस्य वायुप्रेरणारूपं कार्यमास्यबाह्यदेशमिति तस्यापि व्यावृत्तिरास्यपदेनोक्ताऽइउण्सूत्रे भाष्ये ।। मूर्ध्नि प्रतिहते वर्णोत्पत्तेः पूर्वं स्पृष्टतादयः, पश्चान्निवृत्ते प्राणाख्ये इत्यन्वयः कैयटे। अत एव—

**"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।**

**"वर्णाञ्जनयते"**

इति शिक्षया न विरोध इति दिक् ।।

**( तत्त्वालोकः )** भाष्ये—**प्रयत्नश्च**—प्रयत्नोऽपि। प्रशब्देनेति भावः। **हि**—यतः।

प्रदीपे—**तत्र**—वर्णाभिव्यक्तिविषये। विवृतत्वव्याप्यानामीषद्विवृतत्वविवृततरत्वविवृततमत्वानां "नाज्झलावि'ति सूत्रेण सवर्णसंज्ञानुपयुक्तत्वबोधनादाह—**चत्वार इति**। न चैवमैचौरोदौतोश्च मिथः सावर्ण्यापत्तिः, तथा सति गुणवृद्धिसंज्ञादिसूत्रे प्रत्याहारद्वयग्रहण वैयर्थ्यापातात्। भाष्यकारमते तु सप्त प्रयत्नाः। विचारोऽयं पूर्वत्राप्यवधेयः।

उद्द्योते—**घञिति**—"अकर्त्तरि च कारके" इत्यनेनेत्यादिः। प्रपदार्थमाह—**प्रथममिति**। आरम्भपदार्थमाह—**आरम्भेति**। **अत्रापि**—तद्धितान्तास्यशब्दग्रहणेऽपि। **यत्नादिति**—तदिच्छावन्मनोऽभिहतकायाग्निनेति शेषः। **प्रतिनिवृत्त इति**—वक्त्रं प्राप्येति शेषः। **तत्र**—तयोर्मध्ये। **उच्यन्ते इति**—अस्याग्रिमयोरपि सम्बन्धः। **तस्यापीति**—ह्रस्वत्वादिजनकयत्नस्यापीत्यर्थः। तदपि बाह्यमित्यादिः। अत्र सूत्रे इति शेषः। **अत एव**—एवमन्वयादेव।

( आक्षेपभाष्यम् )

**यदि प्रारम्भो यत्नस्य प्रयत्नः, एवमप्यवर्णस्य एङोश्च सवर्णसंज्ञा प्राप्नोति ।।**

**( प्रदीपः ) एवमपीति**। संध्यक्षरेषु प्रथमभागस्याकारेण सादृश्यात्सवर्णसंज्ञाप्राप्तिरिति प्रश्नः ।।

**( उद्द्योतः )** भाष्ये **यदि प्रारम्भ** इत्यत्र यदीत्यस्य यद्यपीत्यर्थः ।। **अकारेणेति**। ततश्च स्वसवर्णाकारस्य तत्र सत्त्वेन तद्द्वारा तुल्यस्थानत्वेनावर्णैङोः सावर्ण्ये गव्यमित्यत्र **यस्येति** लोपप्रसङ्ग इत्यभिमानः ।।

**( तत्त्वालोकः )** भाष्ये—**एवमपि**—तथापि। **एङोश्चेति**—परस्परमिति शेषः।

( समाधानभाष्यम् )

**प्रश्लिष्टावर्णावेतौ ।।**

**( प्रदीपः ) प्रश्लिष्टावर्णाविति**। नात्र भागविवेकोऽस्ति पांसूदकवदित्यर्थः ।।

**( उद्द्योतः ) पांसूदकेति**। **प्रश्लिष्टावि**त्यस्य प्रकर्षेण श्लिष्टौ मिलितावित्यर्थः। सतश्च तदननुभवेन केवलताल्वादिस्थानकत्वेन च न तयोः सावर्ण्यप्राप्तिरिति भावः ।।

**( तत्त्वालोकः )** भाष्ये—**एतौ**—एङौ।

उद्द्योते—**तयोः**—अवर्णस्य एङोश्च। अस्य मिथ इति शेषः।

( आक्षेपभाष्यम् )

**अवर्णस्य तर्हि ऐचोश्च सवर्णसंज्ञा प्राप्नोति ।।—**

**( प्रदीपः ) अवर्णस्येति**। विभागोत्र सुज्ञस्य इति प्रश्नः।। ततश्च नाव्यमित्यत्र **यस्येति** लोपप्रसङ्गः ।।

**( उद्द्योतः ) विभागोत्रेति**। एवं च पूर्ववत्तयोः सावर्ण्यं प्राप्नोत्येवेत्यर्थः ।।

**( तत्त्वालोकः )** उद्द्योते-**तयोरिति**। अवर्णस्य ऐचोश्चेत्यर्थः। परस्परमिति शेषः।

( समाधानभाष्यम् )

**विवृततरावर्णावेतौ ।।**

**( उद्द्योतः )** भाष्ये एतदुत्तरं **विवृततरावर्णाविति**। एवं च तद्द्वारा तयोरपि विवृततरत्वेन प्रयत्नभेदाध्यवसेन न सावर्ण्यम्। आकारस्य ततोऽपि विवृततरत्वात्तेनाप्यनयोर्न सावर्ण्यं फलाभावश्चेति भावः ।।

**( तत्त्वालोकः )** भाष्ये—**एतौ**—ऐचौ।

उद्द्योते—**तद्द्वारा**—विवृततरावर्णद्वारा। **तयोः**—ऐचोः। **ततोऽपि**—ऐचोऽपि। **तेनाऽपि**—आकारेणापि। **अनयोः**—ऐचोः।

( आक्षेपभाष्यम् )

**एतयोरेव तर्हि मिथः सवर्णसंज्ञा प्राप्नोति ।।**

**( प्रदीपः ) एतयोरिति**। ततश्च **एत ऐ** इत्यौकारोपि स्याद् भाष्यमानेनापि क्वचित्सवर्णग्रहणदर्शनात् ।।

**( उद्द्योतः ) एतयोरेवेति**। यत्किंचित्स्थानसाम्ये सवर्णसंज्ञेत्यभिमानः ।। क्वचित्। **अदसोऽसेर्दादु दो म** इत्यादौ ।।

**( तत्त्वालोकः )** भाष्ये—**एतयोः**—एङैचोः। **एवेनावर्णव्यावृत्तिः**।

उद्द्योते—**यत्किञ्चित्स्थानेति**—कण्ठस्थानेत्यर्थः। आभ्यन्तरप्रयत्नसाम्ये सतीत्यादिः।

( समाधानभाष्यम् )

**नैतौ तुल्यस्थानौ ।।**

**( उद्द्योतः )** भाष्ये **नैतौ तुल्यस्थानाविति**। **तोर्लीति** परसवर्णरहित**तद्वानासा**मितिनिर्देशाद् यावत्स्थानसाम्यमत्र विवक्षितमिति भावः ।। यत्त्वेषां समुदितं स्थानमिति। तन्न। **"दन्त्योष्ठ्यो वः स्मृतो बुधैः ।। ए ऐ तु कण्ठ्यतालव्यौ"** इति शिक्षायां प्रत्येकं **तत्र भव** इत्यधिकारस्थयदनापत्तेः। **दन्त्योष्ठ्य** इति पाठस्त्वसङ्गतः। शरीरावयवसमुदायस्य शरीरावयवत्वाभावात्। स्वाङ्गसमुदायस्य स्वाङ्गत्वाभाववत्। स्वजनकवायुसंयोगावच्छेदके कण्ठादौ स्वाधारत्वमारोप्य कण्ठे भव इत्याद्युपपत्तिः ।। शरीरे मे वेदनेत्यप्येवमेवेति दिक् ।।

**( तत्त्वालोकः )** भाष्ये—**एतौ**—एङैचौ।

( आक्षेपभाष्यम् )

**उदात्तादीनां तर्हि सवर्णसंज्ञा न प्राप्नोति ।।**

**( उद्द्योतः )** भाष्ये **उदात्तादीनां तर्हीति**। **यावत्स्थानैक्य**वद् यावत्प्रयत्नैक्यविवक्षणादिति भावः ।।

( तत्त्वालोकः ) भाष्ये—**उदात्तादीनामिति**—अत्र आदिना—अनुदात्तस्वरितह्रस्वदीर्घप्लुतचतुर्मात्रानुनासिकसंग्रहः। **सवर्णसंज्ञेति**—यावदाभ्यन्तरप्रयत्नसाम्याभावात् परस्परमित्यादिः।

उद्द्योते—**प्रयत्नेति**—आभ्यन्तरप्रयत्नेत्यर्थः।

( समाधानभाष्यम् )

**अभेदका उदात्तादयः ॥**

( प्रदीपः ) **अभेदका इति**। लिङ्गेनैतत्प्रतिपादितम्—**न शास्त्र एते स्वशब्दोपादानमन्तरेण कार्येषु भिद्यन्त** इति, तेन प्रारम्भभेदेऽप्युदात्तादीनां मिथः सवर्णसंज्ञा भविष्यति ॥

( उद्द्योतः ) **स्वशब्दा** उदात्तादिशब्दाः। एवं चात्र प्रयत्नशब्देनोदात्तादीनां न ग्रहणमिति भावः ॥

( तत्त्वालोकः ) प्रदीपे—**लिङ्गेन**—"अनङुदात्त" इत्यादिज्ञापकेन। **प्रारम्भभेदेऽपि**—आभ्यन्तरप्रयत्नभेदेऽपि।

( एकदेशिभाष्यम् )

**अथवा किं न एतेन-प्रारम्भो यत्नस्य प्रयत्न इति ॥ प्रयतनमेव प्रयत्नः। तदेव च तद्धितान्तमास्यम्। यत्समानं तदाश्रयिष्यामः ॥**

**किं सति भेदे ॥**

**सतीत्याह। सत्येव हि भेदे सवर्णसंज्ञया भवितव्यम्।**

**कुत एतत् ? ॥**

**भेदाधिष्ठाना हि सवर्णसंज्ञा, यदि हि यत्र सर्वं समानं तत्र स्यात्सवर्णसंज्ञावचनमनर्थकं स्यात् ॥**

( प्रदीपः ) **यत्समानमिति**। स्पृष्टत्वस्य समानत्वाद्वर्ग्याणां बाह्यप्रयत्नभेदेऽपि सवर्णसंज्ञा भविष्यति ॥ **किं सतीति**। स्पृष्टताद्यभेदाद्विवारादिभेदेऽपि यथा भवति तथा स्पृष्टतादिभेदेऽपि विवाराद्यभेदात्प्राप्नोतीति प्रश्नः ॥ **सत्येवेति झरो झरीत्येवा**न्यथा ब्रूयात्। **यथासंख्यनिरासार्थं** हि तत्र सवर्णग्रहणं कृतं शिण्ढीत्यत्र ढकारस्य ढकारे परतो लोपार्थम्। यदि च यत्र सर्वं समानं तत्रैव सवर्णसंज्ञा स्याद्, ढकारढकारयोर्भेदात्सवर्णत्वं नास्तीति सवर्णग्रहणमनर्थकं स्यात् ॥

( उद्द्योतः ) भाष्ये **उदात्तादीनां सवर्णसंज्ञा न प्राप्नोतीत्यस्य आस्येन प्रयत्नोऽविशेषित** इत्यस्य च समाध्यन्तरमाहैकदेशी—**अथवा किं न एतेनेति**। नोऽस्माकमेतेन प्रारम्भो यत्नस्येत्यर्थकप्रयत्नशब्दाश्रयणेन किमित्यर्थः। क्लिष्टत्वादिति भावः ॥ **बाह्यप्रयत्नभेदेऽपीति**। एवमुदात्तादिभेदेऽपि भविष्यतीत्यपि बोध्यम् ॥ यद्यपि सवर्णसंज्ञाया न प्रयत्नभेदगर्भत्वं, तथापि ज्ञापकादेतदर्थसिद्धिरित्याह—**झरोझरीति** ॥ भाष्ये **सत्येव हि भेदे इति** यत्किंचित्प्रयत्नभेदे सत्येवेत्यर्थः ॥ **कुत एतदिति**। सूत्राक्षरैस्तदलाभ इति प्रश्नः। समाधत्ते—**भेदाधिष्ठाना हीति**। यत्किंचित्प्रयत्नभेदेत्यर्थः ॥ तत्र ज्ञापकमाह—**यदि हीति**। **सवर्णसंज्ञावचन**मित्यस्य सवर्णग्रहोच्चारणमित्यर्थः। संज्ञा तु—**अणुदित्सवर्णस्ये**त्याद्यर्थमावश्यिकेति बोध्यम् ॥ **भेदादिति**। बाह्यप्रयत्नभेदादित्यर्थः ॥ नन्वेवं यत्किंचित्स्थानैक्यादेकारौकारयोः सावर्ण्यापत्तिरिति चेन्न। ज्ञापकात्प्रयत्नांशे यावत्प्रयत्नसमानत्वत्यागेऽपि स्थानांशे तत्त्यागे मानाभाव इत्याशयात्, **यजुष्येकेषा**मित्यादिनिर्देशैः स्थानांशे यावत्स्थानतुल्यत्वविवक्षणाच्च ॥ यत्तु तुल्यत्वस्य भेदघटितत्वात्सवर्णसंज्ञा भेदाधिष्ठानेत्यर्थ इति। तन्न। तेन सावर्ण्यनियामकप्रयत्नयोः स्थानयोश्च परस्परभेदलाभेऽपि वर्णानां यत्किंचित्प्रयत्नभेदस्य ततोऽलाभात् स्थानानामन्ततस्तत्तत्कालरूपोपाधिभेदेन भेदो बोध्यः ॥

( तत्त्वालोकः ) भाष्ये—**किं सतीति**—अत्र केचित्तु "किं ( कस्मिन् ) सती"ति प्रश्ने "भेदे सतीत्याह" त्युत्तरं कल्पयन्ति। अपरे तु "किं सति भेदे ( उतासति )" इति प्रश्ने "सतीत्याहे"ति समाधानं कथयन्ति। **हि**—यतः। एवमग्रेऽपि। **समानमिति**—अस्य प्रथमेन स्यादित्यनेनान्वयः।

उद्द्योते—**नन्वेवं**—यत्किञ्चित्प्रयत्नैक्यात् सावर्ण्याभ्युपगमे। दण्ड्याद्युक्तिं खण्डयति—**यत्त्विति**।

( सिद्धान्तिन आक्षेपभाष्यम् )

**यदि तर्हि 'सति भेदे किंचित्समानम्' इति कृत्वा सवर्णसंज्ञा भविष्यति। शकारच्छकारयोः षकारठकारयोः सकारथकारयोः सवर्णसंज्ञा प्राप्नोति। एतेषां हि सर्वमन्यत्समानं करणवर्जम् ॥**

( प्रदीपः ) **सर्वमिति ॥ वर्गाणां प्रथमद्वितीया इ**त्यस्यां शिक्षायां पठितमघोषत्वादि। करणं तु भिन्नं वर्ग्याणां स्पृष्टत्वादूष्मणां च विवृतत्वात्। सति च सवर्णत्वे निश्छत्र निष्ठुरं निस्स्थानं मधुलिट्स्थानमित्यत्र **झरोझरीति,** लोपः प्राप्नोतीति। छत्रान्निष्क्रान्तमिति प्रादिसमासः। **अनचि** चेति शकारस्य द्विर्वचनम् ॥

( उद्द्योतः ) भाष्ये **यदि तर्हि सतिभेदे** इत्यादि सिद्धान्तिवचः। **शकारच्छकारयोरिति**। तस्मात्प्रारम्भो यत्नस्येति आवश्यकमिति भावः ॥ ननु निश्छत्रेत्यत्र हलः परत्वाभावात्कथं लोपप्राप्तिरत आह—**अनचि चेति** ॥

( तत्त्वालोकः ) भाष्ये—**तर्हीति**—अस्याग्रेऽन्वयः। **हि**—यतः। प्रदीपे—**निष्क्रान्तमिति**—निष्क्रान्तमित्यत्र।

( एकदेशिसमाधानभाष्यम् )

**एवं तर्हि—प्रयतनमेव प्रयत्नः। तदेव हि तद्धितान्तमास्यम्। न त्वयं द्वन्द्वः-आस्यं च प्रयत्नश्च आस्यप्रयत्नमिति।**

**किं तर्हि ?**

**त्रिपदोयं बहुव्रीहिः—तुल्य आस्ये प्रयत्न एषामिति।**

( प्रदीपः ) **तुल्य आस्य इति**। तद्धितान्त आस्यशब्दो न स्वाङ्गवाच्येवेत्य**मूर्द्धमस्तका**दित्यलुङ् न भवति। तद्धितान्तास्यशब्दाश्रयणसामर्थ्यादेवास्य इत्येकत्वं विवक्ष्यते। तेनैकस्मिन्नेव स्थाने ययोस्तुल्यः प्रयत्न इत्याश्रीयते ॥

( उद्द्योतः ) तत्रैकदेशी प्रौढ्या समाधानमाह—**एवं तर्हीत्यादि**। **स्वाङ्गवाच्येवेति**। **अमूर्ध**त्यादिपर्युदासादेव स्वाङ्गे लब्धे स्वाङ्गादिति पुनः श्रुतिरवधारणार्थेति भावः ॥ **संज्ञाय**मित्यनुवृत्तेर्न दोष इत्यन्ये ॥ नन्वेवं भिन्नस्थानानामपि स्यादत आह—**तद्धितान्तास्येति**। आस्यपदोपादानसामर्थ्याच्च तद्ग्रह इति भावः ॥ **एकत्वं विवक्ष्यत**

इति । तद्विवक्षां विनापि प्रत्यासत्त्या प्रयत्नयोरेकास्यभवत्वृत्तित्वलाभ इत्यन्ये ॥

**( तत्त्वालोकः )** उद्द्योते—**तत्र**—उक्तपूर्वपक्षे । **संज्ञायामिति**—हलदन्तात्सप्तम्याः संज्ञायामिति सूत्रादित्यादिः । **एवं**—तुल्यत्वस्य स्थानविशेषणत्वानङ्गीकारे । **तद्ग्रहः**—तत्र तद्धितान्तत्वग्रहः ।

**( भाष्यम् )**

**अथवा पूर्वस्तत्पुरुषस्ततो बहुव्रीहिः-तुल्य आस्ये तुल्यास्यस्तुल्यास्यः प्रयत्न एषामिति ॥**

**( प्रदीपः ) अथवेति । मयूरव्यंसका**दित्वात्सप्तम्यन्तोत्तरपदस्तत्पुरुषः ॥

**( भाष्यम् )**

**अथवा परस्तत्पुरुषस्ततो बहुव्रीहिः—आस्ये प्रयत्न आस्यप्रयत्नः तुल्य आस्यप्रयत्न एषामिति ॥**

**( उद्द्योतः )** त्रिपदबहुव्रीहौ सप्तम्यन्तस्य पूर्वनिपातापत्तेः पूर्वपदार्थप्रधानतत्पुरुषस्याप्यगतिकगतित्वाद्भाष्ये तृतीय आश्रितः ॥

**( तत्त्वालोकः )** उद्द्योते—एकदेशिना उदात्तादीनां मिथः सवर्णसंज्ञोपपत्तये क्रमशः त्रयः पक्षाः समुपस्थापिताः । तेषां मध्ये—"एवं तर्हि" इत्यादिना आश्रिते प्रथमपक्षेऽरुचिमाह—**त्रिपदेति ।** एवम् "अथवा पूर्व" इत्यादिना आश्रिते द्वितीयपक्षेऽरुचिमाह—**पूर्वपदार्थेति ।** मयूरव्यंसकादित्वाद्विहितेत्यादिः । **तृतीयः**—"अथवा पर" इत्यादिना तृतीयपक्षः । वस्तुतस्तु तृतीयकल्पेऽपि स्थाने तुल्यत्वलाभाय आस्यपदोपादानसामर्थ्यकल्पनायां गौरवात्तस्याप्ययुक्ततैवेत्यवधेयम् ।

( इति तुल्यास्यप्रयत्नशब्दार्थनिरूपणम् ॥ )

---

**( अथानिष्टसावर्ण्यनिराकरणाधिकरणम् )**

**( १४२ आक्षेपवार्तिकम् ॥ ३ ॥ )**

## ॥ ❋ ॥ तस्य ॥ ❋ ॥

**( भाष्यम् )**

**तस्येति तु वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**यो यस्य तुल्यास्यप्रयत्नः स तस्य सवर्णसंज्ञो यथा स्याद् । अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञो मा भूत् ।**

**( प्रदीपः ) तस्येति ।** यत्तदोर्नित्याभिसंबन्धादाह-**यो यस्येति ।** अन्यथा वर्णान्तरापेक्षया तुल्यास्यप्रयत्नत्वेन सवर्णत्वे लब्धे तदाश्रयमन्यस्यापि कार्यं प्राप्नोति । सूत्रारम्भस्तु रेफोष्मणां निवृत्त्यर्थः स्यात् ॥

**( उद्द्योतः ) रेफोष्मेति । रेफोष्मणां सवर्णा न सन्ती**त्युक्तेरिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**अन्यथा**—तस्येत्यस्याभावे । **तदाश्रयं**—सवर्णत्वाश्रयम् । **अन्यस्यापीति**—वर्णस्येति शेषः । अपिना स्वस्य वर्णस्य संग्रहः । ननु सूत्रारम्भसामर्थ्यात्तथा न स्यादित्यत आह—**सूत्रारम्भ इति ।**

**( १४३ समाधानवार्तिकम् ॥ ४ ॥ )**

## ॥ ❋ ॥ तस्याऽवचनं वचनप्रामाण्यात् ॥ ❋ ॥

**( भाष्यम् )**

**तस्येति न वक्तव्यम् ॥**

**अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः कस्मान्न भवति ? ॥**

**वचनप्रामाण्यात् । सवर्णसंज्ञावचनसामर्थ्यात् । यदि हि अन्यस्य तुल्यास्यप्रयत्नोऽन्यस्य सवर्णसंज्ञः स्यात् । सवर्णसंज्ञावचनमनर्थकं स्यात् ॥**

**( प्रदीपः ) तस्यावचनमिति ।** तस्येत्ययमनुकरणशब्दस्तस्येत्यस्यावचनमित्यर्थः ॥ **सवर्णसंज्ञावचनमिति ।** न च रेफोष्मणां निवृत्त्यर्थं वचनं, रेफस्यापि रेफः सवर्णो भवत्येव । एवमूष्मसु द्रष्टव्यम् ॥

**( उद्द्योतः ) तस्यावचन**मिति वार्तिके तच्छब्देन कस्य परामर्शेति आह—**तस्येत्ययमिति । तस्यावचन**मित्यत्र षष्ठीतत्पुरुष इति भावः । एवं च स्यो न विभक्तिरिति लुगभावः ॥ वस्तुतस्तच्छब्देन पूर्वोक्तस्य तस्यशब्दस्य परामर्श इति वक्तुं युक्तम् ॥ **रेफस्यापीति । रेफोष्मणा**मित्येतद्विजातीयसवर्णाभावप्रतिपादनपरमित्यर्थः । तत्र रेफांशे तुल्यास्यप्रयत्नासंभव एव, ऊष्मसु तु **नाऽज्झलौ**विति निषेधादिति बोध्यम् । एवं च व्यावर्त्याभावेन सवर्णसंज्ञावचनसामर्थ्याद् यस्य तस्येति लप्स्यत इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः । **सवर्णसंज्ञेति**—तर्हीत्यादिः । प्रदीपे—**रेफस्यापीति**—यत इत्यादिः ।

उद्द्योते—**षष्ठीति**—तस्यस्यावचनमिति विग्रहे इत्यादिः । **स्यः**—तस्यावचनमिति वार्तिकघटकः स्यः । **इति**—इति हेतोः । प्रतिपत्तिलाघवादाह—**वस्तुत इति ।** नन्वेवं कथं रेफोष्मणां सवर्णा न सन्तीति भाष्यकृदुक्तिरित्यत आह—**रेफोष्मणामिति ।** यत इत्यादिः । **एतदिति**—रेफोष्मेत्यर्थः । ननु कथं तेषां विजातीयः सवर्णो नेत्यत आह—**तत्रेति ।** तयोर्मध्ये इत्यर्थः । यत इति शेषः । **रेफांशे इति**—विजातीयेनेति शेषः । **एवञ्च**—तेषां सजातीयसवर्णत्वे च ।

**( १४४ समाधानवार्तिकम् ॥ ५ ॥ )**

## ॥ ❋ ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ ❋ ॥

**( भाष्यम् )**

**संबन्धिशब्दैर्वा पुनस्तुल्यमेतत् । तद्यथा-संबन्धिशब्दाः "मातरि वर्तितव्यम्" "पितरि शुश्रूषितव्यम्" इति । न चोच्यते—'स्वस्यां मातरि' 'स्वस्मिन्पितरि' इति । संबन्धाच्चैतद्गम्यते—या यस्य माता, यश्च यस्य पितेति ॥ एवमिहापि "तुल्यास्यप्रयत्नं सवर्णम्" इत्यत्र संबन्धिशब्दावेतौ, तत्र संबन्धादेतद्गन्तव्यम्—यत्प्रति यत्तुल्यास्यप्रयत्नं तत्प्रति तत्सवर्णसंज्ञं भवतीति ॥**

**(प्रदीपः)** एवं वचनसामर्थ्याद्दोषं परिहृत्य शाब्दन्यायेन परिहर्तुमाह—**संबन्धिशब्दैरिति। संबन्धिशब्दाविति।** तुल्यास्यप्रयत्नशब्दस्य संबन्धिशब्दत्वात्तत्समानार्थोऽपि प्रदेशवाक्येषूपात्तः सवर्णशब्दः संबन्धिशब्दः यथा **तुल्याय कन्या दातव्ये**त्युक्ते न शूद्रेण तुल्याय ब्राह्मणः कन्यां ददात्यपि त्वात्मना। तथेहापीत्यर्थः॥

**(उद्द्योतः)** ननु सवर्ण इति संज्ञाशब्दस्य कथं संबन्धिशब्दत्वमत आह—**तुल्यास्येत्यादि।** स्वार्थभिन्नप्रतियोगिकसंबन्धनिमित्तशब्दः **संबन्धिशब्द** इति भावः॥

परे तु अत्र सूत्रे द्वन्द्वनिर्देशलभ्यौ तुल्यास्यतुल्यप्रयत्नशब्दावित्यर्थो भाष्यस्य। सवर्णशब्दो हि प्रदेशेऽपि सवर्णपदवत्परो, न तु तुल्यास्यप्रयत्नत्वप्रवृत्तिनिमित्तक इति तस्य सम्बन्धिशब्दत्वं दुरुपपादम्। उपक्रमोपसंहाराभ्यां चैवमेवोचितम्॥ उपक्रमे हि तुल्यास्यं च तुल्यप्रयत्नं च सवर्णसंज्ञं भवतीत्युक्तमित्याहुः॥

**(तत्त्वालोकः)** भाष्ये—**उच्यते इति**-तत्रेत्यादिः। **गम्यते**-अवगम्यते। एवमग्रेऽपि। **एतौ**—तुल्यास्यप्रयत्नसवर्णशब्दौ।

प्रदीपे—**तत्समानार्थः**—तुल्यास्यप्रयत्नशब्दसमानार्थकः। **प्रदेशवाक्येषु**—"अकः सवर्णे दीर्घः" इत्यादिषु।

उद्द्योते—प्रकारान्तरेण प्रकृतभाष्यं योजयन् कैयटोक्तं खण्डयति—**परे त्विति। अत्र सूत्रे**—सवर्णसंज्ञासूत्रे। **हि**—यतः। एवमग्रेऽपि। **अपिना** प्रकृतसंग्रहः। सवर्णशब्दस्य संज्ञाशब्दत्वादाह—**सवर्णपदेति। इति**—इति हेतोः। **तस्य**—सवर्णशब्दस्य। अस्य युक्तत्वमाह—**उपक्रमेति।**

(इत्यनिष्टसावर्ण्यनिराकरणाधिकरणम्॥)

---

**(अथ ऋऌवर्णयोः सावर्ण्याधिकरणम्)**

**(१४५ आक्षेपवार्तिकम्॥ ६॥)**

## ॥ * ॥ ऋकारऌकारयोः सवर्णविधिः ॥ * ॥

**(भाष्यम्)**

**ऋकारऌकारयोः सवर्णसंज्ञा विधेया। होतृ ऌकारः होतॄकार इति॥**

**किं प्रयोजनम्?।**

**"अकः सवर्णे दीर्घः" इति दीर्घत्वं यथा स्यात्॥**

**(प्रदीपः) ऋकारऌकारयोरिति।** स्थानभेदान्न प्राप्नोतीत्यारम्भः॥ अत्र चानयोरेव श्रुतत्वान्मिथः सवर्णसंज्ञा विज्ञायते, न त्वेतयोरन्येन सहेति बोध्यम्॥

**(उद्द्योतः) ऋकारऌकारयोरि**त्यत्र **ऋत्यक** इति प्रकृतिभावः। वार्तिकेऽप्येवमेव पाठ इति प्रामाणिकाः। सावर्ण्यप्रतियोग्यनिर्देशादाह—**अत्र चेति।** भाष्ये. **होतृ ऌकारः होतॄकार इति।** ऌकारशब्दो देवतावाचीत्येके॥ विवृतस्य ऌकारस्य दीर्घस्याभावादॄकारो दीर्घ उदाहृत इति बोध्यम्॥

**(तत्त्वालोकः)** प्रदीपे—**स्थानभेदादिति**—ऋकारऌकारयोरित्यादिः। **सवर्णसंज्ञेति** शेषः। **इतीति**—इति हेतोरित्यर्थः। अस्येति शेषः। **अनयोः**—ऋकारऌकारयोः। एवमग्रेऽपि।

उद्द्योते—**इत्यत्र**—व्याख्यानभाष्ये। अत एवाह—**वार्तिकेऽपीति।**

**(सावर्ण्यखण्डनभाष्यम्)**

**नैतदस्ति प्रयोजनम्। वक्ष्यत्येतत्—"*सवर्णदीर्घत्वे ऋति ऋ वा वचनम्-" "*ऌति ऌ वा वचनम्*" इति॥**

**(प्रदीपः) वक्ष्यत्येतदिति।** तत्र **ऌवावचन**मित्यत्र दीर्घ इत्यनुवर्तते। तत्र ऌति ऌशब्दे विकल्पितेऽप्राप्त एव पक्षे दीर्घो भविष्यति। स च भवन् ऌवर्णस्य दीर्घाभावादृवर्णस्यान्तरतम्याद्दीर्घ ॠकारो भविष्यति॥

**(उद्द्योतः) नैतदस्तीति।** सवर्णसंज्ञाया इति शेषः॥ नन्वीषत्स्पृष्टेन मुक्तेऽपि विवृतदीर्घः सवर्णसंज्ञां विना दुर्लभोऽत आह—**तत्रेति।**

**(तत्त्वालोकः)** भाष्ये—सवर्णसंज्ञावार्तिकं खण्डयति—**नैतदिति। वक्ष्यतीति**—यत इत्यादिः। **सवर्णदीर्घत्वे**—अकः सवर्णे दीर्घ इत्यत्र। **ऋति ऋ वेति**—ऋति परे पूर्वपरयोः स्थाने वा ऋ इत्यादेशो भवतीत्यर्थः। एवमग्रेऽपि। उभयत्र विधेयम् ईषत्स्पृष्टं द्विमात्रञ्च। ऋ इत्यस्य मध्ये द्वौ रेफौ तयोरेका मात्रा अभितोऽज्भक्तेरपरा। ऌ इत्यस्य मध्ये द्वौ लकारौ, शेषं प्राग्वत्।

प्रदीपे—**तत्र**—तयोर्मध्ये। **तत्र**—तस्मिन् सति। **ऌति**—ऌति परे। **स च**—दीर्घश्च। **भविष्यतीति**—तथा च होतृ ऌकार इत्यत्र होतॄकार इत्यस्य सिद्धेः तयोः सवर्णसंज्ञा न विधेयेति भावः।

**(सावर्ण्यमण्डनभाष्यम्)**

**तत्सवर्णे यथा स्यात्। इह मा भूद्-दध्य्ऌकारः मध्व्ऌकार इति॥**

**(प्रदीपः) तत्सवर्ण इति।** यद्यविधाय सवर्णसंज्ञां तदुच्यतेऽग्मात्रस्य ऌति तत्कार्यं स्याद् **दध्य्ऌकार इति।** तस्माद्विधेया सवर्णसंज्ञा॥

**(उद्द्योतः)** भाष्ये तद्वचनद्वयारम्भे सवर्णसंज्ञावश्यकीत्याह—**तत्सवर्णे इति। अग्मात्रस्येति।** अनन्यव्यावृत्त्यर्थमक इति वर्तते सवर्णसंज्ञाभावात्सवर्ण इति नानुवर्तेत इति भावः॥

**(तत्त्वालोकः)** भाष्ये—सवर्णसंज्ञावार्तिकं स्थापयितुं तत्र वार्तिकद्वये सवर्णपदसम्बन्धं दर्शयति—**तदिति।** वचनद्वयमित्यर्थः।

प्रदीपे—**अविधायेति**—ऋऌवर्णयोरिति शेषः। **तत्**—वचनद्वयम्। **उच्यते इति**—तर्हीति शेषः। **तत्कार्यम्**—ऌ इत्यादेशरूपकार्यम्। तथा च दध्ऌकार इत्यापद्येतेति भावः। **विधेयेति**—तयोरिति शेषः। तथा चोभयत्र सवर्णे इत्यस्याप्यनुवृत्तेः न तत्रापत्तिः, न च होतृ ऌकार इत्यत्रानुपपत्तिरित्याशयः।

उद्द्योते—**सवर्णेति**—तयोरित्यादिः। **अनगिति**—पूर्वत्रोभयोरनुवृत्तावपि परत्रेत्यादिः। **वर्तते**—अनुवर्तते। **सवर्णसंज्ञाभावात्**—(तयोः) सवर्णसंज्ञाया अभावात्। अस्य "किन्त्व" त्यादिः।

**(सावर्ण्यखण्डनभाष्यम्)**

**यदेतत्सवर्णदीर्घत्वे ऋतीति एतद्दृत इति वक्ष्यामि॥ ततः—"ऌति"। ऌकारे परत ऌकारो वा भवतीति। ऋत इत्येव॥**

**(प्रदीपः) ऋत इति वक्ष्यामीति।** ऋकारस्य ऋकार एव सवर्णे इति ऋत्येव भविष्यति। ततः **"ऌति"। ऋत** इत्येव॥ इदं चासवर्णार्थम्। तेन ऌति रूपद्वयं सिद्धम्। तत्रासंहितायामृकारे

होतृ ऋकार इति रूपम् । संहितायामपि **ऋत्यक** इति शाकलप्रकृतिभाव एतदेव रूपम् । शाकलाभावे होतॄकारः होतृकार इति रूपद्वयम् । लृकारेऽसंहितायां संहितायां च शाकले होतृलृकार इति । शाकलाभावे होतॄकारो होत्लृकार इति रूपद्वयम् ॥

**( उद्द्योतः )** खण्डयति—**यदेतदिति** भाष्ये ॥ **सवर्ण इतीति** आद्यवार्तिके सवर्णग्रहणमनुवर्तते इति भावः ॥ **तेन लृतीति** । सिद्धान्तेऽपि व्यवस्थितविभाषया अनभिधानेन **वा** होतृ लृकारे पूर्ववार्तिकं गम्लृलृकारे चोत्तरवार्तिकं न प्रवर्त्तते । एवं कॄ इति दीर्घस्य ऋकारे परे पूर्वस्य तस्यैव लृकारे उत्तरस्य चाप्रवृत्तिस्तत एवेति भावः ॥ **रूपद्वयमिति** । ईषत्स्पृष्टघटितं विवृतदीर्घघटितं चेति भावः ॥ **तत्रासंहितायामिति** । समासे संहिता नित्या, असमासे त्वीदृशं रूपं दुर्लभं होतृशब्दे विभक्तिश्रवणापत्तेः ॥ होतृशब्दस्य नपुंसके संबुद्धौ रूपमित्यप्यतिक्लिष्टमिति चिन्त्यम् ॥ भाष्ये तु **होतृलृकार इति** दीर्घप्रवृत्तियोग्यदशोच्चारणम् ॥ **इति स्थिते** इति शेषः । एवं शाकले होतृलृकार इत्यपि चिन्त्यं, सवर्णत्वविधायकवचनाभावे एतद्विचारसत्त्वेन तत्र **ऋत्यक** इत्यस्याप्राप्तेः । **इकोऽसवर्णे** इत्यपि **न समास** इति निषिद्धम् । नित्यग्रहणं तु तत्र भाष्ये प्रत्याख्यातमित्याहुः ॥

**( तत्त्वालोकः )** प्रदीपे—**इति**—इति हेतोः । भविष्यतीति—अत एव धार्त्रश इत्यादौ नातिप्रसङ्गः । **ऋत इत्येवेति**—अत्रेत्यादिः । अनुवर्त्तते इति शेषः । **एवेन** सवर्णे इति निवर्त्त्यते । अत एवाह—**इदं चेति** । तथा च दध्य्लृकार इत्यादौ न "लृति लृ वे" त्यस्यातिप्रसङ्गः । तस्मा "दकः सवर्णे" इत्यत्रावश्यकर्त्तव्येन तेन वचनद्वयेनैव सकलनिर्वाहाद् "ऋकारलृकारयोः सवर्णविधिरि" तीदृत्यं वार्तिकं निष्प्रयोजनत्वान्न विधेयमित्याशयः ।

उद्द्योते—**खण्डयतीति**—दध्य्लृकार इत्यादौ "लृति लृ वे" त्यस्यातिप्रसङ्गवारणाय "ऋति ऋ वे" त्यत्र "ऋत ऋ वे"ति न्यासं तद्घटक "ऋत" इत्यस्य "लृति लृ वे" त्यत्रानुवृत्तिञ्चाश्रित्य सवर्णसंज्ञावार्त्तिकमित्यादिः । **सिद्धान्तेऽपि**—यथाश्रुतवार्तिकपाठेऽपि । व्यवस्थितविभाषायाः परिगणितत्वादाह—**अनभिधानेनेति । एवं**—तद्वत् । **तस्यैव**—कॄ इति दीर्घस्यैव । **तत एव**—अनभिधानादेव । **अतिक्लिष्टमिति**—तस्य पुंस्त्वादित्याशयः । **इति**—इति हेतोः । भाष्यासङ्गतिं निराकरोति—**भाष्ये त्विति** । ननु तत् नित्यसमासे इत्यत आह—**नित्येति** ।

## ( सावर्ण्यमण्डनभाष्यम् )

**तत्र वक्तव्यं भवति ॥**

**( प्रदीपः ) तत्र वक्तव्यमिति** । द्वावप्येतौ दीर्घौ ऋ लृ इति । तत्र ऋकारे कदाचिद् ऋ इति दीर्घः कदाचिद् ( दॄ ) इति । लृकारेपि ऋ ( ऋ ) लृ इत्येतौ भविष्यतः सत्यां सवर्णसंज्ञायामिति भावः ॥

**( उद्द्योतः )** सवर्णसंज्ञावचनेनैकेनैव सिद्धे तद्द्वयं न कार्यमित्याह—भाष्ये **तत्र वक्तव्यमिति ॥**

**( तत्त्वालोकः )** भाष्ये—**तदिति**—षाष्ठवार्त्तिकद्वयमित्यर्थः । तयोः सवर्णसंज्ञाविधाने इत्यादिः । **भवतीति**—तथा च "ऋकारलृकारयोरि"ति वार्त्तिकाभ्युपगमे लाघवमिति भावः ।

प्रदीपे—**ननु कथं** षाष्ठवार्त्तिकद्वयाभावे तत्र तत्रेष्टसिद्धिरित्यत आह-**द्वावपीति । एतौ**—"ऋति ऋ वा" "लृति लृ वा" इत्याभ्यां विधीयमानौ । **तत्रेति**—तयोः दीर्घत्वे सतीत्यर्थः । "अकः सवर्णे" इत्यनेनैवेति शेषः । विनिगमनाविरहादाह—**कदाचिदिति । लृकारेऽपीति**—एवं तेनैवेत्यादिः । पर्यायेणेति शेषः । **सत्यामिति**—तयोरिति शेषः ।

उद्द्योते—**सवर्णेति**—सवर्णसंज्ञावार्त्तिकं स्थापयितुमित्यादिः । **तद्द्वयं**—षाष्ठवार्त्तिकद्वयम् ।

## ( सावर्ण्यखण्डनभाष्यम् )

**अवश्यं तद्वक्तव्यम् । ऊकालोऽज्झ्रस्वदीर्घप्लुतसंज्ञो भवतीत्युच्यते । न च ऋकार लृकारो वाऽस्ति ॥**

**( प्रदीपः ) न चेति** । अर्धतृतीयमात्रत्वादिति केचिदाहुः । अन्ये तु ईषत्स्पृष्टकरणत्वादनयोर्ऋकारलृकारयोश्च विवृतत्वात्ताभ्यां तयोरग्रहणादनच्त्वमाहुः ॥

**( उद्द्योतः )** इतर आह—**अवश्यमिति । अर्धतृतीयेति** । तावतापि स्थानप्रयत्नसाम्येन ताभ्यां ग्रहणं स्यादित्यरुचेराह—**ईषत्स्पृष्टेति ॥** विवृतत्वाभावे उपस्थितरेफीयप्रयत्नत्यागे मानाभावादिति भावः । **ताभ्यामिति** । असावर्ण्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अवश्यमिति**—तयोः सावर्ण्यवार्त्तिनाऽपीत्यादिः । **तत्**—षाष्ठवार्त्तिकद्वयम् । **ऊकाल इति**—यत इत्यादिः । **ऋकार लृकारो वेति**—ईषत्स्पृष्ट इत्यादिः । तथा च तयोरच्त्वाभावेन दीर्घत्वाभावात् "अकः सवर्णे" इत्यनेन विधानासम्भवात् षाष्ठवार्त्तिकद्वयेऽवश्यंवक्तव्ये सवर्णसंज्ञावार्त्तिकं न कर्तव्यमित्याशयः ।

प्रदीपे—तयोरच्त्वाभावे हेतुमाह-**अर्धेति । अनयोः**—षाष्ठवार्त्तिकद्वयस्य विधेययोः । **ताभ्यां**—विवृताभ्याम् । **तयोः**—ईषत्स्पृष्टयोः ।

उद्द्योते—**इतर इति**—सवर्णसंज्ञावार्त्तिकं खण्डयितुं तत्र लाघवाभावमिति शेषः । **तावताऽपि**-तयोरर्धतृतीयमात्रत्वेऽपि । **ताभ्याम्** आक्षरसमाम्नायिकाभ्याम् । तयोरीषत्स्पृष्टकरणत्वे हेतुमाह—**विवृतत्वेति** । तयोरित्यादिः ।

## ( सावर्ण्यमण्डनभाष्यम् )

**ऋकारस्य लृकारस्य चाच्त्वं वक्ष्यामि ॥ तच्चावश्यं वक्तव्यम् । प्लुतो यथा स्यात् । होतृ ऋकारः, होतॄकारः, होतृ ३ कार इति । होतृ लृकारः होत्लृकारः होत्लृ ३ कार इति ॥**

**( प्रदीपः ) अच्त्वं वक्ष्यामीति** । सत्यच्त्वे दीर्घसंज्ञाऽनयोर्भविष्यति । येषां तु मतमर्धतृतीयमात्रावेताविति, तेषां मते सत्यप्यच्त्वे द्विमात्रत्वाभावादेतयोर्दीर्घसंज्ञा न प्राप्नोति । तस्माद्द्विमात्रावेतावभ्युपगन्तव्यौ ॥ **तच्चावश्यमिति** । त्वयापि **ऋवावचनम्लृवावचन**मिति ब्रुवताऽच्त्वमनयोर्वक्तव्यम् । अन्यथा विधानमात्रमनयोः स्याद्, नाच्कार्यं प्लुतः । सति त्वच्त्वे ताभ्यां त्रिमात्रयोरपि सावर्ण्याद् ग्रहणे सति प्लुतसंज्ञा भविष्यतीति प्लुतसिद्धिः ॥

**( उद्द्योतः )** भाष्ये वचनद्वयप्रत्याख्यानवादाह—**ऋकारस्येत्यादि । सत्यच्त्वे इति** । अयोगवाहेषु पाठादिति भावः ॥ **नाच्कार्यमिति** । तस्य प्लुतसंज्ञा तत्स्थाने प्लुतश्चेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अच्त्वमिति**—सम्पादयितुमयोगवाहेषु तौ इति शेषः । कुत इत्यत आह— **प्लुत इति** । तयोः प्लुतसंज्ञा तत्स्थाने प्लुतश्चेत्यर्थः ।

प्रदीपे—**भविष्यतीति**—तथा च 'अकः सवर्णे" इत्यनेनैव तयोः सिद्धेः षाष्ठवार्त्तिकद्वयं नारम्भणीयमिति भावः।

उद्द्योते—**वचनद्वयप्रत्याख्यानवादीति**—सवर्णसंज्ञावार्त्तिकं स्थापयितुमीषत्स्पृष्टयोरपि तयोरच्त्वमिति शेषः। **तस्येति**—तयोरित्यर्थः। जात्यैकवचनसत्त्वात्॥

### ( आक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ?॥**

**( प्रदीपः ) किं पुनरिति।** एकैकस्मिन्संहितायां शाकलाभावपक्षे रूपद्वयं साध्यम्। तच्चोभयथापि सिध्यति। तत्र सवर्णसंज्ञायामसत्यां यथा सिध्यति तथा पूर्वमेवोक्तम्। इह तु यथा सिध्यति तथोच्यते—[ **अकः सवर्णे दीर्घ** इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादुभयविशिष्टैकासंभवाद्विकल्पः। यश्चान्तरतमो नासौ दीर्घो यश्च दीर्घो नासावन्तरतम इति ] द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त ॠ भवति कदाचिद्विवृत ॠकारः। ऌकारेऽपि कदाचिदृकारान्तरतम ॠकारः कदाचिद् ऌकारान्तरतमॡकार इति साम्यमुभयोः पक्षयोः॥

**( उद्द्योतः )** अत्र पक्षेऽपि उक्तयुक्त्या ह्रस्वऋकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये आद्यस्य ह्रस्वऋकारऌकारद्वयस्थानिकदीर्घैकादेशातिरिक्तविषये द्वितीयस्य न साधुत्वमिति नातिप्रसङ्गः पक्षयोस्तुल्यफलता चेति बोध्यम्। तदेव ध्वनयन् पृच्छति-भाष्ये **किं पुनरत्रेति ॥ ॠकार इति।** विवृत इत्यर्थः॥ **ॡकार इति।** ईषत्स्पृष्ट इत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**अत्र**—पक्षद्वये।

प्रदीपे—**तत्र**—तयोर्मध्ये। **सवर्णेति**—तयोरित्यादिः। **इह तु**—सवर्णसंज्ञावार्त्तिकपक्षे तु। **इति**—इति हेतोः। एवमग्रेऽपि।

उद्द्योते—**अत्र पक्षे**—सवर्णसंज्ञावार्त्तिकपक्षे। **अपिना** षाष्ठवचनद्वयपक्षपरिग्रहः। **उक्तयुक्त्या**—व्यवस्थितविभाषयाऽनभिधानेन वा। **इति**—इति हेतोः। **ध्वनयन्निति**—तटस्थ इति शेषः।

### ( समाधानभाष्यम् )

**सवर्णसंज्ञावचनमेव ज्यायः। दीर्घत्वं चैव हि सिद्धं भवति। अपि च ॠकारग्रहणेन ॡकारग्रहणं संनिहितं भवति। "ॠत्यकः" खट्वॠश्यः मालॠश्यः। इदमपि सिद्धं भवति—खट्वॡकारो मालॡकार इति॥ "वा सुप्यापिशलेः" उपर्कारीयति उपार्कारीयति। इदमपि सिद्धं भवति—उपल्कारीयति उपाल्कारीयति॥**

**( उद्द्योतः )** भाष्ये **दीर्घत्वं चैव हीति।** ईषत्स्पृष्टविवृतरूपो दीर्घो वर्ण इत्यर्थः॥ चं व्याचष्टे—**अपि चेत्यादिना। खट्वॡकार इति।** होतॣकार इत्यस्याप्युपलक्षणम्॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते—**सवर्णसंज्ञेति।** तयोरित्यादिः। षाष्ठवचनद्वयारम्भे गौरवस्य स्पष्टत्वादिति भावः। षाष्ठवार्त्तिकद्वयपक्षे जायमानयोरत्र पक्षे उपपत्तिमाह—**दीर्घत्वमिति।** तयोः सावर्ण्ये इत्यादिः। **एवेति**—अस्य सिद्धमित्यनेनान्वयः। **हि**—यतः। **ॠत्यक इति**—तथा चेत्यादिः। इत्यनेन ( ह्रस्वसमुच्चितप्रकृतिभावविधानात् ) यथेति शेषः। **मालॠश्य इति**—इति सिध्यति, तथेति शेषः। **वा सुपीति**—एवमित्यादिः। शेषं प्राग्वत्।

उद्द्योते—**ईषत्स्पृष्टेति**—( पर्यायेण ) ईषत्स्पृष्टविवृतरूपौ दीर्घौ वर्णाविति भावः।

### ( एकदेशिन आक्षेपभाष्यम् )

**यदि तर्हि ॠकारग्रहणेन ॡकारग्रहणं संनिहितं भवति,—"उरण्रपरः" ॡकारस्यापि रपरत्वं प्राप्नोति॥**

**( तत्त्वालोकः ) तर्हीति**—अस्याग्रेऽन्वयः। **उरण् रपर इति**—इत्यनेनेति शेषः।

### ( समाधानभाष्यम् )

**ऌकारस्य लपरत्वं वक्ष्यामि। तच्चावश्यं वक्तव्यम्। असत्यां सवर्णसंज्ञायां विध्यर्थम्। तदेव सत्यां रेफबाधनार्थं भविष्यति॥**

**( प्रदीपः ) लपरत्वमिति।** व्याख्यास्यामीत्यर्थः॥ **रपर** इत्यत्र **र** इति **लणिति** लकाराकारेण प्रत्याहार आश्रीयते। तत्रान्तरतम्यादृकारस्याण् रपरः ऌकारस्य लपरः॥ **असत्यामिति।** असत्यां सवर्णसंज्ञायाम**उरण् रपर** इत्यत्र ऌकारग्रहणं कर्तव्यं भवति॥

**( उद्द्योतः )** वचनस्य क्वाप्यदर्शनादाह—**व्याख्यास्यामीति।** अन्ये तु लण्सूत्रस्थाकारस्यानुनासिकत्वे**ऽतो ऌान्तस्ये**त्यत्र भगवान्पाणिनिर्ऌकारं नोच्चारयेत्, प्रत्याहारेणैव निर्वाहात्। तस्मादपूर्वं वचनं कार्यमित्येव भाष्याशय उचित इत्याहुः॥ **आन्तरेति।** रश्रुते रपरो लश्रुतेर्लपर इत्यर्थः॥ सवर्णसंज्ञावादी तदभाववादिनं प्रति तत्राप्यावश्यकं तदित्याह—**तच्चावश्यमिति।** ऌकारस्याण् लपर इत्येतत्॥

**( तत्त्वालोकः )** भाष्ये—**असत्यामिति**—यतः तदित्यादिः। तयोरिति शेषः। **विध्यर्थमिति**—ऌकारस्य लपरत्वेत्यादिः। भविष्यतीति शेषः। **एव**—तु। **सत्यामिति**—तयोः सवर्णसंज्ञायामित्यादिः। **रेफेति**—रेफपरत्वेत्यर्थः। ऌकारस्येत्यादिः।

प्रदीपे—व्याख्यानसरणिमाह—**रपर इति। तत्र**—तयोर्मध्ये। ननु तयोरसावर्ण्ये सूत्रे ऌकारस्य स्थानित्वेनानिर्देशात् कथं तस्य लपरत्वमित्यत आह—**असत्यामिति।** तयोरिति शेषः।

उद्द्योते—**वचनस्य**—ऌकारस्याण् लपर इति वचनस्य। तादृशवचनकरणापेक्षया लाघवाच्चेति भावः। इदं कैयटोक्तं कर्तयति—**अन्ये त्विति। अनुनासिकत्वे इति**—अत्र "तुल्यजातीयांस्तुल्यजातीयेषूपदिशति" इति भाष्यमपि विरुद्ध्येतेति भावः। **अपूर्वम्**—ऌकारस्याण् लपर इत्यपूर्वम्। **भाष्येति**—वक्ष्यामीति भाष्ये इत्यर्थः। **सवर्णेति**—तयोरित्यादिः। **अपिना** स्वसंग्रहः। **ऌकारस्येति**—कैयटरीत्या तु "वक्तव्यमि" त्यस्य व्याख्येयमित्यर्थेनोपपत्तिः। अग्रे तत्पदेन कैयटरीत्या व्याख्यानस्य नागेशरीत्या वचनस्य च संग्रहान्नानुपपत्तिः।

### ( एकदेशिन आक्षेपभाष्यम् )

**इह तर्हि—"रषाभ्यां नो णः समानपदे" इत्यृकारग्रहणं चोदितं मातॄणां पितॄणामित्येतदर्थम्। तदिहापि प्राप्नोति—क्लृप्यमानं पश्येति।**

**( तत्त्वालोकः )** तयोः सावर्ण्याभाववादी आह— **इहेति। तर्हि**—तयोः सावर्ण्ये। **इत्येतदर्थम्**—इत्यत्र णत्वार्थम्। **तदिति**—तस्मादित्यर्थः। णत्वमिति शेषः।

( प्रतिबन्दीभाष्यम् )

**अथासत्यामपि सवर्णसंज्ञायाम् इह कस्मान्न भवति-प्रक्लृप्यमानं पश्येति ॥**

**( प्रदीपः )** **प्रक्लृप्यमानमिति ।** **कृत्यच इति** णत्वप्रसङ्गः ॥

**( तत्त्वालोकः )** भाष्ये—तयोः सावर्ण्यवादी आह—**अथेति ।** तयोरिति शेषः ।

( प्रतिबन्दीसमाधानेनाक्षेपनिरासभाष्यम् )

**"※चुटुतुलशर्व्यवाये न※" इति वक्ष्यामि । अपर आह-"त्रिभिश्च मध्यमैर्वर्गैर्लशसैश्च व्यवाये न" इति वक्ष्यामीति । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ लृकारे लकारस्तदाश्रयः प्रतिषेधो भविष्यति ॥**

**( प्रदीपः )** **त्रिभिश्चेति ।** पूर्वस्मादयं विशेषः—पूर्वत्र शरन्तर्भूतोपि षकारः साक्षा णत्वनिमित्तत्वाद् व्यवधायकत्वेन नाश्रीयते । इह तु तस्यानुपादानमेव ॥ **वर्णैकदेशा इति ।** अवयवस्य स्वव्यापारानिवर्तनात् । अग्रहणपक्षे तु क्षुभ्नादेराकृतिगणत्वाण्णत्वाभावः ॥

**( उद्द्योतः )** **साक्षादिति ।** **रषाभ्यामिति** वचनादित्यर्थः ॥ नन्वत्र लकाराभाव इत्यत आह—भाष्ये **वर्णैकदेशा इत्यादि ।** **अग्रहणपक्षे त्विति ।** प्रक्लृप्यमानमित्यत्र क्लृप्यमानमित्यत्र चेति भावः । आद्ये **कृत्यच** इति, द्वितीये **ऋवर्णान्नस्येति** प्राप्तिः ॥

**(तत्त्वालोकः)** भाष्ये—तयोः सावर्ण्याभाववादी आह—**चुटुतुलशरिति ।** **वर्गैः**—चवर्गटवर्गतवर्गैः । **देशाश्चेति**—अत्र चः वर्णसमुच्चायकः । **इति**—इति हेतोः । **प्रतिषेध इति**—णत्वस्येत्यादिः ।

प्रदीपे—**पूर्वस्मादिति**—अत्र पक्षे इत्यादिः । पक्षादिति शेषः । **तस्य**—षकारस्य । **एव**-एवेति । ग्रहणपक्षे वीजमाह-**अवयवस्येति ।** **स्वव्यापारानिवर्त्तनात्**—स्वव्यापारकरणसामर्थ्यस्वीकारात् ।

उद्द्योते—**लकाराभाव इति**—तथा च नोक्तवचनेनापि इष्टसिद्धिरित्याशयः ।

( सिद्धान्तोपसंहारभाष्यम् )

**यद्येवं, नार्थो रषाभ्यां णत्वे ऋकारग्रहणेन । वर्णैकदेशाश्च वर्णग्रहणेन गृह्यन्त इति योऽसौ ऋकारे रेफः तदाश्रयं णत्वं भविष्यति ॥ तुल्यास्य० ॥ ९ ॥**

**( प्रदीपः )** ऋदिताम् लृदितां च भेदेनानुबन्धनिर्देशाद् भेदेन चोपादानादनुबन्धकार्येषु परस्परग्रहणाभावाद्व्यतिकराभावः ॥ ९ ॥

**( उद्द्योतः )** **भेदेनेति ।** ओणृ गम्लृ इति भेदेनानुबन्धनिर्देशाः । **'नाग्लोपिशास्वृदिताम्' 'पुषादिद्युताद्य्लृदितः'** इति च भेदेनोपादानमित्यर्थः ॥ ९ ॥

**( तत्त्वालोकः )** भाष्ये—तयोः सावर्ण्यवादी आह—**यदीति ।** **एवमिति**—ग्रहणपक्षाङ्गीकार इत्यर्थः । तर्हीति शेषः । **रषाभ्यां**—रषाभ्यामित्यत्र । **णत्वे**—णत्वविधायके । **इति**—इति हेतोः । **भविष्यतीति**—मातॄणामित्यादावित्यादिः । तथा च क्लृप्यमानं पश्येत्यत्र णत्वप्राप्तिरेव नेति भावः । एवं तयोः सावर्ण्ये सकलदोषपरिहारात् लाघवाच्च ऋकारलृकारयोः सवर्णविधिरिति वार्त्तिकं स्वीकरणीयमेवेति भावः ।

प्रदीपे—**ननु** तयोः सावर्ण्ये सङ्करः प्रसज्यते इत्यत आह—**ऋदितामिति ।** **व्यतिकराभावः**—सङ्कराभावः ।

उद्द्योते—**इति**—इत्यत्र । एवमग्रेऽपि ।

---

( १ संज्ञानिषेधसूत्रं॥ परिभाषासूत्रं वा ॥ १।१ ४ आ. ७) ॥

**नाज्झलौ ॥१।१।१०॥**

( शकारसावर्ण्यनिषेधनिराकरणम् )

( १४६ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ ※ ॥ अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात् [ तत्र सवर्णलोपे दोषः ] ॥ ※ ॥**

( आक्षेपवार्तिकाद्यभागव्याख्याभाष्यम् )

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ॥**

**किं कारणम् ? ॥**

**अज्झल्त्वात् । अच्चैव हि शकारो हल्च ॥**

**कथं तावदच्त्वम् ? ॥**

**इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम् । हल्षु चोपदेशाद्धल्त्वम् ॥**

**( प्रदीपः )** **नाज्झलौ ॥१०॥** अकारहकारयोरिकारशकारयोश्च तुल्यस्थानप्रयत्नत्वात्सवर्णसंज्ञा प्राप्ता निषिध्यते । अत एव निर्देशादचामज्भिर्हलां हल्भिः सवर्णत्वानिषेधः ॥ **अज्झलोरिति ।** प्रकृतत्वात्सवर्णसंज्ञाया इति बोध्यम् ॥ **शकारप्रतिषेध इति ।** द्विवचनान्तस्य समासो, भेदाधिष्ठानत्वात्सवर्णसंज्ञायाः ॥ **इकार इति ।** अत्र हि सूत्रे अजिनीकारो गृह्यमाणः सवर्णं गृह्णातीति शकारस्यापि ग्रहणमस्ति । स्वात्मनि क्रियाविरोधादस्मिन्नेव सूत्रे इदं न व्याप्रियत इति सवर्णत्वनिषेध इकारशकारयोर्नास्ति । **यस्येति चे**त्यादौ तु शकार इकारेण न गृह्यतेऽनेन सवर्णत्वनिषेधात् । इदं तु स्वात्मनि व्यापारो नास्ति, अस्ति च पूर्वेण सवर्णत्वमिकारशकारयोरिति भावः । **प्रकल्प्य चापवादविषय**मिति न्यायोऽत्र नास्त्यपवादस्यैवासंपत्त्या ॥

**( उद्द्योतः )** **नाज्झलौ ॥ १० ॥** **अकारेत्यादि ।** एवं च हरिरित्यादौ दीर्घः शयनमित्यादौ यणापत्तिरिति भावः ॥ **अत एवेति ।** पूर्वसवर्णदीर्घनिर्देशादित्यर्थः । किं चैवं सति **अकः सवर्णे** इति **झरो झरि सवर्णे,** इत्यस्यासङ्गतिरित्यपि बोध्यम् ॥ **भेदाधिष्ठानत्वादिति ।** व्यक्त्यैक्ये हि तुल्यास्यप्रयत्नत्वासंभव इति भावः ॥ **सवर्णग्रहणेनेति** भाष्ये । सवर्णग्राहकेणाणुदित्सूत्रेणेत्यर्थः ॥ **अत्र हि सूत्र इति ।** उच्चारितस्यैव प्रत्यायकतामत्रत्यपूर्वपक्षी **न** जानाति प्रत्याहारेषु जातिग्रहणमिति च **न** जानाति ॥ ननु सति सवर्णत्वे **इ**कारः शकारं गृह्णीयात् । तदेव च न, **नाज्झला**विति निषेधादत आह—**स्वात्मनीति ।** यद्यपि **स्वाध्यायोऽध्येतव्य** इत्यात्मानमपि विषयीकरोतीति एकस्य विषयत्वविषयित्वयोर्न विरोधस्तथाप्येतद्वाक्यार्थबोधोत्तरमन्यत्र निषेधेऽपि स्ववाक्यार्थबोधात्प्राक् स्वघटकपदार्थोपस्थितिवेलायां स्ववाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावान्नात्रेकारशकारयोस्तदभावबोधनमिति भावः ॥ **अपवादस्यैवासंपत्त्येति ।** **अपवादस्य नाज्झला**वित्यस्या**संपत्त्या** प्राग्बोधाभावेन स्वविषयेऽप्राप्त्यैतद्घटकपदोपस्थितयोरिकारशकारयोर्नापवादविषयत्वमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**नाज्झलाविति**—अज्झलौ मिथः सवर्णौ न स्त इत्यर्थः । न च अज्झलो कयापि सवर्णौ न स्त इत्यर्थः, तथा सति सवर्णसंज्ञासूत्रवैयर्थ्यापातात्। न चास्य विहितप्रतिषेधकत्वाद्वैकल्पिकतया तस्य सार्थकता, तथा सति लाघवात् तुल्यास्यप्रयत्नं वा सवर्णमित्यस्यैव सूत्रयितव्यत्वापातात्। न चात्र "नाण् शलावि"ति युक्तं, ग्रहणकसूत्रातिरिक्ते पूर्वणकारघटिताण एव सत्त्वेन ऋकारल्कारयोरनण्त्वात् कर्तृघट्कमित्याद्यसिद्ध्यापत्तेः । न च शलंशे व्यक्तिलाघवात् "नाक्शलावि"त्येव कुतो न सूत्रितम्, वर्णोच्चारणे विशेषाभावात्॥ **शकारस्य शकारेणेति**—शरां शर्भिरित्यर्थः। शकारस्य शरामुपलक्षकत्वात् । एवमग्रे इकारः इकारऋकारलकाराणां, परश्शतानीति च परश्शतानि, रामष्षष्ठः, यशस्सारमित्येषामुपलक्षणमिति भावः । **एवोऽप्यर्थकस्तस्य** चोभयत्र सम्बन्धः । **हि**—यतः ।

प्रदीपे—**चेन** ऋकारषकारयोः लकारसकारयोश्च संग्रहः । **अत्र**—"नाज्झलावि"त्यत्र । **इति**—इति हेतोः । एवमग्रेऽपि ।

उद्योते—प्रथमादिना दधि शीतलमित्यादिसंग्रहः । द्वितीयादिना दधि षष्ठमित्यादिसमुच्चयः । **पूर्वसदर्णेति**—"नाज्झलावि"त्यस्मिन्नेव सूत्रे सवर्णदीर्घस्य, "झयो हः" इति पूर्वसवर्णादेशस्य च निर्देशादिति भावः । नन्वत्र तयोः सौत्रत्वादेवोपपत्तिरित्यत आह—**किं चेति । एवं सति**—अचामज्भिः, हलां हल्भिः सवर्णत्वनिषेधे सति । **इति**—इत्यस्य । **इत्यस्य**—इत्यस्य च । **हि**—यतः । **इति, एकस्य**—इति हेतोः, एकस्य । **तदभावेति**—सावर्ण्याभावेत्यर्थः । **प्राक्**—पदार्थोपस्थितिसमये ।

( परिशिष्टवार्तिकांशावतरणभाष्यम् )

तत्र को दोषः ? ॥

( तत्त्वालोकः ) **तत्र**-शरां शर्भिः सावर्ण्यनिषेधे । एवमग्रेऽपि ।

( १४६ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * ॥ तत्र सवर्णलोपे दोषः ॥ * ॥

( आक्षेपसाधकवार्तिकभागव्याख्याभाष्यम् )

**तत्र सवर्णलोपे दोषो भवति—परश्शतानि कार्याणि—"झरो झरि सवर्णे" इति लोपो न प्राप्नोति ॥**

( प्रदीपः ) **परश्शतानीति ।** शतात्पराणि शताधिकानीत्यर्थः । **कर्तृकरणे कृता बहुलमिति** बहुलवचनात्समासः । **पारस्करादित्वा**त्सुडागमः सकारस्य श्चुत्वम् **अनचि चेति** द्विर्वचनम् । **झरो झरीति** लोपाप्रसङ्गात् त्रिशकारश्रवणप्रसङ्गः । **शरोऽच्यनचि चे**त्यत्र त्विकारेण शकारो न गृह्यतेऽनेन सवर्णत्वनिषेधादित्यस्नि शकारस्य द्विर्वचनम् ॥

( उद्द्योतः ) **बहुलेति । मयूरव्यंसकादित्वात्सुप्सुपेति** वा समास इत्युचितम् ॥ नमु कथं शस्य द्वित्वम् **अचि नेति शरोऽचीति** वा निषेधापत्तेरत आह—**शरोऽचीति ।**

( तत्त्वालोकः ) भाष्ये—**कार्याणीति**—इत्यादाविति शेषः ।

प्रदीपे—**त्रिशकारेति**—सर्वदेत्यादिः । रूपेति शेषः । **इति**—इति तोः ।

उद्योते—बहुलस्यागतिकगतित्वादाह—**मयूरेति** । तस्य असमानाधिकरणेऽप्रवृत्तेराह—**सुप्सुपेति ।** तस्य राजदन्तादित्वात्परनिपात इति भावः । प्रतिपदोक्तत्वादाह—**शरोऽचीति ।** अनेन प्रदीपे पूर्वं शरोऽची यस्योपन्यासस्यायुक्तता सूचिता ।

( १४७ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धमनच्त्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

अनच्त्वात् ॥

कथमनच्त्वम् ? ॥

**"स्पृष्टं करणं स्पर्शानाम्" । "ईषत्स्पृष्टमन्तस्थानाम्" । "विवृतमूष्मणाम्" ईषदित्येवानुवर्तते ॥ "स्वराणां च" विवृतम् । ईषदिति निवृत्तम् ॥**

( प्रदीपः ) **सिद्धमनच्त्वादिति ।** सूत्रप्रत्याख्यानसाधारणमुक्तम् । प्रयत्नभेदादज्झलोः सवर्णसंज्ञायाः प्राप्तिरेव नास्तीत्यर्थः ॥

( उद्द्योतः ) ननु प्रयत्नभेदेनानच्त्वे सूत्रमेव व्यर्थं स्यादत आह—**सूत्रेति ।** भाष्ये **ईषदित्येवेति ।** एङैचोः परस्परसावर्ण्याभावाय विवृततरत्वव्याख्यानामपि सवर्णसंज्ञानियामकत्वस्य सूत्रमतेऽप्यावश्यकत्वेन तदाश्रित्य सूत्रानारम्भ एव ज्यायान् , किंच दीर्घप्लुताकारहकार्योः सावर्ण्यव्यावृत्तये इदमपि तस्यावश्यकमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**अनच्त्वादिति**—शरामित्यादिः । स्पृष्टमित्यादीनि चत्वारि शौनकप्रातिशाख्यसूत्राणि निर्दिशति—**स्पृष्टमिति ।**

प्रदीपे—**सूत्रेति**—"नाज्झलावि"ति सूत्रेत्यर्थः । **प्रयत्नभेदादिति**—एवञ्च शरामनच्त्वात् निषेधाप्रवृत्या तेषां मिथः सावर्ण्योपपत्तेः लुप्तमध्यशकारकरूपादीनि सिध्यन्तीति भावः ।

उद्योते—**भेदेनेति**—शलामिति शेषः । **विवृतत्वव्याख्यानाम्**—ईषद्विवृतत्वविवृततरत्वविवृततमत्वानाम् । प्रकृतेऽपि एतत्कृतप्रयत्नवैलक्षण्याश्रयणमावश्यकमित्याशयेनाह—**किं चेति । इदमपि**-एतत्कृतप्रयत्नवैलक्षण्यमपि । **तस्य**—सूत्रकृतः ।

( १४८ समाधानान्तरवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ वाक्यापरिसमाप्तेर्वा ॥ * ॥

( भाष्यम् )

वाक्यापरिसमाप्तेर्वा पुनः सिद्धमेतत् ॥

किमिदं वाक्यापरिसमाप्तेरिति ? ।

**वर्णानामुपदेशस्तावद् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल "आदिरन्त्येन सहेता" इति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा । सवर्णसंज्ञोत्तरकालम् "अणुदित्सवर्णस्य चाप्रत्ययः" इति सवर्णग्रहणम् । एतेन सर्वेण समुदितेन वाक्येनान्यत्र सवर्णानां ग्रहणं भवति । न चात्रेकारः शकारं गृह्णाति ॥**

( प्रदीपः ) **वाक्येति ।** भवतु वा तुल्यास्यप्रयत्नत्वं, तथापीह्कारेण शकारो न गृह्यते, सवर्णसंज्ञाया अस्मिन्सूत्रेऽनिष्पादात् । अस्मिन् हि सूत्रे निष्पन्ने सत्यपवादविषयपरिहारेणेष्टे विषये सवर्णसंज्ञा प्रवर्तते । न त्वेतत्सूत्रनिष्पत्त्यवस्थायाम् । ततश्चाङ्गेषूपदेशेत्संज्ञाप्रत्याहारसवर्णत्वेषु निष्पन्नेष्वणुदित्सवर्णस्येत्येतदस्य त्वावि-

न्यादौ प्रवर्तते न त्वङ्गेषूपदेशादिषु, नापि स्वात्मनि। ततश्चात्र सूत्रेऽङ्गानिष्पत्त्या**णुदित्**इत्यस्याप्रवर्तनादिकारेण शकारस्याग्रहणात्सवर्णत्वं शकारयोः सिद्धम्। एवमीकारोऽप्यत्रेकारेण न गृह्यत इतीकारशकारयोः सवर्णत्वमस्तीति कुमारी शेते इत्यत्र सवर्णदीर्घत्वं प्राप्त**मचीत्य**नुवृत्त्या निवार्यते ॥

**( उद्द्योतः ) वाक्यापरिसमाप्तेर्वेति** । अन्यथा **नाज्झला**वित्यस्य निषेधस्य स्वस्मिन्नपि प्रवृत्तौ तव पूर्वपक्षस्यैवानुत्थानं स्यादिति भावः ॥ अनिष्पादमुपपादयति—**अस्मिन्हीति** ॥ **सूत्रे निष्पन्ने इति** । जनितवाक्यार्थबोधे इत्यर्थः ॥ **प्रवर्तते इति** । एते परस्परं सवर्णसंज्ञा इति प्रमारूपं निश्चयज्ञानं निष्पद्यत इत्यर्थः । तदेव च लक्ष्यसंस्कारकमिति भावः ॥ **निष्पत्त्यवस्थायाम्** वाक्यार्थबोधावस्थायाम् ॥ **सवर्णत्वेषु निष्पन्नेषु** ॥ तत्र **सवर्णत्वनिष्पत्ति**रिष्टविषये सवर्णपदवाच्यत्वग्रहः ॥ **नापि स्वात्मनीति** । अनिष्पत्तेरिति भावः ॥ **अङ्गानिष्पत्त्या** अङ्गस्येष्टविषयसवर्णपदवाच्यत्वज्ञानस्यानिष्पत्त्या ॥ **भाष्ये तावत्** प्रथमम् ॥ **उपदेशोत्तरकालेति** । ज्ञातस्य संज्ञाविधानादिति भावः ॥ **प्रत्याहारोत्तरकाला सवर्णसंज्ञे**त्यादेरिष्टविषये सवर्णसंज्ञासंज्ञित्वग्रहणम्, तदुत्तरकाल**मणुदित्**इत्येतदकारादिभिः स्वसवर्णत्वेन ज्ञातानां ग्रहणं बोधयति इत्यर्थः ॥ **अपरिसमाप्तिश्च** सवर्णनिर्णयं विना तद्ग्रहणबोधनासामर्थ्यमित्यर्थः । तज्जन्ये शक्तिग्रहे बाधकसंभावनोहिताप्रामाण्यसंभावनासत्त्वादिति तात्पर्यम् । यत्तु **नाज्झला**वित्यतः प्राक्**तुल्यास्ये**त्यस्य बोधाभावेन सवर्णपदार्थज्ञानाभावा**दणुदित्**इत्यस्य वाक्यार्थाबोध इत्यर्थ इति ॥ तन्न । अभावज्ञाने प्रतियोगिज्ञानस्य कारणतया **तुल्यास्ये**त्यतः प्राङ् निषेधवाक्यार्थाभावो, न तु विपरीतमित्यदोषादिति दिक् ॥ **सिद्धमिति** । अत्रत्याच्पदार्थोपस्थितिकाले वाक्यार्थबोधरूपसावर्ण्याभावज्ञानाभावादिकारशकारयोः सवर्णत्वज्ञानेऽप्य**णुदित्**सूत्रजस्येष्टविषये वाक्यार्थबोधरूपशक्तिग्रहस्याभावान्नेकारेणात्र शकारग्रहणमिति भावः ॥ ननु वाक्यापरिसमाप्तिन्यायस्यास्मदादीन्प्रति प्रवृत्तत्वेऽपि पाणिनेस्तत्तच्छास्त्रप्रणयनान्यथानुपपत्त्या तत्तद्विषयज्ञानस्य प्रागपि सत्त्वावश्यकत्वेन तज्ज्ञानस्यैतच्छास्त्रासाध्यत्वेन च **नाज्झला**वित्यादौ सवर्णाभिप्रायेण प्रयोगः स्यात्। अस्मदादीनां बोधस्तु तत्तात्पर्यशून्याख्यातृपरंपरया लक्षणया भविष्यतीति शकारयोः प्रतिषेधः प्राप्नोति । एवमकारयोरपीति चेन्न । ज्ञानसत्त्वेऽपि तदभिप्रायेण प्रयोगे तात्पर्यग्राहकाभावात्। करिष्यमाणसंज्ञाद्यभिप्रायेण पाणिनिव्यवहाराभावस्यैव प्रतिपादनाच्च । अत एव **हलन्त्य**सूत्रे **इतरेतराश्रय**माशङ्क्य एकशेषेण समाहितं भाष्ये । अन्यथा पाणिनिना हल्पदार्थस्य ज्ञातत्वेन तस्यान्योन्याश्रयाभावात्तेन तदभिप्रायेण प्रयोगे बोद्धृबोधस्य लक्षणयैवोपपत्तौ तत्पर्यन्तानुधावनमनर्थकं स्यात्। मम तु पाणिनेस्तथा व्यवहाराभावान्न दोषः ॥ उक्तार्थे ज्ञापकमप्युपन्यस्यति—**एवमीकारोऽपीति** । अत्र पक्षे दीर्घप्लुताकाराभ्यां हकारे सावर्ण्यवारणं तु प्रश्लेषाद्बोध्यम्। तत्र तात्पर्यग्राहका **वेलास्वि**त्यादिनिर्देशाः, प्रागुक्तं भाष्यं चेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—एवन्तत्रेषदित्यस्यानुवृत्त्या ऊष्मस्वरयोः भिन्नप्रयत्नतां स्वीकृत्य सूत्रानारम्भपक्षे समाधाय, सम्प्रति तत्रेषदित्यस्याननुवृत्त्या तयोः समानप्रयत्नतामङ्गीकृत्य सूत्रारम्भपक्षेऽपि समाधत्ते—**वाक्येति** । **अन्यत्र**—अस्य च्छावित्यादौ । **अत्र**—प्रकृतसूत्रे ।

प्रदीपे—**भवतु वेति**—ऊष्मस्वरयोरिति शेषः । **इह**—प्रकृतसूत्रे । **हि**—यतः । फलितमाह—**ततश्चेति** । **अत्र**—प्रकृतसूत्रे । **इति**—इति हेतोः । एवमग्रेऽपि ।

उद्द्योते—पूर्वपक्षिणाऽपि वाक्यापरिसमाप्तिन्यायोऽभ्युपगन्तव्य इत्याह—**अन्यथेति** । वाक्यापरिसमाप्तिन्यायास्वीकारे इत्यर्थः । **अनुत्थानमिति**—इहेकारेण असवर्णशकारस्याग्रहणादित्याशयः । साधारणतो निष्पत्तेः पूर्वं सत्त्वादाह—**जनितेति** । सामान्यतो बोधस्य पूर्वं सत्त्वादाह—**एते इति** । **एवेन** पूर्वजातसाधारणबोधव्यावृत्तिः । **तत्र**—तेषामुपदेशादिचतुर्णां मध्ये । **तज्जन्ये**—सवर्णनिर्णयजन्ये । **विपरीतं**—'नाज्झलावि''त्यतः प्राक् ''तुल्यास्ये''त्यस्य वाक्यार्थबोधाभावः । **तज्ज्ञानस्य**—पाणिनिज्ञानस्य । हकारेण ग्रहणादकारस्य हल्त्वादाह—**एवमकारयोरपीति** । ननु प्रकृतसूत्रप्रणयनमेव तात्पर्यग्राहकमित्यत आह—**करिष्यमाणसंज्ञाद्यभिप्रायेणेति** । अनेन भाष्येणेति शेषः । **अत एव**—तथा तदभावादेव । **अन्यथा**—तथा तदङ्गीकारे । **तत्पर्यन्तेति**—एकशेषेण समाधानपर्यन्तेत्यर्थः । **ज्ञापकम्**—अचीत्यनुवृत्तिरूपम् । **अत्र पक्षे**—तयोः समानप्रयत्नत्वपक्षे । **तत्र**—प्रश्लेषे ।

## ( आक्षेपभाष्यम् )

**यथैव तर्हीकारः शकारं न गृह्णाति । एवमीकारमपि न गृह्णीयात् ॥**

**तत्र को दोषः ? ।**

**कुमारी ईहते कुमारीहते "अकः सवर्णे" ( इति ) दीर्घत्वं न प्राप्नोति ॥**

**( प्रदीपः )** तत्र क ग्रहणकशास्त्रं प्रवर्तते क नेति विषयविभागदर्शनाय चोद्यं करोति—**यथैव तर्हीति** । इकारस्य ह्यत्राग्राहकत्वं दृष्टमित्य**कः सवर्णे दीर्घ** इत्यत्रापि प्राप्तमिति प्रश्नः ॥

**( उद्द्योतः ) प्रदर्शनाय** बोधनाय ॥

**( तत्त्वालोकः )** भाष्ये—**तर्हीति**—वाक्यापरिसमाप्तिन्यायाभ्युपगमे इत्यर्थः । अत्रेति शेषः । **एवमिति**—अन्यत्रेति शेषः । **तत्र**—तथा सति ।

प्रदीपे—**तत्र**—वाक्यापरिसमाप्तौ । **चोद्यं**—प्रश्नम् । **हि**—यतः । **अत्र**—प्रकृतसूत्रे । **इति**—इति हेतोः । एवमग्रेऽपि । **प्राप्तमिति**—तस्य तदित्यादिः । एवञ्च इकारः सवर्णाग्राहकः इकारत्वात् प्रकृतसूत्रस्थाच्गतेकारवदित्यनुमानप्रयोगो बोध्यः ।

## ( समाधानभाष्यम् )

**नैष दोषः । यदेतद् "अकः सवर्णे दीर्घः" इत्यत्र प्रत्याहारग्रहणं, तत्रेकार ईकारं गृह्णाति शकारं न गृह्णाति ॥**

**( उद्द्योतः )** भाष्ये **यदेतदिति** । तद्बोधवेलायां वाक्यपरिसमाप्तेरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**यत्**—यस्मात् । **एतत्**—अक इति ।

उद्द्योते—**तद्बोधेति**—"अकः सवर्णे" इत्यस्य वाक्यार्थबोधेत्यर्थः । एवञ्च स्वस्वाङ्गान्यतरगतत्वरूपोपाधिसाहित्येन हेतोः व्याप्यत्वासिद्धत्वादनुमानमनुपपन्नमिति भावः ।

## ( व्याख्यान्तरभाष्यम् )

**अपर आह—**

***अज्झलोः प्रतिषेधे शकारप्रतिषेधोऽज्झल्त्वात्*।**

**अज्झलोः प्रतिषेधे शकारस्य शकारेण सवर्णसंज्ञायाः प्रतिषेधः प्राप्नोति ॥**

किं कारणम् ? ।

अज्झल्त्वात् । अच्चैव हि शकारो हल्च ॥

कथं तावदच्त्वम् ? ।

इकारः सवर्णग्रहणेन शकारमपि गृह्णातीत्येवमच्त्वम्, हल्सु चोपदेशाद्धल्त्वम् ॥

तत्र को दोषः ? ॥

*तत्र सवर्णलोपे दोषः* ॥

तत्र सवर्णलोपे दोषो भवति । परश्शतानि कार्याणि । "झरो झरि सवर्णे" इति लोपो न प्राप्नोति ॥

*सिद्धमनच्त्वात्* ।

सिद्धमेतत् ॥

कथम् ? ।

अनच्त्वात् ॥

कथमनच्त्वम् ? ।

*वाक्यापरिसमाप्तेर्वा*उक्ता वाक्यापरिसमाप्तिः ॥

**( प्रदीपः )** अनच्त्वमेव वाक्यापरिसमाप्त्या साध्यते न तु प्रयत्नभेदेनेत्याह—**अपर आहेति** ॥

**( तत्त्वालोकः )** भाष्ये—**अपर आहे**तिसूचितारुचिबीजन्तु—उक्तरीत्या शर्षु सावर्ण्यनिषेधानिषेधयोः फलाविशेषेऽपि दण्डाग्रमित्यादिसिद्धये सूत्रप्रत्याख्यानस्य वाक्यापरिसमाप्तिन्यायस्य वाश्रयणस्यावश्यकत्वात् वाकारस्य शरां शर्भिः सावर्ण्यनिषेधसमुच्चायकताया अयुक्ततैव ।

प्रदीपे—**एवेति**—अस्य वाक्यापरिसमाप्त्येत्यनेनान्वयः । अत एवाह— **न तु प्रयत्नभेदेनेति** ।

**( आक्षेपभाष्यम् )**

अस्मिन्पक्षे—वेत्येतदसमर्थितं भवति ॥

**( प्रदीपः ) अस्मिन्पक्ष इति** । एकत्र हि साध्ये हेतुविकल्पो भवति, इह तु साध्यभेदः । सिद्धेरनच्त्वं हेतुः, अनच्त्वस्य वाक्यापरिसमाप्तिः ॥

**( उद्द्योतः ) एकत्रेति** । तुल्यार्थानां विकल्प इति न्यायादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्मिन् पक्षे**—वाक्यापरिसमाप्त्या अनच्त्वसाधनपक्षे ।

प्रदीपे—**हि**—यतः । साध्यभेदमुपपादयति—**सिद्धेरिति** ।

उद्द्योते—"तुल्यार्थास्तु विकल्पेरन्नि"ति जैमिनिसूत्रानुसारेणाह—**तुल्यार्थानामिति** ।

**( समाधानभाष्यम् )**

एतच्च समर्थितम् ॥

कथम् ? ।

अस्तु वा शकारस्य शकारेण सवर्णसंज्ञा, मा वा भूत् ॥

**( प्रदीपः ) एतच्चेति । अस्तु वा ग्रहणमिकारेण शकारस्ये**ति वाक्यशेषाध्याहारात् प्रतिज्ञाविकल्पार्थो वाशब्द इत्यर्थः ॥

**( उद्द्योतः ) मा वा भूदि**त्येतत्सूचितप्रतिज्ञाया आशयमाह—**अस्तु वेति** ॥

**( तत्त्वालोकः )** भाष्ये—**एतच्च**—वेत्येतच्च ।

**( आक्षेपस्मारणभाष्यम् )**

ननु चोक्तम्, परश्शतानि कार्याणि "झरो झरि सवर्णे" इति लोपो न प्राप्नोतीति ॥

**( तत्त्वालोकः )** द्वितीयपक्षे उक्तं दोषं स्मारयति—**ननु चेति** ।

**( आक्षेपबाधकभाष्यम् )**

मा भूल्लोपः ॥

**( तत्त्वालोकः )** इष्टापत्त्या तं परिहरति-**मा भूदिति** ।

**( आक्षेपसाधकभाष्यम् )**

ननु च भेदो भवति—सति लोपे द्विशकारकम्, असति लोपे त्रिशकारकम् ॥

**( प्रदीपः ) ननु चेति** । श्रुतिकृतं भेदमुपगम्योच्यते ॥

**( उद्द्योतः )** ननु **'व्यञ्जनपरस्यैकस्यानेकस्य वा नोच्चारणे विशेषः'** इति न्यायात् कथं भेद इत्यत आह—**श्रुतिकृतमिति** ॥

**( तत्त्वालोकः )** उद्द्योते—**व्यञ्जनपरस्य**—व्यञ्जनात्परस्य व्यञ्जनपरकस्य च ।

**( आक्षेपबाधकभाष्यम् )**

नास्ति भेदः,—असत्यपि लोपे द्विशकारकमेव ॥

कथम् ? ।

विभाषा द्विर्वचनम् ॥

**( उद्द्योतः )** भाष्ये **असति लोपे त्रिशकार**मिति वदन् प्रष्टव्यः—किं द्विशकारं न स्यादिति तवाशयः, उत त्रिकारं स्यादिति । आद्ये आह—**असत्यपीति** । द्विशकारं भवत्येवेत्यर्थः ॥

**( आक्षेपसाधकभाष्यम् )**

एवमपि भेदः—असति लोपे—कदाचिद् द्विशकारकम्, कदाचित् त्रिशकारकम् । सति लोपे—द्विशकारकमेव ॥

**( उद्द्योतः )** द्वितीये आह—**एवमपीति** । विभाषा द्विर्वचनेऽपीत्यर्थः ॥

**( तटस्थाक्षेपभाष्यम् )**

स एष कथं भेदो न ? ॥

**( प्रदीपः ) स एष कथं भेदो नेति** । अत्रैव च्छेदः । भेद एवेत्यर्थः ॥

**( उद्द्योतः ) एवमपीत्यनेन भेद एवे**त्युक्त्वा, तदुपपादनावसरे **यदि लोपो न स्या**दिति वाच्यम्, किमुच्यते—**नित्यो लोपः स्या**दिति । अतश्छित्त्वा भिन्नकर्तृकत्वेन योजयति—**स एष इति** । त्रिशकारमिष्टमेवेति तात्पर्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—**छेदः**—पाठच्छेदः ।

( तटस्थाक्षेपनिरासभाष्यम् )

**स्याद् ( भेदः )यदि नित्यो लोपः स्याद् । विभाषा तु स लोपः ॥**

**( प्रदीपः )** इतर आह—**स्याद्भेदो यदि नित्यो लोपः स्यात् विभाषा तु स लोप इति ।** ततो नास्ति भेद इत्यर्थः ॥

( समाधानभाष्यम् )

**यथाऽभेदस्तथास्तु ॥ नाज्झलौ ॥ १० ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायप्रथमपादे चतुर्थमाह्निकम् ॥ ४ ॥**

**( प्रदीपः )** द्विर्वचनमपि विभाषा, **यरोनुनासिकेऽनुनासिको** वेत्यतो वेत्यनुवर्तनात् । लोपोऽपि विभाषा **झयो होऽन्यतरस्यामि**त्यतोऽन्यतरस्यामित्यनुवर्तनादित्यर्थः ॥ १० ॥

इति श्रीजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायप्रथमपादे चतुर्थमाह्निकम् ॥ १० ॥

**( उद्द्योतः ) झयो ह इति ।** इदं वृत्तिरीत्या । भाष्यरीत्या तु **वाऽवसान** इत्यत्र इति बोध्यम् ॥ १० ॥

इति श्री**शिवभट्ट**सुतसतीगर्भज**नागोजी ( नागेश ) भट्ट**कृते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥ ४ ॥

**(तत्त्वालोकः)**उद्द्योते-**भाष्यरीत्येति**-सूत्रपाठभेदादित्याशयः।

इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझा-प्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे चतुर्थमाह्निकम् ।

## इति प्रथमाध्यायस्य प्रथमपादे चतुर्थाह्निकम् ।

# अथ प्रथमाध्यायस्य प्रथमपादे पञ्चमाह्निकम् ।

( अथ प्रगृह्यसंज्ञाप्रकरणम् )

( १० प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. १ सू. ॥ )

## ईदूदेद्द्विवचनं प्रगृह्यम् ॥ १।१।११॥

( अथ तपरपाठप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थमिदानीं तपराणां प्रगृह्यसंज्ञोच्यते ? ॥**

**( प्रदीपः ) ईदूदेद्द्विवचनं प्रगृह्यम् ॥११॥ किमर्थमिति ।** ईदूतोरनण्त्वाद्भिन्नकालनिवृत्त्यर्थं नोपपद्यते तपरत्वम् , उदात्तादीनामभेदकत्वाद्गुणान्तरयुक्तानां सवर्णानां ग्रहणार्थमपि नोपपद्यते ॥ जातिपक्षेऽपि दीर्घोच्चारणात्प्रयत्नाधिक्याद् ह्रस्वानां न भविष्यति, प्लुतानां चेष्यत एवेतीष्टव्याघातं प्रत्युत तपरत्वं करोतीति प्रश्नः ॥

**( उद्द्योतः ) ईदूदेत्** ॥११॥ व्यक्तिपक्षे ईदूतोस्तपरयोरुपादानं भिन्नकालनिवृत्तये वा गुणान्तरयुक्तग्रहणाय वा स्यात् । तत्र **नाद्य** इत्याह—**ईदूतोरिति ।** एवं चा**णुदिदि**त्यस्य प्राप्त्यभावान्न तद्बाधक**तपर**सूत्रप्रवृत्तये तपरत्वमित्यर्थः । **तपर**सूत्रेऽण्ग्रहणाननुवृत्त्या तस्य प्राप्तावपि फलाभावात् । न **द्वितीय** इत्याह-**उदात्तादीनामिति । ननु** जातिपक्षे **भिन्न**कालनिवृत्त्यर्थं स्यात्तत्पक्षे हि **तपर**सूत्रं नियमार्थमेवेत्यत आह—**जातीति ॥ प्लुतानां चेष्यत एवेति ।** एतच्च अग्रे भाष्ये एव स्फुटम् ॥ **इष्टव्याघातमिति ।** जातिपक्षे ईदूदंशेऽपि तपरत्वेनैव प्लुतव्यावृत्तिरित्यभिमानः ॥

**( तत्त्वालोकः )** भाष्ये—**इदानीम्—**अत्र ।

प्रदीपे—**अनण्त्वादिति**—अक्षरसमाम्नाये पाठाभावेनेत्यादिः । **भिन्नकालेति—**ह्रस्वप्लुतेत्यर्थः । **सवर्णानामिति**—स्वकालानां ताभ्यां ग्रहणस्य स्वतः सिद्धत्वात् तयोस्तपरत्वं तेषामिति शेषः । नन्वेकारोच्चारणेऽधिकयत्नाभावात् तत्र प्लुतव्यावृत्त्यर्थं तपरत्वमित्यत आह—**प्लुतानां चेति ।** प्लुतानां त्वित्यर्थः । **इति—**इति हेतोः । एवमग्रेऽपि । एवं तत्र फलाभावरूपदूषणमुपपाद्य अनिष्टप्रसङ्गरूपदोषमेकारप्रसङ्गात्सर्वत्राह—**इष्टव्याघातमिति ।**

उद्द्योते—प्राप्तौ सत्यां निषेध इति नियमेनाह—**एवञ्चेति ।** तयोरनण्त्वे चेत्यर्थः । **तद्बाधकेति—**अणुदित्सूत्रबाधकेत्यर्थः । वार्त्तिककारमतेन तपरसूत्रस्य विध्यर्थत्वादाह—**तपरसूत्रे इति । तस्य**—तपरसूत्रस्य । **फलाभावात्—**उक्तरीत्या ह्रस्वप्लुतग्रहणाप्रसङ्गेन तन्निवृत्तिरूपफलाभावात् । **भिन्नकालेति—**स्वतः प्रसक्तेत्यादिः । **स्यादिति—**तपरसूत्रप्रवृत्तये तपरत्वमित्यादिः । **तत्पक्षे—**जातिपक्षे । **हि**—यतः । **नियमार्थमिति**—अण्पदानुवृत्तेरिति भावः । **एवेन** विध्यर्थताव्यावृत्तिः । ननु तपरसूत्रस्य नियमार्थत्वात् अण्येव प्रवृत्त्या, आक्षरसमाम्नायिकत्वादण्येकारे तेन प्लुतवारणेऽपि ईदूतोः कथन्तद्व्यावृत्तिरित्यत आह—**जातिपक्षे इति । अपिना—**एदंशपरिग्रहः । **तपरत्वेन—**तपरसूत्रप्रवृत्त्या । अभिमानपदसूचितारुचिबीजन्तु जातिपक्षे तस्य नियमार्थत्वादण्येव प्रवृत्तेः सम्भवेन ईदूतोरनण्त्वादप्रवृत्तिरेव ।

( समाधानभाष्यम् )

**"तपरस्तत्कालस्य" इति तत्कालानां सवर्णानां ग्रहणं यथा स्यात् ॥**

केषाम् ? ॥

उदात्तानुदात्तस्वरितानाम् ॥

**( प्रदीपः ) तपर इति ।** व्यक्तिपक्षो भेदकाश्च गुणा इति भावः ॥ **केषामिति** । प्लुतानामग्रहणप्रसङ्गात्प्रश्नः ॥ **उदात्तेति ।** कश्चिदनुनासिकग्रहणमप्यस्ति, तद्गुणप्रसङ्गेनोच्चारितम् , न हि प्रगृह्योऽनुनासिकः सम्भवति, **अणोऽप्रगृह्यस्यानुनासिक** इति निषेधात्॥

**( उद्द्योतः ) भेदकाश्च गुणा इति । भेदकत्वात्स्वरस्येति** वार्तिकोक्तेरणविषये भेदकपक्षोऽप्यस्तीत्यभिमानः ॥ इदं प्रयोजनमीदृतोरेव, नत्वेदंशे **अणुदित्**सूत्रेणैव सिद्धेः ॥

**( तत्त्वालोकः )** भाष्ये—वार्त्तिककारमतेन तपरसूत्रस्य विध्यर्थतामभिप्रेत्याह—**तपर इति । स्यादिति**—इत्यर्थमिति शेषः ।

प्रदीपे—**प्रसङ्गादिति**—केषाञ्चिद् ग्रहणस्य सिद्धत्वाच्चेत्यपि भावः । **अपिना** उदात्तादिसंग्रहः । **तदिति**—अनुनासिकपदमित्यर्थः । तत्रेत्यादिः । **उच्चारितमिति**—बोध्यमिति शेषः । **हि—** यतः । **निषेधादिति**—न चानुनासिकः प्रगृह्यः सम्भवति, विषयाभावादित्यपि भावः ।

उद्द्योते—**भेदकत्वादिति**—"अणुदित्"सूत्रेऽग्रहणाच्चेत्यपि भावः । **इदं**—तपरसूत्रेण तत्कालसवर्णग्रहणरूपम् ।

**( भाष्यम् )**

अस्ति प्रयोजनमेतत् ॥

किं तर्हीति ? ॥

**( १४९ आक्षेपवार्तिकम् ॥ १ ॥**

**[ ॥ * ॥ प्लुतानां तु प्रगृह्यत्वाप्रसङ्गोऽतत्कालत्वात् ॥ * ॥ ]**

**( भाष्यम् )**

प्लुतानां तु प्रगृह्यसंज्ञा न प्राप्नोति ॥

किं कारणम् ? ।

अतत्कालत्वात् । न हि प्लुतास्तत्कालाः ॥

**( प्रदीपः ) प्लुतानां त्विति ।** व्यक्तिपक्षाश्रयणादयं दोषो, न तु तपरत्वात् ।

**( उद्द्योतः )** ननु तत्कालसवर्णसंग्रहार्थं तपरत्वमुक्तं नातत्कालव्यावृत्त्यर्थं, तत्कुतः प्लुतानां न प्राप्नोतीत्यत आह—**व्यक्तिपक्षेति ।** ईदूदेदंशे इदम् , एदंशे तु तपरत्वादेव दोष इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः ।

प्रदीपे—जातिपक्षे दीर्घप्लुतसाधारणेत्वादिजातिस्वीकारेण प्रकृतदोषाभावादाह—**व्यक्तिपक्षेति । अयं**—प्लुतासंग्रहरूपः ।

उद्द्योते—**तत्कुतः**—तस्मात्कथम् । **इदं**—व्यक्तिपक्षाश्रयणप्रयुक्तप्लुतासङ्ग्रहणरूपदूषणम् । तत्राणुदित्सूत्राप्रवृत्तेरिति भावः । **एवेन**—व्यक्तिपक्षाश्रयणादित्यस्य व्यावृत्तिः । तत्राणुदित्सूत्रप्रवृत्तेरित्याशयः । **दोषः**—प्लुतासङ्ग्रहरूपदोषः ।

**( आक्षेपबाधकभाष्यम् )**

असिद्धः प्लुतः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥

**( प्रदीपः ) असिद्ध इति ।** शास्त्रासिद्धत्वाश्रयणात् प्लुतबुद्धावसत्यां प्रगृह्यत्वे विधीयमाने द्विमात्रविषया बुद्धिः प्रवर्तते । तथा हि वक्ष्यति ***असिद्धवचनमुत्सर्गलक्षणभावार्थमादेशलक्षणप्रतिषेधार्थं च*** इति ॥

**( उद्द्योतः )** ननु इतिशब्दादिसमभिव्याहारे कार्यार्थं प्रगृह्यसंज्ञाप्रवृत्तेरन्तरङ्गत्वात्पूर्वं प्लुते तेन स्थानिनो निवृत्तत्वेन प्लुतासिद्धत्वेपि कथं स्थान्याश्रया प्रगृह्यसंज्ञेत्यत आह—**शास्त्रेति ।** प्रवृत्तेऽपि शास्त्रेऽसिद्धत्वेन तत्प्रवृत्तिज्ञानाभावेन प्लुतज्ञानाभावात्त्रिमात्रविषयाया बुद्धेस्त्रिमात्रेऽसत्त्वाद् द्विमात्रबुद्ध्या त्रिमात्रस्य संज्ञेत्यर्थः ॥ एतेन शास्त्रासिद्धत्वाच्छास्त्राप्रवृत्तौ स्थानिनः प्रगृह्यत्वेऽपि पुनः प्लुते तस्य तन्न स्यात् । न च स्थानिवत्त्वम् , **अनल्विधा**विति निषेधात् । प्लुतस्थान्यल्वृत्तिधर्मत्वाद् । एवं चागच्छतमग्नी ३ इत्यादा**वणोऽप्रगृह्यस्ये**त्यनुनासिकः स्यादित्यपास्तम् ॥ ननु प्राधान्यात्कार्यासिद्धत्वमेव स्यादत आह—**तथाहीति ॥ उत्सर्गः** स्थानी ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती उत्तरयति—**असिद्ध इति ।**

प्रदीपे—**वक्ष्यतीति**—"षत्वतुको"रिति सूत्रे इति शेषः ।

उद्द्योते—कार्यासिद्धत्वमाश्रित्य शङ्कते—**नन्विति । अन्तरङ्गत्वादिति—**इति शब्दादिसमवधानानपेक्षत्वेनेत्यादिः । **तेन—** प्लुतेन । देवदत्तहन्तृहतन्यायेनाह—**कथमिति । तत्प्रवृत्तीति—** प्लुतशास्त्रप्रवृत्तीत्यर्थः । **संज्ञा**—प्रगृह्यसंज्ञा । **स्थानिनः**—द्विमात्रेकारादेः । **पुनः**—पश्चात् । **तस्य**—प्लुतस्य । **तत्**—प्रगृह्यत्वम् । **न स्यादिति**—कार्यस्यासिद्धत्वाभावात्तस्य त्रिमात्रतया प्रगृह्यसंज्ञासूत्रेऽग्रहणादिति भावः । ननु प्रगृह्यसंज्ञायाः "शे" "उञ" इत्यादौ विशिष्टेऽपि सत्त्वात्कथमल्विधित्वमित्यत आह—**प्लुतस्थानीति ।** तत्र शकारादेः लोपादिति भावः ।

**( आक्षेपसाधकभाष्यम् )**

सिद्धः प्लुतः स्वरसन्धिषु ॥

कथं ज्ञायते—'सिद्धः प्लुतः स्वरसंधिषु'-इति ? ॥

यदयं "प्लुतः प्रकृत्या" इति प्लुतस्य प्रकृतिभावं शास्ति ॥

कथं कृत्वा ज्ञापकम् ? ॥

सतो हि कार्यिणः कार्येण भवितव्यम् ॥

**( प्रदीपः ) यदयमिति ।** असिद्धत्वे प्लुतः प्रकृत्येत्येतन्माश्रयणायोगात् कार्यित्वेनाश्रयणात्सिद्धत्वाभावोऽनुमीयते । सामान्येन स्वरसन्धिप्रकरणविषयं सिद्धत्वं ज्ञाप्यते, न तु प्रकृतिभाव एव । यथा रोरुत्व एव । सोत्सर्गं सापवादं च प्रकरणमिति प्रकृतिभावेऽपि प्रगृह्यत्वहेतुके सिद्धत्वमुच्यते ॥

**( उद्द्योतः ) सामान्येनेति ।** तदुत्सर्गेऽपीत्यर्थः । ननु प्रकृतिभावो न स्वरसन्धिप्रकरणस्थस्तत्राह—**सोत्सर्गमिति ।** तदुत्सर्गनिरूपितापवादत्वस्यात्रापि सत्त्वेनेदमपि तत्प्रकरणस्थमेवेति भावः ॥ **प्रगृह्यत्वहेतुके प्रकृतिभावेऽपीत्य**न्वयः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी आह—**सिद्ध इति ।** तटस्थः पृच्छति—कथमिति । एवमग्रेऽपि । **यत्**—यस्मात् । **अयं**—पाणिनिः । **हि**—यतः ।

प्रदीपे—**असिद्धत्वे इति**—प्लुतस्येत्यादिः । **कार्यित्वेनेति—** तस्य तत्रेत्यादिः । नन्वेवं प्लुतस्य प्रकृतिभावे सिद्धत्वेऽपि स्वरसन्धिषु असिद्धत्वाद् भाष्यासङ्गतिरित्यत आह—**सामान्येनेति ।** तस्ये-

त्यादिः । असति बाधके प्रमाणानां सामान्ये पक्षपातादित्याशयः । भाष्यस्थस्वरसन्धिपदस्य स्वरसन्धिप्रकरणोपलक्षणत्वादाह—**स्वरसन्धिप्रकरणेति** । अत्र वैधर्म्येण दृष्टान्तमाह—**यथेति** । यथा गोः कार्यित्वेनाश्रितत्वाद् उत्वं प्रत्येव सिद्धता, तथा न प्रकृते प्लुतस्य प्रकृतिभावं प्रत्येव सिद्धता, अपि तु स्वरसन्धिप्रकरणं प्रतीति भावः । **प्रकरणमिति**—सन्निहितसापेक्षशास्त्रसमुदायः प्रकरणमित्याशयः । **इति**—इति हेतोः । **अपिना** प्लुतनाहेतुकप्रकृतिभावादेः परिग्रहः । **सिद्धत्वमिति**—तस्येत्यादिः ।

उद्द्योते—**तदुत्सर्गे**—प्लुतप्रकृतिभावस्य उत्सर्गसन्धिकार्ये । **अपिना** प्रकृतिभावस्य समुच्चयः । **प्रकरणमथ इति**—तथा च प्लुतस्य स्वरसन्धिप्रकरणं प्रति सिद्धत्वेऽपि प्रकृतिभावं प्रत्यसिद्धत्वैवेति भावः । **अत्रापि**—प्रगृह्यप्रकृतिभावेऽपि । **इदमपि**—"प्लुतप्रगृह्या" इ यपि । **तदिति**—स्वरसन्ध्यर्थः । नन्वेवं प्लुतस्य प्रकृतिभावविधानसामर्थ्यात्तस्य स्वरसन्धिप्रकरणं प्रति सिद्धता ज्ञायते, प्रकृतिभावं प्रति तु तस्य कार्यित्वेनाश्रयणात्सिद्धता वर्त्तते एवेत्येव कुतो नोक्तमिति चेन्न, तथा सति "प्लुतस्य प्रकृतिभावं शास्ति" इत्यस्य "सतो हि कार्यिण" इत्यस्य च भाष्यस्यासामञ्जस्यापत्तेः । प्लुतस्य स्वरसन्धिप्रकरणं प्रत्यसिद्धत्वेऽपि तत्र स्थानिवुद्ध्या प्राप्तयणादिनिवारणाय तस्य प्रकृतिभावविधानस्य सार्थक्याच्च ।

**( प्रयोजनप्रश्नभाष्यम् )**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

**( प्रदीपः ) किमेतस्येति** । प्रकृतिभाव एवाश्रयासिद्धत्वमस्त्विति प्रश्नः ॥

**( उद्द्योतः ) प्रकृतिभाव एवेति** । प्लुतप्रकृतिभाव इत्यर्थः ॥ भाष्ये **एतस्ये**त्यस्य स्वरसन्धिप्रकरणविषयत्वेन ज्ञापनस्येत्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**इति**—इत्याशयेन ।

**( लाघवप्रदर्शनभाष्यम् )**

**अप्लुतादप्लुत इत्येतन्न वक्तव्यं भवति ॥**

**( प्रदीपः )** इतो लाघवं दर्शयति—**अप्लुतादिति** । सिद्धे हि प्लुतेऽ**स्तोतीति** तपरत्वादेवोत्वाप्रसङ्गः ॥

**( तत्त्वालोकः )** प्रदीपे—हि—यतः । **इति**—इत्यत्र ।

**( आक्षेपबाधकभाष्यम् )**

**किमतो—यत्सिद्धः प्लुतः स्वरसन्धिषु, संज्ञाविधावसिद्धः । तस्यासिद्धत्वात्तत्काला एव भवन्ति**

**( प्रदीपः ) किमत इति** । यथोद्देशे संज्ञापरिभाषे, प्रगृह्यसंज्ञा स्वरसन्धिप्रकरणमध्यपतिता न भवतीति प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**किमत इति**—स्वरसन्धिषु प्लुतः सिद्धोऽतः किम् ( न किमपि फलम् ) । **यत्**—"यतः" ( स प्रगृह्य- ) संज्ञाविधौ असिद्ध इत्यन्वयः ।

प्रदीपे—**यथोद्देशे इति**—यत इत्यादिः । **प्रगृह्येति**—अत इत्यादिः । **इति**—इति हेतोः ।

**( आक्षेपसाधकभाष्यम् )**

**संज्ञाविधौ च सिद्धः ।**

**कथम् ? ।**

**"कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्, "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति—"ईदूदेद्द्विवचनं प्रगृह्यम्" इति ॥**

**( प्रदीपः ) कार्यकालमिति** । कार्यार्थत्वाद्गुणानां कार्यस्य च प्रधानत्वात् प्रधानदेशत्वस्य न्याय्यत्वादिति भावः ॥

**( उद्द्योतः ) कार्यार्थत्वादिति** । तदेकवाक्यतापन्नं संज्ञासूत्रं तत्प्रकरणस्थमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**कार्यकालमिति**—यत इत्यादिः । **तत्रेति**—संज्ञापरिभाषमिति शेषः । **प्रगृह्य इति**—अत इत्यादिः । **इति**—इत्यत्र ।

प्रदीपे—**गुणानाम्**—अङ्गानाम् । **प्रधानदेशत्वस्येति**—प्रधानदेशकालाश्रयस्येति भावः । तेषामित्यादिः ।

**( आक्षेपबाधकभाष्यम् )**

**किं पुनः प्लुतस्य प्रगृह्यसंज्ञावचने प्रयोजनम् ? ॥**

**( आक्षेपसाधकभाष्यम् )**

**प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

**( तत्त्वालोकः ) स्यादिति**—इतीति शेषः ।

**( आक्षेपबाधकभाष्यम् )**

**मा भूदेवम् । प्लुतः प्रकृत्येत्येवं भविष्यति ॥**

**( तत्त्वालोकः ) एवम्**—प्रगृह्याश्रयः प्रकृतिभावः । ननु तर्हि कथन्तत्रेष्टसिद्धिरित्यत आह—**प्लुत इति** । **एवं**—प्रकृतिभावः ।

**( आक्षेपसाधकभाष्यम् )**

**नैवं शक्यम् । उपस्थिते हि दोषः स्यात् "अप्लुतवदुपस्थिते" इति । अत्र पठिष्यति ह्याचार्यः—*वद्वचनं प्लुतकार्यप्रतिषेधार्थम् । प्लुतप्रतिषेधे हि प्रगृह्यप्लुतप्रतिषेधप्रसङ्गोऽन्येन विहितत्वाद्* इति । तस्मात्प्लुतस्य प्रगृह्यसंज्ञैषितव्या । प्रगृह्याश्रयः प्रकृतिभावो यथा स्यात् ॥**

**( प्रदीपः ) उपस्थिते हीति** । उपस्थितमनार्ष इतिकरणः । अग्नी ३ इतीत्यत्र प्लुताश्रये प्रकृतिभावे प्रतिषिद्धे प्रगृह्याश्रयः प्रकृतिभाव इष्यते । तदाह—**पठिष्यतीति** । यत्र प्रगृह्यसंज्ञा नास्ति, स प्लुताश्रयप्रकृतिभावः प्रतिषेधविषयः—देवदत्ता ३ इति देवदत्तेति ॥

**( उद्द्योतः ) प्रतिषिद्धे इति** । अप्लुतवद्भावेन बाधिते इत्यर्थः ॥ भाष्ये **प्रगृह्यप्लुतप्रतिषेधेति** । प्रगृह्याश्रये प्रकृतिभावे प्लुतप्रतिषेधप्रसङ्ग इत्यर्थः ॥ प्रगृह्याश्रयस्यापि कुतो न निवृत्तिरित्यत आह—**अन्येनेति** । **प्रगृह्यः प्रकृत्ये**त्यनेनेत्यर्थः ॥ नन्वीदृशेऽपि विषये प्रगृह्याश्रयप्रकृतिभावे सति प्लुताश्रयप्रकृतिभावप्रतिषेधोऽप्लुतवदिति बोधितो व्यर्थ इत्यत आह—**यत्रेति** ॥

**( तत्त्वालोकः )** भाष्ये—**एवं**—तत्र "प्लुतः प्रकृत्ये"ति प्रकृतिभावेन निर्वोढुम् । **उपस्थिते**—इति शब्दे परतः । **हि**—यतः । एवमग्रेऽपि । **आचार्यः**—वार्त्तिककारः । अप्लुतवदित्यनेन शब्दमर्यादया अप्लुतसादृश्यविधेरेव लाभेन प्लुतकार्यप्रतिषेधविधेरलाभात् फलितार्थमाह—**प्लुतकार्येति** । ननु प्लुतकार्यप्रतिषेधाय प्लुत एव प्रतिषिध्यतामलं वतिप्रयोगेणेत्यत आह—**प्लुतप्रतिषेधे इति** । प्लुतस्थाने अप्लुतस्य विधानेन प्लुतनिवृत्ताविर्त्यर्थः । **प्रगृह्येति**—भाविप्रगृह्यसंज्ञकेत्यर्थः ।

प्रदीपे—**दृश्यते इति—**स प्लुतस्य प्रगृह्यसंज्ञाया अभावे नोपपद्येतेति शेषः। **सः—**तत्रत्यः।

उद्द्योते—**प्रसङ्ग इति—**तथा च तत्रेष्टं त्रिमात्रस्य श्रवणं नोपपद्येत, प्रत्युतानिष्टं द्विमात्रस्य श्रवणमापद्येतेति भावः। **प्रगृह्याश्रयस्यापीति—**ननु प्लुताश्रयप्रगृह्याश्रयप्रकृतिभावयोः विधायकसूत्रस्यैकत्वात् अप्लुतवद्भावेन प्लुताश्रयप्रकृतिभावस्येवेत्यादिः। प्रकृतिभावस्येति शेषः। **अन्येनेतीति—**एकत्र प्लुतत्वमात्रस्योद्देश्यतावच्छेदकतया, अपरत्र प्रगृह्यत्वविशिष्टप्लुतत्वस्योद्देश्यतावच्छेदकतया च तयोः विधायकसूत्रे भेदान्न दोष इति भावः।

**( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )**

**यदि पुनर्दीर्घाणामतपराणां प्रगृह्यसंज्ञोच्येत, एवमप्येकार एव एकः सवर्णान्गृह्णीयाद्, ईकारोकारौ न गृह्णीयाताम् ?।**

**किं कारणम् ?।**

**अनण्त्वात् ॥**

**( प्रदीपः ) यदि पुनरिति ॥** ननु व्यक्तिपक्षाश्रयणात् प्लुतानां न सिध्यति, न पुनस्तपरत्वात् ॥ अयमत्राशयः—आकृतिपक्ष आश्रयिष्यते दीर्घोच्चारणप्रयत्नाधिक्याद् ह्रस्वानां न भविष्यति प्लुतानां तु प्रवर्तिष्यते॥ **एवमपीति ।** अयं भावः—आकृतिपक्षे यथा ह्रस्वानां प्रयत्नाधिक्यान्न भवति, तथा दीर्घोच्चारणसामर्थ्याद्विशिष्टव्यक्तिस्थैवाकृतिर्गृह्यत इति प्लुतानां न स्यात्। यथा स्थूलं गामानयेत्युक्ते न कृशस्यानयनं भवतीति आकृतिपक्षेऽपि विशिष्टैवाकृतिर्दीर्घा व्यक्तिर्गृह्यते। तथा चानण्त्वादीदूतौ ग्राहकौ न स्याताम् ॥

**( उद्द्योतः ) न पुनस्तपरत्वादिति ।** तद्वक्ष्यति भाष्ये—**"दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोतीति" ॥ प्लुतानां त्विति ।** तपरत्वाभावे इत्यर्थः। तपरत्वे तु **तपर**सूत्रस्य जातिपक्षेऽनण्यपि नियमार्थत्वान्न स्यादिति भावः ॥ ईत्वादि इत्यादनतिरिक्तं मन्यते॥ **आकृतिरिति ।** विना व्यक्त्युच्चारणं जातिनिर्देशाभावादवश्यं व्यक्तावुच्चारणीयायां लाघवाय ह्रस्व एव प्रयोक्तव्ये गुरुदीर्घोच्चारणेन तद्व्यक्तेरुपलक्षणत्वं विहाय विशेषणत्वस्यैवाश्रयणाद्विशिष्टव्यक्तिस्थैव जातिर्गृह्यत इति न्यूनकालव्यक्तिगताया इवाधिककालव्यक्तिगताया अपि न ग्रहणमिति भावः ॥ भिन्नभिन्नव्याप्यजातिस्वीकारे तु निर्दिष्टव्याप्यजातेः प्लुतेऽभाव एवेत्यपि बोध्यम्। एत्वजातेस्तु प्लुते सत्त्वात्तेन प्लुतग्रहणं भवत्येव। ततो लघुव्यक्तेरभावाच्च॥ नन्वेवं भाष्येऽनण्त्वादिति हेतुरसङ्गतोऽत आह—**आकृतिपक्षेऽपीति ।** ईदृशे विषये तत्तदित्वादिजातिविशिष्टा व्यक्तिरेव गृह्यत इत्यर्थः ॥ जातिप्राधान्ये फलाभावाद् व्यक्तिद्वारा कार्यसंबन्धाश्रयणे गौरवाच्च तस्यायुक्तत्वाच्च। तद्विशिष्टव्यक्तिग्रहणेऽप्यण्त्वाभावान्न तौ ग्राहकाविति भावः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी तटस्थेनोत्थाप्यां शङ्कां स्वयं सम्भाव्य निराकरोति—**यदि पुनरिति ।** एवमग्रेऽपि। **एक इति—**अण्त्वादिति शेषः।

प्रदीपे—भाष्य "स्यातपराणामि" त्यस्य वैयर्थ्यं शङ्कते- **नन्विति। प्रवर्तिष्यते इति—**तत्र प्रयत्नाधिक्याभावादित्याशयः। **इति—**इति हेतोः। ह्रस्वांशे दृष्टान्तमाह- **यथा स्थूलमिति। इति**-इति हेतोः।

उद्द्योते—**तत्**-तस्मात्। **अपिनाऽण्संग्रहः। न स्यादिति—**प्लुतानामित्यादिः। तथा च भाष्ये अतपराणामित्यस्य साफल्यमिति भावः। ननु जातिपक्षेऽतपरत्वे चापि व्यापकजातिनिर्देशस्य दुर्वचतया व्याप्यजातीनां भेदात् कथं प्लुतसंग्रहः किमर्थं च दीर्घोच्चारणप्रयत्नाधिक्यात् ह्रस्ववारणमित्यत आह- **ईत्वादीति ।** दीर्घमात्रसमवेतेत्वादिजातिः ह्रस्वमात्रसमवेतेत्वादिजात्यभिन्नेत्यर्थः। **तद्व्यक्तेरिति—**दीर्घव्यक्तेरित्यर्थः। जात्यंशे इति शेषः। **विशिष्टेति—**दीर्घत्वविशिष्टेत्यर्थः। **इति**-इति हेतोः। **एव**त्याद्यत्र्यजाती आह- **न्यूनकालेति।** ह्रस्वेत्यर्थः। **गताया इति—**जातेरिति शेषः। एवमग्रेऽपि। **अधिककालेति—**प्लुतेत्यर्थः। **मन्यते**पदमुचितामरुचिमाह- **भिन्नभिन्नेति। निर्दिष्टेति—**ईत्वादिरूपाया इत्यादिः। तथा च जातिपक्षेऽपि प्लुतासंग्रहरूपदोषो वर्तत एवेति भावः। नन्वेव**मेकार एवे**त्यस्य कथमुपपत्तिरित्यत आह- **एत्वजातेरिति । तेन** एकारेण। उक्तयुक्तेरप्यभावमाह- **तत इति।** उक्तप्रकारेण वारणे तात्पर्यमाह- **जातिप्राधान्ये इति।** व्यक्त्यपेक्षयेत्यादिः। **व्यक्तीति—**जातेरित्यादिः। **तस्य**-जातेः कार्यसम्बन्धस्य। **तौ**-ईकारोकारौ।

**( आक्षेपबाधकरीत्यन्तरनिराकरणभाष्यम् )**

**यदि पुनर्ह्रस्वानामतपराणां प्रगृह्यसंज्ञोच्यते ॥**

**नैवं शक्यम् । इहापि प्रसज्येत—अकुर्वहि अत्र अकुर्वह्यत्रेति ॥**

**( प्रदीपः ) यदि पुनरिति ।** ह्रस्वसाहचर्यादेकारोऽपि ह्रस्वशब्देनाभिधीयत इति ह्रस्वानामिति बहुवचनम्। तत्र ह्रस्वनिर्देशेऽण्त्वादाकृतिपक्षे वा यत्नाधिक्याभावाद् भिन्नकालानां ग्रहणं सिध्यतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एवं**-ह्रस्वानामतपराणां प्रगृह्यत्वं वक्तुम्। इकारांशमात्रे दोषमाह- **इहेति**-यतः तथा सति सेत्यादिः।

प्रदीपे—**इति**-इति हेतोः। **इति**-इत्यत्र। **तत्र**-अतपरे। तपरे तन्निर्देशे तु दीर्घादीनां ग्रहणं न स्यादिति भावः।

**( आक्षेपोपसंहारभाष्यम् )**

**तस्माद्दीर्घाणामेव तपराणां प्रगृह्यसंज्ञा वक्तव्या। दीर्घाणां चोच्यमाना प्लुतानां न प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये **तस्माद्दीर्घाणामेव तपराणामिति ।** गुणान्तरयुक्तसङ्ग्रहायासन्देहाय चेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी स्वाक्षेपमुपसंहरति- **तस्मादिति।**

उद्द्योते—दीर्घोपादानफलस्योक्तत्वात्तपरकरणफलमाह - **गुणान्तरेति ।** तस्य गुणा अभेदका इति पक्षे जातिपक्षे वा सिद्धत्वादाह- **असन्देहेति ।** अन्यथा यणादौ कृतेऽत्र कस्य निर्देश इति संशयो जायेतेति भावः॥ व्यक्तिः पदार्थो, गुणाश्च भेदका इति ( तपरकरणस्य गुणान्तरसंग्रहार्थतोपपादके ) पक्षेऽपि तपरसूत्रे तपर इत्यत्र बहुव्रीहिसमासमात्रपक्षे एतः, पञ्चमीसमासस्याप्यभ्युपगमे तु ऊदेतोश्च तपरकरणमसन्देहार्थमेवेत्याशयः।

**( समाधानभाष्यम् )**

**एवं तर्हि किं न एतेन यत्नेन-यत्—'सिद्धः प्लुतः स्वरसंधिषु' इति । असिद्धः प्लुतः। तस्यासिद्धत्वात्तत्काला एव भवन्तीति ॥**

**( तत्त्वालोकः )** सिद्धान्ती उत्तरयति- **एवमिति। किमिति—**न किमपि प्रयोजनमिति भावः। **नः—**अस्माकम्।

**( आक्षेपभाष्यम् )**

**कथं यत्तज्ज्ञापकमुक्तम्—"प्लुतप्रगृह्या अचि" इति ? ॥**

**( तत्त्वालोकः )** तटस्थः पृच्छति-**कथमिति** । तर्हीत्यादिः । तथा च तर्हि यत् "प्लुतप्रगृह्या अची"ति ज्ञापकमुक्तं तत् कथम् ( चरितार्थम् ) इत्यर्थः ॥

**( समाधानभाष्यम् )**

**प्लुतभावी प्रकृत्येत्येवमेतद्विज्ञायते ॥**

**( प्रदीपः ) प्लुतभावीति** । प्लुतो भावी यस्य सः प्लुतभावी स्थानी प्रकृतस्तस्यैव प्रकृतिभावः ॥ ननु प्लुतस्यासिद्धत्वात्स्थान्यपि प्लुतभावित्वात् प्लुतव्यपदेशं कथं लभते ? ॥ नैष दोषः । प्लुतो ह्यस्य भावीति बुद्ध्या प्रकल्पनमेतत् । न च तत्र प्लुतस्यासिद्धत्वम्, अन्यथा प्लुतोऽसिद्ध इत्ययमपि व्यवहारो न स्यात् ॥

**( उद्द्योतः )** कर्मधारयभ्रमं व्युदस्यति—**प्लुतो भावीति** ॥ यद्यप्याश्रयात्सिद्धत्वेनापि सिध्यति; तथापि शास्त्रबाधापेक्षया लक्षणाश्रयणमुचितमिति भाष्याभिप्रायः ॥ **प्रकृत इति** । प्लुतशब्देन बोधित इत्यर्थः । **बुद्ध्येति** । शास्त्रीये कार्येऽसिद्धत्वम्, नचायं व्यवहारः शास्त्रीयं कार्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती तस्य सार्थक्यं दर्शयति-**प्लुतभावीति** ।

प्रदीपे—**हि**-यतः । **न च**-नहि । **तत्र**-बौद्धे प्रकल्पने ।

उद्द्योते—**यद्यपीति**-प्लुतस्येति शेषः । **सिध्यतीति**-प्रकृतिभाव इत्यादिः । **लक्षणेति**-प्लुतशब्दस्य प्लुतभाविनीत्यादिः । **अयं**-बौद्धप्रकल्पनरूपः ।

**( आक्षेपभाष्यम् )**

**कथं यत्तत्प्रयोजनमुक्तम् ? ।**

**( तत्त्वालोकः )** तटस्थः पृच्छति-**कथमिति** । तर्हीत्यादिः । तथा च तर्हि यत् ( ज्ञापनस्य "अप्लुतादप्लुते" इत्यकरणजं लाघवरूपं ) प्रयोजनमुक्तं तत् कथम् ( उपपद्यते ) इत्यर्थः ।

**( समाधानभाष्यम् )**

**क्रियते तन्न्यास एव—"अप्लुतादप्लुते" इति ॥**

**( तत्त्वालोकः )** सिद्धान्ती तत् परिहरति-**क्रियते इति** । अत्रैव एवस्यान्वयः ।

**( आक्षेपभाष्यम् )**

**एवमपि यत्सिद्धे प्रगृह्यकार्यं तत्प्लुतस्य न प्राप्नोति—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥**

**( प्रदीपः )** कार्यकालपक्षमाश्रित्याह—**एवमपीति** । ततश्चाग्नी ३ इत्यत्र**अप्रगृह्यस्ये**त्यनुनासिकप्रतिषेधे क्रियमाणे प्लुतस्य सिद्धत्वात्प्रगृह्यत्वाभावादनुनासिकः स्यात् ॥

**( उद्द्योतः ) कार्यकालपक्षमाश्रित्येति** । अयं भावः—तत्र पक्षे संज्ञाशास्त्राणां न पृथग्बोधकत्वम् । **पूर्वत्रासिद्ध**मिति चातिदेशः कार्यार्थः । कार्यज्ञानं च वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च **पूर्वत्रासिद्ध**मित्यस्याधिकारत्वेन पूर्वत्रेदमसिद्धमिति तदर्थः । तत्र कार्यकालपक्षे तत्तद्देशोपस्थितसंज्ञापरिभाषाणामप्यसिद्धत्वबोधनम् । एवं च प्लुतदृष्ट्याऽनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नस्यास्यापि तद्दृष्ट्याऽसिद्धत्वेन प्लुतशास्त्रेऽनुवृत्तपूर्वत्रासिद्धमित्यत्र पूर्वग्रहणेन **ईदूदेद्**, **अदसो मा**दित्यस्य ग्रहीतुमशक्यत्वमिति ॥ यथोद्देशे तु स्वातन्त्र्येण संज्ञादीनां कार्यबोधकत्वात्तत्प्रति प्लुतासिद्धत्वबोधनं शक्यमेव ॥ एतेन कार्यकालपक्षेऽपि पाठक्रतपूर्वत्वाक्षतिरित्यपास्तम् ॥ भाष्ये—**यत्सिद्धे प्रगृह्येति** । प्लुते सिद्धकाण्डस्थे यत्प्रगृह्यकार्यमित्यर्थः । यत्प्रगृह्यकार्यदृष्ट्या प्लुतः सिद्धस्तदिति यावत् ॥

**( तत्त्वालोकः )** भाष्ये-तटस्थः पृच्छति-**एवमपीति** । पूर्वपक्ष्युक्तज्ञापकप्रयोजन निराकरणेऽपीत्यर्थः ।

प्रदीपे—**इष्टापत्तौ** दूषणमाह-**ततश्चेति** । ननु संज्ञायाः कार्यार्थत्वादनुनासिकस्य च प्रगृह्यसंज्ञाऽकार्यत्वात्कथं तत्र संज्ञोपस्थितिरित्यत आह-**प्रतिषेधे इति** । एवञ्च नायं पर्युदासः, किन्तु प्रसज्यप्रतिषेध इत्याशयः ।

उद्द्योते—**तत्र पक्षे**-कार्यकालपक्षे । परिभाषाशास्त्रतो विशेषमाह-**संज्ञाशास्त्रेति** । **पृथगिति**-स्वदेशे इत्यर्थः । **बोधकत्वमिति**-अपि तु प्रदेशवाक्येन सहैव वाक्यैकवाक्यतयेति शेषः । तदेव प्रतिपादयति-**पूर्वत्रेति** । **इति**-इति हेतोः । **तस्य**-"पूर्वत्रासिद्धमि"-त्यस्य । **तत्र**-तथा सति । **अस्यापि**-प्रगृह्यसंज्ञाशास्त्रस्यापि । **ईदूदेदिति**-इत्यस्येति शेषः । **इत्यस्य**-इत्यस्य च । **इतिः**-भावसमाप्तौ । यथोद्देशपक्षानाश्रयणे बीजमाह-**यथोद्देशे इति** । **कार्येति**-संज्ञादिरूपकार्येत्यर्थः । **तत्प्रति**-प्रगृह्यसंज्ञाशास्त्रम्प्रति । **एतेन**-उक्तप्रकारेण । **काण्डस्थे इति**-सतीति शेषः ।

**( समाधानभाष्यम् )**

**एवं तर्हि किं न एतेन यत्नेन—'कार्यकालं संज्ञापरिभाषम्'-इति । यथोद्देशमेव संज्ञापरिभाषम् । अत्र चासावसिद्धः । तस्यासिद्धत्वात्तत्काला एव भवन्ति ॥**

**( प्रदीपः )** यथोद्देशपक्षाश्रयेण परिहारः—कथं पुनरयं पक्षो, यावता कार्यार्थत्वात्संज्ञापरिभाषस्य कार्यकालतैव न्याय्या ॥ नैष दोषः । यदाऽनुद्दिश्य प्रयोजनविशेषं प्रयोजनमात्रमभिसन्धाय भविष्यति किंचिदनेन प्रयोजनमिति संज्ञापरिभाषं प्रणीयते, तदा संभवत्येवायं पक्षो यथाश्रुतग्राहिप्रतिपत्त्रपेक्षः । महावाक्यार्थपर्यालोचनप्रवृत्तप्रतिपत्त्रपेक्षस्तु कार्यकालपक्षः ॥

**( उद्द्योतः ) यथोद्देशेति** ॥ नन्वत्र पक्षेऽग्नी ३ इत्यादौ प्लुतस्यासिद्धत्वेन ततः प्रागेव प्लुताभावपक्षेऽनुनासिकप्रतिबन्धेन फलवत्यां संज्ञायां ततः प्लुते तं द्विमात्रत्वेन पश्यन्त्या अपि संज्ञायाः पुनः प्रवृत्तौ बीजाभावादल्विधित्वेन स्थानिवत्त्वाभावाच्चाप्रगृह्यत्वेनानुनासिकः स्यादिति चेन्न । संज्ञायाः कार्यार्थतया पुनः प्रवृत्तौ कार्यसिद्धिरूपबीजस्य सत्त्वेन पुनस्तस्याः सुलभत्वात् । एतदेव ध्वनयता **प्लुतस्यासिद्धत्वात्तत्काला एव भवन्ती**त्येवकारः प्रयुक्तः । **प्लुता**त्प्राक् संज्ञायां च तत्काला एवेति तदर्थ इत्यलम् ॥ **प्रणीयते** बोध्यते ॥

**( तत्त्वालोकः )** भाष्ये-सिद्धान्ती समाधत्ते-**एवमिति** । **असौ**-प्लुतः ।

प्रदीपे—**परिहारः**-एवं तर्हीत्यादिः । **अयं पक्षः**-यथोद्देशपक्षः । एवमग्रेऽपि । **यावता**-यतः । प्रयोजनविशेषमनुद्दिश्येत्येव व्याचष्टे-**प्रयोजनमात्रमिति** । **इति-इति** रीत्या । एवं च प्रतिपत्तृभेदेन पक्षद्वयोपपत्तिरित्याशयः । तत्र कार्यकालपक्षस्य मुख्यत्वं यथोद्देशपक्षस्य गौणत्वमिति परे ।

उद्द्योते—**अत्र पक्षे**-यथोद्देशपक्षे । **प्लुतस्य**-प्लुतशास्त्रस्य । **ततः** प्लुतशास्त्रप्रवृत्तेः । **संज्ञायां**-प्रगृह्यसंज्ञायाम् । **तमिति**-प्लुत-

मित्यर्थः। प्रागुक्तप्रकारेणेति भावः। **बीजाभावात्**-कार्यनैरपेक्ष्येण प्रवृत्तिरूपस्य, उक्तरीत्या सामर्थ्यरूपस्य च बीजस्याभावात्। **तस्याः**- प्रगृह्यसंज्ञाप्रवृत्तेः। अत्र मानमाह-**एतदिति**। **एवेन** फलान्तरव्यावृत्तिः। **ध्वनयता**-भाष्यकृता। **इति**-इत्यत्र। तथा च न प्लुतासंग्रहरूपो दोष इति भावः।

( इति तपरप्रयोजननिरूपणम् )

---

( अथ द्विवचनविशेषणताविचारभाष्यम् )

**कथं पुनरिदं विज्ञायते—ईदादयो यद् द्विवचनम्, आहोस्विदीदाद्यन्तं यद्द्विवचनमिति ॥**

**( प्रदीपः ) कथं पुनरिति**। ईदादयो यदि संज्ञिनस्तद्विशेषणं तु द्विवचनं तदा द्विवचनान्तत्वमीदादीनां न संभवतीति द्विवचनानामेवेदादीनां संज्ञया भाव्यम्। अथ द्विवचनं संज्ञि तद्विशेषणमीदादयस्तदा तदन्तविधिरप्रधानेन प्रधानस्येतीदाद्यन्तं द्विवचनमिति पक्षः॥ तत्रोभयोरपि पक्षयोर्दोषदर्शनात्प्रश्नः॥

**( उद्द्योतः ) ईदादय इति**। प्राथम्याददसो मादित्यनेनैकरूप्याच्चेति भावः॥ **तदेति**। अन्तशब्दोऽवयववचनस्तदन्तस्येति बहुव्रीहिश्चेत्यर्थः॥ **अथेति**। संज्ञाया आनन्तर्याद्येन **विधिरि**त्यस्यानुग्रहाच्चेति भावः॥

**( तत्त्वालोकः )** भाष्ये—**द्विवचनं**-द्विवचनमिति।

प्रदीपे—**तदिति**-ईदादीत्यर्थः। **इति**-इति हेतोः। एवमग्रेऽपि। **तदिति**-द्विवचनेत्यर्थः। **प्रधानस्येति**-तदन्तविधिना बोधनादिति शेषः। **तत्र**-तयोः।

उद्द्योते—**प्राथम्यादिति**-तेषां द्विवचनापेक्षयेत्यादिः। प्रकृतसूत्रस्येति शेषः। नन्वन्तशब्दस्य समीपवचनत्वे "तदन्तस्ये"त्यत्र तत्पुरुषे च तेषां द्विवचनान्तत्वं सम्भवत्येवेत्यत आह-**अन्तशब्द इति**। **इति**-इत्यत्र। **संज्ञाया इति**-द्विवचने इत्यादिः।

( विशेषजिज्ञासाभाष्यम् )

**कश्चात्र विशेषः ?।**

**(तत्त्वालोकः)** तटस्थः पृच्छति-**कश्चेति**। **अत्र**-अनयोः पक्षयोः।

( १५० प्रथमपक्षे दोषप्रदर्शकवार्तिकम् ॥ २ ॥ )

## ॥ ※ ॥ ईदादयो द्विवचनं प्रगृह्या इति चेदन्त्यस्य विधिः ॥ ※ ॥

( भाष्यम् )

**ईदादयो द्विवचनं प्रगृह्या इति चेद् अन्त्यस्य प्रगृह्यसंज्ञा विधेया-पचेते इति, पचेथे इति ॥**

**( प्रदीपः ) पचेते इति**। एकारोऽत्र द्विवचनं न भवति, अपि तु तस्यान्तः॥

**( उद्द्योतः )** भाष्ये **अन्त्यस्येति**। द्विवचनान्त्यस्य वर्णस्येत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये-पूर्वपक्षी उत्तरयति-**ईदादय इति**। **चेदिति**-तर्हीति शेषः।

प्रदीपे—**तस्य**-द्विवचनस्य।

( दूषणबाधकभाष्यम् )

**वचनाद्भविष्यति ॥**

**( प्रदीपः ) वचनादिति**। द्विवचनावयवे द्विवचनशब्दो वर्तिष्यत इत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—तटस्थः तत् खण्डयति-**वचनादिति**। वचनसामर्थ्यादित्यर्थः।

प्रदीपे—**द्विवचनावयवे इति**-द्विवचनान्त्ये इत्यर्थः। वचनसामर्थ्याल्लक्षणयेत्यादिः।

( दूषणसाधकभाष्यम् )

**अस्ति वचने प्रयोजनम् ॥**

**किम् ?।**

**खट्वे इति, माले इति ॥**

**( प्रदीपः ) अस्तीति**। मुख्ये सम्भवति गौणस्य ग्रहणमन्याय्यमित्यर्थः॥ **खट्वे इतीति**। **अन्तादिवच्चे**त्यादिवद्भावादेकारो द्विवचनम्॥

**( उद्द्योतः ) गौणस्येति**। जघन्यत्वसामान्याल्लाक्षणिकमपि गौणपदेन गृह्यत इति भावः॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी तत् मण्डयति-**अस्तीति**।

उद्द्योते—तत्र गौणपदं सङ्गमयति-**जघन्यत्वेति**। प्रकृते इति शेषः। तथा चात्र न गौणमुख्यन्यायसञ्चारः, किन्तु मुख्यार्थबाधरूपलक्षणाबीजाभावान्न लक्षणेत्याशयः।

( दूषणबाधकद्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि—ईदाद्यन्तं यद्द्विवचनम्-इति।**

( १५१ द्वितीयपक्षे दूषणवार्तिकम् ॥ ३ ॥ )

## ॥ ※ ॥ ईदाद्यन्तमिति चेदेकस्य विधिः ॥ ※ ॥

( भाष्यम् )

**इदाद्यन्तं द्विवचनमिति चेदेकस्य प्रगृह्यसंज्ञा विधेया-खट्वे इति, माले इति ॥**

**( प्रदीपः ) एकस्येति**। असहायस्येत्यर्थः। ईदूतोः केवलयोरेव संभव इति वचनसामर्थ्यात्तयोरेव सिध्यति, एकारान्तस्य तु द्विवचनस्य पचते इत्यादौ संभवात्खट्वे इत्यत्र न सिध्यतीति दोषः॥ **येन विधिस्तदन्तस्ये**त्यत्र **स्वस्य च रूपस्ये**ति नाश्रितमिति दोषोपन्यासः॥

**( उद्द्योतः )** प्रथमोपस्थितेदूतोरित्यागेन एकारान्तोदाहरणदाने बीजमाह—**ईदूतोरिति** ॥ **नाश्रितमिति**। वार्तिककृतेति शेषः॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**-तर्हीति शेषः।

प्रदीपे—**केवलयोरेवेति**-द्विवचनयोरिति शेषः। **एवेन**-ईदूदन्तद्विवचनव्यावृत्तिः। **इति**-इति हेतोः। **सम्भवादिति**-तत्र वचनस्य सार्थक्यादिति भावः। **इत्यत्रेति**-केवलैकारस्य द्विवचनस्येति शेषः। **इति दोषोपन्यासः**-इति हेतोः दोषोपन्यासः।

उद्द्योते—तस्य (सिद्धान्तिना) भाष्यकृताश्रितत्वादाह-**वार्तिककृतेति**। वार्तिककृदेकदेशिनेत्यर्थः। सिद्धान्तिना वार्तिककृताऽपि **तस्य चे**त्यस्य प्रतिपादितत्वात्।

( १५२ द्वितीयपक्षे समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वाद्यन्तवत्त्वात् ॥ * ॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ? ॥

आद्यन्तवत्त्वात् । आद्यन्तवदेकस्मिन्कार्यं भवतीत्येवमेकस्यापि भविष्यति ॥

( पक्षान्तराभ्युपगमभाष्यम् )

अथवा एवं वक्ष्यामि-ईदाद्यन्तं यद् द्विवचनान्तम्-इति ॥

( प्रदीपः ) अथवेति । प्रत्ययग्रहणे यस्मादिति द्विवचनेन तदन्तविधिः, पश्चाद् द्विवचनान्तमीदादिभिर्विशेष्यत इत्ययं तृतीयः पक्षो भवति—ईदाद्यन्तं यद्द्विवचनान्तमिति ॥ ननु संज्ञाविधौ प्रत्ययग्रहणेन तदन्तविध्यभावः सुप्तिङन्तं पदमित्यत्रान्तग्रहणेन ज्ञापित इति कथमेतत्पक्षोपपत्तिः । चतुर्थपक्षप्रतिक्षेपाय वक्ष्यत्येवैतद्भाष्यकार इति नैतदपूर्वं चोद्यम् ॥

( उद्द्योतः ) तदन्तविधिरिति । अस्मादेव वचनाच्छब्दस्वरूपं विशेष्यमादायेति भावः ॥ इत्ययं तृतीयः पक्ष इति । व्यपदेशिवद्भावानाश्रयणमस्य बीजम् ॥

( तत्त्वालोकः ) प्रदीपे—इति-इति परिभाषया । इति-इति हेतोः । एवमग्रेऽपि । एतत्पक्षेति-एतत्तृतीयपक्षेत्यर्थः । चतुर्थपक्षेति-ईदाद्यन्तं यद् द्विवचनं तदन्तमीदाद्यन्तमिति चतुर्थपक्षेत्यर्थः । एतत्-संज्ञाविधावित्यादि । चोद्यम्—प्रतिपाद्यम् ।

उद्द्योते—अस्मादिति-अन्तरङ्गत्वादित्याशयः । शब्दानुशासनप्रस्तावादाह-शब्दस्वरूपमिति । व्यपदेशिवदिति-अत्रेत्यादिः । अस्य-तृतीयपक्षाश्रयणस्य । तथा च द्वितीयपक्षे ( दोषवारणाय )तदाश्रयणं तत्परित्यागस्य बीजमित्याशयः ।

( १५३ आक्षेपवार्तिकम् ॥ ५ ॥ )

॥ * ॥ ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः ॥ * ॥

( भाष्यम् )

ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधो वक्तव्यः । कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । एतद्धीदाद्यन्तं श्रूयते, द्विवचनान्तं च भवति प्रत्ययलक्षणेन ॥

( प्रदीपः ) दोषान्तरेणेमं पक्षं निराकर्तुमाह—लुकि प्रतिषेध इति । दोषसद्भावेनैवास्य पक्षस्य निराकरणात्तदन्तविध्यभावोऽत्र नोक्तः । कुमार्यगारमिति ॥ कथं पुनरस्य द्विवचनान्तस्य समासो, यावता वृत्तौ संख्याविशेषो न गम्यते ॥ नैष दोषः । यथा तावकीन इत्यादावादेशेन संख्याविशेषो व्यज्यते तथेहापि सत्यां प्रगृह्यसंज्ञायां प्रकृतिभावेन द्वित्वं व्यज्येतेति दोषोपन्यासः ॥

( उद्द्योतः ) तदन्तविध्यभावोऽत्र नोक्त इति । ईदादिभिः श्रूयमाणत्वेन द्विवचनविशेषणमेव न्याय्यमित्येतत्पक्षासंभवरूपो दोषो नोक्त इत्यपि बोध्यम् ॥ आदेशेनेति । एकार्थयुष्मदादेर्विहितेन तवकाद्यादेशेनेत्यर्थः ॥ प्रकृतिभावेनेति । अन्यथाऽनुपपद्यमानेनेत्यर्थः । एवं हि सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वापत्तिः । असाधुप्रयोगे च भगवतोऽश्रद्धेयतापत्तिः । अतः पूर्वपदार्थानवच्छेदकरूपेणैव बोधो न तु सङ्ख्यावत्त्वेनेत्येव भाष्यसंमतम् । अतो वृत्तौ सङ्ख्यानवगमेऽप्यनेकार्थप्रतीत्या तथाविग्रहे बाधकाभाव इति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—चेदिति-तर्हीति शेषः । प्रतिषेध इति-प्रगृह्यसंज्ञाया इत्यादिः । हि—यतः ।

प्रदीपे—दोषान्तरेण-प्रथमद्वितीयपक्षोक्तदोषान्यदोषेण असाधारणेन वक्ष्यमाणेन । इमं पक्षं-तृतीयपक्षम् । दोषेति-लक्ष्यासिद्धिरूपदोषेत्यर्थः । अभावः-अभावरूपो दोषः । अत्र-अत्र पक्षे । अस्य-कुमार्योरित्यस्य । यावता-यतः । संख्याविशेषः-एकत्वादिसंख्याविशेषः । नन्वेवम् एकवचनान्तेनापि समासो न स्यादिति चेन्न, एकत्वाभावेऽपि एकवचनस्य प्रवृत्तेः सर्वसम्मतत्वात् । इहापि-कुमार्यगारमित्यत्रापि ।

उद्द्योते—कैयटीयन्यूनतां निराकरोति-ईदादिभिरिति । द्विवचनविशेषणम्-द्विवचनस्य विशेष्यीकरणम् । न्याय्यमिति-श्रुतस्य श्रुतेनैव सम्बन्धो न्याय्य इति नियमादिति भावः । इति-इति हेतोः जायमानः । अन्यथा-द्विवचनान्तसमासाभावे । कैयटोक्तं दूषयति-एवमिति । व्यञ्जकेति-प्रकृतिभावेति शेषः । अस्य-कुमार्योरगारमिति व्युत्पत्तौ जायमानस्य कुमार्यगारमित्यस्य । तथा विग्रहे-कुमार्योरगारमिति विग्रहे ।

( १५४ समाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ सप्तम्यामर्थग्रहणं ज्ञापकं प्रत्ययलक्षणप्रतिषेधस्य ॥ * ॥

( भाष्यम् )

यदयम् 'ईदूतौ च सप्तम्यर्थे' इत्यर्थग्रहणं करोति, तज्ज्ञापयत्याचार्यो न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवतीति ॥

( प्रदीपः ) सप्तम्यामिति । ईदूतौ सप्तम इत्येव तदन्तविधौ सति प्रत्ययलक्षणेन सोमो गौरी अधिश्रित इत्यादौ सिद्धायां प्रगृह्यसंज्ञायामर्थग्रहणं ज्ञापयति—प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणं न भवतीति ॥

( तत्त्वालोकः ) भाष्ये—तृतीयपक्षोक्तदोषं निराकरोति-सप्तम्यामिति । सप्तमीपदघटिते "ईदूतौ च सप्तम्यर्थे" इति सूत्रे । यत्-यस्मात् । इति-इत्यत्र । तत्-तस्मात् ।

प्रदीपे—प्रगृह्यसंज्ञायामित्यस्य विशेषपरत्वनिराकरणायाह-प्रगृह्यसंज्ञाप्रकरणे इति । तथा च लुकि प्रगृह्यसंज्ञायाः प्रतिषेधो न वक्तव्य इति भावः ।

( आक्षेपभाष्यम् )

तत्तर्हि ज्ञापकार्थमर्थग्रहणं कर्तव्यम् ॥

( प्रदीपः ) तत्तर्हीति । आद्यन्तवद्भावानाश्रयणाय तृतीयः पक्षः परिगृहीतः । तत्र च दोषप्रतिविधानार्थमधिकमर्थग्रहणं ज्ञापकार्थं कर्तव्यं भवतीति सुतरां गौरवं भवतीत्यर्थः ॥

**( उद्द्योतः ) सुतरामिति ।** अकरणात्करणं गुरु तस्य च ज्ञापकत्वेनाश्रयणमिति सुतरां गौरवमित्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**आद्यन्तवद्भावानाश्रयणाय**-द्वितीयपक्षे आद्यन्तवद्भावाश्रयणप्रयुक्तगौरवमवलोक्य, तदाश्रयणप्रयुक्तगौरवाभावाय । **तत्र चेति**-तत्रापीत्यर्थः । अस्य गौरवेऽप्यन्वयः । **प्रतिविधानेति**-निराकरणेत्यर्थः ।

उद्द्योते—**तस्य च**-कृतस्य च ।

## ( समाधानभाष्यम् )

**न कर्तव्यम् । ईदादिभिर्द्विवचनं विशेषयिष्यामः, ईदादिविशिष्टेन च द्विवचनेन तदन्तविधिर्भविष्यति—ईदाद्यन्तं यद् द्विवचनं तदन्तमीदाद्यन्तम्—इति ॥**

**( प्रदीपः ) ईदादिभिरिति ।** अत्र पक्षे कुमार्यगारमित्यत्राप्रसङ्गः । न ह्यत्रेदूदेदन्तं द्विवचनम् , किं तर्हि ? ओसिति सकारान्तम् ॥ **तदन्तमिति** द्विवचनान्तम् ॥ **ईदाद्यन्तमिति ।** ईदादिभिः साक्षात्समुदायस्य संबन्धाभावादीदादिशब्देनेदाद्यन्तमुच्यते तेनेदाद्यन्तान्तमित्यर्थः ॥

**( उद्द्योतः ) ईदादिभिरिति** भाष्ये । श्रुतस्य श्रुतेन संबन्धो न्याय्य इति भावः ॥ **साक्षात्** द्विवचनमनपेक्ष्य ॥ **समुदायस्य** प्रत्ययान्तस्य ॥

**( तत्त्वालोकः )** भाष्ये—तत्र चतुर्थपक्षाभ्युपगमेन कुमार्यगारमित्यत्र दोषनिरासात् तृतीयपक्षः, तत्र दोषवारणाय तादृशज्ञापनार्थमर्थग्रहणञ्च तत्र नाश्रयणीयमित्याशयेनाह—**नेति** । चतुर्थपक्षमेवोपस्थापयति—**ईदादिभिरिति ।** यत इत्यादिः ।

प्रदीपे—**अत्र पक्षे**—चतुर्थपक्षे । **अप्रसङ्ग इति**—प्रगृह्यसंज्ञाया इत्यादिः । **हि**—यतः । **अत्र**—कुमार्यगारमित्यत्र । **तेन**—ईदाद्यन्तेन ( च ) । **ईदाद्यन्तान्तमिति**—उच्यते इत्यनुषज्यते ।

## ( आक्षेपभाष्यम् )

**एवमप्यशुक्ले वस्त्रे शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यत्र प्राप्नोति । अत्र हीदादि च द्विवचनं तदन्तं च भवति प्रत्ययलक्षणेन ॥**

**( प्रदीपः ) शुक्ल्यास्तामिति ।** शुक्लशब्दाद् द्विवचनमौ तस्य **नपुंसकाच्चेति** शीभावः ततश्च्विप्रत्ययः । शीशब्दस्य **सुप** इति लुक् । **अस्य च्वावितीत्वं** । तद्धितान्तत्वात्सुप् । तस्या**व्ययादिति** लुक् । अत्र हि शीशब्द ईकारान्तं द्विवचनम् , तदन्तश्च समुदायः प्रत्ययलक्षणेनेति प्रगृह्यसंज्ञा प्राप्नोति ॥ **अत्र हीदादि च द्विवचनमिति ।** ईदादिशब्देनेदाद्यन्तमुच्यते ॥ क्वचित्तु पाठ **ईदाद्यन्तं च श्रूयत** इति, तत्रैवं व्याख्येयम्—ईदाद्यन्तं च श्रूयते सूत्रे तदन्तविधिरीदादिभिर्द्विवचनस्याश्रीयत इत्यर्थः । यस्त्वय**मस्य च्वावितीकारः**, स द्विवचनस्य न कश्चिदिति न तदभिप्रायेण भाष्यं व्याख्येयम् ॥

**( उद्द्योतः )** नन्वत्र पक्षे न द्विवचनेनेदादि विशेष्यत इति कथ**मीदादि च द्विवचन**मितीत्यत आह—**ईदादीति ।** तदन्तत्वं चास्य व्यपदेशिवद्भावेन बोध्यम् ॥ **श्रूयते सूत्रे इति ।** यच्छ्रूयते सूत्रे द्विवचनं तदीदाद्यन्तमिति **भाष्ये** योजनेत्याशयः ॥

**( तत्त्वालोकः ) भाष्ये**—सिद्धान्ती चतुर्थपक्षमपि खण्डयति—**एवमपीति ।** चतुर्थपक्षाभ्युपगमेऽपीत्यर्थः । **प्राप्नोतीति**—प्रगृह्यसंज्ञेत्यादिः । **अत्र**—शुक्ली ( आस्ताम् ) इत्यत्र । **हि**—यतः । **तदन्तम्**—ईदाद्यन्तान्तम् । **भवतीति**—समुदाय इति शेषः ।

प्रदीपे—**तदन्तः**—ईकारान्तान्तः । **अयं**-शुक्लीघटकः । **इति**—इत्यनेन विहितः । **न कश्चिदिति**—तस्य प्रकृत्यवयवत्वेन द्विवचनासम्बन्धादिति भावः ।

उद्द्योते—**अत्र पक्षे**—चतुर्थपक्षे । **इति**—इति हेतोः । **तदन्तत्वम्**—ईदाद्यन्तत्वम् । **अस्य**—द्विवचनस्य । श्रूयते इत्यस्याग्रे द्विवचनमित्यादिपाठं स्वीकृत्याह—**यच्छ्रूयते इति ।**

## ( समाधानभाष्यम् )

**अत्राप्यकृते शीभावे लुग्भविष्यति ॥**

**( तत्त्वालोकः )** चतुर्थपक्षवादी तं समर्थयति—**अत्रापीति**। तथा च प्रत्ययलक्षणेनापि तस्य न तदन्तान्ततेति भावः ।

## ( आक्षेपसाधकभाष्यम् )

**इदमिह संप्रधार्यं लुक् क्रियतां, शीभाव इति ॥**

**किमत्र कर्तव्यम् ? ।**

**परत्वाच्छीभावः ॥**

**( तत्त्वालोकः )** सिद्धान्ती तं निराकरोति—**इदमिहेति।** **लुगिति**—पूर्वमित्यादिः । **शीभाव इति**—अथवेत्यादिः । **अत्रेति**—अनयोरित्यर्थः । प्रागिति शेषः ।

## ( समाधानसाधकभाष्यम् )

**नित्यो लुक् । कृते शीभावे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥**

**( तत्त्वालोकः )** चतुर्थपक्षवादी समाधत्ते—**नित्यइति।** **कृते इति**—यत इत्यादिः । तथा च शीभावात्प्राक् नित्यत्वात् लुगेव स्यादिति भावः ।

## ( आक्षेपसाधकभाष्यम् )

**अनित्यो लुग् । अन्यस्याकृते शीभावे प्राप्नोत्यन्यस्य कृते । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । शीभावोऽप्यनित्यः । न हि कृते लुकि प्राप्नोति । उभयोरनित्ययोः परत्वाच्छीभावः । शीभावे कृते लुक् ॥**

**( उद्द्योतः )** अनित्यत्वेऽपि लुकः शीभावो नित्यश्चेदतुल्यबलत्वात्परत्वादिति पूर्वोक्तमनुपपन्नमतो भाष्ये **शीभावोऽप्यनित्य** इत्युक्तम् ॥ कृते लुकि तदप्राप्तिस्तु प्रसङ्गरूपषष्ठ्यर्थस्याभावादिति भावः ।

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती निराकरोति—**अनित्ये लुगिति ।** यत इति शेषः । **हि**—यतः ।

उद्द्योते—**चेदिति**—तर्हि, तयोरिति शेषः । **तदिति**—शीभावेत्यर्थः ।

## ( आक्षेपदार्ढ्यभाष्यम् )

**अथापि कथंचिन्नित्यो लुक्स्यात् । एवमपि दोषः, ॥ वक्ष्यत्येतत्, *पदसंज्ञायामन्तग्रहणमन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधार्थम्* इति। इदं चापि प्रत्ययग्रहणम् । अयं चापि संज्ञाविधिः ॥ अवश्यं खल्वस्मिन्नपि पक्षे आद्यन्तवद्भाव एषितव्यः ॥ तस्मादस्तु स एव मध्यमः पक्षः ॥ ईदूदेत् ॥ ११ ॥**

**( प्रदीपः ) अथापि कथंचिदिति ।** स्थानिविशेषानपेक्षायां कृताकृतप्रसङ्गित्वेन लुक्शास्त्रस्य प्रवर्त्तनादित्यर्थः ॥ अथवा नित्यत्वेन बाधकत्वं लक्ष्यते तेनान्तरङ्गानपीति न्यायेन शीभावस्य लुग् बाधक इत्यर्थः ॥ **एवमपि दोष इति ।** पक्षस्योत्थानमेव नास्तीति तत्पक्षासंभव एव दोषः ॥ **अवश्यमिति ।** यदाश्रयणभयादयं पक्षोऽङ्गीकृतस्तस्याद्यन्तवद्भावस्यास्मिन्नपि पक्षेऽवश्यमाश्रयणमङ्गीकृतम् । अग्नी इत्यत्र ईकार एव द्विवचनं न त्वीकारान्तम् ॥ **तस्मादिति ।** द्वितीय एव पक्षोऽस्त्वित्यर्थः ॥ **मणीवादीनां प्रतिषेधो वक्तव्य** इति भाष्यवार्तिककाराभ्यामपठितत्वादनन्याय्यमेतत् ॥ **मणीवोष्ट्रस्येति** तु प्रयोगो वाशब्दस्योपमानार्थस्य । रोदसीत्यादिन्तु छान्दसः प्रयोगः । छन्दसि तु सर्वे विधयो विकल्प्यन्ते ॥ ११ ॥

**( उद्द्योतः ) अग्नी इतीति ।** खट्वे इत्यस्याप्युपलक्षणमेतत् ॥ **द्वितीय इति ।** प्रत्ययांशे तदन्तविधिसत्त्वेन पक्षद्वयस्यैकत्वबुद्ध्या तस्य मध्यमत्वोक्तिरिति बोध्यम् ॥ **एतदिति ।** वृत्तिकारोक्तमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—चतुर्थपक्षवादी शङ्कते—**अथापीति ।** सिद्धान्ती तृतीयपक्षसाधारणदोषेण चतुर्थपक्षं दूषयति—**एवमपीति । वक्ष्यतीति**—यत इत्यादिः । ज्ञापनफलाभिप्रायेणाह—**अन्यत्रेति ।** ज्ञाप्यांशमाह—**संज्ञाविधाविति ।** द्वितीयपक्षसमर्थनायाह—**अवश्यमिति । अस्मिन्**—चतुर्थे । अपिना द्वितीयसमुच्चयः । **तस्मात्**—आद्यन्तवद्भाववत्त्वेन द्वितीयचतुर्थपक्षयोः साम्यात् । **स एव**—आद्यन्तवद्भाववानेव ।

प्रदीपे—कथञ्चित्पदेनात्र "शब्दान्तरस्य चे"ति न्यायाप्रवृत्तिः सूचितेत्याशयेनाह—**स्थानिविशेषेति ।** कथञ्चित्पदेनात्र प्रकारान्तरमभिप्रेतमित्याशयेनाह—**अथवेति । नित्यत्वेन**—नित्यत्वबोधकनित्यपदेन । **पक्षस्य**—तृतीयचतुर्थपक्षद्वयस्य । द्विवचनेन तदन्तविध्यसम्भवादित्याशयः । **इति**—इति हेतोः । **तत्पक्षेति**—तृतीयचतुर्थपक्षद्वयेत्यर्थः । **एवेन**—तत्र तत्र प्रागुक्तदोषनिरासः । **यदाश्रयणेति**—तृतीयपक्षोक्तदोषनिरासाय द्वितीयपक्षस्यादरे इत्यादिः । **अयं**—चतुर्थः । **हि**—यतः । **इति तु**—इत्यत्र तु ।

उद्द्योते—ननु मध्यमत्वस्योभयमात्रनिरूपितत्वात् कथं पक्षचतुष्टयान्तर्वर्तिद्वितीयपक्षस्य मध्यमत्वोक्तिरित्यत आह—**प्रत्ययांशे इति । पक्षद्वयस्य**—द्वितीयचतुर्थपक्षद्वयस्य । **तस्य**—द्वितीयपक्षस्य ।

---

( ११ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ. २ ॥ )

## अदसो मात् ॥ १ । १ । १२ ॥

### ( मूत्वमीत्वयोरसिद्धत्वनिराकरणाधिकरणम् )

( १५९ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ मात्प्रगृह्यसंज्ञायां तस्यासिद्धत्वादयावेकादेशप्रतिषेधः ॥ * ॥

( भाष्यम् )

**मात्प्रगृह्यसंज्ञायां तस्य ईत्वस्य ऊत्वस्य चासिद्धत्वादयावेकादेशाः प्राप्नुवन्ति, तेषां प्रतिषेधो वक्तव्यः । अमी अत्र, अमू अत्र, अमी आसते, अमू आसाते ॥**

**( प्रदीपः ) अदसो मात् ॥ १२ ॥ मात्प्रगृह्येति ॥** अस्मिन्नन्यास इत्यर्थः ॥ **ऊत्वस्य चेति ।** चशब्दान्मत्वस्य च । शास्त्रस्यासिद्धत्वाच्च स्थानिलक्षणमेव कार्यं प्राप्नोति, नादेशलक्षणमित्ययादिप्रसङ्गः ॥ अमी आसते इत्ययादेशः प्राप्नोति, अमू आसाते इत्यावादेशः । अमी अत्रेत्यत्र एकादेशः ॥ ननु च द्विपदाश्रयत्वाद्बहिरङ्गा अयादयोऽन्तरङ्गैर्मुत्वादिभिरसिद्धा इति पूर्वाभावे कथं **पूर्वत्रासिद्धमिती**त्वादीनामसिद्धत्वं स्यात् ॥ नैष दोषः । **नाजानन्तर्ये** इति बहिरङ्गपरिभाषानिषेधात् ॥

**( उद्द्योतः ) अदसो मात्** ॥ १२ ॥ **अस्मिन्निति ।** मात्पदवतीत्यर्थः ॥ यदि तु **अदसो** दादित्युच्यते, दात्परश्च पूर्वोत्तरसाहचर्यादवर्णभिन्नोऽन् ओकारैकाररूप एव, तदा न स्याद्दोष इति भावः ॥ इदमेव ध्वनयितुम् 'अदसः प्रगृह्यसंज्ञायाम्' इति नोक्तम् ॥ नन्वीत्वोत्वयोरसिद्धत्वेऽपि **अदसोमा**दित्यत्रे**दूदिति** निवर्त्य मात्परौकारैकारयोरपि प्रगृह्यत्वाद्यादिप्रसङ्गोऽत आह—**चशब्दान्मत्वस्येति ।** एवं चेदोतोर्मात्परत्वाभावादेवमपि न प्रगृह्यत्वप्राप्तिरिति भावः ॥ नन्वीत्वादीनामसिद्धत्वेपि तन्निवर्त्तितौकाराद्यभावेन कथमयादिप्राप्तिः । किं चायादीनामत्यसिद्धत्वेऽपि प्रगृह्यसंज्ञायामाश्रयासिद्धत्वेन तत्संज्ञायां तत्सामर्थ्यान्नायादयोऽत आह—**शास्त्रेति ॥ नादेशलक्षणमिति ।** प्रकृतिभाव इत्यर्थः । प्रगृह्यत्वं त्वनुनासिकपर्युदासेन चरितार्थमिति भावः ॥ **एकादेशः । एङः पदान्तादतीति** ॥ **नाजानन्तर्ये इति ।** उत्तरकालप्रवृत्तिके अयादावजानन्तर्यादिति भावः ॥ त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्ते**विसर्जनीय**सूत्रे भाष्ये वक्ष्यमाणत्वान्न दोष इति परे ॥

**( तत्त्वालोकः )** प्रदीपे—**शास्त्रस्य**—ईत्वादिशास्त्रस्य । **स्थानिलक्षणम्**—अयादि । **अन्तरङ्गैरिति**—एकपदाश्रयत्वादिति भावः । **पूर्वाभावे**—पूर्वत्रासिद्धमिति शास्त्राभावे । हरदत्तमतेनाह—**नाजेति ।**

उद्द्योते—अनतिप्रसङ्गायाह—**दात्परश्चेति । पूर्वोत्तरसाहचर्यात्**—"ईदूदेदि"ति "शे" इत्यनयोः साहचर्यात् । **रूप एवेति**—गृह्यते इति शेषः । **एवञ्च**—मत्वस्यासिद्धत्वे च । **एवमपि**—अत्रेदूतोः निवर्त्तनेऽपि । **तन्निवर्त्तितेति**—ईत्वादिनिवर्त्तितेत्यर्थः । **अभावेनेति**—देवदत्तहन्तृहतन्यायादिति भावः । **प्रतीति**—ईत्वादीनामिति शेषः । **तत्संज्ञायामिति**—कृतायामिति शेषः । संज्ञावैयर्थ्यं परिहरति—**प्रगृह्यत्वमिति ।**

( आक्षेपबाधकभाष्यम् )

**ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥**

**( प्रदीपः ) ननु चेति ।** यथोद्देशपक्षे आश्रयात्सिद्धत्वं भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) यथोद्देशेति ।** नन्वाश्रयात्सिद्धत्वेन प्रगृह्यत्वेऽपि मूत्वादेरसिद्धत्वादयादिकं स्यादेवेति चेन्न । एवमपि संज्ञाशास्त्रवैयर्थ्यादत्रत्याश्रयणेनायादिकं प्रत्यपि सिद्धत्वं ज्ञाप्यत इत्याशयात् ॥

**( तत्त्वालोकः )** भाष्ये—आक्षेपवार्त्तिकशेषमाक्षेपसाधकतयाऽवतारयति—**ननु चेति ।**

प्रदीपे—**आश्रयादिति**—ईत्वादीनां प्रगृह्यसंज्ञायामित्यादिः । तां प्रतीति शेषः ।

उद्द्योते—**मूत्वादेरिति**—अयादिकम्प्रतीति शेषः । **एवमपि**—प्रगृह्यत्वेऽपि । फलाभावादित्याशयः । **अत्रत्येति**—ईत्वादीनामित्यादिः । **अपिना** प्रगृह्यसंज्ञायाः परिग्रहः ॥ तेन मूत्वादिकं नासिद्ध-

मिति सामान्यतो ज्ञापयितुं न शक्यते, तथा सति "न मुने" इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः ।

( १५५ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

॥ * ॥ वचनार्थौ हि सिद्धे ॥ * ॥

( भाष्यम् )

नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ? ॥

यत्सिद्धे प्रगृह्यसंज्ञाकार्यं तदर्थमेतत्स्यात्—"अणोऽप्रगृह्यस्यानुनासिकः" इति ॥

**( प्रदीपः )** कार्यकालपक्षमाश्रित्याह—**वचनार्थौ हीति ।** वचनस्य प्रयोजनमित्यर्थः ॥

**( उद्द्योतः )** भाष्ये **यत्सिद्धे इति ।** न च तत्र पूर्वसूत्रेणैव सिद्धिः । अद्विवचने तदप्रवृत्तेः । पूर्वसूत्रविषये यथोद्देशस्यैव भाष्यकृताङ्गीकाराच्च ॥

**( तत्त्वालोकः )** भाष्ये—**इदं**—मूत्वादीनां प्रगृह्यसंज्ञामयादिकञ्च प्रति सिद्धत्वम् । **वचनात्**—प्रगृह्यसंज्ञावचनसामर्थ्यात् । **हि**—यतः । **एतस्य**—प्रगृह्यसंज्ञाशास्त्रस्य । **यत्सिद्धे इति**—ईत्वादौ सिद्धे सिद्धकाण्डस्थे सति यत्प्रगृह्यसंज्ञाकार्यं ( यत्प्रगृह्यसंज्ञाकार्यदृष्ट्या ईत्वादिकं सिद्धं ) तदर्थं प्रगृह्यसंज्ञावचनमित्यर्थः । प्रगृह्यसंज्ञायाः अनुनासिकपर्युदासरूप—कार्यदर्शनायाह—**अण इति ।**

उद्द्योते—**पूर्वसूत्रेण**—"ईदूदेदि"ति सूत्रेण ।

( आक्षेपबाधकभाष्यम् )

नैकं प्रयोजनं योगारम्भं प्रयोजयति । यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयाद्—"अणोऽप्रगृह्यस्यानुनासिकोऽदसो न" इति ॥

**( प्रदीपः ) नैकमिति ।** अनेककार्यसिद्ध्यर्थं संज्ञासूत्रं नैकेन प्रयुज्यत इत्यर्थः । अन्यत्तु सूत्रमेकेनापि प्रयुज्यते **मुद्गादणि**त्यादि ॥ **तत्रैवायमिति ।** न च तत्रेदूदेद्ग्रहणं कर्तव्यं मादिति वा । यस्माददणोऽनुनासिकोऽवसाने विधीयते, पूर्वेण णकारेणाण्ग्रहणमिति असौ **अमुके** अमुकाभ्यामित्यादावनुनासिकस्याप्रसङ्ग एव । तदेवं कार्यकालेऽपि संज्ञापरिभाषे प्रकरणोत्कर्षेण विधीयमाना प्रगृह्यसंज्ञा सर्वप्रगृह्यकार्यार्था सत्यसिद्धत्वं बाधिष्यत इत्यर्थः ॥

**( उद्द्योतः )** नन्वीदाद्युपजीवनायात्र करणमित्यत आह—**नचेति ।** हेऽमुक, असका इत्यादौ तु **'अदस'** इत्यावर्त्य न विद्यते दस्य स्थाने सो यस्य तादृशादस इत्यर्थेनानुनासिकः स्वमतेऽपि भवत्येवेति भाष्याशयमाहुः ॥ तादृशानामनभिधानमेवेत्यन्ये ॥ **प्रकरणोत्कर्षेणेति ।** संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥ **सर्वेति ।** प्रकृतिभावानुनासिकप्रतिषेधेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—तत्रास्वरसं प्रतिपादयति—**नैकमिति । एतावत्**—अनुनासिकपर्युदासमात्रम् । **तत्रैवेति**—"अणोऽप्रगृह्यस्ये"ति सूत्रस्थले एवेत्यर्थः । तर्हीत्यादिः । **अयं**—पाणिनिः ।

प्रदीपे—सामान्यशास्त्रमिति वक्तव्ये प्रकृतत्वादाह—**संज्ञासूत्रमिति । एकेनेति**—प्रयोजनेनेति शेषः । एवमग्रेऽपि । **अन्यत्**—संज्ञासूत्रभिन्नम् । **सूत्रं**—विशेषसूत्रम् । **न च**—नहि । **तत्र**—"अणोऽप्रगृह्यस्यानुनासिकोऽदसो ने"ति न्यासे । **पूर्वेण**—पूर्वेण च । **इत्यादाविति**—औकारादेरनण्त्वादनदसान्तत्वाच्च सिद्धान्तेऽपीति शेषः । उपसंहरति—**तदेवमिति । अपिना** यथोद्देशसमुच्चयः । **सतीति**—तदन्यथाऽनुपपत्त्या प्रगृह्यसंज्ञावदयादिकं प्रत्यपि सामर्थ्यमेषामिति शेषः । तथा च "अयावेकादेशप्रतिषेधो वक्तव्यः" इति वार्त्तिकं न कार्यमिति भावः ।

उद्द्योते—**अत्रेति**—अदसो मादिति सूत्रस्थाने इत्यर्थः । तद्योचितमिति शेषः । **अदस इति**—"अदसो ने"त्यत्रेति भावः । **स इति**—अत्राकार उच्चारणार्थः । **स्वमते**—भाष्यकारमते । **अपिना**—सूत्रकारमतपरिग्रहः । आहुरित्यनेन रुचितारुचिबीजन्तु आवृत्तिव्यधिकरणबहुव्रीह्योराश्रयणे मानाभाव एव । नन्वेवं भाष्यासङ्गतिरित्यत आह—**तादृशानामिति ।** त्यदादीनां सम्बोधनविभक्तिविरहस्य प्रायिकत्वात्, भाष्यप्रामाण्याच्चेति भावः ।

( १५६ समाधानवार्तिकम् ॥ २ ॥ )

॥*॥ विप्रतिषेधाद्वा [ प्रगृह्यसंज्ञा ] ॥*॥

( भाष्यम् )

अथवा प्रगृह्यसंज्ञा क्रियताम् अयादयो वेति । प्रगृह्यसंज्ञा भविष्यति विप्रतिषेधेनेति ॥

**( प्रदीपः ) विप्रतिषेधाद्वेति ।** ※ **अयावेकादेशप्रतिषेधो वक्तव्यः** ※ **विप्रतिषेधाद्वा प्रगृह्यसंज्ञा** ※ इति विकल्पार्थो वाशब्दः । **नैकं प्रयोजन**मित्यादिस्तु परिहारो भाष्यकारेणोक्तो न वार्तिककारेणेति न तदपेक्षो विकल्पः ॥

**( उद्द्योतः )** भाष्ये **विप्रतिषेधाद्वेति ।** अन्तरङ्गत्वान्मूत्वादौ कृते पदान्तरसमभिव्याहारेऽयादिभ्यः परत्वात्संज्ञासिद्धौ तत्सामर्थ्यान्मूत्वादिकं प्रकृतिभावं प्रत्यपि नासिद्धम् । आश्रयाच्च संज्ञां प्रत्यपि नासिद्धमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रगृह्यसंज्ञेति**—प्रागिति शेषः । **इति**—इति स्थितौ । **विप्रतिषेधेनेतीति**—अत्रेतिः हेत्वर्थकः । तथा च यतः विप्रतिषेधेन प्रगृह्यसंज्ञा भविष्यति, अतः अयादीनां प्रतिषेधो न वक्तव्य इत्यर्थः । एवञ्च न पाणिनेर्न्यूनतेत्याशयः ।

प्रदीपे—**इति**—इत्यत्र । **इति**—इति हेतोः । **तदपेक्षः**—नैकं प्रयोजनमित्याद्यपेक्षः । वार्त्तिकेषु पठितपूर्वापेक्षयैवाग्रिमे विकल्पार्थकशब्दप्रयोगौचित्यादिति भावः ।

उद्द्योते—ननूभयोर्युगपत्प्राप्त्यभावात् कथं विप्रतिषेधः, कथञ्च तेनेष्टसिद्धिः प्रकृतिभावदृष्ट्या मूत्वादीनामसिद्धत्वादित्यत आह—**अन्तरङ्गत्वादिति ।** अत्र पदसंस्कारपक्षसूचनायाह—**कृते पदान्तरेति ।** अत्र पक्षे तदानीं प्रगृह्यत्वाद्यप्राप्तिरित्याशयः । **अयादीति**—तस्य अयादिदृष्ट्या असिद्धत्वात् संज्ञादृष्ट्या सिद्धत्वाच्च द्वयोः युगपत्प्राप्तावित्यादिः । **अपिना** अयादिसंग्रहः ।

( समाधानबाधकभाष्यम् )

नैष युक्तो विप्रतिषेधः । "विप्रतिषेधे परम्" इत्युच्यते ॥ पूर्वा च प्रगृह्यसंज्ञा, परेऽयादयः ॥

**( प्रदीपः ) नैष युक्त इति ।** इष्टसिद्ध्ये इति भावः ॥

**( उद्द्योतः )** ननु **प्रगृह्यसंज्ञाभिनिर्वर्तमानेत्यादि** वक्ष्यमाणप्रकारेण घटत एव विरोध इत्ययुक्तमेतदित्यत आह—**इष्टेति ।**

(तत्त्वालोकः) भाष्ये—प्रतिषेधवादी विप्रतिषेधं दूषयति—**नैष इति । विप्रतिषेध इति—**यत इति शेषः ।

(समाधानसाधकभाष्यम्)

**परा प्रगृह्यसंज्ञा करिष्यते ॥**

(प्रदीपः) **करिष्यत इति** । आश्रयिष्यत—इत्यर्थः ॥

(तत्त्वालोकः) भाष्ये—विप्रतिषेधवादी तं समर्थयति-**परेति ।**

(समाधानबाधकभाष्यम्)

**सूत्रविपर्यासः कृतो भवति ॥**

(प्रदीपः) इतरस्त्वगृहीताभिप्राय आह—**सूत्रविपर्यास इति ।**

(तत्त्वालोकः) भाष्ये-**सूत्रेति—**तर्हीत्यादिः ।

(समाधानसाधकभाष्यम्)

**एवं तर्हि परैव प्रगृह्यसंज्ञा ॥**

**कथम् ? ।**

**"कार्यकालं संज्ञापरिभाषम्" यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । "प्रगृह्यः प्रकृत्या" इत्युपस्थितमिदं भवति "अदसो मात्" इति ।**

(प्रदीपः) अभिप्रायं प्रकाशयितुमाह—**एवं तर्हीति ॥**

(उद्द्योतः) भाष्ये **परैवेति ।** पूर्वपाठेऽपि तत्र वाक्यार्थबोधाभावेनेति भावः ॥ **कथमिति ।** पाठकृतं स्वगतं पूर्वत्वमनपगतमिति प्रश्नः ॥ उत्तरयति—**कार्यकालमिति ।** तत्पक्षे संज्ञाशास्त्रस्य प्रदेशदेश एवार्थबोधः । तदुत्तरं च विरोधोपस्थितिस्तत्कार्यज्ञानं चेति तत्रत्यपरत्वमेव **विप्रतिषेध**सूत्रप्रवृत्तौ बीजमिति भावः ॥ **परैवे**त्येवकारेण पाठकृतं पूर्वत्वं विद्यमानमपि **विप्रतिषेध**सूत्रप्रवृत्तौ न नियामकमिति सूचितम् । परिभाषाणां तु तत्पक्षेऽपि तत्तद्देशेऽर्थबोधोऽस्त्येवेति तद्विषये **विप्रतिषेध**सूत्रप्रवृत्तौ पाठकृतमेव तन्नियामकमिति तात्पर्यम् । **आकडारस्थ**भपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्र परया पूर्वबाधसिद्धिः ॥ **ष्यङः संप्रसारणमि**ति सूत्रस्थं भसंज्ञायाः कार्यकालत्वपरं भाष्यं त्वेकदेश्युक्तिरिति तत्रैव निरूपयिष्यामः ॥ परेतु **परैवे**त्यस्य संज्ञापदेन तत्कार्यं प्रकृतिभाव उच्यते इति भावः ॥ आशयानभिज्ञस्य प्रश्नः **कथमिति ।** एकदेशिन उत्तरम् **कार्यकालमि**त्यादीत्याहुः ॥ एतेन "कार्यकालपक्षेऽपि पाठकृतपरत्वमयादीनामेव । अन्यथा **ङमो ह्रस्वादची**त्यादौ त्रिपादीस्थे कार्यकालपक्षे एव परिभाषाप्रवृत्त्या परत्वात्तत्र **तस्मादित्युत्तरस्ये**त्येवेति सिद्धान्तासङ्गतिरुभयोरप्येकदेशस्थत्वेन परत्वासंभवा" दित्यपास्तम् ॥

(तत्त्वालोकः) भाष्ये-**तर्हीति—**अप्यर्थकः । तथा च (एवमपि) सूत्रविपर्यासेऽकृतेऽपीत्यर्थः । **कार्यकालमिति—**यत इत्यादिः । **प्रगृह्य इति—**तथा चेत्यादिः । **इति—**इत्यत्र ।

प्रदीपे—**अभिप्रायमिति—**विप्रतिषेधवादीत्यादिः ।

उद्द्योते—**तत्र**-पूर्वत्र (स्वदेशे) । **पाठकृतमिति**-परत्रोपस्थितावपि कथमित्यादिः । **तत्पक्षे**-कार्यकालपक्षे । एवमग्रेऽपि । **एवेन** स्वदेशव्यावृत्तिः । **इति**-इति हेतोः । **तत्रत्येति**-प्रदेशदेशस्थेत्यर्थः । **विप्रतिषेधेति**-संज्ञाशास्त्रविषये इत्यादिः । नन्वेवं "ङमो ह्रस्वादि" ति सूत्रस्थभाष्यासङ्गतिरित्यत आह-**परिभाषाणामिति । अपिना** यथोद्देशपक्षसंग्रहः । **तत्तद्देशे**-स्वदेशे । **इति**-इति हेतोः । **तद्विषये**-परिभाषाविषये । **तत्**-परत्वम् । नन्वेवमपि भपदसंज्ञादौ दोष एवेत्यत आह-**आकडारेति । इति**-इति हेतोः । नन्वेवं "ष्यङ" इति सूत्रस्थभाष्यविरोध इत्यत आह-**ष्यङ इति** । संज्ञापरिभाषयोरैकरूप्याय सिद्धान्तमाह-**परे त्विति । इत्यस्येति**-अस्य भाव इत्यन्वयः । **तत्कार्य**-संज्ञायाः कार्यम् । **एतेन**-पक्षद्वये संज्ञापरिभाषस्य पाठकृतमेव परत्वं तत्र "विप्रतिषेध"सूत्रप्रवृत्तौ नियामकम् । तयोः वैरूप्ये मानाभावात् । कार्यकालपक्षे तु तयोः विधिशास्त्रेणैकवाक्यता स्वीक्रियत एवेति व्याख्यानाशयकेन प्रगृह्यसंज्ञैकवाक्यतापन्नप्रकृतिभावस्य परत्वव्यवस्थापनेन । **अपिना**-यथोद्देशपक्षसंग्रहः । **एवेन** संज्ञामात्रव्यावृत्तिः । **अन्यथा**-तेन परिभाषाया अपि व्यावर्तने । **परिभाषेति**-परिभाषाद्वयेत्यर्थः ।

(समाधानबाधकभाष्यम्)

**एवमप्ययुक्तो विप्रतिषेधः ॥**

**कथम् ? ।**

**द्विकार्ययोगो हि विप्रतिषेधः । न चात्रैको द्विकार्ययुक्तः । एचामयादयः, ईदूतोः प्रगृह्यसंज्ञा ॥**

(प्रदीपः) **द्विकार्ययोगो हीति** । द्वाभ्यां कार्याभ्यां यो युज्यते स विप्रतिषेधविषयत्वाद्विप्रतिषेधः ॥

(उद्द्योतः) **द्वाभ्यामिति ॥ योग इति कर्मणि घञ् ।** द्विकार्यशब्दस्य **पात्राद्यन्त**त्वादस्त्रीलिङ्गस्य योगशब्देन **कर्तृकरणे कृतेति** समासः ॥ भाष्ये **ईदूतोः प्रगृह्यसंज्ञे**त्यस्य तत्कार्यं प्रकृतिभाव इत्यर्थः ॥

(तत्त्वालोकः) भाष्ये—प्रतिषेधवादी दूषयति-**एवमपीति । हि**-यतः । **न च**-नहि ।

उद्द्योते-परे त्वित्यादिनोक्तसिद्धान्तरीत्या व्याचष्टे-**ईदूतोरिति ।**

(समाधानसाधकभाष्यम्)

**नावश्यं द्विकार्ययोग एव विप्रतिषेधः ॥**

**किं तर्हि ? ।**

**असंभवोऽपि । स चास्त्यत्रासंभवः ॥**

**कोऽसावत्रासंभवः ? ॥**

**प्रगृह्यसंज्ञाभिनिर्वर्तमाना अयादीन् बाधते, अयादयोऽभिनिर्वर्तमानाः प्रगृह्यसंज्ञाया निमित्तं विघ्नन्तीत्येषोऽसंभवः । सत्यसंभवे युक्तो विप्रतिषेधः ॥**

(प्रदीपः) **असंभवोऽपीति ।** असंभव एव विप्रतिषेधः । स तु कदाचिद् द्विकार्ययोगो भवति कदाचित्केवलोऽपि । तथाहि सति संभवे द्विकार्ययोगो न विप्रतिषेधः, यथैकस्य दधातेरडागमद्विर्वचने भवतः—अदधादिति । क्वचिदेकस्य द्विकार्ययोगाभावेऽप्यसंभवोऽस्ति, यथा त्रपूणामित्यत्र नुम्नुटोः प्रकृतिप्रत्ययभक्तयोः परस्परनिमित्तव्याघातात् ॥ **अयादीन्बाधत इति ।** प्रकृतिभावविधानात् ॥ **निमित्तमिति** ईत्वमूत्वं च ॥

(उद्द्योतः) **कदाचिदिति ।** एवंच प्रकृते केवलासंभवरूपः स इत्यर्थः । केवलद्विकार्ययोगो न सर्वथा विप्रतिषेध इत्याह—**तथाहीति । ईत्वमूत्वं चेति ।** तद्विघातेन संज्ञाऽभावे तत्कार्यप्रकृतिभावविघातः स्पष्ट एवेति भावः ॥

(तत्त्वालोकः) भाष्ये-विप्रतिषेधवादी समर्थयति-**नावश्यमिति ।**

प्रदीपे—अत्रापेरुक्त्या असम्भवद्विकार्ययोगौ केवलौ विप्रतिषेधौ

समुच्चितौ वेति प्रतीयमानार्थनिराकरणायाह-**असंभव एवेति।** एवञ्च भाष्येऽपिरेवार्थे न समुच्चये इति भावः। अवश्यम्पदस्वारस्येनाह-**द्विकार्येति। अपि-**एव। तत्रान्वयव्यभिचारमाह-**दधातेरिति। इति-**इत्यत्र। **अस्तीति-**स च विप्रतिषेधो भवतीति भावः। तत्र व्यतिरेकव्यभिचारमाह-**त्रपूणामिति।** प्रथमपक्षाशयेनाह-**प्रकृतिभावविधानादिति।** प्रकृतिभावद्वारेत्यर्थः। सिद्धान्ते तु प्रगृह्येत्यस्य प्रकृतिभाव इत्येवार्थः।

उद्द्योते—**सः-**विप्रतिषेधः। प्रथमपक्षाभिप्रायेणोक्तं सिद्धान्तरीत्या योजयति-**तद्विघातेनेति।** ईत्वोत्वयोर्विघातेनेत्यर्थः।

**समाधानबाधकभाष्यम् )**

**एवमप्ययुक्तो विप्रतिषेधः। सतोर्हि विप्रतिषेधो भवति। न चात्रेत्वोत्वे स्तः। नापि मकारः। उभयमप्यसिद्धम्॥**

**( उद्द्योतः )** केचित्तु संज्ञाकार्यस्य अयादिभिर्विप्रतिषेधोऽयुक्तः। वाक्यसंस्कारपक्षे मूलादितः पूर्वमेवायादिप्राप्त्या मूलाद्युत्तरं च संज्ञायां तत्प्राप्त्या युगपत्प्राप्त्यभावात्। तस्मात् प्रगृह्यसंज्ञाशब्देन तज्जनकमूलादिकं लक्षयित्वा तस्यायादिभिर्विप्रतिषेध इति वार्तिकार्थः॥ तमपि दूषयति—भाष्ये **एवमपीति॥**

**( तत्त्वालोकः )** भाष्ये—प्रतिषेधवादी खण्डयति-**एवमपीति।** वाक्यसंस्कारपक्षाङ्गीकारेपीत्यर्थः। **सतोः**—विद्यमानयोः। **हि-**यतः। **न च** नहि। एकत्र लक्ष्ये द्वयोरेव सत्त्वादाह-**उभयमिति।**

उद्द्योते—**संज्ञाकार्यस्य-**प्रकृतिभावस्य। पूर्वं पदसंस्कारपक्षाभिप्रायेण प्रतिपादनादाह-**वाक्यसंस्कारपक्षे इति। संज्ञायामिति-**प्रगृह्यसंज्ञायामित्यर्थः। सत्यामिति शेषः। **तदिति-**प्रकृतिभावेत्यर्थः। **वार्त्तिकार्थ इति—**इत्याहुरिति शेषः। **तमपि-**वाक्यसंस्कारपक्षमपि।

**( १५७ समाधानसाधकवार्तिकप्रथमखण्डम् ॥ ३ ॥ )**

**॥ * ॥ आश्रयात्सिद्धत्वं यथा रोरुत्वे ॥ * ॥**

**( भाष्यम् )**

**आश्रयात्सिद्धत्वं भविष्यति। तद्यथा रुरुत्वे आश्रयात्सिद्धो भवति॥**

**( प्रदीपः ) आश्रयात् सिद्धत्वमिति।** प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणादसिद्धत्वाभावादीत्वादीनां तेषामयादीनां च विप्रतिषेधो निरूप्यते। तथाहि सतोर्हि विप्रतिषेधो भवतीति पूर्वपक्षे ईदादीनामेव विप्रतिषेध आक्षिप्तः। तत्रायादीनां चयनं चायकः, लवनं लावकः, अग्नेऽत्रेत्यत्रावकाशः। ईदादीनां तु यत्रायादीनामप्रसङ्गः सोऽवकाशः, अमी स्थिताः अमू स्थितौ अमीभ्य इत। अमी अत्रेत्यादावुभयप्रसङ्गे परत्वादीदादय एव भवन्ति॥ अत्र व्याख्यानान्तरं क्लिष्टत्वान्नोपन्यस्तम्॥

**( उद्द्योतः ) कार्यित्वेनाश्रयणादिति।** तत्सामर्थ्यादयादीन्प्रत्यपि सिद्धत्वमित्यर्थः॥ यथोद्देशे इदम्। **कथं कार्यकाल**मिति तु प्रकृतिभावायादिविप्रतिषेधविषयम्। इदानीं तु स नेति स्पष्टमेव॥ **असिद्धत्वाभावादिति।** ईत्वादीनामसिद्धत्वाभावादित्यन्वयः॥ सामान्यत एवासिद्धत्वाभावबोधनादित्यर्थः॥ **तेषामीत्वादीनाम्॥ परत्वादिति।** ईत्वादिषु जातेषु तेषामसिद्धत्वाभावादयादीनामप्रसङ्ग एवेति भावः॥ **व्याख्यानान्तरमिति।** प्रगृह्यत्वकार्यप्रकृतिभायेनायादीनां विप्रतिषेधपरमेव भाष्यम्। **सतो**रित्यस्य युगपत्प्राप्तयोरित्यर्थः। वाक्यसंस्कारपक्षे ईत्वादीनामसिद्धत्वेन ततः प्रागेव तत्प्राप्तिः, कृते त्वीत्वादावस्येति न तयोर्युगपत्प्राप्तिरिति भावः॥ तदाह—**नचात्रेत्यादि। अत्र** अयादिप्राप्तिकाले। असत्त्वे हेतुः—**उभयमसिद्धमिति। पूर्वत्रासिद्धे**नेति शेषः॥ परिहरति **आश्रयादिति।** पदसंस्कारपक्ष एवात्राश्रीयत इति भावः। एवं चोभयोर्युगपत् प्राप्तिः। प्रगृह्यसंज्ञायां तत्कार्ये च तयोः सिद्धत्वादयादीन्प्रति चासिद्धत्वादित्युपपन्नो विप्रतिषेध इति॥ वाक्यसंस्कारपक्षे कृतस्य पूर्वपक्षस्य पदसंस्कारपक्षाश्रयेण परिहार इति **क्लेशः॥**

परे त्वनुक्तेदादिविप्रतिषेधखण्डनतत्समर्थनपरत्वेन व्याख्यापेक्षयेदमेव युक्तं पक्षान्तरैरपि परिहारकरणादित्याहुः॥

**( तत्त्वालोकः )** भाष्ये—विप्रतिषेधवादी आह-**आश्रयादिति।**

प्रदीपे—**पूर्वपक्षे-**एतत्पूर्वे पक्षे। **विप्रतिषेध इति-**अयादिभिरित्यादिः।

उद्द्योते—**सिद्धत्वमिति-**ईत्वादीनामित्यादिः। पूर्वभाष्यविरोधं परिहरति-**यथोद्देशे इति। सः-**प्रकृतिभावायादिविप्रतिषेधः। अग्रे तेषामित्यस्य विद्यमानत्वादाह-**ईत्वादीनामिति।** प्रागुक्तरीत्याह-**सामान्यत इति।** सिद्धान्तरीत्याह-**प्रगृह्यत्वेति।** एतत्पूर्वस्य पक्षस्याभिप्रायमाह-**वाक्यसंस्कारेति। ततः-**ईत्वादितः। **तत्प्राप्तिः-**अयादिप्राप्तिः। **अस्य-**प्रकृतिभावस्य। **इति-**इति हेतोः। **तयोः-**अयादेः प्रकृतिभावस्य च। **पूर्वत्रासिद्धेन-**पूर्वत्रासिद्धमिति सूत्रेण। **तत्कार्ये-**प्रकृतिभावे। **तयोः-**ईत्वमत्वयोः। कैयटोक्तं खण्डयति-**परे त्विति। इदमेव-**व्याख्यानान्तरमेव। केचित्तु-उपक्रान्तप्रगृह्यसंज्ञाऽयादिविप्रतिषेधपरमेव "सतोर्हीं"ति भाष्यम्। "न चात्रे"त्यत्र "प्रगृह्यसंज्ञा" इत्यस्याध्याहारः। तत्र हेतुः-"ईत्वोत्वे स्तो नापि" इति। "मकार" इत्यत्र नापीत्यस्यावृत्तिः। एवञ्च न क्लेश इति वदन्ति।

**( समाधानबाधकाक्षेपभाष्यम् )**

**किं पुनः कारणं रुरुत्वे आश्रयात्सिद्धो भवति, न पुनर्यत्रैव रुः सिद्धः, तत्रैवोत्वमप्युच्यते ?॥**

**( प्रदीपः ) न पुनर्यत्रैवेति। रोः सुपी**त्यस्यानन्तर**मत उरती**ति वक्तव्यम्। एवं चासिद्धत्वं न बाधितं भवति। अत्र पाठक्रमेऽसिद्धत्वस्य प्राप्त्यभावात् प्लुतस्य चोत्वे सिद्धत्वात्तत्कालत्वाभावाद**प्लुतादप्लुते** इति न वक्तव्यं भवति॥

**( उद्द्योतः ) रोः सुपीत्यस्यानन्तरमिति।** न चैवं **हशिचे**त्यस्यैतदुत्तरत्वा**द्रोरी**ति दृष्ट्याऽसिद्धत्वापत्तौ मनोरथासिद्धिः। **ढो ढे लोपः, रोरी**त्यनयो**र्यरोऽनुनासिक** इत्यतः पूर्वं पाठः कार्य इत्याशयात्॥

**(तत्त्वालोकः)** भाष्ये—उक्तमेव द्रढयितुं प्रसङ्गादाह-**किंपुनरिति।**

प्रदीपे—**बाधितमिति-**आश्रयादिति भावः।

उद्द्योते—**एतदुत्तरत्वात्-**"अत उरती"त्युत्तरत्वात्। **आश्रयादिति-**पूर्वपक्षिण इत्यादिः। तथा च विप्रतिषेधः सर्वथाऽयुक्त इति भावः।

**( भाष्यम् )**

**नैवं शक्यम्॥**

**( तत्त्वालोकः )** विप्रतिषेधवादी खण्डयति-**नैवमिति।** वक्तुमिति शेषः।

( १५७ समाधानसाधकवार्तिकसाधकखण्डम् ॥ ३ ॥ )

## ॥ ॐ ॥ असिद्धे ह्युत्वे आद्गुणा-प्रसिद्धिः ॥ ॐ ॥

( भाष्यम् )

असिद्धे ह्युत्वे आद्गुणस्याप्रसिद्धिः स्यात्-वृक्षोऽत्र प्लक्षोऽत्र । तस्मात्तत्राश्रयात्सिद्धत्वमेषितव्यम् । यथा तत्राश्रयात्सिद्धत्वं भवति । एवमिहाप्याश्रयात्सिद्धत्वं भविष्यति ॥

( तत्त्वालोकः ) कुत इत्याकांक्षायामाह-**असिद्धे इति** । **हि**-यतः । तथा च यतः तथा पाठे गुणदृष्ट्या उत्वे असिद्धे वृक्षोऽत्र प्लक्षोऽत्र इत्यत्र आद्गुणस्य ( आद्गुण इति सूत्रस्य ) अप्राप्त्या तयोरप्रसिद्धिः ( असिद्धिः ) स्यादित्यर्थः । **तत्र**-रोरुत्वे । **इहापि**-ईत्वादीनां प्रगृह्यसंज्ञायामपि । तथा च विप्रतिषेधः सर्वथा युक्त एवेत्याशयः ॥

( १५८ समाधानान्तरवार्तिकम् ॥ ४ ॥ )

## [ ॥ ॐ ॥ वचनसामर्थ्याद्वा ॥ ॐ ॥ ]

( भाष्यम् )

अथवा प्रगृह्यसंज्ञावचनसामर्थ्यादयादयो न भविष्यन्ति ॥

( प्रदीपः ) **अथ वेति** । यथोद्देशपक्षाश्रयेणैतदुच्यते ॥

( उद्द्योतः ) अनुनासिकपर्युदासेन चारितार्थ्यमाशङ्क्याह—**यथोद्देशेति । एतद्-वचनसामर्थ्याद्वेति** वार्तिकं तद्व्याख्यानभाष्यं चेत्यर्थः ॥

( उद्द्योतः ) पूर्वभाष्यस्य व्याख्यान्तरवादिनस्तु वाक्यसंस्कारपक्षेऽप्याह—**अथवेति** । वस्तुतस्तु प्रकृतिभावोपस्थितसंज्ञायां तयोर्निमित्तत्वेनाश्रयणरूपवचनसामर्थ्यादयादीन्प्रत्यपि सिद्धत्वं ज्ञाप्यते इत्यर्थे कार्यकालेऽपि न दोषः ॥ किं च यथोद्देशेऽपि संज्ञां प्रति निमित्तत्वेनाश्रयणात्तद्दृष्ट्या मीत्वस्य सिद्धत्वेन संज्ञाया अनुनासिकप्रतिबन्धेन चारितार्थ्यमस्त्येव । प्रकृतिभावविषयकसंज्ञोपप्लवसामर्थ्याश्रयणे तु किं विशिष्य यथोद्देशाश्रयणेन । एवमुपक्रमस्थभाष्येऽपि बोध्यमित्याहुः ॥

( तत्त्वालोकः ) भाष्ये—ईत्वादीनां प्रगृह्यसंज्ञायां कार्यित्वेनाश्रयणसामर्थ्यात् तेषां प्रगृह्यसंज्ञामयादिकञ्च प्रति सिद्धत्वमाश्रित्य विप्रतिषेधेनायाद्यभावकल्पनापेक्षया, वचनसामर्थ्यात् साक्षात्तदभावकल्पनायां लाघवादाह—**वचनसामर्थ्यादिति** ।

उद्द्योते—**अनुनासिकेति**-कार्यकालपक्षे प्रगृह्यसंज्ञाया इत्यादिः । **वार्तिकमिति**-अनेन "ननु च प्रगृह्यसंज्ञावचनसामर्थ्यादि"ति पूर्वग्रन्थेन प्रकृतग्रन्थस्यापौनरुक्त्यं सूचितम् । तस्य भाष्यकारीयत्वात्, अस्य च वार्त्तिककारीयत्वात् ॥ कैयटोक्तं खण्डयितुमस्यान्यथाऽवतरणमाह-**पूर्वभाष्यस्येति** । एवमपीत्यादिभाष्यस्येत्यर्थः । **व्याख्यान्तरेति**-उद्योतोक्तेत्यादिः । **वादिनस्त्विति**-अस्याहुरित्यत्रान्वयः । पदसंस्कारपक्षाश्रयेण "विप्रतिषेधाद्वे" त्यस्योक्तत्वादाह-**वाक्यसंस्कारपक्षे इति** । तथा च तत्र विप्रतिषेधासम्भवात् पक्षान्तरमित्याशयः । **वस्तुतस्त्विति**-अस्य बोध्यमित्यनेनान्वयः । **तयोः**-ईत्वमत्वयोः । **अपिना** संज्ञासंग्रहः । **इत्यर्थे इति**—अस्य वार्त्तिकादेरित्यादिः । **मीत्वस्य** -मीत्वादेः ।

( १५९ समाधानान्तरवार्तिकम् ॥ ५ ॥

## [ ॥ ॐ ॥ योगविभागाद्वा ॥ ॐ ॥ ]

( भाष्यम् )

अथ वा योगविभागः करिष्यते । "अदसः" अदस ईदादयः प्रगृह्यसंज्ञा भवन्तीति । ततो "मात्" माच्च परे ईदादयः प्रगृह्यसंज्ञा भवन्तीति । अदस इत्येव ॥

किमर्थो योगविभागः ? ॥

एको यत्त्वसिद्धे प्रगृह्यकार्यं तदर्थः ॥ अपरो यदसिद्धे ॥

( प्रदीपः ) कार्यकालतायामप्याह—**अथ वेति** । अदस इति संबन्धसामान्ये षष्ठी । अदसः संबन्धिन ईदूदेत इति ॥

( उद्द्योतः ) भाष्ये **'योगविभागाद्वा'** इति वार्तिकं व्याचष्टे-**अथवेति** ॥ अदस इत्यस्य पञ्चम्यन्तत्वे उत्तरत्र मादित्यस्य विशेषणानापत्तिरत आह—**संबन्धेति** ॥ **यत्त्वसिद्धे इति** । मूत्वे इति शेषः । यत्र कार्ये मूत्वं सिद्धं तत्प्रगृह्यकार्यमित्यर्थः ॥ **अपरो यदसिद्ध इति** । यत्र मूत्वमसिद्धं तदित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—वस्तुतस्त्वित्यादिनोक्तोद्योतव्याख्यानानुसारेण पक्षद्वये निर्वाहसम्भवेऽपि तस्य क्लिष्टत्वात् स्पष्टप्रतिपत्त्यनुरोधाच्चाह-**योगविभागादिति** । व्युत्क्रमेणाह-**एक इति** । मादिति द्वितीयो योग इत्यर्थः । **यत्त्विति**-( मूत्वे ) सिद्धे यत्तत ( यत् ) प्रगृह्यकार्यं तदर्थ इत्यन्वयः । **अपरः**—अदस इति प्रथमो योगः । **यदसिद्धे इति**-मूत्वे असिद्धे यत्प्रगृह्यकार्यं तदर्थ इत्यर्थः ।

प्रदीपे—**अपिना** यथोद्देशसमुच्चयः । **इति**-इत्यत्र । **अदस इति**-तथा चेत्यादिः । **इति**-इत्यर्थः ।

उद्द्योते—**उत्तरत्रेति**-तस्येत्यादिः । **विशेषणेति**-विशेषणत्वेत्यर्थः । भावप्रधाननिर्देशात् ।

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—अमुया अमुयोरिति ॥

किंच स्यात् यद्यत्र प्रगृह्यसंज्ञा स्यात् ? ॥

प्रगृह्याश्रयः प्रकृतिभावः प्रसज्येत ॥

( प्रदीपः ) **इहापीति** । अदस् टा, अदस् ओस् अत्वम्, टाप् । सवर्णदीर्घत्वम् । **आङि चाप इत्येत्वम्** । अदे आ अदे ओस् इति स्थिते अदस इत्यत्र मादिति विशेषणाभावात्प्रगृह्यसंज्ञायां सत्यामयादेशाप्रसङ्गः ॥

( तत्त्वालोकः ) भाष्ये-योगविभागे दूषणमाह-**इहापीति । तर्हि**-योगविभागाङ्गीकारे ।

( आक्षेपनिरासभाष्यम् )

नैष दोषः । पदान्तप्रकरणे प्रकृतिभावः । न चैष पदान्तः ॥

( तत्त्वालोकः ) तत्परिहरति-**नैष दोष इति** । यत इति शेषः । **पदान्तेति**-"एङः पदान्तादती"त्यतः पदान्तादित्यस्यानुवृत्तिस्तत्र विभक्तिविपरिणामश्चेत्याशयः ।

( आक्षेपभाष्यम् )

एवमप्यमुकेऽत्र, अत्रापि प्राप्नोति ॥

( प्रदीपः ) अमुकेऽत्रेति । अदस इत्यनेन प्राप्नोति ॥

( तत्त्वालोकः ) भाष्ये—एवमपि -पदान्तानुवृत्तावपि ।

( आक्षेपबाधकभाष्यम् )

द्विवचनमिति वर्तते ॥

( तत्त्वालोकः ) द्विवचनमिति–नैष दोषः, यतः ( ईदूदेद्द्विवचनमित्यतः तत्र ) इत्यादिः । वर्त्तते–अनुवर्त्तते ।

( आक्षेपसाधकभाष्यम् )

यदि द्विवचनमिति वर्तते अमी अत्र, अत्र न प्राप्नोति ॥

( तत्त्वालोकः ) वर्त्तते इति–तर्हीति शेषः ।

( आक्षेपबाधकभाष्यम् )

एवं तर्हि एदन्तमिति निवृत्तम् ॥

( प्रदीपः ) एदन्तमिति । ईदूतोरेव स्वरितत्वप्रतिज्ञानादिति भावः । अननुवृत्तिरेव च निवृत्तिः । यद्येवं माद्ग्रहणं न कर्तव्यम्, एद्ग्रहणनिवृत्त्यैवामुकेऽत्रेत्यत्राप्रसङ्गात् । नैतदस्ति । सति माद्ग्रहणे योगविभागो भवति नान्यथा ॥

( उद्द्योतः ) ननु समस्तत्वात्समुदायानुवृत्तिः स्यात्तत्कथमेतो निवृत्तिरत आह—ईदूतोरेवेति । नान्यथेति । सिद्धान्ते तु व्यर्थमेव माद्ग्रहणमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—एदन्तम्–एदन्तपरमेद्ग्रहणम् ।

प्रदीपे—एवेन–एतो व्यावृत्तिः । नन्वेवम् अननुवृत्तिरिति वक्तव्यं न निवृत्तिरिति इयत आह–अननुवृत्तिरिति । यद्येवमिति–तर्हीति शेषः । सतीति–यत इत्यादिः ।

उद्द्योते—समस्तत्वादिति–ईदूदेतामित्यादिः । तत्–तस्मात् । सिद्धान्ते त्विति–अनेनास्यासिद्धान्तता सूचिता । व्यर्थमिति–स्वरितत्वादीदूतोरेवानुवृत्तिः, न तत्रैकारस्येत्यादिरीत्येत्याशयः । केचित्तु—अस्यैकयोगत्वे अनुनासिकपर्युदासेन चारितार्थ्याद् वचनसामर्थ्यं नोपपद्यते इति तदुपपादनाय योगविभाग आश्रितः । तथा चैकस्य तत्र चारितार्थ्येऽपि अपरस्य तदुपपद्यते इति वदन्ति ।

( १६० समाधानान्तरवार्तिकम् ॥ ६ ॥ )

[ ॥ * ॥ मार्थादीदाद्यर्थानां वा ॥ * ॥ ]

( भाष्यम् )

अथवाऽऽहायम्—"अदसो मात्" इति । न च ईत्वोत्वे स्तः । नापि मकारः । त एवं विज्ञास्यामः—'मार्थादीदाद्यर्थानाम्'—इति ॥

( प्रदीपः ) एकयोगे परिहारान्तरमप्याह–अथ वेति ॥ मार्थादिति । मार्थ एव स्थानी मशब्देनोक्तः, ईदूदेदर्थश्चेदूदेदिति । न चास्यां कल्पनायामसिद्धत्वं भवति, बुद्धिपरिकल्पनायामसिद्धत्वाभावस्योक्तत्वात् ॥

( उद्द्योतः ) भाष्ये '*मार्थादीदाद्यर्थानां वा*' इति वार्तिकं व्याचष्टे–अथवाऽऽहेति । ननु एवं सति अदेऽदौ इत्यस्यामवस्थायां प्रगृह्यत्वेऽपि मीत्त्वमूत्वयोः कृतयोरीकारादीनामप्रगृह्यत्वादेतद्वैयर्थ्यमल्विधित्वेन प्रगृह्यत्वाभावादिति चेन्न । प्रदेशे प्रगृह्यस्थानिकस्यापि लक्षणया ग्रहणेनादोषात् ॥

( तत्त्वालोकः ) भाष्ये—योगविभागाश्रयणे गौरवात् प्रकारान्तरेण समाधत्ते–मार्थादिति । अत्र मः अर्थः आदेशत्वेन प्रयोजनमस्येति व्युत्पत्तिः । एवमग्रेऽपि । अयं–पाणिनिः । न चेति–( किन्तु ) तत्रेत्यादिः । नापीति–असिद्धत्वादिति भावः । ते इति–ते वयमित्यर्थः । तस्मादित्यादिः ।

उद्द्योते—एतदिति–प्रगृह्यत्वेत्यर्थः । यणाद्यापत्त्येत्यादिः । ननु स्थानिवद्भावेन तत्र प्रगृह्यत्वं स्यादित्यत आह—अल्विधित्वेनेति । तत्र स्थानिवत्त्वेनेति शेषः । संज्ञायाः स्वदेशे उपयोगाभावादाह–प्रदेशे इति । लक्षणयेति–प्रगृह्यपदेनेति शेषः ।

( १६१ समाधानान्तरवार्तिकम् ॥ ७ ॥

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् )

किमुक्तम् ? ॥

* अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे * [सिद्धे वक्तव्ये ] * प्रगृह्यसंज्ञायां च * इति ॥

( प्रदीपः ) उक्तं वेति । असिद्धत्वमेवात्र प्रतिषिद्धमित्यर्थः ॥ स्वरे इति । अचीत्यर्थः ॥ बहिष्पदलक्षणे । द्वितीयपदव्यवस्थित इत्यर्थः । तेनैकपदव्यवस्थितेऽच्यसिद्धे ईत्वोत्वे । तेनामुयाऽमुयोरित्यत्रायादेशो भवत्येव ॥ प्रगृह्यसंज्ञायां चेति । प्रगृह्यसंज्ञायामेव सिद्धत्वेन सिद्धे लक्ष्ये प्रपञ्चार्थः पूर्ववाक्योपन्यासः ॥

( उद्द्योतः ) द्वितीयेति । द्वितीयपदस्थेऽचि यत्कार्यं तत्रासिद्धत्वं नेत्यर्थः ॥ अन्ये तु 'अथवा वचनसामर्थ्यात्' इत्यादिभाष्ये भाष्यकृत एवोक्तिः । अत एव सांप्रतपुस्तकेषु वार्तिकापाठ इत्याहुः ॥ अन्ये तु अन्त्ये 'उक्तं वेत्यस्य(त्र)' वार्तिकत्वं मत्वाकोशे वार्तिक-पाठो भ्रष्ट इत्याहुः ॥ सिद्धे इति । प्रगृह्यत्वे सिद्धत्वमयादीन् प्रति सिद्धत्वं विना सप्रयोजनं नेति सामर्थ्यात्तान् प्रत्यपि तौ सिद्धाविति भावः ॥

( तत्त्वालोकः ) भाष्ये—नन्वत्र पक्षे मशब्दस्य मार्थे, ईदूदेत्पदस्य चेदूदेदर्थे, लक्षणाऽऽश्रयणेन, अमी अत्रेत्यत्र दोषवारणाय प्रदेशस्थप्रगृह्यपदस्य प्रगृह्यस्थानिके लक्षणाऽऽश्रयणेऽपि हरी एतावित्यत्र दोषवारणाय एकप्रगृह्यपदेन प्रगृह्यप्रगृह्यस्थानिकयोः बोधनासम्भवात् तयोः संग्रहाय तन्मात्राद्याश्रयेण चातिगौरवात् प्रकारान्तरेण समाधत्ते- उक्तं वेति । स्वरितो वेति सूत्रे वार्त्तिककृतेत शेषः । सिद्धे वक्तव्ये इति–अयमंशस्तु भाष्यकृता वार्त्तिकार्थपूर्त्तयेऽध्याहृतो बोध्यः । अदःशब्दापेक्षया बहिष्ट्वादि च बोध्यम् ।

प्रदीपे—असिद्धत्वमिति–ईत्वोत्वयोरित्यादिः । अत्र–प्रगृह्यत्वे । उदात्तादिव्यावृत्तये तदर्थमाह–अचीति ।

उद्द्योते—सिद्धत्वमिति–तयोरित्यादिः । इति—इति हेतोः । तान्–अयादीन् । अपिना प्रगृह्यत्वपरिग्रहः । तौ–ईदूतौ ।

( अनिष्टापत्तिनिवारणाधिकरणम् )

( १६२ आक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ तत्र सकि दोषः ॥ * ॥

( भाष्यम् )

तत्र सककारे दोषो भवति—अमुकेऽत्र ॥

( प्रदीपः ) तत्र सकि दोष इति । मात्परं यदीदाद्यन्तमिति

दोषोपन्यासः। पूर्वसूत्रे हि तदन्तं गृहीतमितीहापि तदन्तस्यैवानुवृत्तिरिति भावः ॥

**( उद्द्योतः )** विशेष्यासंनिधाने कथं तदन्तविधिरत आह-**पूर्वसूत्रे इति ।** अर्थाधिकारादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी शङ्कते-**तत्रेति ।**

प्रदीपे—**इति**-इत्यर्थे । **पूर्वसूत्रे**-"ईदूदेदिति" सूत्रे । हि-यतः । **तदन्तम्**-ईदाद्यन्तम् । **इति**—इति हेतोः । **इहापि**-प्रकृतसूत्रेऽपि । **तदन्तस्यैवेति**-तत इत्यादिः । अर्थस्येति शेषः । एवेन ईदादिशब्दव्यावृत्तिः ।

उद्द्योते—**कथमिति**-पूर्वसूत्रतोऽत्रानुवृत्तेदादिनेति शेषः।

( १६३ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ ※ ॥ न वा ग्रहणविशेषणत्वात् ॥ ※ ॥

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ? ॥**

**ग्रहणविशेषणत्वात् । न माद्ग्रहणेन ईदाद्यन्तं विशेष्यते ॥**

**किं तर्हि ? ॥**

**ईदादयो विशेष्यन्ते-मात्परे ये ईदादय-इति ॥ अदसो मात् ॥ १२ ॥**

**( प्रदीपः )** स्वरितत्वेन शब्दमात्रमनुमीयत इति उत्तरेभिप्रायः । तत्र माद्ग्रहणेन गृह्यमाणमीदूदेद्विशेष्यते, तेनामुकेत्यत्र व्यवधानाद्दोषाभाव एव । योगविभागे दोषप्रसङ्गादेदन्तमिति निवृत्तमित्युक्तम् । एकयोगे तु तन्निवृत्त्या न प्रयोजनमिति **न वा ग्रहणविशेषणत्वादि**त्युत्तरमुक्तम् ॥ १२ ॥

**( उद्द्योतः ) शब्दमात्रमिति ।** एवं च विशेष्याभावान्न तदन्तविधिरिति भावः ॥ १२ ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**न वेति ।**

प्रदीपे—शब्दाधिकाराशयेनाह-**शब्दमात्रमिति ।** तत ईदादीत्यादिः । अत्रानुवर्त्तते इतीति शेषः । मात्रपदेन ईदाद्यन्तरूपार्थव्यावृत्तिः । **तत्र**—तथाऽनुवृत्तौ । ननु पूर्वम् "एदन्तमिति निवृत्तमि' त्युक्तेरेव प्रकृते दोषवारणात् कथन्तदर्थं "नवे" त्यादिना समाधानान्तरमाश्रीयते इत्यत आह-**योगविभागे इति । तन्निवृत्त्या**-एदन्तनिवृत्त्या ।

---

( १२ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ० ३ ॥ )

## शे ॥ १ । १ । १३ ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न-भवति—काशे, कुशे, वंशे, इति ? ॥**

**( प्रदीपः ) शे ॥ १३ ॥ इह कस्मादिति ।** अत्र हि प्रत्यक्षमेव **शे इति** रूपम् । युष्मे अस्मे इत्यत्र तु शकारस्यानुबन्धस्य स्मरणादनुमेयमिति प्रश्नः ॥

**( उद्द्योतः ) शे ॥ १३ ॥ प्रत्यक्षमेवेति ।** एवंच **इहेति**—भाष्यस्य इहैवेत्यर्थः ॥ **युष्मे इति ॥ सुपां सुलुगिति** विभक्त्यादेशः शेशब्द इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी शङ्कते-**इहेति ।**

प्रदीपे—**अत्र**-काशे इत्यादौ । हि—यतः । **इति**-इति हेतोः । श्रुतानुमितयोः श्रुतसम्बन्धस्यैव न्याय्यत्वमिति न्यायादिति भावः ।

( १६४ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ ※ ॥ शेऽर्थवद्ग्रहणात् ॥ ※ ॥

( भाष्यम् )

**अर्थवतः शेशब्दस्य ग्रहणम् । न चैषोऽर्थवान् ॥**

**( प्रदीपः ) शेऽर्थवद्ग्रहणादिति ।** एवं शब्दस्येत्येवान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपपरिग्रहे सिद्धे रूपवदर्थस्याप्यङ्गीकरणार्थं रूपग्रहणं कृतम् । अत्र च शशब्दोऽनर्थकः, सप्तम्येकवचनं त्वर्थवत्, तयोः समुदायोऽर्थान्तराप्रादुर्भावादनर्थकः ॥

**( उद्द्योतः )** शेश्चासावर्थवांश्च तस्य ग्रहणादित्यर्थः । शक्तिग्रहनिरपेक्षप्रतीतिकत्वे**नान्तरङ्गत्वम् ।** अर्थप्रतीतावपि प्रतीयमानत्व**महेयत्वम् ।** शब्दान्तरैरप्रत्यायनाद**साधारणत्वात् ॥ अप्रादुर्भावो**ऽप्रतीतिः ॥

**( तत्त्वालोकः )** भाष्ये—आनर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनार्थवतोऽनुमेयस्यापि ग्रहणं युक्तं, नानर्थकस्य प्रत्यक्षस्यापीत्यभिप्रायेणाह-**शेऽर्थवद्ग्रहणादिति ।** सिद्धमिति शेषः । **अर्थवत इति**-नैष दोषः । यत इत्यादिः । **एषः**-कुशे इत्यादिघटकः ।

प्रदीपे—ननु शब्दानुशासनप्रस्तावात् शब्दमात्रस्य ग्रहणं न्याय्यं, नार्थवत एव शब्दस्येत्यत आह—**एवं शब्दस्येति ।** "स्वं रूपं शब्दस्ये" त्यत्रेत्यादिः । **इत्येव**-इत्येतावतैव । **कृतमिति**-तथा चैतन्मूलक "अर्थवदि"ति परिभाषयाऽर्थवत एव ग्रहणं न्याय्यमित्याशयः। **अत्र च**-काशे इत्यादौ च । **तयोः**-शशब्दसप्तम्येकवचनयोः । युष्मे इत्यादौ तु "सुपामि" त्यनेन जातस्य विभक्त्यादेशस्य शेशब्दस्य स्थान्यर्थेनार्थवत्त्वात्तस्यैव ग्रहणमिति भावः ।

उद्द्योते—अर्थवतः शेशब्दस्येति भाष्यानुरोधादाह-**शेश्चासाविति ।** केचित्तु—शे इति सूत्रेऽर्थवद्ग्रहणात्सिद्धमिति वार्तिकार्थः । भाष्यन्तु फलितार्थपरम् । सूत्रे इवात्रापि लुप्तविभक्त्यन्तरवेन शेशब्दानुकरणत्वात् **पूर्वरूपम्** । किञ्च समासे अर्थवच्छेग्रहणादिति न्याय्यम्, उक्तरीत्योपपत्तिसम्भवे तस्य राजदन्तादित्वकल्पनमपि व्यर्थमिति वदन्ति ॥ "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते । अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते" इति हरिकारिकानुसारेणाह-**अर्थप्रतीताविति । असाधारणत्वादिति**—अत्र "असाधारणत्वमि"ति पाठो युक्तः ।

( आक्षेपभाष्यम् )

**एवमपि हरिशे, बभ्रुशे, इत्यत्रापि प्राप्नोति ॥**

**( प्रदीपः ) एवमपीति ।** अत्र हि मत्वर्थीयसप्तम्येकवचनयोरर्थवतोः समुदायोऽर्थवानेवावयवधर्मानुविधानात्समुदायस्येति प्रश्नः ॥

**( उद्द्योतः ) मत्वर्थीयो** लोमादिशः ॥

**( तत्त्वालोकः )** भाष्ये—**एवमपि**-अर्थवद्ग्रहणेऽपि ।

प्रदीपे—**अत्र**-हरिशे इत्यादौ । **हि**-यतः । **इति**-इति हेतोः ।

उद्द्योते—**लोमादिश इति**-उभयत्रेत्याशयः ।

**( समाधानभाष्यम् )**

**एवं तर्हि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येवं न भविष्यति ॥**

**( प्रदीपः ) लक्षणेति ।** प्रतिपदोक्ते हि झटिति प्रतिपत्तिर्भवति, लाक्षणिके तु लक्षणानुसन्धानद्वारेण बहिरङ्गेति न तस्य ग्रहणम्।

**( तत्त्वालोकः )** भाष्ये-एकदेशी समाधत्ते-**एवं तर्हीति । इति-**इत्यनया । **एवं**-तत्र प्राप्तिः ।

प्रदीपे—**हि**-यतः । **बहिरङ्गा—**विलम्बोपस्थितिका । अन्तरङ्ग बहिरङ्गशब्दाभ्यामन्तरङ्गत्वबहिरङ्गत्वनीजे शीघ्रोपस्थितिकत्वबिलम्बोपस्थितिकत्वे उच्येते । न त्वन्तरङ्गपरिभाषाविषयतेति भावः । **तस्य-**हरिशे इत्यादिघटकशेशब्दस्य ।

**( पूर्वोक्तसमाधानाभ्युपगमभाष्यम् )**

**अथ वा पुनरस्तु—'अर्थवद्ग्रहणे नानर्थकस्य' इति ॥**

**कथं तर्हि—हरिशे बभ्रुशे इति ? ।**

**एकोऽत्र विभक्त्यर्थेनार्थवान्, अपरस्तद्धितार्थेन । समुदायोऽनर्थकः ॥ शे ॥ १३ ॥**

**( प्रदीपः ) अथ वेति ।** अर्थवत्समुदायस्यापि कस्यचिदानर्थक्यं यथा दशदाडिमादिवाक्यस्य । पदार्थानां परस्परसमन्वयाभावाद् । इहापि हरिशशब्दवाच्यार्थगतसंख्याधिकरणशक्तिप्रतिपादनाय प्रवृत्ता सप्तमी न शप्रत्ययमात्रप्रतिपाद्येनार्थेनान्वेतीति शेशब्दस्यानर्थक्यम् ॥ १३ ॥

**( उद्द्योतः ) आनर्थक्यमिति ।** प्रत्यक्षानुमानिकन्यायापेक्षया रूपग्रहणानुगतार्थवत्परिभाषा प्रबलेति भावः ॥ १३ ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते-**अथवेति ।** "प्रत्ययानां प्रकृत्यर्थान्वित्वे"ति न्यायेनाह-**एक इति ।** द्वितीय इत्यर्थः । यत इत्यादिः । **अत्र**-हरिशे इत्यादौ । **अपरः**-प्रथमः ।

प्रदीपे—पूर्वपक्ष्युक्तं खण्डयति-**अर्थवदिति ।**

उद्द्योते—ननु 'लक्षणेति' न्यायेनापि निर्वाहसम्भवे कथं पुनः पूर्वं एव पक्ष आश्रित इत्यत आह-**प्रत्यक्षेति ।** लौकिकलाघवगौरवमूलक "प्रत्यक्षे" तिन्यायाभिन्न "लक्षणे" तिन्यायापेक्षयेत्यर्थः। **रूपेति-**शास्त्रीयेत्यादिः । **अनुगता-**बोधिता । द्वयोस्तस्य गुणभूतशब्दसम्बन्धित्वान्न्यायसिद्धत्वाच्च दुर्बलता, अस्य तु प्रधानभूतार्थसम्बन्धित्वाद्वचनसिद्धत्वाच्च प्रबलतेति भावः ।

---

**( १३ प्रगृह्यसंज्ञासूत्रम् ॥ १ । १ । ५ आ० ४ ॥ )**

# निपात एकाजनाङ् ॥ १ । १ । १४ ॥

**( पदकृत्याधिकरणम् )**

**( आक्षेपभाष्यम् )**

**निपात इति किमर्थम् ? ॥**

**( प्रदीपः ) निपात एकाजनाङ् ॥ १४ ॥ निपात इति किमर्थमिति ।** निपातस्यैवैकाचोऽर्थवत्त्वात् प्रत्ययस्य केवलस्य प्रयोगाभावादानर्थक्यात् कल्पितरूपत्वात् , कल्पनायाश्च नियमाभावात् प्रश्नः ॥

**( उद्द्योतः ) निपात० ॥ १४ ॥ आनर्थक्यादिति ।** अर्थवत्त्वानिश्चयादित्यर्थः ॥ तत्र हेतुः—**कल्पितरूपत्वादिति ॥** ततः किं तत्राह—**कल्पनाया इति ।** अत एव केचिच्छतिपमन्ये शप्तिपौ वदन्ति । तत्रैयतोऽर्थवत्त्वमिति न निश्चेतुं शक्यत इत्यर्थः ॥ ननु निपातग्रहणाभावे एकाजिति वर्णग्रहणादर्थवत्परिभाषाया अप्रवृत्तावर्थवद्ग्रहणे मानाभाव इति चेन्न । बहुव्रीहिरित्याशयात् । **गौणमुख्य-**न्यायस्य तु नेह प्रवृत्तिः । पर्युदासेनैवाङ्पर्युदासे लब्धे एकाज्ग्रहणस्य गौणमुख्यसंग्रहार्थत्वाद् न्यायानित्यत्वाच्च ॥ एतेन "सत्यभिधाने—ऽनिरिरभवद् ईअभवदित्यादौ प्रगृह्यत्वं न स्याद् **गौणमुख्य-**न्याया" दिति परास्तम् । अत **एचौदित्य**त्रैव च्व्यन्तप्रतिषेध आरब्धः ॥

**( तत्त्वालोकः )** उद्द्योते—ननु कल्पितरूपत्वात् कल्पितार्थवत्तापि स्यादित्यत आह-**अर्थवत्त्वेति । तत्र-**अर्थवत्त्वानिश्चये । अनेन प्रयोगाभावस्य कल्पितरूपत्वे हेतुता सूचिता ॥ **ततः किमिति-**कल्पितरूपत्वात्कथम् अर्थवत्त्वानिश्चय इत्यर्थः । **अत एव**-कल्पनाया अनियमादेव । **शक्यते इति**-तथा च कल्पितरूपत्वात्तदशक्यत्वेनार्थवत्त्वानिश्चय इति भावः । **वर्णग्रहणेति-**वृत्तिपदार्थप्राधान्यादन्तरङ्गतया कर्मधारयादिति भावः। **बहुव्रीहिरिति-**उक्ष्यानुरोधादिति भावः। **आशयादिति-**पूर्वपक्षिण इत्यादिः। ननु गौणमुख्यन्यायेन न दोष इत्यत आह-**गौणमुख्येति ।** ननु शब्दतस्तथा न लभ्यते इत्यत आह-**न्यायेति ।** इभिन्न इरभवदिति विग्रहाशयेनाह-**अनिरिरभवदिति । एवेन** प्रकृतसूत्रव्यावृत्तिः ।

**( समाधानभाष्यम् )**

**चकारात्र जहारात्र ॥**

**( प्रदीपः ) चकारात्रेति ।** अन्वयव्यतिरेकाभ्यां प्रत्ययस्याप्यर्थवत्त्वमिति भावः ॥ निपातोऽपि केवलो न प्रयुज्यते द्योतकत्वादिति साम्यमेव निपातप्रत्यययोः ॥ **अततेर्डः अः ।** अआगच्छ आगच्छेत्यपि प्रत्युदाहरणम् ॥

**( उद्द्योतः ) अन्वयेति ।** व्याकरणानुसन्धानानुगृहीताभ्यामित्यर्थः । तस्यैव चास्मच्छास्त्रप्रवृत्त्युपयोगित्वादिति भावः ॥ वस्तुतोऽनर्थकनिपातेऽपि अस्य प्रवृत्तेरोत्सूत्रे भाष्ये वक्ष्यमाणत्वादत्रार्थवत एव ग्रहणमिति न नियमः ॥ प्रश्नाशयस्तु—**अनाङि**ति पर्युदासादप्रत्ययस्य ग्रहणमिति । उत्तराशयस्तु—पर्युदासेन तथाऽऽश्रयणे न मानं निपातग्रहणादेव । तेन प्रत्ययानुकरणे एतत्प्रवृत्तिरिति ॥ अ आगच्छेत्यत्रापि प्लुते प्रकृतिभावो दुर्वार इति प्लुताभावे कथंचिदुदाहरण वं यदि तर्हि सवर्णदीर्घे तथा बोधः ॥

**( तत्त्वालोकः)** उद्द्योते-तयोः प्रामाणिकत्वायाह-**व्याकरणेति । तस्यैव**-तथा कल्पितार्थवत्त्वस्यैव । कैयटोक्तं दूषयति-**वस्तुत इति । अस्य-**प्रकृतसूत्रस्य । **अत्र-**"निपात एकाजि"त्यत्र । **तथेति**-अप्रत्ययेत्यर्थः । **निपातेति**-अन्यथा तद्वैयर्थ्यादिति भावः । **प्रत्ययानुकरणे इति-**अनितिपरत्वे गतित्ववन्निपातत्वस्यापि सत्त्वादिति शेषः। **एतदिति-**प्रकृतसूत्रेत्यर्थः । **इतिः-**समाप्तौ । अततेरित्याद्यपि दूषयति-**अ आगच्छेति । प्लुते-**"दूराद्धूते चे" त्यनेन । तस्य वैकल्पिकत्वादाह-**प्लुताभावे इति । उदाहरणत्वं**-प्रत्युदाहरणत्वम्। **तथा बोधः-**प्लुताभाववद्बोधः । तथा चोभयथा तत्र सन्ध्यभावस्यैवेष्टत्वान्न प्रत्युदाहरणतेति भावः ।

( आक्षेपभाष्यम् )

**एकाजिति किमर्थम् ? ॥**

**( प्रदीपः ) एकाजिति किमर्थमिति** । एकग्रहणसामर्थ्याद्बहुव्रीहिं मन्यते, ततश्च प्रेदं ब्रह्मेत्यनिष्टनिवृत्तिर्न कृतेति प्रश्नः ॥

**( उद्द्योतः ) एकग्रहणेति** । स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावेनैकग्रहणं विनापि कर्मधारयार्थलाभादिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**बहुव्रीहिमिति**—एकाजित्यत्रेति भावः। **इति**—इत्यत्र । प्रशब्दस्यैकाच्त्वादिति भावः। **अनिष्टेति**—प्रगृह्यत्वेति शेषः । **इति**—इति हेतौ ।

( आक्षेपबाधकभाष्यम् )

**प्रेदं ब्रह्म । प्रेदं क्षत्रम् ॥**

( आक्षेपबाधानुपपत्तिभाष्यम् )

**एकाजित्यप्युच्यमानेऽत्रापि प्राप्नोति । एषोऽपि ह्येकाच् ॥**

**( तत्त्वालोकः ) अप्युच्यमाने**-उच्यमानेऽपि । **अत्रापि**-प्रेदं ब्रह्मेत्यादावपि । **एषः**-प्रशब्दः । हि-यतः ।

( आक्षेपबाधोपपत्तिभाष्यम् )

**एकाजिति नायं बहुव्रीहिः—एकोऽज् यस्मिन् सोऽयमेकाच् एकाजिति ॥**

**किं तर्हि ? ।**

**तत्पुरुषोऽयं समानाधिकरणः—एकः अच् एकाच् एकाजिति ॥**

**( प्रदीपः )** तत्पुरुषोऽयमिति । अन्तरङ्गत्वाद्वर्तिपदार्थप्राधान्याच्चेति भावः ॥

**( उद्द्योतः )** अन्तरङ्गत्वे हेतुमाह—**वर्तीति** ॥

**( तत्त्वालोकः )** भाष्ये—व्यधिकरणनिरासायाह-**समानेति** । कर्मधारय इति भावः ।

( आक्षेपभाष्यम् )

**यदि तत्पुरुषोऽयं समानाधिकरणो, नार्थ एकग्रहणेन ॥**

( प्रत्याक्षेपभाष्यम् )

**इह कस्मान्न भवति—प्रेदं ब्रह्म । प्रेदं क्षत्रम् ।**

**( उद्द्योतः )** भाष्ये **इह कस्मादिति** । अजन्तो निपात इत्यर्थ इति प्रश्नः ॥

( प्रत्याक्षेपबाधकभाष्यम् )

**अजेव यो निपात इत्येवं विज्ञायते ॥**

**( उद्द्योतः ) अजेव य इति** । निपातेनाज्विशेषणादित्यर्थः ॥

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ।**

**( उद्द्योतः ) किं वक्तव्यमिति** । निपातस्य न्यायप्राप्तविशेष्यत्वाभावायेत्यर्थः ॥

( समाधानभाष्यम् )

**न हि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ? ॥**

( समाधानभाष्यम् )

**अज्ग्रहणसामर्थ्यात् यदि हि अचोऽन्यच्च तत्र स्याद् , अज्ग्रहणमनर्थकं स्यात् ॥**

**( उद्द्योतः ) यदि हीति** । अजन्तग्रहणेऽज्ग्रहणवैफल्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**हि**-यतः । **स्यादिति**-तर्हीति शेषः ।

( सामर्थ्यानुपपत्तिभाष्यम् )

**अस्ति ह्यन्यदज्ग्रहणस्य प्रयोजनम् ॥**

**किम् ? ॥**

**अजन्तस्य यथा स्यात् । हलन्तस्य मा भूत् ॥**

**( तत्त्वालोकः ) अस्तीति**-नैष दोष इत्यादिः ॥ **हि**-यतः ।

( सामर्थ्योपपत्तिभाष्यम् )

**नैव दोषो न प्रयोजनम् ॥**

**( प्रदीपः ) नैव दोष इति** । ननु पुरोऽह्रिरिति हलन्तस्य प्रकृतिभावाद्रोरुत्वं न स्यात् ॥ नैष दोषः, प्रगृह्यसंज्ञायां रुत्वस्यासिद्धत्वात् । सकारस्य च कार्यान्तराप्रसङ्गात् । उत्वे तु रुत्वमाश्रयात्सिद्धम् ॥

**( उद्द्योतः ) प्रगृह्यसंज्ञायामिति** ॥ ननु सान्तस्य प्रगृह्यत्वे **एकदेशविकृत**न्यायेन रान्तस्यापि तत्त्वात्प्रकृतिभावः स्यादिति चेन्न । प्रकृतिभावेऽप्यसिद्धत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**नैवेति**—हलन्तस्य प्रगृह्यसंज्ञायां सत्यामपीत्यादिः ।

प्रदीपे—**हलन्तस्य**—रान्तस्य । प्रगृह्यसंज्ञयेति भावः । ननु तर्हि सान्तस्यैव सा भवत्वित्यत आह-**सकारस्य चेति** । प्रकृतिभावे रुत्वस्यासिद्धत्वेन तत्र रुत्वस्याविधेयत्वादाह-**कार्यान्तरेति** । तथा च तत्र व्यावर्त्याभावात्प्रकृतिभावो निष्फलः स्यादिति भावः ।

उद्द्योते—**तत्त्वात्**-प्रगृह्यत्वात् । तथा च रोरुत्वं न स्यादिति भावः। **अपिना**-प्रगृह्यसंज्ञापरिग्रह । **असिद्धत्वादिति**-हलरयेत्यादिः ।

( सामर्थ्यानुपपत्तिभाष्यम् )

**एवमपि कुत एतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः "आद्यन्तवदेकस्मिन्" "येन विधिस्तदन्तस्य" इति च—इयमिह परिभाषा भविष्यति—"आद्यन्तवदेकस्मिन्" इति । इयं च न भविष्यति—"येन विधिस्तदन्तस्य" इति ? ॥**

**( प्रदीपः ) एवमपीति** । अन्यतरनिवृत्त्याऽज्ग्रहणस्यार्थवत्त्वादज्मात्रं गृह्यते तदन्तं निरस्यते । विपर्ययस्तु न भवतीति विशेषाभावात् प्रश्नः ॥ पारार्थ्यसामान्यात् संज्ञातिदेशौ परिभाषाशब्देनोक्तौ ॥ **सावकाशयोरिति** । निरवकाशस्य बाधकत्वादेवमुक्तम् । तत्र तदन्तविधेरवकाशः—**ओरावश्यके** लाव्यं पाव्यम् । आद्यन्तवद्भावस्याव-

काशः **मिदचोऽन्त्यात्परः**–तानि यानीति । अत्र हि साक्षादन्त्यग्रहणमस्तीति तदन्तविध्यभावः ॥ **समवस्थितयोरिति** । इह प्राप्तयोः ॥

**( उद्द्योतः )** अथ निपातस्य विशेष्यतया अजन्त इति व्याख्यानेऽपि अज्ग्रहणसामर्थ्यान्मुख्याजन्तपरिग्रहेण केवलाजूप्यावृत्तिरज्ग्रहणस्य फलं स्यादिति मनसि निधाय पृच्छति-**एवमपीति** भाष्ये॥ **अन्यतरनिवृत्त्येति** । निपातस्य विशेषणत्वे तदन्तपरिभाषाऽप्रसक्तिरेव निवृत्तिः । विशेष्यत्वे त्वजिति विशेषणसामर्थ्यात्तदन्तस्यैव ग्रहेण मुख्याजन्तपरिग्रहा**दाद्यन्तवदि**त्यस्य निवृत्तिरिति भावः ॥ **विपर्ययः** निपातस्य विशेष्यत्वेनाजन्तपरिग्रहः केवलाचो निवृत्तिरिति ॥ **इति विशेषाभावादिति** । अत्र च कारणाभावादित्यर्थः ॥ **संज्ञा येनविधिरिति** । **अतिदेशः आद्यन्तवदिति** ॥ **लाभ्यमिति** । **उञ्शब्दे** इत्यत आवश्यके ण्यदनभिधानान्नेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**एवमपि**–तत्र हलन्तस्य प्रगृह्यसंज्ञाव्यावृत्त्यर्थत्वाभावेऽपि । **एतदिति**–अस्य चरमेतिनाऽन्वयः । **इति च**–इत्यनयोर्मध्ये ।

प्रदीपे—"प्रकृतिवदि" त्यतिदेशरूपायाः, "प्रातिपदिकग्रहणे" इति संज्ञारूपायाश्च परिभाषायाः दर्शनादाह-**पारार्थ्येति** । **तत्र**–तयोः । **अत्र**–"मिदचोऽन्त्यादि"त्यत्र ।

उद्द्योते—अत्र विशेषशब्दः करणल्युडन्त इत्याशयेनाह-**अत्र चेति** । इत्युक्तौ चेत्यर्थः । दोषं परिहरति-**उञिति** ।

## ( सामर्थ्यानुपपत्तिनिराकरणभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति—इयमिह परिभाषा भवति-"आद्यन्तवदेकस्मिन्" इति, इयं च न भवति "येन विधिस्तदन्तस्य" इति । यदयम्-'अनाङ्' इति प्रतिषेधं शास्ति ॥**

**( प्रदीपः ) आचार्यप्रवृत्तिरिति** । यदि तर्हि लिङ्गेन तदन्तविधिर्निराक्रियते तदा तन्मूला**द्यन्तव**त्परिभाषा कथं प्रवर्तते । नैष दोषः, **आद्यन्तव**दित्यस्योपस्थानाय तदन्तविधिः प्रथमं सन्निधीयते पश्चात्तु लिङ्गात् परित्यज्यते ॥ अथवा लिङ्गादज्ग्रहणं निपातेन विशेष्यत इति विशेष्येण च तदन्तविधेरभावादतिदेशस्यापि मा भूत् प्रवृत्तिस्तत्फलसंपत्त्या तूक्तम्—**परिभाषा भविष्यतीति** ॥

**( उद्द्योतः ) यदि तर्हीति** । एवञ्च **इयमिह भवती**ति भाष्यमनुपपन्नमिति भावः । ननु पूर्वं प्रवर्त्य पश्चात्परित्यागापेक्षयाऽप्रवृत्तौ लाघवमित्यभिप्रेत्याह—**अथवेति** ।

**( तत्त्वालोकः )** भाष्ये—**यत्**–यस्मात् । **अयम्**–आचार्यः । तथा च निपातस्य विशेष्यतया अजन्त इत्यर्थे ( अज्ग्रहणसामर्थ्येनाजन्तस्यैवेति लाभेऽपि ) केवलाचोऽपि आद्यन्तवद्भावेनाजन्तत्वात् तद्व्यावृत्तिः नाज्ग्रहणफलमिति भावः । नचाज्ग्रहणसामर्थ्यादत्र मुख्याजन्ततावत एव ग्रहणं, नातिदिष्टाजन्ततावत इति लाभेन तस्य तत्फलमिति वाच्यम्, अज्ग्रहणसामर्थ्येनात्राच एव ग्रहणं नाजन्तस्येत्यस्यैव वक्तुं युक्तत्वात् । नचात्र विनिगमनाविरहः, अनाङिति प्रतिषेधकरणरूपविनिगमकस्य सत्त्वात् ॥

प्रदीपे—**लिङ्गेन**–अनाङिति प्रतिषेधकरणरूपज्ञापकेन । **तन्मूलेति**–तदन्तविधिमूलकेत्यर्थः । **इतीति**–ज्ञायते इति शेषः । **तत्फलेति**–अतिदेशप्रवृत्तिफलेत्यर्थः । तथा चात्र भाष्ये **परिभाषेत्यस्य**–कृतार्थेति शेषो बोध्यः । उद्द्योते—पूर्वपक्षाशयमाह-**एवञ्चेति** ।

## ( समाधानभाष्यम् )

**एवं तर्हि-सिद्धे सति यदज्ग्रहणे क्रियमाणे एकग्रहणं करोति, तज्ज्ञापयत्याचार्यः—'अन्यत्र वर्णग्रहणे जातिग्रहणं भवति' इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

***दम्भेर्हल्ग्रहणस्य जातिवाचकत्वात् सिद्धम्* इति यदुक्तं, तदुपपन्नं भवति ॥**

**( प्रदीपः ) एवं तर्हीति** । संज्ञाया विधीयमानत्वात् प्राधान्यात् संज्ञिनो गुणत्वात् **पशुना यजेतेतिवत्** संख्याविवक्षायां सिद्धायामेकग्रहणमन्यत्र जातिसंप्रत्ययार्थम् । अच्समुदायग्रहणशङ्काया निरासार्थं ह्येकग्रहणं ज्ञापनफलं संपद्यते ॥ किं पुनः स्याद् यद्यत्राच्समुदायस्य ग्रहणं स्यात् ? उच्यते । इह अइउ अपेहीति समुदायस्यैका संज्ञा स्याद्, नावयवानाम् । समुदायैकाज्द्विर्वचनवदित्यन्त्यस्यैव प्रकृतिभावाद्याणादेशो न स्यात् । पूर्वयोस्तु स्वरसंधिः स्यात् । अच्समुदायपरिग्रहानुरोधित्वाच्च निपातसमुदायो गृह्येत, एकनिपातस्याच्समुदायस्याभावात् ॥

**( उद्द्योतः )** ननु एकग्रहणाभावेऽच्समुदायस्य स्यादिति तन्निवृत्त्यर्थमेकग्रहणं तत्राह—**संज्ञाया इति** । **गुणत्वादिति** । संज्ञोपकारकत्वादित्यर्थः । पशोरपि यागोपकारकत्वाद्गुणत्वम् । नहि यागः पश्वर्थः । अपि तु यागार्थः पशुः । **ग्रहं संमार्ष्टी**त्यादौ तु ग्रहार्थत्वात्संमार्गस्य ग्रहस्य प्राधान्यमिति न तद्गतसंख्या विवक्षितेति भावः ॥

परे तु संज्ञा स्वकार्यद्वारा संज्ञ्युपकारिका, न तु संज्ञी संज्ञोपकारकः । अन्यथा ग्रहोऽपि कर्मत्वेन समार्गार्थः स्यादिति **विधेयविशेषणं विवक्षितमनुवाद्यविशेषणमविवक्षित**मिति मीमांसकमर्यादैव ज्यायसी, भाष्यसमता चेतीदं चिन्त्यम् । तस्मात् स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽच्त्वाभावान्न तद्ग्रहणप्रसक्तिरित्येकग्रहणं विनापि सिद्धिरिति तज्ज्ञापकमिति भाष्याशय इत्याहुः ॥

**जातिग्रहणमित्यस्य** तज्जात्याश्रयानेकव्यक्तिग्रहणमित्यर्थः । अन्यथा जातिग्रहणेऽपि जातेरेकैकव्यक्तिव्यङ्ग्यतयाऽसंगतिरेव । प्रवृत्तिनिमित्ततया जातिग्रहणस्य सर्वत्र सत्त्वेन तस्यावक्तव्यत्वाच्च । **इहेत्यादि** । अत्रेदं चिन्त्यम् । समुदायसंज्ञयाऽवयवानामननुग्रहान्नात्र द्विर्वचनन्यायः । नापि निपातसमुदायस्य निपातग्रहणेन ग्रहणम्, स्वाङ्गसमुदायस्य स्वाङ्गग्रहणेनेवैकैकत्र सूत्रचारितार्थ्यादिति । तस्मात्तितउशब्दैकदेश अउशब्दानुकरणे उक्तसमुदायानुकरणे वाऽनितिपरे निपातसंज्ञके अउ अकरोदित्यादौ प्रगृह्यत्वं स्यात्तद्वारणायैकग्रहणमिति तत्त्वम् ॥ भाष्ये **दम्भेरिति** । दम्भेः सनि **दम्भइच्चे**तीत्वे **सनीवन्ते**ति इडभावपक्षे इक्समीपो नकारो न ततो झलादिः सन् परः, यतश्च भात्परः सन्न स इक्समीप इति **हलन्ताच्चेति** कित्वाभावे **'अनिदिता**मि'ति नलोपो न स्यादिति चोद्ये जात्याश्रयानेकस्येक्समीपत्वं सनश्च तस्मात्परत्वमिति कित्त्वे धिप्सतीति सिद्धिरित्यर्थः । अनेन सामीप्यमव्यवहिते एवेति सूचितम् ॥

**( तत्त्वालोकः )** भाष्ये—**एवं तर्हीति**–अज्ग्रहणमात्रे क्रियमाणे उक्तरीत्या अजेव यो निपात इति लाभे प्रेदमित्यादौ दोषवारणे सिद्धे सति यदेकग्रहणमित्याद्यर्थः । **तत्**–तस्मात् । **ज्ञापयतीति**–सूत्रे लिङ्गवचनमतन्त्रमिति ज्ञापयन्नित्यादिः । ज्ञापनफलाशयेनाह-**अन्यत्रेति** । इदं ज्ञाप्यकोटिप्रविष्टं नेति भावः । **दम्भेरिति**–अस्य सिद्धमित्यनेनान्वयः । अत्र हेतुः-**हल्ग्रहणस्येति** । [illegible]

ते सूत्रे वार्त्तिककृतेति शेषः । केचित्तु अपृक्तसंज्ञायामेकग्रहणस्य "वर्णग्रहणे जातिग्रहणमि" त्यत्र ज्ञापकत्वमभ्युपेत्य प्रकृतसूत्रे एकग्रहणपरित्यागस्यैव ज्यायस्त्वं प्रतिपादयन्ति ।

प्रदीपे— **संज्ञिन इति**—उद्दिश्यमानत्वादिति भावः । **एकग्रहणमेति**—अत्रत्यमित्यादिः । तद्दिशदयति-**अजिति । हि**-यतः । **ग्रहणमिति**—अतः । **ज्ञापनफलं**—ज्ञापनरूपफलवत् । शङ्कते-**किं पुनरिति ।** ननु प्रत्येकं निपातत्वेन समुदायस्यातत्त्वात् कथमियमाशङ्कितिरित्यत आह-**अच्समुदायपरिग्रहेति । च**-तु ।

उद्द्योते—संस्कारकत्वादिरूपगुणत्वस्य प्रकृतेऽभावादाह-**संज्ञोऽकारकेति ।** कैयटोक्तं खण्डयति-**परेरिवेति । स्वकार्येति**—तत्तच्छास्त्रविहितेत्यादिः । **कर्मत्वेन**—संमार्गकर्मत्वेन । **ज्यायसीति**—अत एव ग्रहोद्देशेन संमार्गविधानेऽपि संमार्गस्य न प्राधान्यम् । अत एव च वृद्धिसंज्ञासूत्रे प्रधानस्य संज्ञिनोऽनुरोधेन संज्ञाया आवृत्तिरुक्तेत्याशये नाह-**भाष्यसंमता चेति । इदं**-कैयटोक्तम् । **तज्जात्येति**—उपात्तजात्येत्यर्थः । **आश्रयानेकेति**—आश्रयैकानेकेति पाठः । **ग्रहणमिति**—यथासम्भवमिति भावः । यथाश्रुतार्थत्यागे बीजमाह-**अन्यथेति ।** उक्तार्थानभ्युपगमे इत्यर्थः । प्रकृते कैयटोक्तदृष्टान्तवैषम्यमाह-**समुदायसंज्ञयेति ।** अग्रहणे दृष्टान्तमाह-**स्वाङ्गेति ।** ननु सामर्थ्याद्भवेदित्यत आह-**एकैकत्रेति । इतीति**—अस्य पूर्वेणेदं चिन्त्यमित्यनेनान्वयः । भाष्यतात्पर्यमाह-**तस्मादिति । उक्तसमुदायेति**—अ इ उ इति समुदायेत्यर्थः । **इत्यादौ**—इत्याद्येकदेशे । आदिना समुदायसंग्रहः । **चोद्ये**—प्रश्ने । **अनेन**—भाष्येण ।

( आक्षेपभाष्यम् )

**अनाङिति किमर्थम् ? ॥**

**( प्रदीपः ) अनाङिति किमर्थमिति ।** ङिदङितोराकारयोर्विषयविभागप्रदर्शनाय प्रश्नः ॥

**( उद्द्योतः ) प्रदर्शनाय** प्रदर्शनं कारयितुमित्यर्थः ॥

**( तत्त्वालोकः )** उद्द्योते—प्रष्टुरग्रे तत्प्रदर्शकत्वाभावेन यथाश्रुतासङ्गतेराह-**प्रदर्शनमिति ।** पुनः प्रश्नद्वारेति शेषः ।

( समाधानभाष्यम् )

**आ उदकान्ताद् ओदकान्तात् ॥**

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—आ एवं नु मन्यसे, आ एवं किल तदिति ? ॥**

**( प्रदीपः ) इह कस्मादिति ।** अनुबन्धनिवृत्तौ विशेषापरिज्ञानात् प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**भवतीति**—तेन निषेध इति शेषः । प्रदीपे—**निवृत्ताविति**—सत्यामिति शेषः ।

( समाधानभाष्यम् )

**सानुबन्धकस्येदमाकारस्य ग्रहणम् , अननुबन्धकश्चात्राऽऽकारः ॥**

**( तत्त्वालोकः ) सानुबन्धकस्येति**—यत इत्यादिः । **इदम्**—अनाङित्यत्र ( त्यम् ) । **अत्र**—आ एवमित्यत्र ।

( आक्षेपभाष्यम् )

**क्व पुनरयं सानुबन्धकः क्व निरनुबन्धकः ? ॥**

**( तत्त्वालोकः )** अयम्—आकारः ।

( समाधानभाष्यम् )

**'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्' ॥१॥
निपात ॥ १४ ॥**

**( प्रदीपः )** अर्थवशाद् विशेषावसाय इत्युक्तम् । **ईषदर्थे**-आ उष्णमोष्णमिति । **आङीषदर्थ** इति चोक्तम् ॥ **क्रियायोगे**-आ इतः एतः प्रादिषु हि ङित् पठ्यते । आङ् **मर्यादाभिविध्यो**रिति समासविधौ ङित्निर्दिष्टः । आ उदकान्ताद् ओदकान्तात् । आ अहिच्छत्रात् आहिच्छत्रादिति । विना तेनेति **मर्यादा,** सह तेनेत्य**भिविधिः ॥** पूर्वप्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतनायाऽऽकारः प्रयुज्यते, आ एव नु मन्यसे । नैवं पूर्वममंस्थाः संप्रति मन्यस इति । वाक्यारम्भप्रचनायाऽऽकार इत्यपरे ॥ तथा स्मृतेः सूचक आकारः प्रयुज्यते, ततः स्मृतोऽर्थो निर्दिश्यते—आ एवं किल तदिति ॥ १४ ॥

**( उद्द्योतः )** किंचिद्विधानायोपात्तस्यान्यविधानाय पुनरुपादान**मन्वादेशः ।** प्रकृते च विधानद्वयाभावा**देत**मित्येनादेशो न कृत इत्याहुः । **विना तेनेत्यादि ।** यथा आकाशि वृष्टो देव इत्यादौ काशीमभिव्याप्य काशीं वर्जयित्वेति वार्थः ॥ १४ ॥

**( तत्त्वालोकः )** भाष्ये—**यः**-आत् ।

प्रदीपे—**अवसायः**-निर्णयः । **इति**-इत्याशयेन । **उक्तमिति**—'कुगती'ति सूत्रे वार्त्तिककृतेति शेषः । **अन्यथात्वेति**-अनभिमतत्वेत्यर्थः ।

उद्द्योते—**प्रकृते चेति**-द्वितीये विधानसत्त्वेऽपि आद्ये तदभावेन "एकसत्त्वेपि द्वयं नास्ती" ति न्यायेनेति शेषः । **इति**-इत्यत्र । **आहुरिति**-शब्दकौस्तुभकारादय इति शेषः । **आहु**रितिसूचितारुचिबीजन्तु "अन्वादेशश्च कथितानुकथनमात्रमि" ति भाष्यविरोध एव । तथा चात्र पूर्वभागस्य परभागसापेक्षत्वेन विधादित्यन्तस्यैकोक्तितैवेति पुनरुक्तित्वाभावात्तत्प्राप्तिरेव नेति भावः ॥ लाघवात् मर्यादाऽभिविध्योरेकमेवोदाहरणमाह-**यथेति ।**

---

( १४ संज्ञासूत्रम् ॥ १ । १ । ५ आ. ५ )

# ओत् ॥ १ । १ । १५ ॥

( सूत्रवैयर्थ्यनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

**( तत्त्वालोकः ) किमिति**—'ओदि'ति सूत्रस्येत्यादिः ।

( समाधानभाष्यम् )

**आहो इति, उताहो इति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । निपातसमाहारोऽयम् । आह उ आहो इति । उत आह उ उताहो इति । तत्र "निपात एकाजनाङ्" इत्येव सिद्धम् ॥**

**( प्रदीपः ) ओत् ॥ १५ ॥ निपातसमाहारोऽयमिति ।** अन-

र्थकानामपि निपातानां कर्मामिदु इत्यादीनां दर्शनादर्थभेदाभावेऽपि निपातसमाहारत्वमुक्तम् ॥

**( उद्द्योतः )** ओत् ॥ १५ ॥ **दर्शनादिति । 'वेदे' चादीनां पादपूरणार्थानां च लोकेऽपीत्यादिः ॥ अर्थभेदाभावेऽपि ।** तन्नानात्वाभावेऽपि, अथवा अनर्थकाः निपातसमुदाय एवार्थवानिति भावः। उशब्दोऽत्र निरनुबन्धकः। तेन **उञ** इत्यनेन सिद्धिरिति न भ्रमितव्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**प्रयोजनमिति**—अस्येत्यादिः । यत इति शेषः।

उद्द्योते—कैयटीयान्यूनतां निराकरोति-**वेदे इति । तन्नानात्वेति**-अर्थनानात्वेत्यर्थः । ननु "उञ" इत्येव सिद्धमिति वक्तव्ये "निपाते" त्यादि कथमुक्तमित्यत आह-**उशब्द इति ।**

**( समाधानसाधकभाष्यम् )**

**एवं तर्ह्येकनिपाता इमे ॥**

**( प्रदीपः ) एवं तर्हीति ।** चादिपु तथा पाठादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इमे**-आहो इत्यादयः।

प्रदीपे—**तथा**—एकत्वेन। अन्यथा पुनः पाठो व्यर्थः स्यादित्याशयः।

**( समाधानान्तरभाष्यम् )**

**अथवा प्रतिषिद्धार्थोऽयमारम्भः । ओ षु यातं मरुतः । ओ षु यातं बृहती शकरी च । ओ चित्सखायं सख्या ववृत्याम् ( ऋ० १०।१०।१ ) ॥**

**( प्रदीपः ) ओ षु यातमिति ।** आ उ ओ इत्यत्रान्तवद्भावाद्भवत्ययमाङित्य**नाङिति** प्रतिषेधः प्राप्नोति, पर्युदासे तु सति न दोषः, तत्र ह्याङ्सदृशस्योकारस्याङा सहैकादेश आदिवद्भावादुकारग्रहणेन गृह्यत इति सिध्यत्येव प्रगृह्यसंज्ञा। तस्याश्च प्रयोजनं क्वचिच्छाखायाम्-**ओ अयातम्**-इति पाठे प्रकृतिभावः ॥

**( उद्द्योतः ) पर्युदासेत्विति ।** वस्तुतः पर्युदासेऽपि दोषः, आङ्भिन्नत्वस्याशास्त्रीयत्वात्। न च स्वाश्रयमाङ्भिन्नत्वम्, आङ्त्वस्य पूर्वान्तवत्त्वेनातिदेशेऽतिदिश्यमानविरुद्धस्वाश्रयधर्मप्रयुक्तकार्यस्य निवृत्तेरतिदेशस्वभावसिद्धत्वात्। न चान्तवत्त्वमेव दुर्लभं शास्त्रीयकार्याभावादिति वाच्यम्। तत्रापि प्रतिषेधस्य गम्यतया शास्त्रतात्पर्यविषयत्वेन प्रगृह्यत्वाभावस्य शास्त्रीयतयाऽन्तवत्त्वप्रवृत्तेरिति बोध्यम् ॥ **तस्याश्चेति ।** प्रगृह्येषु पदपाठे **इति**शब्दप्रयोगनियमादपि फले विशेषो बोध्यः ॥

**( तत्त्वालोकः )** भाष्ये—एवं पूर्वपक्षिसिद्धान्तिकर्तृकप्रश्नसमाधानप्रसङ्गे सिद्धान्त्येकदेशी निपातसमाहारमेवाभ्युपेत्य समाधत्ते—**अथवेति । प्रतिषिद्धार्थः**-प्रतिषिद्धं प्रतिषिद्धप्रगृह्यसंज्ञकपदम् अर्थः प्रयोजनं यस्य सः। लक्ष्यं निर्दिशति-**ओ षु यातमिति ।**

प्रदीपे—प्रतिषिद्धपदस्वारस्यात्प्रसज्यप्रतिषेधे दोष इत्याशयेनाह—**आ उ ओ इति। अयम्**—"ओ" शब्दः । **प्रतिषेध इति**—प्रगृह्यसंज्ञाया इत्यादिः। **तत्र**—पर्युदासे।

उद्द्योते—कैयटोक्तं खण्डयति—**वस्तुत इति ।** सादृश्यस्य स्वाश्रितस्य सत्त्वादाह—**आङ्भिन्नेति । तत्रापि**—पर्युदासेऽपि। तथा च पक्षद्वयसाधारणं प्रकृतभाष्यम्। ओ षु यातमिति पाठेऽपि फलमित्याशयेनाह—**प्रगृह्येष्विति ।** "प्रगृह्यं चर्चायामितिना पदेषु" इति शुक्लयजुःप्रातिशाख्ये कात्यायनेनोक्तत्वादाह—**इ शब्देति ।**

**( च्व्यन्ते सूत्रप्रवृत्तिनिराकरणाधिकरणम् )**

**( १६५ आक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ ओतश्च्विप्रतिषेधः ॥ * ॥

**( भाष्यम् )**

**ओदन्तो निपात इत्यत्र च्व्यन्तस्य प्रतिषेधो वक्तव्यः ॥ अनदः अदः अभवत् = अदोऽभवत् , अतिरः तिरः अभवत् = तिरोऽभवत् ॥**

**( प्रदीपः ) अदोऽभवदिति ।** च्व्यन्तत्वेनात्र निपातत्वम् **ऊर्यादिच्वी**त्यत्र निपाताधिकारात् ॥ प्रतिषिद्धार्थत्वादस्य कथम प्राप्तिरिति चेद् ॥ उभयार्थत्वाददोषः। तथा ह्योदन्तस्य निपातस्य प्रगृह्यसंज्ञा विधीयमाना प्रतिबन्धाभावाददोऽभवदित्यत्रापि भवति **ओ षु यात**मित्यत्रापि परत्वादनाङिति प्रतिषेधं बाधत इति प्रतिषिद्धार्थमपि स्यादिति को विरोधः ॥

**( उद्द्योतः )** भाष्ये—**ओतश्च्वीति ।** पूर्वसूत्रवदत्राप्यर्थाधिकाराद्गौणमुख्यन्यायस्याप्रवृत्तिरित्याशयः ॥ **प्रतिषिद्धार्थत्वादिति** प्रतिषिद्धसंज्ञकं पदं प्रतिषिद्धपदेनोच्यते ॥ **परत्वादिति । निषेधाश्च बलीयांस** इत्यस्य तु नायं विषयः। तस्य पूर्वेण सह पाठात्तन्निषेधकत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—वार्त्तिके ओत इत्यत्राधिकरणस्य सम्बन्धित्वविवक्षायां षष्ठीमभिप्रेत्य व्याचष्टे—**ओदन्त इति ।**

प्रदीपे—**अत्र**—अत्र भाष्ये। **अस्य**—"ओदि"त्यस्य। **अत्र**—अदोऽभवदित्यत्र। **उभयार्थत्वात्**—प्रतिषिद्धाप्रतिषिद्धोभयार्थत्वात्। एतेन 'अथवा प्रतिषिद्धार्थ' इत्यस्यैकदेश्युक्तिता सूचिता।

उद्द्योते—**पूर्वसूत्रेति**—"निपात एकाजनाङि"ति सूत्रेत्यर्थः। **अत्रापि**—"ओदि"ति सूत्रेऽपि । **अयम्**—अनाङिति प्रतिषेधः। **तस्य**—अनाङिति प्रतिषेधस्य। **पूर्वेण**—'निपात एकाजि'त्यंशेन। **तन्निषेधेति**—अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति न्यायादिति भावः।

**( आक्षेपबाधकभाष्यम् )**

**न वक्तव्यः । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य' इत्येवं न भविष्यति ॥**

**( प्रदीपः )** ओकारस्य प्रतिपदोक्तस्य ग्रहणमित्युत्तरम् ॥

**( उद्द्योतः ) प्रतिपदोक्तस्येति** ॥ न च **प्रतिषिद्धार्थोऽयमारम्भ** इति पूर्वभाष्यासङ्गत्यात्रैतत्परिभाषाया अप्रवृत्तिरेवानित्यत्वादुचितेति वाच्यम्। अस्यैकदेश्युक्तत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**न वक्तव्य इति**—यत इति शेषः। **इत्येवम्**—इति परिभाषया अदोऽभवदित्यत्र सा।

उद्द्योते—**असङ्गत्येति**—तत्र पक्षे सर्वेषां लाक्षणिकत्वादिति भावः। **अत्र**—प्रकृतसूत्रे। **अस्य**—प्रकृतभाष्यस्य। एतेन "अथवा प्रतिषिद्धार्थ" इत्यस्य सिद्धान्त्युक्तिता सूचिता। अतः तत्र सिद्धान्त्येकदेश्युक्तिता पर्यवसितेति भावः।

( आक्षेपसाधकभाष्यम् )

**एवमपि—अगौः गौः समपद्यत गोऽभवद् । अत्र प्राप्नोति ॥**

**( प्रदीपः ) एवमपीति** । ओकारस्यात्र प्रतिपदोक्तत्वमस्ति; **गमेर्डो** इति साक्षादुच्चारणात् । यस्य हि साक्षादुच्चारणं नास्ति, **आद्गुण** इत्यादिसामान्यलक्षणेन यद्रूपं निष्पाद्यते तल्लाक्षणिकमुच्यते॥

**( उद्द्योतः )** तद्ध्वनयन् भाष्ये आह—**एवमपीति** । ननु लक्षणेन प्रतिपादितत्वादिदमपि लाक्षणिकमत आह—**यस्य हीति ॥**

**( तत्त्वालोकः )** भाष्ये—**एवमपि**—लक्षणप्रतिपदोक्तपरिभाषया अदोऽभवदित्यत्र दोषवारणेऽपि । **प्राप्नोतीति**—प्रगृह्यसंज्ञेत्यादिः ॥

प्रदीपे—**हि**—यतः । अस्य उच्यते इत्यत्रान्वयः । **साक्षादिति**—सूत्रे इत्यादिः ।

उद्द्योते—**तत्**—"न वक्तव्यः । लक्षणे" इत्यस्यैकदेशयुक्तित्वम् । **ध्वनयन्**—वार्तिकवादी । **इदं**—गोऽभवदित्यत्रत्यम् "ओ" इति ।

( समाधानभाष्यम् )

**एवं तर्हि "गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः" इति। तद्यथा-'गौरनुबन्ध्योऽजोऽग्नीषोमीयः' इति न वाहीकोऽनुबध्यते ॥**

**( प्रदीपः ) एवं तर्हीति** । गुणादागतो **गौणः** । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः, मुखमिव प्रधानत्वा**न्मुख्यः** । तत्र **स्वंरूप**मित्यत्र रूपग्रहणेनार्थपरिग्रहस्य ज्ञापितत्वादर्थवतः कार्येण भवितव्यम् । स चार्थः प्राथम्यान्मुख्य एव गृह्यते । गौणे ह्यर्थे शब्दः प्रवर्तमानो मुख्यार्थारोपेणैव प्रवर्तते । अनियतश्च गौणोऽर्थः । तस्माल्लौकिकोऽयं न्यायो-**गौणमुख्ययो**रिति ॥ गोऽभवदित्यत्र च जाड्यादिना धर्मेण गोत्वमारोपितमिति गौणत्वमर्थस्य । गोऽभवदित्यत्र च वृत्तौ प्रकृतेः कर्तृत्वं, संघीभवन्ति ब्राह्मणा इति बहुवचनदर्शनात् । प्रकृतौ च गोत्वमारोपितं, न तु मुख्यमिति प्रगृह्यत्वाभावः ॥

**( उद्द्योतः ) प्रधानत्वाद्** । अर्थान्तरप्रतीतिनिरपेक्षतया प्रतीयमानत्वात् ॥ तादृशार्थबोधकत्वाच्छब्दस्यापि गौणत्वं मुख्यत्वं च बोध्यम् । गौणमुख्यन्यायबीजं दर्शयितुमाह—**तत्र स्वंरूपमिति ॥** प्राथम्यमेवोपपादयति—**गौणेहीति** । आरोपाय हि पूर्वं तदुपस्थितिरावश्यकीति भावः ॥ **मुख्यार्थारोपेणेति** । आरोपितसिंहत्ववान् माणवकादिसमभिव्याहारे सिंहशब्दार्थ इति भावः ॥ मुख्यस्यैव ग्रहणे युक्त्यन्तरमाह—**अनियतश्चेति** । सिंहशब्दस्य माणवकबलीवर्दादिषु प्रयोगादिति भावः ॥ एतेन—'वर्णग्रहणे **लक्षणप्रतिपदोक्त**परिभाषाऽप्रवृत्तेरोकारस्य लाक्षणिकत्वमित्यादि चिन्त्यमित्यपास्तम् ॥ अनयैव तस्यापि वारणाद् ॥ **ह्वावाम**श्चेत्यादेस्तज्ज्ञापकस्य **लक्षणप्रतिपदोक्त**परिभाषाऽनित्यत्वमात्रज्ञापकतया वर्णग्रहणे सर्वत्र तदप्रवृत्तौ मानाभावाच्च ॥ न चैवमपि **अर्थवत्**परिभाषामूलकत्वात्तद्देव विशिष्टरूपोपादानविषयेति कथमत्र वर्णग्रहणे प्रवर्ततां तत्रैवार्थोपस्थितेः सत्त्वादिति वाच्यम् ॥ निपात इति विशिष्टरूपोपादानसत्त्वात् ॥ निपातसंज्ञा हि चादिपदोपस्थितचादीनां सति सम्भवेऽर्थवतामेवेति ये सार्थकास्तेषां निपातपदेनापि तत्तदर्थविशिष्टानामेवोपस्थितिरिति प्रकृतसूत्रस्थनिपातपदेन मुख्यार्थकनिपातानामेव ग्रहणम्, न तु गौणार्थकानामिति भावः ॥ एवंच कार्यकालपक्षेऽपि च्व्यन्ता निपाता इत्यस्यात्रानुपस्थितिः, एतत्परिभाषावशाद् । विशिष्टरूपप**देन** चार्थवद्रूपमेवोच्यते ॥ प्रकृते गौणत्वमुपपादयति—**जाड्यादिनेति** । आरोपे बीजमाह—**प्रकृतेः कर्तृत्वमिति** । एवंच गोऽभवदित्यस्य गोभिन्नकर्तृकं गोसदृशरूपेण भवनमर्थः । यत्र च योगीश्वरशापादिना मुख्यगोरूपप्राप्तिस्तत्र च्विर्नेष्यते इति गोसदृशरूपेण भवनप्रतीतेस्तस्य गौणत्वमिति भावः ॥ [ ननु ? ] **सुवर्णपिण्डः खदिराङ्गारसदृशे कुण्डले भवत** इति भाष्ये विकृतेरपि कर्तृत्वदर्शनादुक्तं **वृत्ताविति** । एवंच च्व्यन्ते प्रकृतेरेव कर्तृत्वमिति भावः ॥ प्रकृतेरेव कर्तृत्वे हेतुमाह-**सङ्घीभवन्तीति ॥**

**( तत्त्वालोकः )** भाष्ये—**सम्प्रत्यय इतीति**—परिभाषया गोऽभवदित्यादौ सा न भविष्यतीति शेषः । तथा च लाक्षणिकप्रतिपदोक्तोभयविधौकारान्तयोः अनयैव सा वारणीयेति भावः । गौणमुख्यन्यायस्य लौकिकत्वबोधनाय तत्र दृष्टान्तमाह-**तद्यथेति** । **इतीति**—कथिते **इति** शेषः ।

प्रदीपे—**मुख्य इति**—यथा गोशब्दस्य सास्नादिमानर्थ **इति** शेषः । **तत्र**—तयोः । अस्याग्रिमेण मुख्य इत्यनेनान्वयः । **धर्मेणेति**—वाहीके इति शेषः । **प्रकृतेरिति**—अत्र प्रकृतित्वं विकृतिनिरूपितं, न तु प्रत्ययनिरूपितम् । एवमग्रेऽपि ।

उद्द्योते—एवमर्थे गौणमुख्यत्वयोः सिद्धावपि शब्दे कथं ते इत्यत आह—**तादृशेति** । तादृशतादृशेत्यर्थः । **दर्शयितुमिति**—"स चार्थ" इत्यादिनेत्यादिः । तदुपोद्घातमिति शेषः । **तदिति**—मुख्येत्यर्थः । **आवश्यकीति**—अतस्तस्य प्राथम्यमिति शेषः । **ओकारस्येति**—अदोऽभवदित्यत्रेत्यादिः । **एतेने**त्यस्यार्थमाह—**अनयैवेति** । गौणमुख्यपरिभाषयैवेत्यर्थः । **तस्यापि**—लाक्षणिकस्यापि । सिद्धान्तमाह—**ह्वावाम इति** । **तदिति**—वर्णग्रहणेऽप्रवृत्तीत्यर्थः । **मात्र**पदेन विशेषव्यावृत्तिः । **तदिति**—लक्षणप्रतिपदोक्तपरिभाषेत्यर्थः । **इयमपि**—गौणमुख्यपरिभाषाऽपि । **तद्वदेव**—अर्थवत्परिभाषावदेव । **तत्रैव**—विशिष्टरूपोपादाने एव । **सत्त्वादिति**—अनुवृत्त्येति भावः । ननु निरर्थकानामपि निपातानां सत्त्वात् तत्रार्थवत एवाग्रहणात् कथं गौणेति न्यायप्रवृत्तिरित्यत आह—**निपातसंज्ञेति** । **सति संभवे इति**—अनेनानर्थकानामपि संग्रहः सूचितः । एवमग्रेऽपि । **अनुपस्थितिरिति**—अन्यथा तत्सामर्थ्यात्स्यादेवेति भावः । **एतत्परिभाषेति**—गौणमुख्यपरिभाषेत्यर्थः । नन्वेवमपि रूपे कस्यचिद् वैशिष्ट्यासत्त्वात् कथमस्याः विशिष्टरूपोपादानविषयकतोच्यते इत्यत आह—**विशिष्टरूपेति** । ननु स्वरूपत एव गोरूपेण भवनं कुतो नेत्यत आह-**यत्र चेति** । **"ननु"** इति प्रकृतानुपयुक्तम् ।

( समाधानबाधकभाष्यम् )

**कथं तर्हि वाहीके वृद्ध्यात्वे भवतः—गौस्तिष्ठति गामानयेति ? ॥**

**( तत्त्वालोकः )** वार्तिकवादी शङ्कते—**कथमिति** । **तर्हि**-गौणमुख्यन्यायस्वीकारे । **वाहीके**—वाहीकलक्षकयोः **गो**शब्दयोः ।

( समाधानसाधकभाष्यम् )

**अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयम्, शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ॥ ओत्१५**

**( प्रदीपः ) शब्दाश्रये चेति** । स्वार्थे वृत्तात् प्रातिपदिकाद्विभक्तावुत्पन्नायां कार्येषु कृतेषु शब्दान्तरसन्निधानाद्गौणत्वं प्रतीयते । तस्य च स्वार्थस्य मुख्यव्यपदेशो नास्ति, गौणापेक्षया सम्बन्धिशब्दत्वान्मुख्यव्यपदेशस्य गौणाभावेऽभावाच्छ**ब्दाश्रये चे**त्युक्तं, न त्वत्रार्थो नापेक्षते । तत्र यथा **श्वेतं छागमालभेते**ति गुणद्रव्ययोः श्रौतः

क्रियासंबन्धो, वाक्यीयात्तु न्यायात् पश्चात् परस्परेण । एवं गां वाहीकमानयेति पूर्वं क्रियाभिसंबन्धापेक्षया विभक्तावुत्पन्नायां वाक्यीयात्तु न्यायात् सामानाधिकरण्याद्गौणार्थप्रादुर्भावो भवतीति **पदकार्येष्वेवायं न्यायो न प्रातिपदिककार्येष्वित्युक्तम् शब्दाश्रये चेति** ॥१५॥

**( उद्द्योतः )** ननु **शब्दाश्रये चे**तिभाष्यस्यार्थरहितवर्णमात्राश्रये इत्यर्थः प्रतीयते, स चायुक्तः, सर्वनामस्थानाम्शसाक्षिप्तप्रातिपदिकस्यौन इत्यनेन विशेषणादनयोरपि विशिष्टशब्दाश्रयत्वादत आह-**स्वार्थे इति** । स्वार्थादिप्रयुक्तकार्येण पूर्णस्य पदस्यार्थप्रतिपादनाय प्रयोगार्हस्य पदार्थान्तरान्वये बाधप्रतिसन्धाने गौणार्थप्रतीतेरिति भावः। आक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावाच्च । **गौणापेक्षयेति ।** मुख्यशब्दस्य गौणापेक्षया संबन्धिशब्दत्वात् । **गौणाभावे** गौणस्य वुद्ध्यसंनिधाने **मुख्यव्यपदेशस्य** मुख्यपदस्याभावादित्यन्वयः ॥ एवंच **शब्दाश्रये चे**ति भाष्यस्य मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रये इत्यर्थः । पदव्यपदेशरहितस्य कार्यित्वेनाश्रयणमिति फलितमिति तात्पर्यम् ॥ ननु **द्वितीयादेः** कर्मत्वाद्यर्थकस्य कारकत्वज्ञानसापेक्षतया गां वाहीकमानयेत्यादौ विशिष्टस्य क्रियासंबन्धेन कर्मत्वेऽपि तदभिधानाय जायमाना द्वितीया समुदायस्याप्रातिपदिकत्वात्प्रत्येकं प्रवर्तते, ततश्च पूर्वमेव गौणत्वादात्वं न स्यादत आह-**तत्रेति ॥ श्रौतः क्रियासंबन्ध इति**। द्वितीयाश्रुत्यनुपपत्त्या कल्पित इत्यर्थः॥ विभक्त्यन्तेन हि उपस्थितार्थस्य क्रियान्वय **इति** ततः प्राग् गुणे साक्षात्परंपरासाधारण्येन द्रव्ये च साक्षात् सामान्यतः क्रियाजन्यफलाश्रयत्वादिविवक्षयोभयत्र विभक्तिरिति भावः ॥ **वाक्यीयान् न्यायाद् ।** आकाङ्क्षादिमूलकशक्त्या । **पश्चाद्** विभक्त्युत्पत्त्यनन्तरम् ॥ **पूर्वमिति ।** द्वितीयादेः सामान्यतः क्रियासंबन्धज्ञानापेक्षत्वात् तज्ज्ञानमूलकद्वितीयाद्युत्पत्तौ गोपदार्थस्य वाहीकेऽन्वयः पश्चादेव । एवंच कर्मणोरेव विशेष्यविशेषणभावः, न तु विशिष्टस्य कर्मत्वमिति भावः ॥ यत्तु—विभक्त्यर्थस्य क्रियाकारकसंबन्धरूपत्वेन तयोः संबन्धबोधः श्रुतिकृत इति श्रुतेर्वाक्यापेक्षया शीघ्रं प्रवृत्त्या प्रथमं तयोरन्वयबोधः पश्चाद्गुणद्रव्ययोः परस्परान्वयबोधः । एवं गां वाहीकमानयेत्यादावपीति कैयटार्थं व्याख्याय दूषयन्ति—गां वाहीकं पाठयेत्यादौ यत्र गौणार्थप्रादुर्भावं विना क्रियासंबन्ध एवासंभवी तत्र पूर्वमेव गौणत्वावगतेरात्वाद्यनापत्तेरिति ॥ तदेतेन परास्तम् । विभक्त्यन्तस्यैव प्रयोगेण तत उपस्थितानामर्थानामितरान्वयेन प्रातिपदिकमात्रार्थेन पूर्वमन्वय इत्यस्य वक्तुमप्यशक्यत्वाच्च तादृशबोधद्वयकल्पने गौरवाच्च अनुभवाभावाच्च ॥ किं च अपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थत्वग्रहेण अत्वं त्वं संपद्यते अमहान्महान्भूतस्त्वद्भवतीत्यादौ भाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यमात्रविषयत्वमुपात्तविशिष्टरूपके इत्यपि बोध्यम् । अत **एवात इञि**त्यादेः श्वशुरसदृशस्यापत्यमित्यर्थेऽपि प्रवृत्तिः । किं च गामित्युक्ते सर्वा क्रिया प्रसक्तेत्याद्यर्थवत्सूत्रस्थभाष्यबलात् **संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते तेषां यथेष्टमभिसंबन्धो भवति** इति **वृद्धि**सूत्रस्थभाष्याच्च सामान्यतः क्रियाजन्यफलाश्रयत्वादेरेव द्वितीयादिनियामकत्वेन मदुक्तव्याख्यैव तस्योचिता । प्रयोक्तापि पदान्येवार्थे मुख्ये गौणे वा प्रयुयुक्षति, न तु प्रातिपदिकादिक्रमेणेति सुष्ठूच्यते—**पदकार्येष्विति । सामानाधिकरण्यादिति ।** इदमुपलक्षणं पठनादि क्रियान्वयादित्यपि बोध्यम् ॥ १५ ॥

**( तत्त्वालोकः )** भाष्ये—न्यायवादी समाधत्ते—**अर्थाश्रये इति ।** लौकिकार्थवत्त्वयोग्यपदाश्रये इत्यर्थः । **एतदेवं**—मुख्यमात्रग्रहणम् गौणमुख्यन्यायेन । **शब्दाश्रयं**—मुख्यव्यपदेशरहितस्वार्थबोधकप्रातिपदिकरूपशब्दाश्रयम् । **शब्दमात्रे—**गौणे मुख्ये च शब्दे ।

प्रदीपे—ननु तदानीमपि तत्र मुख्यत्वस्य सत्त्वात् प्रकृतन्यायसञ्चारः कुतो नेत्यत आह—**तस्य चेति । व्यपदेशः**—व्यवहारः **तत्र**—तस्मिन् सति ।

उद्द्योते—**अनयोः**—वृद्ध्यात्वयोः । **प्रतीतेरिति**—तथा चानयोः विशिष्टशब्दाश्रयत्वेऽपि तदानीं गौणार्थकत्वाभावान्न प्रकृतन्यायप्रवृत्तिरित्याशयः । वस्तुतोऽनयोः विशिष्टशब्दाश्रयत्वाभावादेव तदप्रवृत्तिरित्याह—**आक्षेपे इति ।** अन्वयस्य पदत्वेन संभवेनान्यथानुपपत्त्यभावादित्याशयः । ननु प्रत्ययानां प्रकृत्यंशे एव साकाङ्क्षत्वात् अन्यथाऽनुपपत्तिरस्त्येवेत्यत आह—**आक्षिप्तस्य वेति ।** ततः वृत्त्युपस्थाप्यत्वस्यैव नियामकत्वादिति भावः । सर्वथा गौणाभावस्यासम्भवादाह—**गौणस्येति । एवञ्च**—तदानीं तस्य मुख्यत्वाभावे च धर्मपक्षाशयेनाह—**कर्मत्वेति ।** धर्मिपक्षे कर्मत्वाद्यवच्छिन्नेत्यर्थः **सापेक्षतयेति**-कारकत्वस्य क्रियानिरूपितत्वात् तदन्वयावश्यकत्वेनेति शेषः । क्रियासम्बन्धस्य शक्त्या वाक्यबोध्यत्वेन वस्तुतः श्रुतिबोध्यत्वाभावादाह-**द्वितीयेति । ततः**-विभक्तेः । **सामान्यतः**-क्रियात्वेन रूपेण । एवमग्रेऽपि । **पश्चादेव**-विभक्त्युत्पत्त्यनन्तरमेव । शब्दकौस्तुभकाराद्युक्तिं खण्डयति-**यत्त्विति । तयोः**-क्रियाकारकयोः । **शीघ्रमिति**-तस्या निरपेक्षप्रमाणत्वादिति भावः । **पश्चादिति**-समभिव्याहाररूपवाक्यादिति भावः । **गां वाहीकं पाठयेति**—गां वाहीकमानयेत्यादौ तथा निर्वाहेपीति भावः । **एतेन**—उक्तप्रकारेण ( तत्रापि सिद्धत्वात् )। दोषान्तरायाह—**विभक्त्यन्तेति ।** भाष्यकृत्सम्मतिमप्याह—**अत्वमिति** । विशेषमाह—**उपात्तेति ।** इदं पदकार्यविशेषणम् । **प्रवृत्तिरिति**—श्वासुरिरित्यत्रेत्यादिः । एवं प्रयोक्तॄणां तदा गौणार्थकत्वप्रतीतिमभ्युपेत्य समाधाय, वस्तुतः सापि नेत्याह—**किं चेति । नियामकत्वेन**—नियामकत्वस्य लाभेन । **तस्य**—कैयटस्य। **"प्रयुयुक्षति"** इत्यत्र प्रयुयुक्षते इति पाठो युक्तः। कैयटीयन्यूनतां निराकरोति-**इदमुपलक्षणमिति ।** वस्तुतस्तु-आहो उताहो इत्यादयो न निपातसमुदायाः, किन्त्वखण्डा एव । अत एव आम् आह दैवदत्तेत्यत्राम "एकान्तरमामन्त्रितमि"ति निघातप्रतिषेधः सिद्धः। अत एव च पदकारैरपि "ओ षु यातं मरुत" इत्यादौ ओ इत्याद्येकपद्येनैव पठन्ति। एवम्-आहो इतीत्यादौ "निपाते"ति सिद्धिरूपदोषं निवार्य "अदोऽभवत्" "गोऽभवदि"त्यादौ गौणत्वमात्रेण प्रगृह्यसंज्ञाया वारणे निपातसंज्ञाया अपि वारणीयत्वापत्त्या—"ओतश्च्विप्रतिषेध" इति वार्त्तिकेनैव तत्र दोषो वारणीयः ॥

---

( १५ प्रगृह्यसंज्ञादेशिसूत्रम् ॥ १ । १ । ५ आ० ६ )

## उञ ऊँ ॥ १ । १ । १७ ॥

( अनिष्टापत्तिवारणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—आहो इति, उताहो इति? ॥**

**( प्रदीपः ) उञ ऊँ ॥ १७ ॥ इह कस्मादिति ।** निपातसमाहारं मत्वा प्रश्नः ॥

**( उद्द्योतः ) उञ ऊँ ॥ १७ ॥ प्रश्न इति ।** एवंचात्र ऊँ आदेशः प्राप्नोतीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**उञ ॐ इति**—एतादृेकमेव सूत्रं पाणिनिना प्रोक्तम्। अतएव प्रकृतसूत्रपदमञ्जर्याम् 'यद्ययमेको योगः स्यात् उञ ॐ इति यथा पठितं सूत्रकारेणेति' हरदत्तोक्तिः सङ्गच्छते। तथा च समुदिते "उञ ॐ" इत्यत्रैव एक एव संख्याङ्क उचितः, न त्वाधुनिककल्पितः काशिकायां कौमुद्यां शब्दकौस्तुभे भाष्ये चोपलभ्यमानः क्रमिकः पृथक् संख्याङ्कः। भाष्यकृत्कृतयोगविभागेन "सह सुपे"त्यादाविव प्रकृतेऽपि पृथक् संख्याङ्को न युक्तः॥

( आक्षेपबाधकभाष्यम् )

**उञ इत्युच्यते। न चात्रोञं पश्यामः॥**

**( तत्त्वालोकः ) उञ इत्युच्यते इति**—नैष दोषः, यतस्तत्रेत्यादिः। **अत्र**—आहो इत्यादौ।

( आक्षेपसाधकभाष्यम् )

**उञोऽयमन्येन सहैकादेश उञ्ग्रहणेन गृह्यते॥**

**( तत्त्वालोकः ) उञोऽयमिति**—एवमपीत्यादिः। **अन्येन**—अकारेण। **एकादेशः**—"ओ" इति। तथा च तत्र तत्रासिन्तदवस्थैवेति भावः।

( आक्षेपबाधकभाष्यम् )

**आचार्यप्रवृत्तिर्ज्ञापयति-'नोञ एकादेश उञ्ग्रहणेन गृह्यते' इति। यदयम् "ओद्" इत्योदन्तस्य निपातस्य प्रगृह्यसंज्ञां शास्ति॥**

**( प्रदीपः ) यदयमिति।** एकादेशे कृते आदिवद्भावात् संज्ञासिद्धिः॥

**( उद्द्योतः ) संज्ञासिद्धिरिति। निपातएकाजित्यनेनेत्यर्थः॥** स्थानिवद्भावेन तु नैतल्लभ्यम्। एकादेशस्थान्यल्वृत्तिधर्मत्वात्। एकादेशस्थान्यल्मात्रवृत्तिधर्मस्तु नायम्। उञिति समुदायेऽपि सत्त्वात्। तेनान्तादिवद्भावेन तादृप्यानतिदेशेऽपि न दोषः॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति**—नैवं दोषः, यत इत्यादिः। **यत्**—यस्मात्। **अयम्**—आचार्यः।

उद्द्योते—ननु स्थानिवद्भावादिति विहाय कथमुक्तमादिवद्भावादितीत्यत आह—**स्थानिवदिति। एतत्**—उत्वम्। **अल्वृत्तीति**—अल्मात्रवृत्तीत्यर्थः। नन्वेवमादिवद्भावोऽपि न स्यान्निषेधादित्यत आह—**एकादेशेति। अयम्**—आदिवद्भावः। **अपिना** उ इत्येकदेशपरिग्रहः।

( आक्षेपसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम्। उक्तमेतत्—'प्रतिषिद्धार्थोऽयमारम्भः' इति॥ दोषः खल्वपि स्याद्, यद्युञेकादेश उञ्ग्रहणेन गृह्येत। जानु उ अस्य रुजति, जानू अस्य रुजति, जान्वस्य रुजति, "मय उञो वो वा" इति वत्वं न स्यात्॥**

**( उद्द्योतः )** भाष्ये **यद्युञ् इति।** सामान्येन ज्ञापकमिति भावः। वत्वाभावपक्षे ॐ आदेशो न स्यादित्यपि दोषो बोध्यः॥

**( तत्त्वालोकः )** भाष्ये—**एतत्**—ओदिति सूत्रम्। **ज्ञापकमिति**—यत **इति** शेषः। दोषान्तरमाह—**दोष इति।** तर्हीत्यादिः। **खल्विति**—निश्चये।

उद्द्योते—ननु सामान्येन ज्ञापकत्वाभावे न स दोष इत्यत आह—**वत्वाभावपक्षे इति। इति** परकत्वे **इति** शेषः।

( समाधानभाष्यम् )

**एवं तर्ह्येकनिपाता इमे॥**

**अथ वा द्वावुकाराविमौ। एकोऽननुबन्धकः। अपरः सानुबन्धकः। तद्योऽननुबन्धकस्तस्यैष एकादेशः।**

**( तत्त्वालोकः )** एवं पूर्वनिक्षिप्तदस्थयोः प्रश्नोत्तरप्रसङ्गे सिद्धान्ती समाधत्ते—**एवं तर्हीति**। **तत्**—तयोः।

( योगविभागाधिकरणम् )

( १६[१] सिद्धान्तआक्षेपवार्त्तिकम् ॥ २ ॥ )

**॥ * ॥ उञ इति योगविभागः ॥ * ॥**

( भाष्यम् )

**उञ इति योगविभागः कर्तव्यः। "उञः" शाकल्यस्याचार्यस्य मतेन प्रगृह्यसंज्ञा भवति। उइति विति॥ ततः "ॐ" उञ ॐ इत्ययमादेशो भवति शाकल्यस्याचार्यस्य मतेन दीर्घोऽनुनासिकः प्रगृह्यसंज्ञकश्च। ॐ इति॥**

**( प्रदीपः )** इह रूपत्रयं साध्यम्—**उइति, विति, ॐ इति।** तच्चैकयोगे न सिध्यति। एकयोगे ह्युञ इति श्रुतिरादेशेन श्रुतत्वात् संबध्यते न प्रगृह्यसंज्ञया। सा तु **निपात एकाजनाङिति** नित्यैवास्य भवति। शाकल्यश्रुत्यनुवृत्त्या ॐ आदेशो विकल्पिते रूपद्वयं स्यात्—उ इति, ॐ इति। न तु वितीति, तदर्थमाह—**ऊञ इति योगविभाग इति। उञ** इत्यत्र **शाकल्यस्येतौ, प्रगृह्यमिति,** चानुवर्तते। तत्र प्रगृह्यसंज्ञैव शाकल्यस्य मतेन विधीयते, नान्येषामिति स्मृत्यन्तरानुसन्धानद्वारेण विभाषा संपद्यते। उ इति वितीति। **ॐ इत्यत्र** च यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्। ततश्च 'विति, ॐ इति' एते द्वे एव रूपे स्याताम्। तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सति त्रीणि रूपाणि सिध्यन्ति॥

**( उद्द्योतः ) नित्यैवेति।** आदेशाभावपक्षे इत्यर्थः॥ **ननु वितीति॥** न च उ इतीत्यस्य निरनुबन्धकोकारमादाय सिद्धत्वेन शाकल्यानुवृत्तिसामर्थ्यात्पक्षे वितीति भविष्यतीति वाच्यम्। मयः परत्वे किम्वितीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गात्। शाकल्यानुवृत्तिसामर्थ्या**न्निपातेति** प्रगृह्यत्वाभावे **मय** इति वत्वस्यासिद्धत्वेन**कोयणचीति** वत्वेऽनुस्वारापत्तेः। उ इतीत्यतःसानुबन्धकबोधस्यापीष्टत्वेन तदनापत्तेश्चेति भावः। अन्ये तु अनेन प्रकरणात् प्रगृह्यत्वस्य ॐ आदेशस्य च विधानेन तस्य **निपात** इति प्रगृह्यसंज्ञापवादत्वादेतदादेशविकल्पे ॐ **इति** वितीति सिद्ध्यति, न तु उ **इति** अतो योगविभागः॥ न चापवादे विशिष्टे ॐ आदेशे असति **निपातेति** प्रगृह्यत्वं स्यात् अप्रवर्तमानापवादस्योत्सर्गबाधकत्वाभावात्, अत एव **पारेमध्ये** इत्यव्ययीभावाभावे उत्सर्गः षष्ठीसमासो भवतीति वाच्यम्। प्रगृह्यपदस्य सर्वत्र साक्षादुद्देश्यसंबन्धस्य क्लृप्तत्वेनात्र विधेयविशेषणत्वे मानाभावात्। सह विधानेन वाक्यभेदस्याप्यभावात्स्थानिवद्भावेन च ॐ **इत्यस्य** प्रगृह्यकार्यं बोध्यम्। एवंच पक्षे प्रगृह्यत्वाभावेऽप्यस्य तात्पर्यान्नैतदभावे **निपात** इत्यस्य प्रवृत्तिरित्याहुः। **प्रगृह्यस्येति।** अनुवर्तमानप्रगृह्यपदस्यादेशेन संबन्धे उञ्मात्रस्य नित्यं प्रगृह्यसंज्ञकस्य ॐभावस्य विधानापत्तौ योगविभागेन प्रगृह्यसंज्ञाविधानस्य वैयर्थ्यापत्तेरनुवर्त्तमानप्रगृह्यपदं षष्ठ्यन्ततया विपरिणमय्य स्थानिना संबध्यत इति भावः॥ **द्वे एवेति।** न च उ इतीति रूपमपि निरनुबन्धकोकारमादाय सिद्धम्। सानुबन्धकप्र-

तीत्यनापत्तेः। मयः परत्वे किम्विनीत्यादौ मकारसहितनिरनुनासिकवकारघटितरूपासिद्धिप्रसङ्गाच्च। वस्तुतस्तु उञ इत्यस्यात्रानुवृत्तस्यार्थाधिकाराद्प्रगृह्यपरतैव प्रगृह्यमिति चादेशविशेषणमेव। तथैव भाष्यस्वरसादिति ऊँ इति उ इति च रूपे स्यातां न तु वितीति तदर्थं विकल्पानुवृत्तिः। ऊँ इति दीर्घोच्चारणात्प्रगृह्यपदस्यात्र संबन्ध इति सर्वमवदातम्॥

**(तत्त्वालोकः)** भाष्ये—सिद्धान्ती एव कथयति—**उञ इतीति। अनुनासिक इति**—अत एव "यदेतन्नूँ पदकाराः पठन्ती"-त्यनुकरणे "यरोऽनुनासिकेऽनुनासिको वा" इत्येष विधिः प्रवर्त्तते।

प्रदीपे—**तच्च**—तत्। हि—यतः। **आदेशेन**—ऊँ इत्यनेन। **सा तु**—प्रगृह्यसंज्ञा तु। **अस्य**—उञः। **तदर्थं**—वितीति रूपसिद्ध्यर्थम्। **तत्र**—उञ इत्यत्र। **एवः**—शाकल्यस्येत्यनेनान्वेति।

उद्द्योते—आदेशपक्षे तेन बाधादाह—**आदेशाभावेति। सामर्थ्यादिति**—"निपात एकाजि"त्यस्याप्रवृत्तेरित्याशयः। **असिद्धि-**प्रसङ्गमुपपादयति—**शाकल्येति**। तत्र दोषान्तरमाह—**उ इतीति। तदनापत्तेः**—सानुबन्धकबोधानापत्तेः। **अनेन**—उञ ऊँ इत्यनेन। उञः स्थाने इति भावः। **ऊँ आदेशस्येति**—श्रुतत्वादिति भावः। **तस्य**—प्रगृह्यत्वसमानाधिकरणादेशस्य। **एतदादेशेति**—ऊँ इत्यादेशेत्यर्थः। प्रगृह्यत्वविशिष्टादेशविधिरित्यभिप्रायेण शङ्कते—**नचेति। विशिष्टे**—प्रगृह्यत्वविशिष्टे। **सर्वत्र**—एतदन्यत्र। ननूभयविधाने वाक्यभेदापत्तेस्तथावश्यकमित्यत आह—**सह विधानेनेति**। नन्वेवं कथमादेशे प्रगृह्यत्वमित्यत आह—**स्थानिवद्भावेनेति। च**—तु। एवमुपपन्ने उक्तरीत्याश्रयणे युक्त्यन्तरमाह—**एवञ्चेति। अस्य**—ऊँ इत्यादेशस्य। **एतदभावे**—ऊँ इत्यादेशाभावे। ननु प्रगृह्यमित्यनुवृत्तौ षष्ठ्यन्तोक्तिः कथमित्यत आह—**अनुवर्त्तमानेति। उञमात्रस्य**—सकलोञः। पूर्ववदाह—**न चेति। पूर्व**—पक्षाशयमाह—**वस्तुत इति। तथैवेति**—प्रगृह्यसंज्ञकश्चेत्युक्तेः। **तदर्थं**—वितीति रूपसिद्ध्यर्थम्। नन्वत्र प्रगृह्येत्यस्यासम्बन्ध इति पूर्वमुक्तमित्यत आह—**ऊँ इतीति**॥

**(योगविभागवैयर्थ्यभाष्यम्)**

**किमर्थो योगविभागः?।**

**(उद्द्योतः) किमर्थो योगविभाग इति**। प्रगृह्यत्वादेशयोः शाकल्यमते एव प्राप्त्या एकप्रयोग एव प्रवृत्तिः स्यात्। एवं च ऊँ इति वितीति च रूपे। ते चैकयोगेऽपि सिध्यत इति प्रश्नः॥ एवं चैकयोगे वितीति न सिध्यतीति प्रागुक्तकैयटश्चिन्त्य एवेति बोध्यम्॥

**(तत्त्वालोकः)** भाष्ये—तटस्थः पृच्छति—**किमर्थ इति**।

उद्द्योते—**इति**—इति हेतोः। एतत्पूर्वोद्द्योते अन्ये त्वित्यादिनोपपादितं प्रागुक्तकैयटस्य चिन्त्यत्वमित्यभिप्रेत्यात्र केवलमाह—**चिन्त्य इति**।

**(१६६[२] आक्षेपप्रयोजनवार्तिकस्यखण्डम्॥ १॥)**

## ॥*॥ ऊँ वा शाकल्यस्य ॥*॥

**(भाष्यम्)**

**शाकल्यस्याचार्यस्य मतेन ऊँ विभाषा यथा स्यात्। ऊँ इति, उ इति। अन्येषामाचार्याणां मतेन—विति॥ उ च ऊँ॥ १७॥**

**(प्रदीपः) ऊँ वा शाकल्यस्येति**। शाकल्यस्य श्रुतेरेव फलं वाग्रहणेन प्रतिपादयति। एतदेव व्याचष्टे—**शाकल्यस्य विभाषा यथा स्यादिति**। प्रगृह्यसंज्ञाऽऽदेशश्च। तत्र यद्यपि पूर्वसूत्रेषु फलरूपतया निर्देशात् प्रदेशेष्विव प्रगृह्यशब्दो द्विवचनाद्यभिधेयस्तथापीहोञ इति षष्ठीनिर्देशात् स्वरूपपदार्थकः संपद्यते॥ १७॥

**(उद्द्योतः) शाकल्येति**। एवं च योगविभागसामर्थ्याच् शाकल्यानुवृत्तिसामर्थ्याच्च तन्न यथाश्रुतम्। किं तु विकल्पमात्रतात्पर्यकमिति विकल्पद्वयेन सकलेष्टसिद्धिरिति भावः। एवं च शाकल्यमत एव विकल्पः। तदाह—भाष्ये **शाकल्यस्य विभाषेति**॥ शाकल्यमते ऊँ आदेशविकल्पे यत्फलति तद् दर्शयति—**प्रगृह्यसंज्ञादेशश्चेति**। तन्मते पर्यायेणोभयं सिध्यतीत्यर्थः॥ ननु प्रगृह्यमित्यस्य प्रथमान्तस्य कथमुञ इत्यनेन षष्ठ्यन्तेनान्वय इत्यत आह—**यद्यपीति॥ फलरूपतयेति**। फलं संज्ञाया बोध्यतया संज्ञिनः। फलपदेन च तद्बोधकं पदं लक्ष्यते। तद्रूपतया तत्समानविभक्तिकतयेत्यर्थः॥ **द्विवचनाद्यभिधेय** इति बहुव्रीहिः। प्रगृह्यशब्दवदभिन्नं द्विवचनादीति बोधः॥ प्रगृह्यशब्दवत्त्वेन च द्विवचनादि प्रगृह्यपदाभिधेयमिति बोध्यम्॥ **स्वरूपपदार्थक इति**। उञो वाचकं प्रगृह्यपदमित्यर्थादिति भावः॥ वस्तुतः पूर्वत्रापि शब्दपर एव शब्दार्थयोरभेदात्सामानाधिकरण्यम्। पटः शुक्ल इतिवत्। प्रकृते तु पटस्य शुक्ल इत्यत्रैवोक्तरीत्या वैयधिकरण्येनान्वय इति न कश्चिद्दोषः॥ केचित्तु प्रदेशे वृद्धिपदाभिन्ना आदैच इति उपस्थितिः। संज्ञावाक्ये तु तथा शाब्दबोधः। **द्विवचनाद्यभिधेय** इत्यस्य द्विवचनादिविशेष्यकबोधजनक इत्यर्थः। षष्ठीसमभिव्याहारे तु विशेष्यतया स्वरूपपदार्थक इति कैयटं योजयन्ति॥ १७॥

**(तत्त्वालोकः)** भाष्ये—सिद्धान्ती समाधत्ते—**ऊँ वेति। वितीति**—इति च यथा स्यादित्यर्थः स इति शेषः।

प्रदीपे—**पूर्वसूत्रेषु**—"ईदूदेद्द्विवचनं प्रगृह्यमि"त्यादिषु। **प्रदेशेषु**—"प्लुतप्रगृह्या" इत्यादिषु।

उद्द्योते—**तत्**—शाकल्यपदम्। **तन्मते**-शाकल्यमते। **उभयं**-प्रगृह्यसंज्ञादेशोभयम्। **फलमिति**—संज्ञीति शेषः। **तद्बोधकं**—फल (संज्ञि) बोधकम्। प्राचां सिद्धान्तरीत्याह—**प्रगृह्यशब्दवदिति**। अत एव भाष्यकारसिद्धान्तरीत्याह—**वस्तुत इति। पूर्वेति**—प्रगृह्यशब्द इति शेषः। **उक्तरीत्या**—(भेदविवक्षया) उञो वाचकमित्याद्युक्तरीत्या। **केचिदिति**—प्रचितारुचिबीजन्तु-अक्षरमर्यादया तथाऽलाभ एव।

---

**(१६ प्रगृह्यसंज्ञासूत्रम्॥ १।१।५ आ० ७॥)**

# ईदूतौ च सप्तम्यर्थे॥ १।१।१८॥

**(अर्थग्रहणप्रयोजननिरूपणाधिकरणम्)**

**(१६७ आक्षेपवार्तिकम्॥ १॥)**

## ॥*॥ 'ईदूतौ सप्तमीत्येव' ॥*॥

**(भाष्यम्)**

**ईदूतौ सप्तमीत्येव सिद्धम्, नार्थोऽर्थग्रहणेन॥**

**(प्रदीपः) ईदूतौ च सप्तम्यर्थे॥ १८॥ ईदूतौ सप्तमीत्येवेति**। सप्तमीसहचरितं यदीदूदन्तं सप्तम्यां वा परतस्तत् प्रगृह्यसंज्ञं भवतीत्येव प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां सोमो गौरी अधिश्रित इत्यादौ भविष्यति प्रगृह्यसंज्ञेति प्रश्नः॥

**(उद्द्योतः) ईदूतौ च॥ १८॥** ईकारोकारात्मकसप्तम्या असंभवं मत्वाह—**सप्तमीसहेत्यादि**। तात्पर्यानुपपत्त्या च लक्षणेति

भावः ॥ **सप्तम्यां वेति ।** सप्तमीति पदं लुप्तसप्तमीकं व्याख्यास्यत इति भावः ॥ जघन्यवृत्तिकल्पनापेक्षयेदं न्याय्यमिति तात्पर्यम् ॥ **लुप्तायामपीति । न लुमतेति** निषेधस्तु अनित्यत्वान्न सप्तम्यां परत इत्यर्थेऽपीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—अत्र-यप्रथम-श्लोकवार्त्तिकस्य प्रथमपादं व्याचष्टे—**ईदूताविति ।**

प्रदीपे—**यदीदूदन्तमिति—इदं** मध्यमणिन्यायेन पूर्वत्रोत्तरत्र चान्वेति । **अपिना** पूर्वसवर्णपरिग्रहः ।

उद्द्योते—वक्ष्यमाणरीत्याऽन्वयानुपपत्तेरभावादाह—**तात्पर्यानुपपत्त्येति ।** च-तु । **लक्षणेति—**सप्तमीपदस्य सप्तमीसहचरितेत्यादिः । द्वितीयपक्षाश्रयणे बीजमाह—**जघन्येति । इदं**—सप्तमीपदस्य लुप्तसप्तमीकत्वकल्पनम् । **अपिना** प्रथमपक्षोक्तार्थसंग्रहः ।

**( १६८ समाधानवार्तिकम् ॥ २ ॥**

## ॥ * ॥ लुप्तेऽर्थग्रहणाद्भवेत् ॥ * ॥

**( भाष्यम् )**

**लुप्तायां सप्तम्यां प्रगृह्यसंज्ञा न प्राप्नोति ॥**

**क ? ॥**

**सोमो गौरी अधिश्रितः ( ऋ० ९।१२।३ ) । इष्यते चात्रापि स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमर्थग्रहणम् ॥**

**( प्रदीपः ) लुप्त इति ।** संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधादसत्यर्थग्रहणे सप्तम्या एव संज्ञिनीत्वादसत्याश्च कार्याभावात् प्रत्ययनिमित्तं यत्रान्यस्य कार्यं विधीयते तत्रैव प्रत्ययलक्षणसद्भावाद् गौरीत्यत्राप्रसङ्गादर्थग्रहणं कृतम् । अर्थग्रहणे सत्यर्थनिमित्ता संज्ञेयं भवति न प्रत्ययश्रवणनिमित्तेति लोपेऽपि सिध्यति ॥

**( उद्द्योतः )** ननु प्रत्ययग्रहणेन तदन्तविधौ ईकाराद्यन्तं यत्सप्तम्यन्तमित्यर्थे प्रत्ययलक्षणेन सिद्धं सोमो गौरी इति, तत्राह—**संज्ञेति ॥ सप्तम्या एवेति ।** सप्तमीपदस्य लुप्तसप्तम्यन्तत्वे सप्तमीसहचरितलाक्षणिकत्वे च न मानमिति भावः ॥ यद्यपीकारोकारसप्तम्योरसंभव एव तत्र मानं तथापि **वचना**दित्यादिना तद्वदयतीत्यत्र तात्पर्यम् ॥ **असत्याश्च कार्याभावादिति ।** प्रगृह्यसंज्ञाकार्यं हि सन्धिकार्याभावफलकप्रकृतिभावः, लुप्ते षष्ठ्यर्थप्रसङ्गस्य निरूपयितुमशक्यत्वेन सन्धिकार्याप्राप्त्या प्रकृतिभावानुपयोगात्तत्कार्याभाव इत्यर्थः ॥ तदेवाह—**प्रत्ययनिमित्तमित्यादिना ॥**

**( तत्त्वालोकः )** भाष्ये—वार्त्तिके "लुप्ते" इत्यत्र सामान्ये नपुंसकमभिप्रेत्य तत्रोत्तरदानाय प्रवृत्तं तद्द्वितीयपादं व्याचष्टे-**लुप्तायामिति ।** केचित्तु तत्र नपुंसके भावे क्तमभिप्रेत्य लोपे सतीति तदर्थं, लुप्तायामिति भाष्यस्य च फलितार्थपरत्वं कथयन्ति । **अत्रापीति—**सेति शेषः ।

प्रदीपे—**अप्रसङ्गादिति—**प्रगृह्यसंज्ञाया इत्यादिः । **लोपेऽपीति—**सप्तम्या इत्यादिः । प्रगृह्यसंज्ञेति शेषः । **अपिना** पूर्वसवर्णसंग्रहः ।

उद्द्योते—**प्रत्ययग्रहणेनेति**—सप्तमीरूपेत्यादिः । प्रत्ययग्रहणपरिभाषयेति शेषः । **लुप्तसप्तम्यन्तत्वे—**लुप्तसप्तम्यन्तपरकत्वे । **लुप्ते-**लोपे सति ।

**( समाधानबाधकभाष्यम् )**

**नात्र सप्तमी लुप्यते ॥**

**किं तर्हि ? ।**

**पूर्वसवर्णोऽत्र भवति ॥**

**( प्रदीपः ) पूर्वसवर्ण इति ।** सति च पूर्वसवर्णे एकादेशे चादिवद्भावाद्भवतीकारः सप्तमीति सिद्धा संज्ञा ।

**( उद्द्योतः ) पूर्वसवर्णे इति ।** स च **सुपां सुलुग**ित्यनेन ॥

**( तत्त्वालोकः )** भाष्ये—प्रकृतश्लोकवार्त्तिकपरभागमवतारयितुं पूर्वपक्षाभिप्राय प्रकाशयति—**नात्रेति । पूर्वसवर्ण इति—**सप्तम्या इत्यादिः । **अत्र—**तनू इत्यादौ । गौर्यादौ विशेषाभावात् ।

प्रदीपे—**एकादेशे—**"अकः सवर्णे" इति दीर्घैकादेशे । **संज्ञा—**प्रगृह्यसंज्ञा । उद्द्योते—**स च—**पूर्वसवर्णश्च ।

**( १६९ समाधानसाधकवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ 'पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते' ॥ * ॥

**( भाष्यम् )**

**यदि पूर्वसवर्णः, आट् आम्भावश्च प्राप्नोति ॥**

**( प्रदीपः ) आडाम्भाव इति ।** एकादेशं बाधित्वाऽऽडामौ स्याताम् ॥

**( उद्द्योतः ) एकादेशमिति ।** परत्वाद्वाणादाङ्गस्य बलीयस्त्वाच्चेति भावः । एवंच ङ्यन्ते गौरीत्यादौ लुक आवश्यकत्वेन तदर्थमर्थग्रहणमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**यदीति ।** असाविति शेषः । वार्त्तिके भाष्ये च **आडिति-**तर्हीत्यादिः । भावशब्दो विकारपर इत्याह—**आम्भावश्चेति ।** तथा च यद्यसौ ईकार ऊकारश्च सप्तम्यादेशपूर्वसवर्णे विहितदीर्घ एव, न त्वत्र सप्तमी लुप्यते इति, तन्न, तर्हि सप्तम्याः पूर्वसवर्णेऽपि दीर्घैकादेशं बाधित्वाऽम्भावप्रसङ्गात्, कथञ्चिदामादेशाभावेऽपि आडागमप्रसङ्गादिति वार्त्तिकार्थः ।

उद्द्योते—**लुक इति**— सप्तम्या इत्यादिः । **तदर्थं**—तत्र प्रगृह्यसंज्ञार्थम् ।

**( समाधानबाधकभाष्यम् )**

**एवं तर्हि आहायम्-ईदूतौ सप्तमीति । न चास्ति सप्तमी ईदूतौ, तत्र वचनाद्भविष्यति ॥**

**( प्रदीपः ) वचनादिति ।** सर्वत्रैव सप्तमी लुप्यत इति वचनसामर्थ्यात् सप्तमीशब्देन सप्तमीसहचरितस्य ग्रहणान्मुख्यकल्पनाऽसंभवे गौणी कल्पना गृह्यते इत्याश्रयणात् सिध्यतीति भावः ॥

**( उद्द्योतः ) सर्वत्रैवेति ।** ननु ययीत्यादिभ्यो ङौ दीर्घे तनू इत्यादौ ङसुपोः पूर्वसवर्णादेशे च ईदूदन्तसप्तमीसंभवात्कथमेतदिति चेन्न । **'ईदूत्सप्तमी प्रगृह्यम्' 'अदसः' 'एच्च द्विवचनम्'** इत्येव सिद्धे स्थलान्तरे ईदूतौ सप्तमीति गुरुवचनसामर्थ्येन सप्तमीसहचरितग्रहणमिति भाष्याशयान्न दोष इति केचित् ॥ तन्न । **न चास्ति सप्तमी ईदूता**विति भाष्यासङ्गतेः । तस्मादेतद्भाष्यप्रामाण्यात्तेषामनभिधानमिति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—अत्रत्यद्वितीयश्लोकवार्त्तिकं खण्डशोऽवतारयितुं पूर्वपक्षाभिप्रायं प्रकटयति—**एवं तर्हीति ।** यत इति शेषः । **अयम्—**वार्त्तिककारः । **तत्रेति**—अत इत्यादिः । **वचनादिति—**"ईदूतौ सप्तमी" इति वचनसामर्थ्यादित्यर्थः । आडाम्भावं बाधित्वा सवर्णदीर्घ इति शेषः । केचित्तु "संज्ञाविधावपि तदन्तवि-

धिरि" ति शेषं कथयन्ति । तथा चार्थग्रहणं नावश्यकमिति भावः ।

प्रदीपे—**सिध्यतीति**—तत्र प्रगृह्यसंज्ञेत्यादिः ।

उद्द्योते—"ननु" इत्यादिना, केचिदित्यन्तेन ग्रन्थेन नारायणाद्युक्तिमुपस्थाप्य खण्डयितुमाह—**नन्विति । ऊसुपोः पूर्वसवर्णादेशे**—सप्तम्याः पूर्वसवर्णे, ऊसुपोः सवर्णदीर्घैकादेशे । सिद्धान्तमाह—**तस्मादिति ।**

( १७० समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ ॐ ॥ 'वचनाद्यत्र दीर्घत्वम्' ॥ ॐ ॥

( भाष्यम् )

**नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ॥ यत्र सप्तम्या दीर्घत्वमुच्यते—"दृतिं न शुष्कं सरसी शयानम्" ( ऋ० ७।१०३।२ ) इति । सति प्रयोजने इह न प्राप्नोति–'सोमो गौरी अधिश्रितः' ( ऋ० ९।१२।३ ) इति ॥**

**( प्रदीपः )** मुख्यकल्पना सम्भवत्येवेत्याह—**यत्रेति** । सरसीत्यत्र सरःशब्दात् परस्य ङिशब्दस्य **ॐइयाडियाजीकाराणामुपसंख्यानम्ॐ इतीकारे** कृते भवतीकारः सप्तमीति तत्रैव स्यान्न तु गौरीत्यत्रेति भावः ॥

**( उद्द्योतः ) सरः शब्दादिति ।** सरस्शब्दस्यासुन्नन्तत्वेनाद्युदात्तत्वेऽपि स्वरव्यत्ययाद् **'दृतिं न शुष्कं सरसी शयान'** मित्यत्र सरसीत्यस्यान्तोदात्तत्वं बोध्यम् ॥

**(तत्त्वालोकः)** भाष्ये—**वचनादिति—**तत्रेत्यादिः । स्यादिति शेषः । **दीर्घत्वमिति—**सप्तम्या इत्यादिः । तथा च—( प्रागुक्तं न, ) यत्र सप्तम्या दीर्घकारादेशः तत्र वचनस्य चारितार्थ्यादित्यर्थः ॥ वचनादिति वार्त्तिकेनार्थान्तरभ्रमनिरासाय तद् भेदान्वयेन व्याचष्टे—**नेदमिति । वचनात्—**वचनसामर्थ्यात् । **हि—**यतः । **उच्यते इति**–तदिति शेषः । **प्रयोजने इति—**सामर्थ्यविरहात्तदिति शेषः ।

प्रदीपे—**इति तत्रैव—**इति हेतोः सरसीत्यत्रैव ( सा ) ।

उद्द्योते—अत्र कल्पे समापन्नं स्वरदोषं परिहरति—**सरस्शब्दस्येति ।** सधातुविहितेति शेषः । **आद्युदात्तत्वेऽपीति—**आद्युदात्तत्वप्रसङ्गेऽपीत्यर्थः । नित्स्वरेण, इकारस्य च सुप्त्वेनानुदात्ततया सरसीत्यस्येत्यादिः ।

( १७१ समाधानबाधकवार्तिकम् ॥ ५ ॥ )

## ॥ ॐ ॥ 'तत्रापि सरसी यदि' ॥ ॐ ॥

( भाष्यम् )

**तत्रापि सिद्धम् ।**

**कथम् ? ॥**

**यदि सरसीशब्दस्य प्रवृत्तिरस्ति । अस्ति च लोके सरसीशब्दस्य प्रवृत्तिः ।**

**कथम् ? ।**

**दक्षिणापथे हि महान्ति सरांसि सरस्य इत्युच्यन्ते ॥**

**( प्रदीपः ) सरसी यदीति** । यदीति सम्भावनायाम् । तस्मात् स्थितमेतद्वचनात् सर्वत्र लुप्तायामपि सप्तम्यां भविष्यतीति नार्थोऽर्थग्रहणेन ॥

**( उद्द्योतः )** निराकर्तुं संशयार्थो यदिशब्दोऽनुपपन्न इत्यत आह—**संभावनायामिति । शास्त्राणि चेत्प्रमाणं स्युरि**तिवदसंदिग्धे संदिग्धवचनमिदमिति भावः ॥ सरसीशब्दो यदि ङीषन्तस्तदान्तोदात्तत्वं न्यायसिद्धम् । असुन उगन्तत्वान् ङीबन्तत्वे तु स्वरव्यत्ययादेव तत्त्वम् । एवं च ततो लुकैवोक्तप्रयोगे सिद्धे **इयाडिति** वार्तिके ईकारादेशो न विधेय इति भाष्या . यः ॥ तस्मात्पूर्वोक्तरीत्या वचनसामर्थ्याल्लुप्तेऽपि सिद्धिः ॥

**( तत्त्वालोकः )** भाष्ये—तत् खण्डयति—**तत्रापीति ।** गौरीत्यादावपीत्यर्थः । प्रगृह्यत्वमिति शेषः । ननु वचनस्य सरसीत्यत्र चारितार्थ्येन सामर्थ्याभावात् कथन्तत्र प्रवृत्तिरित्याशयेन पृच्छति—**कथमिति ।** सरसीति न सरःशब्दात् ङौ तस्यैकारे निष्पन्नमपि तु सरसीशब्दात् ङौ तस्य लुकि, पूर्वसवर्णानन्तरं दीर्घे वा निष्पन्नमिति सप्तम्या ईदूद्रूपाया अन्यथाऽनुपपत्त्या वचनसामर्थ्यात् "पूर्वसवर्णे आडाम्भावं निवर्त्त्य दीर्घस्य" लुकि "संज्ञाविधावपि तदन्तविधेः" "सप्तमीशब्देन सप्तमीसहचरितस्य वा" आश्रयणेन सर्वत्र प्रगृह्यसंज्ञा भविष्यतीत्याशयेन समाधत्ते—**यदीति । हि**—यतः । **प्रवृत्तिः**—प्रयोगः

प्रदीपे—**वचनात्—**वचनसामर्थ्यात् । अपिना पूर्वसवर्णपरिग्रहः

उद्द्योते—**संशयार्थ इति—**अत्र संशयोऽर्थः यस्येति व्युत्पत्तिः । अत्र कल्पे इष्टस्वरसिद्धिं दर्शयति—**सरसीति । यदीति—**गौरादिषु पिप्पल्यादयश्चेति पाठेन पिप्पल्याद्यन्तःपातिसरःशब्दविहितेति शेषः । **सिद्धमिति—**लुकि प्रकृतिस्वरस्य, पूर्वसवर्णे ङेरिकारस्यानुदात्तत्वेऽपि "एकादेश उदात्तेन" इत्युदात्तस्य श्रवणोपपत्तेरिति भावः । **उगन्तत्वादिति—**अत्र उगिदन्तत्वादिति पाठो युक्तः । **तत्त्वम्—**अन्तोदात्तत्वम् । शाखान्तरे आद्युदात्तपाठे तु तत्र व्यत्ययेन ङीबेवेति भावः । एवमाश्रयणे लाघवमपि दर्शयति—**एवञ्चेति । ततः**—सरसीशब्दात् । **एवेनाप्यर्थकेन** पूर्वसवर्णसमुच्चयः । **अपिना** पूर्वसवर्णसंग्रहः ।

( १७२ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥ ॐ ॥ 'ज्ञापकं स्यात् तदन्तत्वे' ॥ ॐ ॥

( भाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यो 'न प्रगृह्यसंज्ञायां प्रत्ययलक्षणं भवति' इति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**कुमार्योरगारं कुमार्यगारम् । वध्वोरगारं वध्वगारम् । प्रत्ययलक्षणेन प्रगृह्यसंज्ञा न भवति ॥**

**( प्रदीपः ) ज्ञापकमिति ।** ईदूदेदित्यत्र तृतीयचतुर्थपक्षयोरित्यर्थः ॥ इह प्रगृह्यसंज्ञाप्रकरणे यदि प्रत्ययलक्षणं स्यात् तदेदूतौ च सप्तमीत्येव सप्तमीसहचरितं सप्तम्यां वा परतो यदीदूदन्तं तत् प्रगृह्यसंज्ञमिति प्रत्ययलक्षणेन लुप्तायामपि सप्तम्यां संज्ञा भविष्यतीति किमर्थग्रहणेन, तत् क्रियमाणं प्रत्ययलक्षणाभावं सूचयति ॥

**( उद्द्योतः )** सप्तमीसहचरितत्वं च प्रत्ययलक्षणेन बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—एवं सति अर्थग्रहणस्य ज्ञापकतामाह—**ज्ञापकमिति ।** तर्हि अर्थग्रहणं प्रगृह्यसंज्ञाप्रकरणे प्रत्ययलक्षणाभावस्येत्यादिः । क ज्ञापनफलमित्यत आह—**तदन्तत्वे इति ।** ( ईदूदेदित्यत्र संज्ञिनः ) द्विवचनान्तत्वे (अभिमते ) इत्यर्थः । ज्ञापनोपयोग

इति शेषः । **भवतीति**—"यद्यमत्रार्थग्रहणं करोति" इति शेषः । **कुमार्यो**रित्यादि अशुक्ले शुक्ले समपद्येतां शुक्ल्यास्तां वस्त्रे इत्यादेरप्युपलक्षणम् ।

प्रदीपे—तदन्तत्वे इत्यस्यार्थमाह—**ईदूदेदित्यत्रेति । तृतीयचतुर्थपक्षयोः**—ईदूदेदन्तं द्विवचनान्तमिति पक्षे, ईदूदेदन्तं यद्द्विवचनं तदन्तमिति पक्षे च । प्रगृह्यसंज्ञायामिति तत्प्रकरणपरमित्याशयेनाह—**इहेति । अपि**ना पूर्वसवर्णसमुच्चयः । **तत्**-अर्थग्रहणम् । **प्रत्ययेति**—तत्रेत्यादिः ।

( १७३ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ ❋ ॥ 'मा वा पूर्वपदस्य भूत्' ॥ ❋ ॥

( भाष्यम् )

**अथवा पूर्वपदस्य मा भूदित्येवमर्थमर्थग्रहणम् । वाप्यामश्वो वाप्यश्वः, नद्यामातिर्नद्यातिः ॥**

**( प्रदीपः )** संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधेरभावात् तदन्तपक्षस्तत्र नैव स्थित इति ज्ञापनफलाभावादाह—**मा वेति ॥ वाप्यश्वो नद्यातिरिति । संज्ञाया**मिति समासे कृते सप्तमीसहचरितमीकारान्तं पूर्वपदमिति स्यात् प्रगृह्यसंज्ञेति तदर्थमर्थग्रहणम् ॥

**( उद्द्योतः ) संज्ञायामितीति ।** अत एवाग्रे भाष्ये **जहत्स्वार्थावृत्ति**रिति सङ्गच्छते । न च वाक्येन संज्ञानवगमादस्य नित्यसमासत्वे वाप्यामश्व इति विग्रहो नोचित इति वाच्यम् । वाक्यात्संज्ञिनोऽनवगमेन नित्यसमासत्वेऽपि न तद्विधायके वाग्रहणासम्बन्ध इति समासघटकीभूतानां तद्विषये विग्रहाभावे मानाभावात् । ध्वनितं चेदं **द्वितीयतृतीयेति** सूत्रे भाष्ये इति तत्रैव निरूपयिष्यते ॥ **सप्तमीसहचरितमिति ।** प्रत्ययलक्षणेनेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**पूर्वपदस्येति**—प्रगृह्यसंज्ञेति शेषः । **आतिः**—बलाका । "शरातिरातिराटिश्च बलाका बिसकण्ठिके"ति कोशात् ।

प्रदीपे—**तदन्तपक्षः**—द्विवचनान्तपक्षः । **तत्र**—ईदूदेदित्यत्र । **तदर्थं**—तत्र प्रगृह्यसंज्ञाव्यावृत्त्यर्थम् ।

उद्द्योते—**संज्ञानवगमात्**—संज्ञिनोऽनवगमात् । सम्पूर्वकज्ञाधातोः कर्मण्यङ्विधानात् ॥ **अस्य**—संज्ञायामित्यनेन विधेयस्य । **अनवगमेनेति**—तस्येति शेषः ।

( आक्षेपभाष्यम् )

**अथ क्रियमाणेऽप्यर्थग्रहणे कस्मादेवात्र न भवति?**

**( प्रदीपः ) अथेति ।** अस्त्येवात्र सप्तम्यर्थ इति प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्र**—वाप्यश्व इत्यादौ । अस्य "से"ति शेषः ।

( समाधानभाष्यम् )

**जहत्स्वार्था वृत्तिरिति ॥**

**( प्रदीपः ) जहत्स्वार्थेति ।** समासस्यैवार्थवत्त्वात् पूर्वोत्तरपदयोर्वर्णवदानर्थक्यात् सप्तम्यर्थोऽत्र नास्तीत्यर्थः ॥

**( उद्द्योतः ) वर्णवदानर्थक्यादिति । संज्ञाया**मिति समासेऽस्य रूढिशब्दत्वादवयवार्थप्रतीतेरिति भावः । 'वाप्यामश्व' इति विग्रहप्रदर्शनं तु रथन्तरादिपदानां रथेन तरतीत्यादिविग्रहप्रदर्शनवद्बोध्यम् । अत एव—"**जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी**" इति वृद्धैरुक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**इति**—इति हेतोः ।

उद्द्योते—**अस्य**—वाप्यश्व इत्यस्य । ननु वैलक्षण्योपलम्भात्तत्तुल्यताऽत्रेत्यत आह—**अत एवेति । जहत्स्वार्था तु तत्रैवेति**—तत्र तु जहत्स्वार्थैवेत्यन्वयः ।

( आक्षेपभाष्यम् )

**अथाजहत्स्वार्थायां वृत्तौ दोष एव ॥**

**( उद्द्योतः )** भाष्ये अथाजहत्स्वार्थायामिति । **सुप्सुपेति** समासेन केवलयौगिके इत्यर्थः ॥

( समाधानभाष्यम् )

**अजहत्स्वार्थायां च न दोषः । समुदायार्थोऽभिधीयते ॥**

**'ईदूतौ सप्तमीत्येव लुप्तेऽर्थग्रहणाद्भवेत् ।**
**पूर्वस्य चेत् सवर्णोऽसावाडाम्भावः प्रसज्यते' ॥**
**'वचनाद्यत्र दीर्घत्वं तत्रापि सरसी यदि ।**
**ज्ञापकं स्यात् तदन्तत्वे मा वा पूर्वपदस्य भूत्' ॥२॥**
**ईदूतौ च सप्तम्यर्थे ॥ १८ ॥**

**( प्रदीपः ) समुदायार्थ इति ।** वृत्तौ हि पूर्वपदं स्वार्थमप्यभिधत्ते प्रधानार्थमपीति स्वार्थसंसृष्टस्य प्रधानार्थस्याभिधानात् पांसूदकवत् स्वार्थस्य विवेकानवगमात् समुदायार्थो वृत्तौ संसृष्टरूपेणाभिधीयते । सप्तम्यर्थग्रहणेन—यावानर्थो वाक्ये सप्तम्यन्तेनाभिधीयते केवलोऽसंसृष्ट उद्भूतस्तस्यैवेह ग्रहणमिति समासे न भवति प्रगृह्यसंज्ञा ॥

**( उद्द्योतः ) प्रधानार्थमपीति ।** अश्वपदशक्तिसमुदायशक्तिसहकारेण गृहीतशक्तिकाद्वापीपदात्स्वार्थविशिष्टप्रधानार्थस्यैवोपस्थितेरित्यर्थः ॥ तत्र **समुदायशक्तिः** संसर्गांश एव । तदाह-**स्वार्थसंसृष्टस्येत्यादि ॥ विवेकानवगमात् ।** पृथगनुपस्थितेरित्यर्थः । पांसूदकमिलितं यथा संसृष्टमेव ज्ञानविषयो न तु पृथक्, तथा समासात्संसृष्ट एवोपस्थितिविषयो न तु पृथगित्यर्थः ॥ **यावा**नित्यस्य विवरणं **केवल** इति । कैवल्यं विवृणोति—**असंसृष्ट-उद्भूत इति । असंसृष्टत्वं** विशेषणाविशिष्टत्वम् । **उद्भूतत्व**मितराविशेषणत्वमिति बोध्यम् ॥ **समुदायरूपोऽर्थः** पूर्वपदार्थविशिष्ट उत्तरपदार्थो**ऽभिधीयते**ऽभिधाभिः परस्परसहकारेणोपस्थाप्यत इति भाष्यार्थः ॥ **अर्थग्रहणसामर्थ्या**त्सप्तम्यर्थमात्रपर्यवसन्नार्थकमर्थग्रहणमिति भावः ॥ गौरीत्यादौ त्वस्त्येव गौर्यादिपदानां सप्तम्यर्थपर्यवसन्नत्वम् । समभिव्याहृतपदान्तरार्थानन्वयित्वेनोपस्थितिविषयत्वस्यैव **सप्तम्यर्थपर्यवसन्नत्व**रूपत्वात् ॥ न चार्थग्रहणेऽपि गौरीत्याद्यसिद्धिः । सप्तम्यर्थे ईकाराद्यभावात् । ईदाद्यन्तमित्यर्थस्तु दुर्लभो विशेष्याभावादिति वाच्यम् । सामर्थ्याच्छब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावात् ॥ १८ ॥

**( तत्त्वालोकः )** भाष्ये—**अजहत्स्वार्थायां च**—अजहत्स्वायामपि । **न दोष इति**—यतस्तस्यामपीति शेषः । प्रकृतसूत्रस्य तु यत्र सप्तम्यर्थ एवाभिधीयते तत्रैव प्रवृत्तिरिति भावः ।

प्रदीपे—**ग्रहणेनेति**—अस्य ग्रहणमित्यनेनान्वयः ।

उद्द्योते—**सहकारेणेति**—एतदुभयशक्तिसहकारेणेत्यर्थः । अस्योपस्थितावन्वयः । **तत्र**—तयोर्मध्ये । असंसृष्टोद्भूतोभयपदोपादानसाफल्याय तयोर्भिन्नार्थकतामाह—**असंसृष्टत्वमिति । इतरेति**—इतरस्याविशेषणत्वमित्यर्थः । तथा सति समुदायार्थ इति भाष्ये समापन्नस्य षष्ठीतत्पुरुषभ्रमस्य निवारणाय तस्यार्थमाह—**समुदायरूपोऽर्थ इति । सप्तम्यर्थेति**—सप्तम्यर्थमात्रेत्यर्थः । एवमग्रेऽपि । वाप्यश्व

इत्यादौ तु वाप्यधिकरणकोऽश्व इत्याद्यर्थस्यैव नियमेनोपस्थितत्वात् पूर्वपदार्थे उत्तरपदार्थान्वयित्वस्य सत्त्वेन तत्र तदनन्वयित्वस्याभावान्न दोष इति भावः ॥

( इति प्रगृह्यसंज्ञाप्रकरणम् )

---

**( १७ घुसंज्ञासूत्रम् ॥ १ । १ । ९ । आ० ८ ॥ )**

## दा धा घ्वदाप् ॥ १ । १ । १९ ॥

**( इष्टानुपपत्तिनिराकरणाधिकरणम् )**

**( १७४ आक्षेपवार्तिकम् ॥ )**

### ॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिदर्थम् ॥ * ॥

**( भाष्यम् )**

घुसंज्ञायां प्रकृतिग्रहणं कर्तव्यम् । दाधाप्रकृतयो घुसंज्ञा भवन्तीति वक्तव्यम् ॥

किं प्रयोजनम् ? ।

आत्वभूतानामियं संज्ञा क्रियते । सा आत्वभूतानामेव स्याद् , अनात्वभूतानां न स्यात् ।

ननु च भूयिष्ठानि घुसंज्ञाकार्याणि आर्धधातुके । तत्र चैत आत्वभूता दृश्यन्ते ॥

"शिदर्थम्" । शिदर्थं प्रकृतिग्रहणं कर्तव्यम् । शित्यात्वं प्रतिषिध्यते तदर्थम् । प्रणिदयते प्रणिद्यति प्रणिधयतीति ॥

**( प्रदीपः ) दाधाघ्व.** ॥ १९ ॥ दाधाशब्दयोर्घुसंज्ञा विधीयमाना रूपान्तरयुक्तानां दोदेङ्धेटां न प्राप्नोतीत्याह—**घुसंज्ञायामिति**॥

**किं प्रयोजनमिति ।** दोदेङ्धेटामेजन्तानामनुकरणानि व्यवस्थाप्यात्वे कृते ददातिदधातियच्छत्यनुकरणानां चैकशेषे कृते द्वन्द्वनिर्देशात् सिद्धा दोदेङ्धेटामपि घुसंज्ञा, कृतात्वानां चैषां स्थानिवद्भावेन सिद्धेति प्रश्नः ॥

**आत्वभूतानामिति ।** भवतेः प्राप्त्यर्थाद् **"आधृषाद्वा"** इति विभाषितणिचः कर्तरि कर्मणि वा क्तप्रत्ययः। तत्र आत्वं भूता आत्वेन वा भूता आकारान्ता इत्यर्थः । ननु लक्षणेन कृतात्वा इति विज्ञेयम् । अस्याप्ययमभिप्रायः–एजन्तानुकरणत्वे प्रमाणाभावात् प्रक्रियागौरवाच्च प्रयोग एव ये आकारान्ताः प्रयुज्यन्ते तदनुकरणानामयमेकशेषनिर्देशः सामान्यानुकरणं वा दा इति धा इति पृथक् पदं निर्दिष्टमिति ॥

**प्रणिदयत इति ।** घुसंज्ञायां सत्यां **नेर्गदेति** णत्वं भवति ॥

**( उद्द्योतः ) दाधाघ्व** ॥ १९ ॥ **दाधाशब्दयोरिति ।** प्रयोगस्थदाधारूपाणामेव सूत्रेऽनुकरणादिति भावः ॥

**दोदेङ्धेटामेजन्तानामिति ।** एषां चात्र **'प्रकृतिवदनुकरणं भवती'**तिन्यायाद**शितीति** प्रसज्यप्रतिषेधाश्रयणाच्चात्वमिति भावः ॥ अत्र च पक्षे **लक्षणप्रतिपदोक्त**परिभाषा**निरनुबन्धक**परिभाषादीनां न प्रवृत्तिः । सर्वेषां स्वरूपेणैवानुकृतत्वात् ॥ दारयतिधारयत्योश्च नातिप्रसङ्गः । तयोरनुकरणे आत्वासंभवेनेह दृधृ इत्यनयोरनुपात्तत्वाद् ॥ दीङोऽपि नेह ग्रहणम् । एज्विषयाभावेन तदनुकरणे आत्वासंभवादिति बोध्यम् ॥

नन्वात्वभूतानामित्यस्य जातात्वानामित्यर्थे दाणादीनां संज्ञा न स्यान्निष्ठायाः पूर्वनिपातश्च स्यादत आह—**भवतेरिति ।** प्राप्तात्वानामित्यर्थः ॥ **प्रमाणाभावादिति ।** प्रयोगार्थत्वाच्छास्त्रस्योपस्थितप्रयोगस्यानुकरणे संभवति अनुपस्थितैजन्तानुकरणे प्रमाणाभाव इत्यर्थः ॥ **गौरवाच्चेति ।** दीङस्तृजादावात्वे कृते प्रणिदातेत्यत्र **नेर्गदे**ति णत्वानापत्तेश्चेत्यपि बोध्यम् ॥ एकशेषस्य सर्वदाधारूपाणामानन्त्येन ज्ञानासंभवाद् दुर्ज्ञेयत्वेऽप्याह—**सामान्येति ।** ननु समाहारद्वन्द्वे दाधमिति स्यात्, अन्यत्र दाधाविति स्यादत आह—**पृथक्पदमिति ।** सो रुत्वे यत्वे लोपे च निर्विसर्गं साधु ॥

**( तत्त्वालोकः )** भाष्ये **दाधाप्रकृतय इति**—अत्र दाश्च धाश्च प्रकृतयश्चेति द्वन्द्वः । सूत्रे च दाधोरेवोपस्थितत्वात्तयोरेव प्रकृत्यंशे सम्बन्ध इति भावः ॥ **तत्र च**—आर्धधातुके च । **शितीति**—यत्रेत्यादिः । **तदर्थं**—तत्र घुसंज्ञार्थम् ।

प्रदीपे—**इत्याह**—इत्यत आह । **आत्वे कृते इति**—तेषामिति शेषः । **अपिना** ददात्यादीनां परिग्रहः । **एषां**—दोदेङ्धेटाम् । **भावेनेति**—धातुत्वादिति शेषः ।

उद्द्योते—ननु तदनुकरणानामुपदेशाद्यभावात् अप्रत्ययपरत्वाच्च कथमात्वमित्यत आह—**एषामिति** । दोदेङ्धेटामित्यर्थः । **अत्र**—अनुकरणेषु । ननु "लक्षणप्रतिपदोक्त" परिभाषादिविरोधात्, उभयत्रानुकार्यानुकरणयोः घुसंज्ञाप्रवृत्त्याशयेनैव "प्रकृती" ति वार्तिकप्रवृत्तेश्च दोदेङ्धेटामपि घुसंज्ञेति न युक्तमित्यत आह—**अत्र च पक्षे इति ।** **आदिना** "अर्थवद्ग्रहण" "लुग्विकरण" परिभाषादिसंग्रहः। **तयोः**—दारयतिधारयत्योः । **इह**—प्रकृतसूत्रे । **तदनुकरणे**—दीङोऽनुकरणे ।

**( भाष्यम् )**

भारद्वाजीयाः पठन्ति—

**( भारद्वाजीयोक्तमाक्षेपवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ घुसंज्ञायां प्रकृतिग्रहणं शिद्विकृतार्थम् ॥ * ॥

**( भाष्यम् )**

घुसंज्ञायां प्रकृतिग्रहणं क्रियते ।

किं प्रयोजनम् ? ।

शिदर्थं विकृतार्थं च । शित्युदाहृतम् ॥ विकृतार्थं खल्वपि—प्रणिदाता प्रणिधाता ।

किं पुनः कारणं न सिध्यति ? ।

'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इति प्रतिपदं ये आत्वभूतास्तेषामेव स्याद्, लक्षणेन ये आत्वभूतास्तेषां न स्यात् ॥

**( प्रदीपः ) प्रणिदातेति ।** द्यतेर्देङो वा रूपम् ॥ **प्रणिधातेति ।** धेटः ॥ **लक्षणेति ।** लाक्षणिके हि लक्षणानुसन्धानद्वारेण प्रतिपत्तिर्बहिरङ्गा प्रतिपदोक्ते त्वन्तरङ्गा ॥

**( उद्द्योतः )** विकृतानां **दोदद्घोरिति** सूत्रे धेण्निवृत्त्यर्थं दाग्रहणपर्यालोचनया घुत्वं सुलभमिति मत्वा वार्तिके **शिदर्थ**मित्युक्तम् । भारद्वाजीयैस्तु तावद्विवेकासमर्थान्प्रति **विकृतार्थ**मित्यप्युक्तम् ॥ प्रणिदातेत्यादौ लाक्षणिकत्वं स्फुटयति—**द्यतेर्देङो वेति ॥**

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी कात्यायनीयाक्षेपवार्त्तिकानुक्तमपि प्रयोजनान्तरं भारद्वाजीयाक्षेपवार्त्तिकोक्तं दर्शयति—**भारद्वाजीया इति।**

प्रदीपे—**बहिरङ्गा**—विलम्बोपस्थितिका। **अन्तरङ्गा**—शीघ्रोपस्थितिका।

उद्द्योते—**दाग्रहणेति**—क्रियमाणेत्यादिः।

**( प्रत्याक्षेपभाष्यम् )**

**अथ क्रियमाणेऽपि प्रकृतिग्रहणे कथमिदं विज्ञायते-दाधाः प्रकृतय इति, आहोस्विद्दाधां प्रकृतय इति?॥**

**किं चातः ? ॥**

**यदि विज्ञायते-दाधाः प्रकृतय इति, स एव दोषः-आत्वभूतानामेव स्याद् अनात्वभूतानां न स्यात् ॥ अथ विज्ञायते-दाधां प्रकृतय इति, अनात्वभूतानामेव स्यादात्वभूतानां न स्यात् ॥**

**( प्रदीपः ) कथमिति।** दाधाप्रकृतय इति षष्ठीसमासः कर्मधारयो वोभयथाप्यव्याप्तिरिति प्रश्नः॥ **दाधाः प्रकृतय इति।** दीयत इत्यादावीत्वादेः। **आत्वभूतानामिति।** दाणदाम्धाम्।॥

**( उद्द्योतः ) प्रकृतय** इत्यस्य सापेक्षत्वादाह—**ईत्वादेरिति॥ दागिति।** आत्वभूता इत्यनेन उपदेशे आकारान्ता एवोच्यन्ते, तद्विलक्षणास्त्वनात्वभूता इति भावः॥

**( तत्त्वालोकः )** भाष्ये—तटस्थः पृच्छति—**अथेति।** पूर्वपक्षी प्रतिपृच्छति—**किञ्चात इति।** अस्मात् प्रश्नात् किमभिप्रेतं भवत इत्यर्थः। तटस्थः स्वाशयं प्रकाशयति—**यदीति। प्रकृतय इतीति**—तर्हीति शेषः। एवमग्रेऽपि।

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**एवं तर्हि, नैवं विज्ञायते-दाधाः प्रकृतय इति, नापि दाधां प्रकृतय इति ॥**

**कथं तर्हि ? ।**

**दाधा घुसंज्ञा भवन्ति प्रकृतयश्चैषामिति ॥**

**( प्रदीपः ) प्रकृतयश्चैषामिति।** प्रत्यासत्त्यैषामिति लभ्यते॥

**( उद्द्योतः ) प्रत्यासत्त्येति।** एवं चैषामिति नापूर्वमिति भावः॥ एतत्सामर्थ्यादेव लाक्षणिकानामप्यनुकरणमनुमास्यत इति तात्पर्यम्॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी समाधत्ते—**एवं तर्हीति। एषां**—दाधाम्।

उद्द्योते—**एतत्सामर्थ्यादेव**—प्रकृतिग्रहणसामर्थ्यादेव। सूत्रन्तु "दाधाप्रकृतयो घ्वदावि" त्याकारकमेव विधेयमिति भावः।

**( आक्षेपोपसंहारभाष्यम् )**

**तत्तर्हि प्रकृतिग्रहणं कर्तव्यम् ? ॥**

**( तत्त्वालोकः )** तटस्थः पृच्छति—**तत्तर्हीति।**

**( समाधानभाष्यम् )**

**कर्तव्यम् । इदं प्रकृतमर्थग्रहणमनुवर्तते ॥**

**क प्रकृतम् ? ।**

**"ईदूतौ च सप्तम्यर्थे" इति । ततो वक्ष्यामि "दाधा घ्वदाप्" "अर्थ" इति ॥**

**( प्रदीपः ) अर्थ इतीति।** एतद्द्वितीयं वाक्यम्। सन्निधानाच्च दाधामर्थे यो वर्तते स घुसंज्ञ इति प्रकृतीनामपि सिध्यति॥

**( उद्द्योतः )** नन्वेकवाक्यत्वे दारयत्यादेकदेशानर्थकव्यावृत्त्यर्थमेव तत्स्याद्, न त्वन्यरूपप्रापकमत आह-**एतद्द्वितीयमिति। अर्थवत्परिभाषयैवानर्थकव्यावृत्तौ** सिद्धायामर्थग्रहणानुवृत्तिर्वाक्यभेदार्थैवेति भावः॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्त्येकदेशी समाधत्ते—**न कर्तव्यमिति।** यत इति शेषः। **इति**—इत्यत्र। **वक्ष्यामि**—अनुवर्त्स्यामि। फलितं निर्दिशति—**दाधेति।**

प्रदीपे—**इति**—इति तदर्थेन।

उद्द्योते—**तत्**—"अर्थे" इत्येतत्। **वाक्यभेदार्थैवेति**—न च "संभवत्येकवाक्यत्वे वाक्यभेदोऽन्याय्य" इति न्यायेन विरोधात् वाक्यभेदाङ्गीकारो न युक्त इति वाच्यम्, तत्र संभवतिपदोपादानेन तेनाविरोधात्॥

**( समाधानबाधकभाष्यम् )**

**नैवं शक्यम् । ददातिना समानार्थान् रातिरासतिदासतिमंहतिप्रीणातिप्रभृतीनाहुः । तेषामपि घुसंज्ञा प्राप्नोति । तस्मान्नैवं शक्यम् ॥ न चेदेवं, प्रकृतिग्रहणं कर्तव्यमेव ॥**

**( उद्द्योतः )** भाष्ये **प्रीणातीति।** यथा पितृभ्यः प्रीणातीत्यादौ।

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी खण्डयति—**नैवमिति।** कर्तुमिति शेषः। एवमग्रेऽपि। **ददातिनेति**—यतः तथा सति, इत्यादिः। **न चेदेवमिति**—कर्तुं शक्यते, तर्हीति शेषः।

उद्द्योते—ददात्यर्थे तेषां प्रयोगस्याप्रसिद्धत्वादाह—**यथेति।**

**( समाधानसाधकभाष्यम् )**

**न कर्तव्यम् । शिदर्थेन तावन्नार्थः प्रकृतिग्रहणेन । अवश्यं तत्र मार्थं प्रकृतिग्रहणं कर्तव्यम्, प्रणिमयते प्रणमयतेत्येवमर्थम् । तत् पुरस्तादपकृक्ष्यते घुप्रकृतौ माप्रकृतौ चेति ॥**

**( प्रदीपः ) तत्पुरस्तादिति। नेर्गदेति** सूत्रे घुमाशब्दयोर्मध्ये प्रकृतिग्रहणं कर्तव्यं तदुभाभ्यामभिसम्भन्त्स्यते॥

**( उद्द्योतः )** ननु तत्रोभयान्वयाय प्रकृतिग्रहणद्वये कर्तव्येऽत्रैव करणं युक्तमत आह—**तदुभाभ्यामिति।** घुप्रकृतिमाशब्दानां द्वन्द्वे सन्निधानाविशेषादुभयप्रकृतिर्गृह्यते इति प्रणिदयते प्रणिमयत इति उभयत्रापि णत्वं सिध्यतीत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती निराकरोति—**न कर्तव्यमिति।** यत इति शेषः। **अवश्यमिति**—यत इत्यादिः। **तत्र**—"नेर्गदे" ति सूत्रे। **मार्थमिति व्याचष्टे**—प्रणिमयते इति। **तत्**—प्रकृतिग्रहणम्। ततः फलितमाह—**घुप्रकृताविति।**

प्रदीपे—ननु घोः पूर्वं प्रकृतिपदपाठे दोष एवेत्यत आह—**घुमाशब्दयोरिति। कर्तव्यमिति**—तत इति शेषः।

उद्द्योते—**तत्र**—"नेर्गदे" ति सूत्रे। **कर्तव्ये इति**—सतीति शेषः। **अत्रैव**—"दाधे" ति सूत्रे एव। **करणं**—प्रकृतिग्रहणकरणम्।

( आक्षेपभाष्यम् )

यदि प्रकृतिग्रहणं क्रियते । प्रनिमिनोति प्रनिमीनाति । अत्रापि प्राप्नोति ॥

( प्रदीपः ) प्रनिमिनोतीति । मीनातिमिनोतिदीङां ल्यपि चेत्यात्वविधानाद्भवति माप्रकृतिरनयोः ॥

( उद्द्योतः ) आत्वविधानादिति । एज्विषये ईकारान्ताना-मात्वविधानादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—पूर्वपक्षी आक्षिपति—यदीति । तत्रेति शेषः । क्रियते इति—तर्हीति शेषः । प्राप्नोतीति—णत्वमित्यादिः ।

प्रदीपे—अनयोः—मीनातिमिनोत्योः ।

उद्द्योते—भाष्यरीत्येदं, न वार्त्तिककरीत्येत्याह—एज्विषये इति ।

( प्रतिबन्दीभाष्यम् )

अथाक्रियमाणेऽपि प्रकृतिग्रहणे इह कस्मान्न भवति-प्रनिमाता प्रनिमातुं प्रनिमातव्यमिति ॥

( तत्त्वालोकः ) तत्र सिद्धान्ती पूर्वपक्षिमुखेनैव समाधातुं पृच्छति—अथेति । नेर्गदेति सूत्रे इति भावः । मा माने इत्यस्य रूपाणि निर्दिशति—प्रनिमातेति ।

( प्रतिबन्दीसमाधानभाष्यम् )

आकारान्तस्य ङितो ग्रहणं विज्ञायते ॥

( तत्त्वालोकः ) पूर्वपक्षी समाधत्ते—आकारान्तस्येति । यतस्तत्रे यादिः । "नेर्गदनदपतपदघुमास्यतीत्यादि सूत्रं पठ्यते इति भावः ।

( समाधानभाष्यम् )

यथैव तर्हि अक्रियमाणे प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञायते । एवं क्रियमाणेऽपि प्रकृतिग्रहणे आकारान्तस्य ङितो ग्रहणं विज्ञास्यते ॥

( उद्द्योतः ) भाष्ये एवं क्रियमाणेऽपीति । णत्वविधौ माङ्स्यतीति निर्देष्टव्यमिति भावः ॥ यद्यपि लक्षणप्रतिपदोक्तपरिभाषया मीनातिमिनोत्यादेशानां ग्रहणाभावो वक्तुं शक्यस्तथापि मेङोऽग्रहणवारणाय गामादाग्रहणेष्वविशेष इत्युक्तेर्माग्रहणे तदप्रवृत्तिः । मामाने इत्यस्य योगे णत्ववारणाय च ङित्पाठ आवश्यक इति तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती पूर्वपक्ष्युक्तमेव समाधानं करोति—यथैवेति । तत्रेति शेषः ।

उद्द्योते—तदप्रवृत्तिः—लक्षणप्रतिपदोक्तपरिभाषाऽप्रवृत्तिः । तस्य फलान्तरमप्याह—मा माने इति ।

( भारद्वाजीयप्रयोजननिराकरणभाष्यम् )

विकृतार्थेन चापि नार्थः । दोष एवैतस्याः परिभाषाया "लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव" इति—"गामादाग्रहणेष्वविशेषः" इति ॥

( प्रदीपः ) गामादाग्रहणेष्विति । अस्य चार्थस्य दैपः पित्त्वमद्याविति पित्प्रतिषेधे सामान्यग्रहणार्थं लिङ्गम् । अन्यथाऽस्य लाक्षणिकत्वादत्र ग्रहणं न भविष्यतीति किं प्रतिषेधार्थेन पित्त्वेन । सामान्यापेक्षया च निरनुबन्धकग्रहण इति लक्षणप्रतिपदोक्तयोरिति च परिभाषाद्वयानुपस्थानमिह ज्ञापयतीति धेटोऽपि सिध्यति । दो दद्घोरित्यत्र वा 'द' इत्येव धेटो निवृत्त्यर्थं सद्धेटो घुसंज्ञां ज्ञापयति । न हि दधातिनिवृत्त्यर्थं द इत्येतत्, तस्य दधातेर्हिरिति ह्यादेशविधानादङ्गावाप्रसङ्गात् ॥

( उद्द्योतः ) सामान्येति । एतत्सूत्रगृहीतदाधापेक्षया परिभाषागृहीतगाद्यपेक्षया परिभाषाद्वयापेक्षया चेत्यर्थः ॥ निरनुबन्धकेति । स च दोऽवखण्डन इत्ययम् ॥ धेटोऽपीति । अन्यथाऽस्य लाक्षणिकत्वाद् ग्रहणाप्रसक्तिः ॥ दत्त सानुबन्धकत्वादिति । तन्न । निरनुबन्धकस्य धा इत्यस्याप्रसिद्धत्वात् ॥ ये तु दाविषयमेव तज्ज्ञापकं मन्यन्ते तन्मते धेडंशे ज्ञापकान्तरमाह—दो ददिति ॥

( तत्त्वालोकः ) भाष्ये—एवं प्रकृतिग्रहणस्य कात्यायनोक्तप्रयोजनं निराकृत्य भारद्वाजोक्तप्रयोजनं खण्डयति—विकृतेति । दोष इति—बाधक इत्यर्थः । यत इत्यादिः । तथा च 'गामादे'ति परिभाषयैव लाक्षणिकस्यापि दारूपस्य घुसंज्ञासिद्धिरिति भावः ।

प्रदीपे—ग्रहणार्थमिति—क्रियमाणमिति शेषः । अन्यथा—"गामे" त्यभावे । अस्य—दैपः "दा" इत्यस्य । अत्र—घुसंज्ञायाम् । इह—घुसंज्ञायाम् । ज्ञापयतीति—दैपः पित्त्वमित्यादिः । सिध्यतीति—घुसंज्ञेत्यादिः । इत्यत्रेति—क्रियमाणमिति शेषः । तस्य —दधातेः ।

उद्द्योते—परिभाषाद्वयेति—"निरनुबन्धके" ति "लक्षणप्रतिपदोक्ते" ति परिभाषाद्वयेत्यर्थः । स च—निरनुबन्धकश्च । अन्यथा—तेनात्र तादृशपरिभाषाद्वयानुपस्थानज्ञापनाभावे । अस्य—धेटः "धा" इत्यस्य । नारायणाद्युक्तिं खण्डयति—यत्त्विति । केचित्तु-अदाबग्रहणस्य ज्ञापकत्वसम्भवे पित्त्वस्य तदाश्रयणानौचित्यात्कैयटोक्तमसङ्गतमिति वदन्ति, तन्न, उपायस्योपायान्तरादूषकत्वात् ॥ ज्ञापकान्तरोपादानवैयर्थ्यं परिहरति—ये त्विति ।

( यदागमन्यायाधिकरणम् )

( १७५ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समानशब्दप्रतिषेधः ॥ * ॥

( भाष्यम् )

समानशब्दानां प्रतिषेधो वक्तव्यः । प्रनिदारयति प्रनिधारयति । दाधा घुसंज्ञा भवन्तीति घुसंज्ञा प्राप्नोति ॥

( प्रदीपः ) समानशब्दानामिति । समानश्रुतीनामित्यर्थः ॥ प्रनिदारयति प्रनिधारयतीति । दृङ्धृङोर्णिचि वृद्धावाकारे कृते दाधाशब्दौ संपद्येते । तौ चार्थवन्तौ । पश्चात्तु रपरत्वं क्रियमाणमागमभूतत्वादन्यत्वं न करोतीति प्राप्तिः ॥

( उद्द्योतः ) समानत्वं नार्थेत इत्याह—श्रुतीनामिति । तौ चेति । एतेनानर्थकत्वात्तयोर्घुत्वं नेत्यपास्तम् ॥ पश्चादिति । प्रणिदापयतीत्यत्र पुगिवेति भावः ॥ आगमभूतत्वात् । आगमस्वरूपत्वात् ॥

( तत्त्वालोकः ) भाष्ये—समानेति—घुसंज्ञायामित्यादिः । प्रनिदारयतीति—यत इहेत्यादिः ।

प्रदीपे—तौ—दाधाशब्दौ ।

उद्द्योते—तयोः—दाधाशब्दयोः । यथाश्रुतार्थानुपपत्तेराह—आगमस्वरूपेति ।

( १७६ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात् ॥ * ॥

( भाष्यम् )

**समानशब्दानामप्रतिषेधः, अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥**

**घुसंज्ञा कस्मान्न भवति ? ॥**

**अर्थवद्ग्रहणात्, अर्थवतोर्दाधोर्ग्रहणात् । न चैतावर्थवन्तौ ।**

**( प्रदीपः ) अर्थवद्ग्रहणादिति ।** अर्थवद्ग्रहणे **नानर्थकस्ये**-त्यस्य **स्वं रूप**मित्यनेन ज्ञापितत्वात् । **उरण् रपर** इति चाण्विधीयमान एव रपरो भवतीति वृद्धिः क्रियमाणा रपरा भवतीति दार्धारोरेवार्थवत्त्वं न तु तदवयवयोरिति नास्ति घुसंज्ञा ॥

**( तत्त्वालोकः )** भाष्ये—**घुसंज्ञेति**—यद्येवं, तर्हि तदभावे तत्रेत्यादिः । **एतौ**—दृङ्धृङोः दाधौ ।

प्रदीपे—**तदवयवयोः**—दार्धारोरवयवयोः दाधोः ।

( १७७ समाधानहेत्वन्तरवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अनुपसर्गाद्वा ॥ * ॥

( भाष्यम् )

**अथवा यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति । न चैतौ दाधौ प्रति क्रियायोगः ॥**

**( प्रदीपः ) अनुपसर्गाद्वेति ।** अभ्युपगम्य घुसंज्ञां दोषं परिहरति । घुसंज्ञापेक्षया यस्योपसर्गत्वं तस्मात् परस्य नेर्घौ परतो णत्वं विधीयते । अत्र दाधापेक्षया नास्ति प्रशब्दस्योपसर्गत्वम्, किन्तु दार्धारोरपेक्षयेत्यदोषः ॥

**( उद्द्योतः ) अभ्युपगम्येति । अदाबिति** प्रतिषेधार्थेन दैपः पित्त्वेन **दो दद्घ्वि**त्यनेन च परिभाषामात्रानुपस्थानज्ञापनसंभवादिति भावः ॥ **किं त्विति ।** तयोरेव क्रियावाचित्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**एतौ दाधाविति**—दृङ्धृङोर्या क्रिया तद्योग इत्यर्थः ।

प्रदीपे—**घुसंज्ञापेक्षया**—घुसंज्ञिनोऽपेक्षया । कर्मण्यङः सत्त्वात् । उद्द्योते—अभ्युपगमे बीजमाह—**अदाबितीति ।** तथा चात्र "अर्थवद्ग्रहण" परिभाषोपस्थानासंभवात् "अनुपसर्गाद्वे" ति पक्षान्तरमाश्रितं भाष्यकृतेति भावः । **तयोरेव**—दार्धारोरेव ।

( आक्षेपभाष्यम् )

**यद्येवम् इहापि तर्हि न प्राप्नोति—प्रणिदापयति प्रणिधापयतीति । अत्रापि नैतौ दाधावर्थवन्तौ, नाप्येतौ दाधौ प्रति क्रियायोगः ॥**

**( प्रदीपः ) इहापि तर्हीति ।** अत्रापि पुकि कृते पकारान्तोऽर्थवान् न केवलो दाशब्दः । पुगन्तमेव च प्रत्युपसर्गत्वम्, **न दाशब्दं** प्रतीति प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्रापीति**—यत इत्यादिः ।

प्रदीपे—प्रथमतुल्यतां भाष्योक्तामाह—**अत्रापीति ।** प्रणिदापयनीत्यादावित्यर्थः । द्वितीयतुल्यतां भाष्योक्तामाह—**पुगन्तमिति ।**

( १७८ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ न वार्थवतो ह्यागमस्तद्गुणीभूतस्तद्ग्रहणेन गृह्यते यथाऽन्यत्र ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ।**

**किं कारणम् ? ॥**

**अर्थवत आगमस्तद्गुणीभूतोऽर्थवद्ग्रहणेन गृह्यते । यथान्यत्र । तद्यथा—अन्यत्रापि अर्थवत आगमोऽर्थवद्ग्रहणेन गृह्यते ॥**

**कान्यत्र ? ।**

**लविता चिकीर्षितेति ।**

**( प्रदीपः ) न वाऽर्थवत इति ।** लब्धात्मकस्य भावस्य निमित्तवशादुपचयापचयौ व्यपदेशहानिं न कुरुतः, यथा देवदत्तस्याङ्गाधिक्याङ्गच्छेदौ । इहाप्यन्तरङ्गत्वात् कृतायां दाधोर्घुसंज्ञायां पश्चादुत्पन्नः पुगागमो घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमित्यदोषः । अनर्थकस्याप्यागमो व्यपदेशहानिं न करोति, यथा सत्यपि रेफेऽकाराकारयोर्गुणवृद्धिव्यपदेशाहानिः । इह त्वर्थवतो ग्रहणादर्थवत इत्युक्तम् । यदा च प्रकृत्यर्थः प्रेण विशेष्यते तदाऽयं परिहारः, ण्यर्थविशेषणत्वे तु प्रस्य दाधौ प्रत्यनुपसर्गत्वाद् णत्वं न भवत्येव ॥ **तद्गुणीभूत इति ।** प्रयोगसंपादन उपकारक इत्यर्थः ॥

**( उद्द्योतः )** भाष्ये **तद्गुणीभूत इति ।** यमुद्दिश्यागमो विहितः स **तद्गुणीभूतः** शास्त्रेण तदवयवत्वेन बोधितोऽतस्**तद्ग्रहणेन** तद्ग्राहकेण तद्बोधकेन **गृह्यते** बोध्यते आगमविशिष्ट इति परिभाषार्थः । तदाह—**लब्धात्मकस्येति ॥** तेन दार्धारोर्व्यावृत्तिः सूचिता । **अपचय इति** दृष्टान्तार्थम् ॥ **अन्तरङ्गत्वादिति । इदं** यथोद्देशे, कार्यकाले तु णत्वदेशा संज्ञाऽसिद्धा स्यादिति बोध्यम् ॥ वस्तुतः कार्यकालपक्षे पूर्वं पुकः प्रवृत्तावपि दापो दाशब्देन ग्रहणाद् घुत्वं सुलभमेवेति चिन्त्यम् ॥ **घुव्यपदेशं न निवर्तयति नाप्यर्थवत्त्वमितीति ।** स्वविशिष्टे तयोरानयनादिति भावः ॥ **अकाराकारयोरिति ।** रेफविशिष्टयोरित्यर्थः ॥ **इह त्विति ।** घुसंज्ञासूत्रे इत्यर्थः ॥ अत्रेदं बोध्यम् । अङ्गावयवाकारस्य मुग्विधाय**कानेर्मुगिति** सूत्रारम्भसामर्थ्येन क्वचिद्वर्णग्रहणे नास्याः प्रवृत्तिः । तेन दिदीये इत्यादौ यणादिकं न । अयमेवार्थो भाष्येऽर्थवद्ग्रहणेन ध्वन्यत इत्याहुः ॥ **प्रयोगेति ।** इदं चिन्त्यम् । आगमवत्प्रत्ययादेरपि प्रयोगसंपादने उपकारकत्वेन तेषामपि प्रकृतिग्रहणेन ग्रहणापत्तिः, मूलयुक्तेस्तुल्यत्वात् । अस्य मूलयुक्तिलाभावे तु तत्कथनवैयर्थ्यापत्तिः । तस्मान्मदुक्तव्याख्यैव ज्यायसी ॥

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः । तथा च प्रणिदापयतीत्यादौ दाशब्दमुद्दिश्य पुको विहितत्वात् पुग्विशिष्टस्य दाग्रहणेन ग्रहणाद् घुसंज्ञोपपद्यते । प्रनिदारयतीत्यादौ तु दाशब्दमुद्दिश्य रेफस्य विहितत्वाभावात् रेफविशिष्टस्य दाग्रहणेनाग्रहणान्न घुसंज्ञा प्रसज्यते इति भावः ।

प्रदीपे—**लब्धात्मकस्य**—लब्धस्वरूपकस्य । **व्यपदेशेति**—व्यवहारेत्यर्थः । अस्याः परिभाषाया लौकिकसिद्धत्वमाह—**यथेति ।**

**इहापीति**—प्रणिदापयतीत्यादावपीत्यर्थः। तथेत्यादिः। **इत्यदोषः**—इति हेतोरदोषः। परिभाषापाठे "यदागमाः" इति पाठादत्र "अर्थवतः" इति प्रकृताभिप्रायं, न सार्वत्रिकमित्याशयेनाह—**अनर्थकस्येति**। अत्र एकत्रैकवचनान्तपाठः॥ **अपिना** अर्थवतः इत्यस्य संग्रहः। **अस्येति**—इदं देहलीदीपन्यायेन पूर्वत्रोत्तरत्र चान्वेति॥

उद्द्योते—**यमुद्दिश्येति**—य इति शेषः। तद्गुणीभूत इति व्याचष्टे—**शास्त्रेणेति**। एवमग्रेऽपि। शेषं पूरयति—**आगमविशिष्ट इति**। **तेन**—उच्चार्यमाणरूपेणेत्यनेन। प्रकृतानुपयोगादाह—**दृष्टान्तेति**। कैयटोक्तं खण्डयति—**वस्तुत इति**। **स्वविशिष्टे**—पुग्विशिष्टे। **तयोः**—पुग्वार्थवत्त्वयोः। यथाश्रुतार्थासङ्गतेराह—**रेफविशिष्टेति**। **क्वचिदिति** व्याचष्टे—**वर्णेति**। **आदिना** जहारेत्यादिसंग्रहः। **आदिना** "आत औ णल" इत्यादिपरिग्रहः। शब्दतोऽलाभादाह—**ध्वन्यते इति**। **आहुरिति** सूचितारुचिबीजन्तु "आने मुक्" सूत्रस्थभाष्यादिस्वारस्यात्तस्य अस्या अनित्यत्वस्यैव ज्ञापकता युक्ता, न तु वर्णग्रहणेऽप्रवृत्तिमात्रस्येति। **तेषामपि**—प्रत्ययादिविशिष्टानामपि। **अस्य**—तद्गुणीभूतत्वस्य। **मदुक्तेति**—शास्त्रेणेत्यनेनेति भावः।

### ( आदेशवादिन आगमवादिनं प्रत्याक्षेपभाष्यम् )

**युक्तं पुनर्यन्नित्येषु नाम शब्देष्वागमशासनं स्यात्। न। नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः। आगमश्च नामापूर्वः शब्दोपजनः ?॥**

**( प्रदीपः ) युक्तं पुनरिति**। ततश्च नित्येष्वागमविरोधात् तद्द्वारेणादेशविधानादाप्शब्द एवार्थवान्न दाशब्द इति तदवस्थो दोष इति भावः॥

**( उद्द्योतः )** भाष्ये **यन्नित्येष्विति**। वियदादिवद् वर्णप्रकृतिप्रत्ययपदवाक्यादिरूपाः सर्गाद्यकालिकोत्पत्तिमन्तः प्रलयकालिकनाशवन्तश्चेति पक्षे इति भावः॥ **दाप्शब्द एवार्थवान्न दाशब्द इति**। स तु न दाशब्द इत्यर्थः। एवं च घुत्वाभावात्तदवस्थो दोष इति भावः॥ श्रौतस्थानषष्ठ्यभावात्स्थानिवत्त्वस्य नैतद्विषये प्रवृत्तिरिति तात्पर्यम्॥ कूटस्थत्वं व्याचष्टे—भाष्ये **अविचालिभिरिति**। तद्विवरणम**नपायेत्यादि**। द्वन्द्वान्मत्वर्थीये पश्चान्नञ्समासः॥

**( तत्त्वालोकः )** भाष्ये—**युक्तमिति**—तदिति शेषः। **पुनरिति** प्रश्ने। तथा च तत् किं युक्तमित्यर्थः। **स्यात्**—स्यादिति। समाधत्ते—**नेति**। युक्तमित्यस्यानुषङ्गः। **नित्येष्विति**—यत इत्यादिः। **च**—तु। **शब्दोपजनः**—उपजायमानः शब्दः।

प्रदीपे—प्रश्नादिसकलाशयमाह—**ततश्चेति**। **तद्द्वारेणेति**—पुगभवतीत्येतद्द्वारेणेत्यर्थः। दाशब्दस्य दापशब्देति शेषः।

उद्द्योते—पारमार्थिकनित्यत्वस्याभावादाह—**वियदिति**। अग्रि**मादिना** महावाक्यपरिग्रहः। **स तु**—दाप्शब्दस्तु। ननु स्थानिवद्भावेन तत्र दात्वमित्यत आह—**श्रौतेति**। "दाधे" ति सूत्रे इति भावः। **एतद्विषये**—घुत्वविषये। अपौनरुक्त्यायाह—**कूटस्थेति**।

### ( आगमवादिन आदेशवादिनं प्रत्याक्षेपभाष्यम् )

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः॥**

**( प्रदीपः ) अथ युक्तमिति**। तत्रापि स्थानिनमपनीयादेशः क्रियत इत्यनित्यत्वप्रसङ्गः। यश्चोभयोर्दोषो न तमेकश्चोद्यः॥

**( उद्द्योतः )** नन्वेतावतापि स्वपक्षास्थापनाद्वैतण्डिकत्वमस्य स्यादत आह—**यश्चेति**॥

**( तत्त्वालोकः )** भाष्ये—**युक्तमिति**—किन्तदित्यादिः। **स्युः**—स्युरिति।

प्रदीपे—**तत्रापि**—आदेशस्थलेऽपि। अस्यानित्यत्वप्रसङ्ग इत्यनेनान्वयः। **उभयोः**—आगमवाद्यादेशवादिनोः। **दोषः**—अनित्यत्वप्रसङ्गरूपः। **एकः**—आगमवादी। "यश्चोभयोः समो दोषः परिहारस्तयोः सम" इति न्यायादिति भावः।

उद्द्योते—**अस्य**—आगमवादिनः।

### ( आदेशवादिनः समाधानभाष्यम् )

**बाढं युक्तम्। शब्दान्तरैरिह भवितव्यम्। तत्र शब्दान्तरे शब्दान्तरस्य प्रतिपत्तिर्युक्ता॥**

**( प्रदीपः ) बाढमिति**। प्रसङ्गवाची स्थानशब्दो न निवृत्तिवाची, ततश्च सन्त एव प्रयोगे नित्याः शब्दा बुद्ध्युन्मज्जननिमज्जनद्वारेण प्रतिपाद्यन्ते। आगमस्त्ववस्थितस्यापूर्वः क्रियमाणो नित्यत्वं विरुणद्धि॥

**( उद्द्योतः ) प्रसङ्गवाचीति**। **षष्ठी स्थान** इत्यत्रत्यः। प्रसङ्गश्च बुद्धेरिति भावः॥ **सन्त एव प्रयोगे नित्या इति**। आदेशरूपा इत्यर्थः॥ **बुद्ध्युन्मज्जननिमज्जने** यथाक्रममादेशस्य स्थानिनश्च॥ भाष्ये **शब्दान्तरे इति**। तद्बुद्धौ प्राप्तायामित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**शब्दान्तरैरिति**—यत इत्यादिः। **इह**—आदेशस्थले। **तत्र**—तथा सति।

### ( सिद्धान्तोपसंहारभाष्यम् )

**आदेशास्तर्हीमे भविष्यन्ति अनागमकानां सागमकाः।**

**तत् कथम् ?।**

**'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।**

**एकदेशविकारे हि नित्यत्वं नोपपद्यते'॥**

**( प्रदीपः ) आदेशास्तर्हीमे इति**। इड् भवतीत्येतद्द्वारेण तव्यस्येतव्यादेशः क्रियते॥ **सर्वे इति**। आगमा अपीत्यर्थः॥ **सर्वपदादेशा इति**। पदशब्देन न सुप्तिङन्तं गृह्यतेऽपि तु कार्यं प्रतिपद्यमानं प्रतीयमानं (यत्) प्रकृतिप्रत्ययादि तत् सर्वं पदम्॥ **एकदेशविकारे हीति**। यद्यपि सर्वविकारेऽप्यनित्यत्वं यथा पिठरस्थस्य पयसः पाकादिषु, तथापि विकाराभावप्रतिपादनपरमेतत्। बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियत इत्यर्थः॥ यद्येवं दाशब्दस्य दाप्शब्द आदेशः क्रियत इति दाशब्दस्यानर्थक्यप्रसङ्गः॥ नैष दोषः। नित्यतासमर्थनायादेशपक्ष आश्रितः। प्रक्रियायां तु कल्पितायामागमागमिभाव एव। अन्यथागमादेशयोर्भेदेन व्यवहारो न स्यात्॥

**( उद्द्योतः ) आदेशास्तर्हीम इति इमे** आगमत्वेन व्यवह्रियमाणा अपि तथा विधीयमाना अपि **आदेशा**स्तत्सदृशा भविष्यन्तीत्यर्थः॥ **आद्यन्ता**वित्याद्येकवाक्यतया आर्धधातुकस्याद्यावयव इडित्यर्थे **वृत्ते** नित्यत्वानुपपत्तिमूलकवाक्यान्तरकल्पनेन केवलतव्यबुद्धौ प्रसक्तायामिकारादिः साधुरिति बोधः॥ तेनात्रापि बुद्धिविपरिणाममात्रस्यैव सत्त्वेन न नित्यत्वहानिरिति भावः॥ **यदागमा इति**

न्यायस्य चात्रापि पक्षे सत्त्वात्प्रणिदापयतीत्यादौ न दोषः ॥ ये त्वत्र पक्षे आगमत्वं नास्त्येवेति वदन्ति, ते मान्याः । **अनागमकानाम**ित्यादिव्यवहारासङ्गतेः । निरवयवकबुद्धिनिमज्जनसावयवकबुद्ध्युन्मज्जनेनागमव्यवहारस्यापि निर्बाधत्वात् । **तत्कथ**मिति प्रश्ने तुल्यन्यायत्वादाह—**सर्वे सर्वपदेति ।** यथा **एरु**रित्यादौ अवयवयोः श्रौतस्थान्यादेशभावेऽपि नित्यत्वानुपपत्तिमूलकः समुदाययोरपि स कल्प्यते, एवम् अवयवत्वेन विधानेऽपि अर्थापत्तिमूलकवाक्यान्तरकल्पनेन निरवयवसावयवबुद्ध्योर्विपरिणाममात्रेणादेशत्वव्यवहारो गौणो नित्यत्वरक्षणाय कल्प्यत इति । यथा च तत्र कल्प्यमानस्थान्यादेशभावेन श्रौतावयवस्थान्यादेशभावस्य न त्यागः, अत **एवाचः परस्मिन्नि**त्यादीनामुक्तिसम्भवः । तथाऽत्रापि श्रौतावयवावयविभावस्य न त्याग इति **यदागमा** इत्येतत्प्रवृत्तिरव्याहतैवेति ईदृशस्थान्यादेशभावे स्थानिवत्त्वस्य न प्रवृत्तिः, **स्थानिवदि**तिश्रुतेः श्रौतस्थान्यादेशभावानुपपत्तिमूलकतया कल्प्यमानस्थान्यादेशभावके **एरु**रित्यादावेव तत्प्रवृत्तेः । नत्वत्र केवलानुमानिके । अत एव **लावस्थायामडि**ति पक्षेऽडादिविशिष्टस्यापिवदित्यादौ न पिबाद्यादेशा इति दिक् । तदेतदाह—**इड्भवतीत्येतद्द्वारेणेति ॥ आगमा अपीत्यर्थं** इत्यस्य तथेत्यादिः । अत एवाग्रे वक्ष्यति—'बुद्धिविपरिणाममात्रं स्थान्यादेशागमागमिभावद्वारेण क्रियते' इति ॥ एतेनागमा अपीत्येव **सर्व**पदव्याख्यायामे**कदेशविकारे ही**ति वाक्यशेषविरोधः । आदेशत्वोपपादिकाया विकारव्यापकीभूताभावप्रतियोगित्वरूपनित्यत्वानुपपत्तेः सकलपक्षावृत्तित्वादित्यपास्तम् ॥ **पद्यमानमिति ।** कार्यवत्तया प्रतीयमानं प्रकृत्यादीत्यर्थः ॥ **सर्वपदेत्यत्र** घञर्थे कः । सर्वशब्दश्चात्रावयवकार्त्स्न्यवाची ॥ **यद्येवमिति ।** एवं चैतदवयवस्यानर्थक्यान्न संज्ञा, पुकः पूर्वं दा इत्यस्य तु न संज्ञा, कार्यकालपक्षे संज्ञाया णत्वदेशस्थत्वेन पुकृदृष्ट्याऽसिद्धत्वात् पूर्वमप्रवृत्तेः । न च पुग्विशिष्टस्य दाग्रहणेन ग्रहणम् । **यदागमा** इत्यस्याभावात् । पूर्वोक्तरीत्या स्थानिवत्त्वाप्रवृत्तेश्चेति भावः ॥ **आदेशपक्ष इति ।** बुद्धिविपरिणामपक्ष इत्यर्थः ॥ कल्पितप्रक्रियादशायां तु न कल्पितागमत्वादिव्यवहारत्याग इति **यदागमा** इत्यादेः सत्त्वेनात्रापि पक्षे न दोष इति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**प्रकृतीति**—प्रदित्यादिः । **यद्येवमिति**—तर्हीति शेषः ।

उद्द्योते—वस्तुत आदेशत्वस्याभावादाह—**इमे इति । तथा**—आगमत्वेन । आदेशसदृशत्वमुपपादयति—**आद्यन्ताविति । वृत्ते**—निष्पन्ने । **इकारादिरिति**—तन्व इति शेषः । **अत्रापि**—आगमस्थलेऽपि । **अत्रापि पक्षे**—आगमस्यादेशसदृशत्वपक्षेऽपि । प्राचां मतं खण्डयति—**ये त्विति ।** विपक्षे बाधकं प्रतिपाद्य पक्षे साधकमाह—**निरवयवेति ।** इदमेव सकलं "अनागमकानामि" त्यनेन प्रत्यपादि । प्रकृतासम्बद्धत्वादाह—**तुल्येति । सः**—स्थान्यादेशभावः । तदुक्तिसाफल्यायाह—**यथा चेति । तत्र**—अवयवस्थले । तत्र मानमाह—**अत एवेति । अत्रापि**—आगमस्थलेऽपि । नन्वेवं स्थानिवत्त्वेन सिद्धमित्यत आह—**ईदृशेति ।** तत्र बीजमाह—**स्थानिवदितीति । अत्र**—आगमस्थले । **आनुमानिके इति**—स्थान्यादेशभावे इति शेषः । इदं सफलयति—**अत एवेति ।** यथाश्रुतासङ्गतेराह—**आगमा इति । अत एवेति**—अन्यथा तत्रोभयोक्तिः वैयर्थ्यं भजेतेत्याशयः । **एतेन**—आगमस्थलेऽपि बुद्धिविपरिणामस्वीकारेण । **वाचीति**—न तु पदबहुत्ववाचीति भावः । **एतदवयवस्य**—दाप्शब्दावयवस्य दाशब्दस्य । **पूर्वोक्तरीत्या**—"श्रौतस्थानषष्ठ्यभावादि" त्यादि—प्रागुक्तरीत्या ।

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( १७९ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥*॥ दीङः प्रतिषेधः स्थाघ्वोरित्त्वे ॥*॥

( भाष्यम् )

दीङः प्रतिषेधः स्थाघ्वोरित्त्वे वक्तव्यः ॥ उपादास्तास्य स्वरः शिक्षकस्येति । "मीनातिमिनोति" इत्यात्वे कृते "स्थाघ्वोरिच्च" इतीत्त्वं प्राप्नोति ॥

**( प्रदीपः ) दीङ इति ।** उपादीसत इति स्थिते **मीनातिमिनोती**त्यात्वे कृते दारूपत्वादर्थवत्त्वाच्च घुसंज्ञाप्रसङ्गः ॥

**( तत्त्वालोकः )** भाष्ये—**उपादास्तेति**—यत इत्यादिः । **आत्वे कृते इति**—घुसंज्ञायां सत्यामिति शेषः ।

( प्रत्याक्षेपभाष्यम् )

कुतः पुनरयं दोषो जायते—किं प्रकृतिग्रहणाद्, आहोस्विद्रूपग्रहणात् ? ॥

**( उद्द्योतः )** सन्निपातपरिभाषया दीङ आत्वे दारूपाश्रयघुत्वं न । प्रकृतिग्रहणस्य प्रत्याख्यातत्वान्न तन्निबन्धनमपि इति गूढाशयः पृच्छति—भाष्ये—**कुतः पुनरिति ॥**

**(तत्त्वालोकः)** भाष्ये—**अयं दोषः**—तत्र घुसंज्ञाप्रसङ्गरूपो दोषः । उद्द्योते—**तन्निबन्धनं**—प्रकृतिग्रहणनिबन्धनम् ।

( प्रत्याक्षेपसमाधानभाष्यम् )

रूपग्रहणादित्याह ॥

**( उद्द्योतः )** आशयमविदुष उत्तरम्—**रूपग्रहणादिति ॥**

( प्रकृतिग्रहणदोषभाष्यम् )

इह खलु प्रकृतिग्रहणाद्दोषो जायते । उपदिदीषते । "सनि मीमाघुरभलभ" इति ॥

**( प्रदीपः ) इह खल्विति ।** एचो विषये आत्वविधानाद्दीशब्द एव दाप्रकृतिरिति दोषः ॥

**( उद्द्योतः ) इह खलु प्रकृतिग्रहणादिति ।** घुसंज्ञासूत्रे प्रकृतिग्रहणेऽयं दोषो जायतेऽतस्तत्र प्रकृतिग्रहणं दुष्टमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—रूपग्रहणादित्युत्तरसमर्थनामाह—**इहेति । दोषः**—घुसंज्ञानन्तरमिस्प्रसङ्गरूपः ।

प्रदीपे—**इति दोषः**—इति हेतोः घुसंज्ञाप्रसङ्गरूपो दोषः ।

उद्द्योते—इहेत्यादेरसम्बद्धतानिरासायाह—**घुसंज्ञेति ।**

( दोषनिराकरणभाष्यम् )

नैष दोषः । दाप्रकृतिरित्युच्यते । न चेयं दाप्रकृतिः । आकारान्तानामेजन्ताः प्रकृतयः, एजन्तानामपीकारान्ताः । न च प्रकृतेः प्रकृतिः प्रकृतिग्रहणेन गृह्यते ॥

**( प्रदीपः ) न चेयमिति ।** एच एव स्थाने आत्वविधानादित्यर्थः ॥

**( उद्द्योतः )** अथैकदेशी एनं दोषं परिहर्तुमाह—**न चेयमिति ॥** तद्व्याचष्टे—**एच एवेति । मीनाती**त्यस्योपदेशकाले प्रवृत्तिमसौ न जानाति । एवं च साक्षाद्दाप्रकृतिसंभवे व्यवहितप्रकृतेर्न

ग्रहणमिति भावः ॥ अतिफल्गुत्वाच्चैतन्मतदूषणानभिनिवेशो भाष्यकृत इति द्रष्टव्यम् ॥ यत्त्विदं वार्तिकमतम्—न चैतत्पक्षेऽवदान इत्यादावादन्तत्वनिबन्धनघुत्वसिद्धिः। तत्राकारान्तलक्षणप्रत्ययविधिरिति वचनेनैव तत्सिद्धेः। भाष्ये त्वेतद्वचनप्रत्याख्यानायैज्विषये आत्त्वं सिद्धान्तितमित्यच्यदिति ॥ तन्न। तादृशवार्तिकस्यानुपलम्भात्। विपरीतं मीनातीति सूत्रे उपदेशवचनं कर्तव्यं कवयुच्सिद्धयर्थमिति वार्तिकम्। तत्रोपदेशे एच इति विरुद्धमित्याशङ्क्य एज्विषय इति भाष्यकृता व्याख्यातम्। न तु भवदुक्तवार्तिकं तत्प्रत्याख्यानं वा भाष्ये दृश्यते। एवं च प्रकृतिग्रहणं घुसंज्ञायां वार्तिककारोक्तं दुष्टमेव। न तु तदनुरोधेन गुरुभूतवचनान्तरकल्पनाभिनिवेशः कार्यः। नह्येकदेश्युक्तमतपरिष्कारे गुरुप्रकारेण क्रियमाणे किञ्चित्फलमित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**नैष दोष इति**—न तत्र घुसंज्ञाप्रसङ्गरूपो दोष इत्यर्थः। यत इति शेषः। **आकारान्तानामिति**—यत इत्यादिः।

प्रदीपे—**एवेन**—एज्विषयव्यावृत्तिः।

उद्द्योते-**असौ**-वाक्यकृत्। नन्वस्यासिद्धान्तत्वात्कथमिदमित्यत आह—**अतिफल्गुत्वादिति।** वक्ष्यमाणहेतोरिति भावः। नारायणायुक्तिं खण्डयति—**यत्त्विति। एतत्पक्षे**—एच एवात्त्वमिति पक्षे। केचित्तु प्रत्यये परत आत्त्वमभिप्रेत्याह—**आदन्तत्वेति।** इति वदन्ति। **तत्र**—अवदान इत्यादौ। **तत्सिद्धेः**—आदन्तत्वनिबन्धनघुत्वादिसिद्धेः। **एतद्वचनेति**—"आकारान्ते" ति वचनेत्यर्थः। **तादृशेति**—"आकारान्ते" तीत्यर्थः। ननु तदनुपलम्भो विवादग्रस्त इत्यत आह—**विपरीतमिति।** अस्य वार्तिकमित्यनेनान्वयः। "उपदेशवचनं प्रत्ययविध्यर्थमि"ति वार्तिकस्थप्रत्ययपदव्याख्याने "ण (क) घञ्युज्विषयस्तर्हि प्रयोजयन्ती"ति भाष्यफलितमाह—**कवञ्युज्सिद्धयर्थमिति। वार्तिकमिति**—दृश्यते इति शेषः। भाष्यमपि भवत्पक्षानुसारि नेत्याह—**तत्रोपदेशे इति। वार्तिकम्**—"आकारान्ते"ति वार्तिकम्। अत्र "भवदुक्ते"त्यनेन "आदेच्" सूत्रे "भवत्याकारान्तलक्षणः प्रत्ययविधिरि" त्यस्य भाष्यकृदुक्तस्य ज्ञापकसिद्धवचनस्य सत्त्वेऽपि न विरोध इति केचिदभिप्रयन्ति। **तदनुरोधेन**-घुसंज्ञासूत्रे प्रकृतिग्रहणानुरोधेन। **वचनान्तरेति**—"आकारान्ते" तीत्यादिः। **आहुरिति**—भाष्यतत्त्वविद इति शेषः।

**( आक्षेपोपसंहारभाष्यम् )**

**स तर्हि प्रतिषेधो वक्तव्यः ॥**

**( तत्त्वालोकः )** तटस्थः पृच्छति—**स तर्हीति।**

**( समाधानभाष्यम् )**

**न वक्तव्यः ॥**

**( तत्त्वालोकः )** सिद्धान्ती समाधत्ते—**नेति।**

**( आक्षेपभाष्यम् )**

**घुसंज्ञा कस्मान्न भवति ? ॥**

**(तत्त्वालोकः )** तटस्थः पृच्छति—**घुसंज्ञेति।** तर्हि उपादास्तेत्यत्रेत्यादिः।

**( समाधानभाष्यम् )**

**"सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य" इत्येवं न भविष्यति ॥**

**( प्रदीपः ) सन्निपातेति।** अकित्त्वसन्निपातेनात्वं क्रियते। यदि चात्र घुसंज्ञा स्यात् **स्थाघ्वोरिच्चेति** कित्त्वं स्यादित्यकित्त्वस्य व्याघातः स्यादिति घुसंज्ञां प्रति नैवाकार आत्मानं दर्शयतीति घुसंज्ञा न प्रवर्तते ॥ अत्र केचिदाहुः—दीङस्तृजादावात्वे घुसंज्ञा भवत्येवेति प्रणिदातेति णत्वं भवति। अत एव वार्तिककारेण **स्थाघ्वोरित्व** इति विशेषो निर्दिष्टः ॥ अन्ये त्वाहुः—निर्देश एवैजन्तानामनुकरणानामात्वे कृते दाण्दाम्धाभ्यां चैकशेषे द्वन्द्वे च दाधा इति निर्देशाद्दीङो नास्ति प्राप्तिः, नहि तदनुकरणस्यात्त्वमस्ति। अगुणविषयत्वात् ॥

**( उद्द्योतः ) अकित्त्वेति।** एचो विषयस्याऽन्यथाऽसंभवादिति भावः ॥ **कित्त्वमिति।** तदभावे संनियोगशिष्टत्वादित्त्वमपि नेति कार्याभावाद् घुत्वस्याप्रवृत्तिरिति भावः ॥ **प्रणिदातेतीति।** ननु प्रणिदीयते इत्यत्र नित्यणत्वप्रसङ्गो णत्वविधौ प्रकृतिग्रहणादिति चेन्न, इष्टापत्तेः ॥ **अन्ये त्वाहुरिति।** अत्रारुचिबीजं तु वार्तिकभाष्यविरोधाद् न तथा सूत्रतात्पर्यमिति ॥ **अगुणेति।** गुणनिमित्तप्रत्ययप्रसङ्गाभावादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते—**सन्निपातेति। इत्येवम्**—इति परिभाषया तत्र सा।

प्रदीपे—**अकित्त्वेति**—उपादीस् त इति स्थिते सिच इत्यादिः। **आत्वम्**—एज्विषये प्रवर्तमानमात्वम्। **अत्र**—उपादास्तेत्यत्र। **स्यादिति**—तर्हीति शेषः। **कित्त्वमिति**—सिच इत्यादिः। **घुसंज्ञामिति**—कित्त्वप्रवर्तिकामित्यादिः। **आकार इति**—अकित्त्वमुपजीव्य प्रवृत्त इत्यादिः। **दीङ इति**—भाष्यकारवार्तिककारोभयमते इति भावः। **वार्तिककारेणेति**—भाष्यकृता सह फलाभेदायेति भावः। **निर्दिष्ट इति**—अन्यथा वार्तिककारमते "दीङ" इति वचनेन तत्र घुत्वनिषेधात् "शेषे विभाषे" ति वैकल्पिकं णत्वम्। भाष्यकारमते तु तत्र घुत्वात् "नेर्गदे" ति नित्यं णत्वमिति फलभेदः स्पष्ट एव। **निर्देश इति**—सूत्रकारमते इति भावः। **कृते इति**—तेषामिति शेषः। **प्राप्तिरिति**—घुसंज्ञाया इति भावः। एवं सूत्रकारेण सह भाष्यकारवार्तिककारयोः विरोधः स्पष्ट एव।

उद्द्योते-**अन्यथा**—सिचः कित्त्वे। **तदभावे**—सिचः कित्त्वाभावे। **ग्रहणादिति**—तथा च भाष्यकारवार्तिककारयोः मिथः विरोधापत्तिरिति भावः। क्रमस्य विवक्षितत्वादाह—**वार्तिकभाष्येति।** दीङः प्रतिषेधः स्थाघ्वोरित्त्वे" इति वार्तिकतद्भाष्येत्यर्थः। "यथोत्तरं मुनीनां प्रामाण्यमि"ति सिद्धान्ताद् भाष्यकारोक्तरीत्या सर्वत्र दीङि परे नेर्नित्यं णत्वमिति स्थिते सूत्रकारवार्तिककारमतेऽपि "शेषे विभाषे" त्यत्र व्यवस्थितविभाषामाश्रित्य त्रयाणाम्मिथोऽविरोधः सम्पादनीयः। एकवाक्यतयैव निर्वाहसम्भवे मतभेदकल्पनस्यान्याय्यत्वादिति भावः। **गुणनिमित्तेति**—अत्र गुणस्य निमित्तमिति व्युत्पत्तिः।

**( नानुबन्धकृतमनेजन्तत्वन्यायाधिकरणम् )**

**( १८० आक्षेपवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ दाप्प्रतिषेधे न दैप्यनेजन्तत्वात् । * ॥

**( भाष्यम् )**

**दाप्प्रतिषेधे दैपि प्रतिषेधो न प्राप्नोति—अवदातं मुखम् ॥**

**ननु चाऽऽत्त्वे कृते भविष्यति ॥**

तद्ध्यात्त्वं न प्राप्नोति ॥
किं कारणम् ? ॥
अनेजन्तत्वात् ॥

( प्रदीपः ) दाप्प्रतिषेध इति । दापलवने इत्यस्यैव निषेधः स्यादित्यर्थः ॥ अवदातमिति । तत्त्वमत्र प्राप्नोति ॥

( उद्द्योतः ) इत्यस्यैवेति । न तु दैप इत्यर्थः । तस्य पकारे श्रूयमाणे आत्त्वायोगादिति भावः ॥ ननु पकारे लुप्तेपि कथमात्त्वमुपदेशकाले एजन्तत्वाभावाद्, नानुबन्धकृतमित्याद्याश्रयणे तु प्रकृतेपि न दोष इति चेन्न । उपदेश इति षष्ठ्यर्थे सप्तम्याः सत्त्वेनोपदिश्यमानस्यैजन्तस्येत्यर्थेन लुप्ते आत्त्वप्रवृत्ते । सति तु तस्मिन्नात्त्वमेजन्तत्वाभावाद्, यस्मात्परो नास्ति तत्रैवान्तशब्दप्रवृत्तेरिति दिक् ॥ तत्त्वमिति । अच उपसर्गात्त इत्यनेनेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—दाप्प्रतिषेधे इति—"अदाबि"त्यनेन दापो घुसंज्ञायाः प्रतिषेधे स्वीक्रियमाणे सतीत्यर्थः । दैपीति—तस्या इति शेषः । कृते इति—तत्रापि तस्याः स इति शेषः ।

प्रदीपे—निषेध इति—घुसंज्ञाया इति भावः ।

उद्द्योते—एवकारव्यवच्छेद्यं भाष्योक्तमेवाह—न तु दैप इति । प्रकृतेऽपि—पकारसत्त्वेऽपि ॥ इति षष्ठ्यर्थे इति—सप्तम्याः षष्ठ्यर्थे सत्त्वेनेत्यन्वयः । लुप्ते इति—पकारे इत्यादिः । तस्मिन्—पकारे ।

( १८१ समाधानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ सिद्धमनुबन्धस्याऽनेकान्तत्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥
कथम् ? ।
अनुबन्धस्यानेकान्तत्वात् । अनेकान्ता अनुबन्धाः ॥

( उद्द्योतः ) भाष्ये अनेकान्ता इति । एवं च पकारसत्त्वेपि एजन्तत्वानपायादात्त्वप्रवृत्तिरिति भावः ॥

( तत्त्वालोकः ) भाष्ये—एतत्—दैपोऽपि घुसंज्ञायाः प्रतिषेधनम् । ननु तस्य दाप्त्वाभावात् कथं तस्याः प्रतिषेधनमित्याशयेन पृच्छति—कथमिति । समाधत्ते—अनुबन्धस्येति । तथा च तत्र दाप्त्वमुपपन्नमिति भावः ।

( १८२ समाधानवार्तिकम् ॥ ९ ॥ )

॥ * ॥ पित्प्रतिषेधाद्वा ॥ * ॥

( भाष्यम् )

अथ वा "दाधा घ्वपित्" इति वक्ष्यामि । तच्चाऽवश्यं वक्तव्यम् । अदाबिति ह्युच्यमाने इहापि प्रसज्येत-प्रणिदापयतीति ॥

( तत्त्वालोकः ) पित्प्रतिषेधाद्वेति—सिद्धम् ( एतत् ) इत्यनुषज्यते । तच्च—"दाधा घ्वपिदि"ति च । हि—यतः । प्रसज्येतेति—घुसंज्ञायाः प्रतिषेध इति भावः ।

( आवश्यकतानिराकरणभाष्यम् )

शक्यं तावदनेनादाबिति ब्रुवता बान्तस्य प्रतिषेधो विज्ञातुम् ॥

( प्रदीपः ) शक्यं तावदिति । दाब्दैपौ च धातुषु बान्तौ पठितव्यौ ।

( उद्द्योतः ) तच्चावश्यमित्यादि विघटयितुं भाष्ये शक्यं तावदिति । लक्षणप्रतिपदोक्तपरिभाषया तु पुनन्तेऽदाबिति निषेधो न शक्यो वारयितुं गामादाग्रहणेऽविशेषाद् । दाबित्यपि पकारोपलक्षितदाग्रहणमेवेति भावः । बान्तपक्षेऽपि चर्त्वेन पस्य सिद्धत्वान्नास्ति सूत्रभेदः ॥

( तत्त्वालोकः ) भाष्ये—शक्यमिति—न तदवश्यं वक्तव्यं, यत इत्यादिः । अत्र शक्यमित्यस्योपपत्तिः, "शक्यं चानेन श्वमांसादिभिरपि क्षुत्प्रतिहन्तुमि"त्यत्रेव बोध्या ॥ अनेन—पाणिनिना ।

प्रदीपे—भाष्ये बान्तस्येत्यत्र जातावेकवचनमित्यभिप्रेत्याह—दाब्दैपाविति ।

उद्द्योते—विघटयितुमिति—आहेति शेषः । ननु तत्राविशेषेऽपि अत्र दाबित्युक्तेः न दाग्रहणमित्यत आह—दाबित्यपीति । प्रयोगे पकारस्य काप्यश्रवणादित्याशयः । "दाधा घ्वपिदि"ति न्यासे वक्ष्यमाणः सूत्रभेदरूपो दोषः बान्तपक्षे नास्तीत्याह—बान्तेति ।

( आक्षेपभाष्यम् )

सूत्रं तर्हि भिद्यते ॥

( तत्त्वालोकः ) तर्हि—"दाधा घ्वपिदि"ति न्यासाङ्गीकारे ।

( सिद्धान्तिभाष्यम् )

यथान्यासमेवास्तु ॥

( तत्त्वालोकः ) यथान्यासमिति—तर्हीत्यादिः ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम् "*दाप्प्रतिषेधे न दैपि*" इति ॥

( तत्त्वालोकः ) तत्र दत्तं दोषं स्मारयति—ननु चेति ।

( परिहारस्मारणभाष्यम् )

परिहृतमेतत् "*सिद्धमनुबन्धस्यानेकान्तत्वात्*" इति ॥

( तत्त्वालोकः ) तत्र कृतं परिहारं स्मारयति—परिहृतमिति । एतत्—"दाप्प्रतिषेधे न दैपी"त्येतत् ।

( आक्षेपभाष्यम् )

अथैकान्तेषु दोष एव ॥

( तत्त्वालोकः ) एकान्तेष्विति—अनुबन्धा एकान्ता इति पक्षे इत्यर्थः । अनेकान्ता अनुबन्धा इति पक्षे तत्र दोषवारणेऽपीत्यादिः ।

( समाधानभाष्यम् )

एकान्तेष्वपि न दोषः । आत्त्वे कृते भविष्यति ॥

( तत्त्वालोकः ) कृते इति—दैपोऽपि दाप्त्वात् घुसंज्ञाप्रतिषेध इति शेषः ।

( समाधानानुपपत्तिभाष्यम् )

ननु चोक्तम्—'तद्ध्यात्त्वं न प्राप्नोति, किं कारणम् । अनेजन्तत्वाद्—' इति ॥

( तत्त्वालोकः ) तत्र प्रदर्शितानुपपत्तिं स्मारयति—ननु चेति ।

( समाधानोपपत्तिभाष्यम् )

पकारलोपे कृते भविष्यति ॥

**( तत्त्वालोकः )** कृते इति—एजन्तत्वादात्त्वमिति शेषः।

**( आक्षेपभाष्यम् )**

**नह्ययं तदा दाब् भवति ॥**

**( उद्द्योतः )** शङ्कते—**नह्ययमिति** ॥

**( तत्त्वालोकः )** भाष्ये—**अयं**—दैप्। **तदा**—पकारलोपानन्तरमात्त्वे कृते।

**( समाधानभाष्यम् )**

**भूतपूर्वगत्या भविष्यति ॥**

**( उद्द्योतः )** उत्तरयति—**भूतपूर्वेति**। दात्वं श्रुत्या, पकारवैशिष्ट्यं तु अनयेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**भूतपूर्वगत्येति**—तदापि तस्य दाप्त्वमिति शेषः।

उद्द्योते—**अनया**—भूतपूर्वगत्या।

**( समाधानसाधकभाष्यम् )**

**एतच्चात्र युक्तम्—यत्सर्वेष्वेव सानुबन्धकग्रहणेषु भूतपूर्वगतिर्विज्ञायते ॥ अनैमित्तिको ह्यनुबन्धलोपस्तावत्येव भवति ॥**

**( प्रदीपः ) तावत्येवेति**। इत्संज्ञायां सत्यामेव, प्रयोगे दाशब्द एवायं पित्कार्यं तु लभत इत्यर्थः ॥

**( उद्द्योतः ) इत्संज्ञायामिति**। उपदेशोत्तरकालं जातायामेवेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एतच्च**—भूतपूर्वगत्याश्रयणञ्च। **यत्**—यस्मात्।

**( समाधानान्तरभाष्यम् )**

**अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेजन्तत्वम्' इति। यदयम् "उदीचां माङो व्यतीहारे" इति मेङः सानुबन्धकस्याऽऽत्त्वभूतस्य ग्रहणं करोति ॥**

**( प्रदीपः ) अथवेति**। अनुबन्धानामैकान्तत्वपक्षे उपदेश एवैजन्तानामात्त्वमुच्यमानं दैपो न प्राप्नोतीति ज्ञापकोपन्यासः ॥ **माङ इति**। मेङो ग्रहणं न माङः, मेङो व्यतिहारेण नित्ययोगात्। माङस्तु विवक्षावशाद् व्यतिमिमीत इति कादाचित्कत्वाद् व्यतिहारयोगस्य। प्रणिदानं व्यतिहार इत्येकोऽर्थः। **उदीचां मेङ** इति तु न कृतम्। एवं हि **'नानुबन्धकृतमनेजन्तत्वम्'** इति न ज्ञापितं स्यात् ॥

**( उद्द्योतः ) मेङ इति**। अन्तरङ्गत्वाद्व्यतीहारे नित्यसंबद्ध एव गृह्यते; न तु पदान्तरसन्निधानेन बहिरङ्गव्यतीहारवृत्तिरिति भावः ॥ केचित्तु माङोऽनभिधानात्क्त्वाप्रत्ययानुत्पत्तिरिति न तस्य ग्रहणमित्याहुः ॥ **उदीचां मेङ इति**। उदीचां म इत्यस्याप्युपलक्षणमिदम्। न चानुबन्धसत्त्वे मे इत्यस्य धातुत्वाभावात्कथमात्त्वम्, अनुबन्धलोपे एव धातुत्वमित्यर्थस्य **'न धातुलोप'** सूत्रे भाष्यकैयटयोः स्पष्टत्वादिति वाच्यम्। आत्त्वविधायके धातोरित्यस्यासंबन्धाद्। गवादिशब्दानामुपदेशाभावान्नात्त्वम्। इरेप्रभृतीनामुपदेशेपि तेषामशित्परत्वाभावाद् नात्त्वम्। प्रसज्यप्रतिषेधेपि प्रत्यासत्त्या शित्प्रत्ययपरत्वयोग्यानामेजन्तानामेव ग्रहणान्न दोष इति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**यत्**—यस्मात्। **अयम्**—आचार्यः। प्रदीपे—ननु सूत्रे "व्यतिहारे" इत्युक्तिः, धातौ च "मे प्रणिदाने" इत्युक्तिः, तथा च कथमत्र तस्यैव ग्रहणमित्यत आह—**प्रणिदानमिति**। प्रकृते इति भावः।

उद्द्योते—कैयटोक्तस्य सहेतुकमाशयमाह—**अन्तरङ्गत्वादिति**। प्रथमोपस्थितत्वादित्यर्थः। **बहिरङ्गेति**—बहुव्रीहिः। **केचित्तु**—नारायणशब्दकौस्तुभकाराद्यस्तु। **तस्य**—माङः। अत्र लाघवाभावाद्वाह—**उदीचां म इतीति**। तत्र धातुसम्बन्धफलानामन्यथोपपत्तिमाह—**गवादिशब्दानामिति**। **नात्त्वमिति**—पर्युदासे इत्याशयः। **शिदिति**—बहुव्रीहिः।

**( समाधानान्तरभाष्यम् )**

**अथ वा दाबेवायम्। न दैबस्ति ॥**

**कथम्—'अवदायति' इति ? ॥**

**श्यन्विकरणो भविष्यति ॥ दाधा घ्वदाप् ॥ १९ ॥**

**( प्रदीपः ) अथवेति**। दिवादिषु **दाप् शोधने** इति पठिष्यत इत्यर्थः ॥ १९ ॥

**(उद्द्योतः) दिवादिष्विति**। ननु ताच्छीलिके चानशि दायमान इत्यत्र स्वरे भेदः श्यनि धातोरुदात्तत्वं, शपि चानशोऽन्तोदात्तत्वमिति चेन्न। सति शिष्टादपि विकरणस्वरात् सार्वधातुकस्वरस्य बलीयस्त्वोक्तेरुभयथाप्यन्तोदात्तत्वानपायादिति दिक् ॥ १९ ॥

**( तत्त्वालोकः )** भाष्ये—**कथमिति**—तर्हीत्यादिः। **श्यन्विकरण इति**—यत इत्यादिः।

उद्द्योते—**उदात्तत्वमिति**—"ञ्नित्यादिर्नित्यमि" त्यनेन प्राप्नोतीति शेषः। **विकरणस्वरात्**—श्यन्स्वरात्। **सार्वधातुकस्वरस्य**—चित्प्रत्ययस्वरस्य। **उभयथा**—श्यनि शपि च।

---

**( १८ अतिदेशसूत्रम् ॥ १। १। ५ आ० ९ ॥ )**

# आद्यन्तवदेकस्मिन् ॥ १। १। २० ॥

**( प्रदीपः ) आद्यन्तवदेक० ॥ २० ॥** एकशब्दोऽसहायवाची, न संख्यावाची। बहुष्वपि व्यवस्थितस्यैकत्वसंख्याऽस्तीति किमेकस्मिन्नित्यनेन कृतं स्यात्। एकस्मिन्नित्युपमेये सप्तमीनिर्देशादाद्यन्तवदित्युपमानात् सप्तम्यन्ताद्वतिर्विज्ञायते। यथा मथुरावत् पाटलिपुत्रे प्राकार इति। द्वयोर्ह्युपमानोपमेययोराधाराधेयसंबन्धप्रतिपादनाय वाक्यं प्रयुज्यते। यदि च तयोर्भिन्नविभक्तिकत्वं स्याद् उपमानोपमेयभाव एव न गम्येत ॥ सर्वातिदेशानां कार्यातिदेशस्य प्राधान्यात्तस्यैवेहाश्रयणम् ॥

**( उद्द्योतः ) आद्यन्तवत् ॥ २० ॥ बहुष्वपीति**। यद्यप्युत्तरा सङ्ख्या पूर्वसङ्ख्याबाधिका, तथापीतरेषां बुद्धिविषयत्वाभावे बहुमध्यसंस्थेप्येकत्वाङ्गीकारान्न दोषः। यथा शते पञ्चाशदितीति भावः॥ **किमेकस्मिन्नित्यनेनेति**। तद्धि सभासंनयने भव इत्यर्थे भाकारस्यादित्वे तस्य वृद्धत्वेन प्राप्तच्छाभावार्थं दरिद्रातेरिवर्णान्तलक्षणाचोऽभावार्थं च। अत्र च स्वरे विशेषः ॥ उपमेये सप्तमीसत्त्वे सप्तम्यन्ताद्वतौ मानमाह—**द्वयोरिति ॥ उपमानोपमेययोरिति**। प्राकारपदवाच्येनेति शेषः ॥ **आधाराधेयसंबन्धेति**। आधारत्वाधेयत्वरूपसंबन्धप्रतिपादनायेत्यर्थः ॥ **न गम्येतेति**। उपमानप्रकारकोपमेयविशेष्यकबोधे समानविभक्तिकत्वस्य तन्त्रत्वादिति भावः ॥ **सर्वातिदेशानामिति**। रूप,—निमित्त, तादात्म्य,—शास्त्र,—व्यपदेश,—कार्यातिदेशानां मध्ये इत्यर्थः॥ **प्राधान्यादिति**। सर्वेषां कार्यार्थत्वादिति भावः

**( तत्त्वालोकः )** प्रदीपे—**बहुष्वपीति**-यत इत्यादिः । **तयोः**—उपमानोपमेययोः । **स्यादिति**—तर्हीति शेषः । **तस्यैव**—कार्यातिदेशस्यैव ।

उद्द्योते—"अइउण्" इति सूत्रस्थभाष्यरीत्या शङ्कते—**यद्यपीति । वृद्धि—**एकस्मिन्निति हि । **इत्यर्थे इति**-अस्य प्राप्तश्छेत्यनेनान्वयः । **आकारस्य—**सभासन्नयनघटकआकारस्य । **तस्येति—**सभासन्नयनस्येत्यर्थः । तमाश्रित्येत्यादिः । **प्राप्नेति—**अणं बाधित्वा "वृद्धाच्छ" इत्यनेनेत्यादिः । ननु वृद्धसंज्ञासूत्रे आदिग्रहणसामर्थ्येन अनातिदेशिकस्यैवादेर्ग्रहणान्नात्र दोष इति चेन्न, तथा सति जानातीति ज्ञा, ज्ञाया अयं ज्ञीय इत्यस्यासिद्ध्यापत्तेः, तत्रातिदेशिकादित्वस्यैव संभवात् । अत्रैकस्मिन्नित्युक्तौ तु अन्त्यमध्ययोर्व्यावृत्त्या वृद्धसंज्ञायामादिग्रहणं सार्थकम् ॥ **अत्र च—**दरिद्रास्थले च । यथाश्रुतानुपपत्तेराह—**प्राकारेति । वाच्येनेति**—सद्वेति शेषः । यथाश्रुतयोः भावपदं विनाऽनुपपत्तेः धर्मपरतामाह—**आधारत्वेति ।** सर्वातिदेशानामित्यत्र निर्धारणषष्ठीमभिप्रेत्याह—**रूपेति ।** अभ्यर्हितत्वात्सर्वाधारत्वात्पूर्वनिपातः ॥ **केचित्तु**—तत्र रूपातिदेशो यथा "तृज्वत्क्रोष्टुः" । निमित्तातिदेशो यथा "पूर्ववत्सनः" । तादात्म्यातिदेशो यथा "सुवामन्त्रिते पराङ्गवत्स्वरे" । शास्त्रातिदेशो यथा "कर्मवत्कर्मणा तुल्यक्रियः" । व्यपदेशातिदेशो यथा "आद्यन्तवदेकस्मिन्" । कार्यातिदेशो यथा "गोतो णित्" । इति कथयन्ति, तत्र "आद्यन्तवदेकस्मिन्" त्यस्य व्यपदेशातिदेशताकथनं न युक्तं, कार्याणि कार्यमित्यसकृदुक्तिपरभाष्यविरोधापत्तेः । अन्येषामप्रकृतत्वाद् युक्तायुक्तत्वविचारो न कृतः ॥

**( सूत्रप्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**किमर्थमिदमुच्यते ? ॥**

**( प्रदीपः )** **किमर्थमिति ।** व्यपदेशिवद्भावेनैव सिद्धत्वान्न कर्तव्यमित्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**व्यपदेशिवद्भावेनेति—**लौकिकेनेति भावः । **कर्तव्यमिति—इदमित्यादिः ।** एतेन भाष्येऽर्थशब्दस्य प्रयोजनवाचिता सूचिता ।

**( १८३ समाधानवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ सत्यन्यस्मिन्नाद्यन्तवद्भावादेकस्मिन्नाद्यन्तवद्वचनम् ॥ * ॥

**( भाष्यम् )**

**सत्यन्यस्मिन् यस्मात् पूर्वं नास्ति परमस्ति स आदिरित्युच्यते । सत्यन्यस्मिन् यस्मात् परं नास्ति पूर्वमस्ति सोऽन्त इत्युच्यते । सत्यन्यस्मिन्नाद्यन्तवद्भावादेतस्मात् कारणाद् एकस्मिन्नाद्यन्तापदिष्टानि कार्याणि न सिध्यन्ति । इष्यते च स्युरिति । तान्यन्तरेण यत्नं न न सिध्यन्ति इत्येकस्मिन्नाद्यन्तवद्वचनम् । एवमर्थमिदमुच्यते ॥**

**( प्रदीपः )** इतरो मुख्ये संभवति गौणे न स्यादित्याह—**सत्यन्यस्मिन्निति ।** आद्यन्तौ विद्येते यस्मिन् शास्त्रे तदाद्यन्तवत् तस्य भावात् प्रवर्तनादित्यर्थः । क्वचिद**द्यन्तभावा**दिति पाठः ॥

**( उद्द्योतः )** **मुख्ये** व्यपदेशिनि । **गौणे** व्यपदेशिसदृशे ॥ नन्वाद्यन्तवद्भावादिति न वतिः, सत्यन्यस्मिन्मुख्याद्यन्तत्वात् । नापि मतुप् । आद्यन्तशब्दवच्छास्त्रसद्भावस्य परपूर्वसत्त्वानपेक्षत्वेन **सत्यन्यस्मिन्नि**त्यस्यायोगादत आह—**आद्यन्ताविति ।** आद्यन्तशब्दावित्यर्थः । एवं चाद्यन्तवद्भावादित्यस्याद्यन्तपदवच्छास्त्रप्रवृत्तेरित्यर्थः ॥ **क्वचिदिति ।** आद्यन्तव्यवहारादिति तदर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एतस्मादिति—**असहाये सत्यन्यस्मिन्निति विशेषणाभावेन विशिष्टाभावादित्यर्थः । **इदम्—**"आद्यन्तवदेकस्मिन्" इति ।

प्रदीपे—**न स्यादिति**—शार्ङ्गीयेण गौणमुख्यन्यायेन लौकिकस्य व्यपदेशिवद्भावस्य बाधादित्याशयः । आद्यन्तवद्भावादिति पाठस्य व्याख्यानभाष्याननुगुणत्वादाह—**क्वचिदिति ।** तथा च काचित्कपाठ एव युक्त इति भावः ।

उद्द्योते—सौत्रक्रमेणाह—**परपूर्वेति । तदर्थः**—आद्यन्तभावादिति काचित्कपाठार्थः ।

**( आक्षेपभाष्यम् )**

**अस्ति प्रयोजनमेतत् ? ॥**

**( समाधानभाष्यम् )**

**किं तर्हीति ॥**

**( १८४ आक्षेपवार्तिकप्रथमखण्डम् ॥ २ ॥ )**

## ॥ * ॥ तत्र व्यपदेशिवद्वचनम् ॥ * ॥

**( भाष्यम् )**

**तत्र व्यपदेशिवद्भावो वक्तव्यः । व्यपदेशिवदेकस्मिन् कार्यं भवतीति वक्तव्यम् ॥**

**( प्रदीपः )** **तत्र व्यपदेशिवद्वचनमिति ।** सर्वकार्यसिद्ध्यर्थं व्यापकं कर्तव्यमित्यर्थः ॥ तत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशः स तेन तुल्यं वर्तते कार्यं प्रतीति व्यपदेशिवद्भवतीत्युच्यते ॥

**( उद्द्योतः )** **सर्वकार्येति ।** आद्यन्तापदिष्टाद्यन्तानपदिष्टसर्वकार्यसिद्ध्यर्थं गुर्वपि **व्यपदेशिवदिति आद्यन्तव**दित्यस्य स्थाने कार्यमिति भावः ॥ **स तेनेति । तेन तुल्य**मिति तृतीयायां सर्वविभक्त्यर्थान्तर्भावात्तृतीयान्ताद्वतिरुक्त इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**तत्र—**प्रयोजने सति । गौणमुख्यन्यायबाधनार्थं व्यपदेशिवद्भाववचनं कर्तव्यं, तेनैवाद्यन्तवद्भाववचनप्रयोजनसिद्धौ आद्यन्तवद्भाववचनं न कर्तव्यमित्याशयः ।

प्रदीपे—**व्यापकमिति—**वचनमिति शेषः । **तत्र—**वचने । **तेन—**व्यपदेशिना ।

उद्द्योते—**गुर्वपीति**-गौरवं मात्राकृतम्, अवान्तरपदत्वेन पदकृतमपीत्याशयः । ननु प्राग्वत् सप्तम्यन्ताद्वतिरुचित इत्यत आह—**तेनेति ।** तृतीयाया उपपदविभक्तित्वेन षष्ठ्यर्थत्वादाह—**तृतीयायामिति ।** तथा च न प्रागुक्तानुपपत्तिरिति भावः ।

**( भाष्यम् )**

**किं प्रयोजनम् ? ॥**

**( तत्त्वालोकः )** आद्यन्तवद्भाववचनेनानिर्वाह्यं व्यपदेशिवद्भाववचनस्य किं प्रयोजनमित्याशयेन पृच्छति—**किं प्रयोजनमिति ।**

( १८४ प्रयोजनवार्तिकद्वितीयखण्डम् ॥ ३ ॥ )

## ॥ ※ ॥ एकाचो द्वे प्रथमार्थम् ॥ ※ ॥

( भाष्यम् )

वक्ष्यति-'※एकाचो द्वे प्रथमस्येति बहुव्रीहिनिर्देशः※'-इति। तस्मिन् क्रियमाणे इहैव स्यात्—पपाच पपाठ; इयाय आर इत्यत्र न स्यात्। व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति ॥

( उद्द्योतः ) भाष्ये **तस्मिन्क्रियमाण इति।** तस्मिन्नाश्रीयमाण इत्यर्थः। **पपाचेति** ॥ नन्वत्र धातुरेव प्रथम एकाज्, न तु धातोः प्रथम एकाजिति कथमत्र व्यपदेशिवद्भावं विना प्राप्तिरिति चेन्न। आदित्वपर्यायप्रथमत्वस्य सूत्रेणैवातिदेशसिद्ध्या तन्न व्यपदेशिवद्भावारम्भस्य मुख्यं प्रयोजनमित्याशयात्। **इयायेत्यादौ तु द्विर्वचनेऽचीति** रूपस्थानिवत्त्वादज्व्यतिरिक्ताभावेन नैकाच्त्वमिति बोध्यम् ॥

( **तत्त्वालोकः** ) भाष्ये—समाधत्ते—**एकाच इति।** इदं विभक्तिं विहाय समुदायानुकरणम्। **स्यादिति—**धात्ववयवत्वं प्राथम्यमेकाच्त्वं चाश्रित्य द्वित्वमित्यादिः। **भवतीत्यत्रापि—**भवतीत्याश्रिते तु इयायेत्यादावपि।

उद्द्योते—**अत्र—**पपाचेत्यत्र। **व्यपदेशिवद्भावं—**व्यपदेशिवद्भाववचनेन प्राथम्यानयनम्। **प्राप्तिरिति—**द्वित्वस्येत्यादिः। **सूत्रेणैव—**"आद्यन्तवदि" ति सूत्रेणैव। **तत्—**प्राथम्यातिदेशनम्। ननु इयाय आर इत्यत्रापि इणो वृद्ध्यायादेशयोः अर्तेश्च वृद्धिरपरत्वयोः कृतयोः आय्—आरित्यनयोरेकाच्त्वं पचादेरिव मुख्यमेवास्तीत्यत आह—**इयायेत्यादौ त्विति।** तथा च तत्र इ ऋ अनयोरेव द्वित्वमिति भावः।

( १८४ प्रयोजनवार्तिकतृतीयखण्डम् ॥ ४ ॥ )

## ॥※॥ षत्वे चाऽऽदेशसंप्रत्ययार्थम् ॥※॥

( भाष्यम् )

वक्ष्यति—'आदेशप्रत्यययोरित्यवयवषष्ठ्येषा—' इति। एतस्मिन् क्रियमाणे इहैव स्यात्-करिष्यति हरिष्यति, इह न स्याद् '[ इन्द्रो मा ] वक्षत् (ऋ० १।१३५।४)' 'स देवान्यक्षत् ( ऋ० ३।४।३ )' इति व्यपदेशिवदेकस्मिन् कार्यं भवतीत्यत्रापि सिद्धं भवति ॥

( **प्रदीपः** ) **वक्षदिति।** वच् लेट् तिप् **इतश्च लोप** इतीकारलोपः, **लेटोऽडाटा**वित्यडागमः सिप् कुत्वम्। अत्र सकारमात्रं प्रत्ययो न तु प्रत्ययस्यावयवः सकार इति षत्वं न स्यात् ॥

( **उद्द्योतः** ) भाष्ये—**अवयवषष्ठ्येषेति।** प्रत्ययांशे इति भावः। **एतस्मिन्क्रियमाणे इति।** अवयवषष्ठीत्वे आश्रीयमाणे इत्यर्थः ॥

( **तत्त्वालोकः** ) भाष्ये—**स्यादिति—**प्रत्ययावयवसकारस्य विधीयमानं षत्वमित्यादिः। **अत्रापि—**वक्षदित्यादावपि।

प्रदीपे—**अत्र—**वक्षदित्यत्र।

( आक्षेपोपसंहारभाष्यम् )

स तर्हि व्यपदेशिवद्भावो वक्तव्यः ? ॥

( सिद्धान्तिसमाधानभाष्यम् )

न वक्तव्यः ॥

( १८५ समाधानवार्तिकम् ॥ ५ ॥ )

## ॥※॥ अवचनाल्लोकविज्ञानात् सिद्धम् ॥※॥

( भाष्यम् )

अन्तरेणैव वचनं लोकविज्ञानात् सिद्धमेतत् ॥

( **प्रदीपः** ) **अवचनादिति।** अवचनं वचनरहितं यल्लोकविज्ञानं तस्माल्लोकव्यवहारादित्यर्थः। इह तावदियायेति य इण्धातुः प्रयोगभेदाद्बहुरूपः—एति इतः यन्ति अयनम् आयकः अगात् गमयतीति। तस्यायमेकोऽवयव इव लक्ष्यते। अथवा अर्थवतो धातोरयं वर्णरूप एकोऽजित्यर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजिति। एवं शिलापुत्रकस्य शरीरमित्यनेकक्रियाविषयस्याऽवस्थातुरिदमेकावस्थायुक्तं शरीरमित्यस्ति व्यपदेशः। एवं सिप्प्रत्यय इट्सहितोऽपि दृष्टो जोषिषदित्यादौ, वक्षदित्यादौ केवलोऽपीति, तस्यायं सकार इति व्यपदिश्यते। लोकनिरूढश्चायं व्यवहार इति लोकवच्छास्त्रेऽपि व्यवहाराद्गौणमुख्यन्यायोऽत्र नावतरति ॥

( **उद्द्योतः** ) विज्ञानशब्दो व्यवहारवाचीत्याह—**व्यवहारादिति** ॥ तत्फलितव्याख्यानं भाष्ये **अन्तरेणैवेति।** यथा लोके व्यवहारो वचनं विनैव सिध्यति तथा शास्त्रेपि वचनं विना सिध्यतीत्यर्थः ॥ **अगादित्यादि। 'इणो गा लुङि' 'णौ गमिरबोधने'** इत्यादेशौ। **एकोच्** असहायोऽजित्यर्थः ॥ नन्वेकाचोऽवयविनो द्विर्वचनमिति यस्यायमवयवस्तस्य बहुरूपस्य भवितव्यं द्वित्वेनेत्यत आह—**अथवेति** ॥ काल्पनिकभेदेन व्यवहारे दृष्टान्तमाह—**एवमिति** ॥ **व्यपदेशो** भेदनिबन्धनसंबन्धव्यवहारः ॥ **शास्त्रेपीति।** लोकाप्रसिद्धत्वमेव तत्त्यागे बीजं तच्च न प्रकृते इति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—**अवचनादिति—**यत इत्यादिः। **एतत्—**व्यपदेशिवत्त्वम् ॥ "इट ईटी" त्यनेन, "दीर्घ इणः किती" त्यनेन च सूत्रेण "व्यपदेशिवदेकस्मिन्नि" ति ज्ञाप्यते, अन्यथा सिचो वल्रूपत्वेऽपि वलादित्वाभावादिटोऽप्राप्तौ प्रथमम्, इणोऽभ्यासस्यालाभाद् द्वितीयञ्च व्यर्थमेव स्यादिति केचिद्वदन्ति।

प्रदीपे—अवचनादितीदं बहुव्रीहिणा लोकविज्ञानादित्यस्य समानाधिकरणं विशेषणमित्याशयेनाह—**अवचनमिति।** मुख्यैकाज्व्यपदेशिना सादृश्यमाह—**इहेति। य इति** अस्य तस्येत्यत्रान्वयः। **केवलोपीति—**प्रकृत इति भावः।

उद्द्योते—**व्यवहारवाचीति—**करणव्युत्पत्त्येत्याशयः। एवं सति भाष्यविरोधे आह—**तत्फलितेति।** अत्र पक्षे दूषणमाह—**नन्विति। दृष्टान्तमिति—**अनेन एवमित्यस्य यथेत्यर्थः सूचितः। **तत्त्यागे—**गौणत्यागे। **तच्च—**लोकाप्रसिद्धत्वञ्च।

( एकदेशिदृष्टान्तभाष्यम् )

तद्यथा—लोके-'शालासमुदायो ग्रामः'-इत्युच्यते। भवति चैतदेकस्मिन्नपि-"एकशालो ग्रामः"-इति ॥

( **तत्त्वालोकः** ) सिद्धान्त्येकदेशी लोकविज्ञानमाह—**तद्यथेति। एकशालो ग्राम इति—**अत्र व्यपदेशिवद्भावः सूचितः।

( उक्तदृष्टान्तविघटनभाष्यम् )

विषम उपन्यासः। ग्रामशब्दोऽयं बह्वर्थः। अस्त्येव शालासमुदाये वर्तते। तद्यथा—'ग्रामो दग्धः' इति ॥

अस्ति वाटपरिक्षेपे वर्तते । तद्यथा—'ग्रामं प्रविष्टः'—इति ॥

अस्ति च मनुष्येषु वर्तते । तद्यथा—'ग्रामो गतो ग्राम आगतः'—इति ॥

अस्ति सारण्यके ससीमके सस्थण्डिलके वर्तते । तद्यथा—'ग्रामो लब्धः'—इति ॥

तद्यः सारण्यके ससीमके सस्थण्डिलके वर्तते, तमभिसमीक्ष्यैतत्प्रयुज्यते—'एकशालो ग्रामः' इति ॥

**( तत्त्वालोकः )** तं दृष्टान्तं विघटयति—**विषम इति । ग्रामेति**—यत इत्यादिः । तथा च नात्र व्यपदेशिवद्भावावश्यकतेति भावः ॥

### ( एकदेशिदृष्टान्तान्तरभाष्यम् )

यथा तर्हि—'वर्णसमुदायः पदम्' 'पदसमुदाय ऋक्', 'ऋक्समुदायः सूक्तम्' इत्युच्यते । भवति चैतदेकस्मिन्नपि—'एकवर्णं पदम्', 'एकपदा ऋक्', 'एकर्चं सूक्तम्' इति ॥

**( प्रदीपः ) पदसमुदाय इति ।** पादपर्यायः पदशब्दः । तथा **चैकपदा ऋगिति** पाद एव विवक्षितः । न तु ऋचः कस्याश्चिदप्येकमेव पदं भवति ॥

**( उद्द्योतः ) पादपर्याय इति । वर्णसमुदायः पद**मित्यत्र तु पदशब्दो यथाश्रुत एव ॥

**( तत्त्वालोकः )** भाष्ये—एवं सति स दृष्टान्तान्तरमाह—**यथा तर्हीति । एकवर्णं** पदं यथा "क्" इति । **एकपदा** ऋक् यथा "उरौ देवा अनिबाधे स्याम" इति । **एकर्चं** सूक्तं यथा "जातवेदसे" इति ॥ अत्र व्यपदेशिवद्भावः प्रदर्शितः ॥

प्रदीपे—**पादपर्यायः**—पादपर्यायवाची । **इति**—इत्यत्र । तथा स्वीकारे बीजं यथाश्रुतानुपपत्तिमाह—**न त्विति ।**

उद्द्योते—वर्णसमुदायः पदमितीदं विहाय पदसमुदाय इत्यत्र कैयटस्य तथा व्याख्याने बीजमाह—**वर्णेति** । अनुपपत्त्यभावादिति भावः ।

### ( दृष्टान्तान्तरविघटनभाष्यम् )

अत्राप्यर्थेन युक्तो व्यपदेशः । पदं नामार्थः, ऋङ् नामार्थः, सूक्तं नामार्थ इति ॥

**( प्रदीपः ) अत्राप्यर्थेनेति** । पदादीनां योऽर्थः सोऽन्यपदार्थ इत्यर्थः । अभेदोपचाराच्चार्थ एव पदादिभिरभिधीयते ॥

**( उद्द्योतः ) पदादीनामिति** । एकवर्णं पदमित्यादौ ॥ ननु अर्थस्य पदत्वं कथमत आह—**अभेदेति ।** तदुपचारश्च शब्दार्थयोरनादिरिति बोध्यम् ॥ **पदादिभिः** पदशब्दादिभिः ॥

**( तत्त्वालोकः )** भाष्ये—तद् दृष्टान्तान्तरमपि विघटयति—**अत्रापीति** । एकवर्णम्पदमित्यादावपीत्यर्थः । **युक्त इति**—व्यपदेशिवद्भावं विनैवेत्याशयः । तयोरभेदोपचारं दर्शयति—**पदं नामार्थ इति** । यत इत्यादिः ।

### ( सिद्धान्तिदृष्टान्तभाष्यम् )

यथा तर्हि—बहुषु पुत्रेष्वेतदुपपन्नं भवति-अयं मे ज्येष्ठोऽयं मे मध्यमोऽयं मे कनीयानिति । भवति चैतदेकस्मिन्नपि-'अयमेव मे ज्येष्ठोऽयमेव मे मध्यमोऽयमेव मे कनीयान्' इति ॥

**( प्रदीपः ) अयमेव मे ज्येष्ठ इति ।** प्रथमरूपतयाध्यवसायात् । मध्यमकार्यकरणाच्च **मध्यम** इति व्यपदिश्यते । अन्यो न जनितेति बुद्ध्या **कनीयानि**ति व्यपदिश्यते ॥

**( उद्द्योतः ) प्रथमेति** । तस्मात्पूर्वस्याभावादिति भावः ॥ **मध्यमकार्यं** तत्संबन्धजसुखादिकम् ॥

**( तत्त्वालोकः )** भाष्ये—एवं सति सिद्धान्ती दृष्टान्तमाह—**यथा तर्हीति ।**

प्रदीपे—एकस्मिन् त्रिविधव्यवहारे बीजानि क्रमेणाह—**प्रथमेति ।**

उद्द्योते—प्रथमत्वे बीजमाह—**तस्मादिति** । अनेनात्र व्यपदेशिवद्भावः प्रदर्शितः । एवमग्रेऽपि ।

### ( सिद्धान्तिदृष्टान्तान्तरभाष्यम् )

तथाऽसूतायामसोष्यमाणायां च भवति—'प्रथमगर्भेण हता' इति ॥

**( प्रदीपः ) असूतायामिति** । बहुकृत्वोऽपि प्रसूता प्रथमपुत्रेण काचिद्धन्यते । तथा या प्रसोष्यते साऽपि काचित्पूर्वोत्पन्नेन पुत्रेण हन्यत इत्युभयोरुपादानम् । नापि प्रसूता नापि प्रसोष्यते कुक्षिस्थेनैव गर्भेण हता 'प्रथमगर्भेण हते'त्युच्यते । अपत्यपर्यायो गर्भशब्दः । तत्र तस्या एव योग्यताध्यवसायेन भाविगर्भविवक्षया प्रथमगर्भेण हतेत्युच्यते । स्त्र्यन्तरेषु वा बहुपुत्रत्वे सत्याद्यगर्भस्य प्रथमव्यपदेशदर्शनात् तथाविधस्य प्रथमगर्भव्यवहारः ॥

**( उद्द्योतः ) बहुकृत्वोऽपीति** । यथा परशुरामेण रेणुका ॥ **तथा येति** । संप्रति गर्भिणीत्यर्थः । गर्भस्थमादाय तत्रापि प्रथमव्यवहार इत्यर्थः ॥ ननु या सूता सा न गर्भेण हता भवति किं त्वपत्येनेति गर्भेण हतायां तद्व्यतिरेकप्रदर्शनमयुक्तमत आह—**अपत्यपर्याय इति ।** तच्चोदरस्थं बहिर्भूतं वेत्यन्यत् ॥ तत्र प्रथमव्यवहारे बीजमाह—**तस्या एवेति । स्त्र्यन्तरेषु** बहुप्रसववतीषु ॥ **तथाविधस्येति ।** अविद्यमानपूर्वगर्भस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—एवमुक्तदृष्टान्ते स्थितेऽपि दाढर्याय स दृष्टान्तान्तरमाह—**तथेति** । एवमग्रेऽपि ।

प्रदीपे—**उभयोः**—असूतायामसोष्यमाणायामित्युभयोः । **योग्यतेति**—असकृद्गर्भधारणेत्यादिः ।

उद्द्योते—**तत्रापि**—पूर्वोत्पन्नेऽपि । **तच्च**—अपत्यञ्च ।

### ( सिद्धान्तिदृष्टान्तान्तरभाष्यम् )

तथाऽनेत्याऽनाजिगमिषुराह—'इदं मे प्रथममागमनम्' इति ॥

**( प्रदीपः ) अनेत्येति ।** बहुकृत्वो ह्यागतः पूर्वमागमनं स्मृत्वा प्रथमव्यपदेशं तत्र मुख्यं करोत्येव, आजिगमिषुश्च भावीन्यागमनानि बुद्ध्या व्यवस्थाप्य कुर्यादेव प्रथमव्यवहारम् । यस्तु सकृदेवागतः सोपि करोति प्रथमव्यवहारमिति प्रतिपादनार्थमनेत्यानाजिगमिषुरित्युपात्तम् । तत्रान्यसंबन्धिषु बहुष्वप्यागमनेष्वाद्यस्य प्रथमव्यवहारदर्शनात् तथाविधत्वात् स्यादेकस्मिन्नप्यागमने प्रथमव्यवहारः ॥

**(उद्द्योतः)** नन्वागमनं विनेदं मे प्रथममागमनमिति व्यवहारासंभवादनेत्येदं मे प्रथममागमनमित्यसङ्गतमतआह—**बहुकृत्व इति ॥**

**अनेत्ये**त्यस्येतः पूर्वमिति शेष इति भावः ॥ **तथाविधत्वादिति** । अविद्यमानपूर्वागमनत्वादित्यर्थः ।

**( तत्त्वालोकः )** प्रदीपे—**तत्र—**पूर्वागमने । **प्रथमव्यवहार-मिति**—तत्रेत्यादिः ।

उद्द्योते—**अनेत्येति—**तथा चेत्यादिः ।

**( सूत्रप्रत्याख्यानभाष्यम् )**

**आद्यन्तवद्भावश्च शक्योऽवक्तुम् ॥**

**( उद्द्योतः )** परे तु पदऋगादिपदानि अर्थशब्दसमुदायवृत्तीनि, तस्य शब्दमात्ररूपवर्णपादऋगाद्यवयव **इत्येव** भाष्यार्थः । **न** तु शुद्धोऽर्थोऽन्यपदार्थ इति । तथाऽप्रतीतेः, एकर्चं सूक्तं पठेत्यादिव्यवहारानापत्तेश्च । एवं **चार्थवतो धातोरयमेकोज् वर्णरूप इति अर्थस्य त्यागोपादानाभ्यां भवति व्यपदेश एकाजितीति** कैयटोक्तं चिन्त्यम् । एतद्भाष्यरीत्या तस्य मुख्यव्यवहारत्वेन व्यपदेशिवद्भावाविषयत्वात् । कैयटरीत्या शुद्धार्थस्यान्यपदार्थत्वेऽत्रापि तथैवास्तु शब्दार्थयोरभेदाच्च शब्देपि तत्त्वमिति अत्रापि न व्यपदेशिवद्भावप्रयोजनम् । किं चैकाजिति बहुव्रीहिणा प्रथमस्येत्युपस्थितावयवस्य विशेषणम् । तस्य चानर्थकत्वमिति अर्थस्योपादानत्यागावत्यसंबद्धौ । एतदेव ध्वनयता **पदं नामार्थ** इति भाष्ये उक्तम् । धात्ववयवत्वं तु कैयटोक्तरीत्या वक्तुं शक्यम् । अत एव बहुव्रीहिनिर्देशानुपपत्तिरेव व्यपदेशिवदित्याश्रयणे बीजमुक्तम् ॥ **अत्राप्यर्थेनेति** भाष्यस्य पदादिशब्दार्थस्यार्थेन युक्तत्वादित्यर्थः ॥ अर्थशब्दोभयवृत्ति पदत्वऋक्त्वादीत्याशयः ॥ **पदं नामार्थ** इत्यादेरर्थोपीत्यर्थः ॥ **यथा तर्हीति** । यथैकस्मिंस्तत्तद्धर्मारोपेण युगपज्ज्येष्ठत्वादिव्यवहारस्तथैकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वस्याप्यारोपेणैकाच्त्वादिव्यवहारोपपत्तिः, द्वितीये तृतीये च दृष्टान्ते प्रथमेत्युपलक्षणं चरमस्यापि । तृतीये कदाचिच्चरममागमनमित्यपि व्यवहारात् । **आद्यन्तवद्भावश्च शक्योऽवक्तु**मित्यस्य प्रकारान्तरेणापीति शेष इत्याहुः ॥ वस्तुतस्तु ईदृशेषु पातञ्जलोक्तं विकल्पात्मकं वस्तुशून्यमेव ज्ञानमिति आरोपानुपयोग एव । लोकव्यवहारवत्तेनापि शास्त्रीयो व्यवहार इति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**चेन** व्यपदेशिवद्भावस्य समुच्चयः । तथा च वचननिरपेक्षाल्लोकव्यवहारादेव व्यपदेशिवद्भावसिद्धे "राद्यन्तवदि" ति "व्यपदेशिवदि" ति चोभयमपि न सूत्रयितव्यमित्यर्थः ।

उद्द्योते—कैयटोक्तं खण्डयति—**परे त्विति । तस्य—**अर्थशब्दसमुदायस्य । **भाष्यार्थः—**एकवर्णं पदमित्यादिभाष्यार्थः । **तस्य—**एकाज्व्यपदेशस्य । **अत्रापि—इ** ( ण् ) एकाजित्यत्रापि । **तथैव—**शुद्धार्थ एवान्यपदार्थः । **तत्त्वम्—**अर्थत्वम् । **तस्य च—**अवयवस्य च । पूर्वक्रमविवक्षयाऽऽह—**उपादानत्यागाविति । अत एव—**धात्ववयवत्वस्य सिद्धत्वादेव । अत्र पक्षे भाष्यासङ्गतिं परिहरति—**अत्राप्यर्थेनेति । द्वितीये—**तथाऽऽसुतायामित्यस्मिन् । **तृतीये—**तथाऽनेत्येत्यस्मिन् । भाष्यकृतो न्यूनतां परिहरति—**प्रथमेत्युपलक्षणमिति** । एकप्रकारस्योक्तत्वादाह—**प्रकारान्तरेणेति** । वस्तुत आरोपोऽपि नेत्याह—**वस्तुतस्त्विति ।** पतञ्जलिना योगानुशासने समाधिपादे "**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः**" **इत्यसूत्रि** । तदर्थस्तु शब्दप्रयोगं तज्जन्यज्ञानं चानुपतति तज्जनको बाह्यवस्तुशून्यो वृत्तिविशेषो बाधाबाधकालाविशेषेण **सदैव** जायमानो विकल्प इति । भवति च **गगनकुसुमादिपदेभ्योऽपि बोधः** ॥ **तेनापि—**विकल्पात्मकज्ञानेनापि ।

**कथम् ? ॥**

**( १८६ प्रत्याख्यानसाधकवार्त्तिकम् ॥ ६ ॥ )**

**॥ * ॥ अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोः सिद्धमेकस्मिन् ॥ * ॥**

**( भाष्यम् )**

अपूर्वलक्षण आदिः, अनुत्तरलक्षणोऽन्तः । **एतच्चैकस्मिन्नपि भवति । अपूर्वानुत्तरलक्षणत्वादेतस्मात् कारणाद् एकस्मिन्नप्याद्यन्तापदिष्टानि कार्याणि भविष्यन्तीति नार्थ आद्यन्तवद्भावेन ॥**

**( प्रदीपः )** इदानीं योगं प्रत्याख्यातुमाह—**अपूर्वेति ॥** यद्यपि बहुष्ववस्थितेष्वाद्यन्तशब्दौ प्रयुज्येते तथाप्यपूर्वानुत्तरत्वमात्रमेतयोः प्रवृत्तिनिमित्तम् । तच्चैकस्मिन्नप्यस्तीति नार्थः सूत्रेण ॥

**( तत्त्वालोकः )** भाष्ये—**एतत्**—अपूर्वानुत्तरलक्षणत्वम् । **चेन** तदन्यसमुच्चयः । **आद्यन्तवदिति—**इदं व्यपदेशिवदित्यस्याप्युपलक्षणम् ।

प्रदीपे—**योगम्—**आद्यन्तवदिति, व्यपदेशिवदिति च सूत्रम् । एवमग्रेऽपि । **मात्र**पदेन सत्यन्यस्मिन्निति विशेषणव्यावृत्तिः । **एतयोः—**आद्यन्तशब्दयोः । **तच्च** —अपूर्वानुत्तरत्वमात्रञ्च ।

**( प्रत्याख्यानासंभवभाष्यम् )**

**गोनर्दीयस्त्वाह—सत्यमेतत् 'सति त्वन्यस्मिन्' इति ॥**

**( प्रदीपः )** भाष्यकारस्त्वाह—**'सति त्वन्यस्मिन्निति** । न ह्यनपेक्षितप्रतियोगिनोराद्यन्तयोः प्रवृत्तिरित्यर्थः । तस्मादेकस्मिन्मुख्य आद्यन्तव्यपदेशो नास्तीति कर्तव्योऽयं योगः ॥ यद्यपि लौकिकेन व्यपदेशिवद्भावेनाद्यन्तव्यपदेश एकस्मिन्नपि सिध्यति । तथापि गौणत्वात्कार्येण न भवितव्यमिति यस्य भ्रान्तिः स्यात्तं प्रति योगोऽयमारब्धः ॥

**( उद्द्योतः )** गोनर्दीयपदं व्याचष्टे—**भाष्यकार इति ॥ अनपेक्षितप्रतियोगिनोः** अनपेक्षितपरपूर्वयोः ॥ **आद्यन्तयोः** आद्यन्तरूपार्थयोः ॥ **प्रवृत्तिः** । आद्यन्तशब्दप्रवृत्तिरित्यर्थः ॥ **तथापीति** । वस्तुतो लोकनिरूढत्वाद् गौणत्वमेवात्र नास्तीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**सत्यमिति**—एतत् त्वदुक्तं सत्यम्, तु परन्तु सत्यन्यस्मिन्नित्यपि बोध्यम् । लोके अयमादिरन्तो वेत्युक्तेऽवशिष्टमपि किञ्चिदस्तीति नियमेन प्रतीतेः । पदान्नियतोपस्थितिश्च शक्तिसाध्या । अनुभवमपलप्यैकदेशमात्रे शक्तिकल्पने तु भार्यापितृवाचकादीनां श्वसुरादिपदानामपि लाघवाद् भार्यात्वमात्रं पितृत्वमात्रं वा शक्यतावच्छेदकं स्यादिति विशिष्टविषयकशक्त्युच्छेदेन सकलविशिष्टव्यवहारव्याकोपः प्रसज्येत । तथा चाद्यन्तशब्दप्रवृत्तिनिमित्तं सत्यन्यस्मिन्निति विशेषणविशिष्टमपूर्वानुत्तरत्वं, न तु त्वदुक्तं तद्घटकमपूर्वानुत्तरत्वमात्रमिति भावः ॥ केचित्तु सति त्वन्यस्मिन्नित्येतत् सत्यमित्येवं योजयन्ति ।

प्रदीपे-**अयम्—**"आद्यन्तवदि"त्ययम् । एतेन व्यपदेशिवद्भावस्य लोकसिद्धत्वात् "व्यपदेशिवदि"त्यस्य योगस्याकर्तव्यता सूचिता । **अत** एव शङ्कते—**यद्यपीति ।**

उद्द्योते—भ्रान्तिपदसूचितमाह—**वस्तुत इति ।** अनेनास्यापि योगस्यानावश्यकता सूचिता ।

( सूत्रोदाहरणाधिकरणम् )

( प्रयोजनजिज्ञासाभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ? ।

( तत्त्वालोकः ) अस्य—"आद्यन्तवदि" त्यस्य ।

( १८७ प्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ ॥ आदिवत्त्वे प्रयोजनं प्रत्ययञ्नित्-दाद्युदात्तत्वे ॥ ॥

( भाष्यम् )

प्रत्ययस्यादिरुदात्तो भवतीति । इहैव स्यात्-कर्तव्यं तैत्तिरीयः । औपगवः कापटवः इत्यत्र न स्यात् ॥

( प्रदीपः ) प्रत्ययञ्नित्दाद्युदात्तत्व इति । प्रत्ययस्याद्युदात्तत्वं ञ्निति चाद्युदात्तत्वमित्यर्थः ॥ कथं पुनर्भिन्नविभक्त्योर्द्वन्द्वः । उच्यते—प्रत्ययस्य यदाद्युदात्तत्वं तस्य प्रत्ययोऽपि विषय इति प्रत्ययेऽपि तदुच्यते। यद्वा ञ्निति यदाद्युदात्तत्वं तद् ञ्नितोऽपि संबन्धि भवतीति नास्ति भिन्नविभक्तित्वम् ॥ ऋदोरबित्याद्युदात्तत्व-निवृत्त्यर्थोपित्त्वाल्लिङ्गादेकाचोपि प्रत्ययस्याद्युदात्तत्वं भविष्यतीति चेदकारविषयमेव लिङ्गं स्यादितीकारोकारयोः प्रत्यययोराद्युदात्तत्वं न स्यात् । विशेषणार्थं वा पित्करणं स्यात् थाथादिसूत्रे इत्यज्ञापकं स्यात् ॥

( उद्द्योतः ) कथमिति । भिन्नविभक्त्यन्तयोरसमप्रधानत्वेन साहित्याप्रतीतेरित्यर्थः ॥ इकारोकारयोरिति ॥ उपाधिः चिकीर्षु-रित्यादौ ॥ सामान्यापेक्षज्ञापकत्वेऽप्याह—विशेषणार्थं वेति ॥

( तत्त्वालोकः ) भाष्ये—आदिवत्त्वे इति—तस्येत्यादिः ।

प्रदीपे—अपिना प्रकृतिपरिग्रहः । एवमग्रेऽपि । तत्—आद्यु-दात्तत्वम् । विभक्तित्वमिति —एतत्प्रदर्शनार्थमेव तथोक्तं भाष्ये । अन्यथा षष्ठ्युपादानं न युज्येतेति भावः । लिङ्गादिति—बहुषु लिङ्गेन सत्रनिराकरणस्य दृष्टत्वात् तस्य तन्निवृत्त्यर्थता सिद्धान्तरीत्या बोध्या । चेदिति—तर्हीति शेषः । थाथादिसूत्रे इति—इदं पूर्वान्वयि । विशे-षणार्थत्वस्यैत्संज्ञायामप्रतिबन्धकत्वात् तत्त्वेऽपि सा भवत्येवेत्याशयः ।

उद्द्योते—भिन्नेति—व्याख्यानभाष्याद् भिन्नविभक्त्यन्तता-प्रतीतेरित्याशयः ।

( भाष्यम् )

"ञ्नित्यादिर्नित्यम्" इति इहैव स्याद्-अहिचुम्ब-कायनिः आग्निवेश्यः । गार्ग्यः कृतिरित्यत्र न स्यात् ॥

( प्रदीपः ) गार्ग्य इति । अत्र परत्वाद्यस्येति लोपे कृत आदि-त्वाभावात्प्रकृतेराद्युदात्तत्वं न प्राप्नोति । स्वरविधौ स्थानिवद्भाव-प्रतिषेधाच्च नास्ति द्व्यच्त्वम् । स्वरविधौ व्यञ्जनस्याऽविद्यमानत्वा-न्नास्ति हलपेक्षमप्यादित्वम् ॥ कृतिरिति । क्तिनो नित्त्वं तादौ च निति कृत्यतावित्येवमर्थं स्यात् । सौवर्यः ससम्यस्तदन्तसप्तम्य इत्येतदनाश्रित्यैतदुक्तम् ॥

( उद्द्योतः ) अहिचुम्बकात्प्राचामवृद्धादिति फिन् । अग्नि-वेशाद्गर्गादियञ् ॥ स्वरविधाविति । नन्वस्य स्वरोद्देश्यके विधावि-त्यर्थो वा हलः स्वरप्राप्तावित्यर्थो वा । उभयथापि नेह प्राप्तिरिति चेत् ॥ सत्यम्, अत्र सूत्रेऽजन्तरापेक्षमेवादित्वं गृह्यते । अन्त्यस्याच एव तद्व्यावर्त्यत्वेनोपस्थितत्वादिति भाष्याशयात् । किं च स्त्रैणमित्या-दावाद्युदात्तत्वं न स्यादिति दोषः । ञित्त्वं तु वृद्ध्यर्थतया सावकाशं बोध्यम् ॥ क्तिन इति । अनेकाज्भ्यन्तु चिरिजिर्यादिभ्योऽनभिधानात् क्तिन्नभाव इति भावः ॥ ननु तदन्तसप्तमीत्वे गार्ग्यादौ समुदाये मुख्य पदादिः संभवतीति न दोष इयत आह—सौवर्य इति ॥

( तत्त्वालोकः ) प्रदीपे—एतत्—गार्ग्यादौ दूषणम् ।

उद्द्योते—द्वयोः समकक्षतामूचनाय पुनराह—वेति । इह—गार्ग्य इत्यत्र । अत्र सूत्रे—"ञ्नित्यादिर्नित्यमि" त्यत्र सूत्रे । तद्व्याव-र्त्यत्वेन—आदिपदव्यावर्त्यत्वेन । भाष्यानुपपत्तिं परिहरति—अने-काज्भ्य इति ।

( १८८ प्रयोजनवार्तिकम् ॥ ८ ॥ )

॥ ॥ वलादेरार्धधातुकस्येट् ॥ ॥

( भाष्यम् )

वलादेरार्धधातुकस्येट् प्रयोजनम् ॥ "आर्धधातु-कस्येड्वलादेः" इतीहैव स्यात् करिष्यति हरिष्यति । 'जोषिषद् (ऋ० २।३५।१)' मन्दिषदित्यत्र न स्यात् ॥

( प्रदीपः ) जोषिषदिति । लिङर्थे लेट् । इट ईटीति च ज्ञापकं सिज्विषयमेव स्यादिति सिप इण्न स्यात् ॥

( उद्द्योतः ) लेडिति । सिब्बहुलं लेटीति सिप् ॥ इट ईटीति । न च यमरमनमातामित्यत्र वलादेरित्यस्य संबन्धे फला-भावात्कथमेतज्ज्ञापकम् । रुदादिभ्य इति सूत्रे वलादेरित्यस्य संबन्ध-सत्त्वेन मध्येऽपि सम्बन्धस्यैव न्याय्यत्वात् । अत एव सप्तमे (७।२।३) सूत्रे भाष्ये—"एकाचस्तौ वलीति वा" इत्युक्तम् ॥

( तत्त्वालोकः ) भाष्ये—प्रयोजनमिति—आदिवत्त्वे इत्यादिः । एवमग्रेऽपि ।

उद्द्योते—एतत्—इट ईटीति । मध्येऽपीति—"यमरमनमा-तामि" त्यत्रापीत्यर्थः । वलादेरिति शेषः ।

( १८९ प्रयोजनवार्तिकम् ॥ ९ ॥ )

॥ ॥ यस्मिन्विधिस्तदादित्वे ॥ ॥

( भाष्यम् )

यस्मिन्विधिस्तदादित्वे प्रयोजनम् । वक्ष्यति—'यस्मिन्विधिस्तदादावल्ग्रहणे' इति । तस्मिन् क्रियमाणे "अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इहैव स्यात् श्रियः भ्रुवः, श्रियौ भ्रुवौ इत्यत्र न स्यात् ॥

( प्रदीपः ) यस्मिन्विधिरिति । स्वस्य च रूपस्येति नानुवर्तते इति प्रयोजनत्वेनोपन्यासः ॥

( तत्त्वालोकः ) भाष्ये—क्रियमाणे—आश्रीयमाणे ।

( १९० प्रयोजनवार्तिकम् ॥ १० ॥ )

॥ ॥ अजाद्याट्त्वे ॥ ॥

अजाद्याट्त्वे प्रयोजनम् । "आडजादीनाम्" इहैव स्याद्—ऐक्षिष्ट, ऐहिष्ट । ऐष्ट, अध्यैष्टेत्यत्र न स्यात् ॥

( प्रदीपः ) अजाद्याट्त्वे इति । सूत्रपाठापेक्षया प्रयोजनो-पन्यासः । वार्तिककारस्तु 'अजादीनामटा सिद्धम्-' इत्याह ॥

( अन्तवत्त्वप्रयोजननिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

अथान्तवत्त्वे कानि प्रयोजनानि ? ॥

( तत्त्वालोकः ) अथेति—अस्य योगस्येति शेषः।

( १९१ प्रयोजनवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ अन्तवद् द्विवचनान्त-प्रगृह्यत्वे ॥ * ॥

( भाष्यम् )

अन्तवद् द्विवचनान्तप्रगृह्यत्वे प्रयोजनम् ॥ "ईदूदेद् द्विवचनं प्रगृह्यम्" इहैव स्यात्-पचेते इति पचेथे इति। खट्वे इति माले इतीत्यत्र न स्यात् ॥

( प्रदीपः ) अन्तवदिति। ॐयेन विधिस्तदन्तस्वेॐ इत्यनेनैव गतार्थे प्रपञ्चार्थोयमुपन्यासः ॥

( उद्द्योतः ) येन विधिरिति। तेनैव हीदूदेद्द्विवचनमित्यत्र तदन्तविधिरिति भावः ॥

( तत्त्वालोकः ) भाष्ये—अन्तवदिति—तस्यान्तवत्त्वे प्रयोजनमित्यर्थः। द्विवचनान्तेति—अन्तस्येदाद्यन्तस्य द्विवचनस्य प्रगृह्यत्वे इत्यर्थः।

उद्द्योते—स्वस्य च रूपस्येत्येतदनाश्रित्याह—तेनैवेति। "येन विधिरि" त्यनेनैवेत्यर्थः।

( १९२ प्रयोजनवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ मिदचोऽन्त्यात्परः ॥ * ॥

( भाष्यम् )

"मिदचोऽन्त्यात्परः" प्रयोजनम्। [ "नपुंसकस्य झलचः" ] इहैव स्यात्—कुण्डानि वनानि। तानि यानीत्यत्र न स्यात् ॥

( तत्त्वालोकः ) भाष्ये—प्रयोजनमिति—अन्तवत्त्वे इत्यादिः। एवमग्रेऽपि।

( १९३ प्रयोजनवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ अचोऽन्त्यादि टि ॥ * ॥

( भाष्यम् )

"अचोऽन्त्यादि टि" प्रयोजनम्। "टित आत्मनेपदानां टेरे" इहैव स्यात् कुर्वाते कुर्वाथे। कुरुते कुर्वे इत्यत्र न स्यात् ॥

( प्रदीपः ) कुरुत इति। अर्थवता व्यपदेशिवद्भावात् तशब्दाकारस्यानर्थकत्वादिह प्रयोजनत्वेनोपन्यासः ॥

( उद्द्योतः ) अर्थवतेति। तत्र ह्यर्थस्य त्यागोपादानाभ्यां भेदः सुकर इति भावः॥ इदं चिन्त्यम्। 'यद्यपि व्यपदेशिवद्भावेन सिध्यति, तथापि गौणत्वान्नेति यस्य भ्रान्तिस्तं प्रति सूत्रारम्भः' इति पूर्वग्रन्थविरोधात्सूत्रकारेण तदज्ञानाद् तदुदाहरणसंभवाच्च। अर्थवतेति चासहायत्वस्यैवोपलक्षणम्, ससहायस्य प्रायेणानर्थकत्वात्। तशब्दाकारश्चासहाय एव। येन सहायेनाचामन्तत्वस्य बहुव्रीह्यर्थस्य चोपपत्तिस्तादृशसहायाभावात्। अन्यथाऽऽद्यन्तवद्भावोपि न स्याद्, विजातीयकन्यादिसहायसत्त्वेऽप्येकपुत्रस्यायमेव ज्येष्ठ इत्यादिव्यवहाराद् ईदृशस्थलेपि लोकसिद्धत्वमित्याहुः ॥

( तत्त्वालोकः ) प्रदीपे—तशब्देति—कुरुते इत्यादावित्यादिः। इहेति—अन्तवत्त्वे इत्यर्थः। तत्र टिसंज्ञासिद्धेरित्यादिः॥ अत्र केचित्—"अर्थवता व्यपदेशिवद्भावः" इतीयं न परिभाषा, तथासति परिभाषाया विध्यङ्गत्वेन लौकिकव्यपदेशिवद्भावं प्रति तस्या अङ्गत्वायोगात्। किन्तु शास्त्रे व्यपदेशिवद्भावयोजनाय शब्दार्थसमुदायमाश्रित्य तस्यैकदेशः शब्द इति व्युत्पादयितुमर्थवत्ताऽपेक्षितेति तस्याः भावः। लोके इव शास्त्रेऽप्यनर्थकस्य व्यपदेशिवद्भावसंभवादेव षष्ठे "निजौ चत्वार एकाच" इत्येतद्व्युत्पादनावसरे भाष्यकैयटयोरनर्थकेनापि व्यपदेशिवद्भावः स्वीकृतः। तस्मादर्थवतेति प्रायोवादमात्रमिति वदन्ति।

उद्द्योते—तत्र हि—अर्थवता व्यपदेशिवद्भावे हि। तदज्ञानात्-गौणत्वाज्ञानात्। तदुदाहरणेति—व्यपदेशिवद्भावोदाहरणेत्यर्थः। एवं सति भाष्यं योजयन् यथाश्रुतेऽतिप्रसङ्गात् प्रदीपमपि योजयति—अर्थवतेति चेति। तत्र बीजमाह—ससहायस्येति। व्यभिचाराभावायाह—प्रायेणेति। नन्वेवमपि कुरुते इत्यादौ हल्सहाय एवेत्यत आह—तशब्दाकार इति। लोके असहायत्वस्य सजातीयसहायाभावकृतस्यैव दर्शनात् शास्त्रेऽपि तत् तथैवेत्याह—येन सहायेनेति। अन्यथा—विजातीयेनापि ससहायत्वे। अपिना व्यपदेशिवद्भावसंग्रहः। आहुरितिसूचितारुचिबीजन्तु वस्तुशून्यविकल्पात्मकज्ञानेन निर्वाहादारोपानुपयोग एव।

( १९४ प्रयोजनवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ अलोऽन्त्यस्य ॥ * ॥

( भाष्यम् )

"अलोऽन्त्यस्य" प्रयोजनम् ॥ "अतो दीर्घो यञि सुपि च" इहैव स्यात्—पटाभ्यां घटाभ्यामिति। आभ्यामित्यत्र न स्यात् ॥

( प्रदीपः ) आभ्यामिति। अत्र द्वे अन्तवत्त्वे उपयुज्येते अकारान्तस्याङ्गस्य अलोऽन्त्यस्य दीर्घत्वं भवतीति पृथक् प्रयोजनत्वेनोपन्यासः ॥

( तत्त्वालोकः ) प्रदीपे—अकारान्तस्येति—यत इत्यादिः।

( १९५ प्रयोजनवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ येन विधिस्तदन्तत्वे ॥ * ॥

( भाष्यम् )

येन विधिस्तदन्तत्वे प्रयोजनम्। "अचो यत्" इहैव स्यात्—चेयम् जेयम्। एयमध्येयमित्यत्र न स्यात्। "आद्यन्तवदेकस्मिन्" कार्यं भवतीत्यत्रापि सिद्धं भवति ॥ आद्यन्तवदेकस्मिन् ॥ २० ॥

( प्रदीपः ) एयमिति। इणो रूपम्। इणस्तु इत्यमिति भवति ॥ २० ॥

( उद्द्योतः ) इत्यमिति। एतिस्तुशास्विति क्यपो विधानादित्यर्थः ॥ २० ॥

( तत्त्वालोकः ) भाष्ये—इत्यत्रापि—इति हेतोः, एयमित्यादावपि। इदमुपलक्षणम्-औपगवः, गार्ग्य इत्यादीनां, खट्वे, कुण्डानीत्यादीनाञ्चापि।

( १९ घसंज्ञासूत्रम् ॥ १ । १ । ४ आ. १० ॥ )

## तरप्तमपौ घः ॥ १ । १ । २१ ॥

( प्रकरणोत्कर्षप्रयोजनाधिकरणम् )

**( प्रदीपः ) तरप्तमपौ** ॥ २१ ॥ आतिशायनिकप्रत्ययप्रकरण एव **'तादौ घः' 'पितौ घः'** इति वा कर्तव्ये प्रकरणोत्कर्षेण संज्ञाकरणं—**स्वार्थेऽपि तरबस्तीति** सूचनार्थम् । तेनाल्पाच्तरमिति सिद्धं भवतीत्याहुः ॥

**( उद्द्योतः ) तरप्त०** ॥ २१ ॥ **प्रकरणोत्कर्षेणेति** । प्रकरणे संज्ञाप्रकरणे उत्कर्षेण गुरुभूतन्यासेनेत्यर्थः ॥ **स्वार्थे इति** । अनातिशायनिकस्यापि संज्ञाविधानार्थमत्र सूत्रम् । स चानिर्दिष्टार्थत्वात्स्वार्थे । तस्य संज्ञाफलं चोच्चैरेवोच्चैस्तरामित्यादौ **किमेत्तिङव्ययघादित्याम्सिद्धि**रिति भावः ॥ **इत्याहुरिति** । अत्रारुचिर्बीजं तु भाष्यानुक्तिः ॥

**( तत्त्वालोकः )** प्रदीपे—**सूचनार्थं**—ज्ञापनार्थम् । केचित्तु तस्य सामान्यापेक्षज्ञापकतामाश्रित्य ईयसुनोऽपि स्वार्थिकतां वदन्ति, तेन 'अहो महीयस्तव साहसिक्यमि' त्यादिप्रयोगाः समर्थिता भवन्ति ॥

उद्द्योते—यथाश्रुतार्थासङ्गतेराह—**प्रकरणे इति । अत्र**—संज्ञाप्रकरणे । **सूत्रं**—"तरप्तमपौ घ" **इति** सूत्रम् । **स च**—अनातिशायनिकश्च । **भाष्यानुक्तिरिति**—"अल्पाच्तरमि"त्यादयस्तु सौत्रा इत्याशयः ।

( अनिष्टनिवारणाधिकरणम् )

( १९६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥*॥ घसंज्ञायां नदीतरे प्रतिषेधः ॥*॥

( भाष्यम् )

**घसंज्ञायां नदीतरे प्रतिषेधो वक्तव्यः । नद्यास्तरो नदीतरः ।**

**( प्रदीपः ) नदीतर इति** । तरतेर्ऋदोरबित्यप् । सर्वत्र चानुबन्धाः स्मर्यमाणा एव कार्यं प्रति हेतुत्वं लभन्त इति घसंज्ञाप्राप्तिः । साहचर्यं चेह व्यवस्थाहेतुः सर्वत्र नाश्रीयते । तथाहि **द्विस्त्रिश्चतुरिति कृत्वोर्थे** इति कृत्वोर्थग्रहणं चतुरशब्दविशेषणार्थं कृतम् । अन्यथा द्विस्त्रिशब्दसाहचर्याच्चतुरशब्दोऽपि कृत्वोर्थ एव ग्रहीष्यत इति किं कृत्वोर्थग्रहणेन ॥

**( उद्द्योतः )** ननु नायं तरबित्यत आह—**सर्वत्र चेति** ॥ **ननु** तमप्साहचर्यात्तद्धित एव तरो ग्रहीष्यते इति नास्त्यबन्ते तरे प्रसक्तिरत आह—**साहचर्यमिति । प्रत्ययाप्रत्ययोरिति** परिभाषापि नाश्रितेति बोध्यम् ॥ **इह** । शास्त्रे ॥

**( तत्त्वालोकः )** प्रदीपे—**तथाहि**—सर्वत्र तदनाश्रयणे हि । नचैवं साहचर्यपरिभाषाया अनित्यत्वेऽपि तस्याः पाक्षिकाश्रयणान्न तत्र दोष इति वाच्यम्, प्रकारान्तरेण वक्ष्यमाणसमाधानपरकभाष्यविरोधात् ॥

उद्द्योते—**अयं**—नदीतरघटकतरः । कैयटानुरोधेनाह—**प्रत्ययेति** । सिद्धान्ते तु नास्या लक्ष्य-संस्कारकता ।

( १९७ समाधानवार्तिकप्रथमखण्डम् ॥ २ ॥ )

### ॥*॥ घसंज्ञायां नदीतरेऽप्रतिषेधः ॥*॥

( भाष्यम् )

**घसंज्ञायां नदीतरेऽप्रतिषेधः, अनर्थकः प्रतिषेधोऽप्रतिषेधः ॥**

**( प्रदीपः ) अप्रतिषेध इति** । न प्रतिषेधः इति प्रतिषेधनक्रिया नञा निषिध्यते । भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—**अनर्थकः प्रतिषेध इति** ॥

**( उद्द्योतः ) वस्त्वर्थमिति** । तात्पर्यार्थमित्यर्थः । असन्देह इतिवत् प्रतिषेधस्याभाव इत्यर्थको नञ्समासः ॥ एवं चानर्थक इति भाष्योक्तेर्मध्यमपदलोपी समास इति न भ्रमितव्यमिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—**तात्पर्येति**—अत एव प्रकृतभाष्ये वक्तव्य इति नावादि ।

( भाष्यम् )

**घसंज्ञा कस्मान्न भवति ? ।**

**( तत्त्वालोकः ) घसंज्ञेति**—तर्हि तत्रेत्यादिः ।

( १९७ समाधानहेतुवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

### ॥ * ॥ तरब्ग्रहणं ह्यौपदेशिकम् ॥ * ॥

( भाष्यम् )

**औपदेशिकस्य तरपो ग्रहणम् । न चैष उपदेशे तरप्शब्दः ॥**

**( प्रदीपः ) औपदेशिकमिति** । उपदेशः प्रयोजनमस्य । तत्र वा भवमौपदेशिकम् ॥

**( उद्द्योतः ) तरप्ग्रहणं** तरप्शब्दः । **औपदेशिकमु**पदेशप्रयोजक इत्यर्थो भाष्यस्य । तदाह—**उपदेशः प्रयोजनमिति** प्रयोजक इत्यर्थः । **न चैष उपदेशे तरप्शब्द** इति भाष्यस्वरसादाह—**तत्र वा भव इति** । **उपदेशे इति** भाष्ये भव इति शेषः ।

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः । **न च**—न तु । **एषः**—नदीतरघटकतरः ।

प्रदीपे—**तत्र**—उपदेशे ।

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ॥**

( समाधानभाष्यम् )

**नहि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ? ॥**

( सिद्धान्तिसमाधानभाष्यम् )

**इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते—यत्रास्यैतद्रूपमिति । रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम् । तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते ॥**

**कोऽसौ ? ।**

**उपदेशो नाम । न चैष उपदेशे तरप्शब्दः ॥**

**( प्रदीपः ) यत्रास्येति** । अनुबन्धयुक्तमित्यर्थः ॥ **न चैष इति** । काल्पनिकमस्य तरप्त्वं न तु साक्षान्निर्दिष्टम् ॥

**( उद्द्योतः ) सर्वेष्वेव सानुबन्धकग्रहणेष्विति** भाष्यं प्रकृताभिप्रायं, शब्दमात्रग्रहणेऽपि **स्वं रूपमि**त्यनेन रूपाश्रयणादिति बो-

ध्यम् ॥ **यत्रास्येति** । यत्रास्यैतद्रूपं तत्र घसंज्ञेत्यर्थः ॥ एवं चोपदेश एव घसंज्ञा प्रयोगे तु स्थानिवद्भावेन सेति बोध्यम् ॥ **काल्पनिकमिति । ऋदोरबिति**सूत्रपर्यालोचनावगतत्वेनानुमानिकमित्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**अस्य** —नदीतरघटकतरस्य ।

उद्द्योते—**अस्य**—तरस्य । **एतत्**—अनुबन्धयुक्तम् । **सा**—घसंज्ञा ।

**( घसंज्ञाभ्युपगमेऽपि दोषाभावप्रदर्शकभाष्यम् )**

**अथ वाऽस्त्वस्य घसंज्ञा को दोषः ? ॥**

**( तत्त्वालोकः )** **अस्य**—नदीतरघटकतरस्य ।

**( दोषदर्शनभाष्यम् )**

**घादिषु नद्या ह्रस्वो भवतीति ह्रस्वत्वं प्रसज्येत ॥**

**( समाधानभाष्यम् )**

**समानाधिकरणेषु घादिष्वित्येवं तत् ॥**

**( प्रदीपः ) समानाधिकरणेष्विति ।** आतिशायनिकश्च स्वार्थिकत्वात् समानाधिकरणः ॥

**( उद्द्योतः ) स्वार्थिकत्वात् ।** प्रकृत्यभिहितद्योतकत्वात् ॥ **समानाधिकरणः ।** प्रकृत्या समानविषय इत्यर्थः । सामानाधिकरण्यं चैकविशेष्यकबोधजनकत्वमिति बोध्यम् ॥

**(तत्त्वालोकः)** भाष्ये—**समानेति**—नैष दोषः, यत इत्यादिः । **तत्**—ह्रस्वत्वम् ।

उद्द्योते—स्वार्थिकत्वाभावादाह-**प्रकृत्यभिहितेति ।** वस्तुतः प्रकृत्यभिहितद्योतकत्वादाह—**प्रकृत्येति ।** तदुक्तिं योजयति—**समानेति । जनकत्वमिति**—न तु समभिव्याहारविशेष इति भावः ।

**( आक्षेपभाष्यम् )**

**यदा तर्हि सैव नदी, स एव तरस्तदा प्राप्नोति ॥**

**( प्रदीपः ) यदा तर्हीति ।** ननु तीर्णिरिति भवितव्यम् , एवं तर्हि तीर्यत इति तर इति सामान्येन पदं संस्क्रियते, पश्चात्तद्वा विशेष्यते इति न दोषः ॥

**( उद्द्योतः ) ननु तीर्णिरिति ।** ऋतः परस्य क्तिनो निष्ठावद्भावनात्त्वम् ॥ **सामान्येनेति ।** अनिर्धारितकर्मविशेषेणेत्यर्थः । अत एव पुंस्त्वम् । घञबयोः पुंसीत्युक्तेः ॥

**( तत्त्वालोकः )** प्रदीपे—समाधत्ते—**एवमिति** । यदीत्यादिः । तथा चात्र राजदन्तादिः, भाष्यस्वारस्यादिति भावः ।

उद्द्योते—**पुंस्त्वमिति**—अस्य प्रायिकत्वान्न "इको गुणे"ति सूत्रस्थस्वग्रन्थविरोधः ।

**( समाधानभाष्यम् )**

**स्त्रीलिङ्गेषु घादिष्वित्येवं तत् ॥ अवश्यं चैतदेवं विज्ञेयम् । समानाधिकरणेषु घादिष्वित्युच्यमाने इह प्रसज्येत—महिषी रूपमिव, ब्राह्मणी रूपमिवेति ॥ तरप्तमपौ घः ॥ २१ ॥**

**( प्रदीपः ) स्त्रीलिङ्गेष्विति ।** स्वार्थिकश्च प्रकृतिलिङ्गानुविधानात् स्त्रीलिङ्गः ॥ **महिषी रूपमिवेति । इवशब्दो** भिन्नक्रमः । तेनायमर्थः-**महिषी इवेयमाकृतिरिति** । तत्र सुप्सुपेति समासे कृते ह्रस्वत्वं स्यात् ॥ २१ ॥

**( उद्द्योतः ) महिषीरूपमिवेति ।** नन्विदमसमस्तं समस्तं वा । नाद्यः । उत्तरपदाधिकाराद्रूपशब्दस्य चातथात्वादप्राप्तेः । किं च रूपशब्देनाकृत्यभिधानात्कस्याकृतिरिव महिषीति साकाङ्क्षं स्यात् । नान्त्यः । षष्ठीतत्पुरुषे वैयधिकरण्यादृध्रस्वाप्राप्तेः । विशेषणसमासे तु पूर्वनिपातवैपरीत्यापत्तिः । तस्मादुपमागर्भसमासस्य विग्रहवाक्यमिदम् । स च समासो **नोपमानानि सामान्यवचनैरि**त्यनेन, रूपशब्दस्योपमेयवाचकत्वेऽपि साधारणधर्मवाचकत्वात् । साधारणधर्मो ह्यत्र विसंष्ठुलत्वादिः । **नाप्युपमितं व्याघ्रादिभिरि**ति, रूपशब्दस्योपमेयवाचित्वेन पूर्वनिपातवैपरीत्यापत्तेः, तस्योपमानवाचित्वे तु कस्य रूपमिति विशेषणस्य सापेक्षत्वाद्वृत्तिर्न स्यादत आह-**इवशब्द इति । सुप्सुपेति च ॥ ह्रस्वत्वं स्यादिति ।** अप्रत्यययोरपि घत्वे तत्साहचर्याद्रूपादेरप्रत्ययस्यापि ग्रहणं स्यादिति भावः ॥ यद्यपि रूपमित्युक्ते कस्य रूपमिति अस्त्याकाङ्क्षा तथापि प्रधानस्य साकाङ्क्षत्वान्न दोषः ॥

**(तत्त्वालोकः)** भाष्ये—**स्त्रीलिङ्गेष्विति**—तदापि न प्राप्नोति, यत इत्यादिः । **एतत्**—ह्रस्वत्वम् । **समानेति**—यत इत्यादिः । **इत्युच्यमाने**—इत्येतावन्मात्रे उच्यमाने ।

उद्द्योते—**अतथात्वादिति**—अनुत्तरपदत्वादित्यर्थः । ह्रस्वत्वस्येति शेषः । **इदं**—महिषी रूपमिवेतीदम् । **स च**—उपमागर्भश्च । **हि**—यतः । **तस्य**—रूपशब्दस्य ।

---

**( २० संख्यासंज्ञासूत्रम् ॥ १ । १ । ५ आ. ११ ॥ )**

# बहुगणवतुडति संख्या ॥ १ । १ । २२ ॥

**( लोकप्रसिद्धसंख्यावाचिनां संख्यात्वसाधनाधिकरणम् )**

**( १९८ आक्षेपवार्तिकप्रथमखण्डम् ॥ १ ॥ )**

## ॥ * ॥ संख्यासंज्ञायां संख्याग्रहणं [ संख्यासंप्रत्ययार्थम् ] ॥ * ॥

**( भाष्यम् )**

**संख्यासंज्ञायां संख्याग्रहणं कर्तव्यम् । बहुगणवतुडतयः संख्यासंज्ञा भवन्ति, संख्या च संख्यासंज्ञा भवतीति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**"संख्यासंप्रत्ययार्थम्" । एकादिकायाः संख्यायाः संख्याप्रदेशेषु संख्येत्येष संप्रत्ययो यथा स्यात् ॥**

**( प्रदीपः ) बहुगणवतुडति ॥ २२ ॥ संख्यासंप्रत्ययार्थमिति ।** संख्याया एकादिकायाः संख्याप्रदेशेषु संप्रत्ययार्थमित्यर्थः ॥

**( उद्द्योतः ) बहुगण** ॥ २२ ॥ संख्यात्वेन संप्रत्ययस्य लोकत एव सिद्धेराह—**एकादिकाया इति । संख्यासंप्रत्ययेति** वार्तिके सङ्ख्येति संप्रत्यय इत्यर्थः । एकादिकायाः सङ्ख्यायाः सङ्ख्याप्रदेशेष्विति शेषपूरणं बोध्यम् ॥ **सङ्ख्येत्येष** इति भाष्यस्य सङ्ख्येत्येतच्छब्दाभिन्न इत्यर्थः ॥ **'शब्दार्थप्रत्ययानामितरेतराध्यासात्संकर'** इति पातञ्जलसूत्रात् । एतच्च पातञ्जलसूत्रवृत्तावुपपादितमस्माभिः । नारद इत्यबोधि इत्यादावप्येवमेव । एवं च कर्मत्वाप्रसक्तिरेव ॥ सङ्ख्याशब्दजन्य इत्यर्थे सङ्ख्येत्याकारक इत्यर्थे च एषशब्दान्वयानुपपत्तिस्तदुपादानवैयर्थ्यं चेति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**वार्त्तिके इति**—अनेनैतस्य पृथग्वार्त्तिकता सूचिता । अथवा वार्त्तिकांशे इति तदर्थः । **इत्यर्थ इति**—अत एवाग्रे "संख्येति प्रतीता" इति वक्ष्यति भाष्यकारः । अन्यस्य वार्त्तिकत्वेऽलाभादाह—**एकादिकाया इति** । एवं सति भाष्यासङ्गतिं परिहरति—**संख्येत्येष इतीति** । **सङ्कर इति**—तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानमिति शेषः । श्रुतशब्दस्मारितबौद्धशब्देन बौद्धार्थप्रतीतेः शब्दार्थप्रत्ययानां बुद्धिधर्मत्वेन परस्परमविभागात् तेषामितरेतराध्यासात्सङ्करः । अत एव गौरिति शब्दो गौरित्यर्थो गौरितिज्ञानमिति व्यवहारो भवति । य एषां प्रविभागज्ञः स सर्वविदित्याशयः ॥ प्रसङ्गादाह—**नारद इतीति** । नारायणाद्युक्तिं खण्डयति—**संख्येति** ।

### ( आक्षेपबाधकभाष्यम् )

**ननु चैकादिका संख्या लोके संख्येति प्रतीता । तेनास्याः संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति ॥**

**( प्रदीपः ) ननु चेति** । यथा पशुरपत्यं देवतेति लौकिकोऽर्थो गृह्यते, तथैकादिकापि संख्या ग्रहीष्यत इत्यर्थः ॥

**( उद्द्योतः ) सङ्ख्या ग्रहीष्यत इति** । सूत्रं त्वधिकसंग्रहार्थमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्याः**—एकादिकायाः संख्यायाः ।

प्रदीपे—भाष्ये एकादिकेत्यस्यार्थपरता, न तु शब्दपरतेत्याह—**यथा पशुरिति** । **तथेति**—संख्याशब्देनेति शेषः । तथा च तदर्थमत्र संख्याग्रहणं न कर्तव्यमित्याशयः ।

### ( आक्षेपसाधकभाष्यम् )

**एवमपि कर्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**( तत्त्वालोकः ) कर्तव्यमिति**—अत्र संख्याग्रहणमित्यादिः ।

### ( १९८ आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ * ॥ इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके ॥ * ॥

### ( भाष्यम् )

**अक्रियमाणे हि संख्याग्रहणे एकादिकायाः संख्यायाः संख्येत्येष संप्रत्ययो न स्यात् ॥**

**किं कारणम् ? ।**

**अकृत्रिमत्वात् ॥ बह्वादीनां कृत्रिमा संज्ञा । "कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति" ॥ यथा लोके ॥ तद्यथा लोके—'गोपालकमानय' 'कटजकमानय' इति यस्यैषा संज्ञा भवति स आनीयते, न यो गाः पालयति, यो वा कटे जातः ॥**

**( प्रदीपः ) कृत्रिमाऽकृत्रिमयोरिति** । न्यायोऽयम् । तथाहि सर्वार्थाभिधानशक्तियुक्तः शब्दो यदा विशिष्टेऽर्थे संव्यवहाराय नियम्यते, तदा तत्रैव प्रतीतिं जनयति नान्यत्र ॥

**( उद्द्योतः ) न्यायोऽयमिति** । अभ्यासाम्रेडितादिसंज्ञाविषये चैतन्न्यायोपयोगो द्रष्टव्यः ॥ **नियम्यते इति** । सर्वार्थबोधकत्वेऽपि लोके तत्रैव गृहीतशक्तिकतयाऽन्यत्र शक्त्यग्रहेण च अधिकसंग्रहार्थत्वादगृहीतशक्तिग्राहकत्वाच्चास्य नियमत्वं चिन्त्यम् । न्यायबीजं तु प्रकरणमिति भाष्ये एवस्फुटीभविष्यति ॥

**( तत्त्वालोकः )** भाष्ये—**अक्रियमाणे इति**—अत्रेत्यादिः । **हि**—यतः । **अकृत्रिमत्वादिति**—तत्र संख्यासंज्ञाया इत्यादिः । **संज्ञा**—संख्यासंज्ञा । **इति**—इत्युक्ते । **एषा**—गोपालक इति, कटजक इति वा ।

प्रदीपे—न्यायस्य तस्य बीजमाह—**तथाहीति** । **तत्रैव**—विशिष्टेऽर्थे एव ।

उद्द्योते—कैयटोक्तं खण्डयति—**सर्वार्थेति** । **तत्रैव**—परम्परया बोध्यस्थले एव । **अस्य**—विशिष्टेऽर्थे संव्यवहाराय नियोजनस्य ।

### ( आक्षेपभाष्यम् )

**यदि तर्हि कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, "नदीपौर्णमास्याग्रहायणीभ्यः" इत्यत्रापि प्रसज्येत ॥**

**( प्रदीपः ) नदीपौर्णमासीति** । **यू स्त्र्याख्यौ नदी**ति संज्ञाविधानात् संज्ञिनो ग्रहणं प्राप्तं न तु स्वरूपस्या**शब्दसंज्ञे**ति निषेधात् ॥

**( तत्त्वालोकः )** भाष्ये—**तर्हीति**—अस्याग्रेऽन्वयः । **प्रसज्येतेति**—कृत्रिमनदीसंज्ञकस्यैव ग्रहणमित्यादिः ।

प्रदीपे—**संज्ञेति**—नदीसंज्ञेत्यर्थः । **संज्ञिनः**—कृत्रिमनदीसंज्ञकस्यैव । **स्वरूपस्य**—( परम्परया प्रवाहबोधक ) नदीशब्दस्वरूपस्य ।

### ( समाधानभाष्यम् )

**पौर्णमास्याग्रहायणीग्रहणसामर्थ्यान्न भविष्यति ॥**

**( प्रदीपः ) पौर्णमासीति** । नियमार्थं पौर्णमास्याग्रहायणीग्रहणमीकारान्तानां स्यादिति चेत् । एवमपि—**'ऊपौर्णमास्याग्रहायणीभ्यः'** इति वक्तव्यं स्याद् । ऊकारग्रहणेन च नदीसंज्ञकमेवोकारान्तं पौर्णमास्याग्रहायणीशब्दसाहचर्याद्गृहीष्यते ॥

**( उद्द्योतः ) नियमार्थमिति** । नियमश्च सामान्यविषय एव, न कालवाचिविषयो व्याख्यानादतो गौर्यादिन्तेऽपि न दोषः ॥ नन्वनदीसंज्ञकेभ्योऽपि खलप्वादिभ्य ऊकारान्तेभ्यः स्यादत आह—**ऊकारग्रहणेनेति** । वस्तुतस्तु दोषग्रस्तनियमापेक्षया नदीशब्देन **कृत्रिमाकृत्रिमन्यायबाधज्ञापनमेव** ज्यायः ॥

**( तत्त्वालोकः )** भाष्ये—**पौर्णमासीति**—नैष दोषः, यतस्तत्रेत्यादिः । **भविष्यतीति**—कृत्रिमनदीसंज्ञकस्य ग्रहणमित्यादिः । यदि नदीशब्देन तत्र कृत्रिमनदीसंज्ञकस्य ग्रहणं स्यात्तर्हि पौर्णमास्याग्रहायण्योरपि कृत्रिमनदीसंज्ञकत्वेन ग्रहणे सिद्धे तयोस्तत्रोपादानं व्यर्थमेव स्यादित्याशयः ।

उद्द्योते—कैयटोक्तं खण्डयति—**वस्तुतस्त्विति** । एवं सति "विधिनियमसंभवे विधिरेव ज्यायानि"ति न्यायोऽप्यनुगृहीतो भवतीत्याह—**ज्याय इति** ।

### ( आक्षेपभाष्यम् )

**तद्विशेषेभ्यस्तर्हि प्राप्नोति ।**

**( प्रदीपः ) तद्विशेषेभ्यः** । गङ्गादिभ्यः ॥

**( उद्द्योतः )** भाष्ये **तद्विशेषेभ्यस्तर्हीति** प्रासङ्गिकी शङ्का । तां व्याचष्टे—**गङ्गादिभ्य इति** । अपगङ्गं परियमुनमित्युदाहरणे । अत्र हि टचि अन्तोदात्तत्वम् । तदभावे **परिप्रत्युपापावर्ज्यमानाहोरात्रावयवेष्वि**ति पूर्वपदप्रकृतिस्वरत्वमित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**तद्विशेषेभ्यः**—नदीविशेषेभ्यः। यदि तत्र तत्सामर्थ्यात् कृत्रिमनदीसंज्ञकस्य ग्रहणं न स्यात्तथापि अकृत्रिमनदीसंज्ञकस्यैव ग्रहणं स्यान्न तु नदीशब्दस्वरूपस्य, "अशब्दसंज्ञे"ति निषेधादिति भावः।

उद्द्योते—**अपगङ्गमिति**—अत्र "अपपरी वर्जने" इति कर्मप्रवचनीयसंज्ञा। "पञ्चम्यपाङ्परिभिः" इति पञ्चमी। "अपपरिबहिरञ्चवः पञ्चम्या" इत्यव्ययीभावः। **तदभावे**—टजभावे। अत एव नयोदाहृतमिति भावः। **आहुरिति**—भाष्यतत्त्वविद इति शेषः।

**( समाधानभाष्यम् )**

**एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति-'न तद्विशेषेभ्यो भवति' इति। यदयं विपाट्शब्दं शरत्प्रभृतिषु पठति॥**

**( प्रदीपः ) यदयमिति**। नित्यार्थः पाठः स्यादिति चेद्, व्यवस्थितविभाषया विपाट्शब्दस्य नित्यष्टज् भविष्यतीत्यदोषः॥

**( उद्द्योतः ) नित्यार्थ इति**। **नदीपौर्णमासी**त्यत्रान्यतरस्यांग्रहणानुवृत्तेरिति भावः॥ **व्यवस्थितेति**। अत्र च ज्ञापकपरमिदमेव भाष्यं मानम्। केचिदस्माद्भाष्यान्न**नदीति** सूत्रेऽन्यतरस्यांग्रहणं निवर्तयन्ति॥

**( तत्त्वालोकः )** भाष्ये—**यत्**—यस्मात्। **अयम्**—आचार्यः। **पठतीति**—अन्यथा तेनैव तत्र टच्सिद्धौ तत्र तत्पाठो व्यर्थः। तथा च तत्र नदीपदोपादानसामर्थ्येन परिशेषान्नदीशब्दस्यैव ग्रहणमिति न काचनानुपपत्तिः।

प्रदीपे—**नित्यार्थ इति**—नित्यटजर्थ इत्यर्थः। तत्र तस्येति शेषः। **व्यवस्थितेति**—तत्र तदपाठेऽपि, अत्रेत्यादिः।

उद्द्योते—**इत्यत्रेति**—"नपुंसकादन्यतरस्याम्" इत्यत इति शेषः। **अत्र च**—अत्र व्यवस्थितविभाषाश्रयणे च। तस्या अन्यत्र परिगणितत्वादाह—**केचिदिति**। **भाष्यादिति**—"अनश्च" इति सूत्रतः प्रागेव "नदी"ति सूत्रपाठवचनेनेति शेषः। तथा च व्यवस्थितविभाषायाः लक्ष्यैकचक्षुष्कमात्रज्ञेयतया अस्मदादीनां वचनं विना तदज्ञानेन तया ज्ञापनोपपादनमयुक्तमिति शङ्का निरस्ता।

**( आक्षेपभाष्यम् )**

**इह तर्हि प्राप्नोति—"नदीभिश्च" इति॥**

**( तत्त्वालोकः ) प्राप्नोतीति**—कृत्रिमेति न्यायेन कृत्रिमनदीसंज्ञकस्यैव ग्रहणमित्यादिः।

**( समाधानभाष्यम् )**

**बहुवचननिर्देशान्न भविष्यति॥**

**( प्रदीपः ) बहुवचनेति**। अन्यथा**णद्या** इत्यादौ यथैकवचनेन निर्देशस्तथेहापि कर्तव्यः स्यात्॥

**( तत्त्वालोकः )** भाष्ये—**बहुवचनेति**—तत्रेत्यादिः। **भविष्यतीति**—कृत्रिमनदीसंज्ञकस्य ग्रहणमित्यादिः।

प्रदीपे—**कर्तव्य इति**—एकवचनेन निर्देश इत्यादिः।

**( आक्षेपभाष्यम् )**

**स्वरूपविधिस्तर्हि प्राप्नोति॥**

**( तत्त्वालोकः ) स्वरूपविधिरिति**—नदीशब्दस्वरूपेण सह संख्याया अव्ययीभावसमासविधिरित्यर्थः। तत्रेत्यादिः।

**( समाधानभाष्यम् )**

**बहुवचननिर्देशादेव न भविष्यति॥**

**( उद्द्योतः ) बहुवचननिर्देशादेवेति**। तस्मादपीत्यर्थः। **अशब्दसंज्ञेति** निषेधादित्यपि बोध्यम्। तत्प्रत्याख्याने त्वयमेव हेतुः। अतोऽस्मान्निषेधान्न**दीपौर्णमासी**त्यादौ स्वरूपग्रहणमपि दुर्लभमित्यपास्तम्। लक्ष्यानुसारेण तत्प्रत्याख्यानेन सामर्थ्येन तस्यात्राप्रवृत्तेः। **नदीभिश्चे**त्यादौ तु लक्ष्यानुसारादेवार्थग्रहणेन तद्वाचकानां ग्रहणमिति दिक्॥

**( तत्त्वालोकः )** भाष्ये—**बहुवचनेति**—तत्रेत्यादिः। **भविष्यतीति**—स्वरूपविधिरपीत्यादिः।

उद्द्योते—एवस्याप्यर्थकतामाह-**तस्मादपीति**। अपिना समुच्चितमाह—**अशब्देति**। **तत्प्रत्याख्याने तु**—अशब्दसंज्ञेति (निषेध) प्रत्याख्याने तु। **अयमेव**—अत्र बहुवचननिर्देश एव। हेतुत्रयमाह—**लक्ष्येति**। **सामर्थ्येन**—उक्तरीत्योपपादितेन नदीपदोपादानसामर्थ्येन। **तस्य**—अशब्दसंज्ञेति निषेधस्य। **अत्र**—"नदीपौर्णमासी" ति सूत्रे। **ग्रहणेनेति**—तत्र कार्यासंभवादिति भावः।

**( उपसंहारभाष्यम् )**

**एवं च न चेदमकृतं भवति—"कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः" इति। न च कश्चिद्दोषो भवति॥**

**( प्रदीपः ) न चेदमकृतमिति**। अनाश्रितमित्यर्थः॥

**( उद्द्योतः )** अस्य न्यायत्वादकृतमित्ययुक्तमत आह—**अनाश्रितमिति**॥

**(तत्त्वालोकः)** भाष्ये—उपसंहरति—**एवञ्चेति**। सतीति शेषः।

**( १९९ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ उत्तरार्थं च ॥ * ॥**

**( भाष्यम् )**

**उत्तरार्थं च संख्याग्रहणं कर्तव्यम्। "ष्णान्ता षट्। षकारनकारान्तायाः संख्यायाः षट्संज्ञा यथा स्यात्। इह मा भूत्—पामानो विप्रुष इति॥**

**( प्रदीप ) उत्तरार्थं चेति**॥ अयं हि सूत्रोपात्तः संख्याशब्दः स्वरूपपदार्थकः। उत्तरत्र संज्ञिनिर्देशेन प्रयोजनम्॥

**( उद्द्योतः ) स्वरूपेति**। न चैवं बह्वादिसामानाधिकरण्यानुपपत्तिः। शब्दार्थयोरभेदारोपेण तदुपपत्तेरिति भावः॥ **संज्ञिनिर्देशेनेति**। संख्याशब्दबोध्यपञ्चादिशब्दपरेण संख्याशब्दनिर्देशेनेत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**संख्याग्रहणमिति**—अत्रेत्यादिः। उत्तरं निर्दिशति—**ष्णान्तेति**।

प्रदीपे—**सूत्रोपात्तः**—प्रकृतसूत्रोपात्तः। **स्वरूपपदार्थक इति**—तथा च तस्योत्तरत्रानुवृत्तिः न संभवतीत्याशयः। कुत एवं सति तस्य तत्रानुवृत्तिः न संभवतीत्यत आह-**उत्तरत्रेति**। यत इत्यादिः।

उद्द्योते—**नचैवमिति**—तत्रेति शेषः। यथाश्रुतासङ्गतेराह—**संख्याशब्देति**।

**( आक्षेपनिराकरणभाष्यम् )**

**इहार्थेन तावन्नार्थः संख्याग्रहणेन॥**

**( प्रदीपः ) इहार्थेनेति**। इहार्थो यस्येति सामान्यविशेषभावान्न पौनरुक्त्यम्॥

**( उद्द्योतः ) सामान्येति**। अर्थशब्दोक्तसामान्यं प्रति **इहार्थो** यस्येत्यस्य विशेषत्वादित्यर्थः॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती उत्तरयति—**इहार्थेनेति** । **संख्येति**—अत्रेत्यादिः ।

प्रदीपे—ननूभयत्र सामान्यपरताया दर्शितत्वया पौनरुक्त्यादिदमसङ्गतमित्यत आह—इहार्थ इति ।

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम्*-इतरथा ह्यसंप्रत्ययोऽकृत्रिमत्वाद्यथा लोके*इति ? ॥**

( तत्त्वालोकः ) पूर्वपक्षी शङ्कते—**ननु चेति** ।

**( आक्षेपपरिहारभाष्यम् )**

**नैष दोषः । अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति । अर्थोवाऽस्यैवंसंज्ञकेन भवति । प्रकृतं वा तत्र भवति— इदमेवंसंज्ञकेन कर्तव्यमिति । आतश्चार्थात् प्रकरणाद्वा । अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु—गोपालकमानय, कटजकमानयेति । उभयगतिस्तस्य भवति । साधीयो वा यष्टिहस्तं गमिष्यति ॥**

**( प्रदीपः ) आतश्चेति** । इतश्चेत्यर्थः ॥ **अर्थः** सामर्थ्यम् । यथा गोपालकमानय माणवकमध्यापयिष्यतीति यष्टिहस्तस्याध्यापनासंभवात्संज्ञिनो ग्रहणम् ॥ **प्रकरणं** प्रस्तावो यथा भोजनप्रकरणे सैन्धवमानयेति लवणे प्रतीतिर्गमनप्रकरणे त्वश्वे ॥ **ग्राम्यमिति** । ऊहितुमसमर्थम् ॥ **पांशुलपादमिति** । अचिरोषितम् ॥ अत एवा**प्रकरणज्ञम् ॥ उभयगतिरिति** । किं संज्ञैयं यस्य कस्यचिन्निर्दिष्टा स्यादुत यष्टिहस्तोऽस्य विवक्षितः स्यादिति सन्देहवान् भवतीत्यर्थः ॥ **साधीयो वेति** । यो मम प्रसिद्धः सोऽनेन चोदितो न च ममैवंसंज्ञकः प्रसिद्ध इत्येवं मन्यते । लोके च गोपालकशब्दः संज्ञिनि नियम्यमानः संज्ञ्यन्तरं निवर्तयति, क्रियानिमित्तं त्वर्थं न निरस्यति, तुल्यजातीयविषय एव हि नियमो भवति ॥

**( उद्द्योतः )** भाष्ये **अर्थादित्यादि** । लोके कृत्रिमग्रहणे न कृत्रिमत्वं कारणं किं त्वन्यदेवेति भावः ॥ **अर्थः** सामर्थ्यम् । तदेव दर्शयति—**अर्थो वास्येति** । अस्य वाक्यस्यार्थोऽध्यापनादिरूपं प्रयोजनमेवंसंज्ञकेन भवति तत्रास्यैव सामर्थ्यमित्यर्थः ॥ **प्रकृतं वेति** । इदमेवंसंज्ञकेन कर्तव्यमिति तत्र प्रयोजनं प्रकृतं बुद्धिस्थं भवति । संज्ञाया बुद्धिस्थत्वादित्यर्थः । इदमन्येषामपि पदार्थनियामकानामुपलक्षणम् ॥ यद्यपि **रूढिर्योगापहारिणीत्यप्यत्र** संभवति । तथापि **प्रकरणादिसहकृतो योगोऽपि बलवानित्यभिप्रेत्येदमेवोक्तम्** ॥ अन्वयमुक्त्वा व्यतिरेकेणाप्यर्थादेर्हेतुत्वं प्रतिपादयितुं भाष्ये **आतश्चेति । उभयगतिः** उभयविषयकं ज्ञानं तात्पर्यसन्देहरूपमित्याशयेनाह—**किंसंज्ञेयमिति** । वक्तृतात्पर्यविषयसन्देहवानित्यर्थः ॥ ननु रूढेर्योगार्थापहारकत्वेन कथं संदेह इति चेन्न । तत्तत्पुरुषं प्रति प्रसिद्धरूढ्यर्थस्यैव योगापहारकत्वं नान्यस्येति भावात् । तदेव ध्वनयन्नाह—**साधीय इति** । क्रियाविशेषणमव्ययं वा सम्यगर्थकम् ॥ **यष्टिहस्तं गमिष्यति** । तद्विषयमेव तात्पर्यं ग्रहीष्यतीत्यर्थः ॥ ननु संज्ञाकरणस्य नियमार्थत्वाद्योगार्थप्रतीतिः श्रोतुर्भ्रम इत्यत आह—**एवं मन्यते । लोके इति** । इदमपि स्वरीत्या ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती परिहरति—**नैष दोष इति** । वत इति शेषः ।

प्रदीपे—**इति**—इत्युक्ते । एवमग्रेऽपि । **न च**—नहि । **हि**—यतः ।

उद्द्योते-**अन्यदेव**—अर्थादेव । **वाक्यस्य**—एवंसंज्ञकमानय राममध्यापयिष्यतीत्यादि—वाक्यस्य । **तत्रेति**—अध्यापनादावित्यर्थः । यत इत्यादिः । **अस्यैव**—एवंसंज्ञकस्यैव । **इदमेवमिति**—यत्रेत्यादिः । भाष्यकृतो न्यूनतानिरासायाह—**इदमिति** । प्रकरणवदित्यर्थः । **अन्येषां**—संयोगविप्रयोगादीनाम् । **अत्र**—प्रकरणस्थले । **इदमेव**-प्रकरणमेव । **वक्त्रिति**—इनोत्यादिः । एवञ्च विशिष्टार्थोऽयम् । **तद्विषयमेव**—यष्टिहस्तविषयकमेव । कैयटोक्तं पूर्ववत् खण्डयति—**इदमपीति** ।

**( आक्षेपसाधकभाष्यम् )**

**यथैव तर्ह्यर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययो भवति, एवमिहापि प्राप्नोति । जानाति ह्यसौ बह्वादीनामियं संज्ञा कृतेति ॥**

( प्रदीपः ) **एवमिहापीति** । बह्वादय एवात्र संख्यात्वेन प्रकृता इति भावः ॥

**( उद्द्योतः ) अत्र** शास्त्रे । **प्रकृताः** बुद्धौ संनिहिताः ॥ अनेनात्रापि प्रकरणमस्तीत्युक्तं भवति । बुद्धिसंनिधिरेव **प्रकरणम् ॥**

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी शङ्कते—**यथैवेति । इहापि**-शास्त्रेऽपि । **हि**—यतः । **इयं**—संख्या ।

प्रदीपे—शास्त्रे कृत्रिमग्रहणे अर्थो हेतुः न सम्भवति, तत्र प्रदेशे अकृत्रिमस्यापि ग्रहणसत्त्वेन तस्योभयसाधारण्यादित्याशयेनाह—**प्रकृता इति** ।

उद्द्योते—**अनेन**—प्रकृता इत्यनेन । तदर्थमाह—**बुद्धीति** ।

**( समाधानसाधकभाष्यम् )**

**न यथा लोके, तथा व्याकरणे । उभयगतिः पुनरिह भवति ॥**

**( प्रदीपः ) न यथा लोक इति** । संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो, न त्वेकादिसंख्यानिरासायाधिकार्थप्रतिपत्त्यर्थत्वादिह संज्ञाकरणस्य ॥

**( उद्द्योतः ) संज्ञात्वेन विनियुक्त इति** । ज्ञापिताज्ञातशक्तिक इत्यर्थः । अत एव न नियमार्थतेत्याह—**नत्विति** । तुल्यन्यायेन संज्ञासूत्रमात्रस्य नियमार्थत्वाभावः सूचितः ॥ **इह** संख्याप्रदेशे **अधिकार्थे**त्यादिनान्वेति ॥ भाष्ये **न यथेत्यादि** । व्याख्यातृपरंपरावगतवक्तृतात्पर्यानुपपत्त्या प्रकरणाद्यनादरेणोभयगतिरिति भाष्यार्थ इत्यन्ये ॥

**( तत्त्वालोकः )** भाष्ये—सिद्धान्ती समाधत्ते—**न यथेति । उभयगतिः**—कृत्रिमाकृत्रिमयोरुभयोरपि ग्रहणम् । **इह**-संख्याप्रदेशे ।

उद्द्योते—सिद्धान्तसरण्याऽऽह—**ज्ञापितेति** । पूर्वोक्तासाङ्गत्यदृढीकरणायाह - **तुल्यन्यायेनेति । मात्र**—कार्त्स्न्ये । यथाश्रुतानुपपत्तेराह—**इहेति** । संज्ञासूत्रस्य विधित्वपक्षे नियमत्वपक्षे च कैयटोक्तासङ्गतेराह—**भाष्ये नेति** । अनुगमाय प्रकरणस्य तात्पर्यज्ञानजनकत्वेनैव कृत्रिमग्रहणे हेतुताऽभ्युपगमे गौरवात्, तात्पर्यज्ञानस्यैव तत्र हेतुता स्वीकार्या । तथा च लोके कृत्रिमे तात्पर्यसत्त्वेन तस्यैव ग्रहणेऽपि, शास्त्रे कृत्रिमाकृत्रिमयोः तात्पर्यसत्त्वाद् उभयोरपि ग्रहणं भवतीत्याशयः ॥

( उभयगत्युदाहरणभाष्यम् )

**अन्यत्रापि नावश्यमिहैव। तद्यथा "कर्तुरीप्सिततमं कर्म" इति कृत्रिमा कर्मसंज्ञा। कर्मप्रदेशेषु चोभयगतिर्भवति—"कर्मणि द्वितीया" इति कृत्रिमस्य ग्रहणम्, "कर्तरि कर्मव्यतिहारे" इत्यत्राकृत्रिमस्य ॥**

( प्रदीपः ) **कर्मणि द्वितीयेति।** ङ्याप्प्रातिपदिकादनभिहिते कर्मणि संख्यायां द्वितीया विधीयते। न च क्रियायाः संख्या संभवतीति सामर्थ्यात्कारकस्य ग्रहणम्। **कर्तरि कर्मव्यतिहार** इत्यत्र तु धातोः साक्षात् क्रियायां वृत्त्या क्रियाया एव ग्रहणम् ॥

( उद्द्योतः ) **कर्मणि संख्यायामिति।** कर्मगतसङ्ख्यायामित्यर्थः ॥ **नचेति।** तस्या अद्रव्यत्वेन द्रव्यधर्मलिङ्गाद्ययोगादिति भावः ॥ यद्यपि **रूपवादिसूत्र**स्थभाष्यादेकत्वं क्रियायामस्ति। तथापि द्वित्वाद्यभाव इति तात्पर्यम् ॥ **कारकस्य।** शक्तिमद्द्रव्यम् ॥ **साक्षात्क्रियायामि**त्यस्य क्रियायामेव न तु कर्मकारके इत्यर्थः। अन्यथा साक्षात्पदप्रयोजनं चिन्त्यं स्यात्। न हि धातोः परंपरयापि कारके वृत्तिरस्ति येन तद्व्यावृत्त्या चारितार्थ्यं स्यादित्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**अन्यत्रापीति**—उभयगतिरिति शेषः। **इहैव**—संख्याप्रदेशे एव।

उद्द्योते—कैयटोक्तस्य साधारण्येऽपि सिद्धान्तमतमाह—**कर्मगतेति। तस्याः**—क्रियायाः। **आदिना** संख्यादिपरिग्रहः। भाष्यान्तरविरोधं निराकरोति—**यद्यपीति।** शक्तिग्रहे दूषणतादवस्थ्यादाह—**शक्तिमदिति।** निपातानामनेकार्थत्वात् साक्षात्पदार्थमाह—**एवेति।** तद्व्यवच्छेद्यमाह—**न त्विति। आहुरिति**—प्राञ्च इति शेषः।

( उभयगत्युदाहरणभाष्यम् )

**तथा "साधकतमं करणम्" इति कृत्रिमा करणसंज्ञा। करणप्रदेशेषु चोभयगतिर्भवति—"कर्तृकरणयोस्तृतीया" इति कृत्रिमस्य ग्रहणम्, 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे" इत्यत्राकृत्रिमस्य ॥**

( प्रदीपः ) **कण्वमेघेभ्यः करणे इति।** तव्यादिप्रत्ययोत्पत्त्यर्थं धातुसंज्ञा क्रियते। क्रियावाचिनश्च तव्यादयः साधने उत्पद्यन्त इति सामर्थ्यात् क्रियाग्रहणम् ॥

( उद्द्योतः ) **धातुसंज्ञा** क्यङन्तस्य **सनाद्यन्ता** इत्यनेन ॥ **साधने** कारके **तव्यादयोऽन्तः** कारकापेक्षितक्रियावाचिन एवोत्पद्यन्त इत्यन्वयः ॥

( तत्त्वालोकः ) उद्द्योते—विपरीतान्वयभ्रमनिराकरणायाह—**साधने इति।** तदर्थमाह—**कारके इति।** चार्थमाह—**एवेति।**

( उभयगत्युदाहरणभाष्यम् )

**तथा—"आधारोऽधिकरणम्" इति कृत्रिमा अधिकरणसंज्ञा ॥ अधिकरणप्रदेशेषु चोभयगतिर्भवति—"सप्तम्यधिकरणे च" इति कृत्रिमस्य ग्रहणम्, "विप्रतिषिद्धं चानधिकरणवाचि" इत्यत्राकृत्रिमस्य ॥**

( प्रदीपः ) **विप्रतिषिद्धमिति।** द्वन्द्वावयवानां शक्त्यनभिधायित्वादधिकरणं द्रव्यं गृह्यते ॥

( तत्त्वालोकः ) प्रदीपे—**शक्तीति**—कारकेत्यादिः।

( समाधानान्तरभाष्यम् )

**अथ वा-नेदं संज्ञाकरणम्। तद्वदतिदेशोऽयम्-बहुगणवतुडतयः संख्यावद्भवन्तीति ॥**

( प्रदीपः ) **तद्वदतिदेशोऽयमिति।** संख्याकार्यातिदेशोऽयमित्यर्थः। यदि हि संज्ञा स्याट्टिघुभादिसंज्ञावदेकाक्षरा क्रियेत। तस्माल्लौकिकार्थाभिधायी संख्याशब्द उपादीयमानोऽतिदेशार्थत्वमस्य बोधयति ॥

( उद्द्योतः ) एवं सर्वसंज्ञाविषये समाधाय प्रकृतविषये समाधानान्तराण्याह—**अथवेति** ॥

( तत्त्वालोकः ) भाष्ये—**तद्वदिति**—किन्त्वित्यादिः।

प्रदीपे—तद्वदित्यत्र षष्ठीतत्पुरुषः। तच्छब्देन एकादिका संख्या, मतुपा च कार्यमभिधीयते इत्याशयेनाह—**संख्याकार्येति।** प्राधान्यादित्याशयः। केचित्तु तत्र षष्ठ्यन्ताद्वतिं कथयन्ति। सम्भवादाह—**यदि हीति। स्यादिति**—तर्हीति शेषः। **अस्य**—प्रकृतसूत्रस्य।

( आक्षेपभाष्यम् )

**स तर्हि वतिनिर्देशः कर्तव्यः ॥**

( समाधानभाष्यम् )

**न कर्तव्यः ॥**

( आक्षेपसाधकभाष्यम् )

**न ह्यन्तरेण वतिमतिदेशो गम्यते ॥**

( आक्षेपबाधकभाष्यम् )

**अन्तरेणापि वतिमतिदेशो गम्यते। तद्यथा "एष ब्रह्मदत्तः" अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवतीति। एवमिहाप्यसंख्यां संख्येत्याह, संख्यावदिति गम्यते ॥**

( उद्द्योतः ) ब्रह्मदत्त इत्युक्तिविषयस्याब्रह्मदत्तत्वं स्फोरयितुं ब्रह्मदत्तव्यक्तिं निर्दिशति—**एष ब्रह्मदत्त इति** ॥ **असंख्यां संख्येत्याहेति।** नियतविषयपरिच्छेदहेतुर्हि **सङ्ख्या।** एवंच बहुत्वादेरसङ्ख्यात्वमिति भावः ॥ **बहुत्वं** हि त्र्यादिसङ्ख्याव्यापकमखण्डोपाधिरूपम् ॥

( तत्त्वालोकः ) भाष्ये—**एष ब्रह्मदत्त इति**—इत्यत्रेति शेषः। **ते इति**—अस्य विभक्तिप्रतिरूपकस्य वयमित्यर्थः। अथवा तच्छब्दाज्जसि निष्पन्नस्य तस्य वयमिति शेषः। केचित्तु अत्र "तेने"ति पाठं कल्पयन्ति।

उद्द्योते—**विषयस्येति**—ब्रह्मदत्तत्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयस्य अतिदेशोदाहरणत्वसम्पत्तये **इति** शेषः। **ब्रह्मदत्तव्यक्तिं**—ब्रह्मदत्तातिदेशाश्रयव्यक्तिम्। अस्य "विशेष्यत्वेन विवक्षितां संबन्नाम्ने"ति शेषः। ब्रह्मदत्तभिन्ने ब्रह्मदत्तगतगुणसदृशगुणानवलोक्य "एष ब्रह्मदत्तः" इति प्रयुञ्जानोऽब्रह्मदत्तं ब्रह्मदत्त इत्याह। ततोऽस्य ब्रह्मदत्तसादृश्यमेव विवक्षितमिति भावः। **बहुत्वादेरिति**—नियतविषयपरिच्छेदहेतुत्वाभावादिति भावः। **असंख्यात्वमिति**—किन्तु अतिदेशेन संख्याकार्यमिति शेषः। **त्र्यादीति**—त्रित्वादीत्यर्थः। **अखण्डोपाधिरूपमिति**—एकत्वद्वित्वबद्भेदरूपं वा। बहुत्वन्तु बहितरावृत्तित्वे सति सकलबहुवृत्तित्वम्।

( समाधानान्तरभाष्यम् )

अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवत्येकादिकायाः संख्यायाः संख्याप्रदेशेषु संप्रत्यय' इति। यदयं "संख्याया अतिशदन्तायाः कन्" इति तिशदन्तायाः प्रतिषेधं शास्ति ॥

कथं कृत्वा ज्ञापकम् ? ॥

न हि कृत्रिमा त्यन्ता शदन्ता वा संख्याऽस्ति ॥

**( प्रदीपः )** अथवेति । गुरुसंज्ञाकरणादेकादयः संख्याशब्देन प्रदेशेषु न त्यज्यन्त इति लिङ्गेनाप्यनुमीयत इत्यर्थः ॥

**( उद्द्योतः )** गुर्विति । नन्वतिशदन्ताया इति लिङ्गात्कन्विधौ कृत्रिमा न गृह्येतेति चेन्न । शास्त्रबाधापेक्षया उभयग्रहणज्ञापकत्वस्यैवौचित्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**यत्**—यस्मात्। **अयम्**—आचार्यः। **हि**—यतः। **कृत्रिमेति**—अस्य संख्येत्यनेनान्वयः।

उद्द्योते—नन्वत्र गुरुसंज्ञाकरणादित्यस्य नोपयोग इत्यत आह—**नन्वतिशदिति । कृत्रिमेति**—संख्येति शेषः। **उभयेति**—कृत्रिमाकृत्रिमोभयसंख्येत्यर्थः। अत्र गुरुसंज्ञाकरणं बीजमित्याशयः।

( समाधानबाधकभाष्यम् )

ननु चेयमस्ति डतिः ॥

**( तत्त्वालोकः )** ज्ञापकताविघटनाय तस्य व्यावर्त्यां त्यन्तकृत्रिमसंख्यां दर्शयति—**ननु चेति ।**

( समाधानसाधकभाष्यम् )

यत्तर्हि शदन्तायाः प्रतिषेधं शास्ति ॥

**( तत्त्वालोकः )** **शास्तीति**—तत् तस्य ज्ञापकमिति शेषः।

( संपूर्णसूत्रज्ञापकताभ्युपगमभाष्यम् )

यच्चापि त्यन्तायाः प्रतिषेधं शास्ति ॥

**( तत्त्वालोकः )** **शास्तीति**—तदपि तस्य ज्ञापकमिति शेषः। तथा च तस्य समस्तस्य, तस्य ज्ञापकता फलिता ॥

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—'डत्यर्थमेतत् स्यात्' इति ॥

**( तत्त्वालोकः )** तत्र दर्शितां ज्ञापकताऽनुपपत्तिं स्मारयति—**ननु चेति । डत्यर्थं**—डतिव्यावृत्त्यर्थम्। **एतत्**—त्यन्तप्रतिषेधनम्।

( समाधानभाष्यम् )

"अर्थवद्ग्रहणे नानर्थकस्य" इति अर्थवतस्तिशब्दस्य ग्रहणम् । न च डतेस्तिशब्दोऽर्थवान् ॥

**( प्रदीपः )** **अर्थवत इति ।** ननूभयसंभव इयं परिभाषोपतिष्ठते। डत्यन्ता च कृत्रिमास्ति, डतेश्च तिशब्दोऽनर्थक एवेति तस्यैव निषेधः स्यादित्यज्ञापकस्त्यन्तायाः प्रतिषेधः ॥ नैष दोषः, **अतिशदन्ताया** इत्युच्चारणकाल एवार्थवतस्तिशब्दस्य ग्रहणमिति प्रतीतिरिति ज्ञापकत्वमेव प्रतिषेधस्य ॥

**( उद्द्योतः )** **नैष इति । अतिशदन्ताया** इत्यस्य बहुव्रीहिगर्भतत्पुरुषत्वेन सङ्ख्याविशेषणतया विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वाच्च तत्पदजन्योपस्थितिकालेऽर्थवदनर्थकयोः संभवेन पूर्वमर्थवत एव ग्रहणे निर्णीते पश्चात्संख्यापदार्थान्वयवेलायां जायमानानुपपत्तिज्ञानेन ज्ञापकत्वमेव कल्प्यत इति भावः। एतत्पक्षद्वये महासंज्ञाया अनुग्राहकत्वं वक्तुमयुक्तम्, तन्मूलकपक्षान्तरस्याग्रे वक्ष्यमाणत्वादित्यन्ये ॥

**(तत्त्वालोकः)** भाष्ये—**अर्थवदिति**—नैष दोषः, यत इत्यादिः।

प्रदीपे—**उभयसम्भवे**—अर्थवदनर्थकोभयसंभवे । **इयम्**—"अर्थवदि"ति। **कृत्रिमा**—कृत्रिमसंख्या । **एवेति**—अर्थवतोऽसंभवादिति भावः। **तस्यैवेति**—डतेरेवेत्यर्थः। तेनेति शेषः।

उद्द्योते—**बहुव्रीहीति**—द्वन्द्वगर्भेत्यादिः । **तत्पदेति**—अतिशदन्ताया इति पदेत्यर्थः। कैयटोक्तं खण्डयति—**एतत्पक्षद्वये इति ।** व्याख्यानाद्युक्तहेतोश्चोक्तार्थसिद्धेरिति भावः। **तन्मूलकेति**—महासंज्ञाकरणमूलकेत्यर्थः।

( समाधानान्तरभाष्यम् )

अथ वा महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥

कुत एतत् ? ॥

लघ्वर्थं हि संज्ञाकरणम् ॥ तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—संख्यायते अनया संख्येति । एकादिकया चापि संख्यायते ॥

**( प्रदीपः )** **अथ वेति ।** ननु महत्याः संज्ञायाः करणात्तदर्थानुगतानामुपात्तानामेव संज्ञिनां भवतु संज्ञा यथा सर्वादीनामेव सर्वनामसंज्ञा, न त्वधिकानाम् । तेन बहुगणशब्दयोः सङ्घवैपुल्यवाचिनोः संज्ञा मा भूत्, एकादीनां तु कथं स्यात् ॥ नैष दोषः, इहान्वर्थसंज्ञाकरणेन तावदनुरूपः संज्ञी सर्व आक्षिप्यते। तेनैकादीनां तावद् ग्रहणं भवति पश्चाद्**बहुगणवतुडती**ति भूर्यादिनिवृत्त्यर्थं नियमार्थं व्याख्यायते। अत एव सङ्घवैपुल्यवृत्त्योर्बहुगणशब्दयोः संज्ञा न भवति। तद्वदतिदेशपक्षेऽपि परस्परसाहचर्यात् संख्यावाचिनोरेव भूर्यादिनिवृत्तये नियमायातिदेशः क्रियत इत्यतिप्रसङ्गो न भवति ॥

**( उद्द्योतः )** भाष्ये—**संज्ञा च नामेति ।** नाम प्रसिद्धमेतद् यतोऽन्यल्लघीयो न भवति सा संज्ञेति । **तदर्थानुगतानामिति ।** सङ्ख्यानकरणत्वसमानाधिकरणसङ्ख्याशब्दवदभिन्ना बह्वादय इत्यर्थादिति भावः ॥ **कथं स्यादिति ।** महासंज्ञाकरणस्य चरितार्थतया **कृत्रिमन्याय**बाधे मानाभावादिति भावः ॥ **सर्व इति ।** नियतानियतसङ्ख्यावाचीत्यर्थः ॥ **आक्षिप्यत इति । सङ्ख्येति** विभक्तसूत्रे इति शेषः। एवंच सङ्ख्यानकरणीभूताः सङ्ख्यासंज्ञका इत्यर्थः ॥ संज्ञायाः संज्ञाकाङ्क्षतया तद्वाचकं पदमुपस्थितान्वर्थवाचकमेव कल्प्यत इत्ययमेवात्राक्षेप इति भावः ॥ **नियमार्थमिति । बहुगणेति** द्वितीयसूत्रे सङ्ख्येति वर्तते । अनियतसङ्ख्यावाचिनां चेद्बह्वादीनामेवेति भावः ॥ **अत एवेति ।** अन्वर्थत्वाश्रयणादेवेत्यर्थः ॥ **संज्ञा न भवतीति ।** प्राप्तेरेवाभावादिति भावः ॥ **सङ्ख्यावाचिनोरेवेति ।** बहुगणयोरित्यर्थः ॥ **नियमायेति ।** नियमफलक इत्यर्थः ॥ परे तु परस्परसाहचर्यात्सङ्ख्याव्यापकार्थवाचिनोरेव बहुगणयोर्ग्रहणं न तु सङ्घवैपुल्यवचनयोरिति व्यर्थान्वर्थसंज्ञा । तस्मात्प्रदेशेषु लोकप्रसिद्धकेवलयोगार्थस्यापि ग्रहणार्थं महती संज्ञेति भाष्याशयः ॥ **असङ्ख्यां सङ्ख्येत्याहेति**भाष्येण बह्वादिषु सङ्ख्यापदयोगार्थाभावबोधनाच्चेति योगविभागो व्यर्थः ॥ **एकादिकया चापि सङ्ख्यायते** इत्यस्य एकादिकया संख्यायते सापि सङ्ख्याप्रदेशेषु यथा गृह्येतेति महासंज्ञाकरणमित्यर्थः।

चस्तु वाक्यालङ्कारे। उभावपि वा वाक्यालङ्कार एव। यद्वा बह्वादिकयापि सङ्ख्यायते स्वव्याप्यत्रित्वादिद्वारेत्यर्थः॥ वत्वन्तडत्यन्तयोर्यावदादिशब्दकतिशब्दयोर्यद्यपि साक्षात्सङ्ख्यानकरणीभूतार्थप्रतिपादकत्वनुपपादयितुमशक्यम्। तथापि कतीत्यत्र सङ्ख्यानकरणीभूतार्थविषयप्रश्नार्थकत्वेन तत्त्वम्। एवं वत्वन्तेऽप्यूह्यमित्याहुः।

**(तत्त्वालोकः)** भाष्ये—**इयं**—संख्या। **हि**—यतः। **संज्ञायाः**-संख्यासंज्ञायाः।

प्रदीपे—**संज्ञा**—संख्यासंज्ञा। एवमग्रेऽपि। **कथमिति**—संज्ञेति शेषः। **तावदनुरूपः**—अन्वर्थसंज्ञानुरूपः।

उद्द्योते—एकयोगेनोभयालाभादाह—**संख्येति विभक्तेति**। अन्यथाप्युपपत्त्या मुख्याक्षेपासंभवादाह—**संज्ञाया इति**। **तद्वाचकं**-संज्ञिवाचकम्। **वर्त्तते**—अनुवर्त्तते। तादर्थ्ये चतुर्थीमभिप्रेत्याह—**नियमफलेति**। कैयटोक्तं खण्डयति—**परे त्विति**। भाष्यं सङ्गमयति-**तस्मादिति**। **सापि**—एकादिका संख्याऽपि। लाघवादावश्यकत्वाह—**उभाविति**। चापी इत्यर्थः। अपि सार्थकयति—**यद्वेति**। शङ्कते—**वत्वन्तेति**। **साक्षादिति**—अस्य प्रतिपादकत्वमित्यत्रान्वयः। **तत्त्वं**—संख्यानकरणीभूतार्थप्रतिपादकत्वम्॥ केचित्तु—बहुत्वं त्रित्वादिरूपमेव। बहुत्वत्वन्तु त्रित्वत्वादिव्यापकम् एकत्वद्वित्वावच्छेदविशिष्टसंख्यात्वरूपं जातिरूपं वा। इति वदन्ति। किन्त्वत्र मते भूर्यादिपदानामपि संख्यावाचकत्वेन तत्प्रयुक्तकार्यापत्तिः। न च नियमेनैव तद्वारणमिति वाच्यम्, सूत्रसत्त्वे नियमेन वारणसम्भवेऽपि तत्प्रत्याख्याने नियमासत्त्वेन वारणासंभवात्। न च बहुत्वस्यासंख्यात्वे "संख्या चैव तथा तिङामित्य"त्र भाष्ये संख्यापदेन बहुत्वस्य बोधो न स्यादिति वाच्यम्, शब्दार्थयोस्तादात्म्यात् बहुशब्दस्य संख्यासंज्ञकत्वे बहुत्वस्यापि तत्संज्ञकत्वेन तस्यापि संख्यापदेन व्यवहारसम्भवात्॥

## ( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

**उत्तरार्थेन चापि नार्थः संख्याग्रहणेन। इदं प्रकृतमुत्तरत्रानुवर्तिष्यते॥**

**( तत्त्वालोकः )** सिद्धान्ती द्वितीयं प्रयोजनमपि निराकरोति—**उत्तरार्थेनेति**। **संख्येति**—अत्रेत्यादिः। **इदमिति**—यत इत्यादिः। **उत्तरत्र**—"ष्णान्ता षडि"त्यत्र।

## ( आक्षेपभाष्यम् )

**इदं वै संज्ञार्थम्, उत्तरत्र च संज्ञिविशेषणेनार्थः। न चान्यार्थं प्रकृतमन्यार्थं भवति॥ न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद्भवति। न हि गोधा सर्पन्ती सर्पणादहिर्भवति॥**

**( प्रदीपः ) संज्ञिविशेषणेनार्थ इति**। **ष्णान्तेत्यनेन** विशिष्टं संज्ञिनं प्रतिपादयितुमुपयोग इत्यर्थः॥ **नचान्यार्थमिति**। एकशब्दत्वदर्शन इति भावः॥ भवतु तर्हि प्रतियोगं शब्दभेद इत्याह—**न खल्वपीति**। यथा गोधा देशान्तरगमनमात्रेण गोधात्वं न जहात्येवं शब्दोऽपि रूपान्तरं न गृह्णात्येवेत्यर्थः॥

**( उद्द्योतः )** भाष्ये **संज्ञार्थमिति**। संज्ञा शब्दस्वरूपं तदर्थकमित्यर्थः। संज्ञिनिरूपितसङ्ख्याशब्दनिष्ठशक्तत्त्वगमार्थं स्वरूपपरमिति भावः॥ ननु **ष्णान्तेत्यनेन** सङ्ख्या विशेष्यत इति संज्ञिविशेषणं सङ्ख्याग्रहणमित्ययुक्तमत आह—**ष्णान्तेति**। भाष्ये **संज्ञी** षट्संज्ञासंज्ञी **विशेष्यते** स्वेतरव्यावृत्ततया प्रतिपाद्यते **येनेत्यर्थः**॥ ननु स्वरितत्वबलेनानुमीयमानस्य शब्दान्तरत्वाच्छब्दभेदेनार्थभेदस्य सत्त्वेन **न चान्यार्थमित्ययुक्तमत** आह—**एकेति**। यस्य स्वरितत्वं प्रतिज्ञातं तदेवानुवर्त्तते न तु तज्जातीयं शब्दान्तरमिति भावः॥ अर्थाधिकार एव चाभ्यर्हितः तदर्थस्य चायोग्यत्वादिहासंबन्ध इति भावः॥ **इत्याहेति**। इत्याशङ्क्याहेत्यर्थः॥ भाष्ये—**न खल्वपीति** प्रकृतमनुवर्तनाद्देशान्तरगमनादन्यद्भवतीति न खलु इत्यन्वयः॥ **यथेति**। सर्पणस्योभयत्र तुल्यत्वेन प्रसक्तमहित्वं गोधाया वार्यत इति नार्थः, सर्पणस्याहिशब्दप्रवृत्तिनिमित्तत्वाभावात् किं तु देशान्तरगमनं नान्यत्वापादकमित्यर्थ इति भावः॥ **रूपान्तरम्** अर्थभेदम्॥

**( तत्त्वालोकः )** भाष्ये—पूर्वपक्षी शङ्कते—**इदमिति**। प्रकृतमिति शेषः। **वै इति**—निश्चयार्थकः। **न च**—नहि। **खल्विति**—निश्चयार्थकः। **अपीति**—समुच्चयार्थकः। **गोधा**—"गोह" इति प्रसिद्धा।

प्रदीपे—**शब्दोऽपीति**—देशान्तरगमनमात्रेणेति शेषः।

उद्द्योते—एवं कैयटाशयमप्रतिपाद्य भाष्याशयान्तरमाह—**अर्थाधिकार इति**। **तदर्थस्य**—संख्यार्थस्य। **इह**—ष्णान्ता षडित्यत्र। **उभयत्र**—सर्पे गोधायाञ्च। **भाव इति**—भाष्यस्येत्याशयः।

## ( आक्षेपप्रथमयुक्तिसमाधानभाष्यम् )

**यत्तावदुच्यते- न चान्यार्थं प्रकृतमन्यार्थं भवतीति॥ अन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते॥**

**( प्रदीपः ) अन्यार्थमपीति**। पदार्थानां शक्तिवैचित्र्यात्॥

**( उद्द्योतः ) पदार्थानामिति**। द्वन्द्वः॥ **शक्तिवैचित्र्याद्**। अनेकशक्तित्वादित्यर्थः॥ एवंच पूर्वत्र तया शक्त्या स्वरूपपरस्यापि उत्तरत्रान्यया शक्त्या योग्यतावशादर्थपरत्वे बाधकाभावः। शब्दाधिकारोऽत्र लक्ष्यानुरोधादाश्रीयत इति भावः॥

**( तत्त्वालोकः ) तावत्**—प्रथमम्। **अन्यार्थमपीति**—तत्र, यत इत्यादिः। **उपस्पृश्यते**—आचम्यते।

उद्द्योते—**पूर्वत्रेति**—संख्यासंज्ञासूत्रे इत्यर्थः। **तया**—संज्ञिनिरूपितया। **उत्तरत्रेति**—षट्संज्ञासूत्रे इत्यर्थः। संख्याशब्दस्येत्यादिः। स्वोक्तयुक्तेः समाधानमाह **शब्दाधिकार इति**।

## ( आक्षेपद्वितीययुक्तिसमाधानभाष्यम् )

**यदप्युच्यते—न खल्वप्यन्यत् प्रकृतमनुवर्तनादन्यद्भवति। नहि गोधा सर्पन्ती सर्पणादहिर्भवतीति॥ भवेद्—द्रव्येष्वेतदेवं स्यात्। शब्दस्तु खलु येन येन विशेषेणाभिसंबध्यते, तस्य तस्य विशेषको भवति॥**

**( प्रदीपः ) शब्दस्त्विति**। स्वरितत्वेन वाक्यान्तरे शब्दान्तरं वाक्यार्थानुग्राहिवस्तुप्रतिपादनयोग्यमनुमीयते। सादृश्यात्तु तत्त्वाध्यवसाय इत्यर्थः॥

**(उद्द्योतः)** [ भाष्ये ] **भवेद् द्रव्येष्वेतदेवं स्यादिति**। **स्यादिति** संभावनायां लिङ् **भवेदिति** प्रार्थनायाम्। द्रव्ये विषये पूर्वोक्तार्थकर्तृका संभाविता सत्ता भवत्वित्यर्थः॥ शब्दभेदनयेऽपि न क्षतिरित्याह—**शब्दस्त्विति॥ येनयेन विशेषेणेति**। विशेष्यत इति **विशेषः** परिच्छेद्यम्॥ **विशेषकः** परिच्छेदकः। तत्परिच्छेदकार्थवानन्य एव शब्दो भवतीत्यर्थः॥ तदुपपादयति—**स्वरितत्वेनेति॥**

( तत्त्वालोकः ) भाष्ये—भवेदिति—तत्रोच्यते इत्यादिः । भवति—भवतीति ।

उद्द्योते—एतदेवमित्यस्यार्थमाह—पूर्वोक्तेति । एकस्यैव "तन्ये" त्यस्य पाठं सूचयन्नाह—तत्परिच्छेदकेति ।

( समाधानयुक्त्यन्तरभाष्यम् )

अथ वा—सापेक्षोऽयं [ "ष्णान्ता" इति ] निर्देशः क्रियते । न चान्यत्किंचिदपेक्ष्यमस्ति । ते संख्यामेवापेक्षिष्यामहे ॥

( प्रदीपः ) सापेक्षोऽयमिति । लौकिकेन निर्देशः कृतः । तत्र प्रकृतत्वादन्यपदार्थत्वेन संख्या स्वरितत्वेन विनाप्यपेक्ष्यत इत्यर्थः ।

( तत्त्वालोकः ) भाष्ये—ते इति—वयमित्यर्थः । वयमिति शेषो वा । केचित्तु अत्र "तेने" ति पाठमभिप्रयन्ति ।

प्रदीपे—अपेक्ष्यते इति—तथा चायं लौकिकोऽपेक्षालक्षणोऽधिकार इत्याशयः ।

( २०० आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अध्यर्धग्रहणं च समासकन्विध्यर्थम् ॥ * ॥

( भाष्यम् )

अध्यर्धग्रहणं च कर्तव्यम् ॥

किं प्रयोजनम् ? ॥

समासकन्विध्यर्थम् । समासविध्यर्थम् , कन्विध्यर्थं च ॥ समासविध्यर्थं तावत्—अध्यर्धशूर्पम् ॥ कन्विध्यर्थम्—अध्यर्धकम् ।

( प्रदीपः ) अध्यर्धग्रहणं चेति । वार्तिके संख्याग्रहणं कर्तव्यत्वेन स्थितम् । तदपेक्षया समुच्चयार्थश्चशब्दः । विध्यर्थं चेदं ग्रहणम्, अध्यर्धशब्दस्य त्रिभागचतुर्भागादिशब्दवदसंख्यावाचित्वात् । अर्धशब्दश्चैकदेशवाची न संख्यावाची एकदेशादिशब्दवत् । तस्याधिशब्देन समासे कृते यौगिकोर्थः प्रतीयते न संख्या ॥ अध्यर्धशूर्पमिति । अध्यर्धेन शूर्पेण क्रीतमिति दिक्संख्ये इत्यनुवर्तमाने तद्धितार्थेति समासः । ततः शूर्पादञन्यतरस्यामिति अञ्छो वाध्यर्धपूर्वेति लुक् ॥ अध्यर्धकमिति । संख्याया अतिशदन्तायाः कन्निति कन् ॥

( उद्द्योतः ) अध्यर्धस्यासंख्यावाचित्वमुक्तमुपपादयति—अर्धशब्दश्चेति ॥

( तत्त्वालोकः ) भाष्ये—अध्यर्धेति—अत्रेत्यादिः । समासकन्निति—अत्र समासस्याभ्यर्हितत्वात्पूर्वनिपातः । केचित्तु "लक्षणहेत्वोः" "अजाद्यतः" इत्यादिनिर्देशात् पूर्वनिपातप्रकरणस्य प्रायिकत्वादत्रोपपत्तिं कथयन्ति । अध्यर्धकमिति—अत्र अर्धेनाधिकमध्यर्धम् , अध्यर्धेन क्रीतमध्यर्धकमिति व्युत्पत्तिः ।

प्रदीपे—भाष्ये तस्य प्रत्याख्यातत्वादाह—वार्तिके इति । तदपेक्षयेति—अत्रेति शेषः । इदं ग्रहणम्—अध्यर्धग्रहणम् । तत्र बीजमाह—अध्यर्धेति । तस्य—अर्धशब्दस्य ।

( २०१ आक्षेपप्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥*॥ लुकि चाऽग्रहणम् ॥*॥

( भाष्यम् )

लुकि चाध्यर्धग्रहणं न कर्तव्यं भवति—"अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम्" इति । "द्विगोः" इत्येव सिद्धम् ॥

( प्रदीपः ) द्विगोरित्येव सिद्धमिति । समासविध्यर्थमिति संबन्धसामान्ये षष्ठी । तेन समासे विधीयमाने समासनिमित्ते चान्यस्मिन् कार्ये विधीयमान इत्यर्थः । तेन द्विगुनिमित्तो लुगपि लभ्यते ॥

अन्ये त्वाहुः । अध्यर्धशब्दः संख्यावाच्येव । तथाहि गण्यते—एकोऽध्यर्धो द्वावर्धत्रय इति । तन्मते नियमार्थमध्यर्धशब्दस्यैव संख्यात्वेन ग्रहणं यथा स्यात् सार्धादीनां मा भूदिति ॥ वाक्यभेदेन च द्वितीयो नियमस्तस्य च समासकन्विध्यर्थं संख्यात्वं न कार्यान्तरार्थमित्यर्थः ॥

( उद्द्योतः ) ननु समासकन्सिद्ध्यै विधीयमाना संज्ञा कथं लुको निमित्तमत आह—समासेति । समासपदेन द्विगुसमास एव, तस्यैव सङ्ख्यानिमित्तकत्वात् । तन्निमित्तकमपि द्विगुनिमित्तकमेवेत्याह—तेन द्विगुविति ॥

( तत्त्वालोकः ) भाष्ये—अत्राध्यर्धग्रहणकरणस्य प्रयोजनान्तरमाह—लुकि चेति । अध्यर्धपूर्वद्विगोरिति—अत्र समाहारद्वन्द्वे सौत्रं पुंस्त्वम् । केचित्तु अध्यर्धपूर्वाद्द्विगोरिति पाठमभिप्रयन्ति । द्विगोरिति—यत इत्यादिः ।

प्रदीपे—आहुरितिसूचितारुचिर्बीजन्तु प्रसिद्धिविरोध एव । नियमार्थमिति—"अत्राध्यर्धग्रहणमि"त्यादिः ।

उद्द्योते—संज्ञा—संख्यासंज्ञा । ननु द्विगुसंज्ञानिमित्तकस्य लुकः समाससंख्यासंज्ञानिमित्तकत्वाभावात्कथमिदमित्यत आह—समासपदेनेति । तन्निमित्तकमपि—द्विगुसमासनिमित्तकमपि ।

( २०२ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥*॥ अर्धपूर्वपदश्च पूरणप्रत्ययान्तः ॥*॥

( भाष्यम् )

अर्धपूर्वपदश्च पूरणप्रत्ययान्तः सङ्ख्यासंज्ञो भवतीति वक्तव्यम् ॥

किं प्रयोजनम् ? ॥

समासकन्विध्यर्थमेव । समासविध्यर्थं कन्विध्यर्थं च । समासविध्यर्थं तावत्—अर्धपञ्चमशूर्पम् ॥ कन्विध्यर्थम्—अर्धपञ्चमकम् ॥

( तत्त्वालोकः ) चकारः—पूर्वसमुच्चायकः । पूरणप्रत्ययान्तः—पूरणप्रत्ययान्तोत्तरपदकः । संख्येत्यनुवृत्तेराह—संख्यासंज्ञ इति । अनुवृत्तमाह—समासकन्निति ।

( २०३ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अधिकग्रहणं चालुकि समासोत्तरपदवृद्ध्यर्थम् ॥ * ॥

( भाष्यम् )

अधिकग्रहणं चालुकि कर्तव्यम् ॥

किं प्रयोजनम् ? ॥

समासोत्तरपदवृद्ध्यर्थम् । समासविध्यर्थमुत्तरपदवृद्ध्यर्थं च । समासविध्यर्थं तावत् —अधिकषाष्टिकः । अधिकसाप्ततिकः ॥ उत्तरपदवृद्ध्यर्थम्—अधिकषाष्टिकः । अधिकसाप्ततिकः ॥

अलुकीति किमर्थम् ? ।

अधिकषाष्टिकः । अधिकसाप्ततिकः ॥

**( प्रदीपः )** **अधिकषाष्टिक इति** । अधिकया षष्ट्या क्रीत इति संख्याविशेषणमधिकशब्दो, न संख्येति वचनम् । **तद्धितार्थेति** समासः । **प्राग्वतेष्ठञ्** । **अलुकीति** वचनाल्लुकि कर्तव्ये संख्यासंज्ञा नास्तीत्यध्यर्धपूर्वेति लुङ् न भवति । ततः **संख्यायाः संवत्सरसंख्यस्य चे**त्युत्तरपदवृद्धिः ॥ ननूत्तर**पदवृद्ध्यर्थ**मिति वचनाल्लुङ् न भविष्यति, किमलुकीत्यनेन ॥ नैतदस्ति, अर्हत्यर्थात् परेष्वर्थेषु यः प्रत्ययस्तस्य लुगभावात्तत्रैवोत्तरपदवृद्धिः स्यात् ॥

**( उद्द्योतः )** भाष्ये **अधिकग्रहणं चेति** । लुग्भिन्नसङ्ख्याकार्यसिद्ध्यर्थमधिकग्रहणं सङ्ख्यासंज्ञायां कर्तव्यमित्यर्थः ॥ **नन्विति** । ञ्णिदादिषु तद्विधानादिति भावः ॥ **परेष्वर्थेष्विति** ॥ **तमधीष्ट** इत्यादिष्वित्यर्थः ॥

**(तत्त्वालोकः)** प्रदीपे—**इति वचनम्—**इति हेतोः वचनम् । **नास्तीति—**इति द्विगुत्वमपि नास्तीति शेषः ।

उद्द्योते—वार्त्तिके कन्नप्युपलक्षणमित्यभिप्रेत्याह—**लुग्भिन्नेति** । एतेन द्विगुसंज्ञामात्रस्य लुक्यपेक्षया तत्र संख्यासंज्ञाऽभावेपि लुकः सिद्धेरलुकीत्याद्ययुक्तमिति वदन्तः परास्ताः ।

( २०४ आक्षेपप्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ बहुव्रीहौ चाग्रहणम् ॥ * ॥

( भाष्यम् )

बहुव्रीहौ चाधिकशब्दस्य ग्रहणं न कर्तव्यं भवति । "संख्ययाऽव्ययासन्नादूराधिकसंख्याः सख्येये" इति । संख्येयेत्येव सिद्धम् ॥

**( तत्त्वालोकः )** अत्राधिकग्रहणकरणस्य फलान्तरमाह— **बहुव्रीहौ चेति** । **संख्येयेत्येवेति**—यत इत्यादिः ।

( २०५ प्रत्याख्यानवार्तिकप्रथमखण्डम् ॥ ८ ॥ )

## ॥*॥ बह्वादीनामग्रहणम् ॥*॥

( भाष्यम् )

बह्वादीनां ग्रहणं शक्यमकर्तुम् ॥

**( तत्त्वालोकः)** "बहुगणे"ति सूत्रं प्रत्याख्यातुं "बह्वादीनामग्रहणं ज्ञापकात्सिद्धमि"ति वार्त्तिकं खण्डशो व्याचष्टे—**बह्वादीनामेति** । अत्रेत्यादिः ।

( आक्षेपभाष्यम् )

केनेदानीं संख्याप्रदेशेषु संख्यासंप्रत्ययो भविष्यति? ॥

**( तत्त्वालोकः )** तत्प्रत्याख्यानसाधकवार्त्तिकद्वितीयखण्डमवतारयति—**केनेति** । **इदानीम्**—अत्र बह्वादिग्रहणाभावे ।

( २०६ प्रत्याख्यानसाधकवार्तिकद्वितीयखण्डम् ॥ ८ ॥ )

## ॥ * ॥ ज्ञापकात्सिद्धम् ॥ * ॥

( भाष्यम् )

ज्ञापकात् सिद्धमेतत् ॥

ज्ञापकं किम् ? ॥

यदयं-"वतोरिड्वा" इति संख्याया विहितस्य कनो वत्वन्तादिटं शास्ति ॥

**( तत्त्वालोकः )** **एतत्**—संख्याप्रदेशेषु संख्यासंप्रत्ययनम् । **अयम्**—आचार्यः । **शास्तीति**—तदिति शेषः । तेन बह्वादीनां संख्यात्वं ज्ञाप्यते, अन्यथा वत्वन्तात्कनोऽभावेन तस्मात्तस्येड्विधानं व्यर्थं स्यादित्याशयः ।

( आक्षेपभाष्यम् )

वतोरेव तज्ज्ञापकं स्यात् ॥

**( तत्त्वालोकः )** शङ्कते—**वतोरेवेति** । वत्वन्तस्यैवेत्यर्थः । प्रकृतसूत्रसत्त्वे तत्रापि वतुडतिभ्यां तदन्तग्रहणम् । न च संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति निषेधः, वतुडत्योः केवलयो संज्ञायाः प्रयोजनाभावात् सामर्थ्येन तदन्तग्रहणात् ॥ **ज्ञापकं**—संख्यात्वज्ञापकम् ।

( समाधानभाष्यम् )

नेत्याह । योगापेक्षं ज्ञापकम् ॥ बहुगण ॥ २२ ॥

**( प्रदीपः )** **ज्ञापकात्सिद्धमिति** । एकादिवन्नियतसंख्यावाचित्वं बह्वादीनां नास्तीति ज्ञापकाश्रयः ॥ **योगापेक्षमिति** । अस्य योगस्य प्रत्याख्यानादेतद्योगापेक्षमिति न बोद्धव्यम्, किंतु योगानपेक्षत इति योगापेक्षम् । यदयं **बहुपूगगणसङ्घस्य तिथुक् वतोरिथुक् षट्कतीति** डटि परत आगमं शास्ति, तज्ज्ञापयति—भवति संख्याकार्यमिति ॥ २२ ॥

**( उद्द्योतः )** **नियतसङ्ख्यावाचित्वमिति** । नियतविषयपरिच्छेदहेतुत्वरूपसङ्ख्यावाचित्वमित्यर्थः ॥ भाष्ये—**यदयमिति** । न च वैपुल्यादिवाचिनामपि संख्याकार्यापत्तिः, संख्यापदार्थसंबन्धिबह्वादिग्रहणज्ञापनेन चरितार्थस्य सर्वथा तदसंबन्धिवैपुल्यादिवाचकग्रहणज्ञापने सामर्थ्याभावात् । पूगादिभ्यो डडर्थं **बहुगणेति** सूत्रे कृतेऽपि ज्ञापकावश्यकत्वमिति भावः ॥ केचित्तु **'वतोरिड्वे'** त्यनेन संख्याकरणत्वाभाववतामप्यन्येषां प्रयोगेषु दृश्यमानसंख्याकार्याणां संख्याकार्यं ज्ञाप्यते । तेनाधिकादीनामपि सिद्धं तदाह—**योगापेक्षमिति** । प्रयोगापेक्षमित्यर्थः । एतेन पूगादिभ्यः शसादिप्रसङ्गोऽपि वारित इत्याहुः ॥ २२ ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थ उत्तरमनुवदति—**नेत्याहेति** । न ( वत्वन्तस्यैव संख्यात्वज्ञापकं तत् ) **इति** ( सिद्धान्ती ) वदतीत्यर्थः । कुत **इत्यत आह—योगेति** । यत इत्यादिः ।

प्रदीपे—**अस्य**—"बहुगणे"त्यस्य । **अयम्**—आचार्यः । **भवतीति**—बह्वादीनामिति शेषः ।

उद्द्योते—यथाश्रुतासङ्गतेराह—**नियतविषयेति** । **नचेति**—ज्ञापकाश्रयणेन सूत्रप्रत्याख्यानपक्षे, बहुपूगगणसंघेत्यादौ विशेषाश्रवणादिति शेषः । **संख्याकार्यापत्तिरिति**—बह्वादीनामित्यादिः । सूत्रपक्षे तु **अन्वर्थसंज्ञा**बलेन संख्यावाचिनामेव संज्ञेति न तेषां तदापत्तिरिति फलभेदात्प्रत्याख्यानं न युक्तमिति भावः । **तदसम्बन्धीति**—संख्या-

पदार्थासम्बन्धीत्यर्थः ॥ नचैवमपि सूत्रपक्षे अनियतसंख्यावाचिनां, चेत्संख्यात्वं तर्हि बह्वादीनामेवेति नियमाद् भूर्यादीनां न तद्भवति सूत्रप्रत्याख्यानपक्षे तु तेषामपि संख्याकार्यप्रसङ्गः इति फलभेदस्त-दवस्थ एवेति वाच्यम्, नियतसंख्यावाचिनां पञ्चादीनामेव लोके संख्याशब्देन प्रसिद्धतरत्वात्. प्रसिद्धाप्रसिद्धयोः प्रसिद्धग्रहणस्यैव न्याय्यत्वात् ॥ नन्वेवमपि बहुगणयोरिव पूगसंघादीनामपि धाशस्कृ-त्वसुजादिसंख्याकार्यप्रसङ्गः, अन्यथा तेभ्यो डडपि नोपपद्येत । नच बहुगणयोः सामान्यापेक्षं ज्ञापकं, पूगादीनां तु डड्विषयकमेव तदिति वाच्यम्, अनुपपत्तेः समानत्वेनैकसूत्रोपात्तत्वेन च वैषम्ये बीजाभा वादिति चेन्न, लक्ष्यानुरोधेन क्वचित्सामान्यापेक्षं ज्ञापकं क्वचिद्विशेषापेक्षं तदित्याश्रयणात्तदनुरोधेन वैषम्यस्य सोढव्यत्वात् ॥ इमं कुप्रपञ्चमस-हमानेनैव सूत्रकृता सूत्रं प्रकृतं कृतमित्याशयेनाह— **पूगादिभ्य इति ।** कैयटोक्ताशयापेक्षयाऽऽशयान्तरमाह— **केचित्त्विति । शसादीति—** "संख्यैकवचनाच्चे"त्यनेनेत्यादिः । तथा च सूत्रकृता स्थापितं प्रकृत-सूत्रं, वार्त्तिककृता प्रत्याख्यातम् । वार्त्तिककृता च स्थापितमत्र संख्या दिग्रहणं, भाष्यकृता प्रत्याख्यातमिति भावः ॥

---

**( १३ षट्संज्ञासूत्रम् ॥ १।१।५ आ० १२ ॥ )**

# ष्णान्ता षट् ॥ १ । १ । २३ ॥

**( अनिष्टापत्तीष्टानुपपत्तिनिराकरणाधिकरणम् )**

**( २०७ आक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ षट्संज्ञायामुपदेशवचनं [ शताद्यष्टनोर्नुम्नुडर्थम् ] ॥ * ॥

**( भाष्यम् )**

**षट्संज्ञायामुपदेशग्रहणं कर्तव्यम् । उपदेशे षकार-नकारान्ता संख्या षट्संज्ञा भवतीति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**शताद्यष्टनोर्नुम्नुडर्थम् । शतानि सहस्राणि । नुमि कृते "ष्णान्ता षट्" इति षट्संज्ञा प्राप्नोति । उपदेश-ग्रहणान्न भवति ॥ अष्टानामित्यत्राऽऽत्वे कृते षट्संज्ञा न प्राप्नोति । उपदेशग्रहणाद्भवति ॥**

**( प्रदीपः ) ष्णान्ता ॥ २३ ॥ षट्संज्ञायामिति** प्रकृतिप्रत्यया-दिविभागेन प्रतिपादनं गुणैः प्रापणमुपदेशः । तेन प्रकृतिप्रत्ययाद्युप-देशे या षकारनकारान्ता संख्या सा षट्संज्ञेत्यर्थः ॥ **नुम्नुडर्थमिति ।** अर्थशब्दः प्रयोजनवाची । तत्र नुमि शतानीत्यादौ षट्संज्ञानिवृत्तिः प्रयोजनम्, नुटि तु विधीयमाने षट्संज्ञाप्रवृत्तिः प्रयोजनम् ॥ **अष्टानामिति ।** परत्वान्नित्यत्वाच्चात्वे कृते नुटोऽप्राप्तिः । कार्यकाल-त्वात्संज्ञायाः प्रवृत्तेर्नास्त्यन्तरङ्गत्वम् ॥

**( उद्द्योतः ) ष्णान्ता षट् ॥ २३ ॥** स्वरूपप्रतिपत्त्यर्थाद्योच्चार-णस्यान्यत्रोपदेशत्वप्रसिद्धेरुपदेशग्रहणे पञ्चादिषु न स्यादत आह— **प्रकृतीति ।** प्रकृतिप्रत्ययविभागेन प्रतिपादनरूपं यद् गुणैः प्रापणं तदुपदेशपदेनात्र गृह्यत इत्यर्थः ॥ एतदभिप्रायेणैवो**पदेशोऽजिति** सूत्रे वक्ष्यति— **'संकीर्णावुद्देशोपदेशा'** विति ॥ **प्रत्ययाद्युपदेश इति ।** आदिनाऽऽगमः । यथा सप्तनादौ **सप्यशूभ्यां तुट्चेति** प्रकृत्यादि-भिरुपदेशे प्रातिपदिकस्वरूपबोधने या ष्णान्ता सङ्ख्या निष्पन्ना भवति सेत्यर्थः ॥ यद्यपि शतानीत्यादावपि नुमागमोपदेशेन नान्तसङ्ख्या-निष्पत्तिरस्ति । तथापि विभक्त्युत्पत्त्यवधिभूतप्रातिपदिकस्वरूपनिष्पा-दकानामेव तेषां ग्रहणम् । न तु विभक्तिनिमित्तकानामपि, बहिरङ्ग-त्वादिति भावः ॥ **तत्रेति ।** नुम्नुटोरर्थः प्रयोजनं यस्येति बहुव्रीहि-रिति भावः ॥ नन्वन्तरङ्गत्वात्पूर्वमेव षट्त्वं प्रवृत्तमात्वेऽपि बहिरङ्गतया आत्वस्यासिद्धत्वान्न निवर्त्स्यतीत्यत आह— **कार्यकालेति ।**

**(तत्त्वालोकः)** भाष्ये— **नुम्नुडिति—** नित्यसापेक्षत्वात्समासः । **नुमि कृते इति—** तस्य पूर्वभक्ततया तयोः नान्तसंख्यात्वादिति शेषः । **षट्संज्ञा प्राप्नोतीति—** ततश्च "षड्भ्यो लुगि"ति लुगापद्यते इति भावः ।

प्रदीपे- **तत्र—** तयोर्मध्ये । **नुटोऽप्राप्तिरिति—** अनान्तत्वात् षट्-संज्ञायामसत्यां "षट्चतुर्भ्यश्चे"त्यनेनेत्यादिः ।

उद्द्योते— यथाश्रुतानुपपत्तेराह— **प्रकृतिप्रत्ययेति ।** वक्ष्यमाण-दोषवारणायाह— **प्रकृत्यादिभिरिति । तेषां—** नुमादीनाम् । **बहु-व्रीहिरिति—** अत्रोपदेशवचनमन्यपदार्थः । **अन्तरङ्गत्वादिति—** यथोद्देशपक्षे इत्यादिः । **पूर्वमेवेति—** आत्वत इत्यादिः । **आत्वेऽ-पीति—** तत इत्यादिः । सतीति शेषः ।

**( प्रत्याख्यानभाष्यम् )**

## ॥ * ॥ उक्तं वा ॥ * ॥

**किमुक्तम् ? ॥**

**इह तावच्छतानि सहस्राणीति- 'सन्निपातलक्षणो-विधिरनिमित्तं तद्विघातस्य' इति ॥**

**अष्टनोऽप्युक्तम् ।**

**किमुक्तम् ? ॥**

***अष्टनो दीर्घग्रहणं षट्संज्ञाज्ञापकमाकारान्तस्य नुडर्थम्* इति ॥**

**( प्रदीपः ) अष्टनो दीर्घेति ।** तत्र हि दीर्घग्रहणमष्टस्विति सुप उदात्तत्वनिवृत्त्यर्थं क्रियते । यदि च कृतात्वस्य षट्संज्ञा न स्यात्तदाऽ-ष्टस्विति परत्वात् षट्स्वरो **झल्युपोत्तम**मिति भविष्यतीति किं दीर्घ-ग्रहणेन । कृतं च तत् कृतात्वस्याऽपि षट्संज्ञां ज्ञापयति । ततश्चापवा-दत्वात् षट्स्वरोऽनेन बाध्यत इति दीर्घपक्ष इवादीर्घपक्षेऽपि विभक्तेः स्वरः स्यादिति कर्तव्यं दीर्घग्रहणम् ॥

**( उद्द्योतः ) सुप उदात्त्वेति । अष्टन** इति प्राप्तेत्यर्थः ॥ **आद्युदात्तत्वेति ।** क्वाचित्कोऽपपाठः । यद्वा— दीर्घग्रहणं षट्त्वे यथो-द्देशपक्षाश्रयणस्यैव ज्ञापकम् । तद्द्वारैव च षट्संज्ञाज्ञापकत्वम् । तत्पक्षे आत्वस्य बहिरङ्गतयाऽसिद्धत्वेन नान्तत्वबुद्ध्या षट्त्वमस्त्येव । स्पष्टं चेद**मष्टनो दीर्घादित्यत्र** कैयटे । किं च यथोद्देशपक्षे षट्त्वं स्थानिवद्भावेनापि सुलभम्, नकारान्तसङ्ख्यावाचकत्वसमानाधिकरण-धर्मविशेषरूपस्य षट्त्वस्य समुदायधर्मत्वेन तन्निमित्तकनुडादेरल्वि-धित्वाभावादिति बोध्यम् । न चात्वस्य नित्यत्वादष्टस्विति प्रयोग एवासङ्गत इति वाच्यम् । तद्वैकल्पिकत्वस्यापि ज्ञापनात् ॥ **यावता विनानुपपन्नं तत्सर्वं ज्ञाप्यत** इति सिद्धान्तात् ॥ **परत्वादिति ।** अष्ट-न्स्वर आत्वपक्षे चरितार्थः । न च तत्प्रवृत्त्युत्तरमष्टस्वित्यादौ अष्टन्स्वरः स्यादेवेति वाच्यम् । **सकृद्गति**न्यायाश्रयणात् ॥ **अपवादत्वादिति ।** न च स्वरप्रवृत्तेः पूर्वमन्तरङ्गस्याप्येकादेशस्याप्रवृत्ते**र्यद्भित्तुपर**मित्या-

दिग्व्रस्थभाष्यसंमतत्वेनाष्टावित्यादावष्टन्स्वरश्चरितार्थ इति वाच्यम्। अष्टनो घृतादित्वादन्तोदात्तत्वेनैकादेश उदात्तेनेत्येव तत्रान्तोदात्तत्वसिद्धेः। घृतादावस्य पाठे चेदमेव भाष्यं मानम्। गौणे प्रियाष्टाभिरित्यादौ षट्स्वराष्टन्स्वरयोः प्रवृत्तिरस्त्येव। तेषामनभिधानाच्च। एतेन कदष्टनशब्दोऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्त इति कदष्टावित्यत्रैकादेशस्वरेणासिद्धेस्तत्राष्टन्स्वरः सावकाश इति परास्तम्। तस्याप्यनभिधानात्॥

(तत्त्वालोकः) भाष्ये—**सन्निपातेति**—सर्वनामस्थानसन्निपातेन कृतस्य नुमस्तदविघातकत्वान्न दोष इति भावः। **अष्टनोऽपीति**—विषये इति शेषः। **दीर्घग्रहणमिति**—दीर्घादित्यत्रेत्यादिः।

प्रदीपे—**तत्र हीति**—अष्टनो दीर्घादित्यत्र हीत्यर्थः। 'न्रः संख्यायाः" इत्याद्युदात्तत्वं बाधित्वा "घृतादि" पाठेन अष्टन्शब्दोऽन्तोदात्तो व्युत्पादितः। तस्माद् भिसि अष्टभिः अष्टाभिरिति रूपद्वयं भवति। तत्रात्वाभावे मध्योदात्तम्, आत्वपक्षे त्वन्तोदात्तमिति सिद्धान्तः। तत्र "षट्त्रिचतुर्भ्यो हलादिरि"त्यनेन षड्भिरित्यादाविव प्राप्तं विभक्तेरुदात्तत्वं बाधित्वा, षट्त्रिचतुर्भ्यो या झलादिर्विभक्तिस्तदन्ते पदे उपोत्तममुदात्तं भवतीत्यर्थकेन "झल्युपोत्तममि"त्यनेनोपोत्तमस्योदात्तत्वे प्राप्ते, तद्बाधनाय—दीर्वान्तादष्टनः पराऽसर्वनामस्थानविभक्तिरुदात्ता भवतीत्यर्थकम् 'अष्टनो दीर्घादि"त्यारभ्यते इत्यादिः॥ **परत्वादिति**—अष्टन्स्वरापेक्षयेत्यादिः। आत्वाभावपक्षे इति शेषः। **तत्**—दीर्घग्रहणम्। **ततश्च**—कृतात्वस्यापि षट्संज्ञायां सत्याञ्च। **अनेन**—"अष्टनो दीर्घादि"ति अष्टन्स्वरेण। **कर्तव्यमिति**—तद्व्यावृत्त्यर्थमित्यादिः।

उद्द्योते—लाघवादाह—**यद्वेति**। अनेन कैयटोक्तौ गौरवं सूचितम्। भाष्यं सङ्गमयति—**तद्द्वारेणेति**। **तत्पक्षे**—यथोद्देशपक्षे। कैयटेन स्वाविरोधसूचनायाह—**स्पष्टमिति**। **तन्निमित्तकेति**—षट्त्वनिमित्तकेत्यर्थः। **तद्वैकल्पिकत्वेति**—आत्ववैकल्पिकत्वेत्यर्थः। **तत्प्रवृत्तीति**—षट्स्वरप्रवृत्तीत्यर्थः। अष्टन्स्वरस्य षट्स्वरबाधकत्वे बीजस्य निरवकाशत्वस्य 'नसौ हलादित्वाभावात् षट्स्वराप्रवृत्तियोग्ये अष्टावित्यादौ' अभावं शङ्कते—**नचेति**। **तत्र**—अष्टावित्यत्र। **अस्य**—अष्टन्शब्दस्य। ननु षट्स्वरविधायके विहितविशेषणाश्रयणेन समासात् तदप्रवृत्तिविषये गौणे प्रियाष्टाभिरित्यादौ अष्टन्स्वरश्चरितार्थ इत्यत आह—**गौणे इति**। एतज्ज्ञापकपरभाष्यप्रामाण्यात् अष्टन्स्वरविधायकेऽपि विहितविशेषणाश्रयणेन समासाङ्गीकारात् विनिगमनाविरहेण तत्रोभयप्राप्तिरित्याशयः। भवति तु अपवादत्वादष्टन्स्वर एवेति बोध्यम्। **तेषां**—प्रियाष्टाभिरित्यादीनाम्। **इति**—इति हेतोः। एतेनेत्यस्यार्थमाह—**तस्यापीति**। कदष्टन्शब्दस्यापीत्यर्थः।

### ( एकदेशिसमाधानभाष्यम् )

**अथवाऽऽकारोऽप्यत्र निर्दिश्यते-षकारान्ता नकारान्ता आकारान्ता च संख्या षट्संज्ञा भवतीति ॥**

(**तत्त्वालोकः**) एकदेशी समाधत्ते—**अथवेति**। **अत्र**—"ष्णान्ता षि"त्यत्र।

### ( समाधानबाधकभाष्यम् )

**इहापि तर्हि प्राप्नोति,—"सधमादो द्युम्न एकास्ताः" एका इति ॥**

(**प्रदीपः**) **एकास्ता इति**। संख्यावाचित्वाभ्युपगमवादी व्यत्ययेन बहुवचनं मन्यते। अन्यवाचित्वाश्रयं तूत्तरम्॥

(**उद्द्योतः**) ननु सङ्ख्यावाचित्वे एका इति बहुवचनमनुपपन्नमन्यत्र तु षट्संज्ञायाः प्राप्तिरेव नेत्यत आह—**सङ्ख्येति**।

(**तत्त्वालोकः**) भाष्ये—पूर्वपक्षी निराकरोति—**इहापीति**। उद्द्योते—**नन्विति**—एकशब्दस्येति शेषः। **बहुवचनं**—बहुवचनान्तम्।

### ( समाधानसाधकभाष्यम् )

**नैष दोषः। एकशब्दोऽयं बह्वर्थः। अस्त्येव संख्यापदम्-तद्यथा-एको द्वौ बहव इति॥ अस्त्यसहायवाची तद्यथा—एकाग्नयः, एकहलानि, एकाकिभिः क्षुद्रकैर्जितमिति। असहायैरित्यर्थः॥ अस्त्यन्यार्थे वर्तते। तद्यथा—'प्रजामेका रक्षत्यूर्जमेका' इति। अन्येत्यर्थः॥ 'सधमादो द्युम्न एकास्ताः' अन्या इत्यर्थः॥ तद्योऽन्यार्थे वर्तते तस्यैष प्रयोगः॥**

(**तत्त्वालोकः**) एकदेशी उत्तरयति—**नैष दोष इति**। यत इति शेषः। **संख्यापदम्**—संख्यावाची। **वर्तते**—वृत्तिः। **ताः**—ता इति। **तत्**—तस्मात्। **य इति**—एकशब्द इति शेषः। **एषः**—एका इति।

### ( समाधानबाधकभाष्यम् )

**इह तर्हि प्राप्नोति-'द्वाभ्यामिष्टये विंशत्या च' इति॥**

(**प्रदीपः**) **इह तर्हीति**। **द्वाभ्यामिति**। षट्स्वरः स्यात्॥

(**उद्द्योतः**) **षट्स्वर इति**। **षट्त्रिचतुर्भ्यो हलादिरि**त्यनेन॥ न च षान्तनान्तसाहचर्यादाकारान्तो बहुवचनान्त एव गृह्यते इति नायं दोषः। साहचर्यस्य सर्वत्राव्यवस्थापकत्वमित्याशयात्॥

(**तत्त्वालोकः**) भाष्ये—पूर्वपक्षी तत्राकारप्रश्लेषे दोषान्तरमाह—**इहेति**। **तर्हि**—तत्र तथा दोषनिवारणेऽपि। **प्राप्नोतीति**—षट्संज्ञेत्यादिः।

### ( सिद्धान्तिसमाधानान्तरभाष्यम् )

**एवं तर्हि सप्तमे योगविभागः करिष्यते-"अष्टाभ्य औश्", ततः "षड्भ्यः" षड्भ्यश्च यदुक्तमष्टाभ्योऽपि तद्भवति॥ ततो "लुक्" लुक् च भवति षड्भ्य इति॥**

(**प्रदीपः**) **सप्तम इति**। अष्टाभ्य इति कृतात्वानुकरणादौश्त्वविधानसामर्थ्याच्च लुङ् न विधीयते॥

(**उद्द्योतः**) **कृतात्वेति**। ततश्च कृतात्वस्य कार्यकालपक्षेऽसत्यपि षट्त्वेऽतिदेशान्लुट्सिद्धिरित्यर्थः॥ **औश्त्वेति**। अत एव विभक्तेः जश्शसोरनुवृत्तिर्न। तथा हि सति लुगेवातिदिश्येतेति तद्वैयर्थ्यं स्पष्टमेव। विपरीतं तु न व्याख्यानात्॥

(**तत्त्वालोकः**) भाष्ये—सिद्धान्ती समाधत्ते—**एवमिति**। अनुवृत्त्या शेषपूरणेन च तं व्याचष्टे—**षड्भ्यश्चेति**। एवमग्रेऽपि।

प्रदीपे—**चकारः**—त्वर्थकः।

उद्द्योते—**कार्यकालपक्षे इति**—अनेन यथोद्देशपक्षाश्रयणे फलं दर्शितम्। **अत एव**—औश्त्वविधानसामर्थ्यादेव। **विभक्तेः**—"षड्भ्य" इत्यत्र। **तथा सति**—तत्र तयोरनुवर्तने सति। **तद्वैयर्थ्यम्**—औश्त्वविधिवैयर्थ्यम्, **विपरीतम्**—अष्टाभ्यश्च यदुक्तं षड्भ्योऽपि तद्भवतीति विपरीतम्।

( समाधानान्तरभाष्यम् )

**अथ वा—उपरिष्टाद् योगविभागः करिष्यते—"अष्टन आ विभक्तौ" । ततो "रायः" रायश्च विभक्त्याकारादेशो भवति । "हलि" इत्युभयोः शेषः ॥**

**( प्रदीपः ) हलीति** । ततश्चाष्टानामिति नुटि कृते आत्वं भवति । **जश्शसोरष्टाभ्य** इति कृतात्वनिर्देशाज् ज्ञापकादात्वं भवति । कृतात्वस्य हि निर्देशस्य प्रयोजनम्, यत्रात्वं तत्रौश्त्वं यथा स्यादिति । यदि ह्येतत्कृतात्वनिर्देशस्य प्रयोजनं न स्याल्लाघवार्थम**ष्टभ्य औशि**ति ब्रूयात् ॥

**( उद्द्योतः ) ततश्चेति** । न च संनिपातपरिभाषयात्वं न स्यात् । अष्टानामिति रूपं तु नुटि **नोपधायाः** इति दीर्घे नलोपे च सिद्धमिति वाच्यम् । असिद्धस्यापि तद्विघातकविधेरनयाऽप्रवृत्तिबोधनेन नलोपस्याप्यनापत्तेः । अत एव **'पुग्घ्रस्वत्वस्यानिमित्तं स्याद्धीदपदिति'** भाष्ये **कृन्मेजन्त**सूत्रे उक्तम् । जानातेर्मित्त्वेन ज्ञापकेन ह्रस्वविषये तदप्रवृत्तिरिति च कैयटो वक्ष्यति । अन्यथा पुगपेक्षया ह्रस्वस्य बहिरङ्गासिद्धतया त्वस्या अप्राप्तौ भाष्याद्यसङ्गतिः स्पष्टैव । किं चातिदेशिकनिमित्तविघाताभावमादाय नास्या अप्रवृत्तिः ! एवं हि लक्ष्मीत्यादौ संबुद्धिह्रस्वे कृते संबुद्धिलोपे कृतेऽपि प्रत्ययलक्षणेन निमित्तविघाताभावात्तत्रास्या अतिव्याप्तिपरतत्सूत्रस्थभाष्यविरोधः । किं च गव्यितेत्यादौ **संनिपात**परिभाषया लोपो नेति सिद्धान्तभङ्गः । यलोपस्य बहिर्भूततृज्निमित्तकत्वेन बहिरङ्गतयाऽसिद्धत्वात् । वस्तुतस्तु षट्त्वसंनिपातनिमित्तको नुट् । न च तस्य संनिपातस्यात्वं विघातकम्, नापि नलोपः, स्थानिवद्भावेन तयोः कृतयोरपि षट्त्वसत्त्वाद् । अत्र पक्षे दीर्घग्रहणं, पुनःप्रसङ्गपक्षे अष्टभिरित्यत्र षट्स्वरे कृतेऽष्टन्स्वरव्यावृत्त्यर्थं सदात्वविकल्पज्ञापनार्थमिति बोध्यम् । अतिदेशविषयेऽपि तत्प्रवृत्तौ तु सिद्धं न **इष्टम्** । अजाद्योर्जश्शसोस्तर्ह्यात्वं न स्यादत आह—**जश्शसोरिति** ॥

**( तत्त्वालोकः )** भाष्ये—**उपरिष्टात्**—ततोऽप्यग्रे ।

प्रदीपे—**ततश्च**—प्रथमस्यापि हलीति शेषे च । **लाघवार्थमिति**—तर्हीत्यादिः ।

उद्द्योते—**विधेः**—नलोपविधेः । **अनया**—संनिपातपरिभाषया । तस्याः लोकमूलकत्वादिति भावः । अत्र मानमाह-**अत एवेति** । असिद्धस्थलेतस्याः प्रवृत्तेरेवेत्यर्थः । **तदप्रवृत्तिः**—संनिपातपरिभाषाया अप्रवृत्तिः । **अन्यथा**-असिद्धस्थले तदप्रवृत्तौ । **अस्याः**—संनिपातपरिभाषायाः । एवमग्रेऽपि । **आदिना** कैयटोक्तिसंग्रहः । **निमित्तेति**—संनिपातेत्यर्थः । **एवं हि**—तस्या अप्रवृत्तौ हि । विधिरूपेण तेषां प्रवृत्तिरिति सिद्धान्तमतेनाह—**प्रत्ययेति** । **तत्सूत्रस्थेति**—"कृन्मेजन्त" सूत्रस्थेत्यर्थः । **लोप इति**—"यस्य हल" इत्यनेनेत्यादिः । पूर्वोक्तसङ्गतिं दर्शयन् सिद्धान्तमाह—**वस्तुतस्त्विति** । यथोद्देशपक्षेणाह—**स्थानिवदिति** । **तयोः**—आत्वनलोपयोः । सकृद्गतिपक्षेऽसंभवादाह—**पुनः प्रसङ्गपक्षे इति** । **अष्टन्स्वरेति**—प्राप्तेत्यादिः । **विकल्पेति**—विकल्पमात्रेत्यर्थः । ननु स्थानिवद्भावविषयेऽपि संनिपातपरिभाषा प्रवर्त्तते एवेत्यत आह—**अतिदेशेति** । **तत्प्रवृत्तौ**—संनिपातपरिभाषाप्रवृत्तौ । **नः**—अस्माकम् । **इष्टम्**—असिद्धवातिदेशविषये संनिपातपरिभाषाप्रवृत्तेः नलोपाप्राप्त्या आत्वविधानेन अष्टानामित्यस्य साधनम् । **तर्हि**—हलीत्यस्योभयशेषत्वे ।

( आक्षेपभाष्यम् )

**यद्येवम्—प्रियाष्टौ प्रियाष्टा इति न सिध्यति, प्रियाष्टानौ प्रियाष्टान इति प्राप्नोति ॥**

**( प्रदीपः ) यद्येवमिति** । हलादावुच्यमानमात्वमौजसोर्न प्राप्नोतीति यत्राष्टार्थस्य प्राधान्यं तत्रौश्त्वेन भवितव्यम्, तत्रैव चौश्त्वेनात्वमनुमीयत इति जस्यप्यात्वमत्र ज्ञापकान्न प्राप्नोति ॥ विभक्तिमात्रे त्वात्वं विधीयमानमौजसोः सिध्यति । **अष्टन आ विभक्ता**वित्यत्र **पदाङ्गाधिकारे तस्य तदुत्तरपदस्य चे**ति तदन्तविधिसद्भावाद्बहुवचननिर्देशाभावाद् गुणभूतेऽप्यष्टार्थे आत्वेन भाव्यमित्यत्रापि सिद्ध्यतीति प्रश्नः ॥

**( उद्द्योतः )** भाष्ये—**प्रियाष्टान इति प्राप्नोतीति** । इत्येव प्राप्नोतीत्यर्थः । अन्यथाऽपकर्षाभावेऽपि आत्वस्य वैकल्पिकतया तस्य दुर्वारत्वेन भाष्यासङ्गतेः ॥ ननु जसि ज्ञापकसिद्धात्वप्राप्तेरौश्च प्राप्तेराह—**यत्रेति** । बहुवचननिर्देशादिति भावः ॥ षड्भ्य इत्येतत्साहचर्यादस्य प्राधान्ये एव प्रवृत्तिरिति भावः ॥ तस्य च यथा प्रकारान्तरेण गौणेऽप्रवृत्तिस्तथा **सर्वादि**सूत्रे उपपादयिष्यते । शुद्धलक्षणैकचक्षुष्कस्यात्र पूर्वपक्षित्वमिति तात्पर्यम् ॥ **औश्त्वेनेति** । औशेत्यर्थः । त्वप्रत्ययप्रयोगस्तु अनुकरणात् अनुकार्यरूपे भावे इति बोध्यम् । आत्वे इत्यादिभाष्यप्रयोगात् ॥ **औश्त्वेनेति** । तद्विधायकसूत्रस्थात्वनिर्देशेनेत्यर्थः ॥ **अत्र** । गौणे ॥ **ज्ञापकादिति** । अस्य प्राप्तियोग्यमपीति शेषः । क्वचित्तु ज्ञापकादिति न दृश्यते ॥ नन्वनपकर्षपक्षेऽपि अष्टनो विहितमात्वं कथं तदन्ते स्यादत आह—**पदाङ्गेति** ॥ **बहुवचननिर्देशाभावादिति** । साहचर्याभावादित्यपि बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**एवमिति**—हलीति उभयशेष इत्यर्थः । तर्हीति शेषः ।

प्रदीपे—**यत्र**—अष्टौ, परमाष्टौ इत्यादौ । **एवेन**—गुणभूताष्टार्थकस्य प्रियाष्टौ इत्यादेः व्यावृत्तिः । ननु तत्र कदाप्यात्वं न प्राप्नोतीत्यत आह—**विभक्तिमात्रे इति** । **बहुवचननिर्देशाभावादिति**—"षड्भ्यो लुक्" "षट्चतुर्भ्यश्चे"त्यनयोः बहुवचननिर्देशात् षडर्थप्राधान्ये एव लुग्नुटोः प्रवृत्तावपि प्रकृते इत्यादिः । **अत्रापि**—प्रियाष्टाभ्यामित्यादावपि।

उद्द्योते—**अन्यथा**—सावधारणव्याख्यानास्वीकारे । **अपकर्षेति**—"अष्टन् आ विभक्तावि"ति सूत्रे हलीत्यस्येत्यादिः । एवमग्रेऽपि । **तस्य**—प्रियाष्टानावित्यादिप्रयोगस्य । **ज्ञापकेति**—"अष्टाभ्य औशि"त्यत्र कृतात्वनिर्देशरूपेत्यादिः । **आहेति**—"नानुपपत्तिरित्यत" इत्यादिः । **बहुवचनेति**—अष्टाभ्य इतीत्यादिः ॥ अन्यथा कृतात्वानुकरणेऽप्येकवचनेनैव निर्दिशेत् "अष्टन औश्" इतीत्याशयः । बहुवचननिर्देशस्य सर्वत्र प्रधानार्थकमात्रे प्रवृत्त्यसाधकत्वादाह—**षड्भ्य इति** । **अस्य**—"अष्टाभ्य औशि"त्यस्य । ननु "षड्भ्य" इत्यस्यैव प्राधान्यमात्रे प्रवृत्तौ न मानमित्यत आह—**तस्य चेति** । "षड्भ्य" इत्यस्य चेत्यर्थः । नन्वेवमपि पूर्वपक्षासङ्गतिः निश्चयासत्त्वादित्यत आह—**शुद्धलक्षणैकचक्षुष्कस्येति** । यथाश्रुतानुपपत्तेराह—**औशेत्यर्थ इति** । नन्वेवं कथन्तत्र त्वप्रत्यय इत्यत आह—**त्वप्रत्ययेति** । अत्र मानमाह—**आत्वे इत्यादीति** । **तद्विधायकेति**—औश्त्वविधायकेत्यर्थः । **आत्वेति**—कृतात्वेत्यर्थः । असम्बद्धतानिराकरणायाह—**अस्येति** । ज्ञापकादित्यस्येत्यर्थः । **तदन्ते**—अष्टन्नन्ते । **साहचर्येति**—"षट्चतुर्भ्यश्चे"त्यादीत्यादिः ।

( सिद्धान्तिसमाधानभाष्यम् )

**यथालक्षणमप्रयुक्ते ॥ ष्णान्ता षट् ॥ २४ ॥**

**( प्रदीपः ) यथालक्षणमिति** । यस्य विशिष्टः प्रयोगो न स्मर्यते नापि प्रयोगनिषेधस्मृतिः तद्यथालक्षणमनुगन्तव्यम् तदत्र मा

भूदात्वमित्यर्थः ॥ नैव वा लक्षणमप्रयुक्ते प्रवर्तते प्रयुक्तानामेव लक्षणेनान्वाख्यानात् ॥ २३ ॥

**( उद्द्योतः )** लक्षणैकचक्षुष्कस्यैवोत्तरमिति मत्वा व्याचष्टे—**तदत्र मा भूदात्वमिति ।** पक्षान्तरेऽपि अनभिधानादात्वाभाव एव बोध्यः ॥ यत्तु भवत्येवात्रात्वमित्यर्थ इति । तन्न । अपकर्षपक्षे आत्वसाधकोपायाभावेन फलभेदापत्तेः ॥ नन्वयं भाष्यार्थो न युक्तः । तथा हि सतीष्यत **एवैतदि**त्येव ब्रूयात् ॥ किं **चाप्रयुक्ते** इति वाक्यशेषोऽसङ्गतः, प्रयुक्तेऽपि लक्षणानतिक्रमसत्त्वात् । **प्रयुक्तानां हीदमन्वाख्यान**मिति भाष्योक्तेश्चेत्यरुचेराह—**नैव वेति ।** लक्षणस्याभावोऽलक्षणं, तस्य योग्यता यथालक्षणमित्यव्ययीभावः । अप्रयुक्ते लक्षणाभावस्यैव योग्यता न तु लक्षणस्येत्यर्थः । एवं च तादृशप्रयोगोऽसाधुरिति भावः ॥ किं च भाष्यकारस्य लक्ष्यैकचक्षुष्कतया **इयमेव** व्याख्या ज्यायसी । एवं च हरदत्तादीनां प्रियाष्टन्शब्दादिषु आत्वादिप्रवृत्तिविचारोऽन्यश्च तत्प्रयोगविचारः प्रामादिक एवेत्यवधेयम् ॥ एतेन पूर्वव्याख्यानेऽस्य साधुत्वमुत्तरव्याख्यानेऽसाधुत्वमिति विरुद्धार्थकव्याख्यानद्वयमयुक्तं, किं च अष्टाभ्य इति निर्देशात्कृताकारादेवाष्टनो जश्शसोरौशिति तद्विषयेऽप्यात्वम् । अन्यथाऽ**ष्टन इत्येव ब्रूयादि**ति साप्तमिकभाष्ये एकवचननिर्देशात् प्रधान एवौशात्वे इति प्रश्नाशयोऽपि चिन्त्य इत्यपास्तम् ॥ गौणे प्रियाष्टादीनामनभिधानमित्यत्रत्यसिद्धान्तानुसारेण तद्भाष्यस्य सत्त्वात् । अरुच्यैव व्याख्यानान्तरप्रवृत्तेश्च ॥ २३ ॥

**( तत्त्वालोकः )** प्रदीपे—**यथालक्षणमिति**—लक्षणमनतिक्रम्येत्यर्थः । **तत्**—तस्मात् । **अत्र**—प्रियाष्टावित्यादौ ।

उद्द्योते—पूर्वपक्षिपक्षेणैव परिहारो युक्त इत्याह—**लक्षणैकचक्षुष्कस्येति । पक्षान्तरेऽपि**—तत्र हलीत्यपकर्षाभावपक्षेऽपि । अत एवैकवाक्यता । **अनभिधानादिति**—प्रियाष्टावित्यादीनामित्यादिः । प्राचां मतमाह—**यत्त्विति । अत्र**—प्रियाष्टावित्यादौ । **तादृशेति**—आत्वघटित "प्रियाष्टावि" त्यादीत्यर्थः । **आदिना** भट्टोजिदीक्षितादिपरिग्रहः । **तद्विषये**—जश्शस्विषये । एतेनेत्यस्यार्थमाह—**गौणे इति ।**

---

**( २२ षट्संज्ञासूत्रम् ॥ १ । १ । ५ आ० १३ ॥ )**

# डति च ॥ १ । १ । २४ ॥

**( प्रत्याख्यानभाष्यम् )**

**इदं डतिग्रहणं द्विः क्रियते—संख्यासंज्ञायां, षट्संज्ञायां च । एकं शक्यमकर्तुम् ।**

**कथम् ? ॥**

**यदि तावत् संख्यासंज्ञायां क्रियते, षट्संज्ञायां न करिष्यते ॥**

**कथम् ? ॥**

**"ष्णान्ता षट्" इत्यत्र डतीत्यनुवर्तिष्यते ॥**

**( प्रदीपः ) डति च ॥ २४ ॥ यदि तावदिति ।** तत्र वतुसाहचर्यात्तद्धित एव डतिर्गृह्यते, न तु पातेर्डतिः कृत् ॥

**( उद्द्योतः ) डति च ॥ २४ ॥** भाष्ये **यदि तावदिति । ष्णान्ता च षडिति** सूत्रं पाठ्यं, तत्र चकाराधत्वात्स्वरितलिङ्गासङ्गादनुवर्तमानं डतिग्रहणं संभन्त्स्यत इति भावः ॥ **न तु पातेरिति ।** एवं चार्थाधिकारादिहापि तद्धितस्यैव ग्रहणमिति भावः ॥ सङ्ख्येति महासंज्ञासामर्थ्यात्तत्र सङ्ख्याप्रश्नविषयडतेरेव ग्रहणमित्यपि बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**एकमिति**—तयोरित्यादिः । **यदीति**—यत इत्यादिः । **क्रियते इति**—तर्हीति शेषः । **ष्णान्तेति**—यत इत्यादिः । **इत्यत्रेति**—संख्यासंज्ञासूत्रादिति शेषः ।

प्रदीपे—**तत्र**—संख्यासंज्ञासूत्रे ।

उद्द्योते—यथाश्रुतासङ्गतेराह—**ष्णान्तेति । इहापि**—"ष्णान्ता ( च ) षडि" त्यत्रापि । साहचर्यस्यानियतत्वेऽपि युक्त्यन्तरं मूलभूतमाह—**संख्येतीति । तत्र**—संख्यासंज्ञासूत्रे । **एवेन** औणादिकस्य व्यावृत्तिः ।

**( प्रत्याख्यानान्तरभाष्यम् )**

**अथ षट्संज्ञायां क्रियते संख्यासंज्ञायां न करिष्यते ॥**

**[ कथम् ? ] ॥**

**"डति च" इत्यत्र संख्यासंज्ञाऽप्यनुवर्तिष्यते ॥**

**डति च ॥ २४ ॥**

**( प्रदीपः ) अथेति ।** तत्र संख्यासंज्ञाया अनुवर्तनादन्वर्थत्वाच्च तस्याः संख्याप्रश्नविषय एव डति र्गृह्यते, न त्वौणादिकः ॥ २४ ॥

**( उद्द्योतः )** भाष्ये **डति चेत्यत्रेति ।** चकारात्षट्संज्ञानन्तरं करणाच्चानेन संज्ञाद्वयस्यापि विधानमित्यर्थः ॥ **अन्वर्थत्वाच्चेति ।** सङ्ख्यायतेऽनयेति हि सः । न च तरयार्थस्य डत्यन्ते संभवः ॥ सङ्ख्याप्रश्नविषयत्वं तु न तदर्थ इति चिन्त्यमेतत् । तस्मादुणादीनामव्युत्पन्नत्वान्न तत्र डतिरिति तस्याग्रहणमित्युचितम् । व्युत्पत्तावपि पातेः कतिनापि सिध्यतीति न तत्र डतिनियम इति बोध्यम् ॥ **सङ्ख्याप्रश्नेति । संनियोगशिष्ट**न्यायाच्च षट्संज्ञापि तस्यैवेति भावः ॥ २४ ॥

**( तत्त्वालोकः )** भाष्ये—**क्रियते इति**—तर्हीति शेषः । **डति चेति**—यत इत्यादिः । **इत्यत्रेति**—संख्यासंज्ञासूत्रादिति शेषः ।

प्रदीपे—**तत्र**-डति चेत्यत्र । **तस्याः**—संख्यासंज्ञायाः । एवव्यवच्छेद्यमाह—**न त्विति ।**

उद्द्योते—**अनेन**—डति चेत्यनेन । **संज्ञाद्वयस्य**—संख्यासंज्ञाषट्संज्ञोभयस्य । केचित्तु अत्र—"बहुगणवतुसंख्या" ततः "डति च" संख्येत्यनुवर्त्तते । ततः "ष्णान्ता षट्" संख्या डतीत्युभयमप्यनुवर्त्तते । इति क्रमं कल्पयन्ति ॥ कैयटोक्तं खण्डयति—**संख्येति । सः**—(संख्यायाः) अन्वर्थः । **न च**-नहि । **तदर्थः**—संख्याया अ"न्व"र्थः । तत्त्वमाह—**तस्मादिति । तत्र**—उणादिषु । **तस्य**—औणादिकस्य । एकदेशिमतेऽप्याह—**व्युत्पत्ताविति ।** उणादीनामित्यादिः । **तत्र**—उणादिषु । नन्वेवमपि तत्र षट्त्वातिप्रसङ्ग एवेत्यत आह—**सन्नियोगेति । तस्यैव**-संख्याप्रश्नविषयडतेरेव । **एवेन** औणादिकव्यावृत्तिः ।

---

**( २३ निष्ठासंज्ञासूत्रम् ॥ १ । १ । ५ आ० १४ ॥ )**

# क्तक्तवतू निष्ठा ॥ १ । १ । २५ ॥

**( प्रदीपः ) क्तक्तवतू ॥ २५ ॥** इहानुबन्धाः कार्यार्थमुपादीयन्ते । प्रयोगश्चैषां लुप्तत्वान्नास्ति । यत्र सारूप्यं तत्र च सन्देहः—कथमस्यानुबन्धकार्यं कृतमस्य तु न कृतमिति पूर्वपक्षाभिप्रायः ॥ सिद्धान्तवादो तु मन्यते । अध्रुवेणानुबन्धेन नियतसन्निधाना अर्थाः

कारककालादयो लक्ष्यन्ते, तद्दर्शनादनुबन्धस्मृतौ च तल्लक्षितानां कार्याणां साधुत्वं विज्ञायते । तत्र यदा देवदत्तेन लूनः शालिरिति कश्चित्प्रयुङ्क्ते तदा लक्षणज्ञः कर्मभूतकालावगमात् क्तप्रत्ययं मन्यते । यदा तु लोतमालभेतेति प्रयोगस्तदा मैषवार्चो लोतशब्दस्तनूप्रत्ययान्तः प्रयुक्त इति मन्यते ॥

**( उद्द्योतः )** क्तक्तवतू ॥ २५ ॥ अनुबन्धानां नित्यलुप्ततया विशेषणत्वासंभवादुपलक्षणत्वे च तशब्दमात्रस्योपलक्ष्यत्वं मन्यमानो वार्तिकमारभत इत्याह—**इहेति** । **सारूप्यं** प्रयोगे इति शेषः ॥ **मन्यत इति** । निश्चिनोतीत्यर्थः ॥ नियतं संनिधानं येषामिति विग्रहः ॥ **कारकेति** । न तशब्दमात्रं लक्ष्यम्, किं त्वर्थविशेषाद्यवच्छिन्नमिति भावः ॥ **तद्दर्शनादिति** । कालादिज्ञानादित्यर्थः ॥ **तन्प्रत्ययान्त इति** । ककारानुपलक्षितः प्रयुक्त इति निश्चिनोतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**क्तक्तवतू निष्ठेति**—ननु विहितयोः प्रत्यययोरनेन संज्ञा, संज्ञया च प्रत्यययोः विधानम् । वक्ष्यति हि तृतीये—**निष्ठेति** । तथा चान्योन्याश्रय इति चेन्न, सूत्रशाटकवद् भाविसंज्ञाविधानात् । तौ भूतकाले भवतः, ययोर्विहितयोः निष्ठेत्येषा संज्ञा भविष्यतीत्याश्रयणात् ॥

प्रदीपे—**एषाम्**—अनुबन्धानाम् । **यत्रेति**—तथा चेत्यादिः । लुप्तानुबन्धस्येति शेषः । **पूर्वपक्षेति**—इतीत्यादिः । **तल्लक्षितानाम्**—अनुबन्धप्रयुक्तानाम् । **विज्ञायते इति**—इतीति शेषः । **मैषवाचीति**—"लोतः स्यादश्रुमैषयोरि" ति पञ्चपादीवृत्तिवचनात् । **तन्प्रत्ययान्त इति**—"हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन्" इत्युणादिसूत्रात् ।

उद्द्योते—**मात्र**पदेन कालादिव्यावृत्तिः । इदमरुचिसूचकं नेत्याह—**निश्चिनोतीति** । **मात्र**पदमवधारणार्थकं, कार्त्स्न्यार्थकं वा । कालादिचाक्षुषासंभवादाह—**कालादीति** । मन्यते इत्यनेनारुचिः न सूच्यते इत्याह—**ककारेति** ।

**( अनिष्टापत्तिनिराकरणाधिकरणम् )**

**( २०७ आक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ निष्ठासंज्ञायां समानशब्दप्रतिषेधः ॥ * ॥

**( भाष्यम् )**

**निष्ठासंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । लोतो गर्त इति ॥**

**( २०८ आक्षेपबाधकवार्तिकम् ॥ २ ॥ )**

## ॥ * ॥ निष्ठासंज्ञायां समानशब्दाप्रतिषेधः ॥ * ॥

**( भाष्यम् )**

**निष्ठासंज्ञायां समानशब्दानामप्रतिषेधः । अनर्थकः प्रतिषेधः अप्रतिषेधः ॥**

**( आक्षेपभाष्यम् )**

**निष्ठासंज्ञा कस्मान्न भवति ? ॥**

**( तत्त्वालोकः )** **निष्ठासंज्ञा कस्मान्नेति**—तर्हि लोत इत्यादावित्यादिः ।

**( २०९ आक्षेपबाधकहेतुवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ अनुबन्धोऽन्यत्वकरः ॥ * ॥

**( भाष्यम् )**

अनुबन्धः क्रियते सोऽन्यत्वं करिष्यति ॥

**( तत्त्वालोकः )** अनुबन्ध इति—यत्न इत्यादिः ।

**( २१० आक्षेपबाधकहेतुनिराकरणवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ अनुबन्धोऽन्यत्वकर इति चेन्न लोपात् ॥ * ॥

**( भाष्यम् )**

अनुबन्धोऽन्यत्वकर इति चेत् ? ।

तन्न ॥

किं कारणम् ?

लोपात्* । लुप्यतेऽत्रानुबन्धः । लुप्ते चानुबन्धे नान्यत्वं भवति । तद्यथा-कतरद्देवदत्तस्य गृहम् ?, 'अदो यत्रासौ काकः' इति । उत्पतिते काके नष्टं तद्गृहं भवति । एवमिहापि लुप्तेऽनुबन्धे नष्टः प्रत्ययो भवति ॥

**( उद्द्योतः )** भाष्ये **नष्टं गृहमिति** । अज्ञातमित्यर्थः ॥ **नष्टः प्रत्यय इति** । अज्ञातानुबन्धः प्रत्ययो भवतीत्यर्थः ॥

**( तत्त्वालोकः )** **तद्गृहं**—देवदत्तगृहम् ।

उद्द्योते—नाशाभावादाह—**अज्ञातेति** ।

**( आक्षेपबाधकसाधकभाष्यम् )**

यद्यपि लुप्यते, जानाति त्वसौ—सानुबन्धकस्येयं संज्ञा कृतेति । तद्यथा—इतरत्रापि कतरद्देवदत्तस्य गृहम् ? 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि नष्टं तद्गृहं भवति, अन्ततस्तमुद्देशं जानातीति ॥

**( उद्द्योतः )** **सानुबन्धकस्येति** । पूर्वं यः ककारवांस्तस्येत्यर्थः ॥ **उद्देशम्** । ऊर्ध्वं देशम् ॥

**( तत्त्वालोकः )** भाष्ये—**अन्ततः**—तथापि ।

उद्द्योते—प्रयोगेऽनुबन्धासत्त्वादाह—**पूर्वमिति** ।

**( २११ आक्षेपवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ सिद्धविपर्यासश्च ॥ * ॥

**( भाष्यम् )**

सिद्धश्च विपर्यासः । यद्यपि जानाति, संदेहस्तु तस्य भवति—अयं स तशब्दो लोतो गर्त इति, अयं स तशब्दो लूनो गीर्ण इति । तद्यथा इतरत्रापि 'कतरद्देवदत्तस्य गृहम् ?, 'अदो यत्रासौ काकः' इति । उत्पतिते काके यद्यपि तमुद्देशं जानाति संदेहस्तस्य भवति—इदं तद्गृहमिदं तद्गृहमिति ।

**( प्रदीपः )** **सिद्धविपर्यास इति** । सिद्धो विपर्यासः संशय

इत्यर्थः ॥ इदं तद्गृहमिति । बुद्धेरनवस्थितत्वमनेन प्रतिपाद्यते । न त्वेतद् द्विर्वचनं, वीप्साद्यर्थाभावात् ॥

( उद्द्योतः ) सिद्धविपर्यासश्चेति । चस्त्वर्थे । सिद्धस्तु विपर्यास इत्यर्थः ॥ यद्यपि विपर्यासो भ्रमात्मकनिश्चयस्तथाप्ययथार्थत्वसाम्यादिह संशयोऽभिप्रेत इत्याह-संशय इति ॥ बुद्धेरनवस्थितत्वमिति । सन्देहाभिनय इत्यर्थः ॥ वीप्सादीति । पदार्थविषयव्याप्तीच्छा प्रयोक्तृधर्मो हि वीप्सेति भावः ॥

( तत्त्वालोकः ) भाष्ये—सन्देह इति—तथापीत्यादिः । प्रदीपे—अनेन—इदं तद्गृहमिदं तद्गृहमिति कथनेन । उद्द्योते—यथाश्रुतानुपपत्तेराह—सन्देहेति ।

( आक्षेपनिराकरणभाष्यम् )

एवं तर्हि—

( २१२ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥*॥ कारककालविशेषात् सिद्धम् ॥*।

( भाष्यम् )

कारककालविशेषावुपादेयौ । भूते यस्तशब्दः कर्मणि कर्तरि भावे चेति । तद्यथा इतरत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति सोऽध्रुवेण निमित्तेन ध्रुवं निमित्तमुपादत्ते—वेदिकां पुण्डरीकं वा ॥

( उद्द्योतः ) भाष्ये कारकेति कालातिरिक्तप्रत्ययार्थपरम् । वेदिकां पुण्डरीकं वेति भाष्ये । एवं च साक्षादितरव्यावर्तकं विशेषणम् । स्वोपस्थाप्यार्थद्वारा इतरव्यावर्तकमुपलक्षणमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—सिद्धान्ती समाधत्ते—कारकेति । उद्द्योते—भाष्यकृतो न्यूनतां परिहरति—कालातिरिक्तेति । कालस्योपात्तत्वात् । अत एव भाष्ये "भावे चे" त्युक्तम् ।

( आक्षेपभाष्यम् )

एवमपि प्राकीर्ष्टेत्यत्रापि प्राप्नोति ॥

( प्रदीपः ) प्राकीर्ष्टेति । अत्र भूतकालोऽस्तीति भावः ॥

( उद्द्योतः ) प्राकीर्ष्टेति । यद्यप्यत्र निघातप्रवृत्तेर्न निष्ठात्वकृतो विशेषस्तथापि यन्मा प्रकीर्ष्टेत्यस्योपलक्षणमिदम् । अत्र हि निपातैर्यद्यदीति निघाते निषिद्धे निष्ठा च द्व्यजनादिति नित्यमाद्युदात्तत्वं स्यात् । असंज्ञायामपि तत्प्रवृत्तिं मन्यते । आदिः सिच इति विकल्पस्त्विष्यत इति भावः ॥

( तत्त्वालोकः ) भाष्ये—एवमपि—तत्र तथा निर्वाहेऽपि । प्राप्नोतीति—निष्ठा संज्ञेत्यादिः ।

उद्द्योते—इदं—प्राकीर्ष्टेति । अत्र—यन्मा प्रकीर्ष्टेत्यत्र । हि—यतः । तत्प्रवृत्तिं—"निष्ठा च द्व्यजनादि" त्यस्य प्रवृत्तिम् ।

( २१३ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ लुङि सिजादिदर्शनात् ॥ * ॥

( भाष्यम् )

लुङि सिजादिदर्शनान्न भविष्यति ॥

( आक्षेपभाष्यम् )

यत्र तर्हि सिजादयो न दृश्यन्ते—प्राभित्तेति ।

( तत्त्वालोकः ) न दृश्यन्ते इति—तत्र प्राप्नोतीति शेषः ।

( समाधानभाष्यम् )

दृश्यन्तेऽत्रापि सिजादयः ॥

किं वक्तव्यमेतत् ? ॥

न हि ॥

कथमनुच्यमानं गंस्यते ? ॥

यथैवायमनुपदिष्टान् कारककालविशेषानवगच्छति एवमेतदप्यवगन्तुमर्हति—यत्र सिजादयो नेति ॥ क्तक्तवतू ॥ २५ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायप्रथमपादे पञ्चममाह्निकम् ॥

( प्रदीपः ) दृश्यन्तेऽत्रेति । सिजादीत्यादिशब्दः प्रकारे । तत्र प्राभित्त घटं देवदत्त इति प्रयोगे कर्त्रेकत्वाद्यवगमाल्लुङन्तस्यायं प्रयोगो, न निष्ठान्तस्येति प्रतिपद्यते । अञ्जिघृसिभ्यः क्त इत्यस्य निष्ठासंज्ञा न भवति, उणादीनामव्युत्पन्नत्वाद्वाङ्कुलकाद्वा । अन्यथा निष्ठा च द्व्यजनादित्याद्युदात्तत्वं स्यात् ॥ २५ ॥

इति श्रीकैयटकृते भाष्यप्रदीपे प्रथमाध्याये प्रथमपादे पञ्चममाह्निकम् ।

( उद्द्योतः ) सिचोऽत्र लुप्तत्वेनादर्शनादाह—आदिशब्द इति ॥ अञ्जिघृसीति । यद्यप्यत्रोपलक्ष्यकालकारकाद्यभावस्तथापि गुणाभावदर्शनात् क्तोयमित्यवगतिः । एवं च सनादिविधावित्संज्ञककारोपलक्षितः प्रकृत्यर्थानुवादी इच्छार्थो वा सकारो भवतीत्यर्थः । अनुवादे सन्यत इत्यादौ तादृशनकारोपलक्षिते सकारे इत्यर्थः । अत एवाटश्चेत्यादेः सार्थक्यम् । अन्यथा यत्र सूत्रे आट्, न तत्र वृद्धिरिष्यते; यत्र चेष्यते प्रयोगे, न तत्राडिति तद्वैयर्थ्यं स्पष्टमेवेति सर्वमवदातम् ॥ २५ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते प्रथमाध्यायस्य प्रथमे पादे पञ्चममाह्निकम् ॥

( तत्त्वालोकः ) प्रदीपे—प्रकारे—सादृश्ये । नन्वेवमपि "अञ्जिघृसिभ्यः क्तः" इत्यनेन क्तप्रत्यये निष्पन्नेषु अक्तं घृतमित्यादिषु निष्ठासंज्ञा आपद्यते इत्यत आह—अञ्जिघृसीति । उणादीनामिति—"अतः कृकमिकंसकुम्भे" ति सूत्रे कमेः पृथक् कंसग्रहणेन ज्ञापितादित्यादिः । अन्यथा—तस्य निष्ठात्वे । स्यादिति—न चेष्टापत्तिः, "घृतं मिमिक्षे" इत्यादावन्तोदात्तस्यैव पठ्यमानत्वात् ॥

उद्द्योते—अत्र—प्राभित्तेत्यत्र । गुणाभावेति—कारककालादीनामैवानुबन्धोपलक्ष्यत्वे मानाभावादित्याशयः । "गुप्तिजा"दिभ्यः स्वार्थिकसनोऽभिप्रायेणाह—प्रकृत्यर्थेति । तादृशेति—इत्संज्ञकेत्यर्थः ।

इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे पञ्चममाह्निकम् ॥

इति प्रथमाध्याये प्रथमपादे पञ्चमाह्निकम् ।

# अथ प्रथमाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ।

( अथ सर्वनामसंज्ञाप्रकरणम् )

( २६ सर्वनामसंज्ञासूत्रम् ॥ १ । १ । ६ आ. १ )

## सर्वादीनि सर्वनामानि ॥ १ । १ । २७॥

( तद्गुणाधिकरणम् )

( पूर्वपक्षिभाष्यम् )

**'सर्वादीनि' इति कोऽयं समासः ?**

**( प्रदीपः ) सर्वादीनि सर्व० ॥ २७ ॥ कोऽयमिति ।** ननु नपुंसकबहुवचननिर्देशादेव बहुव्रीहिनिश्चयात्समासान्तराशङ्का नैवास्तीति प्रश्नानुपपत्तिः । एवं तर्हि किमयं बहुव्रीहिरेव-आहोस्विद्बहुव्रीहितत्पुरुषयोरेकशेषः । यथा-'कतन्तेभ्यः कण्वादिभ्यश्च' इति प्रश्नः ॥ तत्र सारूप्यार्थं सर्वश्चासावादिः सर्वादिरित्यत्रादिशब्द उपादीयते, न त्वस्य प्रयोजनान्तरमस्ति । तत्र 'नपुंसकमनपुंसकेन-' इति वा **'॥स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यते॥'** इति वा बहुव्रीहेः शेषः ॥

**( उद्द्योतः ) सर्वादी ॥ २७ ॥ नन्विति ।** आदिशब्दस्य नित्यपुंस्त्वेन एकवचनान्तत्वेन च समासान्तरे नपुंसकत्वबहुत्वानुपपत्तेरिति भावः ॥ प्रकृते तत्पुरुषः कर्मधारयः, दृष्टान्ते षष्ठीतत्पुरुषः ॥ **न त्वस्येति ।** कर्मधारयघटकस्येत्यर्थः ॥ बहुव्रीहेरेव शेषे युक्तिमाह— **तत्र नपुंसकमिति ।** तत्पुरुषस्तु पुंलिङ्ग इति भावः ॥ **स्वरभिन्नानामिति ।** स्वरेण विलक्षणानां सरूपाणां मध्ये उत्तरसूत्रेण यस्य स्वरविधिरित्यर्थः । कर्मधारयः **समासस्येत्य**न्तोदात्तः । परस्तु **बहुव्रीहौ प्रकृत्ये**ति परशास्त्रेणान्तोदात्तपूर्वपद इति बोध्यम् । तत्राद्ये सर्वशब्दस्य संज्ञा न प्राप्नोति, अन्त्ये तु सिध्यतीति विशेषः ॥

**( तत्त्वालोकः )** भाष्ये—**सर्वादीनीतीति**—'सर्वादीनीत्ययं कः समासः' इत्यन्वयः ।

प्रदीपे—**नपुंसकेति**—'सर्वादीनीत्यत्र' इत्यादिः । **समासान्तरेति**—बहुव्रीहिभिन्नसमासेत्यर्थः । **इति**—इति हेतोः । **प्रश्नेति**—यथाश्रुतप्रश्नेत्यर्थः । **अयम्**—सर्वादीनीत्ययम् । प्रकृतभाष्यघटकसमासपदस्यान्यथाऽनुपपत्त्या समासविशेषपरत्वादाह—**बहुव्रीहिरिति । एवेति**—अनेन तत्पुरुषो व्यवच्छिद्यते । **एकशेष इति**—एकस्य बहुव्रीहेः शेष इत्यर्थः । गर्गादिगणान्तर्गतानां लोहितादिकतन्तानां कण्वादीनाञ्च शब्दानां मध्ये कतशब्दादुत्तरं कण्वशब्दाच्च पूर्वं वर्त्तमानात् शकलशब्दादपि ष्फाणोः प्रत्यययोर्विधानाय ष्फविधायक-'सर्वत्र लोहितादिकतन्तेभ्यः'-इति सूत्रघटककतन्तशब्दे, अण्विधायक-'कण्वादिभ्यो गोत्रे'-इतिसूत्रघटककण्वादिशब्दे च यथा बहुव्रीहितत्पुरुषयोरेकशेष इत्याशयेन तत्र दृष्टान्तमाह—**यथेति । कतन्तेभ्य इति**—इतीति शेषः । बहुव्रीहावतद्गुणसंविज्ञानमेव, न तु तद्गुणसंविज्ञानमपीति मते सर्वादीनीत्यत्र केवलबहुव्रीह्यभ्युपगमे सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोतीति हेतोरत्र-सर्वश्चासावादिश्चेति सर्वादिः, सर्व आदिर्येषामिति सर्वादीनि; सर्वादिश्च सर्वादीनि चेति ( नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति सूत्रेण, स्वरभिन्नानामित्यादिवार्त्तिकेन वा नपुंसकस्यैकशेषे ) सर्वादीनीति रीत्या बहुव्रीहितत्पुरुषयोरेकशेषोऽभ्युपगम्यते । तथा च सर्वशब्दस्यापि सर्वनामसंज्ञा सिद्ध्यतीत्याशयेनाह—**तत्रेति ।** बहुव्रीहितत्पुरुषयोरित्यर्थः । **सारूप्यार्थम्**—एकशेषप्रयोजकसारूप्यसम्पादनार्थम् । **आदिश्चेति**—इतीति शेषः । **तत्र**—बहुव्रीहितत्पुरुषयोर्मध्ये-इत्यर्थः । नपुंसकमित्यादिसूत्रप्रत्याख्यानपक्षे-आह—**स्वरभिन्नानामिति ।**

उद्द्योते—एकशेषातिरिक्तस्थलमभिप्रेत्याह—**एकवचनेति । समासान्तरे—इति**—बहुव्रीहिभिन्नसमासे-इत्यर्थः । सर्वशब्देन सहेत्यादिः । अत्र तत्पुरुषत्वरूपसामान्यधर्मेण दृष्टान्तदार्ष्टान्तिकता, न तु विशेषधर्मेणापीत्याशयेनाह—**प्रकृते-इति ।** दार्ष्टान्तिके सर्वादिशब्दे इत्यर्थः । **दृष्टान्ते**—कतन्तशब्दे कण्वादिशब्दे च । **कर्मधारयघटकस्य**—सर्वश्चासावादिश्चेति सर्वादिरित्यत्रोपात्तादिशब्दस्य । स्वरभिन्नानामिति वार्त्तिकार्थमाह—**स्वरेणेति । इत्यर्थः**—इत्याद्यर्थः । **परः**—बहुव्रीहिः । ननु सर्वादिशब्दे-केवलो बहुव्रीहिरिति पक्षे, बहुव्रीहितत्पुरुषयोर्मध्ये बहुव्रीहेः शेष इति पक्षे च बहुव्रीहेरेव प्राप्तत्वात्तयोः पक्षयोः को विशेष इत्यत आह—**तत्रेति ।** तयोः पक्षयोरित्यर्थः । **आद्ये**—तत्र केवलो बहुव्रीहिरिति पक्षे । **अन्त्ये**—तत्र बहुव्रीहितत्पुरुषयोर्मध्ये बहुव्रीहेः शेष इति पक्षे । बहुव्रीहावतद्गुणसंविज्ञानमेव, न तु तद्गुणसंविज्ञानमपीति मत एवैतद्विशेषकथनं सङ्गच्छते इति बोध्यम् । **सिद्ध्यतीति**—सर्वशब्दस्य सर्वनामसंज्ञेत्यादिः ।

( समाधानभाष्यम् )

**बहुव्रीहिरित्याह ॥**

**( प्रदीपः )** वक्ष्यमाणेन न्यायेन विनाऽप्येकशेषेण सर्वशब्दस्य संज्ञा सिध्यतीति मत्वाऽऽह—**बहुव्रीहिरिति ॥**

**( उद्द्योतः ) वक्ष्यमाणेन**—तद्गुणसंविज्ञानेन ॥

**( तत्त्वालोकः )** भाष्ये-बहुव्रीहौ तद्गुणसंविज्ञानस्यापि सत्त्वात् सर्वादीनीत्यत्र बहुव्रीहितत्पुरुषयोर्मध्ये बहुव्रीहेः शेष इति पक्षे वाक्यभेदप्रतिपत्तिजनितं गौरवमभिसमीक्ष्य तादृशगौरवविरहेण लाघवात्तत्र केवलो बहुव्रीहिरिति पक्षमभिप्रेत्य प्रकृते दत्तं सिद्धान्त्युत्तरं तटस्थोऽनुवदति—**बहुव्रीहिरिति । आहेति**—सिद्धान्तीति शेषः ।

प्रदीपे—**विनाप्येकशेषेणेति**—सर्वादीनीत्यत्रेत्यादिः । बहुव्रीह्यङ्गीकारे इति शेषः ।

( अनुयोगभाष्यम् )

**कोऽस्य विग्रहः ?**

**( प्रदीपः )** एवमपि संदेहः । किं प्राथमकल्पिको बहुव्रीहिः, अथ बहुव्रीहितत्पुरुषयोरेकशेषे बहुव्रीहिरिति पृच्छति—**कोऽस्येति ॥**

**( उद्द्योतः ) प्राथमकल्पिकः**—एकशेषनिरपेक्षत्वेन प्रथमप्रतीतः ॥ वक्ष्यमाणन्यायानभिज्ञस्य प्रश्न इति भावः ॥

**(तत्त्वालोकः)** प्रदीपे—**एवमपि**—बहुव्रीहिरिति कथितेऽपि । सन्देहाकारं निरूपयति—**किमिति । अथ**—अथवा । **इतीति**—अत इति शेषः ।

उद्द्योते—**ननु** बहुव्रीहौ तद्गुणसंविज्ञानम् जानतो बहुव्रीहि-

रिति कथनेनैव तादृक् संशयो निवर्त्ततेत्ययं प्रश्नो न सङ्गच्छते—इत्यत आह—**वक्ष्यमाणन्यायानभिज्ञस्येति ।** बहुव्रीहौ तद्गुणसंविज्ञानमजानत इत्यर्थः । बहुव्रीहिरिति कथितेऽपि तादृक्संशयतादवस्थ्यादिति शेषः ।

**( समाधानभाष्यम् )**

**सर्वशब्द आदिर्येषां तानि—इमानीति ॥**
**यद्येवं सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति ।**
**किं कारणम् ?**
**अन्यपदार्थत्वाद्बहुव्रीहेः ।**

**बहुव्रीहिरयमन्यपदार्थे वर्तते, तेन यदन्यत्सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोति । तद्यथा—'चित्रगुरानीयताम्' इत्युक्ते यस्य ता गावो भवन्ति स आनीयते, न गावः ॥**

**नैष दोषः, भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि । तद्यथा—'चित्रवाससमानय' 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति ॥**

**( प्रदीपः ) तानीमानीति ।** अन्यपदार्थस्य प्राधान्यं प्रदर्श्यते । अन्यथा यथा चित्रा गावोऽस्येति गवां विशेष्यत्वं तद्वतश्च विशेषणत्वमवगम्यते, तथेहाप्यवगम्येत । अत्र चार्थे बहुव्रीहिर्नेष्यते । यदा तु स्वामिनः प्राधान्यं गवां विशेषणभावस्तदा तु बहुव्रीहिः । अत एव चित्रा गावो यस्य स चित्रगुरिति स्वामिनः प्राधान्यं प्रदर्श्यते । 'तानीमानि' इति सर्वनामद्वयोपादानेन प्रत्यक्षविषयत्वादिदंशब्दस्य गणपठितेषु सर्वशब्दस्यान्तर्भावात्तद्गुणसंविज्ञानं सूचयति । तस्यान्यपदार्थस्य गुणा उपलक्षणानि तेषामपि कार्ये संविज्ञानं तद्गुणसंविज्ञानम् । तत्र चित्रगुरानीयतामिति स्वस्वामिभावसंबन्धः षष्ठ्यर्थं इति स्वविशेषोपलक्षितस्य स्वामिन एवानयनं न तु गवाम् । दण्डी विषाणी चानीयतामित्यत्र तु संयोगसमवायलक्षणेन संबन्धेन संबन्धिनि कार्ये विज्ञायमान उपलक्षणस्याप्यन्तर्भावो भवति । इह्याप्यादिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थः । तस्य च समुदायस्य युगपल्लक्ष्ये प्रयोगाभावात्तदन्तर्भूतानामेव पृथक्प्रयोगसत्त्वात्कार्यार्थिया संज्ञया प्रवर्तितव्यमिति सर्वशब्दस्यापि सा सिध्यति । यथा देवदत्तशालायां ब्राह्मणा आनीयन्तामित्युक्ते देवदत्तोऽपि यदि ब्राह्मणो भवति स्वशालास्थश्च तदा सोऽप्यानीयत एव ॥

**( उद्द्योतः )** विग्रहप्रश्नोत्तरे तानीत्याद्यधिककथनमयुक्तमत आह—**अन्यपदार्थस्येति ॥ नेष्यत इति ।** प्रथमान्तानामन्यपदार्थप्राधान्ये बहुव्रीहिविधानादिति भावः ॥ नन्वेवमपि तानीत्येव सिद्धे इमानीति व्यर्थमत आह—**सर्वनामद्वयेति ।** सर्वनामद्वयोपादानेन तद्गुणसंविज्ञानं सूचयतीत्यन्वयः ॥ **प्रत्यक्षेति ।** उद्भूतावयवभेदस्य गणपठितस्य समुदायस्येदमा परामर्शात् । तत्र च सर्वशब्दस्यान्तर्भावादिति भावः ॥ गुणत्वं दर्शयति—**उपलक्षणानीति ।** प्रकारतयाऽन्वयीनीत्यर्थः ॥ **कार्ये संविज्ञानमिति ।** तच्च द्वेधा । क्वचिद् विशिष्टस्य क्रियायां संनिधानमात्रेण, यथा—क्रियायोगाभावेऽपि शुक्लवाससं भोजयेति । क्वचित्तु विशेषणस्यापि क्रियायोगेन, यथा—शुक्लवाससं पश्येति । कार्ये यत्र तद्भवभावि तत्र तद्गुणत्वमित्यर्थः फलितः । एवं तद्गुणसंविज्ञाने तद्विशिष्टस्येतरान्वयः । अन्यत्र तदुपलक्षितस्येत्यपि भेदः ॥ अयं शब्दशक्तिस्वभावप्रयोऽन्तर्भावः—कार्यित्वं कार्यसंनिहितत्वं वा । एवं च यत्र संयोगसमवायान्यतरसंबन्धेन संबन्ध्यन्यपदार्थस्तत्र तद्गुणः । अन्यत्रातद्गुण इत्युत्सर्ग इति गौलार्थः ॥ ननु प्रकृते न संयोगो नापि समवाय इत्यत आह—**इहापीति ।** एवं च समवायेन संबन्धिनोऽन्यपदार्थत्वेन तद्गुणत्वमेवोचितमित्यर्थः ॥ बहुवचनोपपत्तय आह—**उद्भूतावयवभेद इति ।** अवयवगतसंख्यारोपेण बहुवचनमिति भावः ॥ नन्वेवं समुदायस्यैव संज्ञा स्यादत आह—**तस्य चेति ।** युगपत्प्रयोगाभावात् पृथक्प्रयोगसत्त्वाच्च कार्यार्थिया संज्ञया तदन्तर्भूतानामेव प्रवर्तितव्यमित्यन्वयः ॥ **'पृथक्प्रयोगत्वादिति'** पाठे बहुव्रीहेस्त्वो बोध्यः ॥ **सिध्यतीति ।** विनिगमनाविरहादिति भावः ॥ नन्वेवं सर्वशब्दस्य संबन्धविशेष्यत्वाभावात्कथं तस्य सर्वनामत्वमत आह—**यथेति ।** स्वरूपेणोपलक्षणमपि सर्वशब्दः समुदायान्तर्भूततया संबन्धविशेष्योऽपि । यथा देवदत्तत्वेन विशेषणमपि देवदत्तो ब्राह्मणत्वेन विशेष्य इति भावः ॥ **अन्यपदार्थत्वादिति** भाष्यस्यान्यः पदार्थो यस्य तत्त्वादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—सर्वादीनीत्यत्र सर्वशब्दः शब्दपर इति सूचनाय शब्दशब्दघटित सर्वशब्दशब्दं प्रयुञ्जानः समाधत्ते—**सर्वशब्द इति । यद्येवमिति**—तर्हीति शेषः । **किं कारणमिति**—कस्मात्कारणादित्यर्थः । **न गाव इति**—न ता गाव इत्यभिप्रायः । **एषः**—( सर्व आदिर्येषां तानि सर्वादीनीति विग्रहे ) सर्वशब्दस्य सर्वनामसंज्ञाऽप्राप्तिरूपः । कुत इत्यत आह—**भवतीति । हि**—यतः । **अपिना**ऽतद्गुणसंविज्ञानसमुच्चयः । लौकिकवैदिके क्रमेणोदाहरति—**तद्यथेति । इतीति**—अनयोः क्रमेणेति शेषः । **तद्गुण इति**—बहुव्रीहिः । अत एव तस्य चित्रवासोविशिष्टपुरुष इत्यर्थः । **तद्गुणा इति**—बहुव्रीहिः । अत एव तस्य लोहितोष्णीषविशिष्टा इत्यर्थः ।

प्रदीपे—**अन्यपदार्थस्येति**—समुदायस्येति शेषः । **अन्यथा**—तानीत्यस्यानुपादाने । **तद्वतश्च**—गोमतश्च । **इहापीति**—आदेर्विशेष्यत्वमादिमतश्च विशेषणत्वमिति शेषः । नन्वियमापत्तिरिष्टेत्यत आह—**अत्र चेति ।** अस्मिंस्त्वित्यर्थः । **यदा तु**—यदा हि । **गवाम्**—गवाञ्च । **तदा तु**—तदैव । उक्तमेव विषयं द्रढयति—**अत एवेति ।** तदैव बहुव्रीहेरिष्टत्वादेवेत्यर्थः । ननु तानीत्युपादानस्य फलमुक्तं किन्तु नेमानीत्युपादानस्येत्यत आह—**प्रत्यक्षविषयत्वादिति ।** इदंशब्दस्य प्रत्यक्षविषयत्वात् ( तेन परामृष्टेषु ) गणपठितेष्विति रीत्याऽन्वयः । **अपिना**ऽन्यपदार्थस्य समुच्चयः । अतद्गुणतद्गुणसंविज्ञानयोर्विविक्ते लक्ष्ये क्रमेणाह—**तत्रेति ।** भाष्योक्तबुद्धिस्थ-अतद्गुणतद्गुणसंविज्ञानयोर्मध्ये इत्यर्थः । **स्वविशेषेति**—धनविशेषेत्यर्थः । **सम्बन्धिनीति**—पुरुषादाविति शेषः । **कार्ये**—आनयनरूपे कार्ये । **उपलक्षणस्य**—विशेषणस्य ( दण्डादेः ) । **अपि**ना विशेष्यस्य समुच्चयः । **कार्यार्थयेति**—तेष्वेवेत्यादिः । **देवदत्तशालायामिति**—स्थिता इति शेषः ।

उद्द्योते—**विग्रहेति**—नन्वित्यादिः । आदिनेमानीत्यस्य परिग्रहः । **व्यर्थम्**—व्यर्थमेव । समीपेऽनन्वयादाह—**सर्वनामेति ।** कैयटन्यूनतां परिहरति—**तच्चेति ।** कार्ये संविज्ञानञ्चेत्यर्थः । **मात्र**पदेन क्रियायोगव्यवच्छेदः । **क्रियायोगाभावेऽपीति**—विशेषणस्येत्यादिः । **अपि**ना विशेष्यस्य समुच्चयः । अनुगममाह—**कार्यमिति । तद्गुणत्वम्**—तद्गुणसंविज्ञानत्वम् । **एवमग्रे**ऽपि । एवं तद्गुणसंविज्ञानेऽवान्तरभेदमभिधाय तद्गुणातद्गुणसंविज्ञानयोः कैयटोक्तमेव भेदमाह—**एवमिति ।** अवान्तरभेदवदित्यर्थः । **अन्यत्र**—अतद्गुणसंविज्ञाने । अत्रोपलक्षणत्वं प्रसिद्धमेव बोध्यम् । लम्बकर्णमानयेत्यादिस्थलमभिप्रेत्याह—**कार्यित्वमिति ।** लम्बकर्णं भोजयेत्यादि-

स्थलमभिप्रेत्याह—**कार्यसन्निहितत्वमिति** । एवञ्च-कार्यान्वयि-तत्सन्निहितान्यतरत्त्वघटकावयवार्थकः प्रथमः । तथा तद्भिन्नश्चरम इति भावः । **एवञ्च**—उक्तरीत्या तद्गुणातद्गुणसंविज्ञानयोर्विविक्तविष-यत्वे च । अस्यापि दण्डी भोज्यतामित्यादौ व्यभिचारादाह—**उत्सर्ग इति । गोलार्थः**—प्रधट्टकार्थः । आनन्तर्याभावादाह—**युगपदिति । पृथगिति**—नामक्षमिति विशिष्टाशयः । **एवम्**—सर्वशब्दस्य विशेष्यीभूतलक्षणत्वे । **उपलक्षणम्**—विशेषणम् । अन्यपदम्-अन्यपदम्, तस्यार्थः-अन्यपदार्थ इत्यर्थभ्रमनिराकरणाय तदर्थमाह—**अन्य इति । पदार्थः**—विशेष्यभूतः ।

## ( सर्वनामपदसाधुत्वाधिकरणम् )

## ( आक्षेपभाष्यम् )

### इह सर्वनामानीति 'पूर्वपदात्संज्ञायामगः' इति णत्वं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः ॥

**( प्रदीपः ) णत्वं प्राप्नोतीति ।** राजपुरुषादिवत्संज्ञाशब्दा अपि शास्त्रप्रक्रियायां सन्तमसन्तं वाऽवयवार्थमाश्रित्य व्युत्पाद्यन्त इति णत्व-प्रसङ्गः । प्रयोगे च सणत्वा अणत्वाश्च नित्या एव शब्दाः । तत्र संज्ञायां सणत्वा एव साधवोऽसंज्ञायां त्वणत्वा एवेति शास्त्रव्यापारा-ण्णत्वं प्राप्नोत्येव । सर्वार्थाभिधानयोग्यशब्दस्य शक्तिनियमनमात्रं संज्ञाकरणमिति शब्दार्थसंबन्धनित्यत्वस्यापि न विरोधः ॥

**( उद्द्योतः )** ननु सर्वनामशब्दो यदि व्युत्पन्नस्तदा संज्ञोप-सर्जनप्रतिषेधवार्तिकारम्भानुपपत्तिः । नो चेत्पूर्वोत्तरपदविभागाभावात् **पूर्वपदादि**ति णत्वाप्राप्तिरत आह—**राजेति । सन्त**मन्वर्थसंज्ञायाम् ॥ **असन्तं** शुद्धरूढे रथन्तरादौ ॥ **आश्रित्येति ।** द्वितीयविषये आरोप्ये-त्यर्थकम् । सामविशेषे रथकरणकतरणकर्तृत्वमारोप्य साधुत्वान्वाख्यानं यथा तथा सर्वार्थवाचकत्वरूपार्थमारोप्य तत्प्रकृतेऽपीति न वार्तिकानु-पपत्तिः, नापि णत्वाप्राप्तिरिति भावः ॥ ननु शब्दनित्यताविरोधात्क-थमसतो णत्वस्यापादनमत आह—**प्रयोगे चेति ।** ननु संज्ञा चेत्कृ-त्रिमा तदा शब्दार्थसंबन्धनित्यताहानिरसंज्ञा चेन्न णत्वप्राप्तिरत आह—**सर्वार्थेति ॥ शक्तिनियमनं** शक्तिसंबन्धबोधनमेवेत्याहुः ॥ न च **'भूमोऽसंज्ञायामि'**ति सूत्रे भाष्ये 'यदेतत्संज्ञायां विधीयते तत्र न संज्ञायामभिधेयायामित्यर्थः । किं तर्हि तत्तत्कार्यविशिष्टेन चेत्संज्ञा गम्यत इत्यर्थः' इति वक्ष्यते । ततश्चात्र कथं णत्वप्राप्तिः । न हि कृतणत्वेन संज्ञाऽवगतिः । अत एव रघुनाथादिशब्दे न णत्वमिति वाच्यम् ॥ आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अत एव **महत्याः संज्ञायाः करणे एतत्प्रयोजन**मिति वक्ष्यमाणं सङ्गच्छते । अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्ता-नामेव साधुत्वमिति रघुनाथादौ णत्वाभावोऽश्वपरिमाणसंज्ञाभूतगव्यू-तिशब्दे च न वलोपः । संज्ञात्वभङ्गापत्तेरिति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**इह**—'सर्वादीनी' त्यस्मिन् सूत्रे । **इति**—इत्यत्र । **तस्य**—णत्वस्य ।

प्रदीपे—**राजपुरुषादिवत्**—राजपुरुषादिशब्दवत् । **प्रयोगे च**—प्रयोगे तु । **तत्र**—सणत्वाणत्वयोर्मध्ये ।

उद्द्योते—**व्युत्पन्नः**—यौगिकः । **तदेति**—संज्ञोपसर्जनेषु सर्व-नामत्वस्यासत्त्वेन सर्वनामसंज्ञायाः प्राप्तेरसत्त्वादिति शेषः । **प्रतिषेध-वार्तिकेति**—अत्र धर्मनियमशब्द इव समासः । **अनुपपत्तिरिति**—प्राप्तौ सत्यां निषेध इति नियमेन निषेधे प्राप्तिपूर्वकत्वस्यावश्यकत्वा-दिति शेषः । **नो चेदिति**—यदि च रूढस्तदेति भावः । **आरूढविषये** यथाश्रुतार्थकमेवेत्याशयेनाह—**द्वितीयविषये इति ।** एवञ्चथनाभि-प्रायेणाह—**सामविशेषे इति ।** शुद्धरूढवेऽपीति भावः । **तत्—**साधुत्वान्वाख्यानम् । **वार्तिकेति**—संज्ञोपसर्जनप्रतिषेधवार्तिकेत्यर्थः । वृद्धिसंज्ञामूत्रस्थसिद्धान्तरूप्याऽऽह—**शक्तिसम्बन्धेति । भाष्ये इति**—अस्य 'वक्ष्यते' इत्यनेनान्वयः । 'य एते संज्ञायां विधीयन्ते तेषु नैवं विज्ञायते-संज्ञायामभिधेयायाम्-इति । किं तर्हि-प्रत्ययान्तेन चेत्संज्ञा गम्यते-' इति भाष्यस्य फलितार्थभूतं पाठमुपन्यस्यति—**यदेतदिति ।** एवञ्च तदेतद्भाष्ययोः परस्परं विरोध इत्याशयः । **अत एव**—कृतणत्वेन संज्ञाऽवगतेरभावादेव । **आशयादिति**—प्रकृतसूत्र-भाष्यस्येत्यादिः । तं द्रढयति—**अत एवेति ।** तादृश-प्रकृतसूत्र-भाष्याशयस्तत्त्वादेवेत्यर्थः । 'भूम' इति सूत्रभाष्याशयसहितं दृष्टान्तवै-लक्षण्यमाह—**अनादीति । संज्ञात्वेति**—अन्यथा तयोरित्यादिः ।

## ( २१४ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सर्वनामसंज्ञायां निपातनाण्णत्वाभावः ॥ * ॥

## ( भाष्यम् )

### सर्वनामसंज्ञायां निपातनाण्णत्वं न भविष्यति ॥

**( प्रदीपः ) निपातनादिति ।** लोकेऽप्ययं णत्वरहित एव प्रयु-ज्यते, तस्यात्र प्रसङ्गेन साधुत्वं प्रतिपाद्यते ॥

**( उद्द्योतः )** सौत्रत्वादित्येव कुतो नोक्तमत आह—**लोकइति ॥**

**( तत्त्वालोकः )** भाष्ये—**सर्वनामसंज्ञायाम्**—सर्वनामेतिसं-ज्ञायाम् । **निपातनात्**—अस्मादेव निपातनात् ।

प्रदीपे—**अपिना** शास्त्रपरिग्रहः । **अयम्**—सर्वनामशब्दः । **एवेन** णत्वसहितस्य तस्य व्यवच्छेदः । **तस्य**—लोक-शास्त्रसाधार-णस्य णत्वरहितस्य सर्वनामशब्दस्य । यदि 'सर्वनामेतिसंज्ञायां सौत्रत्वाण्णत्वं न भविष्यतीति' प्रतिपाद्येत, तर्हि लोकप्रयुक्तसर्वनाम-शब्दे णत्वराहित्यं नोपपद्येत, अतस्तत्र सौत्रत्वादित्यपहाय निपात-नादिति प्रत्यपादि, तथा च लोक-शास्त्रसाधारणसर्वनामशब्दे अस्मा-देव निपातनाण्णत्वाभाव उपपद्यते इत्याशयः ।

उद्द्योते—**सौत्रत्वादिति**—नन्वित्यादिः । **एवेन** निपातना-दित्यस्य व्यवच्छेदः ।

## ( आक्षेपभाष्यम् )

### किमेतन्निपातनं नाम ? ॥

**( प्रदीपः ) किमेतदिति ।** भवत्वस्य साधुत्वं, णत्वप्रतिषेधे त्वस्य तात्पर्याभावाद्विकल्पः प्राप्नोतीति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**अस्य**—लोकशास्त्रप्रयुक्त-णत्वरहित-सर्वनामशब्दस्य । अस्य-अनेन निपातनेनेति शेषः । **णत्वेति**—सर्वनामशब्दे इत्यादिः । **अस्य**—प्रकृतनिपातनस्य । **विकल्पः प्राप्नोतीति**—सर्वनामशब्दः क्वचिण्णत्वरहितः क्वचिच्च णत्वसहितः प्रयोगविषयतामासादयेदित्याशयः ।

## ( प्रतिबन्दीभाष्यम् )

### अथ कः प्रतिषेधो नाम ? ॥

**( प्रदीपः )** इतरः प्रतिषेधेन साम्यं प्रतिपादयितुं पर्यनुयुङ्क्ते—**अथ क इति ॥**

**( तत्त्वालोकः )** प्रदीपे—**इतर इति**—यद्यप्यन्यत्र निपात-नस्य विधिनापि साम्यमस्ति तथापीत्यादिः । प्रकृते तस्येति शेषः ।

( प्रतिबन्ध्युत्तरभाष्यम् )

**अविशेषेण किंचिदुक्त्वा विशेषेण 'न' इत्युच्यते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते—'इदं न भवति' इति ॥**

**( तत्त्वालोकः ) अविशेषेणेति**—यत्रेत्यादिः । **गम्यते**-शब्दतः प्रतीयते ।

( समाधानभाष्यम् )

**निपातनमप्येवंजातीयकमेव । अविशेषेण णत्वमुक्त्वा विशेषेण निपातनं क्रियते, तत्र व्यक्तमाचार्यस्याभिप्रायो गम्यते—'इदं न भवति' इति ॥**

**( प्रदीपः )** सर्वत्रैव ह्यप्राप्त्यनुमानं बाधः । निपातनं चापि णत्वाप्राप्त्यनुमानमिति भावः ॥

**( उद्द्योतः )** साम्यं दर्शयति—**सर्वत्रैवेति ॥ निपातनं चेति ।** भावाभावयोरेकत्र विरोधादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अविशेषेणेति**—तथाहि यत्रेत्यादिः । **गम्यते**—अनुमानेन प्रतीयते । तत्र शब्दतः प्रतीयते, अत्र चानुमानेन प्रतीयते इत्येव प्रतिषेधनिपातनयोर्भेदः, अन्यत्तु तयोस्तुल्यमेवेत्याशयः ।

उद्द्योते—**साम्यमिति**—इतरस्याशयं सूचयन् प्रतिषेधनिपातनयोरित्यादिः । तथा च प्रदीपस्थप्रथमानुमानपदं शाब्दबोधपरमिति बोध्यम् ।

( आक्षेपभाष्यम् )

**ननु च— निपातनाण्णत्वं स्यात्, यथाप्राप्तं च णत्वम् ॥**

**( प्रदीपः ) ननु चेति ।** प्रतिषेधस्य हि निवृत्तावेव तात्पर्यम्, निपातनस्य तु तद्रूपसाधुत्वप्रतिपादने, न तु रूपान्तरनिवृत्ताविति भावः ॥

**( उद्द्योतः ) न त्विति ।** प्रयोगभेदेन च भावाभावविरोधपरिहार इति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—प्रतिषेधनिपातनयोरन्यदपि भिन्नमित्याशयेनाह—**प्रतिषेधस्येति ।**

उद्द्योते—प्रागुक्तविरोधाभावमाह—**प्रयोगभेदेनेति । च**—तु ।

( प्रतिबन्दीभाष्यम् )

**किमन्येऽप्येवं विधयो [ भवन्ति ] ?**

**( उद्द्योतः )** भाष्ये **किमन्येऽपीति । अन्येपि विधयः किमेवम्** एवंजातीया इति वक्ष्यमाणाभिप्रायेण प्रश्नः ॥

**( तत्त्वालोकः )** उद्द्योते—**वक्ष्यमाणेति**—अनुपदमेव यथेत्यादिनेत्यादिः ।

( प्रतिबन्ध्युत्तरभाष्यम् )

**भवन्ति ॥**

**( उद्द्योतः )** आशयानभिज्ञ उत्तरयति—**भवन्तीति ।** यथा **स्थानिवदादेश** इत्येतद्विषये स्थानिप्रयुक्तं भवति, यथाप्राप्तस्यादेशप्रयुक्तस्य न निवृत्तिरिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—तमाशयमाह—**यथेति । यथाप्राप्तस्येति**—किन्त्वित्यादिः ।

( आक्षेपभाष्यम् )

**इह—'इको यणचि' इति वचनाद् यण् स्यात् यथाप्राप्तश्चेक् श्रूयेत ॥**

**( प्रदीपः ) इको यणचीति ।** यणो हि साधुत्वं प्रतिपाद्यते, त्विङ्निवृत्तिरित्यर्थः ॥

**( उद्द्योतः )** शङ्कते—**इको यणिति ।** अस्य **यदि भवन्त्** त्यादिः ॥

**( तत्त्वालोकः )** उद्द्योते—**शङ्कते इति**—तत्रेत्यादिः । अत एवाह—**अस्येति । भवन्तीत्यादिः**—भवन्ति तर्हीत्यादिः । एवः 'इह यदि भवन्ति तर्हि इको यणचीती'त्यादिरूपेण योजना सिद्धेति बोध्यम् ।

( समाधानभाष्यम् )

**नैष दोषः । अस्त्यत्र विशेषः । षष्ठ्यात्र निर्देशः क्रियते । षष्ठी च पुनः स्थानिनं निवर्तयति ॥**

**( प्रदीपः ) षष्ठ्यात्रेति ।** ततश्च संहिताविषये स्वाभाविकोऽप्रयोग इकः षष्ठीनिर्देशेन प्रतिपाद्यते । यथा **दर्भाणां स्थाने शरैः प्रस्तरितव्य**मिति, न तत्र दर्भाः प्रस्तीर्यन्ते ॥

**( उद्द्योतः ) ततश्च संहितेति ।** स्थानिनो निवृत्तिर्नाम तत्साधुत्वबुद्धिनिवृत्तिः । सा च संहितायां शाकलाभावे इति भावः ॥ **प्रस्तीर्यन्त इति ।** किन्तु तत्प्रसङ्गे शराः प्रस्तीर्यन्त इति शेषः । तथा च स्थानषष्ठीनिर्देशे उभयत्रापि तात्पर्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्त्यत्रेति**—यत इत्यादिः । तं विशेषमाह—**षष्ठ्यात्रेति । च**—तु । **पुन**रिति वाक्यालङ्कारे ।

प्रदीपे—**इक इति**—मध्यमणिन्यायेन पूर्वत्र परत्र चान्वेति । **इतीति**—कथिते इति शेषः । **तत्र**—दर्भाणां स्थाने ।

उद्द्योते—शब्दस्य नित्यत्वादाह—**स्थानिन इति । तत्साधुत्वेति**—स्थानिसाधुत्वेत्यर्थः । संहितायां शाकलसत्त्वे स्थानिसाधुत्वबुद्धेः सत्त्वादाह—**सा चेति ।** स्थानिसाधुत्वबुद्धेर्निवृत्तिश्चेत्यर्थः । तस्य शाब्दत्वादाह—**किन्त्विति ।** स्थानं प्रसङ्ग इत्यभिप्रेत्याह—**तत्प्रसङ्गे इति ।** दर्भप्रसङ्गे इत्यर्थः । भाष्यादिस्थषष्ठीपदं स्थानषष्ठीपरमित्याशयेनाह—**स्थानषष्ठीति । उभयत्र**—स्थानिसाधुत्वबुद्धिनिवृत्तौ आदेशसाधुत्वबुद्धिप्रवृत्तौ च । एवमग्रेऽपि ।

( आक्षेपभाष्यम् )

**इह तर्हि 'कर्तरि शप्' 'दिवादिभ्यः श्यन्' इति वचनाच्च श्यन् स्यात् । यथाप्राप्तश्च शप् श्रूयेत ॥**

**( प्रदीपः ) इह तर्हीति ।** विकल्पः प्राप्नोतीति भावः ॥ समुच्चयस्तु न भवति, एकेन परदेशस्यावष्टब्धत्वाद्धातुसार्वधातुकयोश्चार्थाभिधाने एकेनैव साहायकस्य संपादनात् ॥

**( उद्द्योतः ) विकल्प इति ।** स्थानषष्ठ्यभावेनोभयत्र तात्पर्याभावादिति भावः ॥ **परदेशस्येति ।** विकरणविधौ **धातोः परश्चे**त्यधिकारेण धातोः परो विकरणः प्रयोक्तव्य **इत्यर्था**दिति भावः ॥ ननु धातोः परो विधातव्य इत्यर्थे पूर्वं श्यनि विहिते पश्चाच्छबपि स्यात् तिङ्विकरणवत् । सार्वधातुक इति च विषयसप्तमी स्यादत आह—**धात्विति ॥ साहायकं** सहायकार्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**इहेति**—यदि भवन्तीति शेषः । एकस्मिन्नेवार्थे द्वयोः विधानम् तथा पूर्वं सामान्यसूत्रं परञ्च विशेषसूत्र-

मिति सूचनाय सूत्रद्वयं निर्दिशति—**कर्त्तरि शबिति ।** इत्यस्य बाधकादिति शेषः । **प्रथमश्चकारो** वाक्यालङ्कारे ।

प्रदीपे—**विकल्पः—**कदाचिच्छप् कदाचिच्च श्यन् । **समुच्चय इति—**शप्श्यनोरित्यादिः । **चकारो**ऽन्ते योज्यः ।

उद्द्योते—यदि 'दिवादिभ्यः' इति सूत्रे शपः स्थानषष्ठ्या निर्देशः स्यात्तर्हि शपो निवृत्तौ श्यनश्च प्रवृत्तौ तात्पर्यं स्यात्, किन्तु तत्र तथा नास्तीत्याशयेनाह—**स्थानषष्ठ्यभावेनेति । अधिकारेणेति—**उभयोरित्यादिः । **इत्यर्थ इति—**न तु प्रागुक्तार्थे इति भावः । नन्वेवं क्व दृश्यते इत्यत आह—**तिङ्विकरणेति ।** अत्र द्वन्द्वसमासोत्तरं वतिः प्रत्ययः । नन्वेवमपि प्रकृते सार्वधातुकाव्यवहितपरत्वस्य नोभयोः सम्भव इत्यत आह—**सार्वधातुकेति । साहायकमिति—**अस्य 'सहायाद्वे'ति वार्त्तिकेन वुञि निष्पत्तिः ।

( समाधानभाष्यम् )

## नैष दोषः । शबादेशाः श्यन्नादयः करिष्यन्ते ॥

**( प्रदीपः ) शबादेशा इति ।** श्यनश्च शित्करणं ज्ञापकम्—स्थानिवद्भावाभावस्य । तेन करोतीत्युप्रत्ययस्यापित्त्वादनुदात्तत्वं न भवति, कुर्वतीत्यत्र **शप्श्यनोर्नित्य**मिति नुमागमो न भवति, आदित्यधिकाराद्वा ॥ **रुधादिभ्यः श्नमि**त्यत्र रुधादीनां श्रुतत्वात्तेषामेवान्त्यादचः परः श्नम् भवति, न तु शपः परः । यथा च **भ्रस्जो रोपधयो रमन्यतरस्या**मिति रमागमो रोपधयोर्निवर्तकः, एवं शपः श्नम् ॥

**( उद्द्योतः )** ननु श्यन्नादीनामादेशत्वे स्थानिवद्भावात्पित्त्वे करोतीत्यादौ विकरणस्यानुदात्तत्वं स्यात् । न च सतिशिष्टस्वरबलीयस्त्वस्य विकरणान्यविषयत्वेनोप्रत्ययस्य कथमुदात्तत्वं सिद्धान्तेपीति वाच्यम् । सार्वधातुकस्वरापेक्षयैव विकरणस्वरस्य तेन दुर्बलत्वकथनादत आह—**श्यनश्च शित्करणमिति ।** न च शित्त्वं नियमार्थं स्यात्—शिदेव न पिदिति । शित्त्वस्य नियमार्थत्वकल्पनापेक्षयाऽतिदेशबाधस्यैवौचित्यात् । अतिदेशबाधश्च तवाप्यावश्यक एव ॥ क्वचित्तु **नित्करण**मिति पाठः ॥ तद्धि प्रत्ययाद्युदात्तत्वबाधेन **ञ्नित्ती**त्यनेन निदन्तस्याद्युदात्तत्वाय । स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्यापि **अदुपदेशादि**त्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति तद्व्यर्थं सत् तज्ज्ञापकमिति भावः ॥ परं त्वयं पाठः **स्थानिवत्सूत्र**स्थकैयटविरुद्धः ॥ **आदित्यधिकाराद्वेति ।** तुदतीत्यादौ नित्यनुम्व्यावृत्तये पूर्वोक्तसमाधिरेवावश्यकः ॥ **शप्श्यनो**रिति सूत्रस्थं श्यन्ग्रहणमप्युक्तार्थे ज्ञापकमिति बोध्यम् ॥ नन्वेवं शपः परः श्नम् स्यादत आह—**रुधादिभ्य इति । सार्वधातुक** इति सप्तम्या **रुधादिभ्य** इति पञ्चम्याः षष्ठीकल्पनात्तेषामेवान्त्यादचः परः श्नमिति भावः ॥ **तृणह** इति निर्देशश्च रुधादीनामागमित्वे लिङ्गम् ॥ नन्वेवं शपः श्रवणं स्यादत आह—**यथा चेति ।** शप इत्यस्य षष्ठीकल्पनसामर्थ्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**शबादेशा इति—**यत इत्यादिः ।

प्रदीपे—**श्यनश्च—**श्यनो हि । **इति—**इत्यत्र । **कुर्वतीत्यत्रेति—**चेति शेषः । **तेषाम्—**रुधादीनाम् ।

उद्द्योते—**एवेन—**धात्वादिस्वरापेक्षाव्यवच्छेदः । **तेन—**'सतिशिष्टस्वरे'ति वार्त्तिकेन । विधिनियमसम्भवे विधिरेव ज्यायानित्यभिप्रायेणाह—**अतिदेशबाधस्यैवेति ।** तेनेत्यादिः । युक्त्यन्तरमाह—**अतिदेशबाधश्चेति ।** अत एवात्र चः किञ्चेत्यर्थकः । शित्त्वेनेत्यादिः । **तवापीति—**शित्त्वं नियमार्थमिति वादिनोऽपीत्यर्थः । **आवश्यक इति—**अन्यथा 'क्वचिदनुबन्धकार्येऽप्यनल्विधाविति' निषेधप्रवृत्त्यैव तत्रापित्त्वस्य सिद्धत्वात् श्यनः शित्त्वस्य वैयर्थ्यमापद्येत, शित्त्वेनातिदेशबाधे कृते तु तत्र स्थानिवत्त्वेनालभ्यस्य सार्वधातुकत्वस्योपपत्तये श्यनः शित्त्वमावश्यकमिति भावः । दण्ड्यापूपिकया खण्डयति—**क्वचित्त्विति । तद्धि—**नित्करणं हि । **तत्—**नित्करणम् । **तज्ज्ञापकम्—**स्थानिवद्भावाभावज्ञापकम् । **अयम्पाठः—**नित्करणमिति पाठः । **विरुद्ध इति—**कैयटेन स्थानिवत्सूत्रस्थप्रदीपे 'ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात् । तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते' इत्यवादि । तेन ( नित्त्वस्याद्युदात्तार्थत्वकथनेन शित्त्वस्य च ज्ञापकत्वाश्रयणेन ) प्रकृतोक्तं नित्त्वस्य ज्ञापकत्वं विरुद्ध्यते इति भावः । पक्षान्तरस्यादित्यधिकारस्याव्यापकत्वमाह—**तुदतीत्यादाविति ।** एवञ्च वाशब्दस्तत्रानास्थायामिति बोध्यम् । **पूर्वोक्तसमाधिरिति—**अतिदेशबाधरूप इत्यादिः । वास्तविकमसन्दिग्धं व्यापकं समाधानमाह—**शप्श्यनोरितीति । उक्तार्थे** अतिदेशबाधे । अन्यथा तत्रत्यश्यन्ग्रहणस्य वैयर्थ्यमापद्येतेति भावः । **एवम्—**उक्तरीत्या रुधादिभ्य इति पञ्चम्या शबित्यत्र षष्ठीकल्पने । 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि'—ति न्यायेनाह—**सार्वधातुकेति । पञ्चम्या इति**-स्थान इति शेषः । **तेषामेव**-रुधादीनामेव ।

( आक्षेपभाष्यम् )

## तत् तर्हि शपो ग्रहणं कर्तव्यम् ? ॥

**( तत्त्वालोकः ) तदिति**-तस्मिन् (दिवादिभ्यः श्यन्निति सूत्रे) इत्यर्थः । तदित्यस्याव्ययत्वात् प्रकृतानुरोधेन तस्य तादृशार्थकरणे न क्षतिरिति बोध्यम् । **तर्हीति—**यदि 'दिवादिभ्यः श्यन्नि'ति सूत्रस्य 'दिवादिभ्यः परस्य शपः श्यन्नादेशः स्यादि'त्यर्थोऽभिमत इत्यादिः ।

( आक्षेपबाधकभाष्यम् )

## न कर्तव्यम् । प्रकृतमनुवर्तते ॥
## क्व प्रकृतम् ? ॥
## 'कर्तरि शप्' इति ॥

**( तत्त्वालोकः )** ननु तत्र शपो ग्रहणेऽकृते कथन्तस्य तादृशार्थो लभ्येतेत्यत आह—**प्रकृतमिति ।** यत इत्यादिः । शप्-पदमत्रेति शेषः । **प्रकृतमिति—**तदित्यादिः ।

( आक्षेपसाधकभाष्यम् )

## तद्वै प्रथमानिर्दिष्टम् । षष्ठीनिर्दिष्टेन चेहार्थः ॥

**( तत्त्वालोकः ) तत्—**'कर्त्तरि शबि' त्यत्र प्रकृतं शप्पदम् । **इहार्थ इति—**'दिवादिभ्यः श्यन्नि'ति सूत्रे प्रयोजनमित्यर्थः । शप्-शब्देनेत्यादिः ।

( आक्षेपबाधकभाष्यम् )

## दिवादिभ्य इत्येषा पञ्चमी शबिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति ॥

**( तत्त्वालोकः )** 'तस्मादित्युत्तरस्ये'ति सूत्रस्य 'पञ्चम्यन्तात्परं षष्ठ्यन्तं बोध्यमि'त्यर्थमभिप्रेत्याह—**दिवादिभ्य इत्येषेति । शबितीति—**अनुवृत्त—शबित्यत्रेत्यर्थः । **प्रथमाया इति—**स्थान इति शेषः ।

( आक्षेपसाधकभाष्यम् )

## प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ॥

**( तत्त्वालोकः ) अयम्**—'दिवादिभ्यः श्यन्नि'ति सूत्रम् ।

( आक्षेपबाधकभाष्यम् )

**नायं प्रत्ययविधिः । विहितः प्रत्ययः । प्रकृतश्चानुवर्तते ॥**

**( उद्द्योतः )** भाष्ये—**विहितः प्रत्यय इति ।** शब्रूपः प्रत्यय इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**विहित इति**—यत इत्यादिः । तस्य स्थानेऽनेन श्यन्नादेशमात्रं क्रियते इत्यभिप्रायन्मध्यागतमुपसंहरति—**प्रकृतश्चेति ।** ( तत्र ) प्रकृतः ( शवत्र ) अनुवर्त्तते चेत्यन्वयः ।

( आक्षेपभाष्यम् )

**इह तर्हि—'अव्ययसर्वनाम्नामकच् प्राक् टेः' इति वचनाच्चाकच् स्याद्, यथाप्राप्तश्च कः श्रूयेत ॥**

**( प्रदीपः ) इह तर्हीति ।** देशभेदाद्विरोधाभावेऽपि काकचोरेकार्थत्वाद्विकल्प एव चोद्यते, न समुच्चयः ॥

**( उद्द्योतः ) एकार्थत्वादिति ।** अज्ञातादेरकेन द्योतितत्वान्न द्वयोः समुच्चय इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इहेति**-यदि भवन्तीति शेषः । **प्रथमश्चकारो** वाक्यालङ्कारे ।

प्रदीपे—**देशभेदादिति**—टेः परं कः पूर्वञ्चाकजिति हेतोः काकचोरित्यादिः । **विरोधाभावेऽपीति**—विरोधाभावेन तयोः समुच्चयसम्भवेऽपीत्याशयः । 'एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यादि'ति पूर्वमीमांसान्यायेनाह—**एकार्थत्वादिति ।**

उद्द्योते—**अकेन**—अकचा । **द्वयोः**—काकचोः ।

( समाधानभाष्यम् )

**नैष दोषः, नाप्राप्ते हि केऽकजारभ्यते, स बाधको भविष्यति ॥**

**( तत्त्वालोकः )** 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती'ति न्यायमनुसृत्याह—**नाप्राप्ते इति ।** अवश्यम्प्राप्ते इत्यर्थः । **हि**—यतः । **स इति**—च तस्येति शेषः ।

( सिद्धान्तिसमाधानभाष्यम् )

**निपातनमप्येवंजातीयकमेव । नाप्राप्ते णत्वे निपातनमारभ्यते, तद्बाधकं भविष्यति ॥**

**( उद्द्योतः ) येन नाप्राप्तिन्यायेनाकजादीनां बाधकत्वे परेणोक्ते** सिद्धान्ती तेनैव न्यायेन निपातनानामपि बाधकत्वमेवेत्याह—**निपातनमपीति ॥**

**( तत्त्वालोकः )** भाष्ये—**एवंजातीयकम्**-प्रतिषेधजातीयकम् । **नाप्राप्ते इति**—तथा चेत्यादिः । **तदिति**—च तस्येति शेषः ।

उद्द्योते—श्यन्नादिस्थलेऽप्येवमेव बोध्यमित्याशयेनादिपदं प्रयुञ्जान आह—**बाधकत्वे इति ।** कादिबाधकत्वे इत्यर्थः । प्रागुक्तस्यैकदेश्युक्तत्वं सूचयन्नाह—**सिद्धान्तीति । तेनैव**—येन नाप्राप्तिरूपेणैव । **बाधकत्वम्**—णत्वादिबाधकत्वम् ।

( आक्षेपभाष्यम् )

**यदि तर्हि निपातनान्यप्येवंजातीयकानि भवन्ति, समस्तते दोषो भवति ।**

**इहान्ये वैयाकरणाः समस्तते विभाषा लोपमारभन्ते—'समो हितततयोर्वा' इति । सततम्—संततम्, सहितम्—संहितमिति ॥**

**इह पुनर्भवान्निपातनाच्च लोपमिच्छति—'अपरस्पराः क्रियासातत्ये' इति । यथाप्राप्तं चालोपम्-संततमिति । एतन्न सिध्यति ॥**

**( उद्द्योतः )** भाष्ये **एतदिति ।** सततं सन्ततमित्युभयमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**तर्हीति**—अस्य 'समस्तते' इत्यत्रान्वयः । **समस्तते इति**—सम्-शब्दात् परे ततशब्दे सतीत्यर्थः । एवमग्रेऽपि । तमेव कथयितुं प्राग्-वस्तुस्थितिं निरूपयति—**इहेति ।** अस्य 'समस्तते' इत्यत्रान्वयः । लोपालोपयोरुदाहरणान्याह—**सततमित्यादिना । इह पुनर्भवानिति—भवान्**—पाणिनिः, **पुनः**—तु, इह ( समस्तते ) इत्यन्वयः । **आद्यश्चकारो** वाक्यालङ्कारे । अलोपोदाहरणमाह—**सन्ततमितीति ।** दोषमाह—**एतन्नेति ।**

( सिद्धान्तिसमाधानभाष्यम् )

**कर्तव्योऽत्र यत्नः । बाधकान्येव हि निपातनानि भवन्ति ॥**

**( प्रदीपः ) कर्तव्योऽत्र यत्न इति । 'लुम्पेदवश्यमः'** इत्ययं श्लोकोऽन्यार्थमवश्यं पठितव्यः । तेनैव सततं सन्ततमिति च सिध्यति, न तु निपातनेनेत्यर्थः । सांतत्यमिति चानभिधानात् ष्यञन्तस्य प्रयोगाभावः ॥ पुराणशब्देन पुरातनशब्दस्य बाधः प्राप्तः पृषोदरादित्वान्न भवति ॥

**( उद्द्योतः ) श्लोकोऽन्यार्थमवश्यमिति ।** एकदेशानुमतिद्वारा सातत्य इति निर्देशेन स एव श्लोको ज्ञाप्यते इत्यर्थः ॥ **न त्विति ।** निपातनेन सततमिति न साध्यत इत्यर्थः ॥ नन्वेवं सन्ततात्ष्यञि सान्तत्यमित्यपि स्यादत आह—**इति चानभिधानादिति ।** अत एव भगवता **'सन्ततमिति न सिध्यति'** इत्येवोक्तं न तु सूत्रोच्चारितसजातीयं सान्तत्यमिति न सिध्यतीत्युक्तम् ॥ **पुराणशब्देनेति । पुराणप्रोक्तेष्वित्यत्र** निपातितेनेत्यर्थः । **पृषोदरादित्वादिति ।** एवं च तेनैवोभयोरपि साधुत्वम्, न तु निपातनेनेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्रेति**—सततं, सन्ततमित्युभयसिद्धये इत्यर्थः । निमित्तार्थे इदमः सप्तम्या विधानात् । **हि**—यतः ।

प्रदीपे—**लुम्पेदवश्यम इति**—'कृत्ये तुम् काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोरि'ति शेषः । **अन्यार्थम्**—'सातत्य' इति प्रयोगसिद्ध्यर्थम् । **तेन**—'लुम्पेदवश्यम' इत्यादिश्लोकेन । निपातनेन सततं सन्ततमित्युभयासिद्धेस्तद् व्यवच्छिनत्ति—**एवेति ।** अतएवाह—**न त्विति । इति च**—इति तु ।

उद्द्योते—'लुम्पेदवश्यम' इत्यादिश्लोकं समूलयति—**एकदेशेति । स एव**—'लुम्पेदवश्यम' इत्यादिरेव । 'सातत्य' इति न निपातनेन निष्पन्नं किन्तु 'लुम्पेदवश्यम' इत्यादि-श्लोकस्य ज्ञापकम् । तथाचास्य बाधकत्वाभावेऽपि निपातनस्य बाधकत्वे न क्षतिरित्याशयः । **एवम्**—'लुम्पेदवश्यम' इत्यादि—श्लोकेनैव सततं सन्ततमित्युभयसिद्धौ । तदनभिधानं समूलयति—**अत एवेति ।** ष्यञन्त-'सान्तत्य' स्यानभिधानादेवेत्यर्थः । 'सन्ततमिति । एतन्न सिध्यती'ति भाष्यफलितपाठं निर्दिशति—**सन्ततमितीति ।** एवव्याख्यार्थमाह—**न त्विति ॥ सूत्रोच्चारितसजातीयम्**—'अपरस्पराः क्रियासातत्ये' इति सूत्रोच्चारितसातत्यसजातीयम् । पुराणशब्दस्य निपातनेन पुरातनशब्दस्य च पृषोदरादित्वेन साधने गौरवमिति लाघवादाह—**एव-**

**ङ्क्षेति** । पुराननशब्दे पृषोदरादित्वस्यावश्यकत्वे चेत्यर्थः । **तेनैव**—पृषोदरादित्वेनैव । **उभयोः**—पुराणपुराननशब्दयोः । **अपि**र्वाक्यालङ्कारे । एवव्यवच्छेद्यमाह—**न त्विति** । पुराणशब्दस्येति शेषः ।

( संज्ञोपसर्जनवारणाधिकरणम् )

( २१५ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ संज्ञोपसर्जनप्रतिषेधः ॥ * ॥

( भाष्यम् )

**संज्ञोपसर्जनीभूतानां सर्वादीनां प्रतिषेधो वक्तव्यः । सर्वो नाम कश्चित्तस्मै सर्वाय देहि । अतिसर्वाय देहि ॥**

**( प्रदीपः ) संज्ञोपसर्जनीभूतानामिति** । ये विषयान्तरे दृष्टास्त एवेमामवस्थां प्राप्ता इति विवक्षया च्विप्रत्ययनिर्देशः ॥ **सर्वाय देहीति** । पदकार्येषु **गौणमुख्यन्यायो** न तु प्रातिपदिककार्येष्विति **शब्दाश्रये च वृद्ध्यात्वे** इत्यत्रोक्तमिति प्रसिद्ध्यप्रसिद्धिवशात्संभवन्नपीह स नोक्तः । **समासकृत्तद्धिताव्ययसर्वनामासर्वलिङ्गा जातिरेकद्रव्योपनिवेशिनी संज्ञा** ॐ इत्येतदनपेक्ष्य संज्ञाप्रतिषेधः । तत्र ह्यपेक्षिते परया पूर्वा संज्ञा बाध्यत इति संज्ञाप्रतिज्ञया सर्वनामसंज्ञाया बाधनात्प्रसङ्गाभावः ॥ **अतिसर्वायेति** । प्रादिसमासोऽयं, बहुव्रीहौ संज्ञाप्रतिषेधात् । **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति तदन्तविधिः परमसर्वस्मा इत्याद्यर्थ आश्रितः ॥

**( उद्द्योतः ) च्विप्रत्ययेति** । गणपठितेभ्यः संज्ञोपसर्जनानां भेदात्संज्ञाया अप्राप्तौ प्रतिषेधानर्थक्यमिति शङ्काव्युदासाय भाष्ये च्विरुपात्त इति भावः ॥ तत्तत्पदत्वारोपवत् तदर्थे उपसर्जनत्वमप्यारोपितमिति च्वेरुपपत्तिरिति तात्पर्यम् ॥ **पदकार्येष्विति** । न च संज्ञा तथेति भावः ॥ इदमेव वार्तिकं तस्य न्यायस्य पदकार्यविषयत्वे लिङ्गमिति तात्पर्यम् ॥ अत **एवाभिव्यक्तपदार्था ये** इति न्यायस्याप्यत्राप्रवृत्तिरिति बोध्यम् ॥ अत्र न गुणयोगेन लाक्षणिकत्वरूपं गौणत्वमत आह—**प्रसिद्धीति** । तन्मूलं प्रसिद्धत्वादिकमत्रापि तुल्यमित्यर्थः ॥ **समासेति** । अनेन क्रमेणैताः संज्ञा एकसंज्ञाधिकारे कार्या इति वक्ष्यत्याकडारसूत्रे । तदनपेक्ष्यायं संज्ञाप्रतिषेध इत्यर्थः ॥ **एकद्रव्योपनिवेशिनीति** लौकिकसंज्ञालक्षणम् ॥ एतेन सर्वनामादिसंज्ञास्वनेकविषयास्विदमव्याप्तमिति परास्तम् ॥ नन्वतिसर्वस्य गणे पाठाभावात्संज्ञासूत्रे विशेष्यासन्निधानेन तदन्तविधेरभावाच्च कथमत्र प्राप्तिरत आह—**प्रयोजनमिति** । शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ एतत्तदन्तविधिफलत्वेन परमस इत्यस्योपन्यासः क्वचिद्दृश्यते स चिन्त्यः, **त्यदादीनाम** इत्यादावङ्गविशेषणत्वमूलकतदन्तविधिना सिद्धत्वात् ॥ स्मैभावे तु **विहितविशेषण**मिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**प्रतिषेध इति**—सर्वनामसंज्ञाया इत्यादिः । यथाक्रमं संज्ञाभूतं सर्वशब्दमुदाहृत्योपसर्जनीभूतन्तमुदाहरति—**अतिसर्वायेति** । सर्वमतिक्रान्तोऽतिसर्वस्तस्मा इत्यादिः ।

प्रदीपे—**विषयान्तरे**—सकलाद्यर्थे । **इमाम्**—संज्ञोपसर्जनीयाम् । नन्वत्र गौणमुख्यन्यायप्रवृत्त्या गौणानां संज्ञोपसर्जनीभूतसर्वादीनां सर्वनामसंज्ञाया अप्राप्तेस्तेषां तस्याः प्रतिषेधो न वक्तव्य इत्यत आह—**पदकार्येष्विति** । **उक्तमितीति**—उक्तमिति हेतोरित्यर्थः । **सः**—गौणमुख्यन्यायः । **संज्ञाप्रतिषेधः**—संज्ञाभूतसर्वादीनां सर्वनामसंज्ञायाः प्रतिषेधः । **तत्र हि**—यतः तस्मिन् । **परयेति**—संज्ञयेति शेषः । **प्रसङ्गाभाव इति**—संज्ञाभूतसर्वादिषु तस्या इत्यादिः । **प्रादिसमास इति**—'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'ति वार्तिकविहित इत्यादिः । नन्वतिक्रान्ताः सर्वे येन सोऽतिसर्व इति रीत्या बहुव्रीहिरेवायं कुतो नेत्यत आह—**बहुव्रीहाविति** । 'न बहुव्रीहा'विति सूत्रेणेत्यादिः । यद्ययं बहुव्रीहिः स्यात्तर्ह्यस्य सर्वनामसंज्ञायाः प्रतिषेधो वक्तव्य इति नोच्येत, यतस्तथोच्यतेऽतो नायं बहुव्रीहिरिति ज्ञायते इति भावः ।

उद्द्योते—**संज्ञोपसर्जनानामिति**—सर्वादिभ्य इत्यादिः । **संज्ञाया इति**—तेषामित्यादिः । **प्रतिषेधेति**—तस्या इत्यादिः । नन्वर्थभेदेनापि शब्दभेदादत्र कथं च्वेरुपपत्तिरित्यत आह—**तत्तत्पदत्वारोपवदिति** । संज्ञाशब्दत्वोपसर्जनशब्दत्वारोपवदित्यर्थः । गणपठितसर्वादिष्वित्यादिः । **तदर्थे**—गणपठितसर्वाद्यर्थे । **अपिना** संज्ञात्वपरिग्रहः । **इतीति**—इति हेतोरित्यर्थः । अत्रेति शेषः । **संज्ञा**—सर्वनामसंज्ञा । **तथेति**—पदकार्यमित्यर्थः । किन्तु प्रातिपदिककार्यमिति शेषः । **इदमेव**—'संज्ञोपसर्जनप्रतिषेध' इत्येव । **तस्य**—गौणमुख्यस्य । यदि **गौणमुख्यन्यायः** प्रातिपदिककार्यविषयोऽपि स्यात्तर्हि प्रकृते तस्य प्रवृत्त्यैव संज्ञोपसर्जनीभूतसर्वादीनां सर्वनामसंज्ञाया अप्राप्तेः 'संज्ञोपसर्जनप्रतिषेध' इति वार्त्तिकं नारभेत, यतस्तदारभ्यतेऽतः स न प्रातिपदिककार्यविषयः किन्तु पदकार्यविषय एवेत्यवगम्यते इति भावः । **अत एव**—अनेन वार्त्तिकेन गौणमुख्यन्यायस्य पदकार्यमात्रविषयत्वज्ञापनादेव । अस्य 'गौणमुख्यन्यायमूलस्ये'ति शेषः । **अभिव्यक्तपदार्था ये इति**—ये च शास्त्रेषु विश्रुताः । शास्त्रार्थस्तेषु कर्तव्यो न गौणे नोपसर्जने ॥' इति शेषः । **अत्रेति**—प्रातिपदिककार्ये इति शेषः । **तन्मूलम्**—मुख्यत्वगौणत्वमूलम् । सकलवाचकसर्वशब्दे प्रसिद्धत्वमूलकं मुख्यत्वं संज्ञादिभूतसर्वशब्दे चाप्रसिद्धत्वमूलकं गौणत्वमित्याशयः । **एतेन**—तस्य लौकिकसंज्ञालक्षणत्वाभ्युपगमेन । **इदम्**—एकद्रव्योपनिवेशिनीति संज्ञालक्षणम् । **संज्ञासूत्रे**—'सर्वादीनी'ति संज्ञासूत्रे । **प्राप्तिरिति**—संज्ञाया इत्यादिः । **सिद्धत्वादिति**—तस्येत्यादिः । नन्वेवं 'परमतस्मै' इति कथं सिद्ध्येदित्यत आह—**स्मैभावे त्विति** । **विहितेति**—सर्वनाम्न इतीत्यादिः ।

( आक्षेपभाष्यम् )

**स कथं कर्तव्यः ? ॥**

**( तत्त्वालोकः )** 'संज्ञोपसर्जनप्रतिषेध' इति वार्त्तिकस्य सामान्यत्वात्पृच्छति—**स इति** । संज्ञोपसर्जनीभूतसर्वादीनां प्रतिषेध इत्यर्थः । किन्तेषां सर्वनामसंज्ञाया उत सर्वादित्वस्य प्रतिषेधः कर्तव्य इति भावः ।

( २१६ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ पाठात्पर्युदासः, पठितानां संज्ञाकरणम् ॥ * ॥

( भाष्यम् )

**पाठादेव पर्युदासः कर्तव्यः । शुद्धानां पठितानां संज्ञा कर्तव्या । सर्वादीनि सर्वनामसंज्ञानि भवन्ति, संज्ञोपसर्जनीभूतानि न सर्वादीनि ॥**

**( प्रदीपः ) पाठादिति** । यथा तिङो गोत्रादीनीत्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणम्, तथेहापि सर्वादिसन्निवेशो विशेष्यते—असंज्ञोपसर्जनानि सर्वादीनि गणसन्निविष्टानि, नान्यानीत्यर्थः ॥

( उद्द्योतः ) यथेति । यथा तत्सूत्रं निपातविधायकं वाक्यभेदेन पाठविशेषणं च, तथेहापीत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—तत्र 'तेषां सर्वादित्वस्य प्रतिषेधः कर्तव्य इति' द्वितीयपक्षमभिप्रेत्य समाधत्ते—पाठादिति । पठ्यतेऽस्मिन्नसौ पाठः सर्वादिगणस्तस्मादित्यर्थः । पर्युदास इति—संज्ञोपसर्जनीभूतानामित्यादिः । एवमग्रेऽपि । कर्तव्य इति शेषः । तत्र हेतुमाह—पठितानामिति । यत इत्यादिः । तत्र 'तेषां सर्वनामसंज्ञायाः प्रतिषेधः कर्तव्य इति' प्रथमपक्षव्यवच्छेदायाह—एवेति । पठितत्वमात्रस्य तेषामन्याव्यावर्तकत्वादाह—शुद्धानामिति । आधुनिकसङ्केतशून्यानामन्याविशेषणानाञ्चेत्यर्थः । एकवाक्येन तदुभयालाभाद्वाक्यभेदेन तदुभयमाह—सर्वादीनीति । संज्ञोपसर्जनीभूतानीति—तथेत्यादिः ।

प्रदीपे—विशेषणमिति—तेन 'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेरि' त्यादावपि गोत्रादिग्रहणेन कुत्सनादावेव कार्यं भवतीति भावः । विशेष्यते इति—असंज्ञोपसर्जनेनेत्यादिः । नान्यानीति—न संज्ञोपसर्जनीभूतानि सर्वादीनीत्यर्थः । किन्त्वित्यादिः ।

उद्द्योते—तत्सूत्रम्—'तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोरि'ति सूत्रम् । वाक्यभेदेन—'तिङन्ताद् गोत्रादीन्यनुदात्तानि' तथा 'कुत्सनाभीक्ष्ण्यार्थकान्येव गोत्रादीनि ग्राह्याणी'ति वाक्यभेदेन ।

( आक्षेपभाष्यम् )

**किमविशेषेण ? ॥**

( प्रदीपः ) किमविशेषेणेति । किं यत् सर्वेषां सर्वादीनां सर्वनामकार्यं तदर्थमेवेति प्रश्नः ॥

( उद्द्योतः ) यद्यविशेषेणेत्यस्य सर्वकार्यार्थमित्यर्थः, तर्हि 'नेत्याह विशेषेण च' इत्युत्तरग्रन्थासङ्गतिरत आह—किं यत्सर्वेषामिति । यद्यपि स्यायाद्यपि न सर्वेषां कार्यम्, उभयत्रदादावसंभवात् ॥ तथाप्यन्तर्गणानाश्रयणेन विधीयमानं कार्यमिति तदर्थो बोध्यः ॥

( तत्त्वालोकः ) भाष्ये—किमविशेषेणेति—एव संज्ञोपसर्जनीभूतानां सर्वादिगणात्पर्युदासः कर्तव्य इति शेषः ।

प्रदीपे—सर्वनामकार्यम्—सर्वनामसंज्ञादिकार्यम् । तदर्थमेव—तन्निवृत्त्यर्थमेव ।

उद्द्योते—सर्वकार्यार्थम्—सर्वकार्यनिवृत्त्यर्थम् । असङ्गतिरिति—'विशेषेण चे' त्युत्तरग्रन्थेन सर्वकार्यनिवृत्त्यर्थमित्यस्यैव प्रतिपादनादिति शेषः । सर्वेषामिति—सर्वादीनामिति शेषः । असम्भवादिति—तस्येत्यादिः । कार्यमिति—यत्कार्यं तन्निवृत्त्यर्थमित्यर्थः । तदर्थः—प्रकृतप्रदीपार्थः ।

( समाधानभाष्यम् )

**नेत्याह । विशेषेण च ॥**

( प्रदीपः ) विशेषेण चेति । चशब्दादविशेषेणेत्यर्थः । यद् गणपाठोपलक्षितं विशिष्टं कार्यं त्यदादीनामः, अद्डुतरादिभ्य इत्यादि, तदर्थमपि पाठविशेषणमित्यर्थः ॥ यत्तु कार्यं युष्मदस्मदोर्ङसोऽशि इत्यादि स्वरूपमात्राश्रयं न सन्निवेशापेक्षं, तदविशेषेण भवति । तत्र हि न गणपठितयोर्युष्मदस्मदोर्निर्देशोऽपित्वौणादिकयोः ॥

( उद्द्योतः ) न संनिवेशेति । न सामान्यविशेषसंनिवेशापेक्षमित्यर्थः ॥ अविशेषेणेति । संज्ञोपसर्जनयोरपीत्यर्थः ॥ न गणेति । न गणपठितत्वाकारेणेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—तटस्थ उत्तरमनुवदति—नेत्याहेति न ( अविशेषेणैव संज्ञोपसर्जनीभूतानां सर्वादिगणात्पर्युदासः कर्तव्य इति वदति ( सिद्धान्ती ) इत्यर्थः । विशेषेण चेति—किन्तु विशेषे विशेषेण च तेषान्तस्मात्पर्युदासः कर्तव्य इति भावः ।

प्रदीपे—अविशेषेणेति—चेति शेषः । गणेति—अन्तःत्यर्थः । तदर्थम्—तन्निवृत्त्यर्थम् । अपिना—'यत्सर्वादिगणपाठलक्षितं सामान्यं कार्यं सर्वादीनि सर्वनामानीत्यादि, तन्निवृत्त्यर्थत्यस्य समुच्चयः । पाठविशेषणमिति—असंज्ञोपसर्जनं गणपाठसर्वादिविशेषणमित्यर्थः । इत्यर्थः—इत्याशयः । अपिरुक्तस समुच्चायको न त्वन्यस्येत्याशयेनाह—यत्त्विति । हि—यतः ।

उद्द्योते—सामान्यविशेषेति—सामान्यविशेषे तदुभयेत्यर्थः गणेति—सामान्यविशेषगणेत्यर्थः ।

( भाष्यम् )

**किं प्रयोजनम् ? ॥**

(तत्त्वालोकः) उक्ताशयानभिज्ञः पृच्छति—किमिति विशेषेणाविशेषेण च संज्ञोपसर्जनीभूतानां सर्वादिगणात्पर्युदासकरणस्येति शेषः ।

( २१७ प्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ सर्वाद्यानन्तर्यकार्यार्थम् ॥ * ॥

( भाष्यम् )

**सर्वादीनामानन्तर्येण यदुच्यते कार्यं तदपि संज्ञोपसर्जनीभूतानां मा भूदिति ॥**

( उद्द्योतः ) भाष्ये सर्वादीनाम्—तदन्तर्भूतानां त्यदादिप्रभृतीनाम् ॥ आनन्तर्येण आनन्तर्योपलक्षितत्यदादीनामित्यादिरूपेणेत्यर्थः ॥

(तत्त्वालोकः) भाष्ये—कार्यार्थमिति—कार्यनिवृत्त्यर्थमित्यर्थः विशेषेणाविशेषेण च तेषान्तस्मात्पर्युदासकरणमिति शेषः । अविशेषेण तेषान्तस्मात्पर्युदासकरणस्य प्रयोजनमपि प्रश्नोत्तरकोट्योरस्तीति सूचनायाह—अपीति । अनेन 'सर्वादीनामन्तर्गणानाश्रयणेन यत्कार्यं विधीयते तस्य' समुच्चयः । इतीति—प्रयोजनं विशेषेणाविशेषेण च तेषां तस्मात्पर्युदासकरणस्येति शेषः ।

( प्रश्नभाष्यम् )

**किं प्रयोजनम् ? ॥**

( उद्द्योतः ) किं प्रयोजनमिति । क्व प्रयोजनमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—अविशेषेण तेषान्तस्मात्पर्युदासकरणप्रयोजनस्थलस्य दर्शितत्वाद्विशेषेण तेषान्तस्मात्पर्युदासकरणप्रयोजनस्थलम्पृच्छति—किमिति । अत एवोद्द्योते किमोऽर्थं वक्ष्यति क्वेति ।

उद्द्योते—क्वेति—विशेषेण संज्ञोपसर्जनीभूतानां सर्वादिगणात्पर्युदासकरणस्येति शेषः ।

( २१८ प्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥*॥ प्रयोजनं डतरादीनामद्ड्भावे ॥*॥

( भाष्यम् )

**डतरादीनामद्ड्भावे प्रयोजनम् । अतिक्रान्तमिदं ब्राह्मणकुलं कतरद् = अतिकतरं ब्राह्मणकुलमिति ॥**

( तत्त्वालोकः ) समाधत्ते—प्रयोजनमिति । तस्येत्यादिः । उदाहरति—अतीति । यथेत्यादिः । एवमग्रेऽपि ।

( २१९ प्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ ॥ त्यदादिविधौ च ॥ ॥

( भाष्यम् )

त्यदादिविधौ च प्रयोजनम् । अतिक्रान्तोऽयं ब्राह्मणस्तम्=अतितद् ब्राह्मण इति ॥

( संज्ञाप्रतिषेधप्रत्याख्यानभाष्यम् )

संज्ञाप्रतिषेधस्तावन्न वक्तव्यः । उपरिष्टाद्योगविभागः करिष्यते—'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम्' । ततः—'असंज्ञायाम्' इति । सर्वादीनीत्येवं यान्यनुक्रान्तानि, असंज्ञायां तानि द्रष्टव्यानि ॥

( उद्द्योतः ) असंज्ञायामिति योगविभागो गणसूत्रे, नाष्टाध्यायीस्थे, तस्य जसि विभाषाविधायकत्वादिति बोध्यम् ॥ स्वमज्ञाती त्यादावपीदमनुवर्तत इति न दोषः ॥ सर्वादीनीत्येवं यानीति । सर्वादीनि शब्दरूपाणि इत्येवं सर्वविश्वेत्यादिक्रमेण यानि पञ्चत्रिंशदनुक्रान्तानि तानीत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—संज्ञाप्रतिषेधः—संज्ञाभूतानां सर्वादिगणात्पर्युदासः । तावत्—प्रथमम् । उपरिष्टादिति—'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायामि'ति सर्वादिगणसूत्रे इत्यर्थः । यत इत्यादिः । योगविभागप्रकारमाह—पूर्वपरेति । योगविभागफलितमाह—सर्वादीनीति ।

उद्द्योते—गणसूत्रे—'पूर्वपरे' त्यादि-सर्वादिगणसूत्रे । नाष्टाध्यायीस्थे—न तु 'पूर्वपरे' त्याद्यष्टाध्यायीस्थसूत्रे । कुत इत्यत आह—तस्येति । अष्टाध्यायीस्थ-'पूर्वपरे' त्यादिसूत्रस्येत्यर्थः । ननु योगविभागेन 'असंज्ञायामि'ति भागे प्रक्रान्तसर्वादिशेषत्वलाभेऽप्यप्रक्रान्तस्वादिशेषत्वं कथमित्यत आह—स्वमज्ञातीति । इदम्—'असंज्ञायामि'ति भागः ।

( उपसर्जनप्रतिषेधप्रत्याख्यानभाष्यम् )

उपसर्जनप्रतिषेधश्च न कर्तव्यः । 'अनुपसर्जनात्' इत्येष योगः प्रत्याख्यायते । तमेवमभिसंभन्त्स्यामः—अनुपसर्जन अ अदिति ॥

किमिदम्=अ अदिति ? ॥

अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ ॥

( प्रदीपः ) अनुपसर्जनादिति । ननु प्रधानेन तदन्तविध्यर्थो योगः प्रारब्धव्यः, कौम्भकारेय इति यथा स्यादिति, न चाणिति कृद्ग्रहणम् , तद्धितोऽप्यणस्तीति ॥ नैतदस्ति, स्त्रीप्रत्यये चानुपसर्जने नेति तदादिनियमाभावात् कारशब्दादपि ङीपि कुम्भकारीशब्दात् स्त्रीभ्यो ढगिति ढग्भविष्यति ॥ अनुपसर्जन अ अदिति । सुपां सुलुगिति षष्ठ्या लुक् ॥

( उद्द्योतः ) प्रत्याख्यायते इति । स्त्रीप्रत्ययप्रकरणस्थमपि सूत्रं तत्रानुपयुज्यमानं कार्यान्तरार्थं परिभाषारूपं ज्ञातव्यमिति भावः ॥ नन्विति । अन्यथा समासप्रत्ययविधौ तदन्तविधिप्रतिषेधाद् गृह्यमाणादेव प्रातिपदिकात्स्यात् । प्रत्ययग्रहणे च प्रत्ययग्रहणपरिभाषया प्रत्ययान्तादेव स्यान्न तु तदन्तादिति भावः ॥ अनेन चोत्तरत्र तदन्तविधौ ज्ञापिते उपसर्जने निषेधात् प्रधान एव स फलवानिति प्रधानेनेत्युक्तम् ॥ कौम्भकारेय इति । अणन्तत्वेन कारशब्दादेव ङीपि कारीशब्दस्यैव स्त्रीप्रत्ययान्ततया तत एव स्त्रीभ्यो ढकि तस्यैव ढग्यङ्गत्वाद्वृद्धिः स्याद्, न कुम्भस्येति भावः ॥ तदन्तविधौ तु समुदायात् ङीपि तत एव ढकि समुदायस्याङ्गत्वात्कुम्भशब्दे वृद्धिः सिध्यति ॥ ननु कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् तदन्तविध्यभावेऽपि कौम्भकारेयः सिद्धोऽत आह—न चेति । कृत एव ग्रहणे सा, न तु कृदन्तग्रहण इति भावः ॥ नैतदस्तीति । न च कदाचित् कारीशब्दादपि स्यात् । कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येनान्वयाभावात् ॥ नन्वेवं कुम्भकारीत्यत्र ङीबेव न स्यात् । कुम्भेनैकार्थीभूतावन्तस्य केवलस्य स्त्रीत्वेनायोगात् । अत एव सूत्रारम्भे न कदाचिदपि कारशब्दान्ङीप् । यस्य च विशिष्टस्य स्त्रीत्वेन योगो, न तदणन्तमिति चेन्न । वामहत्पूर्वग्रहणेन तदन्तग्रहणज्ञापनात् ॥ नन्वेवं बहुकुरुचरेत्यादावनिसङ्कारणादाचं निषेधोऽपि सार्थक इति वाच्यम् । टिड्ढाणञि त्यादौ उपात्तस्य टिदादेरेव स्त्रीत्वेन विशेषणेनादोषात् । पूर्वत्रोपात्तं तदन्तं च स्त्रीत्वेन विशेष्यते, उत्तरत्र चोपात्तमेवेत्यत्र व्याख्यानमेव शरणमिति वदन्ति ॥

परे तु—प्रत्याख्यायते इत्यस्य वार्तिककृतेति शेषः । अनुपसर्जनग्रहणमनर्थकम् , प्रातिपदिकेन तदन्तविधिप्रतिषेधाद् इति हि तत्र वार्तिकम् ॥ तद्रीत्यास्य तेन सिद्धिरित्याशयः ॥ अनुपसर्जनादिति किमर्थम् । बहुकुरुचरा''तदन्तविधिना प्राप्नोति ॥ अत उत्तरं पठति—अनुपसर्जनग्रहणमनर्थकमिति तत्र भाष्यकृदवतारणेनात्रत्यभाष्येण च तस्य वार्तिककृत्सिद्धान्तत्वप्रतीतेः ॥ यत्तु तदुत्तरं वचनद्वयम्—ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्यातिधीवरी । पूर्वसूत्रनिर्देशो वाऽऽपिशला ब्राह्मणीति ॥ तत्त्वाचार्यदेशीयस्य । तत्राद्यस्य पूर्वत्र तदन्ताप्रतिषेधेऽपि उत्तरत्र तदन्तविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्यानुपपादनात्तदुक्तित्वम् । अन्त्यं तु स्त्रियामित्यस्याविशेषणत्वात् स्त्रियां योण्विहित इत्यादिना भाष्य एव दूषितम् । तेनाद्यस्यैव वार्तिककृत्सिद्धान्तत्वं बोधितम् ॥ इदं तर्हि प्रयोजनम् । प्रधानेन तदन्तविध्यर्थमिति तु तत्र भाष्यकृता स्वयं सूत्रप्रयोजनमुक्तमिति न विरोधः ॥ अयं हि तत्र भाष्याशयः—अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावेऽपि कदाचित् कारीशब्दादपि स्यादिति पक्षे कुम्भकारेय इत्यस्यापत्तिः । यदुक्तं कुम्भेनेत्यादि तत्तुच्छम् । निष्कृष्यापत्येनैकार्थीभावाभावेऽपि समुदायेनैकार्थीभावेऽवयवेनापि तस्यैव सत्त्वात्सामर्थ्याक्षतेः । विशिष्टसंबन्ध्यपत्ये विशेष्यसंबन्धस्याव्याहतेश्च । अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि ॥ अत एव परमगार्ग्यस्यापत्यमित्यर्थे तदेकदेशगार्ग्यशब्दात्प्रत्यये परमगार्ग्यायण इति येनविधिरिति सूत्रे भाष्ये उदाहृतमिति तत्रैव निरूपयिष्यामः ॥ न च तदन्तविधावपि व्यपदेशिवद्भावेन केवलादपि ङीब् दुर्वारः । अनुपसर्जनादित्येतत्सामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेः । मुख्यव्यपदेशिनोऽभावे एव तदतिदेशप्रवृत्तेश्च । न च स्त्रीप्रत्ययेषु तदादिनियमाभावेन कारीशब्दस्यापि स्त्रीप्रत्ययान्तत्वानपायात्तस्मादपि कदाचिद् ढक् स्यादेवेति वाच्यम् । यतः प्रत्ययग्रहण इति नियमेनाधिकस्यैव व्यावृत्तिर्न न्यूनस्य । अस्यापत्यमिः एरपत्यमित्यर्थे यञिञोश्चेति फकोऽनापत्तेः । एवंच तन्निषेधेनानेन तस्यैव संग्रहो, नत्वत्व्यावर्त्यस्य न्यूनस्य । अयमधिकारोऽप्यत्रार्थे ज्ञापक इत्याहुः ॥

एकपदत्वे तूद्देश्यविधेयभावानुपपत्तेराह—सुपामिति ॥

( तत्त्वालोकः ) भाष्ये—उपसर्जनप्रतिषेधः—उपसर्जनीभूतानां तस्मात्पर्युदासः । च—अपि । अनुपसर्जनादिति—यत इत्यादिः । प्रत्याख्यायते इति—प्रत्याख्यास्यते इत्यर्थः । अत्र 'वर्त्त-

मानसामीप्ये वर्त्तमानवद्वे'त्यनेन लड्विधानात्। **तमेवमिति**—तं योगमेवं वक्ष्यमाणप्रकारेणा**भिसम्भन्त्स्यामो** व्याख्यास्याम इत्यर्थः। तद्व्याख्यानप्रकारमाह—**अनुपसर्जनेति**। **किम्**—किमर्थम्। **द्रष्टव्याविति**—इत्यर्थमिति शेषः। 'अनुपसर्जनादि'त्यत्र 'अनुपसर्जन आदि'ति छेदः, तत्र 'अनुपर्जने'ति लुप्तषष्ठ्यन्तम् 'आदि'ति च अश्च अच्चेति अत्। तथाच 'यत्र अ अत् इत्यादेशौ क्रियेते तत्रानुपसर्जनस्य ग्रहणमि'ति तदर्थः। तेन 'त्यदादीनाम' इति अः, 'अद्ड्डुतरादिभ्यः पञ्चभ्य' इति अद्ड्भावश्चोपसर्जनस्य न भवतीत्याशयः।

प्रदीपे—**योगः**—'अनुपसर्जनादि'ति योगः। **स्यादिति**—स्यादिति हेतोः। **अणिति**—'टिड्ढाणञि'ति सूत्रघटकमित्यादिः। **कृद्ग्रहणम्**—कृन्मात्रग्रहणम्। **तद्धित इति**—यत इत्यादिः। **अस्तीति**—तेन ग्राह्य इत्यादिः। **नियमाभावादिति**—अस्य कुम्भकारीशब्दादित्यत्रान्वयः। **अपिना** कुम्भकारशब्दसमुच्चयः। **षष्ठ्या इति**—अनुपसर्जनशब्दाद्विहिताया इत्यादिः।

उद्द्योते—**सूत्रम्**—'अनुपसर्जनादि'ति सूत्रम्। **तत्र**—स्त्रीप्रत्ययप्रकरणे। **कार्यान्तरार्थम्**—उपसर्जनीभूतस्यात्वात्त्वकार्यनिवृत्त्यर्थम्। भाष्यतात्पर्यमाह—**परिभाषेति**। **अन्यथा**—'अनुपसर्जनादि'ति सूत्राभावे। प्रकृते आह—**प्रत्ययेति**। **तदन्तात्**—प्रत्ययान्तान्तात्। **अनेन**—'अनुपसर्जनादि'ति योगेन। अस्याधिकारत्वादाह—**उत्तरत्रेति**। 'टिड्ढाणञि' त्यादावित्यर्थः। एवमग्रेऽपि। अस्य साफल्यमाह—**उपसर्जने इति**। **सः**—तदन्तविधिः। **उक्तमिति**—फलितमुक्तं न तु शाब्दमित्यर्थः। **तत एव**—कारीशब्दादेव। **स्त्रीभ्यो ढकि**—'स्त्रीभ्यो ढगि'ति ढकि। **तस्यैव**—कारीशब्दस्यैव। **समुदायात्**—कुम्भकारशब्दात्। **तत एव**—कुम्भकारीशब्दादेव। **समुदायस्य**—कुम्भकारीशब्दस्य। **'कृद्ग्रहणे'** इत्यस्य कृन्मात्रग्रहण इत्यर्थं सूचयन्नाह—**कृत एवेति**। **सा**—कृद्ग्रहणपरिभाषा। **स्यादिति**—ङगित्यादिः। **भूतस्येति**—कारीशब्दस्येति शेषः। **एवम्**—कारशब्दस्य कुम्भेनान्वये। **सूत्रारम्भे**—'अनुपसर्जनादि'ति सूत्रारम्भे। ननु तर्हि विशिष्टात् कुम्भकारशब्दादेव ङीबस्त्वित्यत आह—**यस्येति**। **च**—तु। **एवम्**—तदन्तविधिस्वीकारे। **अयम्**—'अनुपसर्जनादि'ति। **पूर्वत्र**—'वनो र चे'त्यादौ। **उत्तरत्र**—'टिड्ढाणञि'त्यादौ। अयं न सिद्धान्त इति सूचनायाह—**वदन्तीति**। कैयटादय इति शेषः। अत एव सिद्धान्तमाह—**परे त्विति**। **तत्र**—'अनुपसर्जनादि'ति सूत्रे। **अस्य**—प्रकृतार्थस्य। **तेन**—'अनुपसर्जनादि'ति सूत्रेण। ननु स भाष्यकृत्सिद्धान्तोऽस्त्वित्यत आह—**अनुपसर्जनादितीति**। **तत्र**—'अनुपसर्जनादि'ति सूत्रे। **अत्रत्यभाष्येण**—'अनुपसर्जनादि' त्येष योगः प्रत्याख्यायते, इत्यत्रत्यभाष्येण। **तस्य**—'अनुपसर्जनग्रहणमनर्थकमि'त्यस्य। **तदुत्तरम्**—'अनुपसर्जनग्रहणमनर्थकमि'ति पूर्ववार्त्तिकोत्तरम्। **पूर्वत्र**—'वनो र चे'त्यादौ। एवमग्रेऽपि। **तदन्ताप्रतिषेधस्येति**—'समासप्रत्ययविधावि'ति 'ग्रहणवता प्रातिपदिकेने'ति वा विहितो यः तदन्तविधिप्रतिषेधस्तदभावस्येत्यर्थः। अत्र 'प्रतिषेधस्ये'त्यन्तमेव वार्त्तिकं, न 'त्वतिधीवरी'त्यन्तम्, तस्य भाष्यकृद्दत्तोदाहरणत्वादिति बोध्यम्। **पूर्वसूत्रेति**—पूर्वाचार्यकृतसूत्रेत्यर्थः। भाष्यकृता तत्रेदं वार्त्तिकं व्याख्यातम्—'पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते, यावद् ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति तावदनुपसर्जनादिति। फलन्तु आपिशलिना प्रोक्तमधीते आपिशलेति। अणन्तादीकारो मा भूदिति'। **तत्र**—तयोर्मध्ये। **आद्यस्य**—'ज्ञापकन्त्वि'त्यस्य। **तदन्ताप्रतिषेधेऽपि**—तदन्ताप्रतिषेधे ज्ञापितेऽपि। **अप्राप्त्या**—ङीपोऽप्राप्त्या। **अस्य**—'अनुपसर्जनादि'ति सूत्रस्य। **तदुक्तित्वम्**—आचार्यदेशीयोक्तित्वम्। **अन्यम्**—'पूर्वसूत्रे'त्यादिकम्। **दूषितमिति**—अत एव तस्याचार्यदेशीयोक्तित्वमिति भाव **तेन**—तेनापि। **आद्यस्यैव**—'अनुपसर्जनग्रहणमनर्थकमि'त्यस्यै **विध्यर्थमिति**—अत्र 'विधिर्यथा स्यादि'ति पाठः। **तत्र**—'अ पसर्जनादि'ति सूत्रे। एवमग्रेऽपि। **सूत्रेति**—'अनुपसर्जनादि सूत्रेत्यर्थः। **न विरोध इति**—अत्रत्यतत्रत्यभाष्ययोरिति शेष **स्यादिति**—ङगित्यादिः। प्रकृतागतं कृष्णाद्युक्तानुवादं खण्डयति **यदुक्तमिति**। **कुम्भेनेत्यादीति**—अनेन 'कुम्भेनैकार्थीभूत निष्कृष्यापत्येनान्वयाभावादि'त्यस्य संग्रहः। अत्रत्यशब्दकौस्त 'कुम्भेनैकार्थीभूतस्य निष्कृष्यापत्येन योग इति वक्तुमशक्यत्वाच त्युक्तं वर्तते। **निष्कृष्येति**—कुम्भेनैकार्थीभूतस्येत्यादिः। **समुदा नेति**—कुम्भकारीत्यनेनेत्यर्थः। अपत्यस्येति शेषः। **अवयवेन पीति**—कारीत्यनेनापीत्यर्थः। तस्येति शेषः। **तस्य**—एकार्थीभावस्य **एवेन** तदभावव्यवच्छेदः। **अत एव**—उक्तहेतुद्वयसत्त्वादेव। तत्रत भाष्यसिद्धान्तोपरि शङ्कते—**न चेति**। **केवलादपि**—कारशब्द दपि। अत्रत्यप्रदीपसिद्धान्तोपरि शङ्कते—**न चेति**। **एवञ्च**—'प्रत्यय ग्रहण' इति नियमस्याधिकव्यावर्त्तकत्वे च। **तन्निषेधेन**—तदा नियमनिषेधेन। **अनेन**—'स्त्रीप्रत्यये चानुपसर्जनेने'त्यनेन। **तस्यैव** अधिकस्यैव। इदं द्रढयति—**अयमधिकार इति**। अनुपसर्जन धिकार इत्यर्थः। **अत्रार्थे**—अधिकसंग्रहरूपार्थे। **एकपदत्वे इति**—अनुपसर्जनादित्यस्य समासेनेत्यादिः।

( आक्षेपभाष्यम् )

**यद्येवम् अतियुष्मद् अत्यस्मद् इति न सिध्यति ॥**

**( तत्वालोकः ) यद्येवमिति**—तर्हीति शेषः। यदि 'यत्र अ, अत् इत्यादेशौ क्रियेते तत्रानुपसर्जनस्य ग्रहणमि'ति 'अनुपसर्जनादि'ति परिभाषार्थोऽभ्युपगम्यते तर्हि युष्मानतिक्रान्तेभ्योऽतियुष्मदित्यत्र, अस्मानतिक्रान्तेभ्योऽत्यस्मदित्यत्र च भ्यसः 'पञ्चम्या अदि'ति सूत्रेण-अत्-नोपपद्येतेति भावः।

( समाधानभाष्यम् )

**प्रश्लिष्टनिर्देशोऽयम्—अनुपसर्जन अ अ अदिति। अकाराद् अकारात्कारौ शिष्यमाणावनुपसर्जनस्य द्रष्टव्यौ ॥**

**( प्रदीपः ) अ अ अदिति**। अकारेणाकारात्कारौ विशेष्येते। अकारात्परौ यावकारात्कारौ तावनुपसर्जनस्येत्यर्थः। **पञ्चम्या अदि**त्ययं तु युष्मदस्मद्भ्यामनकारान्ताभ्यां विधीयत इति परिभाषानुपस्थानादुपसर्जनाभ्यामपि भवति ॥ **त्यदादीनाम** इत्ययमकारात्परस्य हलः स्थाने विधीयत इति अकारात्परोऽकारो भवतीति परिभाषोपस्थानादतितद् इत्यत्र न भवति ॥ एवं तु प्रियौ द्वावस्येति बहुव्रीहौ कृतेऽकारान्तादविधानात्परिभाषानुपस्थानादत्वं प्राप्नोति। **तदोः सः सा**विति च सत्वमविशेषितमित्युपसर्जनस्यापि प्राप्नोति ॥ तत्रायं समाधिः—**त्यदादीनाम** इत्यत्र त्यदादिषु परिभाषोपस्थानादनुपसर्जनानां तेषां ग्रहणम्, तत्साहचर्याद् द्विशब्दोऽपि तथाविध एव गृह्यते। सत्वविधौ च तथाविधानामेवानुवृत्तिरित्यत्रापि न दोषः ॥ अतिसर्वायेत्यादौ त्वविशेषकार्यमपरिहृतमेव ॥

**( उद्द्योतः )** अअअदित्यत्र अ इति लुप्तपञ्चम्यन्तं तदाह—**अकारादिति ॥ अकारान्ता**दिति भाष्येऽन्तग्रहणं तु फलितार्थपरं यथाकथंचिद्। न त्वत्र तदन्तविधिरिति भ्रमितव्यम्, विशेष्यासंनिधानात्। प्रायेण भाष्येऽपि **अकारादकारात्कारा**वित्येव पाठः। शेषे

लोपस्यान्त्यलोपत्वपक्षे विधानोत्तरमकारात्परत्वसंभवादाह—**विधीयत इति** । तदुक्तं भाष्ये—**शिष्यमाणाविति॥ अपरिहृतमेवेति ।** एवं चैतदपरितोषाद्भाष्ये पक्षान्तरमिति भाव इति केचित् ।

परे तु-इदं समाधानं **सर्वाद्यानन्तर्यकार्यार्थं प्रतिषेधो वक्तव्य** इत्यस्यैवार्थस्य । डतरादिविषये तस्य प्रधानाभि तदन्तेऽप्रवृत्तिरिति विशेषं बोधयत् तद्वारकयुक्तैवोपसर्जनेपि व्यावृत्तिरित्येवंरीत्या तत्फलकत्वाभावनुपसर्जनप्रतिषेधस्य बोधयितुमेकदेशी पक्षान्तरमाह—**अथवेति ।** अन्त्यं समाधानद्वयं तु साधारणमित्याहुः ।

( **तत्त्वालोकः** ) भाष्ये—**अयम्**—'अनुपसर्जनादि'त्येष योगः । प्रश्नप्रकारमाह—**अनुपसर्जनेति ।** तस्यार्थमाह—**अकारादिति ।** अत्र पूर्वत्र च वषट्कार इति प्रयोगवद्वत्कार इति प्रयोगः ।

प्रदीपे—**अकारादिति**—तथाचेत्यादिः । **ताविति**—विधीयेते इत्यादिः । **इत्यर्थः**—इति 'अनुपसर्जनादि'ति परिभाषार्थः । **इत्ययम्**—इत्यनेन विधीयमानोऽत् । **अनकारान्ताभ्यामिति**—परस्य पञ्चम्या भ्यस इति शेषः ॥ **इतीति**—इति हेतोरित्यर्थः । अत्रेति शेषः । **परिभाषेति**—'अनुपसर्जनादि'ति परिभाषेत्यर्थः । एवमग्रेऽपि ॥ **अपीति**—परस्य पञ्चम्या भ्यसः स इति शेषः । **इत्ययम्**—इत्यनेन विधीयमानः अः । **नेति**—स इत्यादिः । शङ्कते-**एवमिति । बहुव्रीहौ कृते इति**—व्युत्पत्तावित्यादिः । निष्पन्नस्य प्रियद्विशब्दस्य, द्विशब्दे 'त्यदादीनाम' इत्यनेन विधीयमानात्वस्येति शेषः । दोषान्तरमाह—**तदोरिति । उपसर्जनस्यापीति**—अतित्यदित्यादावुपसर्जनत्यदादिघटकतकारादेरपीत्यर्थः । तदिति शेषः । **तत्र**—तयोराद्ये । **तेषाम्**—त्यदादीनाम् । **तदिति**—अनुपसर्जनत्यदादीत्यर्थः । **तथाविधः**—अनुपसर्जनः । एवमग्रेऽपि । द्वितीये समाधानमाह—**सत्वविधाविति । एवेति**—त्यदादीनामिति शेषः । **इत्यत्रापि**—इति हेतोः सत्वविधावपि । एवमपि दोषान्तरमाह—**अतीति ।**

उद्द्योते—**अ इतीति**—प्रथममित्यादिः । **भाष्य इति**—भाष्यपाठे सति तत्रेति भावः । **यथाकथञ्चिदिति**—अगमकत्वेऽपि शब्दस्वरूपं विशेष्यमादायेत्याशयः । **शेषे लोपस्य**— 'शेषे लोप' इति लोपस्य । **विधानोत्तरमिति**—( भ्यसो विहितस्यात्वस्य ) अन्त्यलोपविधानानन्तरमित्यर्थः । **एवञ्च**—तत्र तदपरिहारे च । **केचित्**—दण्डिकृष्णरत्नकृदादयः । केचिदित्युक्त्या सूचितामरुचिमाह—**परे त्विति । इदम्**—'अनुपसर्जनादि' त्यस्य परिभाषात्वमभ्युपगम्य विहितम् । **इत्यस्यैवेति**—अन्तर्गणाश्रयणप्रयुक्तकार्यनिवृत्त्यर्थमुपसर्जनीभूतानां सर्वादिगणात्पर्युदासः कर्तव्य इत्यस्यैवेत्यर्थः । तथाच सर्वोनिर्वाहादियुक्तिरेकदेशिन एवेति भावः । नन्वेवं किं पक्षान्तरेणेत्यत आह—**डतरादीति । तस्य**—अद्ड्डादेः । **तद्वारकेति**—प्रधानद्वारकेत्यर्थः । **तत्फलकत्वेति**—अन्तर्गणकार्यनिवृत्तिफलकत्वेत्यर्थः । **अन्त्यम्**—'अथवा नेदमि'त्यनेन 'अथवा महती'त्यनेन च विधास्यमानम् । संज्ञोपसर्जनविषयकत्वादाह—**साधारणमिति ।**

## ( एकदेशिसमाधानान्तरभाष्यम् )

## अथवा-अङ्गाधिकारे यदुच्यते, गृह्यमाणविभक्तेस्तद्भवति ॥

( **प्रदीपः** ) **गृह्यमाणविभक्तेरिति ।** गृह्यमाणानां त्यदादीनां डतरादीनां च स्वार्थद्वारेण संबन्धिनी या विभक्तिस्तदर्थगतसंख्याकर्मादिवाचिनी तस्या इत्यर्थः ॥

( **उद्द्योतः** ) **स्वार्थद्वारेणे**त्यादेर्विवरणं **तदर्थगते**त्यादि । **गृह्यमाणविभक्तेरिति** संबन्धसामान्ये षष्ठी । तेन विभक्तौ विधीयमानत्वस्याप्यस्यापि संग्रह इति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—अङ्गाधिकारीयं यत्कार्यं तद् गृह्यमाणप्रकृतिकविभक्तौ परे तादृशविभक्त्युद्देश्यकं वा भवतीत्याशयेनाह—**अथवेति ।**

उद्द्योते—तत्र पौनरुक्त्यदोषवारणायाह—**स्वार्थद्वारेणेत्यादेरिति ।** भाष्यकारीयन्यूनतां निराकरोति—**गृह्यमाणेति । विभक्ताविति**—गृह्यमाणप्रकृतिकविभक्तौ परे इत्यर्थः । **अपिना**—तादृशविभक्त्युद्देश्यकत्वेन विधीयमानाद्ड्भावस्य समुच्चयः ।

## ( समाधानबाधकभाष्यम् )

## यद्येवम्, परमपञ्च परमसप्त 'षड्भ्यो लुग्' इति लुग् न प्राप्नोति ॥

( **प्रदीपः** ) **यद्येवमिति ।** गृह्यमाणाद् विहिता या विभक्तिरित्येवं सबन्धं मन्वानस्य प्रश्नः ॥

( **उद्द्योतः** ) **षड्भ्य** इति षष्ठ्यर्थे पञ्चमीति मन्वानः शङ्कते—**यद्येवमिति ॥**

( **तत्त्वालोकः** ) भाष्ये—**यद्येवमिति**—तर्हीति शेषः । **परमसप्तेति**—इत्यादौ संख्यावाचित्वाभावात् षट्त्वाभावेन ततोविहितविभक्तेः गृह्यमाणप्रकृतिकत्वाभावादिति शेषः ।

प्रदीपे— **गृह्यमाणादिति**—गृह्यमाणविभक्तेरित्यत्रेत्यादिः ।

उद्द्योते—कैयटोक्त-प्रश्नाशय-बीजमाह-**षड्भ्य इतीति ।** 'षड्भ्यो लुगि'ति सूत्रघटकेत्यादिः ।

## ( समाधानसाधकभाष्यम् )

## नैष दोषः । षट्प्रधान एष समासः ॥

( **प्रदीपः** ) आर्थः संबन्धोऽत्र गृहीत इत्युत्तरेऽभिप्रायः ॥ यद्येवं, पञ्चकाः शकुनय इति कनः स्वार्थिकत्वाज्जसो लुक् प्राप्नोति । उच्यते-कनि कृते शब्दान्तरत्वान्नान्तत्वाभावान्नायं षट्संज्ञक इत्यदोषः ॥ [ **युष्मदस्मद्भ्यां ङसोऽशि**त्यत्र त्वङ्गेन विभक्तिर्विशेष्यत इत्युपसर्जनाभ्यामपि सिध्यति ॥ ]

( **उद्द्योतः** ) **कनः । संख्यायाः संज्ञासङ्घे**त्यनेन विहितस्य ॥ **कनीति ।** कनि कृते कन्नन्त एव संख्यावाची, न प्रकृतिः । स च न नान्त-इति षट्त्वाभावात्ततः परस्य जसो न लुगित्यर्थः ॥ **षड्भ्य** इति पञ्चम्येव । षड्भ्यः परयोः प्रत्यासत्त्या षडर्थगतसंख्याभिधायिनोर्लुगित्यर्थइति भावः ॥ **युष्मदित्यादिसिध्यती**त्यन्तग्रन्थोऽत्र पुनरुक्तः । अनुपदमग्रे वक्ष्यमाणत्वात् ॥

परे तु **गृह्यमाणविभक्तेरित्यस्य** गृह्यमाणाद्विहितविभक्तेरित्येवार्थः । अद्ड्विषयमेतत् । कतरान्तस्यानभिधानमभिप्रेत्य तत्राद्ड्भाव एवेष्ट इत्यभिप्रेत्य वा ॥ तुल्यन्यायात् **षड्भ्य** इत्यत्रापि विहितविशेषणमेवेति तत्रातिप्रसङ्गं शङ्कते—**यद्येवमिति ।** परमपञ्चेत्यादेर्लोके गणनायां व्यवहाराभावेन षट्त्वाभाव इति लुगप्राप्तिरिति प्रश्नः ॥ संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वेन विशिष्टस्यापि षट्त्वमस्त्येव । गणनायां प्रसिद्धानामेवेह संख्यावाचिनां ग्रहणमित्यत्र न मानमित्युत्तरम् ॥ पञ्चम्यन्तस्य त्वदुक्तसंबन्धेन विभक्त्याऽन्वयो दुरुपपादः । आवृत्तौ मानाभावश्च । **षट्प्रधान** इत्यस्य त्वदभिमतषडर्थप्रधानोऽतः समुदायोऽपि षट्संज्ञ इत्यर्थः ॥ षष्ठ्यन्तस्थलेपि विहितत्वसंबन्धेनान्वय इत्याशयेन शङ्कते—**इह तर्हीति ॥** वैषम्यमुपपादयन्स्वाशयमाह-**इह तावदित्यादिनेति**—भाष्यार्थमाहुः ॥

( **तत्त्वालोकः** ) भाष्ये—**पट्प्रधान इति**—यत इत्यादिः। परमपञ्चनादिशब्दस्यापि संख्याप्रकारकसंख्येयमुख्यविशेष्यकबोधजनकत्वेन षट्त्वात् ततो विहितविभक्तेः गृह्यमाणप्रकृतिकत्वसत्त्वादित्याशयः।

प्रदीपे—**अत्र**—गृह्यमाणविभक्तेरित्यत्र। शङ्कते-**यद्येवमिति**—तर्हीति शेषः। **इति**—इत्यत्र। **जस इति**—पञ्चकशब्दस्यापि संख्यावाचित्वेन षट्त्वात्ततो विहितस्येत्यादिः। गृह्यमाणप्रकृतिकत्वसत्त्वादिति शेषः। षट्त्वे संख्यावाचित्वमात्रं न प्रयोजकमपि तु नान्तत्वमपीत्याशयेन समाधत्ते— **कनि कृते इति।** निष्पन्नस्य पञ्चकशब्दस्येति शेषः। **अयम्**—पञ्चकशब्दः। **इति**—इति हेतोः।एवमग्रेऽपि। **अपीति**—ताभ्यां परस्य ङसः स इति शेषः।

उद्द्योते—**विहितस्येति**—पञ्चन् शब्दादित्यादिः। **ननु** पञ्चकशब्दस्य शब्दान्तरत्वेऽपि पञ्चन्शब्दस्य संख्यावाचित्वं नापगतमित्यत आह—**कनि कृते इति।** अन्यथा तद्विधानवैयर्थ्यमेवेत्याशयः। **स च**—स तु। **इतीति**—तस्येति शेषः। कैयटोक्तोत्तराशयवीजमाह—**षड्भ्य इतीति।** 'षड्भ्यो लुगि'तिसूत्रघटकेत्यादिः। **लुगिति**—जश्शसोरित्यादिः। **अग्र इति**—तस्येति शेषः। 'अङ्गस्ये'ति-षष्ठीस्वरसादाह—**परे त्विति। एवेना**त्रार्थसम्बन्धग्रहणनिरासः। अत एवाह—**अद्डिति।** नन्वेवं परमकतरदित्यत्राद्डादेशो नोपपद्येतेत्यत आह—**कतरान्तस्येति।** अनभिधानस्यागतिकगतित्वादाह—**तत्रेति। अपिना** 'अद्डुतरादिभ्य' इत्यस्य परिग्रहः। **गणनायामिति**—संख्येत्यादिः। एवमग्रेऽपि। **लुगिति**—ततो विहितजश्शसोर्गृह्यमाणप्रकृतिकत्वाभावादित्यादिः। **विशिष्टस्य**—परमपञ्चन्नित्यादेः। **ग्रहणमिति**—षट्संज्ञासूत्रे इत्यादिः। **मानमिति**—इति ततो विहितजश्शसोर्गृह्यमाणप्रकृतिकत्वसत्त्वाल्लुक्सिद्धिरिति शेषः। कैयटोक्तौ दोषमाह—**पञ्चम्यन्तस्येति।सम्बन्धेन**—आर्थसम्बन्धेन। नन्वावृत्त्योभयेष्टसिद्धिरित्यत आह—**आवृत्ताविति।** कैयटोक्तोत्तराशयस्य भाष्यकृदभिमतत्वमाह—**षट्प्रधान इति। वैषम्यमिति।** षष्ठीपञ्चम्योः परस्परमित्यादिः। **स्वाशयम्**—गृह्यमाणेत्यस्याशयम्।

## ( समाधानबाधकभाष्यम् )

**इह तर्हि-प्रियसक्थ्ना ब्राह्मणेन, अनङ् न प्राप्नोति ॥**

( **प्रदीपः** ) **प्रियसक्थ्नेति।** सक्थिशब्दः शकटावयववचनोऽत्रेति **बहुव्रीहौ सक्थ्यक्ष्णो**रिति समासान्तो न कृतः॥

( **उद्द्योतः** ) **शकटेति।** स च न स्वाङ्गमिति भावः॥

( **तत्त्वालोकः** ) भाष्ये—अनङोऽङ्गाधिकारीयकार्यत्वाद् गृह्यमाणप्रकृतिकविभक्तौ परे-एव विधानं स्यादिति प्रियसक्थ्नेत्यत्र तदभावेनानङ् न प्राप्नोतीत्याशयेनाह—**इहेति। ब्राह्मणेन**—ब्राह्मणेनेति।

प्रदीपे—ननु प्रियं सक्थि यस्येति व्युत्पत्तौ बहुव्रीहौ कृते निष्पन्नात्प्रियसक्थिशब्दाद् 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच्' इति सूत्रेण च् प्रत्ययः कुतो नेत्यत आह—**सक्थिशब्द इति।**

उद्द्योते—**स च**—शकटावयवश्च।

## ( समाधानसाधकभाष्यम् )

**सप्तमीनिर्दिष्टे यदुच्यते, प्रकृतविभक्तौ तद्भवति ॥**

( **प्रदीपः** ) **प्रकृतविभक्ताविति।** अङ्गार्थसंबन्धिन्यां विभक्तावित्यर्थः॥

( **उद्द्योतः** ) **अङ्गार्थेति।** प्रकृतशब्देनाङ्गम्॥

( **तत्त्वालोकः** ) भाष्ये—**भवतीति**—तथाच प्रियसक्थ्नेत्यत्र तादृशविभक्तिसत्त्वादनङ् सिद्ध्यतीति भावः।

## ( समाधानबाधकभाष्यम् )

**यद्येवम्, अतितद् अतितदौ अतितद इति अत्वं प्राप्नोति ॥ तच्चापि वक्तव्यम् ॥**

( **प्रदीपः** ) **तच्चापीति। गृह्यमाणविभक्ते**रिति **सप्तमीनिर्दिष्टे यदुच्यते** इति च।

( **उद्द्योतः** ) एतच्चापीति वक्तव्ये तच्छब्दनिर्देशाद्व्यवहितपरामर्शः अपिनाऽव्यवहितस्य चेत्याह—**गृह्यमाणेत्यादि ॥**

( **तत्त्वालोकः** ) भाष्ये—**यद्येवमिति**—तर्हीति शेषः। **इतीति**-इत्यादावित्यर्थः। अङ्गार्थसम्बन्धिविभक्तिसत्त्वादिति शेषः। 'अङ्गाधिकारे' इत्युक्तौ प्रियसक्थ्नेत्यत्राप्रसङ्गात्, 'सप्तमीनिर्दिष्टे' इत्युक्तौ चातितदित्यादिष्वतिप्रसङ्गात्तदुभयं वक्तव्यमित्याशयेनाह—**तच्चापीति।** तथाचैतन्मते गौरवमिति भावः। अत्रत्य—**श्चकारो** वाक्यालङ्कारे।

उद्द्योते—**व्यवहित**पदेन 'अङ्गाधिकारे' इत्यस्य, **अव्यवहित**पदेन च 'सप्तमीनिर्दिष्टे' इत्यस्य परिग्रहः।

## ( समाधानसाधकभाष्यम् )

**न वक्तव्यम्। इह तावद्-'अद्डुतरादिभ्यः पञ्चभ्यः' इति पञ्चमी, अङ्गस्येति षष्ठी, तत्राशक्यं वि(भिन्न)विभक्तित्वाद् डतरादिभ्य इति पञ्चम्याऽङ्गं विशेषयितुम्। तत्र किमन्यच्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययाद्—डतरादिभ्यो यो विहित इति ॥**

( **प्रदीपः** ) **डतरादिभ्यो यो विहित इति।** अर्थद्वारकं विधानमाश्रयितव्यम्। तेन परमकतरदित्यत्रापि भवति। **युष्मदस्मद्भ्यां ङसोऽशि**त्यत्र तु प्रकरणेऽङ्गेन विभक्तिर्विशेष्यतेऽर्थद्वारेण, युष्मदस्मद्भ्यां तु परत्वमात्रेणेत्यतियुष्मदित्यादावपि कार्यं भवति॥

( **उद्द्योतः** ) **अर्थद्वारकमिति।** डतरादिभ्यो विहितो योर्थस्तत्प्रतिपादकस्तस्मादित्यर्थः॥ तदर्थकप्रत्ययविधानेऽर्थस्यापि विधानमस्तीत्यभिमानः॥ **डतरादिभ्य** इत्यस्य षष्ठ्यर्थत्वे तु **वि(भिन्न)-विभक्तित्वा**दिति भाष्यविरोधः॥

परे तु विधानस्य सर्वथाऽनाश्रयणेन **'अर्थद्वारकं विधानमाश्रयितव्यम्'** इति स्वग्रन्थविरोधः, तस्माद्विहितविशेषणमिति यथाश्रुतमेव भाष्यम्। परमकतरदित्यत्राद्डादेशे न भाष्यान्तरं मानमस्ति। प्रकृतभाष्य तु विपरीतं तदभावबोधकमेवेति प्रामाणिकाः॥ त्यदादिप्रकृतिकविभक्तावित्यर्थं मत्वा शङ्कते—**यद्येवमिति।** उक्ताशयेनाह—**त्यदादिप्रधान इति। अङ्गस्ये**ति सूत्रेऽतो भिस ऐसित्यादौ विभिन्नविभक्तित्वादसंबन्धमाशङ्क्याङ्गनिमित्तं यो भिसिति संबन्धं वक्ष्यति। तेन न्यायेनात्रापि संबन्धसंभवादियमेकदेश्युक्तिः। तस्माल्लक्ष्यानुसारात् **षड्भ्यो डतरादिभ्य** इति सूत्रद्वये विहितविशेषणं भाष्यसंमतम्, तस्यार्थस्य लक्ष्यविरोधेन भाष्यकृता दूषणाकरणादित्याहुः॥

( **तत्त्वालोकः** ) भाष्ये—तदुभयोक्तावपि विनिगमनाविरहात् 'अस्थिदधी'त्यादौ 'गृह्यमाणविभक्तेरि'त्यस्योपस्थित्या प्रियसक्थ्नेत्यादावनङोऽनुपपत्तिः, तथा 'त्यदादीनाम' इत्यादौ 'प्रकृतविभक्तावि'त्यस्योपस्थित्या अतितदित्यादावत्वापत्तिरित्याशयेनाह—**न वक्त-**

**न्यमिति ।** तदुभयमित्यादिः । तदुभयस्यावक्तव्यत्वे सर्वत्र प्रकारान्तरेण समाधानस्य वक्तव्यत्वादादौ अदड्विषये समाधानमाह—**इहेति । तावत्**—प्रथमम् । **पञ्चम्या**—पञ्चम्यन्तेन **तत्रेति**—तर्हीत्यादिः । **शक्यमिति**—तेनेति शेषः । अत्वविधिस्तु प्रतियोगिनोऽनुपादानात्पुनराह—**अत्वदिति ।** विशेषणप्रकारमाह—**डतरादिभ्य इति ।** तथाच तस्य 'डतरादिभ्यो' विहितयोर्लुक्संज्ञानिमित्तयोः स्वमोरद्डादेशः स्यादित्यर्थः । तेन 'अतितरं विप्रकुलमि'त्यादौ नाद्डादेशापत्तिरिति भावः ।

प्रदीपे—भाष्यस्य यथाश्रुतार्थेन सर्वत्रानिर्वाहादाह—**अर्थद्वारकमिति ।** डतरादिभ्य इत्यादिः । स्वमोरिति शेषः । **भवतीति**—अद्डादेश इत्यादिः । **परत्वस्याश्रेणेति**—विभक्तिर्विशेष्यते इत्यनुषज्यते ।

उद्द्योते—प्रदीपाशयमाह—**डतरादिभ्य इति ।** अर्थस्य विषेरसम्भवादाह—**तदर्थकेति ।** ननु तत्र पञ्चमी षष्ठ्यर्थे इत्येव प्रदीपाशयोऽस्त्वित्यत आह—**डतरादिभ्य इति । इत्यस्य**—इत्यत्र पञ्चम्याः। अभिमानपदसूचितामरुचिं कथयन् प्रकारान्तरेण भाष्यतात्पर्यमाह—**परे त्विति ।** कैयटेनार्थसम्बन्धस्यैवाश्रयणादाह—**अनाश्रयणेनेति । तदभावेति**—अद्डादेशाभावेत्यर्थः । तत्रेत्यादिः । आर्थसम्बन्धे दोषाभावादाह—**मत्वेति । उक्ताशयेन**—आर्थसम्बन्धेन । इदमग्रिमभाष्यं दूषयति—**अङ्गस्येतीति । अत्रापि**—त्यदादीनाम इत्यादावपि । **इयम्**—'अङ्गेनाकारमि'त्याद्युक्तिः । उक्तं भाष्यतात्पर्यमुपसंहरति—**तस्मादिति ।**

( समाधानसाधकभाष्यपरिशिष्टम् )

**इहेदानीम्—'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इति, त्यदादीनामो भवतीति । अस्थ्यादीनामित्येषा षष्ठी, अङ्गस्येत्यपि । त्यदादीनामित्यपि षष्ठी, अङ्गस्येत्यपि । तत्र कामचारः गृह्यमाणेन वा विभक्तिं विशेषयितुमङ्गेन वा । यावता कामचारः । इह तावद् 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' इत्यङ्गेन विभक्तिं विशेषयिष्यामः, अस्थ्यादिभिरनङ्म्—अङ्गस्य विभक्तावनङ् भवति, अस्थ्यादीनामिति ॥ इहेदानीं त्यदादीनामो भवतीति, गृह्यमाणेन विभक्तिं विशेषयिष्यामः, अङ्गेनाकारम्—त्यदादीनां विभक्तावो भवति, अङ्गस्येति ॥**

**( उद्द्योतः )** भाष्ये अकारविषयेऽपि समाधानं वक्तुमाह—**इहेति । इह तावदिति ।** लक्ष्यानुसारश्च तत्र तत्र तथा तथा व्याख्याने बीजम् । **अङ्गस्य विभक्ता**वित्यादेश्चाङ्गार्थगतार्थप्रतिपादकविभक्तावित्याद्यर्थः । षष्ठ्यन्तत्वेन तथान्वयस्य सूपपादत्वादिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**भवतीतीति**—इह च समाधीयते, तत्रेति शेषः । **कामचार इति**—तावतेति शेषः । **तावत्**—प्रथमम् । **अङ्गस्य विभक्ताविति**—तथाचेत्यादिः। **त्यदादीनां विभक्ताविति**—एवञ्चेत्यादिः ।

उद्द्योते—**अपिना**ऽनङ्विषयपरिग्रहः । **समाधानमिति**—'इह तावद् अस्थिदधी' त्यादिनेत्यादिः । तयोः वैषम्येन समाधाने बीजमाह—लक्ष्यानुसारश्चेति । **आदिना** 'त्यदादीनां विभक्तावि' त्यस्य परिग्रहः । **अङ्गार्थगतार्थेति**—अङ्गार्थनिष्ठसंख्येत्यर्थः । **आदिना** त्यदाद्यर्थनिष्ठसंख्याऽभिधायकविभक्तावित्यस्य परिग्रहः । तथाच प्रियसक्थ्नेत्यादौ विभक्तेरङ्गार्थगतसंख्याप्रतिपादकत्वादनङ् सिद्ध्यति, स्वम् परमस इत्यादौ विभक्तेस्त्यदाद्यर्थनिष्ठसंख्याऽभिधायकत्वादत्वमुपपद्यते । अतितद्भ्यामौ तु विभक्तेस्त्यदाद्यर्थगतसंख्याप्रतिपादकत्वाभावादत्वं नापद्यते इति भावः ।

( समाधानबाधकभाष्यम् )

**यद्येवम्, 'अतिसः' अत्वं न प्राप्नोति ॥**

**( तत्त्वालोकः ) यद्येवमिति**—ब्रूमीति शेषः । **अतिस इति**—इत्यत्र विभक्तेस्त्यदाद्यर्थनिष्ठसंख्याऽभिधायकत्वाभावादिति शेषः ।

( समाधानसाधकभाष्यम् )

**नैष दोषः, त्यदादिप्रधान एष समासः ॥**

**( प्रदीपः ) अतिस इति ।** शोभनः स इति प्रादिसमासः । नञ्समासेऽप्यसः अपट् अकतरदिति भवति ॥

**( उद्द्योतः ) नञ्समासेऽपीति ।** उत्तरपदार्थप्रधानत्वादिति भावः । अतिकतरदित्युक्तरीत्या चिन्त्यमेव । अत्रापि पक्षेऽतिसर्वायेत्यादौ दोष एव । परमसर्वत इत्यादिसिद्धये तदन्तस्यापि सर्वनामत्वावश्यकत्वेन सर्वनाम्नो विहितस्य ङेः स्मै इत्यर्थेऽपि स्मैभावस्य दुर्वारत्वात् । अतोऽप्येकदेश्युक्तिरिदं पक्षद्वयम् ॥

**( तत्त्वालोकः )** भाष्ये—**त्यदादीति**—यत इत्यादिः । एवञ्च 'अतिस' इत्यत्र विभक्तेस्त्यदाद्यर्थनिष्ठसंख्याभिधायकत्वानपायादत्वमुपपद्यते इत्याशयः ।

उद्द्योते—**उक्तरीत्या**—'डतरादिभ्य' इति विहितविशेषणमित्युक्तरीत्या । **अपिना**—प्राक्पक्षसमुच्चयः । **तदन्तस्यापि**—सर्वान्तस्यापि । **अपिना**—सर्वनाम्नः परस्य ङेः स्मै इत्यर्थपरिग्रहः । **अपिना**—पूर्वोक्तदोषद्वयसमुच्चयः ।

( सिद्धान्तिभाष्यम् )

**अथवा—नेदं संज्ञाकरणम्, पाठविशेषणमिदम्—सर्वेषां यानि नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

**( प्रदीपः ) सर्वेषां यानीति ।** स्वविषयापेक्षया सर्वनामत्वं बोद्धव्यम् । यथा गोत्वादेः स्वविषयापेक्षं सर्वगतत्वम्, न तु सर्वादीनि परस्परं पर्यायतां यान्ति, भिन्नार्थत्वात् ॥

**( उद्द्योतः )** अतः सर्वसाधारणं समाधिमाह—भाष्ये**ऽथवा नेदमिति । द्वन्द्वे चे**त्यादिभिश्च सर्वादित्वस्यैव निषेधस्तत्प्रयुक्तकार्याभावे पर्यवस्यति । एवं विकल्पोऽपीत्यभिमानः ॥ ननु सर्वार्थवाचकत्वं न पूर्वादिशब्दानामित्यसङ्गतमेतदत आह—**स्वविषयेति ।** लोकनिरूढप्रवृत्तिनिमित्तेन या अभिधेया व्यक्तयस्ताः स्वविषयः ॥ ननु सर्वादिगणपठितानां शब्दानां सर्वेषां सर्वार्थकत्वेन पर्यायत्वाद् वृथायं व्याख्यानक्लेशोत आह—**नन्विति ॥** नन्वेवं घटादिशब्दानामपि स्वविषयापेक्षसर्वनामत्वाद् घटायेत्यादौ स्मैभावाद्यापत्तिरिति चेन्न । तद्विधायकेषु सर्वनामग्रहणसामर्थ्येन सकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्धानेकजातीयार्थबोधकानामेव सर्वनामपदेन ग्रहणात् । एतदेव ध्वनयितुं **सर्वेषां नामानी**ति बहुवचनान्तपूर्वपदको विग्रहो दर्शितो भाष्ये ॥ भाष्ये **संज्ञोपसर्जने चेति ।** संज्ञा त्वेकद्रव्यनिष्ठत्वान्न सर्वेषां नाम । उपसर्जनमपि पदान्तरार्थसंसृष्टार्थवृत्तित्वान्न प्राधान्येन सर्वेषामुपस्थापकम्, नामपदस्वारस्येन तथैव लाभादित्यर्थः ॥ उपसर्जनांशे **विशेषे** इत्यस्य विशेषणे इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—संज्ञाविषये 'असंज्ञायामि'ति योगविभागस्य, उपसर्जनविषये च 'अनुपसर्जनादि' त्यत्र परिभाषात्वस्य 'अङ्गाधिकारे' इत्यस्य वा समाश्रयणेन समाधानकरणे गौरवाल्लाघवाय संज्ञोपसर्जनविषयकमेकं समाधानमाह—**अथवेति । इदम्**—'सर्वादीनि सर्वनामानी'ति सूत्रम् । एवमग्रेऽपि । **पाठेति**—सर्वादिगणे, इत्यर्थः। अधिकरणे घञ्विधानात्। किन्त्वित्यादिः। विशेषणप्रकारमाह—**सर्वेषामिति । सर्वादीनि**—सर्वादीनीति । **संज्ञेति**—तथाच न संज्ञोपसर्जनविषये दोषः, यत इत्यादिः । **च**—तु । एवमग्रेऽपि ।

प्रदीपे—**सर्वनामत्वमिति**—सर्वादीनामित्यादिः । **तु**—हि । **भिन्नार्थत्वादिति**—तेषामप्रत्येकमित्यादिः ।

उद्द्योते—**अतः**—प्रागुक्तस्य पक्षद्वयस्यैकदेशयुक्तित्वात् । संज्ञोपसर्जनविषयकत्वादाह—**सर्वेति । आदिः** प्रकारे । अतस्तेन 'न बहुव्रीहावि' त्यादेरपि संग्रहः । **च**—अपि । **एवेन** सर्वनामत्वस्य व्यवच्छेदः । **तत्प्रयुक्तेति**—सर्वादित्वप्रयुक्तेत्यर्थः । स चेत्यादिः । **विकल्पोऽपीति**—सर्वादित्वस्यैवेति शेषः । **आदिः** प्रकारे । अतस्तेन उभादिशब्दानामपि संग्रहः । **इति**—इति हेतोः । **एतत्**—'सर्वेषां यानी' त्येतत् । **स्वविषय इति**—तथाच पूर्वादिशब्दानामपि सर्वादित्वमुपपद्यते इत्याशयः । भाष्यत एव तथा प्रतीतेराह—**ननु सर्वादीति । एवम्**—स्वविषयापेक्षया सर्वनामत्वाभ्युपगमे । **तद्विधायकेषु**—स्मैभावादिविधायकेषु । सकृत्पदोपादानादसकृद्गृहीतशक्त्यैव स्वप्रवृत्तिनिमित्ताश्रयविरुद्ध-वानरत्वमेकत्वाद्यनेकजातीयार्थबोधक-हरिशब्दस्य, विरुद्धपदोपादानाद् द्रव्यत्वघटत्वाद्यनेकजातीयार्थबोधकघटादिशब्दस्य, जातिपदोपादानाच्च तद्व्यक्तित्वैतद्व्यक्तित्वाद्यनेकधर्मवदर्थबोधकपटादिशब्दस्य न सर्वनामपदेन ग्रहणमित्याशयः।' इदं समूलयति—**एतदेवेति ।** प्राधान्येनेत्यत्र बीजमाह—**नामपदेति ।** अजहल्लक्षणाश्रयणेनाह—**विशेषणे इति ।**

## ( समाधानबाधकभाष्यम् )

**यद्येवम् , संज्ञाश्रयं यत्कार्यं तन्न सिध्यति—'सर्वनाम्नः स्मै' 'आमि सर्वनाम्नः सुट्' इति ।**

( तत्त्वालोकः ) **एवमिति**—अनेन सर्वादिगण एव विशेष्यते, न तु संज्ञा क्रियते इत्यर्थः । तर्हीति शेषः ।

## ( समाधानसाधकभाष्यम् )

**अन्वर्थग्रहणं तत्र विज्ञास्यते—सर्वेषां यन्नाम तत्सर्वनाम । सर्वनाम्न उत्तरस्य ङेः स्मै भवति । सर्वनाम्न उत्तरस्यामः सुड् भवति ॥**

( तत्त्वालोकः ) **अन्वर्थेति**—नैष दोषः, यतः सर्वनामपदमित्यादिः। **तत्र**—स्मायादिविधायकसूत्रेषु । विज्ञानप्रकारमाह—**सर्वेषामिति। सर्वनाम**—सर्वनामेति। **सर्वनाम्न इति**—तथाचेत्यादिः।

## ( समाधानबाधकभाष्यम् )

**यद्येवम् , सकलं कृत्स्नं जगदित्यत्रापि प्राप्नोति ॥ एतेषां चापि शब्दानामेकैकस्य स स विषयः तस्मिंस्तस्मिन्विषये यो यः शब्दो वर्तते, तस्य तस्य तस्मिंस्तस्मिन्वर्तमानस्य सर्वनामकार्यं प्राप्नोति ॥**

( प्रदीपः ) **एतेषां चापीति ।** ततश्च सर्वस्मिन्नोदन इत्योदनशब्दस्यापि सर्वनामकार्यं प्राप्नोति सामानाधिकरण्यादनयोः ॥ ननु प्रतिनियतभागाभिनिवेशित्वाच्छब्दानां सर्वत्वमोदनशब्देन नाभिहितम् , ओदनत्वमपि सर्वशब्देनेति कुतोऽयं प्रसङ्गः ॥ तत्रेदं दर्शनम् । सर्वशब्दोऽपि ओदनार्थावग्रहेण प्रवृत्त ओदनशब्दोऽपि सर्वशब्दार्थावग्रहेण । प्रतिपत्ता तु केवलात्सर्वशब्दाद्विशेषं न प्रतिपद्यते रूपसादृश्यात् । नाप्योदनशब्दादिति तत्प्रतिपत्त्यर्थमुभयोरुपादानम् । तत्रैकस्य सर्वनामकार्यं भवति नापरस्येति प्रमाणाभावादतिप्रसङ्ग उद्भावितः ॥

( उद्द्योतः ) भाष्ये **एतेषां चापीति** दूषणान्तरम् । **एतेषां चापि ।** घटादिशब्दानामपि ॥ **एकैकस्य** तस्य तस्यापि ॥ **स स विषयः** सर्वाद्यर्थो विषयः ॥ **तस्मिंस्तस्मिन्विषये** सर्वाद्यर्थरूपे विषये ॥ **यो यः शब्दो** घटादिशब्दो **वर्तते तस्य तस्य** घटादिशब्दस्य सर्वाद्यर्थे वर्तमानस्येत्यक्षरार्थः ॥ तद्व्याचष्टे—**ततश्चेति । पदैः पदार्थानभिधायाकाङ्क्षादिमूलकशक्तिवशात्संसृष्टवाक्यार्थप्रतीतिर्जन्यत** इत्यभिहितान्वयवादे शङ्कते—**नन्विति ।** गुणद्रव्यादिसमुदायात्मके वस्तुनि प्रतिनियता ये भागाः प्रवृत्तिनिमित्ताख्यास्तदभिनिवेशित्वात्तद्वाचकत्वाच्छब्दानामित्यर्थः ॥ **योग्येतरान्विते पदानां शक्तेः स्वार्थवत्पदान्तरार्थोपि स्ववाच्य** इत्यन्विताभिधानमाश्रित्य परिहरति—**तत्रेति । अवग्रहः** क्रोडीकारः ॥ **न प्रतिपद्यते ।** निश्चिततयेति शेषः ॥ **रूपसादृश्यादिति ।** ओदनव्यतिरिक्तार्थान्वययोग्यसर्वशब्दरूपस्य तुल्यत्वादित्यर्थः ॥ **तत्प्रतिपत्त्यर्थम्** निर्धारितविशेषप्रतिपत्त्यर्थम् ॥

अपरे तु—पदे पदैकदेशप्रयोगवद् यदा सर्वस्मिन्नोदने इति वाक्ये प्रयोक्तव्ये ओदने इति वाक्यैकदेशः प्रयुज्यते, प्रकरणाच्च तत एव पदात्तादृशवाक्यार्थबोधस्तत्र दोष इति भाष्याशयः ॥ यथा च पदशक्तिग्रहकाले पदैकदेशस्यापि तत्र शक्तिग्रह इति पस्पशायां कैयटेनोक्तम् , तथा वैयाकरणमते विशेषणविशेष्यभावे वाक्यस्य शक्त्यङ्गीकारेण तत्र तत्तत्पदार्थालिङ्गिते समुदितस्य शक्तिग्रहकालेऽवयवभूतैकैकपदस्यापि तत्र शक्तिग्रहेणैकैकपदादपि तादृशविशिष्टार्थबोध इति **इग्यण** इति सूत्रे भाष्ये ध्वनितम् ॥ आकाङ्क्षावादान्ते च मञ्जूषायां निरूपितमित्याहुः॥

**अतिप्रसङ्ग उद्भावित इति ।** न च **सर्वनाम्नः स्मै** इत्यादौ सर्वादेः स्मै इत्याद्येव सूत्राणि सन्त्विति न कृत्स्नादिषु दोषः । अपाणिनीयत्वापत्तेः ॥

( तत्त्वालोकः ) भाष्ये—**एवमिति**—स्मायादिविधायकसूत्रेषु सर्वनामपदमन्वर्थग्रहणं विज्ञायते इत्यर्थः। तर्हीति शेषः । **इत्यत्र**—इत्येषां शब्दानाम्। **अपिना** सर्वादिशब्दानां सङ्ग्रहः । एवमग्रेऽपि। **प्राप्नोतीति**—सर्वार्थवाचकत्वात् सर्वनामकार्यमित्यादिः। **एतेषामिति**—अत्र निर्धारणे षष्ठी । **एकैकस्येति**—शब्दस्येति शेषः । **वर्त्तमानस्येति**—विषये इत्यादिः ।

प्रदीपे—**इति**—इत्यत्र । **अपिना** सर्वशब्दस्य परिग्रहः । **अनयोः**—सर्वौदनशब्दयोः । **इतीति**—नाभिहितमित्यनुषज्यते । **नापीति**—केवलादिति शेषः । **इति**—इति हेतोः । **उभयोः**—सर्वौदनशब्दयोः । **एकस्य**—सर्वशब्दस्य । **अपरस्य**—ओदनशब्दस्य । **इति**—इत्यत्र । योग्येतरान्विते-एवार्थे पदानां शक्तिरित्यन्विताभिधानवादिमते-सर्वस्मिन्नोदने-इत्यादौ सर्वपदार्थान्विते-एवौदनादावोदनादिशब्दानां तथा-ओदनादि-पदार्थान्विते-एव सर्वस्मिन् सर्वपदस्य शक्तेः सत्त्वात् सर्वशब्दस्येव-ओदनादि शब्दानामपि सर्वार्थवाचकत्वात् सर्वनामकार्यम्प्राप्नोतीत्याशयः ।

उद्द्योते—वैयर्थ्यं परिहरति—**भाष्ये इति ।** न सकलादिशब्दानामेव सर्वार्थवाचकत्वात् सर्वनामकार्यम्प्राप्नोति किन्तु सर्वेषामेव-

शब्दानामित्याशयेनेत्यादिः । **दूषणान्तरमिति**—अत एवात्र चकारः । वीप्सालभ्यमाह—**सर्वाद्यर्थ इति । आदिना**—उभादिसंग्रहः । एवमग्रेऽपि । **अन्विताभिधानम्**—अन्विताभिधानवादेन । विशेषे गमकाभावादाह—**निश्चितेति । तुल्यत्वादिति**—ओदनाभवनयोग्यसर्वशब्दरूपेणेत्यादिः । कैयटादिरीत्याऽस्य दोषस्य पाक्षिकत्वमिति सिद्धान्तमतेनाऽन्यं भाष्याशयमाह—**अपरे त्विति । पदे इति**—प्रयोक्तव्ये इति शेषः । **प्रकरणाच्च**—प्रकरणात्तु । **तत एव**—ओदनं इत्यस्मादेव । **तादृशेति**—सर्वस्मिन्नोदने इति वाक्याद्यादृशवाक्यार्थबोध इत्यादिः । **दोषः**—ओदनशब्दस्य सर्वार्थवाचकत्वात्सर्वनामकार्यप्रसङ्गः । तत्र तत्र तथा तथा प्रयोगमिव तस्य बीजमपि दृष्टान्तदार्ष्टान्तिकभावेनाह—**यथा चेति ।** पदार्थे इति शेषः । **अपिना** पदस्य परिग्रहः । **तत्र**—पदार्थे । **तत्र**—विशेषणविशेष्यभावे । एवमग्रेऽपि । **सन्दिग्धस्य**—वाक्यस्य । **अपिना** वाक्यसंग्रहः । एवमग्रेऽपि ।

( समाधानसाधकभाष्यम् )

**एवं तर्ह्युभयमनेन क्रियते—पाठश्चैव विशेष्यते, संज्ञा च ॥**

**( उद्द्योतः )** भाष्ये **एवं तर्ह्युभयमिति ॥**

**( तत्त्वालोकः )** भाष्ये—**एवमिति**—विधिसूत्रेषु सर्वनामपदस्यान्वर्थग्रहणत्वाभ्युपगमे सर्वेषां शब्दानां सर्वनामकार्यप्रसङ्ग इत्यर्थः । यदीत्यादिः । **अनेन**—प्रकृतसूत्रेण । किमुभयं क्रियते इत्याह-**पाठश्चेति ।** सर्वादिगणोऽपीत्यर्थः । चकारस्य वाक्यालङ्कारत्वात् । **संज्ञा चेति**—अपि क्रियते इति शेषः । परे तु-सर्वादिगणपाठसामर्थ्याद् विधिसूत्रेषु सर्वादिगणपठितानामेव सर्वार्थवाचकशब्दानां ग्रहणमिति कल्पनादेव सर्वादिशब्दभिन्नशब्दानां सर्वनामकार्यप्रसङ्गाभाव इति वदन्ति ।

( आक्षेपभाष्यम् )

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ॥**

**( तत्त्वालोकः ) पुनरिति**—वाक्यालङ्कारे । **यत्नेनेति**—'सर्वादीनी'ति सूत्रेणेति भावः ।

( समाधानभाष्यम् )

**लभ्यमित्याह ।**

**[ कथम् ? ]**

**एकशेषनिर्देशात् ॥**

**एकशेषनिर्देशोऽयम्—सर्वादीनि च सर्वादीनि च सर्वादीनि । सर्वनामानि च सर्वनामानि च सर्वनामानि । सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वेषां यानि च नामानि तानि सर्वादीनि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

**( प्रदीपः ) एकशेषनिर्देश इति ॥** ननु सहविवक्षाया अभावात् कथमेकशेषः ॥ एकशेषफलत्वात्तन्त्रन्याय आवृत्तिर्वैकशेषशब्देनोच्यते । अथवा—आकृत्यभिधानपक्षे एकस्यैव प्रयोगे सिद्धे प्रत्याख्यातमेकशेषशास्त्रं संज्ञापरिभाषावच्छास्त्रप्रक्रियासंपादनार्थं भवतीति सहविवक्षामन्तरेणापि भवत्येकशेषः ॥ **संज्ञोपसर्जने चेति ।** यदा सर्वशब्दः संज्ञात्वेन विनियुज्यते, तदा प्रसिद्धप्रवृत्तिनिमित्तपरित्यागेन स्वरूपमात्रोपकारी प्रवर्तते इति विशेष एवावतिष्ठते, उपसर्जनमपि जहत्स्वार्थमजहद्वाऽतिक्रान्तार्थविशेषणतामापन्नमतिक्रान्तार्थवृत्ति भवत्यतिसर्वायेत्यत्र ॥ वाक्ये त्वसंसृष्टार्थत्वात् स्वार्थमात्रं प्रतिपादयतो न विशेषेऽवस्थानम् ॥

**( उद्द्योतः ) सहेति ।** एकैकस्योद्देश्यत्वविधेयत्वसत्त्वात्सहविवक्षाऽभाव इत्यर्थः । अर्थद्वयबोधेच्छया एकस्य सकृदुच्चारणमिह **तन्त्रम् ।** अत्रोच्चारणं तन्त्रेण, बोद्धृबोधस्तु पुनरनुसन्धानेनेत्याशयेनाह—**आवृत्तिर्वेति ।** आवृत्तिश्चेत्यर्थः ॥ **प्रत्याख्यातमिति ।** लौकिकप्रयोगाङ्गत्वेन निराकृतमित्यर्थः ॥ **प्रसिद्धप्रवृत्तिनिमित्तेति ।** तच्च सर्वशब्दस्य व्यापकत्वम् । इदमुपलक्षणम् ॥ अनेकार्थसाधारणशक्तिग्रहसहकारेण स्वविषयाणां सर्वेषामर्थानां प्राधान्येन बोधकत्वं **सर्वनामत्व**मित्यस्याऽर्थस्य । **स्वरूपमात्रोपकारीति ।** स्वरूपमात्रप्रवृत्तिनिमित्तक इत्यर्थः । **अतिक्रान्तार्थविशेषणता सति ।** एवं च प्राधान्येन न सर्वार्थोपस्थापकत्वमिति भावः ॥ जहत्स्वार्थत्वे तु सर्वोपस्थापकत्वमेव नेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थ उत्तरमनुवदति—**लभ्यमित्याहेति ।** ( एकेन यत्नेनोभयम् ) लभ्यमिति वदति सिद्धान्तीत्यर्थः । व्याख्येयभाष्यमभिधाय व्याख्यानभाष्यमाह—**एकशेषनिर्देश इति ।** यत इत्यादिः । **अयम्**—प्रकृतयोगः । एकशेषप्रकारमाह—**सर्वादीनि चेति । सर्वनामानि**—सर्वनामानीति । **सर्वादीनीति**—तथाचेत्यादिः ।

प्रदीपे—**एकशेषफलत्वात्**—एकशेषस्य-फलं फलं यस्य तत्त्वात् । स्वविषयापेक्षयेति प्रागुक्तरीत्याऽऽह—**प्रसिद्धेति ।** स इत्यादिः । **स्वरूपमात्रेति**—अत्र स्वरूपमात्रेणोपकारीति व्युत्पत्तौ समासः । **वाक्ये**—सर्वमतिक्रान्तायेति वाक्ये । **प्रतिपादयत इति**—सर्वशब्दस्येति शेषः ।

उद्द्योते—**सत्त्वादिति**—उभयोरेकत्रान्वयाभावेनातुल्यकक्षत्वादिति शेषः । शब्दतन्त्रमिदमित्याशयेनाह—**अत्रेति ।** प्रत्याख्यातत्वे शास्त्रप्रक्रियासम्पादकत्वासम्भवादाह—**लौकिकेति । तच्च**—प्रसिद्धप्रवृत्तिनिमित्तञ्च । तस्योक्तरीत्या घटादिशब्देष्वतिप्रसक्तत्वात् सिद्धान्तरीत्या तदाह—**इदमिति ।** उपसर्जनव्यवच्छेदायाह—**प्राधान्येनेति ।** सिद्धान्तरीत्या तात्पर्यमाह—**एवञ्चेति ।** उपसर्जनस्य विशेषणत्वे चेत्यर्थः । अयमाशयस्तस्याजहत्स्वार्थत्वे-इति सूचयन्नाह—**जहत्स्वार्थत्वे इति ।** तस्येत्यादिः ।

( समाधानान्तरभाष्यम् )

**अथवा—महतीयं संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥**

**कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् ॥ तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—अन्वर्थसंज्ञा यथा विज्ञायेत—सर्वादीनि सर्वनामसंज्ञानि भवन्ति । सर्वेषां नामानीति चातः सर्वनामानि । संज्ञोपसर्जने च विशेषेऽवतिष्ठेते ॥**

**( प्रदीपः ) यतो न लघीय इति ।** शब्दव्यवहारो लघुस्ततोऽपि लघीयो नाम । तत्र गुरुसंज्ञाकरणात्सर्वादीनां विशिष्टो धर्मोऽनुमीयते—नूनमेतानि संज्ञाप्रवृत्तिनिमित्तेन सर्वनामत्वेन युक्तानि, यतस्तदनुरूपा तेषां संज्ञा कृतेति सर्वनामकार्यमन्तर्गणकार्यं च सर्वनामत्वयुक्तानामेव भवति, न संज्ञोपसर्जनानाम् ॥

**( उद्द्योतः )** भाष्ये—**अथवा महतीति ।** अयं भावः—अनेकार्थसाधारणशक्तिग्रहसहकारतः प्राधान्येन स्वविषयसर्वार्थोपस्थितिजनकत्वसमानाधिकरणसर्वनामपदवत्त्वेन बोधकमहासंज्ञया तादृ-

शसर्वादीनामेव गणेऽनुकरणम्। तत्र संज्ञायास्तत्त्वाभावः स्पष्ट एव। उपसर्जनस्यापि न प्राधान्येन तदुपस्थापकत्वं, नामपदस्वारस्येन तथैव लाभात्। **उपसर्जनं** हि इतरविशेषणतयैव स्वार्थोपस्थापकम्। सर्वादीनि तदन्तानि च सर्वार्थवाचकत्वसमानाधिकरणसर्वनामपदवन्तीत्यर्थः मूत्रस्य। तदन्ते च तत्प्रधानसमासेऽवयवीयताद्दशशक्तिसहकारेण स्वविषयसर्वबोधकत्वं विशेष्यतयास्त्येवेति दिक्॥ **ततोपि लघीयो नामेति**। संज्ञेत्यर्थः। तन्नाम संज्ञा यतोऽन्यद् लघुतरं नास्तीत्यन्वयो भाष्ये। यद्वा **संज्ञा च नामेति** पर्यायप्रदर्शनम्। तच्च यतो नान्यल्लघीयस्तत्। एवं च संज्ञायां सर्वतः शब्दव्यवहाराल्लघीयस्त्वं सिद्धम्॥ **लघ्वर्थमि**त्यस्य लाघवेन शास्त्रप्रवृत्त्यर्थमित्यर्थः॥ **नन्वन्वर्थसंज्ञात्वं** नाम योगरूढत्वम्। तत्र योगार्थस्य रूढ्यर्थेनैवान्वयनियमात् पृथगुद्देश्येनानन्वयात् कथं सर्वार्थवाचकानामेव संज्ञेत्यत आह—**अनुमीयत इति॥ नूनमेतानीति**। गणपठितानीत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**इयम्**—सर्वनामसंज्ञा। **नामेति** प्रसिद्धौ। **हि**—यतः। **तत्र**—तथा सति। विज्ञानप्रकारमाह—**सर्वादीनीति। सर्वनामानि**—सर्वनामानीति।

प्रदीपे—लघुशब्दादीयसुन्-प्रत्ययस्योपपत्तये आह—**शब्देति। तत्र**—तथा सति। **एतानी**त्यनेन पक्षम्, **युक्तानी**त्यन्तेन साध्यम्, **कृतेत्यन्तेन**—हेतुञ्च निर्दिशन्ननुमानप्रकारमाह—**नूनमिति। तदनुरूपा**—प्रवृत्तिनिमित्तानुरूपा। **तेषाम्**—गणपठितानाम्। **सर्वनामेति**—स्वञ्ज्ञेत्यादिः।

उद्द्योते—ननु प्रातिपदिकसंज्ञावत्सर्वनामसंज्ञाऽपि महासंज्ञा भवत्वित्यत आह—**अयं भाव इति। स्वविषयेति**—अस्यार्थः 'अथवा नेदमि'ति भाष्यस्योद्द्योते 'लोकनिरूढे' त्यादिनोक्तः। **तत्र**—तयोर्मध्ये। **तत्त्वाभावः**—ताद्दशसर्वनामपदवत्त्वेन बोधकत्वाभावः। अजहत्स्वार्थपक्षेणाह—**उपसर्जनस्येति। तदिति**—स्वविषयसर्वार्थेत्यर्थः। प्रथमं प्राधान्येन स्वविषयसर्वार्थोपस्थापकत्वस्य भि बीजमाह—**नामेति। तथैवेति**—प्राधान्येनैवेत्यर्थः। तत्रेत्यादिः। स्वविषयसर्वार्थोपस्थापकत्वस्येति शेषः। अथोपसर्जने तस्याभावे हेतुमाह—**उपसर्जनमिति**। पूर्वकल्पे वाक्यार्थद्वयप्रयुक्तगौरवमात्रमत्र पक्षे तु तदपि नेत्याशयेनाह—**सर्वादीनीति। सर्वार्थेति**—ताद्दशेत्यादिः। ननु तदन्तशक्तिग्रह एव नास्ति, तस्मादेव तद्वाच्यबोधसम्भवात्। किञ्च तदन्तशक्तिग्रहोऽनेकार्थसाधारणो नास्ति, तत्सहकारेण तदन्तस्य विशेषणरहितार्थानुपस्थापकत्वादित्यत आह—**तदन्ते इति। च**—तु। उपसर्जनव्यवच्छेदायाह—**तत्प्रधानेति**। पररीत्या आह—**अवयवीयेति। ताद्दशशक्तीति**—अनेकार्थसाधारणशक्तिग्रहेत्यर्थः। अत्रत्यनामपदार्थमाह—**संज्ञेत्यर्थ इति**। अनेन सूचितं भाष्यार्थमपौनरुक्त्याय प्रकारान्तरेणाह—**तत् 'नामे'ति**। प्रसिद्धौ। अत्रार्थक्रमविरोधेन चकारासङ्गतेराह—**यद्वेति**। 'संज्ञा च नामे'ति 'भावो भावने' त्यादिवत् पृथग्वाक्यमित्याशयः। एवं सति-अग्रिमवाक्यार्थमाह—**तच्चेति**। नाम चेत्यर्थः। पर्यवसितार्थमाह-**एवञ्चेति**। उक्तव्याख्याने चेत्यर्थः। नन्वेवमग्रिमभाष्यासङ्गतिरित्यत आह- **लघ्वर्थमिति। तत्र**—तयोर्मध्ये। **नियमादिति**—पङ्कजादिशब्देषु दृष्टादित्याशयः।

**( उभशब्दपाठप्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अथोभस्य सर्वनामत्वे कोऽर्थः ?॥**

**( उद्द्योतः )** भाष्ये—**अथोभस्येति**। उभयत इत्यादेरुभयशब्दपाठेनैव सिद्धेरिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**सर्वनामत्वे इति**—सर्वादिगणे इति भावः। एवमग्रेऽपि। पाठस्येति शेषः।

**( २२० समाधानवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ उभस्य सर्वनामत्वेऽकजर्थः ॥ * ॥

**( भाष्यम् )**

**उभस्य सर्वनामत्वेऽकजर्थः पाठः क्रियते। उभकौ।**

**( आक्षेपभाष्यम् )**

**किमुच्यतेऽकजर्थ इति। न पुनरन्यान्यपि सर्वनामकार्याणि ?॥**

**( तत्त्वालोकः ) किमिति**—कुत इत्यर्थः। **अकजिति**—उभशब्दस्य तत्र पाठस्येत्यादिः।

**( २२१ समाधानहेतुवार्तिकम् ॥ ८ ॥ )**

## ॥ * ॥ अन्याभावो द्विवचनटाब्विषयत्वात् ॥ * ॥

**अन्येषां सर्वनामकार्याणामभावः॥**

**किं कारणम् ?॥**

**द्विवचनटाब्विषयत्वात्। उभशब्दोऽयं द्विवचनटाब्विषयः अन्यानि च सर्वनामकार्याण्येकवचनबहुवचनेषूच्यन्ते॥**

**( प्रदीपः ) अन्याभाव इति**। टाब्विषयत्वमपि न द्विवचनादन्यत्र बोद्धव्यम्। तत्रो**भादुदात्तो नित्यमि**त्यत्र नित्यग्रहणस्येदं प्रयोजनम्—वृत्तिविषये उभशब्दप्रयोगो मा भूद्, उभयशब्दस्यैव यथा स्यादित्युभयपुत्र इत्यादि भवति॥ **द्विदण्ड्यादिभ्यश्चे**त्यत्र निपातनादुभाबाहिवत्यादयः साधवः॥

**( उद्द्योतः )** ननु टाबन्ते **सर्वनाम्नः स्याड्ढि**त्याद्यन्यसर्वनामकार्यसंभवोस्त्येवेत्यत आह—**टाब्विषयत्वमपीति। अन्याभाव** इत्यत्र हेतुत्वेनोपादानादिति भावः॥ एवं चोभशब्दः केवलद्विवचनविषयष्टाप्सहितद्विवचनविषयो वेत्यर्थः इति टाब्ग्रहणमनुवादमात्रं नापूर्वमिति तात्पर्यम्॥ द्विवचनटाब्विषयत्वे उपपत्तिमाह—**तत्रेति। द्वित्रिभ्यामिति** सूत्रस्थवेत्यस्यास्वरितत्वादेवानुवृत्तौ तयप्स्थानिकत्वेनायचः तद्विकल्पेनैव वाक्यसिद्धौ फलाभावेन महाविभाषाया अप्यसंबन्धसिद्धौ प्रत्ययान्तरत्वपक्षे तन्निवृत्तौ दोषाच्च नित्यग्रहणं योगविभागेन स्वार्थिकानादेशभूतायच्प्रत्ययान्तरविधायकमिति भावः॥ अत्र च नित्यशब्दस्य वाच्यार्थविरोधाद्विकल्पाननुवृत्तिः। अयमप्याद्युदात्त एव, प्रत्ययसंबद्धोदात्तग्रहणानुवृत्तेः॥ **वृत्तिविषये इति**। अत एवो**भौ साभ्यासस्येति** निर्देशः सङ्गच्छते। इदं च सूत्रं योगविभागस्येष्टसिद्ध्यर्थत्वाद् **उभा**विति निर्देशाच्च **उभयोन्यत्रे**ति वार्तिकाच्च द्विवचनाश्रवणं यत्र, तत्रैव प्रवर्तते, नान्यत्र। तेन नातिप्रसङ्गः॥ **द्विवचनविषयत्वादिति** भाष्यस्य द्विवचनसत्त्वे एवोभशब्दः साधुरित्यर्थः॥ द्विवचनासत्ता च वृत्तिविषय एवेत्याशयेन कैयटे **वृत्तिविषये** इत्युक्तम्॥

**( तत्त्वालोकः )** भाष्ये—**अन्येति**—यत उभशब्दस्येत्यादिः। एवमग्रेऽपि। कुत उभशब्दस्यान्याभाव इत्यत आह—**द्विवचनेति**। तस्येत्यादिः। एवमग्रेऽपि। अन्याभावपदार्थमाह—**अन्येति**। किं

**कारणमिति**—कस्मात्कारणादित्यर्थः । अत्र 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमि'त्यनेन प्रथमाया विधानात् । उभशब्दस्यान्येषां सर्वनामकार्याणामभाव इति शेषः ।

प्रदीपे—**टाब्विषयत्वमिति**—उभशब्दस्येत्यादिः । **तत्रेति**—बीजमिति शेषः । **उभयशब्दस्यैवेति**—किन्तु नत्रेत्यादिः । प्रयोग इति शेषः । **उभयेति**—तथाचेत्यादिः । **भवति**—भवतीति । ननु वृत्तिविषये उभशब्दप्रयोगस्यानभ्युपगमे-उभौ बाहू यस्मिन् प्रहरणे तद् उभाबाहु प्रहरणमित्यादीनां साधुत्वं कथमुपपद्येतेत्यत आह—**द्विदण्ड्यादीति ।**

उद्द्योते—**टावन्ते इति**—उभशब्दे इति शेषः । **सम्भव इति**—अप्कल्पमित्यादावित्रापि वचनातिक्रमसम्भवादिति भावः । उभशब्दस्य द्विवचनादन्यत्र टाब्विषयत्वाभावे मानमाह—**अन्येति । हेतुत्वेनेति**—टाब्विषयत्वस्यापीत्यादिः । **केवलेति**—पुंनपुंसकयोरित्यादिः । **टाप्सहितेति**—स्त्रियामित्यादिः । **नापूर्वमिति**—किन्त्वित्यादिः । **द्विवचनेति**—तस्येत्यादिः । ननु वाऽननुवृत्त्यर्थम् 'उभादि'ति सूत्रे नित्यग्रहणमित्यत आह—**द्वित्रीति ।** ननु महाविभाषासम्बन्धनिवृत्त्यर्थं तत्र तदित्यत आह—**तयबिति । तदिति**—तयबित्यर्थः । ननु 'अयचः प्रत्ययान्तरत्वमेव न तु तयप्स्थानिकत्वमि'ति पक्षे महाविभाषासम्बन्धनिवृत्त्यर्थं तत्र तदित्यत आह—**प्रत्ययान्तरत्वेति ।** अयच इत्यादिः । **तन्निवृत्तौ**—महाविभाषासम्बन्धनिवृत्तौ । **दोषाच्चेति**—वाक्यासिद्धिरूपदोषाच्चेत्यर्थः । तथाच तत्र नित्यग्रहणस्य सत्त्वेऽपि तस्य महाविभाषासम्बन्धानिवर्त्तकत्वमेवेति भावः । **योगविभागेनेति**—'उभादुदात्तो नित्यमि'ति योगो विभज्यते—तत्र 'उभादुदात्तः' इत्येको योगस्तथा 'नित्यमि'ति परः । तत्राद्यस्य 'अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात् स चाद्युदात्तः' इत्यर्थः, एवं द्वितीयस्य 'उभशब्दाद्वृत्तिविषये नित्यमयच् स्यात् स चानिर्दिष्टार्थत्वात् स्वार्थे' इतीत्याशयः । **अत्र च**—'नित्यमि'ति विभक्तसूत्रे च । **विकल्पेति**—अनेन 'वा'—'महाविभाषे' ग्राह्ये । तयोः स्वराभेदमाह—**अयमपीति ।** नित्यमिति विभक्तयोगेन विधीयमानोऽयजपीत्यर्थः । नन्वेवमाद्यस्य द्विवचनेऽतिप्रसङ्गस्तथा द्वितीयस्य 'उभयोर्वासः' इत्यादावित्यत आह—**इदं च सूत्रमिति ।** द्वितीयमभिप्रेत्याह—**योगेति ।** उभयमभिप्रेत्याह—**उभयोऽन्यत्रेतीति । वृत्तीति**—प्राय इत्यादिः ।

**( आक्षेपभाष्यम् )**

**यदा पुनरयमुभशब्दो द्विवचनटाब्विषयः । क इदानीमस्यान्यत्र भवति ? ॥**

**( उद्द्योतः ) क इदानीमिति ।** अस्योभशब्दस्यार्थप्रतिपादकः कः शब्दोऽन्यत्र तसिलादिविषये द्विवचनाभावे भवतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**क इति**—तदेत्यादिः ।

**( २२२ समाधानवार्तिकम् ॥ ९ ॥ )**

## ॥ * ॥ उभयोऽन्यत्र ॥ * ॥

**( भाष्यम् )**

**उभयशब्दोऽस्यान्यत्र भवति । उभये देवमनुष्याः, उभयो मणिरिति ।**

**( उद्द्योतः ) उभयोन्यत्रेति ।** द्विवचनविषयत्वाभावसंभावनायामिति भावः ॥ लुग्विषये लुका विषयस्यैवापहारान्न दोषः । संभावनानिवेशाच्चोभशब्दस्य पाठाभावेप्युभयत इत्यादिसिद्धिः । अन्यथो- भात्तसिलादेः कर्तुमशक्यतया द्विवचनस्य लुगभावेन तद्विषयस्यैव सत्त्वेनायजनापत्तौ उभयत इत्याद्यसिद्धिः ॥ मम तु यत्र तसिलादि स्यात् तर्हि लुगपि स्यादिति संभावनया विषयाभावसंभावनाऽस्त्येवेति न दोषः । इदमेव ध्वनयितुं विषयपदमुपात्तम् ॥

**उभय** इति वार्तिके उभयशब्देन स्वार्थिकायजन्तस्यावयवार्थकायजन्तस्य च ग्रहणमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्येति**—उभशब्दस्यार्थप्रतिपादक इति शेषः । **अन्यत्र**—तसिलादिविषये । उभयशब्दो यदा वर्गद्वयारब्धे महासमुदाये वर्त्तते तदा वर्ग्यभिन्नेन वर्गद्वयेन महाभेदविवक्षयोद्भूतावयवभेदत्वाद्बहुवचनान्त एवेत्याशयेनाह—**उभये देवमनुष्या इति ।** यदा तु अवयवद्वयारब्धेऽवयविनि वर्त्तते तदा तिरोहितावयवभेदत्वादेकवचनान्त एवेत्यभिप्रायेणाह—**उभयो मणिरिति ।** श्यामलोहिताभ्यामवयवाभ्यामारब्ध इत्यर्थः ।

उद्द्योते—**अन्यथेति**—सम्भावनाया अनिवेशे इत्यर्थः । उभशब्दस्य पाठाभावे इति शेषः । **विषयेति**—द्विवचनविषयेत्यर्थः । **विषयपदमिति**—पूर्वत्र भाष्ये इत्यादिः । ननु स्वार्थिकायच्प्रत्ययोपक्रमेण प्रकृतवार्तिक-प्रवृत्तेः सत्त्वात् कथन्तदुदाहरणतया 'उभये देवमनुष्या' इत्याद्युपन्यस्तम्भाष्ये-इत्यत आह—**उभय इति वार्तिके-इति ।** उभयप्रामाण्यादित्याशयः ।

**( आक्षेपभाष्यम् )**

**किंच स्याद् यद्यत्राकज् न स्यात् ? ॥**

**( तत्त्वालोकः ) च**—तर्हि । **अत्र**—उभशब्दे ।

**( समाधानभाष्यम् )**

**कः प्रसज्येत ॥**

**( आक्षेपभाष्यम् )**

**कश्चेदानीं काकचोर्विशेषः ? ।**

**( प्रदीपः ) कश्चेदानीमिति ।** रूपे स्वरे च नास्ति विशेषः । अवग्रहे च नास्त्यादरो, न हि लक्षणेन पदकारा अनुवर्त्याः ॥ [ उभकाभ्यां हेतुभ्यां उभकयोर्हेत्वोरिति षष्ठीतृतीये सिद्धे, निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वचनात् । ]

**( उद्द्योतः ) रूपे इति ।** नन्वकचि उभशब्देन तद्विशिष्टस्य ग्रहणादुभकावयवयवौ यस्येत्यर्थे उभकयो मणिरिति प्रयोगः सिध्यति, के तु नेति फले विशेषः स्पष्टः । एवमज्ञातोभयोर्घट इत्यर्थेऽकचि उभकयघट इति रूपम् । केऽयचि उभयकघट इति स्यादिति रूपे विशेषः स्पष्ट एवेति चेन्न । भाष्यप्रामाण्येनानभिधानात् । अत एव हरिणा **उभयोन्यत्रेति** वार्तिकमूलभूतं **'उभयशब्दस्य द्विवचनं टापच लोपश्च यस्येति'** व्याकरणान्तरसूत्रमुदाहृतम् । तन्मते ह्येषां प्रयोगाणामभावः स्पष्ट एवेति बोध्यम् ॥ **स्वरे चेति** । चित्स्वरप्रत्ययस्वराभ्यामुभयत्रापि अन्तोदात्तत्वस्यैव सिद्धेरिति भावः ॥ **उभकाभ्यामित्यादिर्वचनादित्यन्तो** ग्रन्थः प्रक्षिप्तः, पुनरग्रे दर्शनात् ॥

**( तत्त्वालोकः )** भाष्ये—चो वाक्यालङ्कारे । **इदानीम्**—उभशब्दे ।

प्रदीपे—**रूपे स्वरे चेति**—उभशब्दात् काकचोः सतोरित्यादिः । **अवग्रहे चेति**—अत्र 'अवग्रहस्तु कप्रत्ययेऽपि पदकारैर्न क्रियते, 'चित्र इद्राजा राजका' 'इदन्यके' इत्यादौ तथैव निर्णीतत्वादि'ति शब्दकौस्तुभोक्तिर्मन्तव्या । **हि**—यतः । ननूभशब्दादकचि निष्पन्न-

स्योभकशब्दस्योभशब्देन ( तन्मध्यपतितस्तद्ग्रहणेन गृह्यते इति न्यायेन ) ग्रहणाद् उभकाभ्यां हेतुभ्यामित्यादौ 'सर्वनाम्नस्तृतीया च' त्यनेन षष्ठीतृतीये सिद्ध्यतः, तस्मात् के नु निष्पन्नस्य तस्य तेनाग्रहणात्तत्र ते न सिद्ध्यत इति-तस्मात् काकचोः सतोर्विशेष इति चेन्न, यतस्तस्मात्केऽकचि वा निष्पन्नमुभकशब्दमादाय प्रयुक्तयोरित्यादित्येनाभिप्रयन्नाह—उभकाभ्यां हेतुभ्यामिति ।

उद्द्योते—ग्रहणादिति—तन्मध्यपतितन्यायेनेत्यादिः । इत्यर्थे इति—अयचीति शेषः । के तूभशब्देन तद्विशिष्टस्याग्रहणात् तस्मिन्नर्थेऽयचोऽसम्भवात् स प्रयोगो न सिद्धयतीत्याशयेनाह—के तु नेतीति । तस्मात् काकचोः सतोरिति शेषः । अकचीति—अयचीति शेषः । अयचीति—त्विति शेषः । रूपे इत—तस्मात् काकचोः सतोरित्यादिः । अनभिधानादिति—एषाम्प्रयोगाणामित्यादिः । यस्य—यकारस्य । तन्मते—हरिमते । अग्रे इति—तस्येति शेषः । वस्तुतस्तूभयत्रापि स ग्रन्थो युक्त एव, अत्र काकचोर्विशेषाभावप्रदर्शनाय, अग्रे चोभशब्दपाठप्रत्याख्यानाशयप्रदर्शनाय तस्यावश्यकत्वात् ॥

( समाधानभाष्यम् )

**'उभशब्दोऽयं द्विवचनटाब्विषयः' इत्युक्तम् । तत्राकचि सत्यकचस्तन्मध्यपतितत्वाच्छक्यते एतद्वक्तुं—द्विवचनपरोऽयमिति । के पुनः सति नायं द्विवचनपरः स्यात् । तत्र द्विवचनपरता वक्तव्या ॥**

( प्रदीपः ) उभशब्दोऽयमिति । द्विवचनेऽनन्तरे श्रूयमाणे उभशब्देन साधुना भाव्यं, न लुप्ते, न व्यवहिते ॥ के पुनः सतीति । पूर्वस्य द्विवचनस्य लुप्तत्वादपरस्य केन व्यवधानात् तत्र कविषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वक्तव्यम् ॥

( उद्द्योतः ) श्रूयमाण इति । विषयशब्दलभ्योऽयमर्थः । श्रूयमाणत्वं च साक्षाद् भावरूपादेशद्वारा वेत्यन्यत् ॥ व्यवधानादिति । द्विवचनविषयत्वस्याव्यवहितस्यैव निवेशादित्यर्थः ॥ उभयघटावित्यादौ व्यवहितद्विवचनपरस्य साधुत्ववारणाय कविषये इति । एवं चैतद्वचनाकरणलाघवार्थमुभशब्दपाठ इति भावः ॥

( तत्त्वालोकः ) प्रदीपे—न व्यवहिते—न च व्यवहिते ।

उद्द्योते—अयम्—श्रूयमाणे-इति । लोपव्यवच्छेदायाह—भावरूपेति । साधुत्वेति—उभघटावित्यादेरित्यादिः । वारणायेति—भाष्यस्थतत्रपदमनुवदन् व्याचष्टे-इति शेषः । एतद्वचनेति—'कविषये व्यवहिते' त्यादिवचनेत्यर्थः ।

( आक्षेपभाष्यम् )

**यथैव तर्हि के सति नायं द्विवचनपरः, एवमाप्यपि सति नायं द्विवचनपरः स्यात् । तत्रापि द्विवचनपरता वक्तव्या ॥**

( प्रदीपः ) यथैव तर्हीति । ननु द्विवचनटाब्विषयत्वादित्यत्र टाप उपात्तत्वाचोद्यानुपपत्तिः ॥ एवं तर्हि टाब्विषयत्वमेकवचनबहुवचनयोर्मा भूदित्येवमर्थमाप्यपि द्विवचनपरता वक्तव्येत्युक्तम् ॥

(उद्द्योतः) भाष्ये एवमाप्यपीति । टापा व्यवधानादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—इदमुक्तुं शक्यते—यथैवेति । ( यथैवम् ) तर्हि यथैवेत्यन्वयः । अपिना कस्य परिग्रहः । एवमग्रेऽपि ।

प्रदीपे—चोद्येति—प्रश्नेत्यर्थः । एवमिति—यदीत्यादिः ।

( २२३ समाधानवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ अवचनादापि तत्परविज्ञानम् ॥ * ॥

( भाष्यम् )

**अन्तरेणापि वचनमापि द्विवचनपरोऽयं भविष्यति ॥**

( प्रदीपः ) अवचनादिति । स्वार्थिकत्वादाप उभार्थस्याहानादापि सिद्धा द्विवचनपरतेत्यर्थः ॥

( उद्द्योतः ) भाष्ये अन्तरेणापीति । दीर्घे तद्विशिष्टस्यान्तवद्भावेनोभशब्दत्वमिति भावः ॥ आवन्तादेकवचनाद्यापत्तिस्तु नेत्याह-स्वार्थिकत्वादिति । एवं च तत एकवचनादौ द्विवचनविषयत्वं कथमिति न वक्तव्यमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्परेति—द्विवचनपरत्वेत्यर्थः । सत्युभशब्दस्येत्यादिः । एवमग्रेऽपि । वचनम्—आब्विषये व्यवहितद्विवचनविषय उभशब्दः साधुर्भवतीति वचनम् ।

प्रदीपे—उभार्थस्येति—तद्विशिष्टोभशब्दे-इत्यादिः । आपीति—सति तस्येति शेषः ।

उद्द्योते—दीर्घे-इति—उभ-आ इति स्थिताविल्यादिः । सतीति शेषः । तद्विशिष्टस्य—आब्विशिष्टस्य । आवन्तादिति—उभशब्दादिति शेषः । एवञ्च—आपः स्वार्थिकत्वे च । ततः—आवन्तोभशब्दात् । द्विवचनेति—सति तस्येत्यादिः ।

( आक्षेपभाष्यम् )

**किं वक्तव्यमेतत् ? ॥**

( तत्त्वालोकः ) एतत्—अवचनादापीत्यादि ।

( समाधानभाष्यम् )

**नहि ॥**

( आक्षेपभाष्यम् )

**कथमनुच्यमानं गंस्यते ? ॥**

( तत्त्वालोकः )—कथमिति—एतदिति शेषः ।

( समाधानभाष्यम् )

**एकादेशे कृते द्विवचनपरोऽयमन्तादिवद्भावेन ॥**

( उद्द्योतः ) किं वक्तव्यमेतदित्यादिरन्तादिवद्भावेनेत्यन्तोऽपाठः । अवचनादापीत्यस्य वक्तव्यत्वाभावेन किं वक्तव्यमिति प्रश्नासङ्गतेः ॥ तथा भ्रममूलको वा प्रश्न इति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—एकादेशे-इति—उभ आ इति स्थितौ दीर्घे इत्यादिः ।

उद्द्योते—तस्यापि पाठत्वं समर्थ्यते—तथा भ्रमेति । अवचनादापीत्यस्य वक्तव्यत्वभ्रमेत्यर्थः । प्रश्नः—किं वक्तव्यमिति प्रश्नः ।

( २२४ प्रत्याख्यानवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ अवचनादापि तत्परविज्ञानमिति चेत्केऽपि तुल्यम् ॥ * ॥

( भाष्यम् )

**अवचनादापि तत्परविज्ञानमिति चेत्केऽपि अन्तरेण वचनं द्विवचनपरो भविष्यति ॥**

**कथम् ? ।**

**'स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्ति' इति प्रकृतिग्रहणेन स्वार्थिकानामपि ग्रहणं भवति ॥**

**( प्रदीपः ) केऽपि तुल्यमिति** । द्विवचनविषयत्वादित्यत्र द्विवचनशब्देन प्रत्ययो न गृह्यते । किं तर्हि । द्व्यर्थाभिधानसमर्थ इत्यर्थः ॥ **उभयत** उभयत्रेति त्रतसोरव्ययत्वाद् द्वित्वाभिधानसामर्थ्यं नास्तीत्यभेदविषय उभयशब्द एव प्रयुज्यते न तूभशब्दः ॥ एवं प्रत्याख्यातोऽकजर्थं उभशब्दस्य पाठः ॥ **सर्वनाम्नस्तृतीया चेति** षष्ठीतृतीयार्थः पाठ इति केचित् ॥ **निमित्तकारणहेतुषु सर्वासां प्रायदर्शन**मिति वचनात्तदर्थोऽपि पाठो न कर्तव्य इत्यन्ये ॥

**(उद्द्योतः) द्व्यर्थेति ॥ कृत्रिमा**कृत्रिमन्यायस्य तु नेह प्रवृत्तिः, तस्या इह शास्त्रेऽनाश्रयणस्य **संख्यासंज्ञा**सूत्रे भाष्ये उक्तेः । अस्य लोकसिद्धव्यवस्थाबोधकत्वेन तत्र न्यायाप्रवृत्तेश्चेति भावः ॥ ननूभकावितिवद् उभत इत्याद्यपि प्रसज्येतेत्यत आह—**उभयत इत्यादि ॥** तयोरव्ययत्वेन विभक्त्यन्तीयस्वार्थिकत्वेन चाधिकरणापादानशक्तिविशेष्यकबोधजनकत्वात् ॥ **द्विवचनत्वं** च संख्याप्रकारकसंख्येयविशेष्यकबोधजनकत्वम् ॥ **अभेदविषयो** वृत्तिविषयः । उक्तमर्थं प्रश्नपूर्वं व्युत्पादयति—भाष्ये **कथम् ? ॥ स्वार्थिका इति ।** यतः स्वार्थिकाः प्रकृतितोऽविशिष्टा अन्यार्थविशेष्यकबोधाजनका अतः **प्रकृतिग्रहणेन** प्रकृतिर्गृह्यते अनेनेति प्रकृतिग्रहणं तेन प्रकृतिभूतोभशब्दग्राहकेण द्विवचनशब्देन तत्प्रकृतिकानां स्वार्थिकानां कादीनामपि ग्रहणमित्यर्थः । तेनोभयत इत्यादेर्व्यावृत्तिः । **प्रकृतिग्रहणेने**त्यनेन **कृत्रिमाकृत्रिम**न्यायाप्रवृत्तिर्ध्वनिता । द्विवचनं च टाप्साहचर्यात्प्रत्यय एव गृह्यते । एतदर्थमेव टाप्ग्रहणम् । तेनोभयोरुभावुभयोभावित्यत्र समासे भवत्येवायजित्याहुः ॥ **एवं प्रत्याख्यात इति ।** किं च अकज्मात्रार्थत्वे **उभाव्ययसर्वनाम्नामकजि**त्येव पाठेन सिद्धे संज्ञाप्रयोजको गणे पाठो व्यर्थः साहचर्याच्च संज्ञादिव्यावृत्तिरिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—यदीत्यर्थः । तर्हीति शेषः । **केऽपीति**—सतीति शेषः । तुल्यमित्यस्यार्थमाह—**अन्तरेण वचनमिति ।** अयमिति शेषः । **स्वार्थिका इति**—यत इत्यादिः ।

प्रदीपे—**प्रत्यय इति**—औ-इत्यादिरेवेत्यादिः । **समर्थ इति**—अन्योऽपि प्रत्यय इति शेषः । **सर्वनाम्न इति**—उभाभ्यां हेतुभ्याम्, उभयोर्हेत्वोरित्यत्रेत्यादिः । **पाठ इति**—तस्येत्यादिः । एवमग्रेऽपि । **निमित्तेति**—तत्रेत्यादिः । **वचनादिति**—षष्ठीतृतीयासिद्धेरिति शेषः । नच वृत्तिकृता 'सर्वनाम्नस्तृतीयाचे'ति सूत्रे पठितत्वादिदं वार्तिकमपि सर्वनामसंज्ञासापेक्षमेवेति वाच्यम्, भाष्यकृता 'हेतावि'ति सूत्रे तस्य पठितत्वात् ॥

उद्द्योते—**तस्या इति**—कृत्रिमाकृत्रिमपरिभाषाया इत्यर्थः । वस्तुतस्त्वत्र 'तस्ये'ति पाठो युक्तः । तथाच तस्य 'उक्तन्यायस्ये'त्यर्थः । ननु तस्येह शास्त्रे सर्वत्रानाश्रयणेऽपि क्वचिदाश्रयणमस्त्येवेत्यत आह—**अस्येति ।** उक्तवार्तिकस्येत्यर्थः । अनियमाभावसूचनायाह—**व्यवस्थेति । तत्र**—द्विवचनांशे । **न्यायेति**—कृत्रिमाकृत्रिमन्यायेत्यर्थः । उभशब्दस्य सर्वादिगणे पाठ इति पक्षे **शङ्कते—नन्विति । तयोः**—त्रतसोः । कैयटानुक्तमपि हेतुमाह—**विभक्त्यन्तीयेति । संख्येति**—द्वित्वेत्यादिः । **उक्तमिति**—अनुपदमेवेत्यादिः । **प्रकृतिरिति**—कादेरिति भावः । प्रत्यासत्तिलभ्यमाह—**तत्प्रकृतिकानामिति ।** प्रत्याख्यानं द्रढयति—**किञ्चेति ।** उभशब्दस्य गणे पाठस्येति शेषः । **सिद्धे इति**—तत्राकचीत्यादिः । **संज्ञेति**—सर्वनामसंज्ञेत्यर्थः । **गणे-इति**—तस्येति शेषः ।

( भवच्छब्दस्य गणे पाठप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ भवतः सर्वनामत्वे कानि प्रयोजनानि ? ।**

**( प्रदीपः ) अथ भवत इति ।** अनकारान्तत्वात् स्मायाद्यभावात्प्रश्नः ॥

**( तत्त्वालोकः )** भाष्ये—**भवतः**—भवच्छब्दस्य । एवमग्रेऽपि । **सर्वनामत्वे-इति**—सर्वादिगणे इत्यादिः । पाठस्येति शेषः ।

प्रदीपे—**अनकारान्तत्वादिति**—भवच्छब्दस्येत्यादिः । ततो विहितविभक्तेरिति शेषः ।

( २२५ समाधानवार्तिकम् ॥ १२ ॥ )

**॥ * ॥ भवतोऽकच्छेषात्वानि ॥ * ॥**

( भाष्यम् )

**भवतोऽकच्छेषात्वानि प्रयोजनानि ॥ अकच्—भवकान् ॥ शेषः—स च भवांश्च भवन्तौ ॥ आत्वम्—भवादृगिति ॥**

**( प्रदीपः ) शेष इति ।** पाठे सति त्यदादित्वाच्छेषो भवति ॥

**( तत्त्वालोकः )** भाष्ये—**भवत इति**—सर्वादिगणे पाठस्येति शेषः । **अकजिति**—'अव्ययसर्वनाम्नामि'तीत्यादिः । **शेष इति**—'त्यदादीनि सर्वैरि'तीत्यादिः । **आत्वमिति**—'आ सर्वनाम्न' इतीत्यादिः ।

प्रदीपे—**पाठे सतीति**—सर्वादिगणे इत्यादिः । भवच्छब्दस्येति शेषः ।

( आक्षेपभाष्यम् )

**किं पुनरिदं परिगणनम्, आहो स्विदुदाहरणमात्रम् ? ॥**

**( तत्त्वालोकः ) पुनरिति** वाक्यालङ्कारे । **इदमिति**— अकच्छेषात्वानीतीत्यर्थः । प्रयोजनानामिति शेषः ।

( समाधानभाष्यम् )

**उदाहरणमात्रमित्याह । तृतीयादयोऽपि दृश्यन्ते । 'सर्वनाम्नस्तृतीया च'-भवता हेतुना, भवतो हेतोरिति । सर्वादीनि ॥ २६ ॥**

**( प्रदीपः ) तृतीयादयोऽपीति । निमित्तकारणहेतुषु सर्वासां प्रायदर्शन**मित्यनपेक्ष्यैतदुक्तम् ॥ इदं तु प्रयोजनम्—भावतायनिः, भवद्यङ्, भवन्मयः । पूर्वनिपातश्च—भवन्मित्रः । **भवतष्ठक्छसा**विति वृद्धत्वात् ठक्छसौ । गुणवचनसंज्ञाबाधनं च, भवतो भावो भावत्यमिति मा भूत् ॥ २६ ॥

**( उद्द्योतः ) इदं त्विति ॥** भाष्ये आदिपदसंग्राह्यमित्यर्थः ॥ **भावतायनी**रिति । सति पाठे **त्यदादीनि चे**ति वृद्धत्वे **उदीचां वृद्धा**दिति फिञ् ॥ **भवद्यङिति । विष्वग्देवयोश्च** टेरिति चेन सर्वनाम्नोऽनुकर्षणादद्र्यादेशः ॥ भवन्मये **नित्यं वृद्धे**ति मयट् ॥ भवन्मित्रे **बहुव्रीहौ सर्वनामसंख्ययो**रिति पूर्वनिपातः ॥ **भवतष्ठगिति ।** शत्रन्तनिवृत्तये वृद्धग्रहणं तत्रानुवर्तत इत्यर्थः ॥ **गुणवचनेति ।** एकसंज्ञाधिकारे सकलप्रातिपदिकविषयगुणवचनसंज्ञातः परा सर्वनामसंज्ञेति भावः ॥ २६ ॥

( तत्त्वालोकः ) भाष्ये—तदस्य उत्तरमनुवदति—**उदाहरणमात्रमितीति**। सिद्धान्तीति शेषः। **तृतीयादय इति**—यत इत्यादिः।

प्रदीपे—**अनपेक्ष्येति**—तथा 'सर्वनाम्नस्तृतीया चे'ति सूत्रमपेक्ष्येति शेषः। 'क्रियाद्रिमयटः पूर्वनिपातष्ठक्छसौ तथा। आत्वैकशेषप्यन्विरहा अकच्च भवतः फलमि'ति प्राचामुक्तिमनुसृत्याह—**भावतायनिरित्यादि**। **ठक्छसाविति**—भावत्कः, भवदीयः-इति शेषः। **गुणवचनसंज्ञेति**—भवतो भावो भवत्तेत्यत्र सर्वनामसंज्ञयेत्यादिः।

उद्द्योते—**सति पाठे इति**—सर्वादिगणे भवच्छब्दस्येत्यादिः। **तत्र**—'भवतष्ठक्छसावि'त्यत्र। भवत्याः पुत्रो भवत्पुत्र इत्यत्र 'सर्वनाम्नो वृत्तिमात्र' इति पुंवद्भावोऽपि फलमिति बोध्यम्॥

—o—

( २५ सर्वनामसंज्ञासूत्रम्॥ १।१।६ आ. २॥ )

# विभाषा दिक्समासे बहुव्रीहौ॥१।१।२७॥

( तत्तत्पदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**दिग्ग्रहणं किमर्थम्?॥**

( प्रदीपः ) **विभाषा दिक्समासे॥ २७॥ दिग्ग्रहणमिति**। एकस्मिन्विषये विकल्पप्रतिषेधयोरसम्भवात्सामर्थ्याद्विषयभेद आश्रयितव्य इति प्रश्नः॥

(उद्द्योतः) **विभाषादि**॥ २७॥ **एकस्मिन्निति**। सर्वत्र परत्वात्प्रतिषेधे विकल्पवैयर्थ्यम्। सर्वत्र वा विकल्पे भावाभावयोस्तेनैव सिद्धत्वात्प्रतिषेधानर्थक्यमिति तयोरेकविषयत्वासंभव इति भावः॥

( तत्त्वालोकः ) प्रदीपे—**विषये**—बहुव्रीहौ। **विकल्पप्रतिषेधयोः**—अनेन विकल्पस्य 'न बहुव्रीहावि'त्यनेन प्रतिषेधस्य च। **सामर्थ्यात्**—तत्रानेन विकल्पस्य 'न बहुव्रीहावि'त्यनेन प्रतिषेधस्य च विधानसामर्थ्यात्। **विषयभेद इति**—लक्ष्यानुसारेण तयोरित्यादिः। **इति**—इति हेतोः। तथाच-अत्र तत्र विषयभेदनियमार्थमत्र दिग्ग्रहणं नावश्यकमिति भावः।

उद्द्योते—**सर्वत्रेति**—बहुव्रीहाविति शेषः। **प्रतिषेधे इति**—'न बहुव्रीहावि'त्यनेन सर्वनामसंज्ञाप्रतिषेधे। एवमग्रेऽपि। **विकल्पे**—पूर्वविप्रतिषेधादनेन सर्वनामसंज्ञाविकल्पे। एवं पूर्वत्रापि। **भावाभावयोरिति**—सर्वनामसंज्ञाया इत्यादिः। **तेनैव**—विकल्पेनैव। **तयोः**—प्रकृतसूत्र-'न बहुव्रीहावि'ति सूत्रयोः।

( समाधानभाष्यम् )

**'न बहुव्रीहौ' इति प्रतिषेधं वक्ष्यति। तत्र न ज्ञायते—'क्व विभाषा, क्व प्रतिषेध' इति। दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति—'दिगुपदिष्टे विभाषा, अन्यत्र प्रतिषेधः'॥**

( प्रदीपः ) वचनमन्तरेणाभिमतो विषयभेदो न लभ्यत इत्युत्तरम्॥

( उद्द्योतः ) भाष्ये **दिगुपदिष्टे इति**। दिक्शब्दोच्चारणेन विहित इत्यर्थः। **बहुव्रीहा**विति शेषः॥

( तत्त्वालोकः ) भाष्ये—**न बहुव्रीहाविति**—अनेन विभाषां वदति तथेत्यादिः। **तत्र**—तथा सति। **दोषः**—तदज्ञानरूपो दोषः। **अन्यत्र**—अन्यत्र च बहुव्रीहौ। **प्रतिषेध इति**—इत्याश्रयणादिति शेषः।

प्रदीपे—सकललक्ष्यज्ञानं लक्ष्यैकचक्षुष्काणां योगिनामेव सम्भवति न तु लक्षणैकचक्षुष्काणामर्वाग्दृशामिति लक्ष्यानुसारेण तयोर्विषयभेदाश्रयणं न सम्भवतीत्याशयेनाह—**वचनमन्तरेणेति**। तयोरिति शेषः। **लभ्यत इति**—अतस्तयोर्विषयभेदनियमार्थमत्र दिग्ग्रहणमावश्यकमिति शेषः।

( आक्षेपभाष्यम् )

**अथ समासग्रहणं किमर्थम्?॥**

( तत्त्वालोकः ) बहुव्रीहित्वस्य समासत्वव्याप्यत्वाद् बहुव्रीहाविति कथनेनैव समासलाभादसमासव्यावृत्तिसिद्धेश्चाह—**अथेति**।

( समाधानभाष्यम् )

**समास एव यो बहुव्रीहिस्तत्र यथा स्याद्। बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूदिति। दक्षिणदक्षिणस्यै देहि॥**

( प्रदीपः ) **समास एवेति**। मुख्य इत्यर्थः। अन्यस्तु तत्कार्यलाभाय तद्व्यपदेशं लभत इत्यमुख्यः॥

( उद्द्योतः ) व्याप्यधर्मातिदेशे व्यापकधर्मस्याप्यतिदेशात्समासोऽप्ययमत आह—**मुख्य इति**। **दक्षिणदक्षिणस्यै इति**। **आबाधे चेति** द्विर्वचनबहुव्रीहिवद्भावौ॥

( तत्त्वालोकः ) भाष्ये—**तत्रेति**—अनेन विभाषा सर्वनामसंज्ञेति शेषः। एवमग्रेऽपि। **बहुव्रीहिवदिति**—किन्त्वित्यादिः। **इतीति**—इत्यर्थमित्यर्थः। समासग्रहणमिति शेषः। तथाच 'दक्षिणदक्षिणस्यै' इत्यत्र 'सर्वादीनी'त्यनेन नित्यमेव सर्वनामसंज्ञा न त्वनेन विभाषेत्याशयेनोदाहरति—**दक्षिणदक्षिणस्यै-इति**। न चात्र 'न बहुव्रीहावि'त्यनेन तस्या अपि निषेधः स्यादिति वाच्यम्, तस्यापि बहुव्रीहिवद्भावेन बहुव्रीहावप्रवृत्तेर्वक्ष्यमाणत्वात्।

प्रदीपे—**तदिति**—बहुव्रीहीत्यर्थः। एवमग्रेऽपि। **अमुख्य इति**—तथाच गौणमुख्यन्यायप्रवृत्त्याऽत्र नास्य प्रवृत्तिरिति भावः। नन्वतिदेशशास्त्राणां वैयर्थ्यापत्त्याऽतिदेशविषये तन्न्यायाप्रवृत्तिरिति चेन्न, बहुव्रीहिवद्भावविधानसामर्थ्याद् बहुव्रीहित्वांशे तन्न्यायाप्रवृत्तावपि समासत्वांशे तन्न्यायप्रवृत्तौ बाधकाभावेन कृते समासग्रहणे दोषाभावात्।

उद्द्योते—**व्याप्येति**—ननु समासग्रहणे कृतेऽपीत्यादिः। **अयमिति**—इति 'दक्षिणदक्षिणस्यै' इत्यत्रास्य प्रवृत्तिर्दुर्वारेति शेषः।

( आक्षेपभाष्यम् )

**अथ बहुव्रीहिग्रहणं किमर्थम्?॥**

( समाधानभाष्यम् )

**द्वन्द्वे मा भूत्—दक्षिणोत्तरपूर्वाणामिति।**

( प्रदीपः ) **दक्षिणोत्तरपूर्वाणामिति**। **द्वन्द्वे चे**त्यनेन सर्वावान्तस्य द्वन्द्वस्य सर्वनामसंज्ञाप्रतिषेधो नावयवानामिति **सर्वनाम्नो वृत्तिमात्र** इति पुंवद्भावः॥

( उद्द्योतः ) **नावयवानामिति**। **न बहुव्रीहा**वितिवद् द्वन्द्वे न्विकीर्षिते नेत्यर्थो न। यद्यपि द्वन्द्वेऽपि उद्भूतावयवभेदसमुदायस्य प्राधान्येन तं प्रति बहुव्रीहेरिव द्वन्द्वस्य गुणत्वेन तदप्राप्तेरयमेवोचितः, तथापि त्यदादीनां द्वन्द्वाभावेनादन्ते काकचोरविशेषेण फलाभावात्। अन्यपर्यायत्वच्छब्दस्य सर्वनामत्वे न मानम्, बहुसंमतत्वाद् गणे तत्पाठस्य। **विभाषा जसी**त्यस्यासङ्गतेश्चेति भावः॥ एवं चेदं सूत्र-

सुपसर्जनप्रतिषेधानुवादकमेव । सूत्रकृता तदनभ्युपगमाद्वा कृतं तत् । अत एव कुक्कुटमयूर्यावित्यादावुपसर्जनह्रस्ववारणाय **द्वन्द्वे** **नेति** वचनमारब्धं **'गोस्त्रियो'** रिति सूत्रे भाष्ये इति बोध्यम् ॥ **पुंवद्भाव इति ।** इदं चिन्त्यं मात्रग्रहणेन निर्देः ॥

**( तत्त्वालोकः )** भाष्ये—**मा भूदिति**—अनेन विभाषा सर्वनामसंज्ञा मा भूदित्यर्थम् बहुव्रीहिग्रहणमित्यर्थः । अन्यथा तत्रानेन तस्यां सत्याम् पक्षे 'दक्षिणोत्तरपूर्वासामि'ति प्रसज्येतेति भावः ।

प्रदीपे—नन्वत्र 'द्वन्द्वे चे'त्यनेन सर्वनामसंज्ञाप्रतिषेधात्कथं 'सर्वनाम्न' इति पुंवद्भाव इत्यत आह—**द्वन्द्वे–इति ।** अत्र प्रथमार्थे सप्तमीत्याशयः ।

उद्द्योते—'द्वन्द्वे चे'त्यस्य यस्मिन्नर्थेऽवयवानां सर्वनामसंज्ञाप्रतिषेधः प्राप्नोति तस्य तमर्थं खण्डयति—**न वह्निति ।** यथा 'न बहुव्रीहावि'त्यस्य 'बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा नेत्यर्थस्त'थेत्यर्थः । **द्वन्द्वे चिकीर्षिते इति ।** द्वन्द्वे चेत्यस्येत्यादिः । सर्वनामसंज्ञेति शेषः । निषेधे हेतुमाह—**यद्यपीत्यादि–फलाभावादित्यन्तेन** ग्रन्थेन । **अपि**ना बहुव्रीहिसमुच्चयः । तथाच तयोः **'तदप्राप्तेरि'**त्यत्रान्वयः । **गुणत्वेन**—उपसर्जनत्वेन । **तदप्राप्तेः**—सर्वनामसंज्ञाया अप्राप्तेः । **अयमेवेति**—'द्वन्द्वे चिकीर्षिते ( सर्वनामसंज्ञा ) नेत्यर्थं एवेत्यर्थः । अस्येत्यादिः । एकशेषेण बाधादाह—**द्वन्द्वाभावेनेति ।** नन्वन्यपर्यायत्वच्छब्दस्य तान्तत्वात्तत्र काकचोर्विशेष इत्यत आह—**अन्यपर्यायेति ।** तत्र सर्वनामत्वसत्त्वकयोरकच्स्वरयोरनुपलम्भादाह—**न मानमिति ।** ( द्वन्द्वे चेत्यस्य द्वन्द्वे चिकीर्षिते सर्वनामसंज्ञा नेत्यर्थस्य ) निषेधे हेत्वन्तरमाह—**विभाषेति ।** जसाधारे शीभावे–एव कर्त्तव्ये द्वन्द्वे सर्वनामसंज्ञाविकल्पविधायकस्येत्यादिः । **एवञ्च**—तादृशसमुदायम्प्रति द्वन्द्वस्योपसर्जनत्वे च । **इदं सूत्रम्**—द्वन्द्वे चेति सूत्रम् । सूत्रकृतस्तदज्ञाननिराशायाह—**सूत्रकृतेति । तदिति**—उपसर्जनप्रतिषेधेत्यर्थः । **तत्**—द्वन्द्वे चेति सूत्रम् । इदं द्रढयति—**अत एवेति ।** तादृशसमुदायम्प्रति द्वन्द्वस्योपसर्जनत्वादेवेत्यर्थः । 'द्वन्द्वे च प्रतिषेधो वक्तव्य' इति भाष्यफलितपाठं निर्दिशति—**द्वन्द्वे नेति ।** मात्रग्रहणं–क्वचित्सर्वनामत्वेन दृष्टानां सम्प्रत्यसर्वनामत्वेऽपि पुंवद्भावार्थम् । अत एव 'दक्षिणपूर्वायै' इत्यत्र सर्वनामसंज्ञाऽभावेऽपि पुंवद्भाव इत्याशयेनाह—**मात्रग्रहणेनेति ।**

**( समाधाननिराकरणभाष्यम् )**

**नैतदस्ति प्रयोजनम् 'द्वन्द्वे च' इति प्रतिषेधो भविष्यति ॥**

**( तत्त्वालोकः ) एतदिति**—द्वन्द्वे अनेन विभाषासर्वनामसंज्ञा मा भूदितीत्यर्थः । बहुव्रीहिग्रहणस्येति शेषः । **द्वन्द्वे चेति**—यत इत्यादिः । **प्रतिषेध इति**—सर्वनामसंज्ञाया इत्यादिः ।

**( समाधानसाधकभाष्यम् )**

**नाप्राप्ते प्रतिषेधे इयं विभाषा आरभ्यते । सा यथैव 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधते । एवं 'द्वन्द्वे च' इत्येतमपि बाधेत ।**

**( तत्त्वालोकः )** 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवती'ति परिभाषामभिप्रेत्याह—**नाप्राप्ते इति ।** अवश्यम्प्राप्ते इत्यर्थः । **सेति**—अत इत्यादिः । **एवम्**—तथैव । **अपीति**—प्रतिषेधमित्यनुषज्यते ।

**( समाधानबाधकभाष्यम् )**

**न बाधते ॥**

**किं कारणम् ? ॥**

**येन नाप्राप्ते तस्य बाधनं भवति । न चाप्राप्ते 'न बहुव्रीहौ' इत्येतस्मिन्प्रतिषेधे इयं विभाषा आरभ्यते । 'द्वन्द्वे च' इत्येतस्मिन् पुनः प्राप्ते चाप्राप्ते च ॥**

**( प्रदीपः ) येन नाप्राप्त इति ।** अयमत्रार्थः—**न बहुव्रीहावि**त्यनेन सर्वः स्वविषयो व्याप्तः । **द्वन्द्वे चे**त्यनेन तु न व्याप्तः । **विभाषा जसीति** जसि विकल्पविधानात् ॥ यदि चानेन द्वन्द्वे विभाषा स्याद् जस्यनुवाददोषः प्रसज्येत । बहुव्रीहौ त्वनुवाददोषमनलभमाना कृतार्था सती परत्वादियं विभाषा **द्वन्द्वे चे**त्यनेन बाध्यते ॥

**( उद्द्योतः )** ननु यथा बहुव्रीहौ **द्वन्द्वे चे**त्यप्राप्तावपीयं प्रवर्तते, तथा द्वन्द्वे **न बहुव्रीहा**वित्यप्राप्तेऽपीति, किमुच्यते **नचाप्राप्ते** इतीत्यत आह—**अयमत्रार्थ इति ।** एवं च **न चाप्राप्ते** इत्यस्य भाष्ये **बहुव्रीहा**वित्यादिः । **द्वन्द्वे चे**त्यस्य तु **द्वन्द्वे** इत्यादिः । एवं च बहुव्रीहौ सर्वत्र निषेधप्राप्तिर्द्वन्द्वे तु **द्वन्द्वे चे**त्यस्य न सर्वत्र प्राप्तिर्जसि विभाषया बाधादिति भावः । **सर्वः स्वविषय इति ।** सर्वो दिग्बहुव्रीहिरित्यर्थः ॥ **न व्याप्त इति ।** सर्वो दिग्द्वन्द्व इति शेषः ॥ युक्त्यन्तरमप्याह—**यदि चेति ।**

**( तत्त्वालोकः )** भाष्ये—**न बाधते इति**—इयं विभाषा 'द्वन्द्वे चे'त्येतं प्रतिषेधमित्यादिः । **किं कारणम्**—कस्मात्कारणात् । **येन नाप्राप्ते इति**—यत इत्यादिः । यो विधिरारभ्यते तेनेति शेषः । **आरभ्यते इति**—अतः सा 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधते इति शेषः । **एतस्मिन्निति**—प्रतिषेधे इत्यनुपज्यते । **अप्राप्ते चेति**—इयं विभाषा आरभ्यते, अतः सा 'द्वन्द्वे च' इत्येतं प्रतिषेधं न बाधते इति शेषः ।

प्रदीपे—**स्यादिति**—तर्हीति शेषः । **जसीति**—'विभाषा जसी' ति विकल्पविधानाद् द्वन्द्व–इति शेषः ।

उद्द्योते—**इयमिति**—विभाषेति शेषः । **एवञ्च**—तदर्थस्येष्टत्वे च । तात्पर्यमाह—**एवञ्चेति ।** स्वशब्देन विकल्प एव परामृश्यते न तु निषेध इत्याशयेनाह—**सर्वो दिग्बह्विति ।** अत्र स्वशब्दानुषङ्गेणानिर्वाहादाह—**सर्वो दिग्द्वेति ।**

**( समाधानबाधकान्तरभाष्यम् )**

**अथवा 'पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते, नोत्तरान्' इत्येवमियं विभाषा 'न बहुव्रीहौ' इत्येतं प्रतिषेधं बाधिष्यते, 'द्वन्द्वे च' इत्येतं प्रतिषेधं न बाधिष्यते ॥**

**( तत्त्वालोकः )** समाधात्रोक्तमभ्युपेत्याह—**अथवेति । इत्येवम्**—इति परिभाषया । **द्वन्द्वे चेति**—तथेत्यादिः ।

**( समाधानबाधकान्तरभाष्यम् )**

**अथवेदं तावदयं प्रष्टव्यः,—इह कस्मान्न भवति—या पूर्वा सोत्तरा अस्योन्मुग्धस्य सोयं पूर्वोत्तर उन्मुग्धः तस्मै पूर्वोत्तराय देहीति ? ॥ लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**( प्रदीपः ) लक्षणप्रतिपदोक्तयोरिति ।** दिक्समास इति व्यपदेशो **दिङ्नामानीति** विहितस्य न्याय्यः, तत्र **हि** दिक्शब्दोऽस्ति ॥

**( उद्द्योतः )** भाष्ये **या पूर्वा सोत्तरेति** ॥ यद्यपि वाक्ये यत्तच्छब्दाभ्यामुद्देश्यविधेयत्वं प्रतीयते या पूर्वात्वप्रकारकज्ञानविशेष्या सा प्रसिद्धोत्तरा यस्येत्यर्थात्। एवं चोत्तराशब्दस्य पूर्वनिपातः प्राप्नोति ॥ तथापि समासे तदप्रतीतावपि पूर्वापदस्य ज्ञानविशेष्यपर्यन्तलक्षकत्वेन गुणवाचकत्वाद् विशेषणत्वेन पूर्वनिपात इति बोध्यम् ॥ **तत्र हि दिक्शब्दोऽस्तीति** ॥ न च **शेष**ग्रहणेनानेकग्रहणेन वा सिद्ध उभयोपादानेन पुनर्विधानद्वारा सर्वत्र विशेषविहितत्वात्सोऽपि प्रतिपदोक्तः। स्पष्टं चेद**मान्महत** इत्यत्र भाष्ये इति वाच्यम्। पूर्वशब्द उत्तरशब्दः समस्यते इत्येवं विधानकल्पनेऽपि दिक्शब्दः समस्यते इत्येवं विधानकल्पने मानाभावेन तत्र दिक्शब्दाभावादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—लक्षणप्रतिपदोक्तपरिभाषयैवेष्टे सिद्धे बहुव्रीहिग्रहणं व्यर्थमेवेत्याशयेनाह—**अथवेति । तावत्**—प्रथमम्। **अयम्**—समाधाता। इदम्पदबोध्यं निर्दिशति—**इहेति।** इयं विभाषेति शेषः। इहपदबोध्यं निर्दिशति—**या पूर्वेति।** पृष्टेन देयमुत्तरं स्वयमेवाह—**लक्षणेति ।** यत इत्यादिः। **इतीति**—परिभाषा वर्त्तते- इति शेषः।

प्रदीपे—**विहितस्येति**—बहुव्रीहेरिति शेषः। **हि**—यतः।

उद्द्योते—यथासंख्यमन्वयमभिप्रेत्याह—**उद्देश्यविधेयत्वमिति।** उद्देश्यत्वं विधेयत्वञ्चेत्यर्थः। द्वन्द्वान्ते वर्त्तमानस्य त्वस्य प्रत्येकमन्वयात्। अन्यतरस्य लक्षणामन्तरेण तयोरसामानाधिकरण्याद्बहुव्रीह्यनुपपत्तेराह—**या पूर्वात्वेति ।** विशेष्यशब्दो विशेष्यनिघ्नो न तु विशेषणप्रधानादिशब्दवदजहल्लिङ्गः। अत एव 'राजा विशेषणम्, पुरुषो विशेष्यः' इति षष्ठी शेषे-इत्यत्रत्यं भाष्यं तथा अत्रत्यं **'या'''विशेष्या'** इति सङ्गच्छते। पूर्वाशब्दे उद्देश्यत्वलक्षणप्राधान्यस्य सत्त्वेन विधेयस्याप्रधानत्वादाह—**उत्तराशब्दस्येति ।** प्राचां मतेनाह—**तदप्रतीताविति।** सिद्धान्तिनां मतेनाह—**अपीति।** अनेन 'तदप्रतीतावि'त्यस्य परिग्रहः। एवञ्च 'उद्देश्यत्वादेरप्रतीतौ प्रतीतौ वा' इत्यर्थः। 'न विधौ परः शब्दार्थ' इति न्यायेन विधेयबोधकशब्दे लक्षणाया अन्याय्यत्वादाह—**पूर्वापदस्येति । गुणवाचकत्वात्**—गुणोपसर्जनद्रव्यवाचकत्वात्। ज्ञानस्य विशेषणत्वादाह—**विशेषणत्वेनेति । सोऽपि**—'अनेकमि'ति विहितो बहुव्रीहिरपि । **तत्र**—केल्पितवाक्ये।

**( उपसंहारप्रत्याख्यानभाष्यम् )**

**यद्येवं नार्थो बहुव्रीहिग्रहणेन ॥**

**(तत्त्वालोकः) यद्येवमिति**—तर्हीति शेषः। **अर्थः**-प्रयोजनम्।

**( आक्षेपभाष्यम् )**

**द्वन्द्वे कस्मान्न भवति ? ।**

**( तत्त्वालोकः ) द्वन्द्वे इति**—ननु बहुव्रीहिग्रहणाभावे इयं विभाषेत्यादिः।

**( समाधानभाष्यम् )**

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥**

**( तत्त्वालोकः ) लक्षणेति**—यत इत्यादिः। **इतीति**—परिभाषा वर्त्तते-इति शेषः।

**( प्रयोजनान्तरभाष्यम् )**

**उत्तरार्थं तर्हि बहुव्रीहिग्रहणं कर्तव्यम् ॥**

**( तत्त्वालोकः ) उत्तरार्थं तर्हीति**—( यद्येवम् ) तर्हि **उत्तरार्थम्**—उत्तरसूत्रेऽनुवृत्त्यर्थम् ( अत्र ) इत्यन्वयः।

**( बाधकभाष्यम् )**

**न कर्तव्यम् । क्रियते तत्रैव—'न बहुव्रीहौ' इति ॥**

**( तत्त्वालोकः ) नेति**—उत्तरार्थमत्र बहुव्रीहिग्रहणमित्यादिः। **क्रियते—इति।** यत इत्यादिः।

**( साधकभाष्यम् )**

**द्वितीयं कर्तव्यम् । बहुव्रीहिरेव यो बहुव्रीहिस्तत्रैव यथा स्यात् । बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भूत्—एकैकस्मै देहि ॥**

**( तत्त्वालोकः ) द्वितीयमिति**—उत्तरसूत्रे द्वितीयबहुव्रीह्यनुवृत्त्यर्थमत्र बहुव्रीहिग्रहणमिति भावः। ननूत्तरसूत्रे द्वितीयबहुव्रीह्यनुवृत्तेः किम्प्रयोजनमित्यत आह—**बहुव्रीहिरेवेति । तत्रैवेति**—उत्तरसूत्रेण सर्वनामसंज्ञानिषेध इति शेषः। एवमग्रेऽपि। **बहुव्रीहिवदिति**—किन्त्वित्यादिः। **मा भूदिति**—इति प्रयोजनमिति शेषः। द्वितीय**तत्र**पदेनाभिप्रेतं निर्दिशति—**एकैकस्मै—इति ।** अत्र **'एकं बहुव्रीहिवदि'**ति सूत्रेण बहुव्रीहिवद्भावः।

**( बाधकभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । समास इति वर्तते । तेन बहुव्रीहिं विशेषयिष्यामः-समासो यो बहुव्रीहिरिति ॥**

**( तत्त्वालोकः ) समास इति**—यत उत्तरसूत्रे पूर्वसूत्रादित्यादिः। **वर्त्तते**—अनुवर्त्तते। विशेषणप्रकारमाह—**समास इति ।** मुख्य इत्यर्थः। अन्यथा तत्र व्याप्यधर्मातिदेशे व्यापकधर्मस्याप्यतिदेशात् समासत्वस्यापि सत्त्वादसङ्गतिः। सूत्रकारमतेनेदं प्रयोजनमुक्तं निराकृतञ्च। भाष्यकारमतेन तु प्रत्याख्यातमेवोत्तरसूत्रमिति न शङ्का न चोत्तरमिति बोध्यम्।

**( एकदेशिभाष्यम् )**

**इदं तर्हि प्रयोजनम्—अवयवभूतस्याऽपि बहुव्रीहेः प्रतिषेधो यथा स्यात्, इह मा भूत्—वस्त्रमन्तरमेषां त इमे वस्त्रान्तराः वसनमन्तरमेषां त इमे वसनान्तराः वस्त्रान्तराश्च वसनान्तराश्च वस्त्रान्तरवसनान्तराः ॥**

**विभाषादिक्समासे ॥ २७ ॥**

**( प्रदीपः ) वस्त्रान्तरेति । उपसर्जनप्रतिषेधो** वार्तिककारस्य, न सूत्रकारस्य, **न बहुव्रीहा**वित्यारम्भात्। तन्मतेनेदं प्रयोजनमुक्तम्॥

**( उद्द्योतः )** भाष्ये **अवयवभूतस्यापीति । प्रधान**न्यायेनास्य न स्याद्। अस्य समूहं प्रति गुणत्वादिति भावः॥ तदेतदवयवपदेन सूचितम्। समूहावयवत्वाद्वृत्तिपदार्थस्येति बोध्यम्। **वसन**शब्दो गृहवाचीति नैकशेषः। अन्तरशब्दस्य सर्वनामत्वेऽपि परनिपातो **राजदन्तादि**त्वाद् बोध्यः॥ **तन्मतेनेति ।** किं चावयवयोः सर्वनामत्वेऽपि द्वन्द्वस्य तत्त्वाभावेन सर्वनाम्नोऽविहितत्वाज्जसो न दोष इत्येकदेश्युक्तिरिदं भाष्यम् ॥ २७ ॥

**( तत्त्वालोकः )** भाष्ये—**इदं तर्हीति**—( यद्येवम् ) तर्हि-इदमित्यन्वयः। उत्तरसूत्रे द्वितीयबहुव्रीह्यनुवृत्तेरिति शेषः। इदम्पदबोध्यं निर्दिशति—**अवयवभूतस्येति । अपिना** समुदायभूतस्य परिग्रहः। **प्रतिषेध इति**—सर्वनामसंज्ञाया इत्यादिः। **स्यात्**—स्यादिति। **इहेति**—येनेत्यादिः। सर्वनामसंज्ञेति शेषः। इहपदेन 'वस्त्रान्तरवसनान्तरा' इति निर्देष्टुमुपक्रमते—**वस्त्रमिति ।**

प्रदीपे—**आरम्भादिति**—तेनालौकिके—आरोपितबहुव्रीहिलक्षके

वाक्येऽवयवानामेव निषेध इत्याशयः । **तन्मतेन**—वृत्तिकारमतेन ।

उद्द्योते—**प्रधानेति**—अन्यथेत्यादिः । **अस्येति**—अवयवभूतबहुव्रीहेरित्यर्थः । एवमग्रेऽपि । सर्वनामसंज्ञाप्रतिषेध इति शेषः । इदमपि भाष्यं तत्र गमकमित्याह-**तदेतदिति** । **गृहवाचीति**—न तु वस्त्रवाचीत्याशयः। **सर्वनामत्वेऽपि**—सर्वनामत्वे 'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमि'ति वार्तिकेन पूर्वनिपातप्राप्तावपि । 'तन्मतेने'ति कैयटोक्त्या सूचितमस्य भाष्यस्यैकदेश्युक्तित्वं द्रष्टव्यम्—**किञ्चेति** । **द्वन्द्वस्येति**—'द्वन्द्वे चे'ति निषेधादित्यादिः । **तस्येति**—सर्वनामत्वेत्यर्थः । **न दोषः**—न शीभावापत्तिरूपो दोषः ।



( २६ सर्वनामसंज्ञानिषेधसूत्रम् ॥ १ । १ । ६ आ० ३ ॥ )

# न बहुव्रीहौ ॥ १ । १ । २९ ॥

### ( सूत्रप्रयोजनाधिकरणम् )

### ( आक्षेपभाष्यम् )

**किमुदाहरणम् ? ॥**

### ( समाधानभाष्यम् )

**प्रियविश्वाय ॥**

**( प्रदीपः ) न बहुव्रीहौ** ॥ २८ ॥ **प्रियविश्वायेति** । प्रियशब्दस्य विश्वविशेषणत्वात्पूर्वनिपातं मन्यते ॥

**(तत्त्वालोकः)** प्रदीपे—**प्रियेति**—'बहुव्रीहौ यानि सर्वादीनी'त्यन्वय इत्यभिमानः ।

### ( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । सर्वाद्यन्तस्य बहुव्रीहेः प्रतिषेधेन भवितव्यम् । वक्ष्यति चैतत्—बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानम् इति । तत्र विश्वप्रियायेति भवितव्यम् ॥**

**( तत्त्वालोकः )** 'अभिमानः' 'मन्यते' इति शब्दद्वयसूचितारुचिमूलकमाशयद्वयं क्रमेणाह—**सर्वाद्यन्तस्येति** । यत इत्यादिः । निषेधाधिकरणं बहुव्रीहिरिति भावः । **तत्र**—तथा सति ।

### ( समाधानान्तरभाष्यम् )

**इदं तर्हि-द्व्यन्याय त्र्यन्याय ॥**

**( प्रदीपः ) द्व्यन्यायेति** । संख्यायाः संख्येयपरतन्त्रत्वाद्विशेषणत्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**इदं तर्हीति**—( यद्येवम् ) तर्हि इदं ( प्रयोजनम् ) इत्यन्वयः । इदम्पदबोध्यं निर्दिशति—**द्व्यन्याय त्र्यन्यायेति** । इतीति शेषः ।

प्रदीपे—**विशेषणत्वम्**—अन्यार्थविशेषणत्वमपि । तेन संख्याया एव पूर्वनिपातो न तु सर्वनामत्वादन्यस्येति भावः ।

### ( समाधानबाधकभाष्यम् )

**ननु चात्रापि सर्वनाम्न एव पूर्वनिपातेन भवितव्यम् ॥**

**( प्रदीपः ) सर्वनाम्न एवेति** । नियमः कथमिति चेत् । उच्यते । विशेषणत्वात्संख्यायाः पूर्वनिपाते प्राप्ते एवमर्थमुपसंख्यानं स्यात्—सर्वनामसंख्ययोः संनिपाते सर्वनाम्न एव पूर्वनिपातः स्यादिति॥

**( उद्द्योतः ) न बहुव्रीहौ** ॥ २८ ॥ **नियमः कथमिति** । संख्याया अपि तेन पूर्वनिपातविधानादिति भावः । **प्राप्त इति** । **सप्तमीविशेषणे** इत्यनेन ॥

**(तत्त्वालोकः)** भाष्ये—**चो** वाक्यालङ्कारे । एवमग्रेऽपि । **अपिना** विश्वप्रियायेत्यस्य परिग्रहः ।

प्रदीपे—**विशेषणत्वादिति**—सर्वनामसंख्ययोर्बहुव्रीहावित्यादिः । एवम्पदबोध्यं निर्दिशति—**सर्वनामेति** । बहुव्रीहावित्यादिः । अध्याहारेणाह—**सन्निपाते** इत्यादि ।

उद्द्योते—**तेन**—'बहुव्रीहौ सर्वनामसंख्ययोरुपसंख्यानमि'ति वार्तिकेन ।

### ( समाधानसाधकभाष्यम् )

**नैष दोषः । वक्ष्यत्येतत् ,—संख्यासर्वनाम्नोर्यो बहुव्रीहिः परत्वात्तत्र संख्यायाः पूर्वनिपातो भवतीति ॥**

**( प्रदीपः ) वक्ष्यत्येतदिति** ॥ नैष वाक्यार्थो यस्त्वया कल्पित इत्यर्थः ॥

**( उद्द्योतः ) नैष इति** । लक्ष्यानुरोधादिति भावः ॥ **नन्वेवं** वार्तिके संख्याग्रहणं व्यर्थं विशेषणत्वादेव तस्य पूर्वनिपातप्राप्तेरिति वाच्यम् । परिच्छेदकत्वरूपविशेषणताया अन्यत्रापि संभवात् ॥

**( तत्त्वालोकः )** भाष्ये—**वक्ष्यतीति**—यत इत्यादिः । वार्तिककृत् '( बहुव्रीहौ ) सर्वनामसंख्ययोः सन्निपाते' इत्यादौ वक्तव्ये 'बहुव्रीहौ सर्वनामसंख्ययोरुपे'त्याद्युक्तमिति तदर्थान्तरस्यापि लाभ इत्याशयेनाह—**संख्यासर्वनाम्नोरिति** । **परत्वात्**—शब्दपरविप्रतिषेधात् ।

उद्द्योते—**एवम्**—सर्वनाम्नः समभिव्याहारेऽसमभिव्याहारे च संख्याया एव पूर्वनिपाते । **अन्यत्रापि**—सर्वनामस्वपि । तथाच-सर्वनाम्नोऽसमभिव्याहारे संख्यायाः, तस्या असमभिव्याहारे च सर्वनाम्नो विशेषणत्वात्पूर्वनिपातोपपत्तावपि द्वयोः सन्निपाते कस्य पूर्वनिपात इत्यस्य व्यवस्थार्थमुभयघटितवार्तिकमावश्यकमिति भावः ।

### ( पूर्वोक्तसमाधानाभ्युपगमभाष्यम् )

**इदं चाप्युदाहरणम्—प्रियविश्वाय ॥**

### ( बाधकस्मारणम् )

**ननु चोक्तम्—विश्वप्रियायेति भवितव्यमिति ॥**

### ( बाधकनिराकरणभाष्यम् )

**वक्ष्यत्येतत्—वा प्रियस्य इति ।**

**( तत्त्वालोकः )**—**वा प्रियस्येतीति**—तथाचोभयोरुपपन्नत्वेन 'प्रियविश्वाये' त्यस्योदाहरणत्वमुपपन्नमित्याशयः ।

### ( मतान्तरप्रदर्शनभाष्यम् )

**न खल्वप्यवश्यं सर्वाद्यन्तस्यैव बहुव्रीहेः प्रतिषेधेन भवितव्यम् ॥**

**किं तर्हि ? ॥**

**असर्वाद्यन्तस्यापि भवितव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**अकज् मा भूदिति ॥**

**( उद्द्योतः )** भाष्ये वृत्तिकारोक्तं मतान्तरमाह—**न खल्वपीति** । अस्यार्थस्य यथा लाभस्तथा वक्ष्यते ॥

( तत्त्वालोकः ) भाष्ये—खल्वप्यवश्यमिति वाक्यालङ्कारे। अपिना सर्वाद्यन्तस्य परिग्रहः। बहुव्रीहेः प्रतिषेधेनेत्यनुषज्यते। तथाच 'बहुव्रीहौ यानि सर्वादीनि तेषां संज्ञा ने'ति सूत्रार्थः। अकजिति—बहुव्रीहिस्थसर्वादावित्यादिः।

( आक्षेपभाष्यम् )

**किंच स्याद् यद्यत्राकच् स्यात् ?॥**

(तत्त्वालोकः) च—तर्हि। अत्र—बहुव्रीहिस्थसर्वादौ।

( समाधानभाष्यम् )

**को न स्यात्॥**

( आक्षेपभाष्यम् )

**कश्चेदानीं काकचोर्विशेषः ?॥**

( तत्त्वालोकः ) कः—स्व। चो वाक्यालङ्कारे। इदानीम्—बहुव्रीहिस्थसर्वादौ।

( समाधानभाष्यम् )

**व्यञ्जनान्तेषु विशेषः—अहकं पिता यस्य मकत्पितृकः, त्वकं पिता यस्य त्वकत्पितृक इति प्राप्नोति॥ मत्कपितृकः त्वत्कपितृक इति चेष्यते॥**

( प्रदीपः ) व्यञ्जनान्तेष्विति। उपलक्षणमेतत्। द्विकपुत्रो द्वकिपुत्र इत्यत्रापि विशेषदर्शनात्॥

( तत्त्वालोकः ) भाष्ये—अहकमिति—यतोऽकचि सतीत्यादिः। यस्येति—स इति शेषः। एवमग्रेऽपि। मत्केति—के तु सतीत्यादिः। इतीति—प्राप्नोति, तदिति शेषः। अत्रेष्टतोक्त्या तत्रानिष्टता सूचिता।

प्रदीपे—इष्टतासूचनाय के सति निष्पन्नमुल्लिख्याकचि सति निष्पन्नमुल्लिखति—द्वकीति।

( आक्षेपभाष्यम् )

**कथं पुनरिच्छताऽपि भवता बहिरङ्गेण प्रतिषेधेनान्तरङ्गो विधिः शक्यो बाधितुम् ?॥**

( प्रदीपः ) कथं पुनरिति। अन्तरङ्गत्वात्संज्ञानिमित्तेनाकचा तावद्भाव्यं पश्चात्पदान्तरसंनिधाने वर्तिपदार्थविशेषणान्यपदार्थविवक्षायां बहिरङ्गेण बहुव्रीहिणेत्यर्थः॥

( उद्द्योतः ) बहिरङ्गत्वव्युत्पादनाय पदान्तरेत्यादि। वर्तिपदार्थविशेषणेति बहुव्रीहिः॥ बहुव्रीहिणेति। ततो बहिरङ्गबहुव्रीहिनिमित्तकेन निषेधेनेति शेषः॥

( तत्त्वालोकः ) भाष्ये—पुनरिति वाक्यालङ्कारे। विधिः—अकज्विधिः।

प्रदीपे—संज्ञेति—सर्वनामसंज्ञेत्यर्थः। तावत्—प्रथमम्।

उद्द्योते—बहिरङ्गत्वेति—बहुव्रीहेरित्यादिः। तावताऽप्यनिर्वाहादाह—तत इति।

( समाधानभाष्यम् )

**अन्तरङ्गानपि विधीन् बहिरङ्गो विधिर्बाधते गोमत्प्रिय इति यथा॥**

( प्रदीपः ) अन्तरङ्गानपीति। प्रत्ययोत्तरपदयोश्चेति सामान्येन ज्ञापकम्—बहिरङ्गोऽपि समाससाश्रयो विधिरन्तरङ्गं बाधते इत्यस्यार्थस्येति भावः॥

( उद्द्योतः ) सामान्येनेति। न लुग्विषयमेवेति भावः॥

(तत्त्वालोकः) भाष्ये—इति—इत्यत्र। यथेति—अस्यादावन्वयः।

प्रदीपे—सामान्येनेति—लुकि कार्यत्वरूपसामान्यापेक्षयैव न तु लुक्त्वरूपविशेषापेक्षयेत्यर्थः।

( दृष्टान्तवैषम्येण समाधानबाधकभाष्यम् )

**क्रियते तत्र यत्नः—'प्रत्ययोत्तरपदयोश्च' इति॥**

( प्रदीपः ) क्रियते तत्रेति। लुग्विषयमेव तज् ज्ञापकमित्यर्थः॥

( उद्द्योतः ) उत्तरपदग्रहणं चात्र ज्ञापकं, अन्तर्वर्त्तिसुपा प्रत्ययपरत्वेनैव सिद्धेरित्यादि सप्तमे निरूपयिष्यामः॥ गोमत्प्रिय इत्यत्र लुका हल्ङ्यादिलोपो बाध्यते, तेन नुम्दीर्घौ नेति भावः॥

( तत्त्वालोकः ) प्रदीपे—लुग्विषयमेवेति—लुकि लुक्त्वरूपविशेषापेक्षयैव न तु कार्यत्वरूपसामान्यापेक्षयेति भावः। तत्—'प्रत्ययोत्तरपदयोश्चे'ति सूत्रम्। ज्ञापकमिति—'अन्तरङ्गानपी'ति परिभाषाया इति शेषः।

उद्द्योते—'प्रत्ययोत्तरपदयोश्चे'ति सम्पूर्णं सूत्रं तस्याः ज्ञापकमिति कैयटाद्युक्तमयुक्तमिति सूचयन्नाह—उत्तरपदग्रहणञ्चेति। लुका—'सुपो धातु'ति लुका। तेनेति—अन्यथा प्रत्ययलक्षणेन तौ प्राप्ताविति बोध्यम्।

( दृष्टान्तसाम्येन समाधानसाधकभाष्यम् )

**ननु चेहापि क्रियते—'न बहुव्रीहौ' इति॥**

( उद्द्योतः ) भाष्ये—ननु चेहापीति। वैयधिकरण्येन संबन्धाश्रयणसामर्थ्यादन्तरङ्गस्यापि निवृत्तिरित्यर्थः॥

( तत्त्वालोकः ) भाष्ये—क्रियते इति—यत्न इति शेषः।

उद्द्योते—'तथा वक्ष्यते'—इति प्रतिज्ञानुसारमाह—वैयधिकरण्येनेति। बहुव्रीहौ यानि सर्वादीनीतीत्यादिः। निवृत्तिरिति—अकचो मत्कपितृक इत्यादावित्यादिः।

( वैयर्थ्यपरिहारेण समाधानबाधकभाष्यम् )

**अस्त्यन्यदेतस्य वचने प्रयोजनम्॥**

**किम् ?॥**

**प्रियविश्वाय॥**

( प्रदीपः ) अस्त्यन्यदिति। अत्र हि विधिप्रतिषेधौ समानकालौ कार्यकालत्वात्संज्ञाया इति मन्यते॥

( उद्द्योतः ) प्रथमार्थे सप्तम्याश्रणेन सामानाधिकरण्येनैव सम्बन्धो न तु विधत्यध्याहारेणेत्याशयेनाह—अस्त्यन्यदिति॥ अत्र हीति। बहुव्रीहेर्विभक्त्युत्पत्तौ सर्वनामकार्यस्मायादिप्राप्तेरिति भावः॥ तत्रावयवनिषेधसामर्थ्यादन्तरङ्गस्यापि बाध इति तात्पर्यम्॥

( तत्त्वालोकः ) भाष्ये—एतस्य—'न बहुव्रीहावि'त्यस्य।

उद्द्योते—'सम्भवति सामानाधिकरण्येनान्वये वैयधिकरण्येनान्वयोऽन्याय्यः' इति न्यायेन वैयधिकरण्येन सम्बन्धाश्रयणस्यानुचितत्वादाह—प्रथमार्थे—इति। स्मायादिप्राप्तेरिति—एवञ्च विधिप्रतिषेधयोर्बहिरङ्गत्वादकज्वैलक्षण्यमित्याशयः। ननु प्रियविश्वायेत्यत्रास्य साफल्ये तत्र कथमकचो निवृत्तिरित्यत आह—तत्रेति। मत्कपितृक इत्यादावित्यर्थः। अवयवेति—पूर्वसूत्रादत्र द्वितीयबहुव्रीह्यनुवृत्त्येत्यादिः। अन्तरङ्गस्यापीति—अकच इति शेषः।

( वैयर्थ्यस्थित्या समाधानसाधकभाष्यम् )

**उपसर्जनप्रतिषेधेनाप्येतत्सिद्धम्॥**

( तत्त्वालोकः ) एतत्—प्रियविश्वायेत्येतत्।

( मतान्तरेण समाधानान्तरभाष्यम् )

**अयं खल्वपि बहुव्रीहिरस्त्येव प्राथमकल्पिकः। यस्मिन्नैकपद्यमैकस्वर्यमेकविभक्तिकत्वं च । अस्ति तादर्थ्यात्ताच्छब्द्यम्—बहुव्रीह्यर्थानि पदानि बहुव्रीहिरिति । तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥**

**( प्रदीपः ) अयं खल्वपीति ।** मन्त्रोपारूढ एवायमर्थ इति प्रतिपादयति । अप्रयोगसमवायि यत्प्रक्रियावाक्यं तत्रायं प्रतिषेधो, न लौकिके वाक्ये प्रयोगार्हे, तस्य पृथगेव प्रयोगात्तादर्थ्याभावात् ।

**( उद्द्योतः )** ननु एतत्प्रकरणस्थसप्तमीनिर्देशाः प्रथमार्थाः । अत एव **द्वन्द्वे चे**ति निषेधः समुदायस्यैव । एवं च वाच्यवृत्त्याऽसर्वाद्यन्तस्य निषेधो न लभ्यत इत्यत आह—भाष्ये **अयं खल्वपीति ।** एतेन बहुव्रीहावित्यत्र चिकीर्षित इत्यध्याहारेण सिद्धे बहुव्रीहिपदस्य लक्षणा व्यर्थेति परास्तम् ॥ तद्व्याचष्टे—**सूत्रेति ।** भाष्ये **ऐकपद्य—** मैकार्थीभावः । एककारशक्तियोगो वा एकविभक्तित्वं बोध्यम् ॥ तादर्थ्यात्ताच्छब्द्यं यद् यो लभते तस्येदं ग्रहणमित्यन्वयः ॥ **तद्यत्र तादर्थ्यादिति** पाठः क्वचित्। तत्र बहुव्रीह्यर्थवाक्ये संज्ञाया अप्राप्त्या तत्स्थपदपर्यन्तं लक्षणा बोध्या । तदेतद्**बहुव्रीह्यर्थानि पदानी**त्यनेन सूचितम् ॥ ननु वाक्ये निषेधश्चेदकं पितेति प्रयोगो न स्यात्, किं च सुपरत्वाभावात्स्वाहौ न स्यातामत आह—**अप्रयोगेति ।**

**(तत्त्वालोकः)** भाष्ये—'मन्यते' इति शब्दसूचितामरुचिमाह—**अयमिति ।** सर्वनामेति—महासंज्ञाकरणेन तदनुगुणानामेव गणे सन्निवेशादुपसर्जनप्रतिषेधस्यापि पाणिन्यभिमतत्वात्तेनैव तस्य सिद्धेः प्रकृतसूत्रमकज्निवृत्त्यर्थमेवेत्याशयः । **खल्वपीति** वाक्यालङ्कारे ॥ प्रथमकल्पे भव इति व्युत्पत्तौ 'अध्यात्मादेष्ठञिष्यते' इति वार्तिकेन ठञि निष्पन्नमुल्लिखति—**प्राथमकल्पिक इति ।** सर्वप्रसिद्ध इत्यर्थः । **अस्तीति—**चेति शेषः । **तत्—**तस्मात् । एवमग्रेऽपि ॥ तथाच—य एकपदत्वादिमान् बहुव्रीहित्वेन सर्वप्रसिद्धः तदर्थालौकिकप्रक्रियावाक्यस्थपदेऽत्रत्यबहुव्रीहिशब्दोऽस्तीति समुदितार्थः ।

प्रदीपे—**प्रक्रियावाक्यमिति—**अलौकिकमित्यादिः । **पृथगेव—**समासं विनैव ।

उद्द्योते—'अकच्स्वरौ तु कर्त्तव्यावि'ति वक्ष्यमाणस्मृतेः सर्वप्रकरणविषयत्वस्य वक्ष्यमाणत्वादाह—**एतत्प्रकरणेति । न लभ्यते इति—**तथाच कथन्तत्राकज्निवृत्तिरित्याशयः । अन्यवृत्तिकारोक्तं निराकरोति—**एतेनेति ।** 'बहुव्रीहौ यानि सर्वादीनि तेषां सञ्ज्ञा ने' त्यर्थसाधनस्य भाष्ये बहुव्रीहिपदस्य बहुव्रीह्यर्थालौकिकप्रक्रियावाक्यस्थसर्वादिपदे लक्षणाश्रयणेन करणेनेत्यर्थः । अन्यथा 'चिकीर्षिते' इत्यध्याहारेणैव तत्र निर्वाहे तस्य लक्षणाश्रयणं व्यर्थं स्यादिति भावः । ऐकपद्यमेकविभक्तिकत्वमित्यनयोः पौनरुक्त्यं परिहरति—**एकार्थीति ।** विनिगमनाऽभावादाह—**एककारकेति । यदित्यस्य** व्याख्यानं—**य इति ।** तावताऽप्यनिर्वाहादाह—**तत्रेति।** उभयत्रेत्यर्थः। **तत्स्थेति—**बहुव्रीह्यर्थवाक्यस्थेत्यर्थः । **लक्षणेति—**बहुव्रीहिपदस्येत्यादिः । **सूचितमिति—**अन्यथा पदानीति न प्रयुञ्जीतेति भावः। **निषेधश्चेदिति—**सर्वनामसंज्ञाया इत्यादिः । तर्ह्यकचोऽभावादिति शेषः । **किञ्चेति—**कप्रत्ययव्यवधानेनेति शेषः ।

( प्रत्याख्यानभाष्यम् )

**गोनर्दीयस्त्वाह—**

**'अकच्स्वरौ तु कर्तव्यौ प्रत्यङ्गं मुक्तसंशयौ ।' त्वकत्पितृको मकत्पितृक इत्येव भवितव्यमिति ॥**

**( प्रदीपः ) गोनर्दीयस्त्वाहेति ।** सूत्रप्रत्याख्यानमेतद् । यथोत्तरं हि मुनित्रयस्य प्रामाण्यम् ॥ स्वरः। **स्वाङ्गशिटामदन्तानामि**त्याद्युदात्तत्वम् ॥

**( उद्द्योतः )** तदेतद्वृत्तिकारोक्तं दूषयति—**अकच्स्वरौ त्विति ।** एषा स्मृतिरविशेषात्सर्वप्रकरणविषया ॥ **सूत्रप्रत्याख्यानेति ।** समुदाये निषेधस्य महासंज्ञया उपसर्जनप्रतिषेधेन वा सिद्धत्वादिति भावः॥ एवं च महासंज्ञासिद्धार्थानुवादकं प्रपञ्चार्थं सूत्रम् । एवं **द्वन्द्वे चे**त्यपि सूत्रमिति सूत्रकृतो हृदयम् ॥ **यथोत्तरमिति ।** उत्तरोत्तरस्य बहुलक्ष्यदर्शित्वात् । स्पष्टं चेदं **धिन्विकृण्व्यो**रिति सूत्रे भाष्ये ॥ एतेन सूत्रसार्थक्याय वृत्तिकारोक्तं व्याख्यानमेव प्रबलमित्यपास्तम् ॥ **शिडिति** सर्वनाम । स्वरोदाहरणं विश्वप्रियायेति ॥

**( तत्त्वालोकः )** भाष्ये—गावो नर्दन्ति यस्मिन् ( पर्वतविशेषे ) स गोनर्दः, तत्र भव इति व्युत्पत्तौ 'गहादिभ्यश्चे'ति सूत्रेण छे निष्पन्नम्प्रयुङ्क्ते—**गोनर्दीय इति ।** भाष्यकार इत्यर्थः । पूर्वतोऽत्र वैलक्षण्यसूचनायाह—**त्विति । एवेन—**त्वत्कपितृको मत्कपितृक इत्यनयोर्व्यवच्छेदः ।

प्रदीपे—ननु प्रत्यवयवं निःसंशयाकजादिकरणे प्रकृतसूत्रस्य निर्विषयताऽऽपद्येतेत्यत आह—**सूत्रप्रत्याख्यानमिति ।** प्रकृतसूत्रप्रत्याख्यानपरमित्यर्थः । **हि—**यतः ।

उद्द्योते—नन्वस्य समुदाये सर्वनामसंज्ञानिषेधार्थत्वमस्त्वित्यत आह—**समुदाय इति ।** भाष्यकारमतमाह—**महेति ।** वार्तिककारमतमाह—**उपसर्जनेति ।** नन्वेवं पाणिनेस्तदज्ञत्वमापद्येतेत्यत आह—**एवञ्चेति ।** सर्वथा फलाभावे चेत्यर्थः। **सूत्रम्—**प्रकृतसूत्रम् । **एतेन—**तद्भाष्यविरोधेन । **सूत्रेति—**न 'बहुव्रीहावि'तिसूत्रेत्यर्थः ।

( न्यूनतापरिहाराधिकरणम् )

( २२६ आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ प्रतिषेधे भूतपूर्वस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**प्रतिषेधे भूतपूर्वस्योपसंख्यानं कर्तव्यम् । आढ्यो भूतपूर्व आढ्यपूर्वः आढ्यपूर्वाय देहीति ॥**

**( प्रदीपः ) आढ्यपूर्वायेति ।** अबहुव्रीह्यर्थं वचनम् ॥

**( उद्द्योतः )** भाष्ये **भूतपूर्वस्येति ।** भूतपूर्वार्थकपूर्वाद्यन्तस्य समासस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रतिषेधे इति—**सर्वनामसंज्ञाया इत्यादिः । एवमग्रेऽपि । **आढ्यो भूतपूर्व इति—**तेनेत्यादिः । इत्यर्थे, पूर्वश्चासावाढ्यश्चेति विग्रहे 'मयूरव्यंसकादयश्चे'ति सूत्रेण निपातनात्सिद्धो य इति शेषः । **आढ्यपूर्वाय देहीति—**तस्मा इत्यादिः । अत्र स्मैभावो नेति शेषः ।

उद्द्योते—'सुपे'ति विभक्तसूत्रनिष्पन्नसमासक-भूतपूर्वशब्दव्यवच्छेदाय तादृश-भाष्योदाहरणसिद्धमाह—**भूतपूर्वार्थकेति ।**

( २२७ आक्षेपसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रतिषेधे भूतपूर्वस्योपसंख्या-नानर्थक्यं पूर्वादीनां व्यवस्थाया-मिति वचनात् ॥ * ॥**

( भाष्यम् )

**प्रतिषेधे भूतपूर्वस्योपसंख्यानमनर्थकम् ॥**

**किं कारणम् ? ॥**

**पूर्वादीनां व्यवस्थायामितिवचनात् ।**

**पूर्वादीनां व्यवस्थायां सर्वनामसंज्ञोच्यते । न चात्र व्यवस्था गम्यते ॥ न बहुव्रीहौ ॥ २८ ॥**

**( प्रदीपः ) न चात्रेति ।** प्राधान्येनेति भावः ॥ अत्र हि पूर्वत्व-माढ्यत्वस्य विशेषणम् । यथाऽतिपूर्वायेति पूर्वार्थोऽतिक्रान्तस्येत्युपसर्ज-नत्वात्पूर्वार्थस्य न भवति संज्ञा। **मयूरव्यंसकादित्वाच्चात्र** समासः॥२८॥

**( उद्द्योतः ) प्राधान्येनेति ।** प्रयोगकालरूपस्यावधेर्झटिति बो-धेन व्यवस्थासत्त्वेऽपि पूर्वार्थस्योपसर्जनत्वान्न भवतीति भावः ॥ २८ ॥

**( तत्त्वालोकः )** भाष्ये—**व्यवस्थायामिति**—सर्वनामसंज्ञेति शेषः । एवमग्रेऽपि । आनर्थक्ये स्वार्थे ष्यञिति सूचनायाह—**अनर्थ-कमिति । किं कारणम्**—कस्मात्कारणात् ।

प्रदीपे—पूर्वादीनां स्वाभिधेयापेक्षावधिनियमरूपव्यवस्थायाः प्राधान्ये सर्वनामसंज्ञेत्यभिप्रायेणाह—**प्राधान्येनेति । हि**—यतः । **इति**—इत्यत्र । **इति**—इति हेतोः । **पूर्वार्थस्येति**—तदीयव्यव-स्थाया अप्यप्राधान्यादिति शेषः । **संज्ञा**—सर्वनामसंज्ञा ।

उद्द्योते—**प्रयोगेति**—'अत्र पूर्वशब्दादि'त्यादिः । **भवतीति**—सर्वनामसंज्ञेत्यादिः । तथाच पूर्वादीनां नियमेनावधिसापेक्षार्थस्य प्राधान्ये सर्वनामसंज्ञा । न चात्र तथेति भावः ।

—o—

( २७ सर्वनामसंज्ञानिषेधसूत्रम् ॥ १ । १ । ६ आ. ४ ॥ )

# तृतीयासमासे ॥ १ । १ । २९ ॥

( इष्टानुपपत्तिनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**समास इति वर्तमाने पुनः समासग्रहणं किमर्थम् ? ॥**

**( तत्त्वालोकः ) समास इतीति**—अत्र 'विभाषा दिक्समासे' इति सूत्रादित्यादिः । **वर्त्तमाने**—अनुवर्त्तमाने । एवमग्रेऽपि ।

( समाधानभाष्यम् )

**अयं तृतीयासमासोऽस्त्येव प्राथमकल्पिकः । यस्मि-न्नैकपद्यमैकस्वर्यमैकविभक्तिकत्वं चेति । अस्ति च तादर्थ्यात्ताच्छब्द्यम्—तृतीयासमासार्थानि पदानि तृतीयासमास इति । तद्यत्तादर्थ्यात्ताच्छब्द्यं तस्येदं ग्रहणम् ॥**

**( प्रदीपः ) तृतीयासमासे ॥ २९ ॥** अत्र तादर्थ्यात्ताच्छब्द्य-लाभे सति प्रयोगार्हस्य लौकिकस्य वाक्यस्य ग्रहणे सति मासेन पूर्वा-येति प्रयोगः साधुः । वाक्यभेदेन च मुख्ये समासे निषेधः ॥

**( उद्द्योतः ) तृतीया ॥ २९ ॥** अयमपि समुदायनिषेध एव—सर्वाद्यन्ततृतीयासमासः सर्वनाम नेत्यर्थः ॥ **प्रयोगार्हस्येति । मासेन पूर्वाय देहीति** भाष्योदाहरणादिति भावः ॥ भाष्ये—**तादर्थ्यादिति** च लोकदृष्ट्योक्तम् । लोको हि तस्मादेव वाक्यात्तां वृत्तिं निष्पन्नां मन्यते ॥ नन्वेवं सति समुदायस्थ निषेधो न लभ्यतेऽत आह—**वाक्यभेदेन चेति ।** आवृत्त्येति भावः ॥

**( तत्त्वालोकः )** भाष्ये—पूर्वसूत्र इवात्रापि प्रतिपादयति—**अयमित्यादि ।** अतोऽत्रत्यपदव्याख्या तत एवावगन्तव्या । **प्रथ-मेतिः**—प्रथमकल्पसमाप्तौ वाक्यालङ्कारे वा । अत्र ततः समास इत्य-नुवर्त्तमाने पुनः समासग्रहणं समासार्थवाक्यस्थपदस्यापि सङ्ग्रहार्थ-मित्याशयः ।

प्रदीपे—**अत्रेति**—समासग्रहणेनेति शेषः । **ताच्छब्द्यलाभे**—यः ताच्छब्द्यं लभते तस्य लाभे । पूर्वसूत्रवदत्रापि-अप्रयोगसमवायि-नोऽलौकिकप्रक्रियावाक्यस्य न ग्रहणम्, तत्राकारान्ते काककोरविशे-षादनकारान्ते च प्रतिपदोक्ततृतीयासमासाविधानान्निषेधस्य वैयर्थ्या-दित्याशयेनाह—**प्रयोगार्हस्येत्यादि ।**

उद्द्योते—एतत्प्रकरणस्थसप्तमीनिर्देशस्य प्रथमार्थत्वादाह—**अय-मपीति । सर्वाद्यन्तेति**—तथाचेत्यादिः । 'तादर्थ्यमलौकिके-एव वाक्ये न तु लौकिके' इत्यस्य पूर्वसूत्रे व्यवस्थापितत्वादाह—**लोक-दृष्ट्येति । हि**—यतः । **तस्मादेव**—लौकिकादेव । **आवृत्त्येति**—सम्पूर्णसूत्रस्येत्यादिः ।

( समाधानान्तरभाष्यम् )

**अथवा समास इति वर्तमाने पुनः समासग्रहणस्यै-तत्प्रयोजनम्—योगाङ्गं यथोपजायेत । सति च योगाङ्गे योगविभागः करिष्यते—'तृतीया' तृतीयासमासे सर्वा-दीनि सर्वनामसंज्ञानि न भवन्ति । मासपूर्वाय देहि, संवत्सरपूर्वाय देहि ॥ ततः—'असमासे' असमासे च तृतीयायाः सर्वादीनि सर्वनामसंज्ञानि न भवन्ति । मासेन पूर्वाय देहि, संवत्सरेण पूर्वाय देहीति ॥ तृती-या स० ॥ २९ ॥**

**( प्रदीपः ) अथवेति ।** पर्युदासाश्रयणात्समाससदृशस्य वाक्य-स्य ग्रहणम् । **पूर्वसदृशेति** च प्रतिपदोक्तस्तृतीयासमासो गृह्यते ॥

**( उद्द्योतः )** भाष्ये **अथवेति ॥ योगाङ्गमिति ॥** योगरूपम-ङ्गमष्टाध्याय्या इत्यर्थः ॥ **तृतीयासमासे सर्वादीनीति ।** तृतीयास-मासरूपाणि सर्वाद्यन्तानीत्यर्थः । अन्यथा पूर्वशब्दस्य निषेधेऽपि समासस्य तदनिषेधादुक्तग्रहणे स्मै स्यात् । अवयवस्य तत्त्वेपि तदो विभक्तेर्विहितत्वान्न दोषः । सप्तम्युच्चारणं तु सूत्रानुरोधादिति बोध्यम् ॥ **तृतीयायाः सर्वादीनीति ।** तृतीयान्तात्पराणीत्यर्थः ॥ तदीजं दर्शयति—**पर्युदासेति** । भाष्ये पञ्चम्युपादानात्पूर्वप्रदृभूते नास्य प्रकृतिः ॥ **सदृशस्येति ।** प्रयोगार्हत्वेन समाससमानपदार्थक-त्वेन च सादृश्यम् ॥ **प्रतिपदोक्त इति ।** तेन मासेन कृताय पूर्वस्मै इत्यत्र तदर्थके मासपूर्वस्मै इत्यत्र च न दोषः । अत एव भाष्ये प्रथ-मोपस्थितानन्यान्सर्वादीन्विहाय पूर्व एवोदाहृत इति बोध्यम् ॥ २९ ॥

**( तत्त्वालोकः )** भाष्ये—ननु तृतीयासमासपदस्य अलौकिक-वाक्यस्थपदे लक्षणा अथवा लौकिकवाक्यस्थपदे [illegible], तथा

सति तेन लौकिकवाक्यस्थपदस्य ग्रहणासम्भवात्। न च द्वितीयः, तत्र लक्षणाप्रयोजकतादर्थ्यस्याभावादित्यत आह—**अथवेति ।** अत्र सूत्रे 'तृतीया' इति लुप्तसम्बन्धसामान्यार्थकषष्ठीकम्। तेनाद्ययोगे पूर्वसूत्रात्समास इत्यनुवृत्त्या 'तृतीयासमासे' इत्यर्थलाभः। द्वितीययोगे च 'तृतीयायाः' इत्यत्र पञ्चम्यर्थलाभः। अनुवृत्तिश्चैकदेशे स्वरितत्वप्रतिज्ञया तत्रापि पदभेदेन वेत्याशयेनाह—**योगविभाग इति ।**

प्रदीपे—**समासेति**—तृतीयेत्यादिः। **वाक्यस्य**—लौकिकवाक्यस्य। **पूर्वेति**—'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमि'ति परिभाषयेत्यादिः। **गृह्यते-इति**—ननु 'कर्तृकरणे कृते'त्यादि विहितोऽपीति शेषः।

उद्द्योते—योगसम्बन्ध्यङ्गत्वरूपयोगाङ्गत्वस्य योगविभागाकरणेऽपि सत्त्वादाह—**योगरूपमिति । तृतीयासमासरूपाणि**—तृतीयान्तेन यः समासस्तद्रूपाणि। ननु यथाश्रुतव्याख्यानादवयवस्यैव निषेधोऽस्त्वित्यत आह—**अन्यथेति ।** तदस्वीकारे-इत्यर्थः। **तदिति**—सर्वनामसंज्ञेत्यर्थः। ननु समुदायस्य निषेधेऽपि अवयवस्य तदनिषेधात् तत्र स्मैभावापत्तिस्तदवस्थैवेत्यत आह—**अवयवस्येति । तत्त्वेऽपि**—सर्वनामत्वेऽपि। **ततः**—अवयवात्। नन्वीदृशव्याख्याने सप्तम्ययुक्तेत्यत आह—**सप्तम्युच्चारणन्त्विति । तद्बीजम्**—असमासग्रहणेन तादृशवाक्यग्रहणे बीजम्। **भाष्ये-इति**—'तृतीयायाः' इत्यत्रेति शेषः। **भूते-इति**—सर्वादाविति शेषः। **अस्य**—द्वितीययोगस्य। तस्य पदेऽतिप्रसक्तत्वादाह—**समासेति ।** तथाच-प्रयोगार्हत्व-समाससमानपदार्थकत्वोभयरूपेणेति भावः। **न दोष इति**—अत्र हि 'कर्तृकरणे कृते'ति समासः। **अत एव**—प्रतिपदोक्तग्रहणस्येष्टत्वादेव।

---

( २८ द्वन्द्वे सर्वनामसंज्ञाविकल्पसूत्रम् ॥ १।१।६ आ. ५ ॥ )

# विभाषा जसि ॥ १ । १ । ३१ ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( भाष्यम् )

**जसः कार्यं प्रति विभाषा ॥ अकज्झि न भवति, [ 'द्वन्द्वे च' इति प्रतिषेधात् ] ॥ विभाषा जसि ॥३१॥**

**( प्रदीपः ) विभाषा ज० ॥ ३१ ॥ जसः कार्यं प्रतीति ।** जस इ जसीति निर्देशादिकारेण ईकारस्य ग्रहणादित्याहुः। अन्ये तु कार्यकालत्वात्संज्ञाया **जसःशी**त्यत्रैवोपस्थानं मन्यन्ते ॥ ३१ ॥

**( उद्द्योतः ) विभाषा ज** ॥ ३१ ॥ **इकारेणेति ।** तद्रूपस्य सर्वनामकार्यस्याभावाद् इति भावः ॥ सूत्रे **जसी**ति च लुप्तसप्तमीकं लुप्तद्वितीयान्तं वा। **अन्ये त्विति ।** जसीत्यस्य च जसूघटिते सर्वनामकार्यविधायकसूत्रे **द्वन्द्वे विभाषेति** संज्ञाविकल्पायोपतिष्ठते इत्यर्थ इत्यभिमानः ॥ भाष्ये—**अकज्झि न भवती**त्यस्य समुदायनिष्ठकुत्साबोधकोऽकच्च भवतीत्यर्थः। कृताकचा समासस्तु भवत्येव, तत्र सर्वादन्तत्वादनेन विकल्पो भवत्येव। समुदायकुत्साविवक्षायां के नायं विकल्पः, द्वन्द्वस्य सर्वाद्यन्तत्वाभावादिति बोध्यम् ॥ ३१ ॥

**( तत्त्वालोकः )** भाष्ये—अस्यार्थमाह—**जस इति । कार्यम्प्रतीति**—शीभावास्यमित्यादिः। द्वन्द्वे सर्वनामसंज्ञेति शेषः। अस्योदाहरणन्तु—'वर्णाश्रमेतरे, वर्णाश्रमेतराः' इत्यादि बोध्यम्। **अकजिति**—तेनेत्यादिः। **हिर्वाक्यालङ्कारे । द्वन्द्वे चेतीति**—अस्मिन् कर्तव्ये-इत्यादिः। सर्वनामसंज्ञाया इति शेषः। तथाच तत्र कप्रत्यये 'वर्णाश्रमेतरकाः' इत्येव भवतीति भावः।

प्रदीपे—**उपस्थानमिति**—अस्य जसःशीत्यादिः।

उद्द्योते—**तद्रूपस्य**—इकाररूपस्य। प्रकृतसूत्रार्थमाह—**सूत्रे-इति ।** 'विभाषा जसी'ति सूत्रे इत्यर्थः। **च-तु ।** अन्यस्वरसादाह—**सप्तमीकमिति ।** तथाच-जस ईकारे कर्तव्ये-इत्यादिरर्थः। भाष्यस्वरसादाह—**द्वितीयान्तमिति ।** एवञ्च-जस्सम्बन्धिनिर्माकार्यं प्रतीत्यादिरर्थः। **जसीत्यस्य**—'विभाषा जसी'त्यस्य। **संज्ञेति**—सर्वनामसंज्ञेत्यर्थः। अत्र पक्षे 'मन्यन्ते' 'अभिमानः' इति शब्दद्वयेनारुचिः सूचिता। तद्बीजन्तु-कार्यकालत्वे संज्ञायाः प्रतियोगमुपस्थानावश्यकत्वेन 'जसःशी' त्यत्रैव प्रकृतसूत्रस्योपस्थितिर्नान्यत्रेत्यत्र विनिगमनाविरहो लक्षणायां मानाभावश्चेति। तस्य फलमाह—**कृताकचेति । तत्र**—कृताकचा समासे। तन्मध्यपतितन्यायेनाह—**सर्वाद्यन्तत्वादिति ।** नन्वेवम् 'अकज्झि' इत्यादि भाष्यासङ्गतिरेवेत्यत आह—**समुदायेति । द्वन्द्वस्येति**—कव्यवधानेनेति शेषः।

---

( २९ जसि सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १।१।६ आ. ६ ॥ )

# पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम् ॥ १ । १ । ३३ ॥

( गणपाठ-सूत्रपाठयोः कालनिर्णयाधिकरणम् )

( २२८ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अवरादीनां च पुनः सूत्रपाठे ग्रहणानर्थक्यं गणे पठितत्वात् ॥ * ॥**

( भाष्यम् )

**अवरादीनां च पुनः सूत्रपाठे ग्रहणमनर्थकम् ।**

**किं कारणम् ? ॥**

**गणे पठितत्वाद् ।**

**गणे ह्येतानि पठ्यन्ते ॥**

**( प्रदीपः ) पूर्वपरा ॥ ३३ ॥ अवरादीनां चेति ।** किमर्थं प्रतिपदं पूर्वादीनि जसि विभाषार्थं पठितानि, यावता गण एवार्थविशेषेण विशिष्टानि नित्यसर्वनामसंज्ञार्थं पठ्यन्ते। तत्र **पूर्वादीनि नवे**त्येवं सूत्रं पठितव्यम्। प्राप्तविभाषा चेयं भविष्यति। तेषामेवात्र प्रत्यभिज्ञानाद्। गण एवार्थनिर्देशः पाठविशेषणं भविष्यति। यथा **तिङो गोत्रादीनी**त्यत्र कुत्सनाभीक्ष्ण्यग्रहणं गोत्रादिपाठविशेषणमिति वार्तिककाराभिप्रायः ॥ **अवरादीना**मित्यत्र प्रकारार्थं आदिशब्दस्तेन पूर्वपरशब्दावपि गृह्येते ॥

**( उद्द्योतः ) पूर्वपरा** ॥ ३३ ॥ भाष्ये **पुनः सूत्रपाठे इति ।** गणपाठोत्तरकालिके सूत्रपाठे इत्यर्थः। ननु **पूर्वादीनि नवे**त्येतावत्युक्ते गणस्थग्रहणेन प्राप्तविभाषात्वेऽभावतात्पर्यकत्वेन गौरवादर्थान्तरे एवाप्राप्तविभाषा स्यादत आह—**तेषामेवात्रेति ।** नन्वेवमर्थविशेषलाभो न स्यादत आह—**गण एवेति ॥ प्रकारार्थ इति ।** वस्तुतो लघ्वक्षरत्वादजाद्यन्तत्वाच्च सूत्रेऽवरशब्दस्यैव पूर्वनिपात उचित इत्याशयेनावरादीनामित्युक्तिर्वार्तिककृत इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—आनर्थक्ये स्वार्थे ष्यञिति सूचनायाह—**अनर्थकमिति । किं कारणम्**—कस्मात्कारणात्। **हि**—यतः। **एतानि**—अवरादीनि।

प्रदीपे—**पठितानीति**—सूत्रे-इत्यादिः । **विशिष्टानीति**—तानि प्रतिपदमिति शेषः । **तत्र**—तस्मिन् सति । **तेषामेवेति**—'उपस्थितम्परित्यज्यानुपस्थितकल्पनमन्याय्यमि'ति न्यायेन गणपाठेनोपस्थितानामेव पूर्वादीनां न त्वन्येषामिति भावः । फलमुखगौरवं न दोषायकमिति बोध्यम् । **पाठेति**—पूर्वादीत्यादिः । पूर्वपरशब्दयोरग्रहणात्समापन्नां प्रकृतवार्त्तिकासङ्गतिम्परिहरति—**अवरेति** । अपिना दक्षिणोत्तरादिशब्दपरिग्रहः ।

उद्द्योते—**गणस्थेति**—पूर्वादीति शेषः । **एवेन**—व्यवस्थाद्यर्थव्यवच्छेदः । नन्वेवं सति वार्त्तिककारस्य तदज्ञत्वापत्तिरित्यत आह—**वस्तुत इति । चकारेण** प्रथमोपस्थितत्वस्य परिग्रहः । तथाच—समुदितानामेव तेषां दण्डचक्रादिन्यायेन तत्र हेतुता, न तु प्रत्येकं तृणारणिमणिन्यायेन । तेन परोत्तरापराधराणां व्यवच्छेदः ॥ वस्तुतस्तु—'द्व्येकयोः' 'अजाद्यतः' इत्यादिनिर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वज्ञापनात् सूत्रे पूर्वशब्दस्यापि पूर्वनिपातो युक्त एव ॥ केचित्तु—अग्रिमभाष्यस्थस्य 'अवरादीनि' इत्यस्यैव प्रकृतवार्त्तिकस्थस्य 'अवरादीनाम्' इत्यस्यापि तमेवार्थं कल्पयन्ति । परे तु—पूर्वघटितस्य 'पूर्वादीनि नवे'ति सूत्रस्यावश्यकत्वात्, परस्य चकारेण ग्रहणसम्भवाच्च वार्त्तिककृता तथाऽवादीति मन्यन्ते ।

## ( आक्षेपबाधकभाष्यम् )

**कथं पुनर्ज्ञायते—स पूर्वः पाठः, अयं पुनः पाठ इति ? ॥**

**( प्रदीपः ) कथं पुनरिति ।** पूर्वं गणपाठो नियतसंनिवेशो व्यवस्थितः, पश्चात्तु सूत्रपाठ इत्यत्र प्रमाणाभावात् । आदिशब्दः प्रकारवाची दृष्टो, व्यवस्थावाची च । तत्र **सर्वादीनी**त्यत्रादिशब्दस्य प्रकारार्थतापि संभवति । प्रकारार्थताप्रदर्शनाय पश्चादभियुक्ता गणान् पठन्ति । यदुक्तम्—**श्रेण्यादयः पठ्यन्ते कृतादिराकृतिगण** इति ॥ कृतादयश्च वृत्तिकारैर्निदर्शनार्थं पठिताः । तत्र वेदे **मध्यमस्यामवमस्या**मिति प्रयोगदर्शनात्प्रकारार्थतादिशब्दस्य **सर्वादीनी**त्यत्र संभाव्यत इति प्रश्नः ॥

**( उद्द्योतः )** ननु सर्वादीनीति व्यवहाराद् गणपाठस्य पूर्वता निश्चीयतेऽत आह—**आदिशब्द इति ॥** ननु गणपाठस्य निदर्शनार्थत्वे आदिपदस्य प्रकारार्थता स्यात्, तदेव कुत इत्यत आह—**तत्र वेद इति ॥ प्रकारेति ।** सर्वनामकार्यवत्त्वमेव सादृश्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—यदि सर्वादीनीत्यत्र-आदिशब्दः प्रकारार्थकः, तथा प्रकारार्थसादृश्यप्रदर्शनाय गणपाठस्तर्हि पूर्वं सूत्रपाठः पश्चाच्च गणपाठः । यदि च तत्र स व्यवस्थार्थकस्तर्हि पूर्वं गणपाठः पश्चाच्च सूत्रपाठ इत्युभयत्र विनिगमनाविरहात्पृच्छति—**कथमिति । पुनरिति** वाक्यालङ्कारे । **सः**— गणस्थः । **अयमिति**—सूत्रस्थ इत्यर्थः । स्विति शेषः ।

प्रदीपे—**तत्र**—तथा सति । **अपिना**—व्यवस्थार्थतायाः परिग्रहः । **यत्**—यस्मात् । **दर्शनादिति**—गणपाठस्य निदर्शनार्थत्वे इति शेषः । **इति प्रश्नः**—इति हेतोः प्रश्नः ।

उद्द्योते—**तदेव**—गणपाठस्य निदर्शनार्थत्वमेव ।

## ( आक्षेपसाधकभाष्यम् )

**तानि हि पूर्वादीनि इमान्यवरादीनि ॥**

**( प्रदीपः ) तानि हि पूर्वादीनीति ।** पूर्वकालपठितत्वात्पूर्वशब्देन सर्वशब्दोऽभिधीयते । तेनायमर्थः—**सर्वादीनी**त्यत्र व्यवस्थावाच्यादिशब्दः । प्रकारवाचित्वे हि कृत्स्नादीनामपि संज्ञा स्यात् । मध्यमस्यामिति तु व्यत्ययेन च्छान्दसः प्रयोगः ॥ **इमान्यवरादीनीति ।** अवरकालपाठात्पूर्वशब्दोऽवरशब्देनोच्यते ॥ तेन पूर्वं गणपाठः पश्चात्सूत्रपाठ इत्यर्थः ॥

**( उद्द्योतः ) छान्दसः प्रयोग इति ।** एवं च **सर्वादीनीति** व्यवहारादेव गणपाठस्य पूर्वत्वनिश्चय इति भावः ॥ अत्र वदन्ति—**'तानि पूर्वादीनी**त्यनेनैव गणपाठस्य पूर्वत्वे सिद्धे **इमान्यवरादीनि**ति व्यर्थम् । अस्य हि पूर्वादीनीत्यर्थः कैयटाल्लभ्यते । न चायं सूत्रपाठस्य पुनः पाठत्वे साधकः । किं **चेमान्यपि पूर्वादीनी**ति शङ्काप्यनुपपन्ना, त्वदुक्तरीत्या हेतोरभिधानात् । एवं च **हेत्वभिधानमन्तरेणे**त्याद्यपि चिन्त्यमेव । तस्मादत्रादिशब्द आश्रयवाची **भीष्मादिश्च सुयोधन** इतिवत् ॥ **तानि** गणपठितानि पूर्वकालाश्रयाणि । **इमानि** अष्टाध्यायीपठितानि अवरकालाश्रयाणि इत्यर्थः । एवं च तत्तत्कालकृतत्वात्पूर्वादिव्यवहार इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**हि**—यतः । **इमानि**—इमानि तु ।

प्रदीपे—**प्रकारेति**—तस्येत्यादिः । **हि**—यतः । **अपिना** सर्वादीनां परिग्रहः । **संज्ञा**—सर्वनामसंज्ञा । **पश्चात्**—पश्चात्तु ।

उद्द्योते—कैयटोक्तं खण्डयति—**अत्रेति । अस्य**—'अवरादीनी'-त्यस्य । **हि**—यतः । **अयम्**—पूर्वादीनीत्यर्थः । **त्वदुक्तेति**—कैयटोक्तेत्यर्थः । **हेतोः**—पूर्वकालपठितत्वमूलकस्य सर्वादीनीति-व्यवहाररूपहेतोः । प्रकृतभाष्याशयमाह—**तस्मादिति ।** आदिशब्दस्याश्रयवाचित्वे मानं सूचयन्नाह—**भीष्मादिश्चेति । पूर्व**शब्दोऽत्र पूर्वकालवाचीत्याशयेनाह—**पूर्वकालेति । पूर्वादीनी**त्यादिः । एवमग्रेऽपि ।

## ( आक्षेपबाधकभाष्यम् )

**इमान्यपि पूर्वादीनि ॥**

**( प्रदीपः )** हेत्वभिधानमन्तरेणाशक्योऽयमर्थः प्रतिपत्तुमित्याह—**इमान्यपीति ॥**

**( उद्द्योतः )** तत्र मानाभावमूलकं शङ्कते—**इमान्यपि ।** अष्टाध्यायीपठितान्यपि ॥ **पूर्वादीनि ।** पूर्वकालाश्रयाणीत्यर्थः ॥ अत्रापिरेवार्थे । अन्यथोभयोः परस्परापेक्षया पूर्वकालत्वासंभवेनाऽपिरनर्थकं एव स्यात् ॥ **सर्वादीनी**त्यादौ सर्वत्रादिशब्दः प्रकार एव ॥ तत्तत्कार्यवत्त्वेन च सादृश्यम् । अतिप्रसङ्गस्त्वनभिधानान्नेत्याशयः ॥ ध्वनितं चेदं **'कस्येदि**ति सूत्रे भाष्ये' इति ॥

**( तत्त्वालोकः )** प्रदीपे—**अयमर्थः**—गणपठितान्येव सर्वादीनीत्यर्थः । **इति**—इति हेतोः । विनिगमनाविरहतादवस्थ्यादित्याशयः ।

उद्द्योते—**तत्र**—गणपठितान्येव पूर्वकालाश्रयाणीत्यत्र । **अन्यथा**—तस्य समुच्चयार्थत्वे । तथाच—गणपठितान्येव पूर्वकालाश्रयाणि, अथवा—अष्टाध्यायीपठितान्येव पूर्वकालाश्रयाणीत्यर्थः, विनिगमकाभावादिति बोध्यम् । प्रकृतभाष्याशयमाह—**सर्वादीनीति । अतिप्रसङ्ग इति**—कृत्स्नादिषु सर्वनामत्वस्येत्यादिः ।

## ( आक्षेपसाधकभाष्यम् )

**एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'स पूर्वः पाठः, अयं पुनः पाठः' इति । यदयं 'पूर्वादिभ्यो नवभ्यो वा' इति नवग्रहणं करोति । नवैव हि पूर्वादीनि ॥**

**( प्रदीपः ) नवग्रहणमिति ।** तत्र हि नवग्रहणं त्यदादीनां

निरासार्थं क्रियते । यदि च नियतसंनिवेशो गणपाठः पूर्वस्ततोऽधिकव्यवच्छेदाय नवग्रहणं कर्तव्यम् ॥

**( उद्द्योतः ) नवैवेति** भाष्ये । अष्टाध्याय्यां पूर्वेत्यादित्रिसूत्री–पठितानीत्यर्थः । अष्टाध्याय्याः पूर्वकालत्वे **पूर्वादीति** सूत्रेऽष्टाध्यायी-सूत्रपठितानामेव तेषां ग्रहणं स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—आक्षेप्ता पूर्वं गणपाठः पश्चात्तु सूत्रपाठ इति स्वपक्षे विनिगमनामाह—**एवमिति ।** यदीत्यादिः । **सः**—गणपाठः । **अयम्**—सूत्रपाठस्तु । **अयम्**—आचार्यः । **इति**—इत्यत्र ।

प्रदीपे—**तत्र**-'पूर्वादिभ्यो नवभ्यो वे'ति सूत्रे । **हिर्वा**क्यालङ्कारे ।

उद्द्योते—'नवैवे'ति भाष्यस्य सार्थक्यमुपपादयति—**अष्टाध्याय्यामिति । इत्यर्थ इति**—तथाच 'नवैवे'ति भाष्ये-हि ( यतः ) अष्टाध्याय्यां पूर्वपरेत्यादित्रिसूत्रीपठितानि पूर्वादीनि नवैवेत्यन्वयः । **अष्टाध्यायीसूत्रेति**—अष्टाध्यायीस्थपूर्वेत्यादित्रिसूत्रीत्यर्थः । **तेषाम्**—पूर्वादीनां नवानाम् । **इति भाव इति**—एवञ्चाष्टाध्याय्याः पूर्वकालत्वे तत्र नवग्रहणं व्यर्थमेवेत्याशयः ।

**( समाधानभाष्यम् )**

**इदं तर्हि प्रयोजनम्—व्यवस्थायामसंज्ञायामिति वक्ष्यामीति ॥**

**( प्रदीपः ) इदं तर्हीति ॥** प्रतिनियतविशेषणाभिधानाय प्रतिपदपाठ इत्यर्थः ॥

**( उद्द्योतः ) प्रतिनियतेति ।** पूर्वादिसप्तकस्यैव व्यवस्थायामित्यादि, स्वशब्दस्यैवाज्ञातीत्यादि, अन्तरशब्दस्यैव बहिर्योगेत्यादि विशेषणाभिधानायेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**इदं तर्हीति**—यदि पूर्वं गणपाठः पश्चात्तु सूत्रपाठस्तर्हि पूर्वादीनां पुनः सूत्रपाठे ग्रहणस्येदं प्रयोजनमित्यन्वयः । **व्यवस्थेति**—तत्र तेषामित्यादिः । **इति**—इत्याद्यर्थान् । तेन-अज्ञातीत्यादि-बहिर्योगेत्याद्योश्च संग्रहः ।

प्रदीपे—**प्रतिपदेति**—सूत्रे पूर्वादीनामित्यादिः ।

**( समाधानबाधकभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । एवंविशिष्टान्येवैतानि गणे पठ्यन्ते ॥**

**( प्रदीपः ) एवं विशिष्टान्येवेति ।** पाठविशेषणाय गणेऽर्थनिर्देश इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एवंविशिष्टानीति**—व्यवस्थाद्यर्थविशिष्टानीत्यर्थः । यत इत्यादिः । **एतानि**—पूर्वादीनि ।

प्रदीपे—**पाठेति**—पूर्वादीत्यादिः । **अर्थेति**—व्यवस्थादीत्यादिः ।

**( समाधानभाष्यम् )**

**इदं तर्हि प्रयोजनम्—त्र्यादिपर्युदासेन पर्युदासो मा भूदिति ॥**

**( प्रदीपः ) द्व्यादिपर्युदासेनेति ।** त्यदादीनि पठित्वा गणे कैश्चित् पूर्वादीनि पठितानि । तत्राद्व्यादिभ्य इति तसिलादीनां प्रतिषेधः प्राप्नोति । तत्र पुनः सर्वनामसंज्ञा तसिलादिविधानार्थं विधीयते । तेन द्व्यादिपर्युदासो बाध्यते । यथा **अनुर्लक्षण** इति पुनर्विधानेन **हेतु**तृतीया बाध्यते । वाक्यभेदेन च विभाषा जसि विधीयते । **यथा** '**ङमिपूर्वः' संप्रसारणञ्चे**त्यत्र वाक्यभेदेन '**वा छन्दसी'** ति संबन्धाच्छन्दसि विकल्पः क्रियते इति भावः ॥

**( उद्द्योतः )** अष्टाध्यायीपाठेन यथा द्व्यादिपर्युदासाभावस्तथा दर्शयति—**तत्र पुनरिति ।** पुनः संज्ञाविधानेन पुनः कार्यविधानद्वारा द्व्यादिपर्युदासो बाध्यत इत्यर्थः ॥ **इति पुनर्विधानेनेति ।** एतत्संज्ञाकल्पितेन द्वितीयपुनर्विधानेनेत्यर्थः ॥ नन्वेवं जसि विकल्पो न स्यादत आह—**वाक्यभेदेन चेति । विभाषा जसी**त्यनुवृत्त्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**इदं तर्हीति**—यद्येवं हि तस्येदं प्रयोजनमित्यन्वयः । **द्व्यादीति**—तसिलादिविषये इत्यादिः । **पर्युदास इति**—पूर्वादीनामित्यादिः ।

प्रदीपे—**पठितानीति**—तत्र तेषां पाठस्तु नित्यसर्वनामसंज्ञार्थत्वेनोपक्षीण इत्याशयः । **तत्र**—तथा सति । **अद्व्यादिभ्य इतीति**—'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः' इत्यधिकारसूत्रघटक–'अद्व्यादिभ्यः' इत्यंशेनेत्यर्थः । पूर्वादिष्वपीति शेषः । **तत्रेति**—पूर्वादिष्वित्यर्थः । अत इत्यादिः । 'पूर्वपरे'त्यादि त्रिसूत्र्येति शेषः । **तेनेति**—पुनः सर्वनामसंज्ञाविधानेनेत्यर्थः । पूर्वादीनामिति शेषः । **द्व्यादिपर्युदासः**—द्व्यादिपर्युदासेन पर्युदासः । **यथेति**—अनोः 'लक्षणेत्थम्भूते' त्यादिसूत्रेण कर्मप्रवचनीयसंज्ञायां सिद्धायामिति शेषः । **पुनर्विधानेन**—पुनः कर्मप्रवचनीयसंज्ञाविधानेन । **हेतुतृतीया**—( तद्युक्ते पराऽपि ) 'हेतावि'ति तृतीया ।

उद्द्योते—**अष्टाध्यायीपाठेन**—अष्टाध्याय्यां पूर्वादीनां प्रतिपदपाठेन । **द्व्यादिपर्युदासाभाव इति**—द्व्यादिपर्युदासेन पर्युदासाभाव इत्यर्थः । तेषामित्यादिः । संज्ञायाः कार्यार्थत्वात् 'तेन······बाध्यते' इति यथाश्रुतासङ्गतेस्तदर्थमाह—**पुनरिति । संज्ञेति**—सर्वनामसंज्ञेत्यर्थः । **कार्येति**—तसिलादिकार्येत्यर्थः । **द्व्यादिपर्युदास इति**—द्व्यादिपर्युदासेन पर्युदास इत्यर्थः । पूर्वादीनामित्यादिः । तत एव 'पुनर्विधानेन······बाध्यते' इति यथाश्रुतस्याप्यसङ्गतेस्तदर्थमाह—**एतत्संज्ञेति ।** पुनः कर्मप्रवचनीयसंज्ञाविधानेत्यर्थः । **विभाषेति**—अत एव त्रलादावपि न विकल्प इत्याशयः ।

**( समाधानबाधकभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—नैषां द्व्यादिपर्युदासेन पर्युदासो भवतीति । यदयं 'पूर्वत्रासिद्धम्' इति निपातनं करोति । वार्तिककारश्च पठति॰जशभावादिति चेदुत्तरत्राभावादपवादप्रसङ्गः॰ इति ॥**

**( उद्द्योतः ) जशभावादिति चेदुत्तरत्रेति । ढोढे लोप** इति सूत्रे वार्तिकमिदम् । एतैश्च सूत्रवार्तिकप्रयोगैस्त्यदादितः पूर्वमेव गणे पूर्वादिपाठ इति बोध्यत इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति**—यत इत्यादिः । **एषाम्**—पूर्वादीनाम् । **अयम्**—आचार्यः । **निपातनमिति**—निर्देशमित्यर्थः । सामान्यापेक्षज्ञापकत्वमस्येति सूचयन्नाह—**वार्तिकेति ।** तथाच-यदि पूर्वादीनां द्व्यादिपर्युदासेन पर्युदासः स्यात्तर्हि पाणिनिः 'पूर्वत्रे'ति न निर्दिशेत् तथा वार्तिककारः 'उत्तरत्रे'ति न पठेत् । यतः स तथा निर्दिशति, स च तथा पठति; अतो ज्ञायते 'नैषां द्व्यादिपर्युदासेन पर्युदासो भवतीति' इत्याशयः ।

उद्द्योते—'नैषां द्व्यादी' त्याद्यपूर्ववचनकल्पने गौरवेण लाघवात् प्रकृतभाष्यतात्पर्यार्थमाह—**एतैश्चेति । बोध्यत इति**—एवञ्च पूर्वादीनां द्व्यादिपर्युदासेन पर्युदासप्रसङ्ग एव नेति भावः ।

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—जसि विभाषां वक्ष्यामीति ॥ पूर्वपरावरदक्षिणोत्तरापराधराणि० ॥ ३३ ॥**

**( प्रदीपः ) इदं तर्हीति ।** यदि पूर्वादीनि नवेत्युच्येत, तदा गणपाठेऽर्थनिर्देशस्य नित्यसंज्ञाविधान एवोपयुक्तत्वात् पाठविशेषणे प्रमाणाभावादप्राप्तविभाषेयमर्थान्तरे पूर्वादीनां जसि विज्ञायेत, प्राप्तविभाषायामुक्तानुवाददोषप्रसङ्गादप्राप्तविभाषायामपूर्वविधानात् । **विभाषामिति ।** प्राप्तविभाषामित्यर्थः । प्रतिपदपाठं चान्तरेणासंकरेणार्थनिर्देशोऽशक्यः कर्तुमिति भाष्यकारेण प्रतिपदपाठः समर्थितः ॥ ३३ ॥

**( उद्द्योतः ) पाठविशेषणे प्रमाणाभावादिति ।** व्याख्यानातिरिक्तप्रमाणाभावादिति भावः ॥ तथाव्याख्याने बाधकमाह—**उक्तानुवादेति ।** भावांशे इत्यर्थः ॥ अभावतात्पर्यकत्वेन गौरवं दोष इत्यपि बोध्यम् ॥ नन्वप्राप्तविभाषात्ववारणायार्थमात्रनिर्देशः क्रियतां किं प्रतिपदपाठेनेत्यत आह—**प्रतिपदेति । असंकरेणेति ।** सप्तस्वेव व्यवस्थासम्बन्धः, स्वे अज्ञातिधनयोः, अन्तरे बहिर्योगादेरित्येवंरूप इत्यर्थः ॥ एवमप्याद्यसूत्रे **पूर्वादीनि व्यवस्थायामसंज्ञाया**मित्येव कुतो न सूत्रितम्, सप्तानामेव व्यवस्थायां वृत्तिरिति चिन्त्यम् ॥ ३३ ॥

**( तत्त्वालोकः )** भाष्ये—**इदं तर्हीति ।** यद्येवं तर्हि पूर्वादीनां पुनः सूत्रपाठे ग्रहणस्येदं प्रयोजनमित्यन्वयः । **वक्ष्यामि**—ब्रवीमि । छान्दसत्वादत्र वर्तमाने लृड्विधानात् ।

प्रदीपे—**अर्थेति**—व्यवस्थादीत्यादिः । **संज्ञेति**—सर्वनामेत्यादिः । **पाठेति**—पूर्वादीत्यादिः । **इयम्**—'पूर्वादीनि नवे'तीयम् । ननु 'उपस्थितम्परित्यज्यानुपस्थितकल्पनमन्याय्यमि'ति न्यायेन गणपाठेनोपस्थितानां तदर्थवतामेव पूर्वादीनामत्र ग्रहणेनेयम्प्राप्तविभाषैवास्त्वित्यत आह—**प्राप्तविभाषायामिति ।** नन्वेवं सार्थक्यानुरोधादप्राप्तविभाषैवेयमस्त्वित्यत आह—**अप्राप्तविभाषायामिति ।**

उद्द्योते—व्याख्यानस्य सत्त्वादाह—**व्याख्यानातिरिक्तेति ।** व्याख्यानन्त्वगतिकगतिरदृष्टार्थविषयकञ्चेत्याशयः । **तथा**—प्राप्तविभाषया । अभावांशे उक्तानुवाददोषप्रसङ्गाभावादाह—**भावांशे इति ।** ननु प्राप्तविभाषायां भावांशस्य सिद्धत्वात्तत्र न तात्पर्यम्, किन्त्वभावांश एवेति नायं दोष इत्यत आह—**अभावेति ।** अभावांशेत्यर्थः । **अप्राप्तविभाषात्वेति**—'पूर्वादीनि नवे' त्यस्येत्यादिः । **अर्थमात्रेति**—( पूर्वादीनि नव ) व्यवस्थाऽसंज्ञाऽज्ञातिधनाख्याबहिर्योगोपसंव्यानेष्विति मात्रेत्यर्थः । **सप्तस्विति**—पूर्वाद्यधरान्तेष्वित्यादिः । सर्वनामेत्यन्वर्थसंज्ञया, 'अभिव्यक्तपदार्था ये' इति न्यायेन वा संज्ञाव्यवच्छेदस्य सिद्धत्वादसंज्ञायामित्यस्यानुपयोगादाह—**व्यवस्थेति ।** भाष्यमिदमेकदेश्युक्तिरित्याह—**एवमपीति ।** अग्रिमसूत्रद्वयं यथास्थितमेवेति भावः । अनुक्तार्थमाह—**असंज्ञेति । चिन्त्यमिति**—वस्तुतस्तु स्वान्तरयोः प्रतिपदपाठेऽभ्युपगते 'सम्भवत्यैकरूप्ये वैरूप्यमन्याय्यमि'ति न्यायेन तदैकरूप्याय पूर्वाद्यधरान्तेष्वपि प्रतिपदपाठ एवाभ्युपगन्तव्य इति बोध्यम् । अत्र—'पूर्वादिभ्यो नवभ्यो वे' त्येतत्तु 'जसः शी'त्यत्रानुवर्त्त्य वाक्यभेदेन सम्भन्त्स्यते, 'वा छन्दसी'त्येत 'दमिपूर्वः' इत्यत्र यथा, तथाचेयं त्रिसूत्री अष्टाध्याय्यां न पाठ्येति स्थितमिति शब्दकौस्तुभकृतः ।

---

( ३० सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १ । १ । ६ आ. ७ ॥)

# स्वमज्ञातिधनाख्यायाम् ॥ १ । १ । ३४ ॥

( आख्याग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**आख्याग्रहणं किमर्थम् ?**

**( प्रदीपः ) स्वमज्ञा० ॥ ३४ ॥** आत्मात्मीयज्ञातिधनवचनः स्वशब्दः । आमिनिज्विषयस्त्वैश्वर्यवाची ॥ **आख्याग्रहणमिति ।** स्वे पुत्राः स्वे गाव इत्यत्र स्वशब्द आत्मीयत्वमेवाह । पुत्रादिशब्दस्तु ज्ञातिधनयोर्वर्तते, न स्वशब्द इति प्रतिषेधो न भविष्यतीति प्रश्नः ॥

**( उद्द्योतः ) स्वमज्ञाति** ॥ ३४ ॥ **आत्मीयत्वमेवाहेति ।** आत्मीयत्वेनैव ततः प्रतीतिर्न तु धनत्वादिनेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—गणपाठसूत्रपाठोभयसाधारणं पृच्छति—**आख्येति ।** अत्रेत्यादिः ।

प्रदीपे—'स्वो ज्ञातावात्मनि, त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरकोशवचनानुसारेणाह—**आत्मात्मीयेति । आमिनिज्विषयस्त्विति**—'स्वामिन्नैश्वर्ये' इति सूत्रविहितमत्वर्थीयेत्यादिः । स्वशब्द इति शेषः । तत्र ज्ञातिधनवाचिनोर्निषेधात्, ऐश्वर्यवाचिनश्च—आमिनिच्तः पार्थक्येन प्रयोगाभावात् आत्मात्मीयवाचिनोरेवानेन सर्वनामसंज्ञेत्याशयः । **इत्यत्र**—इत्यत्रापि । **आत्मीयत्वमिति**—प्रकारतयेत्यादिः । **इति प्रतिषेधः**—इति हेतोः 'अज्ञाती'त्यादिप्रतिषेधः । **इति प्रश्नः**—इति हेतोः प्रश्नः ।

( समाधानभाष्यम् )

**ज्ञातिधनपर्यायवाची यः स्वशब्दस्तस्य यथा स्याद् । इह मा भूत्—स्वे पुत्राः स्वाः पुत्राः, स्वे गावः स्वाः गावः ॥ स्वमज्ञातिधनाख्यायाम् ॥ ३५ ॥**

**( प्रदीपः ) तस्य यथा स्यादिति ।** प्रतिषेध इति शेषः ॥ **इह मा भूदिति ।** असत्याख्याग्रहणे स्वे पुत्रा इत्यादौ स्यादेव प्रतिषेधः, अत्राप्यात्मीयत्वं प्रवृत्तिनिमित्तमुपादाय स्वशब्दो ज्ञातिधनयोर्वर्तते, पुत्रादिभिः सामानाधिकरण्यात् । आख्याग्रहणे तु सति न दोषः । स्वशब्दो ह्यत्रात्मीयस्याख्या, न तु ज्ञातिधनयोरिति विधिः सिद्धः । ३४

**( उद्द्योतः )** ईदृशविशेषलाभार्थमेवाख्याग्रहणम् । तदभावे आत्मीयत्वादिना ज्ञातिधनवाचकेऽपि निषेधः स्यादित्युत्तरम् ॥ **प्रतिषेध इति शेष इति ।** अज्ञातीत्यादिप्रतिषेध इत्यर्थः ॥ **नतु ज्ञातिधनयोरिति ।** ज्ञातित्वधनत्वयोरित्यर्थः ॥ ३४ ॥

**( तत्त्वालोकः )** भाष्ये—**ज्ञातिधनेति**—अत्र 'ज्ञातिधनयोः पर्यायवाचीति व्युत्पत्तौ' षष्ठीतत्पुरुषः । पर्यायवाचित्वञ्च तच्छब्दभिन्नत्वे सति तत्प्रवृत्तिनिमित्ताक्रान्तत्वम् । **तस्य**—तस्यैव । **इहेति**—किन्त्वित्यादिः । अज्ञातीत्यादिप्रतिषेध इति शेषः । **मा भूदिति**—इत्यर्थमत्राख्याग्रहणमिति शेषः । इहपदबोध्यं निर्दिशति—**स्वे पुत्रा इत्यादि ।**

प्रदीपे—**स्यादेव प्रतिषेधः**—स्यादेवाज्ञातीत्यादिप्रतिषेधः । **अत्रापीति**—यत इत्यादिः । **दोषः**—'अज्ञाती'त्यादिप्रतिषेधः । **हि**—यतः । **आत्मीयस्य**—आत्मीयत्वस्य । **इति विधिः**—इति हेतोः सर्वनामसंज्ञाविधिः ।

उद्द्योते—**ईदृशेति**—ज्ञातित्वधनत्वाभ्यां यस्मात्स्वशब्दाद्बोधस्तस्यैव 'अज्ञाती'त्यादिप्रतिषेधो नान्यस्येतीत्यर्थः। ननु आत्मीयत्वेन ज्ञातिधनयोर्वाचक एवेत्यत आह—**ज्ञातित्वेति**। नन्वत्र लाघवात् 'आत्मात्मीययोरि'त्येवास्त्विति चेन्न, तथा सति ज्ञातित्वधनत्वाभ्यामपि आत्मात्मीयवाचिनोः स्वशब्दयोर्जसि नंज्ञाविकल्पापत्तेः। नचैवमपि 'आत्मात्मीयाख्यायामि'त्येवास्त्विति वाच्यम्, पदमात्रालाघवाभावात् ॥ तथाच—ज्ञातित्वधनत्वाभ्याम् आत्मात्मीयज्ञातिधनैश्वर्यवाचिनां प्रतिषेधस्तथा आत्मत्वात्मीयत्वाभ्याम् आत्मात्मीयज्ञातिधनैश्वर्यवाचिनां जसि संज्ञाविकल्प इति फलितम्। नचैश्वर्यवाची आमिनिच्-मात्रविषयः, 'ऐश्वर्ये तु स्वस्वामिभ्यां पर्यायेण सप्तमी' इतिवचने आमिनिच्तः पार्थक्येनापि तस्य प्रयोगदर्शनादिति दिक् ॥



( ३१ सर्वनामसंज्ञाविकल्पनसूत्रम् ॥ १।१।६ आ. ८ ॥ )

# अन्तरं बहिर्योगोपसंव्यानयोः ॥ १।१।३५॥

( उपसंव्यानग्रहणप्रयोजनाधिकरणम् )

( २२९ प्रत्याख्यानाक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ उपसंव्यानग्रहणमनर्थकं बहिर्योगेण कृतत्वात् ॥ * ॥

( भाष्यम् )

**उपसंव्यानग्रहणमनर्थकम्।**

**किं कारणम्? ॥**

**'बहिर्योगेण कृतत्वात्। बहिर्योग इत्येव सिद्धम् ॥**

**( प्रदीपः ) अन्तरम्० ॥ ३५ ॥** बहिरित्यनावृतदेश-उच्यते तेन योगो बहिर्योगः। स च बाह्यस्य भवति। अन्तरे गृहा इति नगरबाह्याश्चाण्डालादिगृहा उच्यन्ते। यदा तु बहिश्शब्देन बाह्य उच्यते बाह्येन योगो बहिर्योग इति, तदा नगराभ्यन्तरे ये गृहास्त उच्यन्ते। उभयथापि स्मर्यते। उपसंव्यानशब्दोऽपि कर्मकरणार्थभेदाद्भिन्नार्थः। ततः सर्वथा बहिर्योगात् सिद्धिं मत्वाह—**उपसंव्यानेति ॥**

**( उद्द्योतः ) अन्तरम्० ॥ ३५ ॥ भिन्नार्थ इति।** नानार्थ इत्यर्थः ॥ **ततः सर्वथेति।** कर्मणि द्वितीयव्याख्यानेन करणे आद्यव्याख्यानेनेति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥ इत्यमरवचनानुसारेणान्तरशब्दस्यानेकेऽर्थाः। तत्र बहिर्योगोपसंव्यानयोरेवार्थयोरस्यानेन जसि संज्ञाविकल्प इति बोध्यम्। **किं कारणम्**—कस्मात्कारणात्। **कृतत्वादि**त्यस्यार्थं वक्तुमाह—**बहिर्योगे-इति।** यत इत्यादिः। **इत्येवेति**—इत्यनेनैवेत्यर्थः। तत्प्रयोजनमिति शेषः।

प्रदीपे—**बहिरितीति**—'बहिरशब्देनानावृतदेशस्तद्देशस्थश्चोच्यते। तत्र यदे' त्यादिः। **अन्तरे-इति**—तदेत्यादिः। अन्तरा वेति शेषः। **बाह्यः**—अनावृतदेशस्थः। **इतीति**—स चाभ्यन्तरस्य भवतीत्यर्थः। **तदेति**—अन्तरे अन्तरा वा गृहा इत्यनेनेति शेषः। **एवञ्च**—बहिर्योगशब्दो बहिर्देशस्थाभ्यन्तरयोरर्थयोर्वर्तमानत्वान्नानार्थ इत्यभिप्रायेणाह—**उभयथापीति। कर्मकरणार्थभेदादिति**—उपसंव्यानशब्द उपसंवीयते-आच्छाद्यते यदिति कर्मव्युत्पत्त्याऽन्तरीयपरः, अर्थादाभ्यन्तरपरः, आभ्यन्तर एव हि-आच्छाद्यते बहिर्देशस्थेन। उपसंवीयते—आच्छाद्यतेऽनेनेति करणव्युत्पत्त्या तु—उत्तरीयपरः, अर्थाद् बहिर्देशस्थपरः, बहिर्देशस्थेनैव हि—आच्छाद्यते—आभ्यन्तरः। इति प्रकारभेदादिति भावः। **ततः सर्वथेति**—नानार्थत्वादुभयथेत्यर्थः। बहिर्योगशब्देनैव बहिर्देशस्थाभ्यन्तरयोरिवान्तरीयोत्तरीययोरपि बोधसम्भवादित्याशयः।

उद्द्योते—**द्वितीयेति**—बहिर्योगशब्दस्येत्यादिः। **आद्येति**—तस्येत्यादिः।

( २३० प्रत्याख्यानबाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ न वा शाटकयुगाद्यर्थम् ॥ * ॥

( भाष्यम् )

**न वाऽनर्थकम्।**

**किं कारणम्?।**

**'शाटकयुगाद्यर्थम्'। शाटकयुगाद्यर्थं तर्हीदं वक्तव्यम्। यत्रैतन्न ज्ञायते—किमन्तरीयं किमुत्तरीयमिति ॥**

**( प्रदीपः ) न वेति।** समानप्रमाणे शाटकयुगे अपरिहिते इदं न ज्ञायते किमुत्तरीयं किमन्तरीयमेतदित्यर्थः ॥

**( उद्द्योतः )** नन्वल्पमहत्परिमाणाभ्यामन्तरीयोत्तरीयत्वनिर्णयो भविष्यतीत्यत आह—**समानेति।** पदत्रयमपि सप्तम्यन्तम् ॥ भाष्ये **किमुत्तरीयं किमन्तरीयमित्येत**न्न ज्ञायत इत्यन्वयः ॥

**( तत्त्वालोकः )** भाष्ये—**तर्हीदमिति**—( यद्येवं ) **तर्हि** शाटकयुगाद्यर्थ**मिदम्**—उपसंव्यानग्रहणं **वक्तव्यम्**—कर्तव्यमित्यन्वयः। यथाश्रुतं शाटकयुगादिमात्रं न विवक्षितं किन्तु तदज्ञानमित्याशयेन तस्यार्थमाह—**यत्रेति।** अनेनादिशब्दार्थस्यापि संग्रहो विहितः। शाटकयुगे-इति शेषः। **न ज्ञायते-इति**—तद्वाचकस्यान्तरशब्दस्य जसि संज्ञाविभाषार्थमिति शेषः।

प्रदीपे—**अपरिहिते-इति**—इस्तेन धृते-इति शेषः। इदम्पदबोध्यं निर्दिशति—**किमुत्तरीयमित्यादिना। एतत्**—इत्येतत्। इदमन्तरमिति व्यवहारस्तु तत्रापि दृश्यते—इत्याशयः।

उद्द्योते—**सप्तम्यन्तम्**—सत्सप्तम्यन्तम्। एतच्छब्देन पूर्वपरामर्शभ्रमो मा भूदित्यर्थमाह—**भाष्ये किमिति।**

( प्रत्याख्यानसाधकभाष्यम् )

**अत्रापि य एष मनुष्यः प्रेक्षापूर्वकारी भवति। निर्ज्ञातं तस्य भवति—इदमन्तरीयमिदमुत्तरीयमिति ॥**

**( प्रदीपः ) अत्रापीति।** यथोपसंव्यानत्वं भाक्तिबुद्ध्या व्यवस्थाप्यते तथा बहिर्योगोऽपीत्यर्थः ॥ अन्ये त्वाहुः—आदिशब्दो वार्तिके **शाटकयुगाद्यर्थ**मित्यत्रोपात्तः। तत्र शाटकानां त्रये चतुष्टये वा तृतीयचतुर्थयोर्बहिर्योगाभावादुपसंव्यानग्रहणं कर्तव्यम् ॥

**( उद्द्योतः ) तृतीयचतुर्थयोरिति।** शरीरसंयुक्तयोरित्यर्थः ॥ भाष्यस्य त्वयं भावः—बहिर्योग इति स्वर्यते। तेन परम्परया बाह्यसंबन्धस्यापि सिद्धिरिति ॥

(तत्त्वालोकः) भाष्ये—आख्याग्रहणाभावान्न पूर्ववत्फलमित्यभिप्रायेणाह—**अत्रापीति**। तादृशस्थलेऽपीत्यर्थः।

प्रदीपे—ननु तादृशस्थले सर्वथा बहिर्योगस्याभावात्कथन्तेन सिद्धिरित्यत आह—**यथोपसंख्यानवमिति**। तादृशस्थले इत्यादिः। तथा च बहिर्योगेणैव सिद्धेरुपसंख्यानग्रहणं न कर्तव्यमित्याशयः। आदिशब्दार्थमनपेक्ष्य भाष्ये वार्तिकोक्तफलनिराकरणमित्यभिप्रायेणाह—**अन्ये त्विति**। **तत्रेति**—तस्मिन् सतीत्यर्थः। परिहिते-इति शेषः। **कर्तव्यम्**—कर्तव्यमिति।

उद्द्योते—पूर्ववदपरिहिते फलं नेत्याशयेनाह—**शरीरेति**। अन्ये त्विति सूचितामरुचिं ध्वनयन्नाह—**भाष्यस्य त्विति**। **तेनेति**-शीतोष्णाभ्यां कारिणीत्यादाविव गौणग्रहणादिति भावः। नन्वेवं गृहस्थलेऽपि बाह्यसम्बद्धस्य परम्परया बहिर्योगत्वापत्तिरिति चेन्न, तथा सति बहिर्योगग्रहणस्य वैयर्थ्यापातात्। न च बहिर्योगस्य गृहेष्वेव प्रसिद्धेरुपसंख्यानग्रहणमावश्यकमिति वाच्यम्, बहिर्योगशब्दे स्वरितत्वप्रतिज्ञाबलेन शाटकस्थलेऽपि तत्त्वाभ्युपगमादित्याशयः।

(अनिष्टापत्तिपरिहाराधिकरणम्)

(२३१ आक्षेपवार्तिकम् ॥ ३ ॥)

## [ ॥ * ॥ अपुरि ॥ * ॥ ]

(भाष्यम्)

**अपुरीति वक्तव्यम्। इह मा भूत्—अन्तरायां पुरि वसति ॥**

(प्रदीपः) **अपुरीति**। गणसूत्र एतत् कर्तव्यम्। **लिङ्गविशिष्ट**परिभाषया ग्रहणप्रसङ्गात्। इह त्वनेन नार्थः, **अत** इति जसः शीविधानादाबन्तात्प्राप्त्यभावात्। पूः कस्मिंश्चिद्देशे प्राकाराभ्यन्तरे क्रियते क्वचित्प्राकाराद्बहिरित्यस्ति पुरो बहिर्योगः ॥ ३५ ॥

(उद्द्योतः) ननु जसि विकल्पविधायकसूत्रस्थवार्तिकोदाहरणं सप्तम्यन्तमयुक्तमत आह—**गणेति**। पूः शब्दस्य विशेष्यत्वे इत्यर्थः। स च स्त्रियामेव तदाह—**इह त्विति** ॥ ३५ ॥

(तत्त्वालोकः) भाष्ये—**इहेति**—येनेत्यादिः। संज्ञेति शेषः। इहपदबोध्यं निर्दिशति—**अन्तरायामिति**। प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां वेत्यर्थः।

प्रदीपे—**एतत्**—'अपुरी'त्येतत्। ननु गणेऽन्तरशब्द एव पठ्यते न त्वन्तराशब्द इति तत्र शाप्रसङ्ग एव नेत्यत आह—**लिङ्गविशिष्टेति**। एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणाद्वेति शेषः। **ग्रहणेति**—अन्तरशब्देनान्तराशब्दस्यापीत्यादिः। **इह तु**—जसि विभाषाविधायकसूत्रे तु। **अनेन**—अपुरीति वचनेन। **इति**—इत्यधिकृत्य। **इति**—इति हेतोः।

उद्द्योते—**पूः शब्दस्य विशेष्यत्वे-इति**—सत्यपि बहिर्योगे इत्यादिः। अन्तरशब्दस्य सर्वनामता नेति शेषः। **इत्यर्थः**—इति 'अपुरी' त्यस्यार्थः। पूःशब्दार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकेतरान्तरशब्दस्य गणसूत्रे ग्रहणमित्याशयः। **स च**—पूःशब्दश्च।

(इष्टानुपपत्तिनिराकरणाधिकरणम्)

(२३२ आक्षेपवार्तिकम् ॥ ४ ॥)

## * वाप्रकरणे तीयस्य ङित्सूपसंख्यानम् *

(भाष्यम्)

**वाप्रकरणे तीयस्य ङित्सूपसंख्यानं कर्तव्यम्। द्वितीयायै द्वितीयस्यै, तृतीयायै तृतीयस्यै। 'विभाषा द्वितीयातृतीयाभ्याम्' इत्येतन्न वक्तव्यं भवति ॥**

(तत्त्वालोकः) भाष्ये—'पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते' इति परिभाषया विशेषाभावाद् विभाषास्थाने वैव प्रयुञ्जान आह-**वाप्रकरणे-इति**। 'द्वेस्तीयः' 'त्रेः सम्प्रसारणञ्च' ति सूत्राभ्यां क्रमेण साधुत्वं भजतोर्द्वितीयतृतीयशब्दयोरुदाहरणान्याह-**द्वितीयेति**। **विभाषेति**-तथाचेत्यादिः।

(आक्षेपभाष्यम्)

**किं पुनरत्र ज्यायः ? ॥**

(तत्त्वालोकः) ननु वार्तिकाभ्युपगमेन कृतं सूत्रप्रत्याख्यानमनुचितमित्यत आह- **किम्पुनरिति**। **अत्र**-सूत्रवार्तिकयोर्मध्ये। एवमग्रेऽपि।

(समाधानभाष्यम्)

**उपसंख्यानमेवाऽत्र ज्यायः। इदमपि सिद्धं भवति-द्वितीयाय द्वितीयस्मै, तृतीयाय तृतीयस्मै ॥ अन्तरं बहिर्योगोपसंख्यानयोः ॥ ३५ ॥**

(तत्त्वालोकः) **एवेन** सूत्रव्यवच्छेदः। **इदमिति**-यतो वार्तिकेन सूत्रासिद्धमित्यादिः। **अपिना** सूत्रसिद्धपरिग्रहः। तथाच सूत्रमदृष्टार्थमेवेति भावः॥

(इति सर्वनामसंज्ञाप्रकरणम्)

—ං—

(अथाव्ययसंज्ञाप्रकरणम्)

(३२ अव्ययसंज्ञासूत्रम् ॥ १।१।६ आ. ९ ॥)

# स्वरादिनिपातमव्ययम् ॥ १।१।३६ ॥

(स्वरादीनां चादिभ्यः पृथक्करणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

**किमर्थं पृथग् ग्रहणं स्वरादीनां क्रियते, न चादिष्वेव पठ्येरन् ? ॥**

(प्रदीपः) **स्वरादिनिपातम०** ॥ ३६ ॥ **किमर्थमिति**। स्वरादिषु किंचित्क्रियाप्रधानं किंचित्साधनप्रधानमिति असत्त्ववचनत्वाच्चादिष्वेव स्वरादीनि पठितव्यानीति मत्वा प्रश्नः॥

(उद्द्योतः) **स्वरादि०** ॥ ३६ ॥ **क्रियाप्रधानमिति**। क्रियायामेव विशेषणमित्यर्थः। यथा—हिरुगादि। एतच्चोत्तरसूत्रे कैयटे स्पष्टम्॥ **किंचिदिति**। यथोच्चैरादि॥

(तत्त्वालोकः) भाष्ये-चादिषु स्वरादीनाम्पाठे निपातत्वादेव तेषामप्यव्ययत्वोपपत्तिरिति प्रकृतसूत्रे स्वरादिग्रहणं न कर्तव्यम्भवतीत्याशयेन पृच्छति-**किमर्थमिति**। निपातेभ्य इति शेषः। **चादिष्वेवेति**-स्वरादीनीति शेषः। प्रदीपे-**इतीति**-इति कारणादित्यर्थः। तेषामिति शेषः। उद्द्योते-नन्वस्य क्रियासामानाधिकरण्येऽपि क्रियावाचित्वाभावात् क्रियाप्रधानत्वं नोपपद्यते-इत्यत आह-**क्रियायामेवेति**। नन्वत्रापि किम्प्रमाणमित्यत आह- **एतच्चेति**।

( समाधानभाष्यम् )

**चादीनां वै असत्त्ववचनानां निपातसंज्ञा, स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां च ॥**

**( प्रदीपः ) स्वरादीनां पुनरिति ।** स्वस्ति वाचयति, स्वः पश्येति क्रियासम्बन्धेऽनेकशक्तिदर्शनात्सत्त्ववाचित्वनिश्चयः । लोहितगङ्गमित्यादीनामव्ययानां सत्त्वधर्मनपुंसकत्वदर्शनाद्व्यक्तमेव सत्त्ववाचित्वम् ॥

**( उद्द्योतः ) अनेकशक्तीति ।** स्वस्तिष्ठ स्वर् आगत इत्यादावित्यर्थः । अनेककारकशक्तियोग एव च सत्त्वमिति भावः ॥ भाष्ये **सत्त्ववचनानां** चेत्यस्याव्ययसंज्ञेष्यत इति शेषः ॥ **लोहितेति । अव्ययीभावश्चे**ति स्वरादिषु पठ्यत इति मते इदम् ॥

**( तत्त्वालोकः )** भाष्ये–चादिषु तेषाम्पाठे चादीनामिव स्वरादीनामपि–असत्त्ववाचिनामेव निपातत्वादव्ययतोपपद्येत, न तु सत्त्ववाचिनामपीति प्रकृतसूत्रे स्वरादिग्रहणं विधेयमेवेत्याशयेन समाधत्ते-**चादीनामिति । वै**-एव । अस्य 'असत्त्ववचनानामि' त्यत्रान्वयः । अत एव 'लोधं नयन्ति पशुमन्यमानाः' इत्यादौ सत्त्ववाचिनः पशुशब्दस्य निपातसंज्ञा भवति, न तु 'पशूंस्तांश्चक्रे' इत्यादौ सत्त्ववाचिन इत्याशयः । **पुनः**–तु । प्रदीपे-**इति**–इत्यादौ । **अनेकशक्तीति**–अनेककारकशक्तियोगेत्यर्थः । स्वरादीनामित्यादिः ।

उद्द्योते—ननु स्वस्ति वाचयतीत्यादौ स्वरादीनां कर्मकारकशक्तियोग एव, न त्वनेककारकशक्तियोग इत्यत आह-**स्वस्तिष्ठेति ।** ननु तावतापि कथन्तेषां सत्त्ववाचित्वमित्यत आह-**अनेकेति । सत्त्वमिति**–अत्र सत्त्वत्वमिति पाठः । निपातसंज्ञेत्यस्यानुषङ्गभ्रमवारणायाह-**इति शेष इति ।** ननु लोहितगङ्गमित्यादीनाम् 'अव्ययीभावश्चे'ति सूत्रविषयत्वेन प्रकृतसूत्राविषयत्वात्प्रकृतेऽनुपयोग इत्यत आह-**अव्ययीति ।**

( निपाताव्ययसंज्ञयोः पृथक्करणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ किमर्थमुभे संज्ञे क्रियेते, न निपातसंज्ञैव स्यात् ॥**

**( प्रदीपः ) न निपातसंज्ञेवेति । 'प्राग्रीश्वरान्निपाताः' 'स्वरादीनि' 'चादयोऽसत्त्वे'** इति सूत्रन्यासः कार्य इत्यर्थः ॥

**( उद्द्योतः )** नन्वसत्त्ववाचित्वाभावाच्चादिषु पाठाभावाच्च कथं निपातत्वमत आह—**प्राग्रीति ।**

**( तत्त्वालोकः )** भाष्ये-**उभे**–निपाताव्ययरूपे । **एवेन**–अव्ययसंज्ञाव्यवच्छेदः ।

प्रदीपे**—इत्यर्थ इति**–तथाच सत्त्ववाचिनामपि स्वरादीनां निपातत्वसिद्धेः प्रकृतसूत्रं न विधेयम्, अव्ययपदघटितानि तु 'अव्ययसर्वनाम्नामि' त्यादीनि निपातपदघटितान्येव पाठ्यानीति भावः ।

उद्द्योते—**नन्विति**–स्वरादीनामिति शेषः । ननु केषाञ्चिदसत्त्ववाचित्वाभावेऽपि केषाञ्चिदसत्त्ववाचित्वमस्त्येवेत्यत आह–**चादिष्विति ।**

( समाधानभाष्यम् )

**नैवं शक्यम् । 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञोक्ता, सा स्वरादीनामप्येकाचां प्रसज्येत [—क इव केव ] ॥**

**( प्रदीपः ) स्वरादीनामिति । किमोऽद्भ्यन्तसो दक्षिणादाजित्यात् ।** केवलस्वरमात्र इत एकाचः सन्तीति भावः ॥

**( उद्द्योतः ) किमोऽदिति । तद्धितश्चेति** सूत्रमपि तत्संज्ञाविधायकमेव । अन्यथोक्तसूत्रादेव केवलानामपि तेषां संज्ञा स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये— **शक्यमिति**–वक्तुमित्यादिः । यतः तथा सति, चेति शेषः ।

प्रदीपे—**आजिति**—च तद्धितावेकाचौ स्त इति शेषः ।

उद्द्योते—**अपिना** 'कृन्मेजन्तः' इत्यादिसूत्रसङ्ग्रहः । तदपि सर्वं स्वरादिषु पठ्यते इति मतेनेदमतीत्याशयः ॥ **तत्संज्ञेति**—अव्ययसंज्ञेत्यर्थः । **अपिना** सूत्रमध्ये पुनः पाठात्तदन्तसमुच्चयः । **तेषाम्**—तद्धितकृदादीनाम् । **संज्ञा**—अव्ययसंज्ञा ।

( आक्षेपभाष्यम् )

**एवं तर्ह्यव्ययसंज्ञैवास्तु ॥**

**( उद्द्योतः )** भाष्ये—**एवं तर्ह्यव्ययेति । 'प्राग्रीश्वरादव्ययम्' 'स्वरादीनि' 'चादयोऽसत्त्वे'** इति पाठ्यमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**एवमिति**—यदीत्यादिः । **एवेन** निपातसंज्ञाव्यवच्छेदः ।

( समाधानभाष्यम् )

**तच्चाशक्यम् । वक्ष्यत्येतत्—अव्यये नञ्कुनिपातानाम् इति । तद्गरीयसा न्यासेन परिगणनं कर्तव्यं स्यात् । तस्मात् पृथग् ग्रहणं कर्तव्यम् । उभे च संज्ञे कर्तव्ये ॥ स्वरादि निपात० ॥ ३६ ॥**

**( प्रदीपः ) तच्चाशक्यमिति ।** अव्ययसंज्ञायामेव सत्याम् **'अव्ययमेकाजनाङि'**ति सूत्रं कर्तव्यम् । ततश्चात्प्रभृतीनामपि प्रगृह्यसंज्ञाप्रसङ्गः प्राप्नोति । अथ **'चादय एकाजनाङि'**ति क्रियते तदा चादीनामसत्त्ववचनत्वविशेषणमलभ्यम् ॥ ३६ ॥

**( उद्द्योतः ) तदा चादीनामिति ।** यदि तु **'चादयः'। 'असत्त्वे'** इति योगविभागेनासत्त्वे इति पाठविशेषणं क्रियते तदा नायं दोषः । तस्माद्भाष्योक्त एव दोषः । न च तत्र प्रादीनामिति वाच्यम् । ऊर्यादीनामसंग्रहापत्तेः । एवं **निपाता आद्युदात्ता** इत्यादावपि दोषो बोध्यः ॥ ३६ ॥

**( तत्त्वालोकः )** भाष्ये– **तच्च**—तदपि । **अशक्यमिति**—वक्तुमित्यादिः । यतः तथा सति यदिति शेषः । **अव्यये–इति**—इदं 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति सूत्रेण प्राप्तस्य पूर्वपदप्रकृतिस्वरस्य स्नात्वाकालकादौ वारणाय परिगणनम् । **पृथगिति**—निपातेभ्य इत्यादिः । स्वरादीनामिति शेषः ।

प्रदीपे—ननु 'अव्यये नञ्कुचादीनामि'ति पाठे न भाष्योक्तगौरवमित्यत आह—**अव्ययेति । एवेन** निपातसंज्ञाव्यवच्छेदः । इममुद्धरति—**अथेति । अलभ्यमिति**—ततश्च-अस्यापत्यमिस्तस्य सम्बोधने 'ए अवे'त्यत्र प्रगृह्यत्वापत्तिरिति भावः ।

उद्द्योते—इदं खण्डयति—**यदि त्विति ।** आद्ययोगस्य—चादयो निपातसंज्ञाः स्युरित्यर्थः । तथा द्वितीययोगस्य—इह शास्त्रे चादयोऽसत्त्वे ज्ञेया इत्यर्थ इत्याशयेनाह—**योगविभागेनेति । पाठेति**—चादीत्यादिः । सत्त्ववाचिनां चादीनां चादिपाठात्पर्युदासेन 'ए अवे'त्यत्र न प्रगृह्यत्वापत्तिरित्याशयेनाह**—नायमिति । तत्र—**

'अव्यये नञ्कुनिपातानामि'ति वार्त्तिके निपातपदस्थाने । **ऊर्यादीनामिति**—तथा सतीत्यादिः । **एवम्**—भाष्योक्तदोषवत् । **दोषः**—विषयविभागालाभरूपो दोषः ।

( ३३ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ० १० ॥ )

# तद्धितश्चासर्वविभक्तिः ॥ १ । १ । ३७ ॥

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( २३३ आक्षेपवार्तिकप्रथमखण्डम् ॥ )

## ॥ * ॥ असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**असर्वविभक्तावविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् । विना नाना ॥**

**( प्रदीपः ) तद्धितश्चासर्वविभक्तिः ॥ ३७ ॥ इह संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिप्रतिषेधाद्** यद्यपि केवलस्य प्रत्ययस्य ग्रहणं, तथापि **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वाचनिकस्तदन्तविधिरस्तीति तदन्तस्याव्ययसंज्ञा विज्ञायते ॥ तत्र वृत्तिकारेण व्याख्यातम्—असर्वा विभक्तिर्यस्य सोऽसर्वविभक्तिरिति ॥ तत्र यदायमर्थः—यस्य तद्धितस्याऽसर्वा विभक्तिः कार्या=यस्मान्न सर्वा विभक्तिरुत्पद्यते इति तदा न दोषः । यदा तु यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनासर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिः, यथा **सर्वैकान्ये**ति दाप्रत्ययस्य सप्तम्येवोत्पत्तिनिमित्तमिति । अस्मिन् सूत्रार्थे विनानानेत्यस्याव्ययसंज्ञा न सिद्ध्यति। न हि **विनञ्भ्यामि**त्यत्र प्रतिनियता काचिद्विभक्तिराश्रितेत्याह—**असर्वविभक्ताविति ।** अतिव्याप्तिश्चास्मिन् सूत्रार्थे, दाक्षिरितीञः षष्ठ्येव निमित्तमिति संज्ञाप्रसङ्गात् ॥ **अविभक्तिनिमित्तस्येति ।** अश्रूयमाणविभक्तिकमव्ययमविभक्तीत्युच्यते, तन्निमित्तस्य यस्येष्यते न च प्राप्नोति तस्योपसंख्यानं कर्तव्यं, न तु सामान्येनाविभक्तिनिमित्तस्य संज्ञा विधेया, विशालविशङ्कटादीनामपि प्रसङ्गात् ॥

**( उद्द्योतः ) तद्धितश्चा** ॥ ३७ ॥ **यद्यपि केवलस्येति ।** एवंच केवलतद्धितात्कस्या अपि विभक्तेरभावेना**सर्वविभक्ति**रिति विशेषणमव्यावर्तकमिति भावः ॥ **वाचनिक इति ।** शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥ किंच केवलानां संज्ञायां प्रयोजनाभावः ॥ प्रयोजकाभावश्च, अन्वर्थसंज्ञालभ्योऽर्थो हि तत्प्रयोजक इति बोध्यम् । वार्तिकोत्थानाय सूत्रार्थं दर्शयति—**तत्र वृत्तिकारेणेति । सर्वाविभक्तिरिति ।** सर्वावयविकेत्यर्थः ॥ **प्रतिनियतेति ।** एवंच विशेषतः कस्या अपि निमित्तत्वेनानाश्रयणात्सर्वविभक्तिनिमित्तकोऽयमिति भावः ॥ ननु सुवन्तात्तद्धितोत्पत्तेरविभक्तिनिमित्तस्तद्धितोऽप्रसिद्धोऽत आह—**अश्रूयमाणेति ।** तन्निमित्तस्येति बहुव्रीहिः ॥

**( तत्त्वालोकः )** प्रदीपे—**इह**—प्रकृतसूत्रे । **तत्र**—तस्मिन्सति । **तत्र—वृत्तिकारोक्तौ ।** तस्यापर्थमाह—**यस्मादिति । यदा त्विति**—अयमर्थ इत्यनुषज्यते । **अस्मिन्निति**—तदेत्यादिः । आद्य—कार्यमन्यपदार्थस्तदन्तविशेषणता च । द्वितीयार्थे च—कारणमन्यपदार्थस्तद्धितविशेषणता चेति बोध्यम् । **हि**—यतः । **आश्रितेति**—निमित्तत्वेनेत्यादिः । **इत्याह**—इति हेतोराह । भाष्यकारोयन्यूनतां निराकरोति—**अतिव्याप्तिश्चेति । संज्ञेति**—अव्ययसंज्ञेत्यर्थः । एवमग्रेऽपि । **अश्रूयमाणेति**—श्रूयमाणविभक्तित्वात्यन्ताभाववदित्यर्थः। **अव्ययम्**—ञ्यादिः । **यस्य**—नादेः । **न च**—नहि ।

उद्द्योते—**एवञ्च**—केवलप्रत्ययग्रहणे च । **शब्दरूपमिति** असर्वविभक्तिरिति विशेषणसत्त्वादेवेत्याशयः । ननु तद् विशेषणं मास्तु, ततश्च लाघवमेव; वाचनिकतदन्तविधिश्चान्यत्र सफल इत्यत आह—**किञ्चेति । केवलानामिति**—तद्धितानामिति शेषः । **अन्वर्थेति**—न व्येति ( विकारमाप्नोति ) इत्यव्ययमितीत्यादिः । **अर्थः**—तदन्तविधिरूपोऽर्थः । **हि**—यतः । **तदिति**—संज्ञेत्यर्थः । विभक्तिसंज्ञायाः समुदायनिष्ठत्वेन तत्र सर्वत्वस्य बाधादाह—**सर्वावयवेति ।** नन्वेतावताऽपि कथं वार्तिकोत्थितिरित्यत आह—**एवञ्चेति ।** प्रतिनियतविभक्त्यनाश्रयणे चेत्यर्थः । **अपीति**—विभक्तेरिति शेषः । संख्याकारकादियोगाभावेऽपि 'अव्ययादाप्सुपः' इति ज्ञापकेन ञ्यादेः सर्वविभक्तिसम्भवादाह—**सर्वविभक्तीति । अयम्**—नादिः ।

( आक्षेपभाष्यम् )

**किं पुनः कारणं न सिध्यति ? ।**

**( प्रदीपः ) किं पुनरिति । एकवचनमुत्सर्गत** इति वचनात् क्रमव्यतिक्रमे कारणाभावाद् विनानानेत्यत्राप्यसर्वा विभक्तिरुत्पत्तौ निमित्तमिति प्रश्नः ॥

**( उद्द्योतः )** ननूत्सर्गत एकवचनमपि सर्वासां स्यादिति बहुवचनान्तविग्रहे सर्वविभक्तेर्निमित्तत्वमव्याहतमत आह—**क्रमव्यतिक्रम इति ।** प्रथमातिक्रमे कारणाभावेन प्रथमाया एवैकवचनमिति न दोष इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**किं पुनः कारणमिति**—कस्मात् पुनः कारणादित्यर्थः । ञ्यादिनिमित्तकनादेरनेनाव्ययसंज्ञेति शेषः ।

प्रदीपे—**उत्पत्ताविति**—ञ्यादिनिमित्तकनादेरित्यादिः । **इति प्रश्नः**—इति हेतोः प्रश्नः ।

उद्द्योते—**सर्वासामिति**—प्रथमादिविभक्तीनामिति शेषः । एवमप्येकवचनान्तविग्रहे सर्ववचनानां ग्रहणाभावेनासर्वविभक्तित्वानपायादाह—**बहुवचनान्तेति । सर्वेति**—प्रथमादीत्यादिः । **निमित्तत्वमिति**—ञ्यादिनिमित्तकनादिनिमित्तत्वमित्यर्थः । **एकवचनमिति**—तत्र ञ्यादिनिमित्तकनादेरुत्पत्तौ निमित्तमिति शेषः । **न दोषः**—न तस्यानेनाव्ययसंज्ञाया अनुपपत्तिरूपो दोषः ।

( २३३ ( २ ) आक्षेपहेतुवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

## ॥ * ॥ सर्वविभक्तिर्ह्यविशेषात् ॥ * ॥

( भाष्यम् )

**सर्वविभक्तिर्ह्येष भवति ॥**

**किं कारणम् ? ॥**

**अविशेषेण विहितत्वात् ॥**

**( प्रदीपः ) सर्वविभक्तिरिति ।** अविशेषेणोत्पद्यन्ते उत्पन्नानां नियमः क्रियत इत्यव्ययात् सर्वा विभक्तय उत्पद्यन्त इत्यर्थः ॥ **अविशेषादिति ।** विशेषस्यानाश्रयणादित्यर्थः ॥

**( उद्द्योतः ) अविशेषेणेति । इत्येकयो**रित्याद्येकवाक्यता**मन**पेक्ष्येत्यर्थः ॥ **उत्पन्नानां नियम इति ।** उत्पन्नानां शास्त्रकल्पितक्रमेन लोपेनेव निवृत्तिः क्रियत इत्यर्थः ॥ इदमप्यर्थनियमे, सजाती-

यापेक्षप्रत्ययनियमे च बोध्यम् ॥ **विशेषस्येति ॥ द्व्येकयो**रित्याद्येकवाक्यतारूपस्येत्यर्थः । **ज्ञापकाद्विभक्ति**रिति पक्षे इयमेवेति विशेषस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**हि—**यतः । **एषः—**ङ्यादिनिमित्तकनादिः । **किं कारणम्—**कस्मात्कारणात् । **अविशेषेण—**'द्व्येकयो'रि'त्याद्येकवाक्यतारूपविशेषानाश्रयणेन ।

प्रदीपे—**उत्पद्यन्ते—इति—**अव्ययात्प्रथमादिसर्वा विभक्तय इत्यादिः । **उत्पन्नानामिति—**च तासामिति शेषः । एवमुद्द्योतेऽपि : **सर्वा इति—**प्रथमादिरूपा इत्यादिः ।

उद्द्योते—**एकवाक्यताम्—**एकवाक्यतारूपविशेषम् । अन्यथा नियमेऽसम्भवादाह—**इदमपीति । अर्थनियमे—**'अभिहिते प्रथमैव' 'एकत्वे एकवचनमेव' 'कर्मणि द्वितीयैवे'त्याद्यर्थनियमे । **सजातीयेति—**'द्वितीया कर्मण्येवे'त्यादीत्यादिः । **ज्ञापकादिति—**'अव्ययादाप्सुपः' इतीत्यादिः । **इयमेवेति—**या काचिद्विभक्तिरित्यर्थः ।

**( २३४ आक्षेपवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ त्रलादीनां चोपसंख्यानम् ॥ * ॥

**( भाष्यम् )**

**त्रलादीनां चोपसंख्यानं कर्तव्यम् । तत्र यत्र ततः यतः ॥**

**( प्रदीपः ) त्रलादीनां चेति ।** आदिशब्दस्य प्रकारवाचित्वात्तसिलपि गृह्यते ॥

**( उद्द्योतः )** ननु त्रलादीनामित्युक्त्वा त्रलः प्राक् पठितस्य तसिलः कथमुदाहरणदानमत आह—**आदिशब्दस्येति ॥**

**( तत्त्वालोकः )** भाष्ये—यस्य तद्धितस्योत्पत्तौ निमित्तत्वेनासर्वा विभक्तिराश्रिता सोऽसर्वविभक्तिरित्यर्थे न केवलमविभक्तिनिमित्तस्योपसंख्यानं कर्तव्यम् । किन्तु त्रलादीनामप्युत्पत्तौ सर्वासामेव विभक्तीनां निमित्तत्वेनाश्रयणात्तेषामप्युपसंख्यानं कर्तव्यमित्याशयेनाह—**त्रलादीनाञ्चेति ।**

**( आक्षेपबाधकभाष्यम् )**

**ननु च विशेषेणैते विधीयन्ते 'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्' इति ।**

**( तत्त्वालोकः )** त्रलादीनामुत्पत्तौ प्रतिनियतानामेव विभक्तीनां निमित्तत्वेनाश्रयणम्, न तु सर्वासां तासामिति न तेषामुपसंख्यानं कर्तव्यमित्यभिप्रायेणाह—**ननु चेति । विशेषेण—**विभक्तिविशेषाश्रयणेन । **एते—**तसिलादयः ।

**( आक्षेपसाधकभाष्यम् )**

**वक्ष्यत्येतद्—'इतराभ्योऽपि दृश्यन्ते' इति ॥**

**( प्रदीपः ) वक्ष्यत्येतदिति ।** भवदादिप्रयोग एव प्राप्तिश्चोद्यत इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—न त्रलादीनामुत्पत्तौ प्रतिनियतानामेव विभक्तीनां निमित्तत्वेनाश्रयणम्, किन्तु फलतः सर्वासामेव तासामिति तेषामुपसंख्यानं कर्तव्यमेवेत्याशयेनाह—**वक्ष्यत्येतदिति । इतराभ्योऽपीति—**पञ्चमीसप्तमीतरविभक्त्यन्तेभ्योऽपीत्यर्थः । तसिलादय इति शेषः ।

प्रदीपे—**भवदादीति—**दृशिग्रहणादित्यादिः । **प्राप्तिरिति—**पञ्चमीसप्तमीतरविभक्त्यन्तेभ्यस्तसिलादीनामित्यादिः ।

**( न्यासान्तरनिराकरणाधिकरणम् )**

**( न्यासान्तरभाष्यम् )**

**यदि पुनरविभक्तिश्शब्दोऽव्ययसंज्ञो भवतीत्युच्यते ॥**

**( प्रदीपः ) यदि पुनरिति ।** प्रयोगे योऽश्रूयमाणविभक्तिः सोऽव्ययमित्यर्थः । न च दधिमध्वित्यत्रातिप्रसङ्गो, दध्नीत्यादौ विभक्तिश्रवणात् ॥

**( उद्द्योतः )** ननु विभक्त्यभावेऽपि तदव्ययत्वाय विभक्त्युत्पत्तिरावश्यिकेत्यत आह—**प्रयोगे इति । दध्नीत्यादाविति ।** प्रयोगमात्रे विभक्त्यभावो विवक्षित इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—उक्तोपसंख्यानद्वयानावश्यकताम्बकम् अग्रिमवार्तिकावतरणभूतं न्यासान्तरमाह—**यदि पुनरिति ।** अत्र न्यासे—तद्धितपदस्थाने शब्दपदप्रक्षेपेण सर्वपदत्यागेन च सकलाव्ययसंग्रहाल्लाघवमिति सूचयन् न्यासान्तरस्वरूपं निर्दिशति—**अविभक्तिश्शब्दइति ।** श्रूयमाणविभक्तिप्रकृतित्वसमानाधिकरणानुपूर्वीसामान्याभाववान् यः शब्दः सोऽव्ययसंज्ञको भवतीत्यर्थः । **उच्यते इति—**तदोक्तोपसंख्यानद्वयं न कर्तव्यम्, एतेनैव सकलेष्टसिद्धेरिति शेषः ।

प्रदीपे—**प्रयोगे—**सकलप्रयोगे । **न चेति—**एवमिति शेषः । **अतिप्रसंग इति—**अव्ययत्वस्येत्यादिः ।

उद्द्योते—**आवश्यिकेति—**इति-एवंन्यासे तत्राव्ययत्वानुपपत्तिरिति शेषः । **प्रयोगमात्र इति—**यस्याव्ययत्वं विवक्षितस्तस्येत्यादिः । **विभक्त्यभावः—**विभक्तिश्रवणाभावः ।

**( २३५ आक्षेपवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ अविभक्तावितरेतराऽऽश्रयत्वादप्रसिद्धिः ॥ * ॥

**( भाष्यम् )**

**अविभक्तावितरेतराश्रयत्वादप्रसिद्धिः संज्ञायाः ।**

**का इतरेतराश्रयता ? ।**

**सत्यविभक्तित्वे संज्ञया भवितव्यं, संज्ञया चाऽविभक्तित्वं भाव्यते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

**( प्रदीपः ) अविभक्ताविति ।** अव्ययत्वादविभक्तित्वमविभक्तित्वादव्ययत्वमिति दोषः ॥

**( उद्द्योतः ) अव्ययत्वादिति ।** अविभक्तिकत्वस्य स्वाभाविकत्वे**ऽव्ययादाप्सुप** इत्यस्य वैयर्थ्यप्रसङ्गादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—उक्तं न्यासान्तरं दूषयति—**अविभक्ताविति ।** अविभक्तित्वाव्ययत्वयोरिति भावः । **केति—**कस्मादित्यर्थः । तयोरिति शेषः । **तत्—**तस्मात् । **एतत्—**अविभक्तित्वाव्ययत्वद्वयम् । तत्रेष्टापत्तिं निराकरोति—**इतरेतरेति ।**

प्रदीपे—**इति दोषः—**इति हेतोरन्योऽन्याश्रयता ।

**( २३६ न्यासान्तरदूषकवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ अलिङ्गमसंख्यमिति वा ॥ * ॥

**अथवाऽलिङ्गमसंख्यमव्ययसंज्ञं भवतीति वक्तव्यम् ॥ एवमपीतरेतराश्रयमेव भवति ॥**

**का इतरेतराश्रयता ?।**

**सत्यलिङ्गासंख्यत्वे संज्ञया भवितव्यम् , संज्ञया चालिङ्गासंख्यत्वं भाव्यते, तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥**

**( प्रदीपः ) अलिङ्गमसङ्ख्यमिति । अविभक्तिरव्ययमि**त्यस्य लक्षणस्य दूषितत्वाद् अत्रापि तदेव दूषणमिति प्रदर्शनार्थो वाशब्दः। अलिङ्गासङ्ख्यत्वस्य लौकिकत्वान्नेतरेतराश्रयत्वमिति पूर्वः पक्षः ॥ **एवमपीति ।** अर्थमपि कश्चित् क्वचित् शास्त्रादेव प्रतिपद्यत इति भावः॥

**( उद्द्योतः )** ननु पूर्वलक्षणस्य दूषितत्वाद्वाशब्दोऽसङ्गतोऽत आह—**अविभक्तिरिति ॥ वाशब्द इति ।** प्रयुक्त इति शेषः ॥ एवंचाप्यर्थो वाशब्द इत्यर्थः ॥ अलिङ्गमित्यपि यदुच्यते एवमपि अन्योन्याश्रय इत्यर्थः ॥ **शास्त्रादेवेति ।** तद्द्योतकविभक्तिलुक्शास्त्रादेवेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—एवम्—उक्तोपसंख्यानद्वयानावश्यकतासूचकम् अन्यदपि न्यासान्तरमुपस्थाप्य दूषयति-**अलिङ्गमिति।** सकलाव्ययसङ्ग्रहादत्रापि लाघवमित्याशयः। यथा—अविभक्तित्वाव्ययत्वयोरितरेतराश्रयत्वात्संज्ञाया अप्रसिद्धिस्तथा—अलिङ्गासंख्यत्वाव्ययत्वयोरपीतरेतराश्रयत्वात्तस्या अप्रसिद्धिरित्याशयेनाह—**एवमपीति।** अलिङ्गासंख्यत्वाव्ययत्वद्वयमिति शेषः। अवशिष्टस्य व्याख्या पूर्वत्रैवात्रापि बोध्या। अलिङ्गासंख्यत्वमित्येकम् अव्ययस्य लक्षणम्, न तु—अलिङ्गत्वमिति—असंख्यत्वमिति च द्वयम्। तयोराद्यस्य क्रियायामप्रतिसक्तत्वात्, अन्त्यस्य च द्रव्योपसर्जनेतिव्याप्तत्वात्। व्यस्तनिर्देशस्तु तयोः प्रत्येकमभावो विवक्षित इति बोधनायेति सूचयन्नाह—**अलिङ्गासंख्यत्वे इति ।**

प्रदीपे—**अत्रापि—**अलिङ्गासंख्यमव्ययमित्यस्मिन् लक्षणेऽपि। **तदेव—**पूर्वलक्षणदूषकमेव। **वाशब्द इति—**विकल्पबोधक इत्यादिः। अस्य वक्तव्यत्वे बीजमाह—**अलिङ्गेति ।** पूर्वत्राविभक्तित्वाव्ययत्वयोः शास्त्रीयत्वात्तयोरितरेतराश्रयत्वेऽप्यत्रेत्यादिः। **लौकिकत्वादिति—**अव्ययत्वस्य च शास्त्रीयत्वात्तयोरिति शेषः। **एवेन—**लोकव्यवच्छेदः। तथाचालिङ्गासंख्यत्वमपि शास्त्रीयमेवेत्याशयः।

उद्द्योते—**प्रयुक्त इति—**वार्त्तिककृता तत्रेत्यादिः। 'वा स्यादि' ति कोशानुरोधेनाह—**एवञ्चेति । इत्यर्थ इति—**इति भाव इत्यर्थः। कैयटस्येति शेषः। **अलिङ्गमिति—**अलिङ्गासंख्यमित्यर्थः। तथाचेत्यादिः। **तद्द्योतकेति—**लिङ्गादिद्योतकेत्यर्थः।

**( दूषणपरिहारभाष्यम् )**

**नेदं वाचनिकम्—अलिङ्गता असंख्यता च ।**

**किं तर्हि ?।**

**स्वाभाविकमेतत् । तद्यथा समानमीहमानानां चाधीयानानां च केचिदर्थैर्युज्यन्ते अपरे न । तत्र किमस्माभिः कर्तुं शक्यम् । स्वाभाविकमेतत् ॥**

**( तत्त्वालोकः )** प्रातिपदिकत्वे सत्त्ववाचित्वे च तुल्येऽपि घटाद्यर्थस्य लिङ्गादियोगो न च स्वराद्यर्थस्येति स्वभावसिद्धोऽर्थः। 'अव्ययादि'ति वचनन्तु प्रत्ययलक्षणादिसिद्ध्यर्थं स्वभावसिद्धार्थस्यैवानुवादकमित्याशयेनाह—**स्वाभाविकमिति । समानमिति—**अस्य—उभयत्र क्रियायामन्वयः। **स्वाभाविकमिति—**यत इत्यादिः। एवञ्चालिङ्गासंख्यत्वं लौकिकमेवेति तयोर्नान्योन्याश्रयत्वमित्याशयः।

**( आक्षेपभाष्यम् )**

**तर्हि वक्तव्यम्—अलिङ्गमसंख्यमिति ॥**

**( तत्त्वालोकः ) तर्हीति—**( यदुक्तरीत्या तयोर्नेतरेतराश्रयत्वम् ) तर्हि वक्तव्यम् तदित्यन्वयः।

**( समाधानभाष्यम् )**

**न वक्तव्यम् ।**

**( २३७ समाधानहेतुवार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ सिद्धं तु पाठात् ॥ * ॥

**( भाष्यम् )**

**पाठाद्वा सिद्धमेतत् ॥**

**कथं पाठः कर्तव्यः ? ॥**

**तसिलादयः प्राक् पाशपः । शस्प्रभृतयः प्राक् समासान्तेभ्यः । मान्तः । तसिवती । कृत्वोऽर्थः । नानाञाविति ॥**

**( प्रदीपः ) सिद्धं त्विति ।** वार्तिककारस्येतरेतराश्रयदोषः स्थित एवेति तुशब्दो विशेषप्रदर्शनार्थः। भाष्यकारेण त्वितरेतराश्रयदोषः परिहृत इति वाशब्दार्थस्तुशब्दो व्याख्यातः ॥ य एव **प्रकारवचने थाल्** स एव **प्रलादिभ्यो** विधीयते इति नाव्याप्तिः॥ **मान्त इति ।** अम् आम् ॥ **तसिः—'प्रतियोगे पञ्चम्यास्तसिः' 'तेनैकदिक् तसिश्चेति' ॥ कृत्वोऽर्थः—**कृत्वसुच्, सुच्, धा॥

**( उद्द्योतः ) वाशब्दार्थ इति ।** वाशब्दस्यार्थ इवार्थो यस्येति बहुव्रीहिः॥ अयं च पाठः स्वरादिषु कार्य इति बोध्यम् ॥ स च पचतिकल्पादिव्यावृत्तये **तद्धितश्चेति** सूत्रारम्भेऽप्यावश्यक इति भावः॥ **प्रत्नेत्यादि** थाल् न परिगणितमध्यवर्तीत्यत आह—**स एवेति । प्रकारवचन** इत्यत्र प्रकारः सादृश्यं विशेषश्च। तत्र शब्दशक्तिमाहात्म्यात् प्रत्नादिभ्य उत्पन्नेन सादृश्यमुच्यते, किमादिभ्यस्थाला तु विशेषः, एवं च **प्रत्नपूर्वेति** सूत्रं व्यर्थमेव। लोकेऽप्रयोगस्त्वनभिधानादिति भावः॥ **अमु च छन्दसीत्यम्** ॥ **किमेत्तिङिव्याम्** ॥ **प्रतियोगे** इति तसिः शस्प्रभृतिष्वस्तीति तद्ग्रहणं चिन्त्यम् ॥ दृष्टान्तार्थमित्यन्ये ॥ भाष्ये **वतिस्तेनतुल्यमि**ति विहितः। न **तूपसर्गाच्छन्दसी**ति विहितः, उद्वतो निवत इत्यादौ तस्य लिङ्गसंख्याद्यन्वयदर्शनादित्याहुः॥

**( तत्त्वालोकः )** भाष्ये—नन्वेवं कथं व्यादिनिमित्तकनादीनामव्ययत्वं सेत्स्यतीत्यत आह—**सिद्धमिति । एतत्—**व्यादिनिमित्तकनाद्यव्ययत्वम्।

प्रदीपे—**वार्त्तिककारस्य—**वार्त्तिककारैकदेशिनः। अस्य **'मते'** इति शेषः। **इतरेतरेति—**अलिङ्गासंख्यत्वाव्ययत्वयोरित्यादिः। एवमग्रेऽपि। **विशेषेति**—'अलिङ्गमसंख्यमि'ति न्यासव्यावृत्तिरूपविशेषेत्यर्थः। **वाशब्दार्थ इति—**'अलिङ्गमसंख्यमि'ति न्यासेनापि व्यादिनिमित्तकनादीनामव्ययत्वसिद्धेरित्यादिः। तथा च—वार्त्तिककारैकदेशिनो मते पाठेनैवेष्टसिद्धेः, भाष्यकारस्य च मते-'अलिङ्गमि'त्यादि न्यासेन पाठेन वेष्टसिद्धेः, 'तद्धितश्चे'ति सूत्रमदृष्टार्थमेवेत्याशयः। कृत्वोऽर्थ इत्यत्रार्थग्रहणस्य फलमाह—**सुजिति । धा—**'विभाषा बहोर्धा' इति विहितो धा।

उद्द्योते—अत्र पाठभ्रमनिराकरणायाह—**अयञ्चेति । पाठे**

विनिगमनां दर्शयति—**स चेति** । पाठश्चेत्यर्थः । एवञ्च-न पाठेऽव्याप्त्यतिव्याप्तिदोषाविति भावः । **प्रत्नेत्येति**—नस्त्वादिः । ननु सूत्रभेदे कथमिदमित्यत आह—**प्रकारेति । तत्र**—तयोर्मध्ये । **उत्पन्नेनेति**—धालेति शेषः । **किमादिभ्य इति**—उत्पन्नेनेत्यनुषज्यते । नन्वेवं लोकेऽपि प्रत्नथेत्यादीनामप्रयोगापत्तिरित्यत आह—**लोके—इति** । तेषामिति शेषः । नन्वेवं कैयटस्य तदङ्गत्वानपत्तिरित्यत आह—**दृष्टान्तेति** । यथाऽयं शस्प्रभृतिष्वन्तर्भूतस्तथाऽन्योऽपि तदनन्तर्भूतोऽस्तीत्यर्थः । 'तसिवती'ति भाष्यन्तु 'तेनैकदिक् तसिश्चे'त्याशयकमेवेति भावः । कैयटीयन्यूनतां निराकरोति—**भाष्ये वतिरिति । विहित इति**—स्वेति शेषः । अत एवाह—**न स्विति । तस्य**—तदर्थस्य । **आदिना** कर्मकर्तृत्वपरिग्रहः । **आहुरिति**—सिद्धान्तिन इति शेषः ।

( प्रथमन्यासाङ्गीकरणभाष्यम् )

**अथवा पुनरस्तु—अविभक्तिश्शब्दोऽव्ययसंज्ञो भवतीत्येव ॥**

( प्रदीपः ) **अथवेति** । वृद्धव्यवहारादेव शब्दार्थसम्बन्धावगमादेकत्वादिव्यवहारवदलिङ्गासङ्ख्यत्वमप्यव्ययार्थस्य प्रसिद्धमित्यर्थः ॥

( उद्द्योतः ) **एकत्वादिव्यवहारवदिति** । पटादिपदानामिति शेषः ॥ **अलिङ्गासङ्ख्यत्वमपीति** । तथा च संख्याभावादेव विभक्त्यनुत्पत्तिरिति **अविभक्तिरिति** न्यासोऽप्यदुष्ट इति भावः ॥ **अव्ययादाप्सुप** इति सूत्रं तु न्यायसिद्धाया अनुत्पत्तेरेवान्वाख्यापकं प्रत्ययलक्षणप्रवृत्तिद्वारा पदत्वादिसंपादनार्थमिति तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—'अलिङ्गमसंख्यमि'ति न्यासस्येव 'अविभक्तिश्शब्दः' इति न्यासस्यापि निर्दुष्टत्वं सम्भवतीत्याशयेनाह—**अथवेति** । प्रदीपे—**अपिना**—अविभक्तित्वस्य परिग्रहः ।

उद्द्योते—प्रकृतासम्बद्धत्वादाह—**पटादीति** । ननु प्रकृतोपयोगिनि 'अविभक्तित्वमपी'त्यस्मिन् वक्तव्ये 'अलिङ्गासंख्यत्वमपी'त्यस्योक्तिर्न युक्ता, प्रकृतानुपयोगादित्यत आह—**तथा चेति** । अलिङ्गासंख्यत्वस्यापि प्रसिद्धत्वे चेत्यर्थः । **अपिना** 'अलिङ्गमसंख्यमि'ति न्यासस्य समुच्चयः । तथा च कैयटनागेशाभ्यामुभयोरपि न्यासयोरदुष्टता सूचितेति बोध्यम् । नन्वेवम् 'अव्ययादि'ति सूत्रं व्यर्थमित्यत आह—**अव्ययादिति । अनुत्पत्तेः**—विभक्त्यनुत्पत्तेः ।

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—अविभक्तावितरेतराश्रयत्वादप्रसिद्धिरिति ॥**

( तत्त्वालोकः ) 'अविभक्तिश्शब्दः' इति न्यासे-उक्तं दोषं स्मारयति—**ननु चेति** । एतेन 'अलिङ्गमि'त्यादि—न्यासेऽप्युक्तो दोषः स्मारित इति बोध्यम् ।

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । इदं तावदयं प्रष्टव्यः—'यद्यपि तावद्वैयाकरणा विभक्तिलोपमारभमाणा अविभक्तिकाञ्छब्दान्प्रयुञ्जते । ये त्वेते वैयाकरणेभ्योऽन्ये मनुष्याः कथं तेऽविभक्तिकाञ्छब्दान्प्रयुञ्जते' इति ? । अभिज्ञाश्च पुनर्लौकिका एकत्वादीनामर्थानाम् ॥**

**अतश्चाभिज्ञाः । अन्येन हि वस्त्रेनैकं गां क्रीणन्ति, अन्येन द्वौ, अन्येन त्रीन् । अभिज्ञाश्च न च प्रयुञ्जते । तदेतदेवं संदृश्यताम्—अर्थरूपमेवैतदेवंजातीयकं चेनात्र विभक्तिर्न भवतीति ॥**

( उद्द्योतः ) नन्ववैयाकरणैः संख्याया अज्ञानादेव तद्वाचकविभक्तिर्न प्रयुज्यत इत्यत आह—भाष्ये—**अभिज्ञाश्चेति** । घट इत्यादौ तैरपि एकवचनादिप्रयोगकरणादिति भावः ॥ युक्त्यन्तरमप्याह—**अतश्चाभिज्ञा इति ॥ वस्नो** मूल्यम् ॥

( तत्त्वालोकः ) भाष्ये—**नैष दोष इति**—न 'अविभक्तिरि'ति न्यासे 'अलिङ्गमसंख्यमि'ति न्यासे चान्योन्याश्रयो दोष इत्यर्थः । यत इति शेषः । **तावत्**—प्रथमम् । एवमग्रेऽपि । **अयम्**—'तद्धितश्चे'ति सूत्रवादी । इदमग्रत्रोध्यं निर्दिशति—**यद्यपीति** । प्रसिद्धतामुक्त्वाह—**एते इति** । नञादिव्यवच्छेदायाह—**मनुष्या इति । पुनरिति** वाक्यालङ्कारे । **अतश्चाभिज्ञा इति**—इतोऽपि वक्ष्यमाणाद्धेतोरेकत्वादीनाम् अभिज्ञा इत्यर्थः । चकारस्याप्यर्थकत्वात् । परस्परसाधनापेक्षया विभिन्नक्रयविषयतया च वस्तस्यैवान्यत्वमित्यभिप्रेत्याह—**अन्येनेति । हि**—यतः । एकमित्याद्युक्तमुपसंहरति—**अभिज्ञाश्चेति** । लौकिका इति शेषः । **न चेति**—एकत्वादिवाचकविभक्तिमिति शेषः । **तत्**—तस्मात् । **एतत्**—तत्रत्यादेरविभक्तिकप्रयोगकरणम् । **एवम्**—वक्ष्यमाणप्रकारेण । **सन्दृश्यताम्**—ज्ञायताम् । प्रकारमेवाह—**अर्थरूपमिति । एतत्**—अर्थस्वरूपम् । **एवञ्जातीयकम्**—एवं स्वभावकम् । **अत्र**—अत्रार्थे ।

उद्द्योते—**तद्वाचकेति**—एकत्वादिवाचकेत्यर्थः । **तैरपि**—अवैयाकरणैरपि ।

( उपपत्तिभाष्यम् )

**तच्चाप्येतदेवमनुगम्यमानं दृश्यताम्—किंचिदव्ययं विभक्त्यर्थप्रधानं, किंचित् क्रियाप्रधानम् । उच्चैर्नीचैरिति विभक्त्यर्थप्रधानम् , हिरुक् पृथगिति क्रियाप्रधानम् । तद्धितश्चापि कश्चिद् विभक्त्यर्थप्रधानः, कश्चित् क्रियाप्रधानः । तत्र यत्रेति विभक्त्यर्थप्रधानः, विनानानेति क्रियाप्रधानः । न चैतयोरर्थयोर्लिङ्गसंख्याभ्यां योगोऽस्ति ॥**

( प्रदीपः ) अत्रैवोपपत्तिमाह—**तच्चापीति । किंचिदिति** । अव्ययानां द्वैविध्यमेवेति प्रतिपाद्यते अलिङ्गासङ्ख्यत्वप्रतिपादनाय ॥ अन्ये त्वाहुः—'किंचिदव्ययं क्रियाप्रधानम्' किंचित्साधनप्रधानम् । अन्यत्तु नापि क्रियाप्रधानम्, नापि साधनप्रधानम्, यथा 'स्वः पश्य, लोहितगङ्गम् उन्मत्तगङ्गं देश' इति । तथा चात्र नपुंसकत्वमव्ययीभावश्चेत्यन्वाख्यायते । पूर्वं च भाष्यकारेणोक्तम् **स्वरादीनां पुनः सत्त्ववचनानामसत्त्ववचनानां** चेति । तस्माद्बाहुल्याभिप्रायेणा**ऽलिङ्गमसङ्ख्यमव्यय**मित्युच्यते ॥ **उच्चैर्नीचैरिति** सप्तम्यर्थे वर्तते इति साधनप्रधानता ॥ **हिरुक् पृथगिति** ॥ क्रियाविशेषणत्वादेषां क्रियाप्राधान्यम् । क्रियापदप्रयोगमन्तरेणापि पृथग् देवदत्त इत्यादिप्रयोगः क्रियाक्षेपादुपपद्यते ॥ शब्दशक्तिस्वाभाव्याच्चैकस्मिन्नर्थे विधीयमानयो**स्तेनैकदिक् तसिश्चे**त्यणृतसोर्भिन्नधर्मत्वम् । तत्र पैलुमूलमिति द्रव्यं प्राधान्येनाभिधीयते । पीलुमूलत इति तु द्रव्योपसर्जनस्तृतीयार्थ इति तस्य साधनप्रधानता ॥

( उद्द्योतः ) **अत्रैवेति** । अलिङ्गासंख्यत्व एवेत्यर्थः ॥ **उपपत्तिः**—युक्तिः क्रियाप्रधानत्वादिरूपा । **एवमनुगम्यमान**मित्यस्योपपाद्यमानमित्यर्थः ॥ **नापि साधनप्रधानमिति** । किं तु द्रव्यप्रधानमिति

शेषः ॥ **तस्माद्बाहुल्येति ।** एवं च तादृशबहुमध्यपाठेन स्वरादीनामप्यलिङ्गासंख्यत्वमनुमीयते । अनेककारकशक्तियोगमात्रेण तु सत्त्ववचनत्वमिति भावः ॥ उन्मत्तगङ्गादीनां वाचनिकमव्ययत्वमव्ययीभाव इति महासंज्ञया सूच्यते ॥ सत्त्वप्रधानता तु इदं स्वरिति सर्वनाम्ना परामर्शाद् ॥ ग्लान्याद्यर्थकप्रतामित्याद्यपि सत्त्ववचनमित्यन्ये ॥ ननु तदर्थे कारकान्वयाभावान्न तस्य क्रियात्वमत आह—**क्रियाविशेषणत्वादिति ।** क्रियायामेव विशेषणत्वादित्यर्थः ॥ क्त्वान्ततुमुनन्तादिवदिति भावः । स्वरादीनां घटादीनां च स्वःगतिर्घटोदकमित्यादौ नामार्थेऽप्यन्वयः । एतेन तेषामपि क्रियाविशेषणत्वात्क्रियाप्राधान्यं दुर्वारमित्यपास्तम् ॥ अत एवैतदर्थे न कारकाणामन्वयः । तदन्वययोग्यस्य साध्यत्वरूपक्रियात्वस्य तत्राभावात् ॥ **क्रियाक्षेपादिति ।** स्थित्यादिक्रियाक्षेपादित्यर्थः ॥ **द्रव्यं प्राधान्येनेति ।** पीलुमूलसमानदिक्स्थमिति हि तत्र बोधः ॥ **द्रव्योपसर्जन इति ।** तस्प्रत्ययाभिधेयद्रव्योपसर्जनः प्रकृत्यभिधेयस्तृतीयार्थ इत्यर्थः ॥ तृतीयार्थश्च तत्र साहित्यम् । पीलुमूलेनैकदिक् पीलुमूलतः । एकदिक्स्थपीलुमूलसाहित्यमित्यर्थः ॥ अन्ये तु—पीलुमूलेन समानदिशीत्यर्थकम् अधिकरणशक्तिप्रधानं पीलुमूलत इतीत्याहुः ॥ भाष्ये—**न चैतयोरर्थयोरिति ।** यद्यपि क्रियायामेकत्वसंख्या **रूपप्**सूत्रे भाष्ये उक्ता पचतिरूपमित्यादिवाच्यायाश्च नपुंसकत्वयोग उक्तस्तथापि अव्ययवाच्ययोरेतयोर्लिङ्गसंख्याभ्यामयोग इत्यर्थान्न दोष इति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**तच्च**—प्रागुक्तञ्च । **अप्येतदिति**—अलिङ्गासंख्यत्वमपीत्यर्थः । अपेरेतत्पदोत्तरमन्वयात् । **एवम्**—वक्ष्यमाणप्रकारेण । **दृश्यताम्**—ज्ञायताम् । प्रकारमेवाह—**किञ्चिदित्यादिना । एतयोः**—विभक्त्यर्थक्रियारूपयोः ।

प्रदीपे—**किञ्चिदितीति**—किञ्चिदित्यादिनेत्यर्थः । किञ्चित्पदस्वारस्यान्न्यूनतानिराकरणायाह—**अन्ये त्विति ।** तत्त्वमुपपादयति—**तथा चेति ।** अन्यस्य द्रव्यप्रधानत्वे चेत्यर्थः । **अत्र**—लोहितगङ्गमित्यादौ । अव्ययस्य द्रव्यप्रधानत्वमपि भाष्यकृदनुमतमित्याह—**पूर्वञ्चेति ।** तथा चाव्ययानां त्रैविध्यमुपपन्नमित्याशयः । **तस्मात्**—द्रव्यप्रधानाव्ययस्य सलिङ्गत्वाद्युपपादनात् । **साधनेति**—तयोरित्यादिः । **एषाम्**—हिरुगादीनाम् । तत्रेवात्रापि प्राप्तं व्यभिचारमुद्धरति—**क्रियापदेति । अन्तरेणापीति**—जायमान इति शेषः । तथा च न तेषां क्रियाप्रधानत्वमिति शङ्काशयः । **क्रियाक्षेपादिति**—क्रियाक्षेपश्चार्थे-एवेत्याशयः । **उपपद्यते-इति**—तथा च तेषां क्रियाप्रधानत्वमुपपन्नमित्युत्तराशयः । **तत्र**—तयोर्मध्ये । **तस्य**—तसेः ।

उद्द्योते—**इत्यस्य**—इति भाष्यस्य । अस्य साकाङ्क्षत्वादाह—**किन्त्विति ।** एतदाशयमाह—**एवञ्चेति ।** बाहुल्याभिप्रायेण 'अलिङ्गमि'त्याद्युक्तौ चेत्यर्थः । **तादृशबहुमध्यपाठेन**—अलिङ्गासंख्यबहुघटितसमुदायघटकतया पाठेन । नन्वेवम् 'स्वरादीनां पुनरि'ति भाष्यविरोध इत्यत आह—**अनेकेति ।** वस्तुतस्तु-अव्ययानां द्वैविध्यमेवेति सूचयितुमाह—**उन्मत्तेति । प्रधानता तु**—प्रधानताऽपि । **अन्ये**—सिद्धान्तिनः । **तदर्थे**—हिरुगाद्यर्थे । अनतिप्रसङ्गायाह—**क्रियायामेवेति ।** तस्यादृष्टत्वं निराकरोति—**क्त्वान्तेति ।** एवोपादानफलमाह—**स्वरादीनामिति । अपिना** क्रियासमुच्चयः । **एतेन**—क्रियाविशेषणत्वेऽपि नामार्थेऽप्यन्वयात् क्रियायामेवाविशेषणत्वेन । **तेषामपि**—स्वर्घटादीनामपि । **एतदर्थे**—हिरुगाद्यर्थे । **अत एवेत्यस्यार्थमाह—तदन्वयेति । तसुप्रत्ययेति**—तसि—प्रत्ययेनाभिधेयं यद् एकदिक्स्थं द्रव्यं तदुपसर्जनः, प्रकृत्या—पीलुमूलेनेत्यनया अभिधेयः स इत्यर्थः । स च क इति जिज्ञासायामाह—**तृतीयार्थश्चेति ।** तदुपपत्तिमाह—**पीत्विति । एकदिगिति**—एकदिक्स्थपीलुमूलयोः साहित्यमित्यर्थः । तथा बोधस्याक्षरमर्यादयाऽलाभादाह—**अन्ये त्विति । वाच्यायाश्चेति**—क्रियाया इति शेषः । प्रक्रमानुरोधादाह—**तथापीति । एतयोः**—विभक्त्यर्थक्रिययोः ।

**( सूत्रसमर्थनभाष्यम् )**

**अथाऽप्यसर्वविभक्तिरित्युच्यते । एवमपि न दोषः । कथम् ? ।**

**इदं चाऽप्यद्यत्वे अतिबहु क्रियते—एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति ।**

**कथं तर्हि ? ।**

**एकवचनमुत्सर्गः करिष्यते । तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने बाधके भविष्यतः ॥**

**( प्रदीपः ) अद्यत्व इति ।** सूत्रारम्भकाल इत्यर्थः । पूर्वं हि न्यासान्तराश्रयेण सूत्रं प्रत्याख्यातम् ॥ **अतिबह्विति ।** एकस्मिन्नित्यपनीयै**कवचन**मिति सूत्रं कर्तव्यम् । ततो **द्विबह्वोर्द्विवचनबहुवचने** इत्येवं कर्तव्यम् । तेन द्वित्वबहुत्वयोर्द्विवचन बहुवचने भविष्यतः । एकवचनं त्वेकस्मिन्नपि भविष्यत्यलिङ्गासङ्ख्येभ्योऽव्ययेभ्यश्च ॥ ननु **कर्मणि द्वितीये**त्यादिना कर्मादिषु द्वितीयादीनां नियतत्वात्कथमेकवचनमव्ययेभ्यः स्यात् ॥ नैष दोषः ॥ एतदर्थमेवै**कवचन**मित्येतत् क्रियतेऽप्राप्तप्रापणार्थम् । तेन कर्माद्यभावेऽपि भवति । द्वित्वबहुत्वयोस्तु प्राप्तं द्विवचनबहुवचनाभ्यां बाध्यते ॥

**( उद्द्योतः ) सूत्रारम्भकाले इति ॥** यद्यपि न्यासान्तरेऽपि एकस्मिन्निति बह्वेव, तथापि एकग्रहणे सति ज्ञापकादितः सर्वविभक्त्युत्पत्तावस्य सूत्रस्याप्यानर्थक्यमिति एतत्सूत्रपाठकाले एतत्सूत्रसहितं एकस्मिन्नित्यतिबहु व्यर्थं क्रियत इति एकग्रहणं त्यक्त्वाऽस्य सार्थक्यं वक्तुं योग्यमित्यर्थं इति भावः ॥ **न्यासान्तरेति ।** पाठाश्रयेणा**लिङ्गासंख्य**मित्यनेन वेत्यर्थः । भाष्ये**ऽतिबह्विति** बहुशब्दो वैपुल्यवाची । अतिबहु शास्त्रं व्यर्थं क्रियत इत्यर्थः ॥ **अलिङ्गासंख्येभ्य इति ।** द्विवचनबहुवचनविधायकयोर्द्विबहुग्रहणसामर्थ्यान्महासंज्ञाबोध्यैकत्वाभावेऽपि एकवचनप्रवृत्तिरिति भावः ॥ **कथमेकवचनमिति ।** प्रथमापि **मात्र**ग्रहणाद् यत्प्रातिपदिकार्थस्य कर्मत्वाद्याधिक्यसम्भावना तत्रैवेति भावः ॥ **अप्राप्तेति ।** द्वित्वबहुत्वयोर्द्विवचनबहुवचनविधाने एकवचनस्यार्थात्तदभावेक र्मादौ सिद्धत्वेन सामर्थ्यादिति भावः । अप्राप्तिश्च कर्मत्वाद्यभावप्रयुक्तैव न तु प्रातिपदिकत्वाभावप्रयुक्तापि, सुप्विध्येकवाक्यत्वात् । तेन तिङन्तादिभ्यो नापत्तिरिति बोध्यम् ॥ किं च सर्वथाऽप्राप्तावेवास्य विधायकत्वमिति पचतिकल्पमित्यादौ न सर्वैकवचनापत्तिरिति बोध्यम् ॥ यद्यप्यनिर्दिष्टार्थत्वात्स्वार्थे विधीयमानस्यास्य न द्वित्वादौ प्राप्तिस्तथापि पञ्चकप्रातिपदिकार्थपक्षे एकत्व इव द्वित्वादावपि प्राप्तिरित्याशयेनाह—**बाध्यत इति ।** अत्र पक्षे **द्व्येकयो**रिति सूत्रमपि विध्यर्थमेवेति भावः ॥ **यद्यपि** अव्ययात्सर्वविभक्त्युत्पत्त्याऽयं न्यासो दूषितः, तथापि सामान्यापेक्षप्रत्ययनियमे एकवाक्यतया विधाने वा कस्या अप्राप्त्येदं विधायकमिति तत्पक्षे सूत्रसार्थक्योपपादनमिदम् । एवंचैतदेव तयोरन्यतरपक्षाश्रयणस्यैकपदे वाक्यार्थान्वयित्वस्य च ज्ञापकमिति बोध्यम् । एतत्सर्वमुत्सर्गपदेन भाष्ये सूचितम् ॥

**( तत्त्वालोकः )** भाष्ये—इदानीं प्रकृत-सूत्रं समर्थयन्नाह—**अथापीति ।** इदम्पदबोध्यं निर्दिशति—**एकस्मिन्निति । कथं तर्हि-**

**ति**—यद्येवम् तर्हीदं कथं करिष्यते इत्यर्थः । **तस्य**—एकवचनस्य ।

प्रदीपे—**सूत्रेति**—प्रकृतसूत्रेत्यर्थः । **हि**—यतः । **सूत्रम्**—इदं सूत्रम् । **एकस्मिन्नितीति**—नत्रेत्यादिः । **इत्येवमिति**—सूत्र-मिति शेषः । **कथमिति**—कर्माद्यभावे इति शेषः । **एतदर्थमेव**—अव्ययेभ्यः सर्वैकवचनविधानार्थमेव । **भवतीति**—एकवचनमव्य-येभ्य इत्यादिः । **प्राप्तमिति**—एकवचनमिति शेषः ।

उद्द्योते—भाष्यस्थानिशब्दस्तार्थत्यायाह—**यद्यपीति** । 'एक-स्मिन्नि'त्यादि-त्रिविधे इति शेषः । **ज्ञापकात्**—'अव्ययादि'ति ज्ञाप-कात् । **इतः**—अव्ययात् । नन्वेवमपि 'एकवचनमि'ति महासंज्ञा-बोधितान्वर्थत्वादेकस्मिन्नेव एकवचनं स्यान्न त्वव्ययेभ्य इत्यत आह—**द्विवचनेति** । नन्वनियतं प्रथमैकवचनं तेभ्यः स्यादित्यत आह—**प्रथमापीति** । **तदभावे**—द्वित्वबहुत्वाभावे । ननु तस्याप्राप्तप्राप-णार्थत्वे तिङन्तादिभ्योऽपि तदापत्तिरित्यत आह—**अप्राप्तिश्चेति** । **सर्वथेति**—सामर्थ्यादेवेत्याशयः । **अस्य**—एकवचनस्य । इदं सिद्धा-न्तेऽपि तुल्यमित्याशयेनाह—**अत्र पक्षे इति** । पञ्चकं प्रातिपदि-कार्थ इति पक्षे इत्यर्थः । **यद्यपीति**—'अव्ययादि'ति ज्ञापकादिति शेषः । **अयं न्यासः**—'तद्धितश्चासर्वविभक्तिरि'ति न्यासः । नन्वत्र पक्षे द्वित्वे एकवचनापत्तिरित्यत आह—**एकवाक्येति** । **इदम्**—'एकवचनमि'ति सूत्रम् । **तत्पक्षे**—तदन्यतरपक्षे । **सूत्रेति**—प्रकृत-सूत्रेत्यर्थः । फलितमाह—**एवञ्चेति** । तदन्यतरपक्षं विना प्रकृत-सूत्रसार्थक्याभावे चेत्यर्थः । **एतदेव**—प्रकृतसूत्रमेव । **तयोः**—सामान्यापेक्षप्रत्ययनियमैकवाक्यतया-विधानयोः । अदृष्टार्थमावश्यक-त्वादाह—**एकपदे-इति** । एकवचनमित्येकपदे एकस्मिन्नित्यनन्वयि-त्वस्य चेत्यर्थः । इदं समूलयति—**एतदिति** ।

**( मतान्तरभाष्यम् )**

**न चाप्येवं विग्रहः करिष्यते—न सर्वा असर्वाः, असर्वा विभक्तयो यस्मादिति ॥**

**कथं तर्हि ? ॥**

**न सर्वा असर्वा, असर्वा विभक्तिरस्मादिति ॥ त्रिकं पुनर्विभक्तिसंज्ञम् ॥**

**( प्रदीपः )** न सर्वा विभक्तय उत्पत्तौ निमित्तमस्येति येन वृत्तिकारेण व्याख्यातं तन्मतं दूषितम् । इदानीं वृत्तिकारान्तरमतं विशेषदर्शनेन संस्क्रियते—**न चाप्येवमिति** । एवं विग्रहे सर्वशब्दस्य प्रकारकात्स्न्र्येऽपि वर्तनादेकवचनमात्रोत्पत्तावपि सर्वा विभक्तयः सप्ताव्ययेभ्य उत्पद्यन्ते इति न स्यादसर्वविभक्तित्वम् । **कथं तर्हीति** । द्रव्यकात्स्न्र्यवृत्तिः सर्वशब्दः । एकवचनमात्रोत्पत्तौ निरवशेषा विभक्तिर्नोत्पन्ना भवतीति भवत्येवाऽसर्वविभक्तित्वम् । यदा त्वयं न्यायः—प्रथमातिक्रमे कारणाभावात्प्रथमाया एवैकवचनमव्ययेभ्य उत्पद्यत इति, तदाऽसर्वा विभक्तयो यस्मादित्यपि विग्रहे आश्रिते न दोषः ॥ यदा तु खलेकपोतिकान्यायेन सर्वैकवचनोत्पत्तिपक्षस्तदैत-दुक्तम् । अव्ययीभावादप्येकवचनमात्रमेवोत्पद्यते, तावतैव **तृतीया-सप्तम्योर्बहुल**मित्यस्योपपादनात् ॥

**( उद्द्योतः ) तन्मतमिति** । दाक्षिरित्यादावतिव्याप्ते**रितरा-भ्योऽपि दृश्यन्त** इत्येतद्विहितत्रलादिविषयेऽव्याप्तेश्चेति भावः ॥ **वृत्तिकारान्तरेति** । तद्विग्रहे **तस्ये**ति अपादानस्यैव संबन्धत्व—विव-क्षया षष्ठीति ध्वनयितुं भाष्ये—**यस्मादि**त्युक्तम् ॥ **विशेषेति** । एकवचनान्तविग्रहकरणरूपो विशेषः ॥ नन्वेवं सर्वविभक्त्येकवचनो-त्पत्तौ बहुवचनान्तविग्रहासङ्गतिरतो भाष्ये—**नचापीति** ॥ तद्या-चष्टे—**प्रकारेति** । सर्वा विभक्तय इत्यस्य सर्वप्रकारा इत्यर्थः ॥ अवयवकात्स्न्र्ये तु बहुवचनं व्यर्थमिति भावः ॥ एकवचनान्तविग्रहे तु अवयवकात्स्न्र्ये एव सर्वशब्द इति नानेत्यादौ नाव्याप्तिर्नापि दाक्षिरित्यादावतिव्याप्तिरिति भावः ॥ भावे पचतिकल्पमित्यादौ च क्रियायाः स्वत एवैकत्वादेकवचनमेव ॥ तच्च भावे प्रथमपुरुषस्यैव, शान्तसमानाधिकरणयुष्मदाद्यभावादिति **रूपप्**सूत्रे भाष्ये स्पष्टम् ॥ अव्ययेभ्योऽपि प्रथमैकवचनमेवास्तु इत्याह—**यदा त्विति** ॥ **प्रथमेति** । अनेकनियमवाधे गौरवाच्चेत्यपि बोध्यम् । ननु भाष्योक्त-पक्षेऽव्ययेभ्यो युगपत्सर्वविभक्त्येकवचनानां कर्तुमशक्यत्वम् । **परश्चे**त्युक्तेः । किंतु यत्किंचिदेव, लुकि तस्य तावतैव पदत्वसंपादनात् विभक्त्यन्तरोत्पत्तौ मानाभावेन बहुवचनान्तविग्रहेऽपि न दोषोऽत आह—**खलेकपोतेति** ॥ वाचः क्रमवृत्तित्वाद्युगपदुच्चारणाभावेऽपि बुद्ध्या युगपत्सर्वोत्पत्तिर्वक्तुं शक्येति भावः ॥ विनिगमनाविरहोऽत्र बीजम् । प्रक्रियादशायां च बुद्धिरेव मुख्या, असाधूच्चारणायोगात् । यद्वा प्रधानानुरोधेन गुणावृत्तेस्तावत्यः प्रकृतयः स्युरिति भावः ॥ परे तु प्राथम्यं स्वादिसूत्रे प्रथमाया नियमशास्त्रपर्यालोचनया द्वितीयाया इति न तन्नियामकमिति **प्रथमातिक्रम** इत्याद्यसङ्गतम् । तन्न्यायाश्रयणे **निजां त्रयाणा**मित्यत्र त्रयाणामित्यस्य **आद्युदात्तश्चे**-त्यादावादिग्रहणस्य वैयर्थ्यं चेत्याहुः ॥ **तावतैवेति** । **टाङ्योरि**ति वक्तव्ये तृतीयादिग्रहणं तु वैचित्र्यार्थमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—बहुवचनान्तसर्वपदेन विग्रहे बहु-वचनेन विभक्त्यर्थभेदप्रतीतेः सर्वशब्दस्य भेदाधिष्ठानप्रकारकात्स्न्र्या-र्थकत्वं सम्भवतीत्याशयेन-एवम्पदबोध्यं निर्दिशति—**न सर्वा इति** । बहुव्रीह्युत्तरपदकतत्पुरुषे सति सुबन्तादावतिप्रसङ्गसम्भवादाह—**न सर्वेति** । एकवचनान्तसर्वपदेन विग्रहे एकवचनेन विभक्त्यर्थभेदा-प्रतीतेः सर्वशब्दस्य भेदाधिष्ठानप्रकारकात्स्न्र्यार्थकत्वं न सम्भवति, किन्त्ववयवकात्स्न्र्यार्थकत्वमेवेति भावः । 'विभक्तिश्चे'ति सूत्रे यथा 'सुपः' इति, 'तिङः' इति चानुवर्त्तते तथा 'त्रीणि' इत्यपीत्यभिप्राये-णाह—**त्रिकमिति** ।

प्रदीपे—**एवं विग्रहे**—बहुवचनान्तसर्वशब्देन विग्रहे । **अपिना**—द्रव्यकात्स्न्र्यसमुच्चयः । **एकवचनेति**—सर्वासामित्यादिः । एवमग्रेऽपि । **विभक्तित्वमिति**—तथा च प्रकृतसूत्रार्थाप्रसिद्धेः 'न सर्वा असर्वाः' इत्यादिरूपेण विग्रहो न करिष्यते इति भावः । **द्रव्येति**—एकवचनान्तसर्वशब्देन विग्रहे त्वित्यादिः । **एकवचनेति**—तथा चेत्यादिः । **निरवशेषेति**—सर्वावयविकेत्यर्थः । अव्ययेभ्य इत्यादिः । **विभक्तित्वमिति**—तथा च न प्रकृतसूत्रार्थाप्रसिद्धिरिति 'न सर्वा असर्वा' इत्यादिरूपेण विग्रहः करिष्यते इति भावः । यद्यपि-अव्य-येभ्यः 'सप्तानामपि विभक्तीनां त्रीण्यपि वचनानि' अथवा 'सप्ताना-मपि तासामेकवचनान्येव' अथवा 'प्रथमाया एव वचनत्रयम्' अथवा 'प्रथमाया एकवचनमेव' इति पक्षचतुष्टयं सम्भवति, तथाप्यादितः पक्षत्रये पचतिकल्पमित्यादौ दोषः, तत्र हि प्रथमैकवचनमात्रमिष्यते, पक्षत्रये त्वधिकम्प्राप्नोति । तस्माद् द्वितीयपक्षेण तत्र सकलानामेक-वचनानि प्राप्य 'एकवचनमि'त्येकत्वस्य विवक्षितत्वात् प्रथमातिक्रमे कारणाभावात् प्रथमैकवचनमेव कर्तव्यमित्याशयेनाह—**यदा त्विति** । **अपिना**—असर्वा विभक्तिर्यस्मादिति विग्रहपरिग्रहः । **एतत्**—असर्वा विभक्तिर्यस्मादिति विग्रहाश्रयणम् ।

उद्द्योते—विनेत्यादौ विशेषस्य पूर्ववदनुपादानाह—**इतरेति** । **तद्विग्रहे**—पूर्वं कैयटोक्ते । **एवम्**—स्वरादिभ्यः सर्वविभक्त्येकवच-नार्थं तथोत्सर्गस्वीकारे । **असङ्गतिरिति**—सर्वविभक्तित्वस्यैव सत्त्वादि-

त्याशयः। यदि द्रव्यशब्दस्यार्थो व्यक्तिः स्यात्तर्हि—**अव्ययेभ्यः** सप्त-विभक्तीनामेकवचनमात्ररूपैकदेशोत्पत्तावपि अवयवद्वारा तेषां सर्वविभक्तिव्यक्तिसम्बन्धात् प्रकृतसूत्रार्थाप्रसिद्धेस्तादवस्थ्यम्, अतस्तस्यार्थमाह—**अवयवेति**। 'कथं तर्ही'त्यादिभाष्यतत्प्रदीपयो-राशयमाह—**एकवचनान्तेति**। **आदिना** यत्रेत्यादेरपि समुच्चयः। नन्वेवं सर्वैकवचनातिप्रसङ्ग इत्यत आह—**भावे इति**। भूयते इत्या-दावित्यर्थः। पचतिकल्पमित्यादौ तदव्याप्तेरभावादाह—**तच्चेति**। एकवचनञ्चेत्यर्थः। तथा च प्राप्तप्रापणार्थमेव 'एकवचनमि'त्येतदिति नातिप्रसङ्गः। एतद्दृष्टान्तेन क्लृप्तेतिन्यायेनाह—**अव्ययेभ्योऽ-पीति**। तन्न्यायस्येहानाश्रयणादाह—**अनेकनियमेति**। सामान्या-पेक्षानेकप्रत्ययनियमेत्यर्थः। **पक्षे**—प्रथमपक्षे। **न दोष इति**—तथा च प्रथमपक्षं निरस्य द्वितीयपक्षाश्रयणं व्यर्थमेव पूर्ववदित्याशयः। परत्वमपि बौद्धमित्याशयेनाह—**बुद्ध्येति**। नन्वेवं कल्पने किं बीज-मित्यत आह—**विनिगमनेति**। अत्र युक्तिमप्याह—**प्रक्रियेति**। मन्दधीनां स्पष्टप्रतिपत्त्यर्थमाह—**यद्वेति**। तेषां विधेयत्वलक्षणं शाब्दं प्राधान्यमित्याशयेनाह—**प्रधानेति**। उद्देश्यत्वलक्षणार्थप्राधान्ये तु सैव गतिरिति बोध्यम्। ननु कैयटोक्तया 'प्रथमातिक्रमे' इत्यादि-पद्धत्या प्रथमपक्षस्यादुष्टत्वाद् भाष्यकृतो द्वितीयपक्षाश्रयणं न युक्त-मित्यत आह—**परेत्विति**। 'कर्मणी'त्यस्याष्टाध्याय्यां प्राक् पाठा-दाह—**नियमेति**। **न तदिति**—न प्राथम्यमित्यर्थः। अतिप्रसक्त-त्वादित्यादिः। ननु नियमशास्त्राणां विधिशास्त्राधीनत्वात् प्रथमाया एव प्राथम्यं न तु द्वितीयाया इत्यत आह—**तन्न्यायेति**। **ग्रह-णस्य**—ग्रहणस्य च। एवञ्च भाष्यकृदुक्तिरेव युक्ता न तु कैयटोक्ति-रित्याशयः। नन्वेवं तृतीयादिग्रहणं व्यर्थमित्यत आह—**टाङ्योरि-तीति**। वस्तुतस्तु–सत्त्ववचनस्थले सप्तैकवचनानि, असत्त्ववचन-स्थले तु प्रथमैकवचनमेवेति पक्षो युक्तः।

( लाघवभाष्यम् )

**एवं गते कृत्यपि तुल्यमेत-**
**न्मान्तस्य कार्यं ग्रहणं न तत्र।**
**ततः परे चाभिमता न कार्या-**
**स्त्रयः कृदर्था ग्रहणेन योगाः॥ १॥**

**( प्रदीपः ) एवं गत इति**। यदा असर्वा विभक्तिरस्मादिति विग्रह आश्रीयते, तदैवं विज्ञाते सत्येतावल्लक्षणमस्तु **'असर्वविभ-क्त्यव्ययम्'** इति, पञ्चसूत्री न कर्तव्या। **एतद**सर्वविभक्तित्वं **कृत्यपि तुल्यम्,** यस्य **कृन्मेजन्तः** इत्यनेनाव्ययसंज्ञेष्यते॥ **मान्तस्येति**। सूत्रोपलक्षणम्॥ **ततः पर इति**। **कृन्मेजन्त** इत्यस्मात् सूत्रात्परे **कृदर्थाः** कृत्संज्ञाविषयाः **क्त्वातोसुन्कसुन** इत्यर्थः॥ **ग्रहणेनो**च्चार-णेन प्रतिपदमित्यर्थः॥ **योगाश्च** न कर्तव्याः **स्वरादिनिपातमव्यय-**मित्येवमादयः पञ्चेत्युपसंहारः॥

**( उद्द्योतः )** इदमेव ध्वनयितुं पञ्चयोगान्प्रत्याचष्टे—**एवं गते** इति भाष्ये॥ **प्रतिपदमितीति**। **असर्वविभक्ती**ति न्यासेनैव सिद्ध-त्वादित्यर्थः॥ **पञ्चेति**। **स्वरादी**त्यादि**रव्ययीभावश्चे**त्यन्ताः॥ [ भाष्यश्लोके—**तत्रेति** अव्ययसंज्ञाविधावित्यर्थः ]॥

**( तत्त्वालोकः )** भाष्ये—**एवं गते इति**—एवं गते, एतत् कृत्यपि तुल्यम्, ( अतः ) तत्र—मान्तस्य **ग्रहणम्**—प्रतिपदमुच्चार-णम् न कार्यम्; ( तथा ) ततः परे त्रयः कृदर्था ग्रहणेन न कार्याः, **अभिमताः**–'स्वरादिनिपातमव्ययम्' 'तद्धितश्चासर्वविभक्तिः' 'अव्य-यीभावश्चे'ति–रूपाः योगाश्च ( न कार्याः ) इत्यन्वयः।

प्रदीपे—'एवं गते' इत्यस्यार्थमाह—**एवं विज्ञाते सतीति**—त्रिकस्य विभक्तित्वेन तेभ्यः सर्वैकवचनोत्पादेऽपि निरवशेषविभ-क्त्यनुत्पत्त्या तेषामसर्वविभक्तित्वमस्त्येवेति निश्चीयमाने सतीत्यर्थः। तस्य शेषमाह—**एतावदित्यादिना**। एवं सति किं लाघवमित्याह—**पञ्चेति**। तदुपपादयति—**एतदिति**। अनतिप्रसङ्गायाह—**यस्येति**। **सूत्रेति**—'कृन्मेजन्तः' इति—सूत्रेत्यर्थः।

उद्द्योते—**अव्ययसंज्ञाविधौ**—अव्ययसंज्ञाविधिसमुदायमध्ये।

( गौरवप्रदर्शकभाष्यम् )

**'कृत्तद्धितानां ग्रहणं तु कार्यं**
**संख्याविशेषं ह्यभिनिश्रिता ये।'**

**तेषां प्रतिषेधो भवतीति वक्तव्यम्। इह मा भूत्—एको द्वौ बहव इति।**

( उपसंहारभाष्यम् )

**'तस्मात् स्वरादिग्रहणं च कार्यं**
**कृत्तद्धितानां ग्रहणं च पाठे॥ २॥'**

**( प्रदीपः )** इदानीमतिव्याप्तिपरिहारार्थं तद्धितग्रहणं कर्तव्यम्, तस्मिन् कृते **कृन्मेजन्त** इत्याद्यपि कर्तव्यमिति दर्शयति—**कृत्तद्धि-तानामिति**॥ **संख्याविशेषमिति**। तन्निवृत्त्यर्थमित्यर्थः॥ **तेषा-मिति**। असति तद्धितग्रहणे एकादीनामतद्धितान्तानामप्यसर्वविभ-क्तित्वात् प्रतिषेधो वक्तव्यः स्यादिति तद्धितग्रहणं कर्तव्यम्। तस्मिन्कृते स्वरादिग्रहणं कर्तव्यं, स्वरादीनामतद्धितान्तत्वात्॥ ननूभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वं तथा गोदौ वरणा इति, तत एषामपि **तद्धितश्चासर्वविभक्ति**रित्यव्ययसंज्ञाप्रसङ्ग इत्याह—**कृत्तद्धिता-नामिति**। प्रतिपदं तद्धिताः पठितव्या येषामव्ययसंज्ञेष्यत इत्यर्थः। तस्माद्गणपाठ एवाश्रयितव्यः। प्रपञ्चार्थस्तु सूत्रारम्भः॥

**( उद्द्योतः ) ये** इति यच्छब्दस्य तच्छब्दसाकाङ्क्षत्वादाह—**तन्निवृत्त्यर्थमिति**। तदेवं सूत्रं स्थापितमिति वार्तिकोक्तं **सिद्धं तु पाठादि**त्यप्यनाश्रितं स्यात्। एवं चोभयशब्दादौ दोष इति शङ्को-त्तरत्वेनोत्तरभाष्यमवतारयति—**ननूभयेति**। अत एवो**भयोऽ-न्यत्रे**त्यस्योदाहरणं **'उभये उभयः'** इति भाष्ये **सर्वादि**सूत्रे दत्तम्। गोदावित्यादौ **वरणादिभ्यश्चेति** चातुरर्थिकलुपि युक्तव-द्भावात्प्रत्ययार्थस्य द्वित्वादीति बोध्यम्॥ **इत्याहेति**। इत्याशङ्काया-माहेत्यर्थः॥ भाष्ये—**चस्त्वर्थे**। **कृत्तद्धिताना**मित्यत्र कृद्ग्रहणेन कृतामव्ययसंज्ञाविधायके सूत्रे अपि गणे पाठ्ये इति सूचितम्॥ **कृ-दि**त्युपलक्षण**मव्ययीभावश्चे**त्यस्यापि। तदाह—**तस्मादिति**। तदेवं गणपाठमाश्रित्य **तद्धितश्चासर्वविभक्ति**रित्यष्टाध्यायीपाठः प्रत्याख्यातः—तदाह—**प्रपञ्चार्थस्त्विति**॥

**( तत्त्वालोकः )** भाष्ये—**ये**—इति यच्छब्दस्य तच्छब्दसाकां-क्षत्वादाह—**तेषामिति**। अन्यथेत्यादिः। तथाच—अन्यथा **हि** यतः येऽकृत्तद्धिताः संख्याविशेषम् **अभिनिश्रिताः**—प्रतिनियता एकादि-शब्दास्तेषां प्रतिषेधो भवतीति वक्तव्यं स्यादित्यर्थः। **इहेति**—यथेत्यादिः। अव्ययसंज्ञेति शेषः। उपसंहरति—**तस्मादिति**। एकादिशब्देषु अव्ययसंज्ञाया अतिप्रसङ्गवारणाय कृत्तद्धितग्रहणस्या-वश्यकत्वादित्यर्थः। एवञ्च–'स्वरादी'ति सूत्रम्, कृत्तद्धितघटितं सूत्रत्रयम्, कृदुपलक्षितम् 'अव्ययी'ति सूत्रञ्च कर्तव्यम्, तथा वरणां इत्यादावतिप्रसङ्गवारणाय तादृशतद्धितानां प्रतिपदपठनम् कर्तव्यमिति

गौरवादाह—**कृत्तद्धितानामिति । पाठे**—गणपाठे । तथाच 'स्वरादी'ति सूत्रमात्रं विधाय स्वरादिगणे तादृशतद्धिताः 'कृन्मेजन्तः' इत्यादित्रयो योगाश्च पाठ्याः । तावतैव सकलेष्टसिद्धेः 'तद्धितश्चे'त्यादि सूत्रचतुष्टयं न कर्तव्यम्, अत्र पक्षे 'तद्धितश्चे'त्यस्यानावश्यकत्वाल्लाघवमिति भावः ।

प्रदीपे—**इदानीमिति**—स्वरादिशब्देषु अव्ययसंज्ञाया इति शेषः । **आदिना**—'तसिलादयः प्राक् पाशपः' इत्यस्य 'अव्ययी'त्यस्य च समुच्चयः । **तदिति**—स्वरादिशब्देष्वर्थः । **स्वरादिग्रहणम्**—'स्वरादी'ति सूत्रम् । **इति**—इत्यनयोरसर्वविभक्तित्वम् । **एषाम्**—उभयशब्दादीनाम् । **गणपाठ इति**—'स्वरादी'ति सूत्रमात्रं विधाय स्वरादिगणे तादृश तद्धितानां 'कृन्मेजन्तः' इत्यादियोगत्रयस्य च पाठ इत्यर्थः । **सूत्रेति**—'तद्धितश्चे'त्यादिसूत्रचतुष्टयेत्यर्थः ।

उद्द्योते—**सूत्रम्**—प्रकृतसूत्रम् । **अपिना** 'अविभक्तिः' 'अलिङ्गमसंख्यम्' इति न्यासान्तरद्वयसंग्रहः । **दोषः**—प्रकृतसूत्रमात्रातिव्याप्तिः । कैयटोक्तं समूलयति—**अत एवेति ।** द्विवचनोत्पादे उभयशब्दस्यासाधुत्वादेवेत्यर्थः । यथाश्रुतासङ्गतेराह—**इत्याशङ्क्येति ।** तथा सति चकारासङ्गतिं निराकरोति—**चस्त्वर्थ इति । गणे**—स्वरादिगणे । भाष्यकृतो न्यूनतां निराकरोति—**कृदित्युपेति । गणपाठमिति**—अस्यार्थः प्रदीपतत्त्वालोकत एव बोध्यः । **तद्धितश्चेति**—इदमुपलक्षणं 'कृन्मेजन्तः' इत्यादियोगत्रयस्यापि ।

( आक्षेपभाष्यम् )

**पाठेनेयमव्ययसंज्ञा क्रियते । सेह न प्राप्नोति—परमोच्चैः परमनीचैरिति ॥**

**( उद्द्योतः )** शङ्कते—भाष्ये **पाठेनेयमिति । स्वरादिनिपातमि**तीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**पाठेनेति**—गणपाठेनेत्यर्थः । यदीत्यादिः । **सेहेति**—तर्हीत्यादिः ।

उद्द्योते—**स्वरादीति**—तस्यैव स्थितत्वादित्याशयः ।

( समाधानभाष्यम् )

**तदन्तविधिना भविष्यति ॥**

**( प्रदीपः ) तदन्तविधिनेति । प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वचनेनेति भावः ।

**(तत्त्वालोकः)** भाष्ये-**तदन्तेति**-नैष दोषः, यतस्तत्र सेत्यादिः ।

उद्द्योते—विशेष्यस्याभावाद् 'येन विधिः' इत्यस्याप्राप्तेराह—**प्रयोजनमिति ।**

( आक्षेपभाष्यम् )

**इहापि तर्हि प्राप्नोति—अत्युच्चैः अत्युच्चैसौ अत्युच्चैस इति ॥**

**( प्रदीपः ) अत्युच्चैसाविति ।** शक्तिप्रधानान्यप्यव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि भवन्ति । यथा—दोषामन्यमहः दोषाभूतमहरिति । तत उच्चैःशब्दस्य प्रक्रियायां द्वितीयान्तस्य समासः ॥

**( उद्द्योतः )** नन्वत्यादयो **द्वितीयये**त्युक्तेः कथमुच्चैःशब्देनाधिकरणशक्तिप्रधानेनाद्वितीयान्तेन समास इत्यत आह—**शक्तीति ॥ द्वितीयान्तस्येति ॥** अतिक्रान्तार्थान्वययोग्यकर्मद्वितीयान्तस्येत्यर्थः । **दोषामन्यमित्यत्र कर्मणी**त्यधिकारे **आत्ममानेखश् ।** दिनं रात्रिं मन्यत इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**इहापीति**—( यद्येवम् ) तर्हि इहापि ( सा ) प्राप्नोतीत्यन्वयः ।

उद्द्योते—**दिनमिति**—दिनं कर्तृ आत्मानं रात्रिं मन्यते इत्यर्थः । कूलं पिबतिपतीत्यत्र कूल इवात्र दिने मननकर्तृत्वारोपः ।

( आक्षेपबाधकभाष्यम् )

**उपसर्जनस्य नेति प्रतिषेधो भविष्यति ॥**

**( तत्त्वालोकः )** उपसर्जनस्येति—नैष दोषः, यत इत्यादिः ।

( आक्षेपभाष्यम् )

**स तर्हि प्रतिषेधो वक्तव्यः ॥**

**( तत्त्वालोकः )** ( यद्येवम् ) तर्हि ( अत्र ) स प्रतिषेध इत्यन्वयमभिप्रेत्याह—स तर्हीति ।

( आक्षेपबाधकभाष्यम् )

**न वक्तव्यः । सर्वनामसंज्ञायां प्रकृतः प्रतिषेध इहानुवर्तिष्यते ॥**

**( तत्त्वालोकः ) सर्वनामेति**—यत इत्यादिः । **प्रतिषेधः**—उपसर्जनस्य नेति प्रतिषेधः ।

( आक्षेपसाधकभाष्यम् )

**स वै तत्र प्रत्याख्यायते ।**

**( तत्त्वालोकः ) वै** इति निश्चये । **प्रत्याख्यायते इति**—अतः तत्र प्रकृतस्य तस्येहानुवर्तनासम्भवाद् अत्र स प्रतिषेधो वक्तव्य इति शेषः ।

( समाधानभाष्यम् )

**यथा स तत्र प्रत्याख्यायते । इहापि तथा शक्यः प्रत्याख्यातुम् ॥**

**( तत्त्वालोकः ) इहापीति**—तथेहापि (स प्रतिषेधः) इत्यन्वयः

( अनुयोगभाष्यम् )

**कथं च स तत्र प्रत्याख्यायते ? ।**

**( तत्त्वालोकः ) चो** वाक्यालङ्कारे । एवमग्रेऽपि ।

( समाधानभाष्यम् )

**महतीयं संज्ञा क्रियत इति ॥ इयमपि च महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥**

**कुत एतत् ? ॥**

**लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करण एतत्प्रयोजनम्—अन्वर्था संज्ञा यथा विज्ञायेत—न व्येतीत्यव्ययमिति ॥**

**( तत्त्वालोकः ) इति**—इत्यनेन प्रकारेण । **इयमपि च**—अव्ययमित्यपि च । अवशिष्टग्रन्थव्याख्या सर्वादिसूत्रभाष्यव्याख्यानत एवावगन्तव्या ।

( अनुयोगभाष्यम् )

**क पुनर्न व्येति ? ॥**

**( प्रदीपः ) क पुनरिति ।** श्लोके सप्तमीनिर्देशात् प्रश्नेऽपि सप्तमी निर्दिष्टा ॥

**( उद्द्योतः ) प्रश्नेऽपीति ।** व्येतीत्यस्य विविधं प्रकारं गच्छ-

नीत्यर्थः । क्वेत्यस्य क्विविषये इत्यर्थ इति भावः ॥ अन्यथोत्तरानुसारेण कानिति प्रश्न उचितः । अत एवाग्रे उक्तम् **एतानर्थान् केचिद्वियन्तीत्यादि** । विपूर्वस्येणो रूपम् ॥

**( तत्त्वालोकः )** भाष्ये पुनरिति वाक्यालङ्कारे ।

प्रदीपे—**श्लोके**—'सदृशं त्रिषु लिङ्गेष्वि'त्यादिश्लोके । **प्रश्नेऽपीति**—'कर्मणोऽविकरणत्वविवक्षये'ति शेषः ।

उद्द्योते—**व्येतीत्यस्येति**—तथाचेत्यादिः । तत्रैवात्रापि वैषयिकमेवाधिकरणत्वमित्याह—**क्वेत्यस्येति** । चेति शेषः । **अन्यथा**—कर्मणोऽविकरणत्वविवक्षाऽभावे । **अत एव**-कर्माकांक्षाया अन्तरङ्गत्वादेव ।

### ( समाधानभाष्यम् )

**स्त्रीपुन्नपुंसकानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति । ये न वियन्ति तदव्ययम् ॥**

**'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥**
**तद्धितश्चासर्वविभक्तिः ॥ ३७ ॥**

**( प्रदीपः ) सदृशमिति ।** लिङ्गविशेषप्रतिपादने सामर्थ्याभावात् । **विभक्तिष्विति** । कारकेषु । तत्र यानि साधनप्रधानान्यव्ययानि तेषां शक्त्यन्तरानावेशात् क्रियाप्रधानानां च शक्तिसंबन्धाभावात् सर्वासु च विभक्तिष्वित्युक्तम् ॥ **वचनेष्विति** । एकत्वादिषु । अव्ययीभावस्य शक्तिलिङ्गविशेषयोगेऽपि वचनादव्ययत्वम् । यथा स्वत्यादीनां कर्मप्रवचनीयसंज्ञा । तत्र यान्यसत्त्वभूतार्थाभिधायीन्यव्ययानि तेषां लिङ्गादिभिरयोगः, तेषां द्रव्यधर्मत्वात् । सत्त्ववाचिनामपि शब्दशक्तिस्वाभाव्यात्तदयोगो यथा युष्मदस्मदोर्लिङ्गायोगः ॥ केचित्तु लिङ्गादिविशेषेणायोगात् तत्सामान्येन तु योगमव्ययानामाहुः ॥ तदयुक्तम् । लिङ्गादिसामान्यसद्भावे प्रमाणाभावात् । **यन्न व्येतीति** । नानात्वं न गच्छतीति, सत्त्वधर्मान्न गृह्णातीत्यर्थः ॥

**( उद्द्योतः ) ये न वियन्ति** एतानर्थान्ये न वियन्ति विविधप्रकारप्रापकान्न प्राप्नुवन्ति **तत्** तद्वाचकमव्ययमित्यर्थः । द्वित्वादेरर्थधर्मत्वादिति बोध्यम् । ननु विभक्तिवचनशब्दयोः प्रत्ययपरत्वेऽन्यतरवैयर्थ्यमत आह—**कारकेष्विति** । विषयसप्तम्य एताः । सादृश्यं तत्तल्लिङ्गाद्यभावानुयोगित्वेन ॥ नन्वेवं स्वरादिवाच्यानां कर्मत्वादियोगसत्त्वेन सकलकारकविषये न कारकाभावानुयोगित्वरूपं सादृश्यमत आह—**तत्र यानीति** । **साधनं**—शक्तिः । तादृशान्युच्चैरादीनि ॥ तेषु च कारकशक्त्यन्तरायोगात्सर्वकारकविषये कारकाभावानुयोगित्वमस्त्येवेत्यर्थः ॥ **शक्तिः**—कर्मत्वादिः ॥ **वचनादिति** । **अव्ययीभावश्चेति** वचनादित्यर्थः । **सङ्ख्याभावादिति** वार्थः । मशकार्थ इत्यादौ अभावस्य फलस्त्ववत् अत्र तदभावस्य कारणत्वमिति बोध्यम् ॥ **यथेति** । क्रियाहेतुकसंबन्धविशेषद्योतका हि अन्वर्थबलात्कर्मप्रवचनीयाः । स्वत्योस्तत्त्वाभावेऽपि क्रियापदसंनिधौ क्रियागतविशेषद्योतकयोरपि यथा संज्ञा, तथा प्रकृतेऽव्ययीभावादीनामित्यर्थः ॥ **सत्त्ववाचिनामपीति** । स्वरादीनामिति शेषः ॥ **तद्योगः** । लिङ्गसङ्ख्याऽयोग इत्यर्थः ॥ **सदृश**मित्यत्रोक्तं सादृश्यं निरूपयितुम्—**यन्न व्येतीत्यादि** । अत्रापि लिङ्गेष्वित्याद्यावृत्त्या संबध्यते ॥ **नानात्वमिति** । एतेषु यन्न व्येति एतद्विषये यन्नानात्वं न प्राप्नोति तदव्ययमित्यर्थः ॥ क्वचित्तु **नाना न गच्छती**ति पाठः, तदा एतद्विषयमनेकप्रकारं न प्राप्नोतीत्यर्थः ॥ ३७ ॥

**( तत्त्वालोकः )** प्रदीपे—**कारकेष्विति**—कारकादिष्वित्यर्थः । तथा च आदिना सम्बन्धसंग्रहः । प्रसिद्धत्वात्तु कारकमात्रोक्तिः । **तत्र**—तेषां मध्ये । **प्रधानानामिति**—अव्ययानामिति शेषः । व्यवस्थामाह—**तत्रेति** । तेषां मध्य इत्यर्थः । **आदिना** संख्याकारकयोः परिग्रहः । **तेषाम्**—लिङ्गादीनाम् । **तत्सामान्येन**—लिङ्गादिसामान्येन । **लिङ्गादीति**—तत्रेत्यादिः ।

उद्द्योते—**प्रापकानिति**—एतानर्थान् ये इति शेषः । ननु लिङ्गस्य शब्दधर्मत्वस्यापि सत्त्वात् साक्षाच्छब्दपरत्वेन कुतो न व्याख्येत्यत आह—**द्वित्वादेरिति** । अत्रादिः प्रकारवाची ॥ **आदिना**—कारकस्यापि परिग्रहः । **एवम्**—उक्तरूपेण सादृश्यस्वीकारे । **तेषु च**—तेषु तु । प्रथमसूत्रे वचनशब्देन संख्याग्रहणादाह—**संख्याभावादिति** । संख्याया अभावादित्यर्थः । ननु तस्या अभावस्य न ततो लाभ इत्यत आह—**मशकार्थ इति** । धूम इति शेषः । **अभावस्य**—मशकाभावस्य । **अत्र**—संख्याभावादव्ययत्वमित्यत्र । **तदभावस्य**—संख्याऽभावस्य । **हिर्वाक्यालङ्कारे** । **संज्ञा**—कर्मप्रवचनीयसंज्ञा । कारकयोगसत्त्वादाह—**लिङ्गसंख्येति** । साकांक्षत्वादाह—**अत्रापीति** । अत एवाह—**एतेष्विति** । लिङ्गादिष्वित्यर्थः । अत्र सप्तमी वैषयिकीत्याह—**एतद्विषय इति** ।

### ( ३४ अव्ययसंज्ञासूत्रम् ॥ १ । १ । ६ आ. ११ ॥ )

# कृन्मेजन्तः ॥ १ । १ । ३८ ॥

### ( मेजन्तपदे विशेषणताविचाराधिकरणम् )

### ( आक्षेपभाष्यम् )

**कथमिदं विज्ञायते—कृद्यो मान्त इति, आहोस्वित्—कृदन्तं यन् मान्तमिति ॥**

**किं चातः ? ॥**

**यदि विज्ञायते—कृद्यो मान्त इति, 'कारयांचकार हारयांचकारे'त्यत्र न प्राप्नोति ॥**

**अथ विज्ञायते—कृदन्तं यन्मान्तमिति, 'प्रतामौ प्रतामः' अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) कृन्मेजन्तः ॥ ३८ ॥ कथमिति** । किं मेजन्तग्रहणेन कृद्विशेष्यते पूर्वं, पश्चात्तु कृता तदन्तविधिः, आहोस्वित्पूर्वं कृता तदन्तविधिः, पश्चात्तु कृदन्तं मेजन्तग्रहणेन विशेष्यत इति प्रश्नः ॥ **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वचनात् तदन्तविधिः । अथवान्वर्थसंज्ञाश्रयणात्प्रत्ययग्रहणे संज्ञाविधावप्यत्र तदन्तविधिर्भवति । न हि केवलस्य प्रत्ययस्याप्रयोगार्हस्य नानागमनमनानागमनं वा संभवति ॥ **कारयांचकारेति** । लिडत्र कृत्, स च मान्तो न भवति ॥ **प्रतामाविति** । क्विपि लुप्ते प्रत्ययलक्षणेन कृदन्तमेतद्भवति । श्रुत्या च मान्तम् ॥

**( उद्द्योतः ) कृन्मेजन्तः ॥ ३८ ॥ किं मेजन्तेति** । कृतो मेजन्तस्य प्रत्ययमात्रस्य संज्ञा उत कृदन्तस्येति न शङ्कार्थः । **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति तदन्तविधेरित्याशयः ॥ **पश्चात्त्विति** । मेजन्तो यः कृत्तदन्तमव्ययमित्यर्थ इति भावः ॥ संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधादाह—**प्रयोजनमिति** ॥ ननु तद्वचनमप्रत्ययांशे चरितार्थमत आह—**अथवान्वर्थेति** । एवं चाव्ययत्वप्रयोजकस्य महासंज्ञालब्धार्थस्य केवलप्रत्ययेष्वभावात्तदन्तविधिरिति भावः ॥ अनयैव रीत्या सर्वादिगणे डतरडतमाभ्यां तदन्तविधिर्बोध्यः । नाना-

गमननिवानानागमननमपि न संभवति, संभावितप्रतियोगिदेश एव तदभावबुद्धेः शब्देन जननात् । संभावितप्रतियोगितावच्छेदक एवा-ब्राह्मण इत्यादिना भेदबुद्धिवदित्याशयः ॥ **लिङत्र कृद्विति** । लिङ्-भावित्वाभावेनातिङिति न कृत्त्वप्रतिषेध इति भावः ॥ **प्रतामाविति** । तमेः क्विप् । **अनुनासिकस्येति** दीर्घः ॥ **छुस्या चेति** । तथा चाव्य-यत्वाल्लुक् स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—आक्षेप्ता पृच्छति—**कथमिति** । समा-धाता प्रतिपृच्छति—**किञ्चात इति** । अस्मात् प्रश्नात् किमभिप्रेतं भवत इत्यर्थः । आक्षेप्ता स्वाशयं प्रकाशयति—**यदीति** । **कारया-मिति**—तर्हीत्यादिः । **न प्राप्नोतीति**—मान्तस्य आमित्यस्य कार-यामित्यादेर्वा कृत्त्वाभावादिति भावः ॥ तथा च कारयामित्यादेः प्रत्य-यलक्षणेन कृदन्तत्वात् छुस्या च मान्तत्वात्तत्राव्ययत्वप्रसङ्गभावादाह—**प्रतामाविति** । तर्हीत्यादिः ।

प्रदीपे—**अन्वर्थसंज्ञेति**—न व्येति (न नाना गच्छति) इत्यव्ययमित्यन्वर्थसंज्ञेत्यर्थः । **हि**—यतः । **एतत्**—प्रतामावित्यादि ।

उद्द्योते—**अप्रत्ययांशे**—अव्ययसंज्ञाविधायकपञ्चसूत्र्युद्देश्यसमु-दायघटकाप्रत्ययांशे । **एवञ्च**—अन्वर्थसंज्ञाश्रयणे च । तत्साहचर्या-दप्यत्र तदन्तविधिरिति सूचयन्नाह—**अनयैवेति** । प्रकृते नानागमन-स्यैवोपयोगेन अनानागमनमधिकमित्यतः वाशब्दमिवार्थकमभ्युपेत्य तत्सङ्गमयति—**नानागमनमिवेति** । **सम्भावितेति**—अत्र बहुव्रीहिः, देशश्च शब्दस्वरूप एव । तत्राद्वद्वचरत्वनिराकरणायाह—**सम्भा-वितेति** । अत्रापि बहुव्रीहिः ।

**( समाधानभाष्यम् )**

**यथेच्छसि तथास्तु । अस्तु तावत्-कृञो मान्त इति ॥**

**( तत्त्वालोकः )** तदन्यतरनिर्णयाय प्रथमं तयोः प्रथमोपात्तपक्ष-मुपस्थापयति—**अस्त्विति** । **तावत्**—प्रथमम् ।

**( आक्षेपभाष्यम् )**

**कथं कारयांचकार हारयांचकारेति ? ॥**

**( तत्त्वालोकः ) कथमिति**—यद्येवम् तर्हीत्यादिः । **इतीति**—अत्राव्ययसंज्ञाया उपपत्तिरिति शेषः ।

**( प्रत्याक्षेपभाष्यम् )**

**किं पुनरत्राव्ययसंज्ञया प्रार्थ्यते ? ॥**

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**'अव्ययात्' इति लुग् यथा स्यादिति ॥**

**( प्रदीपः ) अव्ययादिति लुगिति** । ननु **हल्ङ्याब्भ्यादिलोपेन** सिद्धत्वात् किं लुका प्रयोजनम् ? यदा तर्ह्यनुप्रयोगवशाद् द्वित्वबहु-त्वावगतिः, तदास्ति द्विवचनबहुवचनोत्पत्तिरिति लुगेषितव्यः । अकच् तु न भवत्यपरिसमाप्तार्थत्वादज्ञातादिभिर्योगाभावाच्च ॥

**( उद्द्योतः ) द्विवचनेत्यादि** । ननु सङ्ख्याया अनुप्रयुज्यमा-नोत्तरतिङैवाभिव्यक्तत्वात्कथं द्विवचनादिप्रसङ्ग इति चेत् । उपलक्षण-**मिदम्** । सर्वैकवचनोत्पत्तिपक्षेऽमादिलुगर्थमिदमावश्यकमिति न दोषः । **अव्ययात् सुपो लुगि**ति ज्ञापकात्सर्वविभक्तिरिति पक्षे च ॥ अकजर्थं तर्ह्यामन्तस्याव्ययत्वमेष्टव्यमत आह—**अकस्त्विति** । **अपरि-समाप्तार्थत्वं** च सङ्ख्याकारकादिविषयकोत्थिताकाङ्क्षत्वम् । अतएवानु-प्रयोगः प्रार्थ्यते । स्वार्थे परिपूर्णस्यैव चार्थान्तरेण संबन्ध इति भावः ॥

(तत्त्वालोकः) प्रदीपे—**नन्विति**—दोषरिति शेषः । **किमिति**—तस्येति शेषः । **तर्हि**—लोः 'हल्ङ्यादि' लोपेन कारयाञ्चकारेत्यादेः सिद्धत्वे । **तदास्तीति**—आमन्तादिति शेषः । **लुगिति**—तयोरित्यादिः ।

उद्द्योते—शैवयोक्तं दूषयति—**नन्विति** । **इदमिति**—द्विवच-नादिप्रसञ्जनमित्यर्थः । अमादिप्रसञ्जस्यापीति शेषः । **इदम्**—आम-न्तस्याव्ययत्वम् । **अकजर्थमिति**—नन्वित्यादिः । **तर्हि**—उक्तफला-भावे । **अत एव**—आमन्तस्यानभिमतार्थत्वादेव । अज्ञातादिभि-र्योगाभावे हेतुमाह—**स्वार्थ इति** ।

**( समाधानबाधकभाष्यम् )**

**मा भूदेवम् । 'आमः' इत्येवं भविष्यति ॥**

**( तत्त्वालोकः ) एवम्**—अव्ययादिति लुक् । नन्वेवं कथ-मिष्टसिद्धिरित्यत आह—**आम इति** । **एवम्**—लुक् ।

**( समाधानसाधकभाष्यम् )**

**न सिध्यति । लिग्रहणं तत्रानुवर्तते ॥**

**( तत्त्वालोकः ) न सिद्ध्यतीति**—'आमः' इति लुगित्यादिः । यतः 'मन्त्रे घसह्वर'त्यत्र इति शेषः । **तत्र**—'आमः' इत्यत्र ।

**( समाधानबाधकभाष्यम् )**

**लिग्रहणं [ तत्र ] निवर्तिष्यते ॥**

**( समाधानसाधकभाष्यम् )**

**यदि निवर्तते, प्रत्ययमात्रस्य लुक् प्राप्नोति ॥**

**(तत्त्वालोकः) निवर्त्तते इति**—लिग्रहणं तत्रेत्यादिः । तर्हि तेनेति शेषः ।

**( समाधानबाधकभाष्यम् )**

**इष्यते च प्रत्ययमात्रस्य । आतश्चेष्यते । एवं ह्याह-'कृञ्चानुप्रयुज्यते लिटि' इति । यदि च प्रत्ययमात्रस्य लुग्भवति तत एतदुपपन्नं भवति ॥**

( प्रदीपः ) **इष्यते चेति** । पूर्वोक्ताद् हेतोस्तरबाद्यनुत्पादादलु-प्रयोग एव तरबाद्युत्पत्तिः, समाप्तार्थस्य प्रकर्षादियोगादित्यर्थः ॥ तत्रैवार्थे ज्ञापकमाह—**आतश्चेति** । तत्र ह्युक्तम्—**व्यवहितनिवृ-त्त्यर्थं चेति** ॥

**( उद्द्योतः )** ननु तरबाद्यनुत्पत्तावामन्तार्थे प्रकर्षादिप्रतीतिः कथमत आह—**अनुप्रयोग एवेति** । तदुत्पन्नतरपैवैतद्गतप्रकर्षप्रतीतिः कारकादिवदित्यर्थः ॥ भाष्ये लुक्पदमदर्शनमात्रपरमिति भावः ॥

**(तत्त्वालोकः)** भाष्ये—**प्रत्ययमात्रस्येति**—तेनेत्यादिः । लुगिति शेषः । वक्ष्यमाणहेतुमभिप्रेत्याह—**आतश्चेति** । इतश्चेत्यर्थः । **हि**—यतः । **प्रत्ययेति**—तेनेत्यादिः । **एतत्**—अनुप्रशब्दबलेन—आम-न्तादव्यवधानेनानुप्रयोगविधायकं 'कृञ्चानुप्रे' त्येतत् ।

प्रदीपे—नन्वेवं तेन तरबादेरपि लुक् स्यादित्यत आह—**पूर्वो-क्ताद्धेतोरिति** । अपरिसमाप्तार्थस्यामन्तस्य प्रकर्षादियोगाभावादित्यर्थः । आमन्तादिति शेषः । **अनुप्रयोग एवेति**—अनुप्रयोगादेवेत्यर्थः । अत्रापादानस्याधिकरणत्वविवक्षया सप्तमीविधानात् । अत एवोद्द्योते वक्ष्यति—'तदुत्पन्ने'ति । **समाप्तार्थस्येति**—तस्येति शेषः । **हि**—यतः । **चेन** विपरीतनिवृत्त्यर्थत्वसमुच्चयः । यदि आमन्तात्तरबादि स्यात्तर्हि तदसङ्गतिः स्पष्टैव ।

उद्द्योते—**नन्विति**—आमन्तादिति शेषः । **कारकादीति**—तदु

त्तरप्रत्ययेनेत्यादिः। नन्वेवं लुक्पदघटितभाष्यविरोध इत्यत आह— **लुक्पदमिति।**

**( पक्षान्तरभाष्यम् )**

**अथवा पुनरस्तु—कृदन्तं यन्मान्तमिति।**

**( आक्षेपभाष्यम् )**

**कथं प्रतामौ—प्रताम इति ?।**

**( तत्त्वालोकः ) कथमिति**। यद्येवम् तर्हीत्यादिः। **इतीति—** अत्राव्ययसंज्ञाया अनतिप्रसङ्ग इति शेषः।

**( समाधानभाष्यम् )**

**आचार्यप्रवृत्तिर्ज्ञापयति—'न प्रत्ययलक्षणेनाव्ययसंज्ञा भवति' इति। यदयं प्रशान्शब्दं स्वरादिषु पठति॥**

**( प्रदीपः ) प्रशान्शब्दमिति**। तस्य **मो नो धातोरि**रिति नत्वस्यासिद्धत्वात्सिद्धमव्ययत्वमिति भावः। तुल्यजातीयस्य धातोर्नियमेन व्यावृत्तिः क्रियते इति कारयांचकारेति भवत्येव मान्तस्याव्ययसंज्ञा। **शान तेजन** इत्यस्य तु प्रशानिति रूपं न भवति, तस्य क्विबन्तस्य प्रयोगादर्शनात्। लावयतेर्लौरित्यस्यापि न भवति, अस्मादेव ज्ञापकाल्लाक्षणिकत्वाद्वौकारस्य॥

**( उद्द्योतः )** धातुत्वेन तुल्यजातीयतेत्याह—**धातोरिति॥ तस्य क्विबन्तस्येति**। अत्र चेदमेव भाष्यं मानम्। प्रशामाविति तु शान्तिमद्वाचकस्य। शान्त्यर्थकस्यैव च गणे पाठः, तस्यैव स्वभावेन लिङ्गाद्यभावात्। वस्तुतो गणे मान्तपाठः। प्रयोगे एव तु नत्वम्। यथा स्वरादीनां गणे रेफान्तपाठः प्रयोगे तु विसर्ग इति भाष्याशयः॥ **अस्मादेवेति**। धातुमात्रापेक्षं ज्ञापकमिति भावः। **लाक्षणिकत्वाद्वेति**। वर्णग्रहणेऽपि तत्प्रवृत्तेरिति तात्पर्यम्॥

**( तत्त्वालोकः )** भाष्ये—**प्रत्ययलक्षणेनेति—**कृदन्तत्वमुपजीव्येति शेषः।

प्रदीपे—ननु तस्य नान्तत्वे कथमव्ययत्वं सिद्धमित्यत आह— **तस्येति**। नन्वेवं कारयामित्यादेरपि अव्ययसंज्ञा नोपपद्येतेत्यत आह—**तुल्यजातीयस्येति**। **इत्यस्यापीति**—अव्ययसंज्ञेति शेषः। **अस्मादेव ज्ञापकात्—**स्वरादिषु प्रशान्-शब्दस्य पाठेन धातोः प्रत्ययलक्षणेन कृदन्तत्वमुपजीव्याव्ययसंज्ञा न भवतीति ज्ञापनात्। **लाक्षणिकत्वाद्वेति—**अत्र 'गौग्लौनौरि'त्यत्र नेदं सूत्रं प्रवर्त्तते, उणादीनामव्युत्पन्नत्वात्। व्युत्पत्तिपक्षेऽपि 'क्विरव्ययमि'त्युणादिसूत्रेण डौडोप्रत्ययान्ताश्च्व्यन्ता एवाव्ययमिति नियमस्य कृतत्वादि'ति शब्दकौस्तुभोक्तिरप्यनुसन्धेया।

उद्द्योते—**अत्र च—**शान तेजन इत्यस्य क्विबन्तस्य प्रयोगादर्शने च। **इदमेव भाष्यम्—**ज्ञापकत्ववर्णनपरं भाष्यमेव। अन्यथा तदसङ्गतिः स्पष्टैव॥ ननु प्रशान्-शब्दस्याव्ययत्वे कथं प्रशामावित्याद्युपपद्येतेत्यत आह-**प्रशामावितीति। च—**हि। सिंहावलोकनन्यायेनाह-**वस्तुत इति**। अत एव भाष्ये—'प्रशाम्-शब्दमि'त्येव पाठः। तथा च तस्य सम्भावनैव नेति तत्सत्त्वेऽपि न दोषः। **तत्प्रवृत्तेः—**लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तेः।

**( संनिपातपरिभाषाधिकरणम् )**

**( २३८ आक्षेपवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ कृन्मेजन्तश्चानिकारोकारप्रकृतिः ॥ * ॥**

**( भाष्यम् )**

**कृन्मेजन्तश्चानिकारोकारप्रकृतिरिति वक्तव्यम्। इह मा भूत्-आधये आधेः, चिकीर्षवे चिकीर्षोरिति॥**

**( प्रदीपः ) अनिकारोकारेति**। एच एतद्विशेषणं न मकारस्य, व्यवच्छेद्यासंभवात्॥ **आधय इति**। गुणे कृतेऽन्तरङ्गबहिरङ्गयो**रिति** न्यायादव्ययसंज्ञा स्यात्। न त्वयादयः॥ अन्तरङ्गत्वादेव च सुब्लुक् स्यात्। परिभाषान्तरप्रयोजनकथनार्थं **लक्षणप्रतिपदोक्तयो**रित्येतदनाश्रितम्। लाक्षणिकं ह्यनुमेयं, प्रतिपदोक्तं तु प्रत्यक्षमिति तस्यैव ग्रहणं न्याय्यम्॥

**( उद्द्योतः )** भाष्येऽ**निकारोकारेति**। यत्त्वन्तग्रहणान्नित्ययोगबहुव्रीहिणोपदेशे एजन्तमित्यर्थादत्र न दोष इति। तन्न। परिभाषयैव सिद्धेऽन्तग्रहणं न कार्यमिति तदाशयात्॥ **गुणे कृत इति**। तत्र कृते सुबनपेक्षत्वेनान्तरङ्गाऽव्ययसंज्ञा। सुप्संबन्ध्यजपेक्षत्वादयादयो बहिरङ्गाः। **अन्तरङ्गत्वादेवेति**। ननु वर्णमात्रापेक्षयाऽयादय एवान्तरङ्गाः॥ एवं तर्हि अन्तरङ्गत्वेन बाधकत्वं लक्ष्यते। **तेनान्तरङ्गानपी**ति न्यायेन लुगिति बोध्यम्। तेन च लुक इव तत्प्रयोजकानामपि प्राबल्यबोधनेनानेनैव गुणेऽयादीन्बाधित्वाव्ययत्वं बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**इहेति—**यथाऽव्ययसंज्ञेति शेषः।

प्रदीपे—**अन्तरङ्गबहिरङ्गेति—**इदम् 'अन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदि'त्याकारकम् परिभाषान्तरम्। **परिभाषान्तरेति—**सन्निपातपरिभाषेत्यर्थः। **लाक्षणिकमिति—**अन्यथेत्यादिः। **तस्यैवेति—** प्रतिपदोक्तस्यैवेत्यर्थः। लक्षणप्रतिपदोक्तपरिभाषयेत्यादिः। तथा च तत्राव्ययसंज्ञाया अतिप्रसङ्ग एव नेत्याशयः।

उद्द्योते—**अत्र—**आधये इत्यादौ। **परिभाषयैव—**सन्निपातपरिभाषयैव। **तदाशयात्—**वार्त्तिककृदाशयात्। **तत्र—**गुणे। **एवेन** सुब्लुको व्यवच्छेदः। **एवम्—**यद्येवम्। **अनेनैव—**'अन्तरङ्गानपी'ति न्यायेनैव। तथाच—'अन्तरङ्गबहिरङ्गे'ति परिभाषान्तराश्रयणेन तत्राव्ययत्वापादनं न युक्तमिति भावः।

**( २३९ आक्षेपवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ अनन्यप्रकृतिरिति वा ॥ * ॥**

**( भाष्यम् )**

**अथवा अनन्यप्रकृतिः कृदव्ययसंज्ञो भवतीति वक्तव्यम्॥**

**( आक्षेपभाष्यम् )**

**किं पुनरत्र ज्यायः ?॥**

**( तत्त्वालोकः ) अत्र—**अनयोः वचनयोः।

**( समाधानभाष्यम् )**

**अनन्यप्रकृतिरिति वचनमेव ज्यायः। इदमपि सिद्धं भवति—कुम्भकारेभ्यो नगरकारेभ्य इति।**

**( तत्त्वालोकः ) इदमपीति—**यतः 'कृन्मेजन्तश्चानिकारोकारप्रकृति'रिति वचनेनासिद्धमित्यादिः। अनेन वचनेनेति शेषः।

**( तृतीयाक्षेपभाष्यम् )**

**तत्तर्हि वक्तव्यम् ?॥**

**( २४० सिद्धान्तिसमाधानवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ न वा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥ * ॥**

**( भाष्यम् )**

**न वा वक्तव्यम्।**

**किं कारणम् ? ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्येषा परिभाषा कर्तव्या ॥**

**( प्रदीपः ) संनिपातलक्षण इति ।** संनिपातः संश्लेषस्तन्निमित्तो यो विधिः स तद्विघातस्यानिमित्तम् । तं संनिपातं यो विहन्ति तस्येत्यर्थः ॥

**( उद्द्योतः ) तद्विघातस्येति** कर्मण्यणित्याह—**तमिति ।** न चानया लुको बाधेऽपि संज्ञाबाधे नानाभावः । साक्षात्परम्परया वा तद्विघातकमात्रस्यानया प्रतिबन्धात् । अत एवोपादास्तेत्यत्र किन्त्वं न । अन्यथाऽनया साक्षादेत्त्विपयसन्निपातविघातक**विङति** चेति निषेधाप्रवृत्तिः स्यात् । कित्त्वं तु स्यादेव । तत्फलं तु सन्नियोगशिष्टेत्वसिद्धिरेव । एवं चोपादेस्तेति रूपं स्यात् । अत्र हि किदिति न कार्यातिदेशः । इत्त्वकाले तत्कार्यासंभवात् । तस्माद्व्यपदेशातिदेश एव । तस्मात्सन्निपातविघातकशास्त्रप्रवृत्तिनिमित्तातिदेशवत्संज्ञाया अप्यनेनाप्रवृत्तिः । अकजाद्यर्थसंज्ञा तु न । अन्तरङ्गायां तस्यां बहिरङ्गगुणादेरसिद्धत्वात् ॥

**( तत्त्वालोकः )** उद्द्योते—**अनया**—सन्निपातपरिभाषया । **संज्ञेति**—अव्ययसंज्ञायाः सन्निपातविघातकत्वाभावादिति भावः । अत्र मानमाह—**अत एवेति ।** अनया साक्षात्परम्परया वा सन्निपातविघातकमात्रस्य प्रतिबन्धादेवेत्यर्थः । **अन्यथा**—अनया साक्षात्तद्विघातकमात्रस्य प्रतिबन्धे । **तत्फलं तु**—कित्त्वफलं हि । **रूपम्**—अनिष्टरूपम् । ननु किदिति कार्यातिदेश इति कथमित्त्वसिद्धिः, इत्त्वस्य कित्त्वाकार्यत्वादित्यत आह—**अत्रेति ।** 'स्थाघ्वोरिच्चे'त्यत्रेत्यर्थः । **हि**—यतः । **तत्कार्येति**—कित्त्वकार्येत्यर्थः । **तस्मादिति**—स इति शेषः । तथाच—उक्तमनिष्टरूपं स्यादेव । उपसंहरति—**तस्मादिति ।** सन्निपातविघातक 'क्ङिति चे'ति शास्त्रप्रवृत्तौ निमित्तभूतकित्त्वातिदेशाभाववदित्यर्थः । **अनेन**—प्रकृतसूत्रेण । नन्वेवमपि—अकजाद्यर्थसंज्ञाऽस्तु, तत्र तद्विघातकत्वस्य तस्याभावादित्यत आह—**अकजेति । तस्याम्**—संज्ञायाम् ।

**( आक्षेपभाष्यम् )**

**कः पुनरत्र विशेषः ? । एषा वा परिभाषा क्रियेत, अनन्यप्रकृतिरिति वोच्येत ? ॥**

**( समाधानभाष्यम् )**

**अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ? ।**

**( प्रयोजनप्रश्नभाष्यम् )**

**कानि पुनस्तानि ? ।**

**( २४१ प्रयोजनवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ प्रयोजनं ह्रस्वत्वं तुग्विधेर्ग्रामणिकुलम् ॥ * ॥**

**( भाष्यम् )**

**[ह्रस्वत्वं तुग्विधेरनिमित्तम् । क । ग्रामणिकुलम् ।]**

**ग्रामणिकुलं सेनानिकुलमित्यत्र ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( प्रदीपः ) ग्रामणिकुलमिति । इको ह्रस्व** इति पूर्वोत्तरपदसन्निपातनिमित्तं ह्रस्वत्वं तुको न निमित्तम् । तुकि हि सति पूर्वोत्तरपदयोरानन्तर्यविघातः । यदा तु ह्रस्वत्वमस्य तुगागमो न तदन्तस्य, अवयवावयविनः समुदायावयवत्वेन भवति तदैतत्प्रयोजनं न त्वन्यथा ॥

**( उद्द्योतः ) पूर्वोत्तरेति ।** अधिकृतेनोत्तरपदेन पूर्वपदस्याक्षेपादिति भावः । **अवयवेति ।** तथाऽभ्युपगमेऽभिमानः । वस्तुतस्तु ह्रस्वत्वं पूर्वपदस्योत्तरपदनिमित्तकं विधानं पूर्वपदस्यैवान्त्यसन्निपातविघातकेति तदाशयः । एवं वृत्रहभिरित्यत्र नान्तस्य स्वादिसन्निपातविघातः । नान्तस्य स्वादिसन्निपातनिमित्तकत्वमनिमित्तको हि नलोप इति । लोके पाण्याद्यवयवाङ्गुल्यादेर्मनुष्यावयवत्वव्यवहारात् कैयटोक्तं चिन्त्यम् । किं च भवितेत्यादौ तात्तवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य **दीधीवेवीटामिति** निषेधो व्यर्थः स्यात् । न च ह्रस्वावयवत्वे तुको **यदागमा** इति न्यायेनेग्ग्रहणेन तुग्विशिष्टस्य ग्रहणात् सन्निपातविघातः । **आनेमुगिति** ज्ञापकेन तदनङ्गीकारात् ॥ एतेनावयवावयवस्य समुदायावयवत्वे अवयवावयवेऽपि अवयविनां समवेतत्वापत्तौ घटस्यापि परमाणुषु समवेतत्वेनाप्रत्यक्षसमवेततया वायुवृक्षसंयोगवदप्रत्यक्षत्वं स्यादिति परास्तम् । भूयोवयवसन्निकर्षस्यैव फलबलात् कारणत्वेनाक्षतेः । संयोगप्रत्यक्षे तु यावदाश्रयप्रत्यक्षमेव हेतुः फलबलादिति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**प्रयोजनमिति ।** ग्रामणिकुलमित्यादौ ह्रस्वत्वं तुग्विधेरनिमित्तमिति सन्निपातपरिभाषाप्रयोजनमित्यर्थः । **अनिमित्तमिति**—इति प्रकृतपरिभाषाप्रयोजनमिति शेषः । एवमग्रेऽपि सर्वत्र ।

उद्द्योते—पूर्वपदस्याशाब्दत्वादाह—**अधिकृतेनेति । तथा**—अवयवावयवस्य समुदायावयवत्वेन ॥ एवमग्रेऽपीत्याह—**एवमिति । इतीति**—बोध्यमिति शेषः । 'अभिमानः' इति सूचितामरुचिमाह—**लोक इति ।** एवम्—अवयवावयवे समुदायावयवत्वस्य लोकसिद्धत्वमुक्त्वा शास्त्रसिद्धत्वमाह—**किञ्चेति ।** अवयवावयवस्य समुदायावयवत्वाभावे सतीति शेषः । **तदनङ्गीकारादिति**—आगमिग्रहणेन आगमविशिष्टग्रहणस्यानङ्गीकारादित्यर्थः । अन्यथा तत्रापि-अकग्रहणेन मुग्विशिष्टस्य ग्रहणे दीर्घापत्तेः तद्वैयर्थ्यमापद्येतेति भावः । दण्डयुक्तं खण्डयति—**एतेनेति ।** अस्यार्थमाह—**भूयोऽवयवेति । अवयविप्रत्यक्षे-इत्यादिः ।** तत्र दृष्टान्तवैषम्यमाह—**संयोगेति ।**

**( प्रयोजननिराकरणभाष्यम् )**

**नैतदस्ति प्रयोजनम् । बहिरङ्गं ह्रस्वत्वम् अन्तरङ्गस्तुक् । 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

**( प्रदीपः ) बहिरङ्गमिति ।** द्विपदाश्रयत्वात् । यदपि **ह्रस्वो नपुंसके प्रातिपदिकस्येति** ह्रस्वत्वम्, तदपि अर्थाश्रयत्वाद्बहिरङ्गम्, तुक् तु वर्णाश्रयत्वादन्तरङ्गः । यदि तु **सन्निपातलक्षण** इत्याश्रीयते तदा ग्रामणिच्छत्रमित्यत्रापि तुग् स्यात् । ह्रस्वत्वतुगागमयोस्त्वत्र साम्यादन्तरङ्गत्वं बहिरङ्गत्वं नास्तीति छलक्षणस्तुक् सिद्धो भवति ॥

**( उद्द्योतः )** असिद्धत्वेन समाधानं चावश्यकमित्याह—**यदपीति ॥ अर्थाश्रयत्वादिति ।** इदं **श्रयादेशे सन्तस्य प्रतिषेधो वक्तव्य** इति **स्थानिवत्सूत्रस्थेन** वार्तिकेन तत्प्रत्याख्यानपरेण भाष्येण च विरुद्धम् । प्रातिपदिकरूपसमुदायाश्रयत्वादिति **वक्तुं** यु-

क्तम् । तदेवाह—**वर्णाश्रयत्वादिति** । इयं च वहिरङ्गत्वेन सिद्धिर्नाजानन्तर्य इति निषेधमनाश्रित्य ॥ कुलं ग्रामणि इत्यत्र नपुंसकह्रस्वत्वे सन्निपातपरिभाषयैव न तुक् । प्रातिपदिकस्याजन्तत्वसंनिपातेन जातह्रस्वस्य तदविघातकत्वात् । एतेन परनिमित्तकत्वेन कृत्वपित्त्वज्ञानसापेक्षत्वेन च तुगपि इत्यन्तेनान इति नपुंसकह्रस्वत्वे तुग् दुर्वार इत्यपास्तमिति अनुपदमेव वक्ष्यामः ॥ तुक्ति संनिपातपरिभाषाश्रयणे दोषमप्याह—**यदि त्विति** । अत्रापि वर्णमात्राश्रयत्वेन तुगन्तरङ्गः पूर्वपदोत्तरपदाश्रयो ह्रस्वो वहिरङ्गस्तद्दोषेष्वस्यागणनाच्च । तस्मादत्र तुग्न भवत्येवेत्यन्ये ॥

**( तत्त्वालोकः )** भाष्ये—**वहिरङ्गमिति**—यत इत्यादिः । **अन्तरङ्ग इति**—चेति शेषः ।

प्रदीपे—**अत्र**—ग्रामणिच्छत्रमित्यत्र । **बहिरङ्गत्वम्**—वहिरङ्गत्वञ्च । **छलक्षणः**—छपरकः ।

उद्द्योते—सन्निपातपरिभाषया तत्रासिद्धेराह—**असिद्धत्वेनेति** । कैयटोक्तं खण्डयति—**इदमिति** । अर्थकृतवहिरङ्गत्वाश्रयणमित्यर्थः । तिसृणामित्यत्र प्राप्तयोः तिसृभावत्रयादेशयोः परत्वात्तिसृभावे पुनः प्राप्तस्य त्रयादेशस्य वारणायोत्थापितेनेति शेषः । **तत्प्रत्याख्यानेति**—सकृद्गतिन्यायेन पुनः त्रयादेशो नेति रीत्येत्यादिः । **विरुद्धमिति**—यतः तथा सति अन्तरङ्गे त्रयादेशे कर्तव्ये वहिरङ्गस्य तिसृभावस्यासिद्धत्वात् स्वन्तस्य त्रयादेशाप्राप्तेः तस्य वार्त्तिकेन सकृद्गतिन्यायेन च वारणं न सङ्गच्छते इति भावः । कैयटोक्तं प्रातिपदिकेत्याद्युपलक्षणत्वेन सङ्गमयति—**प्रातिपदिकेति** । **तदेवाह**—तदेव ध्वनयन्नाह । **इयम्**—भाष्याद्युक्ता । तदाश्रयणे तु सन्निपातपरिभाषैव शरणमिति ध्वनयन् '**इको** ह्रस्व' इति ह्रस्वाभावाय व्युत्क्रमेणाह—**कुलमिति** । **एतेन**—सन्निपातपरिभाषया तुग्वारणेन ॥ इदमपि खण्डयति—**अत्रापीति** । ग्रामणिच्छत्रमित्यत्रापीत्यर्थः । नन्वनित्यत्वात्सन्निपातपरिभाषाया अत्राप्रवृत्तिरित्यत आह—**तद्दोषेष्विति** । सन्निपातपरिभाषादोषेष्वित्यर्थः । नाजानन्तर्य इति निषेधाश्रयणे तु सन्निपातपरिभाषयैव तुग्वारणमित्याह—**तस्मादिति** ।

**( २४२ प्रयोजनवार्तिकम् ॥ ५ ॥**

## ॥ * ॥ नलोपो वृत्रहभिः ॥ * ॥

**( भाष्यम् )**

**[ नलोपस्तुग्विधेरनिमित्तम् । क । वृत्रहभिः । ]**

**वृत्रहभिर्भ्रूणहभिरित्यत्र नलोपे कृते 'ह्रस्वस्य पिति कृति तुक्' प्राप्नोति ।**

**'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( उद्द्योतः )** **वृत्रहभिरि**त्यादौ पदसंज्ञाद्वारा नलोपस्य सन्निपातलक्षणत्वम् ।

**( तत्त्वालोकः )** भाष्ये—**नलोपस्तुग्विधेरिति**—नान्तभिस्संनिपातनिमित्तको नलोपः तादृशसन्निपातविघातकस्य तुकोऽनिमित्तमित्यर्थः । **प्राप्नोतीति**—इति तुगित्यादिः ।

उद्द्योते—साक्षात् नलोपस्य सन्निपातलक्षणत्वाभावादाह—**वृत्रहभिरिति** । **लक्षणत्वमिति**—बोध्यमिति शेषः ।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । असिद्धो नलोपः, तस्यासिद्धत्वान्न भविष्यति ॥**

**( प्रदीपः )** **असिद्धो नलोप इति । नलोपः सुप्स्वरेष्वसिद्धं बहिरङ्ग**मिति वा ।

**( उद्द्योतः ) असिद्धमिति ।** सुब्निरपेक्षतुगपेक्षया पदत्वद्वारा तदपेक्षनलोपो वहिरङ्ग इति भावः ।

**( तत्त्वालोकः )** भाष्ये—**असिद्ध इति**—यत इत्यादिः । **तस्य**—नलोपस्य । **नेति**—तुगिति शेषः ।

प्रदीपे—कृति तुग्ग्रहणस्य प्रत्याख्यानादाह—**असिद्धमिति** ।

उद्द्योते—**तदपेक्षेति**—सुबपेक्षेत्यर्थः । केचित्तु-संज्ञाकृतवहिरङ्गत्वस्यानाश्रयणेन नलोपस्यासिद्धत्वासम्भवादियमेकदेश्युक्तिरिति वदन्ति ।

**( २४३ प्रयोजनवार्तिकम् ॥ ६ ॥ )**

## ॥ * ॥ उदुपधत्वमकित्त्वस्य निकुचिते ॥ * ॥

**( भाष्यम् )**

**उदुपधत्वमकित्त्वस्यानिमित्तम् ॥**

**क ? ।**

**निकुचिते । निकुचितमित्यत्र नलोपे कृते 'उदुपधाद्भावादिकर्मणोरन्यतरस्याम्' इत्यकित्त्वं प्राप्नोति ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( प्रदीपः ) निकुचित इति ।** कुञ्चेर्भावे क्तप्रत्ययः । **अनिदितामिति** नलोपः । तत्र कित्त्वनिमित्तमुदुपधत्व**मुदुपधा**दित्यकित्त्वस्यानिमित्तमिति गुणो न भवति ॥

**( तत्त्वालोकः )** प्रदीपे-**कित्त्वनिमित्तमिति**—अत्र बहुव्रीहिः ।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । अस्त्वत्राकित्त्वम्, 'न धातुलोप आर्धधातुके' इति प्रतिषेधो भविष्यति ॥**

**( तत्त्वालोकः ) अस्त्वत्राकित्त्वमिति**—यत इत्यादिः । तथापीति शेषः । **प्रतिषेध इति**—गुणस्येत्यादिः ।

**( २४४ प्रयोजनवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ नाभावो यञि दीर्घत्वस्यामुना ॥ * ॥

**( भाष्यम् )**

**नाभावो यञि दीर्घत्वस्यानिमित्तम् ॥**

**क ? ॥**

**अमुना । नाभावे कृते 'अतो दीर्घो यञि' 'सुपि च' इति दीर्घत्वं प्राप्नोति ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( प्रदीपः ) अमुनेति । न मुने** इत्यस्यायमर्थः—ने कर्तव्ये मुभावः सिद्धो भवति, न तु ने परतो यञीति दीर्घत्वं प्राप्नोति । तत्र

सुभावस्यासिद्धत्वादकारान्तत्वाद्दीर्घप्रसङ्गः । तस्मिन् कृते **अदसोऽसे**रिति दीर्घस्य दीर्घ ऊकारः प्राप्नोति । ततश्चामूनेति स्यात् । उकारसन्निपातनिमित्तस्तु नाभावो दीर्घत्वस्याऽनिमित्तमिति सिद्धमनुनेति ॥

**( उद्द्योतः ) यद्दीर्घत्वं प्राप्नोतीत्यस्य तत्रापि सुभावः सिद्ध इत्यर्थ** इति शेषः । **तत्रे**ति । अस्य च **एवं चे**त्यादिः ॥ क्वचित्तु **प्राप्नोति तत्र** । तथा च **तत्रेति** पाठः ॥ **असिद्धत्वादिति** । शास्त्रासिद्धत्वादिति भावः । **कृतेऽदसोऽसेरिति** ॥ ननु मुत्वासिद्ध्या उकारे एवाकारबुद्धौ **सुपिचे**त्यन्तरतमे दीर्घे आकारे नस्य स्वत एव सत्त्वादात्परत्वाभावेन कथमनेन दीर्घोकारप्रवृत्तिरिति चेन्न । लोकसिद्ध**संनियोगशिष्ट**न्यायेन मुत्वस्यापि निवृत्तेर्दात्परत्वसत्त्वात् । नचाचः **परस्मि**न्निति स्थानिवत्त्वाद्दीर्घस्य नान्यतरापाय इति वाच्यम् । **पूर्वत्रासिद्धीये न स्थानिवदि**ति निषेधात् । **लक्ष्ये लक्षणस्येति** न्यायस्तु न, लक्ष्यभेदादित्यभिमानः ॥ केचित्तु अमाना अदाना इति वापत्तिरित्याहुः ॥ **दीर्घत्वस्येति** । उकारस्वरूपविनाशकस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—'सुपि चे'त्यत्र 'अतो दीर्घो यञी'त्यस्यानुवृत्तिरिति बोधनायाह—**अतो दीर्घ इति** ।

प्रदीपे—**ने**—नाभावे । एवमग्रेऽपि । 'नासिद्धः' इति शाब्दार्थस्य फलितार्थमाह—**सिद्ध इति** । अन्यथा मुत्वस्यासिद्धत्वान्नाभाव एव प्रथमं न स्यादित्याशयः । **तत्र**—दीर्घे ।

उद्द्योते—ननु कार्यासिद्धत्वात् स्थानिनोऽनिवृत्त्या उकारनिवृत्त्यभावेऽकाराभावात् कथमकारान्तत्वमित्यत आह—**शास्त्रेति** । **लोकेति**—शिबिकावहनादि-समुदायकार्ये इति भावः । **मुत्वस्यापि**—उत्ववन्मस्यापि । **दीर्घस्य**—आकारस्य । **अन्यतरेति**—मकारोकारान्यतरेत्यर्थः । एवञ्च न सन्नियोगशिष्टेति परिभाषाप्रवृत्तिरित्याशयः । 'अदसोऽसेरि'त्यत्र कार्यार्थमुपस्थितायाः सन्नियोगशिष्टेति परिभाषायास्त्रिपादीस्थत्वादाह—**पूर्वत्रेति** । ननु लक्ष्ये लक्षणस्येति न्यायेन पुनर्न 'अदसोऽसेरि'त्यस्य प्रवृत्तिरित्यत आह—**लक्ष्ये इति** । 'अभिमानः' इत्यनेन-विकारान्यानुपूर्व्या अभेदेन लक्ष्यभेदाभावात् 'लक्ष्ये' इति न्यायेन पुनर्न तस्य प्रवृत्तिरित्यरुचेः सूचनादाह—**केचिदिति** । सन्नियोगेति न्यायस्यानाश्रयणे आह—**अमानेति** । तस्याश्रयणेत्वाह—**अदानेति** । **इति**—इत्यस्य ।

## ( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—'न मुटादेशे' इति ॥**

**( प्रदीपः ) न मुटादेश इति** । अनेकविभक्त्यन्तस्तत्र समास आश्रितः—टाया आदेशः टायामादेश इति ॥

**( उद्द्योतः )** नन्वेवमपि टादेश एव सिद्धत्वं स्यादत आह—**अनेकेति** । अनेकविभक्त्यन्तपूर्वपद इत्यर्थः । संबन्धसामान्यषष्ठ्या समास इति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**नास्ति प्रयोजनमिति**—यत इति शेषः । एवमग्रेऽपि ।

प्रदीपे—**तत्र**—टादेश इत्यत्र । अनतिप्रसङ्गाय तस्य स्वरूपे निर्दिशति—**टाया इति । टायामिति**—तथाच टादेशपदेन-स्थानिवत्त्वेन टात्वमापन्ने नाशब्दे परे विधास्यमानदीर्घादेशस्यापि ग्रहणात् तत्र कर्तव्ये मुभावस्यासिद्धत्वाभावान्न दीर्घप्रसङ्ग इत्याशयः ।

उद्द्योते—यथाश्रुतासङ्गतेराह—**अनेकेति** । ननु सकृदुच्चारितत्वात्केऽनेकविभक्त्यन्तपूर्वपदत्वमपि वाचितमित्यत आह—**सम्बन्धेति** ।

( २४५ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ आत्त्वं कित्त्वस्योपादास्त ॥ * ॥

( भाष्यम् )

**आत्त्वं कित्त्वस्यानिमित्तम् ॥**

**क ? ॥**

**उपादास्तास्य स्वरः शिक्षकस्येति । आत्त्वे कृते 'स्थाघ्वोरिच्च' इतीत्त्वं प्राप्नोति ।**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( प्रदीपः ) उपादास्तेति** । एज्विषय आत्त्वविधानादकित्त्वसन्निपातनिमित्तमात्त्वं **स्थाघ्वोरिच्चेति** कित्त्वस्यानिमित्तम् । कित्त्वसन्नियुक्तं चेत्त्वमिति कित्त्वाभावे न भवति ॥

**( उद्द्योतः ) कित्त्वस्येति** ॥ भाष्येऽपि **स्थाघ्वोरिच्चेति कित्त्वं प्राप्नोती**ति पाठः । **इत्त्व**मिति पाठे कित्त्वसहितमित्त्वमित्यर्थः ॥ कित्त्ववारणेऽपीत्त्वं स्यादत आह—**कित्त्वेति** ॥

**( तत्त्वालोकः )** प्रदीपे—'मीनातिमिनोतिदीङां ल्यपि चे'त्यस्य 'एषामात्त्वं स्यात् ल्यपि, चकारादशित्येज्निमित्ते' इत्यर्थमनुसृत्याह—**एज्विषय इति । अकित्त्वसन्निपातनिमित्तमिति**—अत्र बहुव्रीहिः । **न भवतीति**—इत्त्वमपीत्यादिः ।

उद्द्योते—कैयटाभिप्रायमाह—**भाष्येऽपीति । कित्त्ववारणेऽपीति**—नन्वित्यादिः । अकित्त्वसन्निपाताविघातकत्वादिति शेषः ।

## ( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । उक्तमेतत्—दीङः प्रतिषेधः स्थाघ्वोरित्त्वे इति ॥**

**( तत्त्वालोकः ) दीङः प्रतिषेध इति**—अस्य वार्तिकस्य 'स्थाघ्वोरिति कित्त्वसहितेत्त्वे कर्तव्ये दीङो घुसंज्ञा ने'त्यर्थः । केचित्तु—अवश्याश्रयणीय-**सन्निपात**—परिभाषयैव-उपादास्तेत्यादौ कित्त्वसहितेत्त्वं निवार्य 'दीङः प्रतिषेधः' इति वार्तिकस्य दार्ढ्यबदाबिति सूत्रस्थभाष्ये प्रत्याख्यानकरणादियमेकदेश्युक्तिरिति वदन्ति ।

( २४६ प्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ तिसृचतसृत्वं ङीब्विधेः ॥ * ॥

( भाष्यम् )

**तिसृचतसृत्वं ङीब्विधेरनिमित्तम् ।**

**क ? ।**

**तिस्रस्तिष्ठन्तीति चतस्रस्तिष्ठन्तीति । तिसृचतसृभावे कृते 'ऋन्नेभ्यो ङीप्' इति ङीप् प्राप्नोति । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

**( तत्त्वालोकः ) तिसृचतसृत्वमिति** वार्तिके 'तिसृचतसृत्वं ङीब्विधेस्तिसः' इति पाठो युक्तः, पूर्वोत्तरसंवादादिति बोध्यम् ।

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—न तिसृचतसृभावे कृते ङीब् भवतीति । यदयं 'न तिसृचतसृ' नामि दीर्घत्वस्य प्रतिषेधं शास्ति ॥**

( प्रदीपः ) **यदयमिति ।** ननु समस्तार्थेनैतत्स्यात् प्रियतिसृणां ब्राह्मणानामिति । अत्र ह्यङ्गं पुंसि वर्तते इति नास्ति ङीपः प्राप्तिरिति केचित् ॥ तदयुक्तम् । न हि ङीब्विधानेऽङ्गाधिकारोऽस्ति । तत्राऽवयवस्य स्त्रीत्ववृत्तित्वान्ङीपः प्राप्तिः केन वार्येत इति ज्ञापकमेव ॥ ज्ञापकादेव च सिद्धत्वात् स्वस्रादिष्वनयोः पाठो न कर्तव्यो भवति ॥

( उद्द्योतः ) **नास्ति ङीप इति ।** यत्त्वन्तरङ्गत्वात्समासात्पूर्वमेव ङीबिति ॥ तन्न । **अन्तरङ्गानपीति** न्यायेनान्तर्वर्तिविभक्त्याश्रयतिस्रादेशस्याप्रवृत्तेः । **ज्ञापकमेवेति ।** ङ्यन्ते तु नास्य प्रवृत्तिर्विभक्तौ **लिङ्ग**विशिष्टाग्रहणात् । नन्वेवं स्वस्रादिपाठो व्यर्थः स्यादत आह—**ज्ञापकादेवेति ।** एवं चैतज्ज्ञापकपरभाष्यप्रामाण्यात्स पाठोऽप्रामाणिक इति भावः ॥

( तत्त्वालोकः ) भाष्ये—**अयम्**—आचार्यः । **न तिसृचतस्रिति**—इत्यनेनेति शेषः ।

प्रदीपे—**एतत्**—'न तिसृचतस्रि'त्यनेन नामि दीर्घस्य प्रतिषेधनम् । **तत्र**—समस्ते । **अनयोः**—तिसृचतस्रोः ।

उद्द्योते—दण्डयुक्तिं निराकरोति—**यत्त्विति । तिस्रेति**—तिस्रादीत्यर्थः । ननु 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमि'ति परिभाषया ङ्यन्तेऽपि 'न तिसृचतसृ' इत्यस्य प्रवृत्तिरिति नास्य ज्ञापकता समुपपद्यते इत्यत आह—**ङ्यन्ते त्विति । अस्य**—'न तिसृचतस्रि'त्यस्य । **एवम्**—ज्ञापकेन ङीपो वारणे । **स्वस्रादिपाठः**—स्वस्रादिषु तिसृचतस्रोः पाठः । **एवञ्च**—ज्ञापकेन सिद्धौ च । **स पाठः**—स्वस्रादिषु तिसृचतस्रोः पाठः ।

( प्रयोजनभाष्यम् )

**इमानि तर्हि प्रयोजनानि—'शतानि सहस्राणि' नुमि कृते 'ष्णान्ता षट्' इति षट्संज्ञा प्राप्नोति । 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

( प्रदीपः ) **शतानीति ।** विभक्तिसन्निपातनिमित्तो नुमागमः षट्संज्ञाहेतुकस्य विभक्तिलुको न निमित्तम् । **ष्णान्ता षडित्यन्त**ग्रहणमौपदेशिकप्रतिपत्त्यर्थमित्यत्र न भविष्यतीति चेत् । संख्यासंप्रत्ययार्थं बहुव्रीह्यर्थं तत् स्यादित्यदोषः ॥

( उद्द्योतः ) **विभक्तिलुक इति ।** तन्निमित्तसंज्ञायाश्चेत्यपि बोध्यम् ॥ **अन्तग्रहणमिति ।** तत्सामर्थ्यादिति मन्यते ॥ सामर्थ्यमसिद्धमिति परिहारः—**संख्येति ।** बहुव्रीहेः फलं संख्यासंप्रत्ययः ॥

( तत्त्वालोकः ) भाष्ये—कार्यकालपक्ष-यथोद्देशपक्षद्वयसाधारणतयाऽऽह—**षट्संज्ञेति ।**

प्रदीपे—कार्यकालपक्षे संज्ञाशास्त्रस्य पृथग् वाक्यार्थबोधाभावादाह—**षट्संज्ञाहेतुकस्य विभक्तिलुक इति । अत्रेति**—शतानीत्यादावित्यर्थः । षट्संज्ञेति शेषः । **संख्यासम्प्रत्ययेति**—संख्यासम्प्रत्ययार्थं यो बहुव्रीहिस्तदर्थमित्यर्थः । **तत्**—अन्तग्रहणम् ।

उद्द्योते—यथोद्देशपक्षे संज्ञाशास्त्रस्य पृथग्वाक्यार्थबोधादाह—**तन्निमित्तेति ।** विभक्तिलुको निमित्तं या षट्संज्ञा तस्याश्चेत्यर्थः । **तत्सामर्थ्यात्**—अन्तग्रहणसामर्थ्यात् । बहुव्रीहौ सति स्त्रीलिङ्गनिर्देशात् संख्याया एव ग्रहणमित्याशयेनाह—**बहुव्रीहेरिति ।**

( प्रयोजनभाष्यम् )

**शकटौ पद्धतौ । अत्त्वे कृते 'अत' इति टाप् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

( प्रदीपः ) **शकटाविति ।** विभक्तिसंनिपातकृतमत्त्वं यदि टापो निमित्तं स्याद् आनन्तर्यं विहन्येत । शास्त्रीये च कार्येऽन्तादिवद्भावो नानन्तर्ये लौकिके । टापि च सति शकटायामिति स्यात् ॥ **अच्च घेरि**ति तपरकरणेनाप्यत्र टाब् निवर्तयितुं शक्यते । इदुतोर्हि स्थाने मात्रिक एवाकारो भविष्यति भाव्यमानत्वाद्वा सवर्णस्याकारो ग्राहको न भविष्यतीति लक्षणान्तरेणापि प्राप्तस्य दीर्घत्वस्य निराकरणार्थं तपरकरणं संपद्यते ॥

( उद्द्योतः ) **विभक्तीति ।** घेः परस्य ङेरौद्, घेरन्तादेशश्चाकार इति सूत्रार्थात् ङ्यादेशौत्वसन्नियोगेन विधीयमानमत्वमङ्गप्रत्ययसन्निपातकृतमित्यर्थः ॥ नन्वेकादेशेऽन्तवद्भावान्न टाब् व्यवधायकोऽत आह—**शास्त्रीये चेति ॥** ननु टापि वृद्ध्येकादेशे शकटाविति सिद्ध्येदत आह—**टापि चेति ॥** वृद्धेः परत्वादाङ्गत्वाच्च याडामाविति भावः ॥ **संपद्यत इति ।** तपरत्वाद्धि सवर्णदीर्घत्वं न स्यात् । टाप्तु स्यादेव । किं च शकटावित्यादौ वृद्धिरप्येवं न स्यादिति चिन्त्यमिदम् ॥

( तत्त्वालोकः ) भाष्ये—'अजाद्यतष्टाबि'ति सूत्रघटकं निर्दिशति—**अत इति ।**

प्रदीपे—**स्यादिति**—तर्हि—अङ्गप्रत्यययोरिति शेषः । **स्यात्**—आपद्येत । **अत्र**—शकटावित्यादौ । ननु तपरकरणाभावेऽकारेण सवर्णग्रहणादाकारः स्यादित्यत आह—**इदुतोरिति । मात्रिक इति**—'स्थानेऽन्तरतमः' इत्यस्योपस्थित्येति भावः । भाव्यमानेन सवर्णानां ग्रहणमभ्युपेत्येदं समाधानम्, वस्तुतस्तु तदेव नेत्याह—**भाव्यमानत्वाद्वेति । लक्षणान्तरेणेति**—'अकः सवर्णे दीर्घः' इत्यनेनेत्यर्थः । टापि सतीत्यादिः । तथाच तपरकरणेनैव टाबभावे, टापि सति दीर्घाभावे वा वृद्धौ शकटावित्यादिसिद्धेः नेदं प्रकृतपरिभाषाप्रयोजनमित्याशयः ।

उद्द्योते—ननु विभक्तौ परे अत्त्वस्याविधानात् कथं विभक्तिसन्निपातकृतमत्त्वमित्यत आह—**घेः परस्येति । एकादेशे**—दीर्घैकादेशे । **टापि**—टापि सत्यपि । **सिद्ध्येत्**—सिद्ध्येदेव । व्युत्क्रमेणाह—**याडामाविति ।** आम्याटावित्यर्थः । टाब्दीर्घान्यतरबाधेनैव तपरकरणस्योपपत्तेः तेन तदुभयबाधस्यायुक्तत्वादाह- **तपरत्वादिति ।** तपरकरणेन दीर्घस्यापि बाधो न युक्त इत्याह—**किञ्चेति ।** सिद्धान्ते इति शेषः । **एवम्**—सवर्णदीर्घत्ववत् । तथाच शकटावित्याद्यसिद्धेः, टापा व्यवधानेन-अङ्गप्रत्यययोरानन्तर्यविघाताच्च टाबभावार्थं प्रकृतपरिभाषैव शरणमिति भावः । तथाच तपरकरणं मुखसुखार्थमेव ॥

( प्रयोजनभाष्यम् )

**इयेष उवोष । गुणे कृते 'इजादेश्च गुरुमतोऽनृच्छः' इत्याम् प्राप्नोति ॥**

**'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इति न दोषो भवति ॥**

( प्रदीपः ) इयेषेति । आमि सति लुक् स्यादिति प्रकृतिप्रत्ययसंनिपातस्य विघातः स्यात्' उपविदेति विकल्प ओषांचक्रतुः ऊषतुरित्यादौ स कार्यः इन्धुवोपेति नित्य आम् प्रसज्येत । प्रतिपदविधेस्तु बलवत्त्वात्परत्वाच्चात्रापि विकल्पेनैव भाव्यमित्यनुदाहरणमेतत् । गुरुमत इति नित्ययोगे मतुबाश्रयणादपि चास्योदाहरणत्वाभावः प्रतिपादयितुम् ।

( उद्द्योतः ) लुक् स्यादितीति । लुगभावेऽपि शकटावितिवद्धातुसंनिपातेन गुणो जातस्तदानन्तर्यविघातस्य सन्निपातकथनस्योपयोगश्चिन्त्यः । ननूपविदे आम्विधानादुवोषेत्यसङ्गतमत आह—उषविदेति । तत्र न द्विर्वचनात्प्राग् गुणमन्तरमिति भावः ॥ प्रतिपदविधेरिति । क्वचिद्गुणे क्वचिद्द्विर्वचनादेशे गुणस्य इजादेरित्येतत्प्राप्तमिति भावः ॥ परत्वादिति । तदुक्तस्य ऊषतुरित्यस्यावकाशत्वमभ्युपगम्येदमुच्यते ॥ उवोषेति कवर्गद्वितीयान्तो वा भाष्ये पाठः ॥ उषेर्विकल्पेन पक्षे आमभावेऽपि कृतद्वित्वाद् उवोषो दुर्वार एवाम् । रूपे चास्यैव विशेष उवोषाञ्चकारेति ॥ उषेस्त्वामि ओषांचकारेति परे ॥ नित्ययोग इति । इजादेर्गुरोरित्युक्तावपि अनृच्छ इति प्रतिषेधादिजादेर्गुरुमत इत्यर्थलाभे मतुब्ग्रहणादिति भावः ॥ परे त्वेवं सत्यनृच्छ इत्यस्यानर्थक्यापत्तिः । तुगुत्पत्तेः प्राग् गुरुमत्त्वाभावाद् । उम्भादीनां गुरुमतामाननापत्तेश्च । तेषामाशीर्लिङि गुरुमत्त्वाभावादिति भाष्याशयमाहुः ॥

(तत्त्वालोकः) प्रदीपे—**लुगिति**—'आमः' इति लिट इत्यादिः । **इतीति**—इत्यतोऽपीत्यर्थः । तत्रापिना लुगभावसमुच्चयः । **विकल्पः**—आम्विकल्पविधिः । **अत्रापि**—उवोषेत्यत्रापि । **विकल्पेनैव**—'उषविदे'ति विकल्पेनैवामा । **एतत्**—उवोषेत्येतत् । **अत्र**—उवोषेत्यत्र ।

उद्द्योते—**अपिना** लुक्समुच्चयः । **आम्विधानादुवोषेतीति**—आम्विकल्पविधानसामर्थ्यादुवोषेत्युदाहरणमित्यर्थः । **तत्रेति**—ऊषतुरित्यादावित्यर्थः । तत्र यदि द्विर्वचनानन्तरं गुरुमत्त्वान्नित्य आम् स्यात्तर्हि विकल्पाम्विधिवैयर्थ्यम् । उवोषेत्यत्र तु 'द्विर्वचनेऽची'ति स्थानिवत्त्वनिषेधकमिति पक्षे द्वित्वात्पूर्वमपि गुणेन गुरुमत्त्वादाम्विकल्पं बाधित्वा नित्य आम् स्यादिति भावः । अपवादत्वमेव प्रतिपदविधित्वम्, नत्वन्यादृशमित्याह—**क्वचिदिति । भाव इति**—तथा च 'येन नाप्राप्ति' न्यायेन 'उषविदे'ति 'इजादेरि'त्यस्य बाधकमित्याशयः । **तदुक्तस्य**—उवोषेत्युदाहरणवादिनोक्तस्य । **अवकाशत्वम्**—'उषविदे'त्यवकाशत्वम् । **इदम्**—परत्वादिति । वस्तुतस्तु—प्रतिपदविधेः बलवत्त्वादित्येव न्याय्यमित्याशयः । भाष्यं समर्थयते—**उवोखेतीति ।** तथापि यथाश्रुतमेव युक्तमित्याह—**उषेर्विकल्पेनेति ।** आमीति शेषः । 'द्विर्वचनेऽची'ति-आदेशनिषेधकमिति पक्षे आह—**कृतद्वित्वादिति । आम्**—नित्य आम् । आम्विकल्पविधिवैयर्थ्यन्तु नेत्याह—**रूपे चेति । उवोषामिति**—उवोष आमीत्यादिः । एवञ्च यौगपद्याभावात् 'येन नाप्राप्ति'न्यायस्यात्राप्रवृत्तिरित्याशयः । गुर्वन्तादित्याद्यर्थनिराकरणायाह—**अनृच्छ इति ।** कैयटोक्तं खण्डयति—**परेत्विति । एवं सति**—गुरुमत इत्यत्र नित्ययोगे मतुप्याश्रिते । **तुगुत्पत्तेरिति**—ऋच्छ इत्यत्रेत्यादिः । **गुरुमतामिति**—अत्र सम्बन्धित्वविवक्षया षष्ठी । तथाच तत्र नित्ययोगे मतुबाश्रयणं न युक्तमित्यभिप्रायः ॥

( २४७ दूषणवार्तिकम् ॥ १० ॥)

**॥ * ॥ तस्य दोषो वर्णाश्रयः प्रत्ययो वर्णविचालस्य ॥ * ॥**

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषो—वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात् ॥**

**क ? ॥**

**'अत इञ्' दाक्षिः प्लाक्षिः ॥**

( प्रदीपः ) दाक्षिरिति । प्रयोगे व्यवस्थितस्यैवैकारस्यान्वाख्यानमनेन क्रियत इति संनिपातलक्षणत्वं प्रत्ययस्य संभाव्यते ॥

( उद्द्योतः ) नन्विञ्प्रत्ययो नोभयाधिष्ठानसम्बन्धलक्षणसन्निपाताश्रय इत्यत आह—**प्रयोगे इति ॥ अन्वाख्यानं** साधुत्वेन ॥ **प्रत्ययस्य** साधुत्वावच्छिन्नस्य ॥

(तत्त्वालोकः ) भाष्ये—**एतस्य**—'सन्निपाते'ति परिभाषारूपस्य । **दोषः**—अनिष्टापत्तिः । **वर्णविचालस्य**—वर्णनाशस्य । तथाच—दाक्षिरित्यादौ—**अवर्णाश्रय** इञ्—**प्रत्यये** परे 'यस्येति चे'ति—**अवर्णलोपो** न स्यादिति भावः ।

प्रदीपे—**अनेन**—'अत इञि'त्यनेन ।

उद्द्योते—केन रूपेणेति जिज्ञासायामाह—**साधुत्वेनेति ।** अत एव यथाश्रुतासङ्गतेराह—**साधुत्वेति ।**

( दूषणबाधकभाष्यम् )

**न प्रत्ययः संनिपातलक्षणः ।**

( प्रदीपः ) न प्रत्यय इति । कल्पितप्रकृतिप्रत्ययविभागेनान्वाख्यानात्प्रकृतेरविद्यमान एव प्रत्यय उत्पाद्यत इत्याशयः ॥

( उद्द्योतः ) अविद्यमान एवेति । मन्दमध्यानां तथैव प्रतीतेः । साधुत्वान्वाख्यानेऽपि साधुत्वस्य सन्निपातनिमित्तकत्वं न प्रत्ययस्येति भावः ॥

(तत्त्वालोकः) भाष्ये—**न प्रत्यय इति**—नैष दोषः, यत इत्यादिः ।

प्रदीपे—**अन्वाख्यानादिति**—साधुत्वान्वाख्यानमपेक्ष्येत्यर्थः । ल्यब्लोपे पञ्चमीविधानात् ॥ **उत्पाद्यते इति**—इत्येव न्याय्यमिति शेषः ।

उद्द्योते—अस्यासिद्धान्तत्वादाह—**मन्दमध्यानामिति ।** अत्र व्यक्त्यपेक्षया बहुवचनम् । तस्यासिद्धान्तत्वादेव सिद्धान्तेनाप्याह—**साधुत्वेति ।**

( दूषणसाधकभाष्यम् )

**अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् ॥**

( प्रदीपः ) अङ्गसंज्ञेति । सत्यामङ्गसंज्ञायामकारलोप इति स्यादानन्तर्यविघातः । तत्र **वर्णविचालस्यानिमित्तं स्यादिति** अङ्गसंज्ञाद्वारेणेत्यर्थः । अत्र केचिद्वर्णाश्रय इति व्याचक्षते । तेषामात्रेयाद्यप्युदाहरणम् ॥ अन्ये **त्ववर्णाश्रय** इत्यकारप्रश्लेषमाहुः ॥

( उद्द्योतः ) सत्यामिति । यस्मादित्यस्य प्रत्ययविधावुद्देश्यतावच्छेदकावच्छिन्नादित्यर्थेऽवर्णान्तादिञि तदङ्गसंज्ञमिति सूत्रार्थ इति भावः ॥ यद्यङ्गसंज्ञाऽनिमित्तम्, कथं तर्हि वार्तिके प्रत्यय इत्युक्तमत आह—**तत्रेति ॥ आत्रेये 'इतश्चानिञ' इति** ढक् ॥

परे तु वार्तिकस्यायमाशयः—निमित्तनिमित्तिनोः संबन्धवद् विशेषणविशेष्ययोः संबन्धोऽपि सन्निपातः । एवं च प्रातिपदिकस्यादन्तत्वसंबन्धनिमित्तः प्रत्ययस्तद्विघातस्यानिमित्तमिति ॥ इममाशयमजानानः शङ्कते—**न प्रत्यय इति ॥** एकदेश्युत्तरयति—**अङ्गसंज्ञा तर्हीति ।** युक्तं चैतत् । उपजीव्यविरोधस्यान्याय्यत्वं हि एतन्न्यायमूलम् । तस्य च प्रकृतेऽपि सत्त्वात् । अतिप्रसङ्गस्तु त्वयैव मयाप्यनित्यत्वेन सुशकवारणः । अत एव ग्रामणि कुलमित्यादौ नपुंसक-

ह्रस्वत्वे तुङ्न । उपजीव्यस्य प्रातिपदिकाङ्गत्वसंबन्धस्य विघातात् ॥ बहिरङ्गपरिभाषयाऽसिद्धत्वं तु न । तस्य तत्त्वाभावात् । शैवो गाङ्गेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वं नास्त्या वर्णाश्चेत्यंशस्य वार्तिके वैयर्थ्यापत्तेरेत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**अङ्गसंज्ञेति**—यद्येवम् **तर्हि अङ्गसंज्ञा** वर्णविचालस्य **निमित्तं स्यादि**त्यन्वयः ।

प्रदीपे—**सत्यामिति**—प्रकृतेः प्रत्ययसन्निपातेनेत्यादिः । **आनन्तर्यैति**—प्रकृतिप्रत्ययानन्तर्येणेत्यर्थः । **तत्र**—वार्तिके । तत्र 'प्रत्ययः' इत्यन्तम् प्रत्ययनिमित्तकाङ्गसंज्ञापरमिति भाष्यमिदं तदर्थपरमित्यभिप्रेत्य तदाशयमाह—**अङ्गसंज्ञेति ।**

उद्द्योते—नन्वङ्गसंज्ञायाः सामान्यरूपेणैव उभयसन्निपातलक्षणत्वम्, न तु विशेषरूपेणेत्यत आह—**यस्मादिति ।** अस्माल्लक्ष्यसंस्कारकवाक्योपप्लवत्र इत्याह—**अवर्णान्तादिति । इत्युक्तम्**—इत्यन्तमुक्तम् । तथा च वार्तिकासङ्गतमिदं भाष्यमिति भावः । कैयटाद्युक्तिं निराकरोति—**परेस्त्विति ।** उक्तमाशयं समर्थयते—**युक्तञ्चेति । एतन्न्यायेति**—सन्निपातन्यायस्य मूलमित्यर्थः । **तस्य**—उपजीव्यविरोधस्य । नन्वेवमन्यत्रातिप्रसङ्ग इत्यत आह—**अतिप्रसङ्गस्त्विति । अनित्यत्वेनेति**—सन्निपातपरिभाषाया इत्यादिः । **अत एव**—सन्निपातन्यायस्यानित्यत्वादेव । **उपजीव्यस्य**-नपुंसकह्रस्वत्वोपजीव्यस्य । **विघातादिति**—नुकेत्यादिः । **असिद्धत्वमिति**—नपुंसकह्रस्वत्वस्येत्यादिः । **तस्य तत्त्वाभावादिति**—अर्थकृतबहिरङ्गत्वस्यानाश्रयणेन नपुंसकह्रस्वत्वस्य बहिरङ्गत्वाभावादित्यर्थः । प्रकृतभाष्योपरि दोषमाह—**शैव इति । लोपनिमित्तत्वानापत्त्या**—लोपनिमित्तत्वाभावापत्त्या । प्रत्यय इत्यस्यावश्यकत्वादाह—**अंशस्येति ।**

( २४८ दूषणवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ आत्वं पुग्विधेः क्नापयति ॥ * ॥

( भाष्यम् )

**आत्वं पुग्विधेरनिमित्तं स्यात् ॥**

**क ? ॥**

**क्नापयतीति ॥**

**( प्रदीपः ) क्नापयतीति ।** णिचि वृद्धौ कृतायामात्वं पुको न निमित्तं स्याद्, अङ्गस्य य आकारस्तस्य पुगित्यवयवभक्तं पुकं मत्वा दोषोपन्यासः ॥

**( उद्द्योतः )** आत्वम् 'क्रीङ्जीनां णा'विति ॥ स्वाङ्गस्याव्यवधायकत्वादाह—**आकार इति ।** श्रुतत्वात्तस्यैव पुगिति भावः ॥

परे तु पुकोऽङ्गभक्तत्वेऽपि न क्षतिः, यादृशयोः सन्निपातः पुङ्निमित्तं तस्य विघातसत्त्वाद् । **यदागमा** इति परिभाषया तद्ग्रहणेन ग्रहणेऽपि सत्रश्रुतसन्निपातस्याभावात् ॥ अत्र चेदमेव भाष्यं मानम् । **ह्रस्वत्वं तुग्विधे**रित्यादि च । सिद्धान्ताशयस्तु परिभाषाया अनित्यत्वमाश्रयणीयमित्येवेत्याहुः ॥

**( तत्त्वालोकः )** उद्द्योते—**स्वाङ्गस्येति**—अङ्गस्य पुकीत्यादिः। **तस्यैव**—आकारस्यैव । कैयटोक्तं खण्डयति—**परे त्विति । तस्येति**—पुकेति शेषः । ननु यदागमा इति न्यायेन-अङ्गग्रहणेन पुकोऽपि ग्रहणान्न तेन तस्य विघात इत्यत आह—**यदेति । तद्ग्रहणेनेति**—अङ्गग्रहणेनेत्यर्थः । पुकोपीति शेषः। ननु सत्रश्रुतसन्निपातग्रहणे किं मानमित्यत आह—**अत्र चेति ।** नन्विदं भाष्यं कैयटरीत्याऽपि सुयोज्यमित्यत आह—**ह्रस्वत्वमिति ।** प्रागुक्तमित्यादिः । कैयटोक्तं 'मत्वा' पदनुचितम्—अङ्गभक्तत्वस्य सिद्धान्तं खण्डयन्नाह—**सिद्धान्तेति ।** 'प्रतिविधेयं दोषेष्वि'ति वक्ष्यमाणेत्यर्थः । **परिभाषायाः**—सन्निपातपरिभाषायाः । **एवेन**—अङ्गभक्तत्वसिद्धान्तव्यवच्छेदः ॥

( २४९ दूषणवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ पुग् ह्रस्वत्वस्यादीदपत् ॥ * ॥

( भाष्यम् )

**पुग् ह्रस्वत्वस्यानिमित्तं स्यात् ॥**

**क ? ॥**

**अदीदपदिति ॥**

**( उद्द्योतः )** भाष्ये—**पुग् ह्रस्वत्वस्येति ।** ण्याकारसन्निपातनिमित्तः पुग् । ह्रस्वे हि तद्विघातः स्पष्ट एव । न च ह्रस्वस्य चङ्परणिनिमित्तस्य णिनिमित्तपुगपेक्षया बहिरङ्गत्वेनासिद्धत्वात्कथमत्र परिभाषाप्राप्तिः । एतद्भाष्यप्रामाण्येनानयाऽसिद्धस्यापि निवृत्तिस्वीकारात् । किं च तया शास्त्रीयकार्येऽसिद्धत्वेऽपि लौकिके संन्निपातेऽसिद्धत्वाभावात् ॥

**( तत्त्वालोकः )** उद्द्योते-**परिभाषेति**—सन्निपातपरिभाषेत्यर्थः। असिद्धत्वमभ्युपेत्य प्रथममाह—**एतद्भाष्येति । अनया**—सन्निपातपरिभाषया । अथ वस्तुतोऽसिद्धत्वमेव नेत्याह—**किञ्चेति । तया**—बहिरङ्गपरिभाषया ।

( २५० दूषणवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ त्यदाद्यकारष्टाब्विधेः ॥ * ॥

( भाष्यम् )

**त्यदाद्यकारष्टाब्विधेरनिमित्तं स्यात् ॥**

**क ? ॥**

**या सेति ॥**

**( तत्त्वालोकः )—त्यदेति** वार्तिके 'त्यदाद्यकारष्टाब्विधेर्या' इति पाठः प्रतिभाति, पूर्वोत्तरसंवादात् ॥ अङ्गविभक्तिसन्निपातनिमित्तोऽकारः । टापि च तद्विघात इत्यत आह—**अनिमित्तमिति ।**

( २५१ दूषणवार्तिकम् ॥ १४ ॥ )

## ॥*॥ इड्विधिराकारलोपस्य ययिवान् ॥*॥

( भाष्यम् )

**इड्विधिराकारलोपस्यानिमित्तं स्यात् ॥**

**क ? ॥**

**ययिवान् तस्थिवानिति ॥**

**( उद्द्योतः )** भाष्ये—**इड्विधिरिति । वस्वेकाजादित्या**कारान्तलक्षण इट् । नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—इण्निमित्तस्य वस्वाकारान्तसन्निपातस्याकारलोपे विघातादाह—**अनिमित्तमिति ।**

उद्द्योते—नन्वस्य नियमशास्त्रत्वाद्विधिरित्युक्तिर्न युक्तेत्यत आह—**नियमशास्त्राणामिति । च—हि ।**

( २५२ दूषणवार्तिकम् ॥ १५ ॥ )

**॥ * ॥ मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य ॥ * ॥**

( भाष्यम् )

**मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्याऽनिमित्तं स्यात्॥ क ? ॥**

**अग्निमान् वायुमान् परमवाचा परमवाचे इति ॥**

**( प्रदीपः ) अग्निमानिति।** पूर्वसुदात्तमाश्रित्य मतुप उदात्तत्वं क्रियमाणं पूर्वस्य निघातं न कुर्यात्॥ **परमवाचेति। अन्तोदात्तादुत्तरपदादिति** विभक्त्युदात्तत्वं विधीयमानं पूर्वनिघातस्यानिमित्तं स्यात्॥

**( उद्द्योतः ) पूर्वमिति। ह्रस्वनुड्भ्या**मित्यत्रान्तोदात्तादित्यनुवृत्तेरिति भावः॥

**( तत्त्वालोकः )** प्रदीपे—**मतुप इति**—'ह्रस्वनुड्भ्यामि'त्यनेनेत्यादिः। उद्द्योते-**इत्यत्रेति**-'अन्तोदात्तादुत्तरपदादि'त्यत इति शेषः।

( २५३ दूषणवार्तिकम् ॥ १६ ॥ )

**॥ * ॥ नदीह्रस्वत्वं संबुद्धिलोपस्य ॥ * ॥**

( भाष्यम् )

**नदीह्रस्वत्वं संबुद्धिलोपस्यानिमित्तं स्यात् ॥**

**क ? ॥**

**नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु इति।**

**नदीह्रस्वत्वे कृते 'एङ्ह्रस्वात्सम्बुद्धेः' इति संबुद्धिलोपो न प्राप्नोति ॥**

**( उद्द्योतः ) ह्रस्वत्वम्-अम्बार्थे**त्यनेन॥

**( तत्त्वालोकः )** भाष्ये—नदीह्रस्वत्वनिमित्तस्य-अङ्गसम्बुद्धिसन्निपातस्य सम्बुद्धिलोपे विघातादाह—**अनिमित्तमिति।**

( दूषणबाधकभाष्यम् )

**मा भूदेवम्। ङ्यन्तादित्येवं भविष्यति ॥**

**( प्रदीपः ) मा भूदिति। हल्ङ्या**दिसूत्रे दीर्घग्रहणमदृष्ट्वेदमुच्यते। तत्र कृतेऽपि ह्रस्वत्वे स्थानिवद्भावाद्भविष्यतीति भावः॥ ब्रह्मबन्धुशब्दापेक्षया च नैतदुच्यते, तस्याङ्याबन्तत्वात्॥

**( तत्त्वालोकः )** भाष्ये—**एवम्**-'एङ्ह्रस्वादि'ति सम्बुद्धिलोपः 'हल्ङ्यादिसूत्रेण स इत्यभिप्रेत्याह—**ङ्यन्तेति।**

प्रदीपे—**अदृष्ट्वेति**-ङ्याब्विशेषणत्वेनादृष्ट्वेत्यर्थः। एवञ्च पृथग् निमित्तं दीर्घ इत्यभिमानः। **तत्र**—दीर्घस्य ङ्याब्विशेषणत्वे सति। **भावादिति**—दीर्घत्वेनेति शेषः।

( दूषणसाधकभाष्यम् )

**न सिध्यति। दीर्घादित्युच्यते, ह्रस्वान्ताच्च न प्राप्नोति ॥ इदमिह संप्रधार्यम्—ह्रस्वत्वं क्रियतां संबुद्धिलोप इति ॥**

**किमत्र कर्तव्यम् ? ।**

**परत्वाद् ह्रस्वत्वम् ॥**

**( तत्त्वालोकः ) न सिद्ध्यतीति**—हल्ङ्यादिसूत्रेण सम्बुद्धिलोप इत्यादिः। तत्रत्र ङ्यन्तोपादानमिति शेषः। न दीर्घः पृथग् निमित्तम्। तथा सति—तस्य समासेनैव निर्देशस्वारस्यात्, अतिप्रसङ्गात्तत्रैवाशयेनाह—**दीर्घादिति। ह्रस्वान्ताच्चेति**-अत इत्यादिः। ङ्यावन्तात् स इति शेषः। **ह्रस्वत्वं क्रियतामिति**—प्रागित्यादिः। अथवेति शेषः। **अत्रेति**—अनयोरित्यर्थः। प्रागिति शेषः।

( दूषणबाधकभाष्यम् )

**नित्यः संबुद्धिलोपः। कृते ह्रस्वत्वे प्राप्नोति, अकृतेऽपि ॥**

**( प्रदीपः ) नित्य इति।** कार्यं तावन्नित्यं न्वेन केनचिल्लक्षणेन भवत्विति भावः॥ संबुद्धिलोपस्यावकाशो हे देवदत्तेति॥

**( उद्द्योतः )** ननु ह्रस्वग्रहणं निरवकाशत्वेन सन्निपातपरिभाषाबाधकं स्यादत आह—**संबुद्धिलोपस्येति॥**

**( तत्त्वालोकः )** भाष्ये—**नित्य इति**—तयोः परत्वाद्-ह्रस्वत्वं प्राग् न कर्तुं शक्यते, यत इत्यादिः। ननु कुतः स नित्य इत्यत आह—**कृते इति।** यत इत्यादिः। **प्राप्नोतीति**—सः, तथेति शेषः।

प्रदीपे—नन्वकृते ह्रस्वत्वे 'हल्ङ्यावि'ति सम्बुद्धिलोपः कृते 'एङ्ह्रस्वादि'ति। तथा च लक्षणभेदात्कथं तस्य नित्यत्वमित्यत आह—**कार्यमिति।**

उद्द्योते—**ह्रस्वग्रहणमिति**—'एङ् ह्रस्वादि'ति सूत्रे इत्यादिः। **स्यादिति**—तथा च सम्बुद्धिलोप इति भावः।

( दूषणसाधकभाष्यम् )

**अनित्यः संबुद्धिलोपः। नहि कृते ह्रस्वत्वे प्राप्नोति॥**

**किं कारणम् ? ।**

**संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति ॥**

( आक्षेपोपसंहारभाष्यम् )

**एते दोषाः समा भूयांसो वा। तस्मान्नार्थोऽनया परिभाषया ॥**

**( प्रदीपः ) भूयांसो वेति।** दुष्टत्वप्रतिपादनाय प्रकर्षारोपः। सर्वादिषु समशब्दस्य सर्वशब्दपर्यायस्य सर्वनामसंज्ञाविधानात्तुल्यवाचिनोऽत्र समा इति प्रयोगः। अस्ति समशब्दः सर्वपर्यायः। यथा **समराज्यं वर्तते** सर्वेषां राज्यं वर्तते इत्यर्थः। वेदेऽपि—**मा नः समस्य दूढ्य** इति प्रयोगः। सर्वस्य दुर्धियो मा न इत्यर्थः। तत्र प्रयोजनानामल्पत्वात्तान्येवोपसंख्यातव्यानीत्यर्थः॥

**( उद्द्योतः )** भाष्ये **एते दोषाः समा इति।** वार्तिककारोक्तसकलप्रयोजनापेक्षमिदम्॥ यद्यपि प्रयोजनानि नव। दोषा अष्टौ॥ तथापि अल्पान्तरत्वात्समत्वोक्तिः। यद्वाऽन्यत्रापि दोषः संभाव्यत इत्यभिमानः॥ ननूक्तदोषाणामुक्तप्रयोजनेभ्यो बहुत्वमेव न, कुतस्तदतिशयोऽत आह—**दुष्टत्वेति॥** अन्ये तूक्तेषु दूषितप्रयोजनानि त्यक्त्वा स्थितप्रयोजनत्रयापेक्षया भूयस्त्वोक्तिरित्याहुः॥ ध्यायतेर्विचि षष्ठ्येकवचने **आतो धातोरि**ति लोपे **दुरोदाशनाशदमध्येष्वि**ति उत्वे उत्तरपदादेः ष्टुत्वे दूढ्य इति तदाह—**दुर्धिय इति।** सर्वस्य दुर्बुद्धेरंहतिरुपद्रवो नोऽस्मान्मा वधीदित्यर्थः॥ दुःस्थिता धीर्येषामिति विग्रहे गतिकारकपूर्वकत्वाभावाण्न॥ **तस्मान्नार्थ इति** पूर्वपक्षाशयमाह—**तत्रेति॥**

(तत्त्वालोकः) भाष्ये—**समा इति—**प्रयोजनैरित्यादिः। प्रयोजनेभ्य इति शेषः। **अनया—**सन्निपातलक्षणया।

प्रदीपे—**दुष्टत्वेति—**सन्निपातपरिभाषाया इत्यादिः। **प्रकर्षेति—**दोषेषु प्रयोजनापेक्षयेत्यादिः। ननु सम-शब्दस्य सर्वनामत्वात् समे इत्युचितमित्यत आह—**सर्वादिष्विति। वाचिन इति—**समशब्दस्येति शेषः। ननु समशब्दस्य सर्वपर्यायत्वमदृष्टचरमित्यत आह—**अस्तीति। समराज्यं वर्त्तते इति—**लोके इत्यादिः। इति प्रयोग इति शेषः। **तत्रेति—**दोषप्रयोजनयोर्मध्ये इत्यर्थः। दोषापेक्षयेति शेषः।

उद्द्योते—**अल्पान्तरत्वादिति—**प्रयोजनेभ्य इत्यादिः। दोषेष्विति शेषः। **तदतिशयः—**प्रयोजनापेक्षया दोषातिशयः। कैयटाद्युक्तं खण्डयति—**अन्ये त्विति। उक्तेष्विति—**प्रयोजनेष्विति शेषः। **भूयस्त्वेति—**दोषाणामित्यादिः। ननु 'दुर्' इत्यस्य प्रादिषु पाठाद् गतित्वेन धीशब्दस्य गतिपूर्वकत्वादत्र यणापत्तिरित्यत आह—**दुःस्थितेति। न** प्रादिषु पाठमात्रेण कस्यचिद् गतिसंज्ञा भवति, किन्तु क्रियायोगस्यापि सत्त्वे एव। तथा च—यया क्रियया युक्ताः प्रादयो भवन्ति, प्रत्यासत्त्या तां क्रियाम्प्रत्येव ते गतिसंज्ञका भवन्तीति नियमलाभादुक्तविग्रहे 'दुर्' इत्यस्य स्थितशब्दम्प्रत्येव गतित्वम्, न तु धीशब्दम्प्रतीत्याशयेनाह—**गतीति।** धीशब्दस्येत्यादिः।

### (सिद्धान्तिसमाधानभाष्यम्)

**नहि—दोषाः सन्तीति परिभाषा न कर्तव्या, लक्षणं वा न प्रणेयम्। नहि—भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। न च मृगाः सन्तीति यवा नोप्यन्ते॥ दोषाः खल्वपि साकल्येन परिगणिताः। प्रयोजनानामुदाहरणमात्रम्॥**

**कुत एतत्?॥**

**नहि दोषाणां लक्षणमस्ति। तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं दोषेषु॥ क्नमेजन्तः॥ ३८॥**

(प्रदीपः) **प्रतिविधेयमिति।** तत्र विधानसामर्थ्यादाङ्गो वर्णविचालो भविष्यति॥ **कष्टायेति** ज्ञापकाद्यशब्दे दीर्घो भविष्यति॥ न्यासयोरितिलिङ्गादाब् भविष्यति। **ययिवानिति। वस्वेकाजाद्-**इत्ययं नियम इटो, न त्वपूर्वोऽयं विधिरित्याकारस्य लोपः॥ **क्नापयती**त्याकारान्तभक्तः पुग्न व्यवधायकः॥ **अदीदप**दिति लिङ्गाद् ह्रस्वः। यदयं **मारणतोषणे**ति जानातेर्मित्त्वमुपधाह्रस्वार्थं शास्ति तज्ज्ञापयति—पुकि कृते उपधाह्रस्वत्वं भवतीति। नहि जानातेरकृते पुकि ह्रस्वभाविन्युपधा भवति॥ **अग्निमानिति अनुदात्तं पदमेकवर्ज**मिति परिभाषा स्वरविषया संनिपातपरिभाषां बाधते॥ **एकह्रस्वा**दित्यत्रापि **गुणात्संबुद्धे**रिति वक्तव्ये ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषाऽभावः। **दर्वी**त्यत्र च्छन्दसि गुणाभावपक्षे छान्दसो लुग्भविष्यति॥ ३८॥

(उद्द्योतः) सिद्धान्ती समाधत्ते—भाष्ये—**दोषाः खल्वपीति॥** परिभाषायाः कर्तव्यत्वे युक्त्यन्तरमप्याह सिद्धान्ती—**नहीति॥ लक्षणमिति।** उपलक्षकं रूपं नास्तीत्यर्थः॥ **तत्र विधानेति।** यादृशप्रकृतिप्रत्ययसन्निपातनिमित्ताङ्गसंज्ञा तादृशसन्निपातविघातं विना **यस्येति** लोपस्य चारितार्थ्याभावादिति भावः॥ **कष्टायेति।** अकारसन्निपातनिमित्तो क्यो यत्रादिनिमित्तदीर्घस्यानिमित्तं स्यादिति भावः॥ नचैवं **दोषाः साकल्येनेति** भाष्यविरोधः। **कष्टा**येति यादेशो दीर्घत्वश्चेति ग्रन्थो भाष्यपुस्तकेषु भ्रष्टोऽतो न दोषः। एवं च समा इत्यपि यथाश्रुतमेवेत्याहुः॥ **लिङ्गादिति।** इत्वनिषेधवैयर्थ्यादिति भावः॥ **त्वपूर्व इति।** क्रादिनियमा**दार्धधातुकस्ये**ड्वित्येवेट्सिद्ध इति नेडाकारान्तसन्निपातनिमित्त इति भावः॥

परे तु नियमशास्त्राणां विधित्वमेव, आर्थी त्वितरनिवृत्तिरित्यर्थस्य भाष्यसंमतत्वेनाकारान्तसन्निपातनिमित्त एवेडित्यनित्यत्वेनैवात्र समाधानं युक्तमित्याहुः॥ **आकारान्तेति। अङ्गस्ये**त्यनेन सामानाधिकरण्यस्योचितत्वादिति भावः॥ अत्र यद्वक्तव्यं तत्प्रागेवोक्तम्॥ **तज्ज्ञापयतीति।** अत एव **भरज्ञपी**ति निर्देशः सङ्गच्छते। मितां ह्रस्वे चोपधाया इत्यनुवर्तत इति भावः॥ **ह्रस्वभाविनीति। अचश्चे**त्युपस्थितेरिति भावः॥ **अचश्चे**त्यस्य श्रुतित्वेन तद्बाधकल्पनापेक्षयाऽस्यैवानुमितस्य लोकन्यायसिद्धस्य बाधकल्पनोचितेति तात्पर्यम्॥ **बाधते इति। ह्रस्वनुड्भ्या**मित्यत्रोपस्थितयोपस्थितिसामर्थ्यादिति भावः॥ **गुणाभावेति। जसादिषु छन्दसि वावचन**मिति वचनादिति भावः॥ ३८॥

(तत्त्वालोकः) भाष्ये—**प्रयोजनानामिति—**किन्त्वित्यादिः। **मात्रमिति—**दर्शितमिति शेषः। **प्रतिविधेयमिति—**तथेत्यादिः।

प्रदीपे—**तत्र—**दोषाणां मध्ये। **यशब्दे—**यशब्दे परे। **आप्—**कृतात्त्वाद् यदादिशब्दाट्टाप्। लिङ्गमाह—**यदिति। अयम्—**आचार्यः।

उद्द्योते—**परिभाषायाः—**सन्निपातपरिभाषायाः। अत्रत्यपूर्वपक्षस्य भाष्यानुक्तत्वात्तस्याशयमाह—**अकारेति।** अन्यथेत्यादिः। **एवम्—**अत्र दोषसत्त्वे। **कष्टे**ति—यत इत्यादिः। **आहुरिति—**सिद्धान्तिन इति शेषः। के**णवार्तिक्याणेति शानजादेशो हिलोपस्य'** इति ग्रन्थोऽपि भाष्यपुस्तकेषु भ्रष्टः। अत एव 'भूयांसः' इत्युक्तिः। 'समाः' इत्युक्तिस्तु स्वल्पान्तरत्वादिति वदन्ति। **लिङ्गात्—**निर्देशादिति दण्ड्याद्युक्त्यसाङ्गत्यायाह—**इत्वेति।** ननु यादिधातोरनिट्त्वेन 'एकाच उपदेशेऽनुदात्तादि'तीण्निषेधात्कथमत्रेट्सिद्धिरित्यत आह—**क्रादिनियमादिति।** कैयटाद्युक्तिं निराकरोति—**परे त्विति। अनित्यत्वेनेति—**सन्निपातपरिभाषाया इत्यादिः। **मितां ह्रस्वे चेति—**'ऊदुपधाया गोहः' इति सूत्रादिति शेषः। ननु लिङ्गेन 'अचश्चे'त्यस्यैव बाधेनेष्टसिद्धिरित्यत आह—**अचश्चेत्यस्येति।** 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि'ति न्यायेनाह-**श्रुतित्वेनेति। अस्यैव—**'सन्निपाते'त्यस्यैव।

---

(३५ अव्ययसंज्ञासूत्रम्॥ १। १। ६ आ. १२॥)

# अव्ययीभावश्च॥ १। १। ४०॥

(२५४ प्रयोजनवार्तिकम्॥ १॥)

## ॥ * ॥ अव्ययीभावस्याव्ययत्वे प्रयोजनं लुङ्मुखस्वरोपचाराः॥ * ॥

### (भाष्यम्)

**अव्ययीभावस्याव्ययत्वे प्रयोजनम्॥**

**किम्?**

**लुङ्मुखस्वरोपचाराः॥**

**लुक्—उपाग्नि प्रत्यग्नि। 'अव्ययात्' इति लुक् सिद्धो भवति॥**

मुखस्वरः—उपाग्निमुखः प्रत्यग्निमुखः । 'नाव्ययदिक्शब्दगोमहत्स्थूलमुष्टिपृथुवत्सेभ्य' इत्येष प्रतिषेधः सिद्धो भवति ॥

उपचारः—उपपयःकारः उपपयःकाम इति । 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' इति प्रतिषेधः सिद्धो भवति ॥

( प्रदीपः ) अव्ययीभावश्च ॥ ४० ॥ प्रयोजनमिति । मुखस्वरोपचारौ निवर्त्यमानौ प्रयोजनम् । यथा मशकार्थो धूम इति ॥

( उद्द्योतः ) अव्ययीभावश्च ॥ ४० ॥ उपचारो नाम अतः कृ इति विहितविसर्गस्थानिकसत्वम् ॥ यथा मशकार्थ इति । एतदेव निवृत्तिकारणमिति पातञ्जलैर्व्यवह्रियते ॥

( तत्त्वालोकः ) भाष्ये—मुखस्वरो नाम 'मुखं स्वाङ्गमि'ति सूत्रविहितं मुखरूपोत्तरपदान्तोदात्तत्वम् । एष प्रतिषेध इति—मुखस्वरस्येति शेषः । तथा च-उपाग्निमुख इत्यादौ 'बहुव्रीहौ प्रकृत्ये'ति पूर्वपदप्रकृतिस्वर एव भवति, पूर्वपदञ्च समासस्वरेणान्तोदात्तमित्याशयः । प्रतिषेध इति—उपचारस्येति शेषः । उपपयः कार इत्यादौ 'अतः कृकमी'ति प्राप्तं सत्वम् 'अनव्ययस्ये'ति पर्युदस्यते इति भावः ।

प्रदीपे—मुखस्वरेति—अत्रेत्यादिः । इतीति—'अत्र मशको निवर्त्त्यमानः प्रयोजनमि'ति शेषः ।

उद्द्योते—एतदेवेति—अव्ययत्वमेवेत्यर्थः । मुखस्वरोपचारयोरिति शेषः ।

( आक्षेपभाष्यम् )

किं पुनरिदं परिगणनमाहोस्विदुदाहरणमात्रम् ।

( तत्त्वालोकः ) किं पुनरिदमिति-प्रयोजनानामिति शेषः ।

( समाधानभाष्यम् )

परिगणनमित्याह ॥ अपि खल्वप्याहुः—'यदन्यदव्ययीभावस्याव्ययकृतं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः' इति ॥

( प्रदीपः ) अपि खल्विति । एवं खल्वित्यर्थः । परिगणनमनेन दृढीक्रियते ॥

( उद्द्योतः ) अनेनेति । ऋष्यन्तरवचनसंवादेनेत्यर्थः । तत्र वक्तव्य इत्यन्तं तत् । तत्र यदन्यदित्यन्यत्वे प्रतियोगिनस्त्रय उक्ता इत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—तदस्य उत्तरमनुवदति—परिगणनमिति । इत्याहेति—सिद्धान्तीति शेषः । अव्ययकृतम्—अव्ययत्वप्रयुक्तम् ।

उद्द्योते—तत्र—संवादे । तत्—वचनम् । अन्यत्वस्य प्रतियोगिसाकांक्षत्वादाह—तत्रेति । वचने इत्यर्थः । उक्ताः—लुङ्मुखस्वरोपचाराः । प्रत्यासत्त्येति भावः । आहुरिति—तत्त्वविद इति शेषः॥ परिगणनाभावे-अव्ययीभावमात्रस्याव्ययत्वात् 'प्रतिषेधो वक्तव्यः' इति गौरवम् । परिगणने तु—पराङ्गवद्भावादिषु विधेयेषु तस्याव्ययसंज्ञाया अभावादेव तत्प्रयुक्तकार्याप्राप्तौ प्रतिषेधो न वक्तव्य इति लाघवमित्याशयः ।

( अनुयोगभाष्यम् )

किं पुनस्तत् ?

( तत्त्वालोकः ) किं पुनस्तदिति—तस्य प्रतिषेधो वक्तव्य इति शेषः ।

( परिगणनाभावे दूषणभाष्यम् )

[ पराङ्गवद्भावः । ] पराङ्गवद्भावेऽव्ययप्रतिषेधश्चोदित उच्चैरधीयान नीचैरधीयानेत्येवमर्थम् । स इहापि प्राप्नोति—उपाग्न्यधीयान प्रत्यग्न्यधीयान ॥

( प्रदीपः ) उपाग्न्यधीयानेति । अग्निसमीपे अधीयानेत्यर्थः । तत्र षष्ठ्यामन्त्रितकारकवचनम् इति पराङ्गवद्भावो भवति ॥

( उद्द्योतः ) किं पुनस्तत्पराङ्गवदित्यादिना तस्यैवोदाहरणप्रदर्शनम् ॥ षष्ठ्येति । अत्र च कारकत्वम् । तेन समुदायस्य षाष्ठ्यामन्त्रितस्य चेत्याद्युदात्तत्वम् ॥

( तत्त्वालोकः ) भाष्ये—पराङ्गवद्भावः-पराङ्गवद्भावाभावादि । इत्येवमर्थम्—इत्यादौ पराङ्गवद्भावाभावार्थम् । सः—अव्ययप्रतिषेधेन पराङ्गवद्भावाभावः ।

उद्द्योते—तस्यैव —प्रतिषेधस्यैव । तेन—पराङ्गवद्भावेन ।

( परिगणनाभावे दूषणभाष्यम् )

अकच्यव्ययग्रहणं क्रियते उच्चकैर्नीचकैरित्येवमर्थम् । तदिहापि प्राप्नोति—उपाग्निकं प्रत्यग्निकम् ॥

( तत्त्वालोकः ) इत्येवमर्थम्—इत्यादावकजर्थम् । तत्-अव्ययग्रहणेनाकच् ।

( परिगणनाभावे दूषणभाष्यम् )

मुमि अव्ययप्रतिषेधश्चोद्यते—दोषामन्यमहर्दिवामन्या रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति—उपकुम्भंमन्य उपमणिकंमन्य इति ॥

( तत्त्वालोकः ) इत्येवमर्थम्—इत्यादौ मुमभावार्थम् । सः—अव्ययप्रतिषेधेन मुमभावः ।

( परिगणनाभावे दूषणभाष्यम् )

'अस्य च्वौ' अव्ययप्रतिषेधश्चोद्यते—दोषाभूतमहर्दिवाभूता रात्रिरित्येवमर्थम् । स इहापि प्राप्नोति—उपकुम्भीभूतम् उपमणिकीभूतम् ॥

( तत्त्वालोकः ) 'अस्य च्वौ'—'अस्य च्वावि'तीत्त्वे । इत्येवमर्थम्—इत्यादावीत्त्वाभावार्थम् । सः—अव्ययप्रतिषेधेनेत्त्वाभावः ।

( प्रत्याख्यानभाष्यम् )

यदि परिगणनं क्रियते, नार्थोऽव्ययीभावस्याव्ययसंज्ञया ॥

( तत्त्वालोकः ) नार्थ इति—न प्रयोजनमित्यर्थः । तर्हीत्यादिः ।

( आक्षेपभाष्यम् )

कथं यान्यव्ययीभावस्याव्ययत्वे प्रयोजनानि ? ॥

( तत्त्वालोकः ) कथमिति—यद्येवम् तर्हि कथन्तान्युपपद्यन्ते यानि लुङ्मुखस्वरोपचाराख्यानीति रीत्याऽन्वयः ।

( प्रत्याख्यानसाधक १ मप्रयोजननिरासभाष्यम् )

नैतानि सन्ति । यत्तावदुच्यते—लुगिति । आचा-

यत्प्रवृत्तिर्ज्ञापयति—भवत्यव्ययीभावाल्लुगिति। यदयम्-'नाव्ययीभावादतः' इति प्रतिषेधं शास्ति ॥

**( उद्द्योतः )** भाष्ये **यदयं** नाव्ययीभावादिति। स ह्यनन्तरत्वाद**व्ययादाप्सुप** इत्यस्यैव निषेधो न तु **सुपो धातु**प्रातिपदिकयोरिति उपमणिकमुख इत्यादौ तन्निषेधेन चरितार्थमिति न भ्रमितव्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**नैतानीति**—नैतानि लुङ्मुखस्वरोपचाराख्यानि अव्ययीभावस्याव्ययत्वे प्रयोजनानि सन्तीत्यर्थः। **यत्तावदिति**—( तथाहि- ) यत्प्रथममित्यर्थः। **आचार्येति**—तत्रोच्यते इत्यादिः। **अयम्**—आचार्यः। एवमग्रेऽपि। **प्रतिषेधमिति**—सुब्लुक इत्यादिः। तथा च न लुक् तस्य तत्त्वे प्रयोजनमिति भावः।

उद्द्योते—नन्वन्यप्राप्त-सुब्लुक्प्रतिषेधेन चरितार्थत्वात् कथं प्रकृतप्रतिषेधस्य ज्ञापकत्वमित्यत आह—**स हीति**। प्रकृतप्रतिषेधो यत इत्यर्थः। **इत्यस्येति**—इतिप्राप्तसुब्लुक इत्यर्थः। एवमग्रेऽपि। **तन्निषेधेनेति**—'सुपो धात्वि'ति प्राप्तसुब्लुको निषेधेनेत्यर्थः। स इति शेषः। **चरितार्थमिति**—अत्र 'चरितार्थः' इति पाठः।

### ( २ अप्रयोजननिरासभाष्यम् )

**उपचार इति। अनुत्तरपदस्थस्येति वर्तते ॥**

**( तत्त्वालोकः ) उपचार इतीति**—यच्चोच्यते इत्यादिः। तत्रोच्यते इति शेषः। **अनुत्तरेति**—'अतः कृकमी'ति सूत्रे 'नित्यं समासे' इति सूत्रादित्यादिः। **वर्त्तते**—अनुवर्त्तते। तथाचोपचारनिवृत्तिरपि तस्य तत्त्वे न प्रयोजनमिति भावः।

### ( ३ अप्रयोजननिरासभाष्यम् )

**तत्र मुखस्वर एकः प्रयोजयति। न चैकं प्रयोजनं योगारम्भं प्रयोजयति। यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्—'नाव्ययादव्ययीभावाच्च' इति ॥ अव्ययीभावश्च ॥ ४० ॥**

**( प्रदीपः ) न चैकमिति।** सामान्यलक्षणमेकप्रयोजनार्थं न कर्तव्यमित्यर्थः॥ **तत्रैवायमिति।** न चोक्तम्, तस्मान्मुखस्वरेणात्र भवितव्यमित्याहुः॥ अन्ये तु वर्णयन्ति—अनव्ययमव्ययं भवतीत्यन्वर्थसंज्ञाविज्ञानान्मुखस्वरनिवृत्तिर्भवतीति नार्थः सूत्रेणेति॥ केचित्तु-स्वरादिपाठात्सिद्धायामव्ययसंज्ञायां पुनर्वचनमनित्यत्वज्ञापनार्थम्। तेन कतिपयान्येवाव्ययकार्याणि भवन्तीति नार्थः परिगणनेनेत्याहुः॥ तेषां वचनमन्तरेण विशेषे प्रमाणाभावः॥ ४० ॥

**( उद्द्योतः ) न चोक्तमिति।** भाष्ये **यदी**त्यसन्दिग्धे संदिग्धवचनं **वेदाः प्रमाणं चे**दितिवत्। तस्मात्तत्र ग्रहणं कर्तव्यम्। सूत्रं च न कार्यमिति भाष्याशय इति वयम्॥ **अन्ये त्विति।** च्विना ह्यारोपितमव्ययत्वं वास्तवमनव्ययत्वं च प्रतीयते इति यथालक्ष्यं किंचिदव्ययकार्यं भवति किंचिन्नेतीष्टं सिद्धमिति भावः॥ **विशेषे** कार्यविशेषे॥ किंच **द्विर्बद्धं सुबद्ध**मिति न्यायेन पुनर्विधानात् सार्वत्रिकत्वमेव स्यादित्यपि द्रष्टव्यम्। एवं चाव्ययीभावस्याव्ययत्वात्क्यङ्नेति हरदत्ताद्युक्तं चिन्त्यम्। भाष्यविरोधात्॥ अन्ये तु—मुखस्वरे **नाव्ययीभावा**दिति नोक्तम्। सूत्रं च कृतम्। तस्मादन्यदपि प्रयोजनम्—नद्या उपकूलमित्यादौ षष्ठीसमासप्रतिषेधादीत्याहुरिति मतं हरिदीकायां स्पष्टम्। तदपि **खल्वप्याहु**रित्यादिभाष्यानतुगुणम्॥

**( तत्त्वालोकः )** भाष्ये-**तत्रेति**—एवं लुगुपचारयोरन्यथासिद्धौ सत्यामित्यर्थः। **एकः इति**—अव्ययीभावस्याव्ययत्वमिति शेषः। **न चैक**—न तु। **तत्रैवेति**—मुखस्वर इत्यर्थः। तद्वीत्यादिः।

प्रदीपे—एकप्रयोजनकानाम् 'अग्नेर्ढगि'त्यादियोगानामारम्भदर्शनादाह—**सामान्येति**। भाष्याशयमाह। **न चोक्तमिति**—न ह्युक्तमित्यर्थः। **सूत्रेण**—प्रकृतसूत्रेण। **स्वरादीति**—अव्ययीभावस्येत्यादिः। **अनित्यत्वेति**—अव्ययत्वस्येत्यादिः। केषाञ्चिन्मतं दूषयति—**तेषामिति**।

उद्द्योते—सिद्धान्तभूतं भाष्याशयमाह—**यदीति**। **तत्र**—मुखस्वरे। **ग्रहणं कर्तव्यम्**—'नाव्ययादव्ययीभावाच्चे'ति वक्तव्यम्। **सूत्रम्**—प्रकृतसूत्रम्। दोषान्तरमाह—**किञ्चेति**। **सार्वत्रिकत्वमिति**—अव्ययत्वस्य निखिलाव्ययीभावगतत्वमित्यर्थः। **एवञ्च**—परिगणनावश्यकत्वे च। **सूत्रम्**—प्रकृतसूत्रम्। **प्रयोजनमिति**—अव्ययीभावस्याव्ययत्वे इत्यादिः। **प्रतिषेधेति**—'पूरणगुणे'त्यादिसूत्रेणेति भावः।

( इत्यव्ययसंज्ञाप्रकरणम् )

## ( अथ सर्वनामस्थानसंज्ञाप्रकरणम् )

( ३६ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ० १३ )

# शि सर्वनामस्थानम् ॥ १ । १ । ४१ ॥

( ३७ सर्वनामस्थानसंज्ञासूत्रम् ॥ १ । १ । ६ आ० १४ )

# सुडनपुंसकस्य ॥ १ । १ । ४२ ॥

### ( जसः शेः संज्ञाप्रतिषेधनिराकरणाधिकरणम् )

( २५५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥❀॥ शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शिप्रतिषेधः ॥❀॥**

### ( भाष्यम् )

**शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसि शेः प्रतिषेधः प्राप्नोति। कुण्डानि तिष्ठन्ति वनानि तिष्ठन्ति॥**

**( प्रदीपः ) शि सर्व ॥ ४१ ॥ सुडनपुंसकस्येति चेदिति।** अस्मिन् सूत्रन्यासे दोषः। **सुट् स्त्रीपुंसयो**रित्यस्मिन्न्यासे न दोष इत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—वार्त्तिके सूत्रद्वयानुवादात्सूत्रद्वयं प्रतीकत्वेन गृह्णाति—**शि सर्वनामेति**। सुटोऽनपुंसकेन सम्बन्धः, अन्यथा पूर्वसूत्रस्य वैयर्थ्यम्, तथा सति तु शसः शौ तस्य चारितार्थ्यमित्यत आह—**जसि शीति**। जसः शेः संज्ञाप्रतिषेध इत्यर्थः। तर्हीत्यादिः।

प्रदीपे—**अस्मिन्**—'सुडनपुंसकस्ये'त्यस्मिन्। तदुचितं न्यासान्तरमाह—**सुट् स्त्रीति**।

## [ ॥ * ॥ असमर्थसमासश्च ॥ * ॥ ]

### ( दूषणान्तरभाष्यम् )

**असमर्थसमासश्चायं द्रष्टव्योऽनपुंसकस्येति। न हि नञो नपुंसकेन सामर्थ्यम् ॥**

**केन तर्हि ?।**

**भवतिना—न भवति नपुंसकस्यैति ॥**

**( प्रदीपः )** प्रसज्यप्रतिषेधाश्रयेण पूर्वपक्षः, पर्युदासाश्रयेण सिद्धान्तः ॥

**( उद्द्योतः ) शिसर्वना ॥ ४१ ॥** भाष्येऽ**समर्थसमासश्चेति** दूषणान्तरम् । तत्रासामर्थ्यमनन्वयात् । **चेन** वाक्यभेदस्यापि संग्रहः ॥ **पर्युदासेति ।** एवं हि समर्थसमासैकवाक्यते लभ्येते । यद्यपि पर्युदासेऽपि लक्षणा, तथापि दोषद्वययुक्तप्रसज्यप्रतिषेधापेक्षया लघुरेवेति भावः ॥ वस्तुतो नञो निपातत्वेनानेकार्थत्वात्पर्युदासपक्षे लक्षणेति रिक्तं वचः ॥ पर्युदासपक्षे सुडित्यनेनैकवाक्यतया तस्याप्राप्तावपि आद्यस्याप्राप्तौ न मानमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**तत्र**—प्रसज्यप्रतिषेधाश्रयणे । **असम्बन्धादिति**—एकार्थीभावस्य व्यपेक्षायाश्चाभावादित्यर्थः । न्यूनतां निराकरोति—**चेनेति ।** अत्र पक्षे-प्रथमदोषस्य भाष्य एवोद्धृतत्वात्तदतिरिक्तदोषद्वयमुद्धरति—**एवं हीति ।** पर्युदासाश्रयणे हीत्यर्थः **लक्षणेति**—नञोगिनीत्याशयः । प्रथमं तामभ्युपेत्याह—**तथापीति । दोषद्वयेति**—असमर्थसमास-वाक्यभेदरूपदोषद्वयेत्यर्थः । **लघुरेवेति**—लक्षणारूपैकदोषयुक्तः पर्युदास इत्यादिः । अथ वस्तुतस्तु सैव नेत्याह—**वस्तुत इति । सुडित्यनेनेति**—अनपुंसकस्येति शेषः । **तस्येति**—'सुड'त्यस्येत्यर्थः । जसः शावित्यादिः । **आद्यस्य**—'शि सर्वनामस्थानमि'त्यस्य ।

( समाधानभाष्यम् )

**यत्तावदुच्यते—*शि सर्वनामस्थानं सुडनपुंसकस्येति चेज्जसिशिप्रतिषेधः*—इति ॥**

**( तत्त्वालोकः ) तावत्**—प्रथमम् । **इतीति**—तत्रोच्यते—इति शेषः ।

**( २५६ समाधानवार्तिकम् ॥ ३ )**

**॥ * ॥ नाप्रतिषेधात् ॥ * ॥**

**( भाष्यम् )**

**नायं प्रसज्यप्रतिषेधो—नपुंसकस्य नेति ॥**

**किं तर्हि ? ।**

**पर्युदासोऽयम्—यदन्यन्नपुंसकादिति । नपुंसके न व्यापारः । यदि केनचित्प्राप्नोति, तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

**( उद्द्योतः )** भाष्ये **नपुंसके न व्यापार इति ।** निषेधस्येति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**नाप्रतिषेधादिति**—वार्तिकं न प्रतिषेधनिषेधकम्, पर्युदासेऽप्यार्थिकनिषेधसत्त्वादित्यत आह—**नायमिति ।** न 'अनपुंसकस्ये'त्ययमित्यर्थः । **नपुंसकादिति**—तस्येति शेषः । **नपुंसके इति**—तेनेत्यादिः । **यदीति**—तथाचेत्यादिः । जसः शाविति शेषः । **तेनेति**—तर्हीत्यादिः । **पूर्वेण**—'शि सर्वे'त्यनेन ॥ अस्य प्रसज्यप्रतिषेधत्वे तु तत्र पूर्वेण प्राप्ताऽपि संज्ञा निषिध्येतेति भावः ।

**( २५७ समाधानवार्तिकम् ॥ ४ ॥ )**

**॥ * अप्राप्तेर्वा ॥ * ॥**

**( भाष्यम् )**

**अथवा—अनन्तरा या प्राप्तिः सा निषिध्यते ॥ कुत एतत् ? । अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा, तया भविष्यति ॥**

**( प्रदीपः ) अप्राप्तेर्वेति ।** प्रसज्यप्रतिषेधेऽप्यदोषः । तत्र **सुडि**त्यनेन या प्राप्तिः, सा निषिध्यते । न तु **शिसर्वनामस्थान**मिति प्राप्तिः । अन्यथा **शि सर्वनामस्थान**मिति निरवकाशं स्यात् । नपुंसकस्यैव हि शिः संभवति ॥

**( उद्द्योतः ) अप्राप्तेरिति** वार्तिकस्य पूर्वसूत्रविहितसंज्ञायाः प्रतिषेधाप्राप्तेरिति अक्षरार्थः ॥ भाष्ये तु वस्त्वर्थ उच्यते ॥ **अन्यथेति ।** सुडित्यनपेक्ष्य नपुंसकसंबन्धिमात्रस्य निषेध इत्यभिमानः ॥ सुट्संबन्धे तु इदं चिन्त्यं, शसः शौ चरितार्थत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**अनन्तरा**—'सुडि'ति विहिता । **निषिध्यते—इति**—'अनपुंसकस्ये'त्यनेनेत्यादिः । **पूर्वेति**—'शि सर्वे'ति विहितेत्यर्थः । तथाचेत्यादिः । **तयेति**-जसः शौ संज्ञेति शेषः।

प्रदीपे—पक्षान्तराश्रयणे बीजमाह—**प्रसज्येति । तत्र**—प्रसज्यप्रतिषेधेऽपि । **अन्यथा**—तस्या अपि निषेधे ।

उद्द्योते—**वस्त्वर्थः**—परमार्थः । बाध्यसामान्यचिन्तायामाह—**सुडित्यनपेक्ष्येति ।** तेनेति शेषः । **सुडिति**—अनपुंसकस्येत्यादिः । **इदम्**—'शि सर्वे'त्यस्य निरवकाशत्वकथनम् । **शसः शाविति**—तथा सतीत्यादिः । तस्येति शेषः ।

**( आक्षेपभाष्यम् )**

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

**( प्रदीपः ) ननु चेयमिति ।** परत्वादित्यर्थः । प्रतिषेधयुक्तायुक्तत्वाच्च विरोधसद्भावः । तत्र परत्वात् सुडिति प्राप्तिः **पूर्वां प्राप्तिं** बाधते तामपि प्रतिषेध इति दोषः ॥

**( उद्द्योतः )** ननु संज्ञाया एकत्वेन कार्यैक्ये विरोधाभावात्कथं परत्वमत आह—**प्रतिषेधेति ।** शसि सावकाशत्वात् । एवं चोभयोर्यौगपद्यासंभवरूपो विरोधोऽस्तीति भावः ॥ **पूर्वां प्राप्तिमिति ।** एवं च सकृद्गतिन्यायेन पुनर्न प्रवर्तत इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—चो वाक्यालङ्कारे । **इयम्**—'सुडि'ति विहिता ।

प्रदीपे—**विरोधेति**—परपूर्वयोरित्यादिः । **तत्र**—तयोः । **तामपि**—'सुडि'ति प्राप्तिमपि ।

उद्द्योते—प्रदीपस्थ—**चकार**संग्राह्यमाह—**शसीति । पूर्वस्येति** शेषः । परस्य सावकाशत्वन्तु अन्यत्र स्पष्टमेवेत्याशयः । तथा च तयोर्विरोधे प्रतिषेधयुक्तायुक्तत्वसहितसावकाशत्वं हेतुः, तदाह—**एवञ्चेति ।** तादृशयोः पूर्वपरयोः सावकाशत्वे चेत्यर्थः ।

**( समाधानभाष्यम् )**

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ।**

**( प्रदीपः ) नोत्सहत इति ।** अपवादविषयपरिहारेणास्याः प्रवर्तनादित्यर्थः ॥

**( उद्द्योतः ) अपवादेति ।** एवं च स्वयमप्रवर्तमाना कथमन्यबाधिकेति तन्न्यायावसरो नेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रतिषिद्धा सतीति**—परा प्राप्तिरित्यादिः । पूर्वां प्राप्तिमिति शेषः । प्रदीपे—बाधकत्वसामान्येन निषेधेऽप्यपवादत्वव्यवहारादाह—**अपवादेति । अस्याः**—'सुडि'ति विहि-

तायाः। उद्द्योते-**मानेति**-'लुङि'ति विहितेनेति शेषः। **तन्न्यायेति**—सकृद्गतिन्यायेत्यर्थः।

( दूषणान्तरस्याधानभाष्यम् )

**यद्प्युच्यते—असमर्थसमासश्चायं द्रष्टव्यः—इति॥ यद्यपि वक्तव्यः। अथत्वेतर्हि बहूनि प्रयोजनानि॥**

**कानि ?॥**

**असूर्यंपश्यानि मुखानि, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मण इति॥ सुड॥ ४२॥**

( प्रदीपः ) **अथत्वेतर्हीति**। इदानीमित्यर्थः। तत्र **स्त्रीपुंसयोरिति** वक्तव्ये **अनपुंसकस्ये**ति वचनं ज्ञापकम्-प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्तीति॥ ४२॥

( उद्द्योतः ) **इदानीमित्यर्थ इति। तथापीत्यर्थ** इत्युचितम्। **यद्यपि वक्तव्य** इत्युपक्रमात्॥ **स्त्रीपुंसयोरिति**। मात्राधिक्येऽपि स्पष्टप्रतिपत्त्यर्थमित्यर्थः॥ **पुंस्त्रियोरि**रिति तु वक्तुमशक्यम्, तस्यासाधुत्वाद् इति बोध्यम्॥ अत्र पर्युदासप्रसज्यप्रतिषेधयोः समफलत्वोक्त्या **शास्त्रप्रापितस्य प्रतिषेधे विकल्प** इति मीमांसकोक्तं चिन्त्यम्। सामान्यविशेषन्यायेन बाधस्यैवौचित्याद्। स्वाभावे संभावितस्यैव च प्रतिषेध इत्यादि मञ्जूषायां विस्तरः॥ ४२॥

( तत्त्वालोकः )—भाष्ये—**यद्यपीति**-तत्राप्युच्यते-इत्यादिः। 'केचिन्नञ्समासा असामर्थ्येऽपि साधवः' इति विशेष इति शेषः। **बहूनीति**—तस्येत्यादिः।

प्रदीपे—**इदानीम्**—इदानीन्तु। ननु विशेषवचनाश्रयणेऽत्र पक्षे सोऽपि दोष इत्यत आह—**तत्रेति**। प्रकृतसूत्रे इत्यर्थः। तथा चात्रपक्षे वाक्यभेदप्रयुक्तं गौरवमिष्टमिति भावः।

उद्द्योते—**स्पष्टेति**—तथा च ज्ञानलाघवमित्याशयः। ननु 'पुंस्त्रियोरि'ति वक्तुमुचितमित्यत आह—**पुंस्त्रियोरितीति। तस्येति**—'स्त्रीपुंसाभ्यां नञ्स्नञावि'त्यादि निर्देशेन 'पुंस्त्रियोरि'त्यस्यासाधुत्वबोधनादिति भावः। **अत्र**—प्रकृतसूत्रे। अस्य 'उक्त्वा'न्वयः। पक्षभेदकथनेनेति भावः। **विकल्प इति**—वचनद्वयप्रामाण्यादित्यभिप्रायः। तुल्यार्थकत्वाभावादाह—**सामान्येति**। अत्र सामान्यं बीजमाह—**स्वाभावे इति**। वचनप्राप्तस्य निषेधासम्भवादाह—**सम्भावितेति। च**—हि। अत एव 'निषेधाश्च बलीयांसः' इति भाष्यं सङ्गच्छते। तथा च विकल्पप्राप्तिरेव नेत्याशयः। **मञ्जूषायामिति**—नञर्थवादे इति शेषः॥

( इति सर्वनामस्थानसंज्ञाप्रकरणम् )

—०—

**( ३८ विभाषासंज्ञासूत्रम्॥ १।१।६ आ. १५ )**

# नवेति विभाषा॥ १। १। ४३॥

**( अर्थसंज्ञास्थापनाधिकरणम् )**

**( १५८ आक्षेपवार्तिकम्॥ )**

## ॥ * ॥ नवेतिविभाषायामर्थसंज्ञाकरणम्॥ * ॥

**( भाष्यम् )**

**नवेतिविभाषायामर्थस्य संज्ञा कर्तव्या। नवाशब्दस्य योऽर्थस्तस्य संज्ञा भवतीति वक्तव्यम्॥**

( प्रदीपः ) **नवेति॥ ४३॥ नवेतिविभाषायामिति**। समुदायस्यानुकरणत्वादनुकरणस्य चानुकार्येणार्थवत्त्वात्प्रातिपदिकत्वे सति विभक्त्युत्पत्तिः। स्त्रीप्रत्यये च तदादिनियमाभावाट्टाडामौ भवतः। अथवा नवेत्युच्चार्य या विभाषा कृता तस्यामिति व्याख्या। तत्र लोके क्रियापदसंनिधाने नवाशब्दयोर्योऽर्थो द्योत्यो विकल्पप्रतिषेधलक्षणः स संज्ञीत्यर्थः। अन्यथा विभाषाप्रदेशेषु नवाशब्दावेवादेशौ स्याताम्॥

( उद्द्योतः ) **नवेतिविभाषा**॥ ४३॥ ननु समुदायस्य समासग्रहणनियमेनाप्रातिपदिकत्वात् **नवेतिविभाषाया**मित्यनुपपन्नमत आह—**समुदायस्येति**। वार्तिकोच्चारितसमुदायस्येत्यर्थः॥ नन्वेवमपि समुदायस्यानावन्तत्वात् कथं याडादीत्यत आह—**स्त्रीप्रत्यये चेति। स्त्रीप्रत्यये चानुपसर्जने नेति ष्यङः संप्रसारण**मित्यत्र भाष्यपठितवचनेनेति भावः॥ यत्तु **हल्ङ्याबि**ति दीर्घग्रहणादिति। तन्न। बहुश्रेयसीत्यादौ लोपार्थं **प्रत्ययग्रहण** इति तदन्तविधिना **ङ्यन्ते**ऽर्थे तस्य स्वादिप्रत्ययलब्ध**यस्माद्विधिस्तदादि**रित्येतद्विशेषणतया **ङ्यन्तान्ते**त्यर्थेन निष्कौशाम्बिव्यावृत्तये दीर्घग्रहणस्यावश्यकत्वादिति दिक्॥ अनुकरणस्यावन्तत्वं तु **प्रकृतिवदनुकरण**मिति न्यायात्। तस्यानित्यत्वाच्च न प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वनिषेध इति बोध्यम्॥ **अथवेति। कृता**। उच्चारिता। समासत्वादेव प्रातिपदिकत्वम्, असमासेऽपि लिङ्गविशिष्टपरिभाषया विभक्तिरिति भावः॥ नामपदसन्निधाने नवा शाटीत्यादौ प्रत्यग्रार्थावगतेराह—**क्रियापदेति॥ अन्यथेति**। प्रकरणादिवशाच्चार्थविशेषावसाय इति भावः॥

( तत्त्वालोकः ) भाष्ये—**योऽर्थः**-निषेधविकल्परूपः। **संज्ञा**-विभाषासंज्ञा।

प्रदीपे—**तत्र**—तेषां मध्ये। **अन्यथा**—नवाशब्दयोरेव संज्ञायाः करणे।

उद्द्योते—**नियमेन**—'यत्रार्थवति सङ्घाते पूर्वो भागस्तथोत्तरः। स्वातन्त्र्येण प्रयोगार्हः समासस्यैव तस्य चेत्।' इत्याकारकेण। **एवमपि**—विभक्त्युत्पत्तावपि। प्रत्ययग्रहण इति नियमात्॥ दण्ड्यायुक्तिं खण्डयति—**यत्त्विति। ङ्यन्तेऽर्थे**—ङ्याबन्तेत्यर्थे सति। **तस्य**—ङ्याबन्तस्य। **ङ्यन्तान्तेत्यर्थेन**—ङ्याबन्तान्तेत्यर्थेन। **निष्कौशाम्बीति**—निष्कौशाम्ब्यादीत्यर्थः। नन्वेवमप्यनुकरणे प्रकृतिप्रत्ययविभागाभावात् कथन्तस्यावन्तत्वमित्यत आह—**अनुकरणस्येति**। नन्वेवम् 'अप्रत्यय' इति निषेधात् कथन्तस्य प्रातिपदिकत्वमित्यत आह—**तस्येति॥** अथवापक्षे तत् समस्तमसमस्तं वा ? तत्राद्ये आह—**समासत्वादेवेति**। द्वितीये चाह—**असमासेऽपीति। प्रत्यग्रार्थावगतेरिति**—नवीनार्थावगमादित्यर्थः। अर्थस्य संज्ञायामप्यतिप्रसङ्गादिति शेषः। **अवसायः**—निश्चयः।

**( भाष्यम् )**

**किं प्रयोजनम् ?**

**( आक्षेपसाधकवार्तिकद्वितीयखण्डम्॥ १॥ )**

## ॥ * ॥ शब्दसंज्ञायां ह्यर्थासंप्रत्ययो यथान्यत्र॥ * ॥

**( भाष्यम् )**

**शब्दसंज्ञायां हि सत्यामर्थस्यासंप्रत्ययः स्यात्।**

यथान्यत्र। अन्यत्रापि हि शब्दसंज्ञायां शब्दस्यैव संप्रत्ययो भवति, नार्थस्य ॥

क्वान्यत्र? ॥

'दाधा घ्वदाप्' 'तरप्तमपौ घः' इति। घुग्रहणेषु घग्रहणेषु च शब्दस्य संप्रत्ययो भवति, नार्थस्य ॥

(प्रदीपः) **घुग्रहणेष्विति**। शब्दस्य संज्ञाकरणात्प्रदेशेषु तस्यैव संप्रत्यय इत्यर्थः ॥

(उद्द्योतः) ननु दाधाघ्वित्यादौ न घुशब्दादिना दाधादीनां प्रत्ययः। किंतु दाधाशब्दैरेवेत्यत आह—**प्रदेशेष्विति** ॥ भाष्ये **घुग्रहणेष्वि**त्यादेर्घुप्रदेशेष्वित्यर्थः ॥

(तत्त्वालोकः) भाष्ये—**शब्दसंज्ञायाम्**—नवाशब्दयोः विभाषासंज्ञायाम्। **अर्थेति**—निषेधविकल्परूपार्थेत्यर्थः। 'विभाषा जसी'त्यादिषु विभाषाशब्देनेत्यादिः। **असम्प्रत्यय इति**—तथा-नवाशब्दयोः सम्प्रत्यय इति शेषः। **शब्दसंज्ञायामिति**—शब्दस्य संज्ञायामित्यर्थः। प्रदेशेषु संज्ञयेति शेषः। **शब्दस्य सम्प्रत्यय इति**—घ्वादिशब्देन दाधादिशब्दस्य सम्प्रत्यय इत्यर्थः। **अर्थस्य**—दानधारणादिरूपस्य।

प्रदीपे—**शब्दस्य**—दाधादिशब्दस्य। **संज्ञेति**—घ्वादिसंज्ञेत्यर्थः। **प्रदेशेषु**—'स्थाघ्वोरिच्चे'त्यादिषु। **तस्यैवेति**—दाधादिशब्दस्यैवेत्यर्थः। घ्वादिशब्देनेत्यादिः। **सम्प्रत्यय इति**—न तु दानधारणाद्यर्थस्येति शेषः।

उद्द्योते—**इत्यादौ**—इत्यादिसंज्ञासूत्रे। **दाधाशब्दैरेव**—दाधादिशब्दैरेव। अनेन सूचितमाह—**भाष्ये घुग्रहेति**। **इत्यर्थः**—इत्याद्यर्थः। संज्ञाकरणात्प्राक् संज्ञया संज्ञिनां बोधो न भवति किन्तु तदनन्तरमेवेत्याशयः।

(आक्षेपभाष्यम्)

तर्हि वक्तव्यम् ॥

(समाधानभाष्यम्)

न वक्तव्यम् ॥

(२५९ समाधानवार्तिकम् ॥ २ ॥)

## ॥ * ॥ इतिकरणोऽर्थनिर्देशार्थः ॥ * ॥

(भाष्यम्)

इतिकरणः क्रियते सोऽर्थनिर्देशार्थो भविष्यति ॥

(प्रदीपः) **इतिकरण इति**। क्रियत इति करणः। कर्मणि ल्युट्। इतिश्चासौ करणश्चेति समासः ॥ **क्रियत इति**। सामान्यविशेषभावेन निर्देशः ॥

(उद्द्योतः) करणल्युटि अर्थासङ्गतेराह—**कर्मणीति**। बाहुलकादिति भावः ॥ **सामान्येति**। पाकं पचतीतिवत् ॥

(तत्त्वालोकः) भाष्ये—**इतिकरण इति**—क्रियमाण इतिरित्यर्थः। यत इत्यादिः।

उद्द्योते—सामान्यविशेषभावेन निर्देशस्य प्रसिद्धतादर्शनायाह—**पाकमिति**।



(आक्षेपभाष्यम्)

किं गतमेतदितिना आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्? ॥

(प्रदीपः) **शब्दाधिक्यादिति**। आहोस्विदनेनाक्षेपकस्य वचनम्। अशब्दार्थस्यालाभादिति भावः।

(तत्त्वालोकः) भाष्ये—**गतम्**—ज्ञातम्। **एतत्**—नवाशब्दयोरर्थस्वरूपम्. प्रदीपे—पक्षोपादानमन्वेयोजनया—**अशब्दार्थस्येति**।

(समाधानभाष्यम्)

गतमित्याह ॥

कुतः? ॥

(तत्त्वालोकः)—तदस्य उत्तरमनुवदति—**गतमित्याहेति**। सिद्धान्तीति शेषः।

(२६० समाधानसाधकवार्तिकम् ॥ ३ ॥)

## ॥ ❀ ॥ लोकतः ॥ ❀ ॥

(भाष्यम्)

तद्यथा लोके 'गौरित्ययमाह' इति गोशब्दादितिकरणः प्रयुज्यमानो गोशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासावर्थपदार्थकता तस्याः शब्दपदार्थकः संपद्यते ॥ एवमिहापि नवाशब्दादितिकरणः प्रयुज्यमानो नवाशब्दं स्वस्मात्पदार्थात्प्रच्यावयति। सोऽसौ स्वस्मात्पदार्थात्प्रच्युतो यासौ शब्दपदार्थकता तस्या लौकिकमर्थं प्रत्याययति—नवेति यद्गम्यते नवेति यत्प्रतीयते—इति ॥

(प्रदीपः) **गौरित्ययमाहेति**। यद्यपि नित्ये शब्दार्थसंबन्धे उपात्तस्यार्थस्य त्यागो नास्ति तथापि प्रसिद्धिवशादेतदभिधीयते—**अर्थपदार्थकतायाः प्रच्युत इति**। तत्त्वतस्त्वादावेव स्वरूपपदार्थको गोशब्दः प्रयुक्तः। सादृश्यात्तु तमर्थमनभिव्यक्तमितिशब्दो द्योतयतीति पदार्थविपर्यासकृदितिरुच्यते ॥ **अर्थपदार्थकतेति**। संबन्धे भावप्रत्ययः। संबन्धात्प्रच्युतोऽर्थादपि प्रच्युतो भवति ॥

(उद्द्योतः) भाष्ये **स्वस्मात्पदार्थात्प्रच्युतः शब्दपदार्थकः संपद्यत** इत्यन्वयः ॥ **स्वस्मात्पदार्था**दित्यस्य विवरणम्—**यासाविति**। दार्ष्टान्तिके च **शब्दपदार्थकता** '**स्वं रूप**'मिति वचनात् ॥ **तस्या** इत्यस्य प्रच्युत इति शेषः ॥ कोऽसौ लौकिकोऽर्थस्तत्राह—**नवेति यद्गम्यत इति**। तद्विवृणोति—**नवेति यत्प्रतीयत इति**। **स लौकिकोऽर्थ** इति शेषः ॥ **यद्यपीति**। एवं च **स्वस्मात्पदार्था**दित्यनुपपन्नं, सर्वस्यापि स्वपदार्थत्वात्। प्रच्युतिश्चानुपपन्नेति भावः ॥ **त्यागो नास्तीति** चार्थान्तरग्रहणाभावस्याप्युपलक्षणम् ॥ **प्रसिद्धिवशादिति**। लोकप्रसिद्ध्यैव तत्र स्वपदार्थत्वव्यवहारः। तेषामेवास्यायं प्रसिद्धोऽर्थस्त्यक्तोऽप्रसिद्धश्च गृहीत इति प्रसिद्ध्या भाष्ये प्रच्युत्यङ्गीकारावुक्ताविति भावः ॥ वस्तुतो न प्रच्युत्यादिकमित्याह—**तत्त्वत इति** ॥ **सादृश्यादिति**। अर्थभेदाच्छब्दभेद इति पक्षे इदम् ॥ एकशब्दत्वे त्वभेदादिति बोध्यम् ॥ वस्तुतः प्रच्युत्यङ्गीकारौ तयोरर्थयोर्बोधाविषयत्वबोधविषयत्वे एव, न तु मुख्याविति बोध्यम् ॥ **पदार्थविपर्यासकृदिति**। लोके शब्दविशेषणकार्थस्य प्रतीतिः, शास्त्रेऽर्थविशेषणकशब्दस्य। इतिशब्दसमभिव्याहारे विपरीतमिति विप-

र्यासः ॥ भाष्येऽपि—**स्वस्मात्पदार्थात् प्रच्युत** इत्यस्य विशेष्यभूतादिति शेषः ॥ अन्यथार्थप्रतीतेः शब्दानालिङ्गिताया अभावेन एतदसङ्गतिः स्यादिति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**शब्दादिति**—परनिति शेषः । एवमग्रेऽपि । **स्वस्मादिति**—गोरूपादित्यादिः । **स इति**—अस्य विवरणम्—स्वस्मात्पदार्थात्प्रच्युत इति । एवमग्रेऽपि । **असौ**—गोशब्दः । **तस्या इति**—अस्य 'प्रच्युतः' इति शेषः । **शब्देति**—गोशब्देत्यर्थः । **स्वस्मादिति**—नवाशब्दरूपादित्यादिः । **असौ**—नवाशब्दः । **नवेतीति**—क्रियापदसन्निधाने इत्याशयः ।

प्रदीपे—**उपात्तस्येति**—शब्देनेत्यादिः । 'यासावर्थपदार्थकता तस्याः' इति भाष्यफलितम् प्रतीकत्वेन निर्दिशति—**अर्थपदार्थकतायाः प्रच्युत इतीति । स्वरूपेति**—गोशब्दरूपेत्यर्थः । **सादृश्यादिति**—गोशब्देनेत्यादिः । **तम्**—गोशब्दरूपम् । ननु '......पदार्थादि'त्यस्य '......तस्याः' इति व्याख्यानमयुक्तमित्यत आह—**सम्बन्धे इति** । बोधजनकतारूपशब्दार्थसम्बन्धे इत्यर्थः । 'कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेने'त्युक्तेरिति भावः ।

उद्द्योते—उभयत्र स्थितमभिप्रेत्याह—**स्वस्मात्पदार्थादित्यस्येति । यासावितीति**—यासावित्यादि तस्या इत्यन्तमित्यर्थः । **एवञ्च**—शब्दार्थसम्बन्धानां नित्यत्वात् शब्देनोपात्तार्थस्य त्यागासम्भवे च । कैयटीयन्यूनतां निराकरोति—**त्याग इति । च**—तु । **तत्र**—शब्देनोपात्तार्थे । **तेषामेवेति**—लोकानामेवेत्यर्थः । अस्य 'प्रसिद्धये'त्यत्रान्वयः । बौद्धस्यैवार्थत्वं न तु बाह्यस्येति सिद्धान्तमतेनाह—**वस्तुत इति । विपरीतम्**—लोकेऽर्थविशेषकशब्दस्य प्रतीतिः, शास्त्रे शब्दविशेषणकार्थस्येतिरूपम् । नन्वेवं स्वपदार्थप्रच्यवस्य सर्वथाऽसम्भवाद् भाष्यासङ्गतिरित्यत आह—**भाष्येऽपीति ।** उभयत्राप्याह—**अन्यथेति ।** तथा च-यथा 'गौरित्ययमाहे'त्यत्र पदार्थविपर्यासकेतिशब्दसमभिव्याहाराद् गौःशब्देनार्थविशेषणकशब्दोपस्थितिस्तथा प्रकृते पदार्थविपर्यासकेतिशब्दसमभिव्याहारात् नवाशब्दाभ्यां शब्दविशेषणकार्थोपस्थितेः निषेधविकल्पयोरर्थयोरेव विभाषा संज्ञेति भावः ॥

**( समानशब्दसंज्ञानिरसनाधिकरणम् )**

**( २६१ आक्षेपवार्तिकम् ॥ ४ ॥ )**

## ॥ ॐ ॥ समानशब्दप्रतिषेधः ॥ ॐ ॥

**( भाष्यम् )**

**समानशब्दानां प्रतिषेधो वक्तव्यः । नवा कुण्डिका नवा घटिकेति ॥**

**( प्रदीपः ) समानशब्दप्रतिषेध इति ।** समानः शब्दो वाचको येषामर्थानां तेषामित्यर्थः ॥

**( उद्द्योतः )** इतिकरणस्यार्थनिर्देशार्थत्वे स्थिते नैव समानानां शब्दानां प्राप्तिरत आह—**समान इति ॥**

**( तत्त्वालोकः )** भाष्ये-**समानशब्दानामिति**-विभाषासंज्ञाया इति शेषः । **नवा**—नूतना ।

प्रदीपे—**शब्दः**—नवाशब्दः । **अर्थानाम्**—प्रत्यग्रनवीनाद्यर्थानाम् । तथा च वार्त्तिके बहुव्रीहिरिति भावः ।

उद्द्योते—**इतिकरणस्येति**—नन्वित्यादिः । वार्त्तिके कर्मधारयमभिप्रेत्याह—**समानानामिति ।** नवाशब्देनेत्यादिः ।

**( आक्षेपभाष्यम् )**

**किंच स्यात्, यद्येतेषामपि विभाषा संज्ञा स्यात् ? ।**

**( तत्त्वालोकः ) किञ्च**—किन्तर्हि । **एतेषाम्**—प्रत्यग्राभिनवाद्यर्थानाम् ।

**( समाधानभाष्यम् )**

**'विभाषा दिक्समासे बहुव्रीहौ' दक्षिणपूर्वस्यां शालायाम् । अचिरकृतायां संप्रत्ययः स्यात् ॥**

**( प्रदीपः ) विभाषा दिक्समास इति ।** विभाषाशब्देनाभिनवलक्षणोऽर्थः प्रत्याय्यते । तत्र प्रत्यग्रवाची यो दिक्समास इति संप्रत्ययः स्यात् । तत्र दिशो नित्यत्वान्नवपुराणत्वासंभवात्तन्निमित्तो यदा शालायां व्यपदेशः—दक्षिणपूर्वा शाला, सा चाभिनवा । तदा संज्ञा स्यादित्यर्थः । संज्ञाकार्यव्यङ्ग्यं च प्रत्यग्रत्वं स्यात् ॥

**( उद्द्योतः ) प्रत्यग्रेति ।** यद्यपि **न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीम** इति भाष्यपर्यालोचनया सर्वादिविशेषणत्वलाभात् प्रत्यग्रत्वं समासविशेषणमयुक्तम् । तथापि दिग्वाचकसर्वादीनामर्थस्य दिशो नवपुराणत्वासंभवादुदाहरणपरभाष्याच्च तत्र **सर्वादीनी**त्यनेन तद्घटितसमासो लक्षणीय इति भावः ॥ **तन्निमित्त इति ।** लक्षणयेत्यर्थः । **तदा संज्ञेति । न बहुव्रीहा**विति निषेधे प्राप्ते **इदं** नित्यार्थं स्यादिति भावः ॥ भाष्ये-**अचिरकृतायामिति ।** तस्यां बोध्यायामित्यर्थः ॥ **संप्रत्ययः स्यादि**त्यस्य संज्ञाया इति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**विभाषेति**—तर्हीत्यादिः । **दक्षिणपूर्वस्यां शालायामिति**—इत्यनेनेत्यादिः । इत्यत्रेति शेषः ।

प्रदीपे—**विभाषेति**—तथा सतीत्यादिः । **तत्र**—तेन तत्प्रतीतौ । **तत्र**—तथा सम्प्रत्यये सति । अस्याग्रेऽन्वयः । दक्षिणपूर्वाशब्दशक्यायामाग्नेय्यां दिशि स्थितत्वाच्छलेन शालाऽपि दक्षिणपूर्वाशब्देन व्यपदेष्टुं शक्यते इत्याशयेनाह—**तन्निमित्त इति ।** दिङ्निमित्त इत्यर्थः । **संज्ञा**—सर्वनामसंज्ञा ।

उद्द्योते—**भाष्येति**—अग्रिमेत्यादिः । **सर्वादीति**—विभाषाग्रहणस्येत्यादिः । **उदाहरणेति**-दक्षिणपूर्वस्यां शालायामितीत्यादिः । **तत्र**—अग्रिमभाष्ये । **तद्घटितेति**—सर्वादिघटितेत्यर्थः । **लक्षणया**—दिक्पदस्य दिक्स्थत्वे लक्षणया । ननु 'सर्वादीनी'त्यनेनैव तत्र संज्ञासिद्धेः 'विभाषे'ति सूत्रस्य वैयर्थ्यमित्यत आह—**न बह्विति ।** इदमुपसर्जनप्रतिषेधस्याप्युपलक्षणम् । **इदम्**—'विभाषे'ति सूत्रम् । इदानीं विभाषाशब्देन विकल्पार्थाप्रतीतेराह—**नित्यार्थमिति ।**

**( २६२ समाधानवार्तिकम् ॥ ५ ॥ )**

## ॥ ॐ ॥ न वा विधिपूर्वकत्वात् प्रतिषेधसंप्रत्ययो यथा लोके ॥ ॐ ॥

**( भाष्यम् )**

**न वा एष दोषः ॥**

**किं कारणम् ? ॥**

**'विधिपूर्वकत्वात् ।' विधाय किंचिन्न वेत्युच्यते, तेन प्रतिषेधवाचिनः संप्रत्ययो भवति । तद्यथा—लोके 'ग्रामो भवता गन्तव्यो न वा' नेति गम्यते ॥**

( प्रदीपः ) **न वा विधिपूर्वकत्वादिति** । प्रदेशवाक्यार्थं पर्यालोच्येयं संज्ञा व्यवस्थाप्यते । प्रदेशेषु च कार्याणि विधाय विभाषाशब्द उच्चारितो नवार्थं गमयति । तत्र लोकवन्निषेधार्थावगतिर्भवति न तु प्रत्ययार्थावगतिरित्यर्थः ॥

( उद्द्योतः ) ननु प्रदेशे **विभाषादिगि**त्यादौ न नवाशब्द उच्चारितः, **नवेति विभाषे**ति सूत्रे तु न किञ्चिद्विधायोक्तम्, पूर्वोत्तरसाहचर्येणास्य संज्ञात्वमवाविज्ञेयमत आह—**प्रदेशेति** ॥ **इयं संज्ञेति** । **न वेति विभाषे**त्येतत्संज्ञासूत्रार्थं इत्यर्थः ॥ **कार्याणि** सर्वनामसंज्ञादीनि ॥ **नवार्थम्** नवाशब्दार्थम् । विभाषाशब्दस्यार्थसंज्ञात्वात् । क्वचित्तु तथैव पाठः । भाष्ये—**नवेत्युच्यते** इत्यस्य तदर्थबोधको विभाषाशब्द उच्यते इत्यर्थः ॥ **प्रतिषेधवाचिन इति** । प्रतिषेधवाच्ययं शब्द इति प्रत्ययो भवतीत्यर्थः ॥ **नन्विति** । एवं च प्रदेशानुगुण्येन प्रकृतसूत्रेऽपि न प्रत्ययवाचिनो ग्रहणमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**विधिपूर्वकत्वादिति**—'इह विभाषाशब्दस्ये'त्यादिः । तेनेति शेषः । **यथा लोके इति**—नवाशब्दस्य विधिपूर्वकत्वात्तेन प्रतिषेधसम्प्रत्यय इति शेषः । **विधायेति**—इहेत्यादिः । अभावज्ञाने प्रतियोगिज्ञानं कारणमिति भावः । **तद्यथा**—यथा । **न वेति**—प्रयुक्ते इति शेषः । एवमग्रेऽपि ।

प्रदीपे—**प्रदेशेति**—'विभाषा दिगि'त्यादि प्रदेशेत्यर्थः । **व्यवस्थाप्यते इति**—तथा च—तयोः पृथक् पृथग् वाक्यार्थबोधसत्त्वाद्वाक्यैकवाक्यतैव, न तु पदैकवाक्यतेत्याशयः ॥ तस्य पर्यालोचनं करोति—**प्रदेशेषु चेति** । **तत्रेति**—विधायोक्तत्वादिति भावः । **निपातार्थेति**—नवाशब्दार्थप्रतिषेधेत्यर्थः । यथा भाष्योक्तलोकदृष्टान्ते नवाशब्देन प्रतिषेधार्थस्यैवावगतिः न तु प्रत्ययार्थस्य तथा प्रदेशेषु विभाषाशब्देनेत्याशयः ।

उद्द्योते—**प्रदेशे इति**—यत्र किञ्चिद्विधाय विभाषाशब्द उक्तस्तत्रेत्यादिः । **नवेतीति**—यत्र नवाशब्द उच्चारितस्तत्रेत्यादिः । **उक्तमिति**—नवाशब्दस्वरूपमित्यादिः । ननु सर्वनामस्थानसंज्ञां विधाय तत्रोक्तेन नवाशब्देन तस्याः प्रतिषेधः प्रतीयेतेत्यत आह—**पूर्वोत्तरेति** । **अस्य**—'नवेति विभाषे'त्यस्य । तथा च—विभाषासंज्ञायामेवास्य तात्पर्यं न तु सर्वनामस्थानसंज्ञायाः प्रतिषेधे इति नवाशब्दस्य प्रतिषेधवाचित्वसम्प्रत्ययो न सम्भवतीति भावः । कर्मधारयनिरासायाह—**नवाशब्देति** । **तथैव**—नवाशब्दार्थमित्येव । **तदर्थेति**—नवाशब्दार्थेत्यर्थः । **अयं शब्दः**—विभाषाशब्दः । **प्रत्ययः**—प्रतीतिः । **एवञ्च**—प्रदेशे विभाषाशब्दस्य न प्रत्ययवाचिनो ग्रहणमिति निर्णये च । **प्रकृतसूत्रेऽपीति**—नवाशब्दस्येति शेषः ।

( समाधानबाधकभाष्यम् )

**अस्ति कारणम्—येन नवेति लोके प्रतिषेधवाचिनः संप्रत्ययो भवति ॥**

**किं कारणम् ? ॥**

**विलिङ्गं हि भवान् लोके निर्देशं करोति । अङ्ग हि समानलिङ्गो निर्देशः क्रियतां प्रत्ययवाचिनः संप्रत्ययो भविष्यति । तद्यथा—'ग्रामो भवता गन्तव्यो नवः' प्रत्यग्र इति गम्यते ॥**

( प्रदीपः ) **विलिङ्गमिति** । भिन्नलिङ्गं व्यधिकरणमित्यर्थः ॥ विलिङ्गत्वेन वैयधिकरण्यं लक्ष्यते, न तु प्रतिषेधवाचिनो नवाशब्दस्य लिङ्गयोगोऽस्ति ॥

( उद्द्योतः ) **भिन्नेति** । अग्रे समानलिङ्ग इति दर्शनाद्विशब्दो भिन्नार्थ इति भावः ॥ **नन्विति** । अव्ययत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—निर्देशं करोति—**अङ्गेति** । **वाचिन इति**—तस्येति शेषः । एवमग्रेऽपि ।

प्रदीपे—लक्षणाया बीजमाह—**न विति** । न हीत्यर्थः ।

( समाधानसाधकभाष्यम् )

**एतच्चैव न जानीमः—क्वचिद्व्याकरणे समानलिङ्गो निर्देशः क्रियत इति ॥**

( प्रदीपः ) **एतच्चैवेति** । नैव क्वचिद् व्याकरणे समानलिङ्गो निर्देश इत्यर्थः । **विभाषा सेनासुरेति** यद्यपि समानलिङ्गो निर्देशः । तथापि भिन्नविभक्तिकत्वात् सामानाधिकरण्याभावः ॥

( उद्द्योतः ) **नैवेति** । भाष्ये **क्वचित् क्रियत इत्येतच्चैव न जानीम** इत्यन्वयः ॥ **न वा विधी**त्युक्तवतोऽयं ग्रन्थः । एवं च **शास्त्रे** समानलिङ्गनिर्देशस्य क्वाप्यभावात् न क्वापि प्रत्ययार्थावगतिरित्याशयः ॥

( तत्त्वालोकः ) प्रदीपे—**समानलिङ्ग इति**—समानाधिकरण इत्यर्थः । समानलिङ्गपदस्य समानाधिकरणे लक्षणाश्रयणात् ॥ तस्य तत्र लक्षणाश्रयणे एव भाष्यं सङ्गच्छते, अन्यथा तु नेत्याशयेनाह—**विभाषेति** ।

उद्द्योते- **क्वचिदिति**—व्याकरणे समानलिङ्गो निर्देश इति शेषः । 'नवा विधिपूर्वकत्वादि'त्यस्य यद् 'अस्ति कारणमि'त्यादिना दृष्टान्तविघटनेन खण्डनं कृतं तस्य खण्डनमिदमिति सूचनायाह—**नवा विधीति** । **एवञ्चेति**—लोके क्वचित् समानलिङ्गनिर्देशसत्त्वेन क्वचित्प्रत्ययार्थावगतिसम्भवेऽपीति शेषः ।

( समाधानसाधकशेषभाष्यम् )

**अपि चात्र कामचारः प्रयोक्तुः शब्दानामभिसंबन्धे । तद्यथा—'यवागूर्भवता भोक्तव्या न वा' यदा यवागूशब्दो भुजिना संबध्यते, भुजिर्नवाशब्देन, तदा प्रतिषेधवाचिनः संप्रत्ययो भवति—'यवागूर्भवता भोक्तव्या न वा' नेति गम्यते ॥ यदा तु नवाशब्दो यवागूशब्देनाभिसंबध्यते, न भुजिना, तदा प्रत्ययवाचिनः संप्रत्ययो भवति-यथा—'यवागूर्नवा भवता भोक्तव्या' प्रत्यग्रेति गम्यते ॥ न चेह वयं विभाषाग्रहणेन सर्वादीन्यभिसंबध्नीमः—दिक्समासे बहुव्रीहौ सर्वादीनि विभाषा भवन्तीति ॥**

**किं तर्हि ? ॥**

**भवतिरभिसंबध्यते—दिक्समासे बहुव्रीहौ सर्वादीनि भवन्ति विभाषेति ॥**

( प्रदीपः ) **अपि चेति** । तत्र सामर्थ्याद्विशेषावगतिः ॥ यदाऽप्राप्ते यवागूभोजने वाक्यमुदीर्यते, तदा प्रत्ययार्थावगतिः । यदा त्वातुरं प्रति गुरुभोजननिषेधार्थमुच्यते, तदा निषेधावगतिः ॥ **न चेहेति** । क्रियायाः प्राधान्यात्सैव विभाषाग्रहणेन संबध्यते, न तु तदङ्गमित्यर्थः । तदेवं स्थितमेतत्—**नवा विधिपूर्वकत्वा**दिति ॥

( उद्द्योतः ) ननूभयविधान्वयसंभवे कथमन्यतरनिर्णय इत्यत आह—**तत्रेति** ॥ **अप्राप्ते यवागूभोजन इति** । अकर्तव्यत्वेनावगते इत्यर्थः ॥ प्ररोचनायेति शेषः ॥ **न तु तदङ्गमिति** । भवति-

क्रियाकर्त्रुद्देश्यरूपं तदङ्गमित्यर्थः ॥ भाष्ये- **विभाषा भवन्तीत्यत्र विभाषेत्यग्रे सर्वनामानीति** शेषः ॥ **भवन्ति विभाषेत्यस्य सर्वनामानी**त्यादिः ॥

**( तत्त्वालोकः )** भाष्ये—'नवा विधौ'त्युक्तवानेव युक्त्यन्तरमाह—**अपि चेति । अत्र—**वाक्ये । **गम्यते इति—**नवाशब्दस्य क्रियावाचिपदेनाभिसम्बन्धे निषेधाभिधायित्वम्, द्रव्यवाचिपदेनाभिसम्बन्धे तु प्रत्ययाभिधायित्वमित्याशयः । नन्वेतावता लोके निर्णयेऽपि प्रकृते कथं स इत्यत आह—**न चेहेति** । यथा प्रत्ययार्थावगतिः स्यात्तथेति शेषः । **भवतिरिति—**विभाषाग्रहणेनेति शेषः । **विभाषेतीति—**तथा च निषेधार्थसम्प्रत्ययो भवतीति भावः । समशीलत्वेन नवापदविभाषापदयोः दृष्टान्तदार्ष्टान्तिकतेति बोध्यम् ।

प्रदीपे—**तत्र—**कामचारे सति । **सामर्थ्यात्—**प्रकरणवशात् । **विशेषेति—**अन्वयविशेषेत्यर्थः । तदाह—**यदेति । सैव—**भवतिक्रियैव । असन्देहायाह—**तदेवमिति** ।

उद्द्योते—सर्वादेः साक्षात्क्रियाङ्गत्वाभावादाह-**भवतीति । उद्देश्यरूपम्—**सर्वनामसंज्ञोद्देश्यसर्वादिरूपम् ।

( विध्यनित्यत्वसाधनाधिकरणम् )

( २६३ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ विध्यनित्यत्वमनुपपन्नं प्रतिषेधसंज्ञाकरणात् ॥ * ॥

( भाष्यम् )

**विधेरनित्यत्वं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः ॥**

**किं कारणम् ? ।**

**'प्रतिषेधसंज्ञाकरणात्' प्रतिषेधस्येयं संज्ञा क्रियते । तेन विभाषाप्रदेशेषु प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥**

**( प्रदीपः ) विध्यनित्यत्वमिति** । विकल्प इत्यर्थः । नवाशब्द एकनिपातः प्रतिषेधवाची तस्येहोपादानादिति भावः ॥ परिहारान्तराभिधानाय तु **न बहुव्रीहा**वित्यसंबद्धं स्यादिति नोक्तम् ॥

**( उद्द्योतः )** ननु दिक्समासेऽपि नित्यनिषेधे **न बहुव्रीहा**विति सामान्यसूत्रेणैव सिद्धे **विभाषा दिगि**ति सूत्रस्य वैयर्थ्यापत्तिरत आह—**परिहारान्तरेति** । इति सिद्धे **विभाषादिगि**त्यसंबद्धं यादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्—**कस्मात्कारणात् । **इयं संज्ञा—**विभाषासंज्ञा । प्रदीपे—**इह—**'नवेति विभाषे'ति सूत्रे ।

( २६४ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ सिद्धं तु प्रसज्य प्रतिषेधात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ।**

**'प्रसज्य प्रतिषेधात्' विधाय किंचिन्नवेत्युच्यते तेनोभयं भविष्यति ॥**

**( प्रदीपः ) सिद्धं त्विति** । प्रतिषेधाद्विधिरनुमास्यते ततो विकल्पः सेत्स्यतीत्यर्थः ॥

**( उद्द्योतः )** ननु प्रसक्तस्य निषेधेऽभाव एव दृष्टो न तु विकल्पोऽत आह—**प्रतिषेधादिति । विभाषा श्वे**रित्यादौ पिद्विषये विधेरनुमानं करिष्यते इत्यर्थः ॥ निषेधानुपपत्तिकल्पितशास्त्रेण प्रसज्येति वार्तिकार्थ इति भावः । एवं च षोडशिग्रहणाग्रहणवदेकविषयत्वाद्विकल्पसिद्धिरिति तात्पर्यम् ॥ **तत इति** । अन्यथा कल्पितं शास्त्रं व्यर्थं स्यात् । **प्रक्षालनाद्धी**ति न्यायविरोधान्न निषेधार्थमेव तदिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रसज्य—**सम्प्रसारणं विधाय । **प्रतिषेधात्—**'विभाषा श्वे'रित्यनेन तस्य प्रतिषेधात् । **एतत्—**विध्यनित्यत्वम् । **नवेत्युच्यते—**नवाशब्दार्थप्रतिषेधबोधको विभाषाशब्द उच्यते । **उभयम्—**विधिप्रतिषेधोभयम् ।

उद्द्योते—**प्रसक्तस्य—**सामान्यतो यथाकथञ्चित्प्राप्तस्य । किद्विषये 'वचिस्वपियजादीनामि'ति विधेः सत्त्वादाह—**पिद्विषये इति** । **निषेधानुपपत्तीति—**पिद्विषयकनिषेधानुपपत्तिकल्पितपिद्विषयकविधिशास्त्रेणापीत्यर्थः । तत्रापिना किद्विषयकविधिशास्त्रपरिग्रहः । तथा च—कित्पिदुभयविषये विध्यनित्यत्वं सिद्ध्यतीति भावः । **षोडशीति—**'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाती'ति श्रुतिविषयेत्यादिः । **एकविषयत्वादिति—**विधिप्रतिषेधयोरित्यादिः । **अन्यथा—**विकल्पाभावे । अकल्पितस्य किद्विषयकविधिशास्त्रस्यान्यत्रसार्थकत्वादाह—**कल्पितमिति । शास्त्रम्—**पिद्विषयकविधिशास्त्रम् । ननु प्रतिषेधार्थमेव तत्कल्पनमित्यत आह—**प्रक्षालनादिति । तत्—**तत्कल्पनम् । तथा च विकल्पः सिद्ध इत्याशयः ।

( २६५ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ विप्रतिषिद्धं तु ॥ * ॥

( भाष्यम् )

**विप्रतिषिद्धं तु भवति । अत्र न विज्ञायते—केनाभिप्रायेण प्रसजति, केन निवृत्तिं करोतीति ॥**

**( प्रदीपः ) विप्रतिषिद्धं त्विति** । एकविषययोर्विधिप्रतिषेधयोर्विरोधादित्यर्थः ॥

**( उद्द्योतः )** ननु विकल्पो विरुद्धविषय एवेति किमुच्यते—**विप्रतिषिद्धं त्विति**, अत आह-**एकेति** । युगपदिति शेषः ॥ विप्रतिषेधोपपादकं भाष्यम्—**अत्र नेति ॥ प्रसजति** भावमिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**विप्रतिषिद्धमिति—**विधिप्रतिषेधोभयमित्यादिः । **निवृत्तिमिति—**तस्येत्यादिः ।

उद्द्योते—समयभेदेनैकविषयकयोरपि विधिप्रतिषेधयोरविरोधसम्भवादाह—**युगपदिति** ।

( २६६ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * न वा प्रसङ्गसामर्थ्यादन्यत्र प्रतिषेधविषयात् ॥ * ॥

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ? ।**

'प्रसङ्गसामर्थ्यात्' । प्रसङ्गसामर्थ्याच्च विधिर्भविष्यति—अन्यत्र प्रतिषेधविषयात् ॥ प्रतिषेधसामर्थ्याच्च प्रतिषेधो भविष्यति—अन्यत्र विधिविषयात् ॥

**( प्रदीपः ) नवा प्रसङ्गेति ।** सामर्थ्याद्विधिप्रतिषेधयोः पर्यायो भविष्यतीत्यर्थः ॥

**( उद्द्योतः )** प्रसज्यते इति **प्रसङ्गो** विधिः ॥ **प्रतिषेधविषया**दित्यस्य कालविशेषविशिष्टात्ततोऽ**न्यत्र** तत्रैव कालान्तरविशिष्टे इत्यर्थः ॥ निषेधसामर्थ्यलब्धोऽयमर्थः ॥ सामर्थ्यात्प्रतिषेधविषयादन्यत्र विधिरित्युक्ते यत्फलितं तदाह—**प्रतिषेधसामर्थ्याच्चेति ॥** इदमपि पूर्ववद्व्याख्येयम् । तद्ध्वनयन्नाह—**पर्याय इति ॥**

**( तत्त्वालोकः )** भाष्ये—**अन्यत्र विधिविषयादिति**—कालविशेषविशिष्टाद्विधिविषया**दन्यत्र**—तत्रैव कालान्तरविशिष्टे इत्यर्थः । विधिसामर्थ्यलब्धश्चायमर्थं इत्याशयः । अनेनैवाशयेन चोद्द्योते वक्ष्यति—पूर्ववदिति ।

प्रदीपे—**विधिप्रतिषेधयोरिति**—इदं मध्यमणिन्यायेन पूर्वत्र परत्र चान्वेति ।

उद्द्योते—**प्रतिषेधेति**—अन्यत्रेत्यादिः । **ततः**—प्रतिषेधविषयात् । अन्यत्रेत्यस्यैव व्याख्या—**तत्रैवेति ।** अस्यार्थस्य लाभे बीजमाह—**निषेधेति ।** 'प्रतिषेधसामर्थ्याच्चे'त्यादेः वार्त्तिकानुक्तत्वादाह—**सामर्थ्यादिति ।** विधीत्यादिः ।

**( आक्षेपभाष्यम् )**

तदेतत् क सिद्धं भवति—या अप्राप्ते विभाषा । या हि प्राप्ते विभाषा, कृतसामर्थ्यस्तत्र पूर्वेणैव विधिरिति कृत्वा प्रतिषेधस्यैव संप्रत्ययः स्यात् ॥

**( उद्द्योतः )** भाष्ये—**या हि प्राप्ते इति ।** केवलोभयत्रविभाषारूपा चेत्यर्थः ॥ **कृतसामर्थ्य इति ।** पूर्वेणैव क्लृप्तशास्त्रेणैव विधिः कृतसामर्थ्यो विहतविधिकल्पकनिषेधीयशक्तिक इत्यर्थः । एवं च तत्र विधिकल्पनाभावात्प्रतिषेधमात्रप्रत्ययः स्यादिति भावः ॥ एतद्भाष्यादपि सामान्यशास्त्रप्राप्तनिषेधे विकल्पं वदन्तो मीमांसकाः परास्ताः ॥

**( तत्त्वालोकः )** भाष्ये—**तदेतत्**—प्रक्रान्तं विधिप्रतिषेधोभयम् । **या अप्राप्ते विभाषेति**—तत्रेति शेषः ।

उद्द्योते—भाष्यकृतो न्यूनतां निराकरोति—**केवलेति । शास्त्रेणैव**—'वचिस्वपी'ति शास्त्रेणैव । **एवञ्च**—तेन तस्य तादृशशक्तिप्रतिबन्धे च । **तत्र**—'विभाषा श्वेरि'त्यत्र ।

**( समाधानभाष्यम् )**

एतदपि सिद्धम् ॥

कथम् ? ।

विभाषेति महती संज्ञा क्रियते । संज्ञा च नाम यतो न लघीयः ॥

कुत एतत् ? ॥

लघ्वर्थं हि संज्ञाकरणम् । तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्—उभयोः संज्ञा यथा विज्ञायेत नेति च वेति च । तत्र या तावदप्राप्ते विभाषा, तत्र प्रतिषेध्यं नास्तीति कृत्वा वेत्यनेन विकल्पो भविष्यति । या हि प्राप्ते विभाषा, तत्रोभयमुपस्थितं भवति—नेति च वेति च । तत्र नेत्यनेन प्रतिषिद्धे वेत्यनेन विकल्पो भविष्यति ॥

**( प्रदीपः ) महती संज्ञेति ।** तेन द्वावत्र संज्ञिनौ विकल्पप्रतिषेधावित्यर्थः । यदि हि केवलः प्रतिषेधः संज्ञी स्यात्, संज्ञाकरणमनर्थकं स्याद्, विभाषाप्रदेशेषु नेत्येव ब्रूयात् । तत्र समुदायस्येयं संज्ञेति विभाषाप्रदेशेषु विकल्पप्रतिषेधावुपतिष्ठेते । अप्राप्तविभाषासु च प्राप्त्यभावात्प्रतिषेधस्याव्यापाराद्विकल्प एवोपतिष्ठते ।

**( उद्द्योतः ) महत्याः संज्ञायाः इति** भाष्येण संज्ञैव न कर्तव्येति विवक्षितम्, न तु लघ्वी कर्तव्येति इत्याह—**यदि हीति । समुदायस्येति ।** प्रत्येकधर्मावच्छिन्नस्योभयस्येत्यर्थः ॥ **विकल्पप्रतिषेधाविति ।** प्राप्तविभाषाविषये इत्यर्थः ॥ **विकल्प एवोपेति ।** उभयोः संज्ञाकरणेऽपि निषेधस्यान्वयायोग्यत्वाद् द्वितीयस्यैवोपस्थितिरिति भावः ॥ अत्राप्राप्तविभाषाशब्देन केवलाप्राप्तविभाषोच्यते ॥

**( तत्त्वालोकः )** भाष्ये—**एतदपि**—विधिप्रतिषेधोभयम् प्राप्तविभाषायामपि । **विभाषेतीति**—यत इत्यादिः । **'संज्ञा च नामे'**त्यादिः **'एतत्प्रयोजनमि'**त्यन्तो ग्रन्थः 'सर्वादीनी'ति सूत्रभाष्यस्थतद्ग्रन्थवद्व्याख्येयः । उभौ निर्दिशति—**नेति च वेति चेति ।** निषेधस्य विकल्पस्य चेत्यर्थः । **तत्र**—विभाषेति महासंज्ञाकरणेन विभाषासंज्ञाया उभयोः निषेधविकल्पयोः संज्ञित्वे सति । **तावत्**—प्रथमम् । **वेत्यनेन**—विभाषापदादुपस्थितेन विकल्पमात्रेण । **या हि**—या तु । **उभयमिति**—विभाषापदादित्यादिः । **नेति च वेति च**—निषेधो विकल्पश्च । **तत्र**—तदुभयोपस्थितौ सत्याम् । **नेत्यनेन**—निषेधेन । **वेत्यनेन**—विकल्पेन ।

प्रदीपे—**तेन**—महासंज्ञाकरणेन । **अत्र**—विभाषासंज्ञायाम् । **संज्ञाकरणमिति**—तर्हीत्यादिः । **विभाषेति**—यत इत्यादिः । **तत्र**—महासंज्ञाकरणेन विभाषासंज्ञायामुभयोः प्रतिषेधविकल्पयोः संज्ञित्वे सति ।

उद्द्योते—यथाश्रुतानुपपत्तेराह—**प्रत्येकेति ।** ननु 'सन्नियोगशिष्टानामि'ति न्यायेन कथमिदमित्यत आह—**उभयोरिति । केवलेति**—अनेन प्राप्ताप्राप्तविभाषायाः व्यवच्छेदः ।

**( भाष्यम् )**

एवमपि—

**( २६७ आक्षेपवार्तिकम् ॥ १० ॥ )**

## ॥ * ॥ विधिप्रतिषेधयोर्युगपद्वचनानुपपत्तिः ॥ * ॥

**( भाष्यम् )**

विधिप्रतिषेधयोर्युगपद्वचनं नोपपद्यते । शुशाव शुशुवतुः शुशुवुः । शिश्वाय शिश्वियतुः शिश्वियुः ।

**( भाष्यम् )**

किं कारणम् ?

**( २६८ आक्षेपसाधकवार्तिकम् ॥ ११ ॥ )**

## ॥ * ॥ भवतीति चेन्न प्रतिषेधः ॥ * ॥

**( भाष्यम् )**

भवतीति चेत् प्रतिषेधो न प्राप्नोति ॥

( २६९ आक्षेपसाधकवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ नेति चेन्न विधिः ॥ * ॥

( भाष्यम् )

**नेति चेद्विधिर्न सिध्यति ॥**

( प्रदीपः ) **एवमपीति ।** यद्यपि विरुद्धयोरेका संज्ञा क्रियते, तथापि प्रदेशेषु युगपद्विरोधाद्भावाभावौ विधातुं न शक्येते इत्यर्थः ॥

( उद्द्योतः ) **युगपदिति ।** अनवगतसंज्ञिद्वयक्रमोपस्थानस्य चोद्यमेतदित्यभिप्रायः ॥ **भावाभावाविति ।** इमावेव भाष्ये विधिप्रतिषेधशब्देनोक्तौ ॥

( तत्त्वालोकः ) भाष्ये—**चेदिति**—यदीत्यर्थः । तर्हीति शेषः । एवमग्रेऽपि ।

प्रदीपे—**विरुद्धयोः**—विकल्पप्रतिषेधयोः । **प्रदेशेष्विति**—'विभाषा श्वेरि'त्यादिनैकत्रेति भावः ।

उद्द्योते—**अनवगतेति**—अनवगतं संज्ञिद्वयक्रमोपस्थानं यस्य तस्येति व्युत्पत्तिः । भाष्यप्रदीपयोः सामञ्जस्यायाह—**इमावेवेति ।**

( २७० समाधानवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ सिद्धं तु पूर्वस्योत्तरेण बाधितत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ॥**

**पूर्वविधिमुत्तरो विधिर्बाधते । इतिकरणोऽर्थनिर्देशार्थ इत्युक्तम् ॥**

( प्रदीपः ) **सिद्धं त्विति ।** उभयत्रविभाषासु प्रतिषेधेन समीकृते विषये पश्चाद्विकल्पः प्रवर्तत इत्यर्थः ॥ यदि तु पूर्वं विकल्पः प्रवर्तते पश्चात्प्रतिषेधस्ततो विकल्पप्रवृत्तिरनर्थिकैव स्यात् । आनुपूर्वी च या संज्ञाविधावाश्रिता सैव प्रदेशवाक्येष्वाश्रीयते ॥ उभयत्रविभाषार्था चेयं संज्ञा । प्राप्तविभाषायामप्राप्तविभाषायां च संज्ञाकरणस्यानुपयोगात् ॥ तथाहि—प्राप्तविभाषासु पक्षे निवृत्तिः क्रियते, पक्षे तु प्रवृत्तिः स्थितैव । अप्राप्तविभाषासु च पक्षे कार्यस्य प्रवृत्तिः क्रियते, पक्षान्तरे त्वप्रवृत्तिः स्थितैवेति नास्ति तत्र संज्ञाफलम् ॥ **विभाषा श्वेरि**त्यत्र तु यदि विधिमुखेन विभाषाश्रुतिः प्रवर्तते, पित्स्वेव संप्रसारणं विभाषा स्यात्, कित्सु यजादित्वान्नित्यमेव स्यात् । अथ प्रतिषेधमुखेन प्रवृत्तिस्तदा कित्स्वेव विकल्प इति पित्सु न स्यात् । संज्ञाकरणे तु पूर्वं प्रतिषेधे कित्सु प्रवृत्ते पश्चाद्विधिमुखेन सर्वत्र पक्षे संप्रसारणस्य प्रवर्तनादिष्टं सिध्यति । यदा तु प्रतिलक्ष्यं भेदेन **विभाषा श्वेरि**त्यस्य व्यापारः क्वचिद्विधिमुखेन क्वचित्प्रतिषेधमुखेन तदा संज्ञाकरणमन्तरेणापि सिध्यतीत्यशिष्योऽयं योग इति वक्ष्यते—**अशिष्यो वा विदितत्वाद् इति ॥**

( उद्द्योतः ) भाष्ये—**पूर्वस्योत्तरेणेति । पूर्वस्य** प्रतिषेधस्य **उत्तरेण** विकल्पेन । बाधश्चात्र न निषेधप्रवृत्तिप्रतिबन्धः, किंतु तत्फलस्याभावनिष्ठसार्वकालिकत्वस्य प्रतिबन्ध इति बोध्यम् ॥ नन्वेवमपि पूर्ववाक्येन नशब्द एवादेशः स्यात्, तत्रार्थपरत्वे मानाभावादत आह—**इतिकरण इति ।** एवं चोभयत्रापीतिशब्दान्वय इति भावः ॥ एवं चार्थद्वयसंज्ञाकरणसामर्थ्यादेव वाक्यभेदेन क्रमेणान्वय इति भावः ॥ एवं च केवलप्राप्तविभाषायामुभयत्रविभाषायां च क्रमेण निषेधविकल्पयोरुपस्थितिः, शुद्धाप्राप्तविभाषायां तु निषेधस्यान्वयायोग्यत्वाच्छुद्धविकल्पोपस्थितिरिति तात्पर्यम् ॥ पूर्वं विकल्पाप्रवृत्तौ हेत्वन्तरमाह—**आनुपूर्वी चेति । अनुपयोगादिति । उभयगतिरिहे**त्युक्तेर्लोकगृहीतविकल्पशक्त्यैव सिद्धेरिति भावः ॥ **पक्षे निवृत्तिरिति ।** एवं च तत्र निषेधतात्पर्यकतयैव प्रवृत्तिरिति भावः॥ **अप्राप्तेति ।** तत्र विधितात्पर्यकतयैव प्रवृत्तिरिति भावः ॥ **पित्स्वेवेति ।** तत्राप्राप्तेरिति भावः ॥ एकस्योभयत्र तात्पर्यं तु न संभवतीत्याशयः ॥ भावतात्पर्यकतालोभेन पिद्विषयतैव स्यादिति तत्त्वम् ॥ अस्योभयत्रविभाषाविषयत्वं भाष्ये **विभाषाश्वेरि**त्यस्यैवोदाहरणदानेन बोधितम् । एवं च तदर्थमावश्यकेऽस्मिन् अन्यत्रापि स्वशास्त्रगृहीतसङ्केतेनैव बोधान्न **'या हि प्राप्ते विभाषा तत्रोभयमुपस्थित'** मित्याद्युक्तभाष्यविरोध इति दिक् ॥

( तत्त्वालोकः ) भाष्ये—**एतत्**—विधिप्रतिषेधोभयम् । **पूर्वं विधिमिति**—पूर्वप्रतिषेधमित्यर्थः । यत इत्यादिः । **विधिः**—विकल्पः ।

प्रदीपे—**तत्र**—तयोः । **पित्स्वेवेति**—तर्हीत्यादिः । **कित्सु**—कित्सु तु । **यजादित्वादिति**—श्वयतेरित्यादिः । 'वचिस्वपियजादीनां किती'त्यनेनेति भावः ।

उद्द्योते—**तत्फलस्य**—निषेधप्रवृत्तिफलस्य । **एवमपि**—इतिशब्दान्वयसत्त्वाद्वा शब्दस्य विकल्पार्थपरत्वेऽपि । **तत्रार्थपरत्वे इति**—इतिशब्दान्वयाभावान्नशब्दस्य निषेधार्थपरत्वे इत्यर्थः ॥ तत्र—आनर्थक्यहेतोरुक्तत्वादाह—**हेत्वन्तरमिति । शक्त्यैव**—विभाषापदशक्त्यैव । **उभयत्र**—पिति किति च । कैयटोक्तं निराकरोति—**भावेति ।** कैयटोक्तस्य भाष्यसम्मतत्वमाह—**अस्येति ।** संज्ञाकरणस्येत्यर्थः । एवं सति समापन्नं भाष्ययोर्मिथो विरोधं परिहरति—**एवञ्चेति । तदर्थम्**—उभयत्रविभाषार्थम् । **अन्यत्रापि**—प्राप्तविभाषादावपि । **एवेन**—प्रागुक्त—लोकगृहीतविकल्पविभाषापदशक्तिव्यवच्छेदः । ततोऽस्य प्राबल्यादित्याशयः ।

( २७१ आक्षेपवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ साध्वनुशासनेऽस्मिञ् शास्त्रे यस्य विभाषा तस्य साधुत्वम् ॥ * ॥

( भाष्यम् )

**साध्वनुशासनेऽस्मिञ् शास्त्रे यस्य विभाषा क्रियते सा विभाषा साधुः स्यात् । समासश्चैव हि विभाषा क्रियते, तेन समासस्यैव विभाषा साधुत्वं स्यात् ॥**

( प्रदीपः ) **साध्वनुशासन इति ।** साधुत्वप्रतिपादनार्थत्वाच्छास्त्रस्य साधुत्वस्यैव प्राधान्याद्विकल्पेन संबन्धः स्याद्, न तु तदङ्गभूतानां समाससंज्ञादीनामिति भावः ॥ ततश्च **विभाषा श्वेरि**त्यस्यायमर्थः स्याद्–विभाषा श्वयतेः साधु संप्रसारणं भवति, पक्षे त्वसाध्विति ॥

( उद्द्योतः ) **साधुत्वप्रतिपादनाच्छास्त्रस्येति** पाठः । **शास्त्रस्येति** कर्तुः शेषत्वे षष्ठी ॥ क्वचित्तु **साधुत्वप्रतिपादनार्थत्वादिति** पाठः ॥ **प्राधान्यादिति ।** यदिह परिनिष्ठितं तत्साध्विति अर्थापत्तिकल्पितवाक्यस्यैव मुख्यत्वात्तेन मुख्यतया साधुत्वस्यैव विधानादित्याशयः ॥ **तदङ्गभूतानामिति ।** तदुद्देश्यभूतानामित्यर्थः ॥ भाष्ये **यस्य विभाषा क्रियत इति ।** यत्सम्बन्धेन विभाषोच्यत इत्यर्थः ॥ **समासश्चैव हीति ।** हि यतः समासो विभाषा क्रियते

समासो विभाषेत्युच्यते, तत्र समासोद्देशेन साधुत्वविधानात्तस्यैव विकल्पः स्यादिति भावः ॥ साधुत्वं च जातिविशेषः । समासप्रकरणीय**विभाषा**धिकारस्य भाष्ये प्रत्याख्यानादाह—**विभाषा त्वेरिति** ॥

**(तत्त्वालोकः)** भाष्ये-वार्त्तिके **विभाषा**पदस्यावृत्त्या पूर्वत्र परत्र चान्वयः । **चो** वाक्यालङ्कारे प्रयुक्तः । **एव—**अपि । एवमग्रेऽपि ।

प्रदीपे-एवव्यवच्छेद्यमाह—**न त्विति । तदङ्गेति—**साध्वङ्गत्यर्थः ।

उद्द्योते—**षष्ठीति—**तथा च तस्य 'शास्त्रेणे'त्यर्थः । ननु शास्त्रेण साधुत्वस्याविधानात् कथन्तस्य प्राधान्यमित्यत आह—**यदिहेति** । तेषां वस्तुनस्तदङ्गत्वस्याभावादाह—**तदुद्देश्येति** । पौनरुक्त्यं निराकरोति—**यत्सम्बन्धेनेति । तत्र—**तथा सति । **तस्यैव—**साधुत्वस्यैव । भाष्यदत्तोदाहरणं विहायोदाहरणान्तरकथने बीजमाह—**समासेति** ।

**( आक्षेपबाधकभाष्यम् )**

**अस्तु । यः साधुः, स प्रयोक्ष्यते । असाधुर्न प्रयोक्ष्यते ॥**

**( प्रदीपः ) अस्तु यः साधुरिति ।** यथा भक्ष्याभक्ष्यसंनिधौ भक्ष्यमेवोपादीयते ॥

**( तत्त्वालोकः )** भाष्ये—**अस्त्विति—**साधुत्वस्यैव विकल्पः, तथापि न क्षतिर्यत इति शेषः ।

प्रदीपे—**उपादीयते-इति—**तथा साध्वसाधुसन्निधौ साधुरेवोपादीयेतेति शेषः ।

**( आक्षेपसाधकभाष्यम् )**

**न चैव हि कदाचिद् राजपुरुष इत्येतस्यामवस्थायामसाधुत्वमिष्यते ॥**

**( प्रदीपः ) न चैव हीति ।** सर्वदा त्वस्य साधुत्वं नोभयरूपत्वमित्यर्थः ॥

**( उद्द्योतः )** साधुत्वविकल्पे दूषणमाह—भाष्ये—**न चैवेत्यादिना ।** तद्व्याचष्टे—**सर्वदा त्विति ॥** सादृश्यादसाधुत्यागपुरःसरं साधूपादानं दुष्करमित्यपि बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**न चैव हि कदाचिदिति—**नहि तु कदाचिदपीत्यर्थः । अव्ययानां नानार्थत्वात् ॥ **इष्यते इति—**साधुत्वविकल्पे तु कदाचित्तत्रापि-असाधुत्वमापद्येतेति भावः ।

प्रदीपे—**अस्य—**राजपुरुष इत्यस्य । **नोभयरूपत्वम्—**न च साध्वसाधूभयरूपत्वम् ।

उद्द्योते-तत्र दूषणान्तरमाह-**सादृश्यादिति ।** साध्वसाध्वोरित्यादिः ।

**( भाष्यम् )**

**अपि च—**

**( तत्त्वालोकः )** साधुत्वविकल्पे दोषान्तरमाह—**अपि चेति ।**

**( २७१ आक्षेपवार्तिकम् ॥ १५ ॥ )**

**॥ * ॥ द्वैधाऽप्रतिपत्तिः ॥ * ॥**

**( भाष्यम् )**

**द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च—पुनर्विभाषाप्रदेशेषु द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति । यस्य पुनः कार्याः शब्दाः, विभाषाऽसौ समासं निर्वर्तयति ॥**

**( प्रदीपः ) द्वैधाऽप्रतिपत्तिरिति ।** साधुत्वविकल्पने विभाषाग्रहणस्योपयुक्तत्वात् शिष्टिवत्तुरित्यादि रूपं न सिध्यतीत्यर्थः ॥ **यस्य पुनरिति ।** एवं मन्यते—व्याकरणेनैव शब्दा उत्पाद्यन्ते, तन्त्रे विभाषाग्रहणेनापूर्वत्वेन विधेयत्वात्संप्रसारणमेव विकल्प्यत इति द्वैधं प्रतिपत्तिः शब्दानां सिध्यतीति भावः ॥

**( उद्द्योतः )** तत्र **साध्वनुशासन** इत्युक्त्या—शब्दनित्यत्वपक्ष एवायं दोषः, न तु कार्यत्वपक्षे—इत्युक्तम् । तदुपपादकम्—**यस्य पुन**रित्यादिभाष्यम् ।

(तत्त्वालोकः) भाष्ये—**न सिद्ध्यतीति—**साधुत्वविकल्पे इत्यादिः । **यस्येति**-मते इति शेषः । **निर्वर्तयतीति**-न तु तस्य साधुत्वमिति शेषः ।

प्रदीपे—**उपयुक्तत्वादिति—**तेन सम्प्रसारणविकल्पनालाभादीति शेषः । **एवमिति**—य इत्यादिः । **एवेन—**तत्साधुत्वव्यवच्छेदः ।

उद्द्योते—'यस्य पुनरि'त्यादिभाष्यस्य प्रकृतसम्बद्धतामुपपादयति—**तत्रेति** । प्रसङ्गाद् 'विभाषा श्वेरि'त्यादौ दोषदानावसरे इत्यर्थः । **उक्तम्—**सूचितम् । **तदुपपादकम्—**कार्यत्वपक्षे दोषाभावोपपादकम् ।

**( आक्षेपबाधकभाष्यम् )**

**यस्यापि नित्याः शब्दास्तस्याप्येष दोषो न भवति ॥**

**कथम् ? ॥**

**न विभाषा ग्रहणेन साधुत्वमभिसंबध्यते ॥**

**किं तर्हि, ? ।**

**समाससंज्ञाऽभिसंबध्यते-समास इत्येषा संज्ञा विभाषा भवतीति । तद्यथा-'मेध्यः पशुर्विभाषितः मेध्योऽनड्वान् विभाषितः'—इति । नैतद्विचार्यते-अनड्वान्नानड्वानिति ॥**

**किं तर्हि ? ।**

**आलब्धव्यो नालब्धव्य इति ॥**

**( प्रदीपः ) यस्यापीति ।** साधुत्वस्यापौरुषेयत्वादविकल्प्यत्वात्तदङ्गानामेव विकल्पः ॥ **तद्यथेति ।** पशुत्वानडुत्त्वयोरविकल्प्यत्वात्क्रिया विकल्प्यते ॥ नन्वन्यत्रोक्तम्—**न च संज्ञाया भावाभावाविष्येते—**इति । इह तूक्तम्—**संज्ञाऽभिसंबध्यते—**इति । ततश्च विरोधः ॥ नैष दोषः । इह वृत्तिवाक्ययोर्मुख्यार्थभेदादभिन्नार्थत्वमाश्रित्योक्तम् । अन्यत्र तु व्यपेक्षैकार्थीभावभेदाद्भिन्नार्थत्वमाश्रित्यैकार्थीभावे एव संज्ञाया भावाभावौ नेष्येते इत्युक्तमित्यविरोधः ॥

**( उद्द्योतः )** प्राधान्यात्साधुत्वस्यैव विकल्पः स्यादिति यदुक्तम्, तत्राह—**साधुत्वस्येति ॥** संज्ञायाः श्रुतत्वेन, साधुत्वस्याश्रुतत्वेन श्रुतस्य श्रुतेनैव सबन्धस्य न्याय्यत्वात्प्रयोगासमवायिलिङादिस्थले श्रुते विधेयत्वस्यावश्यकत्वाच्चेत्यपि बोध्यम् ॥ **पशुत्वेति ।** साक्षाच्छ्रूयमाणेऽप्ययोग्यत्वाद्यदा न संबन्धस्तदा किं वक्तव्यमश्रूयमाणेऽयोग्ये संबन्धो नेतीत्यर्थः ॥ **अन्यत्रेति । समर्थ**सूत्रे ॥ **मुख्यः** प्रधानः ॥ **अभिन्नार्थत्वमिति ।** एवं च तदर्थे कश्चित्साधुत्वेनान्वाख्यायमानोऽनन्वाख्यातस्य तदर्थकस्यान्यस्य निवर्तकः स्यादिति तस्यापि साधुत्वार्थं **विभाषा**धिकार आवश्यक इति भावः ॥ वाक्ये व्यपेक्षा परस्पराकाङ्क्षारूपा, पदार्थानामपृथगुपस्थितिविषयत्वमेकार्थीभावो-वृत्तिविषयः । एवं च वृत्तिवाक्ययोर्भिन्नार्थत्वान्न वाक्यानुज्ञानाय विभाषा-

ग्रहणम् ॥ किन्तु वृत्तिविषये एव संज्ञाविकल्पार्थं वाच्यम् । न च वृत्तौ संज्ञायाः स इष्यते । तस्मादेकार्थीभावस्यैव मन्दमत्यनुग्रहाय स विशेषणमिति तत्रोक्ततात्पर्यमित्यविरोध इति भावः ॥ भाष्ये—**समाससंज्ञे**त्यस्य तद्विषयैकार्थीभाव इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**यस्यापीति**—मते इति शेषः । एवमग्रेऽपि । **न विभाषेति**—यत इत्यादिः ।

प्रदीपे—**तदङ्गानामिति**—साधुत्वोद्देश्यानामित्यर्थः । समाससंज्ञादीनामिति शेषः । **क्रिया**—आलम्भनक्रिया । **आश्रित्येति**—तद्विति शेषः । **व्यपेक्षेति**—तयोरित्यादिः ।

उद्द्योते—तत्र युक्त्यन्तरद्वयमाह—**संज्ञाया इति । साधुत्वस्य**—साधुत्वस्य च । **श्रुतस्य**—विभाषाग्रहणस्य । दृष्टान्ताशयमाह—**साक्षादिति । श्रूयमाणेऽपि**—पशुत्वादौ । **सम्बन्ध इति**—विकल्पस्येत्यादिः । **अयोग्ये इति**—साधुत्वे इति शेषः । **एवञ्च**—अभिन्नार्थत्वाश्रयणे च । **कश्चित्**—वृत्तिः । **अन्यस्य**—वाक्यस्य । **नच**—न हि । **सः**—विकल्पः । एवमग्रेऽपि । समासप्रकरणीय-**विभाषा**धिकारस्य सिद्धान्तेऽसत्त्वादाह—**मन्देति ।** एवं सति समापन्नं भाष्यविरोधं परिहरति—**तद्विषयेति ।**

( २७३ आक्षेपवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ कार्येषु युगपदन्वाचययौगपद्यम् ॥ * ॥

( भाष्यम् )

**कार्येषु शब्देषु युगपदन्वाचयेन च यदुच्यते, तस्य युगपद्वचनता प्राप्नोति-'तव्यत्तव्यानीयरः' 'ढक् च मण्डूकात्' इति ॥ यस्य पुनर्नित्याः शब्दाः, प्रयुक्तानामसौ साधुत्वमन्वाचष्टे ॥**

**( प्रदीपः )** नित्यवादी कार्यपक्षे दूषणमाह-**कार्येष्विति ।** युगपद्भावे युगपच्छब्दो वर्तत इति द्वन्द्वः कृतः ॥ अन्वाचयः समुच्चयोऽभिमतो, यस्य चकारेण स्वरितत्वेन वा विधानम् । यस्य कार्याः शब्दाः स प्रयोगनिरपेक्षः शब्दानन्वाचष्ट इति तव्यादीनां युगपदुत्पत्तिः प्राप्नोति ॥

**( उद्द्योतः )** ननु युगपच्छब्दस्यैककाल इत्यर्थकस्य सप्तम्यर्थवृत्तेरन्वाचयशब्देनातादृशेन कथं द्वन्द्व इत्यत आह—**युगपद्भाव इति ॥** कार्येषु शब्देषु यौगपद्यान्वाचयविषये तेषां यौगपद्यं युगपत्प्रयोगः प्राप्नोतीति वार्तिकाक्षरार्थः ॥ भाष्ये—**युगपद्वचनतेति** बहुव्रीहेस्तल् ॥ **अन्वाचयेने**त्युक्त्वा **ढक् चेति** समुच्चयोदाहरणमसङ्गतमित्यत आह—**समुच्चय इति । स्वरितत्वेन वेति ।** यथा **काश्यादिभ्यष्ठञ्ञिठा**विति वर्तमाने **वाहीकग्रामेभ्यश्चे**त्यत्र ॥ नित्यशब्दवादे तु प्रयोगदृष्टानामेव शास्त्रे काल्पनिकविधेयत्वेनेष्टप्रत्ययविभागसिद्धिः । रेखागवयन्यायस्या**द्यन्ता**विति सूत्रे भाष्य एव वक्ष्यमाणत्वात् ॥

**(तत्त्वालोकः )** भाष्ये—**यस्येति**-मते इति शेषः । **अन्वाचष्टे इति**—तथाच तस्य मते न तव्यदादीनां युगपदुत्पत्तिः प्राप्नोतीति भावः । प्रदीपे—**कार्या इति**—मते इत्यादिः । **इतोति**—तस्य मते इति शेषः ।

उद्द्योते—सहविवक्षाया अभावादाह—**कथमिति । अन्वाचयेनेति**—नन्वित्यादिः । **उदाहरणम्**—उदाहरणदानम् । **वर्तमाने इति**—अनुवर्तमाने इत्यर्थः । 'अतष्ठञ्ञिठावितीत्यादिः । 'यस्य पुनरि'त्यादिभाष्याशयमाह—**नित्यशब्देति ।** ननु तत्र न मानमित्यत आह—**रेखागवयेति ।**

( आक्षेपबाधकभाष्यम् )

**ननु च यस्यापि कार्यास्तस्याप्येष न दोषः ॥**

**कथम् ? ॥**

**प्रत्ययः परो भवतीत्युच्यते । न चैकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन संभवोऽस्ति ॥**

**( प्रदीपः ) नचैकस्या इति ।** ननु व्यवहितेऽपि परशब्दः प्रवर्तते ॥ सत्यम् । अन्तरालस्थमनपेक्ष्यानन्तर्यमारोप्य तत्र परशब्दप्रयोगः । निर्दिष्टग्रहणं त्वानन्तर्यार्थमिति कुतो व्यवहितस्य प्रयोगः ॥ कथं तर्ह्युक्तम्—**एका प्रकृतिर्बह्वश्च यत्र** इति, तत्र यत्राकृतेरेकत्वात्तस्याश्च परत्वादानन्तर्याच्चादोषः । तव्यदादयस्त्वेकाकृतियुक्ता न भवन्ति ।

**( उद्द्योतः ) व्यवहितेऽपीति ।** लोके तथा दर्शनादिति भावः ॥ **आनन्तर्यमारोप्येति ।** अनेन परादिशब्दानामव्यवहितएव प्रवृत्तिरत एव **व्यवहिताश्चे**ति सूत्रं सार्थकमिति भावः ॥ शास्त्रे तु सर्वथा न व्यवहिते प्रवृत्तिरित्याह—**निर्दिष्टग्रहणं त्विति ।** तुश्चार्थे । **छन्दसि परेऽपि, परश्चे**त्यादावपि उत्तराङ्गविकल**तस्मादिति** परिभाषायाः प्रवृत्तेरिति भावः ॥ **कथं तर्हीति । सरूपसूत्रे** इति भावः ॥ **एकाकृतीति ।** एकानुपूर्वी हि एकाकृतिरत्र ॥

**( तत्त्वालोकः )** भाष्ये—**यस्यापीति**—मते इति शेषः । एवमग्रेऽपि । **कार्या इति**—शब्दा इति शेषः । **प्रत्यय इति**—यत इत्यादिः ।

प्रदीपे—**तत्र**—व्यवहिते । युक्त्यन्तरमाह—**निर्दिष्टग्रहणमिति । व्यवहितस्येति**—व्यवहितवाचिनः परशब्दस्येत्यर्थः । अत्रेत्यादिः । **तर्हीति**—यद्येकस्याः प्रकृतेरनेकस्य प्रत्ययस्य युगपत्परत्वेन सम्भवो नास्तीत्यादिः ।

उद्द्योते—**शास्त्रे त्विति**—लोके कथञ्चिद् व्यवहितेऽपि तस्य प्रवृत्तिरास्तामित्याशयः ।**उत्तराङ्गेति**—षष्ठ्यन्तांशेत्यर्थः । अत्राकृतिरवयवसंस्थानमेव, न तु जातिरित्याह—**एकानुपूर्वीति ।**

( आक्षेपाभिप्रायभाष्यम् )

**नापि ब्रूमः—प्रत्ययमाला प्राप्नोतीति ॥**

**किं तर्हि ? ।**

**कर्तव्यमिति प्रयोक्तव्ये युगपद्द्वितीयस्य तृतीयस्य च प्रयोगः प्राप्नोतीति ॥**

**( प्रदीपः ) नापि ब्रूम इति ।** एकस्याः प्रकृतेः सर्वे भवन्तीति न **ब्रूमः ।** किं तर्हि ?। प्रत्ययान्तरेण प्रकृत्यन्तरस्याक्षेपात् कर्तव्यमिति प्रयुयुक्षिते करणीयादीनामपि प्रयोगः प्राप्नोति ॥

**( उद्द्योतः )** भाष्ये—**नापि ब्रूम** इत्यस्य नैव ब्रूम इत्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—**प्रत्ययमालेति**-प्रत्ययसमुदाय इत्यर्थः । एकस्याः प्रकृतेरित्यादिः । **कर्तव्यम्**—तव्यत्प्रत्ययान्तम् । **द्वितीयस्य**—तव्यप्रत्ययान्तस्य तस्य । **तृतीयस्य**—करणीयमित्यस्य । एवमग्रेऽपि । प्रदीपे—**सर्वे इति**—प्रत्यया इति शेषः ।

उद्द्योते—अपिसमुच्चेयाप्रसक्तत्वादाह—**नैवेति ।**

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । अर्थगत्यर्थः शब्दप्रयोगः । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य च तृतीयस्य च प्रयोगेण न भवितव्यम् 'उक्तार्थानामप्रयोगः' इति ॥**

**( प्रदीपः ) अर्थगत्यर्थ** इति । **तव्यत्तव्यानीयर** इत्यस्माद्वाक्याद्वाक्यान्तराण्युपप्लवन्ते तत्प्रतिपादकानि-भावेतस्तव्यद्भवति भावकर्मणोरित्यादीनि । तत्र कर्तव्यशब्देन तस्यार्थस्य प्रतिपादितत्वात्करणीयशब्दो न प्रयुज्यते ॥

**( उद्द्योतः )** अर्थोऽपि समुदायस्यैवेति शङ्कमानं प्रत्याह—**तव्यदिति** । प्रत्ययादिसंज्ञा**स्तव्यत्तव्यानीयर** इति बहुवचननिर्देशात् प्रत्येकमिति प्रत्येकमेव भावाद्यर्थकत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अर्थगत्यर्थ इति**—अर्थज्ञानप्रयोजनक इत्यर्थः । यत इत्यादिः । **तत्र**—तथा सति । एवं प्रदीपेऽपि । **एकेन**—( तव्यत्प्रत्ययान्तेन ) कर्तव्यमित्यनेन । **तस्य**—कर्मरूपस्य । एवं प्रदीपेऽपि । **द्वितीयस्येति**—युगपत्तदर्थकस्येत्यादिः ।

प्रदीपे—**करणीयशब्द इति**—युगपदित्यादिः ।

उद्द्योते—समुदायस्य नार्थ इत्यत्र बीजमाह—**प्रत्ययेति** ।

( २७४ आक्षेपवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ आचार्यदेशशीलने च तद्विषयता ॥ * ॥

( भाष्यम् )

**आचार्यशीलनेन देशशीलनेन च यदुच्यते, तस्य तद्विषयता प्राप्नोति । 'इको ह्रस्वोऽङ्यो गालवस्य' 'प्राचामवृद्धात् फिन् बहुलम्' इति गालवा एव ह्रस्वान्प्रयुञ्जीरन्, प्राक्षु चैव हि फिन् स्यात् । तद्यथा 'जमदग्निर्वा एतत्पञ्चममवदानमवाद्यत् । तस्मान्नाजामदग्न्यः पञ्चावत्तं जुहोति' ॥ यस्य पुनर्नित्याः शब्दाः, गालवग्रहणं तस्य पूजार्थम् , देशग्रहणं च कीर्त्यर्थम् ॥**

**( प्रदीपः ) आचार्येति** । आचार्यस्य देशस्य च पुनः पुनः संकीर्तनमाचार्यदेशशीलनं तत्र तस्य शब्दस्य तद्विषयत्वमेव स्यात् , सर्वप्रयोक्तृत्वप्रसङ्गे गालवस्येति नियमार्थं स्यात् ॥ **यस्य पुनरिति** । अनादित्वाच्छब्दव्यवहारस्य नित्यत्वपक्षे नास्ति प्रयोक्तृत्वनियमः । केवलं गालवः स्मर्तृत्वेन स्मृतोऽस्य शास्त्रस्य प्रामाण्यं प्रतिपादयितुमिति पूजार्थमाचार्यग्रहणम् । शास्त्रस्य ह्यनाद्य प्रतिपादकत्वात्पूजा भवति । **कीर्त्यर्थमिति** । कीर्तौ सत्यां तेषां स्वर्गाद्यवस्थानं स्थिरं भवति यथा इन्द्रद्युम्नादीनाम् ॥

**( उद्द्योतः ) पुनः पुनः संकीर्तनमिति** । अत्र **पुनः पुनरि**त्यस्योपयोगश्चिन्त्यः । एकैकस्मिन् शास्त्रे तदभावाच्च । तस्मात्संकीर्तनमात्रमेवात्र **शीलन**मिति बोध्यं, तेन,'यत्कार्यमुच्यते इति वार्तिकाक्षरार्थः ॥ अत एवाग्रे भाष्ये **तत्कीर्तने चे**त्येवोक्तम् । तद्विषयत्वमुपपादयति—**सर्वप्रयोक्त्रिति** ॥ इको ह्रस्वो भवति । तत्प्रयोक्तृत्वं च गालवस्येत्यादिक्रमेण सूत्रार्थः ॥ भाष्ये—**प्राक्षु चैवेति** । प्राग्देश एव फिन्प्रयोगः स्यादित्यर्थः ॥ **अनादित्वादिति** । एवं च गालवातिरिक्तशिष्टैरपि प्रयुज्यमानत्वान्नियमासंभवः ॥ किंचैतत्पक्षे **शास्त्रं रेखागवयन्यायेन** कल्पितशब्दविषयमिति कल्पितशब्दे प्रयोक्तृनियमासंभव इति भावः ॥ **शास्त्रस्य प्रामाण्यमिति** । एवं च **पूजार्थमि**त्यस्य स्वशास्त्रपूजार्थमित्यर्थ इति भावः ॥ तदेवाह—**शास्त्रस्य हीति** ॥ भाष्ये—**देशग्रहणं चेति** । चेनाचार्यग्रहणम् । **देशग्रह**णस्य पूजार्थत्वं तु वक्तुमशक्यम् । देशस्य स्मर्तृत्वाद्यभावादिति भावः ॥ **स्थिरं भवतीति** । तत्र देशकीर्तौ **तद्देशीयानां स्वरवस्थान**मित्यर्थः । तेन च पाणिनेरपि नदिति भावः ॥ **ननु नित्यशब्दवादे** गालवादिग्रहणस्य पूजार्थत्वे ह्रस्वाभावविशिष्टस्य **साधुत्वबोधनं न स्यात्** , तत्पक्षे सत्कल्पावेन साध्वसाधुविवेकाय **शास्त्रमिति चेन्न** । गालवः स्मर्ता नान्य इति **स्मृत्यन्तरानुसन्धानद्वारेण विकल्पसिद्धेः** । वाग्रहणे एव कर्तव्ये गालवग्रहणं व्यर्थमिति शङ्कानिरासार्थं तु भाष्ये **पूजार्थ**मित्युक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**शीलने चेति**—यदुच्यते, तस्येति शेषः । **इति**—इत्यनयोः ( क्रमेण ) । **हिः**—वाक्यालङ्कारे प्रयुक्तः । **वै**—यस्मात् । **अवदानम्**—छेदनम् । **अवाद्यत्**—अखण्डयत् । **पञ्चावत्तम्**—पञ्चधा छिन्नम् , उपस्तरणत्रिरवदानाभिधारणानि । **यस्येति**—मते इति शेषः । एवमग्रेऽपि ।

प्रदीपे—**तत्रेति**—तस्मिन् सतीत्यर्थः । यदुच्यते इति शेषः । **सर्वेति**—बहुव्रीहिः । ह्रस्वस्येत्यादिः । **नियमार्थम्**—ह्रस्वो गालवेनैव प्रयोज्यो न त्वन्येनेति नियमार्थम् । एवं सति समापन्नस्य गालवग्रहणवैयर्थ्यस्य भाष्योक्तं परिहारमुपपादयति—**केवलमिति** । **स्मर्तृत्वेनेति**—तस्येत्यादिः । **कीर्ताविति**—देशस्येत्यादिः । **तेषाम्**—तद्देशीयानाम् ।

उद्द्योते—तत्र हेत्वन्तरमाह—**एकैकेति** । पुनः पुनः संकीर्तनानावश्यकत्वादित्यादिः । प्रकृतमुपसंहरति-**तस्मादिति** । **इति**-इत्यादि । इदं समूलयति-**अत एवेति** । संकीर्तनमात्रस्यात्र शीलनत्वादेवेत्यर्थः । शेषपूरणवाक्यभेदाभ्यां तदाशयमाह—**इको ह्रस्व इति** । अत एव कैयटेन तस्य नियमार्थतोक्ता । कैयटाशयमाह—**एवञ्चेति** । शब्दनित्यत्वपक्षे ह्रस्वस्य नित्यत्वे चेत्यर्थः । **अपिना**—गालवसमुच्चयः । **नियमेति**—प्रयोक्त्रित्यादिः । तत्र युक्त्यन्तरमाह-**किञ्चेति** । **एतत्पक्षे**—शब्दनित्यत्वपक्षे । **विषयम्**—विषयकम् । देशगालवग्रहणयोः भेदेनोक्तौ बीजमाह—**देशग्रहणस्येति** । **ततश्च**—देशोपादानाच्च । **तेन च**—तद्देशीयत्वेन च । **तत्**—स्वरवस्थानम् । **न स्यादिति**—अन्यथा तस्य वैयर्थ्यमिति भावः । **तत्पक्षे**—शब्दनित्यत्वपक्षे । **स्मर्तेति**—ह्रस्वस्येत्यादिः । **विकल्पसिद्धेरिति**—तथाच तस्योभयार्थतेत्याशयः । नन्वेवं भाष्यविरोध इत्यत आह—**वाग्रहणे एवेति** ।

( आक्षेपबाधकभाष्यम् )

**ननु च—यस्यापि कार्याः शब्दाः, तस्यापि गालवग्रहणं पूजार्थं स्यात् , देशग्रहणं च कीर्त्यर्थम् ॥**

**( प्रदीपः ) ननु च यस्यापीति** । कार्यपक्षेऽपि पूजा शक्यते व्याख्यातुम्—यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्त्वमपि प्रयुङ्क्ष्वेति स्तुत्यर्थोऽर्थवादः स्यादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**यस्यापीति**—मते इति शेषः । एवमग्रेऽपि ।

प्रदीपे—कार्यपक्षे शास्त्रस्यानाद्यर्थप्रतिपादकत्वादुक्तरीत्या पूजा

दुर्वचा, कीर्त्तिस्तु तथैव सुवचेत्याशयेनाह—**यस्मादिति**। **तस्मादिति**—तदिति शेषः।

( २७५ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ॐ॥ तत्कीर्तने च द्वैधाऽप्रतिपत्तिः ॥ॐ॥

( भाष्यम् )

**तत्कीर्तने च द्वैधं शब्दानामप्रतिपत्तिः स्यात् । इच्छामश्च पुनराचार्यग्रहणेषु देशग्रहणेषु च द्वैधं शब्दानां प्रतिपत्तिः स्यादिति, तच्च न सिध्यति ॥**

**( प्रदीपः )** इदानीं कार्यपक्षे दूषणमाह—**तत्कीर्तन इति ।** कार्यपक्षेऽयमर्थः स्याद्—यस्माद्गालवेन ह्रस्वत्वं प्रयुक्तं तस्मात्प्रयोक्तव्यमिति । ततश्च ह्रस्वत्वस्य विकल्पो न स्यात् । नित्यत्वपक्षे तु गालवो ह्रस्वस्य स्मर्ताऽन्यो दीर्घस्येति स्मृत्यन्तरानुसन्धानद्वारेण विकल्पः सिध्यतीति नित्यपक्ष एव युक्तः॥

**( उद्द्योतः )** भाष्ये—**तत्कीर्तने चेति ।** आचार्यदेशकीर्तने चेत्यर्थः ॥ **यस्य कार्याः शब्दास्तस्ये**ति शेषः ॥ तदेवाह—**इदानीमिति ॥ प्रयुक्तमिति ।** कृतमित्यर्थः ॥ **नित्यपक्षे त्विति ।** कार्यपक्षे त्वेवं वक्तुमशक्यम्,—यतो गालवेन कृतोऽतः कर्तव्यः, नान्येन कृतोऽतो न कर्तव्य इति । अन्येन कृतस्य पुनः करणवैयर्थ्यात् । न ह्यन्यकृतस्य पुनः करणमस्ति । नाप्यन्येनाकृतस्याकरणम् । तादृशस्यैव करणात् ॥ एतेनान्येन कृतस्यानुवादोऽन्याकृतत्वबोधनद्वारा विकल्पबोधक इति परास्तम् ॥ पाणिनिकृतानामपि **पचो व** इत्यादीनामन्याकृतत्वेन तेषामपि विकल्पापत्तेश्च । तस्मात्कार्यवादोऽसङ्गत इति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**तच्चेति**—कार्यपक्षे इति शेषः।

प्रदीपे—**दूषणमिति**—दुष्परिहरमित्यादिः । **तस्मादिति**—तदिति शेषः। **द्वारेणेति**—तस्येति शेषः।

उद्द्योते—**यस्येति**—मते इति शेषः। एवमग्रेऽपि। कार्यपक्षोक्तत्वादाह—**कृतमिति ।** नन्वेवं कार्यपक्षेऽपि वक्तुं शक्यमिति सोऽपि पक्षो युक्त इत्यत आह—**कार्यपक्षे त्विति ।** एवम्पदबोध्यं निर्दिशति—**यतो गालवेनेति ।** अत्र दोषमाह—**अन्येन कृतस्येति ।** 'नान्येन कृतः' इत्यत्र दोषमाह—**नाप्यन्येनेति । तादृशस्यैव**—अन्येनाकृतस्यैव । रत्नाद्युक्तिं खण्डयति—**एतेनेति ।** अनुवादवैयर्थ्येनेत्यर्थः । तत्र हेत्वन्तरमाह—**पाणिनीति ।** तथा सतीत्यादिः।

( सूत्रप्रत्याख्यानम् )

( २७६ सिद्धान्तवार्तिकम् ॥ १९ ॥ )

## ॥ ॐ ॥ अशिष्यो वा विदितत्वात् ॥ ॐ ॥

( भाष्यम् )

**अशिष्यो वा पुनरयं योगः ॥**

**किं कारणम् ? ॥**

**'विदितत्वात्' । यदनेन योगेन प्रार्थ्यते तस्यार्थस्य विदितत्वात् ॥ येऽपि ह्येतां संज्ञां नारभन्ते तेऽपि विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति ॥ याज्ञिकाः खल्वपि संज्ञामनारभमाणा विभाषेत्युक्तेऽनित्यत्वमवगच्छन्ति । तद्यथा—'मेध्यः पशुर्विभाषितो मेध्योऽनड्वान्विभाषितः' इति । आलब्धव्यो नालब्धव्य इति गम्यते ॥ आचार्यः खल्वपि संज्ञामारभमाणो भूयिष्ठमन्यैरपि शब्दैरेतमर्थं संप्रत्याययति—बहुलम्, अन्यतरस्याम्, उभयथा, वा, एकेषाम् इति ॥**

**( प्रदीपः ) अशिष्यो वेति ।** वाशब्दो विकल्पे ॥ तेनाकृतिपक्षे उभयत्र विभाषार्थं सूत्रं कर्तव्यम् । व्यक्तिपक्षे तु लक्ष्यभेदेन लक्षणभेदात्क्वचित्किंचिल्लक्षणं विधिमुखेन प्रवर्तते, क्वचिन्निषेधमुखेन प्रवर्तत इतीष्टसिद्ध्या सूत्रं न कर्तव्यमित्यर्थः॥

**( उद्द्योतः )** ननु लोकतोऽनित्यत्वार्थलाभेऽपि निषेधविकल्पयोरलाभ इत्यत आह—भाष्ये—**आचार्यः खल्वपीति ।** एवं च **हक्रो**रित्याद्युभयत्र विभाषायां यथा तव तयोर्लाभस्तथा विभाषापदघटितेऽपि भविष्यतीति नार्थः सूत्रेणेति भावः ॥ **वाशब्दो विकल्पे इति ॥** यत्तु अर्थस्य संज्ञित्ववद्विभाषापदार्थस्यैव संज्ञात्वम्, तत्रापीतेः संबन्धात् । न च पदजन्यपदार्थोपस्थित्यभावेनान्वयासंभवः । विकल्पवाचिपदस्य तदर्थे लक्षणाभ्युपगमात् । एवं च लक्षणातात्पर्यग्राहकमिदं सूत्रम् । अर्थे न संज्ञात्वमिति चेत् । तदर्थाक्षिप्तशब्दमात्रस्य संज्ञात्वमस्तु, इतिशब्दसंबन्धसामर्थ्यादिति ॥ तन्न । एकस्यानेकसंज्ञायाः शास्त्रेऽदर्शनात् । **अनाकृतिः संज्ञे**ति वृद्धिसूत्रस्थभाष्यविरोधाच्च ॥ **तेनाकृतीति ।** तत्पक्षे लिट्त्वजातौ विधिमुखेन प्रवृत्तौ पित्येव स्यात्, निषेधमुखेन प्रवृत्तौ कित्येव स्यात्, न तु सर्वत्रेति सूत्रं कर्तव्यम् । सति च सूत्रे लिट्त्वजातौ प्राप्तस्य निषेधे तस्यामेव विकल्पो विधीयमानः सर्वत्र सिध्यतीति भावः ॥ प्रत्याख्यानाशयमाह—**व्यक्तिपक्षे त्विति । क्वचिद्विधिमुखेने**त्यन्वयः । **किंचिल्लक्षण**मुभयत्रविभाषारूपम् ॥ उत्तरत्र तु **क्वचित्प्रतिषेधमुखेने**त्येव पाठः ॥ परे तु—आकृतिपक्षे किं तज्जात्याश्रयसकलव्यक्तिविषयं लक्षणम्, उत—तज्जात्याश्रययत्किंचिद्विषयम् । नाद्यः । सूत्रारम्भेऽपि नपदघटितवाक्यस्य तद्विषयताया वक्तुमशक्यत्वात् । तस्य यत्किंचिद्विषयता, वाघटितस्य सर्वविषयतेति तु दुर्लभम् ॥ नान्त्योऽपि । **न ब्राह्मणं हन्या**दित्यादौ जातिपक्षे सर्वव्यक्तिविषयताया एव दृष्टत्वात् । किंच तत्र किं विधिमुखप्रवृत्त्या पिद्विषयत्वं निषेधमुखप्रवृत्त्या किद्विषयत्वं वेत्यत्र विनिगमनाविरहात्सूत्रं विनाप्युभयमुखेन प्रवृत्ताविष्टसिद्धेः । न च भावतात्पर्यकता पिद्विषयत्वे विनिगमिका । **विभाषोपयमने** इत्यादौ त्रिसंशयत्वानुपपत्तेः । भावतात्पर्यकतालोभेनाप्राप्तविभाषात्वस्यैव संभवात् । **विप्रतिषेध**शास्त्रबलात्तेष्वभावतात्पर्यकतापि स्यादिति चेत्प्रकृतेऽपि तुल्यम् । तस्मात्पक्षद्वयेऽपि सूत्रप्रत्याख्याने भाष्यतात्प र्यम् । किं च सूत्रे कृते त्रिसंशयाप्राप्तविभाषास्वपि तत्प्रवृत्तिः स्यादिति सोच्छिद्यतैव। लक्ष्यानुसारादप्रवृत्तौ तु सूत्रं व्यर्थमेवेति भाष्याशयः ॥ एतदेव ध्वनयन्त्रिसंशयाप्राप्तविभाषां दर्शयति। त्रिसंशयास्वप्राप्तविभाषात्वमेवेति भ्रमनिरासायेतरयोरपि कथनमित्याहुः॥

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्**—कस्मात्कारणात् । **यत्**—अनित्यत्वम् । **अर्थस्येति**—अनित्यत्वरूपार्थस्येत्यर्थः । लोकत इति शेषः । **एतां संज्ञाम्**—विभाषासंज्ञाम् । **संज्ञाम्**—विभाषासंज्ञाम् । एवमग्रेऽपि । **आचार्यः**—पाणिनिः । **एतम्**—अनित्यत्वरूपम् ।

प्रदीपे—**सूत्रम्**—प्रकृतसूत्रम् । एवमग्रेऽपि ।

उद्द्योते—**अनित्यत्वार्थेति**—विभाषापदस्येत्यादिः । **एवञ्च**—बहुलमित्यादिशब्दैरनित्यत्वा बोधने च । **तव**—निषेधविकल्पयोर्बहुलमित्यादिसंज्ञामकुर्वतः । **तयोः**—निषेधविकल्पयोः । **सूत्रेण**—प्रकृतसूत्रेण । कृष्णाद्युक्तिं खण्डयति—**यत्त्विति । अर्थस्य**—नवा-

शब्दार्थस्य । **तत्रापीति**—विभाषापदेऽपीत्यर्थः । मध्यमणिन्यायेनेति भावः । **न चेति**—एवं प्रदेशे विभाषापदार्थोपस्थितनिषेधविकल्पयोरिति शेषः । **तदर्थे**—विभाषाशब्दार्थे । अन्दवादर्शनादाह—**अर्थे नेति । तदर्थेति**—विभाषापदार्थेत्यर्थः । **तत्पक्षे**—जातिपक्षे । **लिट्त्वजाताविति**—'विभाषा इवेरि'त्यस्येति शेषः । **पित्येवेति**—विकल्पः स्यात् , किति तु यजादित्वान्नित्यमेवेति शेषः । **कित्येवेति**—विकल्प इति शेषः । उभयमुखेन प्रवृत्तिस्तु न सम्भवति, वैरूप्यलक्षणवाक्यभेदापत्तेरिति भावः । **सूत्रम्**—प्रकृतसूत्रम् । एवमग्रेऽपि । **प्राप्तस्य निषेधे इति**—किति प्राप्तस्य श्रुतक्रमानुरोधेन पूर्वं नेति निषेधे इत्यर्थः । ऐकरूप्यं प्रापितायां किदकिद्विषयायामिति शेषः । **विकल्पः**—ऐकरूप्येण वेति विकल्पः । कैयटोक्तं खण्डयति—**परे त्विति । विषयम्**—विषयकम् । **यत्किञ्चिद्विषयम्**—यत्किञ्चिद्व्यक्तिविषयकम् । **तदिति**—सर्वव्यक्त्योरित्यर्थः । **बाधटितस्य**—नापदघटितवाक्यस्य । **दुर्लभमिति**—विनिगमनाविरहादिति भावः । दोषान्तरमाह—**किञ्चेति । तत्र**—लिट्त्वजातौ । **भावतात्पर्यकतालोभेनेति**—तत्रापीत्यादिः । **तेषु**—'विभाषोपयमने' इत्यादिषु । **पक्षद्वयेऽपि**—जातिव्यक्तिपक्षद्वयेऽपि । इदं द्रढयति—**किञ्चेति । तदिति**—प्रकृतसूत्रेत्यर्थः । **सेति**-त्रिसंशयाप्राप्तविभाषेत्यर्थः । संशयाभावादिति भावः । **अप्रवृत्तौ त्विति**—तत्रेत्यादिः । पूर्वपरयोः सङ्गतिमाह—**एतदेवेति** । नन्वेवं तत्रेतरयोः कथं कथनमित्यत आह—**त्रिसंशयास्त्विति ॥** शब्दकौस्तुभकृतस्तु—जातिपक्षेऽपि प्रदेशेष्वेव 'नवा इवेरि'त्यादि पठित्वा सूत्रमिदं प्रत्याचक्षते ॥ तथा च'अशिष्यो वे'ति वार्तिके वाशब्दोऽवधारण एव न तु विकल्पे इत्याशयः ॥

( अप्राप्तविभाषाप्रकरणम् )

( २७७ अधिकारवार्तिकम् ॥ २० ॥ )

## ॥ ❀ ॥ अप्राप्ते त्रिसंशयाः ॥ ❀ ॥

( भाष्यम् )

**इत उत्तरं या विभाषा अनुक्रमिष्यामः, अप्राप्ते ता द्रष्टव्याः ॥ त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) अप्राप्ते इति** । अधिकारोऽयम् ॥ **त्रिसंशया इति** । त्रिष्वर्थेषु संशयो यासु तास्त्रिसंशयाः ॥

**( उद्द्योतः ) इत उत्तर**मित्यस्य लाभे युक्तिमाह—**अधिकार इति ॥** संशयत्रयस्य काप्यभावादाह—**त्रिष्विति ॥**

**( तत्त्वालोकः )** भाष्ये—**इत उत्तरमिति**—'प्राप्ते चे' त्यतः पूर्वमिति शेषः । **अनुक्रमिष्यामः**—अनुक्रमेण वक्ष्यामः । **त्रिसंशयाः**—कोटित्रयप्रकारकसंशयविषयीभूताः । कोटित्रयमेव दर्शयति—**प्राप्ते इत्यादिना** । यद्यप्यप्राप्तेविभाषा बह्व्यः सन्ति तथापि त्रिसंशया अप्राप्तेविभाषा एतावन्त्य एवेति दर्शयितुमयं सन्दर्भः ।

प्रदीपे—**अधिकारोऽयमिति**—'प्राप्ते चे'त्यस्मादधिकारात्प्रागिति शेषः ।

( २७८ अप्राप्तविभाषोदाहरणवार्तिकम् ॥ २१ ॥ )

## ॥ ❀ ॥ द्वन्द्वे च, विभाषा जसि ॥ ❀ ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( आक्षेपभाष्यम् )

**कथं वा प्राप्ते ?, कथं वाऽप्राप्ते ?, कथं वोभयत्र ?**

( संदेहसाधकभाष्यम् )

**उभयशब्दः सर्वादिषु पठ्यते । तयपश्चायजादेशः क्रियते । तेन वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) द्वन्द्वे चेति** । प्रकारोपलक्षणार्थमेतदुपात्तम् । **प्रथमचरमत**येत्यत्र तदप्रहणे संशयः । तत्र तयशब्देन **प्रयोजनं सर्वनामाव्ययसंज्ञाया**मिति वान्वर्थसंज्ञाविज्ञानाद्वा केवलस्य प्रयोगाभावात्तदन्तस्यैव सर्वनामत्वसंभवात् **प्रत्ययग्रहण** इति परिभाषया तदन्तविधिः ॥ तत्र यदि सर्वादिग्रहणेन तदन्तं विशेष्यते । नेमशब्दोऽव्यभिचारात्प्रथमादयस्त्वसंभवान्न विशेष्यन्ते । तदोभयशब्दस्य जसि नित्या संज्ञा विभाष्यत इति प्राप्तविभाषा स्यात् ॥ अथ **सर्वादीनी**ति निवृत्तम् , पूर्वविप्रतिषेधश्च तदाऽप्राप्तविभाषा ॥ अथ परविप्रतिषेधस्तदोभयत्रविभाषा ॥

**( उद्द्योतः ) द्वन्द्वे च, विभाषा जसी**त्युक्त्वोभयशब्दोदाहरणमसङ्गतमत आह—**उपलक्षणेति । विभाषा जसी**त्यस्य द्वन्द्वविषयतया द्वन्द्वे च संज्ञानिषेधेन सर्वनामसंज्ञीयाप्राप्तविभाषात्वनिश्चयेन निषेधीयप्राप्तविभाषात्वनिश्चयेन वा त्रिसंशयत्वाभावादिति भावः ॥ द्वन्द्वे इत्यस्यासंबन्धे पूर्वादीनां जसि विकल्पारम्भो व्यर्थः स्यादिति तात्पर्यम् ॥ ननु तयशब्देऽपि कथं संशयः, **प्रथमा**दिसूत्रेण प्रत्ययमात्रस्य संज्ञा, **सर्वादि**सूत्रेण तु उभयशब्दस्य समुदायस्येति भिन्नविषयत्वेनाप्राप्तविभाषात्वनिर्णयादत आह—**तत्रेति ॥ तयशब्देने**त्यस्य तदन्तविधिरित्यनेनान्वयः ॥ अन्वर्थत्वेन कथं तदन्तविधिरत आह—**केवलस्येति ॥ सर्वनामत्वसंभवात्** । सर्वार्थबोधकत्वसंभवात् । तथा च तस्य सर्वार्थबोधकत्वाभावात्सामर्थ्येन संज्ञाविधावपि प्रत्ययग्रहणपरिभाषया तदन्तविधिरिति भावः ॥ **पूर्वविप्रतिषेधश्चेति** । सर्वादित्वनिबन्धना संज्ञा जस्भिन्ने सावकाशा, द्वितयादिषु च विकल्पः, उभयशब्दे जस्युभयप्राप्तौ पूर्वविप्रतिषेधः । न च नित्या संज्ञाऽन्तरङ्गा । अन्तरङ्गपरिभाषाया अप्रवृत्तेः । तथाहि—**न 'अन्तरङ्गं बलीय'** इत्यस्या अत्र विषयः, युगपत्प्राप्त्यभावात् । जसादेः सर्वनाम्नो विहितत्वसंपत्तये तस्याः पूर्वमेव प्रवृत्तिः । अस्यास्तु, जसुत्पत्त्यनन्तरमिति स्पष्टमेव ॥ नाप्य**सिद्धं बहिरङ्गमन्तरङ्ग** इत्यस्याः अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेरनया तत्प्रवृत्तेर्वारयितुमशक्यत्वात् । बहुशस्तथासत्त्वात् । तदुत्तरमप्येतत्प्रवृत्त्या पक्षे तदभावविशिष्टस्य साधुत्वबोधनं पूर्वादिष्विव । त्रिसंशयत्वस्य भाष्योक्तस्यासङ्गत्यापत्तेश्चेति दिक् ॥ भाष्ये—**तेन वेत्यादि** । तेन नित्ये प्राप्ते वा अन्यत्राप्राप्ते वेत्यन्वयः ॥

**( तत्त्वालोकः )** भाष्ये—**द्वन्द्वे च, विभाषा जसीति**—'प्रथमचरमतयाल्पार्धकतिपयनेमाश्चे'त्यर्थः । 'विभाषा जसी'त्यत्रोद्योतोक्तरीत्याऽप्राप्तविभाषात्वस्य प्राप्तविभाषात्वस्य वा निर्णयेन त्रिसंशयत्वासम्भवात् । **नन्वेवं 'प्रथमचरमे'** त्याद्येव कुतो नोक्तमिति चेन्न, तत्र विभाषाशब्दाश्रवणात् । न चैवमपि 'विभाषा जसि' 'प्रथमचरमे'त्याद्येव कथन्नोक्तमिति वाच्यम् , लघूक्त्या विचारणीयस्थलविशेषावगतिसम्भवे तदर्थं गुरूक्त्याश्रयणस्यानौचित्यात् । अत एव **'उभयशब्दः'** इत्यादि भाष्यं सङ्गच्छते । **तयपश्चेति**—उभशब्दात् 'संख्याया अवयवे तयबि'ति सूत्रेण जातस्येत्यादिः । 'उभादुदात्तो नित्यमि'ति सूत्रेणेति शेषः ।

प्रदीपे—**प्रकरणेति—**'विभाषा जसी'त्येतत्प्रकरणेत्यर्थः। **प्रथमेति—**तथाच तस्मिन् प्रकरणे जसः कार्यम्प्रति विभाषा संज्ञाविधायके इत्यादिः। **तत्र—**प्रथमचरमतयेत्यत्र। **केवलस्य—**तयस्य। **तदन्तस्यैव**—तयान्तस्यैव। **तत्र—**तस्मिन् सति। **सर्वादिग्रहणेनेति—**अनुवृत्तेन द्वितयादिशब्देषु व्यभिचारादुभयशब्दे सम्भवाच्चेति शेषः। **तयान्तम्—**तयान्तमेव। अत एवाह—**नेमेति।** **तदेति—**अस्यापि द्वितयादिशब्देष्वप्राप्तेः, उभयशब्द एव प्राप्तेश्चेति शेषः। **उभयशब्दस्येति—**सर्वादिगणपठितत्वात्प्राप्तेति शेषः। **जसीति—**नित्या संज्ञा जसीत्यन्वयः। **विभाष्यते इति—**अनेनेत्यादिः। **तदेति—**उभयशब्दे नित्यसंज्ञाया एव जायमानत्वादनेन द्वितयादिशब्देष्वप्राप्तायाः संज्ञाया जसि विकल्पेन विधानादिति शेषः। **तदेति—**अनेन उभयशब्दे प्राप्तायाः नित्यसंज्ञाया जसि विकल्पनात्, द्वितयादिशब्देषु चाप्राप्तायाः संज्ञाया जसि विकल्पेन विधानादिति शेषः।

उद्द्योते—**द्वन्द्वे चेति—**नन्वित्यादिः। **उदाहरणम्-**उदाहरणदानम्। ननु तावताऽपि 'विभाषा जसी'त्यत्रापि त्रिसंशयाप्राप्तविभाषा कुतो नोक्तेत्यत आह-**विभाषेति।** 'द्वन्द्वे' इत्यस्यानुवृत्तेरिति भावः। **द्वन्द्वे च**—'द्वन्द्वे चे'ति पूर्वसूत्रेण। विनिगमनाविरहादाह—**निषेधीयेति।** ननु 'विभाषा जसी'त्यत्र नञ्नुकर्षकचस्येव 'द्वन्द्वे' इत्यस्याप्यसम्बन्धेन, प्रथमादीनां जसि विकल्पारम्भात् 'सर्वादीनी'त्यस्य सम्बन्धेन चोभयशब्देऽप्यस्य प्रवृत्तिसम्भवात्तदुदाहरणदानं युक्तमेवेत्यत आह—**द्वन्द्वे इत्यस्यासम्बन्धे इति।** अत्रेत्यादिः। अनेनैव निर्वाहादिति शेषः। **अन्वर्थत्वेनेति—**ननु संज्ञाया इत्यादिः। **तस्य—**तयस्य। **जसभिन्न इति—**उभयशब्दे इति शेषः। **विकल्प इति—**जसि सावकाश इत्यादिः। कृष्णाद्युक्तं खण्डयति—**न चेति।** **अप्रवृत्तेरिति—**अत्रेत्यादिः। प्राचां मतेनाह—**न 'अन्तरङ्गमिति।** **युगपदिति—**तयोरित्यादिः। **तस्याः—**नित्यसंज्ञायाः। **अस्याः—**विकल्पसंज्ञायाः। **इत्यस्या इति—**'अत्र विषयः' इत्यनुषज्यते। **अनया—**'असिद्धमि'ति परिभाषया। **तत्प्रवृत्तेः—**संज्ञाविकल्पप्रवृत्तेः। ननु बहिरङ्गोत्तरमप्यन्तरङ्गप्राप्तिरस्तीत्यत आह-**बहुश इति।** **तथा—**अन्तरङ्गोत्तरं बहिरङ्गप्राप्तेः। ननु नित्यसंज्ञोत्तरं फलाभावान्न संज्ञाविकल्प इत्यत आह—**तदुत्तरमपीति।** नित्यसंज्ञोत्तरमपीत्यर्थः। **एतदिति—**संज्ञाविकल्पेत्यर्थः। **तदिति—**संज्ञेत्यर्थः। अभ्युपेत्याप्याह—**त्रिसंशयत्वस्येति।** नित्यसंज्ञोत्तरं संज्ञाविकल्पाप्रवृत्तावित्यादिः। नन्वाद्ययोर्वाशब्दयोरन्यत्र पाठेन 'अन्यदभुक्तमन्यद्वान्तमि'ति न्यायापत्तिरित्यत आह-**तेनेति।** एवमग्रेऽपि सर्वत्र बोध्यम्।

### ( सिद्धान्तभाष्यम् )

**अप्राप्ते। अयच् प्रत्ययान्तरम् ॥**

**( प्रदीपः ) प्रत्ययान्तरमिति।** आदेशपक्षे पूर्वविप्रतिषेधो वक्तव्य इति प्रत्ययान्तरपक्ष आश्रितः॥ **उभादुदात्त** इत्यत्र **तयस्येति** नानुवर्तते, तदा प्रत्ययान्तरमयज् भवति।

**( उद्द्योतः ) प्रत्ययान्तरेति।** एवं चोभयशब्देऽस्याप्राप्तेरप्राप्तविभाषात्वमेवेति भावः॥

**(तत्त्वालोकः)** भाष्ये—**अयच् प्रत्ययान्तरमिति-**यत इत्यादिः। एव, न तु तयप आदेश इति शेषः।

प्रदीपे—**आदेशपक्षे—**अयच् तयप आदेश इति पक्षे। **प्रत्ययान्तरपक्षः-**अयच् प्रत्ययान्तरमिति पक्षः। **उभादिति-**यदेत्यादिः।

उद्द्योते—**एवञ्चेति**—अयचः प्रत्ययान्तरत्वे चेत्यर्थः। स्थानिवद्भावेनापि तयप्प्रत्ययान्तत्वस्यालाभादिति शेषः। **अस्य—**'प्रथमचरमतये'त्यस्य।

### ( समाधानबाधकभाष्यम् )

**यदि प्रत्ययान्तरम्, उभयीति ईकारो न प्राप्नोति॥**

**( तत्त्वालोकः ) प्रत्ययान्तरमिति—**अयजित्यादिः। तर्हीति शेषः। **इति—**इत्यत्र। **ईकारः—**'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः' इति सूत्रेण तयबन्तत्वान्ङीप्।

### ( समाधानसाधकभाष्यम् )

**मा भूदेवम्, मात्रजित्येवं भविष्यति ॥**

**कथम्? ॥**

**मात्रजिति नेदं प्रत्ययग्रहणम् ॥**

**किं तर्हि? ॥**

**प्रत्याहारग्रहणम् ॥**

**क संनिविष्टानां प्रत्याहारः? ॥**

**मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥**

**( तत्त्वालोकः ) एवम्—**तयबन्तत्वात्। **मात्रजित्येवम्—**मात्रजन्तत्वात्। **मात्रशब्दादिति—**'प्रमाणे द्वयसजदघ्नञ्मात्रचः' इति सूत्रस्थादित्यादिः। **अयच इति—**'द्वित्रिभ्यां तयस्यायच् वा' इति सूत्रस्थस्येत्यादिः।

### ( समाधानबाधकभाष्यम् )

**यदि प्रत्याहारग्रहणम्। 'कति तिष्ठन्ति! 'अत्रापि प्राप्नोति ॥**

**(तत्त्वालोकः) प्रत्याहारग्रहणमिति—**मात्रजितीदमित्यादिः। तर्हि 'किमः संख्यापरिमाणे डति चे'ति सूत्रस्थस्य डतेरपि मात्रजन्तर्गतत्वादिति शेषः। **अत्रापीति**—इति वाक्यघटक **'कती'**-त्यत्रापीत्यर्थः। 'टिड्ढाणञि'त्यादिसूत्रेण मात्रजन्तत्वान्ङीबिति शेषः।

### ( समाधानसाधकभाष्यम् )

**अत इति वर्तते ॥**

**( तत्त्वालोकः ) अत इतीति**—नैष दोषः, यतः 'टिड्ढाणञि' त्यादिसूत्रे 'अजाद्यतष्टावि'ति सूत्रादित्यादिः। **वर्त्तते—**अनुवर्त्तते। तथा च—तस्य 'टिदाद्यन्तादन्तादि'त्याद्यर्थात् कतीत्यत्र मात्रजन्तत्वेऽपि-अदन्तत्वाभावात्तेन न ङीबापद्यते इति भावः।

### ( समाधानबाधकभाष्यम् )

**एवमपि-'तैलमात्रा घृतमात्रा' अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) तैलमात्रेति।** प्रत्याहारे सति चकारेण मात्रशब्दो न विशेषित इति **ह्युयामाश्रुभसिवसिभ्यस्त्रन्निति** त्रन्नन्तादपि मात्रशब्दान्ङीप्प्रसङ्गः॥

**( उद्द्योतः ) न विशेषित इति।** न प्रत्याहारघटक इतरव्यावर्तकः। समुदायानुबन्धस्यावयवानुबन्धत्वाभावादिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**तैलमात्रा—**तैलस्य मात्रा मानविशेषो भागविशेषः। एवमग्रेऽपि। **अत्रापीति—**इत्यनयोरपीत्यर्थः। 'टिड्ढाणञि'त्यादिसूत्रेण ङीबिति शेषः।

प्रदीपे—**प्रत्याहारे सतीति**—मात्रचीत्यादिः ।

उद्द्योते—**घटक इति**—चकार इति शेषः ।

( **समाधानसाधकभाष्यम्** )

**सदृशस्याप्यसंनिविष्टस्य न भविष्यति प्रत्याहारेण ग्रहणम् ॥**

( **प्रदीपः** ) सदृशस्यापीति । प्रमाणे वर्तमानान्मनचे यो मात्रच् विहितः, स प्रत्याहारेण गृह्यते इत्यर्थः ॥

( **उद्द्योतः** ) **प्रमाणे इति** । सादृश्यस्यैव तन्निवेशे सत्त्वादिति भावः ।

(**तत्त्वालोकः**) भाष्ये-**सदृशस्यापीति**—नैष दोषः, यतो मात्रचेत्यादिः । **न भविष्यतीति**–लक्षण–साहचर्यपरिभाषाभ्यामिति भावः ।

( **२७९ उदाहरणवार्तिकम् ॥ २२ ॥** )

**॥ * ॥ ऊर्णोतेर्विभाषा ॥ * ॥**

( **भाष्यम्** )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( **आक्षेपभाष्यम्** )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।**

( **संदेहोपपादकभाष्यम्** )

**'असंयोगाल्लिट् कित्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( **प्रदीपः** ) **ऊर्णोतेर्विभाषेति** । **विभाषोर्णो**रिति सूत्रं यत्र **संयोगाल्लिट् कि**दित्यत्रानुवर्तते । ऊर्णुश्चासंयोगान्त एवेत्यसंयोगग्रहणाद्वाक्यभेदेनोर्णोः परस्येडादेर्लिटो नित्यं कित्त्वं प्राप्तं विकल्प्यते ततः प्राप्तविभाषा । इडुपजीवनार्थं तु स्थानान्तरे सूत्रं पठितम् ॥ अथ तत्र सूत्रं नानुवर्तते, परविप्रतिषेधश्च ततोऽप्राप्तविभाषा । अथ पूर्वविप्रतिषेधस्तदोभयत्रेति संशयः ॥

( **उद्द्योतः** ) भाष्ये—**ऊर्णोतेर्विभाषेति** । ऊर्णोर्धातोः कित्त्वविषयविभाषेत्यर्थः ॥ **वाक्यभेदेने**त्यस्य विकल्प्यत इत्यनेनान्वयः । इदं सर्वं ङित्त्वकित्त्वयोरैक्याभिमानेन ॥ किमर्थं तर्हि पुरस्तात्कृतमत आह—**इडुपेति ॥**

( **तत्त्वालोकः** ) प्रदीपे—**प्राप्तं विकल्प्यते इति**—'असंयोगात्परोऽपिच्छिट् किदि'ति सामान्यपूर्ववाक्येन प्राप्तम्, 'ऊर्णोः परोऽपिच्छिडिडादिः ङिद्वे'ति विशेषपरवाक्येन विकल्प्यते इत्याशयः । **इडिति**—'विज इडि'ति सूत्रादनुवृत्तेत्यादिः । **स्थानान्तरे**—व्यवहितपूर्वस्थाने । **सूत्रम्**—'विभाषोर्णोरि'ति सूत्रम् । एवमग्रेऽपि । **तत्र**—'असंयोगाल्लिट् किदि'त्यत्र । **तत इति**—तयोः स्वातन्त्र्येण विधायकत्वे सिषिधतुरित्यादौ चरितार्थस्य 'असंयोगादि'त्यस्य, ऊर्णुवितेत्यादौ चरितार्थस्य 'विभाषोर्णोरि'त्यस्य च ऊर्णुनुविवेत्यादौ प्रवृत्तौ परविप्रतिषेधतो नित्यकित्त्वेन विकल्पस्य बाधात्तस्य ऊर्णुवितेत्यादिमात्रविषयकत्वादिति भावः । **तदेति**—विकल्पस्यैवेष्टत्वेन ऊर्णुनुविवेत्यादौ प्राप्तविभाषात्वात्, ऊर्णुवितेत्यादावप्राप्तविभाषात्वाच्चेति शेषः । **उभयत्र**-उभयत्रविभाषा । **संशयः**-कोटित्रयप्रकारकः सन्देहः ।

उद्द्योते—ननु 'उतो वृद्धिर्लुकि हली'त्यनेन नित्यवृद्धौ प्राप्तायां तदपवादत्वेन 'ऊर्णोतेर्विभाषे'त्यस्यारम्भात्तस्य प्राप्तविभाषात्वनिर्णयाद्प्राप्तविकारे कथन्तस्योपन्यास इत्यत आह—**ऊर्णोर्धातोरिति ।** 'विभाषोर्णोरि'ति भावः । **इत्यनेनेति**—इत्यनेनार्थेनेत्यर्थः । तस्य 'प्राप्तमि'त्यनेनान्वयात् । **ङित्त्वकित्त्वयोरैक्याभिमानेनेति**–कार्यातिदेशपक्षे गुणवृद्धिनिषेधरूपकार्यस्यैक्य'मित्यादिः । तयोर्भिन्नत्वे तु 'विभाषोर्णोरि'त्यस्य ङित्त्वविधायकत्वात्, 'असंयोगादि'त्यस्य च कित्त्वविधायकत्वात् तस्य सादृश्यसामान्यपूर्ववाक्येन ङित्त्वाप्राप्तेरस्य प्राप्तविभाषात्वं नोपपद्यतेऽतस्तदाह । **किमर्थं तर्हीति**—ननु यद्येवं तर्हि किमर्थमित्यन्वयः ।

( **सिद्धान्तभाष्यम्** )

**[ अप्राप्ते ]**

( **संदेहबाधकभाष्यम्** )

**अन्यद्धि कित्त्वम्, अन्यद्धि ङित्त्वम् ॥**

( **प्रदीपः** ) **अन्यद्धीति** । व्यपदेशातिदेशोऽयमिति कित्त्वङित्त्वयोर्भेदः **॥**

( **उद्द्योतः** ) शङ्कते—भाष्येऽ**न्यद्धीति** ॥ तद्व्याख्या—**भेद इति** । तथा च त्रिसंशयत्वानुपपत्तिरिति भावः ॥

( **तत्त्वालोकः** ) प्रदीपे—ङित्त्वकित्त्वव्यपदेशयोर्विधायके 'विभाषोर्णोरि'ति 'असंयोगाल्लिट् किदि'ति च क्रमेणेत्याशयेनाह—**व्यपदेशातिदेशोऽयमिति ।**

उद्द्योते—**शङ्कते इति**—त्रिसंशयत्वोक्ताविति भावः । **तथा-चेति**—कित्त्वे प्राप्तेऽपि अप्राप्तस्य ङित्त्वस्य विधायकत्वेनास्य प्राप्तविभाषात्वासम्भवादिति शेषः ।

( **संदेहसाधकभाष्यम्** )

**एकं चेन्ङित्कितौ । यद्येकं ङित्कितौ, ततः संदेहः ॥**

( **प्रदीपः** ) **एकं चेदिति** । कार्यातिदेशपक्षे गुणनिषेधस्य कार्यस्यैकत्वादेकत्वमनयोरित्यर्थः ॥

( **उद्द्योतः** ) **गुणनिषेधस्येति** । यद्यपि ङित्कित्कार्याणि भिन्नानि बहूनि सन्ति, तथाप्यूर्णोतावन्यासंभव इति भावः ॥

( **तत्त्वालोकः** ) प्रदीपे—**कार्यातिदेशपक्षे इति**—मुख्ये इति भावः । **अनयोः**—ङित्त्वकित्त्वयोः । तथा च कित्त्वे प्राप्ते प्राप्तस्य ङित्त्वस्य विधायकत्वेनास्य प्राप्तविभाषात्वसम्भवात् त्रिसंशयत्वोपपत्तिरित्याशयः ।

( **तृतीयाक्षेपभाष्यम्** )

**अथ हि नाना, नास्ति संदेहः ॥**

( **तत्त्वालोकः** ) **नानेति**—ङित्किताविल्यादिः । एवमग्रेऽपि । व्यपदेशातिदेशपक्षे ङित्त्वकित्त्वव्यपदेशयोर्भिन्नत्वान्ङित्त्वकित्त्वयोर्भेद इत्याशयः । **नास्तीति**—अत इत्यादिः ।

( **समाधानभाष्यम्** )

**यद्यपि नाना, एवमपि संदेहः—प्रौर्णुवीति ।**

( **प्रदीपः** ) **प्रौर्णुवीति** । लङ उत्तमैकवचनम् ॥

( **संदेहोपपादकभाष्यम्** )

**'सार्वधातुकमपित्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) सार्वधातुकमपिदित्यत्र **विभाषोर्णोरित्येतद्वाक्य-**भेदेन संबध्यते ततः प्राप्तविभाषा ॥ अथासंबन्धः पूर्वविप्रतिषेधश्च तदोभयत्र विभाषा ॥ परविप्रतिषेधे त्वप्राप्ते ॥

( उद्द्योतः ) **इत्यत्रेति ।** इत्यत्रैवेत्यर्थः ॥ **वाक्यभेदेनेति ।** पृथक्पाठसामर्थ्यादिति भावः ॥ **परविप्रतिषेधे त्विति ॥ विज इडि-**त्यतोऽर्थाधिकारादत्रेडागम एव गृह्यत इति पक्षे त्विल्यपि बोध्यम् ॥

( तत्त्वालोकः ) प्रदीपे—**तत इति—**प्रौर्णुवीत्यत्र 'अपित्सार्व-धातुकं ङिद्वदि'ति सामान्यपूर्ववाक्येन प्राप्तस्य नित्यङित्त्वस्यैव 'ऊर्णोतेः परमपित्सार्वधातुकमिडादि ङिद्वद्वे'ति विशेषपरवाक्येन विकल्पनादिति शेषः । **अथेति—**तत्र तस्येति शेषः । **तदेति—**विक-ल्पस्यैवेष्टत्वात् प्रौर्णुवीत्यत्र प्राप्तविभाषात्वात्, ऊर्णुवितेत्यादावप्राप्त-विभाषात्वाच्चेति शेषः । तयोः स्वातन्त्र्येण विधायकत्वे—ऊर्णुविते-त्यादौ सावकाशस्य विकल्पस्य, ऊर्णुत इत्यादौ सावकाशस्य नित्य-ङित्त्वस्य च प्रौर्णुवीत्यत्र प्राप्तौ परविप्रतिषेधेन नित्यङित्त्व एव जाते विकल्पस्योर्णुवितेत्यादिमात्रविषयकत्वादाह—**अप्राप्ते इति ।** अप्राप्त-विभाषेत्यर्थः । तथाच त्रिसंशयत्वमुपपद्यते इति भावः ।

उद्द्योते—सर्वं वाक्यमिति न्यायेनाह—**एवेति ।** अनेन 'असं-योगाल्लिट् किदि'त्यस्य व्यवच्छेदः । ननु विभाषाया विधिनिषेधोभय-रूपत्वात् 'प्रतिषेधाश्च बलीयांसः' इति न्यायेन तस्य परत्वबाध इत्यत आह—**विज इति । अत्र—**'विभाषोर्णोरि'त्यत्र ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते ॥**

( तत्त्वालोकः ) **अप्राप्ते इति—**'विज इडि'त्यत्रागमरूपस्यै-वेटो ग्रहणेनात्रापि तादृशस्यैव तस्य ग्रहणात् प्रौर्णुवीत्यत्र प्रत्ययरूप इट्यस्याप्राप्तेरित्याशयः ।

( २८० उदाहरणवार्तिकम् ॥ २३ ॥ )

## ॥ * ॥ विभाषोपयमने ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वा अप्राप्ते ? कथं वोभयत्र ? ।**

( संदेहोपपादकभाष्यम् )

**गन्धन इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( प्रदीपः ) **विभाषोपयमन इति ।** यदा गन्धनाङ्गमुपयमनं तत्र गृह्यते, तदा प्राप्ते । पूर्वविप्रतिषेधे त्वप्राप्ते । परविप्रतिषेधे उभयत्र वेति संदेहः ॥

( उद्द्योतः ) **'यमो गन्धने' 'विभाषोपयमने'** इत्येते सिचः कित्त्वविधायके ॥ **यदेति । गन्धनं** सूचनम् । **उपयमनं** स्वीकारः ॥ **गन्धनाङ्गमिति ।** बहुव्रीहिः । तत्र गन्धनपूर्वके स्वीकरणे यदि कित्त्व-विकल्पः, ततः प्राप्तविभाषेत्यर्थः ॥

( तत्त्वालोकः ) प्रदीपे—**तत्रेति—**'विभाषोपयमने' इत्यत्रे-त्यर्थः ॥ 'यमो गन्धने' इत्यस्य 'विभाषोपयमने' इत्यत्रानुवृत्तौ—सगन्धनविवाहे 'यमः सिच् किद् गन्धने' इति व्यापकार्थकेन 'यमो गन्धने' इत्यनेन प्राप्तस्य नित्यकित्त्वस्य 'यमः सिच् किद्वा सगन्धन-विवाहे' इति व्याप्यार्थकेन 'विभाषोपयमने' इत्यनेन विकल्पनात्प्राप्त-विभाषात्वम् । तस्य तत्रानानुवृत्तौ–गन्धनमात्रे चरितार्थस्य नित्य-कित्त्वस्य, विवाहमात्रे चरितार्थस्य विकल्पस्य च सगन्धनविवाहे प्राप्तौ पूर्वविप्रतिषेधेन नित्यकित्त्वस्यैवेष्टत्वे विकल्पस्य शुद्धविवाह-विषयकत्वादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे सगन्धनविवाहे प्राप्तविभाषात्वात्, शुद्धविवाहेऽप्राप्तविभाषात्वाच्चोभ-यत्रविभाषात्वमिति त्रिसंशयत्वोपपत्तिरिति भावः ।

उद्द्योते—**सूचनम्—**परदोषाविष्करणम् । **स्वीकारः—**विवाहः । **तत्र—**तद्ग्रहणे सति ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । गन्धन इति निवृत्तम् ॥**

( उद्द्योतः ) परभूतासु **दीपजने**ति भिन्नासु अप्राप्तविभाषासु पूर्वविषयनिवृत्तिः पूर्वविप्रतिषेधाङ्गीकारश्चाप्राप्तविभाषात्वे बीजमिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**गन्धन इति निवृत्तमिति—**यत इत्यादिः । पूर्वविप्रतिषेधश्चाङ्गीकृत इति शेषः ।

( २८१ उदाहरणवार्तिकम् ॥ २४ ॥ )

## ॥ * ॥ अनुपसर्गाद्वा ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ।**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।**

( संदेहोपपादकभाष्यम् )

**'वृत्तिसर्गतायनेषु क्रमः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( उद्द्योतः ) **वृत्तिसर्गे**त्यात्मनेपदविधायकम् ॥

( तत्त्वालोकः ) भाष्ये—**वृत्तिसर्गेति—**यदि 'अनुपसर्गात् क्रम आत्मनेपदं वे'त्यर्थके 'अनुपसर्गाद्वे'त्यत्र 'वृत्तिसर्गतायनेषु क्रमः' इत्यस्यानुवृत्तिस्तर्हि वृत्त्यादावनुपसर्गे 'वृत्तिसर्गे'त्यनेन प्राप्तस्यैव नित्यात्मनेपदस्य 'अनुपसर्गाद्वे'त्यनेन विकल्पनात्प्राप्तविभाषात्वम् । तत्र तस्यानानुवृत्तौ–सोपसर्गे चरितार्थस्य नित्यात्मनेपदस्य, वृत्त्यादि-रहिते चरितार्थस्य विकल्पस्य च वृत्त्यादावनुपसर्गे प्राप्तौ पूर्वविप्रतिषे-धेन नित्यात्मनेपदस्यैवेष्टत्वे विकल्पस्य वृत्त्यादिरहितविषयकत्वादप्राप्त-विभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे वृत्त्यादौ प्राप्तविभाषा-त्वात्, वृत्त्यादिरहितेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसं-शयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते । वृत्त्यादिष्विति निवृत्तम् ॥**

( तत्त्वालोकः ) भाष्ये—**वृत्त्यादिष्विति निवृत्तमिति—**यत इत्यादिः । पूर्वविप्रतिषेधश्चाङ्गीकृत इति शेषः ।

( २८२ उदाहरणवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ विभाषा वृक्षमृगादीनाम् ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**'जातिरप्राणिनाम्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) जातिरिति ।** चर्मादिमयास्तदा मृगादयो ग्राह्याः ॥

**( उद्द्योतः )** ननु मृगादीनां प्राणित्वा**दप्राणिनामिति नित्ये प्राप्त** इत्ययुक्तम्, मृगादिविषये एव च त्रिसंशयत्वादत आह—**चर्मादीति ॥**

**(तत्त्वालोकः)** भाष्ये-**जातिरप्राणिनामिति**—यदि-'विभाषा वृक्षमृगे'त्यादि-सूत्रे 'जातिरप्राणिनामि'ति सूत्रस्यानुवृत्तिस्तर्हि प्राणिवर्ज्यजातिवाचिवृक्षादौ 'जातिरप्राणिनामि'त्यनेन प्राप्तस्यैव नित्यैकवत्त्वस्य 'विभाषा वृक्षमृगे'त्यादिना विकल्पनात् प्राप्तविभाषात्वम् । तत्र तस्याननुवृत्तौ-धानाशष्कुलीत्यादौ सावकाशस्य नित्यैकवत्त्वस्य, रुरुपृषतमित्यादौ सावकाशस्य विकल्पस्य च प्राणिवर्ज्यजातिवाचिवृक्षादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्यैकवत्त्वस्यैवेष्टत्वे विकल्पस्य प्राणिजातिवाचिपश्वादिमात्रविषयकत्वादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वेऽप्राणिषु प्राप्तविभाषात्वात्प्राणिष्वप्राप्तविभाषात्वाच्चोभयत्रविभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

उद्द्योते—**एव चेति**—प्राणिविषय एव चेत्यर्थः । अन्यथा तदनुपपत्तिरेवेति भावः ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । 'जातिरप्राणिनाम्' इति निवृत्तम् ॥**

**( प्रदीपः ) निवृत्तमिति ।** तन्निवृत्तौ च गौणत्वाच्चर्मादिमयानामग्रहणम् ॥

**(तत्त्वालोकः)** भाष्ये—**'जातिरप्राणिनामि'ति निवृत्तमिति**—यत इत्यादिः । पूर्वविप्रतिषेधश्चाङ्गीकृत इति शेषः ।

( २८३ उदाहरणवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ उषविदजागृभ्योऽन्यतरस्याम् ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**प्रत्ययान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) प्रत्ययान्तादिति वेति ।** कथं पुनः प्रत्ययान्ताः **शब्दा** रूपान्तरयुक्ता उषादिव्यपदेशं लभन्ते ॥ उच्यते—**सनाद्यन्ता धातव** इत्यस्य यदाऽयमर्थो व्याख्यायते—धातवः सनाद्यवयवा भवन्ति धातूनामन्तावयवाः सनादयो भवन्ति, यथा समासान्ताष्टजादयः तदा पूर्वोक्तचोद्याभावः ॥

**( उद्द्योतः ) प्रत्ययान्ता इति ।** प्रत्ययः सनादिरन्तावयवो येषामित्यर्थः ॥ उषादयश्च तदेकदेशाः, न प्रत्ययान्तरूपा इति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—'उषविदे'ति सूत्रे 'कास्प्रत्ययादि'ति सूत्रात् 'प्रत्ययादि'त्यनुवर्त्तते, तस्य च विशेषणत्वात्तदन्तविधिनोभयत्र प्रत्ययान्तेभ्य इति लभ्यते, तत्र प्रकृते—**कथं पुनरिति ।** ते इति शेषः । **युक्ता इति**—ये इति शेषः । **तदेति**—सनादिप्रत्ययविशिष्टसमासस्य समासत्वेनेव सनादिप्रत्ययविशिष्टोषादेः उषादिपदेन ग्रहणसम्भवादिति भावः । तथाच—प्रत्ययान्तोषादौ 'प्रत्ययान्तेभ्यो धातुभ्य आमि'ति व्याख्यार्थकेन 'कास्प्रत्यया'दित्यनेन प्राप्तस्यैव नित्यामः 'प्रत्ययान्तेभ्य उषादिभ्य आमे'ति व्याख्यार्थकेन 'उषविदे' त्यनेन विकल्पनात् प्राप्तविभाषात्वम् । यदि तत्र तस्मात् तन्नानुवर्त्तते तदा कारयाञ्चकारेत्यादौ सावकाशस्य नित्यामः, ओषाञ्चकारेत्यादौ सावकाशस्य विकल्पस्य च प्रत्ययान्तोषादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्याम एवेष्टत्वे विकल्पस्याप्रत्ययान्तोषादिमात्रविषयकत्वादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे प्रत्ययान्तोषादौ प्राप्तविभाषात्वादप्रत्ययान्तोषाद्यप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

उद्द्योते—**तदेकदेशाः**—प्रत्ययान्तैकदेशाः ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । प्रत्ययान्ता धात्वन्तराणि ॥**

**( प्रदीपः ) प्रत्ययान्ता इति । सनाद्यन्ता धातव** इत्ययं योगः संज्ञासंज्ञिसंबन्धार्थ इति भावः ॥

**( उद्द्योतः ) संज्ञासंज्ञिसंबन्धार्थ इति ।** अत एव क्यजाद्यन्तानां संज्ञासिद्धिः, आवृत्तौ तु गौरवमिति भावः ॥ केचित्तु—**प्रत्ययान्ता**दित्यनुवृत्तौ उषादिभ्यः कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तेभ्य एव स्यादिति प्राप्ते विभाषा, तन्निवृत्तौ पूर्वविप्रतिषेधेऽप्राप्तविभाषा । निवृत्तौ परविप्रतिषेधे उभयत्रेति भाष्याशयः ॥ **प्रत्ययान्ता धात्वन्तराणीति ।** अस्यायं भावः—हलन्तेभ्य आचारक्विपोऽनभिधानमेव । इतरप्रत्ययान्तास्तु नोषादय इत्यप्राप्तविभाषात्वमेवेति वदन्ति ॥

**( तत्त्वालोकः )** भाष्ये—**प्रत्ययान्ता धात्वन्तराणीति**—यत इत्यादिः । इति तत्र प्रत्ययादित्यस्यासम्बन्धः पूर्वविप्रतिषेधश्चाभ्युपगम्येते इति शेषः ।

प्रदीपे—**सम्बन्धार्थ इति**—न तु धातूनां सनाद्यन्तावयवत्वस्य ( सनादीनां धात्ववयवत्वस्य ) प्रतिपादक इति भावः ।

उद्द्योते—सनो धात्ववयवत्वेन धातुत्वसिद्धेराह—**क्यजाद्यन्तानामिति ।** सुबन्तानामिति शेषः । **संज्ञेति**—धातुसंज्ञेत्यर्थः । ननु 'सनाद्यन्ता धातवः' इत्यस्यावृत्त्या पूर्वपक्षोक्तोऽप्यर्थो लभ्येतेत्यत आह—**आवृत्तौ त्विति ।** अन्यत्र प्रत्ययान्तरूपत्वासम्भवादाह—**एवेति ।** विकल्प इति शेषः । **निवृत्तौ**—तन्निवृत्तौ । **उभयत्र**—उभयत्रविभाषा । **भाष्येति**—पूर्वपक्षेत्यादिः । 'ह्रस्वनद्यापः' इति सूत्रभाष्ये स्पष्टमाह—**हलन्तेभ्य इति ।** कर्तृक्विबन्तेभ्य इति शेषः । कर्तृक्विबन्ताभ्यामुषविद्भ्यां तदसम्भवेऽपि तादृशाज्जागर्तेः तत्सम्भवादाह—**वदन्तीति ।**

( २८४ उदाहरणवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ दीपादीनां विभाषा ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**'भावकर्मणोः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) भावकर्मणोरिति ।** **चिण्भावकर्मणोरिति** सूत्रे यदि **दीपजने**त्येतत्सूत्रमनुवर्त्य वाक्यभेदेन संबन्धः क्रियते पृथक्पाठसामर्थ्यात् , तदा प्राप्तविभाषा । अथ नानुवर्तते परविप्रतिषेधश्च तदाऽप्राप्तविभाषा । पूर्वविप्रतिषेधे तूभयत्र विभाषेति संशयः ॥

**(तत्त्वालोकः)** प्रदीपे—**तदेति—**भावकर्मणोः दीपादिभ्यश्च्लौ 'भावकर्मणोश्च्लेश्चिण्' इति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यचिणः 'भावकर्मणोर्दीपादिभ्यश्च्लेश्चिण् वे'ति विशेषद्वितीयवाक्येन विकल्पनादिति भावः। **अथेति—**तत्र तदिति शेषः। **तदेति—**अभावि, अपाचीत्यादौ सावकाशस्य नित्यचिणः, कर्त्तरि दीपादिभ्यश्च्लौ सावकाशस्य विकल्पस्य च भावकर्मणोर्दीपादिभ्यश्च्लौ प्राप्तौ परविप्रतिषेधेन नित्यचिण एवेष्टत्वे विकल्पस्य कर्तृमात्रे दीपादिभ्यश्च्लौ कृतार्थत्वादित्याशयः। **पूर्वविप्रतिषेधे त्विति—**विकल्पस्यैवेष्टत्वेन भावकर्मणोर्दीपादिभ्यश्च्लौ प्राप्तविभाषात्वात् कर्तृमात्रे दीपादिभ्यश्च्लावप्राप्तविभाषात्वाच्चेति शेषः।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । कर्तरीति हि वर्तते ॥**

**( तत्त्वालोकः ) कर्त्तरीतीति—**'दीपजने'ति सूत्रे 'णिश्रिद्रुस्रुभ्यः कर्त्तरि चङि'ति सूत्रादित्यादिः। **वर्त्तते इति—**अनुवर्त्तते इत्यर्थः। तथा च विकल्पस्य भावकर्मविषयत्वाभावादप्राप्तविभाषात्वमेवेत्याशयः।

( आक्षेपभाष्यम् )

**एवमपि संदेहः—न्याय्ये वा कर्तरि, कर्मकर्तरि वेति ॥**

**(तत्त्वालोकः) एवमपीति**-'दीपजने'ति सूत्रे 'णिश्री'ति सूत्रात्कर्त्तरीत्यस्यानुवृत्तावपीत्यर्थः। 'दीपजने'ति सूत्रे इति शेषः।

( समाधानभाष्यम् )

**नास्ति संदेहः । सकर्मकस्य कर्ता कर्मवद्भवति ॥ अकर्मकाश्च दीपादयः ॥**

**( प्रदीपः ) अकर्मकाश्चेति ।** यद्यपि बुधिः सकर्मकः, तथापि एकपरिहारोपन्यासार्थमविशेषेणैतदुक्तम् ॥

**( उद्द्योतः ) एकपरिहारः** कर्मस्थभावकत्वाभावरूपः॥ ननु **कर्तरि** इत्यनुवृत्तिर्व्यर्था। कर्मणि भावे कर्मकर्तरि च परत्वा**च्चिण्भावकर्मणो**रित्यस्य प्रवृत्तेरिति चेन्न । विप्रतिषेधलब्धार्थस्यैव स्फुटत्वाय अनुवृत्त्या प्रदर्शनाद् इति दिक् ॥

**(तत्त्वालोकः)** भाष्ये—**नास्तीति—**अत्रायमिति शेषः। **सकर्मकस्येति**—यत इत्यादिः।

उद्द्योते—**नन्विति—**अत्र 'णिश्री'ति सूत्रादिति शेषः। **परत्वादिति—**'दीपजने'तीमं बाधित्वेति शेषः। **प्रदर्शनादिति—**कर्तृस्थभावकानामेव दीपादीनामत्र ग्रहणमिति सूचनायानुवृत्तेरावश्यकत्वाच्चेति शेषः।

( समाधानबाधकभाष्यम् )

**अकर्मका अपि वै सोपसर्गाः सकर्मका भवन्ति ॥**

**( प्रदीपः ) सोपसर्गा इति ।** अर्थान्तरवृत्तित्वादनुभवतिवदिति भावः।

( समाधानसाधकभाष्यम् )

**कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति । कर्तृस्थभावकाश्च दीपादयः ॥**

**( प्रदीपः ) कर्तृस्थभावकाश्चेति ।** अतः कर्तृयकीत्यत्र **जायते स्वयमेवे**त्युदाहृतं, तस्य ण्यर्थवृत्तित्वात्कर्मस्थभावकत्वमिति नास्ति तेनास्य विरोधः॥

**( तत्त्वालोकः )** भाष्ये—**कर्मस्थभावकानां कर्मस्थक्रियाणां वेति—**अपरिस्पन्दसाधनसाध्यो भावः। तथा—सपरिस्पन्दसाधनसाध्या क्रियेत्याशयः।

( ३८५ उदाहरणवार्तिकम् ॥ २८ ॥ )

## ॥ * ॥ विभाषाग्रेप्रथमपूर्वेषु ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।**

( संदेहोपपादकभाष्यम् )

**'आभीक्ष्ण्ये' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( तत्त्वालोकः ) आभीक्ष्ण्ये इति वेति—**'विभाषाऽग्रेप्रथमपूर्वेषु' इति सूत्रे 'आभीक्ष्ण्ये णमुल् च' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तथा च—आभीक्ष्ण्ये अग्रेप्रथमाद्युपपदसत्त्वे 'आभीक्ष्ण्ये णमुल् क्त्वा चे'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यणमुलः 'आभीक्ष्ण्ये अग्रेप्रथमपूर्वेषूपपदेषु णमुल् क्त्वा च वे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम् । यदि तत्र तन्नानुवर्त्तते तदा आभीक्ष्ण्ये उक्तोपपदाभावे सावकाशस्य नित्यणमुलः, अनाभीक्ष्ण्ये उक्तोपपदसत्त्वे सावकाशस्य विकल्पस्य च आभीक्ष्ण्ये उक्तोपपदसत्त्वे प्राप्तौ पूर्वविप्रतिषेधेन नित्यणमुल एवेष्टत्वे विकल्पस्य अनाभीक्ष्ण्ये उक्तोपपदसत्त्व एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु आभीक्ष्ण्ये उक्तोपपदसत्त्वे प्राप्तविभाषात्वात्, अनाभीक्ष्ण्ये उक्तोपपदसत्त्वेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते । 'आभीक्ष्ण्ये' इति निवृत्तम् ।**

**( प्रदीपः ) आभीक्ष्ण्य इति निवृत्तमिति ।** पूर्वविप्रतिषेधश्चेति भावः॥

**( तत्त्वालोकः )** भाष्ये—**आभीक्ष्ण्ये इतीति—**यत इत्यादिः। प्रदीपे—**पूर्वविप्रतिषेधश्चेति—**

( २८६ उदाहरणवार्तिकम् ॥ २९ ॥ )

## ॥ * ॥ तृन्नादीनां विभाषा ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।**

( संदेहोपपादकभाष्यम् )

**'आक्रोशे' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः )** तृन्नादीनामिति । आक्रोश इत्यत्र यचश्कौ नानुवर्तेते, ततोऽयं संशयः ॥

**( उद्द्योतः )** तृन्नादीनामिति । **आक्रोशे च 'संज्ञायाम्' विभाषा तृन्नन्नतीक्ष्णशुचिष्वि**ति सूत्रे इत्यर्थः ॥ **यचश्चकाविति । अच्कावशक्ता**वित्यतः । तदनुवृत्तौ तु निःसन्देहमप्राप्तविभाषेति भावः ॥ एतद्भाष्यविरोधाच्च तत्रा**च्कावि**त्यनुवृत्तिपरा ग्रन्था अयुक्ता एवेति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**आक्रोशे इति वेति—**यदि 'विभाषा तृन्नन्नतीक्ष्णशुचिषु' इति सूत्रे 'आक्रोशे च' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तदा—आक्रोशे तृन्नन्ताद्युत्तरपदेषु 'अकर्त्ता' इत्यादिषु 'नञः परमुत्तरपदमन्तोदात्तमाक्रोशे' इति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यान्तोदात्तत्वस्य 'नञः परेषां तृन्नन्तादीनामुत्तरपदानामन्तोदात्तत्वं वाऽऽक्रोशे' इति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम् । यदि तत्र तन्नानुवर्त्तते तदा आक्रोशे तृन्नन्ताद्युत्तरपदाभावे 'अपचः' इत्यादौ सावकाशस्य नित्यान्तोदात्तत्वस्य, अनाक्रोशे तृन्नन्ताद्युत्तरपदे 'अकर्त्ता' इत्यादौ सावकाशस्य विकल्पस्य च आक्रोशे तृन्नन्ताद्युत्तरपदेषु 'अकर्त्ता' इत्यादिषु प्राप्तौ पूर्वविप्रतिषेधेन नित्यान्तोदात्तत्वस्यैवेष्टत्वे विकल्पस्य अनाक्रोशे तृन्नन्ताद्युत्तरपदे 'अकर्ता' इत्यादावेव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु आक्रोशे तृन्नन्ताद्युत्तरपदेषु 'अकर्ता' इत्यादिषु प्राप्तविभाषात्वाद्, अनाक्रोशे तृन्नन्ताद्युत्तरपदे 'अकर्त्ता' इत्यादावप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ।

उद्द्योते—**संज्ञायामिति—**इति सूत्रद्वयाव्यवहितोत्तरवर्त्तिनीति शेषः । **सूत्रे इति—**पठितानामिति शेषः । **तदनुवृत्तौ त्विति—**तत्रेत्यादिः । 'अकर्त्ता' इत्यादिषु सामान्यप्रथमवाक्यस्याप्राप्तेरिति शेषः । **च—**तु । **ग्रन्था इति—**प्राचामिति भावः ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । 'आक्रोशे' इति निवृत्तम् ।**

**( तत्त्वालोकः ) आक्रोशे इति निवृत्तमिति—**यत इत्यादिः । पूर्वविप्रतिषेधश्चाश्रित इति शेषः ।

( २८७ उदाहरणवार्तिकम् ॥ ३० ॥ )

## ॥ * ॥ एकहलादौ पूरयितव्येऽन्यतरस्याम् ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**'उदकस्योदः संज्ञायाम्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः )** एकहलादाविति । पूरयितव्यस्य चास्ति संज्ञा उदपानमिति ॥

**( तत्त्वालोकः )** भाष्ये—उदकस्योदः **संज्ञायामिति वेति—**यदि 'एकहलादौ पूरयितव्येऽन्यतरस्यामि'ति सूत्रे 'उदकस्योदः संज्ञायामि'ति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तदा—संज्ञायाम् 'उदपानमि'त्यत्र 'पूर्वपदभूतस्य उदकशब्दस्य 'उद' इत्यादेशः संज्ञायामि'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्योदादेशस्य 'पूर्वपदभूतस्य उदकशब्दस्य 'उद' इत्यादेशो वा एकहलादौ पूरयितव्ये उत्तरपदे परे संज्ञायामि'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम् । यदि तत्र तन्नानुवर्त्तते तदा—संज्ञायाम् 'उदमेघः' इत्यादौ सावकाशस्य नित्योदादेशस्य, असंज्ञायाम् 'उदकुम्भः' इत्यादौ सावकाशस्य विकल्पस्य च संज्ञायाम् 'उदपानमि'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्योदादेशस्यैवेष्टत्वे विकल्पस्य असंज्ञायाम् 'उदकुम्भः' इत्यादावेव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु संज्ञायाम् 'उदपानमि'त्यादौ प्राप्तविभाषात्वाद्, असंज्ञायाम् 'उदकुम्भः' इत्यादावप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ।

( सिद्धान्तभाष्यम् )

**अप्राप्ते । संज्ञायामिति निवृत्तम् ॥**

**( तत्त्वालोकः ) संज्ञायामिति निवृत्तमिति—**यत इत्यादिः । पूर्वविप्रतिषेधश्चाश्रित इति शेषः ।

( २८८ उदाहरणवार्तिकम् ॥ ३१ ॥ )

## ॥ * ॥ श्वादेरिञि । पदान्तस्यान्यतरस्याम् ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ।**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ।**

( संदेहोपपादकभाष्यम् )

**इञीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( तत्त्वालोकः ) इञीति वेति—**यदि 'पदान्तस्यान्यतरस्यामि'ति सूत्रे 'श्वादेरिञि' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तदा—इञि परे पदशब्दान्ते 'श्वा ( शौवा ) पदिरि'त्यत्र 'इञि परे श्वादेरङ्गस्यैच् ने'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यस्यैज्निषेधस्य 'इञि परे पदशब्दान्तस्य श्वादेरङ्गस्यैज्निषेधो वे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम् । यदि च तत्र तन्नानुवर्त्तते तदा—इञि परे पदशब्दान्तभिन्ने 'श्वाभस्त्रिरि'त्यादौ सावकाशस्य नित्यस्यैज्निषेधस्य, इञ्रहिते पदशब्दान्ते 'श्वा ( शौवा ) पदमि'त्यत्र सावकाशस्य विकल्पस्य च इञि परे पदशब्दान्ते 'श्वापदिरि'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यस्यैज्निषेधस्यैवेष्टत्वे विकल्पस्य इञ्रहिते पदशब्दान्ते 'श्वा ( शौवा ) पदमि'त्यत्रैव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु इञि

परे पदशब्दान्ते 'श्वा ( शौवा ) पदिरि'त्यत्र प्राप्तविभाषात्वाद्, इञ्-रहिते पदशब्दान्ते 'श्वा (शौवा) पदमि'त्यत्राप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते । इञीति निवृत्तम् ॥**

**( तत्त्वालोकः ) इञीति निवृत्तमिति**—यत इत्यादिः । पूर्वविप्रतिषेधश्चाश्रित इति शेषः ।

( २८९ उदाहरणवार्तिकम् ॥ ३२ ॥ )

## ॥*॥ सपूर्वायाः प्रथमाया विभाषा ॥*॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते, ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**चादिभिर्योग इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) चादिभिरिति ।** प्रतिषेधस्याप्राप्तविभाषा स्थाप्यते, विधेस्तु प्राप्तविभाषैव ॥

**( तत्त्वालोकः )** भाष्ये—**चादिभिर्योग इति वेति**—अत्रादि-पदेन—आलोचनभिन्नपश्यार्थकधातोरपि ग्रहणम् । एवमग्रेऽपि ॥ यदि 'सपूर्वायाः प्रथमाया विभाषे'ति सूत्रे 'न चवाहाऽहैवयुक्ते' 'पश्यार्थैश्चानालोचने' इति सूत्रद्वयमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तदा—'भक्तस्त्वमप्यहं तेन हरिस्त्वां माञ्च ध्यायती'त्यत्र 'चादिपञ्चकयोगे युष्मदस्मदोः नैते वांनावादय आदेशाः' 'आलोचनभिन्नपश्यार्थकधातुयोगे तयोः नैते आदेशाः' इति सामान्य-प्रथमवाक्याभ्यां प्राप्तस्यैव नित्यस्य तन्निषेधस्य 'विद्यमानपूर्वात्प्रथमान्तात्परयोस्तयोः चादिपञ्चक—आलोचनभिन्नपश्यार्थकधातु-योगे एते आदेशा वा न स्युरि'ति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम् । यदि च तत्र तन्नानुवर्त्तते तदा—'सदा त्वां माञ्च ध्यायती' त्यादौ सावकाशस्य नित्यस्य तन्निषेधस्य 'भक्तस्त्वमप्यहं तेन हरिस्त्वां त्रायते स मामि'त्यादौ सावकाशस्य विकल्पस्य च 'भक्तस्त्वमप्यहं तेन हरिस्त्वां माञ्च ध्यायती'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्य-तन्निषेधस्यैवेष्टत्वे विकल्पस्य चादिपञ्चकादियोगाभाव एव प्रवर्त्तनाद-प्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु चादिपञ्च-कादियोगे प्राप्तविभाषात्वात्, चादिपञ्चकादियोगाभावेऽप्राप्तविभाषा-त्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

प्रदीपे—ननु चादिभिर्योग इति निवृत्ते पूर्वविप्रतिषेधे चाश्रि-तेऽपि वांनावादीनां विधेः पूर्वेण प्राप्तत्वात्कथमप्राप्तविभाषेत्यत आह—**प्रतिषेधस्येति ।**

( सिद्धान्तभाष्यम् )

**अप्राप्ते । चादिभिर्योग इति निवृत्तम् ॥**

**( तत्त्वालोकः ) चादिभिर्योग इति निवृत्तमिति**—यत इत्यादिः । पूर्वविप्रतिषेधश्चाश्रित इति शेषः ।

( २९० उदाहरणवार्तिकम् ॥ ३३ ॥ )

## ॥ * ॥ ग्रो यङ्यचि विभाषा ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**यङीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) यङीति वेति ।** यङ्लुकि कृतेऽजादिः परः संभवति—निजेगिल इति । अत्र च पचाद्यचि कृते **यङोऽचि चे**ति लुक् ॥

**( उद्द्योतः ) यङ्लुकीति' । अचि विभाषे**त्यत्र **यङी**ति वर्तते । तत्रोभयोर्यङजाद्योरव्यवहितपरत्वासंभवात् श्रुतस्या**ची**त्यस्य परविशेषणत्वम्, **यङी**ति विषयसप्तमी । अचि परे यङ्विषये रेफस्य लत्वमित्यर्थः ॥ तत्र विभाषासामर्थ्याद् यङ्लुकः पूर्वं **ग्रो यङी**ति न भवति । **न लुमते**ति निषेधानित्यत्वेन पृथग्लक्षोपेन स्थानिवद्भावेन वा यङ्विषय इति प्राप्तविभाषात्वोपपत्तिः ॥ **यङी**त्येतन्निवृत्तौ विभाषाया असिद्धत्वादेव नित्यं लत्वम् । समुदायलुक्यपि **न लुमते**ति निषेधान्न तत्प्राप्तिरित्यप्राप्तविभाषात्वोपपत्तिः ॥ उभयत्रविभाषात्वे त्वियमुपपत्तिः—**ग्रो यङी**त्येतत्प्रति **प्रकरणे प्रकरणमसिद्ध**मिति विभाषाया असिद्धत्वाभावः । लुकः पूर्वं यङीत्यस्य न प्रवृत्तिः, **अन्तरङ्गानपी**ति न्यायेन लुकस्तत्प्रयोजकाच्प्रत्ययस्य **च** पूर्वं प्रवृत्तेः ॥ न च लुकि **न लुमते**ति निषेधे यङ्परत्वाभावाद् **ग्रो यङी**त्यस्याप्राप्तेः कथमुभयत्रविभाषात्वमिति वाच्यम् । दत्तोत्तरत्वादितीति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**यङीति वेति**—यदि 'अचि विभाषे'ति सूत्रे 'ग्रो यङी'ति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्य-भेदेन सम्बन्धः । तदा—'निजेगिलः' इत्यत्र 'गिरते रेफस्य लत्वं यङ्विषये' इति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यलत्वस्य 'गिरते रेफस्य लत्वं वा अजादौ परे यङ्विषये' इति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम् । यदि च तत्र तन्नानुवर्त्तते तदा—'जेगिल्यते' इत्यत्र सावकाशस्य नित्यलत्वस्य 'गिलती'त्यादौ सावकाशस्य विकल्पस्य च 'निजेगिलः' इत्यत्र प्राप्तौ वैविप्रतिषेधेन नित्यलत्वस्यैवेष्टत्वे विकल्पस्य यङ्विषयत्वाभाव एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु 'निजेगिलः' इत्यत्र प्राप्तविभाषात्वात्, 'गिरति, गिलती'त्यादावप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

उद्द्योते—**यङीति**—'ग्रो यङी'ति । **वर्त्तते**—अनुवर्त्तते । **तत्र**—अनुवृत्तौ सत्याम् । विनिगमकमाह—**श्रुतस्येति । अचि परे इति**—अजादौ परे इत्यर्थः । तथाचेत्यादिः । **रेफस्य लत्वमिति**—गिरतेरित्यादिः । वेति शेषः । एवञ्च—'निजेगिलः' इत्यत्र **'ग्रो यङी'** त्यनेन प्राप्तस्यैव नित्यलत्वस्यानेन विकल्पनात् प्राप्तविभाषात्वमिति भावः । नन्वेवमपि कथं प्राप्तविभाषात्वम्, तत्र यङ्लुकः पूर्वमेव नित्यलत्वस्य प्राप्तेः, तदानीञ्च विकल्पस्याप्राप्तेरित्यत आह—**तत्रेति ।** तथाऽर्थे सतीत्यर्थः । ननु तथापि यङ्विषयत्वं कथमित्यत आह—**न लुमतेति ।** तस्य नित्यत्वेऽप्याह—**पृथगिति ।** पृथग्लुकि स्थानिवद्भावेन यङ्परत्वसम्भवादाह—**नित्यं लत्वमिति । 'निजेगिलः' इत्यत्रेत्यादिः ।** तथा च—'गिलती'त्यादावप्राप्तविभाषात्वमिति भावः ।

अत्र पक्षे स्थानिवद्भावाभावादाह—**न लुमतेति ।** तस्यानित्यत्वे न मानमिति भावः । **न तत्प्राप्तिरिति**—न 'निजेगिलः' इत्यत्र 'ग्रो यङी'त्यस्य प्राप्तिरित्यर्थः । यङ्परत्वासम्भवेनेत्यादिः । **इतीति**—अत्र तत्र चेति शेषः । एकदेशिमतेनाह—**प्रकरणे इति ।** 'प्रकरणे प्रकरणमसिद्धं न तु योगे योगः' इति पक्षस्य 'पूर्वत्रासिद्धमि'ति सूत्रेऽङ्गीकारादित्यर्थः । तथा च 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्ये'त्यस्याप्रवृत्तेः परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे 'निजेगिलः' इत्यत्र प्राप्तविभाषात्वात्, 'गिलती'त्यादावप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति भावः । ननु तत्र लुकः पूर्वमेव नित्यलत्वस्य प्राप्तेः, तदानीञ्च विकल्पस्याप्राप्तेः कथन्तयोः विप्रतिषेधप्रसङ्ग इत्यत आह—**लुकः पूर्वमिति ।** यङीत्येतन्निवृत्तौ विभाषायाः यङ्विषयत्वाभावे 'गिलती'त्यादौ चारितार्थ्येन तस्याः सामर्थ्यस्य वक्तुमशक्यत्वादाह—**अन्तरङ्गानिति । वृत्तोत्तरत्वादिति**—तदनित्यत्वात् स्थानिवत्त्वाद्वेत्यर्थः । **इतिः**—उपपत्तिसमाप्तौ ॥

( सिद्धान्तभाष्यम् )

**अप्राप्ते । यङीति निवृत्तम् ॥**

**(तत्त्वालोकः) यङीति निवृत्तमिति**—यत इत्यादिः । पूर्वविप्रतिषेधश्चाश्रित इति शेषः ।

( प्राप्तविभाषाप्रकरणम् )

( २९१ अधिकारवार्तिकम् ॥ ३४ ॥ )

## ॥ ❀ ॥ प्राप्ते च ॥ ❀ ॥

( भाष्यम् )

**इत उत्तरं या विभाषा अनुक्रमिष्यामः, प्राप्ते ता द्रष्टव्याः । त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) प्राप्ते चेति ।** प्रकृतानुवृत्त्या प्राप्तविभाषा व्यवतिष्ठते॥

**( तत्त्वालोकः )** भाष्ये—**प्राप्ते चेति**—'त्रिसंशयाः' इति पूर्वतोऽनुषज्यते । **इत उत्तरमिति**—'उभयत्र चे'त्यतः पूर्वमिति शेषः । यद्यपि प्राप्तविभाषाः बह्व्यः सन्ति, तथापि 'त्रिसंशयाः प्राप्तविभाषा एतावन्त्य एवेति दर्शनायायं सन्दर्भः ।

( २९२ उदाहरणवार्तिकम् ॥ ३५ ॥ )

## ॥ ❀ ॥ विभाषा विप्रलापे ॥ ❀ ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**'व्यक्तवाचाम्' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) अन्यत्र वेति ।** विप्रवदन्ति शकुनय इत्यत्र पूर्वविप्रतिषेधश्च यदीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**व्यक्तवाचामिति वेति**—'विभाषा विप्रलापे' इति सूत्रे 'व्यक्तवाचां समुच्चारणे' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तथा च—'विप्रवदन्ते विप्रवदन्ति वा विप्राः' इत्यत्र 'व्यक्तवाचां सम्भूयोच्चारणे वदेरात्मनेपदमि'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्यात्मनेपदस्य 'व्यक्तवाचां विरुद्धोक्तिरूपे सम्भूयोच्चारणे वदेरात्मनेपदं वे'ति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम् । यदि च तत्र तन्नानुवर्तते तदा—'सम्प्रवदन्ते विप्राः' इत्यत्र सावकाशस्य नित्यात्मनेपदस्य, 'विप्रवदन्ति खगाः' इत्यत्र सावकाशस्य विकल्पस्य च 'विप्रवदन्ते विप्राः' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यात्मनेपदस्यैवेष्टत्वे विकल्पस्याव्यक्तवाग्विप्रलापात्मकसमुच्चारण एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु व्यक्तवाग्विप्रलापात्मकसमुच्चारणे प्राप्तविभाषात्वाद्, अव्यक्तवाग्विप्रलापात्मकसमुच्चारणे अप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**प्राप्ते । व्यक्तवाचामिति हि वर्तते ॥**

( २९३ उदाहरणवार्तिकम् ॥ ३६ ॥ )

## ॥ ❀ ॥ विभाषोपपदेन प्रतीयमाने ॥ ❀ ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**'स्वरितञितः' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( तत्त्वालोकः )—'स्वरितञितः' इति वेति**—'विभाषोपपदेन प्रतीयमाने' इति सूत्रे 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यादि—पञ्चसूत्री अनुवर्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तथा च—'स्वं यज्ञं यजते यजति वे'त्यादौ 'क्रियाफले कर्तृगामिनि स्वरितेतो ञितश्च धातोरात्मनेपदमि'त्यादिसामान्यप्रथमवाक्यैः प्राप्तस्यैव नित्यात्मनेपदस्य 'क्रियाफलस्य कर्तृगामित्वे समीपोच्चारितपदेन प्रतीयमाने स्वरितेदादिधातोरात्मनेपदं वे'ति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम् । यदि च तत्र सा नानुवर्त्तते तदा—'यजते, कुरुते' इत्यादौ सावकाशस्य नित्यात्मनेपदस्य, 'स्वं पाठं पठती'त्यादौ सावकाशस्य विकल्पस्य च 'स्वं यज्ञं यजते' इत्यादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्यात्मनेपदस्यैवेष्टत्वे विकल्पस्य तादृशपञ्चसूत्र्यविषय एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु तादृशपञ्चसूत्रीविषये प्राप्तविभाषात्वात्, तदविषयेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**प्राप्ते । 'स्वरितञितः' इति हि वर्तते ॥**

**( प्रदीपः ) विभाषोपपदेन प्रतीयमाने इति ।** कर्त्रभिप्राये क्रियाफले विषये आत्मनेपदं भवतीत्येवं प्राप्तविभाषा व्यवतिष्ठते । अथ तु तदर्थद्योतनायात्मनेपदं क्रियते, तदोपपदेनैव द्योतितत्वादप्राप्तविभाषा स्यात् ॥

**( उद्द्योतः ) अथ त्विति ।** तथा च स पक्ष एतद्भाष्यविरुद्ध इति भावः ॥ वस्तुतो द्योतकत्वपक्षेऽपि व्यतिलुनीते गार्ग्यायणीत्यादौ द्योतकसमुच्चयस्य द्वावित्यादौ द्योतकवाचकसमुच्चयस्य च दृष्टत्वेनात्राप्यात्मनेपदप्राप्तिरस्तीति प्राप्तविभाषा सूपपादेति चिन्त्यमेतत् ॥

( तत्त्वालोकः ) प्रदीपे—वाचकतापक्षे आह—**कर्त्रभिप्राये इति**। द्योतकतापक्षे आह—**अर्थेति**। **तदर्थद्योतनाय**—क्रियाफलस्य कर्तृगामित्वद्योतनाय। **एवेति**—तदर्थस्येति शेषः।

उद्द्योते—**स एवः**—द्योतकतापक्षः। कैयटोक्तं खण्डयति—**वस्तुत इति**। **अत्रापि**—द्योतकतापक्षेऽपि।

( २९४ उदाहरणवार्तिकम् ॥ ३७ ॥ )

## ॥*॥ तिरोऽन्तर्धौ, विभाषा कृञि ॥*॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते, ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**'अन्तर्धौ' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( तत्त्वालोकः ) **'अन्तर्धौ' इति वेति**—'विभाषा कृञि' इति सूत्रे 'तिरोऽन्तर्धौ' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः। तथा च—अन्तर्धौ 'तिरस्कृत्ये'त्यत्र 'तिर इति गतिसंज्ञं क्रियायोगेऽन्तर्धौ गम्यमाने' इति सामान्यप्रथमवाक्येन प्राप्ताया एव नित्यगतिसंज्ञायाः 'तिर इति गतिसंज्ञं वा कृधात्वर्थक्रियायोगेऽन्तर्धौ गम्यमाने' इति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते तदा—अन्तर्धौ 'तिरोभूये'त्यत्र सावकाशाया नित्यगतिसंज्ञायाः, अनन्तर्धौ 'तिरस्कृत्ये'त्यत्र सावकाशस्य विकल्पस्य च अन्तर्धौ 'तिरस्कृत्ये'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यगतिसंज्ञाया एवेष्टत्वे विकल्पस्य अनन्तर्धावेव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु अन्तर्धौ प्राप्तविभाषात्वाद्, अनन्तर्धावप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः।

( सिद्धान्तभाष्यम् )

**प्राप्ते। 'अन्तर्धौ' इति हि वर्तते॥**

( २९५ उदाहरणवार्तिकम् ॥ ३८ ॥ )

## ॥*॥ अधिरीश्वरे, विभाषा कृञि ॥*॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः।**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**ईश्वर इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( तत्त्वालोकः ) **ईश्वर इति वेति**—'विभाषा कृञि' इति सूत्रे 'अधिरीश्वरे' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः। तथा च—'रामो भुवि अधिकरोती'त्यत्र 'स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञः' इति सामान्यप्रथमवाक्येन प्राप्ताया एव नित्यकर्मप्रवचनीयसंज्ञायाः 'स्वस्वामिभावसम्बन्धेऽधिः कर्मप्रवचनीयसंज्ञो वा कृञो योगे' इति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते तदा—'अधिभुवि रामः' इत्यत्र सावकाशायाः नित्यतत्संज्ञायाः, 'पदं तत्राधिकरोती'त्यत्र सावकाशस्य विकल्पस्य च 'रामो भुवि अधिकरोती'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यतत्संज्ञाया एवेष्टत्वे विकल्पस्यानीश्वर एव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु ईश्वरे प्राप्तविभाषात्वाद्, अनीश्वरेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः॥

( सिद्धान्तभाष्यम् )

**प्राप्ते। 'ईश्वरे' इति हि वर्तते॥**

( २९६ उदाहरणवार्तिकम् ॥ ३९ ॥ )

## ॥*॥ दिवस्तदर्थस्य, विभाषोपसर्गे ।*॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः।**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**तदर्थस्येति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति॥**

( तत्त्वालोकः ) **तदर्थस्येति वेति**—'विभाषोपसर्गे' इति सूत्रे 'दिवस्तदर्थस्ये'ति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः। तथा च—'शतस्य शतं वा प्रतिदीव्यती'त्यत्र 'द्यूताद्यर्थकस्य दिवः कर्मणि षष्ठी'ति सामान्यप्रथमवाक्येन प्राप्ताया एव नित्यषष्ठ्याः 'सोपसर्गस्य द्यूताद्यर्थकस्य दिवः कर्मणि षष्ठी वे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते तदा—'शतस्य दीव्यती'त्यादौ सावकाशायाः नित्यषष्ठ्याः, स्तुत्यर्थके 'ब्राह्मणं प्रदीव्यती'त्यादौ सावकाशस्य विकल्पस्य च 'शतस्य प्रतिदीव्यती'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यषष्ठ्या एवेष्टत्वे विकल्पस्य द्यूताद्यर्थकभिन्न एव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु द्यूताद्यर्थके प्राप्तविभाषात्वात्, तद्भिन्नेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः॥

( सिद्धान्तभाष्यम् )

**प्राप्ते। 'तदर्थस्य' इति हि वर्तते॥**

( उभयत्रविभाषाप्रकरणम् )

( २९७ अधिकारवार्तिकम् ॥ ४० ॥ )

## ॥ * ॥ उभयत्र च ॥ * ॥

( भाष्यम् )

**इत उत्तरं या विभाषा अनुक्रमिष्यामः, उभयत्र ता द्रष्टव्याः। त्रिसंशयास्तु भवन्ति—प्राप्ते, अप्राप्ते, उभयत्र वेति।**

( तत्त्वालोकः ) **उभयत्र चेति**—'त्रिसंशयाः' इति पूर्वतोऽनुषज्यते। **इत उत्तरमिति**—सप्तमाह्निकात्पूर्वमिति शेषः। यद्यप्युभयत्र विभाषाः बह्वयः सन्ति, तथापि त्रिसंशया उभयत्र विभाषा एतावन्त्य एवेति दर्शनार्थमयं सन्दर्भः॥

( २९८ उदाहरणवार्तिकम् ॥ ४१ ॥ )

## ॥ * ॥ हृक्रोरन्यतरस्याम् ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति संदेहः ॥**

**( उद्द्योतः )** भाष्ये गतिबुद्धीति नित्ये प्राप्ते इति । नियमशास्त्राणां विधिमुखेन प्रवृत्तिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**गतिबुद्धिप्रत्यवसानार्थेति**—'हृक्रोरन्यतरस्यामि'ति सूत्रे 'गतिबुद्धिप्रत्यवसानार्थे'ति सम्पूर्णं सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तथा च—'विहारयति मित्रं मित्रेण वा नगरमि'त्यत्र 'गत्याद्यर्थकानां शब्दकर्मकाणामकर्मकाणाञ्च धातूनामणौ यः कर्त्ता स णौ कर्मे'ति सामान्यप्रथमवाक्येन प्राप्ताया एव नित्यकर्मसंज्ञायाः 'गति-प्रत्यवसानार्थकहृधातोरकर्मकक्रुधातोश्चाणौ यः कर्त्ता स णौ वा कर्मे'ति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम् । यदि च तत्र 'अणि कर्त्ता स णौ' इत्येवानुवर्त्तते तदा—'शत्रूनगमयत् स्वर्गमि'त्यादौ सावकाशायाः नित्यकर्मसंज्ञायाः, 'हारयति कारयति वा भृत्यं भृत्येन वा कटमि'त्यत्र सावकाशस्य विकल्पस्य च 'विहारयति मित्रं नगरमि'त्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्यकर्मसंज्ञाया एवेष्टत्वे विकल्पस्य गति-प्रत्यवसानार्थकभिन्नहृधातोः, अकर्मकभिन्नकृधातोश्च प्रयोग एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु गति-प्रत्यवसानार्थकहृधातोः, अकर्मककृधातोश्च प्रयोगे प्राप्तविभाषात्वात्, तद्भिन्नहृकृधात्वोः प्रयोगेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**उभयत्र । प्राप्ते तावत्—अभ्यवहारयति सैन्धवान् अभ्यवहारयति सैन्धवैः । विकारयति सैन्धवान् विकारयति सैन्धवैः । अप्राप्ते—हरति भारं देवदत्तः, हारयति भारं देवदत्तम्, हारयति भारं देवदत्तेन । करोति कटं देवदत्तः, कारयति कटं देवदत्तम्, कारयति कटं देवदत्तेन ॥**

**( प्रदीपः ) गतिबुद्धीति ।** तत्र विपूर्वो हरतिर्गत्यर्थोऽभ्यवपूर्वः प्रत्यवसानार्थः । करोतिः क्वचिदकर्मको यथा-विकुर्वते सैन्धवा इति ।

**( उद्द्योतः ) तत्र विपूर्व इति ।** विहरति ग्राममित्यादौ गच्छतीत्यर्थावगमादिति भावः ॥ भाष्येऽ**प्राप्ते हरति भारमिति ॥** ननु गत्यर्थत्वादस्यापि प्राप्तिरस्त्येवेति चेन्न । प्रापणार्थत्वेऽपि गत्यर्थत्वाभावस्य **न गती**ति सूत्रे वक्ष्यमाणत्वात् ॥

**(तत्त्वालोकः)** भाष्ये—लक्ष्यानुरोधात् तत्र 'अणि कर्त्ता स णौ' इत्येवानुवर्त्तते, परविप्रतिषेधश्चाश्रीयते इत्याशयेनाह—**उभयत्रेति । तावत्**—प्रथमम् । **अप्राप्ते इति**—अथेत्यादिः । एवमग्रेऽपि ।

प्रदीपे—तत्र 'गतिबुद्धिप्रत्यवसानार्थे'ति सम्पूर्णसूत्रस्यानुवृत्तावपि हृधातौ गत्यर्थकत्व-प्रत्यवसानार्थकत्वयोरेव तथा कृधातावकर्मकत्वस्यैव सम्बन्धो न त्वन्येषामसम्भवादित्याशयेनाह—**तत्रेति ।** हृक्रोर्मध्ये इत्यर्थः । **अभ्यवेति**—नयेत्यादिः । **करोतिरिति**—एवमित्यादिः ।

उद्द्योते—**नन्विति**—'अत्र हृधातोः प्रापणार्थत्वेने'ति शेषः । **अस्यापि**—'गतिबुद्धिप्रत्यवसानार्थे'ति सूत्रस्यापि ।

( २९९ उदाहरणवार्तिकम् ॥ ४२ ॥ )

## ॥ * ॥ न यदि, विभाषा साकाङ्क्षे ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ?।**

( संदेहोपपादकभाष्यम् )

**यदीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

**( प्रदीपः ) यदीति वेति ।** प्रतिषेधे प्राप्ते इत्यर्थः । लट् तु यदि प्रतिषिद्धः ॥

**( तत्त्वालोकः )** भाष्ये—**यदीति वेति**—'विभाषा साकांक्षे' इति सूत्रे 'न यदी'ति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च **वाक्यभेदेन** सम्बन्धः । तथा च—'स्मरसि कृष्ण यद् वने वत्स्यामः तत्र गाश्चारयिष्यामः' इत्यत्र 'यच्छब्दयोगे स्मृतिवाचिन्युपपदे भूतानद्यतने धातोर्लृट् ने'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्य-लृड्निषेधस्य 'यच्छब्दयोगे स्मृतिवाचिन्युपपदे साकांक्षे भूतानद्यतने धातोर्लृड्निषेधो वे'ति विशेषद्वितीयवाक्येन विकल्पनात्प्राप्तविभाषात्वम् । यदि च तत्र 'न' इत्येवानुवर्त्तते तदा-'स्मरसि कृष्ण यद् वने गा अचारयाम' इत्यत्र सावकाशस्य नित्य-लृड्निषेधस्य 'स्मरसि कृष्ण वने अवसाम तत्र गा अचारयाम' इत्यत्र सावकाशस्य विकल्पस्य च 'स्मरसि कृष्ण यद् वनेऽवसाम तत्र गा अचारयाम' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्य-लृड्निषेधस्यैवेष्टत्वे विकल्पस्य यच्छब्दयोगरहित एव प्रवर्त्तनादप्राप्तविभाषात्वम् । परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु यच्छब्दयोगे प्राप्तविभाषात्वाद्, यच्छब्दयोगरहितेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

प्रदीपे—इयं निषेधीयोभयत्र विभाषेत्याह-**प्रतिषेधे इति । तु**-हि । **यदि**-यच्छब्दयोगे ।

( सिद्धान्तभाष्यम् )

**उभयत्र । प्राप्ते तावत्—अभिजानासि देवदत्त यत्कश्मीरेषु वत्स्यामः यत्कश्मीरेष्ववसाम । यत्तत्रौदनं भोक्ष्यामहे यत्तत्रौदनमभुञ्ज्महि । अप्राप्ते-अभिजानासि देवदत्त कश्मीरान् गमिष्यामः कश्मीरानगच्छाम, तत्रौदनं भोक्ष्यामहे तत्रौदनमभुञ्ज्महि ।**

**( तत्त्वालोकः )** लक्ष्यानुरोधात् तत्र 'यदी'ति नानुवर्त्तते, परविप्रतिषेधश्चाश्रीयते इत्याशयेनाह—**उभयत्रेति ।**

( ३०० उदाहरणवार्तिकम् ॥ ४३ ॥ )

## ॥ * ॥ विभाषा श्वेः ॥ * ॥

( भाष्यम् )

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ।?**

( संदेहोपपादकभाष्यम् )

**क्तिीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ।**

( तत्त्वालोकः ) **क्तिीति वेति**—यदि 'विभाषा श्वेः' इति सूत्रे 'वचिस्वपियजादीनां किती'ति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः। तदा—'शुशुवतुः, शिश्वियतुः' इत्यादौ 'वचिस्वप्योर्यजादीनाञ्च सम्प्रसारणं किती'ति सामान्यप्रथमवाक्येन श्वयतेर्यजाद्यन्तर्गतत्वात् प्राप्तस्यैव नित्यसम्प्रसारणस्य 'यजादिश्वयतेः सम्प्रसारणं वा किति लिटि, यङि चे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते, तदा—'शूयादि'त्यादौ सावकाशस्य नित्यसम्प्रसारणस्य, 'शुशावे'त्यत्र सावकाशस्य विकल्पस्य च 'शुशुवतुरि'त्यादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्यसम्प्रसारणस्यैवेष्टत्वे विकल्पस्य अकित्येव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु किति प्राप्तविभाषात्वाद्, अकितिअप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः॥

( सिद्धान्तभाष्यम् )

**उभयत्र । प्राप्ते तावत्—शुशुवतुः शुशुवुः शिश्वियतुः शिश्वियुः । अप्राप्ते—शुशाव शुशविथ, शिश्वाय शिश्वयिथ ॥**

( तत्त्वालोकः ) भाष्ये—लक्ष्यानुरोधात्तत्र तन्नानुवर्त्तते, परविप्रतिषेधश्चाश्रीयते इत्याशयेनाह—**उभयत्रेति** ।

( ३०१ उदाहरणवार्तिकम् ॥ ४४ ॥ )

## ॥ * ॥ विभाषा संघुषास्वनाम् ॥ * ॥

( संघुषोदाहरणभाष्यम् )

**संपूर्वाद्घुषेः—**

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ॥**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**'घुषिरविशब्दने' इति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( तत्त्वालोकः ) **घुषिरविशब्दने इति वेति**—यदि 'रुष्यमत्वरसंघुषास्वनाम्' इति सूत्रे 'घुषिरविशब्दने' इति सूत्रमनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः । तदा—'संघुष्टा संघुषिता वा रज्जुः' इत्यत्र 'घुषेर्निष्ठाया इण्न अविशब्दने' इति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्येण्निषेधस्य 'रुष्यमत्वरेभ्यः, अविशब्दने सम्पूर्वकाद्घुषेः, आङ्पूर्वकात् स्वनेश्च निष्ठाया इड्निषेधो वे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते, तदा-'घुष्टा रज्जुरि'त्यत्र सावकाशस्य नित्येड्निषेधस्य, 'संघुष्टं संघुषितं वा वाक्यमि'त्यत्र सावकाशस्य विकल्पस्य च 'संघुष्टा रज्जुरि'त्यादौ प्राप्तौ पूर्वविप्रतिषेधेन नित्येड्निषेधस्यैवेष्टत्वे विकल्पस्य विशब्दन एव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु अविशब्दने प्राप्तविभाषात्वाद्, विशब्दनेऽप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**उभयत्र । प्राप्ते तावत्—संघुष्टा रज्जुः संघुषिता रज्जुः । अप्राप्ते-संघुष्टं वाक्यमाह संघुषितं वाक्यमाह ॥**

( तत्त्वालोकः ) लक्ष्यानुरोधात्तत्र तन्नानुवर्त्तते, परविप्रतिषेधश्चाश्रीयते इत्याशयेनाह—**उभयत्रेति** ।

( आस्वनोदाहरणभाष्यम् )

**आङ्पूर्वात्स्वनेः—**

**प्राप्ते, अप्राप्ते, उभयत्र वेति संदेहः ।**

( संदेहाक्षेपभाष्यम् )

**कथं वा प्राप्ते ? कथं वाऽप्राप्ते ? कथं वोभयत्र ? ॥**

( संदेहोपपादकभाष्यम् )

**मनसीति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते, उभयत्र वेति ॥**

( तत्त्वालोकः ) **मनसीति वेति**—यदि 'रुष्यमत्वरसंघुषास्वनाम्' इति सूत्रे 'क्षुब्धस्वान्तध्वान्ते'त्यादि सूत्रात् 'स्वान्तं मनसी'त्यनुवर्त्तते, पृथक्पाठसामर्थ्याच्च वाक्यभेदेन सम्बन्धः। तदा-'आस्वान्तम् आस्वनितं वा मनः' इत्यत्र 'मनसि वाच्ये स्वनतेर्निष्ठाया इड् ने'ति सामान्यप्रथमवाक्येन प्राप्तस्यैव नित्येड्निषेधस्य '⋯⋯ मनसि वाच्ये आङ्पूर्वकात् स्वनतेर्निष्ठाया इड्निषेधो वे'ति विशेषद्वितीयवाक्येन विकल्पनात् प्राप्तविभाषात्वम्। यदि च तत्र तन्नानुवर्त्तते, तदा—'स्वान्तं मनः' इत्यत्र सावकाशस्य नित्येड्निषेधस्य, 'आस्वान्त आस्वनितो वा देवदत्तः' इत्यत्र सावकाशस्य विकल्पस्य च 'आस्वान्तं मनः' इत्यत्र प्राप्तौ पूर्वविप्रतिषेधेन नित्येड्निषेधस्यैवेष्टत्वे विकल्पस्य अमनस्येव प्रवर्त्तनादप्राप्तविभाषात्वम्। परविप्रतिषेधेन विकल्पस्यैवेष्टत्वे तु मनसि प्राप्तविभाषात्वाद्, अमनसि अप्राप्तविभाषात्वाच्चोभयत्र विभाषात्वमिति त्रिसंशयत्वोपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**उभयत्र । प्राप्ते तावत्—आस्वान्तं मन आस्वनितं मनः । अप्राप्ते—आस्वनितो देवदत्तः आस्वान्तो देवदत्त इति ॥**

**इति श्रीमद्भगवत्पतञ्जलिकृतौ महाभाष्ये प्रथमपादे षष्ठमाह्निकम् ॥**

---

( प्रदीपः ) **देवयज्ञीत्यादि** न विचारितं तस्माद्दिङ्मात्रप्रदर्शनार्थं कृतम् ॥ ४३ ॥

इति भाष्यप्रदीपे प्रथमाध्याये प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

( उद्द्योतः ) **दैवयज्ञीत्यादीति** । अनार्षयोरित्यनुवृत्त्यादिनाऽत्रापि सन्देहसंभव इति भावः॥ आदिना **विभाषा पुरुषे** इति ॥

इति श्री**शिवभट्ट**सुतसतीगर्भज**नागोजीभट्ट**विरचिते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमे पादे षष्ठमाह्निकम् ॥ ६ ॥

---

( तत्त्वालोकः ) भाष्ये—लक्ष्यानुरोधात्तत्र तन्नानुवर्त्तते, परविप्रतिषेधश्चाश्रीयते इत्याशयेनाह— **उभयत्रेति** ।

उद्द्योते—**आदिना**-'गोत्रे' इत्यनुवृत्तिपरिग्रहः ।

**इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित-श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादे षष्ठमाह्निकम् ॥**

## इति प्रथमाध्याये प्रथमपादे षष्ठमाह्निकम् ।

( ३९ संप्रसारणसंज्ञासूत्रम् ॥ १ । १ । ७ आ. १ ॥ )

## इग्यणः संप्रसारणम् ॥ १ । १ । ४४ ॥

( उभयसंज्ञाऽव्यवस्थापनाधिकरणम् )

( आक्षेपभाष्यम् )

**किमियं वाक्यस्य संप्रसारणसंज्ञा क्रियते—इग्यण इत्येतद्वाक्यं संप्रसारणसंज्ञं भवतीति । आहोस्विद्वर्णस्य—इग्यो यणः स्थाने वर्णः स संप्रसारणसंज्ञो भवतीति ॥**

**( प्रदीपः ) इग्यणः संप्रसारणम् ॥ ४४ ॥** पक्षद्वयस्यापि लिङ्ग-दर्शनाद्युगपच्चोभयोः संज्ञित्वस्यैकस्मिन्वाक्येऽनुपादानादेकतरपक्षाश्रयणे सर्वकार्यासिद्धिप्रसङ्गात् प्रश्नः—**किमियमिति ।** वाक्यशब्देन वाक्यार्थ उच्यते । इग्यण इत्यत्र भवतीत्यध्याहारा**दिग्यणो भवतीति** योऽयं वाक्यार्थस्तस्येयं संज्ञेत्यर्थः । अथवा वाक्यस्यैवेयं संज्ञा । तत्प्रतिपादितं च वाक्यं स्वार्थमपि प्रतिपादयति ॥ यणः स्थाने य इग्वर्णः स संप्रसारणसंज्ञो भवतीति वर्णसंज्ञापक्षः ॥

**( उद्द्योतः ) इग्यणः ॥ ४४ ॥ लिङ्गेति ।** प्रदेशेषु प्रथमा-**निर्देशो** वाक्यसंज्ञाया, अन्यविभक्तिनिर्देशश्च वर्णसंज्ञाया लिङ्गमिति भावः ॥ ननु तर्हि लिङ्गादुभयोरपि संज्ञित्वमस्त्वित्यत आह—**युगपच्चेति ।** अनेकस्यार्थस्यैकशब्देन युगपदनुपस्थितेरिति भावः ॥ ननु वाक्यस्य संज्ञायां प्रदेशेषु तस्यैव विधानं स्यादत आह—**वाक्यार्थ इति ।** पूर्वसूत्रादितीत्यनुवर्त्य **इग्यण इति संप्रसारण-संज्ञ**मित्यर्थादिति भावः ॥ **स्वं रूप**मित्युक्तेः शास्त्रे शब्दपरत्वस्यौत्सर्गिकत्वेनेतिसमभिव्याहारं विनाऽर्थपरत्वासंभवादिति बोध्यम् ॥ ननु यण्स्थानिकत्वोपलक्षित इगेव वाक्यार्थ इति वर्णपक्षादस्य को भेद इत्यत आह—**भवतीति ।** एवं चेग्भवनं वाक्यार्थ इति भावः ॥ **तत्प्रतिपादितमिति ।** संज्ञयोपस्थितस्यानर्थकत्वे तदर्थानुपयोगे वा संज्ञोपस्थितस्वरूपस्यैवोपादानम् । नचैतदुभयमप्यत्रेति भावः ॥ **प्रति-पादयतीति । ष्यङः संप्रसारण**मित्यादौ ॥ **उच्चारितस्यैव प्रत्याय-कत्व**मित्यणुदिदितिसूत्रस्थभाष्यविरुद्धमिदम् ॥

**( तत्त्वालोकः )** प्रदीपे—**उभयोः**—वर्णवाक्ययोः । 'नवेति विभाषे'ति पूर्वसूत्रप्रत्याख्यानपक्षे आह—**अथवेति । तदिति**—संज्ञेत्यर्थः ।

उद्द्योते—**प्रदेशेषु**—'ष्यङः सम्प्रसारणम्' 'सम्प्रसारणाच्च' इत्यादिप्रदेशेषु । **च**—तु । **तर्हि**—पक्षद्वयलिङ्गसत्त्वे । 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायेनाह—**अनेकस्येति । पूर्वसूत्रात्**—'नवेति विभाषे'ति पूर्वसूत्रात् । तदनुवृत्तौ बीजमाह—**स्वं रूपमिति । अस्य**—वाक्यार्थपक्षस्य । **इग्भवनं वाक्यार्थ इति**—यण्स्थानिकेक्कर्तृक-भवनमिति वाक्यार्थः सम्प्रसारणसंज्ञ इत्यर्थः । **नच**—न तु । अनुवादे 'सम्प्रसारणाच्चे'त्यादावसम्भवादाह—**ष्यङ इति ।** विधावित्यादिः । **विरुद्धमिति**—तथा च-वाक्य-वाक्यार्थपक्षयोः वाक्यार्थपक्ष एव युक्त इत्याशयः । ननु 'नवेति' सूत्रप्रत्याख्यानपक्षे वाक्यार्थपक्षो नोपपद्यतेति चेन्न, 'अशब्दसंज्ञे'त्युक्तेरितेरनुवृत्तिमन्तराऽपि 'इग्यण' इत्यनयोरर्थपरत्वसम्भवादिति दिक् ।

( भाष्यम् )

कश्चात्र विशेषः ? ॥

( तत्त्वालोकः ) अत्र—वाक्यस्य वर्णस्य वा संज्ञायाम् ।

( ३०२ वाक्यसंज्ञापक्षदूषणवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः * ॥ १ ॥

( भाष्यम् )

**संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिर्न सिध्यति—संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति । नहि वाक्यस्य संप्रसारणसंज्ञायामेष निर्देश उपपद्यते । नाप्येतयोः कार्ययोः संभवोऽस्ति ॥**

**( प्रदीपः ) वर्णविधिरिति ।** वर्णाश्रयो विधिर्दीर्घादिः ॥ **नहीति ।** वाक्यार्थेन पौर्वापर्याभावात्तस्य चासत्त्वभूतस्य स्थानित्वासंभवादित्यर्थः ॥

**( उद्द्योतः )** वर्णविधिरित्यस्य वर्णविषयविधानमित्यर्थेऽसिद्धेरभावादाह—**वर्णाश्रय इति ।** संबन्धसामान्यषष्ठ्या समासः ॥ विधिरिति कर्मणि किरिति भावः ॥ **आदिना** एकादेशः ॥ **वाक्यार्थेनेति ।** क्रियारूपेणे ः ॥ **नाप्येतयोरि**ति भाष्यं व्याचष्टे—**तस्य चेति ।** चोऽसंभवादित्युत्तरं योज्यः ॥ भाष्ये **एतयोः कार्ययोरिति ।** पूर्वरूपदीर्घयोरित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—यदीत्यर्थः । तर्हीति शेषः । एवमग्रेऽपि । 'सम्प्रसारणाच्चे'ति सूत्रमभिप्रेत्याह—**सम्प्रसारणादिति । पूर्वः**—पूर्वरूपाश्रयः । 'हलः' इति सूत्रमभिप्रेत्याह—**सम्प्रसारणस्येति ।** तथेत्यादिः । कुत इत्यत आह—**न हीति । एषः**—'सम्प्रसारणात्परः' इत्येषः । **नापि**—न च ।

प्रदीपे—**तस्य**—क्रियारूप-वाक्यार्थस्य ।

उद्द्योते—अत्र पक्षे 'ष्यङः सम्प्रसारणमि'त्यादाविग्रूपवर्णविषयकविधानोपपत्तेराह—**असिद्धरभावादिति ।** तस्येत्यादिः । उभयोः पूर्वरूपदीर्घयोः संग्रहायाह—**सम्बन्धेति ।** तथा च-तस्य 'वर्णसम्बन्धी विधीयमानः' इत्यर्थः । **एकादेशः**—पूर्वरूपम् । क्रमविवक्षयां-आह-**पूर्वरूपेति ।**

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्हि वर्णस्य ॥**

( ३०३ वर्णसंज्ञापक्षदूषणवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ वर्णसंज्ञा चेन्निर्वृत्तिः * ॥ २ ॥

( भाष्यम् )

**वर्णस्य संज्ञा चेन्निर्वृत्तिर्न सिध्यति—'ष्यङः संप्रसारणम्' इति । स एव हि तावदिग् दुर्लभः, यस्य संज्ञा क्रियते ॥ अथापि कथंचिल्लभ्येत, केनासौ यणः**

**स्थाने स्यात्। अनेन ह्यसौ व्यवस्थाप्यते। तदेतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते॥**

**( प्रदीपः ) दुर्लभ इति।** कार्यपक्षे न लभ्यते, नित्यपक्षे तु लभ्यत इति दुर्लभत्वमुक्तम्॥ **केनासाविति।** लोके इगेव नित्यं प्रयोगेऽस्ति, तस्य तु यण्स्थानिकत्वं शास्त्रसमधिगम्यमित्यर्थः॥ भाविसंज्ञाविज्ञानं तु परिहारान्तराभिधानाय न तावदत्रोक्तम्॥

**( उद्द्योतः ) स एव तावन्नास्तीति** वक्तव्ये दुर्लभत्वोक्तिरनुचितेत्यत आह—**कार्यपक्ष इति।** अनेन भाष्येणानीतानागतयोरविद्यमानयोरप्रत्यासत्त्या शक्तिग्रहदौर्लभ्यमुक्तम्। निरूपितं चेदं मञ्जूषायां नामार्थवादे॥ **नित्यपक्षे त्विति।** अनेनाथापि **कथंचि**दित्यपि भाष्यं व्याख्यातम्॥ **शास्त्रेति।** सितमित्यादौ यण्स्थानिकत्वाभावेन शास्त्रमात्रैकगम्यं तदित्यर्थः। शास्त्रगम्यत्वे चेतरेतराश्रयमेवेति भावः॥ भाष्ये **केनासाविति। केन** मानेन यणः स्थाने इति ज्ञातः स्यात्॥ **अनेन** संप्रसारणसंज्ञाविधायकेन शास्त्रेण **असौ** इग् यणः स्थाने स्थाप्यत इत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**निर्वृत्तिः**-विधिः। कुत इत्यत आह—**स एवेति।** यण्स्थानिक एवेत्यर्थः। **लभ्येतेति—**'इष्टम्' 'उप्तम्' इत्यादौ यण्स्थानिक **इ**गित्यादिः। **असौ**-इक्। **तत्**-तस्मात्।

प्रदीपे—**एवेन**-यणो व्यवच्छेदः। ननु भाविसंज्ञाविज्ञानेन नान्योन्याश्रय इत्यत आह—**भावीति। परिहारान्तरेति**-'एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते' इत्याद्यग्रिमभाष्येणेति भावः। **न तावदिति**-इतीत्यादिः। **अत्र**-इदानीम्।

उद्द्योते—**सितमित्यादौ**—'षोऽन्तकर्मणि' इत्यादेः निष्ठायां निष्पन्ने। आकारस्थानिकत्वेनाह—**यण्स्थानिकत्वाभावेनेति। इष्टमुप्तमित्यादौ** च यण्स्थानिकत्वेनेति शेषः। **तत्**-यण्स्थानिकत्वम्। ननु नोत्पत्तिर्भाष्यार्थः, नित्यपक्षे तद्बाधादित्यत आह-**केन मानेनेति।** असाविति शेषः।

( ३०४ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ विभक्तिविशेषनिर्देशस्तु ज्ञापक उभयसंज्ञात्वस्य * ॥ ३ ॥

( भाष्यम् )

**यदयं विभक्तिविशेषैर्निर्देशं करोति-संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति, ष्यङः संप्रसारणं भवतीति। तेन ज्ञायते—उभयोः संज्ञा भवतीति॥ यत्तावदाह—संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति, तेन ज्ञायते—वर्णस्य भवतीति॥ यदप्याह-ष्यङः संप्रसारणमिति, तेन ज्ञायते-वाक्यस्य संज्ञा भवतीति॥**

**( प्रदीपः ) उभयसंज्ञात्वस्येति।** उभयोः संज्ञा उभयसंज्ञा तस्या भाव उभयसंज्ञात्वम्। तत्र तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणेनोभयोः संज्ञा सिध्यति॥

**( उद्द्योतः )** उभयोः संज्ञात्वमित्यर्थोऽसंभवी, एकस्यैव संज्ञात्वादत आह-**उभयोः संज्ञेति॥** एकशेषश्च प्रतिपदम्। अनेकमर्थमुद्दिश्यैकस्याः संज्ञाया एकवाक्यतयैव विधातुं शक्यत्वादत्रावृत्तेः क उपयोग इति चिन्त्यम्॥

**( तत्त्वालोकः )** प्रदीपे—**तन्त्र**-तेषां ज्ञापकत्वे सति।

उद्द्योते—**उभयोरिति—**नन्वित्यादिः। समुदायस्यासम्भवादाह—**एकेति।** तन्त्रपक्षे एकवचनं सर्वत्रेत्याशयः। **च**कारेण तन्त्रसमुच्चयः। **एकवाक्यतयैव**-एकेन वाक्येनैव।

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अथ वा पुनरस्तु वाक्यस्यैव॥**

**( तत्त्वालोकः ) वाक्यस्यैवेति—**नन्वेवं तदेव विधेयं स्यादिति चेन्न, वाह उठ् सम्प्रसारणमिति सामानाधिकरण्यबलेन तदुपस्थितार्थस्यैव विधेयत्वात्। नचैवमपि 'ष्यङः सम्प्रसारणमि'त्यादौ वैयधिकरण्यान्वयस्थले दोषतादवस्थ्यमिति वाच्यम्, सामान्यापेक्षज्ञापकाश्रयणात्। वस्तुतस्तु वाक्यपदेन वाक्यार्थो विवक्षितः। तथा च—तस्योद्देश्यविधेयसंसर्गरूपतया 'यणः स्थाने इग् भवती'त्यवान्तरवाक्यार्थः, ततः—'यण्स्थानिकेककर्तृकभवनं सम्प्रसारणसंज्ञमि'ति महावाक्यार्थः। अत एवात्र पक्षे नान्योन्याश्रयशङ्का। नचावान्तरवाक्यार्थेन 'याति' 'वाती' त्यादावतिप्रसङ्ग इति वाच्यम्, तस्य संज्ञासम्बन्धमात्रफलकत्वात्। अन्यथा 'ष्यङः सम्प्रसारणमि'त्यादिशास्त्राणां वैयर्थ्यापत्तेरिति भावः॥

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*संप्रसारणसंज्ञायां वाक्यस्य संज्ञा चेद्वर्णविधिः* इति॥**

( समाधानभाष्यम् )

**नैष दोषः। यथा काकाज्जातः काकः, श्येनाज्जातः श्येनः। एवं संप्रसारणाज्जातं संप्रसारणम्। तस्मात्परः पूर्वो भवति, तस्य दीर्घो भवतीति॥**

**( प्रदीपः ) यथा काकादिति।** ननु काकत्वाभिसंबन्धात्काकः। अन्यत्र चोक्तम्—**येनैव हेतुनैकः काकस्तेनैवापरोपीति।** नैष दोषः, यदानुपजातजात्यभिव्यञ्जकसंस्थानविशेषः काको भवति, निर्ज्ञातं च तस्य काकाज्जन्म भवति। तदैतदुक्तम्। एवमिहापि संप्रसारणाज्जातत्वादुपचाराद्वर्णोऽपि ताच्छब्द्यं लभते इति भावः॥

**( उद्द्योतः )** भाष्ये—**यथा काकादिति।** अज्ञात एव काकत्वे तज्जातत्वमात्रेण तथा व्यवहारवदत्रापीत्यर्थः। तत्र शङ्कते—**नन्विति। अन्यत्र। एको गोत्र** इत्यत्र॥ **यदानुपेति।** न उपजातो जात्यभिव्यञ्जकः संस्थानविशेष आकारविशेषो यस्येत्यर्थः॥ कथं तर्हि तथा व्यवहार इत्यत आह—**निर्ज्ञातमिति।** एवं च तस्माज्जातत्वेनावगते तच्छब्दप्रयोग उभयत्रापीति दृष्टान्तत्वोपपत्तिः॥ अन्ये तु काकाज्जातो यथा काकत्वाभिसंबन्धात्काकः। एवं संप्रसारणाज्जातोऽपि संप्रसारणत्वारोपात् संप्रसारणमिति भाष्यार्थमाहुः॥

**( तत्त्वालोकः )** प्रदीपे—'तेनैव हेतुना द्वितीयस्तृतीयश्च काको भविष्यती'ति भाष्यपाठफलितमाह—**तनैवेति।** तथा च नैतत्सङ्गच्छते इति भावः। **काकः**-काकशावकः। **ताच्छब्द्यम्**-सम्प्रसारणशब्दव्यपदेशम्।

उद्द्योते—**तज्जातत्वमात्रेण**—तज्जातत्वज्ञानमात्रेण। **कथमिति**—नन्वित्यादिः। **तर्हि**—अनुपजातजात्यभिव्यञ्जकसंस्थानविशेषत्वे। 'येनैव हेतुने'त्यादि भाष्यैकवाक्यतयैवाह—**अन्ये त्विति।**

( समाधानान्तरभाष्यम् )

**अथवा दृश्यन्ते हि—वाक्येषु वाक्यैकदेशान् प्रयुञ्जानाः, पदेषु च पदैकदेशान्। वाक्येषु तावद्वाक्यैकदेशान्—प्रविश, पिण्डीम्, प्रविश, तर्पणम् इति।**

पदेषु पदैकदेशान्—देवदत्तो दत्तः, सत्यभामा भामेति । एवमिहापि—संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येत्येतस्य वाक्यस्यार्थे संप्रसारणात्संप्रसारणस्येत्येष वाक्यैकदेशः प्रयुज्यते । तेन निर्वृत्तस्य विधिं विज्ञास्यामः-संप्रसारणनिर्वृत्तात्संप्रसारणनिर्वृत्तस्येति ॥

( प्रदीपः ) प्रविशेति । प्रवेशनक्रिया कर्म योग्यमाक्षिपति, तत्र पिण्ड्यां प्रवेशासंभवाद्गृहप्रतिपत्तिः । एवं पिण्डीमिति कर्म योग्यां क्रियामाक्षि द् भक्षणक्रियां प्रकरणवशात्प्रत्याययति । एवं संप्रसारणादित्येतन्निर्वृत्तार्थमाक्षेप्स्यतीत्यर्थः । यथा च पदैकदेशप्रयोगस्तथा सिद्धे शब्दार्थसम्बन्धे इत्यत्र प्रतिपादितम् ॥

( उद्द्योतः ) वाक्येष्विति । स्वार्थबोधनाय वाक्येषु प्रयोक्तव्येष्वित्यर्थः ॥ योग्या क्रिया दर्शनादिरपीत्यत आह—प्रकरणेति । तत्तद्वाक्यस्य वाक्यार्थे शक्तिग्रहणकाले तत्तदेकदेशस्यापि तत्तद्वाक्यार्थे शक्तिग्रहः पदैकदेशस्य पदार्थ इवेति शक्त्यैव बोधः ॥ पूर्वपरिहारे सम्प्रसारणपदस्य तज्जन्यवर्णे उपचारात्प्रयोगः । अत्र त्वेकदेशेनैव शक्त्या तदर्थप्रतिपत्तिरिति भेदः । तदाह—आक्षेप्स्यतीति । आक्षेपोऽत्र बोधनमेव ॥ भाष्ये—इत्येतस्य वाक्यस्यार्थे इति । अत्र वाक्यपदं पदसमुदायपरम् । इत्येतस्य । इत्येतद् कस्य, संप्रसारणादुत्पन्नो यस्तस्मादित्यस्येति संप्रसारणस्य यत्कार्यं तस्येति च वाक्यस्यार्थे इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये-प्रविश, तर्पणमिति-गङ्गां प्रविश, तर्पणं कुर्वित्यर्थः । सामान्येन निर्दिशति—निर्वृत्तस्य विधिमिति । सम्प्रसारणनिर्वृत्तादिति—'परः पूर्वो भवतीति' इत्यनुषज्यते । सम्प्रसारणनिर्वृत्तस्येति—'दीर्घो भवती'त्यनुषज्यते ।

प्रदीपे—गृहप्रतिपत्तिरिति-प्रकरणवशादित्यादिः । यथा चेति—पदेष्विति शेषः ।

उद्द्योते—वाक्येष्वितीति—'भाष्ये' इत्यादिः । योग्येति—नन्वित्यादिः । 'यथा चे'त्यादि प्रदीपार्थमाह—तत्तदिति । वाक्यार्थे—तत्तद्वाक्यार्थे । तत्तदेकदेशस्यापि—तत्तद्वाक्यैकदेशस्यापि । अत्र तु—अत्र परिहारे तु । एकदेशेनैव—'सम्प्रसारणनिर्वृत्त' पदैकदेशेन 'सम्प्रसारण' इत्यनेनैव । तदर्थेति—सम्प्रसारणनिर्वृत्तार्थेत्यर्थः । एवञ्चाक्षेपासम्भवादाह—आक्षेप इति । एवेन प्रदीपासङ्गतिः सूचिता । ननु तस्य पदत्वेन वाक्यत्वाभावाद्भाष्यासङ्गतिरित्यत आह—अत्रेति । नन्वेवमपि तत्र पदसमुदायत्वाभावात्तदसङ्गतिस्तदवस्थेत्यत आह—इत्येतस्येति ।

### ( समाधानान्तरभाष्यम् )

अथवा आहायं—संप्रसारणात्परः पूर्वो भवतीति, संप्रसारणस्य दीर्घो भवतीति । न च वाक्यस्य संप्रसारणसंज्ञायां सत्यामेष निर्देश उपपन्नः; नाप्येतयोः कार्ययोः संभवोऽस्तीति तत्र वचनाद्भविष्यति ॥

( प्रदीपः ) अथवेति । यथा ब्राह्मणशतं भोज्यतामित्युक्ते सामर्थ्यात्संख्येया ब्राह्मणा भोज्यन्ते, तथेहापि संप्रसारणादित्युक्ते वाक्यार्थेन पौर्वापर्याभावात्तत्फलस्य वर्णस्य प्रतीतिः ॥

( उद्द्योतः ) पूर्वेभ्यः पक्षेभ्योऽस्य भेदमाह-यथा ब्राह्मणेति । एवं च यथा तत्र संख्यान्वयः संख्येयद्वारा, तथा प्रकृते स्वनिर्वृत्तद्वारेति भावः । तदेवाह—तत्फलस्येति । यथा पितृनाम्ना सङ्कल्पितं द्रव्यं तस्यायोग्यत्वे तत्पुत्राय समर्प्यते तद्वदिति भावः ॥

( तत्त्वालोकः ) भाष्ये—अयम—पाणिनिः एवं पूर्वत्रापि । न च—नहि । तत्र—सम्प्रसारणपक्षे वर्णे । वचनात्—वचनसामर्थ्यात् । शेषमन्यव्याख्या पूर्ववत्तत्रापि बोध्या ।

प्रदीपे—सामर्थ्यादिति—नद्युक्तिसामर्थ्यादित्यर्थः संख्याया भोजनासम्भवादित्यादिः इत्युक्ते—इत्यादावुक्ते । वाक्यार्थेन—क्रियारूपेण । तत्फलस्येति—सम्प्रसारणपदस्येत्यर्थः । असन्वभूतस्य क्रियारूपवाक्यार्थस्य स्वनिष्पादासम्भवाच्च; नदुक्ति सामर्थ्यादित्यादिः ।

उद्द्योते—अस्य—अस्य पक्षस्य । तत्र—भोजने प्रकृते इति—पूर्वरूपादावित्यर्थः । सम्प्रसारणान्वय इति शेषः तद्वदिति—सम्प्रसारणनाम्ना विहितं दीर्घादि तस्यायोग्यत्वे तत्फलस्य विधीयते इति शेषः ।

### ( द्वितीयपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु वर्णस्य ॥

### ( उक्ताक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—॥ वर्णसंज्ञा चेन्निर्वृत्तिः ॥ इति ॥

### ( समाधानभाष्यम् )

नैष दोषः । इतरेतराश्रयमात्रमेतच्चोदितम् । सर्वाणि चेतरेतराश्रयाण्येकत्वेन परिहृतानि—॥ सिद्धं तु नित्यशब्दत्वाद् ॥ इति ।

( उद्द्योतः ) भाष्ये—एकत्वेनेति । साजात्यादेकत्वेन विशिष्टानि बुद्ध्या कृत्वेत्यर्थः । सर्वेषामेकत्वेनैकजातीयत्वेनैकपरिहारेण सर्वाणि परिहृतानीति भावः ॥

( तत्त्वालोकः ) भाष्ये—इतरेतरेति-यत इत्यादिः । मात्रेति—अनेन तस्य बाधकत्वनिरासः ।

उद्द्योते—एकत्वसंख्यायाः परिहारहेतुत्वासम्भवादाह-साजात्यादिति । इदं व्यक्तिभेदसत्त्वात्प्रत्यपादि । व्यक्तिभेदसत्त्वादेवाह—बुद्ध्येति । नन्वेवं कथं परिहार इत्यत आह—सर्वेषामिति । व्यक्तिभेदसत्त्वेन एकत्वासम्भवात्तद् व्याचष्टे—एकजातीयत्वेनेति ॥

### ( समाधानबाधकभाष्यम् )

नेदं तुल्यमन्यैरितरेतराश्रयैः । न हि तत्र किंचिदुच्यते—अस्य स्थाने ये आकारैकारौकारा भाव्यन्ते ते वृद्धिसंज्ञा भवन्तीति । इह हि पुनरुच्यते—इग्यो यणः स्थाने वर्णः स सम्प्रसारणसंज्ञो भवतीति ॥

( उद्द्योतः ) नेदं तुल्यमिति । नित्यशब्दवादेऽपि यणस्थानिकत्वस्य शास्त्रैकसमधिगम्यत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—नेदमिति—इतरेतराश्रयमिति शेषः । तत्र—अन्यत्र । इह हि—इह तु ।

उद्द्योते—वादेऽपीति—सितमित्यादौ यणस्थानिकत्वाभावात्, इष्टमित्यादौ तत्सत्त्वाच्चेति शेषः ।

### ( समाधानसाधकभाष्यम् )

एवं तर्हि भाविनीयं संज्ञा विज्ञास्यते । तद्यथा—कश्चित्कंचित् तन्तुवायमाह—'अस्य सूत्रस्य शाटकं वय' इति । स पश्यति—'यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम्, भा-

विनी खल्वस्य संज्ञाऽभिप्रेता, स मन्ये वातव्यो—'यस्मिन्नुते शाटक इत्येतद्भवति' इति। एवमिहापि—स यणः स्थाने भवति यस्याभिनिर्वृत्तस्य सम्प्रसारणमित्येषा संज्ञा भविष्यति॥

(प्रदीपः) भाविनीति॥ य्वङः संप्रसारणमिति (त्यादि) विधिप्रदेशेषु भाविसंज्ञाविज्ञानमित्यर्थः॥

(उद्द्योतः) भाविसंज्ञेति। संप्रसारणादिपदस्य तत्त्वेन व्यवहरिष्यमाणे लक्षणेति भावः॥ अयं समाधिर्वृद्ध्यादिविषयेऽपि बोध्यः॥

(तत्त्वालोकः) भाष्ये—एवम्—यथैवम्। तत्—भाविसंज्ञाविज्ञानम्। सः—तन्तुवायः। पश्यति—विचारयति। भाविनीति—अत इत्यादिः। अस्य—वक्तुः। मन्ये—निश्चिनोमि।

उद्द्योते—तत्त्वेन—सम्प्रसारणादित्वेन।

(समाधानान्तरभाष्यम्)

अथवा—इजादियजादिप्रवृत्तिश्चैव हि लोके लक्ष्यते। यजाद्युपदेशात्तु इजादिनिवृत्तिः प्रसक्ता। प्रयुञ्जते च पुनर्लोका इष्टम् उप्तमिति। ते मन्यामहे—अस्य यणः स्थाने इगमिकं प्रयुञ्जते इति। तत्र तस्यासाध्वभिमतस्य शास्त्रेण साधुत्वमन्वाख्यायते—किति साधुर्भवति, ङिति साधुर्भवतीति॥ इग्यणः सम्प्रसारणम्॥ ४४॥

(प्रदीपः) सिद्धं तु नित्यशब्दत्वादित्येतत्समर्थनार्थमाह—अथवेति। बुद्धिविपरिणाममात्रं स्थान्यादेशभाव इत्यर्थः॥ असाध्वभिमतस्येति। प्राक् सम्प्रसारणशास्त्रादिति भावः॥ यथासंख्यसंबन्धाददुहितरामितीकारस्य सम्प्रसारणसंज्ञा न भवति। दिव उदित्युत्त्वे यणादेशे कृते हल इति दीर्घत्वं तपरकरणान्न भवति—द्युभ्यामिति। अक्षद्युवावित्यत्र सम्प्रसारणाच्चेति पूर्वैकादेशो न भवत्यचः पश्चात्सन्निधानादथवा वार्णादाङ्गस्य बलीयस्त्वात्॥ ४४॥

(उद्द्योतः) बुद्धीति। तदयं सूत्रार्थः—यणप्रयोगे प्राप्ते इक् प्रयुज्यमानः सम्प्रसारणसंज्ञक इति॥ तज्ज्ञानं च यजाद्युपदेशज्ञानमात्रेण वचिस्वपीत्येतज्ज्ञानं विनापि जातमिति नान्योन्याश्रय इत्यर्थः॥ वचिस्वपीत्यादेश्चायमर्थः—एतत्सम्बन्धियणप्रयोगे प्राप्ते इक् प्रयुज्यमानः साधुरितीति भावः॥ असाधोः साधुत्वं ब्रह्मणाप्युपपादयितुमशक्यमत आह—प्रागिति। एतदेव च ध्वनयितुमभिमतस्येत्युक्तम्॥ ननु दुहेर्लुङि उत्तमपुरुषे लस्येटि तस्य सम्प्रसारणत्वेऽदुहितरामित्यादौ हल इति दीर्घः स्यादत आह—यथासंख्येति॥ एवं हि यथासङ्ख्यार्थं लकारोपदेशस्यावश्यकत्वे लृकारोपदेशः किमर्थं इति ऋलृक्सूत्रस्थभाष्यासङ्गतिरिति चिन्त्यमिदम्। तस्मात् सम्प्रसारणस्येत्यादौ तद्भावितपरत्वाश्रयणान्न दोषः। ध्वनितं चेदं वाक्यसंज्ञापक्षस्थापने वाक्यैकदेशन्यायं वदता भगवता॥ एतेन द्युभ्याम् अक्षद्युवावित्यपि सिद्धम्। अचः पश्चादिति। समानाङ्गग्रहणस्य करिष्यमाणत्वादौकारस्य चानङ्गस्थत्वादित्यर्थः। तत्प्रत्याख्यानेऽप्याह—वार्णेति। आङ्गमुवङ्॥ ४४॥

(तत्त्वालोकः) भाष्ये—इजादीति—इजादेर्यजादेश्च प्रयोगविषया प्रयोक्तुः प्रवृत्तिरित्यर्थः। ते इति—वयमिति शेषः। वस्तुतस्त्वत्र 'तेन' इति पाठो युक्तः। तत्र—यणः स्थाने। तस्य—इकः। प्रदीपे—समर्थनेति—प्रकृत इत्याशयः। सम्बन्धादिति—यस्थानिकस्यैव इकारस्य सम्प्रसारणसंज्ञा, न तु लस्थानिकस्येति नियमलाभादिति शेषः। इकारस्येति—लस्थानिकत्वेन यस्थानिकत्वाभावादिति शेषः। अक्षद्युवावित्यत्रेति—ऊठः सम्प्रसारणसंज्ञायामिति शेषः। पूर्वेति—पूर्वरूपेत्यर्थः।

उद्द्योते—तत्—तस्मात्। सूत्रेति—प्रकृतसूत्रेत्यर्थः। कैयटोक्तं खण्डयति—एवमिति। अत्र यथासंख्यसम्बन्धे इत्यर्थः। तद्भावितेति—सम्प्रसारणशब्दभावितेत्यर्थः। तत्रेटः सम्प्रसारणशब्देन जातत्वाभावादाह—न दोष इति। एतेन—तत्र तद्भावितग्रहणेन। अत्रोदादेः सम्प्रसारणशब्देन जातत्वाभावादाह—सिद्धमिति। समानाङ्गग्रहणस्येति—सम्प्रसारणपूर्वत्वे इत्यादिः। वार्त्तिककृतेति शेषः। तदिति—समानाङ्गग्रहणेत्यर्थः॥

---

(अथागमस्थितिदेशनिर्णयप्रकरणम्)

(४० परिभाषासूत्रम्॥ १।१।७ आ. २॥)

# आद्यन्तौ टकितौ॥ १।१।४५॥

(अन्वयानुपपत्तिनिराकरणाधिकरणम्)

(आक्षेपभाष्यम्)

समासनिर्देशोऽयम्। तत्र न ज्ञायते—क आदिः कोऽन्त इति। तद्यथा—'अजाविधनौ देवदत्तयज्ञदत्तौ' इत्युक्ते तत्र न ज्ञायते—कस्याजा धनम्, कस्यावयः—इति॥

(प्रदीपः) आद्यन्तौ॥ ४५॥ लोकव्यवहारादत्र क्रमव्यवस्था न सिध्यति, अपि तु शास्त्रेणैवेति प्रदर्शनाय पूर्वपक्षः—समासनिर्देशोऽयमिति। अभिन्नस्यार्थस्य समासेन प्रतिपादनादित्यर्थः॥ यद्यपि देवदत्तस्य यज्ञदत्तस्य चाजा अवयश्च धनमिति वाक्येऽपि क्रमव्यवस्था नास्ति, तथापि समासे सुतरां नास्तीति प्रतिपादयितुं समासनिर्देश इत्युक्तम्॥

(उद्द्योतः) आद्यन्तौ॥ ४५॥ अपि त्विति। एतदर्थमेव स्थानाख्यप्रमाणेन सिद्धेऽपि यथासङ्ख्यसूत्रमावश्यकमिति भावः॥ अभिन्नस्य। अपृथग्भूतस्य॥ सुतरामिति। यत्र न साहित्यस्य नियमेन प्रतीतिः, पृथगुपस्थितिश्च, तत्रापि चेन्न क्रमव्यवस्था, किमु वक्तव्यं साहित्यप्रतीतावपृथगुपस्थितौ चेत्यर्थः॥ तथान्वयबोधे तत्तत्पदार्थानां सर्वसाधारणव्यासज्यवृत्तिधर्मानवच्छिन्नत्वेनोपस्थितिस्तन्त्रमिति तात्पर्यम्॥

(तत्त्वालोकः) भाष्ये—तत्रेति—समासनिर्देशे इत्यर्थः। एवमग्रेऽपि। तद्यथा—यथा।

प्रदीपे—लोकव्यवहारे क्रमव्यवस्थाया असत्त्वादाह—लोकव्यवहारादिति। शास्त्रेणैव—यथासंख्यशास्त्रेणैव।

उद्द्योते—एतदर्थमेव—अत्र क्रमव्यवस्थासिद्ध्यर्थमेव। सिद्धेऽपीति—'इको यणची'त्यादाविष्टे इत्यादिः। अर्थानामभेदासम्भवादाह—अपृथगिति। यत्र—वाक्ये। पृथगिति—अर्थानामित्यादिः। एवमग्रेऽपि। किमु इति—तर्हीत्यादिः। चेति—'न क्रमव्यवस्थेति' इति शेषः। अर्थान्न वक्तव्यम्, अन्यथैव तदवगमादिति भावः। ननु तत्र कथन्न क्रमव्यवस्थेत्यत आह—तथेति। क्रमव्यवस्थयेत्यर्थः। सम्बन्धादिव्यवच्छेदायाह—सर्वेति। प्रकृते साहित्यं व्यासज्यवृत्तिधर्मः, व्यासज्यवृत्तित्वञ्च—एकत्वानवच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वमित्याशयः॥

( समाधानभाष्यम् )

**यद्यपि तावल्लोक एष दृष्टान्तः । दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति ॥**

**( प्रदीपः ) यद्यपीति** । दर्शनं दृष्टं तस्यान्तो निश्चयः । यद्यपि लोके एतद्दर्शनमित्यर्थः ॥

**( उद्द्योतः ) अन्तो निश्चय इति** । दर्शनस्यावसानं निश्चये सत्याकाङ्क्षाभावाद्भवतीति दृष्टान्तशब्देन निश्चय उच्यते इत्यर्थः ॥ **एतद्दर्शनमिति** । निश्चय इत्यर्थः । एवञ्च यथासंख्यान्वयाभिप्रायेण-दृशप्रयोगो लोकेऽसाधुरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**पुरुषारम्भ इति**—पुरुषारब्ध इत्यर्थः। आरम्भ इत्यत्र कर्मणि घञ्विधानात् । एवमग्रेऽपि ।

( आक्षेपभाष्यम् )

**अस्ति वेह कश्चित्पुरुषारम्भः ॥**

**( उद्द्योतः )** भाष्येऽस्तिवेति प्रश्नः । चपाठस्त्वयुक्तस्तस्य प्रश्नेऽयुक्तत्वात् ॥

( समाधानभाष्यम् )

**अस्तीत्याह ॥**

**कः ? ॥**

**संख्यातानुदेशो नाम ॥**

**( तत्त्वालोकः )** तटस्थ उत्तरमनुवदति—**अस्तीत्याहेति** । सिद्धान्तीति शेषः । एवमग्रेऽपि । **संख्यातानुदेश इति**—अनेन यथासंख्यसूत्रं लक्ष्यते ।

( टकितोरागमविषयत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**कौ पुनष्टकितावाद्यन्तौ भवतः ? ॥**

**( उद्द्योतः ) कौ पुनरिति** । यौ टकितावाद्यन्तौ तौ किमागमौ उतादेशौ इति प्रश्नः ॥

( समाधानभाष्यम् )

**आगमावित्याह ॥**

**( उद्द्योतः ) आगमावित्याहेति** । आद्यन्तपदसत्त्वादिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—**आद्यन्तपदेति**—अवयवविशेष-वाचीत्यादिः ।

( आदेशवादिन आगमवादिनं प्रति आक्षेपभाष्यम् )

**युक्तं पुनर्यन्नित्येषु नाम शब्देषु आगमशासनं स्यात् । न नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । आगमश्च नामापूर्वः शब्दोपजनः ॥**

**( उद्द्योतः ) नित्येष्विति** । वर्णास्तद्घटिताः प्रयोगेषु श्रूयमाणाः शब्दाश्च व्याकरणाकार्या आकाशवन्नित्या इति मते इदम् ॥

**( तत्त्वालोकः )** भाष्ये—**नेति**—अत्र 'युक्तम्' इत्यनुषज्यते । **नित्येष्विति**—यत इत्यादिः ।

उद्द्योते—तेषां न पारमार्थिकं नित्यत्वमित्याह—**वर्णा इति** । 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यादिश्रुतिषु आकाशस्याप्युत्पत्तेः श्रूयमाणत्वाद् दृष्टान्तस्यापि न पारमार्थिकं नित्यत्वमित्याशयः ।

( आगमवादिन आदेशवादिनं प्रति आक्षेपभाष्यम् )

**अथ युक्तं यन्नित्येषु शब्देष्वादेशाः स्युः ॥**

( आदेशवादिनः समाधानभाष्यम् )

**बाढं युक्तम् । शब्दान्तरैरिह भवितव्यम् । तत्र शब्दान्तराच्छब्दान्तरस्य प्रतिपत्तिर्युक्ता ॥**

**( उद्द्योतः ) तत्र शब्दान्तरादिति** । प्रसक्तां शब्दान्तरबुद्धिं विहायेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**शब्दान्तरैरिति**—यत इत्यादिः । **इह**—आदेशविधाने । **तत्र**—शब्दान्तरभवने ।

उद्द्योते—अत्र ल्यब्लोपे पञ्चमीत्याशयेनाह—**प्रसक्तामिति** ॥

( इष्टापत्तिभाष्यम् )

**आदेशास्तर्हीमे भविष्यन्ति । अनागमकानां सागमकाः ॥**

**( तत्त्वालोकः ) आदेशाः**—आदेशसदृशाः । **इमे**—आगमत्वेन विधीयमानाः ।

( आक्षेपभाष्यम् )

**तत्कथम् ? ।**

( एकदेशिसमाधानभाष्यम् )

**संज्ञाधिकारोऽयम् । आद्यन्तौ चेह संकीर्त्येते टकारककारावितावुदाह्रियेते । तत्राद्यन्तयोष्टकारककाराविति संज्ञे भविष्यतः । तत्र 'आर्धधातुकस्येड्वलादेः' इत्युपस्थितमिदं भवति—आदिरिति । तेनेकारादिरादेशो भविष्यति ॥**

**( प्रदीपः ) संज्ञाधिकारोऽयमिति** । यद्येवं संज्ञा संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य स्वयमेव निवर्तत इति किमिद्ग्रहणेन, टकावित्येवास्तु ॥ नैष दोषः । इत्संज्ञत्वेन देशविशेष उपलक्ष्यते । तेनेत्संज्ञकस्य यो देशस्तद्देशावस्थितौ टकौ संज्ञे भवत इति **आलजाटचावि**त्याटच्प्रत्यये टकारः संज्ञा न भवति । तत्रेड्ग्रहणेनेकारादिः शब्दो गृह्यते । स्थानेऽन्तरतमश्चादेशो भवतीति तव्यस्य इतव्यो भवतीति सिद्धमिष्टम् ॥

**( उद्द्योतः ) अनागमकाना**मित्यादेर्यद्यपि **घुसंज्ञा**सूत्रे आशय उक्त एव, तथापि तं विस्मृत्य **तत्कथ**मिति प्रश्ने **एकदेशी** साहचर्यादस्य संज्ञासूत्रत्वेन तदुपपत्तिमाह—**संज्ञाधिकारोऽयमिति** । तत्र शङ्कते—**यद्येवमिति** ॥ **उपलक्ष्यत इति** । एवंचानयोरित्त्वमेव नेति भावः ॥ **आटजिति** । यद्यपि प्रत्ययविधौ नास्य प्रवृत्तिः । षष्ठीत्यपकर्षणाद् । अत एव टा, टिठन् , ऐकागारिकडित्यादौ नास्य प्रवृत्तिः ॥ तथापि ड्ढकः पर्यायेणाद्यन्तता स्यादिति दोष इति बोध्यम् ॥ **आटश्चे**त्यादिभिस्तु टकारार्थादित्वोपलक्षिताकाराद्यनुवादेन वृध्यादिविधानम् ॥ भाष्ये **सङ्कीर्त्येते** । प्रथमत उच्चार्येते । **उदाह्रियेते** पश्चादुच्चार्येते इत्यर्थः ॥ **अन्तरतम इति** । अर्थतः श्रुतितश्चेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**संज्ञाधिकार इति**—यत इत्यादिः ।

**टकारककाराविति**—तथेत्यादिः । **तत्र**—तथा सति । **तत्र**—संज्ञासंज्ञिभावे सति ।

प्रदीपे—**यद्येवमिति**—तर्हीति शेषः । **इत्संज्ञत्वेनेति**—यत इत्यादिः । **तत्र**—'आर्धधातुकस्येड् वलादेरि'त्यत्र ।

उद्योते—**तम्**—तत्रोक्तं तदाशयम् । **साहचर्यादिति**—पूर्वेषां संज्ञासूत्राणामित्यादिः । **अस्य**-प्रकृतसूत्रस्य । एवमग्रेऽपि । **अनयोः**—टकयोः । **प्रवृत्तिरिति**—अन्यथा कैयटोक्तपक्षेऽप्यत्र दोषतादवस्थ्यमिति भावः । **षष्ठीति**—'षष्ठी स्थानेयोगे'त्यत इत्यादिः । **तथापीति**—तथा च कैयटोक्तिरेनदुपलक्षणमिति भावः । अस्मिन् पक्षेऽनुवादे गतिमाह—**आट इति** । **उच्चार्येते इति**—तथा च 'पूर्वोच्चारित उद्देश्यः परोच्चारितो विधेयः' इति न्यायेनाद्यन्तयोरुद्देश्यत्वं टकयोश्च विधेयत्वमुपपद्यते इत्याशयः ।

**( आक्षेपभाष्यम् )**

**एतावदिह सूत्रम् 'इट्' इति । कथं पुनरियता सूत्रेण इकारादिरादेशो लभ्यः ॥**

**( तत्त्वालोकः ) इह**—अष्टाध्याय्याम्, 'आर्धधातुकस्येड् वलादेरि'त्यत्र वा । अवयवे समुदायारोपादाह—**सूत्रमिति** ।

**( समाधानभाष्यम् )**

**लभ्य इत्याह ॥**

**कथम् ? ॥**

**बहुव्रीहिनिर्देशात् । बहुव्रीहिनिर्देशोऽयम्-इकारः ट् आदिरस्येति ॥**

**( तत्त्वालोकः )** नञ्ग्रन्थ उत्तरमनुवदति—**लभ्य इत्याहेति** । सिद्धान्तीति शेषः । **बहुव्रीहिनिर्देश इति**—यत इत्यादिः ।

**( आक्षेपभाष्यम् )**

**यद्यपि तावदत्रैतच्छक्यते वक्तुम् इह तु कथम्—'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इति, यत्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुम् ॥**

**( तत्त्वालोकः ) अत्र**—आर्धधातुकस्य 'इट्' वलादेरित्यत्र । **एतत्**—बहुव्रीहिनिर्देशादिकाराद्यादेशप्रापणम् । अकारः ट् आदिरस्येति द्विपदबहुव्रीहिणाऽङ्गस्योपस्थितेः, उदात्त इत्यस्य भिन्नपदत्वाच्च 'सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो ने'ति वचनेनाकारे उदात्तस्यान्वयो न सम्भवति, किन्त्वङ्ग एवेत्याशयेनाह—**यत्राशक्यमिति** ।

**( प्रत्याक्षेपभाष्यम् )**

**तत्र को दोषः ? ।**

**( तत्त्वालोकः ) तत्रेति**—उदात्तस्याकारविशेषणत्वाभावे इति शेषः ।

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**अङ्गस्योदात्तत्वं प्रसज्येत ॥**

**( प्रदीपः ) अङ्गस्योदात्तत्वमिति** । तच्चालोऽन्त्यस्येत्यन्त्यस्य स्यात् ॥

**( उद्द्योतः )** ननु प्रथमातिक्रमे कारणाभावादाद्युदात्तत्वेनेष्टसिद्धिरत आह—**तच्चेति** ।

**( तत्त्वालोकः )** प्रदीपे—**तच्च**—अङ्गस्य प्राप्तमुदात्तत्वञ्च ।

**( समाधानभाष्यम् )**

**नैष दोषः । त्रिपदोऽयं बहुव्रीहिः । तत्र वाक्य एवोदात्तग्रहणेनाकारो विशेष्यते—अकार उदात्त आदिरस्येति ॥**

**( प्रदीपः ) त्रिपदोऽयमिति** । विशेषणस्याप्युदात्तस्य सौत्रत्वान्निर्देशस्य परनिपातः ॥

**( उद्द्योतः )** भाष्ये—**तत्र वाक्य एवेति** । त्रिपदे वाक्ये एवेत्यर्थः । **एवः** प्रसिद्धौ । एवं च तत्समानार्थकवृत्तावप्यकारविशेषणत्वं सुलभमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—अकारः ट् आदिरुदात्तश्चास्येति विग्रहमभिप्रेत्याह—**त्रिपद इति** । यत इत्यादिः ।

उद्द्योते—व्यवच्छेद्याभावादाह—**प्रसिद्धाविति** । **तदिति**—त्रिपदवाक्येत्यर्थः । **वृत्तावपीति**—त्रिपदवृत्तावपीत्यर्थः । उदात्तस्येति शेषः । **भावः**—भाष्यकृता 'अकार उदात्त आदिरि'ति व्युत्क्रमोक्त्या सूचितः ।

**( आक्षेपभाष्यम् )**

**यत्र तर्ह्यनुवृत्त्यैतद्भवति—'आडजादीनाम्' इति ॥**

**( प्रदीपः ) यत्र तर्हीति** । तत्र ह्युदात्तग्रहणमेवानुवर्तत इत्यशक्यो बहुव्रीहिराश्रयितुमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**एतद्**—उदात्तत्वम् । **इतीति**—तत्राशक्यमुदात्तग्रहणेनाकारो विशेषयितुमिति शेषः ।

प्रदीपे **एव**कारो भिन्नक्रमः, अत एवाशक्यपदादुत्तरत्रान्वेति । **बहुव्रीहिः**—त्रिपदबहुव्रीहिः ।

**( समाधानभाष्यम् )**

**वक्ष्यत्येतत्—*अजादीनामटा सिद्धम्* इति ।**

**( प्रदीपः ) वक्ष्यत्येतदिति** । सूत्रस्यैव प्रत्याख्यानाददोष इत्यर्थः ॥

**( उद्द्योतः ) प्रत्याख्यानादिति** । याडुड्विधायकं च **याडुडुदात्तः परस्मैपदेष्विति** पाठ्यमिति न दोषः ॥

**( तत्त्वालोकः )** भाष्ये—**वक्ष्यतीति**—नैष दोषः, यत इत्यादिः । **अजादीनामिति**—'अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेदटः । अस्वपो हसतीत्यत्र धातौ वृद्धिमटः स्मरेत ॥ पररूपं गुणे नाटः ओमाङोरुसि तत्समम् । छन्दोऽर्थं बहुलं दीर्घः इणस्त्योरन्तरङ्गतः ॥ इति ॥ **अस्यार्थः**—अजादीनामटा सिद्धमित्याण् न वक्तव्यः । **ननु** वृद्ध्यर्थं स इति चेन्न, अट एव वृद्धेर्वक्तव्यत्वात् । न चैवम् अस्वपो हसतीत्यत्र रुत्वे उत्वे चाटो वृद्धिः स्यादिति वाच्यम्, धातौ परेऽटो वृद्धेर्वक्तव्यत्वात् । न चैवमपि आटीदित्यादौ गुणे पररूपं स्यादिति वाच्यम्, अटो नेति वचनस्य कर्तव्यत्वात् । अस्य वक्तव्यत्वेऽपि उस्योमाङ्क्ष्वाटः प्रतिषेधस्यावक्तव्यत्वाद् वचनकरणे साम्यमेव । न च 'त्रित एनमायुनक्' इत्यादिच्छन्दोऽर्थमाड् वक्तव्य इति वाच्यम्, छन्दसि बहुलं दीर्घस्य दर्शनात् । न च आयन्नाद्यर्थमाडावश्यकमिति वाच्यम्, तत्रापि यणाद्यपेक्षयाऽन्तरङ्गत्वाद् वृद्धेरुपपत्तेरिति ॥

प्रदीपे—**सूत्रस्यैव**—'आडजादीनामिति' सूत्रस्यैव ।

उद्द्योते—नन्वेवमपि याडुड्विधौ दोष एवेत्यत आह—**याडुडिति** ।

( सिद्धान्तिभाष्यम् )

**अथवा—यत्तावदयं सामान्येनोपदेष्टुं शक्नोति, तत्तावदुपदिशति—प्रकृतिम्, ततो वलाद्यार्धधातुकम्, ततः पश्चादिकारम्। तेनायं विशेषेण शब्दान्तरं समुदायं प्रतिपद्यते। तद्यथा—खदिरबर्बुरयोः—खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ। ततः पश्चादाह—कङ्कटवान् खदिर—इति। तेनाऽसौ विशेषेण द्रव्यान्तरं समुदायं प्रतिपद्यते ॥**

**( प्रदीपः ) अथवेति ।** परिभाषापक्षेऽपि न दोष इत्यर्थः । नहि व्यवस्थितस्य तव्यस्य पश्चादिकारोऽवयव आगच्छति, येनानित्यत्वं स्यात्। किं तर्हि, नित्यं पदमनेनोपायेनान्वाख्यायते ॥ **खदिरबर्बुरयोरिति ।** निर्धारणे षष्ठी । तयोः कङ्कटवान् खदिर इत्युक्ते द्रव्यान्तरं खदिरं प्रतिपद्यते न तत्र कङ्कटास्तदानीमारोप्यन्ते, प्रतिपादनोपाय एवायमित्यर्थः ॥

**( उद्द्योतः ) आडजादीना**मिति कुर्वतः सूत्रकृतो नायं पक्षस्तात्पर्यविषयीभूत इत्यतो **घुसं**ज्ञासूत्रोपपादितमेव पक्षं सिद्धान्त्याह—भाष्येऽ**थवेति ॥ परिभाषापक्षेऽपीति ।** परिभाषात्वेनागमत्वपक्षेऽपीत्यर्थः ॥ भाष्ये—**तेनायं विशेषेणेति । ततः पश्चादिकार**मित्यन्तेनेत्यर्थः ॥ **शब्दान्तरम् ।** तव्याद्यपेक्षया भिन्नं समुदायम् इतव्यादिरूपमित्यर्थः ॥ **प्रतिपद्यते** तव्यबुद्धिनिवर्तनेनेत्यर्थः ॥ **नित्यं पदमिति ।** व्याकरणानिष्पाद्यमित्यर्थः ॥ **अन्वाख्यायत इति ।** क्रमेण सिद्धतत्तदवयवप्रतिपादनेन पूर्वपूर्वनिरवयवकबुद्धिविपरिणामद्वारा प्रत्याख्यत इति आदेशस्थल इवात्रापि बुद्धिविपरिणामान्न नित्यत्वहानिः ॥ तदेव दर्शयति—**न तत्र कङ्कटा इति । कङ्कटः** सन्नाह उपरितनशुष्कत्वचः ॥ भाष्ये—**खदिरबर्बुरयोरिति ।** सामान्यमुपदिशतीत्यध्याहृतसामान्यापेक्षया षष्ठी ॥ सामान्यमेव दर्शयति—**खदिरबर्बुरौ गौरकाण्डाविति ॥ द्रव्यान्तरं ।** कङ्कटाद्भिन्नं तदवयवकम् ॥ **समुदायमिति ।** पतञ्जलिमते गुणसमुदायस्यैव द्रव्यत्वादिति भावः ॥ तत्र यथा गौरकाण्डत्वादिना खदिरेऽपि प्रसक्तां बर्बुरबुद्धिं कङ्कटवानित्यनेन निवर्त्य खदिरबुद्धिः स्थाप्यते, तथेहापि सामान्योपदेशात्सर्वत्र तव्यबुद्धौ प्रसक्तायाम् इड्बोधकविशेषेणागमत्वबोधनद्वारैव इतव्यबुद्धिः स्थाप्यते इत्यर्थः ॥ निरूपितं चैतद् **घुसंज्ञा**सूत्रे । अत्र पक्षे वाचकस्यैवानया प्रणाल्या व्युत्पादनम् । उत्तरपक्षे तु कल्पितस्यानेन साक्षाद्बोधनम् । तेन च बोधकस्याखण्डस्य बोधनमिति भेदः ॥

**( तत्त्वालोकः )** भाष्ये—इडादिपदे त्रिपदबहुव्रीहिकल्पनायां गौरवात्, पूर्वसाहचर्यात् परसाहचर्यस्य बलीयस्त्वेन प्रकृतसूत्रस्य 'इग्यणः सम्प्रसारणमि'ति पूर्वसूत्रसाहचर्येण संज्ञासूत्रत्वकल्पनापेक्षया 'मिदचोऽन्त्यात्परः' इति परसूत्रसाहचर्येण परिभाषासूत्रत्वकल्पनस्यैव न्याय्यत्वाच्चोक्तसमाधानस्यैकदेशयुक्तत्वात् सिद्धान्त्याह—**अथवेति । तावत्**—प्रथमम् । एवमग्रेऽपि । **अयम्**—पाणिनिः । **तत इति**—विशेषमिति शेषः । **अयम्**—शिष्यः । एवमग्रेऽपि । **गौरकाण्डौ**—स्फुटशाखौ । **पश्चादिति**—विशेषमिति शेषः । **तेन**—कङ्कटवत्त्वरूपेण । **प्रतिपद्यते**—बर्बुरबुद्धिनिवृत्तिपूर्वकं ज्ञायते ।

प्रदीपे—**दोषः**—शब्दनित्यताहानिः । **पश्चादिति**—व्यवस्थाया इत्यादिः । **येनेति**—शब्दस्येति शेषः । **तयोः**—खदिरबर्बुरयोः । **द्रव्यान्तरम्**—बर्बुराद्भिन्नम् । **तत्र**—खदिरे ।

उद्द्योते—**अयमपक्षः**—इकाराद्यादेशपक्षः । **घुसंज्ञासूत्रेति**—घुसंज्ञासूत्रभाष्येत्यर्थः । **पक्षम्**—बुद्धिविपरिणामपक्षम् । **परिभाषात्वेनेति**—प्रकृतसूत्रस्येत्यादिः । **निवर्तनेनेति**—ज्ञायते इति शेषः । शब्दस्य पारमार्थिकनित्यत्वाभावान्नित्यपदार्थमाह—**व्याकरणेति । क्रमेणेति**—अस्य प्रतिपादनेऽन्वयः । **अत्रापि**—आगमस्थलेऽपि । **नित्यत्वेति**—शब्दस्येत्यादिः । यद्यपि कैयटेन 'खदिरबर्बुरयोरि'त्यत्र निर्धारणषष्ठीं समाश्रित्य तस्य कङ्कटवान् खदिरः' इत्यत्रान्वयः स्वीकृतः, तथापि न सोऽक्षरस्वरससिद्ध इत्याशयेन पक्षान्तरमाह—**सामान्यमुपेति ।** तथा चात्र सम्बन्धसामान्ये षष्ठीत्याशयः । **कङ्कटादिति**—कङ्कटवत्त्वाद् बर्बुरभिन्नं गौरकाण्डाद्यवयवकमित्यर्थः । **तत्र**—दृष्टान्ते । **अनया**—प्रकृतिमित्यादिरूपया । **अनेन**—प्रकृतिमित्यादिना । **तेन**—कल्पितेन ।

( समाधानान्तरभाष्यम् )

**अथवा एतयानुपूर्व्याऽयं शब्दान्तरमुपदिशति प्रकृतिम्। ततो वलाद्यार्धधातुकम्। ततः पश्चादिकारं, यस्मिंस्तस्यागमबुद्धिर्भवति ॥**

**(प्रदीपः) अथवेति ।** एतदाह–अस्ति स्त एधीति तत्त्वतो रूपार्थान्वयाभावात्कल्पिताभ्यामेवान्वयव्यतिरेकाभ्यामर्थवत्तामाश्रित्यासत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य पदस्य व्युत्पादनं क्रियते, रेखागवयेनेव सत्यगवयस्य ॥

**( उद्द्योतः ) रूपार्थान्वयाभावादिति ।** व्याकरणेन यस्य 'असि'ति रूपस्यार्थो दर्शितस्तेन रूपेण तस्यार्थस्य प्रयोगेष्वन्वयाभावः । स्त एधीत्यादौ व्यभिचारादित्यर्थः ॥ **असत्येति ।** शास्त्रप्रक्रिया कल्पिता असत्या इत्यर्थः ॥ यद्यपि सत्यगवयो रेखागवयवत्सावयव एव, अत्र कल्पितावयवसदृशावयवानां तत्रान्वयात् ॥ तथापि सत्यं पदमखण्डमेव, एधीत्यादौ शास्त्रकृत्कल्पितावयवसदृशानामनुपलम्भादित्येतत्पक्षनिष्कर्षः ॥ **सत्यस्य पदस्येति ।** एवं च रेखागवयवत्कल्पितानित्यपदविषयकं शास्त्रम् । तत्रागमेष्वपि न क्षतिर्न च तल्लोके प्रयुज्यमानम्, किं तु तत्प्रत्याय्यमेव पदं तथेति भावः ॥ **एतयेत्यादि**भाष्यस्यायमर्थः—**एतया** वक्ष्यमाणयानुपूर्व्याऽ**यं** पाणिनिः **शब्दान्तरं** बोधकशब्दापेक्षया भिन्नं रेखागवयस्थानीयम् **उपदिशति** प्रतिपादयति, तत्रागमबुद्धावपि न शब्दनित्यताहानिरिति ॥

**( तत्त्वालोकः )** भाष्ये—आनुपूर्वीमाह-**प्रकृतिमित्यादिना । यस्मिन्**—शब्दान्तरे 'रेखागवयस्थानीये कल्पितानित्यपदे' । **तस्य**—शिष्यस्य । अयमाशयः—नित्यशब्दे आगमानुशासनमयुक्तमिति शङ्कायाः प्रथममेकदेशिना समाधानं कृतम्, ततः सिद्धान्तिना समाधानद्वयमुक्तम् । तत्र—आदेशस्थल एव बुद्धिविपरिणामो भवति, न त्वागमस्थले; अतः शब्दनित्यतारक्षणायोभयत्रादेशत्वमेवाभ्युपगन्तव्यम्, न त्वेकत्रागमत्वमिति प्रथमसमाधानस्याभिप्रायः । तथा—आगमस्थलेऽपि बुद्धिविपरिणामः सम्भवति, न त्वादेशस्थल एवेति यथाशास्त्रमागमत्वस्यादेशत्वस्य चाभ्युपगमेऽपि न शब्दनित्यताहानिरिति द्वितीयसमाधानस्याशयः । एवं—शास्त्रेण कल्पितानित्यपदमेव बोध्यते, न त्वखण्डनित्यपदमिति कल्पितानित्यपदे आगमादिबुद्धावपि न शब्दनित्यताहानिः । न चैवं शास्त्रस्याखण्डनित्यपदेऽनुपयोगिता, कल्पितानित्यपदेनाखण्डनित्यपदबोधनादिति तृतीयसमाधानस्याभिप्राय इति ॥

प्रदीपे—एतत्पदबोध्यं निर्दिशति—**अस्तीत्यादिना । इति**—इत्यत्र ।

उद्द्योते—**रूपेण**—'असि'ति रूपेण । **अत्र**—रेखागवये । **तत्र**—सत्यगवये । **एवञ्च**—असत्यप्रकृतिप्रत्ययोपदेशेन सत्यस्य

पदस्य व्युत्पादने च। तत्र—कल्पितानित्यपदे। तत्—कल्पितानित्यपदम्। एवमग्रेऽपि। एदम्—अखण्डनित्यपदम्। तथा—लोके प्रयुज्यमानम्। तत्र—रेखागवयस्थानीये कल्पितानित्यपदे।

( ३०५ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ ❀ ॥ टकितोराद्यन्तविधाने प्रत्ययप्रतिषेधः ॥ ❀ ॥

( भाष्यम् )

**टकितोराद्यन्तविधाने प्रत्ययस्य प्रतिषेधो वक्तव्यः॥ प्रत्यय आदिरन्तो वा मा भूदिति॥ 'चरेष्टः' 'आतोऽनुपसर्गे कः' इति॥**

(प्रदीपः) **प्रत्ययप्रतिषेध इति**। प्रत्ययपरत्वस्याप्ययमपवादः प्राप्नोतीति भावः॥

(उद्द्योतः) ननु टकितोराद्यन्तविधाने कस्यापि प्रत्ययस्याप्राप्तेः कस्य प्रतिषेधो वक्तव्य इत्यत आह—**प्रत्ययपरत्वस्यापीति**। **अपिना** स्थानेयोगत्वस्य॥

( तत्त्वालोकः ) प्रदीपे—**अयम्**—'आद्यन्तौ टकिता'विति योगः। उद्द्योते—'परश्चे'ति सूत्रसत्त्वादाह—**अप्राप्तेरिति**।

( ३०६ समाधानवार्तिकम् ॥ २ ॥ )

॥ ❀ ॥ परवचनात्सिद्धम् ॥ ❀ ॥

( भाष्यम् )

**परवचनात्प्रत्यय आदिरन्तो वा न भविष्यति॥**

(प्रदीपः) **परवचनादिति**। पुरस्तादपवादन्यायेन स्थानेयोगत्वमेवानेन बाध्यते, न प्रत्ययपरत्वमिति भावः॥

( तत्त्वालोकः ) प्रदीपे—**अनेन**—'आद्यन्तौ टकिता'विति योगेन।

( ३०७ समाधानबाधकैकदेशिवार्तिकम् ॥ ३ ॥ )

॥ ❀ ॥ परवचनात्सिद्धमिति चेन्नापवादत्वात् ॥ ❀ ॥

( भाष्यम् )

**परवचनात्सिद्धमिति चेत्। तन्न।**

**किं कारणम्?।**

**'अपवादत्वात्'। अपवादोऽयं योगः॥ तद्यथा—'मिदचोऽन्त्यात्परः' इत्येष योगः स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः॥**

(प्रदीपः) **नापवादत्वादिति**। बाध्यमात्रापेक्षायां पुरस्तादपवादन्यायो नास्तीति भावः॥

( तत्त्वालोकः ) भाष्ये—**किं कारणम्**—कस्मात्कारणात्। **अयम्**—'आद्यन्तौ टकिता'वित्ययम्। **तद्यथा**—यथा।

( समाधानसाधकदृष्टान्तवैषम्यभाष्यम् )

**विषम उपन्यासः। युक्तं तत्र यदनवकाशं मित्करणं स्थानेयोगत्वं प्रत्ययपरत्वं च बाधते। इह तु पुनरुभयं सावकाशम्॥**

**टित्करणस्यावकाशः—'टितः' इति ईकारो यथा स्यात्। कित्करणस्यावकाशः—'किति' इत्याकारलोपो यथा स्यात्॥**

(उद्द्योतः) भाष्ये—**युक्तं तत्रेति**। नुमृश्नमादीनां मित्त्वमनवकाशम्। **उभयं** प्रत्ययसंबन्धि टित्त्वं कित्त्वं च। एवं चागमटित्त्वकित्त्वयोरनवकाशत्वात्प्रत्ययसंबन्धिनश्च सावकाशत्वा**द्येन नाप्राप्ति**न्यायेनेदं **स्थानेयोगत्व**स्यैवापवाद इति भावः॥

( तत्त्वालोकः ) भाष्ये—**युक्तमिति**—यत इत्यादिः। **तत्र**—नुम्श्नमादिषु। **इह**—प्रत्यये। **ईकारः**—'टिड्ढाणञि'त्यनेन ङीप्। **आकारलोप इति**—'आतोलोप इटि चे'त्यनेनेत्यादिः।

उद्द्योते—**प्रत्ययसम्बन्धिनश्च**—प्रत्ययसम्बन्धिनः टित्वस्य कित्वस्य च। **इदम्**—प्रकृतसूत्रम्।

( समाधानबाधकापवादत्वसाधकभाष्यम् )

**प्रयोजनं नाम तद्वक्तव्यम्, यन्नियोगतः स्यात्। यदि चायं नियोगतः परः स्यात्तत एतत्प्रयोजनं स्यात्॥ कुतो नु खल्वेतत्—टित्करणादयं परो भविष्यति न पुनरादिरिति, कित्करणाच्च परो भविष्यति न पुनरन्त इति?॥**

(प्रदीपः) सर्वापवादबाधाह—**प्रयोजनमिति**। सति परत्वे प्रयोजनमेतत्स्यात्, परत्वमेव त्वलभ्यमित्यर्थः॥ **टित्करणादिति**। ङीबर्थादित्यर्थः॥ **कित्करणादिति**। आकारलोपार्थात्॥

(उद्द्योतः) **सति परत्व इति**। टिदन्तान्ङीब्विधानात्, किति परे आलोपविधानाच्चेति भावः॥ टित्परो भवतीति वचनाभावादाह—**ङीबर्थादिति**। यद्यप्युभयथा टित्वस्य सावकाशत्वे परत्वात्**परश्चे**त्यस्य प्रवृत्त्या पर एव भविष्यति, तथापि **मिदचोऽन्त्यादि**ति साहचर्याद्बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते॥

( तत्त्वालोकः ) भाष्ये—**प्रयोजनम्**—टित्करणस्य कित्करणस्य चैतत्प्रयोजनम्। **तत्**—तदा। **यत्**—यदि। **नियोगत इति**—शास्त्रेणेत्यर्थः। नियुज्यतेऽनेनेति नियोगः शास्त्रम्, तस्मात्तृतीयान्तात्तसिर्विधानात्। **स्यादिति**—अयं पर इत्यादिः। उक्तमेव विवृणोति—**यदि चेति**। **अयम्**—टित्किच्च प्रत्ययः। **एतदिति**—'टित इती'त्यादिनोक्तमित्यर्थः। टित्कित्करणयोरिति शेषः। **अयम्**—प्रत्ययः।

प्रदीपे—**सर्वापवादेति**—सर्वापवादत्वेत्यर्थः। प्रकृतयोगस्येत्यादिः। **सति परत्वे इति**—प्रत्ययस्येत्यादिः। टित्करणस्य कित्करणस्य चेति शेषः। कित्परो भवतीति वचनाभावादाह—**आकारलोपार्थादिति**। आद्यन्तत्वार्थं तु 'आद्यन्तौ टकिता'विति वचनमस्तीत्याशयः।

उद्द्योते—**उभयथेति**—परभवनेनादिभवनेन वा, तथा परभवनेनान्तभवनेन वेत्यर्थः। प्रत्ययस्येत्यादिः। **टित्वस्येति**—कित्वस्य चेति शेषः। **साहचर्यादिति**—प्रकृतसूत्रेऽपीति शेषः।

( किदंशेऽपवादत्वबाधकभाष्यम् )

**टितः खल्वप्येष परिहारः। यत्र नास्ति सम्भवः—यत्परश्च स्यादादिश्च। कितस्त्वपरिहारः। अस्ति हि सम्भवः—यत्परश्च स्यादन्तश्च॥**

**( प्रदीपः )** प्रयोजनमभ्युपेत्याह-**टित इति ॥ कितस्त्विति** ॥ ननु परत्वावयवत्वयोर्विरोधात्कथमुच्यते—**परश्च स्यादन्तश्चेति** ॥ नैष दोषः, परस्य सतोऽन्तवत्कार्यप्राप्त्यान्तत्वमुच्यते, यथा समासान्तानाम् ॥

**( उद्द्योतः )** अभ्युपगम्यापि **परश्चेत्यस्य** परत्वात् प्रवृत्तिमाह–**टितः खल्वपीति ॥ एष परिहारः । युक्तं तत्रे**त्यादिनोक्तः । टितो यथाकथंचिद्भवेदपीत्यर्थः । तत्रासम्भवरूपविरोधसद्भावात् । किति तु तदभावात्समावेशः स्यादिति भावः ॥ **अवयवश्चेति ।** अन्तशब्दोऽवयववाचीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**परिहारः**—परिहरणीयः । एवमग्रेऽपि । **यत्रेति**—यतस्तत्रेति भावः । **परश्च**—परोऽपि । एवमग्रेऽपि । **आदिः**—आदिरपि । **सम्भव इति**—तत्रेत्यादिः । **अन्तः**—अन्तोऽपि ।

प्रदीपे—ननु टितो ङीबर्थतायाः निराकृतत्वात्कथमिदमित्यत आह—**प्रयोजनमिति ।** ङीब्रूपं प्रयोजनमित्यर्थः ।

उद्द्योते—टित्त्वस्य-ङीब्रूपं प्रयोजनं परभवनसापेक्षतया बहिरङ्गम्, आदिभवनप्रयोजनन्तु परभवनानपेक्षत्वेनान्तरङ्गमित्यन्तरङ्गत्वात्तस्यादिभवनमेव प्रयोजनं युक्तम्, न तु ङीब्रूपम् । अत एव प्रकारान्तरेण तदवतरणमाह—**अभ्युपगम्येति । उक्त इति**—प्रत्ययपरत्वापवादत्वाभाव इति शेषः । **भवेदिति**—अपवादत्वमित्यादिः । **असम्भवेति**—परत्वादित्वयोरित्यादिः । **तदभावादिति**—परत्वान्तत्वयोरसम्भवरूपविरोधाभावादित्यर्थः । तयोरिति शेषः । तथा च किदंशेऽपवादत्वं नोपपद्यते इत्याशयः ।

**( आक्षेपभाष्यम् )**

**तत्र को दोषः ? ॥**

**( तत्त्वालोकः )** **तत्र**—उभयस्मिन् सति ।

**( समाधानभाष्यम् )**

**'उपसर्गे घोः किः' आध्योः प्रध्योः । 'नोङ्धात्वोः' इति प्रतिषेधः प्रसज्येत ॥**

**( उद्द्योतः )** तत्र दोषमाह—**नोङित्यादि ॥**

**( तत्त्वालोकः )** भाष्ये—**प्रतिषेधः**—उदात्तप्रतिषेधः । **प्रसज्येतेति**—उभयस्मिन् सति प्रत्ययसहितस्य धातुत्वात् । परत्वमात्रे सति तु—प्रत्ययसहितस्य धातुत्वाभावात्स न प्रसज्यते इत्याशयः ।

**( टिदंशेऽप्यपवादत्वबाधकभाष्यम् )**

**टितश्चाप्यपरिहारः । स्यादेव ह्ययं टित्करणादादिः, न पुनः परः ॥**

**( प्रदीपः )** **टितश्चापीति ।** पूर्वोक्तमेव समर्थयतेऽधिकं वक्तुम् ॥

**( उद्द्योतः )** **पूर्वोक्तम् । कुतो नु खल्वि**त्यादिनोक्तम् । **अधिकम् ।** ङीपोऽनवकाशत्वपूर्वपक्षसमाधानम् ॥ भाष्ये—**स्यादेव हीति ।** बाध्यसामान्यचिन्तामेव न्याय्यां मन्यते ॥

**( तत्त्वालोकः )** भाष्ये—**अपि**ना किंतः परिग्रहः । **एवस्य** भिन्नक्रमत्वा**दादि**नाऽन्वयः । **अयम्**—प्रत्ययः ।

प्रदीपे—पौनरुक्त्यपरिहारायाह—**अधिकमिति ।**

उद्द्योते—**ङीप इति**—टिदन्ताद्विहितस्येत्यादिः । **बाध्येति**—परसूत्रसाहचर्यात्प्रकृतसूत्रे इत्यादिः । एवमग्रेऽपि ।

**( आक्षेपभाष्यम् )**

**क्व तर्हि इदानीमिदं स्यात्–टित ईकारो भवतीति ?**

**( तत्त्वालोकः )** टिदन्ताद्विहितस्य ङीपोऽनवकाशत्वं शङ्कते—**क्व तर्हीदानीमिति ।** बाध्यसामान्यचिन्ताश्रयणस्तनये टित आदित्वे सति क्वेत्यर्थः । इदन्तदवोध्यमाह—**टित इत्यादिना ।**

**( समाधानभाष्यम् )**

**य उभयवान्—'गापोष्टग्' इति ॥**

**( प्रदीपः )** गापोष्टगिति । अत्र कित्त्वात्परत्वादन्तत्वमिति टिदन्तमेतद्भवतीति ङीपोऽनवकाशः ॥ ततश्च **चरेष्ट** इत्ययमादिः स्यात् ॥

**( उद्द्योतः )** **परत्वादिति ।** शब्दपरविप्रतिषेधात् । **आद्यन्ताविति** सूत्रे च किदन्त इत्यस्य परत्वादित्यर्थः ॥ भाष्ये **गापोष्टगि**त्युपलक्षणं नद्ट्चोरडादीनाम् ॥

**( तत्त्वालोकः )** भाष्ये—टिदन्ताद्विहितस्य ङीपोऽवकाशस्थलं दर्शयति—**य इति । उभयवान्**—टित्त्वकित्त्वोभयवान् ।

उद्द्योते—शब्दपरविप्रतिषेधमेवाह—**आद्यन्ताविति ।** बाध्यसामान्यचिन्ताश्रयणे टकोऽन्तत्वासम्भवेन ङीपोऽवकाशत्वासम्भवादाह—**उपलक्षणमिति ।** नद्ट्चोरडादिषु तु समुदायस्य टित्त्वात् टिदन्ताद्विहितस्य ङीपोऽवकाशत्वं सम्भवतीत्याशयः ।

**( ३०८ सिद्धान्त्येकदेशिसमाधानवार्त्तिकम् ॥ ४ ॥ )**

**॥*॥ सिद्धं तु षष्ठ्यधिकारे वचनात् ॥*॥**

**( भाष्यम् )**

**सिद्धमेतत् ।**

**कथम् ? ।**

**षष्ठ्यधिकारेऽयं योगः कर्तव्यः—'आद्यन्तौ टकितौ षष्ठीनिर्दिष्टस्य' इति ॥**

**( प्रदीपः )** **षष्ठ्यधिकार इति** । यत्र स्थानषष्ठी प्राप्ता तत्रोपस्थानमस्याः, न तु प्रत्ययपरत्वबाधनाय ॥

**( उद्द्योतः )** बाध्यसामान्यचिन्ताश्रयणेऽपि दोषाभावमाह—**सिद्धं त्विति ॥ षष्ठ्यधिकारे इति** । तत्रानुवर्त्येदं व्याख्येयम् । तत्रत्यषष्ठीपदं वाऽत्रापकृष्टव्यमिति भावः ॥ **प्राप्तेति** । एतदुपस्थितेः प्रागिति शेषः ॥ **न त्विति ।** प्रत्ययविधौ प्रसक्तस्थानषष्ठ्यभावादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**एतत्**—प्रत्ययपरत्वम् । **षष्ठ्यधिकारे इति**—यत इत्यादिः । **अयम्**—'आद्यन्तौ टकिताविʼत्ययम् । तत्र तत्करणप्रकारमाह—**आद्यन्ताविति ।**

प्रदीपे—**अस्याः**—'आद्यन्तौ टकिताविʼति परिभाषायाः ।

उद्द्योते—**तत्रेति**—'षष्ठी स्थानेयोगेʼत्यत्रेत्यर्थः । एवमग्रेऽपि । **इदम्**—'आद्यन्तौ टकिताविʼति सूत्रम् । **अत्र**—'आद्यन्तौ टकिताविʼ त्यत्र । **एतदिति**—'आद्यन्तौ टकिताविʼत्येतदित्यर्थः ।

**( ३०९ सिद्धान्त्येकदेशिसमाधानान्तरवार्त्तिकम् ॥ ५ ॥ )**

**॥ * ॥ आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावेऽसंप्रत्ययः ॥ * ॥**

**( भाष्यम् )**

**आद्यन्तयोर्वा षष्ठ्यर्थत्वात्तदभावे षष्ठ्या अभावे,**

**असंप्रत्ययः स्यात्—आदिरन्तो वा न भविष्यति ॥**

**( प्रदीपः ) आद्यन्तयोर्वेति** । षष्ठ्याः प्रयोजकावाद्यन्तौ । षष्ठ्यभावाच्चाद्यन्ताभावावगतिरित्यर्थः ॥

**( उद्द्योतः )** भाष्ये षष्ठीपदासंबन्धेऽपि समाधानमाह—**आद्यन्तयोर्वेति** । अर्थशब्दः प्रयोजनवाची । **षष्ठ्यर्थत्वा**दिति बहुव्रीहिरित्याह—**षष्ठ्याः प्रयोजकाविति** । षष्ठ्यर्थस्य प्रयोजकावित्यर्थः ॥ षष्ठ्यन्तार्थस्यावयवभूताद्यन्तनिरूपकत्वेन तत्प्रयोजकत्वमेतयोर्बोध्यम्॥ यद्यत्रावयवभूताद्यन्तरूपोऽर्थः स्यात्तदा तस्य निरूपकाकाङ्क्षत्वात् स्यादेव षष्ठ्यर्थस्तद्बोधनाय च षष्ठीप्रयोगः । न च सोऽस्ति । तस्मादाद्यन्ताभावावगतिरिति भावः ॥ भाष्ये **षष्ठ्यभावे** इत्यस्य तदर्थाभावे इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**षष्ठ्यर्थत्वात्**—षष्ठ्यर्थप्रयोजनत्वात् । **तदभावे इति**—प्रत्ययविधावित्यादिः । **आदिरिति**—प्रत्यय इत्यादिः।

प्रदीपे—**षष्ठ्यभावात्**—षष्ठ्यर्थाभावात् । अस्य 'प्रत्ययविधावि'त्यादिः ।

उद्द्योते—**षष्ठीपदेति**—प्रकृतसूत्रे इत्यादिः । वक्ष्यमाणेन सिद्धान्तमतेन तद्व्याचष्टे—**षष्ठ्यर्थस्येति । तदिति**—षष्ठ्यर्थ इत्यर्थः । **एतयोः**—आद्यन्तयोः । **अत्र**—प्रत्ययविधौ । **सः**—षष्ठ्यर्थः ।

**( आक्षेपभाष्यम् )**

**युक्तं पुनर्यच्छब्दनिमित्तको नामार्थः स्यात्, नार्थनिमित्तकेन नाम शब्देन भवितव्यम् ॥**

**( प्रदीपः ) युक्तं पुनरिति** । शब्दभावाभावाभ्यामर्थभावाभावयोः शब्दनिमित्तकत्वमर्थस्य प्राप्तम्, तच्च पुनर्न युक्तम् । ज्ञापको हि शब्दोऽर्थस्य । न तु कारकः, सर्वेण सर्वस्यार्थस्य क्रियाप्रसङ्गादिति भावः ॥

**( उद्द्योतः )** षष्ठीरूपशब्दाभावात्तदर्थाभावस्तदभावाच्चाद्यन्ताभाव इत्यर्थं मन्वानस्य शङ्का भाष्ये—**युक्तं पुनरिति ॥ नार्थे**त्यत्र काकुः ॥ **शब्दभावेति** । षष्ठीसत्त्वे तदर्थसत्त्वादाद्यन्तस्थितिः, षष्ठ्यभावे तदर्थाभावादाद्यन्ताभाव इत्युक्तेरिति भावः ॥ कारकत्वे बाधकमाह—**सर्वेण** रक्तादिशब्देन । **सर्वस्य** रक्तादिरूपस्य ॥

**( तत्त्वालोकः )** भाष्ये—**नार्थेति**—तथेत्यादिः ।

प्रदीपे—**अर्थभावाभावयोरिति**—अभ्युपगमे इति शेषः ।

उद्द्योते—**षष्ठीरूपेति**—प्रत्ययविधावित्यादिः । 'नार्थे'ति न समाधानग्रन्थः, तथा सति अग्रिमग्रन्थेन पौनरुक्त्यापातात् । किन्तु पूर्वपक्षशेष एव । तथा च तत्र समापन्नां नञोऽसंगतिम्परिहरति—**नार्थेत्यत्रेति । षष्ठीसत्त्वे इति**—'आङजादीनामि'त्यादावित्यादिः । **षष्ठ्यभावे इति**—प्रत्ययविधावित्यादिः ।

**( समाधानभाष्यम् )**

**अर्थनिमित्तक एव शब्दः ॥**

**तत्कथम् ? ।**

**आद्यन्तौ षष्ठ्यर्थौ । न चात्र षष्ठीं पश्यामः । ते मन्यामहे—आद्यन्तावेवात्र न स्तः । तयोरभावे षष्ठ्यपि न भवतीति ॥ आद्यन्तौ टकितौ ॥ ४५ ॥**

**( प्रदीपः ) अर्थनिमित्तक एवेति** । अर्थ एव शब्दस्य प्रयोजकस्तत्प्रतिपादनाय शब्दप्रयोगः । **अप्रयोगात्वनुमीयते**—नूनमर्थ एवात्र प्रयोजको नास्ति शब्दप्रयोगं यः प्रयुञ्जीतेत्यर्थः ॥ **चरेष्ट** इत्यत्र **परश्चे**त्यधिकारात् पञ्चम्येव युक्ता । **गापोष्टग्, व्रीहिशाल्योर्ढगि**त्यादावप्यानन्तर्यसम्बन्धे षष्ठी । न त्ववयवावयविसंबन्धे । **प्रत्ययपरत्वेन** प्रतियोगं संनिहितेनाकाङ्क्षाविच्छेदादनर्थित्वादस्या अनुपस्थानात् । **पुरस्तादपवादन्यायस्तु** यथोद्देशपक्षे सम्भवति, न कार्यकालपक्ष इति नाश्रितः ॥ ४५ ॥

**( उद्द्योतः )** भाष्ये समाधत्ते—**अर्थनिमित्तक एवेति** । तद्व्याचष्टे—**अर्थ एवेति ॥ अनुमीयते इति** । कार्याभावेन कारणाभावोऽनुमीयते । यथा नदीपूराभावेनोपरिदेशे वृष्ट्यभाव इति भावः ॥ भाष्ये—**आद्यन्तौ** । तावर्थौ षष्ठ्यर्थद्वारा षष्ठीप्रयोगप्रयोजकौ इत्यर्थः ॥ एवं कार्याभावात्कारणाभावानुमाने कारणाभावात्कार्यमपि नेति निगमयति—भाष्ये—**तयोरभाव इति ॥** ननु प्रत्ययविधावपि क्वचित्षष्ठी दृष्टेत्यत आह—**चरेष्ट इत्यादि ॥ नन्विति** । एतत्सूत्रोपस्थानेनेति भावः ॥ तत्र हेतुमाह—**प्रत्ययेति ॥ आकाङ्क्षेति** । देशांश इत्यर्थः ॥ **अनर्थित्वात्** एतदाकाङ्क्षाभावात् । अत एव **धातोः प्रातिपदिका**दित्यधिकारानुग्रहो भवति । धात्वादिभ्यः परो गादिभ्योऽनन्तर इत्यर्थात् ॥ **न कार्यकालेति** । एतत्तत्त्व**मिको गुणवृद्धी** इत्यत्र निरूपितम् । वस्तुतस्त्वाश्रित एव, **परवचनात्सिद्ध**मित्यस्यैव सिद्धान्त्युक्तित्वात् । **नापवादत्वा**दित्यादेः पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तित्वादिति तत्त्वम् ॥ ४५ ॥

**( तत्त्वालोकः )** भाष्ये—**अर्थेति**—न युक्तम्, यत इत्यादिः । **तत्कथमिति**—यदि अर्थनिमित्तक एव शब्दस्तर्हि प्रत्ययविधौ कथमाद्यन्ताभावावगतिरित्यर्थः । **आद्यन्ताविति**—यत इत्यादिः । **अत्रेति**—प्रत्ययविधावित्यर्थः । एवमग्रेऽपि । **ते इति**—वयमित्यर्थः, शेषो वा । वस्तुतस्त्वत्र 'तेने'ति पाठः प्रतिभाति ।

प्रदीपे—**तत्प्रतिपादनायेति**—चेति शेषः । **अर्थ एव**—आद्यन्तरूपार्थ एव । **अत्र**—प्रत्ययविधौ । **प्रयोजकः**—षष्ठ्यर्थद्वारा षष्ठीप्रयोगप्रयोजकः । **शब्दप्रयोगम्**—षष्ठीप्रयोगम् । **प्रतियोगम्**—प्रतिप्रत्ययविधिम् । **अस्याः**—'आद्यन्तावि'ति परिभाषायाः । **न**—न तु ।

उद्द्योते—अग्रिमग्रन्थस्य वैयर्थ्यं परिहरति—**एवमिति** । 'प्राप्तौ सत्यां निषेधः' इति नियमाद्, अवयवावयविसम्बन्धस्य प्राप्तौ हेतुमाह—**एतत्सूत्रेति** । 'आद्यन्तावि'ति सूत्रेत्यर्थः । **तत्र**—तस्य निषेधे । **एतादिति**—'आद्यन्तावि'ति परिभाषेत्यर्थः । अनर्थित्वं द्रढयति—**अत एवेति** । प्रतिप्रत्ययविधिं 'परश्चे'त्यस्य सन्निहितत्वादेवेत्यर्थः । कैयटोक्तं खण्डयति—**वस्तुतस्त्विति** । 'पुरस्तादपवादन्यायः' इति शेषः ।

---

**( ४१ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ३ ॥ )**

# मिदचोऽन्त्यात्परः ॥ १ । १ । ४६ ॥

**( सूत्रबाध्यनिर्णयाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**किमर्थमिदमुच्यते ? ॥**

**( प्रदीपः ) मिदचोऽन्त्या ॥ ४६ ॥ किमर्थमिति** । किमनेन व्यावर्त्यत इति प्रश्नः ॥

**( उद्द्योतः ) मिदचो** ॥ ४६ ॥ प्रयोजनप्रश्नेऽपवादत्वाभिधा-

नमसङ्गतमत आह—**किमिति ॥** किं व्यावर्त्यत्वेन प्रयोजनमित्यर्थः । किं स्थानेयोगत्वमुत प्रत्ययपरत्वमपीति प्रश्न इति भावः ।

**( तत्त्वालोकः )** भाष्ये—चतुर्थीसमासमभिप्रेत्याह—**किमर्थमिति । इदम्**—प्रकृतसूत्रम् ।

प्रदीपे—**अनेन**—प्रकृतसूत्रेण ।

उद्द्योते—'किमर्थमि'ति शब्दवाच्यार्थविषयकनिर्णयसत्त्वादाह—**प्रयोजनप्रश्ने इति ।** प्रकृतसूत्रस्येत्यादिः । अग्रिमवार्तिकेन तस्येति शेषः । **अपवादत्वेति**—स्थानेयोगत्व-प्रत्ययपरत्वयोरपवादत्वस्येत्यर्थः । **किमिति**—प्रकृतसूत्रस्येति शेषः । एवमग्रेऽपि । **स्थानेयोगत्वमिति**—एवेति शेषः । **अपीति**—व्यावर्त्यत्वेन प्रयोजनमित्यनुषज्यते ।

( २१० सिद्धान्तवार्तिकम् ॥ १ ॥ )

## ॥ ❋ ॥ मिदचोऽन्त्यात्पर इति स्थानपरप्रत्ययापवादः ॥ ❋ ॥

( भाष्यम् )

**मिदचोऽन्त्यात्पर इत्युच्यते स्थानेयोगत्वस्य प्रत्ययपरत्वस्य चापवादः । स्थानेयोगत्वस्य तावत्—कुण्डानि वनानि पयांसि यशांसि । प्रत्ययपरत्वस्य—भिनत्ति छिनत्ति ॥**

**( प्रदीपः ) स्थानेति ।** परस्य सतः प्रत्ययस्यापवादस्तेन सामर्थ्यादयमर्थः—**प्रत्ययपरत्वस्यापवाद इति ॥ कुण्डानीति । नपुंसकस्य झलच** इत्यत्र झलज्भ्यां नपुंसकस्य तदन्तविधिरित्यस्ति स्थानेयोगत्वस्य प्रसङ्गः । मित्त्वात्त्वस्मिन्नुपस्थिते नपुंसकस्याङ्गस्येत्यवयवषष्ठी सम्पद्यते ॥

**( उद्द्योतः )** उभयापवादत्वे बीजं तु तत्र तत्र मित्त्ववैयर्थ्यरूपं पूर्वसूत्र एवोक्तम् ॥ ननु **नपुंसकस्येति** सूत्रे **झलच** इति पञ्चमीति क्व स्थानेयोगत्वप्रसङ्गोऽत आह—**नपुंसकस्येति ।** पञ्चम्यां हि **तस्मादि**ति परिभाषोपस्थाने पयांसि ज्ञानानीत्युभयोरप्यसिद्धिरिति षष्ठ्येवेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—प्रकृतवार्तिके—**स्थान**पदं स्थानेयोगबोधकम्, तदेकदेशानुकरणत्वात् । **परप्रत्यये**त्यत्र कर्मधारयः, तत्र च राजदन्तादित्वात् प्रत्ययपदस्य परनिपातः । ततो द्वन्द्वेन भावप्रधाननिर्देश इत्यभिप्रायेणाह—**स्थानेयोगत्वस्येत्यादि । स्थानेयोगत्वस्येति**—अपवादः प्रकृतसूत्रं यत्र तदिति शेषः । एवमग्रेऽपि । **प्रत्ययेति**—तथेत्यादिः ।

प्रदीपे—**अपवाद इति**—प्रकृतसूत्रमित्यादिः । **नपुंसकस्येति**—विशेषणादिति शेषः । **मित्त्वादिति**—नुम इत्यादिः । **अस्मिन्**—प्रकृतसूत्रे ।

उद्द्योते—**उभयापवादत्वे**—प्रकृतसूत्रस्य स्थानेयोगत्वप्रत्ययपरत्वयोरपवादत्वे । **तत्र तत्र**—नुम्श्नमादिषु । **पूर्वसूत्रे**—'आद्यन्तावि'ति सूत्रे । पयांसीत्यत्र सकारात्परस्य नुमि कृते सान्तसंयोगाभावात्, ज्ञानानीत्यत्र चाकारात्परस्य नुमि कृतेऽङ्गस्य नान्तत्वाभावाद् दीर्घो नोपपद्येतेत्याशयेनाह—**असिद्धिरिति ।**

( आक्षेपभाष्यम् )

**भवेदिदं युक्तमुदाहरणम्—कुण्डानि वनानि, यत्र नास्ति संभवः—यदयमचोऽन्त्यात्परश्च स्यात्, स्थाने चेति । इदं त्वयुक्तम्—पयांसि यशांसीति, अस्ति हि सम्भवः—यदयमचोऽन्त्यात्परश्च स्यात्, स्थाने चेति ॥**

**( प्रदीपः ) स्थाने चेति ।** सकारस्य स्थाने नुम् भवत्वित्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—**उदाहरणमिति**—प्रकृतसूत्रं स्थानेयोगत्वापवाद इत्यस्येत्यादिः । **वनानीति**—इतीति शेषः । **यत्रेति**—यत्रेत्यत्र । **अयम्**—नुम् । **परश्च**—सोऽपि । **स्थाने**—सकारस्य । **इदं त्विति**—उदाहरणमिति शेषः । **सम्भव इति**—उभयोरित्यादिः ।

प्रदीपे—**ततश्च**—पयांसीत्यादौ नुमि सकारस्य स्थाने, प्रकृतसूत्रेण स्थानेयोगत्वबाधनाभावाच्च ।

( समाधानभाष्यम् )

**एतदपि युक्तम् ॥**

**कथम् ? ।**

**नैवेश्वर आज्ञापयति, नापि धर्मसूत्रकाराः पठन्ति—अपवादैरुत्सर्गा बाध्यन्तामिति ॥**

**किं तर्हि ? ।**

**लौकिकोऽयं दृष्टान्तः । लोके हि सत्यपि संभवे बाधनं भवति । तद्यथा—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति, सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति । एवमिहापि सत्यपि संभवे अचामन्त्यात्परत्वं षष्ठीस्थानेयोगत्वं बाधिष्यते ॥**

**( प्रदीपः ) दृष्टान्त इति ।** निश्चय इत्यर्थः । तत्र वृद्धव्यवहारादेवेदृश एव वाक्यार्थे व्युत्पत्तिर्यत्सामान्यविहितो विशेषविहितेन बाध्यते, न समुच्चीयते नापि विकल्प्यते ॥

**( उद्द्योतः )** भाष्ये—**नैवेश्वर इति । ईश्वरो** वेदः ॥ **धर्मसूत्रम्** धर्मशास्त्रम् ॥ भाष्ये—**अपवादै**रित्यस्या**संभवे** इत्यादिः ॥ क्वचित्तथैव पाठः ॥ **बाध्यन्तामिति ।** लोट् ॥

**( तत्त्वालोकः )** भाष्ये—**एतदपीति**—पयांसीत्याद्यपीत्यर्थः । प्रकृतसूत्रं स्थानेयोगत्वापवाद इत्यस्योदाहरणमिति शेषः । **नैव**—न हि । **नापि**—न च । **अयम्**—'अपवादैरुत्सर्गा बाध्यन्तामि'त्ययम् । **बाधनमिति**—विशेषविहितेन सामान्यविहितस्येत्यादिः । **इतीति**—कथिते इति शेषः । **सत्यपीति**—कौण्डिन्ये तदुभयदानस्येत्यादिः । **इहापीति**—पयांसीत्यादौ नुम्यपीत्यर्थः । तदुभयस्येति शेषः ।

प्रदीपे—ननु विशेषविहितेन सामान्यविहितस्याबाधेनोपपत्तौ बाधो न न्याय्य इति तयोः समुच्चयो विकल्पो वाऽभ्युपगम्यतामित्यत आह—**तत्रेति ।** लोक इत्यर्थः ।

उद्द्योते—**ईश्वरस्यापि** बुद्धरूपेण असदाज्ञापकत्वस्य दर्शनात्तदर्थमाह—**वेद इति ।** तत एव च-मनुनापि विहितं नास्तिकलक्षणम्—'नास्तिको वेदनिन्दकः' इति । ननु कृष्णरूपेण 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' इति वादिन **ईश्वरस्य बुद्धरूपेण असदाज्ञापकत्वं** न युक्तमिति चेन्न, वैदिककर्मणि अधिकारिप्रवर्तनाया इव ततोऽनधिकारिनिवर्तनाया अपि धर्मसंस्थापनान्तर्गतत्वेन तत्सम्पादनाय तस्य केनापि रूपेणासदाज्ञापकत्वस्योपपन्नत्वात् ॥

( सूत्राप्रवृत्तिनिरूपणाधिकरणम् )

( ३११ सिद्धान्ताक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ ॥ अन्त्यात्पूर्वो मस्जेर्मिदनुषङ्गसंयोगादिलोपार्थम् ॥ * ॥

( भाष्यम् )

**अन्त्यात्पूर्वो मस्जेर्मिद्वक्तव्यः ॥**

**किं प्रयोजनम् ? ॥**

**अनुषङ्गसंयोगादिलोपार्थम् । अनुषङ्गलोपार्थं संयोगादिलोपार्थं च । अनुषङ्गलोपार्थं तावत्—मग्नः मग्नवान् । संयोगादिलोपार्थम्—मङ्क्ता, मङ्क्तुम्, मङ्क्तव्यम् ।**

**( उद्द्योतः ) मग्ने**—मस्जेर्जात्पूर्वं नुमि **अनिदिता**मिति लोपे सस्य संयोगादिलोपे कुत्वे निष्ठानत्वे रूपम् । अन्त्याचः परे तु सति अविशेषेण संयोगत्वे संयोगादिलोपसिद्धावपि तस्यासिद्धत्वान्नस्योपधात्वाभावान्नलोपो न स्यादिति भावः ॥ संयोगादिलोपस्तु बहूनां समवधाने बहूनामेव संयोगसंज्ञेति पक्षे फलत्वेन बोध्यः । **मङ्क्ते**त्यादि त्वनुषङ्गलोपाभावेऽपि उदाहरणमुक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**अन्त्यादिति**—अल इति शेषः । उपधाभूतस्य नकारस्य 'अनुषङ्ग' इति पूर्वाचार्यकृतां संज्ञामभिप्रेत्याह—**अनुषङ्गेति ।**

उद्द्योते—**मग्ने**—मग्नः, मग्नवानिति । **जादिति**—जकारादित्यर्थः । 'क्ते' 'क्तवतौ' चेत्यादिः । **नुमि**—'मस्जिनशोर्झली'ति नुमि । **लोपे**—उपधाभूतस्य तस्य लोपे । **कुत्वे**—'चोः कुरि'ति कुत्वे। **निष्ठेति**—'ओदितश्चे'त्यनेनेत्यादिः । **सति**—नुमि सति । **अविशेषेण संयोगत्वे**—बहूनां समवधाने द्वयोर्द्वयोरपि, बहूनामपि च संयोगसंज्ञेति पक्षे । **संयोगादीति**—'स्कोः संयोगाद्योरन्ते चे'त्यनेन सकारस्येत्यादिः । **तस्येति**—संयोगादिलोपस्येत्यर्थः । नलोपम्प्रतीत्यादिः। ननु अन्त्यादचः परेऽपि नुमि सति उक्तपक्षे संयोगादिलोपस्य सिद्धत्वात्कथं सः अन्त्याज्जकारात्पूर्वं नुमो विधानस्य फलत्वेनोक्त इत्यत आह-**संयोगादीति । फलत्वेनेति**-अन्त्याज्जकारात्पूर्वं नुमो विधानस्येत्यादिः। ननु मग्न इत्यादावेव संयोगादिलोपस्याप्युदाहरणत्वे सम्भवति कुतस्तस्योदाहरणान्तरं दर्शितमित्यत आह—**मङ्क्तेत्यादीति। उदाहरणमिति**-संयोगादिलोपस्येत्यादिः। अतस्तदिति शेषः।

( ३१२ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ भर्जिमर्च्योश्च ॥ * ॥

( भाष्यम् )

**भर्जिमर्च्योश्चान्त्यात्पूर्वो मिद्वक्तव्यः । भरूजा मरीचय इति ।**

**( प्रदीपः ) भर्जिमर्च्योश्चेति । भृजी** भर्जन इत्यस्यौणादिकेऽचि कृते गुणे रपरत्वे च जकारात्पूर्वं ऊमागमः । **मर्च** शब्दार्थं इत्यस्य चौरादिकस्य णि**च्यच** इरिति इप्रत्यये णिलोपे चकारात् पूर्वं ईमागमः॥

**( उद्द्योतः ) ऊमीमा**वौणादिकौ ॥

**( तत्त्वालोकः )** प्रदीपे—**ईमागम इति**—नन्वेवं रीत्या, 'मरीचिशब्दो बाह्वादिषु' इत्यग्रिमभाष्यरीत्या वा मरीचिशब्दसाधने तत्साधनाय कृतं 'मृकणिभ्यामीचिः' इत्यौणादिकसूत्रं निष्प्रयोजनतामापद्यते इति चेन्न, 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः' इत्यनुसारेण तत्साधनाय तस्योपायान्तरत्वाभ्युपगमेन सामञ्जस्यात् ॥

( आक्षेपस्मारणभाष्यम् )

**स तर्हि वक्तव्यः ॥**

**( तत्त्वालोकः ) सः**—भर्जिमर्च्योश्चान्त्यात्पूर्वो मित् ।

( आक्षेपनिरासभाष्यम् )

**न वक्तव्यः, निपातनात् सिद्धम् ।**

**किं निपातनम् ? ॥**

**भरूजाशब्दोऽङ्गुल्यादिषु पठ्यते । मरीचिशब्दो बाह्वादिषु ॥**

**( तत्त्वालोकः ) निपातनादिति**—यत इत्यादिः । **मरीचीति**—तथेत्यादिः । एवञ्च—तत्र तत्र पाठेनैव तस्य तस्य साधुत्वमुपपन्नमिति भावः ।

( पूर्वान्तत्वस्थापनाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरयं पूर्वान्तः ?, आहोस्वित् परादिः ?, आहोस्विदभक्तः ? ॥**

**( तत्त्वालोकः ) अयम्**—अन्त्यादचः परत्वेन विधीयमानो मित् । **आहोस्वित्**—अथवा । **अभक्तः**—अनवयवः । एवमग्रेऽपि ।

( प्रत्याक्षेपभाष्यम् )

**कथं वायं पूर्वान्तः स्यात् ? कथं वा परादिः ? कथं वाऽभक्तः ? ॥**

( समाधानभाष्यम् )

**यद्यन्त इति वर्तते ततः पूर्वान्तः । अथादिरिति वर्तते ततः परादिः । अथोभयं निवृत्तं ततोऽभक्तः ॥**

**( प्रदीपः ) पूर्वान्त इति ।** संघातस्य पूर्वस्य भक्तो न तदेकदेशस्य ॥ **अथादिरिति ।** नहि संभवोऽस्ति यदचोन्त्यात्परश्च स्यात्, पूर्वस्य चादिरिति सामर्थ्यात्परादित्वं विज्ञायते ॥

**( उद्द्योतः )** नन्वन्त्यादचः परत्वं तस्य च वर्णान्तरावयवत्वमिति विरुद्धमत आह—**सङ्घातेति ।** 'अन्त्यादित्यनेन समुदायाक्षेपेण समुदायस्योपस्थितत्वात् समुदायावयवसन्निधौ समुदायग्रहणस्य न्याय्यत्वाच्च वर्णस्य वर्णावयवत्वासम्भवाच्चेत्याशयः ॥ नन्वादिरित्यनुवृत्तौ पूर्वादित्वं कुतो नेत्यत आह—**नहीति ॥ परादित्वमिति ।** वाचनिकमेव वर्णस्य वर्णावयवत्वं **ङः सीति** धुडादेरिवेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**यदीति**—'आद्यन्तावि ति' सूत्रे अन्तपदे स्वरितत्वप्रतिज्ञानादिति शेषः । **वर्त्तते**—अनुवर्त्तते । **अथेति**—तत्रादिपदे स्वरितत्वप्रतिज्ञानादिति शेषः । **अथेति**—तत्र क्वापि स्वरितत्वप्रतिज्ञानाभावादिति शेषः ।

प्रदीपे—**भक्तः**—अवयवः । **परश्च**—परोऽपि । **आदिः**—आदिरपि । **सामर्थ्यात्**—आदिग्रहणानुवृत्तिसामर्थ्यात् ।

उद्द्योते—ननु प्रागुक्ताद् दोषात्कारणाच्च कथं परादित्वमित्यत आह—**वाचनिकमेवेति ।**

( भाष्यम् )

**कश्चात्र विशेषः ? ।**

**( तत्त्वालोकः ) अत्र**—( मितः ) पूर्वान्तत्वे, परादित्वे वा, अभक्तत्वे वा ।

( ३१२ दूषणवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अभक्ते दीर्घनलोपस्वरणत्वानुस्वारशीभावाः ॥ * ॥

( भाष्यम् )

**यद्यभक्तो दीर्घत्वं न प्राप्नोति । कुण्डानि वनानि । 'नोपधायाः, सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घत्वं न प्राप्नोति ॥ दीर्घ ॥**

**( प्रदीपः ) कुण्डानीति** । नान्तमङ्गं न भवतीति दीर्घत्वाप्राप्तिः ॥ ननु * **तदादिवचनं स्यादिनुमर्थम्**ित्युक्तम् । एवं तर्हि तत् स्मर्तव्यं भवतीति गौरवापत्तिः ॥

**( उद्द्योतः ) अभक्ते** इति वार्तिकस्यैते न सिध्यन्तीति शेषः ॥ नन्वभक्तत्वेऽपि नान्तमस्त्येवेत्यत आह—**नान्तमङ्गमिति** । दीर्घविधावङ्गाधिकारादिति भावः ॥ **गौरवापत्तिरिति** । प्रतिपत्तिगौरवापत्तिरित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—तस्य पूर्वान्तत्वं स्थापनीयम्, तथा परादित्वाभक्तत्वे खण्डनीये इति व्युत्क्रमेण समाधातुमुपक्रमते—**अभक्ते इति ।** अनवयवत्वे इत्यर्थः । भावप्रधाननिर्देशात् । **यद्यभक्त इति**—तर्हीति शेषः । 'सर्वनामस्थाने चासम्बुद्धौ' इति सूत्रे 'नोपधायाः' इति सूत्रस्यानुवृत्तिरिति बोधनाय निर्दिशति—**नोपधाया इति ।** एवमग्रेऽपि ।

प्रदीपे—**नान्तमङ्गं नेति**—नुमोऽनवयवत्वे तद्विशिष्टस्याङ्गग्रहणेनाग्रहणादित्यादिः । **एवमिति**—यथैवं लक्ष्यं साधनीयमिति भावः । तथाचात्र वार्तिके दीर्घग्रहणमभक्तत्वे गौरवदर्शनार्थं न तु लक्ष्यासिद्धिदर्शनार्थमिति बोध्यम् ॥

( नलोपोदाहरणभाष्यम् )

**नलोप—नलोपश्च न सिध्यति । 'अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्' 'न लोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति ॥ नलोप ॥**

**( उद्द्योतः ) त्री ते इति ॥ शेश्छन्दसि बहुलमिति** शेर्लोपः । त्रीणि वाजिनानि तानि तानीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—यदि नुम् पूर्वस्य अवयवो भवति, तर्हि 'तानि तानी'त्यवस्थायां 'शेश्छन्दसि बहुलमि'त्यनेन शेर्लोपे प्रातिपदिकान्तत्वान्नकारस्य लोपे 'ता ता' इति सिद्ध्यति । तस्यानवयवत्वे तु प्रातिपदिकान्तत्वाभावान्नकारस्य लोपाभावे तन्न सिद्ध्येदित्याशयेनाह—**नलोपश्चेति ।**

( स्वरोदाहरणभाष्यम् )

**स्वर—स्वरश्च न सिध्यति । 'सर्वाणि ज्योतींषि' 'सर्वस्य सुपि' इत्याद्युदात्तत्वं न प्राप्नोति । स्वर ॥**

**( प्रदीपः ) सर्वाणीति** । नुमा सुपो व्यवधानात् स्वरो न सिध्यति ॥

**( उद्द्योतः ) नुमेति** । व्यञ्जनाविद्यमानवद्भावस्तु हल्स्वरप्राप्तौ, स्वरोद्देश्यकविधिप्राप्तौ वा, नान्यत्रेति भावः । सुपीति न तदन्तसप्तमीत्वमिमानेनेदम् ॥

**( तत्त्वालोकः )** भाष्ये—यदि नुम् भक्तो भवति, तर्हि 'सर्वाणि' इत्यत्र 'सर्वस्य सुपि' इत्यनेन सुपि परे सर्वशब्दस्यादेरुदात्तत्वं सिद्ध्यति । तस्याभक्तत्वे तु तेन व्यवधानात् सर्वशब्दस्य सुप्परत्वाभावात्तस्यादेः तन्न सिद्ध्येदित्याशयेनाह—**स्वरश्चेति ।**

उद्द्योते—ननु नुमोऽभक्तत्वेऽपि 'स्वरविधौ व्यञ्जनमविद्यमानवदि'ति परिभाषया तस्याविद्यमानवद्भावेन सर्वशब्दस्य सुप्परत्वोपपत्तेस्तस्यादेरुदात्तत्वं सिद्ध्येदेवेत्यत आह—**व्यञ्जनेति** । 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदि'ति विशेषपरिभाषया तस्याः सामान्यपरिभाषाया बाधादिति भावः । नन्वेवं सा सामान्यपरिभाषा निरवकाशेत्यत आह— **स्वरोद्देश्यकेति** । ननु तस्याभक्तत्वेऽपि 'सौवरीणां सप्तमीनां तदन्तसप्तमीत्वमि'ति सिद्धान्तात् 'सुपी'त्यस्य तदन्तसप्तमीत्वेन सर्वशब्दस्य सुबन्तपरत्वसत्त्वात्तस्यादेरुदात्तत्वं सिद्ध्येदेवेत्यत आह-**सुपीतीति ।** नुमो भक्तत्वे 'सुपी'त्यस्य तदन्तसप्तमीत्वे तदन्तसप्तमीत्वाभावे वा तत्र स्वरः सिद्ध्यति, अभक्तत्वे तु तस्य तदन्तसप्तमीत्वाभावे तत्र स न सिद्ध्यतीति विशेषदर्शनार्थमेवेदम्, न तु लक्ष्यासिद्धिदर्शनार्थमित्याशयः ॥

( णत्वोदाहरणभाष्यम् )

**णत्व—णत्वं च न सिध्यति । माषवापाणि व्रीहिवापाणि । पूर्वान्ते प्रातिपदिकान्तनकारस्येति सिद्धम्, परादौ विभक्तिनकारस्येति । अभक्ते नुमो ग्रहणं कर्तव्यम् ॥**

**( तत्त्वालोकः )** यदि नुम् पूर्वस्य परस्य वा भक्तस्तर्हि 'माषवापाणि' इत्यादौ प्रातिपदिकान्तत्वाद्विभक्तिसम्बन्धित्वाद्वा नकारस्य णत्वं सिद्ध्यति । तस्याभक्तत्वे तु तत्र प्रातिपदिकान्तत्वाभावाद्विभक्तिसम्बन्धित्वाभावाच्च नस्य णत्वं न सेत्स्यतीति तत्साधनाय णत्वविधायकसूत्रेऽपूर्वं नुम्ग्रहणं कर्तव्यमित्याशयेनाह-**णत्वं च नेति । सिद्धमिति—**णत्वम्, तथेति शेषः । **अभक्ते इति—**त्वपूर्वमिति शेषः । तथा च-पूर्वान्तपरादिपक्षयोस्तत्र प्रकारान्तरेण णत्वसिद्धेः तदर्थं 'प्रातिपदिकान्ते'त्यादिसूत्रेऽपूर्वं नुम्ग्रहणं न कर्तव्यम्भवतीति लाघवम्, अभक्तपक्षे तु तत्रान्यथा णत्वासिद्धेस्तत्साधनाय तत्रापूर्वं तत्कर्तव्यम्भवतीति गौरवमिति भावः ॥

( उदाहरणनिरासभाष्यम् )

**न कर्तव्यम् । क्रियते एतन्न्यास एव—'प्रातिपदिकान्तनुम्विभक्तिषु च' इति । णत्व ॥**

**( प्रदीपः ) क्रियते एतन्न्यास एवेति** । उत्तरपदस्य प्रातिपदिकस्यान्तस्तत्र नकारो गृह्यते, गर्गाणां भगिनी गर्गभगिनीत्यत्र णत्वं मा भूदित्यवश्यं कर्तव्यं नुमो ग्रहणम् । स हि समुदायभक्तत्वादुत्तरपदस्यान्तो न भवतीति ॥

**( उद्द्योतः ) उत्तरपदस्येति** । एवं च सर्वपक्षेष्वपीदमावश्यकमिति भावः ॥ भगशब्दादिनौ तन्नकारः प्रातिपदिकान्तो भवतीति भगिनीत्यत्रानुच्यमाने **उत्तरपदस्येत्यस्मिन्** णत्वप्रसङ्गः । भगिनीत्यत्र च ङ्यन्तमुत्तरपदं न नान्तम् । सूत्रं तु माषवापिणावित्यादौ चरितार्थमिति भावः ॥ **स हीति** । नुम्विधावङ्गस्येत्यधिकारादित्यर्थः । एवं च माषवापाणीत्यादिसिद्ध्यर्थं नुम्ग्रहणमिति

भावः ॥ समासरूपप्रातिपदिकान्तस्येत्यर्थेन गर्गभगिनीत्यस्य व्यावृत्तौ माषवापाणीत्यस्य सिद्धौ च प्रह्विण्वन्नित्याद्यर्थं नुम्ग्रहणमावश्यकमिति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**क्रियते इति**—यत इत्यादिः । तथा च तत्र नुम्ग्रहणमजानतः पूर्वकथनमिति बोध्यम् ॥

प्रदीपे—ननु तत्रापूर्वस्य नुम्ग्रहणस्याकर्तव्यत्वेऽपि पूर्वान्तपरादिपक्षयोस्तत्र नुम्ग्रहणस्याकर्त्तव्यत्वाल्लाघवम्, अभक्तपक्षे तु तत्र तस्य कर्तव्यत्वाद् गौरवमेवेत्यत आह—**उत्तरपदस्येति** । प्रातिपदिकान्तपदेनेत्यादिः । **तत्र**—णत्वविधायकसूत्रे । किमर्थमित्यत आह—**गर्गाणामिति** । **अवश्यमिति**—'तथा च माषवापाणीत्यादौ णत्वसिद्ध्यर्थन्तत्रे'त्यादिः । **सः**—नुम् । **समुदायेति**—पूर्वान्तपक्षे इत्यादिः । **उत्तरपदस्य**—वापादेः । परादिपक्षे च प्रह्विण्वन्नित्यादौ णत्वसिद्ध्यर्थन्तत्र नुम्ग्रहणं कर्तव्यमिति न लाघवं तयोः पक्षयोरित्याशयः ।

उद्द्योते—**एवञ्च**—तत्र प्रातिपदिकान्तपदेन उत्तरपदरूपप्रातिपदिकान्तनकारस्य विवक्षणे च । **इदम्**—नुम्ग्रहणम् । विवक्षणावश्यकतामुपपादयति—**भगशब्दादिति** । **भगिनीत्यत्रेति**—गार्गभगिनीत्यत्रेत्यर्थः । एवमग्रेऽपि । अस्य 'णत्वप्रसङ्गः' इत्यनेनान्वयः । **अनुच्यमाने इति**—तत्रेत्यादिः । **भगिनीत्यत्रेति**—तदुक्तौ तु तत्र न दोषः, यत इत्यादिः । नन्वेवं प्रातिपदिकान्तेत्यंशः क्व चरितार्थ इत्यत आह—**सूत्रमिति** । इदम् अवयवे समुदायारोपाद्बोध्यम् । तत्र नकारस्य उत्तरपदरूपप्रातिपदिकान्तत्वस्य सत्त्वादित्याशयः । पूर्वान्तपक्षे नुमः समुदायभक्तत्वे हेतुमाह—**नुम्विधाविति** । **एवञ्च**—तस्य समुदायभक्तत्वादुत्तरपदान्तत्वाभावे च । इदं कैयटोक्तं दूषयन् भाष्यकृदाशयमाह—**समासेति** । प्रातिपदिकान्तपदस्येत्यादिः । सर्वपक्षाभिप्रायेणाह—**प्रह्विण्वन्निति** । एवञ्च 'अभक्ते' इत्यादिवार्त्तिके णत्वग्रहणं न लक्ष्यासिद्धिप्रदर्शनार्थमित्याशयः ।

( अनुस्वारोदाहरणभाष्यम् )

**अनुस्वार—अनुस्वारश्च न सिध्यति । द्विषन्तपः परन्तपः । 'मोऽनुस्वारो हलि' इत्यनुस्वारो न प्राप्नोति ॥**

**( प्रदीपः ) द्विषन्तप इति** । प्रसङ्गोच्चारितमेतत् । अत्र हि **तन्मध्यपतितस्तद्ग्रहणेन गृह्यते** इति नुमो द्विषद्ग्रहणेन ग्रहणमस्ति ॥

**( उद्द्योतः )** द्विषन्तपादौ **द्विषत्परयोस्तापेरि**ति खच् । **खचि ह्रस्वः । अरुर्द्विषदिति** मुम् ॥ **प्रसङ्गेति** । द्विषद्ग्रहणेन मुम्विशिष्टस्य ग्रहणे तस्य पदत्वात्तकारस्य संयोगान्तलोपे **एकदेशविकृत**न्यायेन द्विषमित्यस्य मान्तस्य पदत्वात्सिद्धोऽनुस्वार इत्यर्थः ॥ वस्तुतस्तस्य न्यायस्याद्याप्यज्ञानात्तदनाश्रयेणेदम् । बहिरङ्गासिद्धत्वं त्रिपाद्यां नेति तत्रोक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—यदि मित् पूर्वस्य भक्तस्तर्हि 'द्विषन्तपः' इत्यादौ मस्य पदान्तत्वादनुस्वारः सिद्ध्यति । तस्याभक्तत्वे तु तत्र मस्यापदान्तत्वात्स न सिद्ध्येदित्याशयेनाह—**अनुस्वारश्चेति** । 'मोऽनुस्वारः' इत्यत्र 'हलि सर्वेषाम्' इत्यतो हलीत्यस्यानुवृत्तिरिति बोधनायाह—**हलीति** । एवमग्रेऽपि ।

उद्द्योते—**खचि ह्रस्वः**—'खचि ह्रस्वः' इति ह्रस्वः । कैयटोक्त्यभिप्रायमाह—**द्विषदिति** । **इत्यर्थः**—इत्याशयः । कैयटोक्तं खण्डयति—**वस्तुत इति** । **तस्य**—तन्मध्यपतित इत्यस्य । **इदम्**—मितोऽभक्तत्वे अत्रानुस्वारानुपपत्तिकथनम् । 'असिद्धं बहिरङ्गमि'ति परिभाषयाऽपि न निर्वाह इत्याह—**बहिरङ्गेति** ।

( उदाहरणबाधकभाष्यम् )

**मा भूदेवम् । 'नश्चापदान्तस्य झलि' इत्यनुस्वारो भविष्यति ॥**

**( तत्त्वालोकः ) एवम्**—तत्र 'मोऽनुस्वारः' इत्यनुस्वारः । नन्वेवं तत्र कथमनुस्वार इत्यत आह—**नश्चापदान्तस्येति** । तथा च मितोऽभक्तत्वात्तत्र मस्यापदान्तत्वेऽपि न काचनानुपपत्तिरित्याशयः ।

( उदाहरणान्तरभाष्यम् )

**यस्तर्हि न झल्परः—वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥**

**( उद्द्योतः )** वहंलिहे **वहाभ्रे लिह** इति खश् ॥

**( तत्त्वालोकः )** भाष्ये—यद्येवं तर्हि यत्र मकारो न झल्परस्तत्र मितोऽभक्तत्वेन मकारस्यापदान्तत्वादनुस्वारो नोपपद्येतेत्याशयेनाह—**यस्तर्हि न झल्पर इति**—तस्यानुस्वारो न सिद्ध्यतीति शेषः ।

उद्द्योते—**वहंलिहे**—वहंलिहादौ ।

( शीभावोदाहरणभाष्यम् )

**शीभाव—शीभावश्च न सिध्यति । त्रपुणी जतुनी तुम्बुरुणी । नपुंसकादुत्तरस्यौङः शीभावो भवतीति शीभावो न प्राप्नोति ॥ शीभाव ॥**

**( प्रदीपः ) त्रपुणी इति** । नित्यत्वात् परत्वाच्च नुमि कृते व्यवधानमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—यदि मित्पूर्वान्तस्तर्हि 'त्रपुणी' इत्यादौ नुम्विशिष्टस्य त्रप्वादिशब्दस्य नपुंसकत्वात्तदुत्तरस्यौङः शीभावः सिद्ध्यति । तस्याभक्तत्वे तु तत्र नुमा व्यवधानादौङः नपुंसकत्रप्वादिशब्दोत्तरत्वाभावाच्छीभावो न सिद्ध्येदित्याशयेनाह—**शीभावश्चेति** ।

प्रदीपे—ननु नुमः पूर्वं शीभावे कृते पश्चान्नुमा व्यवधानं न क्षतिकरमित्यत आह—**नित्यत्वादिति** । शीभावापेक्षयेत्यादिः । **नुमि कृते इति**—प्रागित्यादिः । तेनेति शेषः । **व्यवधानमिति**—पश्चाच्छीभावप्रतिबन्धकमिति शेषः ।

( परादिपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि परादिः करिष्यते ।**

**( तत्त्वालोकः ) एवमिति**—यदि मितोऽभक्तत्वे एतावन्तो दोषा इत्यर्थः ।

( ३१४ परादिपक्षे दूषणवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ परादौ गुणवृद्ध्यौत्वदीर्घनलोपानुस्वारशीभावेनकारप्रतिषेधाः ॥ * ॥**

( भाष्यम् )

**यदि परादिर्गुणः प्रतिषेध्यः—त्रपुणे जतुने तुम्बुरुणे । 'घेर्ङिति' इति गुणः प्राप्नोति ॥ गुण ॥**

**( उद्द्योतः ) परादा**विति वार्तिके **शीभावे—नकारप्रतिषेधा** इति पाठः । शीभावे इत्यलुगार्षः । एते दोषस्थानानीति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**परादिरिति**—मिदित्यादिः । तर्हीति शेषः । यदि मित्पूर्वान्तस्तर्हि-त्रप्वादिशब्दस्य नान्तत्वेन घिसंज्ञाया

असम्भवाद् गुणो न प्राप्नोति । तस्य परादित्वे तु–तस्योदन्तत्वेन तस्याः सम्भवात् स प्राप्नोतीति तस्य प्रतिषेधो वक्तव्य इत्याशयः ।

( वृद्ध्युदाहरणभाष्यम् )

**वृद्धि—वृद्धिः प्रतिषेध्या—अतिसखीनि ब्राह्मणकुलानि । 'सख्युरसम्बुद्धौ' इति णित्त्वे 'अचो ञ्णिति' इति वृद्धिः प्राप्नोति ॥ वृद्धि ॥**

( प्रदीपः ) **अतिसखीनीति** । बहुव्रीहिः ॥

( उद्द्योतः ) टजभावाय नपुंसकत्वाय चाह—**बहुव्रीहिरिति** ॥

( तत्त्वालोकः ) भाष्ये—यदि मित्पूर्वान्तस्तर्हि-सर्वनामस्थानेकारस्य सखिरूपाङ्गात्परत्वस्याभावेन णित्त्वातिदेशासम्भवात्, प्रकृतेरजन्ताङ्गत्वाभावाच्च वृद्धिर्न प्राप्नोति । तस्य परादित्वे तु–तादृशेकारस्य नविशिष्टस्य सखिरूपाङ्गात्परत्वेन णित्त्वातिदेशात्, प्रकृतेरजन्ताङ्गत्वाच्च वृद्धिः प्राप्नोतीति तस्याः प्रतिषेधो वक्तव्य इत्याशयेनाह–**वृद्धिरिति** ।

( औत्त्वोदाहरणभाष्यम् )

**औत्त्वं—औत्त्वं च प्रतिषेध्यम् । त्रपुणि जतुनि तुम्बुरुणि । 'इदुद्भ्यामौदच्च घेः' इत्यौत्त्वं प्राप्नोति ॥ औत्त्व ॥**

**(तत्त्वालोकः)** यदि मित्पूर्वान्तस्तर्हि–प्रकृतेरुदन्तत्वाभावात्, तेन घिसंज्ञाया अभावाच्च औत्त्वात्त्वे न प्राप्नुतः । तस्य परादित्वे तु–प्रकृतेरुदन्तत्वात्, तेन घिसंज्ञायाः सम्भवाच्च ते प्राप्नुत इति तयोः प्रतिषेधो वक्तव्य इत्याशयेनाह—**औत्त्वञ्चेति** । इदमत्त्वस्याप्युपलक्षणम् । एवम् 'परादौ' इति वार्त्तिकेऽग्रे चापि । प्रथमसूत्रस्य मध्यमसूत्रे, प्रथममध्यमसूत्रयोश्च चरमसूत्रेऽनुवृत्तिरिति बोधनायादिमं सूत्रद्वयं निर्दिशति–**इदुद्भ्यामौदिति** ।

( दीर्घोदाहरणभाष्यम् )

**दीर्घे—दीर्घत्वं च न सिध्यति । कुण्डानि वनानि । 'नोपधायाः, सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घत्वं न प्राप्नोति ॥**

( तत्त्वालोकः ) यदि मित्पूर्वान्तस्तर्हि—अङ्गस्य नान्तत्वाद् दीर्घत्वं सिद्ध्यति । तस्य परादित्वे तु–अङ्गस्य नान्तत्वाभावात् तन्न सिद्ध्येदित्याशयेनाह—**दीर्घत्वञ्चेति** ।

( उदाहरणनिरासभाष्यम् )

**मा भूदेवम् । 'अतो दीर्घो यञि, सुपि च' इत्येवं भविष्यति ॥**

( तत्त्वालोकः ) **एवम्—**तत्र 'सर्वनामस्थाने चासम्बुद्धौ' इति दीर्घः । नन्वेवं तत्र कथं दीर्घ इत्यत आह—**सुपि चेति** । अत्र 'अतो दीर्घो यञि' इति सूत्रस्यानुवृत्तिरिति बोधनाय तन्निर्दिष्टमिति बोध्यम् । तथा च मितः परादित्वेनाङ्गस्य नान्तत्वाभावेऽपि न काचन क्षतिरिति भावः ।

( उदाहरणान्तरभाष्यम् )

**इह तर्हि—अस्थीनि दधीनि प्रियसखीनि ब्राह्मणकुलानि ॥ दीर्घ ॥**

( तत्त्वालोकः ) यद्येवं तर्हि यत्र 'नृति च' इत्यस्य न प्राप्तिस्तत्र दीर्घत्वं नोपपद्यतेत्याशयेनाह—**इह तर्हीति** । दीर्घत्वं न प्राप्नोतीत्यनुषज्यते ।

( नलोपोदाहरणभाष्यम् )

**नलोप—नलोपश्च न सिध्यति । 'अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम्' 'न लोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति ॥ नलोप ॥**

( उद्द्योतः ) भाष्येऽग्ने त्री त इति । ननु परादित्वपक्षे **न लोपः प्रातिपदिकान्तस्ये**त्यस्याप्राप्तावपि शेश्छन्दसि बहुलमित्यनेन नलोपः सिद्ध इति चेन्न : **निर्दिश्यमान**स्यैवादेशा भवन्तीति अलोऽन्त्यपरिभाषया च इकारस्यैव लोपापत्तेरित्याशयात् ।

( तत्त्वालोकः ) भाष्ये—यदि मित्पूर्वान्तस्तर्हि–'तानि तानि' इत्यवस्थायां 'शेश्छन्दसि बहुलमि'त्यनेनेकारलोपे प्रातिपदिकान्तत्वात्तस्य लोपे 'ता ता' इति सिद्ध्यति । तस्य परादित्वे तु–प्रातिपदिकान्तत्वाभावात्तस्य लोपाभावे तन्न सिद्ध्येदित्याशयेनाह—**नलोपश्चेति ।**

उद्द्योते—**नलोप इति**—नविशिष्टेकारलोप इत्यर्थः । यदागमपरिभाषयेत्यादिः ।

( अनुस्वारोदाहरणभाष्यम् )

**अनुस्वार—अनुस्वारश्च न सिध्यति । द्विषन्तपः परन्तपः । 'मोऽनुस्वारो हलि' इत्यनुस्वारो न प्राप्नोति ॥**

( प्रदीपः ) **द्विषन्तप इति** । परादिपक्षे तकारस्य मकारो भक्तस्तकारश्च पदान्त इति मकारोऽपि तद्भक्तत्वात् पदान्त इति सिद्धोऽनुस्वार इत्याहुः ॥ अन्ये तु तद्भक्तत्वात्तकारग्रहणेनास्य ग्रहणं भवतु न तु पदान्तत्वम् । नहि द्वयोर्मकारतकारयोः पदान्तत्वमुपपद्यत इत्याहुः ॥

( उद्द्योतः ) **तद्भक्तत्वात्पदान्त इति । यदागमा** इत्यस्य तद्ग्राहकेण शब्देनागमस्य ग्रहणमित्यप्यर्थ इति भावः ॥ **नहि द्वयोरिति** । ननु संयोगान्तलोपे उक्तरीत्याऽस्त्येव मस्य पदान्तत्वमिति चेदुक्तमेवैतत् ॥

( तत्त्वालोकः ) भाष्ये—यदि मित्पूर्वान्तस्तर्हि–मस्य पदान्तत्वादनुस्वारः सिद्ध्यति । तस्य परादित्वे तु–मस्यापदान्तत्वात् स न सिद्ध्येदित्याशयेनाह— **अनुस्वारश्चेति** ।

प्रदीपे—मितः परादित्वे भाष्यकृता दर्शितां द्विषन्तपादावनुस्वारानुपपत्तिं खण्डयति— **परादीति**। तां मण्डयति-**अन्ये त्विति । अस्य—**मकारस्य ।

उद्द्योते – **अपिना—**आगमविशिष्टस्य ग्रहणमित्यस्य समुच्चयः । **संयोगान्तेति**-तकारस्येत्यादिः । **उक्तरीत्या—**एकदेशविकृतन्यायेन द्विषमित्यस्य मान्तस्य पदत्वादित्युक्तरीत्या । **उक्तमेवेति—**तस्य न्यायस्यानाश्रयणेन तत्रानुस्वारानुपपत्तिकथनमित्यनेनेत्यादिः ।

( उदाहरणनिरासभाष्यम् )

**मा भूदेवम् । 'नश्चापदान्तस्य झलि' इत्यनुस्वारो भविष्यति ॥**

( उदाहरणान्तरभाष्यम् )

**यस्तर्हि न झल्परः—वहंलिहो गौः, अभ्रंलिहो वायुः ॥ अनुस्वार ॥**

( तत्त्वालोकः ) झल्पर इति—नस्यानुस्वारो न सिद्ध्यतीति शेषः। अवशिष्टमत्र पूर्वत्र च पूर्ववद् बोध्यम् ॥

( उदाहरणभाष्यम् )

**शीभावे नकारप्रतिषेध—शीभावे नकारस्य प्रतिषेधो वक्तव्यः। त्रपुणी जतुनी तुम्बुरुणी। सनुमुकस्य शीभावः प्राप्नोति ॥**

( प्रदीपः ) **शीभावे नकारप्रतिषेध इति।** शीभावे विधीयमाने नकारस्य स्थानित्वप्रतिषेधो वक्तव्य इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—कुत इत्यत आह—**सनुमुकस्येति।** यतो मितः परादित्वे इत्यादिः। औकारस्येति शेषः।

प्रदीपे—**नकारस्येति**—घटकतयेति भावः।

( उदाहरणनिरासभाष्यम् )

**नैष दोषः, 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति ॥**

( प्रदीपः ) **निर्दिश्यमानस्येति।** यथा **पादः पदिति** पद्भावः पाच्छब्दस्यैव भवति, न तदन्तस्य ॥

( उद्द्योतः ) **न तदन्तस्येति।** पादन्तस्यानुच्चारणादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**एषः**—सनुमुकस्यौकारस्य शीभावापत्तिरूपः। **निर्दिश्यमानस्येति**—यत इत्यादिः। **इत्येवमिति**—इति परिभाषयेत्यर्थः। औकारस्यैव शीभावो भविष्यति, किन्तु सनुमुकस्य तस्येति शेषः। सनुमुकस्य तस्यानुच्चारणादित्याशयः।

( उदाहरणसाधकभाष्यम् )

**यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति ॥**

**कस्मात् ?**

**नुमा व्यवहितत्वाद् ॥**

( प्रदीपः ) **यस्तर्हीति।** यो निर्दिश्यते तस्य न प्राप्नोति, श्रुतिसन्निपाति यद्रूपमौ इति तत्रकारेण भक्तेनापि तत्त्वतो व्यवहितमित्यर्थः ॥

( उद्द्योतः ) **श्रुतिसंनिपातीति।** उच्चारितमिति यावत् ॥

( तत्त्वालोकः ) भाष्ये—**यस्तर्हीति**—यदि निर्दिश्यमानपरिभाषा आश्रीयते तर्हि य औकार इत्यर्थः। **तस्येति**—शीभाव इति शेषः। एवं प्रदीपेऽपि। **व्यवहितत्वादिति**—औकारस्य नपुंसकपरत्वव्याघातादिति शेषः।

प्रदीपे—**यः**—औकारः। **श्रुतीति**—यत इत्यादिः। **व्यवहितमिति**—नपुंसकादित्यादिः।

( पूर्वान्तपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि पूर्वान्तः करिष्यते ।**

( तत्त्वालोकः ) **एवमिति**—यदि मितोऽभक्तत्वे परादित्वे वा तावन्त एतावन्तो वा दोषा इत्यर्थः।

( ३१५ पूर्वान्तपक्षे दूषणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ पूर्वान्ते नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च ॥ * ॥**

( भाष्यम् )

**यदि पूर्वान्तः क्रियते, नपुंसकोपसर्जनह्रस्वत्वं द्विगुस्वरश्च न सिध्यति ॥**

( उदाहरणभाष्यम् )

**नपुंसकोपसर्जनह्रस्वत्वम्—आराशस्त्रिणी धानाशष्कुलिनी, निष्कौशाम्बिनी निर्वाराणसिनी ॥**

**द्विगुस्वरः—पञ्चारत्निनी दशारत्निनी। नुमि कृते अनजन्तत्वादेते विधयो न प्राप्नुवन्ति ॥**

( प्रदीपः ) **धानाशष्कुलिनी इति।** नित्यत्वात्पूर्वं नुमं मन्यते, तत्र कृतेऽनजन्तत्वाद्ध्रस्वाप्राप्तिः ॥ **निष्कौशाम्बिनी इति।** नपुंसकह्रस्वत्वमुपसर्जनह्रस्वत्वेन परत्वाद्बाध्यते, तदपि नुमि कृते तथैव न प्राप्नोति ॥

( उद्द्योतः ) **धानाशष्कुलिनी इति।** समाहारद्वन्द्वे तद्द्वित्वविवक्षायां द्विवचनम्। तत्र पूर्वं ह्रस्वः। ततो नुमि नास्ति दोष इत्यत आह—**नित्यत्वादिति।** इदं च पदस्य विभज्यान्वाख्यानपक्षे बोध्यम् ॥ **अनजन्तत्वादिति। अच** इत्यनेन प्रातिपदिकस्य विशेषणादित्यर्थः ॥ **परत्वादिति।** यद्यपि कार्यैक्ये यौगपद्यासम्भवेन विरोधाभावेन परत्वादित्यसङ्गतम्। तथापि नुमि कृते उभयोरप्यप्राप्त्योभयोः सम्भवसत्त्वेन च न भाष्ये काचिदनुपपत्तिः। अत एव भाष्ये **नपुंसकोपसर्जनह्रस्वत्वमि**ति संश्लिष्टमेवोक्तमितिबोध्यम् ॥ **तथैवेति।** अनजन्तत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये— **पूर्वान्तः क्रियते इति**—मिदित्यादिः। तर्हीति शेषः ॥ 'ह्रस्वो नपुंसके प्रातिपदिकस्य' 'गोस्त्रियोरुपसर्जनस्य' इति सूत्रयोः 'अचश्च' इति सूत्रादुपस्थितेन अच इत्यनेन प्रातिपदिकं विशेष्यते, तथा च यदि मित्पूर्वान्तस्तर्हि-नुमि कृते प्रातिपदिकस्याजन्तत्वव्याघाताद् 'आराशस्त्रिणी' इत्यादौ नपुंसकह्रस्वत्वम्, 'निष्कौशाम्बिनी' इत्यादौ चोपसर्जनह्रस्वत्वं नोपपद्येत। एवमुत्तरपदस्येगन्तत्वव्याघातात् 'पञ्चारत्निनी' इत्यादौ ( इगन्ताद्युत्तरपदेषु परेषु पूर्वपदस्य प्रकृतिस्वरविधायकेन 'इगन्तकालकपालभगालशरावेषु द्विगौ' इति सूत्रेण विधास्यमानः ) स्वरो नोपपद्येतेत्याशयः ॥ व्यापकाभावे व्याप्याभाव इति नियमाद् अजन्तत्वाभावसत्त्वे इगन्तत्वाभावोऽपि स्यादेवेत्यभिप्रायेणाह— **अनजन्तत्वादिति।** प्रातिपदिकस्योत्तरपदस्य चेत्यादिः। **एते विधयः**—द्वे ह्रस्वत्वे, एकः स्वर इति विधयः। एवमग्रेऽपि।

प्रदीपे—ह्रस्वे कृतेऽकृते च प्राप्नुवतो नुमः 'कृताकृतप्रसङ्गि नित्यम्' इति परिभाषया नित्यत्वमभिप्रेत्याह—**नित्यत्वादिति। पूर्वमिति**—ह्रस्वादित्यादिः। **तत्र**—नुमि। **तदपि**—उपसर्जनह्रस्वत्वमपि।

उद्द्योते—**समाहारद्वन्द्वे इति**—धानाश्च शष्कुल्यश्चेति विग्रहे इत्यादिः। 'स नपुंसकम्' इति सूत्रेण नपुंसकत्वे इति शेषः। कैयटोक्तं खण्डयन् भाष्यं सङ्गमयति—**यद्यपीति। उभयोः**—नपुंसकह्रस्वत्वस्योपसर्जनह्रस्वत्वस्य च। एवमग्रेऽपि। **उभयोरिति**—अकृते इत्यादिः। इदमेव भाष्यकृदभिमतमित्याह—**अत एवेति।**

( ३१६ दूषणबाधकवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ न वा बहिरङ्गलक्षणत्वात् ॥ * ॥**

( भाष्यम् )

**न वा एष दोषः ॥**

**किं कारणम् ?**

**'बहिरङ्गलक्षणत्वात्'।**

**बहिरङ्गो नुम्, अन्तरङ्गा एते विधयः ॥**

'असिद्धं बहिरङ्गमन्तरङ्गे' ॥

द्विगुस्वरे भूयान् परिहारः—संघातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा द्विगुस्वरो भविष्यति ॥ मिदचोऽन्त्यात्परः ॥ ४६ ॥

**( प्रदीपः )** न वेति । नित्यत्वादन्तरङ्गो बलीयानिति, स्वरहस्वौ च विभक्तिनिरपेक्षत्वादन्तरङ्गौ । तदत्र निर्दोषत्वात्पूर्वोक्तपक्षः स्थितः ॥ ४६ ॥

**( उद्द्योतः )** अन्तरङ्गो बलीयानिति । असिद्धं बहिरङ्गमित्येव समानकालप्रातिकबहिरङ्गासिद्धत्वबोधकं पूर्वजातबहिरङ्गासिद्धत्वबोधकं चेति भावः। अत एव भाष्येणाविरोधः। अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः। पञ्चारत्निशब्दे समाहारे द्विगुः, प्रमाणे तत्त्वचो लुग्वा ॥ ४६ ॥

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्**—कस्मात्कारणात् । **बहिरङ्ग इति**—विभक्तिसापेक्षत्वादिति भावः । **भूयान् परिहारः**-अनेको विपुलो वा परिहारसमुदायः । **असौ**—नुम् ।

प्रदीपे—प्रकृतमुपसंहरति—**तदत्रेति** । तस्मादेषां पक्षाणां मध्ये इत्यर्थः ।

उद्द्योते—कैयटोक्त्यभिप्रायमाह—**असिद्धमिति** । **भाष्येण**—'असिद्धमि'तिमात्रात्मकेन । भाष्यासङ्गतिं परिहरति—**अकृतेति** ।

( इत्यागमस्थितिदेशनिर्णयप्रकरणम् )

---

( अथादेशनियामकप्रकरणम् )

( ४२ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ४ )

# एच इग्घ्रस्वादेशे ॥ १ । १ । ४७ ॥

( सूत्रारम्भप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

## किमर्थमिदमुच्यते ?

**( प्रदीपः ) एच इक्** ॥ ४७ ॥ **किमर्थमिति** । विनापि सूत्रेणेष्टसिद्धिरिति प्रश्नः ॥

**( उद्द्योतः ) एच इक्** ॥ ४७ ॥ **विनापीति** । वक्ष्यमाणसूत्रप्रत्याख्यानप्रकारेणेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इदम्**—प्रकृतसूत्रम् । एवमग्रेऽपि ।

प्रदीपे—**सूत्रेण**-प्रकृतसूत्रेण। एवमुद्द्योतेऽपि। **इति**—इति हेतोः।

उद्द्योते—प्रकारेऽन्वयमभिप्रेत्याह- **वक्ष्यमाणेति** । 'सिद्धमेङः सस्थानत्वादि'त्यादिनेत्यादिः । एङः सस्थानत्वादैचश्चोत्तरभूयस्त्वादिगेव ह्रस्वः स्यादिति प्रकृतसूत्रं किमर्थमिति प्रश्नः ।

( ३१७ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ एच इग्वचनं सवर्णाकारनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् )

एच इग्भवतीत्युच्यते—सवर्णनिवृत्त्यर्थमकारनिवृत्त्यर्थं च ॥ सवर्णनिवृत्त्यर्थं तावत्-एचो ह्रस्वादेशशासनेषु अर्ध एकारोऽर्ध ओकारो वा मा भूदिति ॥ अकारनिवृत्त्यर्थं च—इमावैचौ समाहारवर्णौ मात्राऽवर्णस्य, मात्रेवर्णोवर्णयोः । तयोर्ह्रस्वशासनेषु कदाचिदवर्णः स्यात् कदाचिदिवर्णोवर्णौ । मा कदाचिदवर्ण भूदित्येवमर्थमिदमुच्यते ॥

**( प्रदीपः ) एङ इति** । एङः प्रश्लिष्टवर्णत्वात्प्रश्लिष्टावर्णावेकारौकारौ प्राप्नुतो, न तु विश्लिष्टावर्णावेचौ नेति भावः । **समाहारवर्णाविति** । समाह्रियमाणवर्णत्वात् **मात्राऽवर्णस्येति** । अष्टादशभेदभिन्नस्यावर्णस्य मात्राऽवयव इति मिश्रत्वादषष्ठ्या निर्देशः ।

**( उद्द्योतः )** न च इति वक्तव्ये एङ इति अनुचितमत आह—**एङ इति** ॥ **प्रश्लिष्टेति** । दीर्घद्वयरूपत्वादित्यर्थः । प्रश्लिष्टावर्णत्वादिनाप्यान्तरतम्यद्वयरूपत इति भावः । ऐचोरवर्णप्रश्लेषे हेतुमाह—**न विति** । ऐचौ स्वर्णौ न स्त इवेति भावः ॥ **सवर्णाकारनिवृत्त्यर्थमि**त्येतद्विषयभेदेन योज्यत इति बोध्यम् । मध्यमपदसमाहारशब्दस्य वर्णशब्देन न बहुव्रीहिर्वर्णैकदेशस्य वर्णत्वाभावादत आह—**समाह्रियमाणाविति** । मध्यमपदलोपी समास इति भावः ॥ **मात्राऽवर्णस्येति** भाष्यस्य मात्राकालावर्णादिसदृश ऐचोरवयव इति तात्पर्यम् ॥ **मात्रावयव इति** । तत्सदृशश्चैतयोरवयव इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—कात्यायनेन शुक्लयजुःप्रातिशाख्ये कथितम् 'ऐकारौकारयोः कण्ठ्या पूर्वा मात्रा ताल्व्योष्ठ्योत्तरा' इत्यनुसृत्याह—**मात्रेति** । **तयोः**-ऐचोः । **कदाचिदिति**—विनिगमनाविरहादित्यादिः ।

प्रदीपे—अस्य वाच्यार्थं कथयन् षष्ठ्या निर्देशमुपपादयति—**अष्टादशेति** ।

उद्द्योते— **एच इतीति**-नन्वित्यादिः। **अपिना**-कण्ठतालुस्थानत्वसंग्रहः । **तद्प्राप्तौ**—अर्धैकारौकाराप्राप्तौ । नन्वेवमपि तयोरैचावेवाधौ स्यातामित्यत आह—**ऐचौ विति** । भाष्यगूढाशयमाह—**सवर्णेति** । **विषयभेदेन**—इक्स्वरूपविषयभेदेन । **कर्मेति** । नन्वित्यादिः । अवयवशब्दलोपादाह—**मध्यमपदलोपीति** । वस्तुतस्तस्य मात्रात्वाभावादाह—**मात्राकालेति** । अत एव चात्र कर्मधारयसमासेनापि न निर्वाह इत्याशयः । उक्ततात्पर्यानुरोधेनाह—**तत्सदृश इति** । **एतयोः**—ऐचोः । **इत्यर्थः**—इति शेषः ।

( भाष्यम् )

अस्ति प्रयोजनमेतत् ॥

किं तर्हीति ॥

**( तत्त्वालोकः )** किमेतत्प्रयोजनवत्त्वात् प्रकृतसूत्रं विधेयमित्याशयेन पृच्छति—**अस्तीति** । किमित्यादिः । अवश्यं कर्तव्यमित्याशयेनाह—**किमिति** । **इति**—एतत् ।

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( ३१८ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ दीर्घप्रसङ्गस्तु ॥ * ॥

( भाष्यम् )

दीर्घास्त्विकः प्राप्नुवन्ति ॥

किं कारणम् ? ।

स्थानेऽन्तरतमो भवतीति ॥

( प्रदीपः ) **दीर्घास्त्विति ।** स्वतन्त्रमिदं निर्वर्तकमिति भावः ॥ भाव्यमानस्यापि सवर्णग्रहणं दृश्यतेऽमूभ्यामित्यादाविति दोषोपन्यासः ॥

( उद्द्योतः ) नन्वस्य नियमत्वेन ह्रस्वविध्येकवाक्यतया कथं दीर्घप्राप्तिरत आह—**स्वतन्त्रमिति ।** नियमत्वेऽनुवादादिदोषाद्विधित्वमेव न्याय्यमित्यभिमानः । **भाव्यमानस्येति ।** सम्बन्धसामान्ये षष्ठी ॥

( तत्त्वालोकः ) भाष्ये—**दीर्घा इति—**यदि प्रकृतसूत्रं क्रियते, तर्हि-एचामित्यादिः । **तु—**अपि । एवं वार्त्तिकेऽपि ।

प्रदीपे—**इदमिति—**प्रकृतसूत्रमित्यर्थः । इक इति शेषः । नन्वेवमपीको विधीयमानत्वात्तेन सवर्णग्रहणासम्भवात्कथं दीर्घप्रसङ्ग इत्यत आह—**भाव्यमानस्येति ।**

उद्द्योते—**अस्य—**प्रकृतसूत्रस्य । तत्र बीजमाह—**नियमत्वे इति । आदिना** निवृत्तिकल्पनापरिग्रहः । नियमस्थले हि प्राप्तयोर्द्वयोरेकानुवादेनापरनिवृत्तिर्ज्ञाप्यते । नन्वत्र तृतीया युक्तेत्यत आह—**सम्बन्धेति ।**

( आक्षेपबाधकभाष्यम् )

**ननु च ह्रस्वादेश इत्युच्यते, तेन दीर्घा न भविष्यन्ति ॥**

( प्रदीपः ) **ननु चेति ।** अयं हि वाक्यार्थः—एचो ह्रस्वप्रसङ्गे इगेव ह्रस्व **इति ॥**

( तत्त्वालोकः ) भाष्ये—एचां स्थाने दीर्घाणामिकां प्रसङ्गस्य वारकं दीर्घविरोधिह्रस्वपदं प्रकृतसूत्र एवोपात्तमिति तत्र तेषां न प्रसङ्ग इत्याशयेनाह—**ननु चेति ।** प्रकृतसूत्र इति शेषः । **दीर्घा इति—**एचामित्यादिः । इक इति शेषः ।

प्रदीपे—प्रकृतसूत्रे '**ह्रस्वादेशे**' इत्यत्र निर्धारणे सप्तमी, एकवचनन्तु सौत्रत्वात् । तथा च—आदिश्यमानेषु ह्रस्वेषु य इक् स एचः स्थाने भवतीत्यर्थः । इक् चार्थतो ह्रस्व एव, न तु दीर्घः । तत्फलितमाह—**अयं हीति । इगेवेति—**ह्रस्व एव इगित्यर्थः ।

( आक्षेपसाधकभाष्यम् )

**विषयार्थमेतत् स्यात्—एचो ह्रस्वप्रसङ्गे इग्भवतीति ॥**

( प्रदीपः ) **विषयार्थमिति ।** यत्र ह्रस्वो विधीयते तत्रैवास्योपस्थानं यथा स्याद्, देवदत्तेति प्लुतादिविधावुपस्थानं मा भूद् । अस्मिंश्चोपस्थिते वाक्यभेदेनैच इको विधीयमाना अन्तरतमा दीर्घा एव प्राप्नुवन्ति । ह्रस्वस्य बाधितत्वाद्दीर्घेषु कृतेषु पुनर्ह्रस्वाप्रसङ्गः ॥

( उद्द्योतः ) **देवेति ।** देवदत्तेत्येतद्विषयक**गुरोरनृत** इत्येतत्-प्लुतविधावित्यर्थः । आदिनोदात्तादिस्वरसंग्रहः ॥ नन्वनेन दीर्घे पुनस्तेन लक्षणेन ह्रस्वः स्यादत आह— **ह्रस्वस्येति ।** अपवादस्य प्रवृत्त्या तद्विषये उत्सर्गाप्रवृत्तेरिति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्र विषये सप्तमीत्याह— **विषयेति ।** तत्र युक्तम्, यतः प्रकृतसूत्र इत्यादिः । **एतत्—** ह्रस्वादेश इत्येतत् । **स्यादिति—**तथा चायं वाक्यार्थं इति शेषः ।

प्रदीपे—भाष्याशयमाह—**यत्रेति ।** येनेत्यर्थः । **अस्य—**प्रकृतसूत्रस्य । **एच इति—**ह्रस्वप्रसङ्गे इत्यादिः । दीर्घा एवेत्यत्र हेतुगर्भं विशेषणमाह—**अन्तरतमा इति ।**

उद्द्योते—देवदत्तेत्यस्य प्लुतविधिलक्ष्यत्वेन तद्विधित्वासम्भवादाह—**देवदत्तेति । अनेन—**प्रकृतसूत्रेण । **तेन—**यत्रास्योपस्थानंतेन ।

( ३१९ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ दीर्घप्रसङ्गस्तु निवर्तकत्वात् ॥ * ॥**

( भाष्यम् )

**दीर्घाणां त्विकामप्रसङ्गः ॥**

**किं कारणम् ? ।**

**'निवर्तकत्वात्' । नानेनेको निवर्त्यन्ते ।**

**किं तर्हि ? ।**

**अनिको निवर्त्यन्ते ॥ सिद्धा ह्यत्र ह्रस्वा इकश्चानिकश्च । तत्रानेनानिको निवर्त्यन्ते ॥**

( प्रदीपः ) **निवर्तकत्वादिति ।** एकवाक्यभावेनैच इगेव ह्रस्वो भवति नान्य इत्येवमनिको व्यावर्त्यन्ते ॥ यदि तर्ह्येकवाक्यता, एजव्यतिरेकेणान्यस्य ह्रस्वो न प्राप्नोति । नैष दोषः, पूर्वं ह्रस्वश्रुत्याऽच उपस्थानाद् ह्रस्वत्वं क्रियते । तत्रैचोऽप्यन्तर्भावाद् ह्रस्वे क्रियमाणे एच इगित्यस्योपस्थानम् ॥

( उद्द्योतः ) **एकवाक्यभावेनैच इति ।** एकवाक्यभावो नाम एच इगित्यस्य ह्रस्वे शेषभावः । न तु परस्परवियोगाभावः ॥ अन्वयस्तु वाक्यभेदेनैवेति ॥ एतदजानानो नोदयति—**यदीति ।** उक्ताभिप्रायेणैवोत्तरयति—**पूर्वं ह्रस्वेति ।** एवं हि परिभाषाद्वयस्याप्यनुग्रहो भवतीति भावः ॥

( तत्त्वालोकः )—भाष्ये— **किं कारणम्—**कस्मात्कारणात् । **अनेन—**प्रकृतसूत्रेण । **निवर्त्यन्ते—**निष्पाद्यन्ते । **किन्तर्हीति—**क्रियत इति शेषः । **निवर्त्यन्ते—**व्यावर्त्यन्ते । **सिद्धा इति—**प्राप्ता इत्यर्थः । सूत्रान्तरेणेत्यादिः । **अत्र—**एचि । **तत्र—**प्राप्तेषु-इक्ष्वनिक्षु च । तथा चेदं सूत्रं नियामकमेव, न तु विधायकमिति भावः ।

प्रदीपे—**ह्रस्वश्रुत्येति—**येन ह्रस्वो विधीयते तत्रेति भावः । **तत्र—**अक्षु ।

उद्द्योते—**ह्रस्वे—**ह्रस्वविधायके । **एवं हि—**तत्र क्रमेणोपस्थितिसत्त्वे हि । **परिभाषाद्वयस्येति—**'अचश्च' 'एच इग् ह्रस्वादेशे' इति परिभाषाद्वयस्येत्यर्थः । तथा च न कस्यचिद् ह्रस्वानुपपत्तिरिति भावः ।

( सूत्रप्रत्याख्यानाधिकरणम् )

( प्रथमप्रयोजनप्रत्याख्यानभाष्यम् )

**सवर्णनिवृत्त्यर्थेन तावन्नार्थः ॥**

( तत्त्वालोकः ) प्रकृतसूत्रस्य-एङंशे सवर्णनिवर्त्तनम्, ऐजंशे चाकारनिवर्त्तनं प्रयोजनं प्रत्यपादि । तस्य क्रमशः खण्डनेन तत्प्रत्याचष्टे—**सवर्णेति । नार्थ इति—**प्रकृतसूत्रस्येति शेषः । एवमग्रेऽपि ।

( ३२० प्रत्याख्यानसाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ सिद्धमेङः सस्थानत्वात् ॥ * ॥**

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?**

**एङः 'सस्थानत्वाद्' इकारोकारौ भविष्यतः; अर्ध एकारोऽर्ध ओकारो वा न भविष्यति ॥**

( प्रदीपः ) **सिद्धमेङ इति** । एकारस्य तालव्यस्य तालव्य इकार ओकारस्यौष्ठ्यस्योकार ओष्ठ्यो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) **एकारस्येति** । ननु कण्ठतालवादिस्थानत्वेऽपि विप्रतिषेधेन पूर्वावयवो न स्थान्तरतमादेशप्रयोजकः, किन्तु परावयव एवेति न दोष इति ॥ तन्न । लक्ष्यानुरोधेनान्तरतमत्वस्य, **विप्रतिषेध**शास्त्राप्रवृत्तेः स्थानिवत्प्रकरणभाष्ये स्पष्टत्वात् । किन्त्वन्तरङ्गत्वेन पूर्वावयव एव तथेति बोध्यम् ॥ भाष्ये—अर्ध **एकारोऽर्ध ओकारो वा न भविष्यतीति** । तयोरसत्त्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**सिद्धमिति**—यत इत्यादिः । एतत्—सवर्णनिवर्त्तनम् । **एङ इति**—यत इत्यादिः । **अर्ध एकार इति**—किन्त्वित्यादिः ।

प्रदीपे—'इचशेयास्तालौ' 'उवोपोपध्मा ओष्ठे' इति प्रातिशाख्यशिक्षान्तरानुरोधेन एकारैकारयोरोकारौकारयोश्च सस्थानत्वं प्रतिपादितमित्याह—**एकारस्येति** ।

उद्द्योते—पाणिनीयशिक्षानुरोधेनैव तयोस्तयोस्तदुक्तमिति कथितं कैयटेन 'एकारस्ये'तीति दण्डिकृष्णाद्युक्तिं खण्डयति—**यत्त्विति** । **विप्रतीति**—शब्दपरेत्यादिः । **स्वेति**—एङित्यर्थः । **तथा**—स्वान्तरतमादेशप्रयोजकः । एवञ्च न पाणिनीयशिक्षाश्रयणेन सामञ्जस्यमिति शिक्षान्तराश्रयणमेव कैयटाभिमतमित्याशयः ।

( आक्षेपभाष्यम् )

## ननु च एङः सस्थानतरावर्धैकाराद्धौकारौ ॥

( उद्द्योतः ) इतरस्तु सस्थानत्वाभावादिति हेतुरनेनोक्त इति मत्वा नोदयति—**ननु चेति** ॥ **सस्थानतराविति** । कण्ठतालुस्थानमिति पक्षेऽपि स्थानसाम्यसत्त्वमिति बोधयितुं तरनिर्देशः ॥

( तत्त्वालोकः ) उद्द्योते—**सस्थानत्वेति**—एङोऽर्ध एकारोऽर्ध ओकारो वा न भविष्यतीत्यत्रेत्यादिः । **अनेन**—'एङः सस्थानत्वाद् इकारोकारौ भविष्यतः' इति ग्रन्थेन ।

( समाधानभाष्यम् )

## न तौ स्तः । यदि हि तौ स्यातां तावेवायमुपदिशेत् ॥

( उद्द्योतः ) स्वाशयं प्रकटयति—**न तौ स्त इति** ॥ **तावेवेति** । प्रत्याहारसूत्रे इति भावः । एतच्च **एओङ्**सूत्रे निरूपितम् ॥

( तत्त्वालोकः ) भाष्ये—**नेति**—तत्र, यत इत्यादिः । **तौ**—अर्धैकारार्धौकारौ । **स्यातामिति**—तर्हीति शेषः । **अयम्**—महेश्वरः ।

( समाधानबाधकभाष्यम् )

## ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते—'सुजाते एश्व' सूनृते, 'अध्वर्यो ओद्रिभिः सुतम्' 'शुक्रन्ते एन्यद्' 'यजतं ते एन्यत्' इति ॥

( तत्त्वालोकः ) **छन्दोगानामिति**—छन्दोगानां मध्ये सामशाखाविशेषाध्येतारः सात्यमुग्रयो राणायनीयाश्चेत्यर्थः ।

( समाधानसाधकभाष्यम् )

## पार्षदकृतिरेषा तत्रभवताम् । नैव लोके नान्यस्मिन् वेदे—अर्ध एकारः, अर्ध ओकारो वास्ति ॥

( उद्द्योतः ) **पार्षदेति** । तत्रभवतां या पर्षत्सभा तत्र भवेत्यर्थः । भाष्यप्रयोगादेव गमकत्वात्साधुत्वं बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**पार्षदेति—तत्रभवताम्** पूज्यानां ( छन्दोगानामेव ) या **पर्षत्** सभा तत्र भवा चासौ **कृतिः** अध्ययनादिक्रिया **एषा** अर्धैकारार्धौकारविषयिणीति समुदितार्थः । **नैव**—न तु । **न**—न च ।

उद्द्योते—नन्वेवममामर्थ्यमिकथं वृत्तिरित्यत आह—**भाष्येति** ।

( द्वितीयप्रयोजनप्रत्याख्यानभाष्यम् )

## अकारनिवृत्त्यर्थेनापि नार्थः ।

( ३२१ प्रत्याख्यानसाधकवार्तिकम् ॥ ५ )

## ॥ ❀ ॥ ऐचोश्चोत्तरभूयस्त्वात् ॥ ❀ ॥

( भाष्यम् )

ऐचोश्चोत्तरभूयस्त्वादवर्णो न भविष्यति । भूयसी मात्रेवर्णोवर्णयोः, अल्पीयस्यवर्णस्य । भूयस एव ग्रहणानि भविष्यन्ति । तद्यथा 'ब्राह्मणग्राम आनीयताम्' इत्युच्यते । तत्र चावरतः पञ्चकारुकी भवति ॥ एवं इहाप्यादेशे ॥ ४८ ॥

( प्रदीपः ) **ऐचोश्चेति** । ऐकारः कण्ठ्यतालव्य औकारः कण्ठ्योष्ठ्यः । न च तथाविधो ह्रस्वोऽस्तीति अवयवान्तरतमेन भाव्यम् । भूयसा चाऽवयवेन व्यपदेशो भवति । तदात्मक इव हि समुदायो लक्ष्यत इतीदुतावेव भविष्यतः ॥ **ब्राह्मणग्राम इति** । ब्राह्मणानां वास्तव्यत्वे उदाहरणम् । न तु स्वामित्वे ॥ ४८ ॥

( उद्द्योतः ) **भूयस एवेति** । भूयोंऽशस्यान्तरतम्यप्रतियोगितया ग्रहणमित्यर्थः ॥ ब्राह्मणस्वामिकग्रामस्य भूयसा व्यपदेशे दृष्टान्तत्वासङ्गतेराह—**वास्तव्यत्वे इति** । वास्तव्यः कर्तरि तव्यान्तः । कुलालकर्मारवर्धकिनापितरजकाः **पञ्चकारुकी** ॥ ४८ ॥

( तत्त्वालोकः ) भाष्ये—**ऐचोश्चोत्तरभूयस्त्वादिति**—( यतः सिद्धमकारस्यापि निवर्त्तनम् । कथम् ? यतः ) ऐचोरुत्तरभूयस्त्वाच्च ( इकारोकारौ भविष्यतः, किन्तु ) अवर्णो न भविष्यतीत्यन्वयः । यद्यैकारोऽपि तालव्य एव, औकारश्चाप्योष्ठ्य एव; तदा तयोः चकारसमुच्चितसस्थानत्वाद् इकारोकारावेव भविष्यतः, न त्ववर्णो विस्थानत्वात् । यदि चैकारः कण्ठ्यतालव्यः, औकारश्च कण्ठ्योष्ठ्यः; तर्हि तयोरुत्तरभूयस्त्वादिकारोकारावेव भविष्यतः, न त्ववर्ण आल्पत्वादिति भावः । 'अकारार्धमैकारौकारयोरादिः' 'इकारोऽध्यर्धः **पूर्वस्य** शेषः' 'उकारस्तूत्तरस्य' इति तैत्तिरीयप्रातिशाख्योक्त्यनुसारेणाह—**भूयसीति** । सार्धमात्रैकमात्रेत्यर्थः । तयोर्हीत्यादिः । **अल्पीयसी**—अर्धमात्रा । तयोः स्वार्थे ईयसुन् । **ग्रहणानीति**—अत्र बहुवचनं लक्ष्यबहुत्वाभिप्रायम् । भूयसा व्यपदेशे **दृष्टान्तमाह**—**तद्यथेति** । ननु यत्र ब्राह्मणा एव सन्ति, न त्वन्ये, स एव ब्राह्मणग्रामपदवाच्य इति तत्र तस्य दृष्टान्तत्वं नोपपद्यते इत्यत आह—**तत्र चेति** । **अवरतः**—अन्ततः । तथाच यत्र ब्राह्मणा बहवो वसन्ति, अन्ये चाल्पाः, सोऽत्र विवक्षितः; पञ्चकारुकरहितस्य ब्राह्मणग्रामस्याप्रसिद्धत्वादित्याशयः ।

प्रदीपे—**तथाविधः**—कण्ठ्यतालव्यः कण्ठ्योष्ठ्यो वा । **ह्रस्वः**—अवर्णः । **तदात्मकः**—भूयोऽवयवात्मकः । समुदायस्य भूयोऽवयववदात्मकत्वेन वस्तुतो भूयोऽवयवात्मकत्वाभावादाह—**इवेति** ।

उद्द्योते—वास्तव्यत्वं वासकर्तृत्वमित्याह—**कर्तरीति** । यद्यपि भाष्यकृताऽत्र 'सवर्णे'त्यादिना प्रकृतसूत्रस्य निष्फलत्वं प्रतिपादितम्; तथापि तत्र सिद्धान्तभूतम्; सस्थानत्वस्यापाणिनीयशिक्षाऽनुरोधेनो-

क्तत्वात्, कचिच्च ऐचोः पूर्वभूयस्त्वस्यापि सत्त्वेनोत्तरभूयस्त्वस्यानियतत्वात्। अत एव 'प्लुतावैच इदुतावि'ति सूत्रभाष्ये विनिगमनाविरहाश्रयेण तयोरुभयमुक्तम्। एवञ्च प्रकृतसूत्रस्य नियामकत्वेन सत्त्वमेव युक्तमिति बोध्यम्।

---

( ४३ परिभाषासूत्रम् ॥ १ । १ । ७ । आ. १२९ ॥ )

## षष्ठी स्थानेयोगा ॥ १ । १ । ४९ ॥

### ( स्थानेयोगशब्दार्थनिरूपणाधिकरणम् )

### ( आक्षेपभाष्यम् )

**किमिदम्—स्थानेयोगेति ? ॥**

**( प्रदीपः ) षष्ठी ॥ ४९ ॥ किमिदमिति ।** समासे विभक्तेः श्रवणाप्रसङ्गोऽसमासेऽपि युक्तिरिति प्राप्नोति, न तु योगेति प्रश्नः ॥

**( उद्द्योतः ) षष्ठीस्था ॥ ४९ ॥ युक्तिरिति ।** षष्ठीति स्त्रीलिङ्गविशेषणत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये— **किमिति—**कथं सिद्ध्यतीति भावः।

प्रदीपे—**समासे इति—**'सुपो धात्वि'ति लुकेति शेषः। 'अकर्त्तरि च कारके संज्ञायामि'ति प्राप्तस्य घञः स्त्रियां क्तिना बाधादाह—**असमासे इति । अपिना** समाससमुच्चयः । प्रश्न **इति—**इति कारणादित्यादिः।

उद्द्योते—**षष्ठीतीति—**योगेत्यस्येत्यादिः।

### ( समाधानभाष्यम् )

**स्थाने योगोऽस्याः सेयं स्थानेयोगा । सप्तम्यलोपो निपातनात् ॥**

**तृतीयाया वा एत्वम् । स्थानेन योगोऽस्याः सेयं स्थानेयोगेति ॥**

**( प्रदीपः ) स्थानेयोगोऽस्या इति ।** स्थाननिमित्तसम्बन्धेत्यर्थः ॥ **तृतीयाया वेति ।** निपातनादिति योज्यम्। यथा देवदत्तस्य यज्ञदत्त इति पुत्रत्वादिद्वारकः संबन्धोऽवगम्यते । एव**मस्तेर्भूरि**त्यत्राप्यस्यां परिभाषायां सत्यां स्थाननिमित्तः संबन्धोऽवसीयते ॥ स्थानमर्थ इति केचिदाहुः । तिष्ठन्त्यस्मिन् शब्दा इति स्थानम् । अर्थे च शब्दास्तिष्ठन्ति । तेनास्तेरर्थे भूरित्यर्थः ॥ अन्ये त्वाहुः—**अस्जो रोपधयोरमन्यतरस्या**मित्यादौ रोपधादीनामानर्थक्याद्भावसाधनः प्रसङ्गवाची स्थानशब्द आश्रीयते । तेनास्तेः प्रसङ्गेऽस्तेः प्राप्तौ भूः प्रयुज्यते इत्यर्थः संपद्यते ॥ स्वाभाविकोऽस्तेरप्रयोग आर्धधातुके भूशब्दस्य च प्रयोगोऽनेन प्रकारेणान्वाख्यायते ॥

**(उद्द्योतः) निपातनादिति ।** तृतीयान्तस्य समासे तृतीयाया लुक्यस्यैत्वमित्यर्थः ॥ तृतीयायाः स्थाने एतद्विधाने तु अन्तरङ्गबाधे मानाभावादिनादेशेऽन्त्यस्य स्याद्, लुग्बाधे मानाभावाच्च । वृद्ध्यापत्तेश्च । अत एवेत्त्वं नोक्तमिति बोध्यम् ॥ अत्र स्थानसामीप्यादयः षष्ठ्यर्थसम्बन्धनिरूपकाः, न तु षष्ठ्यर्था इति न **मतुप्सूत्र**स्थभाष्यविरोधः । अत एवात्र भगवता सप्तम्यन्तेन तृतीयान्तेन वा समासो दर्शितः, न तु समानाधिकरणबहुव्रीहिः। तद्ध्वनयतोक्तम्—**स्थाननिमित्तसंबन्धेत्यर्थ इति ॥** नन्वादेशविधौ स्थानशब्दाभावेन कथं स्थाननिमित्तः संबन्धोऽत आह—**यथेति ।** तथा च देवदत्तस्य यज्ञदत्त इत्युक्ते किमित्याकाङ्क्षावशात्पुत्र इत्यध्याहारो यथा, तथा प्रदेशेषु स्थानपदाध्याहारेण वाक्यैकदेशन्यायेन वा बोध इति भावः ॥ **अर्थे चेति ।** वाचकत्वसंबन्धेनेति भावः ॥ **अस्तेः प्रसङ्ग** इत्यस्य व्याख्या—**अस्तेः प्राप्ताविति ॥ प्रयोग इति ।** स्वाभाविक इत्यनुपज्यते । शब्दनित्यत्वभङ्गापत्त्या स्थानशब्दो निवृत्तिवाची नोपपद्यत इति भावः। रम्विधौ रोपधघटितस्यार्थे रम्घटित इत्यर्थे न क्षतिरित्यत्रारुचिः॥

**( तत्त्वालोकः )** भाष्ये—नन्वेवं 'सुपो धात्वि'ति विभक्तेर्लुक् प्रसज्येतेत्यत आह—**सप्तम्यलोप इति । निपातनादिति—**अस्य देहलीदीपन्यायेन पूर्वत्र परत्र चान्वयः। **तृतीयाया इति—**अलुप्ताया इत्यादिः। अलुग् एत्वञ्च निपातनेनैव साध्यते। ततः 'अतो गुणे' इति पररूपमित्याशयः।

प्रदीपे—**योज्यम्—**अनुषञ्जनीयम्। इति—इत्यत्र। **अस्याम्—**'षष्ठी स्थानेयोगे'त्यस्याम्। **अवसीयते—**निश्चीयते।

उद्द्योते—**अस्य—**स्थानशब्दघटकस्य अकारस्य। **इत्यर्थः—**इति 'तृतीयाया-एत्वमि'ति भाष्यार्थः। ननु यथाश्रुतमेव भाष्यार्थः कुतो नेत्यत आह—**तृतीयाया इति । इनादेशे इति—**एत्वात्पूर्वमित्यादिः। **अन्त्यस्येति—**एतदिति शेषः। नन्वपवादत्वादेत्वमेव तस्मात्पूर्वं स्यादित्यत आह—**लुगिति ।** लुको हि सर्वापवादतेत्याशयः। **भावाच्चेति—**अत्र 'भावश्चे'ति पाठो युक्तः। **वृद्ध्यापत्तेश्चेति—**अयम्पाठो न युक्तः, 'अतो गुणे' इत्यनेन तस्या बाधात्। **अत एव—**उक्तरीत्या तृतीयायाः स्थाने एत्वस्य विधातुमशक्यत्वादेव ॥ अत्र मया यथाश्रुतमेव भाष्यार्थः स्थापितः, नागेशेन तु श्रुतमतिक्रम्य स स्थापितः। तत्र कस्य युक्ततेति विद्वद्भिर्विवेचनीयम् ॥ मतुपसूत्रस्थभाष्यविरोधम्परिहरति—**अत्रेति । अत एव—**तथाऽभिमतत्वादेव। कैयटस्याप्यत्र सम्मतिरित्याह—**तदिति ।** अप्रकरणज्ञस्यानेकसम्बन्धसंशायकस्य जिज्ञासामभिप्रेत्य सामान्ये नपुंसकेनाह—**किमिति ।** लाघवादाह— **वाक्येति ।** पौनरुक्त्यं परिहरति—**अस्तेरिति ।** ननु स्थानशब्दो निवृत्तिवाच्येव कुतो नोक्त इत्यत आह—**शब्दनित्यत्वेति ।** अन्येतु मतादरमूलं खण्डयति—**रम्विधाविति ।**

### ( सूत्रप्रयोजनाधिकरणम् )

### ( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ॥**

**( प्रदीपः ) किमर्थमिति ।** विनापि सूत्रेणेष्टं सिध्यति, आरब्धे चातिप्रसङ्ग इति प्रश्नः ॥

**(उद्द्योतः) आरब्धे चेति ।** तत्रातिप्रसङ्गवारणाय व्याख्यानत इत्येतदाश्रयणे तयैव सिद्धौ परिभाषेयं व्यर्थेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इदम्—**'षष्ठी स्थानेयोगे'ति सूत्रम्।

प्रदीपे—**सूत्रेण—**प्रकृतसूत्रेण । **आरब्धे चेति—**प्रकृतसूत्रे इत्यादिः। अवयवषष्ठ्यादाविति शेषः। **इति—**इति हेतोः।

उद्द्योते—**तयैव—**'व्याख्यानतः' इति परिभाषयैव। **इयम्—**'षष्ठी स्थानेयोगे'तीयम्।

( ३२२ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ षष्ठ्याः स्थानेयोगवचनं नियमार्थम् * ॥

### ( भाष्यम् )

**नियमार्थोऽयमारम्भः। एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति । ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्ति।**

इष्यते च—व्याकरणे या षष्ठी सा स्थानेयोगैव स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति षष्ठ्याः स्थानेयोगवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥

**( प्रदीपः ) एकशतमिति** । षष्ठीदण्डकपाठाश्रयेणैतदुक्तम् । **यावन्तो वेति** । शब्दे यावन्तः संभव इत्यर्थः ।

**( उद्द्योतः ) षष्ठीदण्डकपाठो** ग्रन्थविशेषः । भाष्ये—**षष्ठ्यर्था इति** । षष्ठीप्रयोजनकास्तदर्थान्वयिनः शब्दाः शतमित्यर्थः ॥ यद्वा षष्ठ्यर्थानां शतत्वे तेषां शतत्वमर्थसिद्धं बोध्यम् ॥ **एकशतमिति** निर्णयेनाभिधाय पुनः संदिग्धाभिधानमयुक्तमत आह—**शब्द इति** । वाशब्दो वाक्यालङ्कारे ॥ भाष्ये—**प्राप्नुवन्तीति** । तेषां सर्वेषां बाधः प्राप्नोतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**नियमार्थः—**'व्याकरणे या षष्ठी सा स्थाननिरूपितनिवर्त्त्यनिवर्त्तकभावरूपसम्बन्धार्थिकैवे'ति नियमलाभार्थः । एवम्पूर्वत्र परत्र चापि । **अयम्—**'षष्ठी स्थानेयोगे'त्ययम् । उक्तमेवोपपादयति—**एकशतमिति** । **एवमर्थम्—**नियमार्थम् । **इदम्—**प्रकृतसूत्रम् ।

प्रदीपे—**सम्भव इति—**तावन्त इति शेषः ।

उद्द्योते—अत्रार्थशब्दः प्रयोजनवाचीत्याह—**षष्ठीप्रयोजनका इति** । **तदर्थान्वयिनः—**षष्ठ्यर्थान्वयिनः । तत्र सोऽभिधेयपर एवेत्याह—**यद्वेति** । **तेषाम्—**तदन्वयिनां षष्ठीप्रयोजनकानां शब्दानाम् । **एकेति—**नन्वित्यादिः । नन्वेवं वाशब्दासङ्गतिरित्यत आह—**वाशब्द इति** ।

( भाष्यम् )

अस्ति प्रयोजनमेतत् ॥

किं तर्हीति ॥

**( तत्त्वालोकः )** किमेतत्प्रयोजनार्थं प्रकृतसूत्रमारब्धव्यमित्याशयेन पृच्छति—**अस्तीति** । किमित्यादिः । अवश्यमारब्धव्यमित्यभिप्रायेणोत्तरयति—**किमिति** । **इति—**एतत् ।

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( ३२३ आक्षेपवार्तिकम् ॥ २ )

## ॥ * ॥ अवयवषष्ठ्यादिष्वतिप्रसङ्गः शासो गोह इति ॥ * ॥

( भाष्यम् )

अवयवषष्ठ्यादयस्तु न सिध्यन्ति ॥

तत्र को दोषः ?

'शास इदङ्हलोः' इति शासेश्चान्त्यस्य स्यादुपधामात्रस्य च । 'ऊदुपधाया गोहः' इति गोहेश्चान्त्यस्य स्यादुपधामात्रस्य च ॥

**( प्रदीपः ) अवयवेति** । नियमेन संबन्धान्तराणां निवर्तनादिति भावः ॥ **उपधामात्रस्य चेति** । शासिना संबन्धाभावात् पचादिसंबन्धिनोऽपीत्यर्थः । तत्र **इनिदिता**मित्यत उपधाया इत्यनुवर्तते ॥

**( उद्द्योतः ) नियमेन** । प्रकृतसूत्रेण ॥ **शासिनेति** । तस्य स्थानषष्ठीत्वेनोपधाविशेषणे सामर्थ्याभावादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अवयवेति—**यदि प्रकृतसूत्रं क्रियते, तर्हीत्यादिः । आदिना—'गालोड्क्' 'अजाद्यतष्टाप्' इत्यादिसंग्रहः । एवमग्रेऽपि । **अतिप्रसङ्ग इति—**प्रकृतसूत्रस्येत्यादिः । **तत्र—**तेषामसिद्धौ ॥ **चकारो** वाक्यालङ्कारे । 'अलोऽन्त्यस्ये'ति परिभाषाया अस्वत्वादाह—**अन्त्यस्येति** । एवमग्रेऽपि ॥

प्रदीपे—**सम्बन्धान्तराणाम्—**स्थाननिरूपितसम्बन्धातिरिक्तसम्बन्धानाम् । **सम्बन्धाभावादिति—**उपधाया इत्यादिः । **तत्र—**'शास इदङ्हलोरि'त्यत्र ।

( ३२४ आक्षेपबाधकसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अवयवषष्ठ्यादीनां चाऽप्राप्तिर्योगस्याऽसंदिग्धत्वात् * ॥

( भाष्यम् )

अवयवषष्ठ्यादीनां च नियमस्याप्राप्तिः ॥

किं कारणम् ? ।

'योगस्यासंदिग्धत्वात्' । संदेहे नियमः । न चावयवषष्ठ्यादिषु संदेहः ॥

**( प्रदीपः ) असंदिग्धत्वादिति** । अनियमप्रसङ्गे हि नियमः क्रियते न तु प्रागेवावस्थिते नियमे ॥

**( उद्द्योतः )** भाष्येऽ**वयवषष्ठ्यादीनामिति** । अवयवषष्ठ्यादीनामिष्टानां निवृत्तये नियमाप्राप्तिरिति वार्तिकार्थः ॥

**( तत्त्वालोकः )** भाष्ये—**चकारो** वाक्यालङ्कारे । **नियमेति—**प्रकृतसूत्रेत्यर्थः । एवमुद्द्योतेऽपि । इष्टानां निवृत्तये इत्यादिः । **किं कारणम्—**कस्मात्कारणात् । **योगस्येति—**षष्ठ्यर्थसम्बन्धस्येत्यर्थः । तत्रेत्यादिः । उपधादिपदसन्निधानेनावयवषष्ठीत्वनिर्णयादाह—**न चेति** ।

उद्द्योते—यथाश्रुतानुपपत्तेराह—**अवयवेति** । **वार्तिकार्थः—**वार्तिकपूर्वार्धार्थः ।

( आक्षेपभाष्यम् )

किं वक्तव्यमेतत् ? ॥

**( तत्त्वालोकः )** एतत्—'अवयवषष्ठ्यादीनाम्'......**इत्येतत्** ।

( समाधानभाष्यम् )

नहि ॥

कथमनुच्यमानं गंस्यते ? ।

लौकिकोऽयं दृष्टान्तः । तद्यथा लोके—कश्चित् कंचित् पृच्छति—ग्रामान्तरं गमिष्यामि पन्थानं मे भवानुपदिशत्विति । स तस्मायाचष्टे—अमुष्मिन्नवकाशे हस्तदक्षिणो ग्रहीतव्यः, अमुष्मिन्नवकाशे हस्तवाम इति । यस्तत्र तिर्यक्पथो भवति, न तस्मिन् संदेह इति कृत्वा नासावुपदिश्यते । एवमिहापि संदेहे नियमः । न चावयवषष्ठ्यादिषु संदेहः ॥

**( प्रदीपः ) हस्तदक्षिण इति** । हस्तौ दक्षिणौ यस्येति बहुव्रीहिः । भाष्यकारवचनात्सर्वनाम्नोऽपि परनिपातः ॥

**( उद्द्योतः ) दक्षिणो यस्येति** । दक्षिणो हस्तो यस्य सन्निहित इत्यर्थः ॥ **तिर्यक्पथः** । अनृजुमार्ग इत्यर्थः । पूर्वपश्चिमान्यतरदिशि गच्छतो दक्षिणोत्तरमार्ग इति यावत् ॥

**( तत्त्वालोकः )** भाष्ये—**लौकिक इति**—यत इत्यादिः। तमेवोपपादयति—**तद्यथेति। अवकाशे**—चतुष्पथे। **य इति**—किन्त्वित्यादिः। **तत्र**—मार्गे। **इहापि**—शास्त्रेऽपि।

प्रदीपे—नन्वेवं 'सर्वनामसंख्ययोरुपसंख्यानमि'ति वार्त्तिकेन सर्वनाम्नः पूर्वनिपात एव युक्त इत्यत आह—**भाष्यकारेति।** यथोत्तरं मुनीनां प्रामाण्यमिति भावः।

उद्द्योते—मार्गस्यानवयवत्वादाह—**दक्षिण इति।**

## ( समाधानान्तरभाष्यम् )

**अथवा—स्थाने अयोगा स्थानेयोगा ॥**

**किमिदमयोगेति ?।**

**अव्यक्तयोगा अयोगा।**

**( प्रदीपः ) अयोगेति।** योगमन्तरेण षष्ठ्या एवाऽभावाद्विशिष्टो योगो यस्या नास्तीति सामर्थ्यात्प्रतीयते ॥

**( उद्द्योतः ) विशिष्ट इति।** निर्णयविशिष्ट इत्यर्थः। अयमेव भाष्ये-व्यक्तशब्दस्यार्थः। अत्र पक्षे योगशब्दः कर्मव्युत्पत्त्या संबन्धिपरः। **योगवतीति** पक्षेऽप्येवमेव, स्थानरूपसंबन्धिनियमार्थत्वादस्य॥

**( तत्त्वालोकः )** भाष्ये—**अव्यक्तेति**—तथा च-अवयवषष्ठ्यादीनां व्यक्तयोगत्वात्तत्र न प्रकृतसूत्रस्य प्राप्तिरित्याशयः।

प्रदीपे—यद्यपि 'अविद्यमानपुत्रः अपुत्रः' इत्यत्रेव प्रकृतेऽपि 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति वार्त्तिकेन समस्यमानपूर्वपदवृत्त्युत्तरपदस्य ( व्यक्तशब्दस्य ) लोपे निष्पन्नेनायोगाशब्देन योऽर्थो लभ्यते तत्र न काचनानुपपत्तिः। तथापि तदाश्रयणे गौरवात् 'न योगो यस्याः सा अयोगे'ति व्युत्पत्तिमभिप्रेत्याह—**योगमिति। सामर्थ्यात्**—अयोगाशब्दस्य षष्ठीविशेषणत्वेन यदुपादानन्तत्सामर्थ्यात्।

उद्द्योते—अन्यवैशिष्ट्यासम्भवादाह-**निर्णयेति।** उभयत्र योगशब्दस्य कर्मव्युत्पत्त्या सम्बन्धिपरत्वेनाश्रयणे बीजमाह—**स्थानरूपेति। अस्य**—प्रकृतसूत्रस्य।

## ( समाधानान्तरभाष्यम् )

**अथवा—योगवती योगा ॥**

**का पुनर्योगवती ?।**

**यस्या बहवो योगाः ॥**

**कुत एतत् ?।**

**भूम्नि हि मतुब् भवति ॥**

**( प्रदीपः ) योगवतीति।** षष्ठ्या अवश्यंभावी योग इति भूम्नि सामर्थ्याद् मत्वर्थीयोऽकारः॥

**( तत्त्वालोकः )** भाष्ये—अर्शआदिगणस्याकृतिगणत्वेन योगशब्दस्य तदन्तर्गतत्वसम्भवाद् 'योगाः सन्त्यस्याः' इति व्युत्पत्तौ तस्मात् 'अर्शआदिभ्योऽच्' इति सूत्रेणाचि निष्पन्नं निर्दिशति—**योगेति। भूम्नीति**-बहुत्वे इत्यर्थः। बहोर्भाव इति विग्रहे बहुशब्दात् 'पृथ्वादिभ्य इमनिज्वा' इति सूत्रेणेमनिच्प्रत्यये 'बहोर्लोपो भू च बहोः' इति सूत्रेणेमन इकारलोपे बहोः भ्वादेशे च भूमन् शब्दः सिध्यति। **मतुबिति**—मतुबादिरित्यर्थः। अत एव प्रदीपे वक्ष्यति—**मत्वर्थीयोऽकार इति।** नन्वेवमकारस्योपादेयत्वे मतुप उपादानं न युक्तमिति चेन्न, विग्रहसूचकत्वेन प्राथम्येन वा तदुपादानस्य युक्तत्वात्।

प्रदीपे—**सामर्थ्यात्**—योगाशब्दस्य षष्ठीविशेषणत्वेन यदुपादानन्तत्सामर्थ्यात्। तथा च—अवयवषष्ठ्यादीनां बहुयोगवत्त्वाभावात्तत्र न प्रकृतसूत्रस्य प्राप्तिरिति भावः।

## ( ३२५ आक्षेपबाधकवार्तिकम् ॥ ४ ॥ )

# ॥❀॥ विशिष्टा वा षष्ठी स्थानेयोगा ॥❀॥

## ( भाष्यम् )

**अथवा—किंचिल्लिङ्गमासज्य वक्ष्यामि—इत्थंलिङ्गा षष्ठी स्थानेयोगा भवतीति ॥ न च तल्लिङ्गमवयवषष्ठ्यादिषु करिष्यते ॥**

**( प्रदीपः ) किंचिल्लिङ्गमिति।** कलादिकम् ॥

**( उद्द्योतः ) विशिष्टावेति** वार्तिकं व्याचष्टे—**अथवा किंचिदिति ॥**

**( तत्त्वालोकः )** भाष्ये—**करिष्यते इति**—एवञ्च प्रकृतसूत्रप्राप्तिविषयत्वेनाभिप्रेतायां षष्ठ्यामेव प्रकृतसूत्रं प्राप्नुयान्न त्ववयवषष्ठ्यादिष्वित्याशयः।

## ( आक्षेपभाष्यम् )

**यद्येवं, 'शास इदङ्हलोः' 'शा हौ' शासिग्रहणं कर्तव्यम्—स्थानेयोगार्थं लिङ्गमासङ्क्ष्यामीति ॥**

**( तत्त्वालोकः )** यदि सन्देहः-षष्ठ्याः स्थानेयोगत्वनियामकस्तर्हि—'शास इदङ्हलोरि'ति सूत्रे शास इत्यत्रत्यषष्ठ्या 'अनिदितामि'तिसूत्रतोऽनुवृत्तोपधापदसन्निधानेनावयवषष्ठीत्वनिर्णयात्सन्देहाभावेन स्थानेयोगत्वाभावेऽपि, 'शा हावि'ति सूत्रे ततोऽनुवृत्ते शास इत्यत्र षष्ठ्या उपधापदासन्निधानेनावयवषष्ठीत्वानिर्णयात्सन्देहेन स्थानेयोगत्वम्भवतीति तत्र शासिग्रहणं न कर्तव्यम्। यदि तु लिङ्गासङ्गं तस्याः स्थानेयोगत्वनियामकन्तर्हि—'शास इदङ्हलोरि'ति सूत्रे शास इत्यत्रत्यषष्ठ्या अवयवषष्ठीत्वाल्लिङ्गासञ्जनाभावे 'शा हावि'ति सूत्रे ततोऽनुवृत्ते शास इत्यत्र षष्ठ्याः स्थानेयोगत्वं न स्यादिति तत्र शासिग्रहणं कर्तव्यमित्याशयेनाह—**यदीति। एवमिति**—लिङ्गासङ्गं तस्याः स्थानेयोगत्वनियामकमित्यर्थः। तर्हीति शेषः। **'शास इदङ्हलोः' 'शा हा'विति**—'शास इदङ्हलोरि'ति सूत्रतः शास इत्यस्यानुवृत्त्या निर्वाहासम्भवात् 'शा हावि'ति सूत्रे इत्यर्थः। **लिङ्गमिति**—षष्ठ्यामित्यादिः।

## ( आक्षेपबाधकभाष्यम् )

**न कर्तव्यम्। यदेवादः पुरस्तादवयवषष्ठ्यर्थं प्रकृतम्, एतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥**

**कथम् ?**

**अधिकारो नाम त्रिप्रकारः।**

**कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति, यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति ॥**

**अपरोऽधिकारो यथा रज्ज्वा अयसा वा बद्धं काष्ठमनुकृष्यते तद्वदनुकृष्यते चकारेण ॥**

**अपरोऽधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योगे उपतिष्ठते ॥**

**तद्यदैष पक्षः—अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति। तदा हि यदेवादः पुरस्तादवयवषष्ठ्यर्थम्, एतदुत्तरत्रानुवृत्तं सत् स्थानेयोगार्थं भविष्यति ॥**

( प्रदीपः ) **अधिकारो नामेति ।** पारार्थ्यसाम्यात्परिभाषाऽप्यधिकार इत्युच्यते । **कश्चिदिति ।** परिभाषारूप इत्यर्थः ॥ **चकारेणेति ।** यथा **सहस्य स** इत्यविशेषेण **ग्रन्थान्ताधिके च** यादावनुकृष्यते ॥

( उद्द्योतः ) भाष्ये **कश्चिदेकदेशस्थ इति ।** इदं च यथोद्देशपक्षे स्पष्टमेव । कार्यकालेऽपि स्वविषयसर्वशास्त्रैकवाक्यत्वादेवमुक्तिः, पठितदेशस्थेनैव तत्र तत्र तद्बुद्धिजननाद् दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकम् । न तु तत्पक्षेऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशे गमनमस्तीति बोध्यम् ॥ पठितदेशस्थत्वमेव सर्वथा बोधयितुमेकदेशस्थ इत्युक्तम् ॥ **तस्यानिर्देशार्थ इति ।** अधिक्रियमाणस्यानुच्चारणार्थ इत्यर्थः । **यदेवाद इति ।** शब्दाधिकार आश्रयिष्यत इत्यर्थः ।

( तत्त्वालोकः ) भाष्ये—**यदेवेति**—यत इत्यादिः । **अदः**—शासिग्रहणम् । **पुरस्तात्**—'शास इदङ्हलोरि'ति सूत्रे । **एतत्**—तदेव शासिग्रहणम् । **उत्तरत्र**—'शा हौ'इति सूत्रे । **अधिकार इति**—यत इत्यादिः । **कश्चिदिति**—तत्रेत्यादिः । अधिकार इति शेषः । **प्रदीप इति**—एकदेशस्थ इत्यादिः । **अयसा**—लोहेन । **चकारेणेति**—स्वरितत्वप्रतिज्ञां विनापीति भावः । **तत्**—तत्र । **हि**र्वाक्यालङ्कारे ।

प्रदीपे **अविशेषेण**—स्वरितत्वप्रतिज्ञारूपविशेषमन्तरेणापि । **अनुकृष्यते इति**—चकारेणेत्यादिः ।

उद्द्योते—**इदञ्चेति**—एकदेशस्थत्वञ्चेत्यर्थः । परिभाषारूपाधिकारस्येत्यादिः । ननु कार्यकालपक्षे तस्य तत्तद्देशस्थत्वेनैकदेशस्थत्वाभावात् कथं सामान्यत एकदेशस्थत्वोक्तिरित्यत आह— **कार्यकालेऽपीति ।** तस्येति शेषः । **एवमुक्तिः**—सामान्यत एकदेशस्थत्वोक्तिः । **एवेति**—तेनेति शेषः । दण्डयादिमतं खण्डयति—**न त्विति**—**तत्पक्षे**—कार्यकालपक्षे । पर्यवसितार्थमाह—**पठितेति ।**

## ( आक्षेपभाष्यम् )

संप्रत्ययमात्रमेतद्भवति । नह्यनुच्चार्य शब्दं लिङ्गं शक्यमासङ्क्तुम् ॥

( प्रदीपः ) **संप्रत्ययमात्रमिति । स्वरि**तत्वप्रतिज्ञानादुत्तरेषु योगेषु तस्य शब्दस्याऽनुमानं भवतु लिङ्गासङ्गस्त्वनुच्चारितस्य कथं स्यादित्यर्थः ॥

( उद्द्योतः ) **अनुमानमिति ।** उच्चारित एव प्रत्यायक इत्युक्ति**प्रत्यक्षस्थ**भाष्यविरुद्धमिदम् । तस्माद्बोद्धुरनुमानपूर्वकमुच्चारणं तत्त्वाचार्यस्येत्यर्थः । शास्त्रप्रणयनकालिकतत्कृतलिङ्गासङ्ग एवैतच्छास्त्रप्रवृत्त्युपयोगी नान्यकृतोऽतिप्रसङ्गात् । पाणिनिना त्वनुच्चारणाच्छास्त्रप्रणयनकाले लिङ्गासङ्गः कर्तुमशक्य इति भावः ॥ भाष्ये-**संप्रत्ययमात्रमिति ।** स्वरितत्वबलात्स एवोत्तरत्रेति ज्ञानमात्रमाचार्यकृतमित्यर्थः ॥ **आसङ्क्तु**मित्यस्याचार्येणेति शेषः ॥

( तत्त्वालोकः ) प्रदीपे—नन्वनुच्चारितस्य शब्दस्य सम्प्रत्ययायोगात् सम्प्रत्ययं स्वीकृत्य तस्यानुच्चारितत्वोक्तिर्भाष्यकृतो न युक्तेत्यत आह—**स्वरितत्वेति । उत्तरेषु**—'शा हौ'त्यादिषु । **तस्य**—'शास इदङ्हलोरि'त्यादिषु पूर्वेषु योगेषु प्रकृतस्य 'शासः' इत्यादेः ।

उद्द्योते—इदं दूषयति—**उच्चारित इति । इदम्**—अनुमितेन प्रत्यायनम् । अतः प्रकारान्तरेण भाष्यं व्याचष्टे—**तस्मादिति ।** ननु बोद्धा पाणिनिना वा लिङ्गासङ्गः कुतो न कृत इत्यत आह—**शास्त्रेति । तत्कृतेति**—पाणिनिकृतेत्यर्थः । **एतच्छास्त्रेति**—प्रकृतसूत्रेत्यर्थः । एवं भाष्यस्य भावार्थमभिधाय अक्षरार्थमाह—**स्वरितत्वेति ।** ज्ञापकेति शेषः । **स एवोत्तरत्रेति**—'शास इदङ्हलोरि'ति पूर्वसूत्रे प्रकृत एव 'शासः' इति शब्दः 'शा हौ'इत्युत्तरसूत्रेऽनुवृत्त इत्यर्थः ।

## ( आक्षेपबाधकभाष्यम् )

एवं तर्ह्यादेशे तल्लिङ्गं करिष्यते, तत्प्रकृतिमास्कन्त्स्यति ॥

( प्रदीपः ) **एवं तर्हीति ।** आदेशे लिङ्गासङ्गस्तस्य च षष्ठ्यन्तात्तत्सम्बन्धिनः स्थानिनो लिङ्गकार्यं कल्पिष्यत इत्यर्थः

(तत्त्वालोकः) भाष्ये—**एवमिति**-स्वरितत्वविधानात् 'शास इदङ्हलोरि'ति पूर्वसूत्रे प्रकृत एव 'शासः' इति शब्दः 'शा हौ'इत्युत्तरसूत्रेऽनुवृत्त इति ज्ञानमात्रमाचार्येणानुच्चारणात्तत्र लिङ्गासङ्गः कर्तुमशक्य इत्यर्थः । यदीत्यादिः । **तल्लिङ्गम्**—षष्ठ्याः स्थानेयोगत्वनियामकं लिङ्गम् । **प्रकृतिम्**—स्थानिनम् ।

प्रदीपे—नन्वन्यत्र कृतलिङ्गासङ्गकार्यस्यान्यत्र स्वीकारेऽतिप्रसङ्गः स्यादित्यत आह—**तत्सम्बन्धिन इति ।**

## ( प्रत्याख्यानभाष्यम् )

यदि नियमः क्रियते, यत्रैका षष्ठी अनेकं च विशेष्यं तत्र न सिध्यति । अङ्गस्य हलः अणः संप्रसारणस्येति हलपि विशेष्योऽणपि विशेष्यः, संप्रसारणमपि विशेष्यम् ॥ असति पुनर्नियमे कामचारः—एकया षष्ठ्या अनेकं विशेषयितुम् । तद्यथा—देवदत्तस्य पुत्रः पाणिः कम्बल इति । तस्मान्नार्थो नियमेन ॥

( प्रदीपः ) **यदीति । अङ्गस्येति ।** स्थानषष्ठीत्वादिशेषणविशेष्यभावो न प्रकल्पत इत्यर्थः ॥ **देवदत्तस्येति ।** संबन्धसामान्यमुपक्रम्यते पश्चात्पदान्तरसन्निधानाद्विशेषावसायः ॥

( उद्द्योतः ) **यदि नियम इति ।** स्थाननिमित्तसंबन्धार्थकत्वनियम इत्यर्थः ॥ **अनेकं च विशेष्यं** प्रसङ्गरूपमवयवरूपं च । तत्राद्यं **शा हा**वित्यादौ । अन्त्यं तु भाष्ये एव वक्ष्यति ॥ **तत्र न सिध्यतीति ।** अवयवादिनिमित्तसंबन्धार्थकत्वं न सिध्यतीत्यर्थः ॥ **अणपीति । हल** इति सूत्रे तृतीये दीर्घव्यावृत्त्यर्थमण्ग्रहणस्यापि संबन्धादिति भावः ॥ तत्रा**लोऽन्त्य**स्येत्येकवाक्यतयाऽङ्गावयवाद्धलः परं यदङ्गान्त्यावयवाण्रूपसंप्रसारणं तस्य दीर्घ इति सूत्रार्थः । तत्राङ्गस्येत्यस्य **शा हा**वित्यादौ स्थानषष्ठीत्वे हलादिनिरूपितमवयवषष्ठीत्वं न सिध्येदित्यर्थः ॥ **स्थानेति ।** तत्वा**द्धल** इत्यादिनाऽवयववाचकेन विशेषणविशेष्यभावो न स्यादित्यर्थः ॥ **विशेषावसाय इति ।** तत्तदन्वय्यर्थकपदकल्पनयेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**नियमः क्रियते इति**—प्रकृतसूत्रेण षष्ठ्या इत्यादिः । तर्हीति शेषः । 'हलः' इति सूत्रे 'अङ्गस्य' 'सम्प्रसारणस्य' इति सूत्रयोः,'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इति सूत्राद् 'दीर्घोऽणः' इति भागस्य च सम्बन्धमभिप्रेत्य निर्दिशति—**अङ्गस्येति । इदं** विशेषणम् ।

प्रदीपे—**सम्बन्धेति**—प्रथममित्यादिः । **विशेषावसायः**—सम्बन्धविशेषनिश्चयः ।

उद्द्योते—**वक्ष्यतीति**—'हलः' इत्यादिनेत्यादिः । **ननु** तत्राणोऽनुवृत्तौ न फलमिति भाष्यमसङ्गतमित्यत आह—**हल इतीति । तृतीये इति**—'त्रेः सम्प्रसारणञ्चे'ति निष्पन्ने तृतीयशब्दे **इत्यर्थः ।** सम्प्रसारणस्य ऋकारस्येति शेषः । नन्वेवमपि 'अङ्गस्ये'त्यस्यावृत्त्या

तदन्तविधिना च 'अङ्गावयवाद्धलः परं यदण्रूपसम्प्रसारणं तदन्ताङ्गस्य दीर्घः' इति सूत्रार्थे अण्सम्प्रसारणयोर्विशेषणत्वाद् भाष्यासङ्गतिरित्यत आह—**तत्रेति**। अण्सम्बन्धे सतीत्यर्थः। **तत्र**—'हलः' इति सूत्रे। **तत्त्वात्**—'शा हाविं'त्यादौ स्थानषष्ठीत्वात्। तथा च प्रकृतसूत्रं न कर्तव्यमिति भावः।

**( उक्ताक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम्—एकशतं षष्ठ्यर्थाः, यावन्तो वा सन्ति। ते सर्वे षष्ठ्यामुच्चारितायां प्राप्नुवन्तीति ॥**

**( तत्त्वालोकः )** प्रकृतसूत्राभावे याऽऽपत्तिर्दर्शिता तां स्मारयति—**ननु चेति**।

**( आक्षेपबाधकभाष्यम् )**

**नैष दोषः। यद्यपि लोके बहवोऽभिसंबन्धा आर्था यौना मौखाः स्रौवाश्चेति। शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति—अन्यदतः स्थानात् ॥**

**( उद्द्योतः ) आर्थाः** स्वस्वामित्वादयः। **यौनाः** पितृत्वादयः। **मौखा** गुरुशिष्यभावादयः। **स्रौवाः** ऋत्विक्त्वादयः॥

**( तत्त्वालोकः )** भाष्ये—तां निराकरोति—**नैष इति**। **अभिसम्बन्धः**—अभिसम्बन्धनिरूपकः। एवमग्रेऽपि। अतः पदं विवृणोति—**स्थानादिति**।

**( आक्षेपसाधकभाष्यम् )**

**शब्दस्यापि शब्देनानन्तरादयोऽभिसंबन्धाः। अस्तेर्भूर्वतीति संदेहः-स्थाने अनन्तरे समीपे इति ॥**

**( उद्द्योतः ) स्थानेऽनन्तरे** इत्यादि स्थानादिरूपसंबन्धिसन्देह इत्यर्थः॥ **आनन्तर्य**मव्यवधानम्॥ **सामीप्यं** साधारणम्॥

**( तत्त्वालोकः )** भाष्ये—**अनन्तरे**—अनन्तरे वा। **समीपे**—समीपे वा। अन्यथाऽत्र सन्देहत्वस्यानुपपत्तेः।

उद्द्योते—**सम्बन्धीति**-सम्बन्धनिरूपकेत्यर्थः। पौनरुक्त्यं निराचष्टे—**आनन्तर्यमिति**। **साधारणम्**-व्यवहिताव्यवहितसाधारणम्।

**( आक्षेपबाधकभाष्यम् )**

**संदेहमात्रमेतद्भवति। सर्वसंदेहेषु चेदमुपतिष्ठते—'व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम्' इति। स्थान इति व्याख्यास्यामः ॥**

**( प्रदीपः ) स्थान इति**। अन्तरङ्गत्वाछक्ष्यापेक्षणाद्वेति भावः॥

**( उद्द्योतः ) अन्तरङ्गत्वादिति**। स्थानशब्दोऽर्थवाची प्रसङ्गवाची। वोभयथाप्यन्तरङ्गत्वम् **स्थानिवदादेश** इति ज्ञापकमप्यत्र बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**एतत्**—'अस्तेः-स्थाने अनन्तरे वा समीपे वा भूर्भवती'त्येतत्। **स्थान इति**—अतस्तत्रेत्यादिः।

प्रदीपे—स्थाने-इति व्याख्याने बीजमाह—**अन्तरङ्गत्वादिति**।

उद्द्योते—अन्तरङ्गत्वे बीजमाह—**स्थानेति**। आद्येऽभिधेयस्य शब्दप्रयोगहेतुत्वेनादौ बुद्ध्यारूढत्वाद्, अन्त्ये प्रसक्तस्यैवानन्तर्यादिसम्भवेन प्रसङ्गस्यादौ बुद्धिसन्निधानाद्वाऽऽह-**उभयथाऽपीति**। तस्मिन् व्याख्याने बीजान्तरमाह- **स्थानीति**। **अत्र**-स्थान इति व्याख्याने।

**( निर्दिश्यमानपरिभाषाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**न तर्हीदानीमयं योगो वक्तव्यः ॥**

**( समाधानभाष्यम् )**

**वक्तव्यश्च ॥**

**किं प्रयोजनम् ? ।**

**षष्ठ्यन्तं स्थानेन यथा युज्येत यतः षष्ठ्युच्चारिता ॥**

**किं कृतं भवति ? ।**

**'निर्दिश्यमानस्यादेशा भवन्ति' इत्येषा परिभाषा न कर्तव्या भवति ॥ षष्ठी स्थानेयोगा ॥ ४९ ॥**

**( प्रदीपः ) यतः षष्ठीति**। तेन **पादः पदि**त्यस्याऽयमर्थः—पादन्तस्याङ्गस्य योऽवयवः पाच्छब्दः सूत्रे षष्ठ्या निर्दिष्टस्तस्य पच्छब्द आदेशो भवति, न तु प्रतीयमानस्य पादन्तस्य। अस्यैव सूत्रस्य **निर्दिश्यमानस्यादेशा भवन्तीत्ययमर्थः**। षष्ठीति षष्ठ्यन्तं गृह्यते। तेन षष्ठ्यन्तमेव निर्दिश्यमानं स्थानेन युज्यते, न तु प्रतीयमानमित्यर्थः। **अलोऽन्त्यस्यादेः परस्येत्ये**तत्तु वचनसामर्थ्यान्न बाध्यते॥ ४९॥

**( उद्द्योतः ) निर्दिश्यमानमिति**। उच्चार्यमाणमित्यर्थः। निर्दिश्यमानं षष्ठ्यन्तमेवेत्यन्वयः। निर्दिश्यमानपदस्य चाध्याहार इति भावः॥ **न बाध्यते इति**। किंतु स्वव्यवस्थापकत्वेनाश्रीयत इत्यर्थः। एव**मनेकाल्**सूत्रे सर्वोऽप्येतत्परिभाषाबोधित एव गृह्यते। **पद्दन्न** इत्यादावपि आदेशैः पाणिनिकृतस्थान्युच्चारणानुमानाद्व्यवस्थार्थत्वाद्वा न दोषः॥ यत्त्व**लोन्त्यस्यादेः परस्ये**त्यम् एतद्बाधकाविति। तत्तु उदस्थादिति **पादःपदि**ति सूत्रस्थभाष्यविरुद्धम्। व्यवस्थापकत्वे संभवति बाधकत्वकल्पनानौचित्यग्रस्तं च॥ ४९॥

**( तत्त्वालोकः )** भाष्ये—**षष्ठ्यन्तमिति**—तदित्यादिः। परसमीपबोधकेनान्तशब्देन षष्ठी अन्तो यस्येति व्युत्पत्तौ अत**द्**गुणसंविज्ञानो बहुव्रीहिः। तथा च-सा षष्ठी प्रकृतिरित्यर्थः। सा केत्याकांक्षायामाह—**यत इति**। **उच्चारिता**—विहिता। **किं कृतमिति**—तेनेत्यादिः। **नेति**—अपूर्वा नेत्यर्थः।

प्रदीपे—**अस्यैव**—'षष्ठी स्थानेयोगे'त्यस्यैव। 'षष्ठ्यन्त'मिति भाष्यमनुसृत्याह—**षष्ठ्यन्तं गृह्यते-इति**। **बाध्यते-इति**—प्रकृतसूत्रेणान्तरङ्गत्वादित्यादिः।

उद्द्योते—कैयटोक्तिशेषमाह—**किन्त्विति**। **आश्रीयत इति**—तदुभयमित्यादिः। स्वस्वनिमित्तसन्निधापितयोस्तयोरनया परिभाषया समावेश एवेति भावः। नन्वेवमपि 'अनेकालि'ति सूत्रे सर्वपदेन 'येन विधि' 'यदागमा' इत्युभयबोधितस्थानिनोर्ग्रहणात्, प्रकृतसूत्रेण च तदुभयबोधितस्थानित्वाभावबोधनादनेन सह तस्य विरोधाद् बाध्यबाधकभावापत्त्या परत्वाद् 'अनेकालि'त्यस्य प्रवृत्त्या सुपदो निर्जरसावित्याद्यसिद्धिरित्यत आह—**एवमिति**। तद्वदित्यर्थः। **एवेन**—तदुभयबोधितव्यवच्छेदः। तथाच 'अनेकालि'त्यनेनापि प्रकृतसूत्रस्य समावेश एवेति भावः। नन्वेवं 'पद्दन्न' इत्यादौ स्थानिनामनिर्देशात् प्रकृतसूत्राप्रवृत्त्या तेषां तत्रत्य**सर्व**पदेनाग्रहणात् पदादीनामन्त्यादेशत्वापत्तिरित्यत आह-**पद्दन्न इत्यादाविति**। ननु तथा सति स्थानिनो निर्दिशेदित्यत आह—**व्यवस्थेति**। प्रयोगेत्यादिः। शब्दकौस्तुभकारोक्तिं खण्डयति—**यत्त्विति**। परत्वादिति शेषः। सर्वादेशविषये एतस्य चारितार्थ्यम्, तयोस्तु कृते चारितार्थ्यमित्याशयः। **उदस्थादितीति**—अत्र लक्ष्ये 'आदेरि'ति सूत्रविषये इत्यर्थः। एतत्सूत्रारपरेत्युत्तरस्यादिः। किञ्च तत्सूत्रे**ऽलोन्त्य**विषये एतत्सूत्रारपरभाष्यविरुद्धमित्यपि बोध्यम्। दोषान्तरमाह—**व्यवस्थेति**।

---

( ४४ अन्तरतमपरिभाषासूत्रम् ॥ १ । १ । ७ आ० ६ )

# स्थानेऽन्तरतमः ॥ १ । १ । ५० ॥

( सूत्रोदाहरणाधिकरणम् )

( आक्षेपभाष्यम् )

किमुदाहरणम् ? ॥

**( प्रदीपः ) स्थाने ॥ ५० ॥ किमुदाहरणमिति ।** क्वचिल्लक्षणान्तरेणेष्टं सिद्धमिति प्रश्नः ॥

**( उद्द्योतः ) स्थानेन्त ॥ ५० ॥ इति प्रश्न इति ।** एवं च परोक्तोदाहरणदूषणायायं प्रश्नो, न तूदाहरणासम्भवकृत इति भावः ।

**( तत्त्वालोकः )** प्रदीपे—**क्वचित्—**सुद्ध्युपास्य इत्यादौ **लक्षणान्तरेण—**यथासंख्यसूत्रेण । **इति—**इति कारणात् ।

उद्द्योते—**एवञ्च—**क्वचिल्लक्षणान्तरेणेष्टसिद्धौ च । **परोक्तोदाहरणदूषणाय—**'सुद्ध्युपास्य इत्यादि प्रकृतसूत्रस्यैवोदाहरणम्, न तु यथासंख्यसूत्रस्य, तथा सति ऋकारेण लृकारेण च परस्परस्य ग्रहणाद् लाकृतौ लृकारे रेफस्य धात्रंशे च ऋकारे लकारस्य प्रसङ्गादि'ति परोक्तस्य खण्डनाय । **अयम्—**'किमुदाहरणमि'त्ययम् ।

( समाधानभाष्यम् )

'इको यणचि' दध्यत्र मध्वत्र । तालुस्थानस्य तालुस्थानः, ओष्ठस्थानस्य ओष्ठस्थानो यथा स्यादिति ।

**( प्रदीपः ) इको यणचि दध्यत्रेति ।** अस्य सूत्रस्य लक्षणमप्युदाहरणं प्रयोगोऽपीत्युभयोपन्यासः ॥ इको ह्रस्वादिभेदात् षट्षष्टिर्यणस्तु सप्तेति वैषम्यात्संख्यातानुदेशो न सिध्यतीत्यर्थः ॥

**( उद्द्योतः )** उदाहरणप्रश्ने **इको यणची**त्यस्योल्लेखो व्यर्थोत आह—**अस्य सूत्रस्येति ।** सामान्यतो ज्ञातस्य विशेषाकारेण यत्र प्रतिपत्तिस्त**दुदाहरण**मिति भावः ॥ **षट्षष्टिरिति ।** लृवर्णस्य दीर्घाभावात् । दीर्घप्लुतऋकारस्य प्लुतलृकारस्य चानुनासिकस्यादर्शनादिदं चिन्त्यम् ॥ **सप्तेति ।** रेफस्य सानुनासिक्यस्याभावादिति भावः॥ इदं चिन्त्यम् । **अणुदित्**सूत्रेऽण्ग्रहणसामर्थ्येन यणंशे गुणभेदकत्वस्यैव न्याय्यत्वेन विधीयमानत्वेन च तेषामग्रहणात् । तत्प्रत्याख्यानेऽपि आरम्भप्रत्याख्यानयोः फलाभेदाय भेदकत्वस्यैवाश्रयणेन तेषामग्रहणम् । अत एव मतोर्मस्य नानुनासिको वकार इति ॥

**( तत्त्वालोकः )** प्रदीपे—**अस्य—**'स्थानेऽन्तरतमः' इत्यस्य । **लक्षणमपि—**'इको यणची'ति सूत्रमपि । **प्रयोगोऽपीति—**दध्यत्रेत्यादिप्रयोगोऽपीत्यर्थः । तथेत्यादिः । ननु यथासंख्यसूत्रेणैव तत्र कुतो नेष्टसिद्धिरित्यत आह—**इक इति । आदिना—**दीर्घप्लुतयोः, उदात्तानुदात्तस्वरितानाम्, सानुनासिकनिरनुनासिकयोश्च परिग्रहः । सानुनासिकनिरनुनासिकभेदादाह—**सप्तेति ।**

उद्द्योते—**उदाहरणेति—**नन्वित्यादिः । उदाहरणं लक्षयति—**सामान्यत इति ।** ननु द्वासप्ततिरिति वक्तव्ये षट्षष्टिरिति कुत उक्तमित्यत आह—**लृवर्णस्येति ।** कैयटोक्तं खण्डयति—**दीर्घप्लुतेति ।** अत्र समाहारद्वन्द्वः । **इदम्—**षट्षष्टित्वम् । नन्वष्टेति वक्तव्ये सप्तेति कुत उक्तमित्यत आह—**रेफस्येति ।** पुनः कैयटोक्तं दूषयति—**इदमिति ।** सप्तत्वमपीत्यर्थः । सूत्रकारमतेनाह—**अणग्रहणेति ।** प्रकृताभिप्रायेणाह—**यणंश इति । तेषाम्—**सानुनासिकयणाम् । एवमग्रेऽपि । भाष्यकारमतेनाह—**तदिति । अणग्रहणेत्यर्थः ।** '**भेदकत्वस्यैवेति—**गुणानामित्यादिः । किञ्च गुणानाममेदकत्वस्याप्याश्रयणे 'अप्रत्यय' इति निषेधात्तेषामग्रहणमित्यपि बोध्यम् । **अत एव—**सर्वथा तेषामग्रहणादेव ।

( समाधानबाधकभाष्यम् )

नैतदस्ति । संख्यातानुदेशेनाप्येतत्सिद्धम् ॥

**( प्रदीपः ) नैतदस्तीति ।** स्थानिनामादेशानां शब्दतः साम्यमस्तीति भावः ॥ वस्तुतस्तु इत्यादौ लकारोऽपि लृकारस्यादेशो दृश्यत इति लृकारस्य स्थानित्वं भावो नाशङ्कनीयः ॥

**( उद्द्योतः ) सङ्ख्यातानुदेशः ।** क्रमेणान्वयः । **शब्दत इति ।** अयं भावः—यथा **स्यतासी लृलुटो**रित्यत्रार्थवैषम्येऽपि बोधकशब्दसाम्याद्यथासङ्ख्यम्, तथा इक्पदयण्पदाभ्यामनेकोपस्थितावपि बोधकशब्दसाम्यमस्त्येवेति न दोष इति ॥ न च ऋकारे लकारस्य लृकारे रेफस्य चापत्तिः । ऋदिॣदितोः भेदेन निर्देशात् सावर्ण्यानित्यत्वेनात्र ऋलृभ्यां न लृकारऋकारयोर्ग्रहणमिति नोक्तदोष इति तदाशयात् ॥ ननु लृकारोदाहरणाभावात्कथं यथासङ्ख्यमत आह—**वस्त्विति ।** वस्तुतः प्रतिपत्तिकालिकं सङ्ख्यासाम्यमेव यथासङ्ख्यप्रवृत्तौ नियामकम्, न तु लक्ष्यसंस्कारकालिकमपीति प्रत्याहाराह्निके भाष्ये स्पष्टत्वान्नायं दोष इति बोध्यम् ॥ अननुनासिकस्थाने सानुनासिक्यार्थमपि न तत्रैतदुपयोगः । विधेयेऽपि गुणभेदकपक्षस्यैव सत्त्वेन तत्र तदप्राप्तेः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्तीति—**उदाहरणमित्यादिः । **संख्यातेति—**यत इत्यादिः ।

उद्द्योते—**अनेकेति—**पश्चादित्यादिः । **बोधकशब्दसाम्यम्—**ताभ्यामप्रथमनुपस्थिता ये वर्णास्तेषामप्रत्येकं शक्ता ये शब्दास्तेषां चतुष्ट्वेन साम्यम् । अत एवाह—**न चेति । ऋलभ्याम्** लकारर्कारयोर्ग्रहणादिति शेषः । **निर्देशादिति—**ज्ञापितेनेति शेषः । **अत्र—**'इको यणची'त्यत्र । **तदाशयात्—**'शब्दत' इति कैयटोक्ताशयात् । इयं शङ्कैव न युक्तेत्याह—**वस्तुत इति ।** अत एव 'इग्यणः' 'एच इक्' इत्यादौ लक्ष्ये स्थान्यादेशभावेऽपि न यथासंख्यबाध इति भावः । **तत्र—**दध्यत्रेत्यादौ । **एतदिति—**'स्थानेऽन्तरतम' इति सूत्रेत्यर्थः । **तत्र—**अननुनासिकस्थाने । **तदिति—**सानुनासिकेत्यर्थः ।

( उदाहरणप्रदर्शकभाष्यम् )

इदं तर्हि—'तस्थस्थमिपां तांतंतामः' इति । एकार्थस्यैकार्थः, द्व्यर्थस्य द्व्यर्थो, बह्वर्थस्य बह्वर्थो, यथा स्यादिति ।

**( प्रदीपः ) एकार्थस्येति ।** सादृश्यहेतुधर्मोपलक्षणमेतत् । तेन प्रत्यक्त्वादयोऽपि धर्मा गृह्यन्ते ॥

**( उद्द्योतः )** आदेशानां तत्स्थानापन्नत्वेन न तदर्थत्वम्, किन्तु स्वभावत एव, शब्दार्थसंबन्धानां नित्यत्वादित्याशयेन भाष्ये—**एकार्थ इति ।** तावन्मात्रोक्तौ तसस्तमपि प्राप्नोति थसस्तामपीत्यत आह—**सादृश्येति ।** उत्तमे **प्रत्यक्त्व**रूपोऽहंकारास्पदचेतनधर्मः, मध्यमे—अहंकारानास्पदचेतनधर्मः **पराक्त्वम्,** प्रथमे त्वनियतम् ॥

**( तत्त्वालोकः )** प्रदीपे—**आदिना—**पराक्त्वादिपरिग्रहः ।

उद्द्योते—नन्वादेशानां स्थानिसम्बन्धात्प्राक् न तदर्थत्वमिति भाष्यासङ्गतिरित्यत आह—**आदेशानामिति । तदिति—**स्थानीत्यर्थः । स्वभावत एवेत्यत्र हेतुमाह—**शब्दार्थेति । तावदिति—**नन्वित्यादिः ।

( उदाहरणबाधकभाष्यम् )

ननु च एतदपि संख्यातानुदेशेनैव सिद्धम् ।

( उदाहरणान्तरभाष्यम् )

इदं तर्हि—'अकः सवर्णे दीर्घः' इति दण्डाग्रम्, क्षुपाग्रम्, दधीन्द्रः, मधूष्ट्रः । कण्ठस्थानयोः कण्ठस्थानस्तालुस्थानयोस्तालुस्थान ओष्ठस्थानयोरोष्ठस्थानो यथा स्यात् ॥

( तत्त्वालोकः ) किमर्थमित्यत आह—**कण्ठेति।** एवम्पूर्वत्रापि। **स्यात्—**स्यादिति । एवमग्रेऽपि ।

( यत्रानेकविधपरिभाषासाधनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ स्थान इति वर्तमाने पुनः स्थानग्रहणं किमर्थम् ॥

( तत्त्वालोकः ) **अथेति—**पूर्वसूत्रात्प्रकृतसूत्रे इति शेषः । **वर्तमाने—**अनुवर्त्तमाने ।

( समाधानभाष्यम् )

यत्रानेकमान्तर्यं तत्र स्थानत एवान्तर्यं बलीयो यथा स्यात् ॥

किं पुनस्तत् ? ॥

चेता स्तोता । प्रमाणतोऽकारो गुणः प्राप्नोति, स्थानत एकारौकारौ । पुनः स्थानग्रहणादेकारौकारौ भवतः ॥

( प्रदीपः ) **यत्रानेकमिति ।** स्थानग्रहणेऽनुवर्तमाने वाक्यभेदः क्रियते, स्थानेऽन्तरतमो भवति, यत्र चानेकमान्तर्यमस्ति तत्र स्थानकृतमेवान्तर्यमाश्रीयत इति । वाक्यभेदस्य च तमग्रहणमेव लिङ्गम् । स्थानकृत एव हि सादृश्ये गृह्यमाणे सादृश्यान्तरपरित्यागात्तमग्रहणमनर्थकमेव स्यात् ॥

( उद्द्योतः ) भाष्ये—**वर्तमाने इति ।** एकदेशे स्वरितत्वप्रतिज्ञानादिति भावः ॥ **वाक्यभेद इति ।** अनुवृत्तप्रसङ्गवाचिस्थानशब्देनैकं वाक्यम्, ताल्वादिवाचीहत्यस्थानशब्देनापरम् । अत्र च **स्थाने** इति तृतीयार्थे सप्तमीति भावः ॥ **तमग्रहणमनर्थकमिति ।** प्रसङ्गे स्थानकृतान्तर्यवानित्यर्थेनैव सिद्धे स्थाने-ग्रहणं न वाक्यभेदे मानमितीदमुक्तम् । तथैकवाक्यतायां तु स्थानकृतान्तर्याभावे तद्धसतीत्यादावव्यवस्थैव स्यात् । वाक्यभेदे तु सादृश्यान्तरमादाय तत्र व्यवस्थेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**अनेकम्—**अनेकप्रकारकम् । **आन्तर्यम्—सादृश्यम्** । अस्य 'स्थान्यादेशभावनियमनाय प्रसक्तमि'ति शेषः । **स्थानतः—**स्थानघटितधर्मेण ।

प्रदीपे—'स्थानेऽन्तरतमः' इत्यत्र प्रथमम् 'अन्तरतमः' इति, पश्चाच्च **'स्थाने' इति** पठितव्यम् । तथा च—अनुवृत्त—**'स्थाने' इति** सहितमाद्यम् प्रथमवाक्यम्, तथा—अनुवृत्त-'अन्तरतमः' इति सहितमन्तिमं द्वितीयवाक्यमित्याशयेनाह—**वाक्यभेद इति ।** 'स्थानेऽन्तरतमः' इत्याकारकं वाक्यद्वयमित्यर्थः । तत्र प्रथमम्प्रथमस्यार्थमाह—**स्थान इति ।** ततः प्रथमेन सादृश्यमात्रस्य स्थान्यादेशभावनियामकत्वे प्राप्ते द्वितीयस्यार्थमाह—**यत्र चेति ।** एवञ्च-**द्वितीयस्य** नियमार्थत्वेन 'यत्रानेकविधमि'ति परिभाषा फलिता । **एवेन—**प्रमाणाविकृतव्यवच्छेदः । ननु वाक्यभेदे किं मानमित्यत आह—**वाक्येति । एवेन** स्थानेग्रहणव्यवच्छेदः । **स्थानेति—**अनुवृत्त 'स्थाने' इत्यस्य प्रकृतसूत्रेणैकवाक्यत्वात्—प्रसङ्गे इत्यादिः ।

उद्द्योते – **एकदेशे—**'स्थानेयोगे'त्यस्यैकदेशे 'स्थाने' इत्यस्मिन्। कैयटोक्तक्रमेणाह— **अनुवृत्तेति । एकम्—**प्रथमम् । **अपरम्—**द्वितीयम् । **'अन्तरतमः'** इत्यस्य वाक्यद्वये सम्बन्ध इत्याशयः । ननु स्थाने इत्यत्र सप्तमीसत्त्वात् तस्य स्थानकृतमित्यर्थः कथमित्यत आह—**अत्र चेति ।** द्वितीयवाक्ये चेत्यर्थः । **ननु** यथाश्रुतभाष्यतः स्थानेग्रहणस्यैव वाक्यभेदज्ञापकत्वं न तु तमग्रहणस्येति कैयटेन कथं तस्य तत्त्वमुक्तमित्यत आह—**प्रसङ्गे इति ।** एकवाक्यतयेति भावः । **इदम्—**तमग्रहणस्य वाक्यभेदज्ञापकत्वम् । नन्वेकवाक्यतयेष्टसिद्धौ किमर्थो वाक्यभेद इत्यत आह—**तथेति ।** उक्तरीत्येत्यर्थः । **सादृश्यान्तरम्—**गुणकृतसादृश्यम् । ननु स्थानकृतसादृश्येऽतिशयलाभ आवश्यकः, अन्यथा लाकृतिरित्यादौ लृकारस्येव वकारस्यापि दन्तस्थानजन्यत्वरूपेण स्थानघटितधर्मेण लृकारसदृशत्वात् तस्य स्थाने लृकार इव कदाचिद्वकारोऽपि प्रसज्येत । तत्रातिशयलाभे तु दन्तस्थानमात्रजन्यत्वेन लृकारस्यातिशयसादृश्यमापन्नो लृकार एव तस्य स्थाने भवति, न त्वोष्ठस्थानजन्यत्वस्यापि सत्त्वेन दन्तस्थानमात्रजन्यत्वाभाववान् वकारोऽपि कदाचिदिति तमग्रहणेन तत्रातिशय एव लभ्यते, न तु वाक्यभेद इति चेन्न, तथा सति समानं स्थानं यस्य स इत्यर्थकेन सस्थान इत्येतावन्मात्रेण निर्वाहे अन्तरग्रहणसामर्थ्यात्सस्थानतम इत्यस्य लाभसम्भवेन तदर्थं तमग्रहणस्यानावश्यकत्वात् तेन वाक्यभेदस्यैव लाभात् । तथा च—यत्र स्थानकृतमपि सादृश्यन्तत्र परवाक्येन गृह्यमाणे स्थानकृतमात्रसादृश्ये, यत्र च स्थानकृतसादृश्याभावस्तत्र पूर्ववाक्येन गृह्यमाणेऽर्थगुणप्रमाणकृतान्यतमसादृश्येऽतिशयलाभार्थं तमग्रहणमिति भावः ।

( तमग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ तमग्रहणं किमर्थम् ? ॥

( समाधानभाष्यम् )

'झयो होऽन्यतरस्याम्' इत्यत्र 'सोष्मणः सोष्माणः' इति द्वितीयाः प्रसक्ताः, 'नादवतो नादवन्तः' इति तृतीयाः प्रसक्ताः ॥ तमग्रहणाद्ये सोष्माणो नादवन्तश्च ते भवन्ति चतुर्थाः—वाग्घसति त्रिष्टुब्भसति ॥

( प्रदीपः ) **सोष्मण इति ।** ऊष्मत्वगुणयुक्तस्येत्यर्थः ॥ **तमग्रहणादिति ।** ईषत्सदृशेऽपि लोके सदृशव्यवहारदर्शनादिह तमग्रहणं कृतम् ॥

( उद्द्योतः ) **ऊष्मत्वेति ॥** सदृशशब्दप्रयोगोपपत्तये धर्मपर ऊष्मशब्द इति भावः ॥

( तत्त्वालोकः ) भाष्ये—**द्वितीया इति—**वर्गद्वितीयाः खछठथफा इत्यर्थः । हस्येत्यादिः । एवमग्रेऽपि । **भवन्तीति—**सोष्मणो नादवतश्चेत्यादिः ।

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं पुनरिदमुच्यते ? ॥

(प्रदीपः) **किमर्थमिति ।** यदीदं नोच्येत तदा किं स्यादिति प्रश्नः ।

(उद्द्योतः) नन्वनन्यथासिद्धोदाहरणरूपप्रयोजनोक्तेः पुनः प्रश्नानुपपत्तिरत आह—यदीति । सूत्राभावे किमनिष्टमिति प्रश्नतात्पर्यमिति भावः ॥

(तत्त्वालोकः) भाष्ये—इदम्—'स्थानेऽन्तरतम' इति सूत्रम्। एवम्प्रदीपेऽपि ।

उद्द्योते—अनन्यथासिद्धेति—प्रकृतसूत्रस्येत्यादिः । प्रश्नेति—प्रयोजनेत्यादिः । सूत्रेति—प्रकृतसूत्रेत्यर्थः । एवञ्चात्रार्थशब्दो व्यावर्त्यप्रयोजनपर एव, न तु साध्यप्रयोजनपर इत्याशयः ।

( ३२६ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च सर्वप्रसङ्गस्तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम् ॥ * ॥

( भाष्यम् )

**स्थान्येकत्वेन निर्दिश्यते—अक इति । अनेकश्च पुनरादेशः प्रतिनिर्दिश्यते—दीर्घ इति । 'स्थानिन एकत्वनिर्देशादनेकादेशनिर्देशाच्च' 'सर्वप्रसङ्गः' सर्वे सर्वत्र प्राप्नुवन्ति । इष्यते चान्तरतमा एव स्युरिति । तच्चान्तरेण यत्नं न सिध्यति । तस्मात् स्थानेऽन्तरतमवचनं नियमार्थम् । एवमर्थमिदमुच्यते ॥**

( प्रदीपः ) **स्थानिन इति ।** यद्यपि 'अकः' इत्यनेन स्थानिनो बहव उपात्तास्तथापि प्रयोगे एकैकः स्थानी, तस्य पर्यायेण बहवो दीर्घा आदेशाः प्राप्नुवन्तीत्यर्थः ॥

( उद्द्योतः ) **बहव इति ।** एवञ्चैकत्वनिर्देशादित्यनुपपन्नमिति भावः ॥ **प्रयोग इति ।** अक इत्येतद्बोध्यः स्थानी प्रयोगे एकत्वविशिष्ट उच्चार्यत इति भाष्याक्षरार्थः ॥ यद्यपि **पूर्वपरयो**रित्युक्तेरेकः स्थानीत्ययुक्तम्, तथापि तत्समुदायाभिप्रायेणेदम् ॥ युगपदेककर्तृकं सर्वोच्चारणमशक्यमत आह—**पर्यायेणेति ॥**

( तत्त्वालोकः ) भाष्ये—**तच्च**—अन्तरतममात्रभवनञ्च । **नियमेति ।** आदेशेत्यादिः । **एवमर्थम्**—आदेशनियमार्थम् । **इदम्**—प्रकृतसूत्रम् ।

उद्द्योते—**एवञ्च**—बहुस्थान्युपादाने च । **एकत्वेति**—स्थानिन इत्यादिः । **अक इति**—तथाचेत्यादिः । **तदिति**—पूर्वपरेत्यर्थः । **इदम्**—एकः स्थानीति । **युगपदिति**—नन्वित्यादिः ।

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ॥**

( अथ प्रथमान्तपाठनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**यथा पुनरियमन्तरतमनिर्वृत्तिः, सा किं प्रकृतितो भवति—स्थानिन्यन्तरतमे षष्ठीति । आहोस्विदादेशतः-स्थाने प्राप्यमाणानामन्तरतम आदेशो भवतीति॥**

**कुतः पुनरियं विचारणा ? ॥**

**उभयथा हि तुल्या संहिता 'स्थानेऽन्तरतम उरण् रपरः' इति ॥**

( प्रदीपः ) **यथा पुनरिति ।** येन प्रकारेण संहितापाठलक्षणेनेत्यर्थः ॥ प्रतिसूत्रं तु विच्छिद्य पाठे संशयाभावः । **पदप्रकृतिः संहितेति** संहिताया एव नित्यत्वात्ततः पदापोद्धारे क्रियमाणेऽन्तरतमशब्दः किं सप्तम्यन्तोऽपोद्ध्रियते अथ प्रथमान्त इति प्रश्नः ॥ तत्र सप्तम्यन्तपक्षे **षष्ठी**ति वर्ततेऽन्तरतमे च आदेशस्य स्थानी तत्रैव षष्ठी, यत्रैव षष्ठी तत्रादेश इति प्रकृतिर्नियम्यते । प्रथमान्तपक्षे तु अन्तरतम आदेशो भवतीत्यादेशो नियम्यते

( उद्द्योतः ) **येन प्रकारेण संहितापाठलक्षणेनेति ।** अनेन संहितापाठ एव पूर्वं स्थित इत्युक्तम् ॥ अस्तु तर्हि विच्छिद्य पाठोऽत आह—**पदप्रकृतिरिति ।** षष्ठीतत्पुरुषः ॥ बहुव्रीहिरित्यन्ये । तत्प्रकृतग्रन्थाननुगुणम् ॥ भाष्ये—**सा किं प्रकृतित इति । सेतीय**मित्यस्य प्रतिनिर्देशः । इदंशब्दोऽपि यच्छब्दार्थः क्वचित् ॥ केचित्तु **यथा पुनरिति** येत्यर्थेऽव्ययसमुदाय इत्याहुः ॥ अन्तरतमशब्दार्थस्य विशेषणत्वेन या प्रतिपत्तिः सा किं सौत्रस्थानशब्दस्य तिष्ठन्त्यस्मिन्नादेशा इत्यधिकरणव्युत्पत्त्याऽन्तरतमे स्थानिनीत्यर्थात् स्थानिनं प्रति, उतादेशं प्रतीत्यर्थः ॥ **षष्ठीति वर्तत इति ।** अन्तरतमेऽर्थादादेशस्य, स्थानिनि षष्ठी उपसंहर्तव्येत्यर्थः ॥ **यत्रैव षष्ठीत्यादि** तु पर्यवसितार्थकथनम् ॥

( तत्त्वालोकः ) भाष्ये—'स्थानेऽन्तरतम उरण् रपरः' इति संहितापाठः। तत्र 'अन्तरतम' इति यदि सप्तम्यन्तस्तर्हि प्रकृतसूत्रेस्थानपदं तिष्ठन्त्यस्मिन् ( आदेशाः ) इति व्युत्पत्त्या स्थानिपरम्, अन्तरतमपदार्थस्य प्रतियोग्याकांक्षायामुपस्थितत्वादादेशस्येति सम्बद्ध्यते, पूर्वसूत्राच्च षष्ठीत्यनुवर्त्तते । तथाच—आदेशस्य सदृशतमे स्थानिनि षष्ठी उपसंहर्तव्या ( षष्ठ्यर्थविश्रान्तिर्विधेया ) इत्यर्थः । एवञ्च—यत्र षष्ठी तत्रैवादेश इति नियमेन–आदेशानन्तरतमस्थानिव्यावृत्तिः सिद्ध्यति । यदि च प्रथमान्तस्तर्हि तस्य प्रतियोग्याकांक्षायामुपस्थितत्वात् स्थानिन इति सम्बद्ध्यते । तथाच—प्रसक्तेस्थानिनोऽन्तरतम आदेशो भवतीत्यर्थः । एवञ्च—स्थान्यनन्तरतमादेशव्यवच्छेदः सिद्ध्यतीति तयोः को ग्राह्य इत्याशयेन पृच्छति—**यथा पुनरिति ।** येत्यर्थः । **अन्तरतमनिर्वृत्तिः**—अन्तरतमपदार्थस्य विशेषणत्वेन प्रतिपत्तिः । **षष्ठीति**—उपसंहर्त्तव्येति शेषः । **प्राप्यमाणानामिति**—मध्ये इति शेषः । **उभयथा**—'अन्तरतम' इत्यस्य सप्तम्यन्तत्वे प्रथमान्तत्वे वा ।

प्रदीपे—अयं न दृष्टान्त इत्याशयेनाह-**येनेति । अथ**-अथवा । **वर्त्तते इति**—अनुवर्तते इत्यर्थः । पूर्वसूत्रादित्यादिः । तथाचेति शेषः । **पक्षे त्विति**—स्थानिन इति शेषः ।

उद्द्योते—**अस्तु तर्हीति**—नन्वित्यादिः । संशयाभावार्थमिति शेषः । प्रकृतग्रन्थानुगुणमाह—**षष्ठीति ।** अत एवाह—**बह्विति । अन्ये**—यास्कादयः । ननु सेति सर्वत्र येत्यस्य प्रतिनिर्देशो दृष्ट इत्यत आह—**इदमिति ।** 'यथा...भवति' 'आहोस्विदादेशतः' इति भाष्यस्य तात्पर्यार्थमाह—**अन्तरतमेति ।** 'स्थानिनि...षष्ठी' इति भाष्यस्य शेषपूरणेनार्थमाह—**अन्तरेति ।** किम् अन्तरतम इति स्थानिविशेषणम् अथवा आदेशविशेषणमिति प्रश्नाशयः ।

( भाष्यम् )

**किं चातः ? ॥**

**( तत्त्वालोकः )** अन्तरतम इत्यस्य स्थानिविशेषणत्वे अथवा आदेशविशेषणत्वे किं दूषणमित्याशयेन पृच्छति—**किञ्चेति ।**

**( सप्तम्यन्तपाठदूषणभाष्यम् )**

**यदि प्रकृतितः, 'इको यणचि' इति यणां येऽन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्याद्—दध्यत्र मध्वत्र । कुमार्यर्थं ब्रह्मबन्ध्वर्थमित्यत्र न स्यात् ॥ आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवति ॥**

**( प्रदीपः ) इहैवेति ।** यणामर्धमात्रिकाणां सदृशा इको मात्रिका न तु दूरविप्रकृष्टा दीर्घा इति भावः ॥ आदेशनियमपक्षे चैतदुदाहरणत्वेन दूषितम् । प्रकृतिनियमपक्षे तु भवत्येवैतदुदाहरणम् ॥

**( उद्द्योतः )** ननु भाष्ये सङ्ख्यातानुदेशेनैतदुदाहरणस्य दूषितत्वात् पुनरुपन्यासोऽयुक्तोऽत आह—**आदेशेति ॥ भवत्येवतदिति** दीर्घव्यावृत्तये इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये- **प्रकृतित इति**—अन्तरतमनिर्वृत्तिस्तर्हीति शेषः । **यणामिति**—अर्धमात्रिकाणामिति शेषः । **अन्तरतमा इति**—मात्राद्वयन्यूनमात्रिकत्वेनेत्यादिः । **इक इति**—एकमात्रिका इत्यादिः । **इहैवेति**—ह्रस्वेकारादिष्विति शेषः । एवव्यवच्छेद्यमाह—**कुमार्यर्थमिति ।** किन्त्वित्यादिः । **इत्यत्रेति**—दीर्घकारादिष्विति शेषः । **सत्यामिति**—सर्वेषामिकाम् सस्थानत्वेनान्तरतमा यण इतीति शेषः । **सर्वत्रेति**—इक्ष्विति शेषः । एवमग्रेऽपि ।

प्रदीपे— **सदृशा इति**—मात्राद्वयन्यूनमात्रिकत्वेनेत्यादिः । **मात्रिकाः**—एकमात्रिका ह्रस्वाः । **दूरविप्रकृष्टाः**—द्विमात्रिकाः । **एतत्**—दध्यत्रेत्यादि । **उदाहरणेति**-प्रकृतसूत्रेत्यादिः । एवमग्रेऽपि ।

**( सप्तम्यन्तपाठदूषणान्तरभाष्यम् )**

**तथा-'इको गुणवृद्धी' गुणवृद्ध्योर्ये अन्तरतमा इकस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्याद्—नेता लविता नायको लावकः । चेता स्तोता चायकः स्तावक इत्यत्र न स्यात् ॥ आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति ॥**

**( प्रदीपः ) चायक इति । अचोञ्णितीत्यत्रापि** अयमेव दोष इत्युपन्यासः ॥

**( उद्द्योतः )** भाष्ये **इको गुणवृद्धी इति** विध्येकवाक्यतापन्नस्य खण्ड इति बोध्यम् ॥ नन्विको **गुणवृद्धी** इत्युक्त्वा चायक इत्युदाहरणमसङ्गतमत आह—**अच इति ।** केचित्तु—इको यत्र गुणवृद्धी इष्टे, तत्रेति भाष्यार्थान्न दोष इत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**इको गुणवृद्धी**—'इको गुणवृद्धी; सार्वधातुकार्धधातुकयोः' इति, तथा 'अचो ञ्णिति' इति । **अन्तरतमा इति**—द्विमात्रिकत्वेनेत्यादिः । **इक इति**—तथा अच इति शेषः । **इहैवेति**—दीर्घेकारादिष्विति शेषः । **नायक इति**—तथेत्यादिः । एवव्यवच्छेद्यमाह—**चेतेति ।** किन्त्वित्यादिः । **चायक इति**—तथेत्यादिः । **इत्यत्रेति**—ह्रस्वेकारादिष्विति शेषः । **सत्यामिति**—सर्वेषामिकारादीनां सस्थानत्वेनान्तरतमे गुणवृद्धी इतीति शेषः । **सर्वत्रेति**—इकारादिष्विति शेषः । एवमग्रेऽपि ।

प्रदीपे—**अयमेव**—ह्रस्वस्थानिकादेशानुपपत्तिरूप एव । **इति-** इति कारणात् ।

उद्द्योते—नन्वस्य विधिस्थाने निर्देशोऽयुक्त इत्यत आह—**विध्येकेति ।** तथा चानेन 'एकसम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयती'ति व्यवस्थया विधिः स्मारित इति बोध्यम् । **नन्विति**—'अचो ञ्णिती'त्यत्र स्थानिनिर्देशसत्त्वेनेकपरिभाषाया उपस्थानासम्भवादिति शेषः । **केचित्तु**—यास्कादयस्तु । अध्याहारे गौरवमेवात्रारुचिबीजम् ।

**( सप्तम्यन्तपाठदूषणान्तरभाष्यम् )**

**तथा—ऋवर्णस्य गुणवृद्धिप्रसङ्गे—गुणवृद्ध्योर्यदन्तरतममृवर्णं तत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीतीहैव स्यात्—कर्ता हर्ता आस्तारकः निपारक इति । आस्तरिता निपरिता कारको हारक इत्यत्र न स्यात् ॥ आदेशतः पुनरन्तरतमनिर्वृत्तौ सत्यां सर्वत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीति सर्वत्र सिद्धं भवतीति ॥**

**( प्रदीपः ) ऋवर्णस्येति ।** ऋकारस्य ह्रस्वस्यैव गुणः स्याद् दीर्घस्यैव च वृद्धिरिति विशेषप्रदर्शनाय ऋवर्णस्य पृथगुपन्यासः ।

**( उद्द्योतः )** ननु ऋकारस्येगचोरन्तर्भावात्पुनरुपन्यासो वृथेत्यत आह—**ऋकारस्येति ।** एवं च सप्तम्यन्तच्छेदो लक्ष्यासिद्ध्या दुष्ट इति भावः ॥

**( तत्त्वालोकः )** भाष्ये— **अन्तरतममिति**—मात्राद्वयन्यूनमात्रिकत्वेन तथा मात्रात्रयन्यूनैकाधिकमात्रिकत्वेनेत्यादिः । **इहैवेति**—ह्रस्वकारे तथा दीर्घ ऋकारे इति शेषः । **आस्तारक इति**—तथेत्यादिः । एवव्यवच्छेद्यमाह—**आस्तरितेति ।** किन्त्वित्यादिः । **कारक इति**—तथेत्यादिः । **इत्यत्रेति**—दीर्घकारे तथा ह्रस्व ऋकारे इति शेषः । **सत्यामिति**—सर्वेषामृकाराणां सस्थानत्वेनान्तरतमे गुणवृद्धी इतीति शेषः । ऋकारस्य गुणवृद्धी अरारावेवेति भावः । **सर्वत्रेति**—ऋकारेष्विति शेषः । एवमग्रेऽपि ।

प्रदीपे— **ऋकारस्येति**—प्रकृतितोऽन्तरतमनिर्वृत्तौ-दीर्घस्यैवेकारादेः गुणवृद्धी स्याताम्, किन्त्वित्यादिः ।

उद्द्योते—सर्वेषां सप्तम्यन्तपाठदूषणभाष्याणामाशयमाह—**एवञ्चेति ।** उक्तदोषगणसत्त्वे चेत्यर्थः ।

**( प्रथमान्तपाठदूषणभाष्यम् )**

**अथादेशतोऽन्तरतमनिर्वृत्तौ सत्यामयं दोषः-'वान्तो यि प्रत्यये' स्थानिनिर्देशः कर्तव्यः-ओकारौकारयोरिति वक्तव्यम्, एकारैकारयोर्माभूदिति ॥ प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां वान्तादेशस्य एक्षु यान्तरतमा प्रकृतिस्तत्र षष्ठी । यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेण स्थानिनिर्देशं सिद्धं भवति ।**

**( प्रदीपः ) वान्तोयीति ।** एच इत्यनुवर्तनात् सर्वेषां वान्तादेशप्रसङ्गः ॥ यदा त्वेवं व्याख्यायते—यादृशो वान्त आदेशः पूर्वं दृष्टस्तादृशो यि प्रत्यये भवति, ओकारस्थानिकोऽवादेशो दृष्ट औकारस्थानिकश्चावादेश इति, तदा न दोषः ॥

**( उद्द्योतः ) यादृश इति ।** अचीत्यनुवर्त्याचि परतो यस्य यो वान्तो दृष्टस्तस्य यि प्रत्यये स इति व्याख्येयमित्यर्थः ॥ अन्ये तु

वाच्यवृत्त्येदृशार्थस्यालाभात् यि प्रत्यये इति दृष्टाऽचोत्यस्यासंबन्धाच्च भाष्योक्तं वचनमेव ज्याय इत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**सत्यामिति**—सर्वेषामेचां मात्रात्रयन्यूनमात्रिकत्वेनान्तरतमत्वस्य वान्तादेशे सत्त्वादिति शेषः । **प्रत्यय इति**—इत्यत्रेति शेषः । 'स्थानिनिर्देशः कर्तव्यः' इति विवृणोति—**ओकारेति** । **वक्तव्यम्**—वक्तव्यमिति । **येति**—सस्थानत्वेनेति शेषः । **सिद्धमिति**—इष्टमित्यादिः ।

प्रदीपे—**एच इति**—अत्र 'एचोऽयवायावः' इत्यत्र इत्यादिः । **सर्वेषामिति**—एचामिति शेषः । **पूर्वम्**—'एचोऽयवायावः' इत्यत्र ।

उद्द्योते—**अचीति**—'वान्तो यि'त्यत्र 'इको यणची'त्यत्र इत्यादिः । कैयटोक्तं खण्डयति—**अन्ये त्विति** ।

( दूषणोद्धारभाष्यम् )

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः ॥**

**कथम् ? ।**

**वान्तग्रहणं न करिष्यते—'यि प्रत्यये' एचोऽयादयो भवन्तीत्येव ॥**

( तत्त्वालोकः ) **वान्तेति**—यतः 'वान्तो यि प्रत्यये' इत्यत्रेत्यादिः । **यि प्रत्यये इति**—तथाच-सम्पूर्णपूर्वसूत्रस्यानुवृत्त्याऽस्य योऽर्थस्तत्र न दोषः, यत इत्यादिः ।

( आक्षेपभाष्यम् )

**यदि न क्रियते, चेयं जेयमित्यत्रापि प्राप्नोति ॥**

( तत्त्वालोकः ) **न क्रियत इति**—तत्र वान्तग्रहणमित्यादिः । तर्हीति शेषः । **प्राप्नोतीति**—अयादेश इत्यादिः । एवमग्रेपि ।

( आक्षेपबाधकभाष्यम् )

**'क्षय्यजय्यौ शक्यार्थे' इत्येतन्नियमार्थं भविष्यति—क्षिज्योरेवैच इति ॥**

( उद्द्योतः ) भाष्ये—**क्षिज्योरेवेति** ह्रस्वनिर्देशात्क्षी इति दीर्घान्तस्य जैजय इत्यस्य च नेदं निपातनमिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**क्षय्यजय्याविति**—नैष दोषः, यत इत्यादिः ।

( आक्षेपसाधकभाष्यम् )

**तयोस्तर्हि शक्यार्थादन्यत्रापि प्राप्नोति—क्षेयं पापं जेयो वृषलः ॥**

( तत्त्वालोकः ) **तयोः**—क्षिज्योः । **तर्हि**—तेन तादृशनियमे । एवमग्रेऽपि ।

( आक्षेपबाधकभाष्यम् )

**उभयतो नियमो विज्ञास्यते—क्षिज्योरेवैचः, तयोश्च शक्यार्थ एवेति ॥**

( प्रदीपः ) **उभयत इति** । योगविभागेनेति भावः ॥

( उद्द्योतः ) **योगविभागेनेति** । विनिगमनाविरहाद्ब्रह्मभ्रूणेत्यादाविवोभयतो नियम इत्यन्ये ॥

( तत्त्वालोकः ) भाष्ये—**उभयत इति**—नैष दोषः, यतस्तेनेत्यादिः । **तयोश्चेति**—क्षिज्योरेचश्चेदयाद्यादेशस्तर्हीत्यर्थः ।

प्रदीपे—'यि प्रत्यये' इत्यनेनैवेष्टसिद्धौ नियमार्थः 'क्षय्यजय्यौ शक्यार्थे' इति योगो विभज्यते । तत्र 'क्षय्यजय्यौ' इति प्रथमयोगेन प्रथमो नियमस्तथा 'शक्यार्थे' इति द्वितीययोगेन द्वितीयो नियम इत्याशयेनाह—**योगेति** ।

उद्द्योते—गत्यन्तरमाह—**विनिगमनेति** । **उभयत इति**—अत्रेत्यादिः ।

( इष्टानुपपत्तिभाष्यम् )

**इहापि तर्हि नियमान्न प्राप्नोति—लव्यं पव्यम् । अवश्यलाव्यम् अवश्यपाव्यमिति ॥**

( प्रदीपः ) **इहापीति** । सामान्येन नियम इति प्रश्नः ॥

( तत्त्वालोकः ) भाष्ये—**नियमादिति**—प्रथमेत्यादिः । अवाद्यादेश इति शेषः ।

प्रदीपे—**सामान्येन नियम इतीति**—प्रथमनियमः 'यादौ प्रत्यये परे धातोरेचश्चेदयाद्यादेशस्तर्हि क्षिज्योरेवे'ति सामान्याकारक इत्याशयेनेत्यर्थः ।

( इष्टोपपत्तिभाष्यम् )

**तुल्यजातीयस्य नियमः ॥**

**कश्च तुल्यजातीयः ? ॥**

**यथाजातीयकः क्षिज्योरेच् ॥**

**कथंजातीयकः क्षिज्योरेच् ? ॥**

**एकारः ॥**

( प्रदीपः ) **तुल्यजातीयस्येति** । कण्ठ्यतालव्यस्येत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**तुल्यजातीयस्येति** । अन्यथा **यिप्रत्यय** इति विधिवैयर्थ्यं स्यादिति भावः ॥ तत्त्वं च यद्येत्वेन, तर्हि ऐकारे आयादेशः स्यादत आह—**कण्ठ्येति** । भाष्ये एकारग्रहणमुपलक्षणमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—नियमस्य सजातीयापेक्षत्वात् प्रथमनियमः 'यादौ प्रत्यये परे धातोः कण्ठ्यतालव्यस्य चेदयाद्यादेशस्तर्हि क्षिज्योरेवे'ति विशेषाकारक इत्याशयेनाह—**एकार इति** । तथाच लव्यमित्यादौ 'यि प्रत्यये' इति सामान्यसूत्रेण प्राप्तस्यावाद्यादेशस्य नियमेन व्यावृत्त्यभावाद् आदेशतोऽन्तरतमनिर्वृत्तावपि तत्र 'ओकारौकारयोरि'ति न वक्तव्यमित्याशयः ।

उद्द्योते—**अन्यथेति**—नियमस्य सजातीयानपेक्षत्वे इत्यर्थः । प्रथमनियमस्य 'यादौ प्रत्यये परे एचश्चेदयाद्यादेशस्तर्हि क्षिज्योरेवे'ति सामान्याकारकत्वस्यापि सम्भवादिति शेषः । इदानीं वान्तपदासत्त्वादाह—**यीति** । **तत्त्वञ्चेति**—सजातीयत्वमपीत्यर्थः । नन्वित्यादिः । **ऐकारे इति**—रैयतीत्यत्रेत्यादिः । एवं सति समापन्नां भाष्यासङ्गतिं परिहरति—**भाष्ये इति** । **उपेति**—कण्ठ्यतालव्यस्येत्यादिः ।

( अनिष्टापत्तिभाष्यम् )

**[ एवमपि ] रायमिच्छति रैयतीत्यत्र प्राप्नोति ॥**

( प्रदीपः ) **रायमिच्छतीति** । एकारस्यैव नियमेन व्यावृत्तिः कृता न त्वैकारस्येति प्रश्नः ॥

( उद्द्योतः ) एतदनभिज्ञः शङ्कते-भाष्ये—**रायमिच्छतीति** ॥ तदाह—**एकारस्यैवेति** । एकारस्य तालव्यत्वमेवेति भाष्याशयः ॥

( तत्त्वालोकः ) भाष्ये—**पूर्वभाष्येण** प्रथमनियमस्य 'यादौ

प्रत्यये परे धातोरैकारस्य चेद्यादेशस्तर्हि क्षिज्योरेवे'ति विशेषाकारकतैवेत्याशयेनाह—**एवमपीति ।**

प्रदीपे—**एकारस्यैवेति**—धात्वन्तरसम्बन्धिन इत्यादिः । **नियमेनेति**—प्रथमेत्यादिः । **इति**—इत्यभिप्रायेण ।

उद्द्योते—तथा सति समापन्नामग्रिमभाष्यासङ्गतिं परिहरति—**एतदिति ।** एकारपदं कण्ठ्यतालव्यपरमित्येतस्येत्यर्थः । शिक्षान्तरानुरोधेन पूर्वापरभाष्यमिति तस्य तदुपलक्षणत्वादिकल्पना न युक्तेत्याशयेनाह—**एकारस्येति ।** तथाच कैयटोक्तं कण्ठ्येत्यसङ्गतमेवेत्याशयः ।

## ( अनिष्टापत्तिवारणभाष्यम् )

**रायिश्छान्दसः । दृष्टानुविधिश्छन्दसि भवति ।।**

**( प्रदीपः ) छान्दस इति ।** क्यजन्तस्य रैशब्दस्य भाषायां नास्ति प्रयोगोऽन्यत्र तु विद्यत एवेति व्याचक्षते । [ क्यच् त्वैकारान्तान्नास्ति, **'गोसमानाक्षरनान्तात्'** इति वचनात् । ] अन्ये तु भाषायां रैशब्दस्य प्रयोग एव नास्तीत्याहुः ॥

**( उद्द्योतः ) क्यजन्तेति । राः रैशब्दो यि** यकारादिप्रत्यये इति भाष्यार्थ इति भावः । भाष्ये विसर्गरहित एव पाठः ॥ एतेन रायिरित्ययुक्तं, आत्वस्य दुर्लभत्वाद्, रैशब्दात्क्विक् दुर्लभ इत्यपास्तम् ॥ **नास्ति प्रयोग इति ।** अनभिधानादिति भावः ॥ **क्यच् त्वित्यादिर्वचना**दित्यन्तोऽग्रन्थस्तरयैकीयमतत्वात् । अत एव **नः क्ये इति** सूत्रे वाच्यतीति भाष्ये प्रयुक्तम् । **अन्ये त्विति ।** अत्रारुचिबीजं तु रायमिच्छतीति भाष्यप्रयोगविरोधः । न हि विग्रहश्छन्द इति बोध्यम् । भाष्ये **यीत्यस्य** वैयर्थ्याच्च ॥

**( तत्त्वालोकः )** भाष्ये—**रायिरिति**—नैष दोषः, यत इत्यादिः । **दृष्टेति**—तथेत्यादिः ।

प्रदीपे—**अन्यत्र त्विति**—क्यजिभन्नस्थले त्वित्यर्थः । भाषायामपि रैशब्दस्य प्रयोग इति शेषः । 'रायिरि'ति एकमेव पदं प्रथमान्तम्, तदुपपत्तिश्च उच्चारणार्थकेकारेण भवतीति व्याख्यातवतां मतेनाह—**अन्ये त्विति ।**

उद्द्योते—'रा यि च्छान्दसः' इति रीत्या 'राः' इति प्रथमान्तमेकं पदम्, तथा 'यि' इति सप्तम्यन्तं द्वितीयं पदमित्याह—**रा इति ।** तदुपपादयति—**भाष्ये इति ।** यत इति शेषः । **आत्वस्येति**—क्यचि परत इत्यादिः । **अनभीति**—तस्य भाषायामित्यादिः ॥ यदि नान्तात् क्यच् न स्यात्तर्हि 'नः क्ये' इति सूत्रं नोपपद्येत, अतस्तस्मात् क्यचोऽङ्गीकार्यत्वे समानाक्षरादपि सोऽभ्युपगन्तव्य एवेत्याशयेनाह—**अग्रन्थ इति ।** असाधुग्रन्थ इत्यर्थः । तथा सति 'राः' इत्येव वदेदित्याशयेनाह—**वैयर्थ्याच्चेति ।** न तद्युक्तमिति शेषः । वस्तुतस्तु-अत्र 'वैयर्थ्यञ्चे'त्येव पाठो युक्तः ॥

## ( प्रथमान्तपाठे दूषणान्तरभाष्यम् )

**'ऊदुपधाया गोहः' आदेशतोऽन्तरतमनिर्वृत्तौ सत्यामुपधाग्रहणं कर्तव्यम् ।। प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यामूकारस्य गोहो याऽन्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणोपधाग्रहणं सिद्धं भवति ।।**

**( प्रदीपः ) गोह इति ।** एतत्परिभाषोपस्थाने सति **गोह** इति षष्ठ्यन्तरतमे स्थानिन्युपसंह्रियते ॥

**( उद्द्योतः )** भाष्ये **गोहः** संबन्धिन ऊकारस्य याऽन्तरतमा प्रकृतिरित्यन्वयः ॥ **स्थानिन्युपसंह्रियत इति ।** एवं च गोह इति गोहवयवे लाक्षणिकम्—ऊकारान्तरतमस्य गोहवयवस्योदित्यर्थ इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—प्रथमान्तपाठे उक्तस्य प्रथमदूषणस्य परिहृतत्वाद् द्वितीयं दोषमाह—**ऊदुपधाया इति । उपधाग्रहणमिति**—स्थानिनो गोहोऽन्तरतमत्वस्य ऊदादेशेऽसम्भवादित्यादिः । **प्रकृतिः**—गुह उकारः । **सिद्धमिति**—इष्टमित्यादिः । एवमग्रेऽपि ।

प्रदीपे—**एतत्परिभाषेति**—अन्तरतमपरिभाषेत्यर्थः । प्रकृतितोऽन्तरतमनिर्वृत्तौ सत्यामूद्विधायकसूत्रे इत्यादिः ।

उद्द्योते—यथाश्रुतक्रममन्वयासम्भवादाह—**गोह इति । एवञ्च**—तस्यात्रोपसंहारे च । **ऊकारेति**—तथाचेत्यादिः ।

## ( दूषणोद्धारभाष्यम् )

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियते एतन्न्यास एव ।।**

**( प्रदीपः ) न्यास एवेति ।** अन्यथा परत्वा**दलोऽन्त्यस्ये**त्यनेन गोह इति षष्ठ्यन्त्येऽल्युपसंह्रियेतेति भावः ॥

**( उद्द्योतः )** ननूपधाग्रहणाकरणलाघवे दर्शिते **क्रियत** इत्युत्तरमसङ्गतमत आह—**अन्यथेति ।** परत्वा**दलोऽन्त्यस्ये**त्येव व्यवस्थापकं स्यादित्यर्थः ॥ एवं च पक्षद्वयेऽप्यावश्यकं तदिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अपिना**—प्रकृतित इत्यस्य संग्रहः । **क्रियते इति**—यतः पक्षद्वये इत्यादिः । एवमग्रेऽपि ।

प्रदीपे—**अन्यथेति**—उपधाग्रहणाभावे इत्यर्थः । अन्तरतमपरिभाषाऽपेक्षयेति शेषः ।

उद्द्योते—**एवेन**-अन्तरतमपरिभाषाव्यवच्छेदः । **एवञ्च**—उपधाग्रहणाभावे प्रकृतितोऽन्तरतमनिर्वृत्तावपि दोषसत्त्वे च । **तत्**—उपधाग्रहणम् ।

## ( प्रथमान्तपाठे दूषणान्तरभाष्यम् )

**'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' आदेशतोऽन्तरतमनिर्वृत्तौ सत्यां तकारग्रहणं कर्तव्यम् ।। प्रकृतितः पुनरन्तरतमनिर्वृत्तौ सत्यां नकारस्य निष्ठायां यान्तरतमा प्रकृतिस्तत्र षष्ठी, यत्र षष्ठी तत्रादेशा भवन्तीत्यन्तरेणापि तकारग्रहणं सिद्धं भवति ।।**

**( प्रदीपः ) रदाभ्यामिति ।** चरितमित्यादौ व्यवधानान्न भवति ॥ **निष्ठाया इति** षष्ठ्यास्तकार एवोपसंहारात्तस्यैवानन्तर्येण नत्वविधानात् ।

**( उद्द्योतः )** ननु तद्ग्रहणाभावे चरितमित्यादावपि रेफानन्तरा निष्ठेति नत्वं स्यादत आह—**चरितमिति । रदाभ्यामित्यस्य** प्रधानविशेषणताया न्याय्यतया परिभाषासंस्कृते लक्ष्यसंस्कारके वाक्ये रेफदकाराभ्यां परस्य निष्ठासंबन्धिनोऽन्तरतमस्य नकारादेश इत्यर्थ **इति** भावः ॥ **आदेः परस्य स्थानेऽन्तरतम** इत्याभ्यामादेरन्तरतमस्य **न** इत्यर्थे इकारस्यान्तरतमत्वाभावेन तकारस्य चादित्वाभावेनाप्राप्तिरिति परे ॥

**( तत्त्वालोकः )** भाष्ये—तत्रोक्तस्य द्वितीयदोषस्यापि परिहृतत्वात् तृतीयं दूषणमाह—**रदाभ्यामिति । तकारग्रहणमिति**—स्थानिन्या निष्ठाया अन्तरतमत्वस्य नकारादेशेऽसम्भवादित्यादिः । **प्रकृतिः**—तकारः ।

प्रदीपे—**व्यवधानादिति** इष्टेत्यादिः । निष्ठाया--रेफानन्तर्ये-

स्याभावान्नत्वमिति शेषः । **तकार इति—**अनया परिभाषया अन्तरतमे स्थानिनीत्यादिः । **आनन्तर्येणेति—**रदाभ्यामित्यादिः ।

उद्द्योते—इट् निष्ठायाः स्यादिति तेन तस्याः व्यवधानं न सम्भवतीत्याशयेनाह—**रेफानन्तरेति ।** कैयटोक्तं खण्डयति—**आदेः परस्येति । आदेरिति—**रेफदकाराभ्यां परस्य निष्ठातस्येति इत्यनुषज्यते । **अप्राप्तिरिति—**नत्वस्येत्यादिः ।

( दूषणपरिहारभाष्यम् )

**आदेशतोऽप्यन्तरतमनिर्वृत्तौ सत्यां न दोषः । क्रियत एतन्न्यास एव ॥**

**( प्रदीपः ) क्रियत एतन्न्यास एवेति ।** अन्यथा हि भिन्नवच्चामित्यत्र दकारस्य नत्वं स्यात् । स हि नकारस्य तुल्यदेशः **यथा तृतीयास्तथा पञ्चमा** इति वचनात् ॥

**( उद्द्योतः )** पक्षान्तरेऽपि तुल्यत्वात्र गौरवमित्याह—**अन्यथेति । दकारस्य नत्वं स्यादिति ॥** अनया परिभाषयेति भावः ॥ वस्तुतस्तु **आदेः परस्ये** त्यनेनान्त्यस्याप्राप्तिः । सूत्रं तु उभयाविरोधेन भिन्नमित्यादौ चरितार्थमित्यत्र प्रयोगे न स्यादेव नत्वमिति उभाभ्यामपि तद्ग्रहणं कर्तव्यमिति भाष्यतात्पर्यम् ॥ **एवं च प्रथमान्तच्छेदो निर्दोषः । सप्तम्यन्तच्छेदस्तु दुष्ट एव ॥** अत एव **न भूसुधियो**रित्यादि चरितार्थम् ॥ **नृनरयोर्वृद्धिश्चे**ति शार्ङ्गरवाद्यन्तर्गणसूत्रं यद्यार्षम्, तदा नरः अ इति व्याख्यानादाद्याकारस्यैव वृद्धिरिति न तत्र दोषः । तत्र नृनरयोरित्यावर्तते, एकत्र पञ्चम्यर्थे षष्ठी । पृथगपि वा तौ गणे पठ्येते इति बोध्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—**अन्यथा—**तकारग्रहणाभावे । **सः—**दकारः ।

उद्द्योते—**पक्षान्तरे—**सप्तम्यन्तपाठपक्षे । **अपिना** प्रथमान्तपाठपक्षपरिग्रहः । **तुल्यत्वादिति—**तकारग्रहणावश्यकताया इत्यादिः । **गौरवमिति—**सप्तम्यन्तपाठपक्षापेक्षया प्रथमान्तपाठपक्षे तकारग्रहणकरणजनितमित्यादिः । कैयटोक्तं खण्डयति—**वस्तुतस्त्विति । अन्त्यस्याप्राप्तिः—**भिन्नवद्भ्यामित्यत्र दकारस्य नत्वाप्राप्तिः । ननु सूत्रसार्थक्यानुरोधात्र तत्र तस्य तदप्राप्तिरित्यत आह—**सूत्रं त्विति । उभयेति—**'आदेः परस्य' 'स्थानेऽन्तरतमः' इत्युभयेत्यर्थः । **अत्र प्रयोगे इति—**भिन्नवद्भ्यामित्यत्र प्रयोगे इत्यर्थः । तकारस्य तुल्यदेशत्वाभावाद्, दकारस्य चादित्वाभावादिति शेषः । **उभाभ्याम्—**प्रथमान्त—सप्तम्यन्तपाठवादिभ्याम् । **एवञ्च—**आदेशतोऽन्तरतमनिर्वृत्तौ सकलदोषपरिहारे तथा प्रकृतितोऽन्तरतमनिर्वृत्तौ बहुदोषसत्त्वे च । **अत एव—**आदेशतोऽन्तरतमनिर्वृत्तेरभ्युपगमादेव । **चरितार्थमिति—**प्रकृतितोऽन्तरतमनिर्वृत्त्यभ्युपगमे तु द्विमात्रिके दीर्घेकारादौ अर्धमात्रिकाणां यणामन्तरतमत्वाभावात्तत्र यणोऽप्राप्त्या तन्निषेधाय कृतस्य तस्य वैयर्थ्यमापद्येतेत्याशयः । ननु **'नृनरयोर्वृद्धिश्चे'**ति **शार्ङ्गर**वाद्यन्तर्गणसूत्रेण नरशब्दस्य ङीन्सन्नियोगेन विधीयमाना वृद्धिरन्तरङ्गाऽप्यन्तरङ्गपरिभाषाबाधेन 'यस्येति चे'त्यलोपानन्तरम्प्रवर्त्तमाना सप्तम्यन्तच्छेदपक्षे स्वान्तरतमस्य स्थानिनो नकारोत्तराकारस्य भवतीति नरशब्दस्य **नारीति** रूपं सिद्ध्यति । प्रथमान्तच्छेदपक्षे तु 'अलोऽन्त्यस्ये'ति परिभाषया रेफस्य स्यादिति तस्य तत्र सिद्ध्येदित्यत आह—**नृनरयोरिति । यदीति—**अनेनारुचिः सूचिता । सा च—'वस्तुत इदं गणसूत्रमनार्षम्' । नुर्नरस्य च धर्म्यो नारीति **'ऋतोऽञि'**ति सूत्रेण 'नरस्य चेति वक्तव्यमि'ति वार्त्तिकेन चाद्युदात्तनार्याः सिद्धेः । रूढ्या योग्यतया तद्धर्म्यां नरस्त्वजातिविशिष्टैव युज्यते । इत्यादिना शब्देन्दुशेखरे, स्पष्टीकृतः । **नरः अ इतीति—**नर इति रेफान्तानुकरणम्, तस्य अः नरः । नृ च नरश्च चेति द्वन्द्व इतीत्याशयः । **आद्येति—**नरशब्दस्येत्यादिः । नन्वेवं कथन्ततो ङीनित्यत आह—**तत्रेति ।** आवृत्त्यभावादाह—**पृथगपीति ।** एवञ्च नृनरशब्दाभ्यां ङीनित्येकस्यार्थः । तथा-नृनरशब्दयोरकारस्य च वृद्धिरित्यपरस्यार्थः ।

( इति प्रथमान्तपाठनिर्देशः )

—o—

( अथ स्वतन्त्रविधित्वनिराकरणम् )

( आक्षेपभाष्यम् )

**किं पुनरिदं निर्वर्तकम्—अन्तरतमा अनेन निर्वर्त्यन्ते । आहोस्वित् प्रतिपादकम्—अन्येन निर्वृत्तानामनेन प्रतिपत्तिः ? ॥**

**( प्रदीपः ) किं पुनरिति ।** किं स्वतन्त्रमिदं लक्षणम् । आहोस्विल्लक्षणान्तरेणाभिनिर्वृत्तानामनेन नियमः क्रियते । अथ लक्षणान्तरशेषभूतमिति प्रश्नः ॥

**( उद्द्योतः ) अथेति ।** वाक्यभेदाभेदाभ्यां पक्षद्वयभेद इति बोध्यम् । तत्र तृतीयः सिद्धान्तो भविष्यति ॥

**( तत्त्वालोकः )** प्रदीपे—**नियमः—**अन्तरतम एव साधुरिति नियमः । **अथ—**अथवा । एवञ्च भाष्यमुपलक्षणमित्याशयः ।

उद्द्योते—ननु यत्र षष्ठी तत्रैतदुपस्थानस्य तुल्यत्वाद् द्वितीयतृतीयपक्षयोः कथं भेद इत्यत आह—**वाक्यभेदेति । पक्षद्वयभेदः—**द्वितीयतृतीयपक्षयोर्भेदः । **तत्र—**द्वितीयतृतीयपक्षयोर्मध्ये । **तृतीय इति—**पक्षः, 'उक्तं वे'ति भाष्येणेति शेषः ।

( भाष्यम् )

**कश्चात्र विशेषः ? ॥**

**( तत्त्वालोकः ) अत्र—**निर्वर्त्तकत्व-प्रतिपादकत्वयोः ।

**( ३२७ प्रथमपक्षदूषणवार्त्तिकम् ॥ २ ॥ )**

**॥ * ॥ स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनिवृत्तिः ॥ * ॥**

( भाष्यम् )

**स्थानेऽन्तरतमे निर्वर्तके सर्वस्थानिनां निवृत्तिः प्राप्नोति । अस्यापि प्राप्नोति—दधि, मधु ॥**

**( प्रदीपः ) स्थानिनिवृत्तिरिति ।** दधिशब्दस्य यदि दधिशब्द आदेशः क्रियते, तदा प्रयोजनाभावः । भिन्नरूपस्त्वादेशस्तदर्थस्याऽप्रत्यायक इति शब्दव्यवहारोत्साद एवेति भावः ॥

**( उद्द्योतः ) भिन्नरूप इति ॥** पर्यायो यद्यपि भिन्नरूपस्तदर्थप्रत्यायकश्च, तथापि विनिगमकाभावादुभयोः स्थानित्वमादेशत्वं च वाच्यम् । तथा च सूत्रमनारम्भसमं स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्यापीति—**यथेत्यादिः । निवृत्तिरिति शेषः ।

प्रदीपे—**तदेति—**अस्येति शेषः । **भिन्नरूप इति—**यदि च तस्य कश्चिदन्य आदेशः क्रियते, तदेत्यादिः । **तु—**हि ।

उद्द्योते—कैयटोक्तस्यासाङ्गत्यं परिहरति-**पर्याय इति । विनि-**

गमकाभावादिति—अयं स्थान्ययमादेश इत्यत्रेत्यादिः। सूत्रम्—प्रकृतसूत्रम्।

(आक्षेपबाधकभाष्यम्)

**अस्तु, न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्रान्तर्यतो दधिशब्दस्य दधिशब्द एव, मधुशब्दस्य मधुशब्द एवादेशो भविष्यति॥**

(प्रदीपः) **अस्त्विति**। वचनसामर्थ्याच्छब्दव्यवहारस्य चानादित्वादिति भावः॥

(उद्द्योतः) शास्त्रप्रवृत्तौ हेतुर्**वचनसामर्थ्यम्**। सदृशादेशे हेतुः—**शब्देति**॥

(तत्त्वालोकः) भाष्ये—**अस्त्विति**—तस्य सदृश एवादेशोऽनेनेत्यादिः। **न**—न हि। **तत्र**—तथा सति।

(आक्षेपसाधकभाष्यम्)

**यदि चैवम्, क्वचिद्वैरूप्यं तत्र दोषः स्यात्—बिसं मुसलमिति। 'इणकोरादेशप्रत्यययोः' इति षत्वं प्राप्नोति॥**

(प्रदीपः) **क्वचिद्वैरूप्यमिति**। यदा बिसशब्दस्य बिसशब्द आदेशस्तदा षत्वं नास्ति, नहि तदा सकार आदेशः। यदा तु सकारस्य सकार आदेशस्तदा षत्वप्रसङ्ग इति वैरूप्यप्राप्तिः। **अस्तेर्भूरि**त्यादयस्तु विशेषविहितत्वादस्य बाधकाः॥

(उद्द्योतः) भाष्ये—**यदि चैवमिति**। स्थान्यपेक्षयाऽऽदेशे यत्र वैरूप्यं प्रसक्तं तत्र दोष इत्यर्थः॥ **नहि तदेति**। आदेशरूपसस्यैव तेन षत्वविधानादिति भावः॥ **यदा त्विति**। तद्ध्वनयन् भाष्यकृद्वक्ष्यति—**इमे वर्णा इत्यादि**॥ नन्वस्य निर्वर्तकत्वे आर्धधातुकेऽप्यस्त्यादीनामस्त्याद्यादेशाः स्युरिति कुतो नोक्तम्। किं चानेन सिद्धे तदर्थं चेत्यत आह—**अस्तेरिति**। विप्रतिनिवृत्तिस्तत्फलमिति भावः॥

(तत्त्वालोकः) भाष्ये—**यदि चैवम्**—यद्यपि तत्रैवं निर्वाहः, तथापि यत्र। **वैरूप्यमिति**—प्राप्तमिति शेषः। दोषमाह—**इण्कोरिति**—अस्य षत्वविधायकेऽग्रिमसूत्रेऽधिकार इति प्रदर्शनाय निर्देशः।

प्रदीपे—क्वचित्पदसूचितमर्थमाह-**यदेति**। **अस्य**-प्रकृतसूत्रस्य।

उद्द्योते—ततोऽग्रिमस्यार्थमाह—**स्थान्यपेक्षयेति**। **तेन**—'आदेशप्रत्यययोरि'त्यनेन। अत्र मानान्तरमप्याह—**तदिति**। अन्यथा तदुक्तिरसङ्गतेति स्पष्टमेव। नन्विदमुक्तप्रायमित्यत आह—**किञ्चेति**। **अनेन**—प्रकृतसूत्रेण। **तद्**—'अस्तेर्भूरि'त्यादि। तस्य वैयर्थ्यम्परिहरति—**विप्रतीति**।

(आक्षेपान्तरभाष्यम्)

**अपि च—इष्टा व्यवस्था न प्रकल्प्येत। तद्यथा—तप्ते भ्राष्ट्रे तिलाः प्रक्षिप्ता मुहूर्तमपि नावतिष्ठन्ते। एवमिमे वर्णा मुहूर्तमपि नावतिष्ठेरन्॥**

(प्रदीपः) **अपि चेति**। पुनरन्येनान्येनाऽऽदेशेन भवितव्यमिति भावः॥ प्रयोजनमन्तरेण प्रवृत्तौ सत्यामसकृदपि प्रवृत्तिः स्यात्। ततश्च सर्वस्य निवृत्त्यभिमुखत्वात्साधुत्वस्य व्यवस्था नोपपद्यते॥

(उद्द्योतः) सदृशादेशविषयेऽपि दोषमाह—भाष्ये **अपि चेष्टेति**॥ ननु सदृशादेशे कथमिष्टव्यवस्थाऽसिद्धिरत आह—**पुनरिति**। ननु **लक्ष्ये लक्षणस्येति** न्यायविरोधोऽत आह—**प्रयोजनमिति**। सप्रयोजनशास्त्रप्रवृत्तौ हि प्रथमप्रवृत्त्यैव प्रयोजननिष्पत्तेर्न द्वितीयादिप्रवृत्तिरिति तद्बीजम्॥ न चेदं प्रकृते इति भावः॥ भाष्ये **व्यवस्थे**त्यस्य सापेक्षत्वादाह—**साधुत्वस्येति**॥ परिनिष्ठितत्वव्याप्यत्वात् साधुत्वस्येति भावः॥ एवं च दोषान्तमेव शास्त्रं स्यादिति तात्पर्यम्॥

(तत्त्वालोकः) प्रदीपे—**प्रवृत्ताविति**—प्रकृतसूत्रस्येत्यादिः। एवमग्रेऽपि।

उद्द्योते—शास्त्रप्रवृत्तिं विशिनष्टि—**सप्रयोजनेति**। **तद्बीजम्**-'लक्ष्ये लक्षणस्ये'ति न्यायबीजम्। ननु सा कुतो नोपपद्येतेत्यत आह—**परिनिष्ठितत्वेति**। इदानीं सर्वस्यैतत्सूत्रोद्देश्यतावच्छेदकाक्रान्तत्वाद् अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वरूपपरिनिष्ठितत्वाभावेन व्यापकाभावे व्याप्याभाव इति नियमात् साधुत्वाभाव इत्याशयः। पर्यवसितमर्थमाह—**एवञ्चेति**। प्रकृतसूत्रस्य पुनः पुनः प्रवृत्तौ चेत्यर्थः।

(द्वितीयपक्षाभ्युपगमभाष्यम्)

**अस्तु तर्हि प्रतिपादकम्-अन्येन निर्वृत्तानामनेन प्रतिपत्तिः॥**

(प्रदीपः) **अस्तु तर्हीति**। निर्वृत्तेषु लक्षणान्तरेणादेशेषु नियमोऽनेन क्रियते तत्रान्तरतमः साधुर्नान्य इत्यर्थः॥

(उद्द्योतः) **निर्वृत्तेष्विति**। अन्येन निर्वृत्तानां मध्येऽनेनान्तरतमस्यैव साधुत्वप्रतिपत्तिरिति भाष्यार्थ इति भावः॥

(तत्त्वालोकः) प्रदीपे—नियमाकारमाह—**तत्रेति**। एवञ्च 'नान्य' इत्यस्य इताति शेषः। अथवा—**तत्र**—तथा सति।

उद्द्योते—भाष्ये निर्वृत्तानामित्यत्र निर्धारणे षष्ठीत्याह—**मध्य इति**। 'प्रतिपत्तिरि'ति भाष्यार्थमाह—**अन्तरतमेति**।

(३२८ आक्षेपवार्तिकम्॥ ३॥)

**॥ * ॥ निर्वृत्तप्रतिपत्तौ निर्वृत्तिः॥ * ॥**

(भाष्यम्)

**निर्वृत्तप्रतिपत्तौ निर्वृत्तिर्न सिध्यति। सर्वे सर्वत्र प्राप्नुवन्ति॥**

(प्रदीपः) **निर्वृत्तिरिति**। अभिमतस्य शब्दस्येत्यर्थः॥

(उद्द्योतः) **अभिमतस्येति**॥ शास्त्रप्रामाण्यादुभयोरपि पाक्षिकसाधुत्वापत्त्येति भावः॥

(तत्त्वालोकः) भाष्ये—**निर्वृत्तप्रतिपत्तौ**-लक्षणान्तरेण निर्वृत्तानामादेशानां मध्येऽन्तरतमस्यैवानेन साधुत्वप्रतिपत्तौ। **निर्वृत्तिः**-साधुत्वप्रतिपत्तिः। **सर्व इति**—तथाचेत्यादिः।

(आक्षेपतात्पर्यप्रश्नभाष्यम्)

**किं तर्ह्युच्यते—निर्वृत्तिर्न सिध्यतीति?। न साधीयो निर्वृत्तिः सिद्धा भवति॥**

(तत्त्वालोकः) काकुवाक्यमाह—**न साधीय इति**। तत्तत्सूत्रेणोपपद्यमानां निर्वृत्तिम्पश्यतो भवतो 'निर्वृत्तिर्न सिध्यती'ति वचनं न युक्तमित्याशयः।

(आक्षेपतात्पर्यवर्णनभाष्यम्)

**न ब्रूमो—निर्वृत्तिर्न सिध्यतीति॥**

किं तर्हि ? ।

**इष्टा व्यवस्था न प्रकल्प्येत । न सर्वे सर्वत्रेष्यन्ते ॥**

**( प्रदीपः ) इष्टा व्यवस्थेति । अकः सवर्णे दीर्घ** इत्यनेन लक्षणेन यदा सर्वे दीर्घाः कृतास्तदा तेषां साधुत्वं विज्ञानम् । न चानेन तेषामेवासाधुत्वं शक्यं प्रतिपादयितुमिति भावः ॥

**( उद्द्योतः )** दीर्घादेरिष्टा व्यवस्थाऽनेन भविष्यतीत्यत आह—**अक इति ॥** एकप्रमाणबोधितस्य तदन्यविशेषप्रमाणाभावेन प्रमाणान्तरेण आत्यन्तिको निरासोऽशक्यः कर्तुमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रकल्प्येतेति**—भवतीति शेषः । **न सर्वे इति**—यत इत्यादिः ।

उद्द्योते—**दीर्घादेरिति**—नन्वित्यादिः । **एकप्रमाणबोधितस्येति**—'अकः सवर्णे दीर्घ' इत्येकप्रमाणबोधितस्येत्यर्थः । साधुत्वस्येति शेषः । **प्रमाणान्तरेणेति**—अनेनेत्यादिः ।

**( प्रत्याक्षेपभाष्यम् )**

**इदमिदानीं किमर्थं स्यात् ? ।**

**( उद्द्योतः )** ननु शास्त्रप्रामाण्यादुभयोरपि साधुत्वे **इदं** व्यर्थं स्यादिति पृच्छति—**इदमिदानीमिति ॥**

**( ३२९ प्रत्याक्षेपसमाधानवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ अनर्थकं च ॥ * ॥**

**( भाष्यम् )**

**अनर्थकमेतत्स्यात् । यो हि भुक्तवन्तं ब्रूयाद् 'मा भुक्थाः' इति किं तेन कृतं स्यात् ॥**

**( उद्द्योतः )** उत्तरयति—**अनर्थकमिति । भुक्था** इति निरनुस्वारः पाठः ॥

**( आनर्थक्यपरिहारेण समाधानभाष्यम् )**

**॥ * ॥ उक्तं वा ॥ * ॥**

**किमुक्तम् ? ॥**

***सिद्धं तु षष्ठ्यधिकारे वचनात्* इति । षष्ठ्यधिकारेऽयं योगः कर्तव्यः, स्थानेऽन्तरतमः 'षष्ठीनिर्दिष्टस्य' इति ॥**

**( प्रदीपः ) उक्तं वेति । इको गुणवृद्धी** इत्यत्र । यत्र षष्ठी तत्रेदमुपतिष्ठते । तेनैकवाक्यतानेन सूत्रेण विधिवाक्यानामिति विधानकाल एवान्तरतम आदेशो विधीयते ॥

**( उद्द्योतः )** आनर्थक्यं परिहरति—**उक्तं वेति ॥** द्वितीयपक्षाद्भेदमुपपादयति—**एकवाक्यतेति ।** एवं चेतरस्याविधानमेवेति इष्टव्यवस्थासिद्धिरिति भावः ॥

परे तु उत्पन्नानामनेन निवृत्तिर्लुगादिनेवेति भावः ॥ एतदाशयमजानान आह—**निवृत्तिर्न सिध्यतीति ॥** तदभ्युपेत्य समाधत्ते—**उक्तं वेति ॥ भु**क्तवतो भोजनफलतृप्तेर्जातत्वान्निषेधस्य वैयर्थ्येऽपि शास्त्रे **वृद्धिरादै**च्सूत्रभाष्योक्तशास्त्रप्रामाण्याल्लुगादिनेव जातनिवृत्तिरिति वाशब्देन सूचितमित्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—एवं प्रथमपक्षद्वयेऽनुपपन्ने तृतीयपक्षमभ्युपैति—**उक्तं वेति ।** 'आद्यन्तौ टकितौ' इति सूत्र **इत्यादिः । षष्ठ्यधिकारेऽयमिति**—षष्ठ्यधिकारे वर्तमानोऽयं योगो वक्ष्यमाणप्रकारेण व्याख्येय इत्यर्थः । तत्प्रकारमेवाह—**स्थाने इति ।** षष्ठीनिर्दिष्टस्य प्रसङ्गे विहितानामन्तरतम एवेत्यर्थः ।

उद्द्योते— **इतरस्य**—अनन्तरतमस्य । अत्र कल्पे वाशब्दस्यानुपपन्नत्वादाह—**परे त्विति । शास्त्रे इति**—अस्य निवृत्तावन्वयः । **उक्तेति**—'दर्भैरविप्रपाणिरि'त्यादिनेत्याशयः ।

**( अनिष्टनिराकरणाधिकरणम् )**

**( ३३० आक्षेपवार्तिकम् ॥ ५ )**

**॥ * ॥ प्रत्यात्मवचनं च ॥ * ॥**

**( भाष्यम् )**

**प्रत्यात्ममिति च वक्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**यो यस्यान्तरतमः स तस्य स्थाने यथा स्यात्, अन्यस्यान्तरतमोऽन्यस्य स्थाने मा भूदिति ॥**

**( प्रदीपः ) प्रत्यात्ममिति ।** आत्मानमात्मानं प्रतीति समासः । स्थान्यात्मनोऽन्तरतम इत्यर्थः ॥

**( उद्द्योतः )** आत्मानमिति ॥ **अनश्चेति** टच् ॥ **स्थान्यात्मन इति ।** स्थानिरूपपदार्थस्येत्यर्थः ॥

**( ३३१ समाधानवार्तिकम् ॥ ६ ॥ )**

**॥ * प्रत्यात्मवचनमशिष्यं स्वभावसिद्धत्वात् ॥ * ॥**

**( भाष्यम् )**

**प्रत्यात्मवचनमशिष्यम् ॥**

**किं कारणम् ? ।**

**'स्वभावसिद्धत्वात्' । स्वभावत एतत्सिद्धम् । तद्यथा—समाजेषु समाशेषु समवायेषु चाऽऽस्यतामित्युक्ते न चोच्यते—प्रत्यात्ममिति, प्रत्यात्मं चासते ॥**

**( प्रदीपः ) स्वभावसिद्धत्वादिति ।** तुल्यन्यायतया सूत्रप्रत्याख्यानायैतदुक्तं न तु संबन्धिशब्दत्वादिति ॥ **समाजेष्विति । समाज** उत्सवेषु संघातः । **समाशः** सहभोजनम् । **समवायः** कस्यांचित् क्रियायां मेलनम् ॥

**( उद्द्योतः )** नन्वन्तरतमशब्दस्य सदृशार्थकत्वेन **तुल्यास्यप्रयत्न**मित्यत्रेव संबन्धिशब्दत्वादिति कुतो नोक्तमत आह—**तुल्येति ॥ प्रत्यात्मं चासत इति ।** स्वस्वसमाजेष्वेवासत इत्यर्थः ॥ **कस्यांचिदिति ।** धर्मनिर्णयादिक्रियायामित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये— **किं कारणम्**—कस्मात्कारणात् । **स्वभावत इति**—यत इत्यादिः । **एतत्**—प्रत्यात्मत्वम् । **न च**—न हि । **प्रत्यात्मञ्चेति**—किन्त्वित्यादिः ।

प्रदीपे—**सूत्रप्रत्याख्यानाय**—सूत्रप्रत्याख्यानमग्रे प्रतिपादयितुम् । **एतत्**—स्वभावसिद्धत्वादित्येव ।

उद्द्योते—**इत्यत्रेवेति**—इत्यत्र 'तस्ये'ति वचनस्येव प्रकृते 'प्रत्यात्ममि'ति वचनस्य सम्बन्धिशब्दत्वादित्युक्तहेतुनैव प्रत्याख्यानसम्भवे स्वभावसिद्धत्वादिति हेत्वन्तरानुसरणं विहायेत्याशयः । **इति**—इत्येव । **स्वस्वसमाजेष्वेव**—स्वस्वसमाजादिष्वेव ।

( सूत्रप्रत्याख्यानाधिकरणम् )

( ३३२ प्रत्याख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ अन्तरतमवचनं च ॥ * ॥

( भाष्यम् )

अन्तरतमवचनं चाशिष्यम्—योगश्चाप्ययमशिष्यः॥

कुतः ? ।

'स्वभावसिद्धत्वादेव'। तद्यथा—समाजेषु समाशेषु समवायेषु चास्यतामित्युक्ते—नैव कृशाः कृशैः सहासते, न पाण्डवः पाण्डुभिः। येषामेव किंचिदर्थकृतमान्तर्यं तैरेव सहासते ॥

तथा-गावो दिवसं चरितवत्यो—यो यस्याः प्रसवो भवति, तेन सह शेरते ॥

तथा—यान्येतानि गोयुक्तकानि संघुष्टकानि भवन्ति, तान्यन्योन्यमपश्यन्ति शब्दं कुर्वन्ति ॥

**( प्रदीपः ) नैव कृशा इति ।** गुणप्रमाणकृतसादृश्यपरिहारेण विद्याद्यर्थकृतमान्तर्यं लोक आश्रीयत इत्यर्थः । एवमिहापि यदीयमर्थं यः शक्नोति वक्तुं तस्य स्थाने स एव भवति ॥ **गाव इति ।** तिरश्चामप्ययं व्यवहारः संकीर्णानामसंकरलक्षणः । एवं चोदनायां संकीर्णा अप्यादेशा असंकरेण प्रवर्त्स्यन्ति ॥ **तथा यानीति ।** यथा तत्र सादृश्याद्वर्गीभवनं विच्छिन्नसाहचर्याणामपि भवति तथा स्थान्यादेशानां स्थानादिना सादृश्येन वर्गीभवनमित्यर्थः ॥

**( उद्द्योतः )** अर्थकृतान्तर्ये सति तदेव प्रयोजकमित्याह—**गुणेत्यादि ।** **पाण्डुत्वं** गुणः । **कृशत्वादि** प्रमाणम् । **विद्यादीति ।** आदिनोत्सवाशनाद्यर्थित्वब्राह्मणत्वादिजातिधनादिसंग्रहः । एवंच **अन्तरतमो भवतीति यत्रानेकविध**मिति च न्यायसिद्धमिति भावः ॥ दृष्टान्ते विवक्षितार्थमाह—**सङ्कीर्णानामिति** ॥ भाष्ये **प्रसवो** वत्सः ॥ **तेन सह ।** स्वस्वप्रसवेन सह ॥ **शेरत इति ।** शेतिः स्थितौ । **एवं चोदनायामिति ।** अनया रीत्या विधिशास्त्रेऽपीत्यर्थः ॥ **युक्तक**शब्दो युग्मवाची । **संघुष्टक**शब्दस्तत्तद्युगवहनादिनाऽत्यन्तपरिचितवाची ॥ अनेनापि ग्रन्थेन **यत्रानेकविध**मित्यर्थः साधित इत्याहुः ॥ **सादृश्यादिति ।** तत्तद्युगवहनाद्यत्र सादृश्यम् ॥

**(तत्त्वालोकः )** भाष्ये—तेन अन्तरतम इति पदमात्रप्रत्याख्यानभ्रमो मा भूदित्यर्थंतद् व्याचष्टे—**योगश्चापीति ।** **न**—नैव च । **येषामेवेति**—येषां यैरेवेत्यर्थः । किन्त्वित्यादिः । **तैरेवेति**—ते इत्यादिः ।

प्रदीपे—**इहापि**—शास्त्रेऽपि । गोपदं पक्षिणामप्युपलक्षणमित्याह-**तिरश्चामपीति ।** **तत्र**—लोके । **तथेति**—**शास्त्रे** इति शेषः ।

उद्द्योते—**सतीति**—अनेन-असति अन्यकृतान्तर्यस्यापि परिग्रह इति न गुणवृद्ध्यादिषु दोष इति सूचितम् । तद् ध्वनयन्नाह—**एवञ्चेति ।** तस्य वैयर्थ्यं परिहरति—**अनेनेति ।** **अपिना** पूर्वग्रन्थसमुच्चयः ।

( दृष्टान्तबाधकभाष्यम् )

एवं तावच्चेतनावत्सु ॥

**( तत्त्वालोकः )** उक्तरीत्या सादृश्याद् वर्गीभवनं विच्छिन्नसाहचर्याणामपि चेतनानामेव **लोके इष्टम्**, न त्वचेतनानामिति तद्दृष्टान्तेन शास्त्रे तादृशामचेतनानां स्थान्यादेशानां सादृश्याद् वर्गीभवनं नोपपादयितुं शक्यमिति तदर्थं प्रकृतसूत्रमावश्यकमेवेत्याशयेनाह—**एवं तावदिति ।** सादृश्याद् वर्गीभवनं केवलेष्विति शेषः ।

( दृष्टान्तान्तरभाष्यम् )

अचेतनेष्वपि । तद्यथा—लोष्टः क्षिप्तो बाहुवेगं गत्वा नैव तिर्यग्गच्छति नोर्ध्वमारोहति । पृथिवीविकारः पृथिवीमेव गच्छत्यान्तर्यतः ॥

तथा—या एता आन्तरिक्ष्यः सूक्ष्मा आपस्तासां विकारो धूमः । स धूम आकाशे निवाते नैव तिर्यग्गच्छति नावागवरोहति । अब्विकारोऽप एव गच्छत्यान्तर्यतः ॥

तथा—ज्योतिषो विकारोऽर्चिराकाशदेशे निवाते सुप्रज्वलितं नैव तिर्यग्गच्छति नावागवरोहति । ज्योतिषो विकारो ज्योतिरेव गच्छत्यान्तर्यतः ॥

**(प्रदीपः ) अचेतनेष्वपीति ।** न्यायस्य व्याप्तिप्रतिपादनपरमेतत् ॥ **अब्विकार इति ।** अन्तरिक्षे सूक्ष्मः समुद्रोऽस्तीति तद्विकारः सर्वा आप इति । काष्ठादिस्थानामपामग्निसंयोगाद् धूमो विकारः॥ सूर्यविकारोऽर्चिः सूर्यमेव गच्छति ॥

**( उद्द्योतः ) अन्तरिक्षे इति ।** अन्तरिक्षे भवा आन्तरिक्ष्यः॥ अत एव निदाघे निशि निरावरणे शयानानां शैत्योपलम्भः ॥ तस्यैव च रविकिरणसंपर्केण मेघरूपतया वायुयोगाद्वृष्टिः ॥ आन्तरिक्षीणामपां परम्परया धूमो विकार इति दर्शयति—**तद्विकारः सर्वा इति ।** **सूर्यविकार इति ।** अत एव दावाग्नेर्मध्याह्नादौ सूर्यकरसंपर्कात् क्रौर्यातिशयो दृश्यते ॥

**( तत्त्वालोकः )** भाष्ये—**अचेतनेष्वपीति**—न तथा सादृश्याद्वर्गीभवनं चेतनेष्वेव, किन्त्वित्यादिः । **बाहुवेगम्**—बाहुवेगानुसारं दूरम् । **न**—नैव च । एवमग्रेऽपि । **पृथिवीविकार इति**—किन्तु यतः स इत्यादिः । अत इति शेषः । एवमग्रेऽपि । सवाते तिर्यग्गमनादिदर्शनादाह—**निवात इति** । एवमग्रेऽपि । **ज्योतिषः**—सूर्यस्य । एवमग्रेऽपि ।

उद्द्योते—अत एव प्रागुपयुक्तं भाष्यार्थमाह—**अन्तरिक्षे इति ।** अन्तरिक्षे सूक्ष्मसमुद्रसत्त्वे प्रमाणमाह—**अत एवेति ।** शैत्यास्पदानामपामान्तरिक्ष्यत्वादेवेत्यर्थः । **तस्यैव च**—सूक्ष्मसमुद्रस्यैव च । भाष्यतः साक्षात्त्वस्य प्रतीतेराह—**परम्परयेति** । अर्चिषः सूर्यविकारत्वे प्रमाणमाह—**अत एवेति ।** तथा च-यथा लोके विच्छिन्नसाहचर्याणामप्यचेतनानामपि सादृश्याद्वर्गीभवनं तथा शास्त्रे स्थान्यादेशानां सादृश्याद्वर्गीभवनं सम्भवतीति तदर्थं प्रकृतसूत्रं नावश्यकमिति भावः ।

( सूत्रसत्ताप्राप्तदूषणनिराकरणाधिकरणम् )

( ३३३ दूषणवार्तिकम् ॥ ८ ॥ )

॥ * ॥ व्यञ्जनस्वरव्यतिक्रमे च तत्कालप्रसङ्गः ॥ * ॥

( भाष्यम् )

व्यञ्जनव्यतिक्रमे स्वरव्यतिक्रमे च तत्कालता प्राप्नोति ॥ व्यञ्जनव्यतिक्रमे—इष्टम् उष्त्रम् । आन्तर्यतोऽर्धमात्रिकस्य व्यञ्जनस्याऽर्धमात्रिक इक् प्राप्नोति॥

( प्रदीपः ) लोकव्यवहाराश्रयेण प्रत्याख्याते सूत्रे तदनाश्रयेण योगारम्भे दोषमाह—**व्यञ्जनेति** । व्यतिक्रमः स्थानित्वेन निवृत्तिः । इदमेव शास्त्रं निर्वर्तकमिति भावः ।

( उद्द्योतः ) **तदनाश्रयेणेति** । तदनभ्युपगम इत्यर्थः । ननु नार्धमात्रिक इगित्यत आह—**इदमेवेति** ॥ **कार्याः शब्दा** इति दर्शने प्रमाणादिना तत्तदन्तरालवर्णनिवर्तकमित्यर्थः । एवं च लोकेऽर्धमात्रिकाभावेऽपि पञ्चप्रातिपदिक एव स इति भावः ।

( तत्त्वालोकः ) भाष्ये—'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन व्यतिक्रमपदस्य व्यञ्जनस्वरपदयोः प्रत्येकमन्वयमभिप्रेत्याह—**व्यञ्जनेति** । अत्र-अल्पाच्तरत्वात् स्वरपदस्य पूर्वनिपाते कर्तव्ये उदाहरणक्रमानुरोधेन व्यञ्जनपदस्य पूर्वनिपातविधानम् , तदपि न युक्तमेव, 'द्व्येकयोर्द्विवचनैकवचने' 'ज्ञावतः क्रोडादिबह्वचः' इत्यादिनिर्देशैः पूर्वनिपातप्रकरणानित्यत्वस्य साधनात् ।

उद्द्योते—**एवञ्च**—प्रकृतसूत्रस्य प्रमाणादिना तत्तद्वर्णान्तरवर्तमानां वर्णानां निर्वर्तकत्वे च । **अभावेऽपीति**—अर्धमात्रिकस्येक इत्यादिः । **सः**—अर्धमात्रिक इक् ।

( दूषणबाधकभाष्यम् )

**नैव लोके नैव वेदेऽर्धमात्रिक इगस्ति ॥**

**कस्तर्हि ? ॥**

**मात्रिकः । योऽस्ति स भविष्यति ॥**

( प्रदीपः ) **नैव लोक इति** । नित्याः शब्दा अन्वाख्यायन्ते, निर्वृत्तिपक्षेऽप्युच्चारणस्याशक्यत्वादिति भावः ॥

( उद्द्योतः ) यदुक्तम—**इदमेवेति** । तत्राह—**नित्या इति** ॥ **निर्वृत्तिपक्षेऽपीति** । **शास्त्रकार्याः शब्दा** इति दर्शनेऽपीत्यर्थः ॥ **उच्चारणस्येति** । तस्य लोकाधीनत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**नैवेति**—नैष दोषः, यत इत्यादिः । **नैव**—नैव च । **योऽस्तीति**—तथाचेत्यादिः । एवमग्रेऽपि ।

प्रदीपे—**अन्वाख्यायन्ते इति**—तथा च—न नवीनस्यार्धमात्रिकस्येकोऽन्वाख्यानं सम्भवतीति भावः । ननु 'शास्त्रकार्याः शब्दाः' इति पक्षे प्रकृतसूत्रेणैव तस्य निर्वृत्तिः सम्भवतीत्यत आह—**निर्वृत्तिपक्षेऽपीति**—न तस्य निर्वृत्तिः सम्भवतीति शेषः । **उच्चारणस्य**—अर्धमात्रिकेयुच्चारणस्य ।

उद्द्योते—**तस्य**—उच्चारणस्य ।

( दूषणान्तरभाष्यम् )

**स्वरव्यतिक्रमे—दध्यत्र मध्वत्र कुमार्यर्थं ब्रह्मबन्ध्वर्थम् । आन्तर्यतो मात्रिकस्य द्विमात्रिकस्येको मात्रिको द्विमात्रिको यण् प्राप्नोति ॥**

( तत्त्वालोकः ) लोकव्यवहारानाश्रयणेन सूत्रारम्भे 'व्यञ्जनस्वरे'ति पूर्ववार्त्तिकोपस्थापितं दूषणान्तरमाह—**स्वरेति** ।

( दूषणबाधकभाष्यम् )

**नैव लोके नैव वेदे मात्रिको द्विमात्रिको वा यणस्ति ॥**

**कस्तर्हि ? ॥**

**अर्धमात्रिकः । योऽस्ति स भविष्यति ॥**

( प्रदीपः ) **नैव लोक इति** । कुक्कुटादिषु द्वे व्यञ्जने, न त्वेकं मात्रिकमिति भावः ।

( तत्त्वालोकः ) प्रदीपे—ननु लोके कुक्कुटादिशब्देषु मात्रिकव्यञ्जनस्य सत्त्वात् 'नैव लोके' इति भाष्यमसङ्गतमित्यत आह—**कुक्कुटादिष्विति** । शब्देष्विति शेषः ।

( ३३४ दूषणवार्त्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अक्षु चानेकवर्णादेशेषु ॥ * ॥

( भाष्यम् )

**अक्षु चानेकवर्णादेशेषु तत्कालता प्राप्नोति ॥ 'इदम इश्' । आन्तर्यतोऽर्धतृतीयमात्रिकस्येदमः स्थानेऽर्धतृतीयमात्रमिवर्णं प्राप्नोति ॥**

( प्रदीपः ) **अर्धतृतीयमात्रमिति** । अल्वेकादेशयोः कृतयोरिशभाव इति यदा प्रक्रियेति भावः ।

( उद्द्योतः ) इदमस्त्रिमात्रिकत्वेनार्धतृतीयमात्रिक इत्ययुक्तमत आह—**अल्वेति** । परत्वादल्वेऽन्तरङ्गत्वादेकादेशे इति भावः ॥

(तत्त्वालोकः) भाष्ये—**अर्धतृतीयमात्रिकस्येति**—**अर्धा** तृतीया मात्रा यस्य तस्येत्यर्थः । सार्धद्विमात्रिकस्येति भावः । एवमग्रेऽपि ।

प्रदीपे—**इति भाव इति**—तदेत्यादिः ।

उद्द्योते—**इदम इति**—तन्नित्यादिः । **अर्धतृतीयमात्रिक इति**—अत्र-अर्धतृतीयमात्रिकस्येति पाठः । **एकादेशे**—पररूपैकादेशे । तथाचेदमः सार्धद्विमात्रिकत्वमुपपन्नमिति भावः ।

( दूषणबाधकभाष्यम् )

**नैष दोषः । 'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येवं न भविष्यति ॥**

( प्रदीपः ) **भाव्यमानेनेति** । **नैव लोक** इत्ययं परिहारो नोक्तः । यदा विशेषविहितत्वादल्वमिशभावेन बाध्यते इति न्यायस्तदा त्रिमात्रस्य त्रिमात्रसंभवात्स्यादेव प्लुतः । प्लुताप्लुतप्रसङ्गे च **प्लुतश्च विषये स्मृत** इत्युच्यते । अत्र तु प्लुतस्यैव प्राप्तिः ॥

( उद्द्योतः ) **प्लुताप्लुतेति** । तादृशस्थले हि सपादसप्ताध्यायीस्थेन प्लुतविधौ त्रिपादीस्थप्लुतस्यासिद्धत्वात्तद्विषयेऽप्यनेनैव प्लुतविधौ तदंशेऽनुवादत्वमन्यांशे विधित्वमिति शास्त्रस्य वैरूप्यापत्तिस्तद्बीजम् । शास्त्रं त्वप्लुतविधानेन चरितार्थमिति । प्लुतमात्रविधाने तु तद्विषयकलक्षणवैयर्थ्यापत्त्यांशेऽनुवादत्वकल्पना सोढव्यैव । सामर्थ्येनान्तरतम परिभाषाबाधकल्पनापेक्षयाऽनुवादत्वस्य युक्तत्वाच्चेति भावः॥

( तत्त्वालोकः ) भाष्ये—**भाव्येति**—यत इत्यादिः । **इत्येवम्**—इति परिभाषया तादृशस्येदम आन्तर्यात्तादृशमिवर्णम् ।

प्रदीपे—**यदा**—यदा हि । **त्रिमात्रस्य**—इदमः । **त्रिमात्रेति**—इवर्णेति शेषः । **प्लुताप्लुतेति**—यत इत्यादिः ।

उद्द्योते—अत्र बीजमाह—**तादृशेति** । प्लुताप्लुतप्रसङ्गेत्यर्थः । **तदिति**—त्रिपादीस्थप्लुतेत्यर्थः । एवमग्रेऽपि । **अनेनैव**—सपादसप्ताध्यायीस्थेनैव । **तदिति**—प्लुताप्लुतेत्येतदित्यर्थः । **इतीति**—अस्य भाव इत्यत्रान्वयः । एवं प्लुताप्लुतेत्यस्याशयमभिधाय अत्र त्वित्यस्याशयमाह—**प्लुतेति** । **अंश इति**—प्रागुक्तरीत्येति भावः । **इति**—इति च ।

( ३३५ दूषणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ गुणवृद्ध्येज्भावेषु च ॥ * ॥

( भाष्यम् )

गुणवृद्ध्योरेज्भावेषु च तत्कालता प्राप्नोति ॥ खट्वा + इन्द्रः खट्वेन्द्रः । खट्वा + उदकम् खट्वोदकम् । खट्वा + ईषा खट्वेषा । खट्वा + ऊढा खट्वोढा । खट्वा + एलका खट्वैलका । खट्वा + ओदनः खट्वौदनः । खट्वा + ऐतिकायनः खट्वैतिकायनः । खट्वा + औपगवः खट्वौपगव इति । आन्तर्यतस्त्रिमात्रचतुर्मात्राणां स्थानिनां त्रिमात्रचतुर्मात्रा आदेशाः प्राप्नुवन्ति ॥

( प्रदीपः ) खट्वेन्द्र इति । संज्ञयात्र गुणवृद्ध्योर्भावनम् । संज्ञा च भिन्नकालानामपि स्यादिति भाव्यमानेनेति परिहारस्यात्रासंभवः ॥

( उद्द्योतः ) संज्ञा चेति । कार्यकालपक्षेऽपि यथा भाव्यमानत्वाभावस्तथोपपादितं वृद्धिसंज्ञासूत्रे ॥

( तत्त्वालोकः ) भाष्ये—'गुणवृद्ध्येज्भावेष्वि'त्यस्य—गुणश्च वृद्धिश्च एज्भावश्चेति गुणवृद्ध्येज्भावास्तेष्वित्यर्थमभिप्रेत्याह— गुणवृद्ध्योरिति ।

प्रदीपे—संज्ञेति—गुणवृद्धिसंज्ञेत्यर्थः । अपिना तत्कालानां समुच्चयः ।

उद्द्योते—'इदं यथोद्देशपक्षे' इति भ्रमनिराकरणायाह—कार्यकालेति । अपिना यथोद्देशपक्षसमुच्चयः । भाव्यमानत्वाभाव इति—वाक्यभेदाद् गुणवृद्धिसंज्ञाविधावेवमित्यादिः ।

( दूषणबाधकभाष्यम् )

नैष दोषः । तपरे गुणवृद्धी ।

( तत्त्वालोकः ) तपरे इति—यत इत्यादिः । तथा च 'तपरस्तत्कालस्ये'त्यनेन तत्कालानामेव संज्ञा स्यान्न तु भिन्नकालानामिति भावः ।

( दूषणसाधकभाष्यम् )

ननु च तः परो यस्मात्सोऽयं तपरः ॥

( तत्त्वालोकः ) 'ननु चे'त्यादि—'दकारोऽपी'त्यन्तभाष्यस्य व्याख्या वृद्धिसंज्ञासूत्रभाष्यव्याख्यातोऽवगन्तव्या ।

( दूषणबाधकभाष्यम् )

नेत्याह । तादपि परस्तपर इति ॥

( आक्षेपभाष्यम् )

यदि तादपि परस्तपरः, 'ऋदोरप्' इतीहैव स्यात्—यवः स्तवः । लवः पव इत्यत्र न स्यात् ॥

( आक्षेपबाधकभाष्यम् )

नैष तकारः ॥

कस्तर्हि ? ॥

दकारः ॥

( आक्षेपसाधकभाष्यम् )

किं दकारे प्रयोजनम् ? ॥

( प्रतिबन्दीभूतं समाधानभाष्यम् )

अथ किं तकारे ? ॥ यद्यसंदेहार्थस्तकारः, दकारोऽपि । अथ मुखसुखार्थस्तकारः, दकारोऽपि ॥

( दूषणवार्तिकशेषभाष्यम् )

एज्भावे—कुर्वाते कुर्वाथे । आन्तर्यतोऽर्धतृतीयमात्रस्य टिसंज्ञकस्यार्धतृतीयमात्र एच् प्राप्नोति ॥

( प्रदीपः ) एज्भाव इति । प्रत्याहारः 'पूतक्रतोरै च' 'मनोरौ वा' इत्यादिसंग्रहार्थः । तत्र हि मात्रिकए वैकार औकारश्च स्यात् ॥

( उद्द्योतः ) प्रत्याहार इति । वार्तिके गुणवृद्ध्येज्भावेषु, इति द्वन्द्वः, न तु कर्मधारयः । भाष्यविरोधादिति भावः ॥ तत्र हीति ॥ प्रमाणत आन्तर्यादिति भावः ॥

( तत्त्वालोकः ) प्रदीपे– इत्यादीति—विहितैजिति शेषः ।

उद्द्योते—द्वन्द्वः—द्वन्द्व एव । अत एवाह—न त्विति । भाष्येति—पूर्वापरेत्यादिः ।

( दूषणोद्धारभाष्यम् )

नैव लोके न च वेदेऽर्धतृतीयमात्र एजस्ति ॥

( ३३६ आक्षेपवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गोऽविशेषात् ॥ * ॥

( भाष्यम् )

ऋवर्णस्य गुणवृद्धिप्रसङ्गे सर्वप्रसङ्गः सर्वगुणवृद्धिप्रसङ्गः, सर्वे गुणवृद्धिसंज्ञका ऋवर्णस्य स्थाने प्राप्नुवन्ति ॥

किं कारणम् ?

अविशेषात् । नहि कश्चिद्विशेष उपादीयते—एवंजातीयको गुणवृद्धिसंज्ञक ऋवर्णस्य स्थाने भवतीति । अनुपादीयमाने विशेषे सर्वप्रसङ्गः ॥

( प्रदीपः ) ऋवर्णस्येति । अत्र ह्रस्वस्याकार एव गुणः स्यात्स चेष्यत एव । दीर्घस्य त्वेङौ स्याताम्, तुल्यप्रमाणत्वात् । तथा ह्रस्वस्य दीर्घस्य च सर्वे वृद्धिसंज्ञकाः प्राप्नुवन्ति । समुदायापेक्षया तु सर्वप्रसङ्ग इत्युच्यते ॥

( उद्द्योतः ) नन्वेवं ह्रस्वे सर्वगुणप्रसङ्गस्यानुपपादनादृवर्णमात्रे सर्वप्रसङ्ग इत्यनुपपन्नमत आह—समुदायापेक्षयेति । ऋवर्णीयह्रस्वादिसमुदायापेक्षयेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये— किं कारणम्—कस्मात्कारणात् । एवमग्रेऽपि ।

प्रदीपे—अत्र—एषां ( सकल-ऋवर्णानां निखिलगुणादीनां वा ) मध्ये ।

( ३३७ समाधानवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ न वा ऋवर्णस्य स्थाने रपरप्रसङ्गादवर्णस्यान्तर्यम् ॥ * ॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ? ।

ऋवर्णस्य स्थाने रपरप्रसङ्गात् । उः स्थाने अण्

**प्रसज्यमान एव रपरो भवतीत्युच्यते । तत्र ऋवर्णस्यान्तर्यतो रेफवतो रेफवानकार एवान्तरतमो भवति ॥**

**( प्रदीपः ) नवेति । उरण्रपर** इत्यनेन गुणवृद्धिशास्त्रस्यैकवाक्यतायां विधीयमान एवाण् रपरो भवतीति रश्रुतेरुः स्थानेऽरारौ क्रियमाणौ गुणवृद्धी भवत इत्यर्थः ॥

**( उद्द्योतः ) गुणवृद्धिशास्त्रस्येति ॥** प्रतिलक्ष्यं लक्षणभेदादृवर्णविषयगुणादिशास्त्रस्येत्यर्थः ॥ अङ्गान्त्यस्यैक ऋवर्णस्य रपरोऽण्रूपो गुण इति वाक्यार्थ इति भावः ॥ **रश्रुतेरि**त्यनेनैकदेशद्वारा स्थानत आन्तर्यमुक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**ऋ**वर्णस्य रेफघटितत्वात्तस्य स्थाने रेफघटितेनैव गुणाद्यादेशेन भवितव्यम्, न चाकारे विधीयमाने 'उरण् रपरः' इति शास्त्रबलेन भवितुमर्हतीति ऋवर्णस्थानेऽकार एव भविष्यतीति न तत्र सर्वप्रसङ्ग इत्याशयेनाह—**न वेति । उः स्थाने—**उः स्थाने हि । 'अवर्णस्यान्तर्यमि'ति भाष्यं व्याचष्टे—**तत्रेति ।** तथा सतीत्यर्थः ।

प्रदीपे—**विधीयेति—**उः स्थान इत्यादिः । **रश्रुतेः—**श्रूयत इति श्रुतिः, रः श्रुतिर्यत्र तस्य ।

उद्द्योते—यथाश्रुतेऽन्यत्रानिष्टापत्तेराह—**प्रतिलक्ष्यमिति ।** एकवाक्यतास्वरूपमाह—**अङ्गान्त्यस्येति ।**

**( ३३८ आक्षेपवार्तिकम् ॥ १३ ॥ )**

**॥⁂॥ सर्वादेशप्रसङ्गस्त्वनेकाल्त्वात् ॥⁂॥**

**( भाष्यम् )**

**सर्वादेशस्तु गुणवृद्धिसंज्ञक ऋवर्णस्य प्राप्नोति ॥**
**किं कारणम् ? ॥**
**अनेकाल्त्वात् । 'अनेकाल्शित्सर्वस्य' इति ॥**

**( प्रदीपः ) सर्वादेश इति ।** ऋवर्णस्य स्थानेऽरारौ क्रियमाणाव**लोऽन्त्यस्ये**त्येतद्बाधेनानेकाल्त्वात्सर्वादेशौ प्राप्नुतः ॥

**( उद्द्योतः ) ऋवर्णस्येति ॥** ऋवर्णान्ताङ्गस्येत्यर्थः ॥ **सर्वादेशाविति ।** तत्त्वेऽपि समुदायान्तर्वर्तित्वादृवर्णस्य तदादेशत्वमपि खट्वर्श्य इत्यादाविव वक्तुं शक्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**सर्वादेश इति—**यदि—ऋवर्णस्य स्थानेऽरारौ गुणवृद्धी क्रियेते, तर्हीत्यादिः । **ऋवर्णस्येति—**ऋवर्णान्ताङ्गस्येत्यर्थः । अरा इत्यादिः ।

उद्द्योते—ननु तयोः सर्वादेशत्वे ऋवर्णादेशत्वाभावात् रपरत्वं कथमित्यत आह—**तत्त्वेऽपीति ।** सर्वादेशत्वेऽपीत्यर्थः । **तदिति—**ऋवर्णेत्यर्थः । एवमन्यत्र दृष्टमित्याह—**खट्वर्श्य इति ।** यथा खट्वर्श्य इत्यादावेकादेशस्य पूर्वपरस्थानिकत्वेऽपि ऋकारस्थानिकत्वानपायाद् रपरत्वम्, तथा प्रकृते तयोः सर्वादेशत्वेऽपि ऋकारस्थानिकत्वानपायाद् रपरत्वमित्याशयः ।

**( ३३९ समाधानवार्तिकम् ॥ १४ ॥ )**

**॥ ⁂ ॥ न वाऽनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्याविघातः ॥ ⁂ ॥**

**( भाष्यम् )**

**न वा एष दोषः ॥**
**किं कारणम् ? ।**
**'अनेकाल्त्वस्य तदाश्रयत्वात्' । यदायमुःस्थानेऽण, तदायमनेकाल्, अनेकाल्त्वस्य तदाश्रयत्वादृवर्णादेशस्य विघातो न भविष्यति ॥**

**( प्रदीपः ) न वेति । अङ्गस्येति** षष्ठी पूर्वमेवान्त्यनिकृत्य संबध्यते । ततश्च ऋवर्णस्य स्थानित्वे विज्ञाते रपरत्वमानुपूर्व्या सिद्धत्वात् पूर्वप्रवृत्त**मलोऽन्त्यस्ये**त्यल्युरसंहारं न बाधत इत्यर्थः ॥

**( उद्द्योतः ) पूर्वमेवेति ।** अन्यथा ऋवर्णस्थानिकत्वाभावाद्रपरत्वमेव न स्यात् । न च समुदायान्तःपातिऋकाराश्रयेण रपरत्वम् । प्रत्यक्षे ऋवर्णस्थानित्वे सति तस्यानुमानिके प्रवृत्त्ययोगात् । खट्वर्श्य इत्यादौ तु **पूर्वपरयो**रित्यधिकारात् प्रत्यक्षेणैव स्थानित्वमिति भावः ॥ **पूर्वप्रवृत्तमिति ।** उपजीव्यं चेत्यपि बोध्यम् ॥ **न बाधत** इत्यत्रा**नेकाल्शित्सर्वस्ये**ति सूत्रं कर्तृ ।

**( तत्त्वालोकः )** भाष्ये—**तदाश्रयत्वात्—सः—**ऋवर्णादेशोऽण् रपरः सन्, आश्रयो यस्य तत्त्वात् । **तदाऽयमिति—**रपरः सन्निति शेषः । **अनेकाल्त्वस्येति—**तथा चेत्यादिः ।

उद्द्योते—विपक्षे बाधकमाह—**अन्यथेति ।** सर्वादेशे इति शेषः । सर्वादेशेऽपि रपरत्वोपपादिकां प्रागुक्तयुक्तिं खण्डयति—**न चेति ।** सर्वादेशेऽपीति शेषः । नन्वेवमुक्तदृष्टान्तासङ्गतिरित्यत आह—**खट्वर्श्य इति ।** यदाऽण् 'अलोऽन्त्यस्ये'त्यनेनान्त्यस्य ऋकारस्य स्थाने स्यात्तदा 'उरण् रपर' इत्यनेनानेकाल् स्यात् । यदा च सोऽनेकाल् स्यात्तदा 'अनेकाल्शित्सर्वस्ये'त्यनेन सम्पूर्णस्य स्थाने स्यादिति अलोऽन्त्यपरिभाषा अनेकाल्परिभाषाया उपजीव्या, उपजीव्यविरोधश्चान्याय्य इत्याशयेनाह—**उपजीव्यञ्चेति ।** कर्तुरनुपादानादाह—**अनेकालिति ।**

**( समाधानान्तरभाष्यम् )**

**अथवाऽनान्तर्यमेवैतयोरान्तर्यम् । एकस्यान्तरतमा प्रकृतिर्नास्ति, अपरस्यान्तरतम आदेशो नास्ति, एतदेवैतयोरान्तर्यम् ॥**

**( प्रदीपः ) अथवेति ।** निर्वृत्तस्याणो रपरत्वविधानेऽपि न दोष इत्यर्थः ॥ **अनान्तर्यमेवेति ।** नहि स्थानार्थगुणप्रमाणकृतमेवान्तर्यं परिभाषितम्, रूपान्तरेणापि सादृश्यसंभवात्परिग्रहाच्चेति भावः ॥ ऋवर्णस्य मात्रिकस्य मात्रिकोऽकारो गुणोऽन्तरतमोऽस्त्येवेति चेत् । तदर्थस्य यत्नस्याकरणाददोष एव । दीर्घस्य तुल्यप्रमाणत्वादेकारौकारावन्तरतमौ स्त इति चेद् । भवेदेतद् यदा भेदापेक्षा क्रियते । ऋवर्णमात्रस्य ह्रस्वाद्यवान्तरभेदानपेक्षायां स्थानकृतमान्तर्यं न केनचिदस्तीत्यनान्तर्यमेवेत्याद्युक्तम् ॥

**( उद्द्योतः )** रेफवतो रेफवानन्तरतम एवेति **अथवे**त्ययुक्तमत आह—**निर्वृत्तस्येति ॥ परिग्रहाच्चेति । पाददन्ते**त्यादौ स्थान्यादेशभावमते वर्णसाम्यकृतस्येति भावः ॥ सदृशसंबन्ध्यभाववत्त्वमुभयोः साधारणधर्मरूपं सादृश्यमिति तात्पर्यम् ॥ **यत्नस्येति ॥** परिहारान्तराभिधानरूपस्येत्यर्थः ॥ **स्थानकृतमिति । अनान्तर्यमिति** भाष्यस्य स्थानकृतान्तरतमाभाव इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—ननूपजीव्यविरोधस्यान्याय्यत्वाद् अलोन्त्यपरिभाषाया अनेकाल्परिभाषया बाधाभावेन सर्वादेशाभावेऽपि 'उरण् रपर' इत्यस्य 'उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर' इति व्याख्यानपक्षे ऋकारस्थाने एकारादयः कुतो नेत्यत आह—**अथवेति । एतयोः—**ऋवर्णावर्णयोः । नन्वनान्तर्यं किमित्यत आह—

**एकस्येति** । अवर्णस्येत्यर्थः । **अपरस्य—**ऋवर्णस्य । तथा च स्थानेऽन्तरतम इत्यनेनैव नियम इति न दोष इति भावः ।

प्रदीपे—'सोष्मणः सोष्माणः' इति भाष्यत्वादाह—**रूपान्तरेणापीति । ऋवर्णस्येति—**नन्वित्यादिः । **दीर्घस्येति—**ननु ऋवर्णस्येत्यादिः । **भेदापेक्षा—**तस्य ह्रस्वादिभेदापेक्षा । **ऋवर्णमात्रस्येति—**किन्वित्यादिः ।

उद्द्योते—**रेफवत इति—**नन्वित्यादिः । **कृतस्येति—**आन्तरतम्यस्येति शेषः । नन्वेवं प्रकृते किमायातमित्यतः प्राचां मतेन तयोरान्तर्यमाह—**सदृशेति । उभयोः—**ऋवर्णाविर्णयोः ।

( ३४० समाधानान्तरवार्तिकम् ॥ १५ ॥ )

## ॥ ॥ संप्रयोगो वा नष्टाश्वदग्धरथवत् ॥ ॥

( भाष्यम् )

**अथवा नष्टाश्वदग्धरथवत्सह संप्रयोगो भवति। तद्यथा—'तवाश्वो नष्टो ममापि रथो दग्धः, उभौ संप्रयुज्यावहै' इति । एवमिहापि—'तवाप्यन्तरतमा प्रकृतिर्नास्ति, ममाप्यन्तरतम आदेशो नास्ति, अस्तु नौ संप्रयोगः' इति ॥**

**( प्रदीपः ) सम्प्रयोगो वेति** । यदा **स्थानेऽन्तरतम** इत्येतत्प्रत्याख्यातमित्यर्थः ॥

**( उद्द्योतः ) नष्टाश्वदग्धरथवदिति** ॥ बहुव्रीहिगर्भद्वन्द्वाद्वतिः। **पूर्वोक्तेनाथवे**त्यनेन पौनरुक्त्यं परिहरति—**यदेति** ॥ केचित्तु तत्प्रत्याख्यानेऽपि लोकन्यायेन सदृश एवादेश इत्यर्थः सामितो भवतेति प्रत्याख्यानाप्रत्याख्यानयोः को विशेषस्तस्मादन्तान्तर्यस्याभावरूपस्य सादृश्यत्वानङ्गीकारेऽप्याह—**नष्टाश्वेति** ॥ ऋवर्णस्य स्थानित्वेनावर्णस्यादेशत्वेन ग्रहणसामर्थ्यादसादृश्येऽपि स्थान्यादेशभावः । यथा नष्टाश्वदग्धरथयोरत्यन्तभिन्नयोरपि असदृशयोरपि संप्रयोग इति तात्पर्यमित्याहुः ॥

**( तत्त्वालोकः ) भाष्ये—सहेति—**इहेत्यादिः । **उभाविति—**अत इत्यादिः । **तवापीति—**अवर्णस्येति शेषः । **ममापीति**—ऋवर्णस्येति शेषः । **अस्त्विति—**अत इत्यादिः ।

उद्द्योते—**तत्प्रत्याख्यानेऽपि—**'स्थानेऽन्तरतम' इत्येतत्प्रत्याख्यानेऽपि । **प्रत्याख्यानेति—**तस्येत्यादिः । **स्थान्यादेशेति—**तयोरित्यादिः ।

( समाधानबाधकभाष्यम् )

**विषम उपन्यासः ॥ चेतनावत्स्वर्थात्प्रकरणाद्वा लोके संप्रयोगो भवति। वर्णाश्च पुनरचेतनाः, तत्र किंकृतः संप्रयोगः ? ॥**

**( तत्त्वालोकः ) उपन्यासः—**दृष्टान्तः । **चेतनावत्स्विति—**यत इत्यादिः । **अर्थात्—**प्रयोजनात् । **च—**तु ।

( समाधानसाधकभाष्यम् )

**यद्यपि वर्णा अचेतनाः । यस्त्वसौ प्रयुङ्क्ते स चेतनावान् ॥**

( एकादेशे दूषणनिराकरणाधिकरणम् )

( ३४१ आक्षेपवार्तिकम् ॥ १६ ॥ )

## ॥ ॥ एजवर्णयोरादेशोऽवर्णं स्थानिनोऽवर्णप्रधानत्वात् ॥ ॥

( भाष्यम् )

**एजवर्णयोरादेशेऽवर्णं प्राप्नोति । खट्वैलका मालौपगवः ॥**

**किं कारणम् ? ।**

**स्थानिनोऽवर्णप्रधानत्वात्, स्थानी ह्यत्रावर्णप्रधानः॥**

**( प्रदीपः )** अवर्णप्रधानत्वादिति । इममेव हि न्यायमाश्रित्योक्तं **मेचोश्चोत्तरभूयस्त्वादि**ति ॥

**( उद्द्योतः )** प्रधानत्वं भूयस्त्वेन ॥

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्—**कस्मात्कारणात् । एज्घटकमध्यवर्ण स्थानि त्वेनाभिप्रेत्याह—**अवर्णप्रधानत्वादिति** ।

प्रदीपे—**न्यायम्—**दृष्टान्तम् ।

( ३४२ समाधानवार्तिकम् ॥ १७ ॥ )

## ॥ ॥ सिद्धं तूभयान्तर्यात् ॥ ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ।**

**उभयोर्योऽन्तरतमस्तेन भवितव्यम् । न चावर्णमुभयोरन्तरतमम् ॥ स्थानेऽन्तरतमः ॥ ५० ॥**

**( प्रदीपः )** उभयान्तर्यादिति । ह्रस्वशासने ह्येचः समुदायान्तरतम।भावाद्**दिचोश्चे**त्युक्तम् । इह तु संभवत्येव स्थानेन समुदायान्तरतम इत्यर्थः ॥ ५० ॥

**( उद्द्योतः )** भूयस्त्वन्यायस्तर्हि क्वेत्यत आह—**ह्रस्वेति** ॥५०॥

**( तत्त्वालोकः )** भाष्ये—**सिद्धमेतदिति—**अत्र 'सिद्धन्त्वेतत्' इति पाठो युक्तः । अन्यथा वार्त्तिकोक्ततुपदानन्वयप्रसङ्गात् । **कथम्—**कस्मात् । **'उभयोर्यः'** इत्यतः प्राग् 'उभयान्तर्यात्' इति पाठो युक्तः । पूर्वापरभाष्यशैलीसिद्धत्वात् । तथा च **'उभयोर्यः'** इत्यत्र 'उभयोर्हि यः' इति पाठो युक्तः । **उभयोः—**एजवर्णयोः । एवञ्चोभयोरन्तरतमत्वादेजेव स्यादित्याशयः ।

उद्द्योते—**भूयस्त्वेति—**नन्वित्यादिः ।

---

( ४५ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ७ ॥ )

# उरण्रपरः ॥ १ । १ । ५१ ॥

( सूत्रस्य रपरत्वमात्रविधायकत्वाधिकरणम् )

( आक्षेपभाष्यम् )

**किमिदमुरण्रपरवचनमन्यनिवृत्त्यर्थम्—'उः स्थानेऽणेव भवति रपरश्च' इति । आहोस्विद्रपरत्वमात्रमनेन**

**विधीयते—'उः स्थाने अण् च अनण् च । अण् तु रपरः' इति ? ॥**

**( प्रदीपः ) उरण् ॥ ५१ ॥ किमिदमिति ।** षष्ठीप्रकरणाद्यत्र षष्ठी तत्रेदमुपतिष्ठते । तत्र किमादेशान्तराणां बाधकमणं निर्वर्तयति, तस्य च वाक्यभेदेन रपरत्वम् । आहोस्विद्रपरत्वमात्रमनेन क्रियते-उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपर इति, प्रश्नः ॥ तत्र केषांचित्पाठोऽण् **भवति रपरश्चेति** । तत्रापूर्वोऽण् विधीयमान आदेशान्तराणां बाधकः । अन्येषां तु पाठोऽणेव **भवतीति ।** तत्र सामर्थ्याच्चान्यनिवृत्तिः । सैवैवकारेण प्रदर्श्यते ॥

**( उद्द्योतः ) उरण्र् ॥ ५१ ॥** भाष्ये **उरण्रपरवचनमिति ।** सूत्रस्थविसर्गप्राग्भागानुकरणेन षष्ठीसमासः ॥ नन्वन्यशब्देन न स्थानी, आदेशस्य स्थानिनिवर्तकत्वस्वभावत्वात् । न स्थानिव्यतिरिक्तः, उरणित्येतावतः स्थानिव्यतिरिक्तनिवर्तने सामर्थ्याभावादत आह—**षष्ठीति ।** यत्र षष्ठ्या ऋवर्णस्यादेशप्रसक्तिस्तत्रेत्यर्थः । स्वातन्त्र्येणास्य विधायकत्वं तु—**इको गुणवृद्धी** इत्यत्र भाष्ये एव निराकृतम् । तत्र यद्यन्यनिवृत्त्यर्थत्वं नियामकत्वेन, तदा **अथ नतमेतदि**ति वक्ष्यमाणस्य विशेषो न स्यादत आनुषङ्गिकं तदित्याह—**तत्रेति ॥ अपूर्व इति ॥** वाक्यभेदेन—ञ्नित्यादिरुदात्तो भवति, ऋवर्णस्य त्वण् भवति स च रपरः, इत्यर्थ इति भावः ॥ **तत्र सामर्थ्यादिति ॥** विशेषविधेः सामान्यविधिबाधकत्वेनेत्यर्थः । न तु वाच्यवृत्त्याऽस्य नियमपरत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अणेवेति**—अणोऽनणश्च प्रसङ्गेऽनेनेत्यादिः । **रपरश्चेति**—स वाक्यभेदेनेत्यादिः । **उः स्थान इति**—लक्षणान्तरेणेति शेषः । **अण् त्विति**—तत्रेत्यादिः । अनेनेति शेषः ।

प्रदीपे—**तत्र किमिति**—तत्रोपस्थितौ सत्यामिदं किमित्यर्थः । **आदेशान्तराणामिति**—अणोऽनणाञ्च प्रसङ्गे इत्यादिः । एकवाक्येन द्वयोर्विधानासम्भवादाह—**वाक्यभेदेनेति । मात्र**पदेनाणो व्यवच्छेदः । अत एवाह—**लक्षणान्तरेणेति । प्रश्नः**—इति प्रश्नः । नन्वत्र सूत्रे—उः स्थाने रपरोऽण् स्यात् । अथवा—उः स्थानेऽणोऽनणश्च प्रसङ्गे अणेव स्यात्, स्याच्च स (वाक्यभेदेन) रपरः । अथवा—उः स्थाने लक्षणान्तरेण निष्पन्नो योऽण् स रपरः स्यात् । अथवा—उः स्थाने ( लक्षणान्तरेण ) प्रसज्यमान एवाण् रपरः स्यादिति पक्षचतुष्टयं सम्भवति । तत्र पक्षद्वयस्यैवाभिधानाद् भाष्यकृतो न्यूनताऽऽपद्यत इत्यत आह—**तत्रेति ।** अन्यनिवृत्त्यर्थकल्पे इत्यर्थः । **तत्र**—तथा सति । एवमग्रेऽपि । तथा च—पक्षचतुष्टयमध्ये—प्रथमद्वितीयपक्षयोरन्यनिवृत्त्यर्थपक्षेण सङ्ग्रहात्, सिद्धान्तस्य चतुर्थपक्षस्य चान्यपक्षान्निराकृत्य 'सिद्धन्तु प्रसङ्गे रपरत्वादि'त्यादिग्रन्थेनाभिधास्यमानत्वात् प्रकृते पक्षद्वयोपन्यासेऽपि न भाष्यकृतो न्यूनतेत्याशयः ।

उद्द्योते—ननु सविसर्गसूत्रानुकरणेन षष्ठीसमासेऽपि तच्छ्रवणापत्तिरित्यत आह—**सूत्रस्थविसर्गप्राग्भागेति । स्वभावत्वादिति**—तथा सति तस्यावक्तव्यत्वेनास्य वैयर्थ्यापातादिति शेषः । **न**—न च । **सामर्थ्याभावादिति**—तथाऽपि सत्यस्य वैयर्थ्यापातादिति शेषः । अस्यानतिप्रसङ्गाय 'यत्र षष्ठी तत्रे'त्यस्यार्थमाह—**यत्रेति । स्वातन्त्र्येणेति**—अणंशे इति भावः । **तत्र**—तथा सति । अस्यादिमाह—**वाक्यभेदेनेति ।** तमेवाह—**ञ्नित्यादिरिति ।** फलितार्थमाह—**न त्विति ।**

( भाष्यम् )

**कश्चात्र विशेषः ? ॥**

**( तत्त्वालोकः ) अत्र**—पक्षद्वये ।

( २४३ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ ❀ ॥ उरण्रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषः ॥ ❀ ॥

( भाष्यम् )

**उरण् रपरवचनमन्यनिवृत्त्यर्थं चेदुदात्तादिषु दोषो भवति ॥**

**के पुनरुदात्तादयः ? ।**

**उदात्तानुदात्तस्वरितानुनासिकाः । कृतिः हृतिः, कृतं हृतम्, प्रकृतं प्रहृतम्, नॄँः पाहि ॥**

**( प्रदीपः ) उदात्तादिष्विति ।** अन्तरतमस्य बाधकोऽण् प्रसज्यत इति भावः । स चोदात्तादिगुणो न वेति सर्वथा दोषः ॥ **नॄँः पाहीति ।** यद्यप्यस्मिन् पक्षे पूर्वसवर्ण ऋकारो न लभ्यते, तथापि **नॄन् प** इति निपातनाद्भवति । नकारस्य तु रुत्वे कृतेऽनुनासिको विधीयमानोऽणेव स्यान्न तु ऋकार इति दोषः ॥ प्रतिपदविहितैरित्वोत्त्वादिभिरयं हि बाध्यत इति तेषां रपरत्वं न स्यात् ॥

**( उद्द्योतः ) स चोदात्तादिगुण इति ।** अत्र पक्षेऽ**नन्तरस्येति** न्यायेनान्तरतम इति परिभाषया अनेन बाध इति भावः ॥ **नवेति ।** यत्रोपस्थितिस्तद्विधेयस्य बाध इत्यभिमानः । भाष्ये **कृतिर्नित्स्वरेणा**द्युदात्तः । **कृत**मित्यत्र प्रत्ययस्वरेणान्तोदात्तत्वे शेषनिघातेन ऋकारोऽनुदात्तः । **प्रकृते, गतिरनन्तर** इति पूर्वपदप्रकृतिस्वरे शेषनिघाते **उदात्तादनुदात्तस्येति** स्वरितत्वम् । **उच्चैरुदात्त** इत्यादिषु षष्ठ्यन्तमच इत्यनुवर्तत इति पक्षे **ञ्नित्यादिरि**त्यादावच इत्युपस्थितेः षष्ठीसद्भावादुरणित्यस्योपस्थानमिति द्रष्टव्यम् ॥ नियमपक्षे वक्ष्यमाणदोषमत्राप्याकृष्य दर्शयति—**प्रतिपदेति ॥ तेषामिति ।** प्रत्यासत्त्योरणित्यनेन विधीयमानस्याणो विधीयमानामिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**उदात्तादिषु दोष इति**—कृतिरित्यादावुदात्तत्वादिना रहितं सहितं वा ऋकारं बाधित्वा तेन सहितो रहितो वा रपरोऽण् प्रसज्यते इति भावः । तर्हीत्यादिः ।

प्रदीपे—**अण्**—रपरोऽण् । एवमग्रेऽपि । **अस्मिन् पक्षे**—उः स्थाने रपरोऽण् स्यादिति पक्षे । अण्त्वाभावादाह—**न लभ्यत इति । प्रतिपदेति**—'ॠत इद्धातोः' 'उदोष्ठ्यपूर्वस्य' इत्यादिसूत्रैरित्यादिः । **अयम्**—रपरत्वविधिः ।

उद्द्योते—**अनेन**—'उरण् रपरः' इत्यनेन । तथा च—**ऋकार**स्यैव बाधो, न तु विधिसूत्रविधेयोदात्तत्वादेरिति तत्सहितो रपरश्चाण् स्यादिति भावः । **तद्विधेयस्य**—तद्विधेयस्यापि । एवञ्च—उदात्तत्वादिसहितस्य ऋकारस्य बाध इति तद्रहितो रपरश्चाण् स्यादित्याशयः । 'ञ्नित्यादिर्नित्यमि'त्यनेन ऋकारस्योदात्तत्वमभिप्रेत्याह—**नित्स्वरेणेति । स्वरितत्वमिति**—ऋकारस्येत्यादिः । ननु 'यत्र षष्ठी तत्रेदमुपतिष्ठते' इत्यभ्युपगते 'ञ्नित्यादिरि'त्यादौ षष्ठ्या अभावात्कथमस्योपस्थितिरित्यत आह—**उच्चैरिति । नियमपक्षे**—उःस्थाने अणनणोः प्रसङ्गे अणेव भवति, स चरपर इति पक्षे । **अत्रापि**—उःस्थाने रपरोऽण् स्यादिति पक्षेऽपि । नन्वित्वोत्त्वादीनामण्त्वस्य सत्त्वात्कथं रपरत्वाभाव इत्यत आह—**प्रत्यासत्त्येति ।**

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्ह्युः स्थाने अण् चानण् च, अण् तु रपर इति ।**

**( तत्त्वालोकः )** अधुना—भाष्ये द्वितीयत्वेनोक्तं 'वस्तुतस्तृतीयं' पक्षमभ्युपगच्छति—**अस्तु तर्हीति ।** यथैवमित्यादिः । तथा च—

अन्तरतमपरिभाषासंस्कृतैस्तत्तद्विधिसूत्रैः कृतिरित्यादौ उदात्तत्वादिसहितस्य ऋवर्णस्यैव विधानादुदात्तादिषु न दोष इति भावः।

( ३४४ द्वितीयपक्षदूषणवार्तिकम् ॥ १९ ॥ )

॥ ❀ ॥ य उः स्थानेऽण् स रपर इति चेद् गुणवृद्ध्योरवर्णाप्रतिपत्तिः ॥ ❀ ॥

( भाष्यम् )

**यः उः स्थानेऽण् स रपर इति चेद् गुणवृद्ध्योरवर्णस्याप्रतिपत्तिः। कर्ता हर्ता वार्षगण्यः॥**

**( प्रदीपः ) गुणवृद्ध्योरिति ।** भूतस्य चेदणो रपरत्वं क्रियते, तदा तु गुणवृद्धिविधावणेव दुर्लभ इति दोषः॥

**( उद्द्योतः ) दुर्लभ इति ।** ह्रस्वस्य गुणाकारलाभेऽपि दीर्घस्याकारगुणालाभः, वृद्धिस्तु नियमेनाण् न लभ्यते इत्यर्थः॥ कर्तेत्याद्युदाहरणं भाष्ये दीर्घान्तस्याप्युपलक्षणम्॥

**( तत्त्वालोकः )** भाष्ये—**अणिति**—लक्षणान्तरेण निष्पन्न इत्यादिः। **गुणवृद्ध्योरिति**—तर्हीत्यादिः। **वार्षगण्य इति**—अत्र-वृषगणस्यापत्यमिति व्युत्पत्तौ 'गर्गादिभ्यो यञि'त्यनेन यञ्।

प्रदीपे—**भूतस्येति**—उः स्थाने लक्षान्तरेणेत्यादिः।

उद्द्योते—नन्वान्तर्यतो मात्रिकस्य मात्रिके गुणे रपरत्वे च कर्त्तेत्यादिसिद्धेः कथन्तत्राणो दुर्लभत्वोक्तिरित्यत आह—**ह्रस्वस्येति।** तथा च—तरितेत्यादावेङेव गुण आपद्येतेत्याशयः। अविशेषाद् वृद्धित्रये प्रसक्ते विनिगमनाऽभावात्कदाचिदाकारवृद्धौ रपरत्वे च कारक इत्यादीष्टसिद्धावपि कदाचिदैकारादिवृद्धौ कायक इत्याद्यनिष्टमप्यापद्यत इत्याशयेनाह—**नियमेनेति।** नन्वेवं दीर्घान्तस्योदाहरणाप्रदर्शनाद् भाष्यकृतो न्यूनता प्रसज्यत इत्यत आह—**कर्त्तेत्यादीति।**

( द्वितीयपक्षदूषणशेषाक्षेपभाष्यम् )

**किं हि साधीयः—ऋवर्णस्यासवर्णे यदवर्णं स्यात्, न पुनरेङैचौ ?॥**

**( प्रदीपः ) किं हि साधीय इति ।** किं साधुतरं कारणमित्यर्थः॥ **न पुनरिति ।** ततश्चावर्णस्यैव नियमेनाप्रतिपत्तिरिति व्याख्येयम्॥

**( उद्द्योतः )** किमित्यस्य विशेष्यमाह—**कारणमिति।** भाष्ये **असवर्णे।** सदृशाभावे इत्यर्थः॥ ननु नियामकाभावे कदाचिदवर्णस्यापि प्रतिपत्तौ कथमवर्णाप्रतिपत्तिरत आह—**ततश्चेति॥**

**( तत्त्वालोकः )** भाष्ये-**पुनरिति**-वाक्यालङ्कारे। एवमग्रेऽपि।

प्रदीपे—**ततश्चेति**—विनिगमनाऽभावात् कदाचिदवर्णस्य कदाचिच्च—एङैचोः प्रतिपत्तौ चेत्यर्थः।

उद्द्योते—**किमित्यस्येति**—विशेष्यांशे साकाङ्क्षत्वात्तस्येति शेषः। **अपिना**— एङैचोः परिग्रहः।

( द्वितीयपक्षवादिभाष्यम् )

**पूर्वस्मिन्नपि पक्षे एष दोषः। किं हि साधीयस्तत्रापि ऋवर्णस्यासवर्णे यदवर्णं स्यात्, न पुनरिकारोकारौ॥**

**( तत्त्वालोकः ) पूर्वस्मिन्नपि पक्षे**—'अन्यनिवृत्त्यर्थमि'त्यभिमतविधिपक्षेऽपि। **एषः**—अवर्णाप्रतिपत्तिरूपः। **तत्रापि**—पूर्वस्मिन् पक्षेऽपि।

( प्रथमपक्षवादिभाष्यम् )

**अथ मतमेतत्—उः स्थाने अणश्चानणश्च प्रसङ्गे अणेव भवति रपरश्चेति। सिद्धा पूर्वस्मिन् पक्षेऽवर्णस्य प्रतिपत्तिः॥**

**( प्रदीपः ) अथ मतमिति ।** स एव पक्षाक्षेपवाद्याह। नानेनान्येषां बाधकोऽपूर्वोऽण् विधीयते। किं त्वणनणोः प्रसङ्गेऽणेव भवतीति नियमः क्रियते, स च रपरः। न च गुणवृद्धिप्रसङ्गे इकारोकारप्रसङ्गः॥

**( उद्द्योतः )** दोषपरिहारायाक्षेपवाद्येवा**न्यनिवृत्त्यर्थ**मित्यस्य नियमपरतया व्याख्यानमाशङ्क्य दूषयति—भाष्ये—**अथ मतमिति॥ एतत्** वक्ष्यमाणं नियमरूपत्वमन्यनिवृत्त्यर्थमिति वदतो **मतं** संमतं विवक्षितमित्यर्थः॥ **सिद्धा पूर्वस्मिन्निति।** अन्यनिवृत्त्यर्थमिति पक्षे इत्यर्थः॥ **स चेति।** वाक्यभेदेनेत्यर्थः॥ नन्वेवमिकारोकारावपि स्यातामत आह—**न च गुणेति॥**

**( तत्त्वालोकः )** भाष्ये—**इदानीं**—भाष्ये प्रथमत्वेनोक्तं 'वस्तुतो द्वितीयं' पक्षमभ्युपगच्छति-**अथ मतमिति। सिद्धेति**-एवञ्चेत्यादिः।

प्रदीपे—**पक्षेति**—द्वितीयेत्यादिः। **अनेन**—'उरण् रपरः' इत्यनेन। **अण्**—रपरोऽण्।

उद्द्योते—**दोषेति**—अवर्णाप्रतिपत्तिरूपेत्यादिः। **आक्षेपेति**—द्वितीयपक्षेत्यादिः। **इत्यस्य**—आद्यवार्तिकोक्तस्य। नन्वेवम् 'अन्यनिवृत्त्यर्थमि'त्यभिमतविधिपक्षवादिनस्तदभिमतनियमपक्षवादिमतप्रवेशेनान्यमतप्रवेश आपद्यतेति चेन्न, अस्मिन् पक्षद्वयेऽन्यनिवृत्त्यर्थत्वस्य तुल्यत्वेनैतादृशान्यमतप्रवेशस्य कथञ्चित् सह्यत्वात्। **इति पक्षे**—इत्यभिमतनियमपक्षे। एकवाक्येन द्वयोर्विधानासम्भवादाह—**वाक्यभेदेनेति।**

( आक्षेपभाष्यम् )

**यत्तु तदुक्तम्—'उदात्तादिषु दोषः' इति, स इह दोषो जायते, न जायते॥**

**( प्रदीपः ) यत्तु तदुक्तमिति ।** किं भवान्मन्यत इति विचारयति॥

**( उद्द्योतः ) भवानिति ।** नियमपक्षवादीत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**तदुक्तमिति**—तस्मिन् ( अन्यनिवृत्त्यर्थमित्यभिमतविधिपक्षे ) उक्तमित्यर्थः। **इह**—अन्यनिवृत्त्यर्थमित्यभिमतनियमपक्षे। **नेति**—अथवेत्यादिः।

प्रदीपे—**किमिति**—अनयोरित्यादिः।

( समाधानभाष्यम् )

**जायते स दोषः॥**

**कथम् ?।**

**उदात्त इत्यनेनाणोऽपि प्रतिनिर्दिश्यन्ते, अनणोऽपि॥**

**( प्रदीपः )** स एव युक्तियुक्तं पक्षं गृह्णाति—**जायत इति॥**

**( उद्द्योतः ) स एवेति।** विचारक एवेत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**उदात्त इति**—यत इत्यादिः। **इत्यनेन**—इत्यादिना। **अनणोऽपीति**—तथेत्यादिः।

प्रदीपे—**युक्तियुक्तमिति**—तयोरित्यादिः।

( समाधानबाधकभाष्यम् )

**यद्यपि—अणोऽपि प्रतिनिर्दिश्यन्ते। न तु प्राप्नुवन्ति॥**

**किं कारणम् ? ।**
**स्थानेऽन्तरतमो भवतीति ॥**

**( उद्द्योतः )** शङ्कते—भाष्ये—**यद्यप्यणोऽपीति ॥**

**( समाधानसाधकभाष्यम् )**

**कुतो नु खल्वेतत्—द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः 'स्थानेऽन्तरतम' इति 'उरण् रपरः' इति च, 'स्थानेऽन्तरतम' इत्यनया परिभाषया व्यवस्था भविष्यति, न पुनर् 'उरण् रपरः' इति ? ॥**

**अतः किम् ? ॥**
**अत एष दोषो जायते—'उदात्तादिषु दोषः' इति ॥**

**( प्रदीपः ) कुतो नु खल्विति ।** अन्तरतमपरिभाषाया अवकाशः **अकः सवर्णे दीर्घः, झयो होऽन्यतरस्या**मिति । **उरण् रपर** इत्यस्यावकाशः कर्ता हर्तेति । इहोभयं प्राप्नोति—कृतिरिति । परत्वादियमेव प्राप्नोतीति दोषः ॥

**( उद्द्योतः )** परिहरति—**कुतो न्विति ।** तमब्ग्रहणसहित-स्याप्यवकाशप्रदर्शनाय **झयोह** इत्युक्तम् ॥ **उरणरपर इत्यस्यावकाश इति । गुणविधौ स्थानेऽन्तरतम**परिभाषानुपस्थितिः ऋवर्ण-समुदायान्तरतमगुणाभावादिति भावः ॥ यद्यपि भाष्याद्विनिगमना-ऽभावो लभ्यते, तथापि **एष दोषो जायत** इत्युत्तरग्रन्थासङ्गतेर्विनिग-मकं प्रदर्श्या**न्तरतम**परिभाषाऽप्रवृत्तिमुपपादयति— **परत्वादिति ॥**

**( तत्त्वालोकः )** भाष्ये—**नु खल्विति, पुनरिति च**—वाक्या-लङ्कारे । एतत्पदबोध्यं निर्दिशति—**द्वयोरिति । अतः**—यदि 'उरण् रपरः' इत्यनया परिभाषया व्यवस्था भविष्यति, ततः ।

प्रदीपे—**उरणिति**—तथेत्यादिः । **परत्वादिति**—किन्तु तत्रे-त्यादिः । **इयमेव**—'उरण् रपरः' इतीयम् परिभाषैव । **इति दोषः**—इति हेतोः स दोषः ।

उद्द्योते—नन्वेकत्रान्तरतमपरिभाषाया अवकाशप्रदर्शनेनैवेष्ट-सिद्धौ—अपरत्रापि कथन्तस्यास्तत्प्रदर्शनमित्यत आह—**तमबिति ।**

**( आक्षेपभाष्यम् )**

**ये चाप्येते ऋवर्णस्य स्थाने प्रतिपदमादेशा उच्यन्ते, तेषु रपरत्वं न प्राप्नोति—'ऋत इद्धातोः' 'उदोष्ठ्यपूर्वस्य' इति ।**

**( प्रदीपः ) ये चाप्येत इति ।** यत्र ह्यनियमप्रसङ्गस्तत्रानेन नियमः क्रियते, तत्र तच्छेषभूतं रपरत्वं भवति न त्वन्यत्र प्रतिपद-विधाविति दोषः ॥

**( उद्द्योतः )** ननु प्रतिपदविहिता अप्यण एवेति कुतो रपरत्वा-प्राप्तिरत आह—**यत्र हीति ॥ ग्रो यङीति** लत्वविधानादावृत्त्या **तेषामपि रपरत्वमिति चेत्** । ऋकारान्तर्गतरेफस्य लत्वार्थं तत्स्यादिति **न दोषः** ॥ भाष्ये—**ये चाप्येत इति** बहुवचने**नाप्पृक्षग्पृधा**मिति **ईत्वसंग्रहः ॥**

**( तत्त्वालोकः )** भाष्ये—अन्यनिवृत्त्यर्थमित्यभिमतनियमपक्षे दोषान्तरमाह—**ये चाप्येत इति ।**

**प्रदीपे—अनियमेति**—अणनणोरित्यादिः । **अनेन**—'उरण् रपरः' इत्यनेन । **नियमः**—अणनणोः प्रसङ्गे अणेव भवतीति **नियमः । तत्रेति**—तथा सतीत्यर्थः । वाक्यभेदेनेति शेषः । **तच्छेष-भूतमिति**—एवेति शेषः । **इति दोषः**—इति इतोऽन्यत्र रपरत्वा-प्राप्तिरूपो दोषः ।

उद्द्योते—**ग्रो यङीतीति**—नन्वित्यादिः । **लत्वविधानात्**—लत्वविधानसामर्थ्यात् । **आवृत्त्या**—'उरण् रपरः' इत्यस्यावृत्त्या । **तेषामपि**—प्रतिपदविहितानामित्वादीनामपि । **तत्**—लत्वविधानम् । **न दोषः**—न भाष्यासङ्गतिः ।

**( ३४१ समाधानवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ सिद्धं तु प्रसङ्गे रपरत्वात् ॥ * ॥

**( भाष्यम् )**

**सिद्धमेतत् ॥**
**कथम् ? ।**
**'प्रसङ्गे रपरत्वात्' । उः स्थाने अण् प्रसज्यमान एव रपरो भवति ॥**

**( प्रदीपः ) सिद्धं त्विति ।** विधिवाक्यैरस्यैकवाक्यतायां विधा-नकाल एवाणो रपरत्वं क्वचन इत्यर्थः ।

**( उद्द्योतः ) विधीति ॥** ऋवर्णस्थानिकाणविधिवाक्यैरित्यर्थः ॥ **एकवाक्यतायामिति ।** वाक्यैकवाक्यतायामित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—एवं पक्षान्तराणि दूषयित्वा सिद्धान्तं चतुर्थपक्षमुपस्थापयति—**सिद्धन्त्विति । एतत्**—तत्र रपरत्वम् । **प्रसज्येति**—लक्षणान्तरेणेत्यादिः । **रपर इति**—अनेनेत्यादिः ।

प्रदीपे—**अस्य**—'उरण् रपरः' इत्यस्य । **विधानेति**—लक्षणा-न्तरेणेत्यादिः । **रपरत्वमिति**—रपरत्वमात्रमित्यर्थः । अनेनेत्यादिः ।

उद्द्योते—अस्याननिप्रसङ्गायाह—**ऋवर्णेति ।** एतच्च-प्रतिलक्ष्यं लक्षणभेदमाश्रित्योपपद्यत इत्याशयः पदैकवाक्यताया असम्भवादाह—**वाक्यैकेति ।**

**( आक्षेपभाष्यम् )**

**किं वक्तव्यमेतत् ? ।**

**( तत्त्वालोकः ) एतत्**—( उरणिति सूत्रे ) स्थानादिपदम् ।

**( समाधानभाष्यम् )**

**नहि ॥**
**कथमनुच्यमानं गंस्यते ? ।**
**स्थान इति वर्तते । स्थानशब्दश्च प्रसङ्गवाची ॥**

**( तत्त्वालोकः ) स्थान इतीति**—'षष्ठी स्थानेयोगे'ति सूत्र-घटक-स्थान इत्यत्र स्वरितत्वप्रतिज्ञानात्तत इत्यादिः । **वर्त्तते**—अनुवर्त्तते ।

**( आक्षेपभाष्यम् )**

**यद्येवमादेशोऽविशेषितो भवति ॥**

**( प्रदीपः ) यद्येवमिति ।** नह्यनेनोः स्थानेऽण् विधीयतेऽपि तु लक्षणान्तरेण । तत्र विध्यङ्गभूता **षष्ठी स्थानेयोगे**ति परिभाषा नोपतिष्ठते । तथा **चोदीचामातः स्थाने** इत्यत्र स्थानग्रहणं कृतम् । तत उः समीपे योऽण् तस्यापि रपरत्वप्रसङ्ग इति स्थानग्रहणानुवृत्त्या उः स्थाने य आदेशोऽणित्येतावल्लभ्यते, [न तु प्रसज्यमान **इति ॥ आदेश इति ।** प्रसज्यमानत्वेनेत्यर्थः । अथवा स्थानग्रहणानुवृत्त्या प्रसज्यमान इत्येषोऽर्थो लभ्यते, नतूः स्थान इति । ततश्चाण आदेश-रूपता नियमेन न लभ्यते इति सामीप्यलक्षणोऽपि वगम्येतेत्यर्थः ॥

**( उद्द्योतः )** ननु उरिति षष्ठ्याः स्थानेयोगत्वस्य लाभः स्यादत आह—**नहीति ।** एवंचायमनुवाद इति भावः ॥ **विध्यङ्गेति ।** विधेयेन साक्षाद्यत्र संबन्धस्तत्र सा परिभाषेत्यर्थः ॥ **उदात्तस्वरितयोर्यणो लः परस्मैपद**मित्यादावनुवादेऽप्यस्याः प्रवृत्तेर्यद्येवमित्यादिभाष्यमेकदेशिनोरुक्तिरिति बोध्यम् ॥ **उः समीप इति ।** तथा च तृतीय इत्यादावप्यणो रपरत्वप्राप्तिरित्यर्थः ॥ सामीप्यं चाव्यवहितेऽपीति भावः ॥ **स्थाने च आदेशोऽणिति ।** अनुवर्तमानस्थानेग्रहणमुरित्यस्य संबन्धिशब्दत्वात्तत्रैव संबध्येतेत्यर्थः ॥ नन्वेवमादेशः स्थानेन विशेषित एवेति **आदेशोऽविशेषित** इति भाष्यासङ्गतिरित्यत आह—**प्रसज्यमानत्वेनेति ॥ अथवा स्थानेति ।** स्थानशब्दस्य प्राधान्याद् रपर इत्यनेन संबन्ध इति भावः ॥ **तत इति ।** अणः स्थानपदार्थेनाविशेषणादित्यर्थः ॥ एवं च नादेशान्तराणां बाधकोऽणिवधीयते, नापि नियमः, नापि विहितस्य रपरत्वम्, प्रसज्यमानत्वेन विशेषणात् । किं तु तत्तद्विधिभिर्वाक्यैकवाक्यतैवास्येति बोध्यत इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**यद्येवमिति—**यद्यप्येवमित्यर्थः । तथापीति शेषः ।

प्रदीपे—**अनेन—**प्रकृतसूत्रेण । नन्वेवमनुवादभूतेऽप्यस्मिन्नुरिति षष्ठ्याः स्थानेयोगत्वस्य लाभः कुतो नेत्यत आह—**तत्रेति ।** तथा सत्यनुवादभूतेऽस्मिन्नित्यर्थः । 'विधौ परिभाषोपतिष्ठते, नानुवादे' इति न्यायादिति भावः । **तथा च—**अनुवादे तस्या अनुपस्थाने च । ननु किमेनात्रेत्यत आह— **तत इति ।** तदनुपस्थितेरित्यर्थः ।

उद्द्योते—**अयम्**—प्रकृतयोगः । विधौ साक्षात्तदभावादाह—**विधेयेनेति ।** स्थानिन इत्यादिः । **सा**—'षष्ठी स्थानेयोगे'ति । इदं खण्डयति—**उदात्तेति । अस्याः**—'षष्ठी स्थाने योगे'ति परिभाषायाः । तथा च—'उदीचामातः स्थाने' इत्यत्र स्थानेग्रहणं स्पष्टार्थम्, 'विधौ परिभाषोपतिष्ठते, नानुवादे' इति न्यायश्च 'इको गुणवृद्धी' 'अचश्च' इति परिभाषाद्वयमात्रविषयः, तत्र विधीयते इत्यस्याध्याहारादिति भावः । **आदिना**—'आदेशश्चे'ति भाष्यपरिग्रहः । अत एव द्विवचनान्तेनाह—**एकदेशिनोरिति ।** वादिप्रतिवाद्येकदेशिनोरित्यर्थः । ननु तत्र व्यवधानान्नाणस्तत्प्राप्तिरित्यत आह—**सामीप्यञ्चेति ।** भाष्याशयमाह—**एवञ्चेति ।** तथाऽर्थलाभे चेत्यर्थः । **अस्य**—'उरणि'त्यस्य ।

( समाधानभाष्यम् )

**आदेशश्च विशेषितः ॥**

**कथम् ? ।**

**द्वितीयं स्थानग्रहणं प्रकृतमनुवर्तते । तत्रैवमभिसंबन्धः करिष्यते—'उः स्थाने अण् स्थान इति । उः प्रसङ्गे अण् प्रसज्यमान एव रपरो भवति ॥**

**( प्रदीपः ) द्वितीयमिति ।** तच्चार्थात् प्रथमान्तं संपद्यतेऽथवा सप्तम्यन्त एव तस्मिन्नयमर्थो भवति–प्रसङ्ग एवात्राण् रपरो भवतीति । इदानीमुदात्तादिषु दोषो नास्ति, **स्थानेऽन्तरतम** इत्यनया परिभाषया कृतिरित्यादावृकारस्य ऋकार एव प्रवर्तेत इत्यणः प्रसङ्ग एव नास्ति । गुणवृद्धी च ऋकारस्य विधीयमाने अरारावेवान्तरतम्याद्भवत इत्यवर्णप्रतिपत्तिरप्यस्ति ॥

भावः **(उद्द्योतः ) अथवेति ।** स्थानपदेन प्रसङ्गकालो लक्ष्यत इति दिति भावः॥ **एवेति ।** स्थानतः प्रमाणतः स्वरूपतश्च सदृशत्वा-

**( तत्त्वालोकः )** भाष्ये—**प्रकृतमिति—**'स्थानेऽन्तरतमः' इत्यत्रेत्यादिः । **तत्र—**तथा सति ।

प्रदीपे—**स्थानेऽन्तरेति**—यत इत्यादिः । गुणवृद्ध्योश्च प्राप्त्यवस्थायामेवाणो रपरः सम्पन्ना इति प्रमाणतोऽन्तरतमावेङैचौ बाधित्वा स्थानतोऽन्तरतमोऽणेव भवतीत्याशयेनाह— **गुणवृद्धी चेति ।**

उद्द्योते—**स्थानपदेनेति**—यद्यपि 'स्थानेऽन्तरतमः' इत्यत्र स्थानशब्दस्य तात्पर्यविषयत्वम्, तथापि शब्दाधिकाराश्रयणादिहानुवृत्तेनेत्यादिः ।

( अणुग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अथाणग्रहणं किमर्थम्, न ऊः रपरो भवतीत्येवोच्येत ? ॥**

**( तत्त्वालोकः ) नेति**—किमित्यादिः । अत्र 'भवती'ति पाठो न युक्तः, सूत्रे तस्यासमावेशादिति बोध्यम् ।

( प्रत्याक्षेपभाष्यम् )

**ऊः रपर इतीयत्युच्यमाने क इदानीं रपरः स्यात् ? ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**यः स्थाने भवति ॥**

**कश्च स्थाने भवति ? ॥**

**आदेशः ॥**

( ३४६ आक्षेपबाधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ आदेशो रपर इति चेद्रीरिविधिषु रपरप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**आदेशो रपर इति चेद्रीरिविधिषु रपरत्वस्य प्रतिषेधो वक्तव्यः ॥**

**के पुना रीरिविधयः ? ।**

**अकङ्लोपाऽऽनङनङ्रीङ्रिङादेशाः ॥**

**अकङ्—सौधातकिः । अकङ् ॥**

**लोप—पैतृष्वसेयः । लोप ॥**

**आनङ्—होतापोतारौ । आनङ् ॥**

**अनङ्—कर्ता हर्ता । अनङ् ॥**

**रीङ्—मात्रीयति पित्रीयति । रीङ् ॥**

**रिङ्—क्रियते ह्रियते । रिङ् ॥**

**( प्रदीपः ) रीरिविधिष्विति** बहुवचननिर्देशाद् रीरिशब्दावुपलक्षणमिति पृच्छति— **के पुनरिति ॥ पैतृष्वसेय इति ।** लोपवचनं तु सर्वादेशार्थं स्यात् ॥ **होतापोताराविति ।** रेफस्य संयोगान्तलोपे कृते तस्यासिद्धत्वान्नलोपो न स्यात् ॥

**( उद्द्योतः )** ननु वार्तिकोक्तरीरिविध्योर्ज्ञातत्वात्तस्य चोपलक्षणत्वे प्रमाणाभावात् **के पुन**रिति प्रश्नानुपपत्तिरत आह—**बहुवचनेति ॥ सौधातकौ 'सुधातुरकङ्चे'** ति इञ् ॥ **पैतृ**ष्वसेये **ढकि लोप**स्तत एव ढक् च ॥ ननु लोपस्य रपरत्वे तं विनापि यणादेशेन तत्साध्यरूपसिद्धिरत आह—**लोपेति ।** रपरत्वाभिधानमुखेन सर्वा-

देशत्वमेव लोपस्याभिधित्सितमिति भावः ॥ यदि सर्वादेशो लोपस्तदा उः स्थाने नेति कथं रपरत्वमितीदं चिन्त्यम् । तस्माल्लोपविधिवैयर्थ्यापादनमेव दोष इति तत्त्वम् ॥ आनङनङौ 'आनङृतो द्वन्द्वे' 'ऋदुशनेति' विहितौ । रेफस्येति । झल्ग्रहणापकर्षणः प्रतिषेधारम्भाच्च चिन्त्यमिदम् । तस्माद्रेफश्रवणमेव दोषोऽत्रेति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—चेदिति—तर्हीति शेषः । रीङ्—'रीङ् ऋतः' इति रीङ् । रिङ्—'रिङ् शयग्लिङ्क्षु' इति रिङ् । यवणग्रहणं न क्रियेत, तर्हि—ऋवर्णस्थानिको य आदेशः स रपरः स्यादित्याश्रीयमाणे तत्स्थानिकानामकङ्लोपाद्यादेशानामपि रपरत्वं प्रसज्येतेति तद्ग्रहणं कर्तव्यमित्याशयः ।

प्रदीपे—उपेति—अन्येषामपीत्यादिः । इति—इति कारणात् । सर्वादेशार्थमिति—सामर्थ्यादलोऽन्त्यविधिं बाधित्वेत्यादिः । रेफस्येति—आनङो रपरत्वे इत्यादिः ।

उद्द्योते—इञ्—अकङ् तथा चकारादिञ् । ढकि लोपः—'ढकि लोपः' इति ऋवर्णलोपः । विधायकान्तराभावादाह—तत एवेति । तम्—लोपम् । तदिति—लोपेत्यर्थः । रूपसिद्धिरिति—इति लोपवचनं व्यर्थमिति शेषः । नन्वण्ग्रहणाभावपक्षे यणादेशस्य रपरत्वे रेफद्वयम्, लोपस्य रपरत्वे तु रेफैक्यमिति वैषम्यात् कथं यणादेशेन लोपसाध्यरूपसिद्धिरिति चेन्न; 'रौरी'त्येकरेफलोपेन यणादेशेऽपि रेफैक्यात् । न चान्तरङ्गं 'रौरी'ति लोपम्प्रति बहिरङ्गयणोऽसिद्धत्वाद् 'रौरी'ति लोपाप्रवृत्त्या वैषम्यं तदवस्थमेवेति वाच्यम्, यथोद्देश-कार्यकालपक्षद्वयेऽपि त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेर्भाष्यसिद्धान्तितत्वेन तत्र तदप्रवृत्तेः ॥ एवेन—रपरत्वव्यवच्छेदः । कैयटोक्तं खण्डयति—यदीति । रपरत्वमिति—यदि च न रपरत्वन्तर्हि कथं सर्वादेशत्वमिति शेषः । वस्तुतस्तु—लोपस्याभावरूपत्वेनाल्व्यवहारविषयत्वाभावाद् रपरत्वेऽपि अनेकाल्त्वाभावेन सर्वादेशत्वस्यानुपपत्तिरित्याशयः । एवं कैयटोक्ते दूषिते स्वयं भाष्यतात्पर्यमाह—तस्मादिति । कैयटोक्तं निराकरोति—झल्ग्रहणेति । 'संयोगान्तस्य लोपः' इत्यत्र 'झलो झलि' इत्यत इत्यादिः । एवं कैयटोक्ते खण्डिते स्वयं भाष्याशयमाह—तस्मादिति ।

( ३४७ आक्षेपबाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * उदात्तादिषु च ॥ * ॥

( भाष्यम् )

उदात्तादिषु च ॥

किम् ? ।

रपरत्वस्य प्रतिषेधो वक्तव्यः ॥ कृतिः हृतिः ।

कृतं हृतम् । प्रकृतम् प्रहृतम् । नॄँः पाहि ॥ तस्मादण्ग्रहणं कर्तव्यम् ॥

( तत्त्वालोकः ) तस्मात्—यावते लाघवायाण्ग्रहणं न क्रियेत, तावतोऽधिकं गौरवमण्ग्रहणाभावे उक्तस्थलद्वये प्रसक्तस्य रपरत्वस्य प्रतिषेधकथने प्रसज्येतेत्यस्मात्कारणात् । नन्वण्ग्रहणे कृतेऽपि यो रिङादिष्वण् स रपरः कुतो नेति चेन्न, आदेशत्वस्य समुदाये विश्रान्तत्वेन तस्यानादेशत्वादिति दिक् ॥

( एकादेशे रपरत्वसाधकवार्तिकम् )

( ३४८ आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ एकादेशस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

एकादेशस्योपसंख्यानं कर्तव्यम् । खट्वर्श्यः मालर्श्यः ॥

किं पुनः कारणं न सिध्यति ? ।

उः स्थाने अण् प्रसज्यमान एव रपरो भवतीत्युच्यते । न चायमुरेव स्थानेऽण् शिष्यते ॥

किं तर्हि ? ।

उश्चान्यस्य च ॥

( प्रदीपः ) एकादेशस्येति । पूर्वपरयोरिति समुदायस्य स्थानित्वेन चोदितत्वात्तस्य च ऋवर्णरूपत्वाभावादिति भावः ।

( उद्द्योतः ) समुदायस्येति । द्वन्द्वस्य सत्त्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—एकादेशस्येति—प्रकृतसूत्रे इत्यादिः । ननु किमर्थमत्र तदुपसंख्यानं कर्तव्यमित्यत आह—खट्वर्श्यः मालर्श्य इति । इत्यादौ रपरत्वसिद्ध्यर्थमिति शेषः । किं पुनः कारणमिति—यदत्र तदुपसंख्यानाभावे तत्र रपरत्वमिति शेषः । उः स्थान इति—यतोऽत्रेत्यादिः । अयम्—तत्रैकादेशरूपः । उश्चेति—'एकः पूर्वपरयोरि'ति सत्त्वादित्यादिः ।

( ३४९ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ अवयवग्रहणात्सिद्धम् ॥ * ॥

( भाष्यम् )

यदत्र ऋवर्णं तदाश्रयं रपरत्वं भविष्यति । तद्यथा—'माषा न भोक्तव्याः' इत्युक्ते मिश्रा अपि न भुज्यन्ते ॥

( प्रदीपः ) अवयवग्रहणादिति । पूर्वपरयोरित्यनेनोद्भूतावयवभेदः समुदायो निर्दिश्यते । अवयवावेव चापेक्षितपरस्परौ समुदाय इति भवत्ययमृवर्णस्य स्थान इति भावः ॥

( उद्द्योतः ) उद्भूतेति । अत एव द्विवचननिर्देशः । तत्सामर्थ्यादेव प्रत्येकं स्थानित्वबुद्धिरिति भावः ॥ नन्ववयवभेदस्योद्भूतत्वविवक्षा नाम तद्गतसङ्ख्यायाः समुदाये आरोपः, नैतावता प्रत्येकं स्थानित्वलाभोऽत आह—अवयवावेव चेति । इतरेतरयोग इति शेषः ॥ एवंच तत्र समुदायस्यावयवाभेदेन बोधनाद् द्विवचनेन प्रत्येकं तयोः स्थानित्वलाभः ॥ अयमेव चोद्भूतावयवभेदः समुदाय इत्यस्यार्थ इति भावः ॥

( तत्त्वालोकः ) भाष्ये—अवयवग्रहणादिति—प्रकृतसूत्रे—एकादेशस्योपसंख्यानं न कर्तव्यम्, यत इत्यादिः । अत्र रपरत्वमिति शेषः । वार्त्तिकं व्याचष्टे—यदत्रेति । ऋवर्णस्थानिकाणो रपरत्वं भवत्वित्युक्ते वर्णान्तरसहिततत्स्थानिकाणोऽपि रपरत्वं स्यादित्यत्र व्यतिरेकिदृष्टान्तमाह—तद्यथेति । मिश्राः—तण्डुलादिसंमिश्रिताः माषाः । यथाऽत्र माषमाश्रित्य भोजननिषेध उपपद्यते, तथा तत्र ऋवर्णमाश्रित्य रपरत्वमुपपत्स्यते इति भावः ।

प्रदीपे—अयम्—अत्रैकादेशरूपोऽण् ।

उद्द्योते—**अत एवेति**—तेनोद्भूतावयवभेदसमुदायस्य निर्देशादेवेत्यर्थः। तत्रेति शेषः। **तस्मादर्थादिदेवेति**—द्विवचननिर्देशसामर्थ्यादेव चेत्यर्थः। तयोरिति शेषः। **तद्बुतेति**—अवयवभेदगतेत्यर्थः। **प्रत्येकमिति**—पूर्वपरयोरिति शेषः। समाहारे—द्वन्द्वे तदभावादाह—**इतरेतरेति**। **तत्र**—पूर्वपरयोरित्यत्र।

( ३५० समाधाननिरासवार्तिकम् ॥ ८ ॥ )

## ॥ * । अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तप्रतिषेधः ॥ * ।

( भाष्यम् )

**अवयवग्रहणात्सिद्धमिति चेदादेशे रान्तस्य प्रतिषेधो वक्तव्यः। होतापोतारौ। यथैवोश्चान्यस्य च स्थानेऽण् रपरो भवतीति, एवं य उः स्थानेऽण् चानण् च सोऽपि रपरः स्यात्॥**

**( प्रदीपः ) रान्तप्रतिषेध इति।** आनङि विधीयमाने आकारस्याणो भावादित्यर्थः॥ तस्मा**दवयवग्रहणा**दित्यस्यातिव्यापकत्वाद्यत्र साक्षादृवर्णस्याण् विधीयते तत्रैवेदमुपतिष्ठत इत्येकादेशस्योपसंख्यानं कर्तव्यमेव॥

**( उद्द्योतः )** भाष्येऽगृहीताभिप्रायः समुदायस्यातिरिक्तस्य स्थानित्वेपि तदन्तर्गतावयवस्यापि स्थानित्वमादाय ऋस्थानिकत्वमनेनोक्तमित्यभिप्रायवानाह—**अवयवग्रहणात्सिद्धमिति चेदिति॥ रान्तस्येति।** रान्तत्वस्येत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—तर्हि स्थानिनीवादेशेऽप्यवयवग्रहणं स्यादित्यानङ आकारमाश्रित्य तस्य रपरत्वं प्रसज्येतेतीति शेषः।

प्रदीपे—**भावादिति**—तस्य रपरत्वप्रसक्तेरिति शेषः। भाष्याशयमाह—**तस्मादिति। साक्षात्**—केवलस्य। **इदम्**—प्रकृतसूत्रम्। **इतीति**—खट्वर्श्य इत्याद्यावादेशस्य रपरत्वसिद्ध्यर्थमिति शेषः। **उपेति**—रपरत्वेत्यादिः।

उद्द्योते—नन्वेवमुत्तरग्रन्थासङ्गतिरित्यत आह—**भाष्येऽगृहीतेति।** नर्हि किमभिप्रायवानाहेत्यत आह—**समुदायस्येति। आदायेति**—एकादेशस्येति शेषः। रान्तपदस्य धर्मिपरत्वे आदेशे तद्भेदानुपपत्तेस्तस्य धर्मपरतामाह—**रान्तत्वेति।**

( व्याख्यान्तरे दूषणभाष्यम् )

**यदि पुनः-ऋवर्णान्तस्य स्थानिनो रपरत्वमुच्येत, खट्वर्श्यः मालर्श्यः॥**

**नैवं शक्यम्। इह न प्रसज्येत—कर्ता हर्ता, किरतिगिरति। ऋवर्णान्तस्येत्युच्यते, न चैतदृवर्णान्तम्॥**

**( प्रदीपः ) यदि पुनरिति।** उरिति वर्णग्रहणा**द्वर्णग्रहणं च सर्वत्र तदन्तविधिं प्रयोजयती**ति न्यायादृवर्णान्तस्य ग्रहणम्। खट्वर्श्य इत्यत्र च समुदाय ऋवर्णान्तो भवतीति सिद्धं रपरत्वम्॥ **कर्तेति। अङ्गस्ये**ति षष्ठी अन्त्यमलमुपसङ्क्रामतीति ऋवर्णस्य गुणेन भाव्यम्। न च ऋवर्णमृवर्णान्तं भवतीति दोषः॥ न चेह तदन्तविधिरस्ति, **उरणि**ति भूतानुवादात्। न च प्रदेशेषु तदन्तस्य कार्यम्, अन्त्यस्यैवानुसंहारेण स्थानित्वप्रतिपादनादिति भावः॥

**( उद्द्योतः ) ऋवर्णान्तेति।** शब्दशास्त्रप्रस्तावात् शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः॥ नन्विकाऽङ्गे विशेष्यमाणे तदन्तविधेर्ऋवर्णान्तस्य गुणेन भाव्यमत आह—**अङ्गस्येति॥ षष्ठीति।** इगन्ताङ्गान्त्यस्य गुण इति वाक्यार्थ इति भावः॥ भाष्ये लक्ष्यासिद्धिदोषो ऋवर्णान्तस्येत्यर्थे उक्तः। स्वयं तदर्थासम्भवमप्याह—**न चेहेति॥ भूतानुवादादिति।** एवंचानुवादे परिभाषाया इव संज्ञाया अप्यप्रवृत्तिः। यद्वा समानविभक्त्यन्तविशेष्यरहितभूतानुवादादित्यर्थः॥ यत्र हि साक्षादर्थाद्वा विशेषणसमानाधिकरणं विशेष्यमुपादीयते तत्रैव वर्णग्रहणे तदन्तविधिः। गमकं विना शब्दरूपं विशेष्यमादाय तु न तदन्तविधिरिति भावः॥ **न च प्रदेशेष्विति।** इह तदन्तविध्यभावेपि यदि प्रदेशेषु ऋवर्णान्तस्य षष्ठीनिर्देशेन स्थानित्वं स्यात्तत्तदनुरोधेनानुवादेपि एकदेशद्वारा ऋवर्णान्तं ग्राह्यं तदपि नास्तीति भावः॥ इद चिन्त्यम्। **वृद्धिर्यस्ये**त्यादा**वीदूदेद्द्विवचन**मित्यादौ चानुवादेपि संज्ञाप्रवृत्तेः। **वर्णग्रहणं च सर्वत्रे**ति च शब्दरूपविशेष्यमादाय तदन्तविधौ गमकम्। अतो भाष्योक्त एव दोषः॥

**( तत्त्वालोकः )** भाष्ये—**खट्वर्श्यः मालर्श्य इति**—तर्हि यद्यपीत्यादिः। इत्यादौ स्थानिनः समुदायस्य ऋवर्णान्तत्वाद् रपरत्वं सिद्ध्येदिति शेषः। **नैवमिति**—तथापीत्यादिः। वक्तुमिति शेषः। **इहेति**—यतस्तथा सति रपरत्वमित्यादिः। **ऋवर्णान्तस्येति**—यत इत्यादिः। स्थानिन इति शेषः। **एतत्**—अत्र स्थानि ऋवर्णम्।

प्रदीपे—**उरितीति**—'उरण्' इत्यत्रेत्यादिः। **समुदाय इति**—स्थानी, स चेति शेषः। **अन्त्यमिति**—'अलोऽन्त्यस्ये'त्यनेनेत्यादिः। एवमग्रेऽपि। **ऋवर्णस्य**—ऋवर्णमात्रस्य स्थानिनः।

उद्द्योते—**तदन्तविधिरिति**—स्वीक्रियत इति शेषः। **भाष्यमिति**—एवञ्च भाष्यासङ्गतिरिति शेषः। अग्रिमकथनसौकर्यायात्र विषये भाष्यकारकैयटयोरुक्ती विभज्य निर्दिशति—**भाष्ये लक्ष्येति।** ननु तस्य भूतानुवादत्वेन किमित्यत आह—**एवञ्चेति।** 'विधौ परिभाषोपतिष्ठते, नानुवादे' इति न्यायादिति भावः। ननु 'लः परस्मैपदमि'त्यादावनुवादेऽपि परिभाषायाः प्रवृत्त्या दृष्टान्तस्यायुक्तत्वान्नेदं युक्तमित्यत आह—**यद्वेति।** ननूक्तरीत्या तदन्तविधिः स्यादित्यत आह—**गमकं विनेति। प्रदेशेषु**—'सार्वधातुकार्धधातुकयोरि'त्यादिप्रदेशेषु। **तदपीति**—स्यात्, किन्त्वित्यादिः। **इदम्**—कयटकृतं तदर्थासम्भवोपपादनम्। तयोराद्ये दूषणमाह—**वृद्धिरिति।** प्रकृतसाजात्यादाह—**ईदूदेदिति।** द्वितीये दोषमाह—**वर्णेति। विधाविति**—स्वीक्रियमाण इति शेषः। प्रकृतमुपसंहरति-**अत इति।**

( दूषणबाधकभाष्यम् )

**ननु चैतदपि व्यपदेशिवद्भावेन ऋवर्णान्तम्॥**

**( तत्त्वालोकः )** अभ्यासात्पूर्वत्रेवात्रापि वाक्यालङ्कारे **चः** प्रयुक्तः। **एतदपि**—कर्तेत्यादौ स्थानिभूतमृवर्णमपि। **ऋवर्णान्तमिति**—स्यादिति शेषः।

( दूषणसाधकभाष्यम् )

**अर्थवता व्यपदेशिवद्भावः। न चैषोऽर्थवान्। तस्मान्नैवं शक्यम्॥ न चेदेवम्, उपसंख्यानं कर्तव्यम्॥ इह च रपरत्वस्य प्रतिषेधो वक्तव्यः—मातुः पितुरिति॥**

**( प्रदीपः ) अर्थवतेति।** यथैवेयावेत्यत्रैकाच्त्वम्। अर्थस्य हि त्यागोपादानाभ्यां वर्णरूपता धातुरूपता च व्यवस्थाप्यते॥

**इह चेति** । उपसंख्यानस्यातिव्याप्त्येत्यर्थः ॥ **मातुरिति** । रपरत्वे कृते विभक्तिसकारस्य रुत्वम् , पूर्वस्य **रोरी**ति लोपः । **ढ्रलोप** इति दीर्घत्वम् । तत्र मातूरिति प्राप्नोतीति भावः ॥

**( उद्द्योतः )** भाष्ये—**अर्थवतेति** । इत्यसहायत्वोपलक्षणम् । अत एव कुरुते इत्यादावनर्थकेनापि सः । तत्र हि स टिसंज्ञोपयोगिसहायरहित एवेति दिक् ॥ भाष्ये—**इह चेति । एकादेशस्योपसङ्ख्यान**मित्यौपसङ्ख्यानिकरपरत्वप्रतिषेधश्च वक्तव्य इत्यर्थः । मातुरित्यादौ तदुपसङ्ख्यानातिव्याप्तेरिति भावः ॥ **मातूरितीति । ऊ रपर** इति पूर्वोक्तभाष्यप्रयोगविरोधाद् **'ऋतउदि**ति तपरत्वान्मातुरित्यादौ न दीर्घः' इत्यपास्तं वेदितव्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अर्थवतेति**—न स्याद्, यत इत्यादिः । **एषः**—तत्र स्थानी ऋवर्णः । **तस्मान्नैवमिति**—उक्तरीत्या कर्त्तेत्यादिलक्ष्यासिद्धिप्रसङ्गात्र ऋवर्णान्तस्य स्थानिनो रपरत्वमिति वक्तुं शक्यमित्यर्थः । **न चेदेवमिति**—वक्तुं शक्यम् , तर्हीति शेषः । **उपसंख्यानमिति**—खट्वर्श्य इत्यादावादेशस्य रपरत्वसिद्ध्यर्थम् 'एकादेशस्य रपरत्वोपसंख्यानम्' इत्यर्थः । कृते च तस्मिन् 'ऋत उदि'त्युदादेशस्याप्येकादेशत्वान्मातुरित्यादौ तेन रपरत्वं प्रसज्येतेति तद्वारणायात्र तत्प्राप्तरपरत्वस्य प्रतिषेधो वक्तव्य इत्याशयेनाह—**इह चेति** ।

प्रदीपे—**एवो** वाक्यालङ्कारे । **एकाच्त्वमिति**—'इ' इत्यस्मिन् व्यपदेशिवद्भावेनेत्यादिः । **उपसंख्यानस्य** —एकादेशस्य यद्रपरत्वोपसंख्यानन्तस्य । **तत्र**—तथा सति ।

उद्द्योते—**अनर्थकेनापीति**—तघटकाकारेणेति शेषः । **सः**—व्यपदेशिवद्भावः । **तत्र**—कुरुते इत्यादौ । **सः**—तघटकाकारः । **विरोधादिति**—अस्य 'अपास्तमि'त्यत्रान्वयः ।

**( समाधानभाष्यम् )**

**उभयं न वक्तव्यम् ॥**

**कथम् ? ॥**

**इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम् । तद्यथा—देवदत्तस्य पुत्रः देवदत्तायाः पुत्र इति ॥**

**( प्रदीपः ) द्वयोरिति** । अवयवावेवात्रापेक्षितपरस्परौ स्थानिनौ । अत एवैकग्रहणं स्थानिभेदादादेशभेदनिवृत्त्यर्थं कृतम् ॥ **अन्यतरत इति** । तृतीयान्तादाद्यादित्वात्तसिः ॥ **तद्यथेति** । एकः पुत्र उभाभ्यामपि यथा व्यपदिश्यते, तथेहापि पूर्वपराभ्यां तत्स्थानिकत्वेनादेशस्य व्यपदेशः । अकङादेस्तु समुदायस्यादेशत्वं, नाण इति रपरत्वाभावः ॥

**( उद्द्योतः )** उक्तेऽर्थे गमकमाह—**अत एवेति** ॥ पञ्चम्यन्तात्तसिल्यर्थसङ्गतेराह—**तृतीयान्तादिति** ॥ **समुदायस्येति** । प्रत्येकमादेशत्वे प्रमाणाभावादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**उभयम्**—( खट्वर्श्य इत्यादौ ) एकादेशस्य रपरत्वोपसंख्यानम् , ( मातुरित्यादौ ) तदुपसंख्यानप्राप्तरपरत्वप्रतिषेधश्चेत्युभयम् । **कथमिति**—यद्येवं तर्हीत्यादिः । खट्वर्श्य इत्यादौ रपरत्वमिति शेषः । **इहेति**—यत इत्यादिः । **व्यपदेशमिति**—तथा च खट्वर्श्य इत्यादावेकादेशस्य ऋकारस्थानिकत्वस्यापि सत्त्वाद्रपरत्वं सेत्स्यतीत्याशयः ।

प्रदीपे—**आदेशभेदनिवृत्त्यर्थमिति**—भिन्नमित्यादाविवात्राप्यादेशद्वयं मा भूदित्यर्थमित्याशयः ।

**( आक्षेपभाष्यम् )**

**कथं मातुः पितुरिति ? ॥**

**( तत्त्वालोकः ) कथमिति**—यद्येवं तर्हीत्यादिः । उक्तरीत्या खट्वर्श्य इत्यादाविव मातुरित्यादावप्येकादेशस्य ऋकारस्थानिकत्वस्यापि सत्त्वाद्रपरत्वं प्रसज्येतेत्याशयः ।

**( आक्षेपबाधकभाष्यम् )**

**अस्त्वत्र रपरत्वम् ॥**

**(तत्त्वालोकः)** स्थानान्तरनिमित्तत्वेनाभ्युपगच्छति—**अस्त्वत्रेति**।

**( आक्षेपसाधकभाष्यम् )**

**का रूपसिद्धिः ? ॥**

**( तत्त्वालोकः ) का रूपेति**—यद्यत्र रपरत्वन्तर्हीत्यादिः । अत्र रपरत्वे कैयटोक्तरीत्या मातूरित्याद्यनिष्टरूपमापद्येतेत्याशयः ।

**( आक्षेपबाधकभाष्यम् )**

**'रात्सस्य' इति सकारस्य लोपः । रेफस्य विसर्जनीयः ॥**

**( उद्द्योतः )** भाष्ये—**रात्सस्येति** । सलोपे रुत्वस्यासिद्धत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**विसर्जनीय इति**—तथा च मातुरित्यादीष्टरूपसिद्धिरित्याशयः ।

उद्द्योते—ननु रुत्वे कृते सकार एव नास्तीति कथन्तस्य लोप इत्यत आह—**सलोप इति** । कर्तव्य इति शेषः ।

**( आक्षेपसाधकभाष्यम् )**

**नैवं शक्यम् । इह हि—मातुः करोति पितुः करोतीति, 'अप्रत्ययविसर्जनीयस्य' इति षत्वं प्राप्नोति ॥**

**( प्रदीपः ) अप्रत्ययेति** । असित्ययं समुदायः प्रत्ययो न त्वकार इति तदादेशोऽप्यप्रत्यय इति भावः ॥

**( उद्द्योतः ) असित्ययमिति** । प्रत्ययरूपविसर्गभिन्नस्येत्यर्थ इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**नैवमिति**—यद्यप्येवं मातुरित्यादीष्टरूपं सिद्ध्यति, तथापीत्यादिः । वक्तुमिति शेषः । **इह हीति**—तथा सतीत्यादिः । 'इदुदुपधस्य चाप्रत्ययस्य' इति सूत्रघटकम् 'अप्रत्ययस्य' इत्यंशं विवृण्वन्नाह—**अप्रत्ययेति** ।

प्रदीपे—**समुदाय इति**—एवेति शेषः । अत एवाह—**न त्विति । तदादेशः**—उत् । एवमग्रेऽपि । तथा च—तस्मात्परत्वेनायातो यो रेफस्तत्स्थानिकविसर्गस्य प्रत्ययरूपविसर्गभिन्नत्वात् षत्वमापद्येतेति भावः ।

उद्द्योते—'इदुदुपधस्य चे'ति सूत्रस्थस्य 'अप्रत्ययस्ये'त्यंशस्यार्थमाह—**प्रत्ययेति** ।

**( आक्षेपबाधकभाष्यम् )**

**अप्रत्ययविसर्जनीयस्येत्युच्यते । प्रत्ययविसर्जनीयश्चायम् ॥**

**( प्रदीपः ) प्रत्ययेति** । प्रत्ययावयवत्वादकारोऽपि प्रत्ययः । अतस्तदादेशोऽपि प्रत्यय इति भावः ॥

(उद्द्योतः) अकारोऽपीति। सूत्रस्थप्रत्ययशब्दस्तदवयवे लाक्षणिक इति भावः॥

(तत्त्वालोकः) भाष्ये—अप्रत्ययेति—नैष दोषः, यत इत्यादिः।

प्रदीपे—तदादेशोऽपीति—एवञ्च-प्रकृतविसर्गस्य प्रत्ययावयवत्वान्न षत्वं प्राप्नोतीत्याशयः।

उद्द्योते—सूत्रस्थेति—'इदुदुपधस्य चे'तीत्यादिः। लाक्षणिक इति—तथाच—'अप्रत्ययस्ये'त्यस्य प्रत्ययावयवभिन्नविसर्गस्येत्यर्थः। अत एव कविभिः कृतमित्यादौ न षत्वम्। अग्निः करोतीत्यादौ तु व्यपदेशिवद्भावेन विसर्गस्य प्रत्ययावयवत्वान्न षत्वमित्याशयः।

(आक्षेपसाधकभाष्यम्)

**लुप्यतेऽत्र प्रत्ययो 'रात्सस्य' इति।**

(प्रदीपः) लुप्यत इति। सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायसन्निवेशिनीत्वात् तस्या इति कुतस्तदा देशस्तां लप्स्यते। उत्वे च कृतेऽवशिष्टः सकार एव प्रत्ययसंज्ञः स च लुप्त इति भावः॥

(उद्द्योतः) उत्वे च कृत इति। न चैकादेशस्य परादिवत्त्वेनोसित्यस्य प्रत्ययतया लोपे एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया विसर्गस्य प्रत्ययावयवत्वमस्त्येवेति वाच्यम्। त्रिपाद्या असिद्धत्वेन तत्रादिवद्भावाप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः, उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात्। सर्वे सर्वपदादेशा इत्यनेन तु मात् असित्यस्य स्थानित्वेऽपि असित्यस्य स्थानित्वालाभात्॥ भाष्ये लुप्यतेऽत्र प्रत्ययविसर्जनीय इति पाठे योऽत्र प्रत्ययस्थानिकत्वेन तवाभिमतो विसर्जनीयः, स लुप्यते-न दृश्यते, स्थानिनः प्रत्ययस्यैव लोपादित्यर्थः॥

(तत्त्वालोकः) भाष्ये—लुप्यतेऽत्रेति—नैष प्रत्ययविसर्जनीयः, यत इत्यादिः। तथाचास्त्येष दोष इत्याशयः।

प्रदीपे—लुप्यत इति—तथाच-प्रकृतविसर्गस्य प्रत्ययावयवभिन्नत्वात् षत्वमापद्येतैवेत्याशयः।

उद्द्योते—कैयटोक्ते दोषमाशङ्क्य परिहरति—न चैकेति। 'अन्तादिवच्चे'त्यस्य 'एकादेशशास्त्रप्रवृत्तेः प्राग् अन्तघटितपूर्वे आदिघटितपरे वा ये ये प्रत्ययत्वधातुत्वादयो धर्मा दृष्टास्ते कृतैकादेशेऽप्यतिदिश्यन्ते' इत्यर्थादिति भावः। लोपे—रुत्वस्यासिद्धत्वाद् 'रात्सस्ये'ति सलोपे। अस्त्येवेति—एवञ्च नात्र षत्वापत्तिरिति वक्ष्यमाणज्ञापकाश्रयणमयुक्तमित्याशयः। त्रिपाद्या इति—सपादसप्ताध्यायीम्प्रतीत्यादिः। तत्रेति—त्रिपादीस्थेन 'इदुदुपधस्य चे'ति सूत्रेण षत्वे इत्यर्थः। कर्तव्य इति शेषः। आदिवद्भावेति—सपादसप्ताध्यायीस्थ-'अन्तादिवच्चे'ति सूत्रेत्यर्थः। सपादसप्ताध्यायीस्थस्य स्थानिवत्सूत्रस्य तु त्रिपाद्यामपि प्रवृत्तिर्भवतीत्याशयेनाह—स्थानिवत्त्वेनेति। एकादेशस्य प्रत्ययत्वादिति शेषः। प्रत्ययत्वाभावादिति—नापि स्थानिवत्त्वेन तस्य प्रत्ययावयवत्वात् सामञ्जस्यम्, तस्याशास्त्रीयत्वादिति भावः। 'उपात्तस्ये'ति कथनफलमाह—सर्वे सर्वेति। इत्यस्येति—अत्रैकवचननिर्देशेन समुदायस्य स्थानिता सूचिता। अत एवाह—असित्यस्येति। एवञ्चोसित्यस्य प्रत्ययत्वं दुर्लभमेवेत्याशयः। ननु भाष्ये प्रकृतपाठस्यैवं सङ्गतावपि पाठान्तरस्य कथं सङ्गतिः, तत्र प्रत्ययपदेन प्रत्ययस्य तदवयवस्य वा बोध्यत्वेऽपि श्रूयमाणविसर्जनीयस्योक्तरीत्या प्रत्ययत्वतदवयवत्वयोरसम्भवाल्लोपाप्राप्तेश्च, लुप्तस्य चाविसर्जनीयत्वादित्यत आह—लुप्यतेऽत्रेति। प्रत्ययस्यैवेति—तथाच प्रकृतपाठस्य पाठान्तरेणैकतात्पर्यकतोपपद्यत इत्याशयः।

(समाधानवार्तिकशेषभाष्यम्)

**एवं तर्हि—**

(३५१ समाधानवार्तिकम् ॥ ९ ॥

**॥ * ॥ भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य ॥ * ॥**

(भाष्यम्)

**यदयं कस्कादिषु भ्रातुष्पुत्रशब्दं पठति, तज्ज्ञापयत्याचार्यः—नैकादेशनिमित्तात् षत्वं भवतीति॥**

(प्रदीपः) एकादेशनिमित्तादिति। एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्येत्यर्थः॥

(उद्द्योतः) एवं तर्हि भ्रातुष्पुत्रेति। त्रिपाद्यामप्यन्तादिवद्भावप्रवृत्तिज्ञापनद्वारेति गूढोऽभिसन्धिः॥ कर्मधारये निमित्तपदवैयर्थ्यमिति बहुव्रीहिमेकादेशपदे लक्षणां च दर्शयति—एकादेशशास्त्रमिति॥

(तत्त्वालोकः) भाष्ये—एवम्—यद्येवम्। भ्रातुष्पुत्रग्रहणमिति—कस्कादिष्वित्यादिः। यत्—यस्मात्। अयम्—आचार्यः। तत्—तस्मात्। यदुक्तरीत्या तत्र षत्वमुपपद्येत, तर्हि षत्वार्थं कस्कादिषु भ्रातुष्पुत्रशब्दं न पठेदित्याशयः।

उद्द्योते—अभिसन्धिरिति—अत एवामीत्यादौ मीत्वादि सिद्ध्यति। तत्रैकारस्य बहुवचनत्वमन्तवद्भावाधीनमित्याशयः।

(पूर्वान्तत्वसाधनाधिकरणम्)

(आक्षेपभाष्यम्)

**किं पुनरयं पूर्वान्तः, आहोस्वित्परादिः, आहोस्विदभक्तः ?॥**

(तत्त्वालोकः) अयम्—उः स्थाने प्रसज्यमानादणः परत्वेन भवन् रेफः। आहोस्वित्—अथवा। अभक्तः—अनवयवः।

(प्रत्याक्षेपभाष्यम्)

**कथं वाऽयं पूर्वान्तः स्यात्? कथं वा परादिः? कथं वा अभक्तः?॥**

(प्रत्याक्षेपसमाधानभाष्यम्)

**यद्यन्त इति वर्तते, ततः पूर्वान्तः। अथादिरिति वर्तते, ततः परादिः। अथोभयं निवृत्तम्, ततोऽभक्तः॥**

(प्रदीपः) यद्यन्त इति। यद्यपि रपर इत्यत्रान्यपदार्थस्य प्राधान्यम्, तथापि रेफस्य विधेयतया प्राधान्यात्तस्यैवान्तत्वं विशेषणमिति भावः॥ यद्यपि प्रसज्यमान एवाण् रपरो विधीयते, तथाप्यानङ इव साक्षादत्र आर् इत्येवमविधानात्तात्पर्यपर्यालोचनन्यायेन केवलावस्थानात्पक्षत्रयविमर्शः॥

(उद्द्योतः) यद्यपीति। तथा च तस्यैव विशेषणं स्यादिति भावः॥ प्राधान्यादिति॥ रपरशब्दतात्पर्यविषयत्वादित्यर्थः। एवं च पूर्वान्तावयवभूतरेफपरोऽणित्यर्थः॥ सूत्रे रपर इति समासश्च सौत्रत्वात्साधुः॥ [रः परो यस्येति बहुव्रीहिः। अवयवत्वमेव षष्ठ्यर्थः।

वर्णे वर्णान्तरावयवत्वं तु गौणम् । यथा **ह्रस्वस्य छे तुगि**त्यादाविति तात्पर्यम् ॥ ] नन्वराराद्रिूपेण विधानात्कथमभक्तत्वादिशङ्क्यत आह—**यद्यपीति ॥ अविधानादिति ।** अनुच्चारणादित्यर्थः ॥ **तात्पर्येति ।** प्राप्ताप्राप्तविवेकन्यायेनेत्यर्थः ॥ **केवलेति ।** रेफमात्रविधौ सूत्रतात्पर्यादिति भावः ॥ यत्तु-अयमपि विचारो **भूतस्याणो रपरत्व**मिति पक्षे **नष्टाश्वरथ**न्यायेन**नान्तर्यमेवान्तर्य**मिति ऋकारस्याकाराकारावेव गुणवृद्धी भविष्यतः। अराराद्रिूपेण विधानमिति पक्षे तु आनङादौ नकारविषयो यथा न विचारस्तथात्रापीति तत्त्वमिति ॥ तत्तु प्रकृतसूत्रे तस्य पक्षस्यास्थितत्वादयुक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**यदीति—**एकदेशे स्वरितत्वप्रतिज्ञानेन 'आद्यन्तौ टकिता'विति सूत्रात् प्रकृतसूत्रे इति शेषः। **वर्त्तते—**अनुवर्त्तते । एवमग्रेऽपि । **उभयम्—**अन्ताद्युभयम् । **निवृत्तमिति—**तथा रपर इत्यत्र परशब्दो नावयववाचीति शेषः ।

प्रदीपे—**इत्यत्रेति—**बहुव्रीहिसत्त्वादिति शेषः। **अन्तत्वमिति—**आदित्वं वेति शेषः। **प्रसज्यमान इति—**उः स्थान इत्यादिः। **पक्षत्रयेति—**अन्तत्वादित्वाभक्तत्वरूपेत्यादिः।

उद्द्योते—**तथाच तस्यैवेति—**अन्यपदार्थस्य प्राधान्ये चान्यपदार्थस्यैवेत्यर्थः। अन्तत्वमादित्वं वेति शेषः। **एवञ्च—**अन्तत्वस्यादित्वस्य वा रेफविशेषणत्वे च। **पूर्वान्तेति—**इदं परादीत्यस्याप्युपलक्षणम्। नन्वेवं प्रकृतसूत्रे रपर इत्यत्र कथं समास इत्यत आह—**सूत्र इति ।** प्रकृतसूत्र इत्यर्थः। एवमग्रेऽपि। **रः पर इति—**स चेत्यादिः। **अवयवत्वमिति—**तथेत्यादिः। **विधानादिति—**रेफस्येत्यादिः। **प्राप्ताप्राप्तेति—**यथा 'दध्ना जुहोती'त्यादौ 'अग्निहोत्रं जुहोती'त्यनेन होमस्य प्राप्तत्वात् स न विधीयते, किन्तु तदनुवादेनाप्राप्तं दध्याद्येव विधीयते; तथा प्रकृते तत्तद्विधिसूत्रेणाणः प्राप्तत्वात् स न विधीयते, किन्तु तदनुवादेनाप्राप्तो रेफ एव विधीयत इत्याशयः। कृष्णाद्युक्तं खण्डयति—**यत्त्विति । न्यायेनेति—**इदं पूर्वान्वयि। तत्रोपपादयति—**अनान्तर्यमेवेति ।** तदा हीत्यादिः। सिद्धान्तिमतेनाह—**अराराद्रिूपेणेति ।** रेफस्येति शेषः। **तस्य—**भूतस्याणो रपरत्वमित्यस्य ।

**( भाष्यम् )**

**कश्चात्र विशेषः ? ॥**

**( तत्त्वालोकः )** **अत्र—**अन्तत्वादित्वाभक्तत्वरूपपक्षत्रये ।

**( ३५२ अभक्तपक्षे दूषणवार्तिकम् ॥ १० ॥ )**

## ॥ * ॥ अभक्ते दीर्घलत्वयगभ्यस्तस्वरहलादिःशेषविसर्जनीयप्रतिषेधः प्रत्ययाव्यवस्था च ॥ * ॥

**( भाष्यम् )**

**यद्यभक्तः दीर्घत्वं न प्राप्नोति । गीः पूः । रेफवकारान्तस्य धातोरिति दीर्घत्वं न प्राप्नोति ॥**

**( उद्द्योतः )** वार्तिके **प्रतिषेधोऽभावो** निवर्तनं च। आद्ये स्यादिति शेषः, द्वितीये **वक्तव्य**मिति ॥ गॄप्रोः क्विपि गीः पूः। **ऋत इत्, उदोष्ठ्येती**त्त्वोत्त्वे ॥

**( तत्त्वालोकः )** भाष्ये—व्युत्क्रमेण तत्र विशेषमाह—**अभक्त इति । यद्यभक्त इति—**तर्हीति शेषः। **'र्वोरुपधाया दीर्घ इकः'** इति सूत्रे रेफवकाराभ्यां धातुर्विशेष्यत **इत्यभिप्रेत्याह—रेफेति ।** एवञ्च तस्य 'रेफवान्तस्य धातोरुपधाया इको दीर्घः स्यात्पदान्ते' इत्यर्थः। तथाच—यदि रेफोऽभक्तः स्यात्तर्हि गिर् पुर् इत्यादीनां रेफान्तधातुत्वाभावात्तदुपधाया इको दीर्घत्वं नोपपद्येतेत्याशयः। एवमग्रेऽपि।

उद्द्योते—वार्त्तिके-विसर्जनीयान्तद्वन्द्वेन प्रतिषेधशब्दस्य षष्ठीसमासः, 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन तस्य प्रत्येकं सम्बन्धः। तत्र—हलादिःशेषान्तेन तस्यान्वयमुपपादयितुमाह—**अभाव इति ।** तथा विसर्जनीयेन तस्यान्वयमुपपादयितुमाह—**निवर्त्तनञ्चेति ।**

**( दूषणानुपपत्तिभाष्यम् )**

**किं पुनः कारणं रेफवकाराभ्यां धातुर्विशेष्यते, न पुनः पदं विशेष्यते—रेफवकारान्तस्य पदस्येति ? ।**

**( उद्द्योतः )** भाष्ये—**पदमिति । पदस्ये**त्यनुवर्तमानमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—यदि 'र्वोरि'ति सूत्रे रेफवकाराभ्यां पदं विशेष्येत, तर्हि तस्य 'रेफवान्तस्य पदस्योपधाया' इत्याद्यर्थः स्यात्। तथाच—रेफस्याभक्तत्वेन गिर् पुर् इत्यादीनां रेफान्तधातुत्वाभावेऽपि रेफान्तपदत्वसत्त्वात्तदुपधाया इको दीर्घत्वमुपपद्येतेत्याशयेन पृच्छति—**किं पुनः कारणमिति ।**

**( दूषणोपपत्तिभाष्यम् )**

**नैवं शक्यम् । इहापि प्रसज्येत—अग्निर्वायुरिति ॥**

**( तत्त्वालोकः )** **एवम्—**तत्र ताभ्यां पदं विशेषयितुम्। **इहापीति—**यतस्तथा सतीत्यादिः। दीर्घत्वमिति शेषः।

**( दूषणानुपपत्तिभाष्यम् )**

**एवं तर्हि रेफवकाराभ्यां पदं विशेषयिष्यामो धातुनेकम्—रेफवकारान्तस्य पदस्येको धातोरिति ॥**

**( तत्त्वालोकः )** **धातोरितीति—**एवञ्च-गिर् पुर् इत्यादीनामिको धातुसम्बन्धित्वाद् दीर्घत्वमुपपद्येत, तथा-अग्निर्वायुरित्यादीनां रेफान्तपदत्वेऽपि तदुपधाया इकः प्रत्ययसम्बन्धित्वेन धातुसम्बन्धित्वाभावाद् दीर्घत्वं नापद्येतेत्याशयः।

**( दूषणोपपत्तिभाष्यम् )**

**एवमपि-प्रियं ग्रामणि कुलमस्य प्रियग्रामणिः प्रियसेनानिः अत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यते । धातौ च विशेष्यमाणे इह दीर्घत्वं न प्राप्नोति—गीः पूः ॥ दीर्घ ॥**

**( तत्त्वालोकः )** **एवमपीति—**न ताभ्यां पदं धातुना चेक् विशेषयितुं शक्यम्, यत इत्यादिः। **अत्रापीति—**रेफान्तपदत्वसत्त्वात्तदुपधाया इको धातुसम्बन्धित्वाच्च दीर्घत्वमिति शेषः। **विशेष्येति—**ताभ्यामित्यादिः ।

**( लत्वोदाहरणभाष्यम् )**

**लत्व—लत्वं च न सिध्यति । निजेगिल्यते । 'ग्रो यङि' इति लत्वं न प्राप्नोति ॥**

**( प्रदीपः )** **लत्वं चेति ।** ग्र इत्यवयवषष्ठीति चोद्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—**चोद्यमिति—**तथाच—'ग्रो यङी'त्यस्य 'गिरतेरवयवस्य रेफस्य लत्वं स्याद्यङी'त्यर्थः। एवञ्च—यदि रेफोऽभक्तः स्यात्तर्हि निजेगिल्यते इत्यादौ रेफस्य गिरतेरवयवत्वाभावाल्लत्वं न स्यादित्याशयः।

( दोषबाधकभाष्यम् )

**नैष दोषः। ग्र इत्यनन्तरयोगैषा षष्ठी ॥**

**( उद्द्योतः ) अनन्तरयोगेति** । अनन्तरशब्दोऽव्यवहितवाची ॥

**( तत्त्वालोकः )** भाष्ये—**ग्र इत्यनन्तरेति**—यत इत्यादिः। एवञ्च—तस्य 'गिरतेरव्यवहितस्य रेफस्ये'त्याद्यर्थः। तथाच—रेफस्याभक्तत्वेऽपि तत्र गिरतेरव्यवहितत्वाल्लत्वमुपपद्येतेति भावः।

( दोषसाधकभाष्यम् )

**एवमपि स्वर्जेगिल्यत इत्यत्रापि प्राप्नोति ॥**

**( तत्त्वालोकः ) एवमपीति**—न ग्र इत्यत्रानन्तरयोगा षष्ठी आश्रयितुं शक्या, यत इत्यादिः। **इत्यत्रापीति**—( अव्यवहितत्वस्य परत्रेव पूर्वत्रापि सम्भवात् ) स्वर्घटकरेफस्य गिरतेरव्यवहितत्वाल्लत्वमिति शेषः।

( दोषबाधकभाष्यम् )

**एवं तर्हि यङा आनन्तर्यं विशेषयिष्यामः ॥ अथवा ग्र इति पञ्चमी। लत्व ॥**

**( तत्त्वालोकः ) विशेषयिष्यामः, अथवेति**—तथा च-तस्य 'गिरतेरव्यवहितस्य यङव्यवहितपूर्वस्य रेफस्ये'त्यादिः, अथवा 'गिरतेः परस्य रेफस्ये'त्यादिरर्थः। एवञ्च-रेफस्याभक्तत्वेऽपि न लत्वस्याव्याप्त्यतिव्याप्ती इत्याशयः।

( यक्स्वरोदाहरणभाष्यम् )

**यक्स्वर-यक्स्वरश्च न सिध्यति। गीर्यते स्वयमेव, पूर्यते स्वयमेव। 'अचः कर्तृयकि' इत्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात् ॥**

**( तत्त्वालोकः ) अचः कर्त्रिति**—अस्य सूत्रस्य 'उपदेशेऽजन्तानां कर्तृयकि परे आदिरुदात्तो वे'त्यर्थः। **रेफेण व्यवहितत्वादिति**—यदि रेफोऽभक्तस्तर्हीत्यादिः। तेषां यगव्यवहितपूर्वत्वाभावादिति शेषः।

( दोषोद्धारभाष्यम् )

**नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥ यक्स्वर ॥**

**( उद्द्योतः ) स्वरविधाविति** ॥ यद्यपि हल्स्वरप्राप्तौ स्वरोद्देश्यकविधौ चेदम्। अत एवा**चः कर्तृ**-इति सूत्रेऽच इति चरितार्थम्। तथापि तदनाश्रयेणैकदेश्युक्तिर्भाष्यमिति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**स्वरविधाविति**—यत इत्यादिः। **नास्तीति**—रेफेणेति शेषः। एवमग्रेऽपि।

उद्द्योते—**अत एवेति**—अन्यथा ( स्वरसम्बन्धिविधिमात्रे व्यञ्जनाविद्यमानवद्भावे ) तत्र हलोऽभावेनात्र 'अच' इति व्यर्थमेव स्यादित्याशयः।

( अभ्यस्तस्वरोदाहरणभाष्यम् )

**अभ्यस्तस्वर-अभ्यस्तस्वरश्च न सिध्यति। मा हि स्म ते पिपरुः। मा हिं स्म ते बिभरुः। 'अभ्यस्तानामादिरुदात्तो भवति अजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति, रेफेण व्यवहितत्वात् ॥**

**( प्रदीपः ) पिपरुरिति** । पृ लङ् झि शप् श्लुर्द्विर्वचन**मर्तिपिपर्त्योश्चे**तीत्त्वम्। **सिजभ्यस्तेति** जुस्। **जुसिचेति** गुणः ॥

**( उद्द्योतः )** भाष्ये माङ्प्रयोगोऽडभावाय, तस्मिन् हि अट्स्वरः स्यात्। हिप्रयोगो **हि चे**ति निघातनिषेधाय. स्मशब्दो लङ्सिद्धये ॥

**( तत्त्वालोकः )** भाष्ये—'अभ्यस्तानामादिरि'ति सूत्रं बोधयितुं तस्यार्थमाह—**अभ्यस्तानामिति**। एवमग्रेऽपि।

उद्द्योते—**तस्मिन्**—अटि।

( दोषोद्धारभाष्यम् )

**नैष दोषः। 'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥ अभ्यस्तस्वर ॥**

( हलादिःशेषोदाहरणभाष्यम् )

**हलादिःशेष—हलादिःशेषश्च न सिध्यति। ववृते ववृधे। अभ्यासस्येति हलादिःशेषो न प्राप्नोति। हलादिःशेष ॥**

**( प्रदीपः ) ववृत इति**। अभ्यासावयवस्यानादेर्हलो निवृत्त्या भाव्यमिति रेफस्य निवृत्त्यसिद्धिः ॥

**( उद्द्योतः ) अभ्यासावयवस्येति**। गर्भवदनवयवस्यापि तद्ग्रहणेन ग्रहणं **तन्मध्यपतित**न्यायेन। न त्वेतावताऽवयवत्वमिति भ्रमितव्यमिति भावः ॥ यद्वा **ऋ**वर्णान्ताभ्यासस्येत्यर्थे पूर्वं तकारस्य हलादिःशेषेण निवृत्तावुरदत्त्वम्, ततः पुनर्हलादिःशेषो न स्यात् अनवयवत्वादिति भावः। नचैवं **लक्ष्ये लक्षणस्ये**ति न्यायेन पुनर्हलादिःशेषानापत्तिरिति वाच्यम्। लक्ष्यभेदात् ॥

**( तत्त्वालोकः )** भाष्ये—'हलादिः शेषः' इति सूत्रं सूचयितुं तस्य 'अभ्यासस्यादिर्हल् शिष्यते, अन्ये च हलो लुप्यन्ते' इत्यर्थस्यांशं निर्दिशति—**अभ्यासेति**। एवमग्रेऽपि।

प्रदीपे—**अभ्यासेति**—'हलादिः शेषः' इति सूत्रेणेत्यादिः। **रेफस्येति**—अनवयवत्वे इति शेषः।

उद्द्योते—ननु यदा 'उरदि'ति सूत्रस्य 'अभ्यासावयवस्य **ऋ**वर्णस्य अत्स्यात् प्रत्यये परे' इत्यर्थः। तदा-'वृत् वृत् ए' इत्यवस्थायां लाघवार्थं हलादिःशेषात्पूर्वं पूर्वस्य **ऋ**कारस्यादादेशे तस्य रपरत्वे च कृते जातायां 'वर्त् वृत् ए' इत्यवस्थायां रेफस्याभ्यासमध्यपतितत्वेनाभ्यासावयवत्वान्नायं दोषोऽत्र पक्षे इत्यत आह—**गर्भवदिति**। यथा गर्भवतीग्रहणेन तदनवयवोऽपि गर्भो गृह्यते, तथाऽभ्यासग्रहणेन तदनवयवोऽपि **रेफो गृह्येते**ति भावः। **तद्ग्रहणेनेति**—अभ्यासग्रहणेनेत्यर्थः। रेफस्येत्यादिः। **एतावता**—अभ्यासमध्यपतितत्वेन। **अवयवत्वमिति**—अभ्यासावयवत्वमित्यर्थः। रेफस्येत्यादिः। नन्वभ्यासमध्यपतितत्वाद्रेफस्य **तद्ग्रह**णेन ग्रहणम्, न च तदवयवत्वमिति मिथो विरुद्धमित्यत आह—**यद्वेति**। 'उरदि'त्यस्येति शेषः। **इत्यर्थे**—इत्याद्यर्थे। **पूर्वम्**—अदादेशात्पूर्वम्। **तकारस्य**—पूर्वतकारस्य। **उरत्**—'उरदि'ति। **हलादिःशेषः**-हलादिःशेषेण रेफस्य निवृत्तिः।

( विसर्जनीयप्रतिषेधोदाहरणभाष्यम् )

**विसर्जनीय [ प्रतिषेध ]-विसर्जनीयस्य प्रतिषेधो वक्तव्यः। नार्कुटो नार्पत्यः। 'खरवसानयोर्विसर्जनीयः' इति विसर्जनीयः प्राप्नोति ॥ विसर्जनीय [ प्रतिषेध ] ॥**

( प्रदीपः ) **नार्कुट इति ।** यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं चेति रेफान्तस्य पदत्वाद्विसर्जनीयप्रसङ्गः ॥

( उद्द्योतः ) नृकुटीशब्दाद् भवादावण् । नृपतेर्दित्यदित्येति ण्यः ॥ ननु रेफान्तान्न सुब्विधिरिति कथं तदन्तस्य प्रत्ययलक्षणेन पदत्वमत आह-**यस्मादिति ।** यस्माद्विधिस्तद्वृत्तिनृशब्दत्वं नाशब्दस्य स्थानिवद्भावेन, तदादित्वं च रेफान्तस्य सुब्त्वम्, सुबन्तत्वं च प्रत्ययलक्षणेनेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**खरवसानयोरिति**—अस्य सूत्रस्य-'खरि अवसाने च परे रेफस्य विसर्जनीयः स्यात्पदान्ते' इत्यर्थः ।

( प्रत्ययाव्यवस्थोदाहरणभाष्यम् )

**प्रत्ययाव्यवस्था च । प्रत्यये च व्यवस्था न प्रकल्पते—किरतः गिरतः । रेफोऽप्यभक्तः, प्रत्ययोऽपि । तत्र व्यवस्था न प्रकल्पते ॥**

( प्रदीपः ) **किरत इति ।** एकवचने किरतीति नित्यत्वात् पूर्वं विकरणः । आङ्गं तु कार्यमनित्यम्, अकृते हि विकरणे गुणः प्राप्नोति, कृते त्वित्त्वमिति । द्विवचने तु द्वयोरपि नित्यत्वात्परत्वादित्त्वम्, तत्र रेफोऽभक्तत्वान्न धात्ववयव इति विकरणो न स्यात् । स हि धातोः परो विधीयते । अथ विकरणात्परो रेफस्तदाऽप्यणः परो न स्यादिति व्यवस्था द्वयोर्न प्रकल्पते । अथ व्यवहितेऽपि परशब्दस्य प्रवृत्तिस्तथापि समीहिता व्यवस्था न प्रकल्पत इति प्रत्ययाव्यवस्थोक्ता ॥

( उद्द्योतः ) एकवचनान्तानुदाहरणे बीजमाह—**एकेति ॥ नित्यत्वादिति ।** विकरणविधौ **सार्वधातुक** इति विषयसप्तमी । अन्यथाऽभक्तत्वेऽनन्तरसार्वधातुकाभावेन विकरणाप्राप्तेर्नित्यत्वं व्याहतं स्यादिति भावः ॥ **नित्यत्वादिति ।** तसो ङित्त्वादित्त्वस्यैव प्रवृत्तेः ॥ **न प्रकल्पत इति ।** नियमेन विकरणस्यैव व्यवहितपरत्वं न सिध्येदिति भावः ॥

( तत्त्वालोकः ) भाष्ये-**व्यवस्था**—रेफविकरणयोरस्यैव धात्वव्यवहितपरत्वम्, न त्वस्येति व्यवस्था । विनिगमनाविरहादिति भावः । **प्रत्ययोऽपीति**—तथेत्यादिः । एवमग्रेऽपि ।

प्रदीपे—**नित्यत्वादिति ।** इत्त्वे कृतेऽकृते च विकरणस्य प्राप्तेः 'कृताकृतप्रसङ्गि नित्यमि'ति परिभाषयेत्यादिः । नन्वित्त्वे कृते इकारान्तादकृते च ऋकारान्ताद्विकरणस्य प्राप्तेः 'शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वमि'ति परिभाषया तस्यानित्यत्वमेवापद्यत इति चेन्न, 'क्वचित् कृताकृतप्रसङ्गित्वमात्रेणापि नित्यते'ति परिभाषया तस्य नित्यत्वस्यैवोपपत्तेः ॥ **पूर्वं विकरणः**—'ऋत इद्धातोरि' तीत्त्वात्पूर्वं 'तुदादिभ्यः शः' इति शः । **आङ्गम्**—इत्त्वम् । **गुणः**—'इत्त्वोत्त्वाभ्यां गुणवृद्धी विप्रतिषेधेने'ति वार्त्तिकसत्त्वात् 'सार्वधातुकार्द्धधातुकयोरि'ति गुणः । **कृते त्विति**—तस्य 'सार्वधातुकमपिदि'ति ङित्त्वे 'क्ङिति चे'ति गुणनिषेधादिति शेषः । **द्वयोः**—इत्त्वविकरणयोः । **विकरण इति**—तेन व्यवधानादित्यादिः । **अण इति**—रेफ इत्यादिः । **व्यवस्था द्वयोरिति**—विकरणे धातोः परत्वम्, रेफे चाणः परत्वमिति व्यवस्थेत्यर्थः । **प्रवृत्तिरिति**—तथा च रेफेण व्यवहितेऽपि विकरणे धातोः परत्वस्य, रेफे चाणः परत्वस्योपपत्तेर्द्वयोः व्यवस्था प्रकल्पत इति भावः ।

उद्द्योते—**सार्वेति**—'सार्वधातुके यगि'ति सूत्रादनुवर्त्तमाने-इत्यादिः । **अन्यथा**—तत्र परसप्तम्यभ्युपगमे । **अभक्तस्व इति**—इत्त्वे कृते समागतस्य रेफस्येत्यादिः । **अनन्तरेति**—धात्वित्यादिः । **तसो ङित्त्वादिति**-अकृतेऽपि विकरणे-'सार्वधातुकमपिदि'तीत्यादिः । 'क्ङिति चे'ति गुणनिषेधादिति शेषः । **व्यवहितपरत्वमिति**—न तु रेफस्येति समीहिता व्यवस्थेति शेषः ।

( पूर्वान्तपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि पूर्वान्तः करिष्यते ।**

( तत्त्वालोकः ) यद्यपि पक्षत्रये चतुष्क्रमेण विशेषकथनस्यारब्धत्वात् पूर्वान्तपक्षात्प्राक् परादिपक्ष एवोत्थाप्यस्तथापि सुधरस्वल्पदोषप्रसक्तत्वात् परादिपक्षात्प्राक् पूर्वान्तपक्षमेवोत्थापयति-**एवं तर्हीति ।** यदुक्तरीत्या रेफस्याभक्तता दूषिता तर्हि तस्य पूर्वान्तता स्वीकरिष्यत इत्यर्थः ।

( ३५२ पूर्वान्तपक्षे दूषणाक्षेपवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ पूर्वान्ते वैवधारणं विसर्जनीयप्रतिषेधो यक्स्वरश्च ॥ * ॥**

( भाष्यम् )

**यदि पूर्वान्तः रोरवधारणं कर्तव्यम्—'रोः सुपि' रोरेव सुपि नान्यस्य । सर्पिष्षु धनुष्षु । इह मा भूत्—गीर्षु पूर्षु ॥**

( प्रदीपः ) **गीर्ष्विति ।** परादौ सुब्ग्रहणेन गृह्यत इति न पदान्तत्वमिति भावः ॥ अभक्तपक्षेऽपि तदादिवचनात्प्राप्तिरिति कर्तव्यमवधारणम् ॥

( तत्त्वालोकः ) भाष्ये—**पूर्वान्त इति**—पूर्वत्वपर्याप्त्यधिकरणस्यान्त इत्यर्थः । तर्हि गीर्षु इत्यादौ **रेफस्य** पदान्तत्वाद्विसर्गं आपद्येतेतीति शेषः । **रोरेवेति**—रेफस्य विसर्जनीय इति शेषः । **नान्यस्य**—न त्वन्यस्येति । **सर्पिष्ष्विति**—यथेह स्यादित्यादिः । **इह**—इह च ।

प्रदीपे—**सुब्ग्रहणेनेति**—रेफ इत्यादिः । **न पदान्तत्वमिति**-इति न विसर्गप्राप्तिरिति शेषः । **तदादिवचनादिति**—रेफान्तस्य पदत्वाद्विसर्गस्येति शेषः ।

( इतरपक्षेऽपि लाघवाभावभाष्यम् )

**परादावपि सत्यवधारणं कर्तव्यम्—चतुर्ष्वित्येवमर्थम् ॥ [ वैवधारणम् ] ॥**

( तत्त्वालोकः ) **इत्येवमर्थम्**—इत्यादौ विसर्गो मा भूदित्यर्थम् । एवमग्रेऽपि । न चास्य भाष्यस्यानन्तरोक्तप्रदीपेन विरोधः, अस्यानागन्तुकरेफाभिप्रायत्वात्, तस्य चागन्तुकरेफाभिप्रायत्वात् । तथा च पक्षत्रयेऽपि वैवधारणस्य कर्तव्यत्वान्नायं दोष इत्याशयः ।

( विसर्जनीयप्रतिषेधोदाहरणभाष्यम् )

**विसर्जनीयप्रतिषेधः—विसर्जनीयस्य च प्रतिषेधो वक्तव्यः । नार्कुटः । नार्पत्यः । 'खरवसानयोर्विसर्जनीय' इति विसर्जनीयः प्राप्नोति ॥**

( इतरपक्षेऽपि लाघवाभावभाष्यम् )

**परादावपि विसर्जनीयस्य प्रतिषेधो वक्तव्यः, नार्कल्पिरित्येवमर्थम् । कल्पिपदसंघातभक्तोऽसौ नोत्सहतेऽ-**

वयवस्य पदान्ततां विहन्तुमिति विसर्जनीयः प्राप्नोति ॥ [ विसर्जनीयप्रतिषेधः ] ॥

( प्रदीपः ) **कल्पिपदेति** । नृकल्पशब्दादिभि वृद्धौ च रेफः प्रत्ययसमुदायस्य कल्पिशब्दस्य भक्तत्वादवयवो न तु कल्पशब्दस्य । ततश्च नृशब्दस्य कल्पशब्दे परतः पदसंज्ञा विधीयमाना तदादौत्यधिकाराद् रेफान्तस्य भवतीति विसर्जनीयप्रसङ्गः । पदशब्देन च पद्यतेऽनेनार्थं इति प्रत्यय उच्यते । तेन प्रत्ययसमुदायभक्तो रेफः कल्पिशब्दे परतो व्यवस्थितो न कल्पशब्दस्यावयव इति तयोः पौर्वापर्यमस्त्येवेत्यवयवस्यात्मन एव पदान्ततां विहन्तुं नोत्सहत इत्यर्थः । क्वचित्तु **कल्पपदसंघातभक्त** इति पाठः । तत्रायमर्थः—कल्पशब्दस्य **संबन्धि** यत्पदं **नार्कल्पिरिति** तस्य पदस्य योऽवयवः प्रत्ययसंघातः कल्पिशब्दस्तद्भक्त इत्यर्थः ॥

( उद्द्योतः ) **नृकल्पेति** । नृशब्दात्कल्पप्प्रत्ययः॥ **ञ्जेति** । **स्वादिष्वित्यनेन** ॥ यद्यसौ कल्पशब्दावयवः स्यात् तदा स्वावयवभूतरेफान्तस्य नारित्यस्य न स प्रत्ययः परः स्यादिति भावः ॥ परादिरित्यत्र परशब्देन परत्वपर्याप्त्यधिकरणो यावान् स सर्वोऽपि गृह्यते, न तदवयवोऽपीति तात्पर्यम् ॥ ननु प्रत्ययस्य कथं पदत्वमत आह—**पदशब्देनेति** । कल्पिरूपः पदसङ्घातः पदसमुदाय इति भाष्यार्थः । तस्मात्पक्षत्रयेऽपि विसर्जनीयप्रतिषेधस्य वक्तव्यतया नायं दोष इति भावः ॥ वृद्धेर्बहिरङ्गासिद्धत्वं तु नोक्तम्, त्रिपादीस्थेन्तरङ्गे तत्परिभाषाया अप्रवृत्तेः ॥

( तत्त्वालोकः ) भाष्ये—**कल्पीति**—यत इत्यादिः । **असौ**—रेफः । **अवयवस्य**—स्वस्य ।

प्रदीपे—**प्रत्ययसमुदायस्य**—'कल्पप्, इञ्' इति प्रत्ययसमुदायस्य । **तयोः**—रेफान्त-नार्-शब्दस्य, प्रत्यय-कल्प-शब्दस्य च। **तद्भक्त इत्यर्थ इति**—अत्र 'तद्भक्त इति' इति पाठो युक्तः ।

उद्द्योते—**यद्यसाविति**—परशब्देन कल्पशब्दस्यैव ग्रहणादित्याशयः । **'स'** इत्यनेन कल्पशब्दं परामृशन्नाह—**न स प्रत्ययः पर इति** । तथा च–नारित्यस्य पदसंज्ञाया अनुपपत्त्या रेफस्य पदान्तत्वाभावाद्विसर्गस्याप्राप्तेर्भाष्यमसङ्गतं स्यादिति भावः । **परादिरित्यत्रेति**—तथा चेत्यादिः । **कथं पदत्वमिति**—तथा च-प्रत्ययसमुदायस्य कल्पीत्यस्य पदत्वाभावात् 'कल्पिपदे'ति भाष्यमसङ्गतमिति भावः। **कल्पिरूप इति**—एवञ्चेत्यादिः । **भाष्यार्थः**—'कल्पिपदसंघाते'ति भाष्यार्थः । एतदाशयमाह—**तस्मादिति** । दध्ध्याद्युक्तं खण्डयति—**वृद्धेरिति** । विसर्जनीये कर्तव्ये-इत्यादिः ।

( यक्स्वरोदाहरणभाष्यम् )

यक्स्वरः—यक्स्वरश्च न सिध्यति । गीर्यते स्वयमेव, पूर्यते स्वयमेव 'अचः कर्तृयकि' इत्येष स्वरो न प्राप्नोति ॥

( तत्त्वालोकः ) न **प्राप्नोतीति**—रेफस्य पूर्वान्तत्वेन प्रकृतीनामजन्तत्वाभावादिति भावः ।

( दूषणबाधकभाष्यम् )

नैष दोषः । उपदेश इति वर्तते ॥ [ यक्स्वरः ] ॥

( उद्द्योतः ) भाष्ये **उपदेश इति वर्तत इति** । **अचः कर्त्रि**-त्यत्र **तास्यनुदात्तेदित्यत** इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**उपेति**—यत इत्यादिः । **वर्तते**—अनुवर्तते । एवमग्रेऽपि। तथा चात्र प्रकृतीनामुपदेशकालेऽजन्ततापेक्षिता, न त्वन्यदेति तासामधुना रेफान्तत्वेऽपि उपदेशकालिकाजन्तत्वानपायात् स स्वरः सिद्ध्यतीत्याशयः ।

( परादिपक्षाभ्युपगमभाष्यम् )

अथवा पुनरस्तु परादिः ॥

( ३५४ परादिपक्षे दूषणाक्षेपवार्तिकम् ॥ १२ ॥ )

॥ * ॥ परादावकारलोपौत्वपुक्प्रतिषेधश्चङ्युपधाह्रस्वत्वमिटो व्यवस्थाऽभ्यासलोपोऽभ्यस्तता दिस्वरो दीर्घत्वं च ॥ * ॥

( भाष्यम् )

यदि परादिः । अकारलोपः प्रतिषेध्यः—कर्ता हर्ता । 'अतो लोप आर्द्धधातुके' इत्यकारलोपः प्राप्नोति॥

( उद्द्योतः ) भाष्येऽथवा **पुनरस्तु परादिरिति** ॥ वैवधारणविसर्जनीयप्रतिषेधयोः कर्तव्यतायाः पूर्वान्तपरादिपक्षयोः समत्वात् परादिपक्षो वक्तव्यः पूर्वान्तो वेत्यत्र न विशेष इति चेत् कश्चिद् ब्रूयात् तत्राह वार्तिककारः—**परादा**वितीत्यर्थः । **परादा**विति वार्तिके **पुगन्तद्वन्द्वस्य** प्रतिषेधपदेन षष्ठीतत्पुरुषः ॥ **वक्तव्य** इति शेषः । चङ्युपधाह्रस्वत्वं वक्तव्यम् । अग्रे सर्वत्रायमेव शेषो बोध्यः ॥

( तत्त्वालोकः ) भाष्ये—यदि **परादिरिति**—तर्हीति शेषः । 'आर्धधातुके' इत्यधिकृत्य 'अतो लोपः' इति सूत्रं पठितमिति सूचनाय निर्दिशति—**अतो लोप आर्धधातुके इति** । यत इत्यादिः । एवमग्रेऽपि ।

( दूषणबाधकभाष्यम् )

नैष दोषः, उपदेश इति वर्तते ॥

( उद्द्योतः ) **उपदेश इति वर्तत इति** । **अतो लोप** इत्यत्रा-**नुदात्तोपदेशे**त्यत इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**वर्तत इति**—एवञ्च कर्तेत्यादौ **'सार्वधातुके'**ति गुणेनागतस्याकारस्य प्रकृतेरुपदेशेऽन्तेऽभावात्तस्य लोपो न प्राप्नोतीति भावः ।

( दूषणसाधकभाष्यम् )

यद्युपदेश इति वर्तते, 'धिनुतः, कृणुतः' अत्र लोपो न प्राप्नोति ॥

( प्रदीपः ) **धिनुत इति** । एकवचनेऽसत्यप्यकारलोपे आद्गुणेन वा, विकरणस्य वा गुणे पररूपेण धिनोतीति सिद्ध्यतीति द्विवचनं समुदाहृतम् ॥

( उद्द्योतः ) **पररूपेण अतोगुण** इत्यनेन ॥

( तत्त्वालोकः ) भाष्ये-**वर्तत इति**—तर्हीति शेषः । **अत्रेति**-'धिन्विकृण्व्योर चे'त्यनेन विहितस्याकारस्य प्रकृतेरुपदेशेऽन्तेऽसत्त्वात्तस्येति शेषः ।

प्रदीपे—एकवचनान्तानुदाहरणे बीजमाह—**एकेति** । **गुणे**—'सा धातुके'ति गुणे । **द्विवचनम्**—द्विवचनान्तम् ।

( दूषणबाधकभाष्यम् )

नोपदेशग्रहणेन प्रकृतिरभिसंबध्यते ॥ किं तर्हि ? ॥

**आर्धधातुकमभिसंबध्यते—आर्धधातुकोपदेशे यदकारान्तमिति ॥ अकारलोप ॥**

**( प्रदीपः ) आर्धधातुकोपदेश इति ।** सन्नियोगेन चाकारस्य विधानादार्धधातुकप्रनिपत्तिकालेऽकारान्तप्रतिपत्त्या सिद्धो लोपः ॥

**( तत्त्वालोकः )** भाष्ये-**नोपदेशेति**-नैष दोषः, यत इत्यादिः । **यदकारान्तमितीति—**तथा च-'अतो लोपः' इत्यस्य 'आर्धधातुकोपदेशकाले यदकारान्तं तस्याकारस्य लोपः स्यादार्धधातुके परे' इत्यर्थः।

प्रदीपे—**सन्नियोगेनेति—**अकारस्य सन्नियोगेनोकाररूपस्यार्धधातुकस्य विधानादित्यर्थः । एवञ्च धिनुत इत्यादावित्यादिः । **लोपः—**अकारलोपः ।

( औत्वोदाहरणभाष्यम् )

**औत्व—औत्वं च प्रतिषेध्यम् । चकार जहार । 'आत औ णलः' इत्यौत्वं प्राप्नोति ॥**

**( तत्त्वालोकः ) औत्वमिति**—सरेफस्य णल इत्यादिः । 'आत औ णलः' इति सूत्रस्य 'आदन्ताद्धातोः परस्य णल औकारादेशः स्यादि'त्यर्थः । एवञ्च यदि रेफः परादिस्तर्हि चकारेत्यादौ सरेफस्य णल आदन्तधातोः परत्वादौत्वं प्राप्नोतीति भावः ।

( दोषोद्धारभाष्यम् )

**नैष दोषः । 'निर्दिश्यमानस्यादेशा भवन्ति' इत्येवं न भविष्यति ॥**

**( प्रदीपः ) निर्दिश्यमानस्येति ।** नन्वादेः **परस्येति** रेफस्यौत्वेन भाव्यम् ॥ नैष दोषः, णल इत्यनेन यत्प्रत्यायितं प्रयोगविषयमकारमात्रं तस्याकारान्तादङ्गादुत्तरस्यादेशः प्रवर्तते, **सरेफस्य** त्वनुमीयमानत्वादादेशाभावः । प्रत्याय्यप्रत्यायकाभेदविवक्षया षष्ठीनिर्दिष्टस्यादेशा इत्युच्यते ॥

**( उद्द्योतः ) नन्विति ।** आदेः **परस्येति निर्दिश्यमान**परिभाषाबाधकमित्यभिमानः ॥ **तस्यैवायमनुसंहार** इत्युत्तरम् ॥ ननु सूत्रे उच्चारितस्य णलो नादेशः, किंतु तत्प्रत्यायिताकारस्येति षष्ठीनिर्दिष्टस्यादेशा इत्ययुक्तं स्यादत आह—**प्रत्याय्येति। निर्दिश्यमानस्ये**त्यस्य प्रतिपादितस्येत्यर्थे तु पादन्तस्यापि पदादेशापत्तिरिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**निर्दिश्येति—**यत इत्यादिः । **इत्येवम्—**इति परिभाषासत्त्वेन ( सरेफस्य णलो निर्दिश्यमानत्वाभावात् ) तस्यौत्वम् ।

उद्द्योते—**इदमपि** निर्दिश्यमानस्येत्यस्योच्चारितस्येत्यर्थे उक्तम्। यदा तु तस्य प्रतिपादितस्येत्यर्थस्तदा न काचिदनुपपत्तिरिति दण्ड्यायुक्तं खण्डयति—**निर्दिश्यमानस्येत्यस्येति** ।

( आक्षेपभाष्यम् )

**यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? ॥**

**( तत्त्वालोकः ) यस्तर्हि निर्दिश्यत इति—**यदि निर्दिश्यमानपरिभाषासत्त्वेन चकारेत्यादौ सरेफस्य णलः ( निर्दिश्यमानत्वाभावाद् ) औत्वं न प्राप्नोति, तर्हि यो णल् निर्दिश्यत इत्यर्थः ।

( समाधानभाष्यम् )

**रेफेण व्यवहितत्वात् ॥ औत्व ॥**

**( प्रदीपः ) रेफेणेति ।** यद्रूपं षष्ठीनिर्दिष्टमकारमात्रं तद्व्यवहितमित्यर्थः । यदि तु प्रत्ययस्येत्युच्यते लिट इति च, तदा व्यवधानाभावात् स्यादेवादेशः ॥

**( उद्द्योतः ) यदि त्विति ।** तथा तु वक्तुमशक्यं सर्वत्रादेशापत्तेरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**व्यवहितत्वादिति—**णल आदन्तधातोः परत्वस्याभावादिति शेषः ।

प्रदीपे—स्थानिवद्भावेन प्रत्ययत्वस्य लिट्त्वस्य च सरेफे णल्बोध्याकारे सत्त्वादाह—**व्यवधानाभावादिति** ।

उद्द्योते—**वक्तुमशक्यमिति—**वक्तुमप्यशक्यमित्यर्थः । तथा सतीति शेषः ।

( उदाहरणभाष्यम् )

**पुक्प्रतिषेधः—पुक् च प्रतिषेध्यः । कारयति हारयति । 'आतां पुक्' इति पुक् प्राप्नोति ॥ पुक्प्रतिषेध ॥**

**( तत्त्वालोकः )** 'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति सूत्रं सूचयितुं तस्य प्रकृतोपयोग्यंशमेव निर्दिशति—**आतामिति ।** यदि रेफः परादिस्तर्हि कारयतीत्यादौ वृद्ध्यनन्तरं धातोरादन्तत्वात् णिपरकत्वाच्च पुक् प्राप्नोतीति भावः ।

( उदाहरणभाष्यम् )

**चङ्युपधाह्रस्वत्वम्—चङ्युपधाह्रस्वत्वं च न सिध्यति । अचीकरत् अजीहरत् । 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वत्वं न प्राप्नोति ॥ चङ्युपधाह्रस्वत्वम् ॥**

**( तत्त्वालोकः ) 'णौ चङी'ति—**अस्य सूत्रस्य 'चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वः स्यादि'त्यर्थः । तथा च-यदि रेफः परादिस्तर्हि अचीकरदित्यादौ णिनिमित्तकवृद्ध्यनन्तरमाकारस्यानुपधात्वाद् ह्रस्वत्वं न प्राप्नोतीत्याशयः ।

( उदाहरणभाष्यम् )

**इटो व्यवस्था—इटश्च व्यवस्था न कल्पते । आस्तरिता निपरिता । इडपि परादी रेफोऽपि । तत्र व्यवस्था न प्रकल्पते ॥ इटो व्यवस्था ॥**

**( प्रदीपः ) आस्तरितेति ।** नित्यत्वाद् गुणे रपरत्वे च कृते नेड्वशि कृतीति प्रतिषेधादप्रवृत्तिलक्षणेटोऽव्यवस्था । प्रवृत्तौ वा रेफात् पूर्व इडित्यनिष्टा व्यवस्था प्राप्नोति ॥

**( उद्द्योतः )** कथं तर्हीडपीत्यादिभाष्यमत आह—**प्रवृत्तौ वेति । नेड्वशी**त्यत्रोपदेश इत्यपकृष्योपदेशे वशादेरेव निषेध इति भावः ।

**( तत्त्वालोकः )** प्रदीपे—**नित्यत्वाद्गुणे इति—**यदि रेफः परादिस्तर्हि-तृजन्ते तृन्नन्ते वा 'आस्तरितेत्यादौ इटि कृतेऽकृते च गुणस्य प्रसङ्गात् 'कृताकृतप्रसङ्गि नित्यमि'ति परिभाषया तस्य नित्यत्वाद् 'आर्धधातुकस्येड्वलादेरि'तीटः प्राक् 'सार्वधातुकार्धधातुकयोरि'ति गुणे इत्यर्थः ।

उद्द्योते—**उपदेश इत्यपकृष्येति—**'एकाच उपदेशेऽनुदात्तात्' इत्यतः सिंहावलोकनन्यायेनेत्यादिः । **वशादेरिति—**कृत इति शेषः । **निषेधः—**इण्निषेधः ।

( उदाहरणभाष्यम् )

**अभ्यासलोपः—अभ्यासलोपश्च वक्तव्यः । वृते**

**ववृधे । 'अभ्यासस्य' इति हलादिःशेषो न प्राप्नोति ॥ अभ्यासलोप ॥**

(**उद्द्योतः**) भाष्ये—**ववृत इति ।** ऋवर्णान्ताभ्यासस्यादित्यर्थे पूर्वं तलोपे पश्चाद्रेफस्तस्य लोप इति पक्षे **इदम्** ॥ वव्रे इत्यप्युदाहार्यम् ॥

(**तत्त्वालोकः**) भाष्ये—**अभ्यासेति—**रेफेत्यर्थः । **हलादिःशेषः—**हलादिःशेषेण रेफस्य निवृत्तिः । **न प्राप्नोतीति—**'हलादिःशेषः' इति सूत्रेण 'अभ्यासावयवस्यानादेर्हलो निवृत्त्या भाव्य'मि'ति रेफस्य परादित्वेनाभ्यासावयवत्वाभावादिति भावः ।

उद्द्योते—**ऋवर्णान्तेति—**'उरदि'त्यस्येत्यादिः । **पूर्वं तलोपे पश्चाद्रेफस्तस्य लोपः—**'वृत् वृत् ए' इत्यवस्थायामदादेशात्पूर्वं हलादिःशेषेण पूर्वतकारस्य निवृत्तिः,ततः पश्चाददादेशे रपरत्वम्, ततः पुनर्हलादिःशेषेण रेफस्य निवृत्तिः । ननु यदा 'उरदि'त्यस्य 'अभ्यासावयव-ऋवर्णस्यादि'त्यर्थस्तदोक्तावस्थायां हलादिःशेषात्पूर्वमदादेशे रपरत्वे च रेफस्य परादित्वात्तकारावयवत्वेनाभ्यासावयवत्वाद् हलादिःशेषेण निवृत्तिः स्यादेवेति ववृते इत्यादौ न दोष इत्यत आह—**वव्रे इत्यपीति ।**

## (उदाहरणभाष्यम्)

**अभ्यस्तस्वरः—अभ्यस्तस्वरश्च न सिध्यति । मा हि स्म ते पिपरुः, मा हि स्म ते बिभरुः । 'अभ्यस्तानामादिरुदात्तो भवत्यजादौ लसार्वधातुके' इत्येष स्वरो न प्राप्नोति ॥ अभ्यस्तस्वर ॥**

(**तत्त्वालोकः**) **न प्राप्नोतीति—**रेफस्य परादित्वेनोसोऽजादित्वाभावादिति भावः ।

## (उदाहरणभाष्यम्)

**तादिस्वरः—तादिस्वरश्च न सिद्ध्यति । प्रकर्ता, प्रकर्तुम् । 'तादौ च निति कृत्यतौ' इत्येष स्वरो न प्राप्नोति ॥**

(**उद्द्योतः**) **प्रकर्तेति ।** तृन् ॥ **एषस्वरः ।** पूर्वपदप्रकृतिस्वरः॥

(**तत्त्वालोकः**) भाष्ये—**तादौ चेति—**अस्य सूत्रस्य 'तुशब्दवर्जिते निति तकारादौ कृति परेऽनन्तरो गतिः प्रकृत्ये'त्यर्थः । **न प्राप्नोतीति—**रेफस्य परादित्वेन कृत्प्रत्ययस्य तादित्वाभावादिति भावः ।

उद्द्योते—नित्त्वार्थमाह—**तृन्निति ।** अन्यथा (तृचि) नित्त्वाभावादेवात्रैष स्वरो नोपपद्येतेत्याशयः ।

## (दूषणबाधकभाष्यम्)

**नैष दोषः । उक्तमेतत्—**❀**कृदुपदेशे वा ताद्यर्थमिडर्थम्**❀ **इति ॥ तादिस्वर ॥**

(**उद्द्योतः**) कृदुपदेशकालिकतादिप्रत्ययप्रतीत्यर्थं **तादा**विति सूत्रे कृद्ग्रहणमिति भाष्योदाहृतवार्त्तिकार्थः । **तादा**वितिसूत्रेण गतेः स्वरो विधीयते । क्रियायोगे च गतित्वम् । क्रियावाची च धातुः । तत्र तिङन्ते पूर्वपदाभावेन कृदन्त एव सिद्धमिति कृद्ग्रहणमुक्तार्थम् । न च कृद्ग्रहणाभावे तादित्वमुत्तरपदस्य विशेषणं स्यात्, तथा च प्रतरितेत्यादावेव स्यादिति तस्य कृद्विशेषणत्वाय तदिति वाच्यम् । श्रुतनित्प्रत्ययविशेषणताया एव न्याय्यत्वादिति दिक् ॥

(**तत्त्वालोकः**) भाष्ये—**उक्तमिति**-यत [illegible] । ननु कृदुपदेशकालिकतादिप्रत्ययप्रत्यायनं किमर्थमित्यत आह—**इडर्थमिति ।** तथा च—यत्र प्रलपितेत्यादौ तादृशप्रत्ययस्येड् भवति, तत्र पूर्वपदप्रकृतिस्वरसिद्ध्यर्थं तत्प्रत्यायनमित्याशयः ।

उद्द्योते—**वार्त्तिकार्थ इति—**स्वश्च-प्रकर्त्तेत्यादौ रेफस्य परादित्वेऽपि कृत्प्रत्ययस्योपदेशकालिकतादित्वसत्त्वान्न दोष इति भावः । ननु कृद्ग्रहणस्य तिङ्व्यावृत्त्या साफल्यात् कथं ततः कृदुपदेशकालिकतादिप्रत्ययप्रतीतिः वार्तिककारेणोक्तेत्यत आह—**तादाविति सूत्रेणेति । धातुरिति—**तस्मात् प्रत्ययद्वयम्—तिङः कृतश्चेति शेषः । **तत्र—**तयोर्मध्ये । **उत्तरपदस्येति—**नितीत्यनेन 'प्रत्ययग्रहणे यस्मादि'ति तदन्तोपस्थितेरित्याशयः । **तस्य—**तादित्वस्य । **तत्—**कृद्ग्रहणम् । 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि'ति न्यायेनाह—**श्रुतेति ।** तस्येत्यादिः ।

## (उदाहरणभाष्यम्)

**दीर्घः—दीर्घत्वं च न सिध्यति । गीः पूः । 'रेफवकारान्तस्य धातोः' इति दीर्घत्वं न प्राप्नोति ॥ दीर्घ ॥**

**उरण्रपरः ॥ ५१ ॥**

(**प्रदीपः**) **गीरिति ।** अन्तरङ्गत्वाद्विलोपे कृते इत्त्वे रपरत्वे च सुपोऽयमादौ रेफ इति कल्पनायां **रात्सस्येति** सलोपे कृते दीर्घत्वं न स्यादिति **पूर्वान्तपक्षोऽत्र** स्थितः ॥ ५१ ॥

(**उद्द्योतः**) ननु रेफस्य परादित्वेऽपृक्तत्वाभावाद्विलोपो न प्राप्नोतीति कुतो नोक्तमत आह—**अन्तरङ्गत्वादिति ॥** तदानीं सुपोऽभावादाह—**कल्पनायामिति ।** पदस्य विभज्यान्वाख्यानमिति भावः ॥ **पूर्वान्तेति ।** नार्कुटादौ वचनेनैव निर्वाहो भाष्ये उक्त इति बोध्यम् ॥ एवं च **रपर** इति अवयववाचिपरशब्देन षष्ठ्यर्थे बहुव्रीहिरिति ध्वनितम् । अवयवत्वं चावयवसादृश्ये पर्यवस्यति । न हि वर्णस्य वर्णान्तरमवयवो भवति । अत एव प्रसङ्गावस्थायां रपरत्वेऽपि गुणादिशब्देन विधानम् । **यदागमा इति** न्यायेन विशिष्टस्य गुणादित्वात् । एवं च-अवर्णादचि पूर्वपरयोरन्तरतमो रपरोऽण् भवतीत्यर्थ इति बोध्यम् ॥ गुणादिशब्देनारारोर्ग्रहणाभावे तु ऋकारस्य गुणवृद्धी अरारावेवेति नियमो न स्यात् । यतो गुणादिशब्देन अकारादे रेफः परो यस्मात्तादृशस्य विधानम् । गुणत्वादिकं चाकारादिनिष्ठमेव । तेन च नान्तर्यम् । एतदेवाभिप्रेत्य **रदाभ्या**मिति सूत्रे भाष्ये **गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तत** इति वक्ष्यति ॥ अत एव **यद्यन्त इति वर्तते । ततः पूर्वान्त** इत्युपक्रमस्थं भाष्यमेकदेश्युक्तिः । तथा हि सति यथा परादिपक्षे नार्कलिपरित्यादौ रेफस्य कल्पीति समुदायावयवत्वोपपत्तये परत्वपर्याप्त्यधिकरणादिरित्यर्थस्तथा **पूर्वान्त** इत्यस्य पूर्वत्वपर्याप्त्यधिकरणान्त इत्यर्थापत्तौ उक्तदोषो **रदाभ्या**मिति सूत्रस्थभाष्यविरोधश्चेत्याहुः ॥ ५१ ॥

(**तत्त्वालोकः**) प्रदीपे—**अन्तरङ्गत्वादिति—**गॄधातोः क्विप्यनुबन्धलोपे 'वेरपृक्तस्ये'ति वलोपस्य 'ॠत इद्धातोरि'तीत्त्वस्य च प्रासावनैमित्तिकत्वेनेत्यादिः । **सुपोऽयमिति—**रेफस्य परादित्वादित्यादिः । **कल्पनायामिति—**'कृत्तद्धिते'ति प्रातिपदिकत्वात्सावनुबन्धलोपे इति शेषः । **दीर्घत्वं नेति—**धातोः रेफान्तत्वाभावादुपधाया इक इत्यादिः ।

उद्द्योते—नन्वेवं नार्कुटादौ विसर्जनीयप्रतिषेधो वक्तव्य इत्यत आह—**नार्कुटादाविति ।** भाष्यादितात्पर्यमाह—**एवञ्चेति ।** वास्तवावयवत्वासम्भवादाह—**अवयवत्वञ्चेति ।** वाचनिकमित्यादिः । न

हीति—'हलन्ताच्चे'ति सूत्रे भाष्ये तथोक्तत्वात् । प्रागुक्तभाष्योक्तं द्रढयति—**अत एवेति ।** अस्यार्थमाह—**यदेति ।** अत्र पक्षे उदुरुदर्वीदावदोषाय प्रकृतसूत्रस्य विधिसूत्रैकवाक्यतयाऽर्थमाह—**एवञ्चेति ।** विशिष्टस्य गुणादित्वे चेत्यर्थः । **रपर इति**—गुग इत्यपि बोध्यम् । रपर इत्यत्र पञ्चम्यर्थबहुव्रीहिणा रेफस्यानवयवत्वे आह—**गुणादीति ।** तदेवोपपादयति—**यत इति ।** एतदेकवाक्यतयेत्याशयः । **रेफशिरा इति**—रेफः शिरः परावयवो यस्य स इत्यर्थः । **अत एव**—उक्तार्थस्यावश्यकत्वादेव । **उक्तदोषः**—उक्तनियमासिद्धिरूपदोषः । रपर इत्यत्र सौत्रत्वात्समासकल्पने गौरवञ्चेत्यपि बोध्यम् ।



( ४६ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ८ )

# अलोऽन्त्यस्य ॥ १ । १ । ५२ ॥

( अल्ग्रहणविशेषणताविचाराधिकरणम् )

( आक्षेपभाष्यम् )

**किमिदमल्ग्रहणमन्त्यविशेषणम्, आहोस्विद्—आदेशविशेषणम् ? ॥**

**( प्रदीपः )** अलोऽन्त्यस्य ॥ ५२ ॥ **किमिदमिति ।** षष्ठीप्रथमयोर्निर्देशस्य साम्यात् प्रश्नः ॥

( भाष्यम् )

**किं चातः ? ॥**

**( तत्त्वालोकः )** अस्मात् प्रश्नात् किमभिप्रेतं भवत इत्याशयेन प्रतिपृच्छति—**किञ्चेति ।**

( अन्त्यविशेषणत्वे दूषणभाष्यम् )

**यद्यन्त्यविशेषणम्, आदेशोऽविशेषितो भवति ॥**

**तत्र को दोषः ? ।**

**अनेकालप्यादेशोऽन्त्यस्य प्रसज्येत ॥**

**( उद्द्योतः )** अलोन्त्य ॥ ५२ ॥ भाष्ये—**प्रसज्येतेत्य**नन्तरं तन्निवृत्तयेऽ**नेकाल् सर्वस्ये**ति वाच्यं स्यादिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**आदेश इति**—नहीत्यादिः ।

उद्द्योते—**अनेकाल् सर्वस्येति**—अनेकाल्घटितम् 'अनेकाल्शित्सर्वस्ये'ति ।

( आदेशविशेषणपक्षे लाघवभाष्यम् )

**यदि पुनर् 'अलन्त्यस्य' इत्युच्यते, तत्रायमप्यर्थः—'अनेकाल्शित्सर्वस्य' इत्येतन्न वक्तव्यं भवति । इदं नियमार्थं भविष्यति–अलेवान्त्यस्य भवति, नान्य इति ॥**

**( प्रदीपः ) यदि पुनरिति ।** प्रथमाबहुवचनम्–अल इति यदि व्याख्यायेतेत्यर्थः । अस्मिंश्च पक्षे—**रहोरजसां लोपश्चे**ति लोपः सर्वादेशः प्राप्नोति, विरजीकरोतीति । **इदं नियमार्थमिति ।** अन्त्यस्यादेशा भवन्तीत्यलोऽप्याक्षेपादल्ग्रहणमनल्व्यावृत्त्यर्थमिति भावः ॥

**( उद्द्योतः ) नन्वलन्त्यस्ये**त्युच्यमाने सूत्रभेदः स्यादत आह—**प्रथमेति ।** बहुत्वस्याविवक्षितत्वं दर्शयितुमेवमुक्तमिति भावः ॥ **प्राप्नोतीति ।** लोपस्याभावरूपत्वेनाल्रूपत्वाभावादिति भावः । एवं चायं पक्षो दुष्ट एव ॥ **क्सस्याचीति** लोपे प्रकृते **लुग्वा दुहेति** लुग्ग्रहणस्य—तत्पक्षान्तरपक्षेऽल्ग्रहणेनानेकाल्भिन्नलक्षणनिवृत्त्यर्थज्ञापकत्वमिति नायं दोष इति भाष्याशयमन्ये ॥ भाष्ये—**इदं नियमार्थमितीदमा** सूत्रं तु न परामृश्यते, अप्राप्तान्त्यादेशविधानस्यैव तन्त्र । कित्वल्पत्वमिति तस्य नियमार्थत्वमुपपादयति—**अन्त्यस्येति ॥ अलोऽपीति ।** अलादेशात्सर्वस्यान्त्यस्येत्यर्थः ॥ **अपिना**ऽनेकालोऽपि ॥

**( तत्त्वालोकः )** भाष्ये—**तत्रायमप्यर्थ इति**—तद्धितिप्रयोजनम् (सिद्धयति) इत्यर्थः । **इत्येतदिति**—अनेकाल्घटितमिति शेषः । **भवतीति**—भवतीति । **इदमिति**—नद इत्यादिः । **नान्यः**—न त्वन्यः । इत्यनन्तरेऽपि ।

प्रदीपे—**रहोरजसां लोपश्चेतीति**—'अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्चे'ति सूत्रेणेत्यर्थः ।

उद्द्योते—**सूत्रेति**—पाणिनीयेत्यादिः । **बहुत्वस्येति**—इत्यञ्च तत्रेत्यादिः । **दुष्ट एवेति**—तथा च नायम्पक्षो विवक्षित इति सूचयितुम्प्रागेवास्य दोषस्योपन्यास इति कैयटाशयः । त दूषयन् भाष्यमन्यथा योजयति—**क्सस्याचीतीति ।** 'क्सस्याची'त्यत्र 'घोर्लोपः' इत्यत इत्यर्थः । **सूत्रम्**—प्रकृतसूत्रम् । आदेशेन तदन्यस्याक्षेपासम्भवादाह—**अलास्मकेति ।**

( आदेशविशेषणत्वपक्षे आक्षेपभाष्यम् )

**एवमप्यन्त्योऽविशेषितो भवति ॥**

**तत्र को दोषः ? ॥**

**वाक्यस्यापि पदस्याप्यन्त्यस्य प्रसज्येत ॥**

**( प्रदीपः ) वाक्यस्यापीति ॥** दोषपरत्वादेवमुक्तम् । न तु वाक्यं षष्ठीनिर्दिष्टमस्ति ॥ पदस्य तु परमानडुद्भ्य मित्यत्रानडुच्छब्दस्यान्त्यस्य सर्वस्य दत्वं प्राप्नोति ॥

**( उद्द्योतः ) नन्विति । षष्ठीस्थाने** इत्यनुवर्त्य स्थानषष्ठीबोधितान्त्यस्येति व्याख्यानादित्यर्थः ॥ यत्तु **यथातथयथापुरयो**रिति सूत्रे **न यथातथा अयथातथाऽयथातथाभावोऽयाथातथ्य**मिति भाष्यदर्शनात्तत्प्रामाण्येन निपातसमुदायात् प्रत्ययो निपातसमुदायेन नञ्समास इत्यङ्गकार्यम् । तत्रायथाशब्दाद्यञि **यस्येति** लोपोऽवर्णान्ताङ्गस्य भसंज्ञकस्य जायमानस्तदन्त्यस्य यथातथेति पदसमुदायस्य स्यादिति ॥ तन्न, **निर्दिश्यमान**परिभाषया सिद्धेः । तदनाश्रयेण वा तदुक्तिः । **पदस्य त्विति ।** अधिकृतपदस्येत्यस्य वस्वादिभिर्विशेषणादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**पदस्यापीति**—नथेत्यादिः ।

उद्द्योते—एवं कैयटाशयम्प्रदर्श्य भाष्याशयमाह—**तदनाश्रयेण वेति । तदुक्तिः**—'वाक्यस्यापी'त्युक्तिः । **विशेषणादिति**—एवञ्चान्त्यस्याविशेषितत्वे केवले इष्टसिद्धावपि विशिष्टेऽनिष्टापत्तिरित्याशयः ।

( अन्त्यविशेषणत्वेऽपि गौरवनिरासभाष्यम् )

**यदि खल्वप्येषोऽभिप्रायः—तन्न क्रियेतेति, अन्त्यविशेषणेऽपि सति तन्न करिष्यते ॥**

**कथम् ? ॥**

**'ङिच्च, अलोऽन्त्यस्य' इत्येतन्नियमार्थं भविष्यति—ङिदेवानेकालन्त्यस्य भवति, नान्य इति ॥**

(प्रदीपः) यदि खल्वपीति । अवश्यकर्तव्योऽसौ योगोऽपवादविप्रतिषेधार्थः ॥ अथ लाघवमात्रे आदरस्तत्राप्युच्यते—**अन्त्यविशेषणेऽपीति** ॥

(उद्द्योतः) यदि खल्विति पराभिप्रायं वदता सूचितमन्यादृशं स्वाभिप्रायं प्रकटयति—**अवश्येति** ॥ **असौ योगः** 'अनेकाल्शित्' इति योगः । **अतो भिस** इत्यादावा**देः परस्ये**त्यादिबाधनार्थं इति भावः ॥ नन्वस्यावश्यकत्वे**ऽन्त्यविशेषणेऽपी**त्यादिग्रन्थोऽसङ्गतोऽत आह—**अथेति** । अलिति प्रथमान्तं मण्डूकानुवृत्त्याऽऽ**देः परस्ये**त्यत्र संबध्यत इति ऐसादौ न दोषः । तानङ्यपि ज्ञापकात्सर्वादेशत्वं भविष्यतीति भावः ॥ भाष्ये—**ङिदेवानेकालन्त्येति** । अलूरूपङित्यस्य फलाभावादनेकालिनि लब्धम् ॥ एवं चास्य सूत्रस्यानेकालादेशेऽप्रवृत्त्यैतत्साहचर्या**दादेः परस्ये**त्यस्याप्यनेकाल्यादेशेऽप्रवृत्तिरिति दिक् ॥

(तत्त्वालोकः) भाष्ये—**एष इति**—आदेशं विशेषयत इत्यादिः । **तत्**—अनेकाल्घटितम् 'अनेकाल्शित्सर्वस्ये'ति सूत्रम् । **अन्त्येति**—नहीत्यादिः । **ङिच्चेति**—यत इत्यादिः ।

उद्द्योते—प्रकृतसूत्रभ्रमनिराकरणायाह-**अनेकालिति** । **अस्य**—'अनेकाल्शित्' इति योगस्य । **प्रथमान्तमिति**—शब्दाधिकाराश्रयणादित्याशयः । मध्येऽसम्बन्धायाह—**मण्डूकेति** । **अस्य**—'अलोऽन्त्यस्ये'त्यस्य ।

## (स्थानषष्ठीविषयत्वस्थापनाधिकरणम्)

### (आक्षेपभाष्यम्)

किमर्थं पुनरिदमुच्यते ? ।

(उद्द्योतः) **किमर्थं पुनरिति** । किं स्थानषष्ठीनिर्देशविषयमुत षष्ठीमात्रविषयमिति प्रश्नः ॥

(तत्त्वालोकः) भाष्ये—**इदम्**—प्रकृतसूत्रम् ।

### (३५९ समाधानवार्तिकप्रथमखण्डम् ॥ १ ॥)

## ॥ * ॥ अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहारः ॥ * ॥

### (भाष्यम्)

अलोऽन्त्यस्येत्युच्यते, स्थाने विज्ञातस्यानुसंहारः क्रियते—स्थाने प्रसक्तस्येति ॥

(प्रदीपः) **स्थाने विज्ञातस्येति** । **षष्ठी स्थानेयोगे**त्यनुवर्तते । तेन या षष्ठी स्थानेयोगत्वेन विज्ञाता सान्त्यमलमनुसंधियते । आदेशो वा यो निश्चितः सोऽन्त्यस्यालः स्थाने इत्यनुसंधियते ॥

(उद्द्योतः) स्थाने विज्ञातस्य कस्येत्यपेक्षायामाह—**षष्ठीति** । स्थाननिरूपितसंबन्धार्थकत्वेन ज्ञातस्य षष्ठीरूपप्रत्ययस्येत्यर्थः ॥ नन्वेवं विज्ञाताया इति वक्तुं युक्तमत आह—**आदेश इति** । स्थानषष्ठीसंबन्धादादेशत्वेन यो विज्ञात इत्यर्थः ॥ अन्ये तु **अलोऽन्त्यस्ये**ति यदुच्यते, तेन **स्थाने विज्ञातस्य** समुदायस्थाने प्रसक्तस्यान्त्येऽल्यनुसंहार उपसंहारः तत्स्थानिकत्वमात्रं क्रियते बोध्यत इति भाष्याक्षरार्थः ॥ **स्थाने विज्ञातस्ये**त्यस्य व्याख्या—**स्थाने प्रसक्तस्येति** ॥ कैयटव्याख्याने एतदर्थ्यर्थ्यं भातीत्याहुः ॥

(तत्त्वालोकः) उद्द्योते—**अन्ये तु**—भाष्यतत्त्वविदस्तु ।

### (समाधानसाधकवार्तिकद्वितीयखण्डम्)

## ॥ * ॥ इतरथा ह्यनिष्टप्रसङ्गः ॥ * ॥

### (भाष्यम्)

इतरथा ह्यनिष्टं प्रसज्येत । टित्किन्मितोऽप्यन्त्यस्य स्युः ॥

(प्रदीपः) **इतरथेति** । यदि षष्ठीमात्रमनुसंधियेतेत्यर्थः । तत्र लवितेति तृच ऋकारात्पूर्वमिट प्राप्नोतीति दोषः । दापयतीति पुगाकारस्य स्यात् । ततश्च यदुक्त**मर्थवतो ह्यागम** इति, तन्न युज्यते ॥

(उद्द्योतः) **षष्ठीमात्रमिति** । उपलक्षणमेतत्, षष्ठीमात्रोच्चारणेन विधीयमानं चेत्यपि बोध्यम् ॥ **ततो यदुक्तमिति** । आकारावयवत्वे प्रणिदापयतीत्यादौ णत्वं न स्यादित्यर्थः ॥ नचावयवावयवः समुदायावयव इति निर्वाहः, यस्यावयवस्तद्विशिष्टे यत्र तदवयववृत्तिधर्मबुद्धिस्तादृशस्यावयवावयवस्य समुदायावयवत्वबुद्धिर्हि लोकसिद्धा, यथा भुजावयवाङ्गुल्यादिविशिष्टे भुजत्वबुद्धिसत्त्वात्तदवयवकशरीरावयवत्वबुद्धिरङ्गुल्यादौ । न चैवमत्राकारावयवपकारादिविशिष्टेऽवर्णत्वादिबुद्धिः । अर्थवत आगमे तु तद्विशिष्टे तदर्थवत्त्वबुध्या तद्बुद्धिसत्त्वेन भवत्येव समुदायावयवत्वमिति भवितेत्यादावङ्गावयवत्वं सम्भवतीतीटो गुणनिषेधचारितार्थ्यमपि । वर्णस्य वर्णावयवत्वं तु वाचनिकं गौणम् । तत्र **यावद्वचनं वाचनिक**मिति न्यायेन समुदायावयवत्वे मानाभाव इत्याशयः ॥

(तत्त्वालोकः) भाष्ये—ननु किमनिष्टं प्रसज्येतेत्यत आह—**टित्किन्मित इति** । एवमग्रेऽपि ।

प्रदीपे—**इट्**—'आर्धधातुकस्येड्वलादेरि'तीट् । **दापेति**—तथेत्यादिः । **पुक्**—'अर्तिह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णाविति पुक् ।

उद्द्योते—'आदेशो वे'ति द्वितीयपक्षाशयेनाह—**उपलक्षणमिति** । **णत्वम्**—'नेर्गदे'ति णत्वम् । दाग्रहणेन दापोऽग्रहणादिति भावः । 'नच ... निर्वाहः' इत्यत्र हेतुमाह—**यस्येति** । अवयवस्य य इति शेषः । **हि**—यतः । **गुणनिषेधेति**—'दीधीवेवीटामि'ति गुणनिषेधेत्यर्थः । **तत्र**—गौणत्वे सति ।

### (दूषणाप्राप्तिसंभावनाभाष्यम्)

यदि पुनरयं योगशेषो विज्ञायेत ॥

(प्रदीपः) **यदि पुनरिति** । **षष्ठी स्थानेयोगे**त्यनेनास्यैकवाक्यता । अत्र तु प्रकरणे करणं **ङिच्च**ेत्यादेः सम्बन्धार्थम् । तत्रायमर्थो भवति—शास्त्रे या षष्ठी साऽन्त्येऽलि, सा च स्थाने योगैवेति । न तु स्थाने विज्ञातस्य पश्चादनुसंहारः, प्रतिपत्तिगौरवप्रसङ्गादिति भावः ॥

(उद्द्योतः) **संबन्धार्थमिति** । अन्त्यस्येत्यनेनेति भावः । **शास्त्रे येति** । या षष्ठी सा स्थानेयोगैव, सा चान्त्येऽलीति तु नार्थः । स्थानेयोगेति पदावृत्त्यापत्तेः । इदमेव प्रतिपत्तिगौरवम् । तस्माच्छास्त्रे या षष्ठी सा स्थानेयोगैवान्त्येऽल्येव चेति वाक्यार्थ इति भावः ॥ **सा चेति** । सा षष्ठी स्थानेयोगैव चेत्यन्वयः ॥

(तत्त्वालोकः) भाष्ये—**अयम्**—प्रकृतयोगः । **योगशेषः**—'सार्वधातुकार्धधातुकयोरि'त्यादिविधिसूत्रशेषः ।

प्रदीपे—**अस्य**—प्रकृतसूत्रस्य । नन्वेवमस्य तत्र प्रकरण एव करणं युक्तम्, न त्वत्रेत्यत आह—**अत्र त्विति** । **तत्र**—एकवाक्यतायां सत्याम् । **अयम्**—अर्थमेव । अत एवाह—**न त्विति** ।

( ३५६ समाधानसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ योगशेषे च ॥ * ॥

( भाष्यम् )

योगशेषे च ॥

किम् ? ।

अनिष्टं प्रसज्येत । टिकिन्मितोऽप्यन्त्यस्य स्युः । तस्मात्सुष्ठूच्यते-* अलोऽन्त्यस्येति स्थाने विज्ञातस्यानुसंहार इतरथा ह्यनिष्टप्रसङ्गः* इति ॥ अलोऽन्त्यस्य ॥ ५२ ॥

( प्रदीपः ) अनिष्टमिति । आद्यन्तौ टकितौ, मिदचोऽन्त्यात्पर इत्येताभ्यां स्थानेयोगत्वमेव बाध्यते, तुल्यजातीयत्वात्सम्बन्धस्य सम्बन्धान्तरेण बाधोपपत्त्या । षष्ठ्यास्तु यद्रूपं तदन्त्य एवाल्यवस्थितमिति पूर्ववद्दोषप्रसङ्गः ॥ अनुसंहारः पुनरनुसंहारान्तरेणादेः परस्यानेकाल् शित्सर्वस्येत्यनेन बाध्यते ॥ ५२ ॥

( उद्द्योतः ) स्थानेयोगत्वमेव बाध्यत इति । अत्र हेतुः—तुल्येत्यादिरुपपत्त्येत्यन्तः ॥ संबन्धस्येत्यादि । संबन्धनिरूपकस्य संबन्धनिरूपकान्तरेणेत्यर्थः । सन्नियोगशिष्टन्यायस्तु न परिभाषाविषये, तस्मिन्नित्यादेरुत्तराङ्गविकलायास्तत्र तत्रोपस्थितिस्वीकारादित्याशयः ॥ इत्यनेन बाध्यत इति । नत्वाद्यन्तौ टकिताविव्यनेनेति भावः ॥ ५२ ॥

( तत्त्वालोकः ) प्रदीपे—दोषप्रसङ्ग इति—ततश्च—'आर्धधातुकस्येड्वलादेरि'त्यस्यापि अन्त्येऽल्यनुसंहाराद् आर्धधातुकान्त्यस्यैवेट् स्यात् । स च भवन् 'आद्यन्तौ टकिताविभ्त्यन्त्यात्प्रागेव स्यात् । 'आद्यन्तौ टकिताविभ्त्यनेन हि षष्ठ्याः स्थानेयोगत्वमेव बाध्यते, न त्वन्त्येऽल्यनुसंहार इत्याशयः ।

उद्द्योते—सिद्धान्तरीत्याऽऽह—सम्बन्धनिरूपकेति । स्थानषष्ठ्याः स्थाननिरूपितसम्बन्धार्थकत्वात् सम्बन्धनिरूपकस्य स्थानपदार्थस्य अवयवावयविभावरूपसम्बन्धनिरूपकान्तरेणावयविनेत्यर्थः । निरूप्यत्वात्प्रधानीभूतस्य सम्बन्धस्य बाधमपेक्ष्य निरूपकत्वाद्विशेषणीभूतस्य स्थानपदार्थस्यैव बाधो युक्तः, 'गुणे त्वन्याय्यकल्पने'ति न्यायात् । स्थानपदार्थबाधे च तन्निरूप्यसम्बन्धस्यापि बाधोऽर्थात् सिध्यतीत्याशयः । नन्वत्र पक्षे तद्बाधे सन्नियोगशिष्टन्यायस्यापि बाधः स्यादित्यत आह—सन्नियोगेति । न त्विति—अतुल्यजातीयत्वादिति भावः ।

—o—

( ४७ परिभाषासूत्रम् ॥ १ । १ । ७ आ० ९ ॥ )

# ङिच्च ॥ १ । १ । ५३ ॥

( तातङि सर्वादेशत्वसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

तातङ् अन्त्यस्य स्थाने कस्मान्न भवति ? 'ङिच्चा-लोऽन्त्यस्य' इति प्राप्नोति ॥

( उद्द्योतः ) ङिच्च ॥ ५३ ॥ भाष्ये—कस्मान्न भवतीति । येन नाप्राप्तिन्यायेनास्यानेकालित्त्वस्यापवादत्वादिति भावः ॥ उत्तरस्य त्वयं भावः—नेदमपूर्वविधायकम्, किंतु तत्र तत्र ङित्करणसामर्थ्यसिद्धानेकालित्त्वेतदनुवादकम् । अनुवादकत्वं तु ङित्त्वसामर्थ्यादर्थान्तरकल्पनानिवृत्तिः । एवं च प्रकृते नास्य प्रवृत्तिः । प्रवृत्तौ हि शास्त्रस्यापूर्वविधायकत्वापत्त्या गौरवापत्तिः । एवं च यत्र सर्वादेशे ङित्त्वस्य वैयर्थ्यं तत्र तद्बाधः । यत्र तु न, तत्र न तद्बाध इति भावः ॥

( तत्त्वालोकः ) भाष्ये—ननु कथन्तत्तस्य स्थाने प्राप्नोतीत्यत आह—ङिच्चेति । प्राप्नोतीति—तातङस्य स्थाने इत्यादिः ।

उद्द्योते—अस्य—'ङिच्चे'त्यस्य । एवमग्रेऽपि । इदम्—प्रकृतसूत्रम् । नन्वेवमस्य वैयर्थ्यं स्यादनुवादस्य निष्फलत्वादित्यत आह—अनुवादफलन्त्विति । एवञ्च—अनुवादकत्वे च । प्रकृते इति—तातङीत्यर्थः । विपक्षे बाधकमाह—प्रवृत्ताविति । हि—यतः । शास्त्रस्य—'ङिच्चे'ति शास्त्रस्य । तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधार्थकत्वात् सावकाशत्वेन सामर्थ्यविरहात् तत्सामर्थ्यसिद्धतद्वाधानुवादकताया असम्भवादाह—अपूर्वेति । फलितमाह—एवञ्चेति । गौरवापत्त्याऽस्यापूर्वविधायकत्वाभावे चेत्यर्थः । यत्र—अनङादौ । तत्रेति—ङित्करणसामर्थ्येनैव तद्बाधस्य सिद्धत्वात्प्रकृतसूत्रस्य तदनुवादकत्वसम्भवादिति शेषः । तद्बाधः—'अनेकालि'त्येतद्बाधः । यत्र—तातङादौ ।

( ३५७ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशः ॥ * ॥

( भाष्यम् )

तातङि ङित्करणं सावकाशम् ॥

कोऽवकाशः ? ।

गुणवृद्धिप्रतिषेधार्थो ङकारः । तातङि ङित्करणस्य सावकाशत्वाद्विप्रतिषेधात्सर्वादेशो भविष्यति ॥

( प्रदीपः ) ङिच्च ॥ ५३ ॥ विप्रतिषेधादिति । नन्वयमपवादः, अनेकाल् शिदित्युत्सर्गः । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ॥ नैतदस्ति । ङित्त्वस्यान्यार्थत्वसंभवे सति दौर्बल्यात् सन्दिग्धोपस्थानोऽयं योग इत्यपवादत्वमेवात्र विषयेऽस्य नास्ति ॥

( उद्द्योतः ) विप्रतिषेधादिति । परिभाषात्वविरोधादित्यर्थः । यदि सावकाशङित्त्वेऽपि प्रवृत्तिः स्यात्तदाऽनुवादत्वासंभवेन परिभाषाप्रकरणविरोध इति भावः ॥ यथा चैतत्तथानुपदमेव स्पष्टीभविष्यति । विप्रतिषेधे परमिति शास्त्रपरत्वे तु ङित्त्वस्य सावकाशत्वोक्तिरसङ्गता स्यात्सूत्रसावकाशत्वमेव हि विप्रतिषेधे बीजम् । नह्यस्य सूत्रस्य सर्वादेशाप्राप्तिविषये कचिच्चारितार्थ्यम् । अवश्यप्राप्तिरेव च बाध्यत्वे बीजं दृष्टम् ॥ किंच विप्रतिषेधशास्त्रपरवार्तिकव्याख्यानपरभाष्ये शास्त्रद्वयावकाशप्रदर्शनशैली भाष्यकारस्य दृश्यते, न चात्र तथोक्तं भगवता ॥ यद्यप्यन्यत्रानुवादत्वं शास्त्रस्य दोष उक्तः तथापि परिभाषाणां नियमरूपत्वेन तासु गुण एव । तत्र हि प्राप्तानुवादादेवेतरनिवृत्तिरर्थात् । यथा व्रीहीनवहन्तीत्यादौ प्राप्तावघातानुवादेन नखविदलनादिनिवृत्तिः । यथा च तस्मिन्नित्यादौ प्राप्तपूर्वस्येत्यादनुवादेन परादिनिवृत्तिः । किंच कप्, यप्, अबादिष्वनन्यार्थपित्त्वेषु चरितार्थस्यानुदात्तौ सुप्पिताविव्यस्य जित्वरीत्यादौ तुक्संपादनेन चरितार्थपित्त्वे क्वपि अन्तरङ्गेण प्रत्ययाद्युदात्तत्वेन बाधापत्तिस्तदाह—दौर्बल्यादिति । परिभाषात्वभङ्गकृतं तदिति भावः ॥ सन्दिग्धेति । आपाततः सन्देहः, पर्यालोचने त्वनुपस्थितिरेवेति भावः । तदाह—इत्यपवादत्वमेवेत्यादि । ङित्त्वसामर्थ्यकृतं हि तत्त्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**सावकाशत्वादिति**—गुणवृद्धिप्रतिषेधार्थकत्वेनेत्यादिः । **सर्वादेश इति**—'ङिच्चे'त्यस्याप्रवृत्तौ 'अनेकाल्शि'त्यनेनेत्यादिः ।

प्रदीपे—**अयम्**—'ङिच्चे'त्ययम् । **अनेकालिति**—तथेत्यादिः । **ङित्त्वस्येति**—यत इत्यादिः । **अन्त्यार्थत्वेति**—अन्त्यादेशान्यगुणवृद्धिप्रतिषेधार्थत्वेत्यर्थः । **अत्र**—तातङि ।

उद्द्योते—भाष्यस्यार्थमाह—**परिभाषात्वेति** । विरोधमेवोपपादयति—**यदीति** । 'ङिच्चे'त्यस्येति शेषः । **सावकाशङित्त्वे**—सावकाशं ङित्त्वं यस्य, तत्र । **तदेति**—तत्र ङित्त्वस्य सावकाशत्वेन सामर्थ्यविरहात्तत्सामर्थ्येन 'अनेकाल्शि'त्यस्य बाधादन्त्यस्य तातङिति वक्तुमशक्यत्वात् 'ङिच्चे'त्यनेनान्त्यस्य तातङ्विधानेऽस्यापूर्वविधायकत्वादिति भावः । कैयटाद्युक्तिं खण्डयन्नाह—**विप्रतिषेधे इति** । भाष्यादिस्थविप्रतिषेधशब्दस्येत्यादिः । **ङित्त्वस्येति**—'भाष्यकारीया' इत्यादिः । कुत इत्यत आह—**सूत्रेति** । परस्पराप्राप्तिविषये इत्यादिः । **हि**—यतः । अत्र बाध्यत्वबीजमपि नास्तीत्याह—**अवश्येति** । **एवेन**—विरोधव्यवच्छेदः । तदभ्युपेत्याप्याह—**किञ्चेति** । तथा च—न तस्य तत्परत्वमित्याशयः । 'यथा चैतदि'त्यादिनोक्तमाह—**यद्यपीति** । तत्त्वमुपपादयति—**तत्र हीति** । एतच्छास्त्रीयसजातीयदृष्टान्तमाह—**यथा चेति** । अभ्युपेत्य दोषमाह—**किञ्चेति** । तस्मात्तथा नेति भावः । **तदाह**—तदेतत्सर्वमभिप्रेत्याह । **तत्**—दौर्बल्यम् । अस्यायुक्तत्वमाह—**आपातत इति** । इदमेव कैयटतात्पर्यविषयीभूतमित्याह—**तदाहेति** । **तत्त्वम्**—अपवादत्वम् ।

**( समाधानसाधकभाष्यम् )**

**प्रयोजनं नाम तद् वक्तव्यं, यन्नियोगतः स्यात् । यदि चायं नियोगतः सर्वादेशः स्यात्, तत एतत्प्रयोजनं स्यात् । कुतो नु खल्वेतत्—ङित्करणादयं सर्वादेशो भविष्यति, न पुनरन्त्यस्य स्यादिति ॥**

**( प्रदीपः ) प्रयोजनं नामेति ।** सति सर्वादेशत्वे ङित्करणं गुणवृद्धिप्रतिषेधार्थं स्यात् । तदेव तु सर्वादेशत्वमलभ्यं, ङित्त्वादन्त्यस्यैव प्रसङ्गादिति भावः ॥ **ङित्करणादिति** । गुणवृद्धिप्रतिषेधार्थादिति भावः ॥

**( उद्द्योतः )** ननु ङित्त्वं सर्वादेशत्वद्वारा गुणबाधनार्थं वा, उतान्यत्र क्लृप्तसर्वादेशत्वबाधफलकं वेति शङ्कते-भाष्ये-**प्रयोजनं नामेति । सति सर्वादेशत्वे इति ।** अन्त्यादेशत्वे तु तत्संपादनेनैवावयवे ङित्त्वस्य चारितार्थ्येन समुदायोपकारकत्वे मानाभावात् प्रत्ययस्य ङित्त्वाभावेन न गुणादिप्रतिषेधप्राप्तिरित्यर्थः । **ङित्त्वादिति ।** गुणवृद्धिप्रतिषेधार्थत्वे सिद्धे सर्वादेशत्वम्, तस्मिंश्च तत्त्वमित्यन्योन्याश्रयेण सर्वादेशत्वालाभेऽन्त्यस्यैव स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रयोजनं नामेति**—तातङि ङित्करणस्य गुणवृद्धिप्रतिषेधरूपमित्यादिः । **तत्**—तदा । **यत्**—यदा । **नियोगत इति**—शास्त्रेणेत्यर्थः । नियुज्यते इति नियोगः शास्त्रम्, तस्मात्तृतीयान्तात्तसेर्विधानात् । **स्यादिति**—अयं सर्वादेश इत्यादिः । उक्तमेव विवृणोति—**यदि चेति** । **अयम्**—तातङ् । **एतदिति**—गुणवृद्धिप्रतिषेधरूपमित्यर्थः । तातङि ङित्करणस्येत्यादिः ।

**प्रदीपे—सतीति**—तातङ इत्यादिः ।

उद्द्योते—**ङित्त्वमिति**—तातङ इत्यादिः । **अन्त्यादेशत्वे त्विति**—तातङो ङित्करणादित्यादिः । **मानाभावादिति**—'अवयवेष्वचरितार्था अनुबन्धाः समुदायस्योपकारका भवन्ती'ति नियमादिति भावः । **प्रत्ययस्य**—समुदायस्य । **तस्मिंश्च तत्त्वम्**—सर्वादेशत्वे च सिद्धे गुणवृद्धिप्रतिषेधार्थत्वम् ।

**( समाधानसाधकभाष्यम् )**

**एवं तर्ह्येतदेव ज्ञापयति—न तातङन्त्यस्य स्थाने भवतीति । यदेतं ङितं करोति । इतरथा हि लोट एरुप्रकरण एव ब्रूयात्—'तिह्योस्तादाशिष्यन्यतरस्याम्' इति ॥ ङिच्च ॥ ५३ ॥**

**( प्रदीपः ) एवं तर्हीति ।** अन्तरेणापि ङित्त्वम् 'एरु'रित्यत्र प्रकरणे ताति विधीयमानेऽन्त्यादेशत्वं सिद्धमिति ङित्त्वादेव गुणवृद्धिप्रतिषेधार्थं ङित्त्वमिति विज्ञायते ॥ ५३ ।

**( उद्द्योतः ) अन्तरेणापीति ।** तथा च तत्सामर्थ्यात् सर्वादेशत्वद्वारा गुणवृद्धिबाधनार्थत्वमेवास्येति भावः ॥ ५३ ॥

**( तत्त्वालोकः )** भाष्ये—एतत्पदबोध्यं निर्दिशति—**यदिति । एतम्**—तातङम् । **इतरथा**—यदि ङित्करणेऽप्ययमन्त्यादेशः स्यात्तर्हि तदकरणजनितलाघवार्थम् ।

प्रदीपे—ननु ङित्करणमन्तरेण कथमयमन्त्यादेशः स्यादित्यत आह—**अन्तरेणापीति । अन्त्यादेशत्वमिति**—'ए'रि'त्यस्यानुवृत्त्येत्याशयः । **ङित्त्वादेवेति**—ङित्करणसामर्थ्यादेवेत्यर्थः । सर्वादेशत्वद्वारेति शेषः ।

उद्द्योते—**तदिति**—ङित्करणेत्यर्थः । **अस्य**—ङित्त्वस्य ॥

**( ४८ परिभाषासूत्रम् ॥ १।१।७ आ० १०॥ )**

# आदेः परस्य ॥ १ । १ । ५४ ॥

**( आदिनियमतः सर्वादेशबलीयस्त्वाधिकरणम् )**

**( ३५८ सिद्धान्तवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ अलोऽन्त्यस्यादेः परस्यानेकाल्शित्सर्वस्येत्यपवादविप्रतिषेधात्सर्वादेशः ॥ * ॥**

**( भाष्यम् )**

**'अलोऽन्त्यस्य' इत्युत्सर्गः ॥ तस्य 'आदेः परस्य' 'अनेकाल् शित्सर्वस्य' इत्यपवादौ । अपवादविप्रतिषेधात् सर्वादेशो भविष्यति । 'आदेः परस्य' इत्यस्यावकाशः—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' द्वीपम्, अन्तरीपम्, समीपम् । 'अनेकाल् सर्वस्य' इत्यस्यावकाशः—'अस्तेर्भूः' भविता, भवितुम् । इहोभयं प्राप्नोति–'अतो भिस ऐस्' । 'अनेकाल् सर्वस्य' इत्येतद्भवति विप्रतिषेधेन ॥**

**'शित्सर्वस्य' इत्यस्यावकाशः—'इदम इश्' इतः, इह । 'आदेः परस्य' इत्यस्यावकाशः—स एव । इहोभयं प्राप्नोति—'अष्टाभ्य औश्' । 'शित्सर्वस्य' इत्येतद्भवति विप्रतिषेधेन ॥ आदेः परस्य ॥ ५४ ॥**

( ४९ परिभाषासूत्रम् ॥ १ । १ । ७ आ. ११ ॥ )

# अनेकाल् शित्सर्वस्य ॥ १ । १ । ५५ ॥

( शिद्ग्रहणप्रयोजनप्रत्याख्यानाधिकरणम् )

( आक्षेपभाष्यम् )

शित्सर्वस्येति किमुदाहरणम् ? ।

( प्रयोजनभाष्यम् )

'इदम इश्' इतः, इह ॥

( प्रयोजनबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् ॥ शित्करणादेवात्र सर्वादेशो भविष्यति ॥

**( प्रदीपः ) अनेकाल्० ॥ ५५ ॥ शित्करणादेवेति ।** सति शकारेऽनेकाल्त्वादिति भावः ॥ अनेकाल्त्वसंपादनेन च कृतार्थः शकार इतीत्संज्ञकत्वाल्लुप्यत एव ।

**( उद्द्योतः ) अनेकाल् शित्० ॥ ५५ ॥** ननु शित्पदाभावे कथं शित्करणादेवेति भाष्यमत आह—**सतीति ।** शकारोच्चारणसामर्थ्याद्भूतपूर्वानेकाल्त्वमादाय शास्त्रप्रवृत्तिरिति भावः ॥ यत्त्वेतत्सामर्थ्यात् फलप्रत्यासत्तेश्च विधानोत्तरमेवेत्संज्ञादिशास्त्रप्रवृत्तिर्लक्ष्ये इति भाव इति ॥ तन्न । **अणुदित्**सूत्रे इशि सवर्णग्रहणापत्तिपरभाष्येण सूत्रे एवेत्संज्ञालोपप्रवृत्तेः सूचनात् ॥ नन्वेवं शकारादित्येव वक्तुं युक्तं, किमित्पदेनेति चेत् ॥ न, फलान्तराभावेऽपि शकारोच्चारणस्य सप्रयोजनत्वाल्लोप एवेत्कार्यमिति शस्येत्त्वं प्रवर्तत इति सूचयितुं तथोक्तेः, तदाह—**अनेकाल्त्वेति ॥**

**( तत्त्वालोकः )** भाष्ये—**शित्करणादेवेति**—यत इत्यादिः । उद्द्योते—**शास्त्रेति**—'इदम इशि'त्यादिशास्त्रेत्यर्थः । 'अनेकाल् सर्वस्ये'ति परिभाषासूत्रसहकारादित्यादिः । शब्दकौस्तुभकारोक्तिं खण्डयति—**यत्त्विति । एतदिति**—शकारोच्चारणेत्यर्थः । **फलेति**—लोपेत्यर्थः । एतेन 'प्रथमं लोपो मा भूदित्संज्ञा तु स्यादेवे'त्यपास्तम् । **विधानेति**—इशादिविधानेत्यर्थः । **इत्संज्ञालोपेति**—इत्संज्ञालोपयोरित्यर्थः । **एवम्**—अनेकाल्त्वस्येष्टत्वे । **सप्रयोजनत्वात्**—अनेकाल्त्वसम्पादनरूपप्रयोजनवत्त्वात् । **लोप इति**—अत्र निमित्तार्थे सप्तमी । **तथोक्तेः**—'शित्करणादि'त्युक्तेः ।

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि—'अष्टाभ्य औश्' ॥

**( प्रदीपः ) अष्टाभ्य औशिति । आदेः परस्येत्यादेः** प्राप्त इति भावः ॥

( प्रयोजनबाधकस्मारणभाष्यम् )

ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति ॥

**( उद्द्योतः )** भाष्ये—**ननु चात्रापीति ।** अपवादविप्रतिषेधादिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—सिद्धान्तिमतेनोभयत्र युक्तिमाह—**अपवादेति ।** इड्डाप्युभयोः प्राप्तावपवादविप्रतिषेधाद् **'अनेकाल् सर्वस्ये'**त्येव स्यादित्याशयः ।

( प्रयोजनान्तरभाष्यम् )

इदं तर्हि—'जसः शी' 'जश्शसोः शिः' ॥

( प्रयोजनबाधकस्मारणभाष्यम् )

ननु चात्रापि शित्करणादेव सर्वादेशो भविष्यति ॥

( प्रयोजनसाधकभाष्यम् )

अस्त्यन्यच्छित्करणे प्रयोजनम् ॥

किम् ? ॥

विशेषणार्थः शकारः ॥

क विशेषणार्थेनार्थः ? ॥

'शि सर्वनामस्थानम्' 'विभाषा ङिश्योः' इति ॥

**( उद्द्योतः ) अस्त्यन्यदिति ।** एवंच तस्य सप्रयोजनत्वेन भूतपूर्वगत्याश्रयणे मानाभावेन नानेकाल्त्वात् सर्वादेशत्वमपि तु शित्वादेवेति शिद्ग्रहणं सूत्रे कार्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अस्त्यन्यदिति**—अत्रेति शेषः । उद्द्योते—**तस्य**—शकारोच्चारणस्य । **सप्रयोजनत्वेन**—अत्र प्रयोजनान्तरवत्त्वेन । सामर्थ्यविरहादिति भावः । **सूत्रे**—प्रकृतसूत्रे ।

( 'नानुबन्धकृतमनेकाल्त्वम्' इति परिभाषासाधनाधिकरणम् )

( वचनवैयर्थ्योपपादनभाष्यम् )

शित्सर्वस्येति शक्यमकर्तुम् ॥

कथम् ? ।

अन्त्यस्यायं स्थाने भवन्न प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न स्यात् । असत्यामित्संज्ञायां लोपो न स्यात् । असति लोपे अनेकाल् । यदा अनेकाल्, तदा सर्वादेशः । यदा सर्वादेशः, तदा प्रत्ययः । यदा प्रत्ययः, तदेत्संज्ञा । यदेत्संज्ञा, तदा लोपः ॥

( नानुबन्धकृतमनेकाल्त्वपरिभाषाज्ञापनभाष्यम् )

एवं तर्हि सिद्धे सति यच्छित्सर्वस्येत्याह, तज्ज्ञापयत्याचार्यः—अस्त्येषा परिभाषा—'नानुबन्धकृतमनेकाल्त्वं भवति'—इति ॥

किमेतस्य ज्ञापने प्रयोजनम् ? ।

❀तत्रासरूपसर्वादेशदाप्प्रतिषेधेषु पृथग् निर्देशोऽनाकारान्तत्वाद्❀ इत्युक्तम् , तन्न वक्तव्यं भवति ॥ अनेकाल् ॥ ५५ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते महाभाष्ये प्रथमाध्यायप्रथमपादे सप्तममाह्निकम् ॥ ७ ॥

**( प्रदीपः ) अन्त्यस्यायमिति ।** ननु सर्वनाम्नो नपुंसकादिति च पञ्चमीनिर्देशा**दादेः परस्ये**त्यादेर्भाव्यं तत्किमुच्यतेऽन्त्यस्यायं भवन्निति । एवं तर्हि **सर्वनाम्न** इति षष्ठीं मन्यते, **नपुंसकादिति** च विहितविशेषणमिति ज्ञापकत्वमेव शित्करणस्य । अथ वाऽसत्यपीह शिद्ग्रहणे अनेकाल्त्वा**दादेः परस्येति** बाधित्वा सर्वादेशो भविष्यतीति किं शिद्ग्रहणेनेति पुनरपि ज्ञापकमेव शिद्ग्रहणम् ॥ अनेकान्तेषु चानुबन्धेषु नास्त्येव **नानुबन्धकृतमनेकाल्त्व**मिति । एकान्तेषु च तेषु ज्ञापकेन प्रयोजनम् ॥ ५५ ॥

इति श्रीकैयटकृते भाष्यप्रदीपे प्रथमाध्यायप्रथमपादे

सप्तममाह्निकम् ॥ ७ ॥

---

**( उद्द्योतः )** सर्वादेशात्प्राक् प्रत्ययादित्वाभावेन नेत्त्वमिति प्रतिपादयितुं **अन्त्यस्याय**मित्यादि भाष्यम्, तदाक्षिपति—**नन्विति ।** ततश्च सर्वादेशत्वं विनापि प्रत्ययादित्वाल्लभ्यत एवेत्त्वमिति भावः ॥ **षष्ठीमिति ।** सर्वनामसंबन्धिनो जसः शी, नपुंसकाद्विहितयोर्जश्शसोः शिरिति चार्थः । एवं च परशब्देन परस्य विधानाभावान्न तत्प्रवृत्तिरिति भावः ॥ तयोः परशब्दयोगे पञ्चमीत्वेऽप्याह—**अथवेति ।** असत्यपि सूत्रे शिद्ग्रहण इति अर्थः । श्यादयो यावन्नादेशास्तावन्नेत्त्वलोपौ । आदेशाश्च परत्वात्सर्वस्यैवेति भावः । **अस्त्येषा परिभाषेति ।** अनुबन्धानामल्व्यवहाराभावस्य ज्ञापनादिति भावः ॥ अत एवानुबन्धकार्ये**ष्वनल्विधा**विति स्थानिवत्त्वनिषेधो न । अन्यथा क्त्वो ल्यपः कित्त्वं न स्यात् ॥ न च पूर्वमनुबन्धलोपे तद्रहितस्यैव स्थानित्वात्तस्य न स्थान्यवयवत्वम् । सूत्रे स्थानषष्ठ्या निर्दिष्टस्यैव स्थानिपदवाच्यतया तदवयवत्वस्य ककारे सत्त्वात् । अन्यथाऽग्रहीदित्यादा**विट ईटीति** दीर्घो न स्यादिति **स्थानिव**त्सूत्रे निरूपयिष्यामः ॥ **नानुबन्धकृतमिति ।** एवं च शीप्रभृतीनामपि शित्त्वादेव सर्वादेशत्वं, तस्याप्यनुबन्धत्वात् । न च विधानकाले उक्तरीत्या तस्य तत्त्वज्ञानाभावः । तद्योग्यतयैव तत्त्वाद् । अन्यथा कप्रत्ययादीनां कादेर्वाक्यार्थबोधोत्तरं प्रत्ययत्वज्ञाने इत्संज्ञालोपाविति विधानकाले कस्यानुबन्धत्वज्ञानाभावेन **नानुबन्धकृतमसारूप्य**मित्यस्याप्राप्तौ विकल्पापत्तेः । शिदित्यस्यापीत्संज्ञायोग्यशकारवान्सर्वस्येत्यर्थ इति न दोष इति भाति ॥ भाष्ये **तत्रासरूपेति ।** असरूपे कविषये णप्राप्तिदोषः । सर्वादेशे **दिव औदि**ति सर्वादेशः स्यादिति दोषः । प्रतिषेधे दैपो भेदेन निर्देशः कार्यः । तृतीये हेतु**रनाकारान्तत्वा**दितीत्यर्थः ॥ ज्ञापकमनावश्यकमित्याह—**अनेकान्तेष्विति ॥ एकान्तेषु चेति ।** अयमेव मुख्यः पक्ष इति **तस्य लोप** इत्यत्र भाष्ये स्पष्टम् ॥ ५५ ॥

इति श्री**शिवभट्ट**सुतसतीगर्भज**नागोजी**भट्टविरचिते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमे पादे सप्तममाह्निकम् ॥ ७ ॥

---

**( तत्त्वालोकः )** भाष्ये—**अन्त्यस्येति**—यत इत्यादिः । **अयम्**—श्यादिः । **न प्रत्ययः स्यादिति**—वर्णसमुदायात्मकप्रत्ययवृत्तिप्रत्ययत्वस्य तदेकदेशवर्णस्थानिकादेशे स्थानिवत्त्वेनागमनासम्भवादिति भावः । **असत्याम्**—असत्याञ्च । एवमग्रेऽपि । **इत्संज्ञा न स्यादिति**—शकारस्य प्रत्ययादित्वाभावात् 'तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युरि'त्यर्थकस्य 'लशक्वतद्धिते' इति सूत्रस्याप्रवृत्तेरिति भावः । **लोपो न स्यादिति**—'तस्य लोपः' इत्यनेनेत्संज्ञकस्यैव लोपविधानादित्याशयः । **आचार्यः**—पाणिनिः । **तत्र**—एकान्तपक्षे । **भवति**—भवतीति ।

प्रदीपे—**सर्वनाम्नो नपुंसकादिति च**—'जसः शी'त्यत्र 'सर्वनाम्नः स्मै' इत्यतोऽनुवृत्ते 'सर्वनाम्नः' इत्यत्र, 'नपुंसकाच्चे'ति सूत्रघटके 'नपुंसकादि'त्यत्र च । **निर्देशादिति**—'तस्मादित्युत्तरस्ये'ति सहकारेणेति शेषः । **भाव्यमिति**—श्यादिनेत्यादिः ।

उद्द्योते—**प्रत्ययादित्वेति**—शकारस्येत्यादिः । **प्रतिपादयितुमिति**—न त्वन्त्यादेशत्वं प्रतिपादयितुमित्याशयः । **ततश्च**—प्रत्ययादेः श्यादिविधानाच्च । **सर्वनामेति**—'तथाच तदुभयसूत्रस्ये'त्यादिः । **जसः शी**—जसः शीति । नन्वेवमपि वस्तुतः परस्यैव तद्विधानेन 'आदेः परस्ये'त्यादेरेव तत्स्यादित्यत आह—**एवञ्चेति ।** तदुभयसूत्रस्योक्तार्थाश्रयणे चेत्यर्थः । **विधानेति**-श्यादिविधानेत्यर्थः । **तदिति**—'आदेः परस्ये'त्यस्येत्यर्थः । **तयोः**—'सर्वनाम्नः' इत्यत्र, 'नपुंसकादि'त्यत्र च । **पञ्चमीत्वे**—पञ्चमीसत्त्वे । इहे'ति न प्रकृतपरमित्याह—**सूत्रे इति ।** 'अनेकाल्शि'ति सूत्रे इत्यर्थः । **एवेति**—न त्वादेरिति शेषः । लाघवादाह—**अनुबन्धानामिति ।** तत्फलमाह—**अत एवेति ।** तेषां तदभावज्ञापनादेवेत्यर्थः । **कित्त्वं न स्यादिति**—ननु क्त्वो ल्यपः कित्त्वाभावे प्रधायेत्यादौ 'घुमास्थे'तीत्वाप्राप्त्या 'न ल्यपी'तीत्त्वनिषेधस्य वैयर्थ्यं स्यादिति तेन 'अनुबन्धकार्येष्वनल्विधाविति स्थानिवत्त्वनिषेधो ने'ति ज्ञाप्येतेति चेन्न, एवमाश्रयणे गौरवात् । **तस्य**—अनुबन्धस्य । **दीर्घो न स्यादिति**—टकाराभावेनेकारस्य स्थानित्वाभावादिति भावः । **एवञ्च**—अनुबन्धकृतानेकाल्त्वाभावे च । **तस्य**—तदीयशकारस्य । एवमग्रेऽपि । **उक्तेति**—'यदा अनेकाल्वि'त्यादिभाष्योक्तेत्यर्थः । इत्संज्ञावत्त्वमनुबन्धत्वमित्यभिप्रेत्याह—**तत्त्वेति ।** अनुबन्धत्वेत्यर्थः । एवमग्रेऽपि । **तदिति**—इत्संज्ञेत्यर्थः । **तत्त्वादिति**—अत एव काणोविषये 'नानुबन्धकृतमसारूप्यमि'ति विकल्पाभाव इति शेषः । विपक्षे बाधकमाह—**अन्यथेति ।** इत्संज्ञायोग्यत्वमनुबन्धत्वमित्यस्वीकारे इत्यर्थः । **विकल्पेति**—'वाऽसरूपोऽस्त्रियामि'त्यनेनेति भावः । **अयमेवेति**—एवञ्च ज्ञापकमावश्यकमेवेत्याशयः ॥

**इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमे पादे सप्तममाह्निकम् ॥**

---

## इति प्रथमाध्याये प्रथमपादे सप्तममाह्निकम् ।

# प्रथमाध्यायस्य प्रथमपादे अष्टममाह्निकम् ॥

( अतिदेशप्रकरणम् )

( ५० अतिदेशसूत्रम् ॥ १ । १ । ८ आ. १ )

## स्थानिवदादेशोऽनल्विधौ ॥ १।१।५६ ॥

( पदकृत्यनिर्वचनाधिकरणम् )

( आक्षेपभाष्यम् )

वत्करणं किमर्थम् ? ।

**( प्रदीपः ) स्थानिवत् ॥ ५६ ॥ वत्करणमिति ।** विनापि वतिना तदर्थलाभो यथा क्ङिति चेति भावः । न च स्थान्यादेश इत्युच्यमाने स्थानिरूपमादेशः प्रतिपद्यते इति कल्पनाश्रयितुं युक्ता । अस्तेर्भूरित्यादेशविधानवैयर्थ्यप्रसङ्गात् । न च वचनद्वयप्रामाण्याद्विकल्पः । **वा लिटीति** विकल्पारम्भात् ॥

**( उद्द्योतः ) स्थानिवदादेशः ॥ ५६ ॥ स्थानिरूपमिति ।** न च **सिद्धं धर्मिण**मित्यादिन्यायेन पूर्वोच्चारितस्योद्देश्यत्वबोधकेन स्थान्यादेशरूपं प्रतिपद्यत इत्येवार्थो युक्त इति वाच्यम् । प्रसिद्धस्थानिनां प्रसिद्धादेशविधाने वैयर्थ्यापत्तेः । अन्यत्र विधाने तु **स्थानेऽन्तरतम** इति सूत्रोक्तन्यायेनाव्यवस्थापत्तेस्तस्य न्यायस्य सूत्रकृताप्यत्र त्यागाच्च । अत एव भाष्यकृता **स्थानी संज्ञे**त्येवोक्तं न त्वादेशः संज्ञेतीति बोध्यम् ॥ **वा लिटीति ।** न च **चक्षिङः ख्याञि**त्यनेनानेन च सर्वत्रार्धधातुके ख्याञो विकल्पे सिद्धे लिट्येव वेति नियमार्थं स्यादिति वाच्यम् । दोषदुष्टनियमापेक्षयैतत्सूत्रे एतदतिरिक्तार्थकत्वज्ञापकतायां एवौचित्यात् ॥

**( तत्त्वालोकः )** भाष्ये—वत्करणमन्तरेणापि—स्थान्यादेशपदयोः समानविभक्तिकनामत्वेन तदर्थयोस्तादात्म्यातिरिक्तसम्बन्धस्यानुपपत्तेस्तादात्म्यसम्बन्धस्य च बाधादन्वयबोध एव नोपपद्येतेति तदुपादानसामर्थ्यात् स्थानिपदं स्थानिसदृशार्थकं भविष्यतीति व्यर्थं वत्करणमित्याशयेनाक्षिपति—**वत्करणमिति ।**

प्रदीपे—**क्ङिति**—'गाङ्कुटादिभ्योऽञ्णिन्ङित्' 'असंयोगाल्लिट् कित्' इत्यादिसूत्रे 'क्ङिति चे'त्यादौ । **इत्युच्यमाने**—इत्येतावत्युच्यमाने । **अस्तेरिति**—तथा सतीत्यादिः । **वचनद्वयेति**—'अस्तेर्भूः' 'स्थान्यादेशोऽनल्विधावि'ति वचनद्वयेत्यर्थः । **विकल्प इति**—कदाचित् स्थान्यादेशरूपं प्रतिपद्येत, कदाचिच्चादेशः स्थानिरूपमित्यर्थः । **वा लीति**—तथा सतीत्यादिः । **विकल्पारम्भात्**—विकल्पारम्भस्य वैयर्थ्यप्रसङ्गात् ।

उद्द्योते—**सिद्धमिति**—'सिद्धं धर्मिणं पूर्वं कृत्वाऽसिद्धस्य परस्य प्रतिपादनम्' इति न्यायः । तस्य च—'सिद्धं धर्मिणं पदार्थं पूर्वं कृत्वा पूर्वोच्चारितत्वेनोद्दिश्यासिद्धस्य परस्य पश्चादुच्चारितत्वेन विधेयत्वप्रतिपादनमि'त्यर्थः ॥ **प्रसिद्धस्थानिनामिति**—अनेनेत्यादिः । **वैयर्थ्येति**—तस्य तत्तदादेशविधायकसूत्रैरेवोपपन्नत्वात्प्रकृतसूत्रस्येत्यादिः । **अन्यत्र विधाने**—अन्यस्य विधीयमाने । **सूत्रोक्तन्यायेन**—सूत्रस्यापूर्वविधित्वपक्षे उक्तेन प्रकारेण । **अव्यवस्थेति**—साधुत्वस्येत्यादिः । **तस्य**—'सिद्धं धर्मिणमि'त्यस्य । **अत्रेति**—प्रकृतसूत्रे इत्यर्थः । 'स्थानिवदादेशः' इति वदतेति शेषः । **अत एव**—'सिद्धं धर्मिण'मिति न्यायस्यानित्यत्वादेव । **न चेति**—इदमिति शेषः । **अनेन**—'स्थान्यादेशोऽनल्विधावि'त्यनेन । एवमपि 'विभाषा लुङ्लृङोरि'त्यादावप्राप्तविभाषासु विकल्पग्रहणस्यैव कल्पनापत्तेरित्याशयेनाह—दोषदुष्टनियमेति ।

( समाधानभाष्यम् )

'स्थान्यादेशोऽनल्विधौ' इतीयत्युच्यमाने संज्ञाधिकारोऽयम्, तत्र स्थानी आदेशस्य संज्ञा स्यात् ॥

तत्र को दोषः ? ।

'आङो यमहनः' आत्मनेपदं भवतीति वधेरेव स्याद् हन्तेर्न स्यात् । वत्करणे पुनः क्रियमाणे न दोषो भवति । स्थानिकार्यमादेशे अतिदिश्यते 'गुरुवद् गुरुपुत्रे' इति यथा ॥

**( प्रदीपः ) संज्ञाधिकार इति ।** संज्ञाप्रस्ताव इत्यर्थः ॥ **तत्र को दोष इति ।** आदेशे कार्यसिद्ध्यर्थोऽतिदेशः । तच्चादेशे कार्यं संज्ञासंज्ञिसंबन्धेनापि सिध्यतीति प्रश्नः ॥ **वधेरेवेति ।** संज्ञा हि प्रदेशेषु संज्ञिप्रत्यायनार्था संज्ञिनं प्रत्याय्य निवर्तते, न तु स्वतः कार्यं प्रतिपद्यत इति भावः ॥ **बहुगणे**त्यत्र तु संख्येत्यन्वर्थताश्रयणाल्लौकिकार्थग्रहणाद्विनापि वतिनातिदेशपक्ष उपन्यस्तः । वत्करणात्त्विहातिदेशेन स्थानिकार्याण्यादेशे क्रियन्ते, न तु स्थानिनि निवर्त्यन्ते इत्यदोषः ॥ क्ङिति तु संज्ञा न भवति, **न क्त्वा सेडि**ति प्रतिषेधात् । नहि क्त्वः कित्संज्ञा विहिता, या प्रतिषिध्येत । **किकिनौ लिट् चे**त्यत्र तु संज्ञाप्रकरणाभावात् तद्वदतिदेशः ॥ **स्थानिकार्य**मित्यनेन कार्यातिदेशोऽयमिति प्रदर्शयति । शास्त्रातिदेशापेक्षया कार्यातिदेशस्य प्राधान्यादितरेषां कार्यार्थत्वादिति भावः ॥

**( उद्द्योतः )** भाष्ये—**स्थानी आदेशस्येति । नवेती**त्यत इतिशब्दानुवृत्तेः **स्थानिशब्दार्थो** हनादय **आदेशपदार्थस्य** वधादेः संज्ञेत्यर्थः । स्थानिशब्दस्यादेशशब्दसंज्ञात्वे वैयर्थ्यमिति भावः ॥ ननु स्वरितलिङ्गकानुवृत्तिरूपाधिकारस्य संज्ञाविषयस्य शास्त्रेऽभावादाह—**प्रस्ताव इति ।** प्रस्तावः प्रकरणं बुद्धिसंनिधिरिति यावत् ॥ पूर्वोत्तरत्र प्रायेण संज्ञाया दर्शनादिति भावः ॥ परिभाषात्वं त्वनुक्तिसंभवग्रस्तमिति तन्नोक्तम् ॥ भाष्ये—**वधेरेवेति ।** न चैव**माङो वधयम** इत्येवाकारविवक्षणेन स्वतन्त्रवधिव्यावृत्तौ हन्ग्रहणं व्यर्थं स्यादिति वाच्यम् । आजघ्ने इत्यादिसकलहन्त्यादेशसंग्रहार्थं तस्य सत्त्वात् ॥ **हन्तेर्न स्यादिति ।** आहनिष्यत इत्यादौ ॥ नन्वत्र पादे वतिं विनाऽतिदेशानवगतौ कथं **बहुगणे**त्यत्रातिदेशपक्ष उक्तोऽत आह—**बह्विति ॥ सङ्ख्येतीति ।** सङ्ख्यापदस्येत्यर्थः ॥ **लौकिकार्थग्रहणादिति ।** सङ्ख्यानकरणरूपेत्यर्थः । एवं च तद्बाधापत्त्या संज्ञात्वासंभवादतिदेश इति भावः ॥ इदं च तत्रैव सूत्रे कैयटे स्पष्टम् ॥ **संज्ञा नेति ।** उभयगतेरिह शास्त्रे सत्त्वेन संज्ञात्वेऽपि क्ङिदादिग्रहणेन चञादीनामपि ग्रहणम् ॥ **नहीति ।** अनुवृत्तकिद्ग्रहणस्य संज्ञापरत्वेन सैव प्रतिषेध्या, न च सा क्त्वो विहितेत्यर्थः ॥ किंच किदित्यादेः संज्ञात्वे **क्ङिति चे**त्यत्रास्य **ग्रहणं न स्यात् । संज्ञास्वरूपानुच्चारणा-**

दिति बोध्यम्। तथा **निष्ठा शीङ्**स्त्यादिनिषेधोऽप्यसंबद्धः स्यात्। कित्साहचर्यात् ङिदित्यप्यतिदेशः ॥ **कार्यातिदेशोऽयमिति ।** एवं चानपेक्षितशास्त्रमनपेक्षितनिमित्तं च प्रत्ययत्वादिरूपं कार्यमनेनैव क्रियते इति भावः॥

**( तत्त्वालोकः )** भाष्ये—**संज्ञाधिकारोऽयमिति**—संज्ञाधिकारान्तर्गतोऽयमित्यर्थः। यत इत्यादिः। अत इति शेषः ॥ **स्यादिति**—अथवा आदेशः स्थानिनः संज्ञा स्यादिति शेषः। विनिगमनाविरहादिति भावः॥ **आङ इति**—आद्ये इत्यादिः। **आत्मनेपदम्**—इत्यात्मनेपदम्। **वधेरेवेति**—'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणमि'ति न्यायेनेत्यादिः। **हन्तेर्न स्यादिति**—किन्त्वित्यादिः। ननु 'स्वं रूपमि'ति हन्तेरपि ग्रहणं स्यादिति चेन्न, इदानीं हनः संज्ञात्वाद् 'अशब्दसंज्ञे'ति निषेधेन तत्स्वरूपग्रहणासम्भवात्। द्वितीये च—'अस्यतिवक्तिख्यातिभ्योऽङि'त्यत्र ख्यातिपदेन कृत्रिमाकृत्रिमन्यायात् चक्षिङेव गृह्येत, न तु ख्यातिः। तथा च—समचक्षिष्टेत्यत्रैवाङ् स्यान्न तु अख्यतेत्यत्र। नन्वेवं चक्षिङ इत्येव वदेदिति चेन्न, एवमपि 'गाङ्कुटादि' सूत्रे गाङा इङादेशोऽर्ग्रहणापत्तेः। इङित्यवचनसामर्थ्याद् ध्युभयगतिः स्यात्। तस्मात्कर्तव्यमेव वत्करणमित्याशयः। **स्थानीति**—यत इत्यादिः।

प्रदीपे—**इति प्रश्नः**—इति कारणात्प्रश्नः। **अन्वर्थतेति**—संख्यायतेऽनयेति संख्येत्यन्वर्थतेत्यर्थः। **उपन्यस्त इति**—अन्यथा टिघुभादिवदेकाक्षरैव संज्ञा क्रियेतेति भावः। **अदोषः**—'वधेरेव स्यात् (किन्तु) हन्तेर्न स्यादि'ति भाष्योक्तदोषो न। अत्रोक्तदोषं साम्याद् दृष्टान्तेऽपि प्रसक्तं परिहरति—**ङिदिति । प्रतिषिध्येतेति**—ननु 'मृडमृदे'ति प्राप्ता सा निषिध्यतां, वचनद्वयसार्थक्याय च विकल्पोऽस्त्विति चेन्न, 'मृडमृदे'त्यत्रैव वाग्रहणस्य सम्भवात्। **तद्वत्**—लिङ्वदिति।

उद्द्योते—**स्थानिशब्दस्येति**—अन्यथेत्यादिः। **वैयर्थ्येति**—प्रकृतसूत्रस्येत्यादिः। **आह**—'संज्ञाऽधिकार' इत्युक्तिरसङ्गतेत्यत आह। प्रकरणपदार्थमाह—**बुद्धीति ।** तदुपपत्तिमाह—**पूर्वोत्तरत्रेति ।** नन्वेवं प्रकरणात्परिभाषात्वमेवाव्यवधानानुरोधेन कुतो नोक्तमित्यत आह—**परिभाषात्वन्त्विति । आजघ्ने इति**—हन्तेर्लिटि लसामान्यापेक्षत्वेनान्तरङ्गत्वात्तिबादिषु कृतेषु परत्वनित्यत्वाभ्यां 'शेषात्कर्तरी'ति बाधित्वा 'लिटि धातोरि'ति द्विःप्रयोगेऽभ्यासस्य चुत्वेऽभ्यासात्परस्य घत्वे एकदेशविकारासम्भवेन समुदायस्य समुदायादेशत्वाद्धन्त्यादेशत्वमित्याशयः। **तस्य**—हन्ग्रहणस्य। **अत्र पादे**—संज्ञाप्रकरणे। अभेदान्वयासम्भवादाह—**संख्यापदेति । एवञ्च**—संख्यानकरणरूपलौकिकार्थग्रहणे च। **तत्रैव**—'बहुगणे' त्यत्रैव। ननु संज्ञात्वे ङ्दिादिग्रहणेन विधिषु चङादीनां ग्रहणं नोपपद्येत, कृत्रिमाकृत्रिमन्यायादित्यत आह—**उभयगतेरिति ।** लक्ष्यानुसारिव्याख्यानेनेत्याशयः। **चङादीनामिति**—विधिष्वित्यादिः। दोषान्तरमाह—**किञ्चेति ।** तथा च—'गाङ्कुटादी'त्यत्र कुटादिग्रहणस्य वैयर्थ्यमापद्येतेति भावः। दोषान्तरमाह—**तथेति ।** न हि शीङादिभ्यो निष्ठायाः केनचित् कित्संज्ञा विहिता। तस्मात्किदित्यतिदेशः॥ अत एव ङितोऽतिदेशत्वे युक्त्यन्तरमाह—**किदिति ।** कित्साहचर्यादपीत्यर्थः। **किञ्च** ङिदित्यस्य संज्ञात्वे 'ग्रहिज्या'दिसूत्रेऽस्यैव ग्रहणं स्यात्, कृत्रिमाकृत्रिमन्यायात्। तथा च—'न वशः' इति सूत्रस्य वैयर्थ्यमापद्येत, वावश्यते इत्यत्र सम्प्रसारणाप्राप्तेरिति दिक्। **एवञ्च**—कार्यातिदेशत्वे च।

**( आक्षेपभाष्यम् )**

**अथादेशग्रहणं किमर्थम् ? ॥**

**( प्रदीपः ) आदेशग्रहणमिति ।** स्थानिशब्दस्य संबन्धिशब्दत्वादादेशो लभ्यत एव, यथा पितृवदधीत इत्युक्ते पुत्र इति गम्यत इति भावः॥

**( उद्द्योतः )** भाष्ये—**यः स्थाने इति** स्थानशब्दप्रयोगात् तदनुवृत्त्यादेशो लभ्यत इति भ्रमं व्युदस्यति—**स्थानीति ॥**

**( तत्त्वालोकः )** प्रदीपे—**स्थानिशब्दस्येति**—स्थानिवदित्युक्ते इत्यादिः। **पुत्र इतीति**—पितृशब्दस्य सम्बन्धिशब्दत्वादित्यादिः।

**( प्रत्याक्षेपभाष्यम् )**

**'स्थानिवदनल्विधौ' इतीयत्युच्यमाने क इदानीं स्थानिवत्स्यात् ? ॥**

**( प्रदीपः ) क-इदानीमिति ।** द्विविध आदेशः—प्रत्यक्षश्च**अस्तेर्भू**रित्यादिः, आनुमानिकश्च**एरु**रित्यादिः। अत्र हि—इकारेणेकारान्तः स्थान्यनुमीयते, उकारेणोकारान्तश्चादेशः। ततस्तेस्तुरिति संपद्यते। तत्र प्रत्यक्षस्यैव ग्रहणं स्याद् नानुमानिकस्येति भावः॥

**( उद्द्योतः )** नन्वादेशलब्धौ क इति प्रश्नानुपपत्तिरित्यत आह—**द्विविध इति ।** केचित्तु स्थानिशब्दस्य संबन्धिशब्दत्वमजानतः प्रश्नः—**क इति ॥**

**( तत्त्वालोकः )** प्रदीपे—**प्रत्यक्षश्चेति**—तत्रेत्यादिः। **तत्रेति**—असत्यादेशग्रहणे इति शेषः। कृते आदेशग्रहणे तु—तत्सामर्थ्यादुभयपरिग्रहः। तेन पचत्वित्यादेस्तिङन्तत्वात्पदसंज्ञा सिध्यतीत्याशयः।

उद्द्योते—**आदेशलब्धाविति**—स्थानिशब्दस्य सम्बन्धिशब्दत्वादित्यादिः। अन्यथा भाष्यं सङ्गमयति—**केचित्त्विति ।** भाष्यतत्त्वविदस्त्वित्यर्थः।

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**यः स्थाने भवति ॥**

**कश्च स्थाने भवति ? ॥**

**आदेशः ॥**

**( उद्द्योतः )** संबन्धिशब्दत्वाभिप्रायमुत्तरम्—**यः स्थाने इति ॥**

**( समाधानभाष्यम् )**

**इदं तर्हि प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यात्। एकदेशविकृतस्योपसंख्यानं चोदयिष्यति, तन्न वक्तव्यं भवति ॥**

**( प्रदीपः ) आदेशमात्रमिति ।** प्रत्यक्षमनुमितं चेत्यर्थः। **एरु**रित्यत्र प्रत्यक्षमुकारस्यादेशत्वमिकारस्य च स्थानित्वम्। न च किंचिदिकारस्य कार्यमस्ति यदुकारेऽतिदिश्येत। तिशब्दकार्यं तु तुशब्दस्यातिदिश्यत इति पदत्वसिद्धिः॥

**( उद्द्योतः )** समाधत्ते—**आदेशमात्रमिति ।** अस्याशयः कैयटोक्त एव॥ कैयटोक्तव्याख्यानेऽपि **यः स्थाने** इत्यादिग्रन्थस्याशयानभिज्ञवक्तृकतयैव योज्यमानत्वादित्याहुः॥ नन्वत्रापि प्रत्यक्षस्यैव स्थानिवत्त्वमस्त्वित्यत आह—**न चेति ॥ पदत्वेति ।** अत एव देवदत्तः पचत्वित्यत्र **पदस्ये**त्यधिकृत्य विधीयमानो निघातः सिध्यति। पचतु ते ओदनमित्यत्र **पदादि**त्यधिकृत्य विधीयमानस्तेमयादिश्च सिध्यति॥

**( तत्त्वालोकः )** भाष्ये—**स्यात्**—स्यादिति। **एकदेशेति**—तेन—यदित्यादिः।

प्रदीपे—**पदत्वसिद्धिरिति**—नन्वेकरित्यादि यथाश्रुतार्थकमेवास्तु, एकदेशविकृतस्यानन्यत्वाच्च तस्य पदत्वं नेत्यनीति चेन्न, अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वक्तव्यत्वात्तस्यैव प्रसङ्गसम्भवात् । यद्यपि च्लेः सिजाद्यादिदमसम्भवि, तथापि सति सम्भवेऽर्थप्रयुक्तप्रसङ्ग एव ग्राह्य इत्यादेशग्रहणेनैव ज्ञाप्यते । किञ्च—छिन्नपुच्छदृष्टान्तमूलकस्यास्य न्यायस्यार्थाब्धिकविकारेऽप्रवृत्तेः 'एत्वरि'त्यनेनैकारस्योकारविधानेऽपि अनेन न्यायेन तत्र पदत्वं दुरुपपादमेवेत्याशयः ।

उद्द्योते—**विधीयमान इति**—'निङ्क्तनिङः' इत्यनेनेत्यादिः । **पदादित्यधिकृत्येति**—'तेमयावेकवचनस्ये'त्यनेनेति शेषः ॥

## ( आक्षेपभाष्यम् )

**अथ विधिग्रहणं किमर्थम् ? ॥**

**( उद्द्योतः )** भाष्ये—**विधिग्रहणं किमर्थमिति ।** विधावित्यध्याहाराल्लप्स्यत इति प्रश्नः ॥

**( तत्त्वालोकः )** उद्द्योते—**इति प्रश्नः**—इति हेतोः प्रश्नः ।

## ( विधिग्रहणप्रयोजनभाष्यम् )

**सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—अलः परस्य विधिः—अल्विधिः । अलो विधिः—अल्विधिः । अलि विधिः—अल्विधिः । अला विधिः—अल्विधिरिति ॥**

**( प्रदीपः ) सर्वविभक्त्यन्त इति ।** सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति मत्वर्थीयोऽकारः । बहुत्वप्रतिपादनपरमेतत् । न ह्यत्र सप्त विभक्तयः संभवन्ति । तत्र संबन्धमात्रे षष्ठ्युपादानेऽनेकविभक्त्यर्थान्तर्भावात् फलतः सर्वविभक्त्यन्तता संभवति । अथवाऽल्विधिशब्दवाच्योऽल्विधिरिति विशिष्टप्रवृत्तिनिमित्तानाश्रयणात् सर्वविभक्त्यन्तत्वम् । सति च विधिशब्दे समासभावादेतद्वस्तुलाभः । केवलस्त्वल्शब्द उपादीयमानो यद्विभक्तिरुच्चार्येत तदर्थोपक्षय एव स्यात् । तत्रालः परस्य विधिः—द्यौः पन्थाः । **हल्ङ्याबिति** सुलोपो न भवति ॥ अलि परतो विधिः—क इष्टः स इष्टः । **हशि चे**त्युत्वं न भवति ॥ अलो विधिः—वुकाम इति । **लोपो व्योर्वलीति** लोपो न भवतीति ॥ उत्वं त्ववलि सावकाशं स्यादद्द्विमलद्यु इति ॥ अला विधिः—महोरस्केनेति । **अयोगवाहानाम**ट्सूपदेशाण्णत्वं न भवतीति ॥

**( उद्द्योतः )** ननु समासोत्तरं सप्तम्या एव श्रवणेन सर्वविभक्त्यन्तत्वं समासस्यानुपपन्नमत आह—**अवयव इति ।** पूर्वपदरूप इत्यर्थः ॥ ननु विभक्तिचतुष्टयेनैव विग्रहस्याग्रे प्रदर्शनेन सर्वेत्यनुपपन्नमत आह—**बहुत्वेति ।** द्वितीयाचतुर्थीप्रथमाभिः स्थान्यलः सूत्रेऽनिर्देशादिति भावः ॥ ननु सकृच्छ्रुतेल्विधिपदे कथमल्पदस्यानेकविभक्त्यन्ततेत्यत आह—**तत्रेति ।** विधिशब्दः कर्मसाधनः । तेनाल्संबन्धिकार्ये इत्यर्थः ॥ प्रौढ्या पक्षान्तरमाह—**अथवेति ।** अल्शब्दात्परो विधिशब्दोऽल्विधिशब्दस्तेन च तद्वाच्योऽर्थो लक्ष्यत इति भावः ॥ एवं च तद्वाच्यत्वेन रूपेण सर्वार्थाश्रयणात्सर्वविभक्त्यन्तत्वे यत्फलं तत्फलसिद्धिरिति तात्पर्यम् ॥ **समासभावादिति ।** उपदर्शितपक्षद्वयोक्तसमाससत्त्वादित्यर्थः ॥ **यद्विभक्तिरिति ।** षष्ठ्युपादानेऽपि स्थानसंबन्ध एव बुध्येतेति भावः ॥ **तदर्थोपक्षय एव स्यादिति ।** तदर्थमात्रान्वितार्थक एव स्यादित्यर्थः ॥ **इष्ट इति ।** यजेः क्तः । यद्यपि **क इष्ट इति रूपमुत्वेऽपि सिध्यति,** तथापि कयिष्ट इति पक्षे स्यात्कयिष्ट इति न स्यादिति बोध्यम् । **स इष्ट** इत्यत्र **एतत्तदोरिति** नित्यो लोपः स्यादिति च बोध्यम् । [illegible] । **दिव उत् ।** यद्यपि वत्वं [illegible] [illegible] [illegible] वदुकार इति [illegible] न तत्त्वम् । [illegible] शभावमादायैव [illegible] इति दिक् । **उपदेशादिति ।** तस्य स्थानिवत्त्वेन [illegible] [illegible] दिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**बहुत्वेति**—[illegible] । **एतत्**—सर्वमिदम् । **तत्र**—अल् इत्यत्रेत्यर्थः । **तत्र**—तेषां मध्ये । **पन्थाः**—पन्था इति । **हल्ङ्येति**—'अनौदादीनां स्थानिवत्त्वेन हल्त्वात्प्राप्तः' इत्यादिः । **न भवतीति**—अनल्विधाविति स्थानिवद्भावनिषेधादिति भावः । एवमग्रेऽपि । **स इष्टः**—स इष्ट इति । **हशीति**—'अत्र सम्प्रसारणस्य स्थानिवत्त्वेन हश्त्वात्प्राप्तमि'त्यादिः । **लोपो व्योरिति**—'अत्रोकारस्य स्थानिवत्त्वेन वत्वात्प्राप्तः' इत्यादिः । **णत्वमिति**—प्राप्तमित्यादिः ।

उद्द्योते—**समासोत्तरमिति**—अनल्विधावित्यत्रेत्यादिः । अनेनानभिमतग्रहणस्य निराकरणायाह—**पूर्वपदेति । कर्मसाधनः**—विधीयते इति विधिरिति रीत्या निष्पन्नः । अत्र पक्षे क्लेशमाह—**प्रौढ्येति । विशेषधर्म इति**—तथा च—उपस्थितसामान्यधर्मप्रयुक्तधर्मैस्तदाक्षिप्तस्य[illegible]धर्मैर्वा विध्याकांक्षापूरणे सत्यनुपस्थितविशेषधर्मग्रहणे मानाभावात् सिद्धान्तितेन 'सामान्यातिदेशे विशेषानतिदेशः' इति न्यायेन वत्वातिदेशाभावादत्रोकारस्य लोपो न प्राप्नोतीत्यलो विधौ स्थानिवद्भावनिषेधस्य तन्निराकरणरूपं फलं न सम्भवतीत्याशयः । **तथापीति**—यद्युक्तन्यायघटकसामान्यशब्देन यत्किञ्चिद् गृह्येत, तर्हि प्रमेयत्वाद्यपेक्षया तदतिरिक्तसर्वेषां धर्माणां विशेषधर्मत्वात्तदतिदेशस्योक्तन्यायेन निषेधात्कस्याप्यतिदेशासम्भवादतिदेशशास्त्राणां वैयर्थ्यमापद्येत । अत उक्तन्यायघटकसामान्यशब्देन संज्ञाहकवाक्योपप्लुतलक्ष्यसंस्कारकवाक्यघटकशब्दोपात्तधर्म एव ग्राह्यः, तदपेक्षया च विशेषधर्म एव तद्घटकविशेषशब्देन ग्राह्यः । एवञ्च नायं दोषः, यतो वत्वस्येति शेषः । **वाक्योपात्तेति**—वाक्यघटकशब्दोपात्तेत्यर्थः । **तत्त्वम्**—विशेषधर्मत्वम् । नन्वेवमपि तथा वाक्योपप्लव एव मानाभावादयं दोपस्तदवस्थ एवेत्यत आह—**सूत्रकृतेति ।** आदेशविधिसूत्रेषु येन रूपेण कृप्तः स्थान्यादेशभावस्तेन रूपेण तमादायैवेत्यर्थः । तथा च—'अलोऽन्त्यस्ये'ति सहकृत'दिव उदि'ति सूत्रे वत्वेनैव वस्य स्थानितेति तथैव वाक्योपप्लव इत्याशयः । सम्भवाभिप्रायेणैवं कथितम्, वस्तुतस्तु 'न ल्यपी'ति लिङ्गादिह सूत्रे विशेषातिदेशोऽप्यभिमत एव, यतः किति परतो विहितमीत्त्वं निषेद्धुं 'न ल्यपी'त्यारभ्यते, किन्त्वन्तु क्त्वाविशेषधर्म एव, सेट्के तत्र तदभावादित्याशयेनाह—**दिगिति । सस्येति**—'अत्र 'सोऽपदादावि'त्यनेन विसर्गस्थाने विहितस्ये'त्यादिः ।

## ( विधिग्रहणप्रयोजननिरासभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न कांचित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते सा सा आश्रयितव्या ॥**

**( प्रदीपः ) प्रातिपदिकनिर्देशाश्चेति । अनल्वित्येतावदेवोच्यताम् ।** अत्र शब्दसंस्काराय केवलं प्रथमाविभक्तिरुपादीयते । न तु तदर्थो विवक्ष्यते । यथा **भाव** इत्यत्र लिङ्गसंख्ये इति भावः ।

**( उद्द्योतः )** केवलप्रकृतेः प्रयोगाभावादाह—**अत्रेति ॥ विवक्ष्यते इति।** तत्समभिव्याहारे प्रतीयमानो विधेयत्वरूपोऽर्थो न विवक्ष्यत इत्यर्थः ॥ अन्वयायोग्यत्वादिति भावः ॥ **लिङ्गेति।** अत एव भूतिरित्यादिसिद्धिः ॥ सप्तम्यर्थस्तु तत्र विवक्षित एवेति **लिङ्गसंख्ये** इत्येवोक्तम् ॥ भाष्ये- **अर्थतन्त्रा इति।** स्वार्थमात्रबोधकविभक्त्यधीना इत्यर्थः ॥ **प्राधान्येन विभक्तिं**—विशिष्य प्रकृतान्वययोग्यविभक्त्यर्थं नाश्रयन्ति ॥ **निर्दिष्टे** बोधिते। पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थमन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते सा सा विभक्तिरध्याहार्या। साधुत्वार्थमुत्पन्नविभक्तेस्तु लुगिति भावः ॥ एतेन प्रत्ययाध्याहारो न क्वापि दृष्ट इत्यपास्तम्। **मा भेर्मा संविक्था** इति पुरोडाशावदानमन्त्रस्य धानासूहे **मा भैष्ट मा संविग्ध्वमि**त्यादौ दर्शनाच्च। तत्तद्विषयकलक्षणभेदात्तत्र तत्र सा आश्रयितव्येति तात्पर्यम् ॥ नन्वनलिति प्रथमानिर्देशेऽनलात्मक आदेश इत्यर्थे ल्यपोऽनलात्मकत्वेन प्रपठ्येत्यादाविट् स्यात्। [ तथा ] उत्तमपुरुषैकवचने टेरेत्वस्य स्थानिवत्त्वाभावात्पदत्वं न स्यादिति चेन्न। **अदो जग्धिरिति** सूत्रे ल्यब्ग्रहणेनादेशविशेषणत्वाभावज्ञापनादित्यदोषः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रातिपदिकेति**—यत इत्यादिः। **अयम्**—अनलित्ययम्। **न**—न तु। **तत्रेति**—स्वञ्चेत्यादिः।

प्रदीपे—**अनेति**—प्रकृते इत्यादिः। **एवेन**—'विधावि'त्यस्य व्यवच्छेदः। **अत्र**—अनलित्यत्र च। **लिङ्गसंख्ये इति**—न विवक्ष्येते इति शेषः।

उद्द्योते—**तदिति**—प्रथमेत्यर्थः। असति बाधके प्रथमाया विधेयविभक्तित्वस्य सत्त्वादित्याशयः। **आदिना**—पाकौ, पाका इत्यादिपरिग्रहः। ननु 'सप्तम्यर्थः' इत्यपहाय 'लिङ्गसंख्ये' इति कथमुक्तमित्यत आह-**सप्तम्यर्थस्त्विति।** नन्वनलित्यत्र प्रथमासत्त्वे कथं सा सा विभक्तिरध्याह्रियेतेत्यत आह—**साधुत्वार्थमिति।** तत्रेत्यादिः। **एतेन**—'सा सा आश्रयितव्ये'ति भाष्येण। तस्यापास्तत्वे हेत्वन्तरमाह—**मा भेरिति। धानासूहे**—धानासु विनियोगायोहिते। पुरोडाशस्यैकत्वात्तत्र विनियोक्तव्येऽस्मिन् मन्त्रे एकवचनसत्त्वेऽपि धानानां बहुत्वात्तासु विनियोगायास्मिन् मन्त्रे बहुवचनस्योहः क्रियते इत्याशयः। **दर्शनाच्चेति**—प्रत्ययाध्याहारस्येत्यादिः। नन्वनलित्यस्य सकृच्छ्रवणे कथन्तत्रानेकविभक्तिरध्याह्रियेतेत्यत आह—**तत्तद्विति। नन्विति**—विधिग्रहणाभावे इति शेषः। 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमि'ति न्यायेनाह—**अनलात्मक इति। प्रपठ्येति**—स्थानिवत्त्वाद्वलादित्वेनेत्यादिः। **टेरेत्वस्येति**—अलात्मकत्वेनेति शेषः। **पदत्वं नेति**—'एधे' इत्यादेरित्यादिः। **अन्देशेति**—अनलित्यस्येत्यादिः। 'अदो जग्धिर्ल्यप्ति किती'ति सूत्रस्य 'अदो जग्धिः स्यात् ल्यपि तादौ किति चे'त्यर्थः। एवञ्च-यदि प्रकृतसूत्रस्य 'अनलात्मक' आदेशः इत्याद्यर्थः स्यात्तर्हि ल्यप उक्तरीत्या तादिकित्त्वादेवेष्टसिद्धौ तत्र ल्यब्ग्रहणं व्यर्थमेव स्यादित्याशयः ॥

### ( विधिग्रहणप्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—उत्तरपदलोपो यथा विज्ञायेत—अलमाश्रयते अलाश्रयः, अलाश्रयो विधिः अल्विधिरिति। यत्र प्राधान्येनालाश्रीयते, तत्रैव प्रतिषेधः स्यात्। यत्र विशेषणत्वेनालाश्रीयते, तत्र प्रतिषेधो न स्यात् ॥**

**किं प्रयोजनम् ?।**

**प्रदीव्य प्रसीव्येति वलादिलक्षण इण् मा भूदिति ॥**

**( प्रदीपः ) उत्तरपदलोप इति।** अनलित्युच्यमाने यत्र कार्ये स्वातन्त्र्येणालाश्रीयते, तत्रैव निषेधः स्यात्-क इष्टः स इष्ट इत्यादौ। प्रदीव्येत्यादौ इटः प्रतिषेधो न स्यात्। न हीड्विधौ वलः स्वातन्त्र्येणाश्रयणम्, वलादेरित्यन्यपदार्थस्य प्राधान्यात्तद्गुणभावाद्वलः। उत्तरपदलोपे त्वलाश्रयत्वादिड्विधेः प्रतिषेधसिद्धिः ॥ **अलमाश्रयत इति।** अर्थप्रदर्शनमेतत्। एवं ह्यलाश्रय इति स्यात्। तस्मादाश्रीयत इत्याश्रयः, **एरच्।** अल्-आश्रयो यस्येति अलाश्रयः। अलाश्रयो विधिरल्विधिः। अलाश्रयत्वाद्विधिरेवाल्इत्युच्यत इति गतार्थत्वादप्रयोग एव उत्तरपदस्य लोपः ॥

**( उद्द्योतः ) स्वातन्त्र्येण।** प्राधान्येन। सकलविधिपरिग्रहार्थविधिशब्देन **प्रधान**न्यायो बाध्यत इति भावः ॥ **एवं हीति।** कर्मण्यणा पचाद्यचो बाधादिति भावः ॥ शब्दानित्यत्ववारणाय वार्तिकप्रत्याख्यानाय चाह—**अप्रयोग एवेति ॥** भाष्ये—**यत्र प्राधान्येने**त्यस्य **विधिग्रहणाभावे** इत्यादिः। **प्रतिषेधो न स्या**दित्यस्य **तदर्थं विधिग्रहण**मिति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रतिषेध इति**—स्थानिवत्त्वस्येत्यादिः। एवमग्रेऽपि। **यत्र**—यत्र तु। **किमिति**—यत्राप्राधान्येनालाश्रीयते तत्र स्थानिवत्त्वनिषेधस्येत्यादिः ॥ एवञ्च—अप्राधान्येनाप्यल आश्रयणे स्थानिवत्त्वनिषेधार्थं विधिग्रहणमिति भावः।

प्रदीपे—**एवेन**—यत्र कार्येऽप्राधान्येनालाश्रीयते तस्य व्यवच्छेदः। **निषेध इति**—स्थानिवत्त्वस्येत्यादिः। **प्रदीव्येत्यादाविति**—तथाचेत्यादिः। स्थानिवत्त्वनिषेधाभावादिति शेषः। **प्रतिषेधसिद्धिरिति**—स्थानिवत्त्वनिषेधेन वलादित्वाभावादिट इत्यादिः।

उद्द्योते—**प्रधानन्यायः**—'प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः' इति न्यायः। बुद्धिविपरिणामाभ्युपगमेन शब्दानित्यत्वप्रसङ्गस्य सुपरिहरत्वादाह—**वार्त्तिकेति।** यथाश्रुतेऽसम्बद्धत्वादाह—**भाष्ये यत्रेति। तदर्थमिति**—अत इत्यादिः।

### ( सूत्रारम्भप्रयोजननिराकरणाधिकरणम् )

### ( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ॥**

**( प्रदीपः ) किमर्थमिति।** तत्स्थानापत्त्या तद्धर्मलाभात् स्थानिकार्याण्यादेशाः प्राप्स्यन्तीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इदम्**-स्थानिवत्सूत्रम्। एवमग्रेऽपि।

### ( ३५९ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ स्थान्यादेशपृथक्त्वादादेशे स्थानिवदनुदेशो गुरुवद् गुरुपुत्र इति यथा ॥ * ॥

### ( भाष्यम् )

**अन्यः स्थानी, अन्य आदेशः। स्थान्यादेशपृथक्त्वादेतस्मात्कारणात् स्थानिकार्यमादेशे न प्राप्नोति ?**

**तत्र को दोषः ? ॥**

**'आङो यमहनः' आत्मनेपदं भवतीति हन्तेरेव स्याद्, वधेर्न स्याद्। इष्यते च—वधेरपि स्यादिति। तच्चान्तरेण यत्नं न सिद्ध्यति, तस्मात्स्थानिवदनु-**

देशः । एवमर्थमिदमुच्यते ॥ 'गुरुवद् गुरुपुत्र इति यथा' । तद्यथा—'गुरुवद् गुरुपुत्रे वर्तितव्यम्' इति गुरौ यत्कार्यं तद् गुरुपुत्रेऽतिदिश्यते । एवमिहापि स्थानिकार्यमादेशेऽतिदिश्यते ॥

**( प्रदीपः )** **स्थान्यादेशपृथक्त्वादिति** । स्थानिस्वरूपाश्रयं यत्कार्यं तद्भिन्नरूपत्वादादेशे न सिद्ध्यतीति भावः ॥

**( उद्द्योतः )** ननु पृथक्त्वमर्ङ्गीकृत्यैव तत्स्थानापत्त्या तद्धर्मला-लाभेऽभिहिते **स्थान्यादेशपृथक्त्वादिति** हेतुरसङ्गतोऽत आह—**स्थानिस्वरूपेति** । **स्वं रूपमि**त्युक्तेर्न तत्स्थानापत्त्या शास्त्रे तत्कार्य-लाभ इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अनुदेश इति**—'यथा स्यादिति' इति शेषः । एवमग्रेऽपि । **अन्य आदेश इति**—तथेत्यादिः । **आत्मनेपदम्**—इत्यात्मनेपदम् । **वधेर्न स्यादिति**—किन्त्वित्यादिः । 'स्वं रूपमि'ति सूत्रसत्त्वादिति भावः । **वधेरपीति**—तदिति शेषः । **तस्मादिति**—आदेशे इति शेषः ।

उद्द्योते—**पृथक्त्वमिति**—स्थान्यादेशयोरित्यादिः ।

( सूत्रारम्भप्रयोजनबाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । लोकत एतत् सिद्धम् । तद्यथा—लोके यो यस्य प्रसङ्गे भवति, लभतेऽसौ तत्कार्याणि । तद्यथा—उपाध्यायस्य शिष्यो याज्यकुलानि गत्वा अग्रासनादीनि लभते ॥

**( प्रदीपः )** **लोकत इति** । लोके हि वचनमन्तरेणापि तत्स्थानापत्त्या तद्धर्मलाभो दृष्टः ॥ **उपाध्यायस्येति** । प्रसङ्गापेक्षेयं षष्ठी । न तु शिष्यस्य विशेषणमेतद्, व्यभिचाराभावात् ॥

**( उद्द्योतः )** **व्यभिचाराभावादिति** । तत्स्थानापत्त्या तद्धर्मलाभे दृष्टान्तोऽसङ्गतः स्यादिति च बोध्यम् ॥ यद्यप्युपनीय सर्ववेदाध्यापकरूपाचार्यशिष्यव्यावृत्तये **उपाध्यायस्ये**ति तद्विशेषणमावश्यकम्, वेदैकदेशाध्यापको ह्युपाध्यायः । तथापि तद्व्यावृत्तौ प्रयोजनाभाव इत्यभिप्रायेणेदमिति बोध्यम् ॥ अत्र भाष्ये **लोकत एतत्सिद्ध**मित्युक्त्वा **स्वंरूप**मिति शास्त्रादादेशे न स्यादिति सूत्रं कार्यमित्युक्तम् । तेन **स्वं रूप**मिति शास्त्राविषये लोकन्यायेन सिद्धमिति सूचितम् ॥ **अनल्विधावि**ति निषेधोऽपि शास्त्रीयस्थानिवद्भाव एव । अतिप्रसङ्गस्तु लक्ष्यानुसारेण क्वचिल्लोकन्यायानाश्रयणेन परिहरणीयः । एवं च लोलुव इत्यादावनादिष्टादचः पूर्वत्वं लोकन्यायेन भवत्येवेति केचित् ॥

**( तत्त्वालोकः )** भाष्ये—**लोकत इति**—यत इत्यादिः ।

प्रदीपे—**एतत्**—उपाध्यायस्येत्येतत् । व्यभिचाराभावेऽपि यतश्चेत्तस्य विशेषणं स्यात्तर्हि 'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदि'ति नियमेनैतद् व्यर्थमेव स्यादिति भावः ।

उद्द्योते—तत्र युक्त्यन्तरमाह—**तत्स्थानेति** । यद्युपाध्यायस्येत्येतच्छिष्यस्य विशेषणं स्यात्तर्ह्ययमित्यादिः । **तद्विशेषणम्**—शिष्यविशेषणम् । **इदम्**—उपाध्यायस्येत्यस्य शिष्यविशेषणत्वाभावकथनम् । शब्दकौस्तुभकारादिमतमाह—**अत्रेत्यादि-केचिदित्यन्तग्रन्थेन** । **नेति**—स्थानिकार्यमित्यादिः । **सूत्रम्**—स्थानिवत्सूत्रम् । **शास्त्राविषये इति**—आदेशे स्थानिकार्यमिति शेषः । **शास्त्रीयेति**—प्रत्यासत्त्येति भावः । अनेन '**अशास्त्रीयस्यापि** धर्मस्या**तिदेशो** भवत्येव लोकन्यायादि'ति सूचितम् । **नन्वेवमतिप्रसङ्गः** स्यादित्यत आह—**अतिप्रसङ्गस्त्विति** । [illegible] इति सूत्रे [illegible]-निरिति वलोपेऽङ्गसंज्ञानिमित्त[illegible] लोकन्यायानाश्रयणम् । यदि हि तत्र स आश्रीयेत, तर्हि [illegible] क्विपि अलोपे ( वलोपे कर्तव्ये तस्य स्थानिवत्त्वनिषेधात्, वलोपे च कृते लोपस्य स्थानिवत्त्वानुवृत्ति-र्वाणि वा कृते लोकन्यायेन स्थानिद्वारकेणादिष्टादचः पूर्वत्वे [illegible] ऊठ् नोपपद्येतेति भावः । 'क्वचिदि'ति कथनस्य फलमाह—**एवञ्चेति** । अनतिप्रसक्ते लोकन्यायत्वेन चेत्यर्थः । **भवत्येवेति**—तेनाच्छ्वत्यर्थे गुणो न, यङोऽकारलोपस्य स्थानिवत्त्वादिति भावः । 'केचिदि'ति सूचितामरुचिं बीजन्तु—'स्वं रूपमि'ति शास्त्रस्य प्रत्याख्यातत्वात् तयोरनुपपन्नत्वमेवेति बोध्यम् ।

( सूत्रारम्भप्रयोजनसाधकभाष्यम् )

यद्यपि तावल्लोक एष दृष्टान्तः । दृष्टान्तस्यापि तु पुरुषारम्भो निवर्तको भवति ॥

( आक्षेपभाष्यम् )

अस्ति चेह कश्चित्पुरुषारम्भः ? ।

( समाधानभाष्यम् )

अस्तीत्याह ॥

कः ? ।

स्वरूपविधिर्नाम । हन्तेरात्मनेपदमुच्यमानं हन्तेरेव स्यात्, वधेर्न स्यात् ॥

**( तत्त्वालोकः )** तटस्थ उत्तरमनुवदति—**अस्तीत्याहेति** । समाधातेति शेषः । **स्वरूपविधिः**—'स्वं रूपमि'ति सूत्रम् । **हन्तेरिति**—'तथाच स्थानिवत्सूत्राभावे' इत्यादिः । **वधेर्नस्यादिति**—किन्त्वित्यादिः । 'आङो यमहनः' इति हन्तेरुच्यमानमात्मनेपदं न हिंसाद्यर्थाभिधायकत्वप्रयुक्तम्, येन हन्तेरेवोच्यमानमपि तद् वधावप्युपपद्येत । किन्तु 'स्वं रूपमि'ति शास्त्रात् स्वरूपप्रयुक्तमिति तेन लोकन्यायस्य बाधात् प्रकृतसूत्राभावे वधेस्तन्नोपपद्येतेति तदुपपत्त्यर्थं स्थानिवत्सूत्रं विधेयमेवेत्याशयः ।

( सूत्रारम्भप्रयोजननिराकरणभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति-स्थानिवदादेशो भवतीति । यदयं 'युष्मदस्मदोरनादेशे' इत्यादेशे प्रतिषेधं शास्ति ॥

कथं कृत्वा ज्ञापकम् ? ।

युष्मदस्मदोर्विभक्तौ कार्यमुच्यमानं कः प्रसङ्गो यदादेशेऽपि स्यात् । पश्यति त्वाचार्यः—स्थानिवदादेशो भवतीति । अत आदेशे प्रतिषेधं शास्ति ॥

**( तत्त्वालोकः )** अथापि प्रकृतसूत्रं न विधेयम्, 'युष्मदस्मदोरनादेशे' इति सूत्रस्थानादेशग्रहणेनैव 'आदेशः स्थानिवत्स्यादि'त्यस्य ज्ञापनादित्याशयेनाह—**एवन्तर्हीति** । **अयम्**—आचार्यः । एवमग्रेऽपि ।

( सूत्रारम्भप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—अनल्विधाविति प्रतिषेधं वक्ष्यामीति । इह मा भूत्—द्यौः पन्थाः स इति ॥

**( प्रदीपः ) प्रतिषेधं वक्ष्यामीति ।** न ह्यप्रदर्शितविषयः प्रतिषेधः शक्यो विधातुमिति भावः ॥

**( उद्द्योतः ) अप्रदर्शितविषयः ।** अप्रदर्शितप्रतिषेध्यः ॥ ननु **युष्मदस्मदोरनादेश** इत्यत्र विभक्तिविषये **स्वं रूप**मित्यस्य लोकन्यायबाधकस्याप्राप्त्या तत्र लौकन्यायेन प्राप्तद्धर्मलाभप्रयुक्तकार्यनिवारणेन चरितार्थस्य अनादेशग्रहणस्य ज्ञापकत्वासंभवाद् **हनो वधे**त्यादौ दोषवारणायेदं सूत्रमावश्यकमिति चेन्न । स्वादिसूत्रे **स्वं रूप**मित्यस्य प्रवृत्त्या तत्स्वरूपाणामेव सुप्संज्ञकत्वेन तेषामेव विभक्तिसंज्ञकत्वेन तत्र तत्स्थानापत्त्या तद्धर्मलाभ इति लौकिकन्यायाप्रवृत्तेरित्याशयात् ॥

**( तत्त्वालोकः )** भाष्ये—**इहेति**—येनेत्यादिः । औकारादीनां स्थानिवत्त्वमिति शेषः । यद्यादेशस्य स्थानिवत्त्वं न प्राप्तं स्यात्तर्हि—अल्विधौ तस्य प्रतिषेधो नोपपद्येत, 'प्राप्तौ सत्यां निषेधः' इति नियमात् । एवञ्च प्रकृतसूत्रं विधेयमेवेत्याशयः ।

**( सूत्रारम्भप्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—अल्विधौ स्थानिवद्भावो न भवतीति, यदयम्—'अदो जग्धिर्ल्यप्ति किति' इति 'तिकिति' इत्येव सिद्धे ल्यब्ग्रहणं करोति । तस्मान्नार्थोऽनेन योगेन ॥**

**( प्रदीपः )** एवं तावल्लिङ्गेनाभिमतोऽर्थः सिद्ध इति प्रदर्शितम् ॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति**—यत इत्यादिः । **अल्विधाविति**—अप्राधान्येनाप्यल आश्रयणे चेति शेषः । यद्यल्विधौ तथाऽप्राधान्येनाप्यल आश्रयणे स्थानिवत्त्वं स्यात्तर्हि ल्यपः स्थानिवत्त्वेन तादिकित्वादेवेष्टसिद्धौ तत्र तद्ग्रहणं व्यर्थमेव स्यादिति भावः । प्रकृतमुपसंहरति—**तस्मादिति ।** तत्रत्यानादेशग्रहणेन 'स्थानिवदादेशः' इत्यंशस्य, तत्रत्यल्यब्ग्रहणेन 'अनल्विधौ' इत्यंशस्यापि च लाभादित्यर्थः ।

**( सूत्रसत्त्वेऽनल्विधिग्रहणवैयर्थ्यनिराकरणाधिकरणम् )**

**( आक्षेपवार्तिकशेषभाष्यम् )**

**आरभ्यमाणेऽप्येतस्मिन् योगे—**

**( तत्त्वालोकः )** एवमप्युत्तरार्थं तावत् **'स्थानिवदादेशः'** इति कर्तव्यमेव । एवञ्च तस्यैव योगविभागमात्रेणोपपत्तावर्थापत्तिकं वचनं न कल्प्यं भवति । एवं स्थिते 'अनल्विधावि'त्यप्यंशः स्पष्टप्रतिपत्त्यर्थं क्रियते, उत्तरसूत्रे द्वितीयविधिग्रहणस्यानुवृत्त्यर्थञ्च । तत्प्रयोजनन्तु तत्रैव वक्ष्यते । इत्याद्याशयेनाह—**आरभ्यमाणेऽपीति ।**

**( ३६० (१) वैयर्थ्याक्षेपवार्तिकप्रथमखण्डम् ॥ १ ॥ )**

**॥ * ॥ अल्विधौ प्रतिषेधेऽविशेषणेऽप्राप्तिस्तस्यादर्शनात् ॥ * ॥**

**( भाष्यम् )**

**अल्विधौ प्रतिषेधेऽसत्यपि, विशेषणे समाश्रीयमाणे असति तस्मिन् विशेषणे अप्राप्तिर्विधेः । प्रदीव्य प्रसीव्य ॥**

**किं कारणम् ? । तस्यादर्शनात् । वलादेरित्युच्यते । न चात्र वलादिं पश्यामः ॥**

**( प्रदीपः )** इदानीं क्रियमाणेऽपि सूत्रेऽनल्विधाविति न कर्तव्यमित्याह—**अल्विधौ प्रतिषेध इति ।** प्रदीव्येतीड् न भवति, इड्विधौ वलादेरिति विशेषणमाश्रितम् । तच्च क्त्वो ल्यबिति वस्तुस्थित्या संनिहितमपि वलादित्वं स्थानिन्यविवक्षितत्वादनाश्रितम् । तथा ह्रीडादिरपि क्त्वा भवत्येव, क्त्वा केवलोऽपि, आकारान्तोऽपि, ख्यात्वीतीकारान्तोऽपि, दत्त्वायेति च यगन्तोऽपि, इष्ट्वीनमिति मान्तोऽपि । तत्र क्त्वामात्रप्रतिबद्धं यत्कार्यं कृत्त्वप्रत्ययत्वाव्ययत्वादि तदादेशेऽतिदिश्यताम्, न तु वलादित्वमिति ल्यपो न स्वतो नापि स्थानितो वलादित्वमितीडभावः सिद्ध एवेति भावः ॥

**( उद्द्योतः ) क्रियमाणेऽपीति ।** मन्दमत्यनुग्रहायेत्याशयः ॥ **न पदान्ते**त्यत्र निषेध्यसमर्पणाय चावश्यकं तदिति बोध्यम् ॥ **अनल्विधाविति न कर्त्तव्य**मित्यस्य विधिपदघटितं न कर्त्तव्यमित्यर्थः ॥ **असत्यपीति** भाष्ये च्छेदः । **अल्विधौ प्रतिषेधे** इत्यस्य चैतद्विशेषणम् । अप्राधान्येनालाश्रयणेऽपि निषेधार्थं क्रियमाणे विधिग्रहणेऽसत्यपीत्यर्थः ॥ वार्तिके—**अविशेषणे** इति च्छेदः । लक्ष्ये विशेषणाभावे इति तदर्थः । तदाह—**विशेषणे समाश्रीयमाण इति ।** विधाविति शेषः ॥ **असतीत्यादेः** प्रयोग इति शेषः ॥ **सामान्यातिदेशे विशेषानतिदेश** इति हेतुं व्याचक्षाणो वलादित्वस्य विशेषत्व दर्शयति—**तच्चेति ॥ अविवक्षितत्वादिति ।** विवक्षाकारणयत्नविशेषविषयीकृतत्वाभावादित्यर्थः ॥ उपात्तरूपव्याप्यरूपविवक्षा हि यत्ने सत्येव भवति । अत एव **सनी मीत्य**त्र **सः सी**त्यतः सीत्यनुवर्तितम् । **न** च तथा कश्चियत्नः प्रकृते । एवं च वलादेरादेशो वलादिवदित्येवं वाक्यकल्पनात्र नेति भावः ॥ तत्र वलादित्वस्य क्त्वाव्याप्यत्वं दर्शयितुमाह—**तथाहीति । आकारान्तोऽपी**त्यादि दृष्टान्तार्थम् ॥ **यत्कार्यमिति ।** यो धर्म इत्यर्थः । क्त्वावत् ल्यबित्येव वाक्यकल्पनेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—इष्टपदाध्याहारेण वार्तिकं योजयति—**अल्विधौ प्रतिषेधेऽसत्यपीति ।** अप्राधान्येनालाश्रयणेऽपि स्थानिवत्त्वस्य निषेधार्थं क्रियमाणे विधिग्रहणेऽसत्यपीत्यर्थः । **विशेषणे समाश्रीयमाणे इति—**विधिसूत्रेऽल्विशेषणे समाश्रीयमाणे सति, प्रयोगे तस्मिन् विशेषणेऽसति विधिसूत्रस्याप्राप्तिरित्यर्थः । **प्रदीव्य प्रसीव्येति**—यथेत्यादिः । इत्यादाविड्विधेरप्राप्तिरिति शेषः । **किं कारणम्—**कस्मात् कारणात् । **तस्य—**विशेषणस्य । **वलादेरितीति—**यतः 'आर्धधातुकस्येड् वलादेरि'ति विधिसूत्रे इत्यादिः । विशेषणमिति शेषः । **वलादिमिति—**आर्धधातुक-ल्यपमित्यादिः । एवञ्च तदर्थं विधिग्रहणं न विधेयमित्याशयः ॥

प्रदीपे—**सूत्रे**—स्थानिवत्सूत्रे । **इड्विधाविति**—यत इत्यादिः । **भवत्येवेति**—क्त्वेत्यादिः । **केवलोऽपीति**—क्त्वा भवत्येवेति शेषः । **आकारान्तोऽपीति**—क्त्वा, क्त्वा भवत्येवेति शेषः । एवमग्रेऽपि सर्वत्र । **तत्र**-तेषां मध्ये ।

उद्द्योते—तत्करणे युक्त्यन्तरमप्याह—**न पदान्तेत्यत्रेति । तद्**—प्रकृतसूत्रम् । **विधिपदघटितं नेति**—समुदायद्वाराऽवयवे विनियोगादिति भावः । **अप्राधान्येनेति**—एवञ्चेत्यादिः । **लक्ष्य इति**—तथेत्यादिः । **तदाह**—तदुपपादयितुमाह । तत्र बीजमाह—**विवक्षेति । हि**—यतः । **सीत्यनुवर्तितमिति—**तत्र हि—उपात्तरूपं सन्त्वं, तद्व्याप्यरूपं सादित्वं, तद्विवक्षा च सीत्यनुवृत्तिरूपयत्नादेव भवतीति भावः । **तत्र**—प्रदीव्येत्यादौ । प्रकृतानुपयोगादाह—**दृष्टान्तार्थमिति ।**

(वैयर्थ्यबाधकभाष्यम्)

**ननु चैवमर्थ एवायं यत्नः क्रियते—अन्यस्य कार्यमुच्यमानमन्यस्य यथा स्यादिति ॥**

**( उद्द्योतः )** **सामान्यातिदेशे** इत्यादिवार्तिकखण्डमवतारयति— **ननु चेति** ॥ भाष्ये एवमर्थशब्दं व्याचष्टे—**अन्यस्येति** ॥

**( तत्त्वालोकः )** भाष्ये—**अयं यत्नः**-प्रकृतसूत्रारम्भरूपो यत्नः । तथा च-स्थानिवत्त्वेन ल्यपोऽपि वलादित्वात्तन्नेट् प्रसज्येतेति अप्राधान्येनालाश्रयणेऽपि तन्निषेधार्थं विधिग्रहणमावश्यकमेवेत्याशयः ।

(वैयर्थ्यसाधकभाष्यम्)

**सत्यम् एवमर्थः, न तु प्राप्नोति ॥**

**किं कारणम् ? ।**

**( तत्त्वालोकः )** **एवमर्थ इति**—अयं यत्न इत्यनुषज्यते । **प्राप्नोतीति**—अतिदेशेन ल्यपो वलादित्वमित्यादिः । **किं कारणम्**—कस्मात् कारणात् ।

**( ३६० (२) वैयर्थ्याक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ २ ॥ )**

## ॥ * ॥ सामान्यातिदेशे हि विशेषानतिदेशः ॥ * ॥

(भाष्यम्)

**सामान्ये ह्यतिदिश्यमाने विशेषो नातिदिष्टो भवति । तद्यथा—'ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यम्' इति सामान्यं यद् ब्राह्मणकार्यं, तत् क्षत्रियेऽतिदिश्यते । यद्विशिष्टं माठरे कौण्डिन्ये वा, न तदतिदिश्यते । एवमिहापि यत्सामान्यं प्रत्ययकार्यं तदतिदिश्यते, यद्विशिष्टं वलादेरिति न तदतिदिश्यते ॥**

**( प्रदीपः )** **ब्राह्मणवदिति** । सामान्यशब्दोपादानेन यत्र कार्यमतिदिश्यते, तत्र विशेषस्याशब्दार्थत्वाद्विशेषाश्रयकार्यानतिदेशः । यत्र तु विशेषशब्दोपादानेनातिदेशस्तत्र विशेषातिदेशो भवत्येव ॥

**( उद्द्योतः )** **अशब्दार्थत्वादिति** । यद्यपि क्त्वावदित्युक्तेऽशब्दार्थप्रत्ययत्वादेरप्यतिदेशो भवति तथापि व्याप्येन व्यापकानुमानात्तदुपस्थितिवद्व्याप्योपस्थितौ मानाभाव इति भावः ॥ **यत्र त्विति । गोतोणिदित्यादौ** ॥

**( तत्त्वालोकः )** भाष्ये—**कार्यं**-धर्मः । अथवा ब्राह्मणत्वसामान्याश्रितं यत्कार्यमिति समुदितार्थः । **यद्विशिष्टं**—यश्च विशेषः । अथवा यच्च माठरत्वादिविशेषाश्रितं कार्यमिति समुदितार्थः । एवमग्रेऽप्यूह्यम् । प्रदीपे—**सामान्येति**—सामान्यवाचकेत्यर्थः । **विशेषशब्देति**-विशेषवाचकशब्देत्यर्थः ।

(वैयर्थ्यबाधकसिद्धान्तिभाष्यम्)

**यद्येवम्—अग्रहीत्, 'इट ईटि' इति सिचो लोपो न प्राप्नोति ॥ अनल्विधाविति पुनरुच्यमाने इहापि प्रतिषेधो भविष्यति—प्रदीव्य प्रसीव्येति, विशिष्टं ह्येषोऽलमाश्रयते वलं नाम । इह च प्रतिषेधो न भविष्यति—अग्रहीदिति, विशिष्टं ह्येषोऽनलमाश्रयते इटं नाम ॥**

**( प्रदीपः )** **अग्रहीदिति** । **ग्रहोऽलिटि दीर्घ** इति दीर्घे कृत इति भावः ॥ दीर्घविधौ अल्परिभाषोपस्थानादच एव स्थानित्वम् । इट् त्वजन्तराणां व्यावर्तक इतीट्कार्यं विशेषकार्यत्वान्न प्राप्नोति ॥ तथा प्रदीव्येति गुणप्रतिषेधो न प्राप्नोति । देवित्वेत्यादावकितोऽपि क्त्वाप्रत्ययस्य संभवात् कित्त्वस्यापि वलादित्ववन्न स्यादतिदेशः ॥ तस्माद्विशेषकार्यातिदेशज्ञापनार्थमनल्विधाविति कर्तव्यमिति भावः । अनुबन्धकार्येषु **चानल्विधा**वेति प्रतिषेधो न प्रवर्तते, स्थानिन्यनुबन्धस्यासंनिधानात् । अत एव अनुबन्धाः कार्यस्य विशेषका इति सिद्धान्तव्यवस्थापनात् ॥ **विशिष्टं ह्येषोऽनलमिति । इट ईटीति** सलोपे समुदायरूपेणाश्रयणाद् **ग्रहोऽलिटि दीर्घ** इत्यत्रापि इट एव स्थानित्वं नाचः । अनियमप्रसक्तौ नियमकारिण्या अल्परिभाषाया अनुपस्थानात् ॥

**( उद्द्योतः )** अथ सिद्धान्ती विशेषानतिदेशे दूषणं वदन् तज्ज्ञापनार्थमेवा**नल्विधा**वित्यावश्यकमित्याह—भाष्ये-**यद्येवमिति** । यदि विशेषानतिदेश इत्यर्थः ॥ **दीर्घे कृते इति** । दीर्घदृष्ट्या सिज्लोपस्यासिद्धत्वादिति भावः ॥ ननु दीर्घस्य 'इट्' इति समुदायस्थानिकत्वेन तद्वृत्तीट्त्वाश्रयो लोपः स्थानिवत्त्वेन स्यादेव, स्थानी चादेशविधावुपात्त एवेत्यत आह—**दीर्घेति** ॥ नन्वच एव स्थानित्वे ग्रहणमित्यादावपि दीर्घः स्यादत आह—**इट् त्विति** ॥ भाष्ये **सिचो लोपो न प्राप्नोती**त्यस्य **तस्मादनल्विधाविति वक्तव्य**मिति शेषः ॥ विशेषानतिदेशे दूषणान्तरमाह—**तथेति** ॥ **अकितोऽपीति । न क्त्वा सेडि**ति कित्त्वनिषेधादिति भावः ॥ **तस्मादिति** । न च कृइटः, ग्रुभ्यामित्यादिव्यावृत्त्या तस्य चारितार्थ्यात्कथं ज्ञापकत्वमिति वाच्यम् । अप्राधान्येनाप्यलाश्रयणे **आर्धधातुकस्येडि**त्यादौ निषेधप्रवृत्तये क्रियमाणं विधिग्रहणं प्रकृतार्थज्ञापकम् । विशेषानतिदेशे तेषामसंग्रहेण तद्वैयर्थ्यस्य स्पष्टत्वात् ॥ वार्तिकेऽपि विधिपदघटिते प्रतिषेधेऽसत्यपीत्यर्थः ॥ ज्ञापिते विशेषातिदेशे**ऽनल्विधा**वित्यस्य चारितार्थ्यं दर्शयति—भाष्ये **इहापि प्रतिषेधेत्यादि** ॥ ननु कित्त्वस्यालविधित्वेन **क्ङिति** चेति निषेधे स्थानिवत्त्वाभावात्प्रतिदीव्येत्यादौ गुणः स्यादत आह—**अनुबन्धेति** ॥ **स्थानिनीति** । स्थान्यलाश्रये विधौ स्थानिवत्त्वनिषेधादिति भावः ॥ **न ल्यपी**ति लिङ्गमप्यत्र बोध्यम् ॥ नन्वेवमप्यग्रहीदिति दीर्घस्थानिभूताज्रूपेकाराश्रय एव सिज्लोपः । अनुबन्धस्तु उपदेश एव लुप्त इति तत्रापि स्थानिवत्त्वनिषेधः स्यादतो भाष्ये **विशिष्टं ह्येष इति** । एवं च दीर्घ **इड्व**दित्येवातिदेशकल्पना, स्थानितावच्छेदकं च शास्त्रोपात्तरूपमेव । तच्च नाल्रूपमिति इट इत्यादि न स्थान्यल्वृत्तिधर्माश्रयम् । एवं च **यत्र शास्त्रे विशेष्यतया विशेषणतया वा आदेशस्थानिभूतो योऽल् तत्स्थानिसंबन्धी** वा **योऽल् तन्मात्रवृत्तिधर्माश्रयणं तादृशे विधौ हि निषेधः** ॥ अत्र च शब्दतो विशिष्टमनलमाश्रयते । **वलादेरि**त्यत्र च शब्दतो विशिष्टमलमिति भावः ॥ **सिद्धान्तव्यवस्थापनादिति** । इदं निरनुबन्धकानुवादेन विहितादेशविषयम् । **क्त्वो ल्य**बित्यादौ सानुबन्धकानुवादेनादेशविधौ तु यथाऽनुबन्धकार्यस्याल्विधित्वाभावस्तथाऽ**नेकाल्शिदि**त्यत्र निरूपितम् ॥ **अत्रापीट एव स्थानित्वमिति** । अन्यथा स्थान्यल्वृत्तीट्त्वाश्रयस्य लोपस्याल्विधित्वात्तत्र तत्स्थानिवत्त्वानापत्तिर्विशेषातिदेशेऽपीति भावः ॥ **एवं च** तदुदाहरणे विशेषानतिदेशेऽपि न दोषः । एतदेवाभिप्रेत्य स्वयं प्रदीव्येति गुणापत्तिर्विशेषानतिदेशे दूषणमुक्तम् । वस्तुतो भाष्योक्तदोषोऽपि दृढ एव । तथा हि **अनल्विधावित्यस्याभावे** प्रायोगिकस्थानिनमादायैव वाक्योपप्लवः स्यात् । तद्बुद्धिं **निवर्त्यैवादेशबुद्धे**र्जाय-

मानत्वेन तस्यैव मुख्यस्थानित्वात्। यद्येवमित्यस्य विशेषानतिदेशमाश्रित्य विधिग्रहणाकरणे इत्यर्थः। एवं च दीर्घस्थान्यल्परस्य कार्ये लोप इति स्थानिवद्भावेन तदप्राप्तिरिति पूर्वपक्षः॥ विधावित्युक्तौ तु न दोषः, शास्त्रस्योपस्थित्या शास्त्रोपात्तस्थान्यादेशभावस्य निमित्तस्य च ग्रहणमिति न दीर्घोऽल्विधिरित्युत्तरम्॥ तदेतद्दोषोऽनलमित्यनेन दीर्घादिविधिरित्यर्थकेन ध्वनितमिति बोध्यम्। अत एव भोभगोअघो इति सूत्रे भाष्ये रेफस्थानिकविसर्गस्य स्थान्यल्वृत्तिधर्मरुत्वाश्रयं कार्यं नाल्विधित्वादित्युक्तम्॥

**( तत्त्वालोकः )** भाष्ये—**अग्रहीदिति**—तर्हि-दीर्घस्य स्थानिवत्त्वे नेट्त्वालाभादित्यादिः। इत्यत्रेति शेषः। **प्रतिषेध इति**—स्थानिवत्त्वस्येत्यादिः। एवमग्रेऽपि। **एषः**—इट्। **एषः**—सिज्लोपः।

प्रदीपे—**इट्कार्यम्**—इट्त्वाश्रितकार्यम्। **विशेषेति**—विशेषाश्रितेत्यर्थः। एवमग्रेऽपि। **देवित्वेत्यादाविति**—यत इत्यादिः। **अनुबन्धकार्येषु**—अनुबन्धाश्रितकार्येषु। अनुबन्धानामनेकान्तत्वम्, एकान्तत्वे चान्तरङ्गलोपेन स्थान्यादेशसम्बन्धात्पूर्वमेवानुबन्धानामपहारमभिप्रेत्याह—**स्थानिनीति**। नन्वेवं कथमनुबन्धास्तस्य विशेषका इत्यत आह—**असन्त एवेति**। 'अनियमे नियमकारिणी परिभाषे'ति सिद्धान्तमभ्युपेत्य तत्र हेतुमाह—**अनियमेति**।

उद्द्योते—**तज्ज्ञापनार्थम्**—विशेषातिदेशज्ञापनार्थम्। **लोप इति**—सिज्लोप इत्यर्थः। तस्येति शेषः। ननु प्रयोगे न तस्य स्थानितेत्यत आह—**स्थानी चेति**। **तस्य**—विधिग्रहणस्य। **अप्राधान्येनापीति**—यत इत्यादिः। वार्त्तिकविरोधं परिहरति—**वार्त्तिकेऽपीति**। **कित्त्वस्य**—कित्त्वाश्रितकार्यस्य। **अत्र**—अनुबन्धाश्रितकार्येष्वतिदेशे। **एवमपि**—प्रदीव्येत्यादिसिद्धावपि। भाष्याशयमाह—**एवञ्चेति**। विशेषातिदेशे ज्ञापिते चेत्यर्थः। एवं सति—अनल्विधाविति वाक्यार्थमाह—**एवञ्चेति**। **अत्र च**—'इट ईटी'त्यत्र च। कैयटोक्तेऽरुचिं सूचयति—**इदमिति**। **निरूपितमिति**—शिद्ग्रहणेनानुबन्धानामल्व्यवहाराभावस्य ज्ञापनादिति भावः। **लोपस्य**—सिज्लोपस्य। **तदुदाहरणे**—अग्रहीदित्यत्र। **एतदेवेति**—इमामेवारुचिमित्यर्थः। कैयटोक्तं दूषयति—**वस्तुत इति**। लोपः—सिज्लोपः। **अत एव**—अस्याभ्युपगमादेव।

**( आक्षेपवार्तिकादिशेषभाष्यम् )**

**यदि तर्हि सामान्यमप्यतिदिश्यते, विशेषश्च॥**

**( ३६१ (१) आक्षेपसाधकवार्तिकप्रथमखण्डम् )**

## ॥ ❀ ॥ सत्याश्रये विधिरिष्टः ॥ ❀ ॥

**( भाष्यम् )**

सति च वलादित्वे इटा भवितव्यम्। अरुदिताम्। अरुदितम्। अरुदित॥

**( उक्ताशयानभिज्ञभाष्यम् )**

किमतो यत्सति भवितव्यम्?।

**( ३६१ (२) आक्षेपवार्तिकद्वितीयखण्डम्॥ )**

## ॥❀॥ प्रतिषेधस्तु प्राप्नोत्यल्विधित्वात्॥❀॥

**( भाष्यम् )**

प्रतिषेधस्तु प्राप्नोति॥

किं कारणम्?॥

अल्विधित्वात्। अल्विधिरयं भवति। तत्रानल्विधाविति प्रतिषेधः प्राप्नोति॥

**( प्रदीपः )** **सत्याश्रय इति**। आश्रीयत इत्याश्रयः। यथा वलादित्वमिड्विधौ। तत्रेडागमस्याल्विधित्वादनल्विधौ च स्थानिवद्भावविधानादरुदितामिति स्थानिकार्यमिडागमो न प्राप्नोति॥

**( उद्द्योतः )** भाष्ये **यदि तर्हि सामान्यमिति**। अनल्विधाविति ज्ञापकात्। तज्ज्ञापनार्थं चा**नल्विधा**विति यदि क्रियत इत्यर्थः॥ **आश्रय**शब्दस्य भावसाधनत्वे वलादित्व इति तद्विवरणमसंगतं स्यादत आह—**आश्रीयत इति**॥ **स्थानिकार्यमिति**॥ सार्वधातुकत्वाभावादिति भावः॥ भाष्ये—**प्रतिषेधस्त्विति**। आदेशः स्थानिवद्, अलाश्रये विधौ तु नेति सूत्रार्थ इति भावः॥

**( तत्त्वालोकः )** भाष्ये— **सतीति**—अस्य 'सती'त्यनेनान्वयः। क्रमिकौ **च-तू** वाक्यालङ्कारकौ। **इटेति**—'रुदादिभ्यः सार्वधातुके' इत्यनेनेति भावः। **अरुदितेति**—इत्यादाविति शेषः। **किं कारणम्**-कस्मात् कारणात्। एवमग्रेऽपि। **अल्विधिरिति**—यत इत्यादिः। **तत्रेति**—अत इत्यादिः। यदि विशेषातिदेशज्ञापनार्थम् 'अनल्विधावि'ति क्रियते, तर्हि-अरुदितामित्यादाविटो वलाश्रयत्वेनाल्विधित्वाद् 'अनल्विधावि'ति निषेधेन तामादेः स्थानिवत्त्वेन स्थानिगतवलादित्वानुपपत्तेरिट् नोपपद्येतेति भावः।

प्रदीपे—**तत्र**—इड्विधेर्वलादित्वाश्रयत्वे सति। **न प्राप्नोतीति**—आदेशे इत्यादिः।

उद्द्योते—भाष्याशयमाह—**तज्ज्ञापनार्थञ्चेति**। विशेषातिदेशज्ञापनार्थञ्चेत्यर्थः। अग्रिम—'तत्रानल्विधाविति प्रतिषेधः प्राप्नोती'ति भाष्यमभिप्रेत्यैतदाशयमाह-**सार्वधातुकत्वेति**। स्थानिवत्त्वेन तामादावित्यादिः। अलि स्थानिसम्बन्धो नेत्याशयेनाह-**अलाश्रय इति**। **सूत्रेति**—प्रकृतेत्यादिः।

**( ३६२ सिद्धान्तिसमाधानवार्तिकम्॥ ४॥ )**

## ॥ ❀ ॥ न वानुदेशिकस्य प्रतिषेधादितरेण भावः॥ ❀ ॥

**( भाष्यम् )**

न वा एष दोषः॥

किं कारणम्?।

आनुदेशिकस्य प्रतिषेधात्। अस्त्वत्रानुदेशिकस्य वलादित्वस्य प्रतिषेधः। स्वाश्रयमत्र वलादित्वं भविष्यति। नैतद्विवदामहे वलादिर्न वलादिरिति॥

किं तर्हि?।

स्थानिवद्भावात् सार्वधातुकत्वमेषितव्यम्॥

**( प्रदीपः )** **न वेति**। अतिदेश एवानुदेशः, स प्रयोजनं यस्य तदानुदेशिकम्। तत्र स्वाश्रयं वलादित्वमाश्रित्य स्थान्याश्रयं च सार्वधातुकत्वमिड्विधास्यते॥

**( उद्द्योतः )** समाधत्ते—**नवेति**। स प्रयोजनं प्रयोजको यस्य वलादित्वस्येत्यर्थः॥ करणे ल्युट्। प्रदसंस्कारपक्षाश्रयेण तु अतिदेशः प्रयोजनमिति प्रयुक्तम्॥ शङ्कित्वाह—**नैतद्विवदामह इति**॥

**( तत्त्वालोकः )** भाष्ये—'**न वा**' एष दोषः, यतः आनुदेशि-

**कस्य**—अतिदेशप्रयोज्यस्य वलादित्वस्य **प्रतिषेधात्**—प्रतिषेधेऽपि **इतरेण**—आनुदेशिकातिरिक्तेन स्ववृत्तिवलादित्वेनात्र **भावः**—इट्-कार्यम् भविष्यती'ति वार्त्तिकार्थमभिप्रेत्य तद्व्याचष्टे—**न वेति । प्रतिषेधादिति**—वलादित्वस्येत्यादिः । **स्वाश्रयमिति**—तथाप्यानुदेशिकातिरिक्तमित्यादिः । **वलादित्वमिति**—आश्रित्येऽडिति शेषः । **स्थानिवद्भावादि**त्यादिः **प्राप्नोती**त्यन्तो ग्रन्थः शङ्कितुरेव । तथा च—**'किं तर्हि'** त्यस्य 'उच्यते' इति शेषः, तथा **'प्राप्नोती'**त्यस्य 'इति' इति शेषः । अथवा—**स्थानिवद्भावादि**त्यादिः **एषितव्यमि**त्यन्तो ग्रन्थः समाधातुः, तथा **तत्रे**त्यादिः **प्राप्नोती**त्यन्तो ग्रन्थः शङ्कितुः । एवञ्च—**किं तर्हि** विवादास्पदम्, अर्थात् न किमपि । यतः **स्थानिवद्भावादि**त्यादिरीत्याऽत्र ग्रन्थयोजना विधेया ।

उद्द्योते—'स प्रयोजनं यस्ये'ति प्रदीपस्यार्थमाह—**स प्रयोजनमिति । करणे इति**—तथा च प्रयोजनमित्यत्रेत्यादिः । ननु यद्येवन्तर्हि तथैव कुतो नोक्तमित्यत आह—**पदसंस्कारपक्षेति ।**

**( आक्षेपोपसंहारभाष्यम् )**

**तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥**

**( प्रदीपः ) तत्रानल्विधावितीति ।** इडागमार्थमत्र स्थानिवद्भावः प्रार्थ्यते । इट् चाल्विधिरिति **अनल्विधा**विति प्रतिषेधात् सार्वधातुकत्वस्यापीडर्थत्वादिड् न प्राप्नोतीति ॥

**( उद्द्योतः )** ननु सार्वधातुकत्वस्याल्धर्मत्वाभावात् कथं प्रतिषेधप्राप्तिरत आह—**इडागमेति ॥**

**( तत्त्वालोकः )** प्रदीपे—**इट् चेति**—अत्र 'इट् च ( वलाश्रयत्वाद् ) अल्विधिरिति इडर्थत्वात्सार्वधातुकत्वस्यापि अनल्विधाविति प्रतिषेधाद् ( अतिदेशस्यासम्भवाद् ) इड् न प्राप्नोतीति ( भावः ) इति रीत्याऽन्वयः ।

**( स्थान्यलाश्रयविधौ प्रतिषेधसाधनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**किं पुनरादेशिन्यल्याश्रीयमाणे प्रतिषेधो भवत्याहोस्विदविशेषेण आदेशे, आदेशिनि च ? ॥**

**( प्रदीपः )** इदानीं यथात्र प्रतिषेधो न प्रवर्तते तथा विचारपूर्वकं प्रतिपादयितुमाह—**किं पुनरिति ।** आदेशोऽस्यास्तीत्यादेशी स्थानी । किं स्थान्यलाश्रये कार्ये स्थानिवत्त्वनिषेधोऽथाल्मात्राश्रय इति विचारः । किं प्रत्यासत्तिराश्रीयतेऽथवा व्याप्तिरिति भावः ॥

**( उद्द्योतः )** उक्तदोषमपरिहृत्य विचारान्तरारम्भोऽनुपपन्न इत्यत आह—**इदानीमिति ॥ प्रतिपादयितुमिति ।** वादिमुखेनैव प्रतिपादयितुमित्यर्थः ॥ **आदेशोऽस्येति ।** आदेशिनीत्यलीत्यनेन व्यधिकरणं, स्थानिसम्बन्ध्यलाश्रय इत्यर्थः । सम्बन्धिन एवाधिकरणत्वविवक्षया सप्तमी । अत एव स्थानित्वे तु व्यपदेशिवद्भावेन तत्त्वमिति बोध्यम् ॥ सन्देहबीजं दर्शयति—**किमिति ॥**

**( तत्त्वालोकः )** प्रदीपे—**यथाऽत्र प्रतिषेधो न प्रवर्त्तते तथेति**—यद्रूपवैकल्याच्छास्त्राप्रवृत्तिरतिदेश्यतद्रूपस्य स्थान्यलसाधारणधर्मत्व एव 'अनल्विधावि'ति प्रतिषेधः प्रवर्तते इति सिद्धान्तः । तथा च—प्रकृते आदेशस्य स्वतो वलादित्वात् सार्वधातुकत्ववैकल्यप्रयुक्तैव शास्त्राप्रवृत्तिः, तस्य च न स्थान्यलसाधारणधर्मता, तदितरस्मिन्नपि सत्त्वादिति तस्यातिदेश्यत्वेऽयं निषेधो न प्रवर्तते इति तं सिद्धान्तमित्यर्थः । **अथ**-अथवा । **प्रत्यासत्तिरिति**-अलि स्थानिन इत्यादिः ।

उद्द्योते—**व्यधिकरणमिति**—अत इति शेषः । नन्वेवमादेशिनीत्यत्र षष्ठ्युचितेत्यत आह—**सम्बन्धिन एवेति । तत्त्वम्**—स्थानिसम्बन्धित्वम् । एवञ्च—स्थानिरूप-स्थान्यवयववान्ततयाऽऽश्रये इत्यर्थः । यद्यादेशिनीत्यस्यालोऽन्वयेन सामानाधिकरण्येनान्वयस्येन, तर्हि-स्थान्यवयवस्यालोऽसंग्रहः । यदि च तस्य तेन वैयधिकरण्येनापि 'आदेशिनी'त्यत्र वस्तुत आधारार्थे सप्तम्यनुपपत्त्येन, तर्हि स्थानिरूपस्यालोऽसंग्रह इति भावः ।

**( भाष्यम् )**

**कश्चात्र विशेषः ? ॥**

**( तत्त्वालोकः )** अत्र—पक्षद्वये ।

**( ३६३ प्रथमपक्षाक्षेपवार्तिकम् ॥ ५ ॥ )**

**॥ ❀ ॥ आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः ॥ ❀ ॥**

**( भाष्यम् )**

**आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्ध्योः प्रतिषेधो वक्तव्यः ॥**

**कुर्वित्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र लघूपधगुणः प्राप्नोति ॥**

**वधक इत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं चादुपधत्वम्, तत्र वृद्धिः प्राप्नोति ॥**

**पिबेत्यत्र स्थानिवद्भावादङ्गसंज्ञा, स्वाश्रयं च लघूपधत्वम्, तत्र [ लघूपध ] गुणः प्राप्नोति ॥**

**( प्रदीपः ) वधक इति ।** हन्तेर्ण्वुलि **बहुलं संज्ञाछन्दसोरिति वक्तव्यम् । अब्धवधकगात्रविचक्षणाजिराद्यर्थ**मिति वधादेशः । स च हलन्त इति दोषोपन्यासः । अदन्तत्वे त्वल्लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः ॥

**( उद्द्योतः ) स्थानिवद्भावादिति ॥ अचः परस्मिन्नित्यनेन ।** एवं चोपधात्वाभावो ञ्णित्परत्वाभावश्चेति भावः ॥

**( तत्त्वालोकः )** भाष्ये—स्थानिसम्बन्ध्यलाश्रये कार्ये 'अनल्विधावि'ति प्रतिषेधस्य प्रवृत्तिरिति प्रथमपक्षे अङ्गत्वस्य स्थान्यलसाधारणधर्मत्वाभावेन तस्यातिदेश्यत्वे तत्प्रतिषेधाप्रवृत्तेः कुर्वित्यादिषु स्थानिवद्भावेनाङ्गत्वात् प्राप्तयोर्गुणवृद्ध्योः प्रतिषेधार्थमपूर्वं तत्प्रतिषेधवचनं कर्तव्यम्भवतीति गौरवमित्याशयेनाह—**आदेश्यल्विधिप्रतिषेधे इति ।** स्थानिसम्बन्ध्यलाश्रयविधौ 'अनल्विधावि'ति प्रतिषेधस्य प्रवृत्तिस्वीकारे इत्यर्थः । **वृद्धिरिति**-'अत उपधायाः' इत्यनेनेत्यादिः । **स्वाश्रयमिति**—अत्र स्वपदेनादेशो विवक्षितः ।

प्रदीपे—'बहुलं तणीति वक्तव्यम्' । किमिदं तणीति । संज्ञाछन्दसोर्ग्रहणमि'ति भाष्यफलितं निर्दिशति—**बहुलं संज्ञेति ।**

उद्द्योते—**एवञ्चेति**—अल्लोपस्य स्थानिवत्त्वे चेत्यर्थः । वृद्धिस्थानिन इति शेषः ।

**( द्वितीयपक्षाङ्गीकारभाष्यम् )**

**अस्तु तर्ह्यविशेषेण—आदेश आदेशिनि च ॥**

**( तत्त्वालोकः )** यदि प्रथमपक्षे उक्तरीत्या गौरवम्, तर्हि—अल्मात्राश्रयविधौ 'अनल्विधावि'ति निषेधस्य प्रवृत्तिरिति द्वितीयपक्ष एवास्तु । अत्र च पक्षे—उपधाश्रितत्वादल्विधित्वमापन्ने लघूपधगुणादौ

कर्तव्ये 'अनल्विधावि'ति निषेधप्रवृत्तेस्तदर्थमङ्गत्वातिदेशस्याभावात् लघूपधगुणाद्यप्राप्तेरपूर्वे तत्प्रतिषेधवचनं न कर्तव्यम्भवतीति लाघवमप्यस्तीत्याशयेनाह—**अस्तु तर्हीति**। **अविशेषेणे**त्यस्य व्याख्या—**आदेशे आदेशिनि चेति**। एवम्पूर्वत्रापि।

( ३६४ द्वितीयपक्षाक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

आदेश्यादेश इति चेत्सुप्तिङ्कृदतिदिष्टेषूपसंख्यानं कर्तव्यम् ॥

सुप्—वृक्णाय प्लक्षाय। स्थानिवद्भावात्सुप्संज्ञा, स्वाश्रयं च यञादित्वं, तत्र प्रतिषेधः प्राप्नोति। सुप् ॥

तिङ्—अरुदिताम्। अरुदितम्। अरुदित। स्थानिवद्भावात्सार्वधातुकसंज्ञा, स्वाश्रयं च वलादित्वं, तत्र प्रतिषेधः प्राप्नोति। तिङ् ॥

कृदतिदिष्टं—भुवनं सुवनं धुवनम्। स्थानिवद्भावात्प्रत्ययसंज्ञा, स्वाश्रयं चाजादित्वं, तत्र प्रतिषेधः प्राप्नोति ॥

**( प्रदीपः ) सुप्तिङ्कृदतिदिष्टेष्विति**। आदिष्ट एवातिदिष्टो विवक्षितः। उपलक्षणं चैतत्। तद्धितादेशेष्वपि न प्राप्नोति—लैगवायन इति। अत्र हि स्वाश्रयमजादित्वं, स्थानिवद्भावात्तद्धितत्वम् ॥

**( उद्द्योतः )** अतिदेशोऽतिदिष्टं चेदर्थासङ्गतिरत आह—**आदिष्ट एवेति**। सुबादीनामादेशेष्वित्यर्थः। तेषु दीर्घत्वे इटि उवङि च स्थानिवत्त्वप्रतिषेधः प्राप्नोति ॥ **तद्धितत्वमिति**। भस्य तद्धिते ओर्गुणविधानादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—समाहारद्वन्द्वे एकत्वे नपुंसकत्वे च सप्तम्यां निष्पन्नम् 'आदेश्यादेशे' इति प्रयुञ्जानो द्वितीयपक्षे दोषमाह—**आदेश्यादेश इति चेदिति**। अल्मात्राश्रयविधौ 'अनल्विधावि'ति प्रतिषेधस्य प्रवृत्तिरिति द्वितीयपक्षोऽभ्युपगम्यते यदीत्यर्थः। तर्हीति शेषः। **सुप्तिङ्कृदतिदिष्टेष्विति**—अत्र द्वन्द्वोत्तरं षष्ठीतत्पुरुषस्य सत्त्वाद् द्वन्द्वान्ते वर्तमानस्य 'नपुंसके भावे क्तः' इत्यनेन क्ते निष्पन्नस्यादेशार्थकस्यातिदिष्टपदस्य 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायेन प्रत्येकमन्वयात्—सुप आदेशे, तिङ आदेशे, कृत आदेशे चेत्यर्थः। स्थानिवत्त्वस्येति शेषः। अत्र पक्षेऽपि—लघूपधगुणादौ कर्तव्ये तत्र तत्र स्थानिवत्त्वप्रतिषेधस्योपपत्तेरिव दीर्घत्वादौ कर्तव्ये तत्र-तत्र तस्यापत्तेः स्थानिवत्त्वोपसंख्यानस्य कर्तव्यत्वाद् गौरवम्। एवञ्च—प्रथमपक्षोक्तगौरवस्याभावाद् द्वितीयपक्षे लाघवस्येव द्वितीयपक्षोक्तगौरवस्याभावात् प्रथमपक्षेऽपि लाघवस्य सत्त्वात् पक्षद्वयेऽपि साम्यमेवेत्याशयः।

प्रदीपे—**एतदिति**—तद्धितादेशानामपि, यत इति शेषः। **न प्राप्नोतीति**—स्थानिवत्त्वमित्यादिः। **स्थानीति**—तथेत्यादिः।

उद्द्योते—**चेदिति**—तर्हीति शेषः। **सुबादीनामिति**—एवञ्चेत्यादिः। यथासंख्येनान्वयमभिप्रेत्य पर्यवसितार्थमाह—**तेष्विति**। स्थानिवत्त्वोपसंख्यानं कर्तव्यम्, यतस्तेष्विति शेषः। ननु तत्र तद्धितत्वं कथमपेक्षितमित्यत आह—**भस्येति**।

( तटस्थाक्षेपभाष्यम् )

किं पुनरत्र ज्यायः ? ।

**( प्रदीपः ) किं पुनरिति**। न्यायापेक्षः प्रकर्षः। कः पक्षो न्यायोपपन्न इत्यर्थः ॥

**( उद्द्योतः )** ननु पक्षद्वये दोषोक्तेः कस्यापि प्रशस्यत्वाभावाद् आतिशयिकोऽनुपपन्न इत्यत आह—**न्यायेति**। युक्तिरित्यर्थः ॥ का युक्तिः प्रकृष्टेत्यत्र प्रश्नतात्पर्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्र**—पक्षद्वये।

प्रदीपे—**कः पक्ष इति**—तथाचानयोरित्यादिः।

उद्द्योते—**कस्यापीति**—पक्षस्य पक्षान्तरापेक्षयेति शेषः। **आतिशयिकः**—ज्याय इत्यत्र—अयमनयोरतिशयेन प्रशस्य इत्यर्थे ईयसुन् प्रत्ययः। **का युक्तिरिति**—एवञ्च व्याप्ति-प्रत्यासत्त्योरित्यादिः।

( समाधानभाष्यम् )

आदेशिन्यल्याश्रीयमाणे प्रतिषेध इत्येतदेव ज्यायः ॥

कुत एतत् ? ।

तथा ह्ययं विशिष्टं स्थानिकार्यमादेशोऽतिदिशति—'गुरुवद् गुरुपुत्रे' इति यथा। तद्यथा—'गुरुवदस्मिन्गुरुपुत्रे वर्तितव्यमन्यत्रोच्छिष्टभोजनात्पादोपसंग्रहणाच्च' इति। यदि च गुरुपुत्रोऽपि गुरुर्भवति। तदपि कर्तव्यं भवति ॥

**( प्रदीपः ) आदेशिनीति**। प्रत्यासत्त्येति भावः ॥ यत्कार्यमादेशः स्वतो न प्रतिपद्यते, तस्य तत्र स्यादतिदेशाकाङ्क्षा। तच्छेषश्च प्रतिषेधस्तद्द्वारक एवाल्कार्ये युक्तः ॥ अरुदितामित्यत्र त्वादेशस्य स्वतो वलादित्वान्न तत्रातिदेशाकाङ्क्षा। सार्वधातुकत्वं तस्य स्वतो नास्तीति तदेवातिदेशेन प्राप्यते। यथा गुरुपुत्रो गुरुत्वे सति नातिदेशमपेक्षते, तथा वलादित्वं प्रत्यादेशस्य नास्त्यतिदेशापेक्षेत्येतावता दृष्टान्तः। सार्वधातुकत्वं प्रत्यस्त्येवातिदेशापेक्षा ॥

**( उद्द्योतः ) प्रत्यासत्त्येति**। अत एव **कष्टाये**त्यादिनिर्देशाः सङ्गच्छन्ते। एवं च प्रत्यासत्त्याश्रयणमेव न्याय्यमिति भावः ॥ भाष्ये **विशिष्टं स्थानिकार्यमिति**। स्वरूपेणालभ्यमानमित्यर्थः। तदाह—**यत्कार्यमिति** ॥ **तच्छेषो**ऽतिदेशशेषः ॥ **तद्द्वारके**। अतिदेशद्वारके ॥ **यथेति**। एवं च यथा तत्रातिदेशप्राप्तोच्छिष्टभोजनस्यैव वर्जनं, न तु स्वाश्रयगुरुत्वप्राप्तस्य, एवमलंशेऽतिदेशप्राप्याल्विधेरेव वर्जनमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—सकलस्येष्टस्य संग्रहायानिष्टस्य च परिहाराय व्याप्त्यनाश्रयणेनाह—**आदेशिनीति**। **एवेन**—द्वितीयपक्षव्यवच्छेदः। **अयम्**—पाणिनिः। **तदपीति**—उच्छिष्टभोजनाद्यपीत्यर्थः। तर्हीत्यादिः।

प्रदीपे—'आदेशः स्थानिवदनल्विधावि'त्यार्थक्रमे एवालि-स्थानिनः प्रत्यासत्तिर्न तु 'स्थानिवदादेशोऽनल्विधावि'ति पाठक्रमे इत्याशयेनाह—**प्रत्यासत्त्येति**। प्रत्यासत्त्याश्रयणेनेत्यर्थः।

उद्द्योते—ननु प्रत्यासत्तितो व्याप्तेः प्राबल्याद्व्याप्तेरेवाश्रयणं युक्तम्, न तु प्रत्यासत्तेरित्यत आह—**अत एवेति**। प्रत्यासत्त्याश्रयणादेवेत्यर्थः। तथाच प्रत्यासत्त्याश्रयणे इदं ज्ञापकमिति व्याप्त्यनाश्रयणम्। तदाह-**एवञ्चेति**। ज्ञापकसत्त्वे चेत्यर्थः। **न्याय्यमिति**—

न तु व्याप्त्याश्रयणमिति शेषः । भाष्याद्याशयमाह—**एवञ्चेति** । भाष्यकाराद्युक्त्या तथा बोधिते चेत्यर्थः । **तत्र**—गुरुपुत्रे ।

( प्रथमपक्षाभ्युपगमभाष्यम् )

**अस्तु तर्ह्यादेशिन्यल्याश्रीयमाणे प्रतिषेधः ॥**

( उक्ताक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्—*आदेश्यल्विधिप्रतिषेधे कुरुवधपिबां गुणवृद्धिप्रतिषेधः* इति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । 'करोतौ तपरनिर्देशात् सिद्धम्' । पिबिरदन्तः । वधक इति नायं ण्वुल् । अन्योऽयमकशब्दः किदौणादिकः, रुचक इति यथा ॥**

**( प्रदीपः ) करोताविति** । अकारस्य ह्युकारो मात्रिक एव न्याय्य इति शास्त्रान्तरेणापि प्राप्तस्य भिन्नकालस्य निवृत्त्यर्थं तपरत्वमित्यर्थः ॥ **अन्योऽयमिति** । **हनो वध चेति** क्वुन्प्रत्ययः ॥

**( उद्द्योतः )** भाव्यमानस्य सवर्णग्राहकत्वस्वीकारेऽपि तपरत्वं व्यर्थमित्याह—**अकारस्येति** । अन्तरतमत्वादिति भावः ॥ **ऋकार-स्थानिकावयवविकारोऽत्रेति** लक्ष्यभेदान्नोदबोढामितिवल्लक्ष्ये लक्षण-**स्येति** न्यायेनात्र निर्वाह इत्याहुः । क्वुन्नौणादिकः ॥

**( तत्त्वालोकः )** भाष्ये—**करोताविति**—यत इत्यादिः । **वधक इति**—तथेत्यादिः । **अयम्**—अकशब्दस्थानी । **अन्य इति**—किन्त्वित्यादिः । **अकशब्दः**—अकशब्दस्थानी ।

प्रदीपे—**अकारस्येति**—'अत उत्सार्वधातुके' इत्यत्र स्थानिन्यादेशे च तपरत्वम् । तत्र स्थानिनस्तपरत्वाद् गृह्यमाणस्येत्यादिः । **भिन्नकालस्य**—उत्तरकालिकविकारस्य । **तपरत्वमिति**—आदेशस्येत्यादिः । तथा च—कुर्वित्यादौ न लघूपधगुणापत्तिः । नन्वेवं कुर्यादित्यादावपि दीर्घवारणेन 'न भकुर्छुरामि'त्यनेन कुरस्तन्निषेधो व्यर्थ इति चेन्न, गुणस्य सपादसप्ताध्यायीस्थत्वेन सिद्धत्वात्तपरकरणेन निवृत्तावपि 'र्वोरि'ति दीर्घस्य त्रिपादीस्थत्वेनासिद्धत्वात्तपरकरणेन वारणासम्भवात् ।

उद्द्योते—नन्वत्र विकारान्यानुपूर्व्यैक्यात् 'लक्ष्ये लक्षणस्ये'ति-न्यायेन न पुनर्गुणापत्तिरित्यत आह—**ऋकारस्थानिकेति** । ऋकार-स्थानिको य उर् तदवयवो य उकारस्तद्विकारः पुनर्गुण इत्यर्थः । **आहुरिति**—भाष्यतत्त्वविद इति शेषः । प्रदीपोक्त-**क्वुन्नित्यस्य** शेषमाह—**औणादिक इति** ।

( एकदेशविकृतन्यायाधिकरणम् )

( ३६५ आक्षेपवार्तिकम् ॥ ७ ॥ )

**॥*॥ एकदेशविकृतस्योपसंख्यानम् ॥*॥**

( भाष्यम् )

**एकदेशविकृतस्योपसंख्यानं कर्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥**

**( प्रदीपः ) एकदेशविकृतस्येति** । एकदेशेन विकृत इति तृतीयासमासः ॥

**( उद्द्योतः )** बहुव्रीहौ निष्ठान्तस्य पूर्वनिपातः स्यादत आह—**तृतीयेति** । आनुमानिकेऽपि स्थानिवत्त्वप्रवृत्तिर्बोध्येत्येतद्वार्तिकतात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**उपसंख्यानम्**—स्थानिवत्त्वोपसंख्यानम् । **पचन्त्विति**—इत्यादाविति शेषः । **ग्रहणमिति**—त्वादीनामित्यादिः । **स्यात्**—स्यादिति । एवमग्रेऽपि ।

प्रदीपे—**तृतीयासमास इति**—कर्मक्तान्तेन व्युत्पत्तौ 'कर्तृकरणे कृता बहुलमि'ति सूत्रेणेत्यादिः । समुदायस्य विकृतत्वे विकारद्वारा एकदेशस्य करणत्वादिति भावः । केचित्तु—धान्येन धनवानित्यत्रेवात्र तृतीयायान्तु 'सुप्सुपे'ति समास इति वदन्ति ।

उद्द्योते—**बहुव्रीहाविति**—भावक्तान्तेन 'एकदेशे विकृतं यस्ये'ति व्यधिकरणबहुव्रीहाविति, अथवा—कर्मक्तान्तेन 'एकदेशो विकृतो यस्ये'ति समानाधिकरणबहुव्रीहावित्यर्थः । नन्वित्यादिः । 'निष्ठे'ति सूत्रेणेति शेषः । केचित्तु—आहिताग्न्यादिगणस्याकृतिगणत्वात्तत्रास्य पाठमभ्युपगम्य बहुव्रीहावपि साधुत्वमभिप्रयन्ति । यथाश्रुतार्थबाधादाह—**आनुमानिकेऽपीति** । आदेशे इति शेषः ।

( ३६६ समाधानवार्तिकम् ॥ ८ ॥ )

**॥ * ॥ एकदेशविकृतस्यानन्यत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् )

**'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति । तद्यथा—श्वा कर्णे पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभ इति ॥**

**( प्रदीपः ) तद्यथेति** । छिन्नेऽपि पुच्छे शिष्टावयवसन्निवेशः श्वत्वजातेरभिव्यञ्जकः । एवं पचत्वित्यत्रैकारस्य विकारेऽपि तकारस्तिङ्त्वस्य व्यञ्जकः । तथा चेकारलोपेऽप्यपचदिति तकारमात्रस्य तिङ्त्वमर्थप्रतीतिहेतुत्वं चास्ति ॥ **नाश्व इति** । अवयवापगमेऽपि न तस्य जात्यन्तरेण योगः, किं तर्हि ? श्वत्वेन व्यवहारः ॥

**( उद्द्योतः )** लोकन्यायाश्रयेणैतत्प्रत्याचष्टे—**अनन्यत्वात् सिद्धमिति** । भाष्ये ॥ नन्ववयवविगमे जात्यभिव्यञ्जकाभावात्कथं श्वेति व्यवहारोऽत आह—**छिन्नेऽपीति । तथा चेति** । लोपस्य विकारत्वाभावेनैकदेशविकृतोपसङ्ख्यानेऽपि तत्रोक्तरीतिरेवावश्यकीति भावः ॥ **अर्थेत्यादि दृष्टान्तार्थम्** । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्बोधो न स्यात् । एतदर्थं च तन्न्यायाङ्गीकार आवश्यक इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**एकदेशेति**—नैतदस्ति प्रयोजनम्, यत इत्यादिः । **नाश्वो न गर्दभः**—न त्वश्वो न च गर्दभः ।

प्रदीपे—**छिन्नेऽपीति**—यथा शुन इत्यादिः ॥ अत्र मानमाह—**तथा चेति** । **तस्य**—शुनः ।

उद्द्योते—**एतत्**—प्रयोजनम् । **एकदेशविकृतोपसंख्यानेऽपि**—एकदेशविकृतस्य स्थानिवत्त्वोपसंख्यानेऽपि । **तत्र**—अपचदित्यादौ । **उक्तेति**—लोकन्यायाश्रयणरूपेत्यर्थः ॥ अस्य प्रकृतेऽनुपयोगादाह—**दृष्टान्तार्थमिति** । अस्याशयमाह—**अन्यथेति** । लोकन्यायानाश्रयणे इत्यर्थः । **च**—अपि ।

( ३६७ एकदेश्याक्षेपसाधकवार्त्तिकम् ॥ ९ ॥ )

**॥ * ॥ अनित्यविज्ञानं तु तस्मादुपसंख्यानम् ॥ * ॥**

( भाष्यम् )

अनित्यविज्ञानं तु भवति । नित्याः शब्दाः । नित्येषु नाम शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । तत्र स एवायं विकृतश्चेत्येतन्नित्येषु शब्देषु नोपपद्यते । तस्मादुपसंख्यानं कर्तव्यम् ॥

**( प्रदीपः ) अनित्यविज्ञानमिति ।** अवस्थिते तकारे इकारस्य उकार इत्यनित्यत्वं शुन इव प्राप्नोतीति भावः ॥ उपसंख्याने तु क्रियमाणे नास्त्यनित्यत्वम्, **एरुरिति** स्थान्यादेशाभ्यां तिशब्दतुशब्दयोरनुमीयमानत्वात्तेः प्रसङ्गे तोर्विधानात् । तत्रादेशग्रहणादुपसंख्यानाद्वा आनुमानिकस्याप्यादेशस्य स्थानिवद्भावः सिद्धः ॥

**( उद्द्योतः ) अवस्थिते इति ।** न च इप्रसङ्गे उरिति वाच्यमिति नानित्यत्वम्, अनर्थकत्वेनार्थबोधाय प्रसङ्गस्य वक्तुमशक्यत्वात् । अवयवत्वेन प्रसङ्गे त्ववयवान्तरप्रादुर्भावपूर्वावयवापगमाभ्यामनित्यत्वं स्यादित्यर्थः । **स एवायमिति** प्रत्यभिज्ञया भाष्ये नित्यत्वमुपलक्षितम् । अत एव **विकृत** इत्यनेन विरोधः । अनित्यत्वाभावे हेतुः—**तेः प्रसङ्गे इत्यादि ।** अस्य ह्यर्थवत्त्वात्तेः **प्रसङ्गे** इत्युक्तिर्नासमञ्जसेत्यर्थः ॥ तदुपपादकम्—**एरुरित्यादि ।** एवं च कार्यशब्दवादे न्यायेन सिद्धम्, नित्यशब्दवादे तु नेति वचनारम्भवादितात्पर्यम् ॥ वस्तुतो वचनारम्भेऽपि विकृतत्वबुद्धिमात्रेण तत्संगतिरित्यवश्यं वाच्यम् । अन्यथा **विकृतस्ये**त्यसंगतं स्यात् । तदा तयैव रीत्या लोकन्यायप्रवृत्तिरपि सूपपादेति **अनित्यविज्ञानं** त्वित्याद्येकदेश्युक्तिः ॥

**( तत्त्वालोकः )** भाष्ये—**अनित्येति**—उत्तरीत्यैतस्य प्रयोजनस्य साधने इत्यादिः । तदुपपादयति—**नित्या इति ।** कूटस्थपदार्थमाह—**अविचालीति ।** तद्विवरणम्—**अनपायेत्यादि ।** अत्र—द्वन्द्वोत्तरं मत्वर्थीय इन्, ततश्च नञ्समासः । **तत्र**—तस्मिन् सति । **नोपपद्यत इति**—विरोधादिति भावः ।

प्रदीपे—**अनित्यत्वमिति**—शब्दस्येत्यादिः । एवमग्रेऽपि ।

उद्द्योते—**न्यायेन**—लोकन्यायेन । भाष्यकाराद्युक्तं खण्डयति—**वस्तुत इति । तदिति**—वचनेत्यर्थः । **अन्यथा**—विकृतत्वबुद्ध्यभावे ।

( ऋष्यन्तरसंवादभाष्यम् )

भारद्वाजीयाः पठन्ति—

( भारद्वाजीयवार्त्तिकम् )

**॥ * ॥ एकदेशविकृतेषूपसंख्यानम् ॥ * ॥**

( भाष्यम् )

एकदेशविकृतेषूपसंख्यानं कर्तव्यम् ॥

किं प्रयोजनम् ? ।

पचतु पचन्तु । तिङ्ग्रहणेन ग्रहणं यथा स्यात् ॥

किंच कारणं न स्यात् ? ।

**( तत्त्वालोकः ) किञ्च कारणमिति**—कस्माच्च कारणादित्यर्थः । उपसंख्यानाभावे तत्र तद्ग्रहणेन त्वादीनां ग्रहणमिति शेषः ।

( भारद्वाजीयवार्तिकम् )

**॥ * ॥ अनादेशत्वात् ॥ * ॥**

( भाष्यम् )

आदेशः स्थानिवदित्युच्यते । न चेमे आदेशाः ॥

( भारद्वाजीयवार्तिकम् )

**॥ * ॥ रूपान्यत्वाच्च ॥ * ॥**

( भाष्यम् )

अन्यत्खल्वपि रूपं पचतीति, अन्यत्पचत्विति ॥

**( प्रदीपः ) न चेम इति ।** तुशब्दादयः । **एरुरि**त्यत्र साक्षात्समुदायानुपादानात् ॥ **रूपान्यत्वाच्चेति ।** यद्ययमवयवादेशो रूपं न भिन्द्यात्स्यादेव प्रत्यभिज्ञानात्तिङ्त्वम् । यतस्तु भेदको रूपस्य तस्मान्नास्ति तिङ्त्वमिति भावः ॥

**( उद्द्योतः )** कात्यायनीयाद्भारद्वाजीयपाठे हेत्वभिधानं बहुवचनं च विशेषः ॥ **एरुरित्यत्रेति ।** प्रत्यक्षादेशत्वं चेह निषेध्यमिति भावः ॥ लोकन्यायेन सिद्धिखण्डनाय—**रूपान्यत्वाच्चेति ।** तद्व्याचष्टे—**यदीति । इदमो म** इत्यादिवदिति भावः । अर्थस्यान्यथाभावेन जात्यभिव्यञ्जकाभाव इति तात्पर्यम् । **एकदेशविकृतेष्विति** बहुवचनेन लोपस्यापि सङ्ग्रहादपचदित्यादावपि स्थानिवत्त्वमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**आदेश इति**—यत इत्यादिः । **अन्यदिति**—यतश्चेत्यादिः । **खल्वपीति** निपातसमुदायो निश्चयार्थः । **अन्यत्**—अन्यच्च ।

प्रदीपे—**समुदायेति**—'ति' इत्याकारक-वर्णसमुदायात्मकस्थानिनः, 'तु' इत्याकारक-वर्णसमुदायात्मकादेशस्य चेत्यर्थः । **अयम्**—उकारः । **अवयवेति**—इकारेत्यर्थः । **भिन्द्यादिति**—तर्हीति शेषः ।

उद्द्योते—**इह**—तुशब्दादिषु । एवञ्चात्र स्थानिवत्सूत्रेण न निर्वाहः, तत्रादेशपदेन प्रत्यक्षादेशस्यैव ग्रहणादित्यभिमानः । **लोकन्यायेनेति**—स्थानिवत्सूत्रेण सिद्धिखण्डनाय 'अनादेशत्वादि' त्यभिधायाहेत्यादिः । तत्र हेत्वभिधानप्रयोजनमभिधाय बहुवचनोपादानफलमाह—**एकदेशेति ।** तथा च—तदर्थमपि लोकन्यायाश्रयणं नावश्यकमिति भावः ।

( आक्षेपनिराकरणभाष्यम् )

इमेऽप्यादेशाः ॥

कथम् ? ॥

आदिश्यते यः स आदेशः । इमे चाप्यादिश्यन्ते ॥

**( उद्द्योतः )** भाष्ये वचनं खण्डयति—**इमेऽपीति ।** आनुमानिकादेशस्याप्यादेशपदसामर्थ्येन ग्रहणादिति भावः ॥ इममाशयमजानानः पृच्छति—**कथमिति ।** उक्तेनैवाभिप्रायेणाह—**आदिश्यत इति ॥ इमे चेति ।** तुशब्दादयः ॥

**( तत्त्वालोकः )** भाष्ये—**इमेऽपीति**—तुशब्दादयोऽपीत्यर्थः । नैतदस्ति प्रयोजनम्, यत इत्यादिः । **आदिश्यत इति**—यत इत्यादिः ।

उद्द्योते—**सामर्थ्येनेति**—प्रकृतसूत्रे इति शेषः ।

( ३६८ आक्षेपसाधकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ आदेशः स्थानिवदिति चेन्नानाश्रितत्वात् ॥ * ॥

( भाष्यम् )

आदेशः स्थानिवदिति चेत् । तन्न ॥

किं कारणम् ? ।

अनाश्रितत्वात् । योऽत्रादेशो नासावाश्रीयते। यश्चाश्रीयते नासावादेशः ॥

**( प्रदीपः ) योऽत्रादेश इति ।** इकारस्य उकारः । **नासावाश्रीयते** पदसंज्ञायाम् । सा हि तिशब्दनिबन्धना, नावयवनिबन्धना॥ **यश्चेति ।** तुशब्दः । साक्षादविधानान्नादेशः, पदसंज्ञानिमित्तभावेन चाश्रीयत इत्यर्थः ॥

**( उद्द्योतः )** आदेशपदसामर्थ्यमजानान आह—**आदेश इत्यादि ।** प्रत्यक्षादेशस्यैव ग्रहणं न्याय्यमित्यभिमानः ॥ तदाह—**योऽत्रेति ।** ननु तामादेः पदसंज्ञायामनाश्रयणेऽपि यथा स्थानिवत्त्वात्पदत्वमेवमुकारस्यापीत्यत आह— **सा हीति ।** तेश्च नायमादेश इति भावः ॥ **तिङ्त्वं** समुदायपर्याप्तमिति तात्पर्यम् । स्थानिवत्त्वद्वारापि नायमुकारः पदत्वहेतुतयाऽऽश्रीयत इति भाष्यार्थः॥ **आश्रीयते इत्यर्थ इति ।** आश्रयितुमिष्यत इत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**तन्नेति—**प्रकृतसूत्रेणात्रेष्टसाधनं नेत्यर्थः । तर्हीत्यादिः । **किं कारणम्—**कस्मात्कारणात् । **योऽत्रेति—**यत इत्यादिः ।

प्रदीपे—**अवयवेति—**इकारेत्यर्थः ।

उद्द्योते—**अजानानः—**अजानान एव । **प्रत्यक्षेति—**स्थानिवत्सूत्रे आदेशपदेनेत्यादिः । आनुमानिकादेशस्यापि ग्रहणस्य युक्तत्वादाह—**अभिमान इति । अयम्—**उकारः । तसादेस्तु तामादिरादेश इत्याशयः । **भाष्यार्थः—**भाष्याशयः । यथाश्रुतानुपपत्तेराह—**आश्रयितुमिति ।**

( आक्षेपबाधकभाष्यम् )

नैतन्मन्तव्यम्—'समुदाये आश्रीयमाणेऽवयवो नाश्रीयते' इति । अभ्यन्तरो हि समुदायस्यावयवः ।

तद्यथा—वृक्षः प्रचलन्सहावयवैः प्रचलति ॥

**( प्रदीपः )** तत्रोत्तरमाह—**नैतदिति ।** तिप् तस् झि इति तिप्सन्निवेशे इकारतकारावपि सन्निविष्टावितीकारस्य तिङ्त्वात्तदादेशस्याप्युकारस्य तिङ्त्वमिति सिद्धा पदसंज्ञा ॥

**( उद्द्योतः ) तत्रोत्तरमाहेति ।** एकदेशीति शेषः ॥ भाष्ये—**समुदाये इत्यादि । सुप्तिङन्त**मित्यादौ ति इति समुदाये निमित्तत्वेनाश्रितेऽवयवातिरिक्तसमुदायाभावात् तकारैकारान्तं पदमित्यर्थः । एवं चेकारस्योकारादेशे स्थानिवद्भावेनेकारबुद्धौ निमित्तभूतसमुदायसत्त्वात्पदत्वं सिद्धमिति भावः ॥ **तिङ्त्वात्** तदवच्छिन्नावयवत्वात् । **तिङ्त्वं** तदवच्छिन्नावयवेकारत्वमित्यर्थः । यथाश्रुते हि पचतीत्यादौ तान्तस्यापि पदत्वापत्तौ जश्त्वापत्तिरिति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**निमित्तभूतेति—**तकारस्य च स्वतः सत्त्वेनेत्यादिः । तिङ्त्वस्य तादृशार्थकरणे बीजमाह—**यथाश्रुते हीति ।** इकारस्येव तकारस्यापि तिङ्त्वादिति भावः ।

( ३६९ आक्षेपवार्तिकम् ॥ ११ ॥ )

## ॥*॥ आश्रय इति चेदल्विधिप्रसङ्गः ॥*॥

( भाष्यम् )

आश्रय इति चेदल्विधिरयं भवति । तत्रानल्विधाविति प्रतिषेधः प्राप्नोति ॥

**( प्रदीपः ) अल्विधिप्रसङ्ग इति ।** इकारस्य पदसंज्ञानिमित्तत्वादल्विधिः पदसंज्ञा स्यादित्यर्थः ।

**( तत्त्वालोकः )** भाष्ये—**आश्रय इति चेदिति—**इकारः पदसंज्ञाया इत्यादिः । तर्हीति शेषः । **तत्रेति—**तथा चेत्यादिः । कर्तव्ये इति शेषः । एवञ्चोकारे स्थानिवत्त्वेनेकारबुद्धेर्दुर्घटत्वात् पदत्वमनुपपन्नमेवेति भावः ।

( आक्षेपबाधकभाष्यम् )

नैष दोषः । नैवं सति कश्चिदनल्विधिः स्याद् । उच्यते चेदमनल्विधाविति । तत्र प्रकर्षगतिर्विज्ञास्यते— साधीयो योऽल्विधिरिति ॥

कश्च साधीयः ? ।

यत्र प्राधान्येनालाश्रीयते । यत्र नान्तरीयकोऽलाश्रीयते नासावल्विधिरिति ॥

**( प्रदीपः ) यत्र प्राधान्येनेति ।** यत्र साक्षादल् निर्दिष्टः, तत्र प्रतिषेधो, नानुमीयमाने सम्भवमात्रेणालीत्यर्थः । प्राधान्यग्रहणं प्रत्यक्षोपलक्षणम् ॥

**( उद्द्योतः )** ननु **प्राधान्येने**त्युक्तौ प्रदीव्येति न सिध्येदत आह— **यत्रेति ॥ प्रत्यक्षेति ।** अनान्तरीयकेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये— **नैवं सतीति—**न नान्तरीयकालाश्रयणेनाल्विधित्वाभ्युपगमे सतीत्यर्थः । यत इत्यादिः । **तत्रेति—**अत इत्यादिः । **यत्र नान्तरीयक इति—**एवञ्चेत्यादिः । तथाच—पदसंज्ञाया इकाराश्रितत्वेऽप्यल्विधित्वाभाव इति भावः ।

प्रदीपे—**प्रतिषेधः—**'अनल्विधावि'ति प्रतिषेधः ।

उद्द्योते—**न सिद्ध्येदिति—**यतस्तथा सति तत्राप्राधान्येन वलमाश्रयमाणे इटि कर्तव्ये ल्यपः'स्थानिवत्त्वप्रतिषेधो नोपपद्येतेति भावः । प्रत्यक्षत्वमप्यविवक्षितमित्याह—**अनान्तरीयेति ।**

( सिद्धान्तिसमाधानभाष्यम् )

अथवोक्तमादेशग्रहणस्य प्रयोजनम्—आदेशमात्रं स्थानिवद्यथा स्यादिति ॥

**( प्रदीपः ) आदेशमात्रमिति ।** आनुमानिकमपीत्यर्थः ॥

**( उद्द्योतः )** इदानीं सिद्धान्ती एकदेश्युक्तमनुमन्यमान इव पक्षान्तरत्वेन स्वाशयं प्रकाशयति—**भाष्ये अथवेति ॥**

**( तत्त्वालोकः )** भाष्ये—**स्यादितीति—**एवञ्च—'एरुरि'ति स्थान्यादेशाभ्यामनुमीयमानयोस्तिशब्दतुशब्दयोः स्थान्यादेशभावेन तोः स्थानिवत्त्वेन तित्वात् पचत्वित्यादौ पदत्वं सिद्धमित्याशयः ।

उद्द्योते—तस्याखण्डनादाह—**अनुमन्येति ।** वस्तुतोऽननुमतत्वं सूचयितुमाह—**इवेति ।**

( शब्दनित्यत्वेऽप्यनुपपत्तिपरिहाराधिकरणम् )

( ३७० आक्षेपवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ अनुपपन्नं स्थान्यादेशत्वं नित्यत्वात् ॥ * ॥

( भाष्यम् )

स्थानी आदेश इत्येतन्नित्येषु शब्देषु नोपपद्यते ॥

किं कारणम् ? ।

नित्यत्वात् । स्थानी हि नाम—यो भूत्वा न भवति । आदेशो हि नाम—योऽभूत्वा भवति । एतच्च नित्येषु शब्देषु नोपपद्यते—यत्सतो नाम विनाशः स्यात्, असतो वा प्रादुर्भाव इति ॥

**( प्रदीपः ) अनुपपन्नमिति** । एकदेशविकारेऽपि यत्र नित्यत्वहानिस्तत्र सर्वविकारे कुतो नित्यत्वम् । यत्रान्वयोऽपि कस्यचिन्नास्तीत्यर्थः ॥

**( उद्द्योतः ) सर्वविकार इति** । अस्तेर्भूरित्यादौ ॥ **यो भूत्वेत्यादि**भाष्यस्य प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं **नित्यत्व**मिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अनुपपन्नमिति**—शब्देष्वित्यादिः । **किं कारणम्**—कस्मात्कारणात् । **आदेशो हि**—आदेशश्च ।

प्रदीपे—**सर्वविकारे**—सर्वादेशे । **यत्रान्वयोऽपीति**—यत्र सर्वविकारेऽन्वयः सम्बन्धोऽपि कस्यचित् स्थान्यवयवस्य नास्तीत्यर्थः ।

उद्द्योते—ध्वंसेऽतिव्याप्तिवारणाय **सत्यन्तम्** , तथा प्रागभावेऽतिव्याप्तिवारणाय **विशेष्यदलम्** ।

( ३७१ समाधानवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ सिद्धं तु यथा लौकिकवैदिकेष्वभूतपूर्वेऽपि स्थानशब्दप्रयोगात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ।

कथम् ? ।

यथा लौकिकवैदिकेषु कृतान्तेषु अभूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्तते । लोके तावद्—'उपाध्यायस्य स्थाने शिष्यः' इत्युच्यते, न च तत्र उपाध्यायो भूतपूर्वो भवति ॥ वेदेऽपि—'सोमस्य स्थाने पूतीकतृणान्यभिषुणुयाद्' इत्युच्यते । न च तत्र सोमो भूतपूर्वो भवति ॥

**( प्रदीपः ) सोमस्येति** । सोमस्तृणविशेषः ॥ तदसन्निधौ पूतीकतृणानि प्रतिनिधीयन्ते ॥

**( उद्द्योतः )** स्थानशब्दः प्रसङ्गवाचीत्युत्तरम् ॥ **तदसंनिधाविति** । नित्यस्यावश्यकर्तव्यत्वादारब्धस्य चावश्यसमापनीयत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—न नित्येष्वपि शब्देषु स्थान्यादेशत्वमनुपपन्नं, किन्तु सिद्धमेतदित्याशयेनाह—**सिद्धमेतदिति** । एवमग्रेऽपि । **कृतान्तेष्विति**—लक्षणया—सिद्धान्तप्रतिपादकवाक्येष्वित्यर्थः । सिद्धान्तस्यैव कृतान्तपदवाच्यत्वात् । वार्त्तिकोक्तपञ्चम्या अविवक्षितत्वं सूचयितुं प्रथमान्तेन तद्विवृणोति—**प्रयोग इति** । **पूतीकतृणानि**—पर्णकण्टकरहितानि स्नुहीदण्डसदृशानि वैदिकप्रसिद्धानि ।

उद्द्योते—अकरणे प्रत्यवायजनकत्वादाह—**अवश्येति** । काम्येऽपि तदुपयोगमाह—**आरब्धस्य चेति** ।

( ३७२ समाधानान्तरवार्तिकम् ॥ १४ ॥ )

## ॥*॥ कार्यविपरिणामाद्वा [ सिद्धम् ] ॥*॥

( भाष्यम् )

अथवा कार्यविपरिणामात्सिद्धमेतत् ॥

किमिदं कार्यविपरिणामादिति ? ॥

कार्या बुद्धिः सा विपरिणम्यते ॥

**( प्रदीपः ) कार्या बुद्धिरिति** । अन्यस्यात्र विपरिणामासम्भवात्सामर्थ्यात्कार्यत्वेन बुद्धिर्गृह्यते, न तु कार्यशब्दो बुद्धिपर्यायः ॥

**( तत्त्वालोकः )** भाष्ये—**किम्**—किमर्थकम् । **कार्या**—कार्या हि । **विपरिणम्यते इति**—इत्यर्थकमिति शेषः ।

प्रदीपे—कार्यशब्दे बुद्धिपर्यायताभ्रमो मा भूदित्यर्थं तदाशयमाह-**अन्यस्यात्रेति** । **सामर्थ्यात्**-विपरिणामपदोपादानसामर्थ्यात् ।

( प्रयोगासिद्धिभाष्यम् )

ननु च कार्याविपरिणामादिति भवितव्यम् ॥

**( तत्त्वालोकः ) ननु च**—नन्वेवम् ।

( प्रयोगसाधकभाष्यम् )

सन्ति चैव ह्यौत्तरपदिकानि ह्रस्वत्वानि ॥

**( प्रदीपः ) सन्तीति** । ङ्यापोरित्यत्र बहुलग्रहणात् ॥

**( उद्द्योतः )** संज्ञाछन्दसत्वयोरभावादाह—**बहुलेति** ॥

**( तत्त्वालोकः )** भाष्ये—**सन्तीति**—यतः सन्त्येव उत्तरपदे परे विहितान्यपि ह्रस्वत्वानीत्यर्थः । नैष दोष इत्यादिः ।

उद्द्योते—**संज्ञेति**—प्रकृते इत्यादिः ।

( प्रयोगसाधकयुक्त्यन्तरभाष्यम् )

अपि च 'बुद्धिः संप्रत्यय इत्यनर्थान्तरम् ।' कार्या बुद्धिः, कार्यः संप्रत्ययः । कार्यस्य संप्रत्ययस्य विपरिणामः कार्यविपरिणामः कार्यविपरिणमाादिति ॥

**( तत्त्वालोकः )** अगतिकगतित्वादत्र बाहुलकस्यानाश्रयणेऽपि कार्यशब्दान्वययोग्यं बुद्धिपर्यायं विशेष्यं दर्शयितुमाह—**अपि चेति** । **कार्येति**—तथेत्यादिः । **कार्यः**—कार्यश्च । **कार्यस्येति**—एवञ्चोपपद्यते—**इत्यादिः** । **कार्यविपरिणाम इति**—तस्मादिति शेषः ।

( समाधानान्तरबाधकभाष्यम् )

परिहारान्तरमेवेदं मत्वा पठितम् ॥

**( तत्त्वालोकः ) एवेन**—प्रागुक्तपरिहारसाधनव्यवच्छेदः । **इदम्**—'कार्यविपरिणामाद्वे'तीदम् । एवमग्रेऽपि ।

( उपपत्तिप्रश्नभाष्यम् )

कथं वेदं परिहारान्तरं स्याद् ? ॥

**( तत्त्वालोकः ) कथं वेति**—भूतपूर्वेऽभूतपूर्वे च स्थानशब्दप्रयोगेऽस्यावैलक्षण्यादिति भावः ।

**( समाधानान्तरबाधकभाष्यम् )**

**यदि भूतपूर्वे स्थानशब्दो वर्तते ॥**

**( उद्द्योतः )** भूतपूर्वे स्थानशब्दप्रयोगमभ्युपेत्येदं परिहारान्तरम् । अन्यथानर्थक्यप्रसङ्गात् ॥ न च तत्र स्थानशब्दो दृश्यते, **सोमस्य स्थाने** इत्यादावभूतपूर्वे एव प्रयोगदर्शनादिति **यदि भूतपूर्वे** इत्यादिभाष्यतात्पर्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**अन्यथेति**—भूतपूर्वे स्थानशब्दप्रयोगाभावे इत्यर्थः । प्रागुक्तपरिहारेणैव निर्वाहादस्येति शेषः । **तत्र**—भूतपूर्वे । **प्रयोगेति**—स्थानशब्दस्येत्यादिः ।

**( समाधानान्तरसाधकभाष्यम् )**

**भूतपूर्वे चापि स्थानशब्दो वर्तते ॥**

**कथम् ? ॥**

**बुद्ध्या । तद्यथा कश्चित्कस्मैचिदुपदिशति–'प्राचीनं ग्रामादाम्राः' इति । तस्य सर्वत्राम्रबुद्धिः प्रसक्ता । ततः पश्चादाह—'ये क्षीरिणोऽवरोहवन्तः पृथुपर्णास्ते न्यग्रोधाः' इति । स तत्राम्रबुद्ध्या न्यग्रोधबुद्धिं प्रतिपद्यते । स ततः पश्यति–बुद्ध्या आम्राँश्चापकृष्यमाणान्, न्यग्रोधांश्चोपधीयमानान् । नित्या एव च स्वस्मिन्विषये आम्राः, नित्याश्च न्यग्रोधाः । बुद्धिस्त्वस्य विपरिणम्यते ॥ एवमिहाप्यस्तिरस्यायविशेषेणोपदिष्टः । तस्य सर्वत्रास्तिबुद्धिः प्रसक्ता । सः 'अस्तेर्भूः' इत्यनेनास्तिबुद्ध्या भवतिबुद्धिं प्रतिपद्यते । स ततः पश्यति—बुद्ध्या अस्तिं चापकृष्यमाणं, भवतिं चोपधीयमानम् । नित्य एव च स्वस्मिन्विषयेऽस्तिर्नित्यो भवतिश्च । बुद्धिस्त्वस्य विपरिणम्यते ॥**

**( प्रदीपः ) भूतपूर्वे चापीति ।** न च नित्यत्वविरोधः । बुद्धिधर्माः केवलमर्थेषु प्रतिपत्तृवशादारोप्यन्ते, न तु तद्वशादर्थानां तथावस्थानम् ॥ **प्राचीनमिति ।** प्राचि देशे प्राक् । ततो **विभाषाञ्चेरदिक्स्त्रियामि**ति स्वार्थे खः । तत्र सप्तम्यर्थस्याभिहितत्वादन्तर्भूतत्वाच्च प्रथमैव कृता ॥ **आम्रबुद्ध्या इति ।** तस्या अनन्तरमित्यर्थः ॥

**( उद्द्योतः ) न चेति ।** भूतपूर्वे हि स्थानशब्दो निवृत्तिवचनः स्यादिति भावः ॥ तत्पक्षे नित्यत्वं कथमिति पृच्छति—भाष्ये **कथमिति ।** उत्तरमाह—**बुद्ध्येति ॥ प्रतिपत्तृवशादिति ।** प्रतिपत्तृशब्देन तदीया प्रतिपत्तिर्लक्ष्यते, तद्वशात् प्रतिपत्तॄणां तथा ज्ञानव्यवहाराभ्यां बुद्धिधर्मारोपस्तत्रानुमीयते, स्वतद्वत्त्वस्य तत्र बाधादिति भावः ॥ कचित्तु **प्रतिपत्तिवशादि**ति पाठः ॥ तदाह—**न त्विति ।** आरोपितभूतपूर्वत्वव्यवहारात्र नित्यत्वहानिरिति भावः ॥ ननु प्राचीनमित्यस्यात्राधिकरणप्रतिपादकत्वात् सप्तमी स्यादत आह—**प्राचीति ।** सप्तम्यन्तादुत्पन्नास्तातेरञ्चेर्लुगिति लुक् ॥ भाष्ये—**तस्य सर्वत्रेति ।** प्राग्देशवृक्षत्वावच्छिन्न इत्यर्थः ॥ **स तत्र** न्यग्रोधेषु ॥ नन्वाम्रबुद्ध्या इति न तृतीया, अर्थासंङ्गतेः, नापि षष्ठी, संबन्धिनोऽनुपस्थितेरत आह—**तस्या अनन्तरमिति ।** अनन्तरपदाध्याहारेण षष्ठीति भावः ॥ केचित्तु आम्रबुद्ध्या इत्यस्य तां विहायेत्यर्थं इत्याहुः ॥

भाष्ये **अपकृष्यमाणानिति ।** तत्र यथा पूर्वेषामपकर्ष उपधानं च आम्रेषु न्यग्रोधेषु चारोप्यते, तथात्रापि बुद्धिमात्रकृतविपरिणामयोः स्थान्यादेशभावस्य च कल्पनमेव इति भावः । **उपधान**मुपचितिः ॥

**( तत्त्वालोकः )** भाष्ये—**तस्येति**—तत्र इत्यादिः । **आहेति**—उपदेष्टेत्यादिः । **अवरोहवन्तः**—जटावन्तः । **स तत्रेति**—स इत्यादिः । **तस्येति**—तस्य इत्यादिः । **सः 'अस्तेर्भूरि'ति**—ततः पश्चादाह–आर्धधातुके 'अस्तेर्भूः' भवतीति, तत इत्यादिः ।

प्रदीपे—**बुद्धिधर्मा इति**—तत इत्यादिः । **तथा**—बुद्धिधर्मवत्त्वेन ।

उद्द्योते—'कथमि'ति प्रश्नो न स्थानशब्दस्य भूतपूर्ववृत्तित्वविषयकः, तथा सत्युत्तरग्रन्थस्यासङ्गतेरित्यत आह—**तत्पक्षे इति ।** भूतपूर्वेऽपि स्थानशब्दप्रयोगो वर्तते इति पक्षे इत्यर्थः । अत्र पक्षे स्थानशब्दस्य निवृत्तिवाचित्वादिति भावः । यथाश्रुतग्रन्थासङ्गतेराह–**प्रतिपत्तृशब्देनेति । 'तद्वशादि'** त्यस्य व्याख्यानं–प्रतिपत्तॄणामित्यादि । **तत्र**—अर्थेषु । **तद्वत्त्वस्य**—बुद्धिधर्मवत्त्वस्य । **पाठः**—पाठ एव । तदाशयमाह—**आरोपितेति** । शब्देष्वित्यादिः । **अत्रेति**–प्राचीने देशे इत्यर्थे इत्यर्थः । आम्रबुद्ध्या अनुगतां न्यग्रोधबुद्धिमिति व्याख्यानस्य भाष्यकारस्वरसविरुद्धत्वादाह—**अर्थासङ्गतेरिति ।** 'ल्यब्लोपे कर्मण्यधिकरणे चे'ति वार्तिकसत्त्वादध्याहाराश्रयणं न युक्तमित्याशयेनाह—**केचित्त्विति ।**

**( उत्सर्गकार्यनिराकरणाधिकरणम् )**

**( ३७३ आक्षेपवार्तिकम् ॥ १४ ॥ )**

## ॥*॥ अपवादप्रसङ्गस्तु स्थानिवत्त्वात् ॥*॥

**( भाष्यम् )**

**अपवादे उत्सर्गकृतं प्राप्नोति ॥ 'कर्मण्यण्' 'आतोऽनुपसर्गे कः' इति केऽपि अणि कृतं प्राप्नोति ।**

**किं कारणम् ? ।**

**स्थानिवत्त्वात् ॥**

**( प्रदीपः ) अपवादप्रसङ्गस्त्विति ।** बुद्धिविपरिणाममात्रं यदि स्थान्यादेशभाव इति भावः ॥ **कर्मण्यणिति** सर्वत्राणबुद्धिः प्रसक्ता **आतोऽनुपसर्गे क** इति कबुद्ध्या निवर्तते इति केऽप्यण्कृतप्रसङ्गः ॥

**( उद्द्योतः )** ननु उत्सर्गापवादयोः स्थान्यादेशभावाभावात् कथं स्थानिवत्त्वमत आह—**बुद्धीति । अण्कृतेति ।** ङीव् इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**केऽपि**—कप्रत्ययान्तेऽपि । **अणिकृतम्**—अणन्तत्वप्रयुक्तम् । एवमग्रेऽपि । **किं कारणम्**—कस्मात् कारणात् ।

**(आक्षेपबाधकभाष्यम्)**

## ॥ * ॥ उक्तं वा ॥ * ॥

**किमुक्तम् ? ।**

***विषयेण तु नानालिङ्गकरणात् सिद्धम्* इति ॥**

**( प्रदीपः ) विषयेण त्विति ।** तुशब्दः पुनरर्थे । यदयं **मापोष्टगि**ति कापवादस्य टकः कित्वं शास्ति, तज्ज्ञापयति—**नोत्सर्गकृतमपवादे भवतीति ॥**

**( उद्द्योतः )** भाष्ये **उक्तं वेति** । वार्तिकस्थमुक्तमित्यंशं व्या-

चष्टे—**विषयेण त्वित्यादि।** अइउण्सूत्रे एकोऽकार इति पक्षेऽनुबन्धसङ्करः प्राप्नोति केऽप्यण्कृतं प्राप्नोतीति पूर्वपक्षे **विषयेण तु नानालिङ्गकरणात्सिद्धम्** इत्युक्तम्। विषयेऽण्कादौ भिन्नलिङ्गकरणाद् इह मुण्डो भव इह जटी भवेति लोकव्यवहारे यथा यद्गुणको यत्रोच्यते तत्र तद्गुण एव भवति तथा यल्लिङ्गो यत्रोच्यते तत्र तल्लिङ्गकार्यमेव नान्यानुबन्धकार्यमिति तदर्थश्चोक्तः ॥ एवं च सामान्यापेक्षत्वान्नियमस्य स्थानिवत्त्वप्रयुक्तस्यापि व्यावृत्तिरिति भावः॥ वार्तिकेऽधिकरणस्यैव करणत्वविवक्षया तृतीया॥ कैयटोक्तव्याख्याने तु **अथवा—यदयं श्यन्नादीनि**ति वक्ष्यमाणपक्षे एतत्पक्षाद्वैलक्षण्यं दुर्लभम्। शब्दमर्यादया वार्तिकात्तदर्थालाभश्च। तुशब्दस्य पुनरर्थत्वेऽपि नानापदानन्वयस्तदवस्थश्च। किंच कैयटोक्तार्थकं **विषयेण तु पुनर्लिङ्गकरणात्सिद्धमि**ति भाष्ये तत्र पठितं नत्वेवमिति दिक्॥

**( तत्त्वालोकः )** भाष्ये—**उक्तं वेति—**नैष दोषः, यत इत्यादिः। उद्द्योते—**केऽपीति—**अर्थादित्यादिः। **नियमस्य—**उक्तरूपस्य। **प्रयुक्तस्यापीति—**अन्यानुबन्धकार्यस्यान्यत्रेति शेषः। 'विषयेऽण्कादावि'ति व्याख्यानस्य व्याख्येयेन 'विषयेण त्वि'ति वार्तिकेन विरोधं परिहरति—**वार्तिके इति।** कैयटोक्तव्याख्यानं दूषयति—**कैयटोक्तेति।**

( भाष्यम् )

अथवा—

**( ३७४ समाधानवार्तिकम् ॥ १७ ॥ )**

## ॥❀॥ सिद्धं तु षष्ठीनिर्दिष्टस्य स्थानिवद्वचनात् ॥ ❀ ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ?।**

**षष्ठीनिर्दिष्टस्यादेशः स्थानिवदिति वक्तव्यम् ॥**

**( प्रदीपः ) षष्ठीनिर्दिष्टस्येति।** न चापवादः षष्ठीनिर्दिष्टस्य स्थाने विधीयते॥ **नाभि नभं** चेत्यादौ षष्ठ्याः स्थाने प्रथमाया विधानादस्ति षष्ठी॥ विश्रवणरवणेति तु शब्दान्तरं प्रत्ययविषयं विज्ञेयम्। यथोक्तम्—❀ **बालवायो विदूरं च प्रकृत्यन्तरमेव वा** ❀ इति। विश्रवःशब्दात्त्वनभिधानात् प्रत्ययाभावः॥

**( उद्द्योतः )** तत्रत्यं वेत्यंशं व्याचष्टे—**अथवा सिद्धंत्विति॥** अनुवर्तमानं षष्ठीति पदं षष्ठीनिर्दिष्टलाक्षणिकं षष्ठ्या विपरिणम्यत इत्याशयेनाह—**षष्ठीनिर्दिष्टस्येति॥ नन्वेवं नाभि नभ**मित्यादौ षष्ठीनिर्देशाभावात्स्थानिवत्त्वाभावेन यत्प्रत्ययसंनियुक्तनभस्य भत्वाकृत्वयोरभावा**द्यस्येति** लोपो न स्यादत आह—**नाभीति। विधानात्** करणात्॥ यत्र तर्हि स्थान्यनुमानं तत्र कथमत आह—**विश्रवणेति। प्रत्ययविषयम्।** शिवाद्यण्विषयम्॥ **बालवेति।** वैदूर्यस्य विदूरान्न प्रभवः किन्तु बालवायाद् **इति विदूराद् ञ्य** इत्यस्यासङ्गतौ इदं वार्तिकम्। बालवायो विदूरमापद्यतेऽथास्मात्प्रत्ययः। यद्वा बालवायार्थवाचको विदूरोऽन्य एव ञ्यप्रत्ययविषय इति तदर्थः॥ **ननु** विश्रवणादेरनादेशत्वे विश्रवःशब्दादपि प्रत्ययः स्यादत आह—**विश्रव इति॥**

**( तत्त्वालोकः )** भाष्ये—**एतत्—**अपवादे उत्सर्गकृतस्य व्यावर्तनम्। **षष्ठीनिर्दिष्टस्येति—**यत इत्यादिः।

उद्द्योते—उक्तरूपस्य नियमस्य विशेषापेक्षत्वे आह—**तत्रत्यमिति।** 'उक्तं वे'ति वार्तिकस्थमित्यर्थः। **अनुवर्तमानमिति—**'षष्ठी स्थानेयोगे'त्यतः प्रकृतसूत्रे इत्यादिः। प्रकृतत्वादाह—**शिवादीति।**

( आक्षेपभाष्यम् )

**तत्तर्हि षष्ठीनिर्दिष्टग्रहणं कर्तव्यम् ॥**

**( तत्त्वालोकः ) तत्—**तत्र।

( समाधानभाष्यम् )

**न कर्तव्यम्। प्रकृतमनुवर्तते ॥**

**क प्रकृतम् ?।**

**'षष्ठी स्थानेयोगा' इति ॥**

**( तत्त्वालोकः ) प्रकृतमिति—**यत इत्यादिः।

( समाधानान्तरभाष्यम् )

**अथवा आचार्यप्रवृत्तिर्ज्ञापयति—नापवादे उत्सर्गकृतं भवतीति। यदयं श्यन्नादीन् कांश्चिच्छितः करोति—श्यन् श्नम् श्ना शः श्नुरिति ॥**

**( प्रदीपः ) यदयमिति।** न च पित्त्वनिवृत्त्यर्थं नियमार्थं शित्त्वम्। श्यनो नित्त्वाज् ज्ञापकात् पित्त्वनिवृत्तेः सिद्धत्वात्। न ह्यत्र पित्त्वस्य नित्त्वस्य वा विशेषोऽस्तीति केचिदाहुः॥ तदयुक्तम्। ताच्छील्यादौ विषये चानशि श्यनो नित्त्वं प्रकृतेराद्युदात्तार्थं स्यात्। तस्मादिष्टसिद्धये सामान्येन ज्ञापकं शित्त्वमाश्रीयते—अपवादे उत्सर्गकृतं न भवतीति॥

**( उद्द्योतः ) विशेषोऽस्तीति।** नित्त्वं हि प्रत्ययाद्युदात्तत्वबाधेनाद्युदात्तत्वाय। स्थानिवत्त्वात्पित्त्वेनानुदात्तत्वे तु लसार्वधातुकस्याप्युद्**उपदेशा**दित्यनुदात्तत्वे धातोरुदात्तत्वं सिद्धमेवेति भावः॥ **आद्युदात्तार्थमिति। इष्टमपि** चित्त्वप्रयुक्तान्तोदात्तत्वं बाधितेत्यर्थः॥ **अन्यत्र विकरणेभ्य** इत्यपि नित्त्वसामर्थ्याद्बाध्यत इति भावः॥ किंच **वावृतु** इत्यस्यानेकाचो दिवादौ सत्त्वेन तत्रापि नित्त्वपित्त्वयोर्विशेषः॥ कैयटस्वरसस्तु तस्य धातोर्दिवादावभाव एवेति बोध्यम्॥ **इष्टसिद्धये इति।** वैयर्थ्यान्नियमत्वं वा ज्ञापकत्वं वेत्यत्र विनिगमकाभावान्नित्त्वसामर्थ्या**दन्यत्र विकरणेभ्य** इत्युपदेशबाधकल्पनापेक्षया **स्थानिवदि**त्यतिदेशबाधकल्पनस्यैवौचित्याच्चेति भावः॥ **सामान्येनेति।** न विकरणविषयमेव, नापि पित्त्वविषयमेवेत्यर्थः॥ भाष्ये **श्यन्नादीनिति।** उत्सर्गसजातीयानुबन्धवदपवादानामुपलक्षणम्॥

**( तत्त्वालोकः )** भाष्ये—**अयम्—**आचार्यः। 'कर्तरि शप्' इत्युत्सर्गशास्त्रेण सर्वत्र प्रसक्ता शब्बुद्धिः 'दिवादिभ्यः श्यन्नि'त्याद्यपवादशास्त्रेण श्यन्नादिबुद्ध्या निवर्त्तते। तत्र स्थानिवत्त्वादेव शित्त्वोपपत्तेः शित्करणं व्यर्थमित्याशयः।

प्रदीपे—**स्वातन्त्र्येण** विधानात् लसार्वधातुकत्वस्याभावादाह—**चानशीति।** बुध्यमान इत्यादाविति शेषः। **नित्त्वं—**नित्त्वं हि।

उद्द्योते—**आद्युदात्तत्वायेति—**समुदितस्येत्यादिः। ननु 'अन्यत्र विकरणेभ्यः' इत्युक्तेः कथमिदमित्यत आह—**अन्यत्रेति।** तत्र स्वयं दूषणान्तरमाह—**किञ्चेति।** नन्वेवं कैयटेनैवेदं कुतो नोक्तमित्यत आह—**कैयटेति। तस्य—**'वावृतु' इत्यस्य। वाशब्दस्य विकल्पार्थकत्वादित्याशयः। **नन्वेवं** 'ततो वावृत्यमाना सा रामशालां न्यविक्षते'ति भट्टिप्रयोगानुपपत्तिरिति चेन्न, तत्र वाशब्दस्यैवार्थकतया

कामयमानेव न तु तथा, किन्तु छलनार्थमागतेत्यर्थः। अनुबन्धवदिति—मतुबन्तेनापवादशब्दस्य समासः।

( स्थानिवत्त्वप्राप्तदूषणनिराकरणाधिकरणम् )

( ३७५ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ तस्य दोषस्तयादेश उभयप्रतिषेधः ॥ * ॥

( भाष्यम् )

**तस्यैतस्य लक्षणस्य दोषः—तयादेश उभयप्रतिषेधो वक्तव्यः। उभये देवमनुष्याः। तयपो ग्रहणेन ग्रहणाद् जसि विभाषा प्राप्नोति ॥**

( तत्त्वालोकः ) **दोष इति**—अतिव्याप्तय इत्यर्थः। जानाविकवचनसत्त्वात्। अत एवाह—**तयादेशे इत्यादि।** अन्यथा 'उभये' इत्यत्र-अयचः स्थानिवत्त्वेन तयप्त्वात्, तयबन्तग्रहणेनोभयशब्दस्य ग्रहणात् 'प्रथमचरमतये'ति सूत्रेण जसि विभाषा सर्वनामसंज्ञा प्राप्नोतीत्याशयेनाह—**उभये इति।**

( आक्षेपनिराकरणसिद्धान्तिभाष्यम् )

**नैष दोषः। अयच् प्रत्ययान्तरम् ॥**

( तत्त्वालोकः ) **अयच् प्रत्ययान्तरमिति**—यतोऽत्रेत्यादिः। एव, न तु तयादेशः, 'उभादुदात्तः' इति सूत्रे तयपोऽननुवृत्तेरिति शेषः। **अयच् प्रत्ययान्तरमित्यादि**—**प्रत्याहारग्रहणेन ग्रहणमि**त्यन्त-ग्रन्थस्य विस्तृतव्याख्या 'नवेति विभाषे'ति सूत्रस्थभाष्यान्तर्गतप्रकृतग्रन्थव्याख्यैवावगन्तव्या।

( आक्षेपसाधकभाष्यम् )

**यदि प्रत्ययान्तरम्, उभयीति ईकारो न प्राप्नोति ॥**

( तत्त्वालोकः ) **प्रत्ययान्तरमिति**—तर्हीति शेषः। **ईकारः**—तयबन्तत्वात् 'टिड्ढाणञि'त्यनेन ङीप्।

( आक्षेपबाधकभाष्यम् )

**मा भूदेवम्। मात्रच इत्येवं भविष्यति ॥**

**कथम् ?**

**मात्रजिति नेदं प्रत्ययग्रहणम् ॥**

**किं तर्हि ?।**

**प्रत्याहारग्रहणम् ॥**

**क सन्निविष्टानां प्रत्याहारः ?।**

**मात्रशब्दात्प्रभृति आ अयचश्चकारात् ॥**

( तत्त्वालोकः ) **एवम्**—तयबन्तत्वात्। **मात्रचः**—मात्रजन्तत्वात्। **मात्रजितीति**—यत इत्यादिः। **मात्रशब्दादिति**—एवञ्च ङीब्विधौ तयपो ग्रहणं गोबलीवर्दन्यायेन स्पष्टार्थमेवेति बोध्यम्।

( आक्षेपसाधकभाष्यम् )

**यदि प्रत्याहारग्रहणम्, 'कति तिष्ठन्ति' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **कति तिष्ठन्तीति।** परिहारान्तरसद्भावाद् **न षट्स्वस्रादिभ्य** इति प्रतिषेधोऽत्र नोक्तः॥

( तत्त्वालोकः ) भाष्ये—**कतीति**—तर्हीत्यादिः। **प्राप्नोतीति**—'टिड्ढाणञि'त्यनेन ङीबित्यादिः। एवमग्रेऽपि।

( आक्षेपबाधकभाष्यम् )

**अत इति वर्तते ॥**

( तत्त्वालोकः ) अत इतीति—नैष दोषः, यतः 'अजाद्यतः' इति सूत्रात् 'टिड्ढाणञि'ति सूत्रे इत्यादिः **वर्तते**—अनुवर्तते।

( आक्षेपसाधकभाष्यम् )

**एवमपि 'तैलमात्रा घृतमात्रा' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **तैलमात्रेति।** चकारस्य समाहारार्थस्योपादानात्तस्याऽविशेषकत्वाद् मात्रशब्दमात्रग्रहणप्रसङ्गः।

( तत्त्वालोकः ) प्रदीपे—**मात्रशब्दमात्रेति**—सकलमात्रशब्देत्यर्थः।

( आक्षेपबाधकभाष्यम् )

**सदृशस्याप्यसंनिविष्टस्य न भवति प्रत्याहारग्रहणेन ग्रहणम् ॥**

( प्रदीपः ) **सदृशस्येति।** प्रत्ययानुकरणं मात्रशब्द इति प्रातिपदिकस्याग्रहणमित्यर्थः॥

( उद्द्योतः ) **प्रत्ययानुकरणमिति।** टिड्ढाणञ्सूत्रे साहचर्यादिति भावः॥

( तत्त्वालोकः ) भाष्ये—**सदृशस्यापीति**—नैष दोषः, यत इत्यादिः।

( ३७६ आक्षेपवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ जात्याख्यायां वचनादेशे स्थानिवद्भावप्रतिषेधः ॥ * ॥

( भाष्यम् )

**जात्याख्यायां वचनादेशे स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः। व्रीहिभ्य आगत इत्यत्र 'घेर्ङिति' इति गुणः प्राप्नोति ॥**

( प्रदीपः ) **जात्याख्यायामिति।** एकस्मिन् यत् प्राप्तमेकवचनं तस्य प्रसङ्गे बहुवचनमादेश इति कल्पनाऽऽश्रयेण दोषोपन्यासः॥

( उद्द्योतः ) नन्वेकस्मिन् बहुवचनमित्युक्त्या षष्ठ्यभावात्कथमादेशत्वमत आह—**एकस्मिन्निति॥**

( तत्त्वालोकः ) भाष्ये—'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामि'ति सूत्रमभिप्रेत्याह—**जात्याख्यायामिति। व्रीहिभ्य आगत इत्यत्रेति**—अन्यथेत्यादिः। भ्यसः स्थानिवत्त्वेन ङसित्वादिति शेषः।

( आक्षेपनिरासभाष्यम् )

**नैष दोषः। उक्तमेतत्—* अर्थातिदेशात्सिद्धम् * इति ॥**

( उद्द्योतः ) भाष्ये—**अर्थातीति।** बहुवचनशब्दो न प्रत्ययपरः, किं त्वर्थपर इति भावः॥

( तत्त्वालोकः ) भाष्ये—**उक्तमेतदिति**—यत इत्यादिः।

उद्द्योते-'जात्याख्यायामि'ति सूत्रे एकशब्दस्यार्थपरस्यैव स्थितत्वादाह—**बहुवचनशब्द इति । किन्त्विति—**बहूनां वचनं प्रतिपादनमिति व्युत्पत्त्येति शेषः । तथाच—एकोऽप्यर्थो वा बहुवद्भवतीति तद्व्याख्यानं सङ्गच्छते इत्याशयः ।

( ३७७ आक्षेपवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ ङ्याब्ग्रहणेऽदीर्घः ॥ * ॥

( भाष्यम् )

**ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदिति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ॥**

**निष्कौशाम्बिः । अतिखट्वः । ङ्याब्ग्रहणेन ग्रहणात्सुलोपो मा भूदिति ॥**

**( उद्द्योतः ) ङ्याब्ग्रहणे अदीर्घ इति** भाष्ये । ननु गङ्गाया इगेङ्गिः, गङ्गीयतेः क्विपि गङ्गीरित्यादौ स्थानिवत्त्वनिषेधो न स्यात् । न च तत्र स्थानिवत्त्वे इष्टापत्तिरस्तु सुलोपश्चास्त्विति वाच्यम् । आकारैकारप्रश्लेषमादायैतत्प्रत्याख्यानपरभाष्यविरोधात् । सूत्रमतेऽपि नात्र लोपः, प्रत्यासत्त्या ङ्याप्पदोपस्थितेकाराकारयोरेव दीर्घग्रहणेन ग्रहणादिति चेन्न । तेषामनभिधानात् । नन्वेदं विशेषणं व्यर्थं, खट्वा इत्यादौ सवर्णदीर्घे परत्वेन परादिवद्भावप्राप्त्या स्थानिवत्त्वस्यैवाभावदिति वाच्यम् । **न स्थानिवदि**त्यस्य स्थानिकार्यं न लभते इत्यर्थे येन केनापि प्राप्तस्य स्थानिकार्यस्य निषेध इति दीर्घेप्याप्त्वप्रयुक्तकार्याभावशङ्कावारणार्थं तत् ॥ **ह्रस्व** इति नोक्तम्, चित्रायां जातश्चित्र इत्यादौ जातार्थलुकि टापो लुक्यपि प्रत्ययलक्षणेन हल्ङ्यादिलोपापत्तेः॥ मम तु लुकोपि दीर्घभिन्नत्वात्तत्रापि न स्थानिप्रयुक्तकार्यातिदेश इति दिक् ॥ **अतिखट्व इति ।** न चात्र ह्रस्व आकारस्येति तद्गतमात्वमल्विधिरिति वाच्यम् । **गोस्त्रियो**रित्यस्य स्त्रीप्रत्ययान्तान्तप्रातिपदिकान्त्यस्य ह्रस्व इत्यर्थः । **अचश्चे**ति तु नोपतिष्ठते, अनियमाप्रसक्तेः । स्त्रीप्रत्ययत्वं च टाबीत्यादिविशिष्टनिष्ठमिति न दोषः । सूत्रोपात्तस्यैव स्थानितावच्छेदकत्वमित्युक्तम् । अत एव **गोटाङ्ग्रहणं कर्तव्य**मिति वार्तिककृतोक्तम् । स्वरितत्वबलात् **स्त्रिया**मिति प्रकृत्य ये विहितास्तेषां ग्रहणमिति भाष्यकृतोक्तम् । विधानं चानुबन्धविशिष्टस्यैवेति स्पष्टमेवेति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**ङ्याब्ग्रहणेऽदीर्घ इति—**ङ्याप्स्थानिको दीर्घभिन्न इत्यर्थः । **ग्रहणादिति—**ह्रस्वस्येत्यादिः ।

उद्द्योते—'अदीर्घः' इत्यंशे शङ्कते—**नन्विति ।** एवमिति शेषः । **इः—**कामः । **एतदिति—**वार्तिकेति शेषः । ननु भाष्यकारमते तत्र स्थानिवत्त्वापत्तेरनिष्टत्वेऽपि सूत्रकारमते इष्टत्वमस्त्वित्यत आह—**सूत्रेति ।** सूत्रकारेत्यर्थः । **अत्र—**गङ्गेरित्यादौ । एतत्प्रत्याख्यानपरभाष्यानुरोधेनाह—**प्रत्यासत्त्येति ।** अन्यथा भाष्यकारसूत्रकारमतयोः फलभेदापत्तेरेतत्प्रत्याख्यानं न सङ्गच्छेत, 'फलैक्ये प्रत्याख्यानं सम्भवति, न तु फलभेदे' इति नियमादिति भावः । **तेषामिति—**गङ्गेरित्यादीनामित्यर्थः । तथाच-वार्तिककारमतेऽपि न दोष इत्याशयः । **इदम्—**अदीर्घ इति । **न स्थानीति—**यत इत्यादिः । **येन केनापीति**—परादिवत्त्वेनापीत्यर्थः । तस्येष्टत्वादाह—**शङ्केति । तत्—**अदीर्घ इति विशेषणम् । **जातार्थेति—**जातार्थकप्रत्ययेत्यर्थः । **मम त्विति—**ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदित्यर्थकप्रकृतवार्तिकवादिन इत्यादिः । **गोस्त्रियोरित्यस्येति—**यत इत्यादिः । 'प्रत्ययग्रहणे०' 'येन विधिः०' इति क्रमिकतदन्तविधिद्वयेन, 'अलोऽन्त्यस्ये'त्यनेन चेति शेषः । **सूत्रोपात्तस्यैवेति—**यत इत्यादिः । अत्र क्रमशो वार्तिककारभाष्यकारयोः सम्मतिमाह—**अत एवेति ।** तस्य तत्त्वादेवेत्यर्थः । **टाङिति—**अयं प्रत्याहारः, टाब्घटकटाप्यङ्घटकङकाराभ्याम् । **तेषामिति—**तेन क्त क्तिन्नादेर्न ग्रहणमित्याशयः । **उक्तमिति—**'गोटाङ्ग्रहणमि'ति वार्तिकप्रत्याख्यानायेति शेषः । नन्वेतावता प्रकृते किमित्यत आह—**विधानञ्चेति ।**

( आक्षेपबाधकभाष्यम् )

**ननु च दीर्घादित्युच्यते ॥**

**( तत्त्वालोकः ) ननु चेति—**'हल्ङ्याबि'ति सूत्रे इति शेषः ॥ तथाच—निष्कौशाम्बिरित्यादौ ह्रस्वस्य स्थानिवत्त्वाद् ङ्याब्ग्रहणेन ग्रहणेऽपि दीर्घत्वाभावात् सुलोपस्याप्राप्तेः प्रकृतवार्तिकं निष्प्रयोजनमिति भावः ।

( आक्षेपसाधकलाघवभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

**( तत्त्वालोकः ) तन्नेति—**दीर्घादिति, नेत्यर्थः । एतद्वार्तिककरणे तत्रेत्यादिः ॥ एवञ्च—लाघवसत्त्वात्प्रकृतवार्तिकं सप्रयोजनमित्याशयः ।

( तटस्थाक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ।**

**( तत्त्वालोकः )** यथैतद्वार्तिककरणे तत्र दीर्घादित्यस्यावक्तव्यत्वाल्लाघवम्, तथा तत्र दीर्घादिति कथने प्रकृतवार्तिकस्याकर्तव्यत्वाल्लाघवमिति पक्षद्वयस्य साम्यात् पृच्छति—**किं पुनरिति । अत्र—**अनयोः ।

( तटस्थाक्षेपसमाधानभाष्यम् )

**स्थानिवद्भावप्रतिषेध एव ज्यायान् । इदमपि सिद्धं भवति—अतिखट्वाय, अतिमालाय । 'याडापः' इति याड् न भवति ॥**

**( उद्द्योतः ) अतिखट्वायेति ।** न चाबन्तादङ्गात्परस्य याडिति तदर्थः, उपसर्जनस्त्रीप्रत्यये च तदादिनियमाद् नैतदङ्गमाबन्तमिति स्थानिवत्त्वेऽपि न याट्प्रवृत्तिरिति वाच्यम् । प्रत्ययग्रहणपरिभाषयाऽऽबन्तग्रहणे तेन चाङ्गविशेषणे आबन्तान्तं यदङ्गमित्यर्थान्न दोषः । अत एवार्धखट्वायामित्यादौ याट्सिद्धिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**स्थानिवदिति—**ङ्याप्स्थानिकस्य दीर्घभिन्नादेशस्येत्यादिः । तस्य ज्यायस्त्वप्रयोजकम् अनन्यथासिद्धं प्रयोजनमाह—**इदमपीति ।** यतस्तथा सतीत्यादिः । **याडाप इति—**यत इत्यादिः ।

उद्द्योते—**तदर्थः—**'याडापः' इति सूत्रार्थः । **एतदिति—**अतिखट्वेतीत्यर्थः । यच्चाबन्तं खट्वेति, न तदङ्गमित्याशयः । **प्रत्ययेति—**यत इत्यादिः ॥ **अर्थादिति—**तदर्थादित्यर्थः । स्थानिवत्त्वे चातिखट्वस्याबन्तान्ताङ्गत्वादिति शेषः ।

( आक्षेपभाष्यम् )

**अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे कृते पित्वासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति ? ।**

**( प्रदीपः ) भूतपूर्वं इति ।** अनुबन्धकार्ये सर्वत्र भूतपूर्वगत्या-श्रयणात् । आ इति च रूपसद्भावात् ॥

**( तत्त्वालोकः )** भाष्ये—**इदानीमिति—**प्रकृतवार्त्तिककरणे इत्यर्थः । अतिखट्वायेत्यादाविति शेषः ।

**( समाधानभाष्यम् )**

**लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ।**

**( प्रदीपः ) लक्षणेति ।** अत्र चान्तरा ह्रस्वे कृते स एवायमिति बुद्धेर्विच्छेदः ॥

**( उद्द्योतः )** नन्वेवमपि दीर्घे कृते स्थानिवद्भावेनाप्त्वं स्यादेव, अयं निषेधस्तु न दीर्घत्वादत आह—**अत्र चेति ।** एवं च स्थानिवद्भावेन तदलाभस्तत्स्थानिन्यसत्त्वादिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**स एवायम्—**आप् एवायम् ।

उद्द्योते—**एवमपि—**अतिखट्वायेत्यादावुक्तरीत्या प्राप्तस्य याटो लक्षणप्रतिपदोक्तपरिभाषया वारणेऽपि । **अयमिति—**प्रकृतवार्त्तिक-सत्त्वप्रयुक्त इत्यर्थः । स्थानिवत्त्वस्येति शेषः । **तदलाभः—**आप्त्वा-लाभः । **तत्स्थानिनीति—**आब्रूपस्थानिनीत्यर्थः । दीर्घस्येति शेषः । दीर्घे कृते स्थानिवत्त्वप्रवृत्तौ मानाभावात्फलाभावाच्चेत्याशयः ।

**( आक्षेपभाष्यम् )**

**ननु चेदानीं सत्यपि स्थानिवद्भावे एतया परि-भाषया शक्यमिहोपस्थातुम् ॥**

**( उद्द्योतः )** भाष्ये **ननु चेदानीमिति ।** वार्त्तिकाकरणे इत्यर्थः ॥ **सत्यपीति ।** निष्कौशाम्बिरित्यादौ ॥

**( तत्त्वालोकः )**भाष्ये—**एतया—**लक्षणप्रतिपदोक्तयोरित्यादि-रूपया । एवञ्च—ङ्याब्ग्रहणेनं ह्रस्वस्याग्रहणात् सुलोपाद्यप्राप्तेः प्रकृतवार्त्तिकस्य न तद्वारणरूपं प्रयोजनमिति भावः ।

उद्द्योते—**वार्त्तिकेति—**'ङ्याब्ग्रहणेऽदीर्घः' इति वार्त्तिकेत्यर्थः ।

**( समाधानभाष्यम् )**

**नेत्याह । न तर्हीदानीं क्वचिदपि स्थानिवद्भावः स्यात् ॥**

**( तत्त्वालोकः )** तटस्थ उत्तरमनुवदति—**नेत्याहेति ।** सिद्धा-न्तीति शेषः । **न तर्हीति—**यत इत्यादिः । **स्थानिवद्भाव इति—**सफल इति शेषः ।

**( तृतीयाक्षेपभाष्यम् )**

**तत्तर्हि वक्तव्यम् ॥**

**( तत्त्वालोकः )** तत्—**'ङ्याब्ग्रहणेऽदीर्घः'** इति वार्त्तिकम् ।

**( समाधानभाष्यम् )**

**न वक्तव्यम् ॥ प्रश्लिष्टनिर्देशात्सिद्धम् ॥ प्रश्लि-ष्टनिर्देशोऽयम्—ङी ई ईकारान्तात्, आ आप् आका-रान्तादिति ॥**

**( उद्द्योतः ) प्रश्लिष्टनिर्देशादिति ।** अतिखट्वायेत्यादौ आका-रस्य लाक्षणिकत्वादेव न दोषः । खट्वायै इत्यादौ तु न दोषो यतो लक्षणप्रवृत्तिं विना यद्रूपासंभवस्तदेव लाक्षणिकं परिभाषाया निषेधविषयः । न चेह तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादि-त्याहुः ॥ अयं च प्रश्लेषो **'याडापः' 'आङि चापः' 'औङ आपः'** 'ङेराम्नद्याम्' 'हल्ङ्याब्' इत्येतेषु ॥ ह्रस्वनद्याप इत्यत्र तु प्रश्लेषे न मानमिति दिक् । ननु भाष्यमते सूत्रमते च अतिखट्वस्य भा- अतिखट्वा इत्यत्र सुलोपो भवति । वार्तिकमते तु न, अतिखट्वे आबन्तत्वस्य विच्छेदात्तत्र प्रयोगासंभव इति चेन्न । अस्मिन्मतेऽनेन प्रयोगाणामभावात् । यद्वा स्थानिवद्भावस्य कार्यान्तरेणातिखट्वशब्दे आकारप्रश्लेषे फलाभावात्तदप्रवृत्तौ स्थानिवद्भावानुबुद्धेरभावात्तदादेशे तदारोहः सूत्रमते भाष्यमते च दुर्लभः, एतन्मते कार्यनाशाद्याद्य-स्थानिवत्त्वप्रवृत्तौ मानाभावात् । यत्तु वार्तिकमते कौशाम्ब्या भाष्या-दिमतेऽपि ईकारप्रश्लेषान्तरेण लोपाभाव एव वाच्यः । एकप्रश्ले-षेणैवातिखट्वस्याप्तौ सिद्धायां दीर्घग्रहणं सूत्रमते, भाष्यमते तत्प्र-त्याख्यानाय कृतप्रश्लेषान्तरं च निरर्थकम्—न कदाचिद् रूपान्तरं प्राप्तौ यौ ङ्यापाविति, एवं च न दोष इति । तन्न । मानाभावात् । किं च अतिखट्वायेत्येव वार्तिकप्रयोजनं प्रदर्श्याकारप्रश्लेषेण हि तत्प्रत्याख्यातं भाष्ये ॥

**(तत्त्वालोकः)** भाष्ये—**प्रश्लिष्टेति**-यत इत्यादिः । एवमग्रेऽपि ।

उद्द्योते—भाष्याशयमाह—**अतीति । न दोषः—**न याडा-पत्तिः । नन्वेवं खट्वायै इत्यादावपि दीर्घैकादेशेन निष्पन्नस्याऽऽकारस्य लाक्षणिकत्वाद् याट्नोपपद्येत, तद्विधायकसूत्रन्तु निशायै इत्यादौ चरितार्थमित्यत आह—**खट्वायै इति । न दोषः—**न याडनुपपत्तिः। **लाक्षणिकमिति—**रूपमिति शेषः । **परिभाषायाः—**लक्षणप्रति-पदोक्तपरिभाषायाः । **एकादेशतः—**दीर्घैकादेशतः । **आहुरिति—**भाष्यतत्त्वविद इति शेषः । यद्यपि प्रकृतसूत्र—**याडाप—**इति सूत्र-भाष्याभ्यां 'हल्ङ्याब्-' 'याडापः' इति सूत्रयोरेवायं प्रश्लेषो लभ्यते, तथापि भाष्यमिदमुपलक्षणमन्यत्रापि तस्येत्याशयेनाह—**अयञ्चेति ।** ह्रस्वे जातेऽपि ह्रस्वग्रहणेनैव सुट्प्राप्तेरिष्टत्वात् प्रश्लेषस्य प्रयोजना-भाव इत्यभिमानेनाह—**ह्रस्वेति । विच्छेदादिति—**प्रागुक्तरीत्ये-त्याशयः । येषु प्रयोगेषु सूत्रवार्त्तिकभाष्याणां मते फलभेदस्तेषां सर्वेषां प्रयोगाणामनभिधानमित्याशयेनाह—**अनभिधानेनेति ।** इदं समाधानम्-तत्र तेषां मते फलभेदमभ्युपेत्य, वस्तुतस्तु स एव नेत्याह—**यद्वेति । अतिखट्वशब्दे इति—**अस्य 'फलाभावादि'-त्यत्रान्वयः । **तदप्रवृत्तौ—**स्थानिवद्भावाप्रवृत्तौ । **तदारोहः—**आप्त्वा-रोहः । शब्दकौस्तुभकारायुक्तिं खण्डयति—**यत्त्विति ।** भाष्यानुक्त-मप्याह—**किञ्चेति । वार्त्तिकेति—**प्रकृतेत्यादिः । **तत्—**प्रकृत-वार्त्तिकम् ।

**( ३७८ आक्षेपवार्तिकम् ॥ २१ ॥ )**

## ॥ * ॥ आहिभुवोरीट्प्रतिषेधः ॥ * ॥

**( भाष्यम् )**

**आहिभुवोरीट्प्रतिषेधो वक्तव्यः । आत्थ, अभूत् । अस्तिग्रहणेन ग्रहणादीट् प्राप्नोति ।**

**( उद्द्योतः )** भाष्ये—**आहिभुवोरिति । 'भुव ईट्' 'अस्ति-सिचोऽपृक्ते'** इत्याभ्यां प्राप्तः ॥

**( तत्त्वालोकः )** भाष्ये—**आत्थ, अभूदिति—**अन्यथेत्यादिः । इत्यादावाहिभुवोः स्थानिवत्त्वादिति शेषः ॥

**( आद्यांशे आक्षेपनिराकरणभाष्यम् )**

**आहेस्तावन्न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति—नाहेरीड् भवतीति । यदयम्—'आहस्थः' इति झला-दिप्रकरणे थत्वं शास्ति ॥**

(तत्त्वालोकः) आचार्येति—यत इत्यादिः। अयम्—आचार्यः। झलादिप्रकरणे—झलादौ परे। यद्यत्रेट् स्यात्तर्हि तेन झलादौ परे थविधानं व्यर्थं स्याद्, इटि कृतेऽस्य झलादिपरत्वासम्भवादिति भावः।

(ज्ञापकबाधकभाष्यम्)

नैतदस्ति ज्ञापकम्। अस्ति ह्यन्यदेतस्य वचने प्रयोजनम्॥

किम्?।

भूतपूर्वगतिर्यथा विज्ञायेत-झलादिर्यो भूतपूर्व इति॥

(प्रदीपः) झलादिरिति। णलादिषु थलेव भूतपूर्वो झलादिरिति भावः॥

(तत्त्वालोकः) भाष्ये—ननु कृतेऽपीटि भूतपूर्वगत्या झलादित्वादस्य झलादिपरत्वसम्भवात्थकारोऽस्त्वित्याशयेनाह-नैतदस्तीति। प्रदीपे—अनतिप्रसङ्गायाह—णलादिष्विति।

(ज्ञापकसमाधानभाष्यम्)

यद्येवं थवचनमनर्थकं स्यात्। आथिमेवायमुच्चारयेत्—'ब्रुवः पञ्चानामादित आथो ब्रुवः' इति॥

(प्रदीपः) आथिमिति। तिबादयो हि सर्वे झलादय इति णलादयो भूतपूर्वा झलादय इति भावः॥

(तत्त्वालोकः) भाष्ये—यदि भूतपूर्वगत्या झलादित्वादस्य झलादिपरत्वमाश्रित्य थकारो विधीयेत, तर्हि पञ्चस्वपि परेषु स प्रसज्येतेत्याशयेनाह—यद्येवमिति। तर्हि पृथगिति शेषः। आथिमिति-यत इत्यादिः॥ तस्माद् 'आहस्थः' इत्यनेन 'नाहेरीड् भवती'ति ज्ञापनाद् आहेः स्थानिवत्त्वेऽपि तत्परस्येटोऽप्राप्तेस्तत्प्रतिषेधो न वक्तव्य इति स्थितम्।

(भ्वंशेऽप्याक्षेपनिराकरणभाष्यम्)

भवतेश्चापि न वक्तव्यः। 'अस्तिस् सिचोऽपृक्ते' इति द्विसकारको निर्देशः। अस्तेः सकारान्तादिति।

(उद्द्योतः) द्विसकारको निर्देश इति। अस्तिस्सिच इति सूत्रपाठ इति भावः॥ प्रकारान्तरे तु आदेशैरपहारात् सद्द्योच्चारणाभावेन निर्देश इति भाष्यास्वारस्यम्। अत एव वार्तिककृता सिज्लुकः स्थानिवत्त्वस्य प्रत्ययलक्षणस्य वा प्रतिषेधो नारब्धः, सकारस्य सिज्विशेषणत्वमित्याशयेन। तद्विशेषणसामर्थ्यात् श्रूयमाणसान्तपरमिति प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वेऽपि न दोषः। भाष्यकृता तु मध्यमणिन्यायेनोभयसंबन्धमङ्गीकृत्य भुवः स्थानिवत्त्वप्रतिषेधोऽपि प्रत्याख्यात इति बोध्यम्॥

(तत्त्वालोकः) भाष्ये—अस्तिसिति—यत इत्यादिः। तथाच—भुवः स्थानिवत्त्वेऽपि सकारान्तत्वाभावात्तत्परस्येटोऽप्राप्तेस्तत्प्रतिषेधोऽपि न वक्तव्य इति भावः।

उद्द्योते—प्रकारान्तरे—'अस्तिसिचः' इत्यस्मादग्रे स् इति लुप्तविभक्तिकमुभयविशेषणम्, तस्य च संयोगान्तलोप इति दण्ड्याद्युक्तप्रकारान्तरे॥ अत्र मानमाह—अत एवेति। अस्यार्थमाह—सकारस्येति। ननु प्रत्ययलक्षणसूत्रस्य नियमार्थत्वे दोषाभावेऽपि तस्य विध्यर्थत्वे दोष एवेत्यत आह—तदिति। न दोषः—नेडापत्तिः। सिचो लुकि श्रूयमाणसान्तत्वाभावादिति भावः। उभयेति—सकारस्येत्यादिः। केचित्तु-दण्ड्याद्युक्तप्रकारान्तरस्य समर्थनाय 'द्विसकारको निर्देशः' इति भाष्यस्य 'व्याख्यानगम्यद्विसकारकः' इत्येवार्थमभ्युपगच्छन्ति, न तु 'श्रूयमाणद्विसकारकः' इति। अन्ये तु-'अस्तिस्सिचोऽपृक्ते' इति न्यासं समर्थयितुं भाष्यस्थद्विपदस्यानेकोपलक्षणत्वं स्वीकुर्वन्ति।

(३७९ आक्षेपवार्तिकम्॥ २२॥)

॥*॥ वध्यादेशे वृद्धितत्त्वप्रतिषेधः ॥*॥

(भाष्यम्)

वध्यादेशे वृद्धितत्त्वयोः प्रतिषेधो वक्तव्यः। वधकं पुष्करमिति। स्थानिवद्भावाद् वृद्धितत्त्वे प्राप्नुतः॥

(तत्त्वालोकः) वध्यादेशे—हन्तेर्ण्वुलि 'बहुलन्तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थमि'ति वार्त्तिकेन संज्ञाछन्दसोर्हलन्तवधादेशे। वृद्धितत्त्वयोरिति—'अत उपधायाः' इति वृद्धि—'हनस्तोऽचिण्णलोः' इति तकारयोरित्यर्थः। कर्तव्ययोः स्थानिवत्त्वस्येति शेषः। वधकमिति—अन्यथेत्यादिः।

(आक्षेपनिराकरणभाष्यम्)

नैष दोषः। उक्तमेतत्-'नायं ण्वुल्, किन्तु अन्योऽयमकशब्दः किदौणादिको रुचक इति यथा'॥

(उद्द्योतः) नायं ण्वुलिति। यद्यपि वृद्धिर्वधस्यादन्तत्वेनापि वारयितुं शक्या, तथापि तत्त्वांशप्रत्याख्यानायेदमावश्यकमिति भावः॥

(तत्त्वालोकः) भाष्ये—उक्तमिति—यत इत्यादिः। अयम्—अकशब्दस्थानी। 'हनो वधचे'ति औणादिकः क्वुन्प्रत्यय इत्याह—अन्य इति। अकशब्दः—अकशब्दस्थानी। एवञ्चेह तयोर्न प्राप्तिः। उद्द्योते—वारयितुमिति—अल्लोपस्य 'अचः परस्मिन्नि'त्यनेन स्थानिवत्त्वात्तस्योपधात्वाभावात्, ञ्णित्परत्वाभावाच्चेति भावः।

(३८० आक्षेपवार्तिकम्॥ २३॥)

॥*॥ इड्विधिश्च ॥*॥

(भाष्यम्)

इड्विधेयः। आवधिषीष्ट। 'एकाच उपदेशेऽनुदात्तात्' इतीट्प्रतिषेधः प्राप्नोति॥

(उद्द्योतः) इड्विधिश्चेति। यथेड्विधिः सिध्यति तथा तन्निषेधे स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थः। इड्विधेय इत्यस्य तन्निषेधे स्थानिवत्त्वप्रतिषेधद्वारेति शेषः॥ आवधिषीष्टेति। आङो यमहन इत्यात्मनेपदम्॥ प्रतिषेधः प्राप्नोतीति। तत्र वधेः स्थानिवत्त्वेनाङ्गतया निषेधः प्राप्त इण्निषेधरूपे कार्ये स्थानिवत्त्वप्रतिषेधेनाङ्गत्वाभावान्नेत्यर्थः॥ वधेरपि सूत्रे स्थान्यनुरूपानुदात्तस्यैवोच्चारणेन अनुदात्तत्वं बोध्यम्॥

(तत्त्वालोकः) भाष्ये—आवधिषीष्टेति—अन्यथेत्यादिः। इत्यत्र वधेः स्थानिवत्त्वेनाङ्गत्वादिति शेषः।

उद्द्योते—ननु निषेधप्रकरणे 'इड्विधिश्चे'त्युक्तमित्यत आह—यथेति। आवधिषीष्टेत्यत्रेति शेषः। तन्निषेधे—'एकाच उपदेशेऽनुदात्तादि'तीण्निषेधे कर्तव्ये। एवमग्रेऽपि। स्थानिवत्त्वेति—वधेरित्यादिः॥ अस्य पर्यवसितार्थमाह—तत्रेति। आवधिषीष्टेत्यत्रेत्यर्थः। निषेधः—'एकाच' इतीण्निषेधः। ननु वधेः स्थानिवत्त्वेनाङ्गत्वेऽप्यनुदात्तत्वाभावादिण्निषेधो न प्राप्नोति। न च स्थानिवत्त्वेनानुदात्तत्व-

मपि, तत्रानल्विधाविति निषेधादित्यत आह—**वधेरपीति** । **सूत्रे**—'हनो वध' इति सूत्रे । स्थानेऽन्तरतमपरिभाषयेति भावः ।

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । आद्युदात्तनिपातनं करिष्यते । स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति ॥**

( **उद्द्योतः** ) **प्रकृतिस्वरस्य** । प्रकृतितः स्थान्यनुरूपतया प्राप्तस्यानुदात्तत्वस्य ।

( **तत्त्वालोकः** ) भाष्ये—**आद्युदात्तेति**—यत इत्यादिः । **सः**—स च । तथा च—वधेः स्थानिवत्त्वेनाङ्गत्वेऽप्यनुदात्तत्वाभावादिण्निषेधाप्राप्त्या तत्र कर्तव्ये स्थानिवत्त्वप्रतिषेधो न वक्तव्य इत्याशयः ।

( प्रत्याक्षेपभाष्यम् )

**एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि निपातनस्वरः प्रकृतिस्वरं बाधते, एवं प्रत्ययस्वरमपि बाधेत— आवधिषीष्टेति ॥**

( **प्रदीपः** ) **आवधिषीष्टेति** । यदा यच्छब्दप्रयोगः—यदावधिषीष्टेति [भवति, तदा] **तिङ्ङतिङ** इति निघातः प्राप्तो **निपातैर्यद्यदी**ति प्रतिषिद्धस्तदैतदुदाहरणम् । क्वचित्तु यदावधिषीष्टेति पाठः ॥

( **उद्द्योतः** ) **प्रत्ययस्वरम्** तत्प्रयुक्तनिघातम् ॥ नन्वत्रोदाहरणे **तिङ्ङतिङ** इति निघातेन भाव्यमत आह— **यदा यदिति** । यदेत्यस्य तदैतदुदाहरणमित्यनेनान्वयः ॥ मध्ये **भवति तदे** त्यपाठः ॥

( **तत्त्वालोकः** ) भाष्ये—**उपदेशिवदिति**—आद्युदात्तनिपातने इत्यादिः । **यथैवेति**—अन्यथेत्यादिः । **प्रकृतिस्वरम्**—प्रकृतितः स्थान्यनुरूपतया प्राप्तमनुदात्तत्वम् ॥ आर्धधातुके लिङि परे वधादेश **इति** ततः प्रागेव प्रत्ययस्य विधानात् प्रत्ययस्वरो वधादेशात्प्राक् प्राप्नोति, प्रकृतिस्वरश्च वधादेशकाले, निपातनस्वरस्तु वधादेशोत्तरमिति वस्तुस्थितिः । तथा च—यद्याद्युदात्तनिपातने उपदेशिवद्भावो नोच्यते, तर्हि पश्चात्कालिकत्वात् सतिशिष्टेन निपातनस्वरेण प्रकृतिस्वर इव प्रत्ययस्वरोऽपि बाध्येत । यदि च तत्र स उच्यते, तर्हि तु तेन प्रत्ययस्वर एव न बाध्यते । किन्तु—तत्रेडनिषेधाय आद्युदात्तनिपातनस्य, तत्रोपदेशिवद्भावस्य च करणे गौरवं भवतीति तयोः करणापेक्षया लाघवाद् इड्विधिप्रतिषेधे कर्तव्ये स्थानिवद्भावप्रतिषेध एव वक्तव्य इत्याशयः ॥

उद्द्योते—**निघातम्**—शेषनिघातम् । **भाव्यमिति**—एवञ्च नात्र शेषनिघातप्राप्तिरित्याशयः ।

( आक्षेपपरिहारभाष्यम् )

**नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्ति, अनवस्थितेषु प्रत्ययेषु । तत्रार्धधातुकसामान्ये वधिभावे कृते, सति शिष्टत्वात् प्रत्ययस्वरो भविष्यति ॥**

( **उद्द्योतः** ) भाष्ये **आर्धधातुकसामान्ये इति** । आर्धधातुक इतिवल्लिङीत्याद्यपि विषयसप्तम्येवेति भावः ॥ एवं चाद्युदात्तनिपातने उपदेशिवद्भावारम्भगौरवाभावेन उपदेशत्वावच्छेदेनानुदात्तत्वाभावात् स्थानिवद्भावेनाङ्गत्वे सत्यपि निषेधाप्राप्त्या तन्निषेधो न कार्य इति तात्पर्यम् ॥

( **तत्त्वालोकः** ) भाष्ये—**आर्धेति**—यत इत्यादिः । **सामान्येनेति**—अस्यैव व्याख्या—**अनवस्थितेष्विति** । **तत्र**—तथा सति । **कृते इति**—निपातनस्वरः प्रत्ययश्च, तत इति शेषः ।

उद्द्योते—तावतास्यनिर्वाहादाह—**आर्धेति** । **आदिना**—लुङः परिग्रहः । **एवञ्चेति**—आर्धधातुकादिविषये वधादेश इति प्रत्ययविधानात्पूर्वमेव वधादेशे प्रकृतिस्वरम्प्रबाध्य निपातनस्वरः, ततः प्रत्ययस्तत्स्वरश्चेति वस्तुस्थिताविति शेषः । 'एकाच उपदेशेऽनुदात्तादि'ति सूत्रे एकग्रहणेनोपदेशत्वावच्छेदेनानुदात्तत्वस्य लाभादाह—**उपदेशत्वेति** । स्थान्युपदेशेऽनुदात्तत्वेऽप्यादेशोपदेशे प्रकृतिस्वरं प्रबाध्य निपातनस्वरेणोदात्तत्वादित्यादिः । **निषेधेति**—इडित्यादिः । **तन्निषेधः**—तत्र कर्तव्ये स्थानिवत्त्वप्रतिषेधः ।

( २८१ आक्षेपवार्तिकम् ॥ २४ ॥ )

**॥*॥ आकारान्तान्नुक्पुक्प्रतिषेधः ।*॥**

( भाष्यम् )

**आकारान्तान्नुक्पुकोः प्रतिषेधो वक्तव्यः । विलापयति । भापयते । लीभीग्रहणेन ग्रहणान्नुक्पुकौ प्राप्नुतः ॥**

( **उद्द्योतः** ) आकारान्तादिति । विभाषा लीयतेः, **बिभेतेर्हेतुभये** इत्यात्वम् । लीलोर्नुग्लुकावति, **भियो हेतुभये** इति च नुक्—पुकौ ॥

( **तत्त्वालोकः** ) भाष्ये— **नुक्पुकोरिति**—कर्तव्ययोः स्थानिवत्त्वस्येति शेषः । **विलापयति, भापयते इति**—अन्यथेत्यादिः । इत्यादावाकारान्तयोः स्थानिवत्त्वादिति शेषः ।

उद्द्योते—**इत्यात्वम्**—इत्याभ्यामात्वम् ।

( आक्षेपपरिहारभाष्यम् )

**[ नैष दोषः ] लीभियोः प्रश्लिष्टनिर्देशात्सिद्धम् ॥ लीभियोः प्रश्लिष्टनिर्देशोऽयम्—ली ई ईकारान्तस्य भी ई ईकारान्तस्य चेति ॥**

( **उद्द्योतः** ) **प्रश्लिष्टनिर्देशादिति** । यद्यपि **भिय** इत्यत्र प्रश्लेषे एकादेशस्य **कृदतिङ्**सूत्रभाष्योक्तरीत्या पूर्वधर्मावच्छिन्नोद्देश्यके इयङ्विधौ **अचः परस्मिन्निति** स्थानिवत्त्वेनेयङ् दुर्लभः, तथापि सौत्रत्वात्स इति बोध्यम् । **'क्षियो निष्ठायाम्'** इति दीर्घविधाविवेति दिक् ॥

( **तत्त्वालोकः** ) भाष्ये— **नैष दोष इति**—अयम्पाठो यद्यपि क्वचित्पुस्तके नास्ति, तथापि **पूर्वोत्तरग्रन्थसंवादाद्युक्तः** प्रतिभातीति स्थापितः । **लीभियोरिति**—यत इत्यादिः । एवमग्रेऽपि ।

उद्द्योते—**भाष्योक्तरीत्या**—तत्र—अतिङ्पदाभावे पचतीत्यादौ **'ह्रस्वस्य पिती'**ति तुकमापाद्य तत्र धातोरित्यनुवृत्त्या संखण्ड्य चिकीर्षतीत्यत्रापाद्य शपा व्यवधानस्यैकादेशेनाभावमुक्त्वा 'एकादेशः पूर्वविधौ स्थानिवदिति व्यवधानमेवे'त्युक्तम् , तद्रीत्या । नन्वत्र **पूर्वत्वेन** दृष्टस्य न विधिरित्यत आह—**पूर्वेति** । **सः**—इयङ् । तत्र दृष्टान्तमाह—**क्षिय इति** । अन्यथा क्षिधातोर्ङस्वान्तत्वाद् घिसंज्ञायां गुणे क्षेरिति रूपं प्राप्नोतीति भावः ।

( २८२ आक्षेपवार्तिकम् ॥ २५ ॥ )

**॥ * ॥ लोडादेशे शाभावजभावधित्वहिलोपैत्वप्रतिषेधः ॥ * ॥**

( भाष्यम् )

**एषां लोडादेशे प्रतिषेधो वक्तव्यः ॥ शिष्टात् ।**

हतात् । भिन्तात् । कुरुतात् । स्तात् । लोडादेशे कृते शाभावो जभावो धित्वं हिलोप एत्त्वमित्येते विधयः प्राप्नुवन्ति ॥

( उद्द्योतः ) शाभावेत्यादि । शा हौ, हन्तेर्जः, हुझल्भ्यो हेर्धिः, उतश्च प्रत्ययाद् , ध्वसोरेद्धावित्येतैः ॥

( तत्त्वालोकः ) भाष्ये—**एषाम्**—शाभावादीनाम् । **लोडादेशे**—तातङि । **शिष्टात्,''''स्तादिति**—अन्यथेत्यादिः । इत्यत्रेति शेषः । **शाभाव इति**—तस्य स्थानिवत्त्वाद् हिग्रहणेन ग्रहणादित्यादिः ।

उद्द्योते—**इत्येतैरिति**—'प्राप्तानां शाभावादीनां प्रतिषेध इत्यर्थः' इति शेषः ।

( आक्षेपपरिहारभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्—लोडादेशः क्रियताम् , एते विधय इति । किमत्र कर्तव्यम् ? ।

परत्वाल्लोडादेशः ॥

( उद्द्योतः ) **परत्वादिति** । युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्याभावरूपासंभवस्य सत्त्वात् । तादृशासंभव एव च **विप्रतिषेध**शास्त्रप्रवृत्त्युपयोगी । स्थानिवद्भावस्तु कार्यप्रवृत्त्युत्तरम् , न प्रवृत्तिकाले इति युगपदसंभवः स्पष्ट एवेति भावः ॥ एवमग्रेऽपि ॥

( तत्त्वालोकः ) भाष्ये—**इदमिति**—यत इत्यादिः । एवमग्रेऽपि । **एते इति**—अथवेत्यादिः ।

उद्द्योते—**तादृशासम्भवः**—एकत्र द्वयोः कार्ययोर्यौगपद्येन प्रवृत्त्यसम्भवः । **एवेन**—एकस्य द्विकार्ययोगत्वव्यवच्छेदः । ननु तातङः स्थानिवत्त्वादस्त्येव तत्तदानन्तर्यमपीत्यत आह—**स्थानिवदिति** ।

( आक्षेपभाष्यम् )

अथेदानीं लोडादेशे कृते पुनःप्रसङ्गविज्ञानात् कस्मादेते विधयो न भवन्ति ? ॥

( तत्त्वालोकः ) **इदानीम्**—प्रकृतवार्तिकाकरणे । एवमग्रेऽपि । **कृते इति**—तस्य स्थानिवत्त्वाद् हिग्रहणेन ग्रहणादिति शेषः ।

( आक्षेपबाधकभाष्यम् )

'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति कृत्वा ॥

( ३८३ आक्षेपवार्तिकम् ॥ २६ ॥ )

॥ ❀ ॥ त्रयादेशे स्रन्तप्रतिषेधः ॥ ❀ ॥

( भाष्यम् )

त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्यः । 'तिसृणाम्' तिसृभावे कृते 'त्रेस्त्रयः' इति त्रयादेशः प्राप्नोति ।

( तत्त्वालोकः ) **तिसृणामिति**—अन्यथेत्यादिः । इत्यत्रेति शेषः । **कृते इति**—तस्य स्थानिवत्त्वात् त्रिग्रहणेन ग्रहणादिति शेषः ।

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्—तिसृभावः क्रियताम् , त्रयादेश इति । किमत्र कर्तव्यम् ? । परत्वात्तिसृभावः ॥

( उद्द्योतः ) **परत्वात्तिसृभाव इति** । न च लिङ्गविशेषविभक्तिसंज्ञापेक्षतिस्रपेक्षया प्रत्ययविशेषापेक्षस्याप्यन्तरङ्गत्वात्त्रयादेशापत्तिः । किञ्च स्वरूपेणोपादाने विशेषापेक्षत्वकृतबहिरङ्गत्वं नेत्यर्थस्य **पादःपदिति** सूत्रे भाष्ये ध्वनितत्वेन सर्वथा त्रयादेशस्यान्तरङ्गत्वमिति वाच्यम् । अर्थसंज्ञाकृतबहिरङ्गत्वस्य शास्त्रेऽनाश्रयणात् । एतेन चतस्र इत्यपि व्याख्यातमिति दिक् ॥

( तत्त्वालोकः ) भाष्ये—**क्रियतामिति**—अथवेति शेषः ।

उद्द्योते—'विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गमि'त्यस्य खण्डितत्वादाह—**प्रत्ययविशेषापेक्षस्यापीति** । त्रयादेशस्येति शेषः । तत्र युक्त्यन्तरमाह—**किञ्चेति** । **भाष्ये इति**—अरुदितामित्यादौ 'परत्वादिडि'त्युक्त्वा 'अन्तरङ्गास्तान्तन्तामः' इत्युक्त्येति शेषः । **अर्थसंज्ञेति**—अर्थसंज्ञोभयेत्यर्थः ।

( आक्षेपभाष्यम् )

अथेदानीं तिसृभावे कृते पुनःप्रसङ्गविज्ञानात् त्रयादेशः कस्मान्न भवति ? ।

( तत्त्वालोकः ) **पुनरिति**—तस्य स्थानिवत्त्वात् त्रिग्रहणेन ग्रहणादित्यादिः ।

( समाधानभाष्यम् )

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥

( ३८४ आक्षेपवार्तिकम् ॥ २७ ॥ )

॥ ❀ ॥ आम्विधौ च ॥ ❀ ॥

( भाष्यम् )

आम्विधौ च स्रन्तस्य प्रतिषेधो वक्तव्यः । 'चतस्रस्तिष्ठन्ति' चतसृभावे कृते 'चतुरनडुहोरामुदात्तः' इत्याम् प्राप्नोति ॥

( तत्त्वालोकः ) **चतस्रस्तिष्ठन्तीति**—अन्यथेत्यादिः । इत्यत्रेति शेषः । **कृते इति**—तस्य स्थानिवत्त्वात् चतुर्ग्रहणेन ग्रहणादिति शेषः ।

( आक्षेपनिराकरणभाष्यम् )

नैष दोषः । इदमिह संप्रधार्यम्—चतसृभावः क्रियताम् , 'चतुरनडुहोरामुदात्तः' इत्यामिति । किमत्र कर्तव्यम् ? ॥ परत्वाच्चतसृभावः ॥

( तत्त्वालोकः ) **चतुरिति**—अथवेत्यादिः ।

( आक्षेपभाष्यम् )

अथेदानीं चतसृभावे कृते पुनःप्रसङ्गविज्ञानाद् आम् कस्मान्न भवति ?

( तत्त्वालोकः ) **पुनरिति**—तस्य स्थानिवत्त्वात् चतुर्ग्रहणेन ग्रहणादित्यादिः ।

( समाधानभाष्यम् )

सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ॥

( ३८५ आक्षेपवार्तिकम् ॥ २८ ॥ )

॥ ❀ ॥ स्वरे वस्वादेशे ॥ ❀ ॥

( भाष्यम् )

स्वरे वस्वादेशे प्रतिषेधो वक्तव्यः ॥ विदुषः पश्य ।

'शतुरनुमो नद्यजादी' अन्तोदात्तादित्येष स्वरः प्राप्नोति ॥

( उद्द्योतः ) विदुष इत्यत्र विदेः शतुर्वसुरिति शत्रादेशो वसुः । **शतुरनुम इत्यादि** । अनुम्यः शता तदन्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्तेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**स्वरे इति**—कर्तव्ये इति शेषः । **प्रतिषेध इति**—स्थानिवत्त्वस्येत्यादिः । **विदुषः पश्येति**—अन्वये-त्यादिः । इत्यत्र वसोः स्थानिवत्त्वात् शतृग्रहणेन ग्रहणादिति शेषः ॥ अत्र सूत्रे 'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इति सूत्राद् 'अन्तोदात्ता'दित्यस्यानुवृत्तिरिति सूचनायाह—**अन्तोदात्तादिति** । **एष स्वर इति**—उदात्तस्वर इत्यर्थः । शस इत्यादिः ।

उद्द्योते—**तदन्तादिति**—अन्तोदात्तादिति शेषः ।

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । 'अनुमः' इति प्रतिषेधो भविष्यति ॥**

( तत्त्वालोकः ) **नैष दोष इति**—यत इति शेषः ।

( अनुपपत्तिभाष्यम् )

**अनुम इत्युच्यते, न चात्र नुमं पश्यामः ॥**

( तत्त्वालोकः ) **अनुम इत्युच्यते इति**—नन्वित्यादिः ।

( अनुपपत्तिपरिहारभाष्यम् )

**अनुम इति नेदमागमग्रहणम् ॥**

**किं तर्हि ? ।**

**प्रत्याहारग्रहणम् ॥**

**क सन्निविष्टानां प्रत्याहारः ? ।**

**उकारात्प्रभृत्या नुमो मकारात् ॥**

( प्रदीपः ) **उकारात् प्रभृतीति । तनादिकृञ्भ्य** उरित्यतः ॥ तत्र च वसुरन्तर्भूतः ॥

( तत्त्वालोकः ) भाष्ये—**अनुम इतीति**—नैषाऽनुपपत्तिः, यत इत्यादिः ।

( अनिष्टापत्तिभाष्यम् )

**यदि प्रत्याहारग्रहणं 'लुनता पुनता' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **यदीति** । श्नाप्रत्ययस्य प्रत्याहारेऽन्तर्भावात् ॥

( उद्द्योतः ) **यदि प्रत्याहारेति** । उत्रहितशत्रन्तेत्यर्थ इत्यभिमानः ॥

( तत्त्वालोकः ) भाष्ये—**लुनतेति**—तर्हीत्यादिः । **प्राप्नोतीति**—अनुम इति प्रतिषेध इत्यादिः ।

उद्द्योते—**उत्रहितेति**—अनुमा शत्रन्तस्य विशेषणात् 'शतुरनुमः' इत्यस्येत्यादिः ।

( अनिष्टापत्तिवारणभाष्यम् )

**अनुम्ग्रहणेन न शत्रन्तं विशेष्यते ॥**

**किं तर्हि ? ।**

**शतैव विशेष्यते—शता योऽनुम्क इति ॥**

**अवश्यं चैतदेवं विज्ञेयम् । आगमग्रहणे हि सतीह प्रसज्येत—मुञ्चता मुञ्चत इति ॥**

( प्रदीपः ) **शता य इति** । न चात्र श्ना शतुः कृत इत्यनुमेव शता । **मुञ्चतेति** । शत्रन्तस्य [illegible] इति भावः । [illegible] ग्रहणेऽपि [illegible] विशेषणीय इति [illegible] न तत्र विशेष्यत इत्यदोषः ।

( उद्द्योतः ) भाष्ये **अनुम्क इति** । [illegible] विवक्षा-वैनोन्त्वम् । **आगमग्रहणे हीति** । [illegible] इत्यर्थः । कैयटे—**अनुमेव शतेति** । [illegible], तथापि सामर्थ्यात् [illegible] इति भावः । व्याप-कत्वात्प्राधान्याच्च **तनादीत्युकारेण** प्रत्याहार इति तात्पर्यम् ।

( तत्त्वालोकः ) भाष्ये—**अनुम्ग्रहणेनेति**—नैष दोषः, यत इत्यादिः । **आगमेति**—[illegible] । **प्रसज्येतेति**—अनुम इति प्रतिषेध इत्यादिः ।

प्रदीपे—शतरि परे श्नाप्रवृत्तावपि शतुरनुम्कत्वमनपायेवेत्याशयेनाह—**न चेति** । **अत्र**—लुनतेत्यादौ । **शत्रन्तस्येति**—शतुरनुम्कत्वेऽपीत्यादिः । शत्रन्तस्य व्यवच्छेदायाह—**एवेति** । अनुमेति शेषः ।

उद्द्योते—नन्वेवमपि वसोरनुम्कत्वात्तत्र 'अनुमः' इति प्रतिषेधो न प्राप्नोतीत्यत आह—**वसोरपीति** । **तदिति**—तथा चेत्यादिः । **सामर्थ्यात्**—उकारग्रहणसामर्थ्यात् । ननु 'सनाशंसभिक्ष उ'रित्युकारेणैव प्रत्याहारः कुतो नेत्यत आह—**व्यापकत्वादिति** । **प्राधान्याच्च**—प्रथमोपस्थितत्वरूपप्राधान्याच्च । **तात्पर्यमिति**—कैयटस्येत्यादिः ।

( ३८६ आक्षेपवार्तिकम् ॥ २९ ॥ )

## ॥ * ॥ गोः पूर्वणित्त्वात्वस्वरेषु ॥ * ॥

( भाष्यम् )

**गोः पूर्वणित्त्वात्वस्वरेषु प्रतिषेधो वक्तव्यः । चित्रग्वग्रं शबलग्वग्रम् । 'सर्वत्र विभाषा गोः' इति विभाषा पूर्वत्वं प्राप्नोति ॥**

( प्रदीपः ) **सर्वत्रेति** । प्रकृतिभावोऽनेन विधीयते, न तु पूर्वत्वम् । तस्मादेङः **पदान्तादतीति** पूर्वत्वं प्राप्नोतीति वाच्यम् ॥ यदा त्वप्रकृतिभावः, तदायं प्रसङ्ग उक्तः ॥ उत्तरं त्वविधित्वात्स्थानिवत्त्वाभावः ॥ ५६ ॥

( उद्द्योतः ) भाष्ये **विभाषा पूर्वत्वं प्राप्नोतीति** । अत्र वार्तिके भाष्ये च **पूर्व**शब्देन तदपवादो लक्ष्यते ॥ भाष्ये—**सर्वत्रेति चावङिति** सूत्रस्याप्युपलक्षणम् । ध्वनितं **चेदमव**ङ्सूत्रे भाष्ये इति षष्ठे निरूपयिष्यामः ॥ **अनन्तरस्ये**ति न्यायेन तदपवादोऽपि परत्वादयमपि बाधित्वा स्यादित्याशयः ॥ यत्तु कैयटेन-**तस्मादेङ** इत्यादि **प्रसङ्ग उक्त** इत्यन्तमुक्तम् । तत्तु चिन्त्यमेव । **एङः पदान्ता**दिति सूत्रे एङ्पदोच्चारणसत्त्वेन शङ्काया असंभवदुक्तिकत्वात् । भाष्योक्ते तु एङ्पदाभावादनुवृत्तिमजानतः शङ्केत्युक्तिसंभवात् ॥

( तत्त्वालोकः ) भाष्ये—**प्रतिषेध इति**—कर्तव्येषु स्थानिवत्त्वस्येत्यादिः । **चित्रग्वग्रं शबलग्वग्रमिति**—अन्यथेत्यादिः । इत्यादौ गोः स्थानिवत्त्वाद् गोग्रहणेन ग्रहणादिति शेषः । एवमग्रेऽपि ।

प्रदीपे—यद्यपि 'नान्तः पादमि'ति पाठस्य '**इको गुणवृद्धी**' इति सूत्रे षाष्ठे च भाष्ये स्थितत्वात्तद्रीत्या 'सर्वत्रे'ति सूत्रस्यापि **पूर्वरूप**विधायकत्वमेव । तथापि शाकलसूत्रे 'ह्रस्वश्चेति चकारेण **प्रकृत्येत्यनुकृष्यते**' इति भाष्यदर्शनात् 'प्रकृत्याऽन्तः पादमि'ति पाठमनुसृत्याह—**प्रकृतिभाव इति** ।

उद्द्योते—अस्यासङ्गतिं परिहरति—अत्रेति । तदपवादः—प्रकृतिभावः । न्यूनतां निराकरोति—सर्वत्रेति चेति । तत्र बीजमाह—ध्वनितश्चेति । नन्वेवम् 'उत्सर्गसमाने'ति न्यायेन कथमत्र प्रकृतिभावस्य प्राप्तिरित्यत आह—अनन्तरेति । एङ्पदान्तादिति—'सर्वत्रे'ति सूत्रे इत्यादिः । तत्र तस्येति शेषः ।

( दूषणप्रथमाक्षेपनिराकरणभाष्यम् )

नैष दोषः । एङ इति वर्तते । तत्रानल्विधाविति प्रतिषेधो भविष्यति ॥

( तत्त्वालोकः ) एङ इतीति—यतः 'सर्वत्रे'ति सूत्रे 'एङः पदान्तादि'ति सूत्रादित्यादिः । वर्त्तते—अनुवर्त्तते ।

( समाधाननिरासभाष्यम् )

एवमपि 'हे चित्रगो अग्रम्' अत्र प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—एवमपीति । लाक्षणिकत्वादस्य गोशब्दस्य स्वतः प्रकृतिभावाप्राप्तावपि स्थानिवत्त्वेन प्राप्नोतीति तत्प्रतिषेधो वक्तव्य इत्यर्थः ॥ यदि तु ओत्सूत्रभाष्योक्तरीत्या वर्णग्रहणेऽपि प्रतिपदोक्तपरिभाषा प्रवर्तते, तदेदं वचनं न कार्यम् । एङो लाक्षणिकत्वात्, तदंशे स्थानिवत्त्वानपेक्षणेनातिदेशविषये तदप्रवृत्तिरित्यपि नेत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—प्राप्नोतीति—प्रकृतिभाव इत्यादिः । उद्द्योते—अस्य पर्यवसितार्थमाह—लाक्षणिकत्वादिति । स्वत एङन्तत्वादत्र स्थान्यल आश्रयणाभावादाह—स्थानिवत्त्वेनेति । गोग्रहणेन ग्रहणादिति शेषः । तदिति—स्थानिवत्त्वेत्यर्थः । तदेति—अस्य स्थानिवत्त्वेऽपि प्रकृतिभावाप्राप्तेरिति शेषः । नन्वतिदेशविषये लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तावतिदेशवैयर्थ्यापत्तिरित्यत आह—तदंशे इति । एङंशे इत्यर्थः । तदिति—प्रतिपदोक्तपरिभाषेत्यर्थः ।

( द्वितीयतृतीयाक्षेपभाष्यम् )

णित्त्वम्—चित्रगुः चित्रगू चित्रगवः । 'गोतो णित्' इति णित्त्वं प्राप्नोति ॥

आत्वम् । चित्रगुं पश्य, शबलगुं पश्य । 'आ गोतः—' इत्यात्वं प्राप्नोति ॥

( तत्त्वालोकः ) षष्ठे 'औतोऽम्शसोरि'त्यत्र 'आ गोतोऽम्शसोरि'ति वार्तिककारन्यासः, तमनुसृत्याह—आ गोत इति ।

( द्वितीयतृतीयाक्षेपवारणभाष्यम् )

नैष दोषः—तपरकरणात्सिद्धम् । तपरकरणसामर्थ्यात् णित्त्वात्वे न भविष्यतः ॥

( उद्द्योतः ) भाष्ये-तपरकरणसामर्थ्यादिति । एवं च गस्याविवक्षितत्वेनाल्विधित्वात्स्थानिवत्त्वाभाव इति भावः ॥ ५६ ॥

( तत्त्वालोकः ) भाष्ये—नैष दोष इति—नैतौ दोषावित्यर्थः । जातावेकवचनसत्त्वात् ॥ तपरेति—यत इत्यादिः ।

( आक्षेपभाष्यम् )

स्वर—बहुगुमान् । 'न गोश्वन्साववर्ण—' इति प्रतिषेधः प्राप्नोति ॥

( तत्त्वालोकः ) बहुगुमान्—बहवो गावो यस्य स बहुगुः, सोऽस्त्यस्येति बहुगुमान् । इह—गोत्वस्याल्धर्मत्वाभावाद् 'अनल्विधावि'ति निषेधाप्रवृत्त्या 'गोस्त्रियोरि'ति जातह्रस्वस्य स्थानिवत्त्वाद् गोग्रहणेन ग्रहणाद् 'ह्रस्वनुड्भ्यां मतुप्' इति सूत्रेण प्राप्तस्य मतुप उदात्तत्वस्य 'न गोश्वन्साववर्णराडङ्क्रुङ्कृद्भ्यः' इति सूत्रेण प्रतिषेधः प्राप्नोतीत्यर्थमभिप्रेत्याह—न गोश्वन्निति । तथा च—णित्वात्वयोः प्रसङ्गस्य वारणेऽपि प्रकृतिभावस्वरप्रतिषेधयोः प्रसङ्गस्यावारणात् गोः प्रकृतिभाव—स्वरप्रतिषेधयोः कर्तव्ययोः स्थानिवत्त्वप्रतिषेधो वक्तव्य इत्यर्थकं 'गोः पूर्वस्वरयोरि'ति वार्तिकं कार्यमेवेति भावः । केचित्तु—लक्षणप्रतिपदोक्तपरिभाषया प्रकृतिभावप्रसङ्गस्य वारणमभिप्रेत्य 'गोः स्वरे' इत्येव वार्तिकं कार्यमिति वदन्ति ।

( ३८७ आक्षेपवार्तिकम् ॥ ३० ॥ )

॥ * ॥ करोतिपिबत्योः प्रतिषेधः ॥ * ॥

( भाष्यम् )

करोतिपिबत्योः प्रतिषेधो वक्तव्यः । कुरु पिबेति । स्थानिवद्भावाल्लघूपधगुणः प्राप्नोति ॥

( तत्त्वालोकः ) प्रतिषेध इति—स्थानिवत्त्वस्येत्यादिः । कुर्विति—अन्यथेत्यादिः ।

( आक्षेपनिराकरणभाष्यम् )

॥ * ॥ उक्तं वा ॥ * ॥

किमुक्तम् ? ।

'करोतौ तपरकरणनिर्देशात्सिद्धम्' ॥ 'पिबिरदन्तः' इति ॥

स्थानिवदादेशोऽनल्विधौ ॥ ५६ ॥

---

( ५१ अतिदेशसूत्रम् ॥ १ । १ । ८ आ० २ ॥ )

## अचः परस्मिन् पूर्वविधौ ॥ १।१।५७ ॥

( प्रदीपः ) अचः परस्मिन् ॥ ५७ ॥ अल्विध्यर्थमिदम् । तथा हि—वव्रश्चेति उरदत्वे कृते 'न संप्रसारणे संप्रसारणम्' इति वकारस्य संप्रसारणनिषेधः स्थान्यलाश्रयः । एवमचितीकः सुचितीकः बहुचितीक इति चितेः कपीति दीर्घे कृते ह्रस्वान्तेऽन्त्यात्पूर्वमिति स्थान्यलाश्रयः स्वरोऽस्माद्वचनाद्भवति ॥

( उद्द्योतः ) अचः पर ॥ ५७ ॥ पूर्वेणैव सिद्धे इदं किमर्थमत आह—अल्विति ॥ उरदत्वे इति । अङ्गाक्षिप्तप्रत्ययपरत्वनिमित्तके इति शेषः । लिड्यभ्यासस्येत्युभयेषां ग्रहणाद् हलादिःशेषात्प्राक् संप्रसारणे वस्य संप्रसारणात्तन्निषेधाच्च प्राङ् नित्यत्वात्परत्वाच्चोरदत्वमिति भावः । एवमचितीति । उत्तरपदस्याधिकृतस्य ह्रस्वेन विशेषणात्तदन्तग्रहणे लब्धे ह्रस्वान्ते इत्यत्रान्तग्रहणेन भूतपूर्वगतेराश्रयणेनेदं साधयितुं शक्यमिति कश्चित् ॥ तन्न । तदभावे ह्रस्वादावित्यर्थापत्तेः । ह्रस्वान्ते इत्यत्र नञ्सुभ्यामित्यनुवृत्तावपि बहोर्नञ्वदिति वचनाद्बहुचितीक इत्युदाहृतम् ॥

( तत्त्वालोकः ) प्रदीपे—कृते इति—तस्यानेन स्थानिवत्त्वादिति शेषः । न चात्र स्थानिवत्सूत्रेण निर्वाह इति सूचनायाह—स्थान्यलेति । एवमग्रेऽपि । ननु तत्र 'सम्प्रसारणे' इत्यस्य सम्प्रसारणभाविनीति व्याख्याने नेदं प्रयोजनमित्यत आह—एवमिति ।

**'ह्रस्वान्ते' इति**—अस्य 'ह्रस्वान्तेोत्तरपदसमासेऽन्त्यात्पूर्वमुदात्तं कपिनञ्सुभ्यां परं बहुव्रीहौ' इत्यर्थः । **वचनादिति**—स्थानिवत्त्वेनेति शेषः ।

उद्द्योते—**पूर्वेणैव**—स्थानिवत्सूत्रेणैव ॥ नन्वस्य परनिमित्तकत्वाभावात्कथमनेन स्थानिवत्त्वमित्यत आह—**अङ्गाक्षिप्तेति** ॥ अत्र कैयटेनानुक्तां प्रक्रियामाह—**लिड्येति** । **सम्प्रसारणे इति**—रेफस्येत्यादिः । 'सम्प्रसारणं तदाश्रयञ्च कार्यं बलवदि'ति परिभाषयेति भावः । यथासंख्यमन्वयमभिप्रेत्याह—**नित्यत्वात्परत्वाच्चेति** । प्राचोक्तं खण्डयति—**उत्तरपदस्येति** । **तदभावे**—नञान्तग्रहणाभावे । 'यस्मिन्विधिस्तदादावल्ग्रहणे' इति परिभाषयेति भावः । ननु तत्र 'नञ्सुभ्यामि'त्यनुवृत्तेः कथं बहुचितीक इत्युदाहृतमित्यत आह—**ह्रस्वान्ते इति** ।

---

( पदकृत्यनिर्वचनाधिकरणम् )

( अच्पदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**अच इति किमर्थम् ? ॥**

**( प्रदीपः )** वार्तानि प्रत्युदाहरणानि कानिचिच्छक्यप्रतिविधानानीति प्रश्नः—**अच इति किमिति** ॥

**( उद्द्योतः )** प्रत्युदाहरणादिचिन्ता वृत्तिकाराणामुचिता, न तु भाष्यकृतोऽत आह—**वार्त्तानीति** । वृत्त्युदाहृतानि ॥

**( तत्त्वालोकः )** प्रदीपे—**इति प्रश्नः**—इति कारणात्प्रश्नः । उद्द्योते—**प्रत्युदाहरणादीति**—नन्वित्यादिः ।

( प्रयोजनदर्शनभाष्यम् )

**प्रश्नो विश्नः । द्यूत्वा स्यूत्वा । अक्राष्टाम् । आगत्य ॥**

**प्रश्नो विश्न इत्यत्र छकारस्य शकारः परनिमित्तकस्तस्य स्थानिवद्भावात् 'छे च' इति तुक् प्राप्नोति । अच इति वचनान्न भवति ॥**

**( उद्द्योतः )** भाष्ये—**शकारः**—च्छ्वोःशूडिति विहितः ॥

( दोषवारणभाष्यम् )

**नैतदस्ति प्रयोजनम् । क्रियमाणेऽपि वाऽज्ग्रहणेऽवश्यमत्र तुगभावे यत्नः कर्तव्यः । अन्तरङ्गत्वाद्धि तुक् प्राप्नोति ॥**

**( प्रदीपः ) अन्तरङ्गत्वादिति** । अत एव युगपत्प्राप्त्यभावाद्**वार्णादाङ्गं बलीय** इत्येतदत्र नास्ति । यत्र हि युगपदाङ्गवार्णयोः प्राप्तिर्यथा कारकमिति वृद्धियणादेशयोः, यथा च किरतः किरन्तीति यणित्त्वयोस्तत्रैतदुपतिष्ठते ॥ तत्रायं यत्नः- **च्छ्वोः शूडिति** तकारच्छकारयोः समुदायनिर्देशात्सतुक् छकारः स्थानी, समुदायनिर्देशसामर्थ्याच्चा**लोऽन्त्यस्ये**त्यस्यानुपस्थानमनर्थकत्वाद्वा । एवं च नङो ङित्करणं विश्न इत्यत्र गुणनिषेधार्थमर्थवद्भवति ॥

**( उद्द्योतः ) अत एवेति** । प्रत्ययनिरपेक्षतयान्तरङ्गत्वेन तुकः शादेशात् प्राक् प्रवर्तनादेवेत्यर्थः ॥ अत्रा**न्तरङ्गत्वं** प्रथमप्रवृत्तिकत्वरूपम् ॥ **युगपदिति** । बलाबलविचारस्य प्रतियोगिसापेक्षत्वेन तत्रैव संभवादिति भावः ॥ **यथेति** । कारकः किरतीत्यादौ अन्तरङ्गत्वात्पूर्वं मकादेशविकरणाविति भावः ॥ **सतुग्गिति** । यद्यप्य**कृतव्यूह**परिभाषया तुग्व्यावृत्तिः कर्तुं शक्या । तथापि तदभावस्यापि **सतुङ्निर्देशो** ज्ञापकः । न च वाञ्छतेः क्विपि वाञ्छाविन्नादौ शाभावाय सतुक्निर्देश इति वाच्यम् । शादेशयोग्यप्रत्ययपरस्य वाञ्छतेः प्रयोगाभावात् । अत एव सतुग्निर्देशस्यानर्थक्यात्सर्वादेशः श इति पाष्ठभाष्योक्तं सङ्गच्छते ॥ ननु सतुङ्निर्देशेऽपि तेनाल्विधेयत्वाभावादन्त्यविधौ **अलोन्त्यस्ये**त्यन्त्यस्यैव स्यादत आह—**समुदायेति** ॥ **अनर्थकत्वादिति** । **नानर्थक** इति निषेधादिति भावः ॥ सतुङ्निर्देशे लिङ्गमाह—**एवं चेति** ॥

**( तत्त्वालोकः )** भाष्ये—**वा**—हि । अव्ययानामनेकार्थकत्वात् ॥ **तुगभावे इति**—अत्र विषयसप्तमी । **यत्नः**—सतुङ्निर्देशरूपो यत्नः । **प्राप्नोतीति**—शादेशात्प्रागित्यादिः । तथाच—शकारादेशस्य परनिमित्तकत्वादनेन स्थानिवत्त्वेऽपि सतुक्छत्वात् ह्रस्वस्य तुका व्यवधानात् 'छे चे'त्यस्याप्रवृत्तेः 'अचः' इत्यस्याभावेऽपि प्रश्न इत्यादौ न दोष इत्याशयः ।

प्रदीपे—ननु 'वार्णादाङ्गं बलीयः' इति तुकः प्राक् शादेश एव स्यादित्यत आह—**अत एवेति**—तुक्शादेशयोरिति शेषः । **एतत्**—'वार्णादाङ्गमि'त्येतत् । **तत्र**—तुगभावे । **एवञ्च**—सतुक्छस्य स्थानित्वे च । यदि छमात्रस्य शः स्यात्तर्हि विश्न इत्यत्रालघूपधत्वाद् गुणाप्राप्तौ तन्निषेधार्थं ङित्त्वं व्यर्थमेव स्यादिति भावः ।

उद्द्योते—**तत्रैव**—विरोधिनोर्युगपत्प्रवृत्तावेव । ननु कारकः, किरत इत्यादावपि अकादेशविकरणाभ्यां प्रागेव वृद्धीत्त्वयोः प्राप्तिः, न च तदानीं यणः प्राप्तिरिति कथं तयोस्तयोर्यौगपद्यमित्यत आह—**कारक इति** । **तदभावस्यापि**—अकृतव्यूहपरिभाषाया अनित्यत्वस्यापि । तज्ज्ञापकत्वं विघटयति—**न चेति** । तत्र मानमाह—**अत एवेति** । तस्य प्रयोगाभावादेवेत्यर्थः । अन्यथा-तत्र शाभावाय सतुङ्निर्देशस्य साफल्ये तदसङ्गतिः स्पष्टैवेति भावः ।

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**इदं तर्हि प्रयोजनम्—द्यूत्वा स्यूत्वा । वकारस्य ऊठ् परनिमित्तकः । तस्य स्थानिवद्भावादचीति यणादेशो न प्राप्नोति । अच इति वचनाद्भवति ॥**

( दोषवारणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्राच्त्वं भविष्यति ॥**

**अथवा—योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नासावादेशः ॥**

**( प्रदीपः ) स्वाश्रयमिति** । न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते, यथा **ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्य**मिति क्षत्रियस्य क्षत्रियधर्माः । वाय्वोरित्यादौ तु सत्यपि स्वाश्रये वल्त्वे बहिरङ्गत्वायणोऽसिद्धत्वाद्वलिलोपाभावः । द्यूत्वेत्यत्र तु **नाजानन्तर्ये** इति असिद्धत्वनिषेधाद् यण् प्रवर्तते । ऊठः स्थानिवत्त्वाद्यलोपः कथं नाशङ्कित इति चेत् । **योऽनादिष्टादच** इत्येवमर्थस्याऽज्ग्रहणस्य स्थापयिष्यमाणत्वात् ॥ **योऽत्रादेश इति** । समुदायरूप ऊठ् ॥ **यश्चाश्रीयत इति** । यण्विधावच् ॥ **नासावादेश इति** । समुदायस्यादेशत्वात् । न चादेशस्यावयव आदेशो गृह्यते । मुख्यसंभवे गौणग्रहणस्यायुक्तत्वात् ॥ स्याआदीनां तर्ह्यनुबन्धवियुक्तानां धातुसंज्ञा **आदेशा**वयवत्वान्न प्राप्नोति । घस्लादेशस्य लृदित्त्वादङर्थाज् ज्ञापकाद्धातुकार्याणि भविष्यन्तीत्यदोषः ॥

**( उद्द्योतः ) नहीति** । अयोगवाहेषु हल्त्वाच्त्वयोः समावेश-

दर्शनेन तयोरविरोध इति भावः ॥ ननु स्वाश्रयानिवृत्तौ वाय्वोरित्यत्र दोषोऽत आह—**वाय्वोरितीति ॥ असिद्धत्वनिषेधादिति ।** ऊठ इति शेषः ॥ बहिरङ्गपरिभाषाऽनित्यत्वादित्यन्ये ॥ **योऽनादिष्टादच इति ।** अज्ग्रहणस्य सिद्धान्तरीत्या स्थान्यपेक्षया पूर्वत्वमाश्रीयत इत्यत्र तात्पर्यम् ॥ **स्थापयिष्यमाणत्वादिति ।** व्याख्यास्यमानत्वादित्यर्थः ॥ अत्र स्वाश्रयकार्याभावातिदेशस्यापि सिद्धान्तयिष्यमाणत्वाद्भाष्ये परिहारान्तरम्—**अथवा योऽत्रेति ॥** अयं भावः—अभावातिदेशेऽपि स्थानिप्रयुक्तं भवत्यादेशप्रयुक्तं नेत्यर्थ इति । तदाह—**समुदायेति ।** यथा सूत्रे सानुबन्धकग्रहणे तस्यानल्विधित्वम्, स्थानित्वं च नालः, तथा आदेशत्वमपि सूत्रोपात्तस्यैवेति भावः ॥ एवं च यण् नादेशप्रयुक्तः, किंतु तदवयवप्रयुक्त इति नासौ वार्यत इति तात्पर्यम् ॥ **आदेशो गृह्यत इति ।** आदेश इति गृह्यते इत्यर्थः ॥ **न प्राप्नोतीति ।** स्थानिवत्त्वेनेति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**स्वाश्रयमिति**—यत इत्यादिः । **नासावाश्रीयते**—नासौ यण्विधावाश्रीयते ।

प्रदीपे—**अनियधर्मा इति**—न निवर्त्यन्ते इत्यनुषज्यते । नन्वेवं चूल्वेत्यत्रापि सत्यपि स्वाश्रयेऽच्त्वे बहिरङ्गतयोठोऽसिद्धत्वाद् यण् न स्यादित्यत आह—**चूल्वेत्यत्र त्विति । स्थापयिष्येति**—अत्र सूत्रे विधिग्रहणफलत्वेनेति भावः । **स्याऽऽदीनामिति**—नन्वित्यादिः । **तर्हि**—आदेशपदेनादेशावयवस्याग्रहणे । **अङ्कर्थादिति**—च्लेरित्यादिः । **कार्याणीति**—गौणेऽपीति शेषः । अन्यथा धातुत्वाभावात्तस्माच्च्लेरनुपपत्तेस्तदङ्कर्थन्तत्र ऌदित्करणं व्यर्थमेव स्यादिति भावः ।

उद्द्योते—ननु हल्त्वाच्त्वयोर्विरोधात् कथमत्र स्थान्याश्रितहल्त्वातिदेशेन स्वाश्रिताच्त्वस्य निवृत्तिरित्यत आह—**अयोगेति । दोषः**—स्वाश्रयं वल्त्वमादाय यलोपापत्तिः । नन्वेवमज्ग्रहणसिद्धाविदं प्रत्युदाहरणं युक्तमेवेत्यत आह—**अज्ग्रहणस्येति ।** तथा भाष्याभावादाह—**व्याख्यास्येति । अत्र**—इह सूत्रे विधिग्रहणप्रयोजनकथनावसरे । नन्वभावातिदेशे स्थानिप्रयुक्तमपि न स्यादित्यत आह—**अयमिति । तदाह**—तद्ध्वनयन्नाह । नन्वनुबन्धानामनेकान्तत्वाद्, एकान्तत्वेऽप्युच्चरितप्रध्वंसित्वादुकारस्यैवादेशत्वं युक्तम्, न तु समुदायस्येत्यत आह—**यथेति ।** एवं पूर्वसूत्रविषयेऽपीति भावः । **स्थानिवत्त्वेनेति**—पूर्वसूत्रेणेत्यादिः ।

**( तृतीयप्रयोजनोपपादनभाष्यम् )**

**इदं तर्हि प्रयोजनम्—अक्राष्टाम् । सिचो लोपः परनिमित्तकः । तस्य स्थानिवद्भावात् 'षढोः कः सि' इति कत्वं प्राप्नोति । अच इति वचनान्न भवति ॥**

**( दूषणनिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्—*पूर्वत्रासिद्धे न स्थानिवदिति ॥**

**( तत्त्वालोकः )** वक्ष्यतीति—यत इत्यादिः ।

**( अखण्डितप्रयोजनभाष्यम् )**

**इदं तर्हि प्रयोजनम्—आगत्य, अभिगत्य । अनुनासिकलोपः परनिमित्तकः, तस्य स्थानिवद्भावाद्ध्रस्वस्येति तुङ् न प्राप्नोति ॥ अच इति वचनाद्भवति ॥**

**( उद्द्योतः )** भाष्ये—**आगत्येति ।** मलोपस्यापि ह्रस्वस्य पित्प्रत्ययपरत्वसंपादकतया तुग्विधावाश्रयणमित्यर्थः ॥ अभावातिदेशे चैतत्फलम् । अत एवाभावातिदेशे पटयतीत्यादौ वृद्धिर्नेत्यग्रे भाष्यं संगच्छते ॥

**( तत्त्वालोकः )** भाष्ये—**वचनादिति**—स्थानिवद्भावादिति शेषः । एवं पूर्वत्रापि तथाऽग्रेऽपि ।

उद्द्योते—नन्वत्रापि 'योऽत्रादेशो नासावाश्रीयते' इति भाष्योक्तरीत्या दोषवारणमेवेत्यत आह—**मलोपस्यापीति ।** नन्वत्र भावातिदेशेन नेष्टसिद्धिरित्यत आह—**अभावेति ।** ननु तत्र किं मानमित्यत आह—**अत एवेति ।** अभावातिदेशस्याभ्युपगमादेवेत्यर्थः ।



**( परस्मिन्नित्येतत्प्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

**अथ परस्मिन्निति किमर्थम् ? ।**

**( प्रयोजनभाष्यम् )**

**युवजानिः वधूजानिः । द्विपदिका । वैयाघ्रपद्यः । आदीध्ये ॥**

**( प्रथमप्रयोजनोपपादनभाष्यम् )**

**युवजानिः वधूजानिरिति 'जायाया निङ्' न परनिमित्तकः । तस्य स्थानिवद्भावाद् 'वलि' इति यलोपो न प्राप्नोति । परस्मिन्निति वचनाद्भवति ॥**

**( प्रदीपः ) युवजानिरिति ।** अव्युत्पन्नत्वादुणादीनां जाशब्दस्याकारलोपो न भवति । अन्यथाऽऽकारस्य निङि कृते यलोपे च निङः स्थानिवद्भावात्प्रत्ययत्वादाकारलोपः स्यात् । न 'चासिद्धवदत्राभादि'त्याकारलोपे कर्तव्येऽसिद्धत्वमात्त्वस्य, व्याश्रयत्वात् ॥

**( उद्द्योतः )** ननु स्वाश्रयवल्त्वादिना यलोपसिद्धावपि आलोपः स्थानिवत्त्वेन स्यादिति तद्वारणाय परग्रहणमावश्यकमेवेत्यत आह—**अव्युत्पन्नत्वादिति ॥ आकारलोप इति । आतो लोप** इत्यनेन ॥ जनेरौणादिके यकि **ये विभाषे**त्यात्त्वे टापि तेनंकादेशे तस्य पूर्वान्तवद्भावादार्धधातुकत्वेन युवतिशब्देन बहुव्रीहौ निङादेशे यलोपेऽवशिष्टस्य स्थानिवत्त्वेनार्धधातुकत्वादिसत्त्वात् यातिरितिवदिति भावः ॥ ननु आभीयत्वेनात्त्वस्यासिद्धत्वाल्लोपो नेत्यत आह—**न चेति ॥ व्याश्रयत्वादिति ।** ये आत्त्वम्, आस्थानिके निङि लोप इत्यात्त्वनिमित्तापेक्षया न्यूननिमित्तकत्वात् व्याश्रयता ॥

**( तत्त्वालोकः )** प्रदीपे-**आकारस्य**-याघटकाकारस्य । **आकारेति**—जाघटकाकारेत्यर्थः । एवमग्रेऽपि । **व्याश्रयत्वात्**—विभिन्नाश्रयत्वात् ।

उद्द्योते—**स्थानिवत्त्वेनेति**—निङ इत्यादिः । **आवश्यकमेवेति**—तथाच-एतत्प्रयोजननिराकरणभाष्यासङ्गतिरेवेति भावः । नन्वाकारस्यार्धधातुकपरकत्वाभावात्कथं लोप इत्यत आह—**जनेरिति । आत्त्वे इति**—सवर्णदीर्घे इति शेषः । **अवशिष्टस्य**—निङः । **आदिना**—अजादित्वादिपरिग्रहः । ननु यसत्त्वे अकारे आर्धधातुकत्वादीनामभावात् कथं निङः स्थानिवत्त्वेन तेषां लाभ इत्यत आह—**यातिरिति ।** यदि पूर्वं यलोपः स्यात्तदाऽकारः प्रत्ययः स्यादिति सम्भावनामात्रेणेति भावः । **न्यूनेति**—आलोपस्येत्यादिः ।

**( प्रथमप्रयोजननिराकरणभाष्यम् )**

**नैतदस्ति प्रयोजनम् । स्वाश्रयमत्र वल्त्वं भविष्यति ॥**

अथवा-योऽत्रादेशो नासावाश्रीयते । यश्चाश्रीयते नासावादेशः ॥

( तत्त्वालोकः ) स्वाश्रयमत्र बलवदिति—यतः स्थान्याश्रितधर्मातिदेशेन स्वाश्रितधर्मानिवृत्तेरनिदेशेन स्थान्याश्रिताद्बलवत्त्वमित्यादिः । आदाय यलोप इति शेषः । नन्वेवमपि स्वाश्रयकार्याभावातिदेशेनात्र यलोपो नोपपद्यतेत्यत आह—अथवेति । योऽत्रादेश इति—यो निङ्ङिति समुदायोऽत्रादेशः, असौ न वलि लोपे आश्रीयते । यश्च नकारो वलि लोपे आश्रीयते, नासावादेशः । तथाच—वलिलोपो नादेशप्रयुक्तः, किन्तु तदवयवप्रयुक्त इति स्वाश्रयकार्याभावातिदेशेनापि यलोपस्यावारणात् परस्मिन्निन्त्यस्याभावेऽपि युवजानिरित्यादौ न दोष इत्याशयः । एवमग्रेऽपि ।

( द्वितीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्-द्विपदिका त्रिपदिका । पादस्य लोपोऽपरनिमित्तकः, तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति । परस्मिन्निति वचनाद्भवति ॥

( उद्द्योतः ) भाष्ये द्विपदिकेति । द्वौ द्वौ पादौ ददातीति तद्धितार्थेति समासे पादशतस्येति वुन्लोपौ ॥ परस्मिन्नितीति । सहविधाने परनिमित्तकत्वव्यवहाराभावादित्यर्थः ॥

(तत्त्वालोकः) भाष्ये—पादस्य—'अलोऽन्त्यस्ये'त्यनेन पादान्त्यस्याकारस्य । पद्भाव इति—'पादः पदि'ति पद्भाव इत्यर्थः । पाच्छब्दान्ताङ्गाभावादित्यादिः ।

उद्द्योते—वुन्लोपाविति—युगपदेव विहितावित्यपरनिमित्तकौ लोप इति भावः । सहेति—तयोरित्यादिः । परेति—लोपस्येत्यादिः ।

( द्वितीयप्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । पुनर्लोपवचनसामर्थ्यात् स्थानिवद्भावो न भविष्यति ॥

( प्रदीपः ) पुनरिति । यस्येति लोपे सिद्धे पादशतस्येत्यत्र पुनर्लोपवचनं स्थानिवत्त्वनिषेधार्थम् । पुनर्लोपवचने सति लुप्यत एवाकारः, कार्ये नाऽऽश्रीयत इत्यर्थः ॥

( उद्द्योतः ) पुनर्लोपवचनेन यथा स्थानिवत्त्वाभावस्तथाऽभिनयति—पुनर्लोपेति ।

( तत्त्वालोकः ) भाष्ये—पुनरिति—यत इत्यादिः ।

प्रदीपे—कार्ये—कार्ये तु ।

( तृतीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्—वैयाघ्रपद्यः ॥

( उद्द्योतः ) भाष्ये वैयाघ्रपद्ये व्याघ्रस्येव पादावस्येति बहुव्रीहौ पादस्य लोप इति लोपे गर्गादित्वाद्यञि पादः पदिति पद्भावे न य्वाभ्यामित्यैच् ॥

( तत्त्वालोकः ) भाष्ये—वैयाघ्रपद्य इति—अत्र 'पादस्य लोपोऽपरनिमित्तकः, तस्य स्थानिवद्भावात्पद्भावो न प्राप्नोति । परस्मिन्निति वचनाद्भवति' इत्यनुषज्यते ।

( प्रयोजनबाधकाक्षेपभाष्यम् )

ननु चात्रापि पुनर्वचनसामर्थ्यादेव न भविष्यति ॥

( प्रदीपः ) ननु चात्रापीति । यस्येति लोपे सिद्धे पादस्य लोप इति पुनर्लोपवचनादित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—पुनर्वचनेति—पुनर्लोपवचनेनेत्यर्थः । न भविष्यतीति—स्थानिवद्भाव इत्यादिः ।

( प्रयोजनसाधकभाष्यम् )

अस्ति ह्यन्यत्पुनर्लोपवचने प्रयोजनम् ॥

किम् ? ।

यत्र भसंज्ञा न—व्याघ्रपात् श्येनपादिति ॥

( तत्त्वालोकः ) अस्ति ह्यन्यदिति—तस्य पुनर्लोपवचनस्य सामर्थ्यमित्यादिः । अस्तीति शेषः । यत्र भसंज्ञा नेति—'तत्र लोपः स्यादिति' इति शेषः ।

( चतुर्थप्रयोजनोपपादनभाष्यम् )

इदं चाप्युदाहरणम्—आदीध्ये आवेव्ये । इकारस्यैकारो न परनिमित्तकः । तस्य स्थानिवद्भावाद् 'यीवर्णयोर्दीधीवेव्योः' इति लोपः प्राप्नोति । परस्मिन्निति वचनान्न भवति ॥

( प्रदीपः ) आदीध्य इति । इट एत्वे कृते लोपः प्राप्नोति, विकरणश्च । तत्र नित्यत्वाद्विकरणः, तस्य लुक् । तस्य स्थानिवद्भावेन एरनेकाच इति यण् न प्रवर्तते । क्ङिति लुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति स्थानिवत्त्वनिषेधात् ॥

( उद्द्योतः ) ननु तस्य स्थानिवत्त्वादित्ययुक्तम् , तेन विनापि टित एत्वात् प्र.यीवर्णयोरित्यस्य परत्वात्प्राप्तेरत आह—इट इति । अन्तरङ्गत्वादिति भावः ॥ नित्यत्वादिति । लोपस्तु विकरणे कृते तेन व्यवधानान्न प्राप्नोतीति भावः ॥ यद्यपि लुकि इलोपप्राप्तेः सोऽपि नित्यः । तथापि विकरणसंप्रधारणामात्राभिप्रायेणेदम् ॥ ननु परस्मिन्नित्यस्याभावे शब्लुकः स्थानिवत्त्वेन एरनेकाच इति यण् स्यात् । तत्र च कृते, यलोपे स्थानिवत्त्वनिषेधेन इकारपरत्वाभावाद् न लोपप्राप्तिः, यलोपे लोपरूपाजादेश एव नेति नियमस्तु निमित्तभूताजादेशविषय एवास्तु । परस्मिन्निति च न कार्यमत आह—एरनेकाच इति ॥ एतेन शब्लुकः स्थानिवत्त्वेन व्यवधानात् यीवर्णयोरित्यस्य न प्राप्तिरित्यपास्तम् ॥

( तत्त्वालोकः ) भाष्ये—एकारः—'टित आत्मनेपदानां टेरे' इत्येकारः । यीवर्णयोरिति—अस्य 'दीधीवेव्योरन्त्यस्य लोपः स्याद्यकारे इवर्णे च परे' इत्यर्थः । वचनादिति—स्थानिवद्भावाभावादिति शेषः । एवमग्रेऽपि । तथाच—इकारपरकत्वाभावाद् 'यीवर्णयोरि'त्यस्याप्राप्तेर्लोपो न भवतीति भावः ।

प्रदीपे—एत्वे कृते इति—तस्य स्थानिवत्त्वादिति शेषः । तत्र—तयोर्मध्ये ।

उद्द्योते—लुकीति—विकरणस्येत्यादिः । यलोपे इति—'यीवर्णयोरि'त्यनेन कर्तव्ये इत्यादिः । 'न पदान्ते'ति सूत्रेणेति शेषः । यलोपे इति—कर्तव्ये इति शेषः । न—न स्थानिवत् । अस्त्विति—अत्र त्वेकारस्य न यलोपनिमित्तत्वमिति भावः । नन्वेतावता ग्रन्थेन किं फलितमित्यत आह—परस्मिन्निति च न कार्यमिति । तथा च लाघवमित्याशयः । प्राचोक्तं खण्डयति—एतेनेति । 'क्ङिती'ति स्थानिवत्त्वनिषेधेनेत्यर्थः ।

इति परस्मिन्नित्येतत्प्रयोजननिरूपणम् ।

( पूर्वविधिग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

अथ पूर्वविधाविति किमर्थम् ? ॥

( समाधानभाष्यम् )

हे गौः । बाभ्रवीयाः । नैधेयः ॥

( प्रथमप्रयोजनोपपादनभाष्यम् )

हे गौरित्यौकारः परनिमित्तकः । तस्य स्थानिवद्भावाद् 'एङ्ह्रस्वात्संबुद्धेः' इति लोपः प्राप्नोति । पूर्वविधाविति वचनान्न भवति ॥

( तत्त्वालोकः ) **औकारः**—'गोतो णिदि'ति गोशब्दात्परस्य सर्वनामस्थानस्य णिद्वद्भावेन 'अचो ञ्णिती'त्यौकारः ।

( प्रयोजननिराकरणभाष्यम् )

नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—'न संबुद्धिलोपे स्थानिवद्भावो भवति' इति । यदयम् 'एङ्ह्रस्वात्संबुद्धेः' इत्येङ्ग्रहणं करोति ॥

( प्रदीपः ) **यदयमिति** । अग्ने वायो इति स्थानिवत्त्वात् **ह्रस्वा**दित्येव लोपः सिद्धः । खट्वे माले इत्यादौ **हल्ङ्याब्भ्य** इति ॥ नयत्यादीनां विजन्तानां विचि गुणे ने लो इति कथं संबुद्धिलोप इति चेत् । नैतेभ्यो विच् दृश्यते ॥

( उद्द्योतः ) **ह्रस्वादित्येवेति** । सेस्मृतोशब्दादावप्येवम् ॥ यत्र स्थानिवत्त्वेऽपि न ह्रस्वान्तता तत्राह—**खट्वे इति** ॥ लोपः सिद्ध इत्यनुषज्यते । स्थानिवत्त्वादेवेकाराकारप्रश्लेषेऽपि न दोषः ॥ **नैतेभ्य इति** । एवं दीर्घैकारान्तप्रकृतिकसेइत्यादीनामेकाक्षरकोशबोधितस्य एइत्यस्य च संबुद्धावभिधानाभावो बोध्यः ॥ अत्रेदं चिन्त्यम्—ओग्रहणस्य भाष्ये कृतत्वेन दीर्घोकारान्तप्रकृतिकओकारान्तानभिधाने मानाभावः । **गोर्थं**मिति भाष्यं तु धोशब्दस्य सर्वसंमतया ओकारान्तोपलक्षणतया व्याख्येयमेव सर्वैः ॥ किंच संबुद्धावनभिधानेनोपपत्तौ **सर्वथा** विजभावकल्पना कुत इति ॥

अपरे तु पूर्वविधावित्यस्याभावेऽयं विचारः । तत्र दीर्घान्तप्रकृतिक-एकारान्ते स्थानिवत्त्वेनैङोऽभावात् विनातिदेशबाधं प्रत्याहारग्रहणचारितार्थ्यस्य वक्तुमशक्यत्वादनभिधानकल्पने न मानम् । न चेदं भाष्यमभावातिदेशानङ्गीकारेणैव प्रवृत्तमिति वाच्यम् । **अथवा योऽत्रादेश** इति भाष्येण तदाश्रयणात् । आगत्य वैयाघ्रपद्य इत्यत्र **इत्यादेः** प्रत्युदाहरणेन तदाश्रयणाच्चेत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**आचार्येति**—यत इत्यादिः । **अयम्**—आचार्यः ।

प्रदीपे—नन्वत्रैङ्ग्रहणाभावे-तत्सत्त्वात्रत्र लोपः सिद्ध्यति, तत्र का गतिरित्यत आह—**अग्ने इति** । यदि सम्बुद्धिलोपे कर्तव्ये स्थानिवद्भावः स्यात्तर्हीत्यादिः । **कथमिति**—स्थानिवत्त्वेऽपि दीर्घ स्वादित्याशयः । तथाचैङ्ग्रहणं व्यर्थमेवेति भावः ।

उद्द्योते—कैयटीयन्यूनतां निराकरोति—**से इति** । 'हल्ङ्याब्भ्य इती'त्यस्य साकांक्षत्वादाह—**लोप इति** । ननु तत्र प्रश्लेषसत्त्वादत्र स्थानिवत्त्वेऽपि प्रश्लिष्टरूपत्वाभावाद्दोष एवेत्यत आह—**स्थानीति** । आत्ववत् प्रश्लिष्टरूपत्वमपि स्थानिवत्त्वेनैवेति भावः । इदमप्युपलक्षणमिति न कैयटस्य न्यूनतेत्याह—**एवमिति** । तेभ्यो विचोऽनभिधानवदित्यर्थः । ज्ञापकपरभाष्यसहितं प्रदीपं दूषयति—**अत्रेदमिति** । **मानाभाव इति**—तथा च—तत्र लोपोपपत्तये एङ्ग्रहणस्यावश्यकत्वाद् न ज्ञापकत्वमित्याशयः । नन्वेवमुत्तरभाष्यासङ्गतिरित्यत आह—**गोऽर्थमितीति** । अनभिधानमभ्युपेत्य कैयटोक्तं खण्डयति—**किञ्चेति** । पुनः प्रकारान्तरेण कैयटोक्तं दूषयति—**अपरे त्विति** । ननु तत्र स्थानिवत्त्वमेव न, भावमात्रातिदेशादित्यत आह—**न चेति** । **तदिति**—अभावातिदेशेत्यर्थः । एवमग्रेऽपि । **आदिना**—परस्मिन्नित्यस्य परिग्रहः ।

( प्रयोजनसाधकभाष्यम् )

नैतदस्ति ज्ञापकम् । गोऽर्थमेतत् स्यात् ॥

( उद्द्योतः ) भाष्ये—**गोर्थमेतदिति** । अनिष्टलोपसिद्ध्यर्थमेव तत्, स्थानिवद्भावेनैङ्त्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**गोऽर्थमिति**—'हे गौः' इत्यत्र सुलोपार्थमित्यर्थः । यत इत्यादिः ।

उद्द्योते—अत्र लोपो नेष्टरूपसाधक इत्यत आह—**अनिष्टेति** । **तत्**—एङ्ग्रहणम् । नन्वेवमपि तत्रैङ्त्वाभावात् कथं लोप इत्यत आह—**स्थानीति** ।

( प्रयोजनबाधकज्ञापकाशयान्तरभाष्यम् )

यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा हि 'ओह्रस्वाद्' इत्येव ब्रूयात् ॥

( तत्त्वालोकः ) **करोतीति**—तद् ज्ञापकं स्यादिति शेषः ।

( द्वितीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्—बाभ्रवीयाः माधवीयाः । वान्तादेशः परनिमित्तकः, तस्य स्थानिवद्भावाद् 'हलस्तद्धितस्य' इति यलोपो न प्राप्नोति । पूर्वविधाविति वचनाद्भवति ॥

( प्रदीपः ) **बाभ्रवीया इति** । सन्निपातपरिभाषाया अनित्यत्वाद्यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततां प्रतिपद्यते ॥

( उद्द्योतः ) **बाभ्रवीया इति** । मधुबभ्र्वोरिति यञि वृद्धावोर्गुणेऽवि वृद्धाच्छे **यस्येति** लोपे **हलस्तद्धितस्येति** सूत्राद्धलइत्यनुवर्तमाने **आपत्यस्येति** सूत्रेण यलोपः ॥ ननु तत्र सिद्धान्तेऽपि यनिमित्तो वान्तादेशः कथं यलोपनिमित्तं स्यादत आह—**संनिपातेति** ॥

( तत्त्वालोकः ) उद्द्योते—**अवि**—अवादेशे । **तत्र**—बाभ्रवीया इत्यादौ ।

( प्रयोजननिराकरणभाष्यम् )

एतदपि नास्ति प्रयोजनम् । स्वाश्रयमत्र हल्त्वं भविष्यति ॥

अथवा—योऽत्रादेशो नासावाश्रीयते, यश्चाश्रीयते नाऽसावादेशः ॥

( प्रदीपः ) **योऽत्रादेश इति** । वान्तः समुदायः ॥ **यश्चेति** । लोपं प्रति निमित्तत्वेन वकारः ॥

( तृतीयप्रयोजनोपपादनभाष्यम् )

इदं तर्हि प्रयोजनम्—नैधेयः । आकारलोपः परनिमित्तकः । तस्य स्थानिवद्भावाद् द्व्यज्लक्षणो ढग् न प्राप्नोति । पूर्वविधाविति वचनाद्भवति ॥

( प्रदीपः ) **नैधेय इति** । स्थानिवद्भावात् त्र्यच्त्वव्यपदेशे

सति विरोधात् स्वाश्रयं द्व्यच्त्वं न लभ्यते। यदविरुद्धं स्वाश्रयं तदनिदेशेन न बाध्यते, विरुद्धं तु बाध्यत एव। संख्याकृतस्तु व्यपदेशः परस्परपरिहारेण लोके स्थितः। न हि त्रिपुत्रो द्विपुत्रव्यपदेशं लभते ॥

**( उद्द्योतः )** भाष्ये **नैधेय इति।** निपूर्वाद्धाञः किप्रत्यये आतो लोपे गतिसमासे **द्व्यचः, इतश्चानिञ** इति ढक् ॥

**( तत्त्वालोकः )** प्रदीपे—नन्वियमुक्तिः 'न ह्यतिदेशेन स्वाश्रया धर्मा निवर्त्यन्ते' इत्युक्तिं विरुणद्धीत्यत आह—**यदविरुद्धमिति।** एवञ्च न पूर्वापरग्रन्थविरोध इति भावः।

उद्द्योते—**किप्रत्यये—**'उपसर्गे घोः किरि'ति किप्रत्यये। 'इतश्चानिञः' इत्यत्र 'द्व्यचः' इत्यस्यानुवृत्तिरिति सूचनायाह—**द्व्यच इति। ढगिति—**नस्यैयादेशः, 'किति चे'त्यादिवृद्धिरिति शेषः।

**( इति पूर्वविधिग्रहणप्रयोजननिरूपणम् )**

**( अथ विधिग्रहणप्रयोजननिरूपणम् )**

**( आक्षेपभाष्यम् )**

**अथ विधिग्रहणं किमर्थम् ? ॥**

**( प्रदीपः ) अथेति।** **अचः परस्मिन् पूर्वस्ये**त्येवं षष्ठ्या विध्यर्थं आक्षिप्तः-पूर्वस्य कार्ये कर्तव्य इति। कार्यं च विधिरिति प्रश्नः ॥

**( तत्त्वालोकः )** प्रदीपे—**इति प्रश्नः—**इति हेतोः प्रश्नः।

**( समाधानभाष्यम् )**

**सर्वविभक्त्यन्तः समासो यथा विज्ञायेत—पूर्वस्य विधिः पूर्वविधिः, पूर्वस्माद्विधिः पूर्वविधिरिति ॥**

**( अथ पञ्चमीसमासप्रयोजननिरूपणम् )**

**( आक्षेपभाष्यम् )**

**कानि पुनः पूर्वस्माद्विधौ स्थानिवद्भावस्य प्रयोजनानि ? ।**

**( प्रयोजनोद्देशभाष्यम् )**

**बेभिदिता चेच्छिदिता। माथितिकः। अपीपचन् ॥**

**( प्रथमप्रयोजनोपपादनभाष्यम् )**

**बेभिदिता चेच्छिदितेति। अकारलोपे कृते यलोपे च एकाज्लक्षण इट्प्रतिषेधः प्राप्नोति ॥ स्थानिवद्भावान्न भवति ॥**

**( प्रदीपः ) बेभिदितेति।** बेभिद्यशब्दात्तृच्। नित्यत्वादल्लोपयलोपौ। तत **एकाच** इतीट्प्रतिषेधः प्राप्नोति। **उपदेश**ग्रहणं द्वयोरपि विशेषणम्—उपदेशे एकाचः, उपदेशेऽनुदात्तादिति। द्विःप्रयोगश्च द्विर्वचनम्। अल्लोपस्य तु स्थानिवत्त्वे व्यवधानादिट्प्रतिषेधाभावः ॥

**( उद्द्योतः )** ननु च बेभिदितेत्यत्राल्लोपयलोपाभ्यां प्रागेव परत्वादिट्, न च तदा प्रतिषेधप्राप्तिरत आह—**नित्यत्वादिति। तत** इत्यनेनेटोऽनित्यत्वमुक्तम् ॥ ननु कृतद्विर्वचनं नैकाजत आह—**उपदेशेति ॥** ननु भिद् भिद् इति द्विर्वचनरूपादेशस्य न भिदुपदेश उपदेश इति कथमुपदेशे एकाच्त्वमत आह—**द्विःप्रयोगश्चेति।** यलोपेऽवशिष्टस्यैव भिदित्यस्य स उपदेश इति भावः॥ परे तु **एकाच उपदेश** इत्यत्र **एकाचो द्वे** इति सूत्रस्थभाष्यरीत्या विहितविशेषणाश्रयणादङ्गसंज्ञायामल्लोपस्य [ षडिके भसंज्ञायामल्लोपस्यैव ] स्थानिवत्त्वेन तृजादिनिरूपिताङ्गत्वस्य बेभिदिति सत्त्वादेकाच्त्वाभावाच्च पञ्चमीसमासं विनापि नात्रानुपपत्तिरित्याहुः ॥

**( तत्त्वालोकः )** उद्द्योते—**न च—**न हि। **भिदुपेति—**तयोः स्वरूपभेदादित्याशयः। **सः—**भिदादेशः। भाष्याभिप्रायमाह—**परे त्विति। भाष्येति—**अङ्गत्वात्तृचि इडनिषेधमाशङ्क्य 'एकाचोऽङ्गाद्' इति परिहारभाष्यस्येत्यर्थः। हेत्वन्तरमाह—**अङ्गसंज्ञायामिति। आदिना—**तृच्यादिपरिग्रहः। **इति—**इत्यादि। **अत्र—**बेभिदितेत्यादौ।

**( द्वितीयप्रयोजनोपपादनभाष्यम् )**

**माथितिक इत्यकारलोपे कृते '—तान्तात्कः' इति कादेशः प्राप्नोति। स्थानिवद्भावान्न भवति ॥**

**( प्रदीपः ) माथितिक इति।** यदा **ठस्येक** इति संघातग्रहणम्, तदा स्थानिवद्भावादिकस्य कादेशः प्राप्नोति। [ स्थान्यादेशयोः ] वर्णनिर्देशे त्वल्विधित्वात् कादेशस्याप्रसङ्गः। **सन्निपात**परिभाषां चानाश्रित्यैतदुक्तम् ॥

**( उद्द्योतः ) वर्णनिर्देशे त्विति।** स्थानिन्यकारो न विवक्षित इति वर्ण एव तत्र स्थानी, ठगादिप्रत्ययेष्वप्यकारस्तथैव। आदेशे च विवक्षित इति ठत्वाभावात्प्राप्तिरेव नेति भावः ॥ **संनिपातेति।** इदं च **ठक्छसोश्चे**ति वार्तिकभाष्ये स्पष्टम् ॥

**( तत्त्वालोकः )** भाष्ये—**अकारलोपे—**मथितं पण्यमस्येति विग्रहे—'तदस्य पण्यमि'ति ठकि, तस्येकादेशे, 'यस्येति चे'त्यकारलोपे। **तान्तादिति—**इसुसुगित्यादिः।

प्रदीपे—**स्थान्यादेशयोरिति—**अयम्पाठः क्वचिन्न, किन्तु युक्तः। **अल्विधित्वादिति—**नस्येत्यादिः। स्थानिवत्त्वस्यात्राप्रवृत्तेरिति भावः।

उद्द्योते—**भाष्ये इति—**तत्र हीके कृते भस्याढे' इत्येव सिद्धे ठक्पदं न कार्यमित्याशङ्क्य माथितिकादिवत्कादेशो न स्यादित्यवादि ॥ वर्णपक्षेऽल्विधित्वादस्थानिवत्त्वात्। संघातपक्षे 'सन्निपाते'ति नेति कैयटः॥ एवञ्चेदमपि न फलमित्याशयः॥

**( तृतीयप्रयोजनोपपादनभाष्यम् )**

**अपीपचन्नित्येकादेशे कृते 'अभ्यस्ताज्झेर्जुस् भवति' इति जुस्भावः प्राप्नोति। स्थानिवद्भावान्न भवति ॥**

**( प्रदीपः ) अपीपचन्निति।** झेरितश्चेतीकारलोपे कृते **एकदेशविकृतमनन्यवद्भवतीति** झिरेवायम्, तत्रान्तादेशे कृते चङकारस्य च पररूपे कृते तस्यादिवद्भावाज्जुस् प्राप्नोति॥ स्थानिवद्भावे तु णिलोपस्य पररूपस्य च व्यवधानाद् न भवति॥ ननु पूर्वस्मादपि विधौ स्थानिवद्भावे कथं **हे गौ**रित्यादि सिध्यति॥ उच्यते—अचो यः पूर्वस्तस्मान्निमित्तत्वेनाश्रितादित्याश्रयणात्॥ तथाहि—गोशब्दे ओकारात् पूर्वो गकारः, न च तस्माद्विधिरस्ति ॥

**( उद्द्योतः ) न भवतीति।** न चापीपचन्नित्यत्र **न पदान्ते**ति निषेधात्स्थानिवद्भावो दुर्लभ इति वाच्यम्। पदचरमावयवे कर्तव्ये आदेशस्य पदान्तरस्थस्यैव ग्रहणादत्र तदप्राप्तेः। **पदेऽन्त** इत्यर्थस्य भाष्ये वक्ष्यमाणत्वेनैतदर्थलाभः॥ केचित्तु पूर्वोत्तरसाहचर्येणाभ्यस्तस्य भावरूपादेशानपहृतविकरणकस्य ग्रहणादत्र प्रत्यैषिषन्नित्यादौ च न दोष इत्याहुः ॥ वस्तुत ईदृशसाहचर्याश्रयणापेक्षया पञ्चमीसमासाश्रयणे गौरवाभाव इत्यपीपचन्निति तदुदाहरणमेव बोध्यम् ॥ **नच तस्मादिति।** निमित्तत्वेनाश्रितादिति शेषः ॥ वस्तुतो **निमित्तत्वे-**

**नाश्रितादि**त्यव्यवधानोपलक्षणम् ॥ **नच तस्मादिति ।** ओकारेण व्यवधानादित्यर्थः ॥ तदंशे निर्दिष्टपरिभाषाबाधे मानाभावादिदमेव युक्तम् । **निमित्तत्वेने**त्यादेः शब्दमर्यादयाऽलाभाच्च । अत एव **तथाहि गोशब्द** इत्यादि सार्थकम् । अन्यथोक्तार्थस्योपपादनानपेक्षत्वेन तद्वैयर्थ्यम् । निमित्तत्वेनाश्रितादित्येतद्रहितस्य तस्यायुक्तत्वं चेत्यन्ये ॥

**( तत्त्वालोकः )** भाष्ये—'सिजभ्यस्तविदिभ्यश्चे'ति सूत्रमभिप्रेत्याह—**अभ्यस्तादिति ।**

प्रदीपे—**तत्रेति—**अत इत्यादिः । **कृते इति—**तदकारस्येति शेषः । **पररूपे—**'अतो गुणे' इति पररूपैकादेशे । **आदिवद्भावादिति—**झिग्रहणेन ग्रहणादिति शेषः । **सिद्ध्यतीति—**तत्र गकारात्परस्य विधौ वृद्धेः स्थानिवद्भावाद् 'एङ्ह्रस्वादि'ति सम्बुद्धिलोपापत्तेरिति भावः ।

उद्द्योते—**पदान्तरस्थस्यैव—**प्रत्यासत्त्या परपदस्थस्यैव । ननु कथमेतदर्थलाभ इत्यत आह—**पदेऽन्त इति ।** अत एव—वेतस्वानित्यादिसिद्धिरित्याशयः । **केचित्त्विति—**दीक्षितादयस्त्वित्यर्थः । 'सिजभ्यस्तविदिभ्यश्चे'ति सूत्रे इति शेषः ॥ **अत्र—**अपीपचन्नित्यत्र अन्ये तु—वेत्तेर्लङ्येवानन्तरो झिः सम्भवतीति तत्साहचर्यादभ्यस्तादपि लङ एव झेर्जुस्विधानान्नात्रापत्तिः । न च सिचा साहचर्याल्लुङोऽपि ग्रहणमस्त्विति वाच्यम् , 'विप्रतिषेधे परमि'ति परसाहचर्यस्य बलीयस्त्वादिति वदन्ति ॥ अत्रारुचिमाह—**वस्तुत इति ।** तत्रेति शेषः । 'द्वित्रिश्चतुरिति कृत्वोऽर्थे' इति सूत्रे कृत्वोऽर्थग्रहणेन साहचर्यपरिभाषाया अनित्यत्वं ज्ञापितम् , अत एव—'दीधीवेवीटामि'ति सूत्रे दीधीवेव्योः साहचर्याद्धातोरिटो न ग्रहणम् , तथा पञ्चमीसमासप्रयोजनतयाऽपीपचन्नित्युदाहृतवतो भाष्यकारस्य तत्र तस्याः नियामकत्वं न सम्मतमित्याशयेनाह—**ईदृशेति । पञ्चमीति—**अत्रेत्यादिः । **तदिति—**पञ्चमीसमासेत्यर्थः । ननु पञ्चमीसमासाश्रयणे विगणय्येत्यादि न सिद्ध्येत् , तत्र हि—'ल्यपि लघुपूर्वादि'ति णेरयादेशे कर्तव्येऽल्लोपस्य स्थानिवत्त्वात् स न स्यादिति चेन्न, पञ्चमीसमासस्यानित्यत्वाभ्युपगमात् ॥ कैयटोक्त्यनुसारेणाह—**निमित्तत्वेनेति ।** यथाश्रुतं कैयटोक्तं दूषयति—**वस्तुत इति । इत्यर्थः—**इति भावः । अत्र हेतुं कथयन्ननयोस्तारतम्यमाह—**तदंशे इति ।** परत्वांशे इत्यर्थः । इदं कैयटसम्मतमपीत्याह—**अत एवेति ।** तस्य तथैवेष्टत्वादेवेत्यर्थः । **तस्य—**'न च तस्मादि'त्यस्य ।

### ( उक्तप्रयोजननिराकरणभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । प्रातिपदिकनिर्देशोऽयम् । प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति, न काञ्चित्प्राधान्येन विभक्तिमाश्रयन्ति । तत्र प्रातिपदिकार्थे निर्दिष्टे यां यां विभक्तिमाश्रयितुं बुद्धिरुपजायते, सा साश्रयितव्या ॥**

**( तत्त्वालोकः ) प्रातिपदिकेति—**यत इत्यादिः । **अयम्—**'पूर्वे'त्ययम् । **अर्थतन्त्राः—**स्वार्थमात्रबोधकविभक्त्यधीनाः । **न—**न तु । **काञ्चित् प्राधान्येन विभक्तिमिति—**काञ्चिद् विशिष्य प्रकृतार्थान्वययोग्यविभक्त्यर्थमित्यर्थः । **तत्रेति—**तथा चेत्यादिः । **निर्दिष्टे—**बोधिते । एवञ्च—पश्चादन्वययोग्यविभक्त्यर्थाकाङ्क्षायां यद्यद्विभक्त्यर्थमन्वयित्वेनाश्रयितुं लक्ष्यानुसाराद्बुद्धिरुपजायते, सा सा विभक्तिरध्याहार्या । पूर्वेत्यस्य साधुत्वार्थमुत्पन्नविभक्तेस्तु सौत्रत्वाल्लुगिति भावः । यद्यपि—पूर्वेत्यत्र सम्बन्धसामान्ये षष्ठ्याश्रयणेनैव सकलेष्टसिद्धिः सम्भवति, तथापि स्पष्टप्रतिपत्त्यर्थं तत्तद्विभक्त्याश्रयणम् । अत्रत्यो विशेषविचारस्तु—स्थानिवत्सूत्रभाष्यस्थप्रकृतग्रन्थव्याख्यासु द्रष्टव्यः ।

### ( विधिग्रहणप्रयोजनान्तरभाष्यम् )

**इदं तर्हि प्रयोजनम्—विधिमात्रे स्थानिवद्भावो यथा स्यात् । अनाश्रीयमाणायामपि प्रकृतौ । वाय्वोरध्वर्य्वोः, 'लोपो व्योर्वलि' इति यलोपो मा भूदिति ॥**

**( प्रदीपः ) विधिमात्र इति ।** अचः परस्मिन् पूर्वस्येत्यनेन स्थानिवद्भावे विहिते पुनर्विधाविति वचनं नियमार्थं—स्थानिवदेव यथा स्यात् , मा भूत् स्वाश्रयमित्यर्थः । **अनाश्रीयमाणायामिति ।** कार्ये निमित्तत्वेनेत्यर्थः ॥

**( उद्द्योतः )** ननु विधिग्रहणे कृतेऽपि कथं स्थानिवत्त्वेन स्वाश्रयनिवृत्तिरत आह—**अच इति ।** अचः **परस्मिन्पूर्वे**त्येको योगः, **पूर्वे**ति लुप्तविभक्तिकम् । **विधा**विति द्वितीयः । तेन स्थानिवदेवेति नियमाश्रयणमिति भावः ॥ भाष्ये—**विधिमात्रे** इत्यस्य विवरण**मनाश्रीयमाणायामपि प्रकृता**विति । स्थानिनीत्यर्थः ॥ **वाय्वोरिति ।** अत्र न बहिरङ्गासिद्धत्वम्, उभयोर्वर्णनिमित्तत्वेन समत्वात् । पूर्वं पूर्वमन्तरङ्गमित्यपि युगपत्प्राप्तौ पूर्वमन्तरङ्गप्राप्तिनियामकं, न तु जातस्यासिद्धत्वे इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**विधिमात्रे इति—**अत्र—मात्रशब्दः कार्त्स्न्यार्थकः । तथा च—शास्त्रीयेऽशास्त्रीये च विधावित्यर्थः । **स्यात्—**स्यादिति । **अपिना—**आश्रीयमाणायां प्रकृतावित्यस्य परिग्रहः । नन्वशास्त्रीयकार्ये प्रकृतेरनाश्रयणे वा स्थानिवत्त्वस्य किं प्रयोजनमित्यत आह—**वाय्वोरध्वर्य्वोरिति ।** इत्यादौ स्थानिवत्त्वादिति शेषः ॥ यलोपादिरेव शास्त्रीयः, न तु यलोपाभावादिः । एवम्—आवधिषीष्टेत्यादावेवात्मनेपदादौ कर्तव्ये प्रकृतिर्हन्त्यादिराश्रीयते, न तु वाय्वोरित्यादौ यलोपादौ कर्तव्ये प्रकृतिरुकारादिः । तथा चात्र—यलोपे तदभावे वा कर्तव्ये स्थानिवत्त्वाद् यलोपाभावः सिद्ध्यतीत्याशयः ।

प्रदीपे—**स्वाश्रयम्—**स्वाश्रयमिति । नन्वादेशे प्रकृतेराश्रयणमेवेत्यत आह—**कार्ये इति ।**

उद्द्योते—**नन्विति—**शास्त्रीयेऽशास्त्रीये च अथवा प्रकृतेराश्रयणेऽनाश्रयणे च विधौ कर्तव्ये स्थानिवत्त्वार्थमिति शेषः ॥ तथा च—विधिग्रहणं योगविभागार्थम् , तेन पूर्वस्य विधौ स्थानिवदेवेति नियमात् स्वाश्रयं व्यावर्त्यते इत्याशयमाह—**अचः परस्मिन्निति । पूर्वेतीति—**तत्रेत्यादिः । **विधावितीति—**तथेत्यादिः । नन्वेवमपि प्रकृतसूत्रे पूर्वसूत्रादेव विधिग्रहणमनुवर्त्तयिष्यते, तदनुवृत्तिसामर्थ्यादेव च 'स्थानिवद्देव न तु स्वाश्रयमि'ति नियमो लप्स्यत इति पुनर्विधिग्रहणं किमर्थमिति चेन्न, 'पूर्वस्यैव विधौ स्थानिवन्न तु पूर्वपरयोर्विधावि'ति नियमलाभार्थन्तदावश्यकत्वात् । अत एव—आरतुरित्यादौ सवर्णदीर्घे कर्तव्ये 'ऋच्छत्यृतामि'ति गुणस्य न स्थानिवत्त्वमिति भावः ॥ **विवरणम्—**वैकल्पिकम् । प्रकृतावित्यस्यार्थमाह—**स्थानिनीति ॥** अत्र यलोपाभावरूपप्रयोजनस्यान्यथासिद्धिं निराकरोति—**अत्र नेति । बहिरङ्गेति—**अन्तरङ्गे यलोपे कर्तव्ये बहिरङ्गस्य यण इत्यर्थः । **उभयोः—**यण्—यलोपयोः । **असिद्धत्वे इति—**नियामकमित्यनुषज्यते ।

( भाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**किं तर्हीति ॥**

**( तत्त्वालोकः )** अस्तीति—किमित्यादिः । अर्थात्-किमेतदर्थं विधिग्रहणं कर्तव्यमिति भावः ॥ **इति**—एतत् । अर्थात्-एतत्प्रयोजनमेव । एतदर्थञ्च विधिग्रहणं कर्तव्यमिति भावः ॥

—ooXoo—

( स्वविधौ स्थानिवद्भावनिरूपणाधिकरणम् )

( ३३८ आक्षेपवार्तिकम् ॥ १ ॥ )

**[ ॥ * ॥ अपरविधाविति तु ॥ * ॥ ]**

( अथैकदेशिभाष्यम् )

**अपरविधाविति तु वक्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**स्वविधावपि स्थानिवद्भावो यथा स्यात् ॥**

**( उद्द्योतः )** भाष्ये स्वशब्देन स्थान्यादेशश्चोच्यते । **अपरविधाविति तु वक्तव्य**मित्यारभ्य **कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानी**त्यन्ता एकदेश्युक्तिः । आयन्नासन्नित्यनयो**रसिद्धव**त्सूत्रेण सिद्धः ॥ धिन्वन्तीत्यादावुकारवृत्त्यार्धधातुकत्वस्याल्धर्मत्वेन तस्य दुर्लभत्वादिटोऽप्राप्तेः । सिद्धान्तिनापि भावसाधनविधिशब्दस्याप्युपादानमत्रेति सिद्धान्तं बोधयितुं तत्रोक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—अपिना—'पूर्वविधावि'त्यस्य समुच्चयः । **स्यात्**—स्यादिति ।

उद्द्योते—विनिगमनाविरहादाह—**स्थान्यादेशश्चेति** । भाष्यं दूषयति—**अपरेति** । अत्र क्रमशो हेतुद्वयमाह—**आयन्निति** । **धिन्वन्तीत्यादाविति**—तथेत्यादिः । नन्वेतदज्ञानेन पूर्वपक्षेऽपि सिद्धान्तिनेदं कुतो नोक्तमित्यत आह—**सिद्धान्तिनाऽपीति** । **अपिना**—कर्मसाधनविधिशब्दसमुच्चयः ।

( आक्षेपभाष्यम् )

**कानि पुनः स्वविधौ स्थानिवद्भावस्य प्रयोजनानि ? ॥**

( प्रयोजनोद्देशभाष्यम् )

**आयन्, आसन् । धिन्वन्ति, कृण्वन्ति । दध्यत्र, मध्वत्र । चक्रतुः, चक्रुः ॥**

( प्रथमप्रयोजनोपपादनभाष्यम् )

**इह तावदायन्नासन्निति । इणस्त्योर्यण्लोपयोः कृतयोरनजादित्वाद् 'आडजादीनाम्' इत्याण् न प्राप्नोति । स्थानिवद्भावाद् भवति ॥**

**( प्रदीपः ) आयन्निति** । अजादेरेवाड्विधानात्स्वविधिराट् ॥

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**धिन्वन्तिकृण्वन्तीति । यणादेशे कृते वलादिलक्षण इट् प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

**( उद्द्योतः )** भाष्ये—**धिन्वन्तीत्यादि** । यद्यप्यङ्गात्परस्य वलादेरिडित्यर्थात्पूर्वविधावित्युक्तावपि पञ्चमीसमासेनेदं सिध्यति । तथापि अङ्गसंज्ञानिमित्तस्येत्यर्थं **इत्य**भिप्रायेणेदमित्याहुः ॥

**( तत्त्वालोकः )** उद्द्योते—अपिना—स्वविधावित्युक्तिसमुच्चयः ।

( तृतीयप्रयोजनोपपादनभाष्यम् )

**दध्यत्र मध्वत्रेति । यणादेशे कृते 'संयोगान्तस्य लोपः' प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

**( प्रदीपः )** दध्यत्रेति । **पूर्वत्रासिद्धे न स्थानिवदि**ति वचनादत्र नास्ति । **तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति** यत्र संयोगादिलोपस्य संयोगान्तलोपस्य चाभावात् पदान्तविधिं प्रति नेत्यवचनपि प्रतिषेधोऽत्र नास्ति । पदान्ते विधातव्ये स प्रतिषेधः । न च लोपोऽभावात्मकत्वात्पदान्तः ।

**( उद्द्योतः )** उपलक्षणार्थत्वादिति । इदमप्यन्यत्प्रयोजनमात्रम् । न त्वयं सिद्धान्त इति बोध्यम् । अत एवादिमं चरितार्थम् : **यणः प्रतिषेधो वाच्य** इतिवदिदमनाश्रित्येदमिति तत्त्वम् । **पदान्ते विधातव्ये इति** । पदचरमावयवे कर्तव्ये इत्यर्थः ।

**( तत्त्वालोकः )** प्रदीपे—ननु त्रिपादीस्थे कार्ये कर्तव्ये स्थानिवत्त्वस्य 'पूर्वत्रासिद्धीये न स्थानिवदि'ति परिभाषया निषेधात् कथमत्र संयोगान्तलोपे कर्तव्ये स्थानिवत्त्वमित्यत आह—**पूर्वत्रेति** । ननु 'तस्य दोषः' इत्यादि वार्तिकेन संयोगादिलोपादिष्वेवास्या अप्रवृत्तेर्बोधनात् कथमत्रास्या अप्रवृत्तिरित्यत आह—**तस्य दोष इति** । **संयोगादिलोपस्य**—संयोगादिलोपपदस्य । **उपलक्षणार्थत्वादिति**-संयोगादिलोपपदेन संयोगान्तलोपस्यापि संग्रहादिति शेषः । नन्वेवमपि 'न पदान्ते'ति सूत्रेणात्र स्थानिवत्त्वनिषेधः स्यादित्यत आह—**पदान्तविधिमिति** । **न**—स्थानिवत्त्वं न । **पदान्ते इति**—यत इत्यादिः ।

उद्द्योते—'न पदान्ते'ति सूत्रशेषपरवायाः 'स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतगि'ति कैयटोक्तेरेव विरोधादाह—**न त्विति** । तं द्रढयति—**अत एवेति** । तस्यासिद्धान्तत्वादेवेत्यर्थः । **आदिपदम्**—'तस्य दोषः संयोगादी'त्यत्रादिपदम् । नन्वेवं भाष्यस्य कथं सङ्गतिरित्यत आह—**यण इति** ।

( चतुर्थप्रयोजनोपपादनभाष्यम् )

**चक्रतुः चक्रुः । यणादेशे कृते अनच्कत्वाद् द्विर्वचनं न प्राप्नोति । स्थानिवद्भावाद् भवति ॥**

**( प्रदीपः ) चक्रतुरिति** । अत्र साच्कस्य द्विर्वचनमिति **स्व**विधिर्भवति । ततश्च **द्विर्वचनेऽचीत्ये**तन्न वक्तव्यं भवति ॥ नन्वपरविधावित्युच्यमाने कथं बेभिदितेत्यादयः संगृह्यन्ते । उच्यते—निमित्तापेक्षापरत्वविज्ञानात् । तथाहि—**बेभिदिते**त्यत्राकारलोपस्य निमित्तमार्धधातुकम् । न च तस्मात्परस्य विधिः । किं तर्हि ? तस्यैवेति सिद्धः स्थानिवद्भावः । एवं **माथितिकः अपीपचन्नि**त्यत्र बोद्धव्यम् । **हे गौ**रित्यत्र तु स्थानिवद्भावः प्राप्त एचिति प्रत्याहारग्रहणान्न भवति । **बाभ्रवीया** इत्यत्र **योऽत्रादेशो नासावाश्रीयते** इति परिहारः ॥ **नैधेय** इत्यत्र तु निमित्तात्परस्य ढको विधिरिति स्थानिवत्त्वाभावः ॥

**( उद्द्योतः ) ततश्चेति** । एवं च तत्सूत्राकरणे लाघवानुरोधेना**परविधा**वित्येव वक्तव्यमिति भावः ॥ निन्युतुरित्यादिसिद्धये तस्यावश्यकत्वाच्चिन्त्यमिदम् । भाष्ये तु संभवमात्रेणेदमुदाहृतम् । उरदत्त्वमपि स्थानिवद्भावेनैव सुलभं लक्ष्यविशेषे । लक्ष्यानुरोधादयमपि रूपातिदेश इति वा कैयटाशयः ॥ स्थान्यादेशयोरन्यतरापेक्षया परत्वमाश्रित्य शङ्कते—**नन्विति ॥ निमित्तेति** । निमित्तं च यस्य स्थानिवत्त्वं तदीयं ग्राह्यम् । किंचिदमयुक्तम् । एतन्न्यासखण्डनायाग्रे

भगवता निमित्तस्यावधिताया वक्ष्यमाणतया तदनाश्रयणेनैवैतद्भाष्यप्रवृत्तेः । **अपरविधा**विति न्यासेऽपि पञ्चमीसमासस्य वक्तुं शक्यत्वे तत्संग्रह इत्युचितम् ॥ वार्त्तिकं तु स्वविधिसंग्रहार्थमिति स्पष्टमेव ॥ न चात्र पञ्चमीसमासे हे गौरित्यत्र स्वस्मात्परस्य विधावपि स्थानिवत्त्वं स्यादिति वाच्यम् । पञ्चमीसमासानित्यत्वेनादोषात् ॥ **प्रत्याहारग्रहणादिति ।** सेस्मृतौ इत्यादौ नामनभिधानाश्रयेणैतदुक्तम् ॥ ननु वाभ्रवीया इत्यत्रापत्यस्येति लोपेऽवादेशस्य स्थानिवत्त्वं स्यात् । अवादेशनिमित्तयादिप्रत्ययसंबन्धिन एव विधेः सत्त्वात् । न च **न पदान्ते**ति निषेधः, स्वरदीर्घयलोपेषु लोपाजादेशस्यैव स्थानिवत्त्वनिषेधादत आह—**वाभ्रवीया इति । ढको विधिरिति ।** विधिशब्दो भावसाधनः, संबन्धसामान्यषष्ठ्या समास इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**चक्रुरि**त्यत्र 'चक्रुरिति' इति पाठः ।

उद्द्योते-**तत्सूत्रेति**–'द्विर्वचनेऽची'ति सूत्रेत्यर्थः । कैयटोक्तं दूषयति—**निन्यतुरिति ।** अयं कार्यातिदेश इति सिद्धान्तमतेनाह—**तस्येति।** 'द्विर्वचनेऽची'ति सूत्रस्येत्यर्थः। अन्यथाऽत्रेयङ्विशिष्टस्यैव द्वित्वं स्यादिति भावः। नन्वेवं 'द्विर्वचनेऽची'ति सूत्रसत्त्वे भाष्ये कथं चक्रतुरित्यादेरुक्तिः, तस्य तेनैवोपपन्नत्वादित्यत आह—**भाष्ये त्विति।** एवमुपपाद्य भाष्योक्तं चक्रतुरित्याद्युदाहरणं प्रकारान्तरेणापि योजयति—**उरदत्त्वमपीति ।** 'द्विर्वचनेऽची'त्यत्र 'द्वित्वे कर्त्तव्ये' इत्युक्तेस्तेनासिद्धत्वादिति भावः। कैयटोक्तमपि योजयति—**लक्ष्यानुसारादिति ।** निन्यतुरित्यादाविति भावः। यस्य कस्यचिन्निमित्तग्रहणे दोषस्य तादवस्थ्यादाह—**निमित्तञ्चेति ।** कैयटोक्तं खण्डयति—**किन्त्विति । तदिति**—निमित्तापेक्षपरत्वेत्यर्थः । नन्वेवं कथं बेभिदितेत्यादिसंग्रह इत्यत आह—**अपरेति । अपिना**—प्रकृतसूत्रस्थ-'पूर्वविधावि'त्यस्य परिग्रहः । नन्वेव-**'मपरविधावि**'ति वार्त्तिकस्य वैयर्थ्यमित्यत आह—**वार्त्तिकन्त्विति।** एतदित्यादिः । **अत्र**—'अपरविधावि'ति न्यासे। ननु से-स्मृतौ इत्याद्यर्थमेङिति प्रत्याहारग्रहणमावश्यकमित्यत आह—**से-स्मृतो इति ।**

( अनिष्टापत्तिभाष्यम् )

यदि तर्हि स्वविधावपि स्थानिवद्भावो भवति । 'द्वाभ्याम्, देयम्, लवनम्' अत्रापि प्राप्नोति ॥

द्वाभ्यामित्यत्रात्वस्य स्थानिवद्भावाद् दीर्घत्वं न प्राप्नोति ॥

देयमितीत्वस्य स्थानिवद्भावाद् गुणो न प्राप्नोति ।

लवनमित्यत्र गुणस्य स्थानिवद्भावादवादेशो न प्राप्नोति ॥

**( तत्त्वालोकः ) अत्रापि**—इत्यादावपि स्थानिवद्भावः। ननु तथा सति को दोष इत्यत आह—**द्वाभ्यामिति । अत्वस्य**—त्यदाद्यत्वस्य । **ईत्वस्य**—'ईद्यती'-त्वस्य । **गुणः**—इगन्तलक्षणगुणः।

( अनिष्टापत्तिवारणभाष्यम् )

नैष दोषः । स्वाश्रया अत्रैते विधयो भविष्यन्ति ॥

**( प्रदीपः ) स्वाश्रया इति ।** विधिग्रहणं स्वाश्रयनिवृत्त्यर्थं व्याख्यातमिति स्वाश्रया इत्यन्यथा व्याख्यायते—शब्दानां स्वं लक्षणम्। तेन ज्ञापकाश्रया इत्यर्थः । **'द्वयोरेकस्य डतरच्' 'देयमृणे' 'किरतौ लवने'** इत्यादिज्ञापकमादेशाश्रयकार्यभावस्य ॥

**( उद्द्योतः ) द्वयोरेकस्ये**त्यादिनिर्देशात् स्वविधौ स्थानिवत्त्वमनित्यमिति बाभ्रवीयनैधेययोर्न दोष इति परे ॥

**( तत्त्वालोकः )** भाष्ये—**नैष दोष इति**—नैते दोषा इत्यर्थः। जातावेकवचनसत्त्वात् । **स्वाश्रया इति**—यत इत्यादिः ।

उद्द्योते—बाभ्रवीयनैधेययोरनभिधाने मानाभावाद्, विधिशब्दस्य कर्मसाधनत्वे तत्र दोषाच्च कैयटोक्तयसङ्गतेराह-**द्वयोरिति।**

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम्—अपरविधाविति ।

( समाधानभाष्यम् )

न वक्तव्यम् । पूर्वविधावित्येव सिद्धम् ॥

कथम् ? ॥

न पूर्वग्रहणेनादेशोऽभिसंबध्यते—'अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति ।

कुतः पूर्वस्य ? आदेशाद्' इति ।

किं तर्हि ? ॥

निमित्तमभिसंबध्यते—'अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद् भवति । कुतः पूर्वस्य ? निमित्ताद्' इति ।

**( प्रदीपः ) निमित्तमिति ।** आयन्नित्यादिषु च निमित्तात् पूर्वस्य विधिरिति सिद्धः स्थानिवद्भावः ॥

**( तत्त्वालोकः )** भाष्ये—**पूर्वविधावित्येवेति**—यत इत्यादिः। **न पूर्वग्रहणेनेति**-अत्र 'न हि पूर्वग्रहणेने'ति पाठः।

( आक्षेपभाष्यम् )

अथ निमित्तेऽभिसंबध्यमाने यत्तदस्य योगस्य मूर्द्धाभिषिक्तमुदाहरणं तदपि संगृहीतं भवति ॥

किं पुनस्तत् ? ॥

पटव्या मृदव्येति ॥

**( प्रदीपः ) मूर्द्धाभिषिक्तमिति ।** सर्ववृत्तिषूदाहृतत्वात्। पटु ई आ इति स्थिते परयणादेशेनोकारस्य व्यवधानात्प्रश्नः ॥

**( उद्द्योतः )** भाष्येऽथेत्यादिना **संगृहीत**मित्यन्तेन काका प्रश्नः। तदेवाह—**व्यवधानात्प्रश्न इति ॥**

**( तत्त्वालोकः )** भाष्ये—**अथेति**—पूर्वग्रहणेनेति शेषः ।

प्रदीपे—'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया प्रथमं पूर्वयणादेशस्यायोगादाह—**परयणादेशेनेति ।**

उद्द्योते—प्रश्नबोधकशब्दाभावादाह—**काक्वेति ।**

( समाधानभाष्यम् )

बाढं संगृहीतम् ॥

( समाधानबाधकभाष्यम् )

ननु च ईकारयणा व्यवहितत्वान्नासौ निमित्तात् पूर्वो भवति ॥

( समाधानसाधकभाष्यम् )

व्यवहितेऽपि पूर्वशब्दो वर्तते । तद्यथा—पूर्वं मथुरायाः पाटलिपुत्रमिति ॥

**( प्रदीपः ) व्यवहितेऽपीति ।** पूर्वशब्दस्य साक्षान्निर्देशात्त**स्मिन्निति निर्दिष्ट** इत्यस्यानुपस्थानादिति भावः ॥

**( उद्द्योतः ) साक्षादिति ।** एवं च **उत्तरस्ये**त्यस्यानुपस्थाने तदङ्गं निर्दिष्टग्रहणमपि नोपतिष्ठत इति भावः ॥ **तस्मिन्निततीति । तस्मादि**ति सूत्रे **तस्मिन्नि**त्यतोऽनुवर्तमानस्य निर्दिष्टस्येत्यर्थः ॥ स्वरग्रहणाच्च लिङ्गादत्र सूत्रे तदनुपस्थितिर्बोध्या ॥

**( तत्त्वालोकः )** भाष्ये—अत्र पूर्वत्वं नाव्यवधानगर्भम्, किन्तु व्यवहिताव्यवहितसाधारणमित्याशयेनाह-**व्यवहितेऽपीति ।** नैवाऽनुपपत्तिः, यत इत्यादिः ।

प्रदीपे—**पूर्वशब्दस्येति**—प्रकृतसूत्रे इत्यादिः ।

उद्द्योते—**एवञ्च**—साक्षान्निर्देशे च । नन्वयं योगः 'तस्मिन्निती'त्यस्य विषय एव नेत्यत आह—**तस्मादितीति ।** नन्वन्यत्राङ्गस्याप्यनुवृत्तिर्दृष्टेत्यत आह—**स्वरग्रहणाच्चेति ।** 'न पदान्ते'ति सूत्रे इत्याशयः ।

( पक्षान्तराभ्युपगमभाष्यम् )

अथवा—पुनरस्त्वादेश एवाभिसंबध्यते ॥

**( तत्त्वालोकः ) अभिसम्बध्यते**-पूर्वग्रहणेनाभिसम्बध्यते इति।

( आक्षेपभाष्यम् )

कथं यानि स्वविधौ स्थानिवद्भावस्य प्रयोजनानि ? ।

**( तत्त्वालोकः ) कथमिति**—नन्वेवमित्यादिः । **प्रयोजनानीति**—तान्युपपद्येरन्निति शेषः ।

( इत्येकदेशिभाष्यम् )

( अथ सिद्धान्तिभाष्यम् )

नैतानि सन्ति । इह तावदायन्, आसन्, धिन्वन्ति कृण्वन्तीति । अयं विधिशब्दोऽस्त्येव कर्मसाधनो—विधीयते विधिरिति । अस्ति च भावसाधनः—विधानं विधिरिति । तत्र कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति कृत्वा भावसाधनस्य विधिशब्दस्योपादानं विज्ञास्यते—पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति-पूर्वः स्यादिति स्थानिवद्भवतीति ॥ एवमाड् भविष्यति, इट् च न भविष्यति ॥

**( प्रदीपः ) भावसाधनस्येति ।** भावसाधन एव विधिशब्दो व्यापकत्वादाश्रीयते । पूर्वस्येति च षष्ठी संबन्धसामान्ये विज्ञायते ॥ **इट् च नेति ।** विधिग्रहणं स्वाश्रयनिवारणार्थमितीडभावः ॥

**( उद्द्योतः ) संबन्धसामान्ये इति ।** न तु कर्मणीत्यर्थः । तेन सर्वलक्ष्यसिद्धिरिति भावः ॥ भाष्ये **पूर्वः स्यादिति पूर्वो न स्या**दित्यस्याप्युपलक्षणम् । तदाह—**स्वाश्रयनिवारणार्थमिति ।** एवं च प्रकृतसूत्रे उभयोरपि ग्रहणं बोध्यम् ॥ कैयटे-**भावसाधन एवे**त्येवशब्दोऽप्यर्थ इति केचित् ॥ **न पदान्त**सूत्रे एतत्स्फुटं वक्ष्यते ॥

**( तत्त्वालोकः )** भाष्ये—**नैतानि सन्तीति**—तस्य प्रयोजनानि, यत इति शेषः । **तत्र**—तयोर्मध्ये । **स्यादाति**—स्यादित्यर्थम् ।

उद्द्योते—एतावताऽपि सकलेष्टासंग्रहादाह—**न त्विति ।** अत्र न्यूनतां मिथोविरोधञ्च परिहरति—**पूर्वो नेति ।** भाष्यप्रदीपयोराशयमाह—**एवञ्चेति ।** भावाभावोभयातिदेशे चेत्यर्थः । **उभयोरपि**—भावसाधनकर्मसाधनयोरपि विधिशब्दयोः । नन्वेवं प्रदीपे एवकारो न सङ्गच्छेतेत्यत आह—**कैयटे इति ।** केचिन्—म...तत्त्ववेत्तारः । अत एवाह—**न पदान्तेति ।**

( सिद्धान्तिशेषभाष्यम् )

दध्यत्र मध्वत्र, चक्रतुश्चक्रुरिति-परिहारं वक्ष्यति ॥

**( उद्द्योतः )** भाष्ये—**परिहारं वक्ष्यतीति ।** दध्यत्रेत्यत्र—यणः प्रतिषेधारम्भः । चक्रतुरित्यादौ—**द्विर्वचनेऽचीति ॥**

**( तत्त्वालोकः )** भाष्ये—**दध्यत्रेति**—...इत्यादिः ।

उद्द्योते—**इत्यत्र**—इत्यादौ ।

---

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ? ।

( प्रयोजनश्लोकभाष्यम् )

**॥ * ॥ स्तोष्याम्यहं पादिकमौदवाहिं ततः श्वोभूते शातनीं पातनीं च । नेतारावागच्छतं धारणिं रावणिं च ततः पश्चात्स्रंस्यते ध्वंस्यते च ॥१॥ * ॥**

( उपपादनभाष्यम् )

इह तावत्-पादिकमौदवाहिं शातनीं पातनीं धारणिं रावणिमिति । अकारलोपे कृते-पद्भाव ऊठ् अल्लोपः टिलोप इत्येते विधयः प्राप्नुवन्ति । स्थानिवद्भावान्न भवन्ति ॥

स्रंस्यते ध्वंस्यते । णिलोपे कृते 'अनिदितां हल उपधायाः क्ङिति' इति नलोपः प्राप्नोति । स्थानिवद्भावान्न भवति ॥

**( प्रदीपः ) स्तोष्यामीति ।** कथयिष्यामीत्यर्थः ॥ **पादिकमिति ।** पादोऽस्यास्तीति ठन् । दीव्यत्यादिषु वार्थेषु ठक् ॥ चरत्यर्थे तु पदिक इत्येव भवति, पर्पादित्वात् । [**पद्भावे इके चरतावुपसंख्यानमि**ति पद्भावः ]॥ उदकं वहतीत्यण् । संज्ञायामुदभावः, अपत्ये इञ् ॥ श्वोभूतिर्नाम शिष्यः । तस्यामन्त्रणम् ॥ शातनपातनशब्दाभ्यां गौरादित्वाद् ङीष् ॥ **नेताराविति** शिष्ययोरामन्त्रणम् । नयेते गुरुमुखात् शास्त्रार्थमिति नेतारौ ॥ धारणरावणशब्दाभ्यामिञ् ॥

**( उद्द्योतः ) चरत्यर्थे इति । पद्भाव इके चरता**वित्युपसङ्ख्यानादिति भावः ॥ **गौरादित्वादिति ।** शदेर्ण्यन्तात्युजिति भावः ॥ टित्वान्ङीबिति सप्तमे आकरः ॥ **शातन** मित्यादावल्लोपोऽन इत्यल्लोपप्राप्तिः ॥ **धारणिमित्यादि ।** धृरुभ्यां ण्यन्ताभ्यां ल्युटि णत्वस्यासिद्धत्वान्नस्तद्धित इत्यस्य प्राप्तिः ॥

**( तत्त्वालोकः )** भाष्ये—**ततः पश्चादिति**—अत्र-'अन्यारादितरर्तेदिक्शब्दे'ति पञ्चम्या अपवादेन 'षष्ठ्यतसर्थे'ति षष्ठ्या 'तस्य पश्चादि'ति वक्तव्ये 'ततः पश्चादि'ति कथनेन तत्षष्ठ्या अनित्यत्वं ज्ञाप्यते, तेन सिद्धान्तकौमुद्यां लकारार्थप्रकरणे 'मुहूर्त्तादुपरी'ति प्रयोगोऽपि सङ्गच्छते । केचित्तु षष्ठ्यन्तादेव तत्र सार्वविभक्तिकं तसिं मन्यन्ते । **ध्वंस्यते**—ध्वंस्यते चेति ।

प्रदीपे—**कथयिष्येति**—प्रकृतसूत्रस्य प्रयोजनमित्यादिः ।

पर्यादित्वादिति—ठनिति शेषः। पद्भावे इके इति—अस्य पाठ-स्योद्द्योतेऽप्युपलम्भादिकत्रायमपपाठ इति प्रतिभाति। औदवाहि-मित्यत्राह—उदकमिति। एवमग्रेऽपि।

उद्द्योते—कैयटोक्तिविरुद्धमाह—टित्वादिति। ल्युडित्याशयः।

(प्रयोजननिराकरणभाष्यम्)

नैतानि सन्ति प्रयोजनानि। 'असिद्धवदत्राभाद्' इत्यनेनाप्येतानि सिद्धानि॥

(तत्त्वालोकः) असिद्धवदिति—यत इत्यादिः। एतानीति—अकारणिलोपयोरसिद्धत्वादित्यादिः।

(प्रयोजनान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—याज्यते वाप्यते। णिलोपे कृते'—यजादीनां किति' इति संप्रसारणं प्राप्नोति। स्थानिवद्भावान्न भवति॥

(तत्त्वालोकः) वाप्यते—वाप्यते इति। यजादीनामिति—वचिस्वपीत्यादिः।

(प्रयोजननिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम्। यजादिभिरत्र कितं विशेषयिष्यामः—यजादीनां यः किदिति।

कश्च यजादीनां कित्?।

यजादिभ्यो यो विहित इति। न चाऽयं यजादिभ्यो विहितः॥

(उद्द्योतः) भाष्ये—यजादिभ्यो विहित इति॥ एवं च वच्यादिभ्यो ण्यन्तेभ्यः किपि संप्रसारणं न भवत्येव। क्विभाव एवेत्यन्ये॥

(तत्त्वालोकः) भाष्ये—यजादिभिरिति—यत इत्यादिः। अत्र—'वचिस्वपी'ति सूत्रे। अयमिति—यगित्यर्थः। याज्यते इत्यादावित्यादिः। विहित इति—किन्तु याज्यादिभ्यो विहित इति शेषः।

उद्द्योते—एवञ्च—कितो यजादिभ्यो विशेषितत्वे च। अत्र यजादिपदं वच्यादेरप्युपलक्षणमित्याशयेनाह—वच्यादिभ्य इति। व्याख्यानभेदेन फलभेदनिरासायाह—क्विभाव इति।

(मूर्धाभिषिक्तप्रयोजनान्तरभाष्यम्)

इदं तर्हि प्रयोजनम्—पटव्या मृद्व्येति। परस्य यणादेशे कृते पूर्वस्य न प्राप्नोति, ईकारयणा व्यवहित-त्वात्। स्थानिवद्भावाद्भवति॥

(तत्त्वालोकः) पूर्वस्येति—यणादेश इति शेषः। एवमग्रेऽपि।

(आक्षेपभाष्यम्)

किं पुनः कारणं परस्य तावद्भवति, न पुनः पूर्वस्य?।

(तत्त्वालोकः) तावत्—प्रथमम्।

(आक्षेपनिराकरणभाष्यम्)

नित्यत्वात्। नित्यः परयणादेशः। कृतेऽपि पूर्व-यणादेशे प्राप्नोति, अकृतेऽपि प्राप्नोति। नित्यत्वात्परय-णादेशे कृते पूर्वस्य न प्राप्नोति॥ स्थानिवद्भावाद्भवति॥

(तत्त्वालोकः) नित्यः—नित्यो हि। कृतेऽपीति—यत इत्यादिः। नित्यत्वादिति—तथा चेत्यादिः।

(असिद्धपरिभाषया सूत्रप्रयोजननिराकरणभाष्यम्)

एतदपि नास्ति प्रयोजनम्। 'असिद्धं बहिरङ्ग-लक्षणमन्तरङ्गलक्षणे' इत्यसिद्धत्वाद्बहिरङ्गलक्षणस्य परयणादेशस्यान्तरङ्गलक्षणः पूर्वयणादेशो भविष्यति॥ अवश्यं चैषा परिभाषा आश्रयितव्या स्वरार्थम्। कर्त्र्या हर्त्र्येति 'उदात्तयणो हल्पूर्वात्' इत्येष स्वरो यथा स्यात्॥

(प्रदीपः) असिद्धं बहिरङ्गेति। नित्यादप्यन्तरङ्गं बलीय इति न्यायात् प्रथमं पूर्वस्य यण् इति भावः॥ अवश्यं चेति। स्थानिवद्भावाश्रयणेऽपीत्यर्थः। कर्त्र्येति। कर्तृ ई आ इति स्थिते यदि नित्यत्वात् पूर्वं परयणादेशः स्यात्तस्य च स्थानिवद्भावात् पूर्वस्य यण्, तत उदात्तयणोऽनन्तर आकारो न भवतीत्युदात्तत्वं न स्यात्। यदा त्वन्तरङ्गत्वात् पूर्वं पूर्वस्य यणादेशस्तदा ङीप उदात्तयण इति उदात्तत्वं, तस्यापि यणि कृते आकारस्योदात्तत्वमिति सिद्धमिष्टम्॥

(उद्द्योतः) नित्यादपीति। नाजानन्तर्ये इति निषेधस्तु अनित्यो नास्त्येव वेति भाष्याशयः॥ पूर्वनिमित्तककार्यत्वमत्रान्तर-ङ्गत्वं विवक्षितम्॥

(तत्त्वालोकः) भाष्ये—असिद्धमिति—यत इत्यादिः। नन्वेषा परिभाषा नाश्रीयते इत्यत आह—अवश्यञ्चेति। स्वरार्थमि-त्येव व्याचष्टे—कर्त्र्येति। स्यात्—स्यादिति।

उद्द्योते—नाजेति—'असिद्धं बहिरङ्गे'ति कार्ये इत्यादिः। प्राचां मतेनाह—अनित्य इति। सिद्धान्तमतेनाह—नास्त्येव वेति। अत्रा-परनिमित्तकत्वरूपान्तरङ्गत्वस्याभावादाह—पूर्वेति। पूर्वस्थितेत्यर्थः।

(सूत्रप्रयोजनवादिभाष्यम्)

अनेनापि सिद्धः स्वरः॥

कथम्?।

(तत्त्वालोकः) अनेनापीति—प्रकृतसूत्रेणापीत्यर्थः। न स्वरा-र्थमन्तरङ्गपरिभाषा कर्तव्या, यत इत्यादिः।

(सिद्ध्युपायभाष्यवार्तिकम्)

॥ * ॥ आरभ्यमाणे नित्योऽसौ ॥ * ॥

(व्याख्याभाष्यम्)

आरभ्यमाणे त्वस्मिन् योगे नित्यः पूर्वयणादेशः। कृतेऽपि परयणादेशे प्राप्नोति, अकृतेऽपि॥

(प्रदीपः) अनेनापीति। सति स्थानिवत्त्वे पूर्वयणादेशस्यापि नित्यत्वादित्यर्थः॥

(उद्द्योतः) उदाहरणत्ववादी आह—भाष्ये अनेनापीति॥ सति स्थानिवत्त्वे इति। एवं च द्वयोरपि नित्यत्वेनोच्चारणक्रमे प्राथम्यात्पूर्वं पूर्वयणादेश एवेति भावः॥

(तत्त्वालोकः) भाष्ये—तु—हि। कृतेऽपीति—यत इत्यादिः। एवमग्रेऽपि।

उद्द्योते—उदाहरणत्वेति—पट्व्येत्यादेः प्रकृतसूत्रोदाहरणत्वे-त्यर्थः। एवमग्रेऽपि। नन्वेतावताऽपि प्रकृते कथमिष्टसिद्धिरित्यत आह—एवञ्चेति। पूर्वयणादेशस्यापि नित्यत्वे चेत्यर्थः।

( प्रयोजननिराकर्तृभाष्यम् )

परयणादेशोऽपि नित्यः । कृतेऽपि पूर्वयणादेशे प्राप्नोति, अकृतेऽपि ॥

( प्रदीपः ) इतर आह—परयणादेशोऽपीति ।

( उद्द्योतः ) इतरः । उदाहरणत्वखण्डनवादी ॥

( सिद्ध्युपायबाधकभाष्यवार्तिकम् )

॥ ॥ परश्चासौ व्यवस्थया ॥ ॥

( व्याख्याभाष्यम् )

व्यवस्थया चासौ परः ॥

( सिद्ध्युपायबाधकभाष्यवार्तिकम् )

॥ ॥ युगपत्संभवो नास्ति ॥ ॥

( व्याख्याभाष्यम् )

न चास्ति यौगपद्येन संभवः ॥

( प्रदीपः ) स एवाह—परश्चासाविति । शब्दपरविप्रतिषेधात् स एव प्राप्नोति । एकमपि यण्लक्षणं पूर्वपरविषयभेदाद्भिद्यते । एकस्य च कार्यित्वनिमित्तत्वयोर्विरोधात् परत्वेन व्यवस्था ॥

( उद्द्योतः ) शब्दपरेति । उच्चारणक्रमीयप्राथम्यस्य शास्त्रेण बाध इति भावः ॥ तत्सूत्रे व्यासिन्यायेन सूत्रपाठतः शब्दतश्चोभयविधमपि परत्वं गृह्यत इति तात्पर्यम् ॥ नन्वेवं परं कार्यमित्युच्यते, तत्कथमभेदे स्यादत आह-एकमपीति । व्यक्तिपक्षे प्रतिलक्ष्यं लक्षणभेदादिति भावः ॥ विषयगतं पौर्वापर्यं तदवच्छिन्ने लक्षणे आरोप्यत इत्यत्र तात्पर्यम् ॥ विप्रतिषेधशास्त्रप्रवृत्तियोग्यं न चास्ति यौगपद्येनेति भाष्यबोधितं विरोधमुपपादयति—एकस्य चेति । प्रसङ्गे आदेशविधानादादेशसमये स्थानिनोऽसत्त्वम्, निमित्तत्वं च सत्त्वे । सत्त्वासत्त्वे चैकत्र युगपद्विरुद्धे । एवं च द्वयोर्यणोर्यौगपद्यासंभव इति भावः ॥

(तत्त्वालोकः) भाष्ये-व्यवस्थया-अवस्थित्या । असौ-परयणादेशः । तथा च-द्वयोरपि नित्यत्वेनावस्थितौ परत्वात् प्रथमं परयणादेश एवेति भावः । एवं द्वयोर्नित्यत्वेऽपि यथोच्चारणक्रमे प्राथम्यात्पूर्वं पूर्वयणादेशेनैव भवितव्यम्, तथाऽवस्थितौ परत्वात् प्रथमं परयणादेशेनैव भवितव्यमित्युभाभ्यामपि युगपदेव भवितव्यम्, किन्तु तन्न सम्भवति; एकत्र कार्यित्वनिमित्तत्वयोर्विरोधादित्याशयेनाह—न चास्तीति । द्वयोरिति शेषः । एवञ्च शब्दतः परत्वमादाय विप्रतिषेधशास्त्रप्रवृत्त्या प्रथमं परयणादेश एव स्यादिति प्रकृतसूत्रारम्भेऽपि तेन स्वरस्यासिद्धिरिति भावः ।

प्रदीपे—स एव—पट्व्येत्यादेः प्रकृतसूत्रोदाहरणत्वखण्डनवाद्येव । स एव—परयणादेश एव । प्रथममिति भावः ।

उद्द्योते—पूर्वयणादेशस्य प्राक्प्रवृत्तौ कथितं हेतुं खण्डयति—उच्चारणेति । शास्त्रेण—विप्रतिषेधशास्त्रेण । तत्र बीजमाह—तत्सूत्रे इति । विप्रतिषेधसूत्रे इत्यर्थः । एवम्—शब्दपरविप्रतिषेधे । तत्—परकार्यत्वम् । अभेदे—असति शास्त्रभेदे ।

( भाष्यम् )

कथं च सिध्यति ? ॥

( तत्त्वालोकः ) यथुक्तरीत्या प्रकृतसूत्रारम्भेऽपि तेन स्वरो न सिध्यति, तर्हि कथं स सिध्यतीत्याशयेन पृच्छति—कथञ्चेति ।

( सिद्ध्युपायसाधकभाष्यवार्तिकम् )

॥ ॥ बहिरङ्गेण सिध्यति ॥ ॥

( भाष्यम् )

'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इत्यनेन सिध्यति ॥

( उद्द्योतः ) भाष्ये—बहिरङ्गेण सिध्यतीति । तेनैव कर्त्र्येति सिध्यति, न सूत्रेणेत्यर्थः । एवं च शब्दतः परत्वमादाय विप्रतिषेधसूत्रस्य नैव प्रवृत्तिरिति तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—सिध्यतीति—एवञ्च—प्रकृतसूत्रारम्भेऽपि तेन स्वरस्यासिद्धेस्तदर्थमन्तरङ्गपरिभाषा कर्तव्यैवेति तयैव पट्व्येत्यादिसिद्धेस्तदर्थं प्रकृतसूत्रं न कर्तव्यमिति भावः ।

उद्द्योते—तेनैव—अन्तरङ्गन्यायेनैव । कर्त्र्येति—कर्त्र्येत्यादौ स्वरः । सूत्रेण—प्रकृतसूत्रेण । ननूक्तरीत्या शब्दतः परत्वमादाय विप्रतिषेधशास्त्रप्रवृत्त्या प्रथमं परयणादेश एव स्यादित्यन्तरङ्गन्यायाश्रयणेऽपि तेन स्वरो न सिद्ध्येदित्यत आह—एवञ्चेति । अन्तरङ्गन्यायाश्रयणे चेत्यर्थः । नन्वेवमप्यन्तरङ्गन्यायबाधकेनाकृतव्यूहन्यायेन निषेधात्प्रथमं पूर्वयणादेशो न स्यादिति चेन्न, तस्यानित्यत्वात् ।

( सूत्रप्रयोजनवादिभाष्यम् )

एवं तर्हि योऽत्रोदात्तयण् तदाश्रयः स्वरो भविष्यति ॥

( उद्द्योतः ) उदाहरणवादी अन्तरङ्गपरिभाषाश्रयणं विनापि स्वरं साधयति—भाष्ये एवं तर्हीति ॥

( तत्त्वालोकः ) भाष्ये—एवं तर्हि—यदि प्रकृतसूत्रारम्भस्तर्हि । उक्तरीत्या प्राक् परयणादेशेऽपि तस्यानेन सूत्रेण स्थानिवत्त्वादित्याशयः । अत्र—कर्त्र्येत्यादौ । उदात्तयण्—उदात्तस्थानिकत्वादुदात्तः पूर्वस्य यण् । स्वरः—आकारस्य 'उदात्तयणः' इत्युदात्तत्वम् । एवञ्च—प्रकृतसूत्रारम्भेऽन्तरङ्गपरिभाषाश्रयणं नावश्यकमिति भावः ।

उद्द्योते—उदाहरणवादी—प्रकृतसूत्रस्य पट्व्येत्याद्युदाहरणवादी । प्रकृतसूत्रारम्भे इत्याशयः ।

( इष्टानुपपत्तिभाष्यम् )

ईकारयणा व्यवहितत्वान्न प्राप्नोति ॥

( इष्टोपपत्तिभाष्यम् )

'स्वरविधौ व्यञ्जनमविद्यमानवद्भवति' इति नास्ति व्यवधानम् ॥

( उद्द्योतः ) स्वरविधाविति । अस्य स्वरोद्देश्यकविधित्वादिति भावः ॥

( असिद्धपरिभाषावादिभाष्यम् )

सा तर्हि एषा परिभाषा कर्तव्या ॥

( तत्त्वालोकः ) तर्हि—यदि प्रकृतसूत्रारम्भस्तर्हि । एषा—'स्वरविधावि'त्येषा । तथा च-प्रकृतसूत्रारम्भवादिना भवता प्रकृतसूत्रम्, 'स्वरविधावि'ति परिभाषा चेति द्वयं कर्तव्यम्, मया तु बहिरङ्गपरिभाषामात्रमिति भवत्पक्षापेक्षया मत्पक्षे लाघवमिति बहिरङ्गपरिभाषावादिनो भावः ।

( स्थानिवद्भाववादिभाष्यम् )

**ननु चेयमपि कर्तव्या—'असिद्धं बहिरङ्गलक्षणमन्तरङ्गलक्षणे' इति ॥**

( **तत्त्वालोकः** ) **कर्तव्येति**—मयेत्यादिः । अर्थात्-मयेयं न कर्तव्येति भावः । एवञ्च—यथा बहिरङ्गपरिभाषावादिना भवता बहिरङ्गपरिभाषा, 'स्वरविधावि'ति परिभाषा चेति द्वयं कर्तव्यम्, तथा मयाऽपि प्रकृतसूत्रम्, 'स्वरविधावि'ति परिभाषा चेति द्वयमेव कर्तव्यमिति भवत्पक्षेण मत्पक्षे साम्यमेवेति प्रकृतसूत्रारम्भवादिनो भावः ।

( असिद्धपरिभाषावादिभाष्यम् )

**बहुप्रयोजनैषा परिभाषा । अवश्यमेवैषा कर्तव्या ॥**

( **उद्द्योतः** ) **अवश्यमेवेति** । एवं च तयैव सिद्धत्वान्नैतदस्या उदाहरणमिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—**अवश्यमेवेति**—अतो भवताऽपीत्यादिः । **एषा**—बहिरङ्गपरिभाषा । तथा च-प्रकृतसूत्रारम्भवादिना भवता-बहुप्रयोजनेष्वेकस्य प्रयोजनस्यान्यथा साधनेऽपि प्रयोजनान्तरसिद्ध्यर्थं बहिरङ्गपरिभाषा, प्रकृतसूत्रम्, 'स्वरविधावि'ति परिभाषा चेति त्रयं कर्तव्यम्, मया तु बहिरङ्गपरिभाषामात्रमिति भवत्पक्षापेक्षया मत्पक्षे महल्लाघवमिति बहिरङ्गपरिभाषावादिनो भावः ।

उद्द्योते—**तयैव**—बहिरङ्गपरिभाषयैव । **अस्याः**—'स्वरविधा-वि'ति परिभाषायाः ।

( असिद्धपरिभाषावादिनो लाघवभाष्यम् )

**सा चाप्येषा लोकतः सिद्धा ॥**

**कथम् ? ।**

**प्रत्यङ्गवर्ती लोको लक्ष्यते । तद्यथा—पुरुषोऽयं प्रातरुत्थाय यान्यस्य प्रति शरीरं कार्याणि तानि तावत्करोति, ततः सुहृदाम्, ततः संबन्धिनाम् ॥ प्रातिपदिकं चाप्युपदिष्टं सामान्यभूतेऽर्थे वर्तते । सामान्ये वर्तमानस्य व्यक्तिरुपजायते । व्यक्तस्य सतो लिङ्गसंख्याभ्यामन्वितस्य बाह्येनार्थेन योगो भवति । यथैव चाऽऽनुपूर्व्याऽर्थानां प्रादुर्भावस्तथैव शब्दानामपि । तद्वत्कार्यैरपि भवितव्यम् ॥**

( **प्रदीपः** ) **प्रत्यङ्गवर्तीति** । प्रत्यासन्नवाची प्रत्यङ्गशब्दः । अङ्गशब्देन प्रत्यासत्तिर्लक्ष्यते, अङ्गानां प्रत्यासन्नत्वात् । अङ्गमङ्गं प्रति प्रत्यङ्गमित्यव्ययीभावः ॥ **प्रति शरीरमिति** । शरीरस्य भोगायतनत्वात् ॥ **ततः सुहृदामिति** । सौहार्दस्यासत्तिहेतुत्वात् ॥ **ततः संबन्धिनामिति** । अवश्यकर्तव्यत्वात् ॥ **सामान्यभूत इति** । नित्येऽपि शब्दार्थसंबन्धे अक्रमेऽप्यर्थप्रतिपादने उपायभावेनासत्यमपि क्रमं प्रकृत्याद्यर्थं चाश्रित्योपेयव्यवस्थापनात् । तत्र **नागृहीतविशेषणा विशेष्ये बुद्धिरुपद्यत** इत्यादौ सामान्यमभिधीयते । ततस्तदनुरक्तद्रव्ये प्रतीतिः । लिङ्गसंख्याशक्तीनां चाश्रयो द्रव्यमिति तत्पूर्वमभिधातव्यम् । ततः संख्यापेक्षया लिङ्गं समासन्नमिति तदभिधीयते । द्व्यादिसंख्या हि वस्त्वन्तरापेक्षोपजायते, एकत्वसंख्यापि वस्त्वन्तरापेक्षद्वित्वादिव्यवच्छेदं करोतीति बहिरङ्गा । साऽपि संजातीयपदार्थापेक्षत्वादन्तरङ्गा । कर्मादीनि तु विजातीयक्रियापेक्षणाद्बहिरङ्गाणीति न्यायप्राप्तः क्रमः ॥ **बाह्येनेति** । कर्मत्वादिना । तद्धि क्रियापेक्षणाद् बाह्यम् ॥

( **उद्द्योतः** ) **सा चाप्येषेति** । प्रकृतोदाहरणविषयः पूर्वनिमित्तकमन्तरङ्गमित्यंशो न्यायसिद्ध इति तदनाश्रयणमशक्यमिति भावः ॥ ननु प्रत्यवयववर्ती लोकरूपोऽवयवी लक्ष्यत इति नार्थः, प्रकृतानुपयोगादित्यत आह—**प्रत्यासन्नेति ॥ अङ्गानामिति** । अङ्गिनं प्रतीति शेषः ॥ **अङ्गमङ्गमिति** । प्रत्यासन्नप्रत्यासन्नवर्ती तत्कार्याभिनिविष्टो लोको दृश्यत इति भावः ॥ **प्रत्यासन्नत्वं** च प्रथमोपस्थितत्वरूपम् ॥ भाष्ये—**शरीरं प्रती**त्यन्वयः । प्रतियोगे द्वितीया । **भोगः** सुखादिसाक्षात्कारः ॥ **आसत्तिः** प्रथमोपस्थितिः । युगपदुपस्थिताविदम् । क्रमेणोपस्थितावपि आसत्तिवशादेव पूर्वं सुहृदामुपस्थितिरिति बोध्यम् ॥ ननु **अन्वितस्य बाह्यार्थेन योगो भवती**त्युक्तं, शब्दार्थसंबन्धस्य नित्यत्वात्, शब्दस्य विरम्य व्यापाराभावाद् युगपदेव सकलार्थप्रतीतेः क्रमाभिधानमप्यसङ्गतमित्यत आह—**नित्येपीति ॥ असन्तमपीति । असत्यमपी**ति पाठान्तरम् । शब्दजन्यबोधे वस्तुगत्याऽसत्त्वादित्यर्थः ॥ किंतु शास्त्रकल्पनाकल्पितोऽयं प्रक्रियादशायां क्रमः, अर्थवदुद्देश्यकप्रातिपदिकसंज्ञोद्देश्यकत्वेनैवाद्युद्देशेन शास्त्रे स्वादिविधानादिति बोध्यम् ॥ वस्तुतः प्रकृतितदर्थावप्यसत्यमेव, कुतस्तत्क्रमस्य सत्यतेत्याह—**प्रकृत्याद्यर्थं चेति । असत्यमपी**त्यनुकृष्यते ॥ भाष्ये—**सामान्यभूतेऽर्थे वर्तत इति । वर्तनं** नाम सामान्याभिधानम् ॥ **विशेष्ये** । विशेषणविशिष्टे । तदेव विशेष्यत्वात् । विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वादिति भावः ॥ **तदनुरक्तेति** । सामान्यस्य कार्यानर्हत्वाद्व्यक्तिस्तदाश्रयतया शब्दार्थत्वेन कल्प्यत इति भावः ॥ भाष्ये **उपजायत** इत्यस्य बोधविषयो भवतीत्यर्थः ॥ **व्यक्तस्येति** । द्रव्यस्य सतो बुद्ध्यारूढस्येत्यर्थः ॥ **तत्पूर्वमिति** । आश्रयप्रतीत्युत्तरमेव तदाकाङ्क्षणादिति भावः ॥ **वस्त्वन्तरेति ॥** स्वसमवायिकारणनानावस्त्वपेक्षयेत्यर्थः ॥ एकत्वस्य तत्त्वाभावादाह—**एकत्वेति** । एवं च प्रयोजनापेक्षया सापि बहिरङ्गेत्यर्थः ॥ **सजातीयेति** । द्रव्यत्वेन स्वाश्रयत्वेन वा सजातीयत्वम् ॥ ननु लिङ्गादिभिरेकार्थसमवायाविशेषात्कथं शक्तेः बाह्यत्वमत आह—**कर्मादीनि त्विति ॥ न्यायप्राप्तः क्रम इति** । शास्त्रकृत्कल्पितन्यायप्राप्तः प्रक्रियादशायामित्यर्थः ॥ अनेन विशिष्टबुद्धौ विशेषणज्ञानकारणत्वाद्यपि तान्त्रिककल्पितमिति सूचितम् ॥ भाष्ये **यथैवेति । अर्थानां** लिङ्गसङ्ख्याकारकाणाम् । **प्रादुर्भावो** ज्ञानम् ॥ **शब्दानामपि** तद्बोधकस्त्रीप्रत्ययविभक्तीनामपि । अस्य **प्रादुर्भाव** इति शेषः । **तद्वत्कार्यैर-पी**त्यस्य तयैवानुपूर्व्येत्यर्थः । येन क्रमेण शब्दोपस्थितिस्तेनैव क्रमेण कार्यमिति पूर्वमीकारनिमित्तको यणिति भावः ॥ तत्र **पदस्यैव विभज्यान्वाख्याने सर्वेषां युगपत्प्राप्तावनया व्यवस्था । क्रमेणान्वाख्याने तु पूर्वप्रवृत्तिकत्वरूपमन्तरङ्गत्वं पूर्वयणादेशस्य** बोध्यम् । **असिद्धत्वं** परयणादेशस्य निमित्ताभावादप्राप्तत्वरूपं बोध्यम् । अत एव वाय्वोरित्यत्र नासिद्धत्वम् । एवंविधान्तरङ्गत्वस्य दृष्टान्तादिबलेन युगपत्प्राप्तिविषयत्वात् । स्पष्टं चेदं **वाह ऊठ्**सूत्रे कैयटे ॥ यत्त्वनया रीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति ॥ तदयुक्तम् । अन्तरङ्गशब्दार्थाभावात् । अङ्गशब्दस्य तत्र निमित्तपरत्वात् ॥

( **तत्त्वालोकः** ) भाष्ये—**एषा**—अन्तरङ्गपरिभाषा । **प्रत्यङ्गवर्तीति**—प्रत्यासन्नप्रत्यासन्नकार्याभिव्यापृत इत्यर्थः । यत इत्यादिः । **तावत्**—प्रथमम् । **प्रातिपदिकञ्चाप्युपदिष्टमिति**—तथेत्यादिः । प्रथममिति शेषः । **सामान्यभूते**—जात्यादिरूपे । **सामान्ये इति**—तत इत्यादिः । **वर्तमानस्येति**—तस्येति शेषः । **व्यक्तस्येति**—तत इत्यादिः ।

प्रदीपे—**अङ्गशब्देनेति**—यत इत्यादिः । तदेवोपपादयति—**तत्रेति ।** तेषां मध्ये इत्यर्थः । **इत्यादौ**—इति न्यायेन प्रथमम् । ननु लिङ्गाद्यभिधानात्पूर्वं कुतो द्रव्यस्य प्रतीतिरित्यत आह—**लिङ्गेति । पूर्वम्**—लिङ्गाद्यभिधानात्पूर्वम् । **तदभिधीयते इति**—संख्याभिधानात्पूर्वमित्यादिः । ननु कुतः संख्यापेक्षया लिङ्गं समासन्नमित्यत आह—**द्व्यादिसंख्या हीति । बहिरङ्गेति**—लिङ्गापेक्षया संख्येत्यादिः । **साऽपीति**—संख्याऽपीत्यर्थः । ततः कर्माद्यभिधानात्पूर्वं संख्याऽभिधीयते, यत इत्यादिः । **अन्तरङ्गेति**—कर्माद्यपेक्षयेत्यादिः । **बहिरङ्गाणीति**—संख्यापेक्षयेत्यादिः ।

उद्द्योते—तदंशान्तरस्य लोकतोऽसिद्धत्वादाह—**प्रकृतेति । तदिति**—अन्तरङ्गपरिभाषेत्यर्थः । **प्रत्यासन्नेति**—तथा चेत्यादिः । अस्यार्थमाह—**तदिति ।** प्रत्यासन्नप्रत्यासन्नेत्यर्थः । प्रत्यङ्गमित्यत्रैव प्रतिशरीरमित्यत्र नाव्ययीभाव इति सूचनायाह—**भाष्ये-शरीरमिति । आदिना**—दुःखपरिग्रहः । **युगपदिति**—सुहृदां सम्बन्धिनाञ्चेति भावः । **पूर्वम्**—सम्बन्धिभ्यः पूर्वम् । **असत्त्वादिति**—क्रमस्येत्यादिः । **एव**—एवेति । **तदैव**—विशेषणज्ञानानन्तरमेव । **तदाकाङ्क्षणात्**—लिङ्गाद्याकाङ्क्षणात् । **एकत्वस्य तत्त्वाभावादिति**—एकत्वं द्विविधं नित्यानित्यभेदात् । तत्र नित्यस्योत्पादासम्भवाद्, अनित्यस्य चैकसमवायिकारणकत्वेन स्वसमवायिकारणनानावस्तुनोऽप्रसिद्धेस्तदपेक्षयोपजायमानत्वाभावादिति भावः । **साऽपीति**—एकत्वसंख्याऽपीत्यर्थः । लिङ्गापेक्षयेति शेषः । ननु संख्याया घटपटमठा इत्यादौ विजातीयपदार्थापेक्षत्वेनापि दृष्टत्वमित्यत आह—**द्रव्यत्वेनेति ।** नन्वेवमपि द्रव्यगुणकर्माणीत्यादौ तदनुपपत्तिरित्यत आह—**स्वाश्रयत्वेन वेति ।** स्वसंख्यादिभिः सहेति शेषः । भाष्याशयमाह—**येन क्रमेणेति ।** इदम् पक्षभेदेनोपपादयति—**तत्रेति ।** पूर्वोक्तविषये इत्यर्थः । **अनया**—लौकिक्या । **अतएवेत्यस्यार्थमाह—एवंविधेति । आदिना**—ज्ञापकपरिग्रहः । दीक्षितायुक्तिं दूषयति—**यत्त्विति ।**

( सूत्रारम्भवादिभाष्यम् )

**इमानि तर्हि प्रयोजनानि—पटयति लघयति अवधीत् बहुखट्वकः ॥**

( प्रयोजनोपपादनभाष्यम् )

**पटयति लघयतीति णिचि टिलोपे कृते 'अत उपधायाः' इति वृद्धिः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

( द्वितीयप्रयोजनोपपादनभाष्यम् )

**अवधीदित्यकारलोपे कृते 'अतो हलादेर्लघोः' इति विभाषा वृद्धिः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

**( उद्द्योतः ) अवधीदिति ।** यद्यप्यतो लोप इत्यत्रार्धधातुक इति विषयसप्तमीत्यचो यदिति सूत्रस्थभाष्यात्प्रतीयत इत्यपरनिमित्तकत्वात् कथं स्थानिवत्त्वम्, तथापि विषयसप्तमीत्वेऽपि परबुद्धिनिमित्तकत्वेन परनिमित्तत्वमस्त्येवेत्याशयः ॥ स्वतन्त्रवधधातुस्तु नास्त्येव । अदन्तत्वे **जनिवध्योश्चेति** वधिग्रहणमपि न कर्तव्यमेवेति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**भाष्यात्—'**अच्ग्रहणं भूतपूर्वाजन्तप्रतिपत्त्यर्थमि'ति भाष्यात् । तस्य विषयसप्तमीत्व एव यद्विधानात्पूर्वमल्लोपाद् यद्विधानकाले **प्रकृतेर्भूतपूर्वाजन्तत्वं** सम्भवतीति भावः । **अपरेति**—अकारलोपस्येत्यादिः । **विषयेति**—सप्तम्येत्यादिः । **परेति**—अल्लोपस्येत्यादिः । **आशयः**—अस्य भाष्यस्याशयः । ननु स्वतन्त्रस्यैव हलन्तवधधातोरिदमस्तु, वृद्धिस्तु 'जनिवध्योश्चे'ति निषेधादेव न स्यादित्यत आह—**स्वतन्त्रेति ।** नन्वेवमपि हलन्त एव वधादेशोऽस्तु, वृद्धिस्तु 'वध्यादेशे वृद्धितत्त्वप्रतिषेधः' इति पूर्वसूत्रस्थवार्तिकेनापि निषेधादेव न स्यादित्यत आह—**अदन्तत्वे इति ।** वधादेशस्यादन्तत्वेऽल्लोपस्य स्थानिवत्त्वादेव वृद्धेरसम्भवादिति भावः । तथा चात्र पक्षे लाघवमपीत्याशयः ।

( तृतीयप्रयोजनोपपादनभाष्यम् )

**बहुखट्वक इति 'आपोऽन्यतरस्याम्' इति ह्रस्वे कृते 'ह्रस्वान्तेऽन्त्यात्पूर्वम्' इत्येष स्वरः प्राप्नोति । स्थानिवद्भावान्न भवति ॥**

**( उद्द्योतः ) बहुखट्वक इति** भाष्ये । **बहोर्नञ्वदुत्तरपदभूम्नीत्युक्तेरिति** भावः ॥

**( तत्त्वालोकः )** भाष्ये—**एष स्वरः**—उकाराकारस्योदात्तत्वम् । **न भवतीति**—उत्तरपदस्य ह्रस्वान्तत्वाभावादित्यादिः । किन्तु 'कपि पूर्वमि'त्युत्तरपदान्तोदात्तत्वमेव भवतीति भावः । ननु 'न पदान्ते'ति सूत्रेण स्वरविधौ स्थानिवत्त्वस्य निषेधादत्र स्थानिवत्त्वं न स्यादिति चेन्न, 'स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदि'ति भाष्येण तस्य लोपाजादेशमात्रविषयकताया व्यवस्थापयिष्यमाणत्वात् ॥

---

( स्थानिवद्भावप्राप्तानिष्टनिराकरणाधिकरणम् )

( आक्षेपभाष्यम् )

**इह वैयाकरणः सौवश्व इति य्वोः स्थानिवद्भावादायावौ प्राप्नुतस्तयोः प्रतिषेधो वक्तव्यः ॥**

**( तत्त्वालोकः )** इह स्थान्यादेशनिमित्तानां त्रयाणां सन्निधानाविशेषेणादेशापेक्षपूर्वत्वस्यापि ग्राह्यत्वाच्छङ्कते—**इहेति ।**

( ३८९ समाधानवार्तिकम् ॥ २ ॥ )

**॥ अचः पूर्वत्वविज्ञानादैचोः सिद्धम् ॥**

( भाष्यम् )

**योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः । आदिष्टाच्चैषोऽचः पूर्वः ॥**

**किं वक्तव्यमेतत् ? ॥**

**नहि ।**

**कथमनुच्यमानं गंस्यते ? ॥**

**अच इति पञ्चमी । अचः पूर्वस्य ॥**

**( प्रदीपः ) योऽनादिष्टादिति ।** अकृत एवादेशे अचो यः पूर्व इत्यर्थः ॥ अजपेक्षस्य पूर्वत्वस्येहाश्रयणात् । आदेशनमादिष्टं, तद् यस्य नास्ति सोऽनादिष्टः ॥

**( उद्द्योतः )** नन्वादेशस्य सत्त्वादनादिष्टादित्यनुचितमत आह—**अकृत एवेति ।** उपलक्षणमेतदिति भावः ॥ ननु सूत्रेऽनादिष्टादित्येतदनुपादानात्कथमेतल्लाभोऽत आह—**अजपेक्षस्येति ।** लक्ष्यानुरोधादिति भावः ॥ कर्मणि क्ते अनादिश्यमानादित्यर्थः स्यादत आह—

**आदेशनमिति**। बहुव्रीहौ **निष्ठेति** पूर्वनिपातस्तु न। तत्प्रकरणानित्यत्वात्॥

**(तत्त्वालोकः)** भाष्ये—**य इति**—न वक्तव्यः, यत इत्यादिः। **एतत्**—अचः पूर्वत्वम्। **अच इतीति**—यत इत्यादिः। **अचः पूर्वस्येति**—तथा चेत्यादिः। इत्याद्यर्थं इति शेषः। एवञ्च स्थान्यपेक्षमेवात्र पूर्वत्वमिति भावः।

उद्द्योते—**सूत्रे**—प्रकृतसूत्रे। **कर्मणीति**—वर्तमाने इति शेषः।

(आक्षेपभाष्यम्)

**यद्येवमादेशोऽविशेषितो भवति ॥**

**(प्रदीपः) आदेश इति**। ततश्च हलादेशोऽपि स्थानिवत् स्यात्॥

**(तत्त्वालोकः)** भाष्ये—**यद्येवमिति**—यद्यच इत्यत्र पञ्चमी, तर्हिचेत्यर्थः।

(आक्षेपबाधकभाष्यम्)

**आदेशश्च विशेषितः ॥**

**कथम्? ॥**

**न ब्रूमो—यत् षष्ठीनिर्दिष्टमज्ग्रहणं तत्पञ्चमीनिर्दिष्टं कर्तव्यम्—इति ॥**

**किं तर्ह्यन्यत्कर्तव्यम्? ॥**

**अन्यच्च न कर्तव्यम्। यदेवादः षष्ठीनिर्दिष्टमज्ग्रहणम्, तस्य दिक्शब्दैर्योगे पञ्चमी भविष्यति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। [कुतः पूर्वस्य? ॥] अच इति ॥ तद्यथा—आदेशः प्रथमानिर्दिष्टः, तस्य दिक्शब्दैर्योगे पञ्चमी भवति—अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रति स्थानिवद्भवति। [कुतः पूर्वस्य?] आदेशादिति ॥**

**(प्रदीपः) यदेवाद इति**। सादृश्यादेवमुक्तं, शब्दान्तरमेव तु पञ्चम्यन्तमपेक्षते ॥ **तद्यथेति**। यथादेशापेक्षया पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणामस्तथा स्थान्यपेक्षयापीत्यर्थः॥ धिन्वन्तीत्यत्रोकारात् पूर्वं यदङ्गं तस्मान्निमित्तत्वेनाश्रिताद्विधिरिति सिद्धः स्थानिवद्भावः॥ वैयाकरण इत्यत्र तु तन्न भवति। न हीकारात् पूर्वो यो वकारः स क्वचिन्निमित्तत्वेनाश्रितः॥

**(उद्द्योतः)** नन्वचः पूर्वत्वविज्ञाने आदेशेन पूर्वत्वस्याविशेषणात्तद्यथेत्ययुक्तमत आह—**यथेति**। परमतेन दृष्टान्त इति भावः॥ पूर्वविध्यभावादाह—**धिन्वन्तीति**। अन्यथेडापत्तिरिति भावः॥ अत्र यद्वक्तव्यम् तदुक्तम्॥ पञ्चमीसमासाश्रयेण वैयाकरणे दोषमाशङ्क्याह—**वैयाकरणेति**। ऐज्विधानसामर्थ्यात्तत्र न भवति स्थानिवत्त्वमिति परे॥

**(तत्त्वालोकः)** भाष्ये—**न ब्रूम इति**—यत इत्यादिः। **अन्यदिति**—षष्ठीनिर्दिष्टमज्ग्रहणमित्यनुषज्यते। **अन्यच्च**—अन्यदपि। **यदेवाद इति**—यत इत्यादिः। **तस्य**—तस्यैव। **तद्यथेति**—भवन्मत इति भावः।

प्रदीपे—**सादृश्यादिति**—अच इति षष्ठ्यन्तेन—अच इति पञ्चम्यन्तस्याकारत इत्यादिः। **यथेति**—भवन्मत इति भावः। **तथेति**—सिद्धान्तिमत इति भावः। **स्थान्यपेक्षयापीति**—पूर्वत्वे आश्रीयमाणे विभक्तिविपरिणाम इत्यनुषज्यते। इत्यत्र—इत्यादौ। **तत्**—स्थानिवत्त्वम्।

उद्द्योते—कैयटोक्तप्रकारस्य दूषितत्वादाह—**अत्रेति**। **उक्तमिति**—आरम्भे इति भावः। **पञ्चमीति**—'पूर्वविधावि'त्यत्रेत्यादिः। **वैयाकरणे**—वैयाकरण इत्यादौ। **दोषमिति**—अनादिष्टादच इकारादेः पूर्वत्वेन दृष्टाद्वकारादेरव्यवहितपरस्यैकारादेरुक्तरीत्याऽयाद्यादेशापत्तिमित्यर्थः।

---

(भावाभावातिदेशसाधनाधिकरणम्)

(३९० आक्षेपवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ तत्रादेशलक्षणप्रतिषेधः ॥ * ॥

(भाष्यम्)

**तत्रादेशलक्षणं कार्यं प्राप्नोति तस्य प्रतिषेधो वक्तव्यः। वाय्वोः। अध्वर्य्वोः। 'लोपो व्योर्वलि' इति लोपः प्राप्नोति ॥**

**(प्रदीपः) तत्रेति**। अतिदेशेन पराश्रयं कार्यं प्राप्यते, न तु स्वाश्रयं निवर्त्यते। भाष्यकारेण तु विधिग्रहणात् स्वाश्रयकार्याभावः साधितः॥

**(उद्द्योतः) विधिग्रहणं स्वाश्रयनिवृत्त्यर्थमि**त्युक्तत्वात्**तत्रादेशलक्षणे**त्यसङ्गतमत आह—**भाष्यकारेण त्विति**। इदं वार्तिकमिति न विरोध इति भावः॥

**(तत्त्वालोकः)** भाष्ये—**तत्र**—आदेशप्रयुक्तकार्यवारणे। **आदेशलक्षणम्**—आदेशाश्रयम्।

प्रदीपे—अस्याशयमाह—**अतिदेशेनेति**।

उद्द्योते—**विधिग्रहणमिति**—नन्वित्यादिः। **इदम्**—इदन्तु।

(३९१ समाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ असिद्धवचनात्सिद्धम् ॥ * ॥

(भाष्यम्)

**अजादेशः परनिमित्तकः पूर्वस्य विधिं प्रत्यसिद्धो भवतीति वक्तव्यम् ॥**

**(तत्त्वालोकः) अजादेश इति**—न वक्तव्यः, यत इत्यादिः। एवञ्च—वाय्वोरित्यादौ यणोऽसिद्धत्वाद्वकारस्य वलि लोपो न प्राप्नोतीति भावः।

(३९२ समाधानबाधकाक्षेपवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः ॥ * ॥

(भाष्यम्)

**असिद्धवचनात्सिद्धमिति चेदुत्सर्गलक्षणानामनुदेशः कर्तव्यः। पटव्या मृद्व्येति ॥**

**(प्रदीपः) उत्सर्गेति**। उत्सर्गः स्थानी, स ह्यादेशेनापवादेनेव निवर्त्यते॥ नन्वीकारयणोऽसिद्धत्वाद् विभक्तावेव यण् भविष्यति॥ नैतदस्ति। पूर्वविधावसिद्धत्वमुच्यते न त्वानन्तर्ये लौकिके, यथा प्रयोग इति नास्ति विभक्तेरानन्तर्यम्॥ **अनुदेश इति**। अतिदेश इत्यर्थः॥

**( उद्द्योतः )** निवर्त्यत इति । उत्सृज्यते निवर्त्यते इत्युत्सर्ग इति भावः ॥ **न स्वानन्तर्ये इति ॥ पूर्वविधावित्युक्तेः** शास्त्रीये कार्येऽतिदेशप्रवृत्तिरिति भावः ॥ **प्रयोगे इति ।** उच्चारणे इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—यदीत्यर्थः । तर्हीति शेषः । प्रदीपे—**पूर्वविधाविति** —पूर्वविधावेवेत्यर्थः । यत इत्यादिः ।

**( समाधानसाधकभाष्यम् )**

**ननु चैतदप्यसिद्धवचनात्सिद्धम् ।**

**( प्रदीपः ) ननु चैतदपीति ।** शास्त्रासिद्धत्वाश्रयणात् ॥

**( ३९३ समाधानबाधकाक्षेपवार्तिकम् ॥ ६ ॥ )**

## ॥ ❀ ॥ असिद्धवचनात्सिद्धमिति चेन्नान्यस्यासिद्धवचनादन्यस्य भावः ॥ ❀ ॥

**( भाष्यम् )**

**असिद्धवचनात्सिद्धमिति चेत् । तन्न ॥**

**किं कारणम् ? ।**

**नान्यस्यासिद्धवचनादन्यस्य भावः । न ह्यन्यस्यासिद्धत्वादन्यस्य प्रादुर्भावो भवति । तद्यथा—नहि देवदत्तस्य हन्तरि हते देवदत्तस्य प्रादुर्भावो भवति ॥**

**( प्रदीपः ) नान्यस्येति ।** कार्यासिद्धत्वाश्रयमेतत् ॥

**( उद्द्योतः )** भाष्ये **नहि देवदत्तस्येति** । हतेऽपि न जीवनं चेत्, किं वक्तव्यं तदारोप इत्यर्थः ॥

**( ३९४ आक्षेपोपसंहारवार्तिकम् ॥ ७ ॥ )**

## ॥❀॥ तस्मात्स्थानिवद्वचनमसिद्धत्वं च ॥❀॥

**( भाष्यम् )**

**तस्मात्स्थानिवद्भावो वक्तव्यः । असिद्धत्वं च । पट्व्या मृद्व्येति स्थानिवद्भावः । वाय्वोरध्वर्य्वोरित्यत्रासिद्धत्वम् ॥**

**( परिहारवार्तिकस्मारकभाष्यम् )**

## ॥ ❀ ॥ उक्तं वा ॥ ❀ ॥

**किमुक्तम् ? ॥**

**❀स्थानिवद्वचनानर्थक्यं शास्त्राऽसिद्धत्वाद्❀ इति ॥**

**( प्रदीपः ) उक्तं वेति ।** शास्त्रासिद्धत्वमाश्रयणीयमित्यर्थः ॥

**( उद्द्योतः ) उक्तं वेति ।** षत्वतुकोरित्यत्र ॥ वचनद्वयकरणापेक्षो विकल्पः ॥

**( समाधानबाधकभाष्यम् )**

**विषम उपन्यासः । युक्तं तत्र यदेकादेशशास्त्रं तुक्शास्त्रे असिद्धं स्यात्—अन्यदन्यस्मिन् । इह पुनरयुक्तम् । कथं हि तदेव नाम तस्मिन्नसिद्धं स्यात् ? ॥**

**( प्रदीपः ) तदेवेति ।** सकृत्पाठापेक्षयैतदुच्यते । विषयभेदात्तु भेदाश्रयणादसिद्धत्वमाश्रीयते ॥

**( उद्द्योतः )** तदेव नामेति । इको यणचीत्येतदेव इको यणचीत्यस्मिन्नित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**युक्तं तत्रेति**—तत्र इत्यादिः ।

**( समाधानसाधकभाष्यम् )**

**तदेव चापि तस्मिन्नसिद्धं भवति ॥ वक्ष्यति ह्याचार्यः ❀चिणो लुकि तग्रहणानर्थक्यं संघातस्याप्रत्ययत्वात्तलोपस्य चासिद्धत्वाद्❀ इति । चिणो लुक् चिणो लुक्येवासिद्धो भवति ॥**

**( उद्द्योतः )** चिणो लुकि तग्रहणाभावे किं ततराम्शब्दस्य लुगुच्यते, उत तेषां क्रमेण । नाद्यः, सङ्घातस्याप्रत्ययत्वात् । नान्त्य इत्याह—भाष्ये—**तलोपस्य चेति** ॥

**( तत्त्वालोकः )** भाष्ये—**चिणो लुगिति**—यथा चेत्यादिः । उद्द्योते—**चिणो लुकीति**—नन्वित्यादिः । **ततरामिति**—अकारितरामित्यादावित्यादिः । **नाद्यः**—तत्र नाद्यः । **नान्त्यः**—तथा-नान्त्योऽपि ।

**( ३९५ समाधानवार्तिकम् ॥ ८ ॥ )**

## ॥❀॥ काममतिदिश्यतां वा सच्चासच्चापि नेह भारोऽस्ति । कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि ॥ ❀ ॥

**( भाष्यम् )**

**अथवा वतिनिर्देशोऽयम् । कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—'उशीनरवन्मद्रेषु यवाः' सन्ति, न सन्तीति ॥ 'मातृवदस्याः कलाः' सन्ति, न सन्तीति ॥ एवमिहापि—स्थानिवद्भवति, स्थानिवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे । इह तावत्पट्व्या मृद्व्येति यथा स्थानिनि यणादेशो भवति, एवमादेशेऽपि भवति । इहेदानीं वाय्वोरध्वर्य्वोरिति यथा स्थानिनि यलोपो न भवति, एवमादेशेऽपि न भवतीति ॥**

**( प्रदीपः ) नेह भारोऽस्तीति ।** न ह्यभावातिदेशेऽधिकं सूत्रं पठनीयं, विधिशब्दं चान्तरेण सिध्यति ॥ **अधीनमिति ।** अध्युत्तरपदात् खविधानादव्युत्पन्न आयत्तार्थवृत्तिरधीनशब्दः ॥ **तद्यथेति ।** येनोपमाने यवानां सत्ताऽवगता, स सन्तीति वाक्यशेषं प्रकल्पयति । असत्तावगतौ तु न सन्तीति ॥ एवमस्यापि लक्षणस्य प्रतिलक्ष्यं भेदात् क्वचिद्भावोऽतिदिश्यते, क्वचिदभावः ॥

**( उद्द्योतः )** एवमसिद्धवचनमात्रेण निर्वाहमुक्त्वा सूत्रकृतं स्थानिवत्त्वं समर्थयति—**काममिति । न ह्यभावेति । इहेत्यस्य** सूत्रे इत्यर्थ इति भावः ॥ ननु पूर्वमस्यार्थस्य विधिशब्देन साधितत्वात् कथं तत्करणरूपो न भार इत्यत आह—**विधिशब्दं चेति ॥** अध्याहारमात्रेणेति भावः ॥ भाष्ये—**एवमादेशेपि न भवतीति ।** आदेशनिमित्तकोपीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**न सन्तीतीति**—इत्यत्रेत्यादिः । वाक्यशेषः समर्थ्यते इति शेषः ।

प्रदीपे—**अव्युत्पन्न इति**—अत एव-वक्त्रर्थधीनमिति प्रायुङ्क्त, अन्यथा तु वक्त्रधीनमिति प्रयुञ्ज्येतेति भावः।

उद्द्योते—नन्वधिकं सूत्रमित्यर्थः कस्येत्यत आह—**इहेत्यस्येति।** वार्त्तिकस्थस्येति भावः। **अस्यार्थस्य**—अभावातिदेशरूपार्थस्य। **कथमिति**—तस्याभ्युपगमे इत्यादिः। **तत्करणरूपः**—विधिशब्दकरणरूपः। ननु वतिनिर्दिष्टत्वादत्र वाक्यशेषकल्पनेनाभावातिदेशस्य लाभेऽपि स शास्त्रेऽप्याश्रीयत इति ज्ञापनार्थं विधिशब्दकरणरूपो भारोऽस्त्येवेत्यत आह- **अध्याहारेति।** इह पूर्वसूत्रादनुवृत्तस्य विधिशब्दस्य सामर्थ्येनैव-अभावातिदेशः शास्त्रेऽप्याश्रीयत इति ज्ञापनात्तदर्थमपि स भारो नास्तीति भावः। तथा चात्र पक्षे लाघवमेवेत्याशयः॥ नन्वेवमत्र विधिग्रहणस्य वैयर्थ्यमेवेति चेन्न, तस्य **'पूर्वस्यैव विधौ स्थानिवन्न तु पूर्वपरयोर्विधावि'ति** ज्ञापनार्थत्वात्। अत एव-आरतुरित्यत्र सवर्णदीर्घे गुणस्य न स्थानिवत्त्वमिति दिक्॥

## ( पूर्वशब्दार्थनिर्णयाधिकरणम् )

### ( आक्षेपभाष्यम् )

### किं पुनरनन्तरस्य विधिं प्रति स्थानिवद्भावः, आहोस्वित्पूर्वमात्रस्य ?॥

**( प्रदीपः ) किं पुनरिति।** अमीषां ब्राह्मणानामन्त्यात्पूर्वमानयेत्यत्रानन्तरे पूर्वशब्दो दृष्टः। मथुरायाः पूर्वं पाटलिपुत्रमिति व्यवहित इति प्रश्नः॥ तत्र यदा विषयभेदाल्लक्षणं भिद्यते तदा यादृशं यत्र पूर्वत्वं संभवति तादृशं तत्राश्रीयते इति व्यवहितस्यापि ग्रहणम्। यदा त्वेकमेव लक्षणं तदा किमित्यव्यवहितसंभवे व्यवहितमाश्रीयत इति अनन्तरस्यैव ग्रहणेन भाव्यम्॥

**( उद्द्योतः )** यद्यपि **व्यवहितेपि पूर्वशब्दो वर्तत** इति भाष्यकृता पूर्वमेवोक्तम्। तथापि तदर्थप्रतिपादकवार्तिकमवतारयितुं पृच्छति—भाष्ये **किं पुनरिति। अव्यवहितसंभवे इति॥ छन्दसि परेपि, व्यवहिताश्चे**त्यनेन पूर्वपरशब्दयोरव्यवहितार्थे मुख्यत्वबोधनादिति भावः॥ **तस्मिन्निति** सूत्रे निर्दिष्टग्रहणाद्व्यवहिताव्यवहितसाधारणे पूर्वशब्दस्य शक्तिः। **अन्त्यात्पूर्वमानये**त्यादौ तु तात्पर्यानुपपत्त्या विशेषे लक्षणा, **छन्दसि परेपी**त्यादौ तु पराङ्गविकलाया **स्तस्मादिति** परिभाषाया उपस्थितेरव्यवधानांशलाभः। इह तु स्वरग्रहणाल्लिङ्गात्तदनुपस्थितिरिति तत्त्वम्॥

**( तत्त्वालोकः )** भाष्ये—**अनन्तरस्य**—अव्यवहितपूर्वस्य। **पूर्वमात्रस्य**—व्यवहिताव्यवहितसाधारणपूर्वत्वाश्रयस्य।

प्रदीपे—**इति व्यवहित इति प्रश्नः**—इत्यत्र तु व्यवहिते, इति हेतोः प्रश्नः। **तत्र**—एवं व्यवहिताव्यवहितयोरुभयत्र पूर्वशब्दप्रयोगदर्शने सति।

उद्द्योते—नन्विदमनुपपन्नम्, पूर्वशब्दस्य तदुभयत्र साम्येन प्रयोगादित्यत आह—**छन्दसीति॥** कैयटोक्तं खण्डयन् प्रकारान्तरेण भाष्यं सङ्गमयति—**तस्मिन्नितीति।** नन्वेवं-कैयटोक्तदृष्टान्तयोः क्वचिदव्यवहितस्यैव, क्वचिच्च व्यवहितस्यैव पूर्वशब्देन कथम्प्रतीतिरित्यत आह—**अन्त्यादिति।** नन्वेवमपि 'व्यवहिताश्चे'ति सूत्रं व्यर्थमेवेत्यत आह—**छन्दसीति। आदिना**—'परश्चे'त्यादिपरिग्रहः। नन्वेवमपि प्रकृते कथं निश्चय इत्यत आह—**इह त्विति। स्वरग्रहणादिति**—'न पदान्ते'ति सूत्रे इति भावः। **तदिति**—'तस्मादिति' परिभाषेत्यर्थः॥

### ( भाष्यम् )

**कश्चात्र विशेषः ?।**

**( तत्त्वालोकः )** अत्र—पूर्वशब्देन-अव्यवहितपूर्वस्य, पूर्वमात्रस्य वा ग्रहणे।

( ३९५ अनन्तरग्रहणदूषणवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अनन्तरस्य चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानम् ॥ * ॥

### ( भाष्यम् )

अनन्तरस्येति चेदेकाननुदात्तद्विगुस्वरगतिनिघातेषूपसंख्यानं कर्तव्यम्॥

एकाननुदात्त—लुनीह्यत्र पुनीह्यत्र। 'अनुदात्तं पदमेकवर्जम्' इत्येष स्वरो न प्राप्नोति॥

**( प्रदीपः ) लुनीह्यत्रेति।** हेरपित्त्वादुदात्तत्वम्, तत्र यणादेशे कृते उदात्तस्याभावाद्वर्ज्यमानस्वरो न स्यात्। स्थानिवद्भावात्तु यथा स्थानिनि स्वरो भवति, एवमादेशेऽपि सिद्धः स्वरः॥

**( उद्द्योतः )** भाष्ये—**एकाननुदात्त**शब्देन तत्प्रयुक्तः शेषनिघातः॥ **उदात्तत्वमिति।** प्रत्ययस्वरेण॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—तर्हीति शेषः। एवमग्रेऽपि। **उपसंख्यानमिति**—कर्तव्येषु स्थानिवत्त्वस्येत्यादिः। **'अनुदात्तमि'ति**—अस्य सूत्रस्य-'यस्मिन् पदे यस्योदात्तः स्वरितो वा विधीयते, तमेकमचं वर्जयित्वा शेषं तत्पदमनुदात्ताच्कं स्यादि'त्यर्थः।

प्रदीपे— **वर्ज्यमानस्वर इति**—अत्र-बहुव्रीहिः। शेषनिघात इति शेषः। **स्थानिनीति**—सतीति शेषः। एवमग्रेऽपि। **सिद्धः स्वर इति**—अतोऽत्र स्थानिवत्त्वमावश्यकम्, किन्तु-यद्यनन्तरो गृह्यते, तर्ह्यत्र तन्नोपपद्यते, यतोऽत्र न स्थानिभूताचोऽनन्तरस्यैवानुदात्तत्वम्, अपि तु ततः पूर्वस्य पदस्येत्यत्र स्थानिवत्त्वोपसंख्यानं कर्तव्यमिति भावः। एवमग्रेऽपि।

### ( उदाहरणभाष्यम् )

द्विगुस्वर—पञ्चारत्न्यः दशारत्न्यः। 'इगन्तकाल-' इत्येष स्वरो न प्राप्नोति॥

**( प्रदीपः ) पञ्चारत्न्य इति। जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधाया** इति **जसि चे**ति गुणश्छन्दसि विकल्पितत्वान्न भवतीति यणि कृते इगन्तत्वाभावात् पूर्वपदप्रकृतिस्वराऽप्रसङ्गः॥

### ( उदाहरणभाष्यम् )

गतिनिघात—यत्प्रलुनीह्यत्र। यत्प्रपुनीह्यत्र॥
'तिङि चोदात्तवति' इत्येष स्वरो न प्राप्नोति॥

**( प्रदीपः ) यत्प्रलुनीह्यत्रेति।** यच्छब्दप्रयोगो निघातप्रतिषेधार्थः। तत्र यणि कृते उदात्तवत्त्वाभावाद्गतिनिघाताप्रसङ्गः। एतच्च सर्वमनाश्रित्यान्तरङ्गबहिरङ्गभावमुक्तम्॥

**( उद्द्योतः ) निघातप्रतिषेधेति। निपातैर्यद्यदी**त्यनेनेति भावः॥ **अनाश्रित्येति।** पदसंस्कारे वाक्यसंस्कारे वा यणो वर्णाश्रयत्वेनान्तरङ्गत्वमित्यन्ये॥

**( तत्त्वालोकः )** उद्द्योते—**कैयटोक्तं** खण्डयन् भाष्यं **योजयति—पदेति।**

### ( द्वितीयपक्षाङ्गीकारभाष्यम् )

अस्तु तर्हि पूर्वमात्रस्य॥

( ३९६ पूर्वमात्रग्रहणदूषणवार्तिकम् ॥ १० ॥ )

## ।*॥ पूर्वमात्रस्येति चेदुपधाह्रस्वत्वम् ॥*॥

( भाष्यम् )

पूर्वमात्रस्येति चेदुपधाह्रस्वत्वं वक्तव्यम् । वादितवन्तं प्रयोजितवान्—अवीवदद्वीणां परिवादकेन ॥

किं पुनः कारणं न सिध्यति ? ॥

योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद् ह्रस्वत्वं न प्राप्नोति ॥

( ३९७ दूषणान्तरवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ गुरुसंज्ञा च ॥ * ॥

( भाष्यम् )

**गुरुसंज्ञा च न सिद्ध्यति । श्लेष्मघ्न । पित्तघ्न । दध्यश्व । मध्वश्व । 'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञा, 'संयोगे गुरु' इति गुरुसंज्ञा, 'गुरोरनृतः' इति प्लुतो न प्राप्नोति ॥**

**( प्रदीपः ) श्लेष्मघ्नेति ।** कार्यार्थत्वात्संयोगसंज्ञाया व्यवहितस्यात्र प्लुतविधिरिति पूर्वपक्षः ॥

**( उद्द्योतः ) श्लेष्मघ्नेति । अमनुष्यकर्तृके चेति** टक् ॥ ननु संयोगत्वस्य समुदायगतत्वेन पूर्वविधित्वाभावात् कथं स्थानिवत्त्वम् ॥ किं च न संयोगसंज्ञा व्यवहितस्य विधिः । अव्यवहितस्य सत्त्वादत **आह—कार्यार्थत्वादिति ।** ततश्च प्लुतद्वारा व्यवहितपूर्वविधित्वं संज्ञाया इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**न सिद्ध्यतीति**—संयोगसंज्ञायां लोपादेः स्थानिवत्त्वाद्, अतः सा विधेयेति शेषः । **श्लेष्मघ्नेत्यादि—** अस्य 'एहीत्यादिः' शेषः । **न प्राप्नोतीति**—अल्लोपयणोः स्थानिवत्त्वादिति भावः ।

प्रदीपे—**इति पूर्वपक्षः**—इति कारणात् पूर्वपक्षः ।

उद्द्योते—**कथमिति**—तत्र कर्तव्ये लोपादेरिति शेषः । **संज्ञायाः**—संयोगसंज्ञायाः । अत एव-भाष्यकृतः प्लुतपर्यन्तधावनमिति भावः ।

( पूर्वमात्रवादिभाष्यम् )

**ननु च यस्याप्यनन्तरस्य विधिं प्रति स्थानिवद्भावः, तस्याप्यनन्तरलक्षणो विधिः संयोगसंज्ञा विधेया ॥**

**( प्रदीपः ) ननु चेति ।** यथोद्देशपक्षे प्रत्येकं च संयोगसंज्ञेति पक्षे आनन्तर्याश्रयेऽपि दोष इत्यर्थः ॥

**( उद्द्योतः )** ननु च उक्तहेतुना व्यवहितपूर्वविधित्वात्कथमनन्तरग्रहणे संयोगसंज्ञाया विधेयत्वमत आह—**यथोद्देशेति ।** तदा कार्यपर्यालोचनं विनापि 'भविष्यति किंचिदि'त्यभिसन्धिमात्रात्तत्प्रवृत्तेरित्यर्थः ॥ ननु एवमपि पूर्वपरविधित्वान्न स्थानिवत्त्वप्राप्तिरत **आह—प्रत्येकं चेति ॥**

**( तत्त्वालोकः )** भाष्ये—**यस्यापीति**—मते इति शेषः । एवमग्रेऽपि ।

उद्द्योते—**उक्तहेतुना**—प्लुतद्वारा । **तदा**—यथोद्देशपक्षे । **किञ्चित्**—किञ्चित्प्रयोजनम् । **तदिति**—संयोगसंज्ञा इत्यर्थः । तथा च—न संयोगसंज्ञायाः प्लुतद्वारा व्यवहितपूर्वविधित्वमिति भावः । **पूर्वपरेति**—तस्या इत्यादिः ।

( ३९८ समाधानवार्तिकम् ॥ १२ ॥ )

## ॥*॥ न वा संयोगस्यापूर्वविधित्वात् ॥*॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ? ।

संयोगस्यापूर्वविधित्वात् । न पूर्वविधिः संयोगः ॥

किं तर्हि ? ।

पूर्वपरविधिः संयोगः ॥

**( प्रदीपः ) न वेति ।** समुदायः संज्ञीति भावः । पूर्वमात्रस्येति पक्षोऽत्र स्थितः ॥ अवीवददिति तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो वक्ष्यते ॥

**( उद्द्योतः ) समुदाय इति ।** एवं चानन्तर्याश्रयणे यथोद्देशपक्षेऽपि न दोष इति भावः ॥ एवं च पूर्वमात्रग्रहणेपि श्लेष्मघ्ने न दोषः, यथोद्देशाश्रयणादेव । कार्यकालपक्षेऽपि यत्प्रतिबन्धद्वारा स्थानिवत्त्वस्य संज्ञाकार्यप्रतिबन्धकत्वं तस्य पूर्वमात्रवृत्तित्व एव स्थानिवत्त्वमिति गूढतात्पर्यम् ॥ भाष्ये—**किं तर्हि पूर्वपरविधिरिति ।** पूर्वपरविधौ स्थानिवत्त्वाभावादेव च आरतुरित्यादौ **ऋच्छत्यृतामिति** गुणस्य सवर्णदीर्घे न स्थानिवत्त्वमिति बोध्यम् ॥ विधिग्रहणसामर्थ्याच्चैतदर्थलाभ इत्याहुः ॥ **पूर्वमात्रेति ॥** दीर्घादिग्रहणाल्लिङ्गादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्**—कस्मात् कारणात् । **न**—न हि । **पूर्वपरविधिरिति**—तथा चात्र स्थानिवत्त्वाभावान्न संयोगत्वाद्यनुपपत्तिद्वारा प्लुतत्वानुपपत्तिरिति भावः ।

उद्द्योते—**एवञ्च**—समुदायस्य संज्ञित्वे च । **अपिना—** कार्यकालपक्षसंग्रहः । **एवञ्चे**त्यस्यार्थमाह—**यथोद्देशेति ।** कैयटोक्तस्य गूढाशयमाह—**कार्येति । अपिना**—यथोद्देशपक्षसमुच्चयः । तथा च–प्रकृते स्थानिवत्त्वस्य संयोगसंज्ञाप्रतिबन्धद्वारा गुरुसंज्ञाप्रतिबन्धेन प्लुतप्रतिबन्धकत्वेऽपि संयोगसंज्ञायाः पूर्वमात्रवृत्तित्वाभावान्न स्थानिवत्त्वमिति भावः । पूर्वपरविधौ स्थानिवत्त्वाभावस्य फलान्तरमप्याह—**पूर्वपरेति ।** ननु फलसत्त्वेऽप्यत्रार्थे मानाभाव इत्यत आह—**विधिग्रहणेति ।** प्रकृतसूत्रे इति भावः । **एतदर्थेति**—पूर्वपरविधौ स्थानिवत्त्वं नेत्येतदर्थेत्यर्थः । **दीर्घेति**—'न पदान्ते'ति सूत्रे इति भावः । **आदिना**—स्वरसंग्रहः ।

---

( एकादेशे स्थानिवद्भावसाधनाधिकरणम् )

( ३९९ आक्षेपवार्तिकप्रथमखण्डम् )

## ॥ * ॥ एकादेशस्योपसंख्यानम् ॥ * ॥

( भाष्यम् )

**एकादेशस्योपसंख्यानं कर्तव्यम् । आयसौ गौमतौ चातुरौ आनडुहौ पादे उदवाहे । एकादेशे कृते नुमामौ पद्भाव ऊडित्येते विधयः प्राप्नुवन्ति ॥**

**( प्रदीपः ) एकादेशस्येति ।** परस्मिन्नित्येतदवधारणार्थमुपात्तम् । तथा ह्यनुपादीयमानेऽपि परस्मिन्नित्यस्मिन् परनिमित्तकस्य

स्थानिवद्भावो लभ्यत एव। तत्रानेन यथा अपरनिमित्तकस्य स्थानिवद्भावो निवार्यते-वैयाघ्रपद्यः, आदीध्य इति। एवं परस्मिन्नेव य आदेश इत्यवधारणादुभयनिमित्तस्याप्राप्तिरिति भावः॥ श्रायसादिभ्योऽणन्तेभ्य औप्रत्यये कृते एकादेशे च तस्यादिवद्भावान्नुमामौ प्राप्नुतः। पादे उदवाहे इत्यत्र ङावेकादेशे कृते आदिवत्त्वात् भसंज्ञायां सत्यां पद्भाव ऊठ् च प्राप्नुतः॥

**( उद्द्योतः )** ननूभयनिमित्तत्वेऽपि परनिमित्तत्वमस्त्येवेत्यत आह—**परस्मिन्नितीति ॥ अवधारणार्थमिति ।** पूर्वविधिशब्दे पूर्वशब्दस्येवास्यापि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वादिति भावः॥ **लभ्यत एवेति ।** अविशेषात्सर्वत्र प्रवृत्त्येति भावः॥ **श्रायसाविति**त्यत्र **दैविकाशिंशपे**त्यादत्रम्॥ **तस्यादिवद्भावादिति ॥** ननु आदिवद्भावेन औ इत्यस्य सर्वनामस्थानत्वेऽपि श्रायसित्यस्याङ्गत्वाभावात्कथं नुम्। औ इत्यस्य सान्तादविहितत्वात्, श्रायसित्यस्य षष्ठीनिर्दिष्टादेशत्वाभावान्न स्थानिवत्त्वेन तस्याङ्गत्वमिति चेन्न। छिन्नपुच्छश्ववदेकदेशविकृतानन्यत्वेनाङ्गत्वप्रतीत्यव्याघातात्। भूयोवयवसाम्यात्। लोकन्यायसिद्धस्यानाश्रयणे बीजाभावात्। सूत्रमपि वस्नसाद्यर्थमावश्यकमिति दिक्॥

**( तत्त्वालोकः )** भाष्ये—**उपसंख्यानम्—**स्थानिवत्त्वोपसंख्यानम्। **श्रायसौ···उदवाहे इति—**यत इत्यादिः। इत्यत्रेति शेषः।

प्रदीपे—**तत्रानेन—**तथा सत्यप्युपादीयमानेन परस्मिन्नित्यनेन। **अप्राप्तिः—**स्थानिवत्त्वाप्राप्तिः। श्रायसावित्यादाविति भावः।

उद्द्योते—**उभयेति—**एकादेशस्येत्यादिः। **अस्त्येवेति—**तथा च—प्रकृतसूत्रेणैव तस्य स्थानिवत्त्वोपपत्तेस्तदुपसंख्यानमनावश्यकमिति भावः। **अस्यापि विशेषणस्य—**परशब्दस्यापि आदेशविशेषणस्य। **प्रवृत्त्या—**प्रकृतसूत्रप्रवृत्त्या। तस्यानङ्गत्वे हेतुमाह—**औ इत्यस्येति ।** ननु तस्य स्थानिवत्त्वेनाङ्गत्वमित्यत आह-**श्रायसिति। अङ्गत्वप्रतीतीति—**तत्रेत्यादिः। नन्वेकदेशविकृतन्यायाश्रयणे तेनैव निर्वाहात्पूर्वसूत्रं व्यर्थमित्यत आह—**सूत्रमिति ।** नन्वेवमपि तत्रादेशग्रहणं व्यर्थमेव, स्थानिवदिति सम्बन्धिशब्दमहिम्नैव तल्लाभात्। तदानुमानिकादेशसंग्रहार्थमित्यपि न, तौ तित्वप्रतीतेरेकदेशविकृतन्यायेनैवोपपादनादित्यत आह—**अपीति ।** अनेनादेशसमुच्चयः। **आदिना—**पचतित्यादिपरिग्रहः। तौ अर्थस्यान्यथात्वेन जातिव्यञ्जकभूयोऽवयवदर्शनाभावात् तित्वप्रतीतिरेकदेशविकृतन्यायेनोपपादयितुमशक्येति भावः।

## ( प्रत्याक्षेपभाष्यम् )

**किं पुनः कारणं न सिध्यन्ति ? ॥**

**( उद्द्योतः )** भाष्ये—**न सिध्यन्तीति ।** निवर्त्यत्वेनेत्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**किं पुनः कारणमिति—**कस्मात् पुनः कारणादित्यर्थः। अनेन सूत्रेणैव स्थानिवत्त्वात् श्रायसावित्यादावेते विधय इति शेषः।

उद्द्योते—यथाश्रुतस्य प्रकृतेऽसङ्गतत्वादाह—**निवर्त्येति ।**

## ( प्रत्याक्षेपबाधकवार्तिकद्वितीयखण्डम् )

## ॥ ※ ॥ उभयनिमित्तत्वात् ॥ ※ ॥

## ( भाष्यम् )

**अजादेशः परनिमित्तक इत्युच्यते। उभयनिमित्तश्चायम्॥**

**( तत्त्वालोकः )** अजादेश इति—यत इत्यादिः।

## ( प्रत्याक्षेपबाधकवार्तिकतृतीयखण्डम् ॥ १३ ॥ )

## ॥ ※ ॥ उभयादेशत्वाच्च ॥ ※ ॥

## ( भाष्यम् )

**अच आदेश इत्युच्यते। अचोश्चायमादेशः॥**

**( प्रदीपः )** अचोश्चेति। अच इति गुणत्वादेकत्वसंख्यायाः **पशुना यजेतेति**वदविवक्षितत्वात्॥

**( उद्द्योतः )** नन्वच इत्यस्य विशेषणस्यान्ययोगव्यवच्छेदकत्वेऽपि हलां व्यावृत्तिः स्यान्नाजन्तरस्येत्यत आह—**गुणत्वादिति।** आदेशविशेषणत्वेनेति शेषः॥ वस्तुतोऽचोरादेशस्याच्त्वपर्याप्त्यधिकरणादेशत्वाभाव इति भाष्याशयः॥

**( तत्त्वालोकः )** भाष्ये—**अच इति—**यत इत्यादिः।

उद्द्योते—**विशेषणस्य—**आदेशविशेषणस्य। **हलां**-हलामेव। **नाजन्तरस्येति—**न त्वजन्तरस्येत्यर्थः। तस्यान्यत्वाभावादिति भावः। **इति शेषः—**इत्यादिः। नन्वेवं ग्रहं सम्मार्ष्टीत्यत्रैवैकत्वविवक्षैव युक्तेत्यत आह—**वस्तुत इति ।**

## ( आक्षेपसाधकप्रथमहेतुनिरासभाष्यम् )

**नैष दोषः॥ यत्तावदुच्यते—※उभयनिमित्तत्वाद्※ इति। इह यस्य ग्रामे नगरे वा अनेकं कार्यं भवति, शक्नोत्यसौ ततोऽन्यतरतो व्यपदेष्टुम्। तद्यथा—'गुरुनिमित्तं वसामः' इति, 'अध्ययननिमित्तं वसामः' इति॥**

**( प्रदीपः )** इह यस्येति। अन्वयव्यतिरेकाभ्यां निमित्तत्वावधारणाद्भवत्येव परस्य निमित्तता। अयोगव्यवच्छेदेन परस्मिन् य आदेश इति विशेषणात्॥

**( उद्द्योतः )** उभयनिमित्तत्वे किं परनिमित्तत्वमेव नास्तीत्युच्यते उत, परमेव निमित्तं नेति। नाद्य इत्याह—**अन्वयेति ॥** नान्त्य इत्याह—**अयोगेति ।** विशेष्यसङ्गत एवायोगव्यवच्छेदबोध इति नियमे न मानमिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**नैष दोष इति—**यत इति शेषः। **इहेति—**उच्यते इति शेषः। एवमग्रेऽपि। **अध्ययनेति—**अथवेत्यादिः। **इतीति—**'एवमेकादेशस्योभयनिमित्तकत्वेऽपि परनिमित्तकत्वेन व्यपदेक्ष्यतेति' इति शेषः।

उद्द्योते—**उभयेति—**नन्वेकादेशस्येत्यादिः। **नाद्य इति—**तत्रेत्यादिः। ननु 'विशेष्यसङ्गत एवे'त्यादिनियमात्रेदं युक्तमित्यत आह—**विशेष्येति ।**

## ( आक्षेपसाधकद्वितीयहेतुनिरासभाष्यम् )

**यदप्युच्यते—※उभयादेशत्वाच्च※ इति। इह यो द्वयोः षष्ठीनिर्दिष्टयोः प्रसङ्गे भवति, लभतेऽसावन्यतरतो व्यपदेशम्। तद्यथा—देवदत्तस्य पुत्रः, देवदत्तायाः पुत्र इति॥**

**( प्रदीपः ) द्वयोरिति ।** वर्णनिर्देशे तावज्जातिग्रहणान्नास्ति संख्याविवक्षा, भवतु वा, तथापि न दोष इति भावः॥

**( तत्त्वालोकः )** भाष्ये—**पुत्रः—**पुत्र इति, अथवा। **इतीति—**'एवमेकादेशस्योभयादेशत्वेऽपि अच आदेशत्वेन व्यपदेक्ष्यतेति'

इति शेषः । तथा च-प्रकृतसूत्रेणैव स्थानिवत्त्वोपपत्तेस्तस्य स्थानिवत्त्वोपसंख्यानं न कर्तव्यमिति भावः ।

( अथ हल्चूसमुदायादेशस्थानिवत्त्वाभावनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ हलचोरादेशः स्थानिवद् भवति, उताहो न ।**

**( प्रदीपः ) अथ हलचोरिति ।** उभयथा शास्त्रे व्यवहारदर्शनात्प्रश्नः । **उरण् रपर** इत्यत्राणनण्समुदायोऽकङादिरादेशो रपरो न भवति । **नाग्लोपीत्यत्र** त्वत्यरराजदिति हलचोर्लोपेऽग्लोपित्वाश्रयणादुपधाह्रस्वत्वनिषेधो भवति । अस्ति ह्यत्राकोऽदर्शनमिति ॥

**( उद्द्योतः )** भाष्येऽथ**हलचोरिति । अच** इत्यपि परस्मिन्निति वद्योगव्यवच्छेदकमुतान्ययोगव्यवच्छेदकमिति प्रश्नः ॥ **अत्यरराजदिति ।** राजानमतिक्रान्तवानित्यर्थे **प्रातिपदिकाद्धात्वर्थ** इति णिजि-ष्ठवद्भावाट्टिलोपश्चेति बोध्यम् ॥ **पूर्वस्यैव विधा**वित्यनाश्रित्येदम् ॥

**( तत्त्वालोकः )** प्रदीपे—**इत्यत्रेति**—इत्यनेनेत्यर्थः । सौधातकिरित्यादाविति भावः । **इत्यत्र तु**—इत्यनेन तु । **अत्यरराजदिति**—अत्यरराजदित्यादौ । **अदर्शनमितीति**—अस्य पूर्वोक्तेन 'उभयथे' त्यनेनान्वयः ।

उद्द्योते—पूर्वापरसङ्गतिमाह—**अच इत्यपीति ।** ननु पररूपस्योभयविधित्वात्कथं विंशकमित्यादौ तस्य स्थानिवत्त्वमित्यत आह—**पूर्वस्यैवेति । इदम्**—'हलचोरादेशः' इत्यादि भाष्यम् ।

( भाष्यम् )

**कश्चात्र विशेषः ? ।**

( ४०० समुदायादेशस्थानिवत्त्वे दूषणवार्तिकम् ॥ १४ ॥ )

## ॥ * ॥ हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेशः ॥ * ॥

( भाष्यम् )

**हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोपे एकादेशो वक्तव्यः । विंशकम् । विंशं शतम् । विंशः ।**

**( प्रदीपः ) विंशकमिति । विंशतित्रिंशद्भ्या**मिति ड्वुन् ॥ **विंशमिति । शदन्तविंशतेश्चे**ति डः ॥ **विंश इति । तस्य पूरणे डट् ॥**

**( उद्द्योतः )** भाष्ये **एकादेश इति । अतो गुण** इति पररूपमित्यर्थः । **यस्येति चे**ति तु न, तिलोपस्याभीयत्वेनासिद्धत्वादिति भावः ॥ **विंशं 'शत**मित्यस्य विंशतिरधिकास्मिन्नित्यर्थः ॥ **विंश इति** तु प्रक्षिप्तं, शतसहस्रयोरेव डस्येष्टत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—उक्तमिति शेषः । **वक्तव्य इति**—अन्यथा तिलोपस्य स्थानिवत्त्वात्तेन व्यवधानादेकादेशो नोपपद्येतेति भावः ।

उद्द्योते—**विंश इति तु प्रक्षिप्तमिति**—वस्तुतस्तस्य प्रक्षिप्तत्वकथनमेव प्रक्षेप्यम्, 'शतसहस्रयोरेवेष्यते' इति वार्तिकस्य 'शदन्तविंशतेश्चे'ति सूत्र एव सम्बन्धः, न तु 'तस्य पूरणे डट्' इति सूत्र इति सिद्धान्तात् । अत एव च—विंशोऽध्यायः, विंशं सूत्रमित्यादयो व्यवहारा अपि सङ्गच्छन्ते ॥

( ४०१ दूषणान्तरवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ स्थूलादीनां यणादिलोपेऽवादेशः ॥ * ॥

( भाष्यम् )

**स्थूलादीनां यणादिलोपे कृते अवादेशो वक्तव्यः । स्थवीयान्, दवीयान् ॥**

**( प्रदीपः ) स्थवीयानिति ।** गुणलोपयोरन्तरङ्गत्वाद् गुणस्य कथनमादिष्टादचः पूर्वत्वमिति चेत् । स्थानिनोऽनादिष्टादचः पूर्वत्वात् तद्द्वारेण गुणस्यापि भविष्यति स्थानिवद्भावः । तत्र स्थानिवद्भावे सति लशब्देन व्यवधानादवादेशाप्रसङ्गः ॥

**( उद्द्योतः ) स्थानिनोऽनादिष्टादिति ।** अत्र यद्वक्तव्यं तद् **न धात्विति** सूत्रे **स्थानिव**त्सूत्रे चोक्तम् ॥

**( तत्त्वालोकः )** प्रदीपे—**गुणलोपयोरिति**—'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' इति सूत्रेण विधीयमानयोरिति भावः । **गुणस्यापीति**—अनादिष्टादचः पूर्वत्वमिति शेषः । **अदोषः**—न स्थानिवत्त्वानुपपत्तिः । **तत्र**—स्थवीयानित्यादौ । लोपस्येति भावः । **अप्रसङ्ग इति**—अतः न वक्तव्य इत्याशयः ।

उद्द्योते—कैयटोक्तं खण्डयति—**अत्रेति ।**

( ४०२ दूषणान्तरवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ केकयमित्रय्वोरियादेश एत्वम् ॥ * ॥

( भाष्यम् )

**केकयमित्रय्वोरियादेशे एत्वं न सिध्यति । कैकेयः । मैत्रेयः । अचीत्येत्वं न सिध्यति ॥**

**( प्रदीपः ) कैकेय इति ॥** नन्वङ्मात्रे गुणो विधीयते न त्वजादौ । तेन योऽत्राश्रीयते नासावादेशः, यश्चादेशः समुदायो नासावाश्रीयत इति न्यायान्नास्ति दोषः ॥ नैतदस्ति । स्थानिवन्न भवतीत्यभावातिदेशाश्रयणपक्षे दोषः स्यादेव । परिहारान्तरस्याभिधास्यमानत्वाद्दैतन्नाश्रितम् ॥

**( उद्द्योतः ) कैकेयादौ**—केकयमित्रय्वित्यादिना इयादेशे **आद्गुणः ॥** अत्रापि पक्षे स एवार्थ इत्यत आह—**परिहारान्तरस्येति ।** पक्षान्तरस्येत्यर्थः ॥ **एतत्—**पूर्वोक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**इयादेशे**—इयावादेशे । 'आद्गुणः' इति गुणम्, 'अतो गुणे' इति पररूपञ्चाभिप्रेत्याह—**एत्वमिति । अचीतीति—**इदं 'गुणे इति' इत्यस्याप्युपलक्षणम् । तथा च—केकयशब्दात् 'जनपदशब्दात्क्षत्रियादञ्' इति सूत्रेणाञि, 'केकयमित्रयुप्रलयानां यादेरियः' इति सूत्रेण यादिभागस्येयादेशे तस्य स्थानिवद्भावेन व्यवधानाद् गुणो न सिध्यति । एवम्-मित्रयुशब्दाद् 'गृष्ट्यादिभ्यश्चे'ति सूत्रेण ढञि, तस्य एयादेशे, 'केकयमित्रयु' इत्यादिसूत्रेण यादिभागस्य प्राप्तमियादेशं बाधित्वा 'दाण्डिनायन' इत्यादिसूत्रे मैत्रेयेति निपातनेन युशब्दस्य लोपे तस्य स्थानिवद्भावेन व्यवधानात्पररूपं न सिध्यतीत्याशयः ।

प्रदीपे—**यः—**इकारः । **अत्र—**गुणविधौ । **समुदायः—'इय'** इति समुदायः । **आश्रीयते—**गुणविधावाश्रीयते । **स्थानिवन्नेति—**यत इत्यादिः ।

उद्द्योते—**इयादेशे—**इयावादेशे । **आद्गुण इति—**इदम् 'अतो

गुणे' इत्यस्याप्युपलक्षणम् । **अत्रापीति**—नन्वित्यादिः । **पूर्वोक्तम्**—'योऽत्राश्रीयते नासावादेशः' इत्यादि ।

( ४०३ दूषणान्तरवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ उत्तरपदलोपे च ॥ * ॥

( भाष्यम् )

**उत्तरपदलोपे च दोषो भवति ॥ दध्युपसिक्ताः सक्तवो दधिसक्तवः । अचीति यणादेशः प्राप्नोति ।**

**( प्रदीपः ) दधिसक्तव इति । समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपद उत्तरपदलोपश्चेति** लोपस्य परनिमित्तता । यद्यप्यत्र पदान्तविधौ नेति सिध्यति, तथापि परिहारान्तरस्याभिधास्यमानत्वादेतन्नोक्तम् ॥

**( उद्द्योतः ) लोपस्येति ।** समानाधिकरणेन सुपेत्यधिकारात् परसन्निधाने जायमानत्वेन परनिमित्तत्वमित्यभिमानः ॥ वस्तुत एतावता परनिमित्तत्वे **पादशतस्येति** लोपस्य परसन्नियोगेन विधीयमानस्य परनिमित्तत्वापत्तिरितीदमपि चिन्त्यम् । **परिहारान्तरस्येत्येवा**त्रापि समाधिरिति तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये—**प्राप्नोतीति**—उत्तरपदलोपस्य स्थानिवत्त्वादिति भावः ।

प्रदीपे—**समानेति**—अस्य वार्तिकस्य—'समानाधिकरणाधिकारे तृतीयान्तपूर्वपदकं क्तान्तोत्तरपदकञ्च सुबन्तं समर्थेन सुबन्तेन समस्यते, उत्तरपदलोपश्च वक्तव्यः' इत्यर्थः ।

उद्द्योते—कैयटोक्ते अभिमानपदेन सूचितायामरुचौ बीजं प्रकाशयति—**वस्तुत इति । अपिना**—पूर्वसमुच्चयः । भाष्यासङ्गतिं परिहरति—**परिहारान्तरेति ।** वक्ष्यमाणेत्यादिः ॥

( ४०४ आक्षेपवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ यङ्लोपे यणियङुवङः ॥ * ॥

( भाष्यम् )

**यङ्लोपे यणियङुवङो न सिध्यन्ति । चेच्यः । नेन्यः । चेक्षियः । चेक्रियः । लोलुवः । पोपुवः । अचीति यणियङुवङो न सिध्यन्ति ॥**

**( प्रदीपः ) चेच्यः नेन्य इति ।** ऊतोचीत्येतदनाश्रयणादुपन्यासः ॥

**( तत्त्वालोकः )** भाष्ये—**न सिद्ध्यन्तीति**—यङ्लुकः स्थानिवद्भावेन व्यवधानादिति भावः ।

प्रदीपे—ननु 'ऊतोऽची'त्यनेन 'ऊतोऽचि परे यङ्लुकौ' विधानात्कथं चेच्य इत्यादौ यङ्लुगित्यत आह—**ऊतोचीति । एतदनाश्रयणात्**—एतस्य सिद्धान्तत्वेनानाश्रयणात् ।

( पक्षान्तराश्रयणभाष्यम् )

**अस्तु तर्हि न स्थानिवत् ॥**

**( प्रदीपः ) अस्तु तर्हीति ।** अच इत्युपादानात् साक्षादेव यस्याच् स्थानित्वेनोपात्तस्तस्यैव स्थानिवद्भावो, न तु हलजादेशस्येत्यर्थः ॥

**( उद्द्योतः ) उपादानादिति ॥** यद्यप्यागत्येत्येतद्वारणार्थमावश्यकं तत्तत्र हि केवलहलो लोपस्तथापि व्याख्यानादच एवादेश इत्यन्ययोगव्यवच्छेदलाभ इति बोध्यम् ॥ **साक्षादेवेति ।** अचो यत्र स्थानषष्ठीनिर्दिष्टत्वमित्यर्थः ॥ एवं हि णिलोपस्य स्थानिवत्त्वं न स्यात्तस्मादच एवादेशः प्रयोगे यत्रेत्यर्थेन तद्वारणमुचितम् ॥

**( तत्त्वालोकः )** भाष्ये—**न स्थानिवदिति**—हलचोरादेश इत्यनुपज्यते ।

उद्द्योते—कैयटोक्तं दूषयति—**यद्यपीति । तत्**—अच्पदम् । **व्याख्यानात्**—अज्मात्रस्थानिकादेशः स्थानिवदिति व्याख्यानात् । इदमपि कैयटोक्तं दूषयति—**एवं हीति । तद्वारणम्**—हलजादेशवारणम् ।

( ४०५ आक्षेपवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ अस्थानिवत्त्वे यङ्लोपे गुणवृद्धिप्रतिषेधः ॥ * ॥

( भाष्यम् )

**अस्थानिवत्त्वे यङ्लोपे गुणवृद्ध्योः प्रतिषेधो वक्तव्यः । लोलुवः पोपुवः सरीसृपो मरीमृज इति ॥**

**( तत्त्वालोकः ) अस्थानिवत्त्वे इति**—हलजादेशस्येत्यादिः । **वक्तव्य इति**—अन्यथा-यङ्लुकः स्थानिवत्त्वाभावात् 'क्ङिति चे'त्यनेन गुणवृद्ध्योः प्रतिषेधस्यानुपपत्तेस्तौ प्रसज्येयातामिति भावः ।

( आक्षेपबाधकभाष्यम् )

**नैष दोषः ॥ 'न धातुलोप आर्धधातुके' इति प्रतिषेधो भविष्यति ॥**

**(तत्त्वालोकः)** सूत्रकारमतेनाह—**न धात्विति ।** यत इत्यादिः ।

( इति हलच्समुदायस्य स्थानिवत्त्वाभावनिरूपणम् )

---

( अथ स्थान्याश्रयणानाश्रयणाधिकरणम् )

( आक्षेपभाष्यम् )

**किं पुनराश्रीयमाणायां प्रकृतौ स्थानिवद्भवति, आहोस्विदविशेषेण ? ।**

**( प्रदीपः ) किं पुनरिति ।** यत्र कार्ये स्थान्याश्रितः, किं तत्रैव स्थानिवद्भावः, उत यत्राप्यनाश्रित इति प्रश्नः ॥

**( उद्द्योतः ) किं पुनरिति ।** आश्रितस्थानिककार्यमेव स्थानिवद्भावेन प्राप्यते, उत अनाश्रितस्थानिकं प्रतिबध्यतेऽपीति प्रश्नः ॥ यद्यप्ययं विचारः प्राक् कृत एव, भावाभावातिदेश इति सिद्धान्तश्च कृतस्तथापि अन्यवार्तिककारकृतवार्तिकव्याख्यानमिदमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अविशेषेण**—आश्रीयमाणायामनाश्रीयमाणायाञ्च ।

प्रदीपे—**यत्राप्यनाश्रितः**—यत्रानाश्रितोऽपि तत्रापि ।

( भाष्यम् )

**कश्चात्र विशेषः ? ॥**

( ४०६ द्वितीयपक्षे दूषणवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिः ॥ * ॥

( भाष्यम् )

**अविशेषेण स्थानिवदिति चेल्लोपयणादेशयोर्गुरुवि-**

**धिर्न सिध्यति । श्लेष्मघ्न । पित्तघ्न । दध्यश्व । मध्वश्व । 'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञा, 'संयोगे गुरु' इति गुरुसंज्ञा 'गुरोः—' इति प्लुतो न प्राप्नोति ॥**

**( प्रदीपः ) गुरुविधिरिति** । कार्यार्थत्वात् संयोगसंज्ञाया गुरुविधिरित्युच्यते । लोपयणादेशयोः स्थानी संयोगसंज्ञायां नाश्रीयते ॥

**( उद्द्योतः )** ननु संयोगसंज्ञेति वक्तव्ये किमुच्यते **गुरुविधिरिति**, अत आह— **कार्येति** ॥

**( तत्त्वालोकः )** भाष्ये— **चेदिति**—तर्हीति शेषः । लोपयणोः स्थानिवत्त्वात् संयोगसंज्ञानुपपत्तेः गुरुसंज्ञाऽनुपपत्त्या प्लुतानुपपत्तिरिति भावः ।

प्रदीपे— **कार्येति**—तथा च—संयोगसंज्ञाफलप्लुतप्रतिपत्त्यर्थं गुरुविधिरित्युक्तमिति भावः । **लोपेति**—यत इत्यादिः ।

उद्द्योते—लोपयणादेशयोः स्थानिनोऽचः संयोगसंज्ञायामनाश्रयणात्तयोः स्थानिवत्त्वेन संयोगसंज्ञा न प्राप्नोतीति वक्तव्यमित्याशयेनाह— **नन्विति** ।

**( ४०७ दूषणान्तरवार्तिकम् ॥ २१ ॥ )**

## ॥ ※ ॥ द्विर्वचनादयश्च प्रतिषेधे ॥ ※ ॥

**( भाष्यम् )**

**द्विर्वचनादयश्च प्रतिषेधे वक्तव्याः । 'द्विर्वचनवरेयलोप' इति ।**

**( प्रदीपः ) द्विर्वचनादयश्चेति** । द्विर्वचनादावपि स्थानी नाश्रीयते । **अनचीति** पर्युदासाश्रयणात्तत्सदृशस्य हलो द्विर्वचनादावाश्रयणं न त्वचः । एवं यलोपेऽपि । वरे त्वाकारलोपे विधीयमाने प्रकृतिराश्रितैवाचि क्ङितीति । भाष्ये तु वरेशब्दोऽपि पठितस्तत्रायं भावः—यङ एव समुदायस्य प्रत्ययत्वं न तदवयवस्याकारस्येत्यजादौ प्रत्यय आकारलोपविधानादत्राप्रसङ्ग एवेति ॥

**( उद्द्योतः )** नन्वचि नेत्यर्थाद्द्विर्वचननिषेधेऽस्यैव स्थान्याश्रयणमत आह— **पर्युदासेति** । चिन्त्यमेतत् । वाक् वाक् इत्यादाववसाने द्वित्वानापत्तेः । हलीत्येव वक्तुं युक्तत्वाच्च । तस्मादज्भिन्नस्याश्रयणम्, न त्वच इति वक्तुं युक्तं, वागित्यादावज्भिन्नो वर्णाभाव एवेति न दोषः ॥ **यङ एवेति** । एवं सति पक्षद्वयेऽपि वरेग्रहणं न कार्यमित्यत्र तत्करणकथनं चिन्त्यमेव स्याद् । किं च तार्किकप्रत्ययत्वमादायापि प्रवृत्तिज्ञापनाय तदावश्यकमिति चिन्त्यम् ॥ **वरेयलोपेत्येकमेव** निमित्तमित्यभिमानेन भाष्यमित्यन्ये ।

**( तत्त्वालोकः )** भाष्ये— **प्रतिषेधे**—प्रकृतसूत्रप्राप्तस्थानिवत्त्वप्रतिषेधके 'न पदान्ते'ति सूत्रे ।

प्रदीपे— **द्विर्वचनादाविति**—अत्रादिपदं प्रसङ्गादायातम्, आदिपदग्राह्यवरेयलोपविषये 'एवमि'त्यादिग्रन्थेन पृथग्विवेचनात् । **स्थानी**—यणः स्थान्यच् । **अनचीति**—यत इत्यादिः । **तदिति**—अज्भिन्नेत्यर्थः । **यलोपेऽपीति**—अल्लोपस्थान्यच् नाश्रीयते इति शेषः । एवञ्च—यणादेः स्थानिवत्त्वाद् द्विर्वचनादिर्न प्राप्नोतीति भावः । **प्रकृतिः**—अल्लोपस्थान्यच् । नन्वेवं वरे पक्षद्वये साम्यात् कथं भाष्ये सोऽपि पठित इत्यत आह— **भाष्ये त्विति । न**—न तु । **अत्राप्रसङ्गः**—यायावर इत्यत्र यङवयवाकारलोपस्य स्थानिवत्त्वेऽपि तस्मिन् परे आकारलोपाप्रसङ्गः ।

उद्द्योते— **वागिति**—नोऽनचीत्यत्र—अज्भिन्नसदृशे हलि परे इत्यर्थाभ्युपगमे इत्यादिः । **अत्र**—अस्मिन् पक्षे । **तार्किकेति**—सम्भावितेत्यर्थः । अत एव—वार्तिकेऽस्मात् क्विचि अतो लोपे यकारविधिम्प्रति स्थानिवत्त्वनिषेधाद्यलोपे च वावातीति स्थिते वकारलोपस्य स्थानिवत्त्वाद् 'आतो लोप इटि चे'त्याकारलोपे पुनर्यलोपे वातिरिति सिद्ध्यति । **तत्**—वरेग्रहणम् । **चिन्त्यमिति**—इदमिति शेषः । नन्वेवं भाष्यस्य कथं सङ्गतिरित्यत आह— **वरे इति** । यलोपस्य पार्थक्येन—कण्डूतिः, तेष्टिनिः, पेतिः, शाटिः, चेक्तिरित्याद्युदाहरणानां सत्त्वादाह— **अभिमानेनेति** ।

**( ४०८ दूषणान्तरवार्तिकम् ॥ २२ ॥ )**

## ॥ ※ ॥ क्सलोपे लुग्वचनम् ॥ ※ ॥

**( भाष्यम् )**

**क्सलोपे लुग्वक्तव्यः । अदुग्ध अदुग्धाः । 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति ।**

**( प्रदीपः ) अदुग्धेति** । क्सस्य **अलोऽन्त्यस्येति** लोपे कृते तस्य स्थानिवद्भावाज् **झलो झलीति** लोपो न स्यादिति लुग्वचनम् ॥ अदुह्वहीत्येवमर्थस्त्ववश्यं वक्तव्यो, वकारस्याझल्त्वात् ॥

**( उद्द्योतः ) क्सस्येति** । **क्सस्याचीति** क्सलोपे प्रकृतेऽपि लुग्वक्तव्य इति वार्तिकार्थः ॥ पक्षान्तरे तु क्सलोपेनैव सिद्धमित्यभिमानः ॥ तत्राप्यवश्यं लुग्वक्तव्य इत्याह— **अदुह्वहीति** ॥

**( तत्त्वालोकः )** प्रदीपे— **क्सस्येति**—यदि 'क्सस्याचि'—त्यत्रैव 'वा दुहदिहे'त्यत्रापि 'घोर्लोपो लेटि वे'त्यतो लोपपदमेवानुवर्त्तेत, न तु लुग्ग्रहणं क्रियेत, तर्हि प्रकृतपक्षे इत्यादिः । **लोपे इति**—सहकारादन्त्याकारस्येत्यादिः । **भावादिति**—व्यवधानेनेति भावः । **लुगिति**—'वा दुहदिहे'त्यत्रेति भावः । **वक्तव्य इति**—तत्र लुगित्यादिः ।

उद्द्योते— **लुगिति**—'वा दुहदिहे'त्यत्रेत्यादिः । 'अश्रीयमाणायामेवे'ति पक्षे तु—'वा दुहदिहे'त्यत्र लुग्ग्रहणाभावेऽपि ततो लोपपदानुवृत्त्या 'अलोऽन्त्यस्ये'ति सहकारात् क्सघटकाकारस्यैव लोपेऽपि तस्य 'झलो झली'ति लोपेऽनाश्रयणात् स्थानिवत्त्वाप्रवृत्तेस्तेन सलोपे रूपसिद्धिरित्याशयेनाह— **पक्षान्तरे त्विति** । अत्राभिमानपदस्य चिन्तायामरुचौ कैयटोक्तं बीजमवतारयति— **तत्रापीति** । पक्षान्तरेऽपीत्यर्थः । 'वा दुहदिहे'त्यत्रेति शेषः । ननु तत्र लुग्ग्रहणे कृतेऽपि 'अलोऽन्त्यस्ये'ति सहकाराच्चदन्त्याकारस्यैव लुकि प्रकृतपक्षे तस्य स्थानिवत्त्वात् 'झलो झली'ति लोपाप्राप्त्या दोषस्तदवस्थ एवेति चेन्न, ततो लोपपदानुवृत्त्यैवेष्टसिद्धौ पुनर्लुग्ग्रहणं सर्वादेशार्थमित्यभ्युपगमात् ।

**( ४०९ दूषणान्तरवार्तिकम् ॥ २३ ॥ )**

## ॥ ※ ॥ हन्तेर्घत्वम् ॥ ※ ॥

**( भाष्यम् )**

**हन्तेर्घत्वं वक्तव्यम् । घ्नन्ति घ्नन्तु अघ्नन् ॥**

**( प्रदीपः ) घ्नन्तीति** । अल्लोपस्य स्थानिवत्त्वादनन्तरो नकारो न भवतीति घत्वाप्रसङ्गः । वचनसामर्थ्याद् व्यवधानाश्रयणे तु हननादिष्वतिप्रसङ्गः ॥

**( उद्द्योतः )** भाष्ये— **घ्नन्तीत्यादि । गमहनेत्यनेनाल्लोपः ॥ घत्वम् । हो हन्तेरित्यनेन ॥**

( तत्त्वालोकः ) प्रदीपे—लोपस्थानिनोऽकारस्य घत्वेऽनाश्रयणादाह—अल्लोपस्येति ।

( प्रथमपक्षाश्रयणभाष्यम् )

अस्तु तर्ह्याश्रीयमाणायां प्रकृताविति ।

( तत्त्वालोकः ) अस्तु तर्हीति—यद्यविशेषेणेति पक्षे एतावन्तो दोषास्तर्ह्यस्त्वित्यन्वयः ।

( ४१० प्रथमपक्षे दूषणवार्तिकम् ॥ २४ ॥ )

## ॥*॥ ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिष्वादेशप्रतिषेधः ॥ * ॥

( भाष्यम् )

ग्रहणेषु स्थानिवदिति चेज्जग्ध्यादिषु आदेशस्य प्रतिषेधो वक्तव्यः । निराद्य समाद्य । 'अदो जग्धिर्ल्यप्ति किति' इति अदो जग्धिभावः प्राप्नोति ॥

( प्रदीपः ) निराद्येति । आदयतेर्णिलोपे कृते एकदेशविकृतस्यानन्यत्वाददिरेवायमिति जग्धिः प्राप्नोति । न च जग्धौ णिराश्रितः । आदिग्रहणाद् घात्यादिति वधादेशप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये जग्ध्यादिष्वादेशस्येति । जग्ध्यादिषु विषयेषु आदेशस्यार्थात्तद्रूपस्येत्यर्थः ॥ एकदेशविकृतस्येति । अन्तरङ्गत्वाद्वृद्धौ कृतायां णिलोप इति आदित्यस्यानादिष्टाद्चः पूर्वत्वमस्त्येव । ण्यल्लोपाविति तु णिच्स्थानिकवृद्ध्यादेर्बाधकम् । उक्तरीत्या वा तस्य तत्त्वम् ॥

( तत्त्वालोकः ) भाष्ये—ग्रहणेष्विति—गृह्यमाणेषु स्थानिष्वित्यर्थः । 'अकर्त्तरि च कारके' इत्यस्यानुवृत्तेः 'कृत्यल्युटो बहुलमि'—त्यनेन कर्मणि ल्युटो विधानात् । चेदिति—तर्हीति शेषः ।

प्रदीपे—अयम्—आदित्ययम् । णिः—लोपस्थानी णिः । आश्रित इति—तथा च—प्रकृतपक्षे णिलोपस्य स्थानिवत्त्वाभावादद्देर्व्यवहितपूर्वत्वस्य सत्त्वाज्जग्ध्यादेशापत्तिः । अविशेषेणेति पक्षे तु—णिलोपस्य स्थानिवद्भावेन व्यवधानान्नादेर्जग्ध्यादेशापत्तिरिति भावः । आदीति—जग्ध्यादिष्वित्यत्रेति भावः ।

उद्द्योते—तद्रूपस्य—जग्ध्यादिरूपस्य । ननु 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेने'ति वार्तिकेन णिलोपानन्तरं वृद्धावादित्यस्यादिष्टादचः पूर्वत्वात्कथं णिलोपस्य स्थानिवत्त्वमित्यत आह—अन्तरङ्गत्वादिति । नन्वेवं वार्तिकस्य क्वावकाश इत्यत आह—ण्यल्लोपाविति । प्राचां मतेनाह—उक्तरीत्येति । स्थानिद्वारेत्यर्थः । तस्य तत्त्वम्—आदित्यस्यानादिष्टादचः पूर्वत्वम् ।

( ४११ दूषणान्तरवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ यणादेशे युलोपेत्वानुनासिकात्वप्रतिषेधः ॥ * ॥

( भाष्यम् )

यणादेशे युलोपेत्वानुनासिकात्वानां प्रतिषेधो वक्तव्यः ॥

यलोप—वाय्वोः । अध्वर्य्वोः । 'लोपो व्योर्वलि' इति यलोपः प्राप्नोति ॥

उलोप—अकुर्वि आशाम्—अकुर्व्याशाम् । 'नित्यं करोतेः' 'ये च' इत्युकारलोपः प्राप्नोति ॥

ईत्व—अलुनि आशाम्—अलुन्याशाम् । 'ई हल्यघोः' इतीत्वं प्राप्नोति ॥

अनुनासिकात्व—अजज्ञि आशाम्—अजज्ञ्याशाम् । 'ये विभाषा' इत्यनुनासिकात्वं प्राप्नोति ॥

( प्रदीपः ) यणादेश इति । बहिरङ्गपरिभाषानाश्रयणेनैतदुच्यते ॥ अजज्ञीति । जन जनन इत्यस्माद् व्यत्ययेनात्मनेपदम् । जनी प्रादुर्भाव इत्यस्माद्वा श्यनश्छान्दसत्वाच्छ्लुः ॥

( उद्द्योतः ) वार्तिके युलोपेति । यकारोकारयोर्लोप इत्यर्थः । अकुर्व्याशामित्यादौ वाक्यसंस्कारपक्षे परस्य यणादेशे तत्तत्कार्यप्राप्तिरिति बोध्यम् ॥ बहिरङ्गेति । वाय्वोरित्यत्र यणोऽस्य न प्राप्तिस्तथोक्तम् । एवमन्यत्रापि बोध्यम् ॥ आत्मनेपदमिति । इडिति शेषः ॥

( तत्त्वालोकः ) भाष्ये—यदि प्रथमः पक्षोऽभ्युपगम्यते तर्हि—वाय्वोरित्यादिप्रयोगेषु यणादेशे कृते तस्य स्थानिनामचां यलोपादिविधिष्वनाश्रयणेन स्थानिवत्त्वाभावाद्यलोपादिविधयः प्राप्नुवन्तीति तेषां प्रतिषेधो वक्तव्य इत्याशयेनाह—यणादेशे इति । 'ये चे'ति सूत्रे 'नित्यं करोतेरि'ति सूत्रस्यानुवृत्तिरिति बोधनाय निर्दिशति—नित्यं करोतेरिति ।

प्रदीपे—नन्वन्तरङ्गे यलोपादौ कर्तव्ये बहिरङ्गस्य यणोऽसिद्धत्वादेव तत्र यलोपादेरप्राप्त्या नात्र पक्षे तत्प्रतिषेधवचनमावश्यकमित्यत आह—बहिरङ्गेति ।

उद्द्योते—उक्तमिति—अत्रैव सूत्रे विधिग्रहणप्रयोजनकथनावसरे इति भावः ।

( ४१२ आक्षेपवार्तिकम् ॥ २६ ॥ )

## ॥ ❀ ॥ रायात्वप्रतिषेधश्च ॥ ❀ ॥

( भाष्यम् )

रायात्वस्य च प्रतिषेधो वक्तव्यः । रायि आशाम्—राय्याशाम् । 'रायो हलि' इत्यात्वं प्राप्नोति ॥

( ४१३ आक्षेपवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ दीर्घे यलोपप्रतिषेधः ॥ * ॥

( भाष्यम् )

दीर्घे यलोपस्य प्रतिषेधो वक्तव्यः । सौर्ये नाम हिमवतः शृङ्गे, तद्वान् सौर्यी हिमवानिति । सौ इन्नाश्रये दीर्घत्वे कृते 'सूर्यतिष्या—' इति यलोपः प्राप्नोति ॥

( प्रदीपः ) सौर्यीति । तेनैकदिगित्यण् । ततो मत्वर्थीय इनिः । सौर्ये इत्यत्र तु यलोपो न प्राप्नोति, 'यस्येति चे' त्यादौ—औङः श्यां प्रतिषेध इति बचनात् । सूर्यमत्स्ययोर्ङ्यामिति परिगणनानाश्रयेणैतदुच्यते ।

( उद्द्योतः ) नन्वणन्तं सौर्ये इत्येवोदाह्रियतामत आह—सौर्ये इत्यत्रेति ॥ यस्येति चेत्यादाविति । आदिना सूर्यतिष्येति यलोपः ॥ श्यां ङीप्रत्यये ॥ अल्लोपस्यासिद्धत्वं तु न, व्याश्रयत्वात् ॥

( तत्त्वालोकः ) भाष्ये—दीर्घत्वे इति—'सौ चे'ति सूत्रेणेति भावः । प्राप्नोतीति—दीर्घस्थानिनोऽचो यलोपेऽनाश्रयणेनात्र पक्षे दीर्घस्य स्थानिवद्भावाभावाद्यकारस्योपधात्वसम्भवादिति भावः ।

प्रदीपे—तेनैकेति—गार्ग्यशब्दादित्यादिः ।

उद्द्योते—अल्लोपस्येति—यलोपे कर्तव्ये इत्यादिः । 'असिद्धवदत्राभादि'ति सूत्रेणेति शेषः । व्याश्रयत्वादिति—विभिन्नाश्रयत्वादित्यर्थः । तयोरित्यादिः ।

( ४१४ आक्षेपवार्तिकम् ॥ २८ ॥ )

## ॥ ॥ अतो दीर्घे यलोपवचनम् ॥ ॥

( भाष्यम् )

**अतो दीर्घे कृते यलोपो वक्तव्यः । गार्गाभ्यां वात्साभ्याम् । दीर्घे कृते 'आपत्यस्य च तद्धितेऽनाति' इति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) गार्गाभ्यामिति । गोत्रस्त्रिया इति णः, सङ्घाङ्कलक्षणेष्वित्यण् वा । अनातीति प्रसज्यप्रतिषेधाश्रयेण चोद्यम् ॥

( उद्द्योतः ) गार्गाभ्यामित्यत्र गार्ग्य अ भ्यामिति स्थिते पूर्वं सुपि चेति दीर्घे यलोपाप्राप्तिरिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—प्रतिषेधः प्राप्नोतीति—विधीयमानस्य यलोपस्याकारतद्धिते परे निषेधाद् यलोपे दीर्घस्थानिनोऽचोऽनाश्रयणेन प्रकृतपक्षे स्थानिवत्त्वासम्भवाद्यकारस्याकारतद्धितपरत्वसत्त्वाल्लोपो न प्राप्नोतीत्यर्थः ।

प्रदीपे—गोत्रेति—गार्ग्या अपत्यमिति विग्रहे—'भसंज्ञाप्रयोजके ढभिन्ने तद्धिते चिकीर्षित एव भाषितपुंस्कं पुंवद्भवती'त्यर्थकेन 'भस्याढे तद्धिते' इति वार्तिकेन पुंवद्भावाद् गार्ग्यशब्दादित्यादिः । सङ्घेति—गार्ग्याणां सङ्घ इत्यादि विग्रहे गार्ग्यशब्दादित्यादिः । एवं-वात्साभ्यामित्यत्रापि ।

( आक्षेपबाधकभाष्यम् )

**नैष दोषः । आश्रीयते तत्र प्रकृतिस्तद्धित इति ॥**

( प्रदीपः ) पर्युदासाश्रयेण तु सदृशतद्धिताश्रयेण परिहारः ॥

( उद्द्योतः ) पर्युदासाश्रयेण त्विति । आद्भिन्नत्वेन प्रकृत्याश्रयणात्स्थानिवत्त्वप्रवृत्त्या आद्भिन्नत्वसत्त्वेन यलोप इति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्र—यलोपे । प्रकृतिः—दीर्घस्थान्यकाररूपः ।

प्रदीपे—सदृशेति—आद्भिन्नात्सदृशेत्यर्थः ।

उद्द्योते—प्रकृत्याश्रयणादिति—यलोपे दीर्घस्थान्यकाररूपतद्धिताश्रयणादित्यर्थः । प्रकृतपक्षेऽपि दीर्घस्येति शेषः ।

( सर्वाक्षेपपरिहारभाष्यम् )

**सर्वेषामेव परिहारः । उक्तं विधिग्रहणस्य प्रयोजनम्—विधिमात्रे स्थानिवद्यथा स्यादनाश्रीयमाणायामपि प्रकृताविति ॥**

( प्रदीपः ) सर्वेषामिति । आश्रीयमाणायां प्रकृतावित्यस्मिन्नेव पक्षे आश्रीयमाणे विधिग्रहणादधिकाद् यत्नात्स्वाश्रयनिवृत्त्यर्थात्तु सिध्यन्तीति भावः ॥ अत एव पक्षान्तरोपन्यासः-अथवेति ॥

( तत्त्वालोकः ) भाष्ये—उक्तमिति—यत इत्यादिः । विधिमात्रे—इति विवृणोति—अनाश्रीयेति ।

प्रदीपे—एवेन—अविशेषेणेत्यस्य पक्षस्य व्यवच्छेदः । विधिग्रहणाद्—विधिग्रहणस्वपात् । स्वाश्रयेति—आदेशाश्रयकार्येत्यर्थः ।

( द्वितीयपक्षाभ्युपगमभाष्यम् )

**अथवा पुनरस्त्वविशेषेण स्थानिवदिति ॥**

( आक्षेपस्मारणभाष्यम् )

**ननु चोक्तम्अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिःद्विर्वचनादयश्च प्रतिषेधेक्सलोपे लुग्वचनम्हन्तेर्घत्वम्इति ॥**

( आक्षेपनिराकरणभाष्यम् )

**नैष दोषः । यत्तावदुच्यते अविशेषेण स्थानिवदिति चेल्लोपयणादेशे गुरुविधिःइति । उक्तमेतत्न वा संयोगस्यापूर्वविधित्वात्इति ॥**

**यदप्युच्यतेद्विर्वचनादयश्च प्रतिषेधे वक्तव्याःइति । उच्यन्ते न्यास एव ॥**

**क्सलोपे लुग्वचनम्इति । क्रियते न्यास एव ॥**

**हन्तेर्घत्वम्इति । सप्तमे परिहारं वक्ष्यति ॥**

**अचः परस्मिन् ॥ ५७ ॥**

( प्रदीपः ) न वा संयोगस्येति । संयोगसंज्ञायाः समुदायाश्रयत्वादपूर्वविधित्वम् ॥ उच्यन्त इति । अत एव लिङ्गादविशेषेण स्थानिवद्भावः ॥ क्रियत इति । अदुग्धइत्यर्थमवश्यकर्तव्यमेवेति भावः ॥ सप्तम इति । श्रुतिकृतमानन्तर्यमाश्रीयते, स्थानिवद्भावकृतं तु व्यवधानं वचनसामर्थ्यादविवातकम् ॥ ५७ ॥

( उद्द्योतः ) संयोगसंज्ञाया इति । अस्याशय उक्तः । वस्तुतः प्लुतस्य त्रैपादिकत्वात् पूर्वत्रासिद्धे न स्थानिवदित्यनेनापि इदं सुसाधम् ॥ अत एव लिङ्गादिति । न च पुत्रमासमन्तादर्त्तुं शीलं यस्याः पुत्रादिनीत्यादौ स्थानिवत्त्वाद्घ्नादिनीत्यस्याप्रवृत्तौ द्वित्वं प्राप्नोति तद्वारणाय द्विर्वचनग्रहणं कथमभावातिदेशे ज्ञापकमिति वाच्यम् । एतद्भाष्यप्रामाण्येन तस्यानभिधानात् , शीघ्रोपस्थितिकत्वेनाङ्रहितादिनीशब्दस्यैव तत्र ग्रहणाच्चेति दिक् ॥ ५७ ॥

( तत्त्वालोकः ) भाष्ये—नैष दोष इति—नैते दोषा इत्यर्थः । जातावेकवचनसत्त्वात् । यत इति शेषः । उक्तम्—परिहृतम् । यदप्युच्यते इति—अस्याग्रिमयोरप्यन्वयः । उच्यन्ते न्यास एवेति—उच्यन्त एव 'न पदान्ते'ति सूत्रे इत्यर्थः । अत्रोच्यते—न वक्तव्याः, यत एते इत्यादिः । क्रियते न्यास एवेति—क्रियते एव 'वा दुह दिहे'ति सूत्रे इत्यर्थः । अत्रोच्यते—न वक्तव्यः, यत एष इत्यादिः । सप्तमे इति—तस्येत्यादिः ।

उद्द्योते—भाष्योक्तातिरिक्तमपि समाधानप्रकारमाह—वस्तुत इति । यस्या इति—सेति शेषः । स्थानीति—आङ्टकाकारस्येत्यादिः । नादिनीत्यस्य—'नादिन्याक्रोशे पुत्रस्ये'ति सूत्रस्य । तत्र—पुत्रादिनीत्यादौ । 'पूर्वत्रासिद्धे न स्थानिवदि'ति स्थानिवत्त्वनिषेधसम्भवाच्चेत्यपि बोध्यम् ॥ ५७ ॥

( ५२ स्थानिवद्भावनिषेधसूत्रम् ॥ १ । १ । ८ आ. ३ ॥ )

## न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु ॥१।१।५८॥

( अथ पदान्तपदार्थनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**पदान्तविधिं प्रति न स्थानिवदित्युच्यते । तत्र वेतस्वानिति रुः प्राप्नोति ॥**

( **प्रदीपः** ) **न पदान्त ॥ ५८ ॥ वेतस्वानिति ।** भावसाधनविधिशब्दाश्रयेणोच्यते । वेतसशब्दात् **कुमुदनडवेतसेभ्यो ड्मतुबिति** ड्मतुपि टिलोपे कृते स्वादौ पूर्वं पदमिति पदसंज्ञायां सकारः पदान्तत्वं प्रतिपद्यत इति पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधाद् रुत्वप्रसङ्गः ॥

( **उद्द्योतः** ) **न पदान्तद्वि ॥ ५८ ॥** ननु स्थानिवत्त्वनिषेधं विना सस्य पदान्तत्वेनासिद्धेस्तस्य रुत्वसंपादके पदत्वे स्थानिवत्त्वस्य दुर्वारत्वात् सान्तस्य पदत्वाभावेन कथमत्र रुत्वप्राप्तिरत आह— **भावेति । पदान्तेति** च भावप्रधानो निर्देश इत्यपि बोध्यम् ॥ इदं चिन्त्यम् । द्विर्वचनादिसाहचर्येण पदान्तपदार्थस्य शास्त्रीयस्यैव ग्रहणौचित्यात् ॥ भाष्यं त्वेवं व्याख्येयम्—रुत्वस्य पदचरमावयवत्वेन तत्र कर्तव्ये तन्निष्पादकपदत्वे च कर्तव्ये भावसाधनविधिशब्दाश्रयणे टिलोपस्य स्थानिवत्त्वनिषेधाद्रुत्वं प्राप्नोतीत्यर्थः ॥ यद्यपि पदसंज्ञा न पदचरमावयवो नापि पदान्तस्थाने विधिः, तथापि तस्याः कार्यार्थत्वात् कार्यस्य च रुत्वस्य तत्त्वान्न दोषः । पदचरमावयवसाधकस्यापि तत्त्वेन ग्रहणमित्याशयः ॥

( **तत्त्वालोकः** ) भाष्ये—**तत्र**—तथा सति । वेतस्वानित्यत्र वेतसशब्दाद् ड्मतुपि टिलोपे पदसंज्ञायाः रुत्वद्वारा रुत्वस्य च साक्षात् पदचरमावयवत्वेन तयोः कर्तव्यत्वे प्रकृतसूत्रेण टिलोपस्य स्थानिवत्त्वनिषेधात् सान्तस्य पदसंज्ञायां रुत्वं प्राप्नोतीत्याशयः ।

उद्द्योते—**दुर्वारत्वादिति**-पदान्तशब्दस्य यथाश्रुतार्थकत्वे, विधिशब्दस्य च कर्मसाधनत्वे,—पदस्य अन्तः पदान्तः, पदान्तश्चासौ विधिश्चेति कर्मधारयसमासे—पदस्य चरमावयवे विधेये कर्त्तव्ये स्थानिवत्त्वं नेत्यर्थात्, पदान्तस्य विधिरिति शेषषष्ठीसमासे च पदान्तस्थानिके विधेये कर्त्तव्ये तन्नेत्यर्थात्, पदसंज्ञायाः पदचरमावयवत्वस्य पदान्तस्थानिकविधेयत्वस्य चाभावेन तत्कर्तव्यत्वे प्रकृतसूत्रेण टिलोपस्य स्थानिवत्त्वनिषेधाप्राप्तेरित्याशयः । **बोध्यमिति**—तथा च—कर्मषष्ठीसमासे पदान्तत्वकर्मके विधाने स्थानिवत्त्वं नेत्यर्थात्, 'स्वादिष्वि'त्यनेन पूर्वस्य पदत्वे सकारः पदान्तत्वं प्रतिपद्यत इति पदान्ततायाः विधीयमानत्वात्तत्कर्तव्यत्वे स्थानिवत्त्वनिषेधात् सान्तस्य पदत्वेन रुत्वप्राप्तिरिति भावः । नन्वेवं भाष्यस्य कथं सङ्गतिरित्यत आह—**भाष्यन्त्विति । तत्त्वेति**—पदचरमावयवत्वेत्यर्थः ॥

( समाधानभाष्यम् )

**नैष दोषः । भसंज्ञाऽत्र बाधिका भविष्यति—'तसौ मत्वर्थे' इति ॥**

( **प्रदीपः** ) **तसौ मत्वर्थ इति । तदस्मिन्नस्तीत्यत्रैवार्थे** ड्मतुप् । न निर्वृत्तादिषु, अनभिधानादित्येतदाश्रित्यैतदुच्यते ॥

( **उद्द्योतः** ) सिद्धान्त्येकदेश्याह—**भसंज्ञात्रेति ॥** भत्वे प्राप्तस्थानिवद्भावस्यापि सान्तनिष्ठपदत्वाप्रतिबन्धद्वारा रुत्वसंपादकत्वेन भत्वस्यापि पदान्तग्रहणेन ग्रहणात्तत्रापि स्थानिवत्त्वनिषेध इति सान्तनिष्ठभत्वेन तन्निष्ठपदत्वबाध इति भावः ॥ **न पदान्त**सूत्रदृष्ट्या त्रिपादी तु नासिद्धा, जशादिग्रहणात् ॥ कैयटोक्तरीत्या पूर्वपक्षयोजनेऽस्यायं भावः—भत्वे स्थानिवद्भावस्य सकारनिष्ठपदान्तत्वसंपादकतया परम्परया भसंज्ञाया अपि पदान्तत्वसंपादकत्वेन पदान्तत्वमिति तस्यापि निषेध इति समानावधिकत्वाद्भत्वेन पदत्वबाध इति ॥ एवं च परम्परया पदान्तत्वसंपादकस्यापि पदान्तविधिशब्देन ग्रहणे मदुक्तरीत्यैव पूर्वपक्षयोजनाऽत्युचिता ॥ ननु इगन्तोऽर्थान्तरेऽपि विधानात्कथं सर्वत्र भत्वमत आह—**अनभिधानादिति ।** मतुशब्देन प्रसिद्धत्वाद् मतुप एव ग्रहणमिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—**भसंज्ञेति**—यत इत्यादिः । पदचरमावयवरेफप्रयोजकपदसंज्ञाप्रयोजकभसंज्ञाऽभावप्रयोजकस्थानिवद्भावस्य साक्षात् पदचरमावयवस्यासम्पादकत्वेऽपि परम्परया सम्पादकत्वान्निषेधप्राप्तेः सान्ते भसंज्ञया पदसंज्ञाया बाधो भविष्यतीति भावः ।

प्रदीपे—नन्वत्र 'मत्वर्थे' इत्युच्यते, ड्मतुप् त्वर्थान्तरे, इति कथमेतदुच्यते-इत्यत आह—**तदस्मिन्निति ।**

उद्द्योते—ननु भत्वस्य पदान्तत्वाभावात्तत्र कर्तव्ये निषेधासम्भवात् स्थानिवत्त्वेन सान्तत्वाभावाद् भत्वाप्राप्तिरिति कथन्तेन पदत्वबाध इत्यत आह—**भत्वे प्राप्तेति ।** ननु स्थानिवत्त्वनिषेधदृष्ट्या रुत्वस्यासिद्धत्वात् कथं तत्सम्पादकपदत्वे, उक्तरीत्या भत्वे च तन्निषेध इत्यत आह—**न पदान्तेति । अस्य**—'भसंज्ञे'त्यादिग्रन्थस्य । **तस्यापि**—भत्वे स्थानिवद्भावस्यापि । **एवञ्च**—परम्पराश्रयणावश्यकत्वे च । **ग्रहणे इति**—'भसंज्ञे'त्यादिभाष्ययोजनायामित्यादिः । **अपिना**—प्रकृतग्रन्थयोजनायाः परिग्रहः । पदान्तशब्दस्य यथाश्रुतार्थकत्वानुपपत्तेरभावादाह—**उचितेति ।** अन्येषाममत्वर्थत्वादाह—**कथमिति ।** ननु 'तसावि'ति सूत्रे मतुशब्देन ड्मतुप एव ग्रहणमस्त्वित्यत आह—**मतुशब्देनेति ।** 'तदनुबन्धकग्रहणे नातदनुबन्धकस्ये'ति परिभाषासत्त्वाच्चेति भावः ।

( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अकारान्तमेतद्भसंज्ञां प्रति । पदसंज्ञां प्रति तु सकारान्तम् ॥**

( **प्रदीपः** ) **अकारान्तमिति ।** भसंज्ञां प्रति स्थानिवत्त्वनिषेधाभावात् सकारान्तत्वाभावान्नास्ति भसंज्ञा ॥ पदान्तत्वे तु विधीयमाने स्थानिवत्त्वनिषेधात् सकारान्तस्य पदत्वाद्रुत्वप्रसङ्गः ॥

( **उद्द्योतः** ) तत्र पूर्वपक्ष्याह—**अकारान्तमेतदिति ।** साक्षात्परम्परया वा पदान्तकार्यप्रतिबन्धकस्य प्रापकस्य वा निषेधे परम्परा पदान्तपदे उपस्थितपदत्वद्वारिकैव नान्यद्वारिकेति भत्वे न निषेध इति सान्तत्वाभावात्तद्प्राप्तिरिति भावः ॥

( **तत्त्वालोकः** ) भाष्ये—**अकारान्तमिति**—नेदं युक्तम्, यत इत्यादिः । तथा च—भसंज्ञाया अप्राप्तेस्तया पदसंज्ञाया बाधो न भविष्यतीति भावः ।

( सिद्धान्त्येकदेशिसमाधानभाष्यम् )

**ननु चैवं विज्ञायते—यः संप्रतिपदान्त इति ॥**

( **प्रदीपः** ) **ननु चेति ।** स्थानिवत्त्वनिषेधादिना यः सिद्धः पदान्तः, तस्य विधौ स्थानिवत्त्वनिषेधः । यथा—कौ स्तः, कानि

सन्तीति । इह तु सकारः स्थानिवत्त्वनिषेधाद्विना पदान्तत्वेनासिद्ध इति भवत्येव स्थानिवद्भाव इत्यपदान्तत्वात्सकारस्य रुत्वाभावः ॥

( उद्द्योतः ) सिद्धान्त्येकदेश्याह—**ननु चेति ।** अत्र पदस्योद्देश्यतयैतत्साध्यपदत्ववत्समुदायान्त्यकार्ये नायं निषेध इति पदत्वेऽपि स्थानिवत्त्वात् सान्तस्य पदत्वाभावेन रुत्वाभावः सिद्ध इति भावः ॥ तत्र किमपेक्षया संप्रतीत्यत आह—**स्थानिवत्त्वनिषेधादिति ।** एतत्साध्यपदत्ववतोऽत्रोद्देश्यत्वासंभवः । भावसाधनेऽपि विधेयस्य पदचरमावयवत्वं स्थानिद्वारैव वाच्यमिति स्थानिनः स्थानिवद्भावेन तत्त्वाभावे विधेयस्य सुतरां तदभाव इति भावः ॥ स्थानिवत्त्वनिषेधं विना यः पदत्वेन सिद्धस्तस्य चरमावयवे कर्तव्य इत्यक्षरार्थः ॥ संप्रतिपदशब्देन समस्तेनान्तशब्दस्य षष्ठीतत्पुरुष इति बोध्यम् ॥ यद्यपि **तस्य भाव** इत्यादौ तत्साध्य-त्वप्रत्ययान्तादेरप्युद्देश्यता । तथाप्यत्र लक्ष्यानुरोधादेवमर्थं रुत्वमिति तात्पर्यम् ॥

( तत्त्वालोकः ) उद्द्योते—**अत्र**—स्थानिवत्त्वनिषेधे । एवमग्रेऽपि । सिद्धस्यैव चोद्देश्यत्वादिति भावः । **एतदिति**—स्थानिवत्त्वनिषेधेत्यर्थः । एवमग्रेऽपि । असिद्धत्वादाह—**असम्भव इति । तदिति**—पदचरमावयवत्वेत्यर्थः । ननु भाष्ये समस्तपाठस्य कथं 'स्थानिवत्त्वनिषेधा'दि'त्यादिरर्थ इत्यत आह—**स्थानिवत्त्वेति । सम्प्रतीति**—यत इत्यादिः । 'सुप्सुपे'ति समास इति भावः । 'सिद्धस्यैवोद्देश्यत्वमि'त्यस्य व्यभिचारमाह—**यद्यपीति ।**

## ( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**कर्मसाधनस्य विधिशब्दस्योपादाने एतदेवं स्यात् ॥**

( उद्द्योतः ) पूर्वपक्षी उक्तमाशयमजानानः **संप्रतीति** पदान्तस्य विशेषणं मन्यमान आह—भाष्ये **कर्मसाधनस्येति ।** संप्रतिपदान्तस्य स्थाने विधाविति हि तदाऽर्थः ॥

( तत्त्वालोकः ) भाष्ये—**एतदेवं स्यादिति**—'यः सम्प्रतिपदान्तः' इत्याद्यर्थस्वीकारेणोक्तदोषः परिहृतः स्यात्र तु भावसाधनस्य तस्योपादाने इत्यर्थः ।

उद्द्योते—**उक्तमाशयमिति**—सम्प्रतिशब्दस्य पदशब्देन 'सुप्सुपे'ति समासे, तस्यान्तशब्देन षष्ठीतत्पुरुषे-विधिशब्दस्य भावसाधनत्वेऽपि तत्र रुत्वाभावसाधनपरमुक्तमाशयमित्यर्थः । **मन्यमान इति**—तथा च-विधिशब्दस्य भावसाधनत्वे—पदचरमावयवस्य सिद्धत्वे तत्कर्मकविधानवैयर्थ्यात्तदुक्तिरेव न सम्भवति, कर्मसाधनत्वे तु पदचरमावयवस्य सिद्धत्वेऽपि तत्स्थाने विधेयसम्भवात्सा सम्भवतीति भावः । **विधौ**—विधेये ।

## ( सिद्धान्त्येकदेशिभाष्यम् )

**अयं च विधिशब्दोऽस्त्येव कर्मसाधनः—विधीयत इति विधिरिति ॥**

## ( पूर्वपक्ष्याक्षेपसाधकभाष्यम् )

**अस्ति च भावसाधनो—विधानं विधिरिति । तत्र भावसाधनस्य विधिशब्दस्योपादाने एष दोषो भवति ॥ इह च—ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै । धकारस्य जश्त्वं प्राप्नोति ॥**

( प्रदीपः ) **ब्रह्मबन्ध्वेति ।** ब्रह्मबन्धुशब्दादूङ्, ऊङ्नूङोरेकादेश आदिवद्भावादूङ्ग्रहणेन गृह्यत इति तस्मिन् **स्वादिष्विति** पदसंज्ञायां धकारस्य पदान्तता विधेयेति स्थानिवत्त्वनिषेधाज्जश्त्वं स्यात् । भसंज्ञा तु प्रत्येकादेशस्य स्थानिवत्त्वादुकारान्तेनैवेति भिन्नावधिकत्वाद्भपदसंज्ञयोर्नास्ति बाध्यबाधकभावः । तत एवोच्चारणं चातन्त्रम्, एकादेशस्यैवोदाहरणत्वात् ॥

(उद्द्योतः) भाष्ये—**तत्र भावसाधनस्येति ।** कर्मसाधनत्वे हि द्विर्वचनादिभिः सामानाधिकरण्यं पदान्तेन वैयधिकरण्यं च स्यात् । भावसाधने पदचरमावयवद्विर्वचनादिकर्मविधाने इत्यर्थः । तत्र हि पदचरमावयवत्वेन सिद्धकर्मके विधाने इति वक्तुमशक्यत्, सिद्धत्वे विधानवैयर्थ्यात् । एवं चाकारान्तमेतदिति प्रतीयोत्सुक्या पदत्वम् एव स्थानिवत्त्वनिषेधात्सान्तत्वेव भत्वं प्रति, मन्ये तु निषेधाभावाद् अकारान्तं भत्वं प्रतीति स्यादेव रुत्वमिति भावः । भाष्ये-**जश्त्वं प्राप्नोतीति । झलां जशोऽन्त** इत्यस्य पदचरमावयवविधायकत्वात् । जश्ग्रहणं तु **झलां जश् झशी**ति जश्त्वे नक्षिपेर्थम् **एकादेशस्यैवेति ।** अत एवो**भयत आश्रयणे ने**त्यनेन वक्ष्यमाणं समाधानं सङ्गच्छते ॥

( तत्त्वालोकः ) भाष्ये - **तत्र** —नयोर्मध्ये । **एष दोषः**—वेतस्वानित्यत्र रुत्वप्रसङ्गरूपो दोषः । 'यः सम्प्रतिपदान्तः' इत्यादेः वक्तुमशक्यत्वादिति भावः । **जश्त्वं प्राप्नोतीति**—ब्रह्मबन्धुशब्दाद् 'ऊङुतः' इत्यूङि एकादेशे च पदसंज्ञाद्वारा जदवस्य पदचरमावयवस्य कर्तव्यत्वे प्रकृतसूत्रेणैकादेशस्य स्थानिवत्त्वनिषेधात् धान्तस्य पदसंज्ञायां जश्त्वं प्राप्नोतीति भावः ।

उद्द्योते —भावसाधनत्वाश्रयणे बीजमाह-**कर्मेति ।** ननूक्तरीत्या भावसाधनेऽपीष्टसिद्धिरित्यत आह—**तत्र हीति ।** सम्प्रतीत्यस्य पदान्तविशेषणत्वे हीत्यर्थः । **एवञ्च**—भावसाधनत्वाङ्गीकारे च **उक्तयुक्त्या**—पदान्तपदे उपस्थितत्वात् पदत्वद्वारिकैव परम्परा, न त्वन्यद्वारिकेत्युक्तयुक्त्या । नन्वेवं प्रकृतसूत्रे जश्ग्रहणं व्यर्थमित्यत आह—**जश्ग्रहणन्त्विति । अत एव**—तस्यैवोदाहरणत्वादेव ।

## ( सिद्धान्त्येकदेशिप्रश्नभाष्यम् )

**अस्ति पुनः किंचिद्भावसाधनस्य विधिशब्दस्योपादाने सतीष्टं संगृहीतम्, आहोस्विद्दोपान्तमेवेति ? ॥**

( उद्द्योतः ) सिद्धान्त्येकदेश्याह—**अस्ति पुनरिति ॥**

## ( पूर्वपक्षिप्रतिवाक्यभाष्यम् )

**अस्तीत्याह ॥ इह—कानि सन्ति, यानि सन्ति । कौ स्तः, यौ स्त इति । योऽसौ पदान्तो यकारो वकारो वा श्रूयेत, स न श्रूयते ॥**

**षडिकश्चाऽपि सिद्धो भवति ॥**

( प्रदीपः ) **कानि सन्तीति ।** पक्षद्वयसाधारणमिदं प्रयोजनम् । भावसाधनपक्षेऽपि सिध्यत्येवेति तूष्णीमस्तम् ॥ **यकार इति ।** यकारवकारौ विधीयमानावेव पदान्तौ भवत इत्यस्ति पदान्तताया विधानम् ।

इदानीमसाधारणं प्रयोजनमाह—**षडिक इति ।** षडङ्गुलिशब्दाद् **बह्वचो मनुष्यनाम्नष्ठज्वे**ति ठचि कृते ठाजादावूर्ध्वमिति ङ्गुलिशब्दस्य लोपे **यस्येति** लोपे षधित्ययं शब्दोऽन्तर्वर्तिन्या विभक्त्या सिद्धः पदत्वेनेति पदान्तताया अविधानान्नास्ति स्थानिवत्त्वनिषेध इत्यकारलोपस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा, पदसंज्ञा त्वन्तर्वर्तिविभक्त्याश्रयेण षकारान्तस्येति सिद्धं जश्त्वम् ॥ कर्मसाधने तु षषः षकारः पदान्तत्वेन सिद्ध इति स्थानिवत्त्वनिषेधात् षकारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया एकसंज्ञाधिकाराद् बाधनाज्जश्त्वासिद्धिः ॥

**( उद्द्योतः )** पूर्वपक्ष्याह—**इह कानीति ।** इह पदान्त एव यकारादिर्विधेय इति भावसाधनेऽपि सिध्यतीति भावः ॥

**असाधारणमिति ।** भावसाधनपक्षमात्रसाध्यमित्यर्थः ॥

भाष्ये—**षडिकश्चापीति ।** अत्रेकादेशाल्लोपान्तसपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतयाऽसिद्धत्वेन जश्त्वाप्रवृत्तिः, तदनन्तरं त्वल्लोपस्य स्थानिवत्त्वप्रसक्तिस्तत्र कर्मसाधने **यस्येति** लोपे इकनिमित्तकभत्वेन समासान्तर्वर्तिविभक्तिनिमित्तकपदत्वस्यापि निवृत्तेः षडिकासिद्धिः ॥ न च भत्वे स्थानिवत्त्वमल्लोपस्येति न समानावधिकत्वं भत्वपदत्वयोरिति वाच्यम् । साक्षात्परम्परया वा पदान्तस्थानिकविधिप्रापकप्रतिबन्धकस्थानिवत्त्वस्य **निषेधेन** भत्वेऽपि तन्निषेधात् । पदान्तत्वेन सिद्धस्य विधावित्यर्थे पदत्वस्य सिद्धत्वेन तद्द्वारकपरम्पराया वक्तुमशक्यत्वेनान्यद्वारिकाया अपि ग्रहणात् ॥ भावसाधनत्वे तूपस्थितपदत्वद्वारिकैव परम्परा गृह्यते इति भत्वे **निषेधाभावेन** स्थानिवत्त्वादकारान्ते भत्वेऽपि षान्ते पदत्वस्याव्याघातेन न दोष इत्याशयः ॥ कैयटे **पदान्तताया अविधानादिति ।** पदत्वस्याविधानेन धर्मविशिष्टत्वेनाऽपि पदान्तस्याविधानादिति भावः ॥ **सिद्ध इति ।** जश्त्वे कार्ये इति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थ उत्तरमनुवदति—**अस्तीत्याहेति ।** पूर्वपक्षीति शेषः । **कानि सन्तीति—**अत्र-पदचरमावयवे यण्यावादेशे च कर्तव्ये 'श्नसोरल्लोपः' इत्यल्लोपस्य प्रकृतसूत्रेण स्थानिवत्त्वनिषेधात्तौ न भवतः । नन्वत्रानादिष्टादचः पूर्वत्वस्य विरहादेव न स्थानिवत्त्वमिति चेन्न, 'वाक्यादपोद्धृत्य पदानि संस्क्रियन्ते' इति वाक्यसंस्कारपक्षे तस्य सत्त्वात् । न हि पदान्तरनिरपेक्षमेव पदमिह शास्त्रे संस्कार्यमिति नियमः, तथा सति 'युष्मद्युपपदे' इत्याद्यनुशासनस्यासङ्गतिप्रसङ्गात् । 'नेह प्रयोगनियम आरभ्यते, संस्कृत्य संस्कृत्य पदान्युत्सृज्यन्ते' इति पदसंस्कारपक्षे तु-नेदमुदाहरणम्, किन्तु-अदद्रीच इत्याद्येवेति बोध्यम् ।

प्रदीपे—**पक्षद्वयेति—**कर्मसाधनभावसाधनेतिपक्षद्वयेत्यर्थः । नन्वेवं भावसाधनपक्षोदाहरणत्वेनेदं कथमुपन्यस्तमित्यत आह—**भावसाधनेति । स्थानिवत्त्वनिषेधादिति—**भत्वे कर्तव्ये प्राप्तस्याल्लोपस्थानिवद्भावस्य षान्तनिष्ठपदत्वाप्रतिबन्धद्वारा पदान्तस्थानिकविधेयप्रापकत्वात् प्रकृतसूत्रेण निषेधादित्यर्थः ।

उद्द्योते—**न समानावधिकत्वमिति—**अकारान्ते भसंज्ञायाः, षकारान्ते च पदसंज्ञायाः प्राप्तेरिति भावः । ननु पदान्तपदे उपस्थितत्वात्पदत्वद्वारिकैव परम्परा, न त्वन्यद्वारिकेत्युक्तरीत्या भत्वे न स्थानिवत्त्वनिषेध इत्यत आह—**पदान्तत्वेनेति ।** विधिशब्दस्य कर्मसाधनत्वे पदान्तस्य विशेषणेन सम्प्रतिशब्देन घटितस्य 'यः सम्प्रतिपदान्तः' इत्यस्योक्तत्वादिति भावः । **विधावित्यर्थे—**विधेये-इत्यार्थे । **भावसाधनत्वे त्विति—**तादृशस्य 'यः सम्प्रतिपदान्तः' इत्यस्य वक्तुमशक्यत्वादिति भावः । **अव्याघातेनेति—**तयोरसमानावधिकत्वेन बाध्यबाधकभावाभावादिति भावः । स्वरीत्या व्याचष्टे—**पदत्वस्येति ।**

**( सिद्धान्त्येकदेशिन आक्षेपभाष्यम् )**

## वाचिकस्तु न सिध्यति ॥

**( प्रदीपः ) वाचिकस्त्विति ।** चकारस्य पदान्तत्वात्कुत्वप्रसङ्गात् ॥ कथं पुनः षडिकस्य सिद्धिः । यावतोक्तं-**योऽसौ पदान्तो डकार** इति, तद्वदिहापि डकारस्य पदान्तस्य विधेयत्वात् पदान्तानां विधिरिति स्थानिवत्त्वनिषेधप्रसङ्गः ॥ **नैष दोषः । पूर्वमेव जश्त्वेन** डकारस्य निष्पन्नत्वान्नेदानीं विधिरिति भावसाधने षडिकसिद्धिः ॥ कर्मसाधने तु डकारस्य पदान्तत्वेन प्रसिद्धस्य भत्वात्पदत्वनिवृत्तौ षकाररूपापत्तिर्विधेयेति स्थानिवत्त्वनिषेधात् तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वनिवृत्तौ षडिकासिद्धिः ॥ न च भावसाधने षकारापत्तिर्भाव्येति शक्यते वक्तुम्, तस्या अपदान्तरूपत्वात् । पदान्तत्वे हि जश्त्वं स्यात् । न च जश्त्वविधिनिमित्तः स्थानिवत्त्वनिषेधः । यत्र स्थानिवत्त्वनिषेधाज्जश्त्वं विधीयते-सम्धिवैभ्धामिति, सोऽस्य विषयः । इह तु पूर्वमेव जश्त्वं कृतं, स्थानिवत्त्वनिषेधात्तु तन्निवृत्तिराशङ्क्यते । **पूर्वत्रासिद्धे न स्थानिवदि**त्यस्याप्ययमविषयः । **न ह्यत्र पूर्वत्रासिद्धीयं** किञ्चित्कार्यं विधेयम् ॥

**( उद्द्योतः )** सिद्धान्त्येकदेश्याह—**वाचिकस्त्विति । चकारस्येति ।** वाचिकेऽपि वागाशीर्दत्तशब्दात् ठचि **ठाजादा**विति शीर्दत्तशब्दलोपे **यस्येति** लोपे पूर्वोदाहरणे जश्त्ववदत्रापि कुत्वापत्तिरिति भावः ॥ एवं मदुक्तरीत्या भाष्यस्य सामञ्जस्ये **कथं पुन**रित्यादिः, **न ह्यत्र पूर्वत्रासिद्धीयं किञ्चित्कार्यं विधेय**मित्यन्तः कैयटग्रन्थः । स्फुटार्थत्वाच्च न व्याख्यातः । तथाहि—**पूर्वमेव डस्य निष्पन्नत्वा**दित्यसङ्गतं, सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्राप्तेः । किञ्च षकाररूपापत्तिर्न शास्त्रीया । पदचरमावयवस्य शास्त्रीयस्यैव ग्रहीतुमुचितत्वाद् इत्याद्यूह्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—**पूर्वमेवेति—**यतोऽत्र स्थानिवत्त्वनिषेधादित्यादिः । **यत्रेति—**यत इत्यादिः । **अस्य—**जश्त्वविधिनिमित्तस्थानिवत्त्वनिषेधस्य ।

उद्द्योते—**अपिना—**षडिकस्य समुच्चयः । **भाव इति—**न च—भसंज्ञया पदसंज्ञाया बाधः, 'भावसाधनत्वे त्वि'त्याद्युद्द्योतोक्तरीत्या भसंज्ञायां कर्त्तव्यायां प्रकृतसूत्रेणानिषेधादाकारलोपस्य स्थानिवत्त्वादाकारान्तस्य भसंज्ञायाः, चान्तस्य च पदसंज्ञायाः प्राप्तेस्तयोरतुल्यावधिकत्वेन बाध्यबाधकभावासम्भवात् । तस्य चिन्त्यत्वमुपपादयति—**तथाहीति ।**

**( तटस्थभाष्यम् )**

## अस्तु तर्हि कर्मसाधनः ॥

**( तत्त्वालोकः ) तर्हीति—**यदि भावसाधनत्वे वाचिको न सिद्ध्यति, तर्हीत्यर्थः । तथा च—'साक्षात्परम्परया वे'त्याद्युद्द्योतोक्तरीत्या भत्वेऽपि कर्तव्ये स्थानिवत्त्वस्य निषेधाच्चान्तस्यैव भपदसंज्ञयोः प्राप्तौ समानावधिकत्वाद् भसंज्ञया पदसंज्ञायाः बाधात् कुत्वं नापद्यत इत्याशयः ।

**( सिद्धान्त्येकदेशिभाष्यम् )**

## यदि कर्मसाधनः, षडिको न सिध्यति ॥

**( तत्त्वालोकः ) षडिको न सिद्ध्यतीति—**तर्हीत्यादिः । 'तत्र कर्मसाधने' इत्याद्युद्द्योतोक्तरीत्येति भावः ।

**( तटस्थभाष्यम् )**

## अस्तु तर्हि भावसाधनः ॥

**( सिद्धान्त्येकदेशिभाष्यम् )**

## वाचिको न सिध्यति ॥

**( तत्त्वालोकः ) वाचिको न सिद्ध्यतीति—**यदि भावसाधनस्तर्हीत्यादिः । 'वाचिकेऽपी'त्याद्युद्द्योतोक्तरीत्येति भावः ।

( तटस्थभाष्यम् )

**वाचिकषडिकौ न संवदेते ॥**

**( तत्त्वालोकः ) न संवदेते**—नैकपक्षेण सिद्ध्यतः ।

( सिद्धान्तिभाष्यम् )

**कर्तव्योऽत्र यत्नः ॥**

**( प्रदीपः ) कर्तव्योऽत्र यत्न इति । एकाक्षरपूर्वपदानामुत्तरपदलोपो वक्तव्य** इति वाचिकः सिद्धः । षडिकस्तु ❀ **षषष्ठाजादिवचनात्सिद्धम्** ❀ इत्युत्तरपदलोपाभावे **ठाजादावि**ति लोपे **यस्येति** लोपे च सिद्धः ॥

**( उद्द्योतः )** सिद्धान्त्याह—**कर्तव्योऽत्रेति** । पञ्चमे वक्ष्यमाणं यत्नं दर्शयति—**एकेति** । तथा चाज्झलादेशत्वाद्वाचिके भत्वेऽपि न स्थानिवत्त्वमिति भावः ॥ एवं च भावसाधनपक्षोऽत्र स्थितः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्र**—एकपक्षेणानयोः साधनार्थम् ।

प्रदीपे—**इति वाचिकः सिद्ध इति**—इति यत्नः कर्तव्य इत्यर्थः, तथा च—वाचिक इत्यत्रानेन यत्नेनाशीर्दत्तशब्दस्यैव लोपः, न तु 'ठाजादावि'त्यनेन शीर्दत्तशब्दस्य, तथा 'यस्येति चे'त्यनेनाकारस्य । एवञ्च—लोपस्याज्मात्रादेशत्वाभावाद् भत्वेऽपि स्थानिवत्त्वाभावेन चान्तस्यैव भपदसंज्ञयोः प्राप्तौ समानावधिकत्वाद् भसंज्ञया पदसंज्ञाया बाधात्कुत्वं नापद्यते इति भावः । नन्वेवं षडिक इति कथं सिद्ध्यतीत्यत आह—**षडिकस्त्विति । लोपे**—ङुलिशब्दस्य लोपे । **लोपे चेति**—अस्य लोपस्याज्मात्रादेशत्वाद् भत्वे स्थानिवत्त्वेनाकारान्तस्य भसंज्ञायाः, षान्तस्य च पदसंज्ञायाः प्राप्तौ-असमानावधिकत्वाद् भसंज्ञया पदसंज्ञाया अबाधाज्जश्त्वस्योपपत्तेरिति शेषः ।

उद्द्योते—**तथा चेति**—'एके'ति यत्नेनाशीर्दत्तशब्दस्य लोपे चेत्यर्थः । लोपस्येति शेषः । **अपिना**—पदत्वस्य समुच्चयः । पर्यवसितमाह—**एवञ्चेति** । उक्तरीत्या दोषपरिहारे चेत्यर्थः । अत्र सूत्रे विधिशब्दो न कर्मसाधनः, तस्य तथात्वे हि-पदान्तादिशब्देन कर्मधारयः, शेषषष्ठीसमासो वा ? तत्र-नाद्यः, तथा सति विधिशब्दस्य क्रियाशब्दतया पूर्वनिपातप्रसङ्गात् । न चान्त्यः, तथा सति-पदान्तस्य कस्मिंश्चित्कर्तव्ये न स्थानिवदिति पर्यवसानेन वृक्षवित्यत्र वलोपापत्तेः, द्वन्द्वनिर्दिष्टेषु द्विर्वचनादिषु अनन्वयापत्तेश्च । तस्मादन्तरङ्गत्वाच्च भावसाधन एव, तथा-कर्मषष्ठीसमास इति भावः ।

( आक्षेपभाष्यम् )

**कथं ब्रह्मबन्ध्वा ब्रह्मबन्ध्वै ? ॥**

**( उद्द्योतः )** पूर्वपक्ष्याह—**कथं ब्रह्मबन्ध्वेति ॥**

**( तत्त्वालोकः )** भाष्ये—**कथमिति**—यद्यत्र भावसाधनपक्षस्तर्हीत्यादिः । एवमग्रेऽपि । अत्र पक्षे ब्रह्मबन्ध्वेत्यादावुक्तरीत्या धकारस्य जश्त्वं प्राप्नोतीति भावः ।

( समाधानभाष्यम् )

**उभयत आश्रयणे नान्तादिवदिति ।**

**( प्रदीपः ) उभयत इति ।** यस्मात् स्वादिविधिस्तत्स्वादौ पदमिति पूर्वपरोभयाश्रयणम् ॥

**( उद्द्योतः )** सिद्धान्त्येकदेशी उक्तमपि **यः संप्रतिपदान्त** इत्येवंरूपं सिद्धान्तं परेणागृहीतत्वाद्यक्षानुरूपबलिन्यायेनाह—**उभयत इति ॥** तद्व्याचष्टे—**यस्मात्स्वादिविधिरिति ।** अत एवात्र **नैकदेशविकृत**न्यायेन धान्तस्य पदत्वसंभावना, उकारान्तादुङ्विधानेनाक्तपरिमाणसंज्ञात्वेन दुर्लभत्वात् ॥ उभयत आश्रयणे इत्यस्यैकदेशिमतत्वाच्च । एतच्चान्तादिवत्सूत्रे वक्ष्यते ॥

**( तत्त्वालोकः )** भाष्ये—**उभयत इति**—तथा च—ब्रह्मबन्ध्वेत्यादावुङ्नूङोरेकादेशस्यान्तवद्भावाभावात्तस्मिन् परे धान्तस्य 'स्वादिष्वि'ति पदत्वाप्राप्तेर्धकारस्य जश्त्वं नापद्यते इति भावः ।

उद्द्योते—**अत एव**—अस्यासिद्धान्तत्वादेव । ननु कथमिदमित्यत आह—**एतच्चेति** ।

( आक्षेपभाष्यम् )

**कथं वेतस्वान् ॥**

**( उद्द्योतः )** पूर्वपक्ष्याह—**कथं वेतस्वानिति ॥**

**( तत्त्वालोकः )** भाष्ये—**वेतस्वानिति**—भावसाधनपक्षे पदान्तविशेषणेन सम्प्रतिशब्देन घटितस्य 'यः सम्प्रति पदान्तः' इत्यस्य वक्तुमशक्यत्वादत्रोक्तरीत्या सकारस्य रुत्वं प्राप्नोतीति भावः ।

( समाधानभाष्यम् )

**नैवं विज्ञायते—पदस्यान्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः, पदान्तविधिं प्रतीति ॥**

**कथं तर्हि ? ॥**

**पदे अन्तः पदान्तः, पदान्तस्य विधिः पदान्तविधिः पदान्तविधिं प्रतीति ॥**

**( प्रदीपः ) पदे अन्त इति ।** न च ड्मतुप्प्रत्ययः पदम् ॥ एवं षडिके इकप्रत्ययो न पदमिति नास्ति स्थानिवत्त्वनिषेधः ॥

**( उद्द्योतः )** अथ वेतस्वानित्येवंजातीयकानामेतदनुदाहरणत्वमेवेति बोधयितुं वास्तवं सिद्धान्तमाह—**नैवमिति ॥** तद्व्याचष्टे—**न च ड्मतुबिति ।** एवं ब्रह्मबन्धूशब्दे ऊकारो न पदमिति बोध्यम् ॥ नन्विदमयुक्तं गतिकारकोपपदानां सुबुत्पत्तेः पूर्वं समासेऽसुबन्तत्वेन, सुबन्तेन समासे **उत्तरपदत्वे चे**ति प्रत्ययलक्षणनिषेधेन चोत्तरस्यापदत्वाद् गोचेत्यादावल्लोपस्य स्थानिवत्त्वेनावङापत्तेरिति चेत् न, उत्तरपदस्य कार्यित्वे एव प्रत्यासत्त्या तन्निषेधप्रवृत्तेः । अत्र चेदं भाष्यमपि मानम् । सुबुत्पत्तेः पूर्वं समासस्य चैतद्विषयेऽनित्यत्वान्न प्रवृत्तिरिति भावः ॥ एवं च विग्रहद्वयप्रदर्शनेन **पदचरमावयवे कर्तव्ये परपदस्थाजादेश एव न स्थानिवदि**ति भाष्ये ध्वनितम् । कानि सन्तीत्याद्येवोदाहरणम् । एवं च पूर्वसूत्रे **अपरविधावि**ति प्रवृत्तकस्थकैयटग्रन्थो **भोभगो** इति सूत्रस्थकैयटग्रन्थश्च चिन्त्य एव ॥ एवं षडिक इत्याद्यपि चिन्त्यम्, इकस्य पदत्वाभावेऽपि ङुलिशब्दाकारयोर्लोपे तस्य स्थानिवद्भावेन पदत्वात्तस्मिन्नन्तस्य विधिसत्त्वेन दोषादिति दिक् ॥

**( तत्त्वालोकः )** भाष्ये—**नैवमिति**—यत इत्यादिः । **पदे अन्त इति**—पदपरकत्वविशिष्टोऽन्त इत्यर्थः ।

प्रदीपे—**नास्ति स्थानिवत्त्वनिषेध इति**—पदत्वेऽपीत्यादिः । तथा च-वेतस्वानित्यत्र सान्तत्वाभावाद्रुत्वाप्राप्तेः पदत्वेऽपि सकारस्यापदान्तत्वान्न रुत्वापत्तिः । एवं-ब्रह्मबन्ध्वेत्यादौ-उकारान्ते पदत्वबाधेन भत्वेऽपि धकारस्यापदान्तत्वान्न जश्त्वप्रसङ्गः । तथा-षडिक इत्यत्राकारान्तस्य भत्वेऽपि षान्तस्यान्तर्वर्त्तिविभक्त्या पदत्वाज्जश्त्वोपपत्तिरिति भावः ।

उद्द्योते—**एतदिति**—पदान्तविधौ स्थानिवत्त्वनिषेधस्येत्यर्थः । एवमग्रेऽपि । कैयटस्य न्यूनतां निराचष्टे—**एवमिति । इदम्—**

सप्तमीसमासेन व्याख्यानम् । प्रकारान्तरमाह-**सुबन्तेनेति ।** द्वितीये प्रथममाह—**उत्तरपदस्येति । अपिना**—भाष्यान्तरस्य परिग्रहः । आद्ये पश्चादाह—**सुबुत्पत्तेरिति । विग्रहद्वयेति**—पदेऽन्तः, पदान्तस्य विधिरिति विग्रहद्वयेत्यर्थः । **परपदस्येति**—प्रत्यासत्त्येति भावः । **क्वानीति**—तथा चैतस्येत्यादिः । **एवञ्च**—तस्य ध्वनने च । **षडिके इत्याद्यपि**—षडिके इत्यत्र स्थानिवत्त्वनिषेधाभावकथनमपि । **डुलिशब्दाकारयोर्लोपे**—'ठाजादावि'ति डुलिशब्दस्य लोपे, शिष्यमाणत्वात्पदत्वम्भजतोऽकारस्य 'यस्ये'ति लोपे । **दोषात्**—स्थानिवत्त्वनिषेधप्रसङ्गात् । तथा चात्र—ध्वनितेन पथैवेष्टसिद्धिरिति भावः ।

## ( समाधानान्तरभाष्यम् )

**अथवा-यथैवान्यान्यपि पदकार्याण्युपप्लवन्ते-रुत्वं जश्त्वं च । एवमिदमपि पदकार्यमुपप्लोष्यते ॥**

**किम् ? ।**

**भसंज्ञा नाम ॥**

**( प्रदीपः ) यथैवेति । यचि भमित्यत्र तसौ मत्वर्थ** इत्यत्र च पदमिति वर्तते । तेन पदं सञ्ज्ञं भवतीति लब्धे पदत्वे तन्निबन्धनरुत्वप्रतिबन्धार्था भसंज्ञा तद्विषयत्वात् पदान्तविधिरिति स्थानिवत्त्वनिषेध इति भत्वाद्रुत्वाभावः सिद्धः ॥

**( उद्द्योतः )** भाष्ये—**पदस्यान्त** इति पूर्वपक्षे पूर्वपक्ष्यभिमते एकपदस्थाजादेशस्य स्थानिवत्त्वनिषेधेऽपि न दोष इति प्रौढ्या प्रतिपादयितुं **भसंज्ञात्र बाधिका भविष्यतीति** स्वोक्तेरेकदेश्याशयमाह—**अथवेति । यः संप्रति पदान्त** इत्येतत्तु न शब्दमर्यादालभ्यमिति भावः ॥ अस्य पक्षस्य कैयटोक्तव्याख्या चिन्त्या, तावतापि भसंज्ञायाः पदान्तविधित्वानुपपादनात् । किञ्च यथा कारकाधिकारे कारकं सत्कर्मेति व्याख्यानेन तयोः संज्ञयोः समावेश उक्तस्तथात्रापि स्यात् । न हि भत्वपदत्वयोः समावेश इष्टः । तस्मादेवं व्याख्येयम्—यथा रुत्वजश्त्वादीनां साक्षात्प्रापकः प्रतिबन्धको वा स्थानिवद्भावः प्रतिबध्यते, तथा भसंज्ञाविषयातिदेशस्यापि परम्परया तत्त्वाद् निषेध इति ॥ **यथैवान्यानि पदकार्याणि** पदचरमावयवकार्याणि रुत्वजश्त्वादीनि तत्प्रापकपदसंज्ञारूपं चात्र सूत्रे **उपप्लवन्ते** पदान्तविधिशब्देन गृह्यन्ते, पदचरमावयवप्रापकाण्यपि तत्त्वेन गृह्यते । **एवमिदमपि** भसंज्ञारूपमपि पदकार्यं परम्परया पदचरमावयवप्रापकं प्रतिबन्धकं वा पदचरमावयवत्वेन गृह्यते इत्यर्थः ॥ अयं भावः—यथा पदान्तपदे उपस्थितत्वात्पदत्वद्वारिका परम्परा गृह्यते तथा पदत्वबाधकतया भत्वस्यापि प्रत्यासन्नत्वेन तद्द्वारापि पदचरमावयवविषयस्थानिवत्त्वप्रतिषेध इति ॥ षडिके तु **षषष्ठाजादिवचनात्सिद्धमि**ति द्वितीयादच ऊर्ध्वं लोपविधायकवचनप्रामाण्यात्तद्विषये न भत्वद्वारा पदचरमावयवसंपादकस्थानिवत्त्वप्रतिषेध इति **न** दोषः । वाचिके त्वेवं **न** दोषः, उत्तरपदलोपविधानात् । पञ्चमे चेदमुपपादयिष्यते ॥ एवं चामलकी, तटी, सारसीत्यादौ जश्त्वादिप्रसक्तिरेव नेति बोध्यम् ॥ यद्यपि **पूर्वत्रासिद्धे न स्थानिवदि**ति निषेधोऽत्र प्राप्नोति । तथापि विधिशब्दो भावसाधनोऽन्तशब्दश्चरमावयववाचीत्यादिसिद्धान्तान्बोधयितुं **पूर्वत्रासिद्धे** इत्यादावपि साक्षात्परम्परया प्रापकप्रतिबन्धकस्य निषेध इत्यादि बोधयितुं **पदेऽन्त** इति सप्तमीसमासेन वेतरथानित्यादौ **न पदान्ते**ति निषेधवारणेन **पूर्वत्रासिद्धे ने**त्यत्र पदचरमावयवविधायकातिरिक्तस्यैव ग्रहणम् । एवं जश्पदेनेति बोधयितुं चायमुपक्षेप-इति बोध्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—**वर्तते**—अनुवर्तते । 'सुप्तिङन्तं पदमि'त्यस्मादिति भावः ।

उद्द्योते—**एकदेशीति**—सिद्धान्त्येकदेशीत्यर्थः । ननु पूर्वोक्तरीत्येष्टसिद्धिरित्यत आह—**यः सम्प्रतीति । न हि**—न तु । नन्वेवं भाष्यस्य कथं सङ्गतिरित्यत आह—**तस्मादिति । तत्त्वात्**—तेषां प्रापकत्वात् प्रतिबन्धकत्वाद्वा । नन्वस्य व्याख्यानस्य भाष्याक्षरतः कथं लाभ इत्यत आह—**यथैवेति । तत्त्वेन**—पदचरमावयवत्वेन । नन्विदं व्याख्यानं पूर्वोक्त्या विरुणद्धीत्यत आह—**अयं भाव इति ।** नन्वेवं षडिके दोष इत्यत आह—**षडिके त्विति । इति**—इति वार्त्तिकसत्त्वात् । **वचनेति**—'ठाजादावि'ति सूत्रेत्यर्थः । नन्वेवं वाचिके दोष इत्यत आह—**वाचिके त्विति । एवम्**—षडिके उक्तेन प्रकारेण । **उत्तरपदलोपेति**—'एकाक्षरपूर्वपदाना'मि'ति वार्त्तिकेनेति भावः । नन्वनयोः कथं वैषम्यमित्यत आह—**पञ्चमे चेति । इदम्**—वैषम्यम् । **एवञ्च**—उक्तरीत्या स्थानिवत्त्वस्य निषेधे च । अत्र-पदत्वे कर्तव्ये 'यस्ये'ति लोपः स्थानिवदेव । न हि 'स्वादिष्वि'त्यनेन पदस्यान्तो विधीयते, येन निषेध आपद्येत । किन्तु संज्ञामात्रम् । तत्रापि यथोद्देशपक्ष इति प्राहुः । सिद्धान्ते त्वत्र प्रकारान्तरेण तत्प्रसक्तिर्वारणीयेत्याशयं ध्वनयन् कार्यकालपक्षमभिप्रेत्याह—**यद्यपीति । अत्र**—आमलकीत्यादौ ।

---

## ( वरे यलोपपदार्थनिरूपणाधिकरणम् )

## ( आक्षेपभाष्यम् )

**वरे यलोपविधिं प्रति न स्थानिवद्भवतीत्युच्यते । तत्र 'तेऽप्सु यायावरः प्रवपेत पिण्डान्' अवर्णलोपविधिं प्रति स्थानिवत्स्यात् ॥**

**( उद्द्योतः )** भाष्ये—**अवर्णलोपविधिमिति । आतो लोप इटि चे**त्येतं प्रतीत्यर्थः । एवं च वरे यलोपग्रहणे कृतेऽपि यायावर इत्यस्यासिद्धिरिति शङ्का ॥

**( तत्त्वालोकः )** भाष्ये—**तत्र**—तथा सति । **पिण्डानिति**—'इति वाक्यघटके 'यायावरः' इत्यत्र—यातेः 'नित्यंकौटिल्ये' इति यङि, 'यश्च यङः' इति वरचि, अतो लोपे, तस्य यलोपविधिम्प्रति स्थानिवत्त्वनिषेधाद् 'लोपो व्योरि'ति यलोपे च कृतेऽतो लोपः' इति शेषः ॥ नन्वार्धधातुक इत्यस्य विषयसप्तमीत्वेनातो लोपस्य परनिमित्तकत्वाभावादेव स्थानिवत्त्वाप्राप्तौ तन्निषेधो व्यर्थ इति चेन्न, वरेग्रहणेन तस्य परसप्तमीत्वस्य ज्ञापनात् । न चैवमपि-पूर्वमतो लोपस्ततो वलि लोप इति क्रमेऽकारेणार्धधातुकत्वाद्यलाभात्तल्लोपस्य स्थानिवत्त्वेनापि तल्लाभासम्भवादेव-आतो लोपस्याप्राप्तेस्तस्य स्थानिवत्त्वेऽपि न क्षतिरिति वाच्यम्, सम्भावितार्धधातुकत्वाद्यादायापि तत्प्रवृत्तेर्वरेग्रहणेन ज्ञापनात् । अत एव-यातिरित्यादेरुक्तरीत्या सिद्धिरिति भावः ।

उद्द्योते—**एवञ्च**—सिद्धान्त्येकदेशिना तथा समाधानोक्तौ च । **वरे इति**—अल्लोपे तस्य स्थानिवत्त्वाद् यलोपाप्राप्तौ तत्र तन्निषेधार्थमिति शेषः ।

## ( समाधानभाष्यम् )

**नैष दोषः । नैवं विज्ञायते—वरे यलोपविधिं प्रति न स्थानिवदिति ॥**

**कथं तर्हि ? ॥**

**वरे अयलोपविधिं प्रतीति ॥**

किमिदमयलोपविधिं प्रतीति ? ॥

अवर्णलोपविधिं प्रति यलोपविधिं च प्रतीति ॥

( तत्त्वालोकः ) **नैवमिति**—यत इत्यादिः ।

( समाधानान्तरभाष्यम् )

अथवा योगविभागः करिष्यते—'वरे लुप्तं न स्थानिवत्' । ततो 'यलोपविधिं प्रति न स्थानिवद्' इति ॥

(उद्द्योतः) यातिरित्यस्यात्रासिद्धेः सिद्धान्तमाह—**अथवेति** ॥

( तत्त्वालोकः ) भाष्ये—**योगेति**—'वरे यलोपे'ति योगावयवेत्यर्थः । नन्वेव 'वरे' इत्यस्य विभागवन्नयाभावेनैकधर्मावच्छिन्नान्वयित्वरूपसाहित्याभावात्कथमत्र द्वन्द्वः, कथञ्च तत्र सप्तम्या अलुगिति चेन्न, निपातनेनैवोभयाभ्युपगमात् ॥ एकस्यैव लोपशब्दस्य तन्त्रेणोभयत्रान्वयोऽपि बोध्यः ।

उद्द्योते—**अत्र**—'वरे अयलोपविधिम्प्रती'ति पक्षे ।

( आक्षेपभाष्यम् )

यलोपे किमुदाहरणम् ? ।

( उद्द्योतः ) **यलोपे किमिति** । यायावरे यलोपस्य **वरे** इत्यनेनैव सिद्धत्वात्प्रश्नः ॥

( समाधानभाष्यम् )

कण्डूयतेरप्रत्ययः—कण्डूरिति ॥

( प्रदीपः ) **कण्डूयतेरिति** । क्यजन्तात् क्विप् । यगन्तात्तु क्विन्न भवति । उक्तं हि भाष्ये—**नतेभ्यः क्विब् दृश्यत** इति ॥

(उद्द्योतः) कैयटे **उक्तं हीति** । **कण्ड्वादिभ्यो यगि** यत्र भाष्ये ॥

( समाधानबाधकभाष्यम् )

नैतदस्ति । क्वौ लुप्तं न स्थानिवत् ॥

( उद्द्योतः ) **क्वौ लुप्तमिति** । यद्यप्यप्रत्ययशब्देन विजप्युच्यते, तथापि तस्य क्वाचित्कत्वान्न दोषः ॥ क्विग्रहणं विचोऽप्युपलक्षणमित्यन्ये ॥

( तत्त्वालोकः ) भाष्ये—**नैतदस्तीति**—यत इति शेषः । एवमग्रेऽपि । **लुप्तमिति**—लोप इत्यर्थः । 'नपुंसके भावे क्तः' इति क्तविधानात् ।

उद्द्योते—**उच्यते इति**—तथा च—तदर्थं प्रकृतसूत्रे यलोपपदमावश्यकमिति भावः । ननु 'क्वौ लुप्तमि'ति वार्त्तिक एव विच्पदमावश्यकमित्यत आह—**क्विग्रहणमिति** । 'क्वौ लुप्तमि'ति वार्त्तिके इत्यादिः ।

( समाधानान्तरभाष्यम् )

इदं तर्हि प्रयोजनम्—सौरी बलाका ॥

( प्रदीपः ) **सौरीति** । एकोऽण्यकारलोपो द्वितीय ईकारे, तयोः स्थानिवत्त्वाद्यकारस्योपधात्वं न स्यात् । स्थानिवत्त्वनिषेधे द्वितीयलोपस्य समानाश्रयत्वादसिद्धत्वादणि लोपस्य व्याश्रयत्वात्सिद्धत्वाद् यकारस्य उपधात्वाल्लोपः सिध्यति ॥

( तत्त्वालोकः ) प्रदीपे—**एक इति**—सूर्यशब्दादणि, अणन्तत्वान्ङीपीत्यादिः । **तयोरिति**—तथा च—प्रकृतसूत्रे यलोपग्रहणाभावे-तत्र 'सूर्यागस्त्ययोश्छे च ङ्याञ्चे'ति वार्त्तिकसहकारेण 'सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः' इति सूत्रेण यलोपे कर्तव्ये इत्यादिः । **स्थानिवत्त्वेति**—प्रकृतसूत्रे यलोपग्रहणसत्त्वे निषेधादिः । **असिद्धत्वादिति**—'असिद्धवदत्राभादि'ति सूत्रेणेति भावः ।

( बाधकभाष्यम् )

नैतदस्ति । उपधात्वविधिं प्रति न स्थानिवत् ॥

( उद्द्योतः ) **उपधात्वविधिं प्रतीति** । **प्रत्ययविधावित्य**नाश्रित्येदम् ॥

( तत्त्वालोकः ) उद्द्योते—नन्वस्य 'उपधात्वविधिं प्रति न स्थानिवदि'त्याकारकत्वाद्, यलोपस्य चाप्रत्ययत्वात् कथमनेनात्र निर्वाह इत्यत आह—**प्रत्ययेति** ।

( समाधानान्तरभाष्यम् )

इदं तर्हि प्रयोजनम्—आदित्यः ॥

( प्रदीपः ) **आदित्य इति** । अदितेः **सास्य देवते**त्यत्रार्थे ण्यस्ततो भवादावर्थे द्वितीयो ण्यः । **हलो यमां यमि**ति लोप इष्यते, स च स्थानिवत्त्वनिषेधात् सिध्यति ॥

( उद्द्योतः ) **तत इति** । आदित्यशब्दादित्यर्थः । अदितेरपत्यण्यान्ताद्देवतार्थे ण्य इति तु नोक्तम् , **आपत्यस्ये**त्यस्य प्राप्त्या **पूर्वत्रासिद्ध** इत्युत्तरग्रन्थासङ्गतेः । तस्मादेतत्खण्डनमेतद्ग्रन्थेनैवेति बोध्यम् ॥

( बाधकभाष्यम् )

नैतदस्ति । पूर्वत्रासिद्धे न स्थानिवत् ॥

( प्रयोजनभाष्यम् )

इदं तर्हि—कण्डूतिर्वल्गूतिः ॥

( बाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । कण्डूया वल्गूया इति भवितव्यम् ॥

( तत्त्वालोकः ) **कण्डूयेति**—यतः 'अ प्रत्ययादि'ति सूत्रेण 'स्त्रियां क्तिन्' इति सूत्रस्य बाधादित्यादिः । नन्वेवमपि 'कण्डूय' इत्यस्य सम्पदादिषु पाठं प्रकल्प्य 'सम्पदादिभ्यः क्विप्, क्तिन्नपीष्यते' इति वार्त्तिकेन, अथवा 'स्त्रियां क्तिन्नि'ति सूत्रे बहुलग्रहणसम्बन्धं प्रकल्प्य तेनैव कण्डूतिरित्यत्र क्तिन् क्रियेतेति चेन्न, एतद्भाष्यप्रामाण्यात् तत्तत्कल्पनाया अप्रामाण्यात् ।

( समाधानान्तरभाष्यम् )

इदं तर्हि—कण्डूयतेः क्तिच् । ब्राह्मणकण्डूतिः क्षत्रियकण्डूतिः ॥

( प्रदीपः ) **ब्राह्मणकण्डूतिरिति** । षष्ठीसमासः । कर्मधारये कण्डूतिशब्दस्य पूर्वनिपातप्रसङ्गः ॥

( उद्द्योतः ) **कण्डूतिशब्दस्येति** । विशेषणत्वादित्यर्थः । न चात्राल्लोपस्य स्थानिवत्त्वादुवङ् यण्वा स्यादिति वाच्यम् ॥ जाते तत्रोठा सिद्धेः । ऊठि तु न स्थानिवत्त्वमनादिष्टादचः पूर्वत्वाभावात् । अस्मादेव भाष्यप्रयोगात्स्थानिद्वारकं तदाश्रयणं क्वाचित्कमित्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**कण्डूयतेः क्तिजिति**—अत्र-कण्डूयतेः क्तिच् , ततोऽतो लोपः, ततो यलोपे कर्तव्ये आप्तस्याल्लोपस्थानिवत्त्वस्य यलोपपदघटितेन प्रकृतसूत्रेण निषेधाद् 'लोपो व्योरि'ति यलोपं इति भावः ।

प्रदीपे—भावे क्तिचमभिप्रेत्याह—**षष्ठीति**। कर्मणि तमभिप्रेत्याह—**कर्मेति**। यत इत्यादिः।

उद्द्योते—धातुत्वाभिप्रायेणाह—**उदङ्किति**। अधातुत्वाभिप्रायेणाह—**यणिति**। 'इको यणि'त्यनेनेति भावः। **जाते तत्र**—जातेऽपि तस्मिन्। ननु स्थानिद्वारकं वकारस्थानादिष्टादचः पूर्वत्वमित्यत आह—**अस्मादेवेति**। **तदिति**—अनादिष्टादचः पूर्वत्वेत्यर्थः। **आहुरिति**—सिद्धान्तिन इति शेषः।

**( ४१५ नियमाक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ प्रतिषेधे स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवत् ॥ * ॥

**( आक्षेपभाष्यम् )**

**प्रतिषेधे स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति वक्तव्यम् ॥**

**( तत्त्वालोकः ) वक्तव्यमिति**—तेन-चिकीर्षक इत्यादौ 'लिती'ति ककारेकारादेरुदात्तत्वे कर्तव्ये सनोऽकारलोपादेः स्थानिवत्त्वाभावादचाऽव्यवधाने तत्सिद्ध्यतीत्याशयः।

**( स्वरोदाहरणोपपादनभाष्यम् )**

**स्वर—आकर्षिकः। चिकीर्षकः। जिहीर्षकः॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—पञ्चारत्न्यो दशारत्न्यः॥ स्वर॥**

**( प्रदीपः ) आकर्षिक इति**। चरत्यर्थे **आकर्षात् ष्ठलिति** ष्ठल्। **यस्येति** लोपस्य स्थानिवत्त्वात् ककाराकारस्योदात्तत्वं न स्यात्। कारक इत्यादौ च **स्वरविधौ व्यञ्जनमविद्यमानवदिति** व्यञ्जनस्याविद्यमानत्वादनन्तरस्य स्वरभाजः संभवादन्यव्यवधाने न स्यात्। यत्र तु व्यवहितेऽपि पूर्वशब्दो वर्तते, तत्राप्यवध्यवधिमतोरानन्तर्यासंभवादन्तरालस्थान् सतोऽप्यर्थाननादृत्य व्यवहारः॥ यत्र त्वानन्तर्यसंभवस्तत्र व्यवहितं नैवाश्रीयते॥ ष्ठलो लित्करणाद् व्यवधानेऽपि भविष्यतीति चेत्। आकारस्यापि पक्षे स्यादिति स्थानिवत्त्वनिषेधः॥

**( उद्द्योतः )** ननु **लिती**ति वचनसामर्थ्यात्स्यादेवेत्यत आह—**कारक इतीति**। अत्र वचनं सावकाशमिति भावः॥ **स्वरविधाविति**। हल्स्वरप्राप्तेः सत्त्वादिति भावः। **अन्यव्यवधाने इति**। अज्व्यवधाने इत्यर्थः॥ **अज्व्यवेति** वा पाठः। लुप्ततया तदनुच्चारणेन तदाश्रयस्यापादयितुमशक्यत्वात्तस्य स्यादिति नापादितम्, स्वविधौ स्थानिवत्त्वाभावाच्च॥ ननु **लिती**त्यत्र **प्रत्ययात्पूर्व**मित्यनुवृत्तेः पूर्वग्रहणस्य सत्त्वा**न्निर्दिष्ट**परिभाषानुपस्थितिः। पूर्वशब्दश्च व्यवहितेऽपीति न दोषोऽत आह—**यत्र त्विति**। तत्राप्यव्यवधानारोपेणैव प्रयोगः, पूर्वादीनां चाव्यवहिते एव शक्तिरिति भावः॥ **यत्र त्विति**। मुख्ये संभवति आरोपितग्रहणे मानाभाव इति भावः॥ परं त्विदं चिन्त्यम्, **तस्मिन्निति** सूत्रे निर्दिष्टग्रहणात्। तस्माद् उत्तरांशविकलपरिभाषोपस्थितेः **प्रत्ययः परश्चे**त्यादौ दृष्टत्वादत्राप्युपस्थितिरिति तत्त्वम्॥ **पक्षे स्यादिति**। **अनुदात्तं पद**मिति वचनात्पक्षे इत्युक्तम्। चिकीर्षक इत्याद्यर्थमावश्यकेन निषेधेनैव सिद्धेर्लित्त्वसामर्थ्यमेव कथमिति चिन्त्यम्॥ भाष्ये—**पञ्चारत्न्य इति**। अन्तरङ्गत्वेनापीदं सिद्धम्। बहुखट्वक इत्युदाहरणम्। अत्र कपि **आपोऽन्यतरस्या**मिति ह्रस्वत्वे तस्य स्थानिवत्त्वाद् **ह्रस्वान्तेऽन्त्यादिति** स्वरो न भवति॥

**( तत्त्वालोकः )** भाष्ये—**भवतीति**—तेन—'पञ्चभिररत्निभिः क्रीताः-पञ्चारत्न्यः'इत्यादौ 'जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः' इति गुणाभावे यणि तस्य स्थानिवत्त्वाद् 'इगन्तकालकपाले'ति पूर्वपदप्रकृतिस्वरे 'त्र संख्यायाः' इति पूर्वपदमाद्युदात्तं भवतीत्याशयः।

प्रदीपे—**स्थानिवत्त्वादिति**—अज्व्यवधानेनेति शेषः। **व्यवधानेऽपीति**—अचेत्यादिः। **आकारस्यापीति**—तथा सतीत्यादिः। वस्तुतस्तु—आकर्षिक **इत्यनुदाहरणमेव**, ष्ठलो लित्त्वसामर्थ्यात्-स्थानिवद्भावकृतेकाज्व्यवधानेऽपि लित्स्वरो भवतीत्यभ्युपगमेनैव ककाराकारे तस्योपपत्तेः, आकारे चानतिप्रसङ्गादिति बोध्यम्।

उद्द्योते—**सामर्थ्यादिति**—अज्व्यवधानेऽपीति शेषः। **अत्र**—कारक इत्यादौ। अव्यवधान एवेति भावः। **वचनम्**—'लिती'ति वचनम्। हल्व्यवधाने स्वराप्रवृत्तौ—स्वरविधौ तस्य स्थानिवत्त्वनिषेध एव व्यर्थः स्यादित्याशयेनाह—**अजिति**। ननु लोपस्य स्थानिवत्त्वात्तस्यैवोदात्तत्वं स्यादिति कुतो नोक्तमित्यत आह—**लुप्ततयेति**। **तदाश्रयस्य**—स्वरस्य। ण्वुलो लित्त्वस्य कारक इत्यादौ साफल्यादाह—**आवश्यकेनेति**। **निषेधेन**—स्थानिवत्त्वनिषेधेन। **सिद्धेः**—ष्ठलो लित्त्वसाफल्यसिद्धेः।

**( दीर्घोदाहरणोपपादनभाष्यम् )**

**दीर्घ—प्रतिदीव्ना प्रतिदीव्ने॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—किर्योः। गिर्योः। दीर्घ॥**

**( प्रदीपः ) प्रतिदीव्नेति**। रेफवकारान्तस्य भस्य **न भकुर्छुरा**मिति दीर्घत्वनिषेध इत्यत्र न प्रवर्तते॥

**( उद्द्योतः ) प्रतिदीव्ने**त्यत्र बहिरङ्गत्वेनासिद्धत्वमल्लोपस्येति न शङ्क्यम्, त्रिपाद्यां तदप्रवृत्तेः॥ वार्य्योरित्यत्रापि यथा न सा तथोक्तम्॥ **रेफेति**। अत्र तु नान्तं भमिति भावः॥

**( तत्त्वालोकः )** भाष्ये—तेन प्रतिदीव्नेत्यादौ 'हलि चे'ति दीर्घे कर्तव्येऽल्लोपस्य स्थानिवत्त्वाभावात्स उपपद्यत इत्याशयेनाह—**प्रतिदीव्नेति**। **भवतीति**—तेन किर्योरित्यादौ यणः स्थानिवत्त्वाद् 'हलि चे'ति दीर्घो न भवतीति भावः।

प्रदीपे—नन्वेवमपि 'न भकुर्छुरामि'ति निषेधादत्र दीर्घो नोपपद्येतेत्यत आह—**रेफेति**। **भस्येति**—उपधाया इति शेषः। **इत्यत्र**-इति हेतोः प्रतिदीव्नेत्यादौ।

उद्द्योते—**असिद्धत्वमिति**—तथा च—स्थानिवत्त्वनिषेधेऽपि दीर्घानुपपत्तिरिति भावः। **तदिति**—बहिरङ्गपरिभाषेत्यर्थः।

**( यलोपोदाहरणोपपादनभाष्यम् )**

**यलोप—ब्राह्मणकण्डूतिः। क्षत्रियकण्डूतिः॥ यो ह्यन्य आदेशः, स्थानिवदेवासौ भवति—वाय्वोरध्वर्य्वोरिति॥ यलोप॥**

**( तत्त्वालोकः )** तेन ब्राह्मणकण्डूतिरित्यादौ 'लोपो व्योरि'ति यलोपे कर्तव्येऽल्लोपस्य स्थानिवत्त्वाभावात्स सिध्यतीत्याशयेनाह—**ब्राह्मणकण्डूतिरिति**। **भवतीति**-तेन वाय्वोरित्यादौ यणः स्थानिवत्त्वाद्वलि लोपो न भवतीति भावः।

**( आक्षेपभाष्यम् )**

**तत्तर्हि वक्तव्यम् ॥**

( तत्त्वालोकः ) **तत्तर्हीति**—यद्येतानि प्रयोजनानि तर्हि 'प्रतिषेधे स्वरदीर्घे'त्यादिवार्त्तिकं वक्तव्यमित्यर्थः ।

( समाधानभाष्यम् )

**न वक्तव्यम् । इह हि लोपोऽपि प्रकृतः, आदेशोऽपि । विधिग्रहणमपि प्रकृतमनुवर्तते, दीर्घादयोऽपि निर्दिश्यन्ते । केवलं तत्राभिसंबन्धमात्रं कर्तव्यम्—स्वरदीर्घयलोपविधिषु लोपाजादेशो न स्थानिवदिति ॥**

( प्रदीपः ) **इह हि लोपोऽपीति** । प्रकृतः प्रस्तुतः ॥

( उद्द्योतः ) न सूत्रान्तरवृत्तित्वं प्रकृतत्वमित्याह—**प्रस्तुत इति** ॥

( तत्त्वालोकः ) भाष्ये—**इह**-'न पदान्ते'ति सूत्रे । न सूत्रान्तरादिति भावः । **तत्र**—तथा सति ।

( आक्षेपभाष्यम् )

**आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसंबन्धः शक्यते कर्तुम् । न चैतान्यानुपूर्व्येण सन्निविष्टानि ॥**

( प्रदीपः ) **आनुपूर्व्येणेति** । तत्र पदार्थानां समन्वयावगमात् । इह तु लोपो यशब्देन संबद्धः सकृच्च श्रुतः, द्विधा चास्योपयोग इष्यते । स्वरदीर्घयलोपाश्च विक्षिप्ताः कथं समुच्चीयन्तामिति भावः ॥

( उद्द्योतः ) पदान्तरेणाव्यवधानरूपासत्तिरानुपूर्व्यम् । **विक्षिप्ताः** विभिन्नदेशस्थाः ॥ भाष्ये **यथेष्टमभिसंबन्धः**-इष्टवाक्यार्थबोधजनकत्वरूपः ॥

( तत्त्वालोकः ) भाष्ये-**आनुपूर्व्येणेति**-तथा सत्यपीह तथाऽभिसम्बन्धो न कर्तुं शक्यः, यत इत्यादिः ।

प्रदीपे—**तत्र**-आनुपूर्व्येण सन्निवेशस्थले ।

( समाधानभाष्यम् )

**अनानुपूर्व्येणापि सन्निविष्टानां यथेष्टमभिसंबन्धो भवति । तद्यथा—अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षीरिति । तस्य यथेष्टमभिसंबन्धो भवति—उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति ॥**

( प्रदीपः ) **अनानुपूर्व्येणापीति** । लोपशब्द आवर्तते ॥ तत्र लोपाजादेश इति ज्ञायते । तत्र द्विर्वचनविधौ लोपाजादेशस्यासंभवात्सवर्णादिविधौ तु तस्यैव संभवान्न तत्रादेशस्य लोपो विशेषणम् । पदान्ते तु यद्यपि संभवव्यभिचारौ स्तस्तानि सन्ति कानि सन्तीति तथापि **न पदान्तेति** योगविभागात् तद्विधौ लोपो न विशेषणमिति पारिशेष्यात् **स्वरदीर्घयलोपेषु लोपाजादेशो न स्थानिवदिति** विज्ञायते । स्मृतिशास्त्रत्वाच्चास्य-एतावन्तोऽर्थाः संनिहिता इत्येतावत्प्रतीयते । ग्रहणकवाक्यात्तु लक्ष्यसंस्कारकं प्रक्रियावाक्यम् उपप्लवत इति सिद्धमिष्टम् ॥ **अनड्वाहमिति** । पाठक्रमादार्थक्रमो बलीयानिति यथेष्टमत्राभिसंबन्धः ॥

( उद्द्योतः ) **असंभवादिति** । चख्नतुः, जग्मतुरित्यादौ संभवाच्चिन्त्यमिदम् ॥ **पारिशेष्यादिति** । व्याख्यानाच्चेत्यपि बोध्यम् ॥ **एतावदिति** । पूर्वोक्तो नियमोऽपीत्यर्थः ॥ ननु सूत्रस्यैकत्वात्तावन्मात्रविषये तादृशो वाक्यार्थो दुर्वच इत्यत आह—**ग्रहणकवाक्यादिति** ॥ **पाठक्रमादिति** । **आर्थक्रमो** नाम राजपुरप्रवेशन्यायेन स्वस्वाकाङ्क्षितार्थान्वयक्रमः । एवं च कल्पितासन्नवाक्याद्बोधविषये तात्पर्यं नियामकमिति भावः ॥ भाष्यात्तु आसत्त्यभावेऽपि पदार्थोपस्थितौ आकाङ्क्षावशाद्व्युत्पत्त्यनुसारेणान्वयबोध इति लभ्यते ॥ **साचीनमित्यस्य** तिर्यग्गच्छन्तमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**अनानुपूर्व्येणापीति**—तथा सतीह तथाऽभिसम्बन्धः कर्तुं शक्य एव, यत इत्यादिः ।

प्रदीपे—तथा सत्यपीह यदनुपपत्त्या तथाऽभिसम्बन्धाभावः स्वयं साधितस्तदनुपपत्तिं परिहरति—**लोपेति । तत्र**—तथा सति । नन्वेवं लोपाजादेशस्य सर्वेष्वन्वयः कुतो नेत्यत आह—**तत्रेति** । प्रकृतसूत्रोपात्तानां मध्ये इत्यर्थः । **एवेन**—अत्र व्यभिचाराभावः सूचितः । **न तत्रेति** —'सम्भवव्यभिचाराभ्यां स्याद्विशेषणमर्थवदि'ति नियमादिति भावः । ननु तथा योगविभागादौ किं मानमित्यत आह—**स्मृतीति** । स्मृतिशास्त्रत्वस्य च प्रयोगमूलकत्वादिति भावः । **ग्रहणकवाक्यात्**—'न पदान्ते'त्यादि-यथाश्रुतसंग्राहकवाक्यात् ।

उद्द्योते—कैयटोक्तयुक्तिं खण्डयति-**चख्नतुरिति** । अत एवाह-**व्याख्यानेति** । कैयटस्य न्यूनतां निराचष्ट—**पूर्वोक्त इति** । 'पदचरमावयवे कर्त्तव्ये परपदस्थाजादेश एव न स्थानिवदि'तीति शेषः । **तावन्मात्रविषये**—स्वरदीर्घयलोपेति विषयत्रय एव । **एवञ्च**—पाठक्रमादार्थक्रमस्य बलवत्त्वे च । अत एव-सूत्रे क्रमेणानुच्चारितानामपि स्वरादीनां पदानामत्र क्रमेणान्वयो दर्शितः ।

( ४१६ न्यूनताक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ क्लिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम् ॥ * ॥

( भाष्यम् )

**क्लिलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानं कर्तव्यम् ॥**

( उद्द्योतः ) **क्लिलुगिति** वार्तिके **क्वा**वित्यत्र विधावित्येतदध्याह्रियते, तेन क्विनिमित्तविधावित्यर्थः । आवृत्त्या क्वावित्यादेशेनापि संबध्यते, क्विनिमित्तादेश इत्यर्थस्तदेतदर्थतः पठ्यते—**क्वौ लुप्तमिति** । इदं च काचित्कमिति वक्ष्यते ॥ एवं लुग्रूपे—आदेशे, उपधात्वप्रयुक्ते कार्ये, चङ्परह्रस्वे, कुत्वे च स्थानिवत्त्वं नेत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**उपसंख्यानमिति**—स्थानिवत्त्वनिषेधस्येत्यादिः । एवमग्रेऽपि ।

उद्द्योते—**क्विनिमित्तादेश इति**—तथा चेत्यादिः । **इत्यर्थः**—इत्यप्यर्थः ।

( क्विग्रहणोदाहरणप्रकरणम् )

( आक्षेपभाष्यम् )

**क्वौ किमुदाहरणम् ? ।**

(उद्द्योतः) भाष्ये—**क्वावित्यस्य** क्वौ लुप्तमित्यर्थे उदाहरणम् ॥

( समाधानभाष्यम् )

**कण्डूयतेरप्रत्ययः-कण्डूरिति ॥**

( उद्द्योतः ) **कण्डूरिति** क्यजन्तात् क्विप् । अत्र यण् न, यलोपश्च भवतीति भावः ॥

( तत्त्वालोकः ) उद्द्योते—**अत्रेति**-अल्लोपस्य स्थानिवत्त्वनिषेधेनेति शेषः ।

( समाधानबाधकभाष्यम् )

नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ।।

( उद्द्योतः ) तत्रान्त्यं खण्डयति—यलोपेति ॥

( तत्त्वालोकः ) भाष्ये—नैतदस्तीति—यत इति शेषः । एवमग्रेऽपि ।

उद्द्योते—तत्र—यणभावयलोपयोर्मध्ये । केचित्तु–अस्य 'यलोपप्रतिबन्धकः स्थानिवद्भावो ने'त्यर्थाभ्युपगमेन तस्य तत्प्रतिबन्धकत्वस्येव यण्सम्पादकत्वस्यापि सत्त्वादुभयमपि परिहरन्ति ।

( समाधानान्तरभाष्यम् )

इदं तर्हि—पिपठिषतेरप्रत्ययः । पिपठीः ।।

( बाधकभाष्यम् )

नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ।।

( उद्द्योतः ) पिपठीरिति । अल्लोपस्य स्थानिवत्त्वेन रेफान्तस्यापदत्वाद्दीर्घो न स्यादिति भावः ॥ अत्र रुत्वमप्येतदधीनमेव ॥

( तत्त्वालोकः ) उद्द्योते—दीर्घः–'र्वोरि'ति दीर्घः । एतदिति–स्थानिवत्त्वनिषेधेत्यर्थः । स च 'पूर्वत्रासिद्धे न स्थानिवदि'त्यनेनेति भावः ।

( समाधानान्तरभाष्यम् )

इदं तर्हि—लावयतेर्लौः । पावयतेः पौः ।

( प्रदीपः ) लौरिति । णिलोपस्य स्थानिवत्त्वादूण् न स्यात् ॥

( उद्द्योतः ) लावयतेरिति । ण्यन्तलूधातोरित्यर्थः ॥ ऊण् नेति । क्वौ वान्तस्यानङ्गत्वादिति भावः ॥ ऊठि एत्येधत्यूठ्स्विति वृद्धिः ॥

( बाधकभाष्यम् )

नैतदस्ति । अकृत्वा वृद्ध्यावादेशौ णिलोपः । प्रत्ययलक्षणेन वृद्धिर्भविष्यति ।।

( प्रदीपः ) अकृत्वेति । ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेनेति णिलोपस्ततो वृद्धिः । आवादेशस्तु वर्णाश्रयत्वात् प्रत्ययलक्षणेन न भवति, यथा गोहितमित्यवादेशः । एतच्चान्तरङ्गत्वमनाश्रित्योक्तम् । तत्र त्वाश्रितेऽन्तरङ्गबहिरङ्गयोर्विप्रतिषेधाभावः ॥

( उद्द्योतः ) वर्णाश्रयत्वादिति । अचः परस्मिन्निति स्थानिवत्त्वं तु न, वृद्धेरनादिष्टादचः पूर्वत्वाभावात् ॥ तत्र त्विति । कारक इत्यादौ णिस्थानिकवृद्धिविषये स चरितार्थः । तथैव चातो लोप इति सूत्रे भाष्ये स व्याख्यात इति भावः ॥ परे तु षत्वतुकोरिति ज्ञापकादनित्यत्वेनान्तरङ्गत्वमनाश्रित्य क्वौ लुप्तमिति न कार्यम् , नित्यत्वाच्च पूर्वं णिलोपः । वृद्धिस्त्वकृते णिलोपे उपदेशेन, कृते त्वतिदेशेनेत्यनित्येति पूर्वपक्ष्याशयमाहुः ॥

(तत्त्वालोकः) प्रदीपे—ननु प्रत्ययलक्षणेन वृद्धिरिवावादेशोऽपि स्यादित्यत आह—आवादेशस्त्विति । अत्र दृष्टान्तमाह—यथेति । अन्तरङ्गत्वमिति—वृद्धेरित्यादिः । तत्र तु—तस्मिन् हि ।

उद्द्योते—नन्वेवमपि णिलोपस्य 'अचः' इति स्थानिवत्त्वादावादेशः स्यादित्यत आह—अच इति । स्थानीति—णिलोपस्येत्यादिः । न च तस्याः स्थानिद्वारकस्यानादिष्टादचः पूर्वत्वस्याश्रयणम् , तस्य काचित्कत्वात् ॥ नन्वेवं 'ण्यल्लोपावि'ति वार्त्तिकस्य वैयर्थ्यमित्यत आह—कारक इति । सः—पूर्वविप्रतिषेधः । तत्र मानमाह—तथैव चेति।

( समाधानान्तरभाष्यम् )

इदं तर्हि—लवमाचष्टे लवयति । लवयतेरप्रत्यये लौः, पौः । स्थानिवद्भावात् ऊठ् न प्राप्नोति ।। क्वौ लुप्तं न स्थानिवदिति भवति ।।

( प्रदीपः ) लवमाचष्ट इति । क्वौ विधिं प्रति न स्थानिवदित्यस्यार्थस्य प्रदर्शनायेदमुदाहृतम् ॥ इदं तु क्वौ लुप्तस्योदाहरणं देवयतेर्द्युरिति ॥

( उद्द्योतः ) देवयतेरिति । ण्यन्तदिवेरित्यर्थः ॥ नन्वत्रोठ् क्वौ विधिमित्येव सिद्धः । न चोकारस्य वृद्धिः स्याद्, णेः स्थानिवत्त्वादिति वाच्यम् । ऊठ आदिष्टादचः पूर्वत्वादिति नेदमसाधारणमुदाहरणमिति चेन्न । सखीयतेः सख्युरिति ख्यत्यात् सूत्रभाष्योक्तं, गोमत्यतेर्गोमानिति उगिदचामिति सूत्रभाष्योक्तं, ण्यन्तपदेः पात् पद इति येन विधिरिति सूत्रभाष्योक्तं, कण्डूः पिपठीरित्यादौ यणभावरुत्वयोः सिद्धिश्च तस्यासाधारणमुदाहरणम् ॥ स्थानिद्वारकेऽनादिष्टादचः पूर्वत्वे तु इदमप्युदाहरणमिति बोध्यम् ॥

( तत्त्वालोकः ) प्रदीपे—क्वौ लुप्तस्य –क्वौ लुप्तं न स्थानिवदित्यस्य ।

उद्द्योते—इदम्—द्युरिति । एवमग्रेऽपि । असाधारणमिति–'क्वौ लुप्तमि'त्यस्येति भावः । सखीयतेरिति—यत इत्यादिः । तस्य–'क्वौ लुप्तमि'त्यस्य । इदमपीति—ऊठस्तत्त्वादित्यादिः । तस्यासाधारणमिति शेषः ।

( समाधानबाधकभाष्यम् )

एवमपि न सिध्यति ।।

कथम् ? ।

क्वौ णिलोपो णावकारलोपस्तस्य स्थानिवद्भावादूठ् न प्राप्नोति ।।

(तत्त्वालोकः) एवमपि—'क्वौ लुप्तं न स्थानिवदि'त्याश्रितेऽपि।

( समाधानसाधकभाष्यम् )

नैष दोषः । नैवं विज्ञायते—क्वौ लुप्तं न स्थानिवदिति ।।

कथं तर्हि ? ।

क्वौ विधिं प्रति न स्थानिवदिति ।।

( उद्द्योतः ) नैवं विज्ञायते—क्वौ लुप्तमिति । नैवमेव विज्ञायते, किं त्विदमपि काचित्कं लक्ष्यसिद्धये आश्रयणीयमिति भावः ।

( तत्त्वालोकः ) भाष्ये— नैवमिति—यत इत्यादिः ।

उद्द्योते—यथाश्रुतार्थासङ्गतेराह— नैवमेवेति । अयमत्र संग्रहः–सख्युर्गोमान् पदस्त्वञ्च, क्वौ लुप्तस्य निदर्शनम् । अनित्यत्वे पिपठिषि, क्वौ विधौ लौर्द्वयोर्द्युः ॥ इति ॥

( इति क्विग्रहणोदाहरणनिरूपणम् )

---

( अथ लुग्ग्रहणोदाहरणाधिकरणम् )

( आक्षेपभाष्यम् )

लुकि किमुदाहरणम् ? ।।

( समाधानभाष्यम् )

बिम्बं बदरम् ॥

( प्रदीपः ) बिम्बमिति । बिम्बीबदरीशब्दाभ्यां ङीषन्ताभ्यामनुदात्तादेश्चेत्यञ्, तस्य फले लुक्, लुक् तद्धितलुकीति ङीषो लुकि तस्य स्थानिवद्भावाद्यस्येति लोपः प्राप्नोतीति प्रतिषेध उच्यते। तद्धितस्य स्थानिनः परत्वाल्लुकोपि परत्वाश्रयणात् परनिमित्तकत्वं स्त्रीप्रत्ययलुक आश्रीयते । अन्यथा अभावेन पौर्वापर्याभावात् कुतः परनिमित्तकत्वम् । अथवा बुद्धिपरिकल्पितमभावेनापि पौर्वापर्यं भवति ॥

( तत्त्वालोकः ) प्रदीपे—ङीषन्ताभ्यामिति—गौरादित्वादिति भावः। फले लुक्—'फले लुगि'ति लुक्। प्रतिषेधः—लुकि स्थानिवत्त्वप्रतिषेधः। ननु स्त्रीप्रत्ययलुकः परनिमित्तकत्वाभावात् कथं स्थानिवत्त्वमित्यत आह—तद्धितस्येति । स्थानिनः—स्त्रीप्रत्ययात् । लुकोऽपीति—तद्धितलुकोऽपीत्यर्थः । तस्मादिति शेषः ।

( समाधानबाधकभाष्यम् )

नैतदस्ति । पुंवद्भावेनाप्येतत्सिद्धम् ॥

( प्रदीपः ) पुंवद्भावेनेति । भस्याढे तद्धित इति पुंवद्भावः॥ अत्र च भाषितपुंस्कत्वं नाश्रीयते इत्येवमुक्तम् । तदाश्रये तु नास्ति पुंवद्भावः॥

( उद्द्योतः ) तदाश्रये इति । वृक्षजातिः स्त्रियामिति लिङ्गानुशासनाद् वृक्षे स्त्रीलिङ्गत्वं फले च नपुंसकत्वमिति भावः॥ वस्तुत आम्र इत्यादौ लिङ्गानुशासनस्य व्यभिचारादेतद्भाष्यप्रामाण्याच्च बिम्बबदरामलका वृक्षेऽपि त्रिलिङ्गा इत्याहुः॥

( तत्त्वालोकः ) उद्द्योते—कैयटोक्तं लिङ्गानुशासनञ्च दूषयन् तत्र भाषितपुंस्कत्वाश्रयणेऽपि भाष्यं योजयति-वस्तुत इति । अपिना—फलस्य परिग्रहः ।

( समाधानान्तरभाष्यम् )

इदं तर्हि—आमलकम् ॥

( प्रदीपः ) आमलकमिति । वृद्धत्वाद् मयटो विधानाद्भत्वाभावः ॥

( तत्त्वालोकः ) भाष्ये—आमलकम्—आमलक्याः फलमामलकम् । तद्धित-स्त्रीप्रत्ययलुगादिप्रक्रिया पूर्वत्रैवात्र बोध्या ।

प्रदीपे—भत्वाभाव इति—तथा चात्र 'भस्याढे' इत्यस्य प्राप्तिरेव नास्तीति भावः ।

( समाधानबाधकभाष्यम् )

नैतदस्ति । वक्ष्यत्येतत्—॥फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वाद्॥ इति ।

( प्रदीपः ) प्रकृत्यन्तरत्वादिति । बिम्बबदरामलकादयो न यौगिकाः शब्दाः। किं तर्हि, विशिष्टफलजातिवाचिन इत्यर्थः॥

( उद्द्योतः ) किंतर्हीति । यौगिकत्वे हि वृक्षसंबन्धात् फले, न पुनः फलसंबन्धाद्वृक्षे इत्यत्र विनिगमनाऽसंभवादिति भावः ॥ विशिष्टेति । विजातीयेत्यर्थः॥

( तत्त्वालोकः ) उद्द्योते—तेषां यौगिकत्वाभावे बीजमाह—यौगिकत्वे हीति । बिम्बादिशब्दानामिति शेषः । फले इति—वृत्तिरिति शेषः । न पुनः—न तु । वृक्षसम्बन्धविशिष्टेत्यर्थे दोषस्योक्तत्वादाह—विजातीति ।

( समाधानान्तरभाष्यम् )

इदं तर्हि—पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः, दशपटुरिति ॥

( प्रदीपः ) पञ्चभिरिति । आर्हादिति ठक्, तस्याध्यर्धपूर्वेति लुक् । लुक् तद्धितलुकीति ङीषो लुक् । अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इति यणादेशः पूर्वं न प्रवर्तते। कृते तु लुकि तस्य स्थानिवत्त्वाद्यणः प्रसङ्ग इति स्थानिवत्त्वनिषेध उच्यते। अव्यविकन्यायेन पटुशब्दान्तादेव ठग् भविष्यति, न तु पट्वीशब्दान्तादिति चेत्प्रतिपत्तिगौरवप्रसङ्गः॥

( उद्द्योतः ) अन्तरङ्गानपीति। अस्य न्यायस्यान्तरङ्गनिमित्तविनाशकलुक एव तदन्तरङ्गबाधकताबोधकत्वे तु तत्परिभाषाप्रवृत्त्यभावसंपादकस्थानिवत्त्वनिषेधायेदमिति बोध्यम्॥ अव्यविकेति । वोतो गुणेति ङीषो वैकल्पिकत्वादिति भावः॥ प्रतिपत्तिगौरवेति। ज्ञानगौरवेत्यर्थः॥

( तत्त्वालोकः ) प्रदीपे— पूर्वमिति—ङीषो लुक इत्यादिः । लुकि—ङीषो लुकि । स्थानिवत्त्वनिषेध इति—लुकीत्यादिः । प्रतिपत्तीति—तर्हीत्यादिः ।

उद्द्योते—न'न्वन्तरङ्गानपी'त्यस्य न्यायस्य न पूर्वमन्तरङ्गाप्रवृत्तिबोधकत्वम्, किन्तु लुकोऽन्तरङ्गबाधकताबोधकत्वमिति बाधादेव कृतेऽपि ङीषो लुकि यणादेशाप्रसङ्ग एवेति न लुकि स्थानिवत्त्वनिषेधोपयोग इत्यत आह—अस्येति । तत्परिभाषेति—अन्तरङ्गपरिभाषेत्यर्थः। सम्पादकेति—इदं स्थानिवत्त्वविशेषणम् । ङीषो लुकः स्थानिवत्त्वे ह्यन्तरङ्गपरिभाषा न प्रवर्त्तेत, बहिरङ्गस्य ङीष्लुकोऽसत्त्वादित्याशयः। प्रक्रियागौरवासत्त्वादाह—ज्ञानेति ।

( समाधानबाधकभाष्यम् )

ननु चैतदपि पुंवद्भावेनैव सिद्धम् ॥

कथं पुंवद्भावः ? ।

॥भस्याढे तद्धिते॥ पुंवद्भवतीति ॥

( समाधानसाधकभाष्यम् )

भस्येत्युच्यते । यजादौ च भसंज्ञा भवति ।

न चात्र यजादिं पश्यामः ॥

( तत्त्वालोकः ) भस्येत्युच्यते इति—नैतत्पुंवद्भावेन सिद्धम्, यतस्तत्रेत्यादिः ।

( समाधानबाधकभाष्यम् )

प्रत्ययलक्षणेन यजादिः ॥

( समाधानसाधकभाष्यम् )

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥

( प्रदीपः ) वर्णाश्रय इति । यद्यपि पुंवद्भावे सिद्धश्च प्रत्ययविधावित्यस्ति, तथापि यत्र भावि भत्वं तत्र पुंवद्भावः। इह तु लुकि भत्वाभावात्कुतः पुंवद्भावः॥

( उद्द्योतः ) ननु भसंज्ञकस्य न पुंवत्त्वम्, येन वर्णाश्रयतया भत्वाभावेन पुंवत्त्वं न स्यात्, किन्तु तत्प्रत्ययविषये पूर्वमेव पुंवत्त्वप्रतिपत्तिरत आह—यद्यपीति॥ इह तु लुकीति। अनेन न लुमतेति निषेधान्न प्रत्ययलक्षणम्। किञ्च ढभिन्नतद्धितविषयाभावा-

दपि न तत्प्रवृत्तिरित्यपि ध्वनितम् । किञ्चान्तरङ्गानपीति न्यायेनेकादेशात्पूर्वमेव लुकि प्रत्ययलक्षणसत्त्वेऽपि यजादित्वाभावान्न भत्वम् । न च वर्णप्राधान्याभावात्कथं **वर्णाश्रये नास्ती**त्युक्तिर्भगवत इति वाच्यम् । **प्रत्ययलक्षण**सूत्रस्य नियमार्थत्वमिति पक्षेऽदोषात् ॥

**( तत्त्वालोकः )** उद्द्योते—**तत्प्रत्ययेति**—भसंज्ञानिमित्तप्रत्ययेत्यर्थः । **प्रतिपत्तिरिति**—अत एव युवतीनां समूहो यौवनमित्यत्र **पूर्वं पुंवद्भावेन** तिप्रत्ययाप्राप्तावाद्युदात्तत्वाद् युवन्शब्दाद् अण्प्रत्यये सिद्धे 'अनुदात्तादेरञि'त्यञ्बाधनार्थं भिक्षादिषु युवतिग्रहणं न कर्तव्यमित्यर्थकं 'भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वा-दि'ति वार्त्तिकं सङ्गच्छते इति भावः । **तदिति**—पुंवत्त्वेत्यर्थः । **इकादेशात्**—'ठस्येकः' इतीकादेशात् । **सत्त्वेऽपीति**—आङ्गस्यैवास्य 'न लुमते'ति निषेध इति भावः । **नियमेति**—प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते, तत्रैव प्रत्ययलक्षणं भवति । अत्र तु–यजादित्वमाश्रीयते, तच्च प्रत्ययाप्रत्ययसाधारणम् । 'वर्णाश्रये' इति चात्र पक्षे नास्ति । एवञ्च–तद्वार्त्तिककारमतमिति न विरोधः सिद्धान्त्युक्ताविति भावः ।

**( समाधानबाधकभाष्यम् )**

**एवं तर्हि—'ठक्छसोश्च' इत्येवं भविष्यति ॥**

**( तत्त्वालोकः ) इत्येवम्**—इति पुंवत्त्वम् ।

**( समाधानसाधकभाष्यम् )**

**ठक्छसोश्चेत्युच्यते । न चात्र ठक्छसौ पश्यामः ॥**

**(तत्त्वालोकः) ठक्छसोश्चेति**–नानेनापि पुंवत्त्वम् , यत इत्यादिः ।

**( बाधकभाष्यम् )**

**प्रत्ययलक्षणेन ॥**

**( तत्त्वालोकः ) लक्षणेनेति**—ठक्छसावित्यनुषज्यते ।

**( समाधानसाधकभाष्यम् )**

**'न लुमता तस्मिन्' इति प्रत्ययलक्षणस्य प्रतिषेधः ॥**

**न खल्वप्यवश्यं ठगेव क्रीतप्रत्ययः, क्रीताद्यर्था एव वा तद्धिताः ॥**

**किं तर्हि ? ।**

**अन्येऽपि तद्धिता ये लुकं प्रयोजयन्ति । पञ्चेन्द्राण्यो देवता अस्येति पञ्चेन्द्रः । दशेन्द्रः । पञ्चाग्निः । दशाग्निः ॥**

**( प्रदीपः ) किंतर्ह्यन्येऽपीति** । यत्र पुंवद्भावो नास्ति ॥ **पञ्चेन्द्र इति । साऽस्य देवते**त्यण् , तस्य **द्विगोर्लुगनपत्य** इति लुक् , ततो ङीषो लुक् । तस्य स्थानिवत्त्वाद् ङीष्संनियुक्त आनुक् श्रूयेत, यथेन्द्राणीति । तथा पञ्चाग्नाय्यो देवता अस्य पञ्चाग्निरिति ऐकारः श्रूयेत । समानायामाकृतौ भाषितपुंस्कत्वाभावाद्वर्णाश्रयत्वाद्भत्वाभावाच्च पुंवद्भावो नास्ति । अथवा **यस्येति** लोपप्रसङ्गः । लुकि च स्थानिवत्त्वनिषेधादादीध्य इति **परस्मि**न्नित्यस्य पूर्वसूत्रे प्रत्युदाहरणमुपपद्यते । शब्लुकि कृते टेरेत्वस्य स्थानिवद्भावादव्यवधानाच्च लोपप्रसङ्गात् ॥

**( उद्द्योतः ) न लुमताङ्गस्ये**ति यथाश्रुतेऽभ्युपेत्याऽपि **ठक्छसोश्चे**ति पुंवत्त्वं, भाष्ये आह—**न खल्वपीति** ॥ नन्वानुङ् न ङीषीत्युच्यते , येन स्थानिवत्त्वेन तदापत्तिरत आह—**संनियुक्त इति** । एवं च संनियोगशिष्टपरिभाषाप्राप्तानुङ्निवृत्तिप्रतिबन्धद्वारा आनुग्रक्षणमेव पूर्वविधिरिति भावः ॥ अत एवैनेय इत्यादौ **यस्येति** लोपे नस्य श्रवणम् । अत एवाचः **परस्मिन्निति** सूत्रे विधिशब्दस्य भावसाधनत्वे पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति पूर्वः स्यादिति स्थानिवदित्यर्थ उक्तः । पूर्वः स्यादित्यस्य पूर्वः स्थितः स्यादित्यप्यर्थो बोध्यः । एवं च पूर्वसूत्रे तन्त्रेणोभयसाधनविधिशब्दघटितग्रहणम् । यत्तु कैयटादिभिः **संनियोगशिष्ट**परिभाषाऽनित्यत्वेनेदं साधितम् । तद्वृथैव ॥ नन्वत्रापि **भस्याढे** इति पुंवत्त्वं स्यादत आह—**समानायामिति ।** पुंसि इन्द्रत्वादि प्रवृत्तिनिमित्तं, स्त्रियां तु तत्संबन्ध इति भावः ॥ नन्वेवमग्नायी देवता अस्याग्नेयं हविरिति उदाहरणासिद्धिस्तस्मादारोपितेन्द्रत्वाद्येव स्त्रियामपि प्रवृत्तिनिमित्तमित्यत आह–**वर्णाश्रयत्वादिति ।** अणो लुकि **न लुमते**ति निषेधाद् ढभिन्नतद्धितविषयाभावाच्चेत्यपि बोध्यम् ॥ **अथवेति ।** ङीलुकः स्थानिवत्त्वेन भत्वादीकारपरत्वाच्चेति भावः ॥ **शब्लुकीति ।** अन्यथा शब्लुकः स्थानिवत्त्वेन व्यवधानात्प्राप्तिरेव नेति भावः ॥ वस्तुतः शब्लुकः परनिमित्तकत्वाभावादेव न स्थानिवत्त्वप्रसक्तिः । अत एव जुहुत इत्यादौ श्लोः स्थानिवत्त्वान्न गुणः ॥

**( तत्त्वालोकः )** भाष्ये—ठक्छसोश्चेत्यस्यानाङ्गत्वादाह—**तस्मिन्निति । खल्वपीति**—अयं निपातसमुदायो निश्चयार्थकः । **क्रीतप्रत्ययः**—क्रीतार्थकप्रत्ययः । **अन्येऽपि**—अन्यार्थका अपि ।

उद्द्योते—**स्थानिवत्त्वेनेति**—ङीपो लुक इति भावः । **तदापत्तिः**—आनुक्श्रवणापत्तिः । **एवञ्चेति**—आनुको ङीषा संनियुक्तत्वे चेत्यर्थः । ङीषो लुकीति शेषः । **प्रतिबन्धेति**—ङीपो लुकः स्थानिवत्त्वेनेति भावः । **अत एव**—एवं रीत्या स्थानिवत्त्वाभ्युपगमादेव । एवमग्रेऽपि । **लोपे**—ईकारलोपे । ननु तावता कथमुक्तरीत्या स्थानिवत्त्वस्य लाभ इत्यत आह—**पूर्वः स्यादित्यस्येति । एवञ्च**—तथाऽप्यर्थे च । **उभयेति**—कर्मभावोभयेत्यर्थः । **इदम्**—एनेय इत्यादि । **तद्वृथैवेति**—उक्तरीत्या तत्सिद्धेरिति भावः । **अत्रापि**—पञ्चेन्द्र इत्यादावपि । **एवम्**—प्रवृत्तिनिमित्तभेदे । **असिद्धिरिति**–'भस्याढे' इत्यत्राढे इति निषेधस्य 'स्त्रीभ्यो ढगि'ति ढग्मात्रविषयत्वेनात्र 'अग्नेर्ढगि'ति ढग्विषये इष्टपुंवद्भावाभावादिति भावः । **अन्यथा**–लुकि स्थानिवत्त्वनिषेधाभावे । **भाव इति**–तथा च—पूर्वसूत्रे परस्मिन्नित्यस्यादीध्य इति प्रत्युदाहरणं न स्यादित्याशयः । इदमपि पूर्वसूत्रे परस्मिन्नित्यस्याभावे, तस्य सत्त्वे तु नेत्याह—**वस्तुत इति । अत एव**—परनिमित्तकत्वाभावादेव । **गुण इति**—इति बोध्यमिति शेषः ।

**( इति लुग्ग्रहणोदाहरणनिरूपणम् )**

**( अथोपधात्वोदाहरणनिरूपणम् )**

**( आक्षेपभाष्यम् )**

**उपधात्वे किमुदाहरणम् ? ।**

**( समाधानभाष्यम् )**

**पिपठिषतेरप्रत्ययः—पिपठीरिति ॥**

**( समाधानबाधकभाष्यम् )**

**नैतदस्ति । दीर्घविधिं प्रति न स्थानिवत् ॥**

**( समाधानान्तरभाष्यम् )**

**इदं तर्हि—सौरी बलाका ॥**

**( समाधानबाधकभाष्यम् )**

**नैतदस्ति । यलोपविधिं प्रति न स्थानिवत् ॥**

( समाधानान्तरभाष्यम् )

इदं तर्हि—पारिखीयः ॥

( प्रदीपः ) **पारिखीय इति** । परिखाशब्दाच्चातुरर्थिकेऽणि कृते आकारलोपस्य स्थानिवत्त्वात् पारिखे भव इति **वृद्धादकेकान्तखोपधादि**ति च्छो न स्यात् ॥

( तत्त्वालोकः ) प्रदीपे—**छो न स्यादिति**—खोपधत्वाभावादिति भावः ।

( इत्युपधात्वोदाहरणनिरूपणम् )

---

( अथ चङ्परनिर्ह्रासोदाहरणनिरूपणम् )

चङ्परनिर्ह्रासे चोपसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन ॥

किं पुनः कारणं न सिध्यति ? ।

योऽसौ णौ णिर्लुप्यते तस्य स्थानिवद्भावाद्ध्रस्वत्वं न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—**योऽसौ णाविति । णेर्णिच्युपसङ्ख्यानमि**ति सिद्धमेतत् ॥ वक्तृभेदान्न दोष इति तत्त्वम् ॥ अत एव ज्ञापकात्प्रायोगिकमच्स्थानिकादेशत्वमेवाचः **परस्मि**न्नित्येतत्प्रवृत्त्युपयोगीति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—'किलुगि'ति वार्तिकस्थोपसंख्यानपदस्य 'द्वन्द्वान्ते' इति न्यायेनान्वयमभिप्रेत्य तत्रत्यं 'चङ्परनिर्ह्रास' इत्यंशं व्याचष्टे—**चङ्परेति** । चङ्परे णौ यो ह्रस्वः स चङ्परनिर्ह्रासस्तत्र कर्तव्ये इत्यर्थः । केचित्तु—'क्वौ किमुदाहरणमि'त्याद्युपक्रमसत्त्वादत्राग्रे च 'चोपसंख्यानं कर्तव्यमि'त्यत्र 'किमुदाहरणमि'त्येव पाठो युक्तः । अन्यथा तत्रापि 'चोपसंख्यानं कर्तव्यमि'त्येव वदेदिति वदन्ति । वस्तुतस्तु—स्वतन्त्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वादुभयमपि साध्वेवेति बोध्यम् । **ह्रस्वत्वम्**—'णौ चङ्यी'ति ह्रस्वत्वम् । आकारस्योपधात्वाभावादिति भावः ।

उद्द्योते—नन्वेवं पौनरुक्त्यापत्तिरित्यत आह—**वक्तृभेदादिति** । वार्तिककाराणामनेकत्वादित्यर्थः । **अत एव**—अस्मादेव । **एवेन**—सौत्रस्य व्यवच्छेदः । अन्यथा सूत्रे 'णेरि'ति षष्ठीनिर्देशेन लोपस्य सौत्राच्स्थानिकादेशत्वाभावादेव स्थानिवत्त्वाप्रसक्तौ तन्निषेधो व्यर्थ एव स्यादित्याशयः ।

( बाधकभाष्यम् )

ननु चैतदप्युपधात्वविधिं प्रति न स्थानिवदित्येव सिद्धम् ॥

( साधकभाष्यम् )

विशेषत एतद्वक्तव्यम् ।

क ? ।

प्रत्ययविधाविति । इह मा भूत्—पटयति लघयतीति ॥

( उद्द्योतः ) **प्रत्ययविधाविति** । अत एव चङ्परह्रस्वे निषेधः सार्थकः ॥ ननूपधात्वे स्थानिवत्त्वनिषेधेऽपि ञ्णित्परत्वांशे णित्परत्वांशे च तस्य दुर्वारत्वेन न पटयतीत्यादौ वृद्धिर्नापि ह्रस्वे निषेधो व्यर्थ इति चेन्न । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन ञ्णिति णावित्यादेरङ्गविशेषणत्वस्यैवौचित्यात् । उपधात्वप्रयुक्तकार्ये एव तन्निषेधेन णित्परत्वांशेऽपि स्थानिवत्त्वनिषेधाच्च ॥

( तत्त्वालोकः ) भाष्ये—**विशेषतः**—विशेषे । अस्य 'नैतदुपधात्वे न स्थानिवदित्यनेन सिद्धम्, यतः' इत्यादिः । **एतद्**—'उपधात्वे न स्थानिवदि'त्येतत् । **इहेति**—वृद्धौ टिलोपस्य स्थानिवत्त्वनिषेध **इति** शेषः । यदि—'उपधात्वे न स्थानिवदि'त्यस्य 'उपधात्वनिमित्तके विधौ न स्थानिवदि'त्यर्थः स्यात्तर्हि पटयतीत्यादौ-उपधात्वनिमित्तकवृद्धौ कर्तव्यायां टिलोपस्य स्थानिवत्त्वनिषेधेन वृद्धिरापद्येत । अतस्तस्य—उपधात्वनिमित्तकप्रत्ययविधौ न स्थानिवदित्यर्थो ग्राह्यः । तथा च—पटयतीत्यादौ तन्निमित्तकप्रत्ययविध्यभावान्न तस्य स्थानिवत्त्वनिषेधापत्तिरिति भावः ।

उद्द्योते—अत्र मानमाह—**अत एवेति** । तस्य तादृशार्थकरणादेवेत्यर्थः । अन्यथा—चङ्परह्रस्वस्याप्युपधात्वनिमित्तकत्वात्तेनैवात्रापि निषेधसिद्धेः चङ्परनिर्ह्रासग्रहणं व्यर्थमिति भावः । तस्य यथाश्रुतार्थाशयेन; कार्यनिमित्तमुपधाविशेषणम्, अत एव चङ्परह्रस्वे स्थानिवत्त्वनिषेधसार्थक्यमित्याशयेन चाह—**ननूपधात्वे इति । निषेधेऽपि**—निषेधेनोपधात्वेऽपि । **तस्य**—स्थानिवत्त्वस्य । तथा च—प्रत्ययविधाविति व्यर्थमित्याशयः । **औचित्यादिति**—एवञ्चाङ्गस्य णिदादिपरत्वस्य सत्त्वेन, उपधात्वे स्थानिवत्त्वनिषेधादुपधात्वेन च पटयतीत्यादौ वृद्ध्यापत्तिः, अवीवददित्यत्र च ह्रस्वोपपत्तेस्तत्र निषेधस्य वैयर्थ्यञ्चेति प्रत्ययविधावित्यावश्यकमेवेति भावः । कार्यनिमित्तस्योपधाविशेषणत्वमभ्युपेत्यापि तत्र विधावित्यध्याहारेणाह—**उपधात्वेति** ।

( इति चङ्परनिर्ह्रासोदाहरणनिरूपणम् )

( अथ कुत्वोदाहरणनिरूपणम् )

कुत्वे चोपसंख्यानं कर्तव्यम् । अर्चयतेरर्कः । मर्चयतेर्मर्कः ॥

( उद्द्योतः ) **अर्क इति** । कर्मणि घञ् । **चजोरि**ति कुत्वमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**कर्तव्यमिति**—अन्यथा णिलोपस्य स्थानिवत्त्वात्कुत्वं न स्यादिति भावः । **अर्कः**—सूर्यः । **मर्कः**—वानरः ।

( उपसंख्यानबाधकभाष्यम् )

नैतद् घञन्तम् । औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम् ॥

( उद्द्योतः ) **नैतद् घञन्तमिति** ॥ **एरचः** प्रसङ्गादित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**नैतदिति**—न कर्तव्यम्, यत इत्यादिः । **औणादिक इति**—किन्त्वत्रेत्यादिः । **आष्टमिकं**—'चोः कुरि'त्याष्टमिकम् ।

( उपसंख्यानसाधकभाष्यम् )

एतदपि णिचा व्यवहितत्वान्न प्राप्नोति ॥

( उद्द्योतः ) **एतदपीति** । एवं च कुत्वे इत्यावश्यकमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—**एतदपीति**—आष्टमिकमपीत्यर्थः । कर्तव्यम्, यत इत्यादिः ।

( ४१७ आक्षेपवार्तिकम् ॥ ३ ॥ )

॥ * ॥ पूर्वत्रासिद्धे च ॥ * ॥

( भाष्यम् )

पूर्वत्रासिद्धे च न स्थानिवदिति वक्तव्यम् ॥

**( उद्द्योतः )** वस्तुतस्तदनावश्यकमित्याह-**पूर्वत्रासिद्धे इति । अचः परस्मिन्नि**त्येतददृष्ट्या त्रिपाद्या असिद्धत्वेन न्यायसिद्धानुवादोऽ-यम् । तत्फलं त्वतिदेशान्तराणां वतिघटितानां**मन्तादिव**दित्यादीनां त्रिपाद्यां प्रवृत्तिबोधनम् । तेनामी, क्षीरपेणेत्यादौ तत्सिद्धिरिति दिक् ॥

**( तत्त्वालोकः )** भाष्ये-**पूर्वत्रेति**—न कर्तव्यम्, यत इत्यादिः । इह सूत्रे 'जश्भावि'त्येव सिद्धे विधिग्रहणं द्वन्द्वाश्रयेण विध्यन्तरोप-सङ्ग्रहार्थम् । तद्व्युत्पादनार्थञ्च 'क्किलुगि'त्यादि वार्त्तिकमिति निष्कर्षः । तत्र च—क्किचङ्परनिर्ह्रासोपधात्वानामेव ग्रहणमावश्यकम्; लुक ईकारप्रश्लेषेण गतार्थत्वात्, कुत्वस्य च पूर्वत्रासिद्धीयत्वेन तत्र प्रकृत-वार्त्तिकेनैव निषेधादित्याशयः ।

उद्द्योते—**तत्**—कुत्वे इत्येतत् । **तत्सिद्धिः**—प्रगृह्यसंज्ञाण-त्वादिसिद्धिः ।

**( भाष्यम् )**

**किं प्रयोजनम् ? ।**

**( ४१८ प्रयोजनवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ प्रयोजनं क्सलोपः सलोपे ॥ * ॥

**( भाष्यम् )**

**क्सलोपः सलोपे प्रयोजनम् । अदुग्ध अदुग्धाः । 'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति लुग्ग्रहणं न कर्तव्यं भवति ॥**

**( प्रदीपः ) क्सलोप इति ।** अदुग्धार्थं लुग्वचनं कर्तव्यमेव । तदर्थं-**लुग्ग्रहणं ने**ति च्छेदं कुर्वन्ति । **कर्तव्यं भवती**त्युत्तरम् । अवश्यकार्यमित्यर्थः ॥

**( उद्द्योतः ) अदुग्धेति ।** क्सस्यान्त्यलोपे झलो झलीति सलोपे तदीयाल्लोपस्य स्थानिवत्त्वं न ॥

**( तत्त्वालोकः )** भाष्ये—**लुग्ग्रहणं न कर्तव्यं भवतीति**—यदि—'लुग्वा दुहे'ति सूत्रे 'घोर्लोपो लेटि वे'ति सूत्रात् लोपपदानु-वृत्तिरेव क्रियेत, न तु लुग्ग्रहणम्; तर्हि—अलोऽन्त्यपरिभाषासह-कृतेन तेन क्साकारस्यैव लोपे 'झलो झली'ति सलोपे कर्तव्ये तस्य स्थानिवत्त्वेन झल्परत्वाभावात्सस्य लोपो न सिद्ध्येदिति तत्र लुग्ग्र-हणं कर्तव्यम् । कृते तु तस्मिन् तत्सामर्थ्यात्तेन क्सस्यैव लोपो न तु तदकारस्येतीष्टसिद्धिः । पूर्वत्रासिद्धीये स्थानिवत्त्वनिषेधाङ्गीकारे तु तस्य स्थानिवत्त्वासम्भवात्तत्र लुग्ग्रहणं न कर्तव्यमिति भावः ।

उद्द्योते—'क्सलोपः सलोपे प्रयोजनमि'ति भाष्यं व्याचष्टे—**क्सस्यान्त्यलोपे इति ।** कृते इति शेषः । **सलोपे इति**—कर्तव्ये इति शेषः । **तदीयेति**—क्ससम्बन्धीत्यर्थः । **स्थानिवत्त्वं नेति**—'इति प्रयोजनमित्यर्थः' इति शेषः ।

**( ४१९ प्रयोजनवार्तिकम् ॥ ५ ॥**

## ॥ * ॥ दध आकारलोप आदिचतुर्थत्वे ॥ * ॥

**( भाष्यम् )**

**दध आकारलोप आदिचतुर्थत्वे प्रयोजनम् । धत्से धद्ध्वे धद्ध्वमिति 'दधस्तथोश्च' इति चकारो न कर्तव्यो भवति ॥**

**( प्रदीपः ) चकारो न कर्तव्य इति ।** झषन्तत्वात् पूर्वेणैव सिद्धत्वात् ॥

**( उद्द्योतः ) चतुर्थत्वे इति ।** भष्भावे इत्यर्थः ॥ **चकार इति ।** स्ध्वोरित्यनुकर्षणार्थ इत्यर्थः ॥ **पूर्वेणेवेति । एकाचो बश** इत्यनेनेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**आकारलोपे इति**—कृते इति शेषः । **आदिचतुर्थत्वे प्रयोजनमि**ति—नस्यादेर्दस्य भष्भावे कर्तव्ये—आकारलोपस्य स्थानिवत्त्वनिषेधः प्रयोजनमित्यर्थः ।

**( ४२० प्रयोजनवार्तिकम् ॥ ६ ॥**

## ॥ * ॥ हलो यमां यमि लोपे ॥ * ॥

**( भाष्यम् )**

**हलो यमां यमि लोपे प्रयोजनम् । आदित्यः । 'हलो यमां यमि लोपः' सिद्धो भवति ॥**

**( तत्त्वालोकः ) लोपे प्रयोजनम्**—लोपे कर्तव्येऽकारलोपस्य स्थानिवत्त्वनिषेधः प्रयोजनम् । अन्यथा तस्य स्थानिवत्त्वेन व्यवधा-नात् पूर्वयकारलोपो न स्यादिति भावः ।

**( ४२१ प्रयोजनवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ अल्लोपणिलोपौ संयोगान्तलोप-प्रभृतिषु ॥ * ॥

**( भाष्यम् )**

**अल्लोपणिलोपौ संयोगान्तलोपप्रभृतिषु प्रयोजनम् । पापच्यतेः पापक्तिः । यायज्यतेर्यायष्टिः । पाचयतेः पाक्तिः । याजयतेर्याष्टिः ।**

**(प्रदीपः) पापक्तिरिति ।** क्तिच् । संयोगान्तलोपादयः पदान्तविधौ स्थानिवत्त्वनिषेधात्सिद्धा इति भाष्ये नोदाहृताः । स्कन्दयतेः स्कन्, काष्ठं तक्षयतीति काष्ठतक् । **संयोगादिलोपलत्वणत्वेष्विति** वचना-त्संयोगादिलोपे स्थानिवत्त्वात्तदभावादत्र संयोगान्तलोपः । दोहय-तेर्धोक् । लेहयतेर्लेट् । उणादीनामव्युत्पन्नत्वात् किर्योर्गिर्योरित्यत्र दीर्घाभावः ॥

**( उद्द्योतः )** ननु संयोगान्तलोपप्रभृतिषु इत्युक्त्वा तं विहाय कुत्वाद्युदाहरणदाने बीजाभावोऽत आह—**संयोगान्तेति । पदा-न्तेति ।** चिन्त्यमेतत् । पदचरमावयव एव तन्निषेधात् परपदस्था-जादेशस्यैव तेन स्थानिवत्त्वनिषेधाच्चेति ॥ तदुदाहरणानि दर्शयति—**स्कन्दयतेरित्यादिना । काष्ठतगिति ।** न च **काष्ठशगेव नास्ति,** कुतः **काष्ठशकुस्थाते**ति **परेऽ**श्चेति सूत्रस्थभाष्याद् प्रमाणमनभिधान-मिति वाच्यम् । यत्र संयोगादिलोपप्रसक्तिस्तद्विषयत्वेनानभिधान-स्यादोषात् ॥ नन्वत्र संयोगादिलोपः प्राप्नोति । न च तत्र पदान्त-विधित्वमिति न तेन सिद्धिरत आह—**संयोगादिलोपे**ति ॥ केचित्तु एतद्भाष्यप्रामाण्यादेषां प्रयोगाणामनभिधानमेवेत्याहुः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रभृतिष्विति**—कर्तव्येषु स्थानिवन्मा भूतामितीति शेषः ।

प्रदीपे—**तदभावात्**—संयोगादिलोपाभावात् । **अत्र**—काष्ठत-गित्यत्र । ननु 'पूर्वत्रासिद्धे न स्थानिवदि'त्यङ्गीकारे किर्योर्गिर्योरित्यत्र 'हलि चे'ति दीर्घापत्तिरित्यत आह—**उणादीनामिति ।** एवञ्च—रेफान्तधातुत्वाभावान्न तत्र तेन दीर्घ इति भावः ।

उद्द्योते—**आदिना**—षत्वपरिग्रहः । **तदुदाहरणानि**—संयो-गान्तलोपप्रभृत्युदाहरणानि । **तद्विषयत्वेनानभिधानस्येति**—अत्र-

अनभिधानस्य तद्विषयत्वेनेत्यन्वयः । अदोषादिति—काष्ठतगित्यत्र झलोपस्य स्थानिवत्त्वान्न संयोगादिलोपप्रसक्तिरित्याशयः । अत्र—काष्ठतगित्यत्र । न च तत्र—नहि संयोगादिलोपे । तेन—पदान्तविधावित्यनेन । एतद्भाष्येति—तदुक्तोदाहरणकथनपरभाष्येत्यर्थः । एषाम्—काष्ठतगित्यादीनाम् ।

( ४२२ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ द्विर्वचनादीनि च ॥ * ॥

( भाष्यम् )

द्विर्वचनादीनि च न पठितव्यानि भवन्ति । पूर्वत्रासिद्धेनैव सिद्धानि भवन्ति ॥

किमविशेषेण ? ।

नेत्याह ।

( तत्त्वालोकः ) पूर्वत्रासिद्धेनैवेति—'पूर्वत्रासिद्धे चे'ति वचनेनैवेत्यर्थः । यत इत्यादिः । अविशेषेणेति—तानि न पठितव्यानि भवन्तीति शेषः । अत्र 'अशेषेण' इति पाठो युक्तः ।

( शेषवार्तिकखण्डम् ॥ ८ ॥ )

## ॥ * ॥ वरेयलोपस्वरवर्जम् ॥ * ॥

( भाष्यम् )

वरेयलोपं स्वरं च वर्जयित्वा ॥

( उद्द्योतः ) भाष्ये—वरेयलोपं स्वरमिति । सवर्णानुस्वारदीर्घादयः साहचर्यात् त्रैपादिका एव गृह्यन्ते इति भावः ॥ नन्वेवं यङन्ताण्णिजन्तप्रकृतिकण्यन्ताद्वा चिणि अशंशामि अशामीत्यादौ दीर्घो न स्यात्, णिलोपाल्लोपयोः स्थानिवत्त्वादिति चेन्न । णेर्णिच्युपसङ्ख्यानादशामीत्यस्य सिद्धेः ॥ अशंशामीति तु यङ्लुगन्ताण्णिचि भविष्यति । न हि यङ्यङ्लुकोः स्वरे रूपे वा विशेषः । ग्राहितमित्यादौ विहितविशेषणाश्रयणान्न दीर्घ इति दिक् ॥ अन्ये तु तृतीयषष्ठाध्यायस्थभाष्यप्रामाण्यादत्र दीर्घमप्युपलक्षयन्ति । एतच्च तत्रैव निरूपयिष्यामः ॥

( तत्त्वालोकः ) उद्द्योते—एवम्—वर्ज्यकोटौ दीर्घस्याग्रहणे । न च 'चिण्णमुलोरि'ति सूत्रे दीर्घग्रहणसामर्थ्यात् स्थानिवत्त्वबाधः, 'अहिडि, अहीडि' इत्यनयोः सिद्ध्यर्थन्तस्यावश्यकत्वात् । अन्यथा—ह्रस्वविकल्पे 'अहेडि' इत्यापद्येत । नन्वेवमपि यङन्ते न सिद्ध्येदित्यत आह—न हीति । सूत्रकारमतेनाह-ग्राहितमित्यादाविति । अत्र-वर्ज्यकोटौ ।

( ४२३ प्रतिप्रसववार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ तस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥ * ॥

( भाष्यम् )

तस्यैतस्य लक्षणस्य दोषः संयोगादिलोपलत्वणत्वेषु ॥

( तत्त्वालोकः ) एतस्य—'पूर्वत्रासिद्धे चे'त्यस्य । दोषः—अतिप्रसक्तिः । तस्मात्तत्र स्थानिवद्भावस्य प्रतिप्रसवः कर्तव्य इति भावः ।

( उदाहरणभाष्यम् )

संयोगादिलोपे—काक्यर्थम् वास्यर्थम् । 'स्कोः संयोगाद्योरन्ते च' इति लोपः प्राप्नोति ॥

( उद्द्योतः ) भाष्ये काक्यर्थमिति । न च स्कोरिति सूत्रे झल्ग्रहणापकर्षेण झलन्तसंयोगस्यैव ग्रहणात् प्रकृते न दोष इति वाच्यम् । झलो लोपः संयोगान्तलोप इत्याष्टमिकभाष्येण संयोगादिलोपे तदसंबन्धबोधनात् । त्रिपाद्यां बहिरङ्गासिद्धत्वाप्रवृत्तेश्चेति भाष्याभिप्रायः ॥

( तत्त्वालोकः ) भाष्ये—वास्यर्थमिति—अत्र संयोगादिलोपे कर्तव्ये यणः स्थानिवत्त्वस्य 'पूर्वत्रासिद्धे चे'त्यनेन निषेधादिति भावः । तस्य प्रतिप्रसवे तु संयोगादिलोपो न भवतीत्याशयः ।

उद्द्योते—झल्ग्रहणेति—'झलो झली'ति सूत्रादिति भावः । ग्रहणादिति—बहिरङ्गतया यणोऽसिद्धत्वाच्चेति शेषः । न दोष इति—तथा चात्र संयोगादिग्रहणं व्यर्थमिति भावः । तदिति—झल्ग्रहणेत्यर्थः । भाष्याभिप्राय इति—एवञ्चात्र—संयोगादिग्रहणमावश्यकमेवेति भावः ।

( उदाहरणभाष्यम् )

लत्वम्—निगार्यते निगाल्यते । 'अचि विभाषा' इति लत्वं न प्राप्नोति ॥

( उद्द्योतः ) निगाल्यत इति । नन्वत्रान्तरङ्गत्वादेव लत्वं सिध्यतीति वाच्यम् । सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया तदप्रवृत्तेः । त्रिपाद्यां तत्परिभाषाऽप्रवृत्तेश्च । न च प्रत्ययलक्षणम्, अविधित्वात् । प्रत्ययलक्षणसूत्रस्य नियमार्थताया एव भाष्यसंमतत्वात् ॥

( तत्त्वालोकः ) भाष्ये—निगाल्यते इति—अत्र लत्वे कर्तव्ये णिलोपस्य स्थानिवत्त्वस्य 'पूर्वत्रासिद्धे चे'त्यनेन निषेधादित्याशयः । तस्य प्रतिप्रसवे तु लत्वं सिद्ध्यतीति भावः ।

उद्द्योते—लत्वमिति—णिलोपात्पूर्वमिति शेषः । एवञ्चात्र लत्वग्रहणं व्यर्थमिति भावः । तदिति—लत्वेत्यर्थः । 'पूर्वत्रासिद्धमि'ति शास्त्रबलादित्याशयः । तदिति—अन्तरङ्गेत्यर्थः । संमतत्वादिति—एवञ्चेतरव्यावृत्तिमात्रफलकं प्रत्ययलक्षणसूत्रम्, तत्तत्कार्याणि तु स्थानिवत्सूत्रेणैव निर्वाह्याणीति प्रकृते लत्वं णिलोपस्य स्थानिवद्भावेनैव साधनीयम्, स च 'पूर्वत्रासिद्धे चे'ति निषिद्ध इति तस्य प्रतिप्रसवार्थमत्र लत्वग्रहणमावश्यकमेवेत्याशयः ।

( उदाहरणभाष्यम् )

णत्वम्—माषवपनी व्रीहिवपनी । 'प्रातिपदिकान्तस्य' इति णत्वं प्राप्नोति ॥ न पदान्तद्विर्वचन० ॥

( प्रदीपः ) माषवपनीति । समासान्तस्य नकारस्य णत्वं विधीयमानमल्लोपस्य स्थानिवत्त्वनिषेधाद् ङीबुत्पत्तेः प्राक् समासविधानात् प्राप्नोति ॥ ५८ ॥

( उद्द्योतः ) ननु स्थानिवत्त्वनिषेधेऽपि माषशब्दस्य वपनीशब्देन समासे समासान्तो नकारो नेति णत्वं न स्यादत आह—ङीबुत्पत्तेरिति । [ सुबुत्पत्तेरप्युपलक्षणम् । ] गतिकारकोपपदानां कृद्भिरिति वचनादिति भावः । न च बहिरङ्गासिद्धत्वेनेदं सिद्धम् । त्रिपाद्यां तदप्रवृत्तेरिति दिक् ॥ ५८ ॥

( तत्त्वालोकः ) प्रदीपे—निषेधादिति—'पूर्वत्रासिद्धे चे'त्यनेनेति भावः । प्राप्नोतीति—तस्य प्रतिप्रसवे तु णत्वं न भवतीत्याशयः ।

उद्द्योते—णत्वं न स्यादिति—स्वञ्चात्र णत्वग्रहणं व्यर्थमिति भावः। भाव इति—तथा च—ङीबुत्पत्तेः प्राक्समासे ङीपि अल्लोपे नस्य समासरूपप्रातिपदिकान्तत्वाण्णत्वं प्राप्नोतीत्यत्र णत्वग्रहणमावश्यकमेवेति भावः।

( ५३ अतिदेशसूत्रम् ॥ १ । १ । ८ आ. ४ ॥ )

# द्विर्वचनेऽचि ॥ १ । १ । ५९ ॥

**( प्रदीपः ) द्विर्वचने ॥ ५९ ॥ अचः परस्मिन्नित्यत्र** योऽनादिष्टादचः पूर्व इति स्थितम्। साचूकस्य च द्विर्वचनमिति पूर्वविधित्वाभावादप्राप्तं स्थानिवत्त्वं विधीयते। अथापि निमित्तात् पूर्वमित्यस्मिन् पक्षे प्राप्तिः स्यात्। तथापि **न पदान्तद्विर्वचने**ति प्रतिषेधप्रसङ्गादिदं वचनम्॥

**( उद्द्योतः ) द्विर्वचनेऽचि ॥ ५९ ॥ अथापीति।** प्रौढिवादोयम्, तत्पक्षस्यास्थितत्वात्। **नपदान्त**सूत्रे आष्टमिकद्वित्वस्यैव ग्रहणाच्च॥

**( तत्त्वालोकः )** प्रदीपे—ननु 'अचः परस्मिन्नि'ति वचनेनैव स्थानिवत्त्वस्य सिद्धत्वात् किमर्थमिदं वचनमित्यत आह—**अच इति। पूर्वविधित्वाभावात्**—पूर्वमात्रविधित्वाभावात्। **अप्राप्तं स्थानिवत्त्वमिति**—तेनेत्यादिः। अनेन वचनेनेति शेषः। **प्राप्तिः स्यादिति**—तेन स्थानिवत्त्वस्येत्यादिः।

उद्द्योते—**तत्पक्षस्य**—निमित्तात्पूर्वमित्यस्य पक्षस्य।

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( ४२४ (१) आक्षेपसाधकवार्तिकप्रथमखण्डम् ॥ )

## ॥ ❋ ॥ आदेशे स्थानिवदनुदेशात्तद्वतो द्विर्वचनम् ॥ ❋ ॥

( भाष्यम् )

**आदेशे स्थानिवदनुदेशात्। तद्वतः।**

**किंवतः ?।**

**आदेशवतः। द्विर्वचनं प्राप्नोति ॥**

( प्रत्याक्षेपभाष्यम् )

**तत्र को दोषः ?।**

( ४२४ (२) आक्षेपवार्तिकद्वितीयखण्डम् ॥ १ ॥ )

## ॥ ❋ ॥ तत्राभ्यासरूपम् ॥ ❋ ॥

( भाष्यम् )

**तत्राभ्यासरूपं न सिद्ध्यति। चक्रतुश्चक्रुरिति ॥**

**( प्रदीपः ) आदेश इति।** कार्यातिदेश इति पूर्वः पक्षः॥ चक्रतुरित्यत्र यणादेशे कृते एकाचो विधीयमानं द्विर्वचनमनचूकत्वादप्राप्तमिति स्थानिवत्त्वाद् यणुक्तस्यैव प्राप्नोति॥

**( उद्द्योतः ) यण्युक्तस्यैवेति।** यद्यपि स्थानिवत्त्वे द्विर्वचनं नित्यं तथापि यणपि नित्य इति परत्वात्स स्यादिति भावः। **इदमेवा**भिप्रेत्य भाष्येऽ**भ्यासरूपं न सिद्ध्यती**त्येतावदेवोक्तम्, न तु निन्यतुरित्यादावियङ उत्तरखण्डे श्रवणं स्यादित्यापादितम्, तस्यानित्यत्वेन ततः पूर्वं द्वित्वस्यैव प्रवृत्तेरिति॥

**( तत्त्वालोकः )** भाष्ये—**तत्र**—आदेशवतो द्विर्वचने। **अभ्यासरूपम्**—अभ्यासेऽचः श्रवणम्।

उद्द्योते—**तस्यानित्यत्वेन**—द्वित्वे कृतेऽनेकाच्त्वसम्पत्त्या यणा बाधादप्राप्त्येयङोऽनित्यत्वेन। **ततः**—इयङः। **इतीति**—बोध्यमिति शेषः।

( ४२५ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ ❋ ॥ अज्ग्रहणं तु ज्ञापकं रूपस्थानिवद्भावस्य ॥ ❋ ॥

( भाष्यम् )

**यदयमज्ग्रहणं करोति तज् ज्ञापयत्याचार्यः—रूपं स्थानिवद्भवतीति ॥**

**कथं कृत्वा ज्ञापकम् ?।**

**अज्ग्रहणस्यैतत्प्रयोजनम्—इह मा भूत्—जेघ्रीयते देध्मीयते। यदि च रूपं स्थानिवद्भवति, ततोऽज्ग्रहणमर्थवद्भवति। अथ हि कार्यम्, नाऽर्थोऽज्ग्रहणेन। भवत्येवाऽत्र द्विर्वचनम् ॥**

**( प्रदीपः ) अथ हीति।** कार्यातिदेशे हि घ्रीध्मीति भाष्यमेव द्विर्वचनेनेति किमज्ग्रहणेन॥ नन्वज्ग्रहणस्य प्रयोजनं-भसेः क्सौ **घसिभसोर्हलि**त्युपधालोपे कृते द्विर्वचनं मा भूदिति। नैतदस्ति। सत्यसति वा द्विर्वचने प्स्वानिति श्रुतौ विशेषाभावात्। छान्दसश्चैवोपधालोपः, छन्दसि च दृष्टानुविधिः। रूपस्थानिवत्त्वे च निन्युरित्यत्र पूर्वमियङादेशे कृते स्थानिरूपातिदेशाद् नीनीति द्विर्वचने **एरनेकाच** इति यणा बाधितत्वात्पुनरियङ् न प्रवर्तते॥

**( उद्द्योतः )** दुर्लक्ष्योऽपि विशेषः सूक्ष्मदृशं प्रति दुर्वारोऽत आह—**छान्दसश्चैवेति।** एवं च **दातिप्रियाणीति**वद्द्वित्वाभाव इति भावः। अत्रोपधालोपस्य छान्दसत्वं वदता क्सोर्लौकिकत्वमभ्युपेतम्॥ ननु सिद्धान्ते द्वित्वनिमित्तेऽचीत्यर्थस्तदाऽचीति किमर्थम्। अरिरिषतीत्यादिसिद्धये कार्यमनुभवतः कार्यिणो निमित्तत्वानाश्रयणेनात्रापि **नटभार्यावद्व्यञ्जनानि** इति षाष्ठभाष्यरीत्या द्वितीयाजवधिकस्य घ्रीय् इत्यस्यैव द्वित्वप्राप्त्या यङः कार्यित्वेन द्वित्वनिमित्तत्वाभावात्, कथं तन्निमित्तादेशे स्थानिवत्त्वप्रसक्तिरिति चेन्न। द्वितीयहल्पर्यन्तस्यैव द्वित्वमिति मते तत्सत्त्वात्। अत एव प्रातिशाख्ये उक्तम्—**स्वरान्तरे व्यञ्जनान्युत्तरस्येति॥** अरिरिषतीत्यादौ रि इत्यस्य द्वित्वेऽपि इकारस्य सनवयवतया सनो द्वित्वानुभवेन तन्निमित्तत्वाभावादिति दिक्॥ षाष्ठभाष्यरीत्या त्वधिजगे इति व्यावर्त्यं बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**यदयमिति**—नैष दोषः, यतः प्रकृतसूत्रे इत्यादिः। **अज्ग्रहणस्येति**—यत इत्यादिः। **इहेति**—स्थानिवत्त्वमिति शेषः। **अर्थवद्भवतीति**—अज्ग्रहणाभावे हि यङोऽपि द्वित्वनिमित्तत्वात्तस्मिन् परे घ्रीशब्दादेः घ्रात्वादिरूपातिदेशापत्त्या जघ्रीयते इत्याद्यनिष्टरूपापत्तिः। अज्ग्रहणसत्त्वे तु-यङोऽच्त्वाभावान्न तदापत्तिरित्यज्ग्रहणमर्थवद्भवतीत्याशयः। **नार्थ इति**—तदेत्यादिः। **भवत्येवेति**—यत इत्यादिः। **अत्र**—जेघ्रीयते इत्यादौ।

प्रदीपे—**श्रुतौ**—पकारद्वयश्रवणे। **छान्दसश्चैवेति**—'घसिभसोर्हलि चे'ति सूत्रे 'तनिपत्योश्छन्दसी'ति सूत्राच्छन्दसीत्यस्यानुवृत्तेरिति भावः। रूपातिदेशज्ञापनस्य फलमाह—**रूपस्थानीति। पूर्वम्**—द्विर्वचनात्पूर्वम्।

उद्द्योते—**दुर्लङ्घ्योऽपीति**—नन्वित्यादिः । **वदता**—कैयटेन । अत्र हेतुमाह—**अरिरीत्यादि-भावादित्यन्त-ग्रन्थेन । अत्रापि**—जेघ्रीयते इत्यादावपि । **कथमिति**—तथा चाज्ग्रहणाभावे इत्यादिः । **तन्निमित्तादेशे**-यङ्निमित्तके 'ई घ्राध्मोरि'तीत्वादेशे । **तत्सत्त्वात्**—यङि द्वित्वनिमित्तत्वसत्त्वात् । एवञ्चात्र मते—जेघ्रीयते इत्याद्यज्ग्रहणस्य प्रत्युदाहरणमिति भावः । अत्र मानमाह—**अत एवेति** । तन्मतसत्त्वादेवेत्यर्थः । स्वरान्तरासत्त्वे तु पूर्वस्यैव तानीति भावः । अत्र मते आह—**अरिरीति** । ननु पाष्ठभाष्यरीत्याऽज्ग्रहणस्य किं प्रत्युदाहरणमित्यत आह—**षाष्ठेति** ।

**( ४२६ समाधानबाधकाक्षेपवार्तिकम् ॥ ३ ॥ )**

## ॥ ॐ ॥ तत्र गाङ्प्रतिषेधः ॥ ॐ ॥

**( भाष्यम् )**

**तत्र गाङः प्रतिषेधो वक्तव्यः । अधिजगे । इवर्णाभ्यासता प्राप्नोति ॥**

**( प्रदीपः ) अधिजग इति ।** कृते एशादेशे गाङिति प्रक्रियाश्रयेण चोद्यम् । ङकारस्यानुबन्धत्वादिकारस्य गाङ् भवत्यजादेशः ॥

**( उद्द्योतः )** ननु लिटि विधीयमानस्य गाङः कथमच्यादेशत्वमत आह—**कृते इति ॥ ङकारस्येति ।** प्रकृतसूत्रे प्रयोगे निवर्त्यस्यैव स्थानित्वेन ग्रहण**मचः परस्मिन्नि**तिवदिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**तत्र**—रूपातिदेशे । **इवर्णेति**—अन्यथेत्यादिः ।

प्रदीपे—**एशादेशे**—'लिटस्तझयोरेशिरेच्' इत्येशादेशे ।

**( समाधानसाधकभाष्यम् )**

**न वक्तव्यः । 'गाङ्लिटि' इति द्विलकारको निर्देशः । लिटि लकारादाविति ॥**

**( उद्द्योतः )** भाष्ये—**द्विलकारक इति ।** एवं चाचि नायमिति भावः ॥ एवं च इदमज्ग्रहणव्यावर्त्यमिति स्पष्टमेवोक्तमिति बोध्यम् ॥ न च सिद्धान्ते **आर्धधातुके लिटीत्यादीनां** तत्र विषयसप्तमीत्वेनानैमित्तिकत्वान्न तत्र दोष इति वाच्यम् । विषयसप्तमीत्वेऽपि बुद्धिकृतनिमित्तत्वस्य दुर्वारत्वेन सनिमित्तकत्वमस्त्येवेति भाष्याशयात् ॥

**( तत्त्वालोकः )** भाष्ये—**गाङिति**—यत इत्यादिः ।

उद्द्योते—**एवञ्च**—लावस्थायां गाङादेशे च । **अयम्**—गाङादेशः । **एवञ्च**—गाङादेशस्याज्निमित्तकत्वाभावे च । **इदम्**—अधिजगे इति । **स्पष्टमेवेति**—भाष्यकृतेति शेषः । **तत्र**—'गाङ्लिटी'त्यत्र । **अनैमित्तिकत्वादिति**—गाङादेशस्येत्यादिः । **दोषः**—स्थानिवत्त्वप्रसक्तिः । **बुद्धिकृतेति**—तद्भावभावित्वेनेव तद्बुद्धिभावभावितामात्रकृतेत्यर्थः । गाङादेशे सूत्रोपात्तलिड्बुद्धिभाव एव निमित्तमित्यस्याज्निमित्तकत्वाभावः । सर्वत्रैव चात्र शास्त्रे बुद्धिकृतमेव निमित्तत्वाद्याश्रयणीयमित्यत्रेदमेवाचीति लिङ्गम् । अन्यथाऽस्याधिजगे इति व्यावर्त्यं न स्यादिति भावः ।

**( ४२७ आक्षेपान्तरवार्तिकम् ॥ ४ ॥ )**

**( भाष्यम् )**

## ॥ॐ॥ कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपम् ॥ॐ॥

**कृत्येजन्तदिवादिनामधातुष्वभ्यासरूपं न सिद्ध्यति ॥**

**कृति—अचिकीर्तत्—कृति ॥**

**एजन्त—जग्ले मम्ले—एजन्त ॥**

**दिवादि—दुद्यूषति सुस्यूषति—दिवादि ॥**

**नामधातु—भवनमिच्छति भवनीयति, भवनीयतेः सन् बिभवनीयिषति ॥**

**( प्रदीपः ) कृत्येजन्तेति ।** अचि योऽजादेशः स द्विर्वचने कर्तव्ये स्थानिवदिति सूत्रार्थमाश्रित्यैतदुच्यते ॥ **जग्ल इति ।** शित्सदृशे आत्वमित्यत्र पक्षेऽयं दोषः ॥

**( उद्द्योतः )** अत्र पञ्च पक्षाः—अचि योऽजादेशः स द्वित्वे कार्ये स्थानिवदित्येकः, अजादौ प्रत्यये योऽजादेशः स द्वित्वे स्थानिवदिति द्वितीयः, द्विर्वचनशब्दस्याधिकरणल्युडन्तत्वादर्शआद्यजन्तत्वाद्वा द्वित्वनिमित्तेऽचीत्यादीति तृतीयः, द्वित्वनिमित्तेऽचि अच आदेशनिषेध इति चतुर्थः, द्वित्वनिमित्तेऽचि योऽजादेशः स स्थानिवत्, न भवति वा, द्वित्वे कार्ये इति पञ्चमः ॥ तत्राद्ये दोषोद्भावनमित्याह-**अचीति ।** कृते**रुपधायाश्चे**तीत्त्वम् । तस्य च णिनिमित्ततयाऽच्यादेशता, अङ्गाक्षिप्ते प्रत्यये तद्विधानात् ॥ ननु आत्वं कथमच्यादेशोऽनैमित्तिकत्वादत आह—**शित्सदृश इति ।** शिदिति तत्पुरुषः । इत्संज्ञकशकारादिप्रत्ययभिन्नप्रत्यय इत्यर्थः ॥ अन्तरङ्गत्वात्तिबादिषु एशि च कृते आत्वमिति भावः ॥ दिवेः सनि **सनीवन्तेती**डभावपक्षे **हलन्ताच्चे**ति किन्त्वे **च्छ्वोरि**त्यूठि यणि **सन्यङोरि**ति द्वित्वे रूपम् ॥

**( तत्त्वालोकः )** प्रदीपे—अत्र सूत्रे-'स्थानिवदादेशः' इत्यस्य, 'अचः परस्मिन्नि'त्यस्य चानुवृत्तेराह—**अचीत्यादि । आत्वम्**—'आदेच उपदेशेऽशिती'त्यात्वम् ।

उद्द्योते—**अत्र**—प्रकृतसूत्रे । द्विर्वचनाक्षिप्तः प्रत्ययोऽचीत्यनेन विशेष्यते इत्याशयेनाह—**अजादाविति ।** तस्य द्वित्वे प्रसिद्धत्वादाह—**अर्श इति । आदिना**—योऽजादेश इत्यादिपरिग्रहः । अत्र सूत्रे 'स्थानिवदि'ति नानुवर्त्तते, किन्तु 'न पदान्ते'ति सूत्रात् नेत्येवेत्याशयेनाह—**निषेध इति ।** उभयमनुवर्त्तते इत्याशयेनाह—**स्थानिवत्, न भवति वेति ।** अत्र पक्षे द्विर्वचनशब्दस्य तन्त्रेणोभयत्र सम्बन्धः । **तत्र**—तेषां मध्ये । ननूपादानमन्तरा कथन्तस्य णिनिमित्तकत्वमित्यत आह—**अङ्गेति ।** नन्वेश् शिदेव, न तु तत्सदृश इत्यत आह—**शिदितीति । तत्पुरुषः**—कर्मधारयः । **इत्संज्ञेति**—तथा चाशितीत्यस्येत्यादिः । **रूपम्**—दुद्यूषतीति रूपम् ।

**( पक्षान्तरेण समाधानभाष्यम् )**

**एवं तर्हि प्रत्यय इति वक्ष्यामि ॥**

**( ४२८ द्वितीयपक्षदूषणवार्तिकम् ॥ ५ ॥ )**

## ॥ॐ॥ प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपम् ॥ ॐ ॥

**( भाष्यम् )**

**प्रत्यय इति चेत् कृत्येजन्तनामधातुष्वभ्यासरूपं न सिद्ध्यति । दिवादय एके परिहृताः ॥**

**( उद्द्योतः )** द्वितीयं निराकरोति—भाष्ये—**प्रत्यय इति चेदिति ॥**

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—यदीत्यर्थः । तर्हीति शेषः । एवमग्रेऽपि । अजादिप्रत्ययनिमित्तकाजादेशस्य सत्त्वादाह—**न सिद्ध्यतीति ।** तस्यासत्त्वादाह—**परिहृता इति ।**

( तृतीयपक्षाङ्गीकारे समाधानभाष्यम् )

**एवं तर्हि—द्विर्वचननिमित्ते अच्यजादेशः स्थानिवद्—इति वक्ष्यामि ॥**

**( प्रदीपः ) द्विर्वचननिमित्त इति ।** अस्मिन् पक्षे जग्ल इत्यपरिहृतम् । उत्तरत्र तु परिहरिष्यते ॥

**( तत्त्वालोकः )** प्रदीपे—कृतिदिवादिनामधातुष्वजादेशनिमित्तभूतेऽचि द्विर्वचननिमित्तत्वस्यासत्त्वात्तेषामपरिहारेऽपि, एजन्ते तत्र तस्य सत्त्वादाह—**जग्ले इतीति ।**

( तृतीयपक्षे दूषणभाष्यम् )

**स तर्हि निमित्तशब्द उपादेयः। न ह्यन्तरेण निमित्तशब्दं निमित्तार्थो गम्यते ॥**

( समाधानभाष्यम् )

**अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते । तद्यथा—'दधित्रपुसं प्रत्यक्षो ज्वरः' ज्वरनिमित्तमिति गम्यते ॥ 'नड्वलोदकं पादरोगः' पादरोगनिमित्तमिति गम्यते ॥ ''आयुर्घृतम्' आयुषो निमित्तमिति गम्यते ॥**

**( प्रदीपः ) दधित्रपुसमिति ।** समाहारद्वन्द्वः । कर्मधारयो वा, **दध्येव** विशिष्टावस्थायुक्तं **त्रपुसमु**च्यते । तत्र द्विर्वचननिमित्तत्वात्तद्रूपाऽरोपेणाजेव द्विर्वचनमुच्यते । अथवा अधिकरणे ल्युट् । द्विरुच्यतेऽस्मिन्निति द्विर्वचनम् ॥

**( उद्द्योतः ) त्रपुसमिति ।** **तृपस**मिति पाठान्तरं **तृपुस**मिति च ॥ कर्मधारयमुपपादयति—**दध्येवेति ॥ विशिष्टावस्थेति ।** रूपरसगन्धान्तरयुक्तमित्यर्थः । आद्ये त्रपुसं फलविशेषः । द्वितीये समासाभावेऽपि न क्षतिरिति बोध्यम् ॥ **तद्रूपारोपेणेति ।** दृष्टान्तबलेन तथैव लाभात् ॥

**( तत्त्वालोकः )** प्रदीपे—**तत्र**—अन्तरेणापि निमित्तशब्दं निमित्तार्थावगमे ।

उद्द्योते—फल**विशेषः**—भाषायां 'फूट' इति प्रसिद्धः । **तथैवेति**—यथा ज्वरादिनिमित्ते दधित्रपुसादौ ज्वरादित्वारोपस्तथा द्विर्वचननिमित्तेऽचि द्विर्वचनत्वारोप इत्याशयः ।

( समाधानान्तरभाष्यम् )

**अथवा अकारो मत्वर्थीयः । द्विर्वचनमस्मिन्नस्ति सोऽयं द्विर्वचनः, द्विर्वचने इति ॥**

**( प्रदीपः )** एतदप्रतिपद्यमानं प्रति परिहारान्तरमाह—**अथवा अकार इति ।**

**( उद्द्योतः )** ननु दृष्टान्ते लक्षणाया अव्यभिचारेण कार्यजननप्रतीतिः प्रयोजनम्, प्रकृते च न किंचित्तथेति लक्षणा **दुरु**पपादेत्यत आह—**अथवेति ॥**

**( तत्त्वालोकः )** भाष्ये—**मत्वर्थीयः**—'अर्श आदिभ्योऽजि'त्यनेन विहितः ।

प्रदीपे—**एतत्**—**द्विर्वचन**शब्दस्याधिकरणल्युडन्तत्वम् ।

( आक्षेपभाष्यम् )

**एवमपि न ज्ञायते—कियन्तमसौ कालं स्थानिवद्भवतीति ॥**

**( प्रदीपः ) एवमपीति ।** एकत्वाद्द्विर्वचनशब्दस्य, तस्य चाज्विशेषणे उपयुक्तत्वात् कालावधारणाभावः ॥

**( उद्द्योतः ) कालेनि ।** द्विर्वचनविधानसमय एवेत्यवधारणाभाव इत्यर्थः । एवं च चक्रतुरित्याद्यसिद्धिः, पुनर्यणादेशानापत्तेरिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—नन्वियमापत्तिरिष्टेत्यत आह—**एवञ्चेति ।** अवधारणाभावे चेत्यर्थः ।

( समाधानभाष्यम् )

**यः पुनराह 'द्विर्वचने कर्तव्ये' इति; कृते तस्य द्विर्वचने स्थानिवन्न भविष्यति ॥**

( आदेशनिषेधरूपचतुर्थपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि—प्रतिषेधः प्रकृतः सोऽनुवर्तिष्यते ॥**

**क्व प्रकृतः ? ॥**

**'न पदान्तद्विर्वचन—' इति ॥ द्विर्वचननिमित्ते अचि अजादेशो न भवतीति ॥**

**( प्रदीपः ) एवं तर्हीति ।** स्थानिवदिति नानुवर्तत इति भावः ॥

( आक्षेपभाष्यम् )

**एवमपि न ज्ञायते—कियन्तमसौ कालमादेशो न भवतीति ॥**

( समाधानभाष्यम् )

**यः पुनराह—द्विर्वचने कर्तव्य इति, कृते तस्य द्विर्वचने अजादेशो भविष्यति ॥**

( पञ्चमपक्षाभ्युपगमभाष्यम् )

**एवं तर्हि—उभयमनेन क्रियते—प्रत्ययश्च विशेष्यते, द्विवचनं च ॥**

**( प्रदीपः ) प्रत्ययश्चेति ।** द्विर्वचनेन प्रत्ययस्याक्षिप्तत्वात्तद्विशेषणं द्विर्वचनम् । अचीत्येतच्च तस्य, तदादिविधिर्भवत्यजादाविति ॥

**( उद्द्योतः ) प्रत्ययश्च विशेष्यते, द्विर्वचनं चे**त्यस्य चिकीर्षितत्वेन निर्दिश्यत इति शेषः ॥ तत्राश्रुतस्य प्रत्ययस्य कथं विशेष्यत्वमत आह-**द्विर्वचनेनेति ।** अचीत्युपादानात्प्राप्तमिह द्विर्वचनम् । तच्च प्रत्यये इति । तेन तद्वाचकप्रत्ययपदाक्षेप इत्यर्थः ॥ तद्भावभावितामात्रेण निमित्तताया आश्रयणात्सन्यङन्तस्य द्वित्वेऽपि तदाक्षेपः । स चाचीत्यस्य श्रवणात्सप्तम्यन्तस्यैवेति भावः ॥ **अचीत्येतच्च तस्येति ।** विशेषणमित्याकृष्यते ॥ **तदादिविधिरि**त्यस्य तेनेत्यादिः ॥ तदयमर्थः—द्वित्वनिमित्ताजादिप्रत्ययनिमित्तोऽजादेशः स्थानिवद् द्वित्वे कर्तव्ये इति ॥

**( तत्त्वालोकः )** भाष्ये—**अनेन**—द्विर्वचनशब्देन । केचित्तु—'अत्र सूत्रे 'स्थानिवदि'त्यस्य 'न पदान्ते'ति सूत्रात् **'ने'**त्यस्य चानुवृत्त्या व्याख्यानद्वयमाश्रयणीयम्, फले विशेषाभावात्, अत एव पञ्चमपक्षे 'स्थानिवत्, न भवति वे'ति नागेशोक्तं सङ्गच्छते' इति वदन्ति ।

प्रदीपे—**तस्य**—प्रत्ययस्य ।

उद्द्योते—**तत्र**—प्रकृतसूत्रे । **विशेष्यत्वम्**—द्विर्वचननिरूपितविशेष्यत्वम् । नन्वाष्टमिकद्वित्वस्य प्रत्ययानिमित्तकत्वात्कथं **द्विर्वचनेन**

प्रत्ययाक्षेप इत्यत आह—**अचीति । तेन**—द्विर्वचनशब्देन । **तद्वाचकेति**—प्रत्ययवाचके यर्थः । ननु 'सन्यङोरि'ति षष्ठीति पाठमपि द्विर्वचनं न नियमेन प्रत्ययनिमित्तकमिति कथन्तदाक्षेप इत्यत आह—**तद्भावेति । तदाक्षेपः**—प्रत्ययपदाक्षेपः । नन्वेवमप्यन्यविभक्त्यन्तप्रत्ययपदाक्षेपेऽचीत्यस्य सप्तम्यन्तत्वेन विशेषणविशेष्ययोर्विभिन्नविभक्तिकत्वात्कथमन्वय इत्यत आह—**स चेति ।** तदाक्षेपश्चेत्यर्थः । **तेन**—अचा । **तत्**—तस्मात् । केचित्तु—**स्थानिवदिति**—न भवति वेति शेषः । अन्यथाऽस्य प्रागुक्त्या विरोधादेकत्राप्रामाणिकता दुर्निवारेति वदन्ति ।

( आक्षेपभाष्यम् )

**कथं पुनरेकेन यत्नेनोभयं लभ्यम् ? ।।**

( प्रदीपः ) कथं पुनरिति । विरुद्धत्वादनयोरर्थयोरेकेन **द्विर्वचन** इत्यनेन पदेनानुपादानादिति भावः ॥

( उद्द्योतः ) **विरुद्धत्वादिति ।** एवं च सहविवक्षाभावान्नैकशेषो वक्तुं शक्य इति भावः ॥

( तत्त्वालोकः ) भाष्ये—**यत्नेन**—द्विर्वचनशब्दोपादानेन । उद्द्योते—**एवञ्च**—विरुद्धत्वे च ।

( समाधानभाष्यम् )

**लभ्यमित्याह ।।**

**कथम् ? ।**

**एकशेषनिर्देशात् ।। एकशेषनिर्देशोऽयम्—द्विर्वचनं च द्विर्वचनश्च द्विर्वचनम् । द्विर्वचने कर्तव्ये, द्विर्वचनेऽचि प्रत्यय इति ।।**

( प्रदीपः ) **एकशेषनिर्देश इति ।** सहविवक्षाभावेऽपि **सरूपाणा**मित्येकशेषः, संज्ञापरिभाषावल्लक्षणाङ्गत्वात्तस्येति प्रागेवोक्तम् । विभक्त्यन्तयोश्चैकशेषविधानादप्रातिपदिकत्वाच्च द्विवचनाभावः । अथवैकशेषेण समानफलत्वात्तन्त्रमावृत्तिर्वा लक्ष्यते ॥

( उद्द्योतः ) **प्रागेव । सर्वादीनी**त्यत्र ॥ नन्वेकशेषे द्विवचनापत्तिरत आह—**विभक्त्यन्तयोरिति ।** परिभाषावच्छास्त्रमात्रोपयोगित्वादिति भावः ॥ प्रातिपदिकानामेवैकशेषेऽप्याह—**अथवेति । नीलोत्पलस्पर्धिनी नेत्रे तनुर्वेति**वदिति भावः । क्रमेण बोधादत्रावृत्तिर्बोद्धारं प्रति, उच्चारयितुस्तन्त्रम् । इह निमित्तशब्देन साक्षात्परम्परासाधारणं प्रयोजकम्, न तु साक्षादेवेत्याग्रहः, तद्भावभावितामात्रेण निमित्तत्वस्येहाङ्गीकारात् । अत एव चक्रतुरित्युदाहरण सङ्गतिः ॥

( तत्त्वालोकः ) भाष्ये—तटस्थ उत्तरमनुवदति—**लभ्यमित्याहेति ।** समाधातेति शेषः । **एकशेषनिर्देश इति**—यत इत्यादिः । **द्विर्वचनश्चेति**—अस्य 'अर्शआद्यजन्तत्वात्' पुंलिङ्गता ।

प्रदीपे—**अप्रातिपदिकत्वाच्च**—अप्रातिपदिकत्वात्तु ।

उद्द्योते—अत्र बीजमाह—**परिभाषावदिति ।** तस्येत्यादिः । नन्वेवं न क्वापि दृष्टमित्यत आह—**नीलोत्पलेति ।** कैयटोक्त**वा**—शब्दस्य व्यवस्थितविकल्पार्थकत्वमभिप्रेत्याह—**क्रमेणेति । इह**तथाऽङ्गीकारे बीजमाह—**अत एवेति ।** इह निमित्तशब्देन साक्षात्परम्परासाधारणप्रयोजकत्वाश्रयणादेव । **सङ्गतिरिति**—अन्यथाऽत्र द्वित्वनिमित्तस्यातुसो यण्निमित्तत्वाभावाद्यण्निमित्तस्याकारस्य द्वित्वनिमित्तत्वाभावाच्च यणः स्थानिवद्भावो दुर्लभ एवेति भावः ।

( ४२९ पञ्चमपक्षे दूषणवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्वचनम् ॥ * ॥**

( भाष्यम् )

द्विर्वचननिमित्तेऽचि स्थानिवदिति चेण्णौ स्थानिवद्भावो वक्तव्यः ॥ अवनुनावयिषति अवचुच्छावयिषति ॥

( समाधानभाष्यम् )

न वक्तव्यः ।

( ४३० समाधानसाधकवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ ओः पुयण्जिषु वचनं ज्ञापकं णौ स्थानिवद्भावस्य ॥ * ॥**

( भाष्यम् )

**यदयम्—'ओः पुयण्ज्यपरे' इत्याह, तज् ज्ञापयत्याचार्यो—भवति णौ स्थानिवद्भाव इति ॥**

( प्रदीपः ) ओः **पुयण्जिष्विति** । नहि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जिषु सर्वेष्ववर्णपरेषु उवर्णान्तोऽभ्यासः संभवति । पिपविपते यियविषतीत्यत्रैवानेन स्थानिवद्भावात् । तत्र पु इति वर्गग्रहणाद् यणिति प्रत्याहारग्रहणाज्जग्रहणाच्च ज्ञापकाण्णौ कृतस्य स्थानिवद्भावोऽनुमीयते ॥ ननु तत्र णाविति नास्ति तत्कथं तत्रैव स्थानिवत्त्वानुमानं न तु निनवनीयिषति दिदवनीयिषतीत्यादावपि ॥ नैतदस्ति । **येन नाव्यवधान**मित्येकेनैव प्रत्ययेन तत्र व्यवधानाश्रयणाण्णेरेव केवलस्य व्यवधायकस्य संभवात् ॥

( उद्द्योतः ) स्वोक्त**सर्वेष्वि**त्यस्य, **पुयण्जि**ष्विति भाष्ये निर्धारणसप्तमीनिर्देशस्य च कृत्यमाह—**पिपविषत इति ॥ अनेन—द्विर्वचनेऽची**त्यनेन ॥ न चात्रोत्तरखण्डे जातयोरचो**रचः परस्मिन्नि**ति स्थानिवत्त्वेनावर्णपरत्वाभावात्कथ**मोः पुयजि**त्यस्य प्राप्तिरिति वाच्यम् । एतत्सूत्रारम्भसामर्थ्येनैव तदप्रवृत्तेः । **स्मिपूङि**ति **सनीवन्तेति** चोभयत्रेट् ॥ नन्ववर्णपरपुयण्जयो णौ प्रत्ययान्तरे च संभवन्ति तत्कथं णावित्युक्तमित्याशङ्कते—**नन्विति** ॥ **येन नेति ।** प्रकृतसूत्रे **परस्मिन्नि**ति वर्तते । तेन द्वित्वनिमित्तेऽजादौ प्रत्यये प्रत्ययान्तरेणाव्यवहिते परे सति योऽजादेशः स स्थानिवदिति सूत्रार्थः ॥ तत्रानेन ज्ञापकेन व्यवाये प्रवृत्तिर्ज्ञाप्यते । तत्र प्रत्ययव्यवधानं विना वर्गादीनामुदाहरणासंभवेन **येन नाव्यवधान**न्यायेनैकव्यवधाने एव प्रवृत्तिः । स च णिरेव संभवतीति भावः ॥ न चोरु-ऋजु-अम्बुशब्दादिभ्य आचारक्विपि सनि इटि द्वित्वे गुणाद्यभावे उरुरविषतीत्यादावित्वार्थं वर्गादिग्रहणं चरितार्थम् । किञ्च भ्वादिभ्यो विजन्तेभ्य आचारक्विपि सनि बिभविषतीत्यादौ चरितार्थमिति कथं ज्ञापकत्वमिति वाच्यम् ॥ **सनिग्रहे**त्यत्रोपदेशाधिकाराभावस्य **एकाच उपदेश** इति सूत्रे भाष्ये ध्वनितत्वेनोक्तप्रयोगेषु तेन निषेधेनेटो दुर्लभत्वादेषामनभिधानाच्च । विचोऽसार्वत्रिकत्वाच्च ॥ एतेन दवादिभ्य आचारक्विपि सनि दिदविषतीत्यादावेकव्यवधानस्यैव सत्त्वेन दोष इत्यपास्तम् ॥ भाष्ये **णौ स्थानिवदिति ।** अत्र णाविति **प्रत्ययग्रहणे यस्माद्विहितस्तदादे**रित्यस्योपस्थित्या तस्याचो णिनिमित्तकादेश इत्यर्थः ॥ यदि त्वनियमप्रसक्त्यभावेन नियमफलायास्तस्या नोपस्थितिः । अत एव **ह्रस्वस्य पिती**त्यादौ न तदुपस्थितिरित्युच्यते । तर्हि मास्तु । णौ पर इत्यर्थे

रेफेण व्यवधानात्पुस्फारयिषतीत्याद्यसिद्धिरिति बोध्यम् ॥ ज्ञापनफलं तुतावयिषतीत्यादि ॥

**( तत्त्वालोकः )** भाष्ये—**यदयमिति**—यत इत्यादिः ।

प्रदीपे—**तत्र**—'ओः पुयण्ज्यपरे' इत्यत्र । एवमग्रेऽपि । **णौ कृतस्येति**—द्वित्वनिमित्तेऽजादौ प्रत्यये व्यवहितेऽपीति शेषः । **तत्रैवेति**—णावेवेत्यर्थः । कृतस्येति शेषः । **तत्र**—अनुमिते । **सम्भवादिति**—निनवनीयिषतीत्यादौ हि द्वयोर्ल्युट्क्यचोर्थैवधायकयोः सत्त्वमिति भावः ।

उद्द्योते—**अत्र**—पिपविषते, यियविषतीत्यत्र । **उभयत्र**—पिपविषते, यियविषतीत्यनयोः । **सूत्रार्थः**—प्रकृतसूत्रार्थः । **तत्र**—तथा प्रकृतसूत्रार्थे सति । **अनेन**—पुयण्जीत्यनेन । **प्रवृत्तिरिति**—प्रकृतसूत्रस्येत्यादिः । एवमग्रेऽपि । **तत्र**—तथा ज्ञापने सति । **स च**—एक एव व्यवधायकप्रत्ययश्च । **एतेन**—एषामनभिधानेन । **तस्याः**—प्रत्ययग्रहणपरिभाषायाः ।

( आक्षेपभाष्यम् )

**यद्येतज् ज्ञाप्यते—अचिकीर्तत् अत्रापि प्राप्नोति ॥**

**(तत्त्वालोकः) ज्ञाप्यते इति**—तर्हीति शेषः । **प्राप्नोतीति**—स्थानिवद्भाव इत्यादिः । तथा चाभ्यासरूपं नोपपद्येतेति भावः ।

( समाधानभाष्यम् )

**तुल्यजातीयस्य ज्ञापकम् ॥**

**( उद्द्योतः ) तुल्यजातीयस्येति ।** प्वादिघटितधात्वचुतुल्यस्याच आदेश इत्यर्थः । षष्ठ्यन्तस्य षष्ठ्यन्ताच इत्यनेनैवान्वययोग्यत्वादिति बोध्यम् ॥

**(तत्त्वालोकः)** भाष्ये—**तुल्येति**—नैष दोषः, यतस्तदित्यादिः ।

( आक्षेपभाष्यम् )

**कश्च तुल्यजातीयः ? ।**

**( उद्द्योतः )** अच्त्वेन तुल्यत्वं कृतेरपीति पृच्छति—**कश्चेति ॥**

**(तत्त्वालोकः)** उद्द्योते—**इति पृच्छति**—इति कारणात् पृच्छति ।

( समाधानभाष्यम् )

**यथाजातीयकाः पुयण्जयः ॥**

**( उद्द्योतः )** उत्तरयति—**यथाजातीयका इति**। प्वादिघटितधात्वच इत्यर्थः । प्वादिभिरन्वस्तुल्यत्वासंभवात् ॥

( आक्षेपभाष्यम् )

**कथंजातीयकाश्चैते ?**

( समाधानभाष्यम् )

**अवर्णपराः ॥**

**( उद्द्योतः ) अवर्णपरा इति ॥** अवर्णपरत्वसंपादकादेशस्थानिन इत्यर्थः ॥ एवं चावर्णपरत्वसंपादकादेशस्थानित्वेन तुल्यतेति भावः ॥ एवं चौननद् औजढदित्यादि चिन्त्यमेव ॥ किंच यत्र द्विरुक्तौ परभागस्याचोऽजवर्णस्तत्रेदमिति **द्विर्वचनेऽचीत्यादौ** भाष्यकैयटयोः स्थितमिति माधवोक्तं कथं भाष्यारूढमित्यपि चिन्त्यमेवेत्याहुः ॥

**( तत्त्वालोकः )** उद्द्योते—काशिकाकौस्तुभायुक्तिद्वयं क्रमेण खण्डयति—**एवञ्चेति** । औनिनद् औजिढदित्यादेव युक्तमित्याशयः । **आहुरिति**—सिद्धान्तिन इति शेषः ।

( आक्षेपभाष्यम् )

**कथं जग्ले मम्ले ? ॥**

( समाधानभाष्यम् )

**अनैमित्तिकमात्त्वम्, शिति तु प्रतिषेधः ॥**

**( उद्द्योतः )** अनैमित्तिकमात्त्वमिति । अत एव **ह्वावामश्चेति** हेञः कबाधनार्थं पुनर्ग्रहणमिति पर्युदासपक्षेऽप्यदोषम्**आदेच** इत्यत्र भाष्यकारो वक्ष्यति ॥

**( तत्त्वालोकः )** भाष्ये—**अनैमित्तिकमिति**—यत इत्यादिः । नन्वशितीत्यत्र—नञः पर्युदासपरत्वात्, शिद्भिन्न कर्मधारयात्, शितीत्यस्य च 'शिति प्रत्यये' इति प्राप्तेःकदेशग्रहणेन तदादिविधेः-'इत्संज्ञक—शकारादिप्रत्ययभिन्नप्रत्यये परे' इत्यर्थे कथमात्त्वस्यानैमित्तिकत्वमित्यत आह—**शितीति** । **तु**—हि । तथा चात्र—नञ् प्रसज्यप्रतिषेधपर एव, न तु पर्युदासपर इति भावः ।

उद्द्योते—**ह्वेञ इति**—अनेन वेञप्युपलक्ष्यते ।

---

( सूत्रप्रयोजननिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

**कानि पुनरस्य योगस्य प्रयोजनानि ? ॥**

**( प्रदीपः ) कानि पुनरिति ।** अन्यथासिद्धत्वात्प्रश्नः ॥

**( तत्त्वालोकः )** प्रदीपे—**अन्यथेति**—प्रयोजनानामित्यादिः ।

( समाधानभाष्यम् )

**पपतुः पपुः । तस्थतुस्तस्थुः । जग्मतुर्जग्मुः । आटिटद् आशिशत् । चक्रतुश्चक्रुरिति । आल्लोपोपधालोपणिलोपयणादेशेषु कृतेष्वनच्कत्वाद् द्विर्वचनं न प्राप्नोति । स्थानिवद्भावाद्भवति ॥**

**( उद्द्योतः ) अनच्कत्वादिति ।** आटिटदित्यत्र णिलोपे धातोर्द्वितीयस्याज्रहितत्वादित्यर्थो बोध्यः ॥

**( तत्त्वालोकः )** उद्द्योते—ननु तत्र णिलोपे कृतेऽपि धातोः साच्कत्वानपायात्कथमनच्कत्वमित्यत आह—**आटिटदित्यत्रेति** ।

( समाधानबाधकभाष्यम् )

**नैतानि सन्ति प्रयोजनानि । पूर्वविप्रतिषेधेनाप्येतानि सिद्धानि ॥**

**कथम् ? ।**

**वक्ष्यति ह्याचार्यः—**द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्यः** इति ॥**

**( प्रदीपः ) पूर्वविप्रतिषेधेनापीति ।** अपूर्वो वाचनिकः **पूर्व**-विप्रतिषेधः । न हि नित्यानामाल्लोपादीनामनित्येन द्विर्वचनेन च न्याय्यो विप्रतिषेधः ॥ अथ निन्युतुरिति कथं? न ह्यत्रेयङ् परिगणितः ॥ एवं तर्हि **प्रकल्प्य चापवादविषयमिति** न्यायाद् यणाऽत्र भवितव्यमितीयङ् न प्रवर्तत इति द्विर्वचने कृते **एरनेकाच** इति यणा सिद्धम् ॥

**( उद्द्योतः ) पूर्वविप्रतिषेधेनाप्येतानीति । द्विर्वचनेऽचीति** सूत्रसाध्यानि, **णौ च्यासिमपादि** ज्ञापकसाध्यानि चेत्यर्थः ॥ **न हि नित्यानामिति ।** आल्लोपादीनामित्यर्थः ॥ **द्विर्वचनेऽचीत्यादेर**-भावे द्विर्वचनमनित्यम् ॥ भाष्ये—**वक्ष्यति हीति । दाधान्सा**-

ह्वानिति सूत्रे ॥ **यणाऽत्र भाव्यमिति ।** यदीयङ् न स्यात् तर्हि स स्यादिति तत्सम्भावनासत्त्वादित्यर्थः ॥ जग्लावित्याद्यर्थं वृद्धिपाठोऽप्यत्र बोध्यः ॥ वस्तुतोऽत्र यणादिग्रहणम् अच्स्थानिकस्य द्विर्वचनात्परस्य विधेरुपलक्षणं बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये — **पूर्वविप्रतिषेधेनेति**—यत इत्यादिः। दध्यत्र, चयनं, लवनं, चायकः, लावकः, गोदः, पित्तघ्नः, कारणा, निपूर्त्ता–इत्यादौ यथाक्रमं चरितार्थानि यणादीनि नव विभिदुरित्यादौ सावकाशेन द्वित्वेन चक्रतुरित्यादौ समावेशे पूर्वविप्रतिषेधाद् बाध्यन्ते। तथा च—चक्रतुरित्यादीनि प्रकृतसूत्रफलानि, तुतावयिषतीत्यादीनि 'णौ स्थानिवत्त्वमि'ति ज्ञापनफलानि चान्यथासिद्धानीति प्रकृतसूत्रम्, 'ओः पुयणि'ति सूत्रे वर्गप्रत्याहारजग्रहणञ्च न कर्तव्यमिति भावः।

प्रदीपे—**आह्लोपादीनामिति—**अयम्पाठः केनापि परिवर्द्धित इति प्रतिभाति, **'न हि नित्यानामिति ।** आह्लोपादीनामित्यर्थः।' इत्यस्योद्द्योतपाठस्य दर्शनात्। **चो** वाक्यालङ्कारे। **अत्र—**'द्विर्वचनमि'त्यादिवचने । **अत्र—**निन्यतुरित्यत्र। **भवितव्यमिति—**अयम्पाठः केनापि परिवर्त्तित इति प्रतिभाति, **'भाव्यमिति'** इत्यस्योद्द्योतप्रतीके दर्शनात्।

उद्द्योते—**सः**—यण्। **अपिना—**इयङ्पाठपरिग्रहः। **अत्र—**'द्विर्वचनमि'त्यादिवचने। एवमग्रेऽपि। नन्वेवमत्र तत्तदपाठाद् भाष्यकृतो न्यूनतेत्यत आह—**वस्तुत इति । परस्य—**परकालिकस्य।

**( समाधानसाधकभाष्यम् )**

**स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥**

**( उद्द्योतः )** सूत्रारम्भवादी आह—**स पूर्वविप्रतिषेध इति ॥**

**( तत्त्वालोकः )** भाष्ये—**स इति ।** अपूर्व इत्यर्थः। प्रकृतसूत्रारम्भे इत्यादिः।

**( आक्षेपभाष्यम् )**

**किं पुनरत्र ज्यायः ?**

**(उद्द्योतः)** उभयोः समतया तृतीयः पृच्छति—**किं पुनरिति ।**

**( तत्त्वालोकः )** भाष्ये-**अत्र—**प्रकृतसूत्रारम्भापूर्वपूर्वविप्रतिषेधवचनयोः।

**( समाधानभाष्यम् )**

**स्थानिवद्भाव एव ज्यायान्। पूर्वविप्रतिषेधे हि सतीदं वक्तव्यं स्यात्—**ओदौदादेशस्य उद्भवति चुटुतुशरादेरभ्यासस्य** इति ॥**

**( प्रदीपः ) ओदौदादेशस्येति ।** ओदौतोरादेशो यस्मिन्नङ्गे तस्य योऽभ्यासश्चुटुतुशरादिस्तस्य योऽकारस्तस्योकारादेशो भवतीत्यर्थः। यथा-चुक्षावयिषति। ऊर्णुनावयिषति नुनावयिषति तुतावयिषति शुश्रावयिषति । पुस्फारयिषति। अत्र **चिस्फुरोर्णा**वित्योकारस्यात्त्वम्। अत्र च यद्यपि खयः **शेषे** कृते अभ्यासस्य शरादित्वं नास्ति। तथाप्यभ्याससंज्ञाप्रवृत्तिसमयेऽस्ति ॥ एतेष्वन्तरङ्गत्वात्प्रागेव द्विर्वचनाद् वृद्ध्यावादेशयोः प्रवर्तनादिवर्णान्ततायामभ्यासस्य प्राप्तायामुत्त्वं विधीयते ॥

**( उद्द्योतः ) स्थानिवद्भाव एव ज्यायानिति ।** अयं भावः–अयं पूर्वविप्रतिषेधोऽन्तरङ्गाणां बाधको न वा। नाद्यः, बिभवनीयिषतीत्याद्यसिद्ध्यापत्तेः। किंचेष्टानिष्टविवेकस्य लक्षणैकचक्षुष्कैर्दुर्ज्ञेयत्वेन सर्वत्रैव पूर्वविप्रतिषेधवचनस्यावश्यकत्वेनेह नित्यान्तरङ्गबाधाय सुतरां वचनावश्यकत्वेन क्व सूत्रमतापेक्षया लाघवमिति ॥ अन्त्ये दूषणमाह–**ओदौदादेशस्येति ।** अत्र समानाधिकरणबहुव्रीह्यङ्गीकारे चुक्षावयिषतीत्यादौ दोषः। स्थानिवत्त्वं त्वल्विधित्वान्नेत्यत आह—**ओदौतोरादेशो यस्मिन्निति ।** इदमेव ज्ञापकमन्तरङ्गाणामिदमबाधकमिति न बिभवनीयिषतीत्यादौ दोषः ॥ अत्र सनीत्यंशोऽपि पूरणीयः। अन्यथा दिद्वनीयिषतीत्यादौ अनेनोत्त्वापत्तिः। तत्र कृते तु निर्दिष्टपरिभाषयाऽनेकव्यवधानान्न तत्र दोषः। एकणिज्व्यवधानं तु **येन नाव्यवधान**न्यायेन सह्यत एव ॥ नन्विदं वचनं जोः सौत्राण्णिचि चङि सनि वाऽजीजवद्—जिजावयिषतीत्यादौ अतिव्याप्तम् ॥ न च चकार एव पाठ्यः। गुङ्खुङ्भ्यां णिचि चङि सनि वाऽजूगवदित्यादौ दोषापत्तेरिति चेन्न। **जोर्न** इत्यस्यापि वाच्यत्वात् ॥ ओदौतोः किम्? चिखादयिषति। च्छित्वादि किम्? बिभावयिषतीत्यादि ॥ यद्यपि च्छो छेदने चिच्छासति इत्यत्रैवातिप्रसक्तम्। तथापि औत्साहचर्यादोकारोऽपि लाक्षणिक एव **गृह्यते,** तदादेशो वा औदादेशसाहचर्याद् अवेव गृह्यत इति न दोषः॥ **ऊर्णुनावयिषतीति ।** यद्यपि **पूर्वत्रासिद्धीयमद्विर्वचने** इत्यस्यानित्यतया नुशब्दस्यैव द्वित्वेनाभ्याससंज्ञाप्रवृत्तिकाले ट्वादित्वाभावः, तथाऽपि द्वित्वे कृतेऽपि द्वित्वनिष्पन्नस्य कार्ये कर्तव्ये पूर्वत्रासिद्धीयस्यासिद्धत्वाभावबोधनात्तत्रानित्यत्वकल्पने मानाभावाच्चैतत्प्रवृत्तिकाले ट्वादित्वमस्त्येवेति बोध्यम् ॥ **अभ्याससंज्ञाप्रवृत्तिसमय इति ।** एवं चाभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपे वा यत्र चुटुतुशरादित्वं तत्रास्य प्रवृत्तिरिति भावः॥ तत्रान्योदाहरणं चुक्षावयिषतीत्यादि। न हि तत्राद्यकाले तत्त्वं, क्षु इति कवर्गादित्वाद् इत्याहुः ॥

**( तत्त्वालोकः )** प्रदीपे—**प्राप्तायामिति—**'सन्यतः' इत्यनेनेति भावः।

उद्द्योते—**अयम्—**वाचनिकः। **असिद्ध्यापत्तेरिति—**अभ्यासे उकारश्रवणापत्तेरिति भावः। **इह—**चक्रतुरित्यादौ। **वचनेति—**पूर्वविप्रतिषेधवचनेत्यर्थः। **दोष इति—**अभ्यासाकारस्य ओदौद्रूपादेशत्वाभावादुत्त्वाप्राप्तिरित्यर्थः। ननु तस्य स्थानिवत्त्वात्तत्त्वमित्यत आह–**स्थानिवत्त्वन्त्विति । इदमेव—**उत्त्वविधायकवचनमेव। **इदम्**-पूर्वविप्रतिषेधवचनम्। **अत्र—**उत्त्वविधायकवचने। **अनेन—**उत्त्वविधायकवचनेन। **तत्र कृते तु—**तत्पूरणे कृते तु। **तत्र—**दिद्वनीयिषतीत्यादौ। **इदम्—**उत्त्वविधायकम्। विनिगमनाविरहादाह**—तदादेशो वेति । यद्यपीति—**अत्रेति शेषः। **ट्वादित्वाभाव इति**—तथा च—कथमेतस्य प्रवृत्तिरिति भावः। **तथापीति—**तेनेति शेषः। **तत्र—**'पूर्वत्रासिद्धीयमद्विर्वचने' इत्यत्र । **एतदिति—**उत्त्वविधायकवचनेत्यर्थः। पर्यवसितमावश्यकमाह–**एवञ्चेति।** पुस्फारयिषतीत्यत्राभ्याससंज्ञाप्रवृत्तिकालिकशरादित्वमादायोत्त्वविधायकवचनप्रवृत्त्यभ्युपगमे चेत्यर्थः। **अस्य—**उत्त्वविधायकवचनस्य। **तत्र—**तयोर्मध्ये। **अन्त्येति—**परिनिष्ठितरूपे वेतीत्यर्थः। **आद्येति—**अभ्याससंज्ञाप्रवृत्तीत्यर्थः। **तत्त्वम्—**चवर्गादित्वम्। एवञ्च-अपूर्वपूर्वविप्रतिषेधवचनपक्षेऽपूर्वस्योत्त्वस्यापि वक्तव्यत्वाद् गौरवमिति प्रकृतसूत्रारम्भपक्ष एव ग्राह्य इति भावः।

**( उत्त्ववादिन आक्षेपभाष्यम् )**

**ननु च त्वयापीत्त्वं वक्तव्यम् ॥**

**( प्रदीपः ) ननु च त्वयापीति । ओः पुयण्जिष्विति** ज्ञापनार्थमवश्यं वाच्यमित्यर्थः। उत्त्ववादी तु **ओः पुयण्जीति** न पठति, **सन्यत** इतीत्त्वस्य सिद्धत्वात् ॥

**( उद्द्योतः )** ननु णेर्द्वित्वनिमित्ताच्त्वाभावेन स्थानिवत्त्वाभावाद् विभावयिषतीत्यादि सिद्धमिति त्वयापीत्ययुक्तमत आह—**ओः प्विति ।** चुक्षावयिषतीत्यादिसिद्ध्यर्थमित्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—**त्वयापि**—प्रकृतसूत्रारम्भवादिनाऽपि ।

प्रदीपे—**ज्ञापनार्थम्**—द्वित्वनिमित्तेऽजादौ प्रत्यये व्यवहितेऽपि स्थानिवत्त्वस्य ज्ञापनार्थम् ।

उद्द्योते—**स्थानिवत्त्वाभावादिति**—तस्मिन्नजादेशस्येत्यादिः । 'सन्यतः' इतीत्त्वेनेति शेषः । एवञ्च पक्षद्वये साम्यमेवेति भावः ।

## ( इत्त्ववादिनो लाघवभाष्यम् )

**परार्थं मम भविष्यति—'सन्यतः' इद्भवतीति ॥**

**( प्रदीपः ) परार्थमिति ।** इत्त्वार्थम् । प्रसङ्गात्तु ज्ञापकम् । त्वया त्वपूर्वमुत्त्वं वक्तव्यमित्यर्थः ॥

**( उद्द्योतः ) परार्थ**मित्यत्र परशब्देन ज्ञापकापेक्षया परमित्त्वं विवक्षितमित्याह—**इत्त्वार्थमिति । द्विर्वचनेऽचीति** स्थानिवत्त्वात् पिपविषते यियविषतीत्याद्यर्थमित्यर्थः ॥ **प्रसङ्गादिति ।** वर्गप्रत्याहारजग्रहादित्यर्थः ॥ **सन्यत इद्भवतीति** विहितमित्त्वमिहानुवर्तमानं परार्थं भविष्यतीति भाष्येऽन्वयः ॥ तत्र **सन्यत** इत्यभिधानं स्वरूपेणेत्त्वमपूर्वं न भवतीति प्रदर्शनार्थं, तद् ध्वनयन्नाह—**अपूर्वमुत्त्वमिति ॥**

**( तत्त्वालोकः )** भाष्ये—**मम**—प्रकृतसूत्रारम्भवादिनः ।

प्रदीपे—**ज्ञापकमिति**—णौ स्थानिवत्त्वस्येत्यादिः । **त्वया**—अपूर्वपूर्वविप्रतिषेधवचनवादिना ।

उद्द्योते—**ज्ञापकापेक्षया परमित्त्वमिति**—'ओः पुयण्ज्यी'ति सूत्रस्थः 'णौ स्थानिवदि'ति ज्ञापकवर्गप्रत्याहारजग्रहणातिरिक्तः पकारो यकारश्चेति भावः । नन्वेवं भाष्ये कथं **सन्यत** इत्युक्तिरित्यत आह—**सन्यत इति । इह**—'ओः पुयण्जी'त्यत्र । एवञ्च—प्रकृतसूत्रारम्भपक्षे लाघवमिति भावः ।

## ( उत्त्ववादिनो गौरवपरिहारभाष्यम् )

**ममापि तह्युत्त्वं परार्थं भविष्यति—'उत्परस्यातः', ति च' इति ।**

**( प्रदीपः ) ममापीति ।** उत्त्वमप्यन्यार्थं वक्तव्यम् । तदेवाधिकविषये उपजीव्यत इत्यर्थः । तत्रायं न्यासः—**'उत्परस्यातः' 'ति च' 'ओदौवादेशस्य चुटुतुशरादेः'** इति । अभ्यासस्येति वर्तते ॥

**( उद्द्योतः )** अपूर्वत्वतदभावमात्रेण वैषम्यमस्याभिप्रेतमिति मन्वानस्तद्विघटयितुमाह परः—**ममापि तह्युत्त्वमिति ॥** तद्व्याचष्टे—**उत्त्वमपीति ॥**

**( तत्त्वालोकः )** भाष्ये—**ममापि**—अपूर्वपूर्वविप्रतिषेधवचनवादिनोऽपि ।

प्रदीपे—**तत्र**—तथा सति । **वर्त्तते**—'अत्र लोपोऽभ्यासस्ये'ति सूत्रादत्रानुवर्त्तते । तथा च—पक्षद्वये साम्यमेवेति भावः ।

## ( इत्त्ववादिभाष्यम् )

**इत्त्वमपि त्वया वक्तव्यम् । यत्समानाश्रयं तदर्थम्—उतिपपविषते संयियविषतीत्येवमर्थम् । तस्मात्स्थानिवदित्येष एव पक्षो ज्यायान् ॥ द्विर्वचनेऽचि ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥**

---

**( प्रदीपः ) इत्त्वमपीति ।** यत्रान्तरङ्गत्वं नास्ति समानाश्रयत्वात् । पवतेर्यौतेश्च सनि **स्मिपूङ्रञ्ज्वशां सनि, 'सनीवन्तर्धे'ति** चेटि कृते परत्वाद्गुणः । पूर्वविप्रतिषेधादवादेशात् पूर्वं द्विर्वचनमितीत्त्वं वक्तव्यम् । तथा जिजावयिषतीत्यत्रेत्त्वविधानार्थं वक्तव्यम् ॥ **तस्मादिति ॥** नन्वसत्यस्मिन् सूत्रे **ओः पुयण्**ज्यीति ज्ञापकमेवं समर्थयिष्यते—अन्तरङ्गो नित्यश्च विधिर्द्विर्वचनेन प्रतिषिध्यत इति, तत्र द्विर्वचने कृते यथाप्राप्तं भविष्यति ॥ तदयुक्तम् । यदि सामान्येन ज्ञापकमाश्रीयते, अचिकीर्तदित्यत्रापि पूर्वं द्विर्वचनप्रसङ्गादनिष्टरूपप्राप्तिः ॥ अथ तुल्यजातीयापेक्षं ज्ञापकं व्याख्यायते, यथोक्तं भाष्यकारेण, तथा सति चक्रतुरित्यादि न सिद्ध्यतीति सूत्रमेव कर्तव्यम् । यत्तु तेन न सिद्ध्यति तदर्थं ज्ञापकमाश्रयणीयं तुल्यजातीयापेक्षमिति सर्वेष्टलक्ष्यसिद्धिः ॥ ५९ ॥

इत्युपाध्याय**जैयट**पुत्र**कैयट**कृते महाभाष्यप्रदीपे प्रथमाध्यायस्य प्रथमे पादेऽष्टममाह्निकम् ॥

---

**( उद्द्योतः )** नापूर्वत्वतदभावमात्रेण वैषम्यमभिप्रेतम्, किन्तु गौरवतदभावाभ्यामिति दर्शयितुं भाष्ये—**इत्त्वमपीति ॥** तदुपपादयति—**यत्रेति ।** गुणावादेशयोरिति शेषः ॥ **वक्तव्यमिति ।** जोर्नेति वक्तव्यमित्यर्थः ॥ **नन्वसतीति ।** असत्यपीत्यर्थः । **यदीति ।** लघुपरत्वाभावेन सन्वत्त्वाभावोऽचिकीर्तदित्यत्र दोषः, दिदवनीयिषतीत्यादावपि दोषो बोध्यः ॥ **अथ तुल्येति ।** अवर्णपरत्वं यत्राभ्यासोत्तरखण्डाद्यवर्णस्य अभ्याससंज्ञाप्रवृत्तिसमये परिनिष्ठितरूपं वा, तत्र द्विर्वचनेनान्तरङ्गनित्ये बाध्येते इत्यर्थः ॥ **चक्रतुरिति ।** दिदवनीयिषतीत्याद्यसिद्धिरित्यपि बोध्यम् ॥ ५९ ॥

इति श्री**शिवभट्ट**सुत**सती**गर्भज**नागोजी**भट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमेऽष्टममाह्निकम् ॥ ८ ॥

---

**( तत्त्वालोकः )** भाष्ये—**अपिना**—उत्त्वपरिग्रहः । **त्वया**—अपूर्वपूर्वविप्रतिषेधवचनवादिना ।

प्रदीपे—**पवतेरिति**—तत्रेत्यादिः । **तत्र**—तथा सति । **आश्रीयते इति**—तर्हीति शेषः । **पूर्वम्**—'उपधायाश्चे'तीत्त्वात्पूर्वम् । **तथा सतीति**—द्विर्वचनेनाबाधायणि अनच्कत्वेन द्विर्वचनाप्रसङ्गादिति भावः । **सूत्रम्**—प्रकृतसूत्रम् ।

**इति व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डित श्रीरुद्रधरझाप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमपादेऽष्टममाह्निकम् ॥**

## इति प्रथमाध्याये प्रथमपादेऽष्टमाह्निकम् ।

---

# प्रथमाध्यायस्य प्रथमपादे नवममाह्निकम् ॥

( ५४ लोपसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १ मं सू० ॥ )

## अदर्शनं लोपः ॥ १ । १ । ६० ॥

( अनिष्टापत्तिनिराकरणाधिकरणम् )

( ४३१ आक्षेपवार्तिकम् ॥ १ ॥ )

**[ ॥*॥ लोपसंज्ञायामर्थसंज्ञाकरणम् ॥*॥ ]**

( भाष्यम् )

[ *लोपसंज्ञायाम् ] अर्थस्य संज्ञा कर्तव्या । शब्दस्य माभूदिति ॥

( प्रदीपः ) **अदर्शनं लोपः ॥ ६० ॥ अर्थस्येति । स्वं रूप**मिति वचनाच्छब्दस्यैव संज्ञा प्राप्नोतीति भावः ।

( उद्द्योतः ) **अदर्शनं लोपः ॥ ६० ॥** नन्वपत्यादिवदर्थपरोऽदर्शनशब्द इति सिद्धेवार्थस्य सञ्ज्ञेत्यत आह—**स्वं रूपमिति** ॥

( तत्त्वालोकः ) भाष्ये—**अर्थस्य**—स्वरूपातिरिक्तस्य-अदर्शनशब्दार्थस्य । **संज्ञा**—लोपसंज्ञा । **शब्दस्य**—अदर्शनशब्दस्य । एवमग्रेऽपि ।

उद्द्योते—**अपत्यादिवत्**—अपत्यादिशब्दवत् । **अर्थस्य**—तदर्थस्य ।

( ४३२ आक्षेपवार्तिकम् ॥ २ ॥ )

**[ ॥ * ॥ इतरेतराश्रयं च ॥ * ॥ ]**

( भाष्यम् )

इतरेतराश्रयं च भवति ॥

का इतरेतराश्रयता ? ॥

सतोऽदर्शनस्य संज्ञया भवितव्यम्, संज्ञया चादर्शनं भाव्यते, तदेतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते ॥

( प्रदीपः ) **इतरेतराश्रयमिति** । विधिप्रदेशेष्वेतच्चोद्यम्, नानुवादे—**चादिलोपे विभाषे**त्यादौ ॥

( उद्द्योतः ) **नानुवादे इति** । तत्र हि न संज्ञाकृतोऽभाव इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**का**—कथम् । **तत्**—तस्मात् ।

( समाधानभाष्यम् )

**॥ * ॥ लोपसंज्ञायामर्थसतोरुक्तम् ॥ * ॥**

किमुक्तम् ? ।

अर्थस्य तावदुक्तम् * इतिकरणोऽर्थनिर्देशार्थः* इति ॥

सतोऽप्युक्तम्—* सिद्धं तु नित्यशब्दत्वाद् * इति । नित्याः शब्दाः । नित्येषु च शब्देषु सतोऽदर्शनस्य संज्ञा क्रियते, न संज्ञयाऽदर्शनं भाव्यते ॥

( प्रदीपः ) **इतिकरण इति** । इहापि स एवानुवर्तते । लोप इत्यन्वर्थसंज्ञाविज्ञानाद्वाऽर्थस्य सञ्ज्ञा, न शब्दस्य ॥

( उद्द्योतः ) भाष्ये—**उक्तमिति । नवेति विभाषे**त्यत्रेत्यर्थः ॥ असंबद्धपदव्यवायान्नानुवृत्तिरत आह—**लोप इतीति** । तदर्थान्वययोग्यताया अर्थे एव सत्त्वाद् अदर्शनशब्दस्य तादृशान्वर्थसंज्ञाकरणे फलाभाव इति भावः ॥ प्रसक्तादर्शनस्येत्यर्थलाभार्थं स्थानेपदस्यैवास्याप्यनुवृत्तिः सुलभा, **लुप्लृ च्छेदन** इति धात्वर्थानुसारेणान्वर्थत्वासंभवादिति तु भाष्यतात्पर्यम् ॥ **अभावो लोप** इत्यवसानसंज्ञासूत्रभाष्योक्तेरदर्शनशब्देन तत्समनियतो वर्णाभाव एवात्रेति बोध्यम् ॥ **स्वंरूप**मित्यस्य प्रत्याख्याने तदनुवृत्तिं विनापि सिद्धिरिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**लोपसंज्ञायामिति**—नैष दोषः, यत इत्यादिः । अत्र हेतुं व्याचष्टे—**नित्या इति** । यत इत्यादिः ।

प्रदीपे—**स एव**—'नवेति' सूत्रादितिशब्द एव ।

उद्द्योते—**असम्बद्धेति**—नन्वित्यादिः । कैयटोक्तं खण्डयन् भाष्याशयमाह—**प्रसक्तेति** । **अस्यापि**—इतिशब्दस्यापि । अस्यानतिप्रसङ्गायाह-**अभाव इति** । प्रकारान्तरे लाघवमाह-**स्वं रूपमिति** ।

( ४३३ (१) आक्षेपवार्तिकप्रथमखण्डम् ॥ ३ ॥ )

**॥ * ॥ सर्वप्रसङ्गस्तु सर्वस्यान्यत्रादृष्टत्वात् ॥ * ॥**

( भाष्यम् )

सर्वप्रसङ्गस्तु भवति । सर्वस्यादर्शनस्य लोपसंज्ञा प्राप्नोति ॥

किं कारणम् ? ।

सर्वस्यान्यत्रादृष्टत्वात् । सर्वो हि शब्दो यो यस्य प्रयोगविषयः, स ततोऽन्यत्र न दृश्यते । त्रपु जतु इत्यत्राणोऽदर्शनम् । तत्र 'अदर्शनं लोपः' इति लोपसंज्ञा प्राप्नोति ॥

( प्रदीपः ) **सर्वप्रसङ्गस्त्विति** । यदि स्वभावतोऽप्रयुक्तस्यान्वाख्यानमात्रं क्रियते, तदा सर्वस्य स्वविषयादन्यत्राप्रयोगादस्त्यदर्शनमिति लोपसंज्ञाप्रसङ्गः ॥

( उद्द्योतः ) नित्यशब्दाश्रयणे इतरेतराश्रयपरिहारेऽप्ययं दोष इत्याह—**यदीति** ॥

( तत्त्वालोकः ) भाष्ये—**किं कारणम्**—कस्मात् कारणात् ॥ **त्रप्विति**—तथा चेत्यादिः ।

उद्द्योते—**अयम्**—प्रकृतवार्त्तिकोक्तः ।

( भाष्यम् )

तत्र को दोषः ।

( ४३३ (२) आक्षेपवार्तिकम् ॥ ४ ॥ )

॥*॥ तत्र प्रत्ययलक्षणप्रतिषेधः ॥*॥

( भाष्यम् )

तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । 'अचो ञ्णिति' इति वृद्धिः प्राप्नोति ॥

( तत्त्वालोकः ) **तत्र**—तथा सति । एवमग्रेऽपि । **अच इति**—अन्यथेत्यादिः ।

( आक्षेपबाधकभाष्यम् )

नैष दोषः । ञ्णित्यङ्गस्याचो वृद्धिरुच्यते । यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गं भवति । यस्माच्चात्र प्रत्ययविधिः, न तत् प्रत्यये परतः । यच्च प्रत्यये परतः, न तस्मात्प्रत्ययविधिः ॥

( प्रदीपः ) **ञ्णित्यङ्गस्येति** । अङ्गसंज्ञा च विधानप्रतिबद्धा । न चात्र प्रत्ययस्य ञ्णितो विधानम् ॥ **यस्माच्चेति** । त्रपुशब्दात्सोर्विधानम् ॥ **न तत्प्रत्यय इति** । ञ्णिति वृद्धिनिमित्त इत्यर्थः ॥ **यच्चेति** । पुशब्दे ॥ **न तस्मादिति** । तस्मात्त्रपुशब्दात्सोरन्यस्याणो विधानं नास्तीत्यर्थः ॥

( उद्द्योतः ) अत्र प्रत्ययो नाणित्याह—**सोरिति** । **ञ्णिति वृद्धिनिमित्ते इति** । **अङ्गसंज्ञात्रे** प्रत्यासत्त्या प्रत्ययपदार्थयोरैक्याश्रयणाद् **वृद्धि**विधौ ञ्णित्प्रत्ययनिरूपिताङ्गग्रहणाच्चेति भावः ॥

(तत्त्वालोकः) भाष्ये—**ञ्णित्यङ्गस्येति**—यत इत्यादिः । **अत्र**—त्रपु इत्यत्र । एवम्प्रदीपोद्द्योतयोरपि ।

प्रदीपे—**विधानेति**—प्रत्ययेत्यादिः ।

( आक्षेपसाधकभाष्यम् )

क्विपस्तर्ह्यदर्शनम् । तत्र 'अदर्शनं लोपः' इति लोपसंज्ञा प्राप्नोति ॥

तत्र को दोषः ? ।

तत्र प्रत्ययलक्षणप्रतिषेधः ॥ तत्र प्रत्ययलक्षणं कार्यं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः । 'ह्रस्वस्य पिति कृति तुग्' इति तुक् प्राप्नोति ॥

( प्रदीपः ) अनाङ्गं कार्यं चोदयति—**क्विप इति** । त्रपु इत्यत्र क्विपोऽदर्शनमस्ति, स च कृदिति तुक्प्रसङ्गः ॥

( तत्त्वालोकः ) भाष्ये—**ह्रस्वस्येति**—अन्यथेत्यादिः ।

( ४३४ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञत्वात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

प्रसक्तादर्शनं लोपसंज्ञं भवतीति वक्तव्यम् ॥

( प्रदीपः ) **सिद्धं त्विति** । शास्त्रात्... प्रसक्तस्य यददर्शनं तल्लोपसंज्ञं भवति ॥ स्थानेग्रहणमिहाप्यनुवर्तते । स्थानं च प्रसङ्गः । तेन प्रसङ्गे यददर्शनमिति लभ्यते ॥

( उद्द्योतः ) **चादिलोप** इति ...—**अर्थाद्वेति** । **एकवचनमुत्सर्गत** इत्यादिशास्त्रमर्थनिरपेक्षं विभक्तिप्रसञ्जकम् । अर्थोऽप्येकत्वादिर्विवक्षित एकवचनादिप्रसञ्जक इति बोध्यम् ॥ **ननु** कथं प्रसक्तस्येति लभ्यतेऽत आह—**स्थाने इति** । न च पित्कृता प्रकृत्याक्षेपेणापि तुग्वारयितुं शक्यः । आक्षेप आक्षिप्तस्य शाब्देऽन्वये च मानाभावात् । अत्र चेदमेव भाष्यं मानम् । किंचानुपपद्यमानेन स्वोपपादकमाक्षिप्यते, यथा पीनत्वेन रात्रिभोजनम् ॥ न चैवं प्रकृते । न ह्येतत्सूत्रे आक्षेपं विना पित्कृत्प्रत्ययानुपपत्तिरस्ति । नापि तदाक्षेपेण तदुपपत्तिः । नापि **प्रत्ययग्रहणे यस्मात्स विहितस्तदादे**रित्युपस्थितिः । अनियमप्रसङ्गत्वभावेन नियमाभावात्तस्या अनुपस्थितेरित्यावेदितम् । किंचात्रैव प्रकृतिं विना प्रत्ययज्ञानसत्त्वे व्यभिचारात्तदाक्षेपासंभव **इति** दिक् ॥ यत्तु ग्रामणिकुलं ... शिथिरिस्यर्थके ग्रामे तिष्ठतीति वाक्ये **ल्यब्लोप** इति पञ्चम्यापत्तिवारणाय **प्रसक्तस्ये**त्यावश्यकमिति ॥ तन्न । तेन प्रत्यासत्त्या ल्यबन्तार्थककर्माधिकरणयोरेव पञ्चमीविधानेनाप्राप्तेः । तत्त्वे त्विष्टापत्तिः पञ्चम्या इत्यलम् ॥

( तत्त्वालोकः ) भाष्ये—**प्रसक्तेति**—यत इत्यादिः । **वक्तव्यमिति**—प्रकृतसूत्रारम्भसामर्थ्यात्कल्पनीयमित्यर्थः । **अन्यथा**—पश्चादिशब्दस्येव लोपशब्दस्याप्यर्थपरत्वात् 'लोपो व्योर्वली'त्यादिप्रदेशेषु लोपशब्देन लौकिकार्थस्य ग्रहणादेवेष्टसिद्धौ लोपसंज्ञाविधानाय प्रकृतसूत्रारम्भो नावश्यक इति भावः ।

उद्द्योते—**प्रकृत्याक्षेपेणापीति**—अत्रापिना-उक्तोपायपरिग्रहः । नन्विदं भाष्यमुपायान्तरपरमित्यत आह—**किञ्चेति** । **एतत्सूत्रे**—'ह्रस्वस्ये'ति सूत्रे । **तदाक्षेपेण**—प्रकृत्याक्षेपेण । प्रकारान्तरेणापि तदाक्षेपासम्भवमाह—**किञ्चेति** । **अत्रैव**—'ह्रस्वस्ये'ति सूत्र एव । कौस्तुभाद्युक्तिं खण्डयति—**यत्त्विति** ।

( आक्षेपभाष्यम् )

यदि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यते, ग्रामणीः सेनानीः—अत्र वृद्धिः प्राप्नोति ॥

( प्रदीपः ) **ग्रामणीरिति** । अर्थोपपदधातुसंनिधानादर्थाच्छास्त्राच्चाणः प्रसङ्गोऽस्तीति भावः ॥

( उद्द्योतः ) **अर्थादिति** । कर्तृलक्षणादित्यर्थः ॥ **शास्त्रात्क**र्मण्यणित्यतः । **अणः प्रसङ्ग इति** । **यस्मात्प्रत्ययविधिरि**त्यत्र विधिः प्रसङ्ग एव निर्दिष्ट इत्यङ्गत्वमस्तीत्यभिमानः ॥

( तत्त्वालोकः ) भाष्ये—**ग्रामणीरिति** । तर्हीत्यादिः । **वृद्धिः**—'अचो ञ्णिती'ति वृद्धिः ।

उद्द्योते—ननु ग्रामणीरित्यादावुक्तरीत्याऽणः प्रसङ्गसत्त्वेऽपि प्रत्ययविधानप्रतिबद्धाङ्गत्वाभावात् कथं वृद्धिप्रसङ्ग इत्यत आह—**यस्मादिति** ।

( समाधानभाष्यम् )

प्रसक्तादर्शनं लोपसंज्ञं भवति षष्ठीनिर्दिष्टस्य ॥

( प्रदीपः ) **षष्ठीनिर्दिष्टस्येति** । षष्ठीग्रहणमप्यनुवर्तते ॥

( उद्द्योतः ) षष्ठीग्रहणमिति । नच षष्ठ्यन्तं वैयधिकरण्येनादर्शनान्वयीति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—प्रसक्तेति—नैष दोषः, यत इत्यादिः । प्रदीपे—षष्ठीग्रहणमिति—प्रकृतसूत्रे 'षष्ठी स्थानेयोगे'ति सूत्रादित्यादिः । अपिना—स्थानेग्रहणपरिग्रहः ।

उद्द्योते—बोध्यमिति—तथा च—षष्ठ्यन्तस्य यत्प्रसक्तन्तस्यादर्शनं लोपसंज्ञं भवतीति प्रकृतसूत्रार्थः । एवञ्च—ग्रामणीरित्यादौ पञ्चम्यन्तादेवाणः प्रसक्तिर्न तु षष्ठ्यन्तस्येति न दोष इति भावः ।

( प्रसक्तादर्शनवादिन आक्षेपभाष्यम् )

**यदि षष्ठीनिर्दिष्टस्येत्युच्यते 'चाहलोप एवेत्यवधारणम्' 'चादिलोपे विभाषा' अत्र लोपसंज्ञा न प्राप्नोति ॥**

( प्रदीपः ) चादिलोप इति । ततश्च शुक्ला व्रीहयो भवन्ति श्वेता गा आज्याय दुहन्तीति निघातविकल्पो न स्यात् ॥

( तत्त्वालोकः ) भाष्ये—चाहेति—अस्य सूत्रस्य–'च अह एतयोर्लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ता, अवधारणार्थैवशब्दप्रयोगे सती'त्यर्थः । तर्हीत्यादिः । तथा च—'देव एव ग्रामं गच्छतु । देव एवारण्यं गच्छतु । ग्राममरण्यञ्च गच्छत्वित्यर्थः ।' अत्र—निघातनिषेधो न स्यात् । चादीति—अस्य सूत्रस्य—'चवाहाहैवानां लोपे प्रथमा तिङ्विभक्तिर्नानुदात्ते'त्यर्थः ।

( षष्ठीनिर्दिष्टवादिन आक्षेपभाष्यम् )

**अथ प्रसक्तादर्शनं लोपसंज्ञं भवतीत्युच्यमाने कथमेवैतत् सिद्ध्यति ? ।**

( प्रदीपः ) अथेति । अत्राऽपि चादीनां शास्त्रान्नास्ति प्रसङ्गः ॥

( उद्द्योतः ) अत्रापीति । शास्त्रतः प्रसक्तिरेवाभिमतेति चोद्यमिति भावः ॥

(तत्त्वालोकः) उद्द्योते–एवेति–अस्य 'शास्त्रतः'इत्यनेनान्वयः।

( प्रसक्तादर्शनवादिनः समाधानभाष्यम् )

**को हि शब्दस्य प्रसङ्गः ? । यत्र गम्यते चार्थो न च प्रयुज्यते ॥**

( उद्द्योतः ) अर्थतोऽपि प्रसक्तिर्गृह्यत इत्युत्तरम् ॥

( उपसंहारभाष्यम् )

**अस्तु तर्हि प्रसक्तादर्शनं लोपसंज्ञं भवतीत्येव ॥**

( आक्षेपस्मारणभाष्यम् )

**कथं ग्रामणीः सेनानीः ? ॥**

( तत्त्वालोकः ) कथमिति—यद्येवं तर्हीत्यादिः ।

( समाधानभाष्यम् )

**योत्राऽणः प्रसङ्गः क्विपाऽसौ बाध्यते ॥ अदर्शनं लोपः ॥ ६० ॥**

( प्रदीपः ) क्विपाऽसौ बाध्यत इति । सत्सूद्विषेति क्विपो विधानादणोऽत्र प्रसङ्गाभावः ॥ ६० ॥

( उद्द्योतः ) अणोऽत्रेति । परिहृत्य चापवादविषयमिति न्यायेन प्रसङ्ग एव नास्तीति भावः ॥ ६० ॥

( तत्त्वालोकः ) भाष्ये—योऽत्रेति—यत इत्यादिः ।

( ५५–लुक्श्लुलुप्संज्ञासूत्रम् ॥१।१।९ आ. २ यं सू० ॥ )

# प्रत्ययस्य लुक्श्लुलुपः ॥१।१।६१॥

( प्रत्ययपदप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**प्रत्ययग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) प्रत्ययस्य ॥ ६१ ॥ प्रत्ययग्रहणमिति । लुगादिविधौ क्वचित्प्रत्ययः साक्षान्निर्दिश्यते । क्वचिदनुवर्तते । क्वचित्सामर्थ्यात्प्रतीयत इति प्रश्नः ॥

( उद्द्योतः ) प्रत्ययस्य ॥ ६१ ॥ ननु लुगादिविधौ प्रत्ययादर्शनविधिर्यथा स्यादित्यर्थं प्रत्ययस्येतीत्यत आह– लुगादीति ॥ साक्षादिति । लुगणिञोरित्यादौ ॥ क्वचिदिति । यथा लुग्वादुहेत्यादौ–क्सस्येति ॥ क्वचिदिति । वक्ष्यमाणमन्त्रेषु वक्ष्यमाणयुक्तिभिरित्यर्थः ॥

( ४३५ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ लुमति प्रत्ययग्रहणमप्रत्ययसंज्ञाप्रतिषेधार्थम् ॥ * ॥**

( भाष्यम् )

**लुमति प्रत्ययग्रहणं क्रियते, अप्रत्ययस्यैताः संज्ञा मा भूवन्निति ॥**

( प्रदीपः ) अप्रत्ययस्येति । अविद्यमानः प्रत्ययोऽस्मिन्नदर्शने इति तदप्रत्ययम् ॥

( उद्द्योतः ) नन्वदर्शनस्येमाः संज्ञा इति अप्रत्ययस्यैता इत्यनुपपन्नमत आह—अविद्यमान इति । प्रतियोगिविशेषणत्वेनेति शेषः ॥ वस्तुतोऽवसानसंज्ञासूत्रे वक्ष्यमाणरीत्या प्रत्ययाभावस्यैवेमाः संज्ञा इति भाष्याभिप्रायः ॥

( भाष्यम् )

**किं प्रयोजनम् ? ।**

( ४३६ प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रयोजनं तद्धितलुकि कंसीयपरशव्ययोर्लुकि च गोप्रकृतिनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् )

**तद्धितलुकि गोनिवृत्त्यर्थम् । कंसीयपरशव्ययोश्च लुकि प्रकृतिनिवृत्त्यर्थम् । 'लुक्तद्धितलुकि' इति गोरपि लुक् प्राप्नोति । प्रत्ययग्रहणान्न भवति ॥ 'कंसीयपरशव्ययोर्यञञौ लुक् च' इति प्रकृतेरपि लुक् प्राप्नोति । प्रत्ययग्रहणान्न भवति ॥**

( प्रदीपः ) गोरपीति । पञ्चेन्द्र इत्यादौ तु निर्दिश्यमानस्यादेशा भवन्तीति वचनात् स्त्रीप्रत्ययस्यैव लुग् भविष्यति, न तदन्तस्य । गोरतद्धितलुकीत्यत्र गोर्लुकि कृते पञ्चगुरित्यादौ गोशब्दान्त-

त्वाभावात्समासान्ताप्राप्तावतद्धितलुकीति प्रतिषेधोऽनर्थकः स्यादिति चेत् ॥ कृते समासान्ते लुक् स्यादित्यर्थवानेव प्रतिषेधः ॥ ननु स्वभावतोऽप्रवृत्तस्यादर्शनं लुक्संज्ञम्। न च तत्र गोशब्दस्य स्वभावतोऽप्रवृत्तिः ॥ नैष दोषः। शास्त्रानुसारिभिरस्यार्थस्य दर्शनात् ॥ **प्रकृतेरपीति** । समुदायस्य षष्ठीनिर्देशात् ॥

**( उद्द्योतः )** भाष्ये—**गोरपीति । गोस्त्रियोरिति** समुदायानवृत्तेरिति भावः ॥ ननु **गोस्त्रियो**रित्यत्र स्त्रीति स्वरितगुणयुक्तमिति **स्त्रिया**मित्यधिकारविहितप्रत्ययग्रहणेन तदन्तग्रहणात् प्रत्ययान्तस्य लुक् स्यादिति तद्धितलुकि तन्निवृत्त्यर्थत्वमपि कुतो नोक्तम् अत आह—**पञ्चेन्द्र इति** । गोनिवृत्तिः प्रत्ययग्रहणं विनापि सिध्यतीति शङ्कते—**गोरिति** । पञ्चगुरित्यत्र क्रीतार्थठकोऽध्यर्धेति लुक् ॥ **कृते इति** । परत्वादिति भावः । **अन्तरङ्गानपीति** न्यायस्तु अन्तरङ्गनिमित्तविनाशकप्रत्ययलुग्विषय इति तात्पर्यम् ॥ न च समासान्ते तेन व्यवधानात्कथं लुक्, गोरित्यनुवृत्तिसामर्थ्येन लुकप्राप्तेरिति बोध्यम् ॥ नित्यशब्दान्वाख्यानाभिप्रायेण शङ्कते—**नन्विति** ॥ **समुदायस्येति । यस्येति चे**त्यकारलोपे सिद्धे लुग्विधानसामर्थ्येन सर्वादेशः स्यादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**गोरपि लुक् प्राप्नोतीति**—प्रकृतसूत्रे प्रत्ययग्रहणाभावे—पञ्चभिर्गोभिः क्रीतः पञ्चगुरित्यत्र 'तेन क्रीतमि'त्यर्थे जातस्य ठकः 'अध्यर्धपूर्वपदादि'ति लुकि 'लुक्तद्धितलुकी'ति गोर्लुक् प्रसज्येत, अत्र 'गोस्त्रियोरुपसर्जनस्ये'त्यतः 'एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः, सह वा निवृत्तिरि'ति परिभाषया स्त्रीशब्दस्येव गोशब्दस्याप्यनुवृत्तिसम्भवादितीह प्रत्ययग्रहणम्। तत्सत्त्वे तु—प्रत्ययादर्शनबोधकेन लुक्शब्देन गोशब्दस्यान्वयासम्भवाद् न गोर्लुक् प्रसज्यते इति भावः। **प्रकृतेरपि लुक् प्राप्नोतीति**—'कंसाय हितं कंसीयम्, तस्य विकारः कांस्यम्; परशवे हितं परशव्यम्, तस्य विकारः पारशवः' इत्यनयोर्यथाक्रमं 'तस्मै हितमि'त्यर्थे छे यति च जाते 'कंसीयपरशव्ययोर्यञञौ लुक् चे'ति छयतोर्लुक्, यञञौ च भवतः। इह-प्रत्ययग्रहणासत्त्वे-कंसीयपरशव्ययोर्लुक् स्यान्न तु छयतोरेवेतीह प्रत्ययग्रहणम्। तत्सत्त्वे तूक्तरीत्या छयतोरेव लुग् भवति, न तु कंसीयपरशव्ययोरिति भावः।

प्रदीपे—**न तदन्तस्य**—न तु स्त्रीप्रत्ययान्तस्य। **इत्यत्रेति**—अस्य **'अतद्धिते'**त्यनेनान्वयः। **अनर्थकः स्यादिति**—तथा च प्रतिषेधसामर्थ्यादेव तद्धितलुकि गोनिवृत्तिः सेत्स्यतीति तदर्थमिह सूत्रे प्रत्ययग्रहणं नावश्यकमिति भावः। **चेत्**—चेन्न, यतः। **तत्र**—पञ्चगुरित्यत्र।

उद्द्योते—**तन्निवृत्त्यर्थत्वम्**—स्त्रीप्रत्ययान्तनिवृत्त्यर्थत्वम्। **अपिना**—गोनिवृत्त्यर्थत्वसमुच्चयः। ननु 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति न्यायेन समासान्तात्पूर्वं गोर्लुगेव स्यादित्यत आह—**अन्तरङ्गानिति । विनाशकेति**—इदं लुग्विशेषणम्। **न चेति**—लुकः पूर्वमिति शेषः। **लुक्**—गोर्लुक्। नन्वेवमपि—'अलोऽन्त्य' परिभाषासहकृतेन तेन कंसीयपरशव्ययोरन्त्यस्यैव लुक् स्यान्न तु तयोरिति 'प्रकृतेरपी'ति भाष्यस्य कथं सङ्गतिरित्यत आह—**यस्येतीति**।

**( प्रत्याख्यानभाष्यम् )**

**गोनिवृत्त्यर्थेन तावन्नार्थः ।**

**( तत्त्वालोकः ) नार्थ इति**—न प्रयोजनमित्यर्थः। इह-प्रत्ययग्रहणस्येति शेषः।

**( ४३७ प्रत्याख्यानसाधकवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ योगविभागात् सिद्धम् ॥ * ॥

**( भाष्यम् )**

योगविभागः करिष्यते—'गोरुपसर्जनस्य' गोऽन्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततः 'स्त्रियाः' स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्योपसर्जनस्य ह्रस्वो भवति ॥ ततो 'लुक्तद्धितलुकि' इति। स्त्रिया इति वर्तते। गोरिति निवृत्तम् ॥

**( प्रदीपः ) योगविभागादिति** । [illegible] शानुवृत्तिरित्येतत् प्रकारान्तरेण [illegible] ॥

**( उद्द्योतः )** ननु योगविभागे [illegible] कुतः [illegible] आह—**एकयोगेति । प्रकारान्तरम्**—योगविभागम् [illegible] ॥

**( तत्त्वालोकः )** भाष्ये—**योगेति**—[illegible] इत्यादिः। **वर्तते**—अनुवर्तते।

**( ४३८ प्रत्याख्यानसाधकवार्तिकम् ॥ ४ ॥ )**

## ॥*॥ कंसीयपरशव्ययोर्विशिष्टनिर्देशात् सिद्धम् ॥ * ॥

**( भाष्यम् )**

कंसीयपरशव्ययोर्विशिष्टनिर्देशः कर्तव्यः। कंसीयपरशव्ययोर्यञञौ भवतश्छयतोश्च लुग्भवतीति ॥

**( प्रदीपः ) विशिष्टनिर्देशादिति** । छयतावेवात्र निर्दिष्टावित्यर्थः ॥

**( उद्द्योतः ) छयताविति** । कंसात् प्राक्क्रीताच्छः। परशोरुगवादिभ्यो यत् ॥

**( तत्त्वालोकः )** भाष्ये—**कंसीयेति**—प्रकृतिनिवृत्त्यर्थेनापि च नार्थः, यत इत्यादिः। मात्रालाघवानादरेणाह—**कर्तव्य इति**।

प्रदीपे—अत्र—'कंसीयपरशव्ययोरि'ति ग्रन्थे।

**( विशिष्टनिर्देशावश्यकताभाष्यम् )**

स चावश्यं विशिष्टनिर्देशः कर्तव्यः। क्रियमाणेऽपि वै प्रत्ययग्रहणे उकारसकारयोर्मा भूदिति। 'कमेः सः' कंसः; परान् शृणातीति परशुरिति ॥

**( उद्द्योतः )** कंसे कमेः सः। परशौ आङ्परयोः खनिशृभ्यां डिच्चे त्युप्रत्ययः ॥

**( तत्त्वालोकः )** भाष्ये—**वै**—हि। **उकारसकारयोरिति**—लुगिति शेषः।

**( विशिष्टनिर्देशावश्यकताबाधकभाष्यम् )**

**नैष दोषः। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥**

**( प्रदीपः ) उणादय इति । अतः कृकमिकंसकुम्भेति** कंसशब्दस्य भेदेनोपादानात् क्वचिदुणादयो व्युत्पत्तिकार्यं न लभन्त इत्यर्थः। यञञोस्तु विधानसामर्थ्याल्लुगभावः ॥

**( उद्द्योतः ) अतः कृ इति** ॥ धातौ सप्तमीनिर्दिष्टे तदादिग्रहणात् कमिग्रहणेनैव सिद्धे इति शेषः ॥ कंसेस्तु कंस इति न रूपम्।

अनभिधानादिति भावः ॥ अत एव **कमेः सः कंस** इति भाष्ये उक्तम् ॥ नन्वेवमपि विशिष्टनिर्देशाभावे यञञोरपि लुक् स्यादत आह—**यञञोरिति** । विकारावयवार्थप्रतीतये औत्सर्गिकाण एव लुकं विदध्यात् ॥ न च यञञ्लुकां सामर्थ्याद्विकल्पोऽस्तु । वेत्यनुक्तिस्तु यञञ्भ्यां मुक्ते औत्सर्गिकाणः श्रवणाभावायेति वाच्यम् ॥ यञञ्लुकामेककालप्रतीतानामुद्देश्यविधेयभावासंभवात् ॥ **व्युन्लुलौ तुट्** चेत्यादौ तु **अनद्यतन** इत्यादिनिर्देशाद्वाक्यभेदाङ्गीकारः । किं च **कंसीयपरशव्ययोरिति** षष्ठीनिर्देशादपि न यञञोर्लुक्, अन्यथा पञ्चम्यैव निर्दिशेदिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**उणादय इति**—यत इत्यादिः ।

प्रदीपे—**भेदेनेति**—कमिशब्दादिति भावः ।

उद्द्योते—ननु कमिकंसशब्दयोः स्वरूपभेदात्कथं कमिग्रहणेन कंसे सिद्धिरित्यत आह—**धाताविति** । 'विष्वग्देवयोश्चे'ति सूत्रेऽप्रत्ययग्रहणेन ज्ञापितादिति भावः । ननु तत्र कंसग्रहणम्-कंसिनिष्पन्नस्यैव कंसस्य ग्रहणार्थम्, न तु कमिनिष्पन्नस्येत्यत आह—**कंसे स्त्विति । अत एव**-अनभिधानादेव । **एवमपि**—उकारसकारयोर्लुग्वारणेऽपि । ननु तयोर्विधानं विकारावयवार्थप्रतीत्या सफलमित्यत आह—**विकारेति** । नन्वेवं 'लुग्वे'त्युचितमित्यत आह—**वेत्यनुक्तिस्त्विति** । नन्वेवमन्यत्रानिर्वाह इत्यत आह—**व्युन्लुलाविति** । तत्र हेत्वन्तरमाह—**किञ्चेति** ।

### ( उपसंहारभाष्यम् )

**स एषोऽनन्यार्थो विशिष्टनिर्देशः कर्तव्यः, प्रत्ययग्रहणं वा कर्तव्यम् ॥**

**( प्रदीपः ) स एषोऽनन्यार्थ इति** । प्रकृतिनिवृत्त्यर्थ एव न तु प्रत्ययान्तरनिवृत्त्यर्थोऽपीत्यर्थः ॥

**( उद्द्योतः ) प्रकृतीति** । प्रकृतिव्यतिरिक्तप्रत्ययान्तरवाची अन्यशब्दः । तेन नञः समासे प्रकृतिरुच्यत इत्याशयः ॥

**( तत्त्वालोकः )** प्रदीपे—उणादित्वेनाव्युत्पन्नत्वादेवोकारसकारयोः, विधानसामर्थ्यादेव च यञञोः निवृत्तेः सिद्धत्वादाह—**न त्विति** ।

### ( ४३९ प्रत्याख्यानवार्तिकम् ॥ ५ ॥ )

## ॥ ❀ ॥ उक्तं वा ॥ ❀ ॥

### ( भाष्यम् )

**किमुक्तम् ? ।**

**❀ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थं यच्छयोश्च लुगर्थम् ❀ इति ॥**

**( उद्द्योतः )** भाष्ये—**ङ्याबिति** । प्रातिपदिकात्परस्य लुगित्यर्थे यञञोर्विधानसामर्थ्याल्लुगभावे उसयोः प्रातिपदिकात्परत्वाभावेन परिशेषात् कंसीयाद्यवयवप्रातिपदिकात्परयोः छयतोरेव लुगित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**उक्तं वेति**—'ङ्याप्प्रातिपदिकादि'ति सूत्रे इति शेषः । तथा च—**न विशिष्टनिर्देशः कर्तव्यः, न च प्रत्ययग्रहणं** कर्तव्यमिति भावः ।

उद्द्योते—**उसयोः**—उकारसकारयोः ।

### ( ४४० (१) प्रयोजनवार्तिकप्रथमखण्डम् )

## ॥ ❀ ॥ षष्ठीनिर्देशार्थं तु ॥ ❀ ॥

### ( भाष्यम् )

**षष्ठीनिर्देशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् । षष्ठीनिर्देशो यथा प्रकल्पेत ॥**

### ( ४४० (२) प्रयोजनसाधकं वार्तिकद्वितीयखण्डम् ॥ ६ ॥ )

## ॥❀॥ अनिर्देशे हि षष्ठ्यर्थाप्रसिद्धिः ॥❀॥

### ( भाष्यम् )

**अक्रियमाणे हि प्रत्ययग्रहणे षष्ठ्यर्थस्याप्रसिद्धिः स्यात् ॥**

**कस्य ? ।**

**स्थानेयोगत्वस्य ॥**

**( प्रदीपः ) षष्ठीनिर्देशार्थं त्विति** । विशिष्टस्य षष्ठ्यर्थस्य स्थानेयोगत्वस्य निर्देशार्थमित्यर्थः ॥ असति प्रत्ययस्येत्येतस्मिन् यः कश्चिदानन्तर्यादिः संबन्धः स्यात् । ततश्च **जनपदे लुबिति** पञ्चालाः शोभना इत्यादौ जनपदवाचिनोऽनन्तरस्य शोभनादेरपि लुप् स्यात् ॥

**( उद्द्योतः ) विशिष्टेति** । जनपदार्थकप्रत्ययसंबन्धिन इत्यर्थः ॥ **शोभनाः पञ्चाला इत्यादौ** इति पाठ उचितः ॥ **अनन्तरस्येति** । अव्यवहितस्येत्यर्थः । जनपदार्थवाचके शब्दे सति तदनन्तरस्य लुबित्यर्थ इति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—अत्र षष्ठीपदं षष्ठ्यर्थपरमित्याह—**षष्ठ्यर्थस्येति** । सति प्रत्ययस्येत्येतस्मिन् स्थानपदानुवृत्त्या स्थानेयोगत्वं षष्ठ्यर्थो भवतीति भावः । **स्यादिति**—षष्ठ्यर्थ इत्यादिः ।

उद्द्योते—अस्याधिक्यादाह—**जनपदेति । शोभना इति**—'पञ्चालाः शोभना इत्यादावि'त्यत्रेत्यादिः । तथा च-'जनपदे'इत्यस्य 'जनपदवाचिनि शब्दे परे' इत्यर्थेऽपि न दोष इत्याशयः ।

### ( प्रत्याख्यानसाधकमाक्षेपभाष्यम् )

**क्व पुनरिह षष्ठीनिर्देशार्थेनार्थः प्रत्ययग्रहणेन । यावता सर्वत्रैव षष्ठ्युच्चार्यते—अणिञोः, तद्राजस्य, यञञोः, शप इति ? ॥**

### ( समाधानभाष्यम् )

**इह न काचित् षष्ठी—'जनपदे लुब्' इति ॥**

**( तत्त्वालोकः ) इह न काचिदिति**—तत्र-षष्ठ्यर्थनिर्देशार्थेन प्रत्ययग्रहणेन 'जनपदे लुबि'त्यत्र प्रयोजनम्, यत इत्यादिः ।

### ( समाधानबाधकभाष्यम् )

**अत्रापि प्रकृतं प्रत्ययग्रहणमनुवर्तते ॥**

**क्व प्रकृतम् ? ।**

**'प्रत्ययः, परश्च' इति ॥**

**( उद्द्योतः )** भाष्ये—**प्रकृतमिति** । अत एव **लवणाल्लुगि**त्यत्र प्रकृतठक एव लुगिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अत्रापीति**—तत्र तादृशेन प्रत्ययग्र-

हणेन 'जनपदे लुबि'त्यत्रापि नार्थः, यत इत्यादिः। हेतुगर्भं विशेषणमाह—**प्रकृतमिति**।

उद्द्योते—**अत एव**—प्रकृतत्वस्यानुवृत्तिसाधकत्वादेव।

**( समाधानसाधकभाष्यम् )**

**तद्वै प्रथमानिर्दिष्टम्। षष्ठीनिर्दिष्टेन चेहार्थः॥**

**( तत्त्वालोकः ) तद्वै इति**—तद्धीत्यर्थः। ततोऽनुवृत्तेनापि तेन—अत्र न प्रयोजनसिद्धिरित्यादिः।

**( समाधानबाधकभाष्यम् )**

**'ङ्याप्प्रातिपदिकाद्' इत्येषा पञ्चमी प्रत्यय इति प्रथमायाः षष्ठीं प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति॥**

**( तत्त्वालोकः ) ङ्याबिति**—ततोऽनुवृत्तेनापि तेन—अत्र प्रयोजनसिद्धिः, यत इत्यादिः।

**( समाधानसाधकभाष्यम् )**

**प्रत्ययविधिरयम्। न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति॥**

**(तत्त्वालोकः) प्रत्ययविधिरिति**—नेदं सम्भवति, यत इत्यादिः।

**( समाधानबाधकभाष्यम् )**

**नायं प्रत्ययविधिः। विहितः प्रत्ययः प्रकृतश्चानुवर्तते॥**

**( तत्त्वालोकः ) विहित इति**—किन्त्वित्यादिः।

**( ४४१ प्रयोजनवार्तिकम् ॥ ७ ॥ )**

**॥ * ॥ सर्वादेशार्थं वा वचनप्रामाण्यात् ॥ * ॥**

**( भाष्यम् )**

**सर्वादेशार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम्। लुक्श्लुलुपः सर्वादेशा यथा स्युः॥**

**अथ क्रियमाणेऽपि प्रत्ययग्रहणे कथमिव लुक्श्लुलुपः सर्वादेशा लभ्याः ?॥**

**वचनप्रामाण्यात्। प्रत्ययग्रहणसामर्थ्यात्॥**

**( प्रदीपः ) सर्वादेशार्थं वेति।** षष्ठीनिर्देशार्थत्वं तु स्थितमेवेति वार्तिककारेण विकल्पार्थो वाशब्दः प्रयुक्तः॥ **आगस्त्यकौण्डिन्ययोरि**त्यत्र हि यदि लुगनुवर्तते, तदैकैकस्य त्रय आदेशाः स्युः। **अथ नानुवर्तते,** द्वावेवादेशौ विधीयेते। तदागस्त्यादेशेन सर्वत्र भाव्यमिति आगस्तीयाश्छात्रा इति न सिध्यति, अवृद्धत्वात् प्रकृतेः। प्रत्ययस्येति तूच्यमाने **गोत्रेऽलुगची**ति लुकि प्रतिषिद्धे संनियोगशिष्टत्वात् लुगभावादगस्त्यादेशाभावादागस्तीया इति सिध्यतीति षष्ठीनिर्देशार्थं प्रत्ययग्रहणम्॥ **भाष्य**कारस्तु तदर्थे वाशब्दं व्याचक्षाणः षष्ठीनिर्देशार्थत्वं नेच्छति। स ह्येवं मन्यते—**आगस्त्यकौण्डिन्ययो**रित्यत्र **यस्कादिभ्यो गोत्र** इत्यतो गोत्रग्रहणमनुवर्तते, **लुगि**ति च। तेनागस्त्यकौण्डिन्ययोर्यो गोत्रे विहितस्तस्य लुक्। परिशिष्टस्य तु प्रकृतिमागस्य यथासंख्यमगस्तिकुण्डिनचावादेशाविति सूत्रार्थः॥ **अथ क्रियमाणेऽपीति। अलोऽन्त्यस्ये**ति वचनात् प्रत्ययस्य योऽन्त्यस्तस्यैव प्राप्नुवन्तीति भावः॥ **वचनप्रामाण्यादिति। प्रत्ययस्येति** वचनसामर्थ्यादलोऽन्त्यस्येति बाध्यते। **वचनप्रामाण्यादिति** ब्रुवतो वार्तिककारस्यापि षष्ठीनिर्देशार्थत्वमनभिमतमेव, षष्ठीनिर्देशार्थत्वे हि प्रत्ययस्येत्यस्य चरितार्थत्वादलोऽन्त्यविधिः स्यादिति॥

**( उद्द्योतः )** वार्तिककृदभिमतषष्ठीनिर्देशार्थत्वमुपपादयति—**आगस्त्येति॥ त्रय इति।** एवं च वैषम्याद्यथासंख्याप्राप्तेरगस्त्योऽपि कुण्डिनाः, कुण्डिना अगस्तयः स्युः, लुक् न ज्ञापकात्सर्वादेश इति विभक्तिमात्रं श्रूयेतेति भावः॥ **द्वावेवेति।** तेन नोक्तापत्तिरिति भावः॥ **सर्वत्रेति।** अत्रापि प्राग्दीव्यतीयविषयेऽपीति भावः॥ **अवृद्धत्वादिति।** यद्यपि स्थानिवद्भावेन वृद्धत्वाच्छः सिध्यति। तथाप्यवृद्धत्वात्प्रकृतेः छस्य वृद्धनिमित्तत्वाभावे आकारश्रवणं न स्यादिति भावः॥ सन्नियोगशिष्टत्वादगस्त्यादेशाभावे प्रतिषेधप्रयुक्तलुगभावो हेतुः। **गोत्रे विहित इति।** नन्वागस्त्यस्य गोत्रप्रत्ययान्तस्यैव ग्रहणम्, न त्वनन्तरापत्यप्रत्ययान्तस्येत्यत्र गोत्रानुवृत्तिः स्यात्। **शिवादिभ्य** इत्यत्रैव **गोत्र** इति निवृत्तेः ऋष्यण्साधारणः अगस्त्यप्रकृतिकऋष्यणन्त एवात्रागस्त्यः, न त्वगस्तिप्रकृतिकगर्गादियञन्तः, **यञञोश्चेति** लुका सिद्धत्वादिति चेन्न। कौण्डिन्यसाहचर्येणागस्त्यस्यापि गोत्रप्रत्ययान्तस्यैव ग्रहणात्। भाष्यमते **गोत्रसं**ज्ञासूत्रपर्यन्तं गोत्राधिकारेण ऋष्यणन्तस्यापि तत्त्वाच्च॥ वस्तुतो वार्तिककारस्यापीदमेव संमतमित्याह—**वचनेति॥**

**( तत्त्वालोकः )** भाष्ये—'वचनप्रामाण्यादि'त्यत्र वचनपदं न प्रकृतसूत्रपरम्, तस्य लुगादिसंज्ञाविधानेन सफलत्वात्। किन्तु—प्रत्ययग्रहणपरमित्याशयेन तस्यार्थमाह—**प्रत्ययग्रहणसामर्थ्यादिति।**

प्रदीपे—**लुगनुवर्तते इति**—'ण्यक्षत्रियार्षञितो यूनि लुगणिञोरि'त्यत इति भावः। एवमग्रेऽपि। **त्रयः**—अगस्ति, कुण्डिनच्, लुगिति त्रयः। **तस्यैवेति**—लुगादय इति शेषः। **अपिना**—भाष्यकारस्य संग्रहः।

उद्द्योते—**एवम्**—लुगनुवृत्तौ च। **वैषम्याद्यथासंख्याप्राप्तेरिति**—स्थान्यादेशयोरित्यादिः। प्रत्येकं त्रिष्वादेशेष्विति शेषः। **ज्ञापकात्**—'यदयं'''लोपे प्रकृते लुकं शास्ती'ति वक्ष्यमाणज्ञापकात्। **तेन**—लुगननुवृत्तौ च तयोः साम्याद्यथासंख्यप्राप्तेः प्रत्येकमेकैकादेशेन। अस्याशयमाह—**यद्यपीति।** प्रदीपे—वैपरीत्येन पाठसत्त्वादाह—**संनियोगशिष्टत्वादिति। तदिति**—गोत्रेत्यर्थः। **स्यादिति**—तथा च-कथन्तेन कैयटोक्तार्थलाभ इति भावः। **अत्र**—'आगस्त्यकौण्डिन्ययोरि'ति सूत्रे। **तत्त्वाच्च**—गोत्रप्रत्ययान्तत्वाच्च। **इत्थमेव**—सर्वादेशार्थत्वमेव।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—लुक्श्लुलुपः सर्वादेशा भवन्तीति। यदयं—'लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये' इति लोपे प्रकृते लुकं शास्ति॥**

**( प्रदीपः ) यदयमिति।** विपर्ययस्तु न कल्प्यते, अनुपसंजातविरोधित्वात्। लोपस्तावदन्त्यादेशः स्थितस्ततो लुगारभ्यमाणो यदन्त्यस्य स्याल्लोपानुवृत्त्यैव सिद्धत्वाल्लुकं न विदध्यात्। विहितस्तु सर्वादेशत्वस्य ज्ञापकः संपद्यते॥

**( उद्द्योतः )** सामर्थ्याल्लोपस्यैव सर्वादेशत्वं कुतो न कल्प्यत इत्यत आह—**विपर्यय इति।** न उपसंजातो विरोधो वैयर्थ्यशङ्कारूपो यस्य तत्त्वादित्यर्थः॥

( तत्त्वालोकः ) भाष्ये—**एतदपीति**—लुगादीनां सर्वादेशत्वमपीत्यर्थः । प्रत्ययग्रहणस्येति शेषः । **आचार्येति**—यत इत्यादिः । **प्रकृते**—'घोर्लोपो लेटि वे'ति प्रकृते ।

प्रदीपे—**स्यादिति**—तर्हीति शेषः । **सर्वादेशत्वस्येति**—स्वस्य, साहचर्यात् श्लुलुपोश्चेत्यादिः ।

उद्द्योते—**सामर्थ्यादिति**—नन्वित्यादिः ।

( ४४२ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ उत्तरार्थं तु ॥ * ॥

( भाष्यम् )

**उत्तरार्थं तर्हि प्रत्ययग्रहणं कर्तव्यम् ॥**

( प्रयोजनबाधकभाष्यम् )

**क्रियते तत्रैव—'प्रत्ययलोपे प्रत्ययलक्षणम्' इति ॥**

( तत्त्वालोकः ) **क्रियते इति**—एतदपि नास्ति प्रयोजनम्, यत इत्यादिः ।

( प्रयोजनसाधकभाष्यम् )

**द्वितीयं कर्तव्यम् । कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यात्, एकदेशलोपे मा भूदिति—'आघ्नीत' 'संरायस्पोषेण ग्मीय' इति ॥ प्रत्ययस्य० ॥ ६१ ॥**

( प्रदीपः ) **द्वितीयमिति ।** लोपविशेषणापेक्षया द्वितीयं, पाठापेक्षया तु तृतीयं भवति ॥ **एकदेशलोप इति ।** अवयवक्रिया समुदायेऽपि व्यपदिश्यते—यथा पटो दग्ध इति । अवयवे हि पटाख्योऽवयवी समवेत इति तस्याप्यसौ दाहः । न त्वयं गौणो व्यपदेशः । गौणत्वे हि सति मुख्यस्यैव संप्रत्ययात् कर्तव्यमेव प्रत्ययग्रहणं स्यात् ॥ **आघ्नीतेति ।** परत्वादुपधालोपे कृते पुनःप्रसङ्गविज्ञानादनुनासिकलोपः स्यात् ॥ ६१ ॥

( उद्द्योतः ) **न त्वयमिति ॥** अयम् अवयवदाहादौ समुदायदाहादिव्यपदेशो गौणो न, किन्तु मुख्य एव, अवयवलोपे समुदायस्यापि लोपादित्यर्थः ॥ **अनुनासिकेति । अनुदात्तोपदेशेत्यनेन ॥ आघ्नीतेत्यत्र आङो यमहन** इत्यात्मनेपदैकवचनम् ॥ **संग्मीयेति ।** गमेर्विधिलिङि **समो गमी**त्यात्मनेपदे इटि शपो **बहुलं छन्दसी**ति लुकि लिङः सलोपे इटोऽति उपधालोपे रूपम् । तत्र प्रत्ययलक्षणेन झलादिङित्परत्वादनुनासिकलोपः स्यात् । इदं च प्रयोजनं अप्राधान्येनालाश्रयणे विध्यर्थं **प्रत्ययलक्षण**सूत्रमिति वार्तिकमते बोध्यम् ॥ ६१ ॥

( तत्त्वालोकः ) भाष्ये—**द्वितीयं कर्तव्यमिति**—एवन्तर्हि-उत्तरसूत्रे द्वितीयप्रत्ययपदानुवृत्त्यर्थं प्रत्ययग्रहणं कर्तव्यमित्यर्थः । **आघ्नीतेति**—आङ्पूर्वकाद् हन्धातोर्विधिलिङि तप्रत्यये सीयुटि 'लिङः सलोपः' इति सलोपे 'गमहने'त्युपधालोपे कुत्वे च रूपम् । **ग्मीय**—इत्यत्र 'संग्मीय' इति पाठः प्रतिभाति, उद्द्योते तथैव प्रतीकोपलम्भात् । **संरायस्पोषेणेति** प्रकृतानुपयोग्यपि 'त्रिधा बद्धो वृषभः' इतीव पठितम् ।

प्रदीपे—**यथेति**—पटैकदेशे दग्धे इति शेषः । **तस्यापि**—पटस्यापि । **असौ**—अवयवदाहः । **सम्प्रत्ययादिति**—गौणमुख्यपरिभाषयेति भावः ।

उद्द्योते—**गमेरिति**—सम्पूर्वकादित्यादिः । **लिङः सलोपे**—सीयुटि 'लिङः सलोपोऽनन्त्यस्ये'ति सलोपे । **तत्रेति**—उभयत्रेत्यर्थः । **सलोपस्येति** शेषः । प्रत्ययलक्षणसूत्रे **द्वितीयप्रत्ययपदानुवृत्त्या** 'कृत्स्नप्रत्ययलोपे एव प्रत्ययलक्षणम्, न तु तदेकदेशलोपे' इति लाभे तु—प्रकृते प्रत्ययावयवसस्यैव लोपेन कृत्स्नप्रत्ययस्य लोपाभावात् तस्य प्रत्ययलक्षणाभावेन झलादिङित्परत्वाभावान्नानुनासिकलोप इति भावः । **वार्तिकमते इति**—एतेन नियमार्थं प्रत्ययलक्षणसूत्रमिति सिद्धान्तमते प्रत्ययग्रहणं व्यर्थमेवेति सूचितम् ॥

( ५६ प्रत्ययलक्षणातिदेशसूत्रम् ॥१।१।९ आ. ३ यं सू० ॥ )

# प्रत्ययलोपे प्रत्ययलक्षणम् ॥ १ । १ । ६२ ॥

( प्रथमप्रत्ययग्रहणप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**प्रत्ययग्रहणं किमर्थम् ? ॥**

( प्रदीपः ) **प्रत्यय** ॥ ६२ ॥ **प्रत्ययग्रहणमिति ।** प्रत्ययनिमित्तं कार्यं लोपे भवतीत्युक्ते प्रत्यासत्त्या प्रत्ययस्यैव लोप इति विज्ञास्यत इति भावः ॥

( उद्द्योतः ) **प्रत्ययलोपे** ॥ ६२ ॥ लक्षणशब्दार्थमाह—**निमित्तमिति ॥ कार्यमिति ।** बहुव्रीहिलभ्यम् ॥ **प्रत्यासत्त्येति ।** क्रियमाणेऽपि प्रत्ययग्रहणेऽन्यप्रत्ययलोपेऽन्यप्रत्ययनिमित्तकार्यवारणाय प्रत्यासत्तिराश्रयणीयेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**प्रत्ययग्रहणमिति**—प्रथममित्यादिः ।

उद्द्योते—प्रत्यासत्तेरुभयथाऽऽवश्यकतामाह—**क्रियमाणेऽपीति ।** अपिना—अक्रियमाणपरिग्रहः ।

( समाधानभाष्यम् )

**'लोपे प्रत्ययलक्षणम्' इतीयत्युच्यमाने—सौरथी वैहतीति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत ॥**

( प्रदीपः ) **सौरथीति ।** प्रत्ययस्य लक्षणं दर्शनं प्रादुर्भाव इत्यर्थं परिकल्प्यैतदुच्यते । सुरथस्य विहतस्य चापत्यं गोत्रं स्त्रीति इञि कृते मकारनकारयोर्भावे यथा गुरूपोत्तमत्वात् ष्यङ् भवति, एवं लोपेऽपि स्यात् । प्रत्ययग्रहणे तु सति विरुद्धत्वान्नायमर्थो भवति—प्रत्ययस्य लोपे कृते तस्यैव पुनः प्रादुर्भाव इति ॥ एवं हि लोपविधानमनर्थकं स्यात् । तस्मात्—प्रत्ययनिमित्तं कार्यं प्रत्ययलोपे भवतीति वाक्यार्थ आश्रीयते ॥

**(उद्द्योतः)** ननु प्रत्ययलक्षणमित्यस्य बहुव्रीहितयाऽनेन स्थान्यभावेऽप्राप्तकार्यप्रापणायातिदेश इति अत्र प्रत्ययस्य सत्त्वेन किं तन्निमित्तकार्यातिदेशेनात आह—**प्रत्ययस्य लक्षणमिति ।** यस्य लोपस्तस्मिन्सति यः प्रत्ययो भवति, तस्य तल्लोपेऽपि प्रादुर्भाव इत्यर्थः ॥ लाघवात्षष्ठीतत्पुरुष एव स्यादिति तात्पर्यम् ॥ **रमेः** क्वनि **हन्तेश्च** क्ते **अनुदात्तोपेत्य**नुनासिकलोपेऽगुरूपोत्तमत्वादप्राप्तः ष्यङतिदेशतः स्यादित्यर्थः ॥ **एवं हि लोपेति ।** ननु **णेरनिटी**त्यादिसामर्थ्यान्माभूत्तत्र प्रवृत्तिः । यस्तु सामान्येन लोपो **णाविष्ठवदिति**, सोऽप्रत्ययविषये चरितार्थं इति भिक्षुमाचष्टे भिक्षयतीत्यत्र पुनः प्रादुर्भावार्थमिदं स्यादिति चेन्न । एवं हि तत्रैव **प्रत्ययस्य न लोप** इति वदेत् । एवं च गुरुतरन्यासो ज्ञापक इति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**प्रसज्येतेति**—स मा भूदित्यर्थमिति शेषः ।

प्रदीपे—**लोपेऽपि स्यात्**—तयोर्लोपेऽपि स स्यात् । **लोपविधानमिति**—प्रत्ययस्येत्यादिः ।

उद्द्योते—**अनेन**—प्रकृतसूत्रेण। **अत्र**—सौरथीत्यादौ। **तस्य**—प्रत्ययस्य। **लाघवादिति**—अन्यपदार्थप्रधानबहुव्रीह्यपेक्षया वत्तिपदार्थप्रधानषष्ठीतत्पुरुषे लाघवादित्यर्थः। प्रादुर्भावार्थकेन भावसाधनलक्षणशब्देन प्रत्ययशब्दस्येति शेषः। **प्रवृत्तिरिति**—अस्य सूत्रस्येति भावः। **इदम्**—प्रकृतसूत्रम्।

**( समाधाननिराकरणभाष्यम् )**

**नैष दोषः। नैवं विज्ञायते—लोपे प्रत्ययलक्षणं भवति—प्रत्ययस्य प्रादुर्भाव इति ॥**

**कथं तर्हि ? ॥**

**प्रत्ययो लक्षणं यस्य कार्यस्य तल्लुप्तेऽपि भवति ॥**

**( प्रदीपः ) नैवमिति।** संदेहेऽपि व्याख्यानात्करणसाधनो लक्षणशब्द आश्रयिष्यते। अन्यथा क्रियमाणेऽपि प्रत्ययग्रहणे भावसाधनाशङ्का न निवर्तते—प्रत्ययलोपे प्रत्ययान्तरस्य प्रादुर्भाव इति। यथा ग्रामणीरिति क्विपो लोपे स्वाद्युत्पत्तिः। ततश्चाधोगित्यत्र पदसंज्ञा न स्यादिति करणसाधनत्वे व्याख्यानमेव शरणमिति भावः। लक्षणशब्दोपादानसामर्थ्याद्वा करणसाधनो लक्षणशब्दः। अन्यथा **लोपे प्रत्यय** इत्येव वक्तव्यं स्यात् ॥

**( उद्द्योतः ) अन्यथा।** व्याख्यानस्य शरणत्वाभावे ॥ **पदसंज्ञा न स्यादिति।** तिङन्तत्वाभावादिति भावः। **लोपे प्रत्यय इति।** अस्य प्रादुर्भवतीति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**नैवमिति**—यत इत्यादिः। **लुप्तेऽपि भवति**—लुप्तेऽपि भवतीति।

प्रदीपे—**सन्देहेऽपि**—प्रकृतसूत्रे-लक्षणशब्दो भावसाधनः करणसाधनो वेति सन्देहेऽपि। **भावसाधनेति**—लक्षणशब्दे इत्यादिः। नन्विदं कुत्र दृष्टमित्यत आह—**यथेति। करणसाधनत्वे इति**—तस्येत्यादिः।

**( प्रयोजनान्तरभाष्यम् )**

**इदं तर्हि प्रयोजनम्—सति प्रत्यये यत्प्राप्नोति तत्प्रत्ययलक्षणं यथा स्यात्, लोपोत्तरकालं यत्प्राप्नोति तत्प्रत्ययलक्षणं मा भूदिति ॥**

**किं प्रयोजनम् ?।**

**ग्रामणिकुलं सेनानिकुलमित्यत्रौत्तरपदिके ह्रस्वत्वे कृते 'ह्रस्वस्य पिति कृति तुक्' इति तुक् प्राप्नोति, स मा भूदिति ॥**

**( प्रदीपः ) सति प्रत्यय इति।** प्रत्ययशब्दोऽत्र लुप्तसप्तमीको निर्दिश्यते। तेन प्रत्यये सति यत्कार्यं दृष्टं तल्लोपे सति भवति। न च ग्रामणीरित्यत्र क्विपि सति तुग् दृष्टः, ह्रस्वाभावात्। कृते क्विलोपे ह्रस्वत्वे च तुक्प्राप्तिः ॥

**( उद्द्योतः )** ननु प्रत्ययलोप इत्युक्ते कथं 'सति प्रत्यये' इति लभ्यतेऽत आह—**प्रत्ययशब्द इति ॥ यत्कार्यमिति।** प्रत्ययलक्षणं यत्कार्यं दृष्टमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**औत्तरपदिके इति**—'इको ह्रस्वोऽङ्यो गालवस्ये'ति सूत्रेणेति भावः।

प्रदीपे—**अत्र**—'प्रत्ययलोपे' इत्यत्र।

उद्द्योते—प्रकृतसूत्रे कार्यपदाभावादाह—**प्रत्ययलक्षणमिति।**

**( प्रयोजननिराकरणभाष्यम् )**

**यदि तर्हि—यत्सति प्रत्यये प्राप्नोति तत्प्रत्ययलक्षणेन भवति। लोपोत्तरकालं यत् प्राप्नोति, तन्न भवति। जगत् जनगदित्यत्र तुग् न प्राप्नोति, लोपोत्तरकालं ह्यत्र तुगागमः। तस्मान्नार्थ एवमर्थेन प्रत्ययग्रहणेन ॥**

**( प्रदीपः )** जगदिति। द्युतिगमिजुहोत्यादीनां द्वे चेति गमेः क्विप्। अत्रान्तरङ्गत्वात्पूर्वं विलोपः। गमः क्वाविति तु लोपोऽङ्गविशेषापेक्षत्वाद्बहिरङ्गः। भिन्नविषयत्वाच्च **येन नाप्राप्तिन्यायो** न भवति। सति त्वस्मिन्न्याये नैव विलोपः स्यात्। तस्मात्सति क्विपि नाऽत्र तुकः प्राप्तिः, अपि तु विलोपे कृते ॥

**( उद्द्योतः )** ननु जगदित्यादौ विलोपात्परत्वात्पूर्वं **गमः क्वा**वित्यनुनासिकलोपे क्विपि सत्यपि तुकः प्राप्तेराह—**अत्रेति ॥ भिन्नविषयत्वादिति।** वार्तिकमते एतत्। अचिरादेशे तुक्पक्षाद्दत्वपरभाष्यरीत्या विषयभेदेऽपि तत्त्वे तु लोपेनानुत्पत्तरेवान्वाख्यानेनापवादत्वं नेति बोध्यम् ॥ वैयात्यान्न्यायाङ्गीकारे दोषमाह—**सति त्विति।**

**( तत्त्वालोकः )** भाष्ये—**तर्हीति**—अस्य 'जगदि'त्यत्रान्वयः।

प्रदीपे—**पूर्वम्**—अनुनासिकलोपात्पूर्वम्। **भिन्नविषयत्वादिति**—विलोपानुनासिकलोपयोरित्यादिः। **नैवेति**—अनुनासिकलोपस्यापवादत्वादिति भावः।

उद्द्योते—**'प्राप्तेराहे'**त्यत्र 'प्राप्तिरत आहे'ति पाठः प्रतिभाति, अन्यथा 'नन्वि'त्यस्यासङ्गतिर्दुर्निवारा। **तत्त्वे तु**—अपवादत्वे तु॥ नन्वेवं कथं 'सति त्वि'ति कैयटोक्तिरित्यत आह—**वैयात्यादिति।** विरुद्धत्वादित्यर्थः।

**( आक्षेपभाष्यम् )**

**कस्मान्न भवति—ग्रामणिकुलं सेनानिकुलम् ? ॥**

**( तत्त्वालोकः ) कस्मान्नेति**—इह तर्हि तुगित्यादिः।

**( समाधानभाष्यम् )**

**बहिरङ्गं ह्रस्वत्वम्, अन्तरङ्गस्तुक्। 'असिद्धं बहिरङ्गमन्तरङ्गे' ॥**

**( तत्त्वालोकः ) बहिरङ्गमिति**—यत इत्यादिः।

**( प्रयोजनान्तरभाष्यम् )**

**इदं तर्हि प्रयोजनम्—कृत्स्नप्रत्ययलोपे प्रत्ययलक्षणं यथा स्यादेकदेशलोपे मा भूदिति। 'आघ्नीत' 'सं रायस्पोषेण ग्मीय' इति ॥**

**( आक्षेपभाष्यम् )**

**पूर्वस्मिन्नपि योगे प्रत्ययग्रहणस्यैतत्प्रयोजनमुक्तम् ॥**

**( तत्त्वालोकः ) पूर्वस्मिन्निति**—एतदपि नास्ति प्रयोजनम्, यत इत्यादिः।

**( समाधानभाष्यम् )**

**अन्यतरच्छक्यमकर्तुम् ॥**

**( प्रदीपः ) अन्यतरदिति।** एकमेव प्रत्ययग्रहणं सामर्थ्यात् कृत्स्नप्रत्ययलोपप्रतिपादने समर्थम् ॥

**( उद्द्योतः ) एकमेवेति।** अवयवस्य प्रत्ययत्वपर्यासत्यधिकरण-

त्वाभावादिति भावः । एवं चानयोः फलान्तराभिनिवेशो भाष्यविरुद्ध इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अन्यतरदिति**—एवन्तर्हि-पूर्वसूत्रस्थ-प्रत्ययग्रहण-प्रकृतसूत्रस्थप्रथमप्रत्ययग्रहणयोरित्यादिः ।

प्रदीपे—**एकमेवेति**—यत इत्यादिः ।

उद्द्योते—प्राचोक्तं दूषयति—**एवञ्चेति** । तथा भाष्योक्तौ चेत्यर्थः ।

---

**( द्वितीयप्रत्ययग्रहणप्रयोजनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

## अथ द्वितीयं प्रत्ययग्रहणं किमर्थम् ? ।

**( समाधानभाष्यम् )**

## प्रत्ययलक्षणं यथा स्यात् , वर्णलक्षणं मा भूदिति । गवे हितं गोहितम् , रायः कुलं रैकुलमिति ॥

**( प्रदीपः ) वर्णलक्षणमिति । प्रत्ययलोपे तल्लक्षण**मित्युच्यमाने प्रत्ययस्य यत्र कार्ये निमित्तभावः प्रत्ययरूपाऽऽश्रयेण वर्णरूपताऽऽश्रयेण वा तत्सर्वं स्यात् , सर्वनाम्नो वस्तुमात्रपरामर्शित्वात् । प्रत्ययग्रहणे सति प्रत्ययनिमित्तमेव कार्यं प्रत्ययलोपे भवति, न वर्णरूपतानिमित्तम् ॥ **रैकुलमिति** । अवयवद्वारेणात्र प्रत्ययस्याप्यादेशं प्रति निमित्तत्वमस्त्येव, प्रत्ययाश्रयत्वायादेशो न भवतीति न प्रवर्तते । अनेनैव न्यायेन **न धातुलोप आर्धधातुक** इत्यत्र धिन्विकृण्व्योर्विचि **लोपो व्योर्वली**ति वलोपस्य वल्निमित्तत्वादार्धधातुकनिमित्तत्वाभावाद् गुणप्रतिषेधो न भवति । तेन सुधे सुकरिति भवति, न तु सुधी सुकीरिति ॥

**( उद्द्योतः )** ननु द्वितीयप्रत्ययग्रहणाभावे बहुव्रीहिबलाभात्तल्लक्ष्यकार्यातिदेशो न सिध्येदत आह—**तल्लक्षणमिति ॥ वस्तुमात्रेति ।** प्रत्ययमात्रेत्यर्थः ॥ **प्रत्ययनिमित्तमेवेति ।** प्रत्ययत्वेन प्रत्ययनिमित्तमित्यर्थः । **न वर्णेति ।** प्राधान्येन वर्णनिमित्तमित्यर्थः ॥ ननु रैकुलमित्यत्रायादेशो न प्रत्ययाश्रयः, किन्तु तदवयवाश्रयोऽत आह—**अवयवद्वारेणेति ॥** केचित्तु **प्रत्ययग्रहण**मित्यस्य द्वितीयप्रत्ययपदघटितं प्रत्ययलक्षणग्रहणमित्यर्थः ॥ **प्रत्ययलोपेऽपी**त्येव सूत्रं कार्यम् । अस्य-तद्वद्भवति यत्प्रत्यये सतीति शेषः । स्थानिवदित्यनुवृत्तिर्वा ॥ **प्रत्ययलक्षणमिति ।** प्रत्ययत्वतद्व्याप्यान्यतरधर्मावच्छिन्नलक्षणमित्यर्थः ॥ **वर्णलक्षणं** वर्णत्वव्याप्यधर्मावच्छिन्ननिमित्तम् ॥ प्रत्यये सति वर्णनिमित्तं भवतीति तल्लोपेऽपि स्यादिति भावः ॥ कैयटव्याख्या तु चिन्त्या । प्रकृते तच्छब्दप्रत्ययशब्दयोः पर्यायत्वेन तद्विचारस्यायुक्तत्वापत्तेरित्याहुः ॥ **अनेनैवेति ।** अत्र प्रत्ययग्रहणसामर्थ्यात्तथार्थलाभेऽपि तत्र तादृशार्थग्रहे न मानम् ॥ **आर्धधातुक** इत्यस्य कैयटरीत्या तोतोर्तीत्यादिन्यावृत्त्या चरितार्थत्वात् । **पूर्वसूत्रे आर्धधातुकग्रहणमनवकाश**मिति **क्ङिति** चेति सूत्रस्थभाष्यविरोधाच्च । आवृत्त्यादिना तथार्थकल्पने तु न मानम् ॥ किञ्च तथार्थकल्पने **यङ्यकक्यवलोपे** इति वार्तिकं तदुदाहरणपरं **जीरदानु**रिति भाष्यं चासङ्गतं स्यादिति चिन्त्यमेतत् ॥ **सुधे इत्यादि** । धिविकृण्व्योर्नुमि विचि वलोपेऽपृक्तलोपे गुणे सुना समासे सौ हल्ङ्यादिलोपनलोपयोरिमे रूपे ॥ **गुणनिषेधे** तु सुधिन्शब्दे **इन्हन्नि**ति दीर्घः । सुकृणः **सर्वनामस्थाने चेति** दीर्घे **उपधायाश्चे**तीत्त्वे रपरत्वे सुनलोपयोः र्वोरिति दीर्घः स्यादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**प्रत्ययलक्षणमिति**—'यत्कार्यम्प्रतिप्रत्ययस्यासाधारणं रूपं प्रयोजकत्वेनाश्रीयते, तदेव कार्यं प्रत्ययलोपेऽपि इति भवतीति ज्ञापनार्थम् । किं प्रयोजनमि'त्यादिः ॥ **गोहितमिति**—अत्र प्रत्ययलक्षणेनावादेशो न भवति, तद्विधावच्त्वमात्रस्याश्रयणात्; तस्य च प्रत्ययाप्रत्ययसाधारण्यादिति भावः ।

प्रदीपे— **आदेशम्**—आयादेशम् । **प्रत्ययाश्रयः**—प्रत्ययत्वेन प्रत्ययाश्रयः । **इत्यत्रेति**—बहुव्रीहिणैवार्धधातुकलाभे पुनरार्धधातुकग्रहणसामर्थ्यात्तत्त्वेन निमित्तता लभ्यते । तेनेति शेषः । **आर्धधातुकनिमित्तत्वाभावात्**—तत्रार्धधातुकतया विचो निमित्तत्वाभावात् । **तेनेति**—अन्यथा वलोपस्यार्धधातुकावयववल्निमित्तत्वेनार्धधातुकनिमित्तत्वाद् गुणप्रतिषेधः स्यादिति भावः ॥

उद्द्योते—अनतिप्रसङ्गायाह—**प्रत्ययनात्रेति ।** वार्तिकमतेऽप्राधान्येन वर्णाश्रयणे प्रत्ययलक्षणप्रवृत्तेरिष्टत्वादाह—**प्राधान्येनेति । तदवयवाश्रय इति**—तथा च—तत्र प्रत्ययलक्षणातिप्रसङ्ग एव नेति भावः । प्रकारान्तरेण भाष्ययोजनामाह—**केचित्त्विति ।** प्रकृतसूत्रनिरासायाह-**प्रत्ययेति । एवेन**—'तल्लक्षणमि'त्यस्यापि व्यवच्छेदः । अत एवाह—**अस्येत्यादि । तद्व्याप्येति**—सुप्त्वतिङ्त्वादीत्यर्थः ॥ अत्र वर्णत्वावच्छिन्ननिमित्तकस्याभावादाह—**वर्णत्वव्याप्येति । तद्विचारस्य**—'द्वितीयं प्रत्ययग्रहणं किमर्थमि'ति विचारस्य । अस्मिन् प्रकारे शेषाद्यनुसरणेन क्लेशादरुचिं सूचयति—**आहुरिति ॥** कैयटोक्तं दूषयति—**अत्रेति । तत्रेति**—'न धातुलोप' इत्यत्रेत्यर्थः । आर्धधातुकग्रहणसामर्थ्यादिति शेषः । **कैयटरीत्येति**—'भाषायामपि यङ्लुगि'ति' कैयटोक्तिरीत्येत्यर्थः । तथा च—तदुक्त्योर्मिथो विरोध इति भावः । ननु 'यङ्लुकश्छान्दसत्वमेवे'ति सिद्धान्त्युक्तिरीत्या तस्याचारितार्थ्यमेवेत्यत आह—**पूर्वेति ।** ननु तत्रार्धधातुकग्रहणमावर्त्य तस्य सामर्थ्यं कल्प्यमिति कैयटोक्त्याशय इत्यत आह—**आवृत्त्यादिनेति ।** तस्य सामर्थ्यकल्पनादिति शेषः । अत्रादिनैकशेषपरिग्रहः ॥ तत्र दोषमप्याह—**किञ्चेति । तदिति**—वलोपेत्यर्थः । **भाष्यञ्चेति**—'न धातुलोप' इति सूत्रस्थमिति भावः । कैयटोक्तपद्धत्याऽऽह—**धिविकृण्व्योरिति । गुण इति**—उक्तरीत्या निषेधाप्रवृत्तेरित्याशयः । **इन्हन्नितीति**—'इन्हन्नि'त्यनुवृत्त्या 'सौ चे'तीत्यर्थः॥

---

**( युक्तिकथनाधिकरणम् )**

**( आक्षेपभाष्यम् )**

## किमर्थं पुनरिदमुच्यते ? ।

**( प्रदीपः ) किमर्थमिति ।** स्थानिवद्भावेन सिद्धमिति भावः ।

**( उद्द्योतः ) स्थानिवद्भावेनेति ।** वर्णाश्रयस्य तत्राप्यनिष्टत्वादित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**इदम्**—प्रकृतसूत्रम् ।

उद्द्योते—ननु स्थानिवत्त्वेन वर्णाश्रयस्यासिद्धत्वात् तत्सिद्ध्यर्थमिदमित्यत आह—**वर्णेति । तत्रापि**—प्रकृतसूत्रकृतोऽपि । 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति परिभाषासत्त्वादिति भावः ॥

**( ४४३ समाधानवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ प्रत्ययलोपे प्रत्ययलक्षणवचनं सदन्वाख्यानाच्छास्त्रस्य ॥ * ॥

**( भाष्यम् )**

**'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्युच्यते । सदन्वाख्यानाच्छास्त्रस्य । सच्छास्त्रेणान्वाख्यायते सतो वा**

**शास्त्रमन्वाख्यापकं भवति । सदन्वाख्यानाच्छास्त्रस्य 'उगिदचां सर्वनामस्थानेऽधातोः' इतीहैव स्यात्—गोमन्तौ यवमन्तौ, गोमान् यवमानित्यत्र न स्यात् । इष्यते च स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्यतः प्रत्ययलोपे प्रत्ययलक्षणवचनम् । इत्येवमर्थमिदमुच्यते ॥**

**( प्रदीपः ) सदन्वाख्यानादिति ।** शास्त्रं कर्तृ करणं वा शेषत्वेन विवक्षितमिति षष्ठी कृता ॥ **सच्छास्त्रेणेति ।** शास्त्रेण करणेनाचार्यः स्मर्ता सद्विद्यमानं वस्तु निमित्तत्वेनान्वाचष्टे ॥ **सतो वेति ।** शास्त्रस्यैवाविच्छेदेन प्रवर्तमानस्य स्वतन्त्रत्वमन्वाख्यान इति पूर्वस्माद्व्याख्यानादस्य विशेषः । न च स्थानिवद्भावेन सिध्यति । अतृणेडित्यादावल्विधित्वात् ॥

**( उद्द्योतः ) ननु** शास्त्रस्य कर्तृत्वे सतः कर्मत्वे**नोभयप्राप्ता**विति नियमाच्छास्त्रस्येति षष्ठ्यनुपपन्ना, **कर्मणि चे**ति समासनिषेधापत्तिश्च ॥ करणत्वे तु षष्ठ्यनुपपन्नेत्यत आह—**शास्त्रमिति ।** शेषत्वे चो**भयप्राप्ता**वित्यस्याप्राप्तेः षष्ठीसमासौ नानुपपन्नौ इति भावः ॥ **आचार्यः स्मर्तेति** फलितार्थकथनम् ॥ स्मर्त्राचार्येणेति त्वन्वाख्यायत इत्यन्वययोग्यम् ॥ **स्वतन्त्रत्वमिति ।** करणस्य कर्तृत्वविवक्षेति भावः ॥ **अल्विधित्वादिति ॥** इमादेरिति शेषः । **वर्णाश्रये इति** तु वर्णप्राधान्यविषयकम् । एवं चाप्राधान्येनालाश्रयणे विध्यर्थं सूत्रमिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**अस्य—**व्याख्यानस्य ।

उद्द्योते—**स्मर्त्तेति—**स्मर्त्तेत्यादि । **फलितार्थेति—**भाष्यस्येत्यादिः । **स्मर्त्रेति—**यथाश्रुते हि भाष्ये—इत्यादिः । **तु—**एव । ननु प्रकृतसूत्रकरणेऽपि 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति वचनात् तत्रेमादिर्नेष्ट इत्यत आह—**वर्णेति । एवञ्च—**तस्य तद्विषयकत्वे च । **सूत्रम्—**प्रकृतसूत्रम् ।

( आक्षेपभाष्यम् )

**अस्ति प्रयोजनमेतत् ॥**

**( उद्द्योतः )** भाष्ये-**अस्ति प्रयोजनमेतदिति ।** उक्तप्रयोजनविशिष्टं सूत्रं निर्दोषं वेति काका प्रश्न इति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**सूत्रमिति—**प्रकृतसूत्रमित्यर्थः । सदोषमिति शेषः । अन्यथाऽत्र वाशब्दस्यासङ्गतिः ॥

( समाधानभाष्यम् )

**किं तर्हीति ॥**

**( उद्द्योतः ) किं तर्हीति ।** मम तु निर्दोषमेव, तव कश्चिद्दोषप्रतिभासोऽस्ति चेद्वदेति प्रश्नगर्भमुत्तरम् ॥

**( तत्त्वालोकः )** उद्द्योते—**वद—**तर्हि वद ।

---

( लुकि प्रत्ययलक्षणसाधनाधिकरणम् )

( ४४४ (१) आक्षेपवार्तिकप्रथमखण्डम् )

## ॥ * ॥ लुक्युपसंख्यानम् ॥ * ॥

( भाष्यम् )

**लुक्युपसंख्यानं कर्तव्यम् । पञ्च सप्त ॥**

**( तत्त्वालोकः )** दोषमेवाह—**लुकीति ।** प्रत्ययलक्षणस्येति शेषः ।

( प्रत्याक्षेपभाष्यम् )

**किं पुनः कारणं न सिध्यति ? ।**

**( तत्त्वालोकः )** किं पुनः **कारणमिति—**कस्मात्पुनः कारणादित्यर्थः । तत्र प्रकृतसूत्रेणैव प्रत्ययलक्षणमिति शेषः ।

( ४४४ (२) आक्षेपसाधकवार्तिकद्वितीयखण्डम् ॥ २ ॥ )

## ॥ * ॥ लोपे हि विधानम् ॥ * ॥

( भाष्यम् )

**लोपे हि प्रत्ययलक्षणं विधीयते । तेन लुकि न प्राप्नोति ॥**

**( प्रदीपः ) लुक्युपसंख्यानमिति ।** तक्रकौण्डिन्यन्यायेन लोपसंज्ञाया लुगादिसंज्ञया बाधनादिति भावः ॥ लुग्ग्रहणस्योपलक्षणार्थत्वात् श्लुलुपावपि गृह्येते ॥

**( उद्द्योतः ) बाधनादिति ।** एवं च पञ्चेत्यादौ पदत्वं न स्यादिति भावः ॥ **उपलक्षणार्थत्वादिति ।** तयोरपि पूर्वपक्षबीजस्य समत्वादिति भावः ॥ तत्र श्लुलुपोः प्रत्ययलक्षणस्य फलं चिन्त्यम्, लुकि तु पञ्चेत्यादौ पदत्वं फलमस्ति ॥

**( तत्त्वालोकः )** भाष्ये—**लुकीति—**प्रकृतसूत्रेण प्रत्ययलक्षणमिति शेषः ।

उद्द्योते—**एवञ्च—**लुकि प्रत्ययलक्षणाभावे च । **तयोः—**श्लुलुपोः । **अपिना** लुकः समुच्चयः । **तत्र—**तेषां मध्ये । **चिन्त्यमिति—**एतेन कैयटकल्पितं तस्योपलक्षणार्थत्वं विरुणद्धीति न शङ्क्यम्, त्रिष्वपि प्रत्ययलक्षणफलसत्त्वेनैव न तत्कल्पनम्, किन्तु त्रयाणां समानन्यायविषयत्वादेवेत्याश्रयणेनोभयोरविरोधात् ।

( ४४५ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥*॥ न वाऽदर्शनस्य लोपसंज्ञित्वात् ॥*॥

( भाष्यम् )

**न वा कर्तव्यम् ॥**

**किं कारणम् ? ।**

**अदर्शनस्य लोपसंज्ञित्वात् । अदर्शनं लोपसंज्ञं भवतीत्युच्यते । लुमत्संज्ञाश्चाप्यदर्शनस्य क्रियन्ते । तेन लुक्यपि भविष्यति ॥**

**( प्रदीपः ) न वाऽदर्शनस्येति ।** अदर्शनमात्रस्य लोपसंज्ञा विधीयमाना लुगादिसंज्ञाविषयमप्यवगाहते । न च संज्ञानां बाध्यबाधकभावः, समावेशदर्शनात्तासामिति—**कडार**सूत्रे वक्ष्यते । लोपस्य संज्ञि लोपसंज्ञि तस्य भावो लोपसंज्ञित्वं तस्मादित्यर्थः ॥

**( उद्द्योतः ) समावेशदर्शनादिति ।** कृत्कृत्यादिष्विति भावः ॥ लोपः संज्ञा यस्येति बहुव्रीहौ मत्वर्थीयानुपपत्तिः । त्वान्तेन षष्ठीसमासेऽर्थासङ्गतिरत इन्नन्तेन षष्ठीसमास इत्याह—**लोपस्येति ।**

**( तत्त्वालोकः )** भाष्ये—**किं कारणम्—**कस्मात्कारणात् । एवमग्रेऽपि । **अदर्शनमिति—**यत इत्यादिः । **लुक्यपीति—**प्रकृतसूत्रेणैव प्रत्ययलक्षणमिति शेषः ।

---

( सांकर्यपरिहाराधिकरणम् )

( संगतिभाष्यम् )

यद्येवम्—

( ४४६ (१) सांकर्याक्षेपवार्तिकप्रथमखण्डम् ॥ )

॥*॥ प्रत्ययादर्शनं तु लुमत्संज्ञम् ॥*॥

( भाष्यम् )

प्रत्ययादर्शनं तु लुमत्संज्ञमपि प्राप्नोति ॥

( प्रदीपः ) प्रत्ययादर्शनं त्विति । लुक्श्लुलुप्संज्ञानां संकरः प्राप्नोतीत्यर्थः ॥

( उद्द्योतः ) सङ्कर इति । परस्परं, लोपशब्दभावितप्रत्ययादर्शनविषये लोपसंज्ञया चेत्यर्थः ॥ प्रत्ययादर्शनमात्रं सकलं लुमत्संज्ञं प्राप्नोतीति भाष्याक्षरार्थः ॥

( तत्त्वालोकः ) भाष्ये—यद्येवमिति—तर्हीति शेषः ।

उद्द्योते—कैयटस्य न्यूनतां निराकरोति—लोपशब्देति । इत्यर्थः—इत्यादिः । ननु कैयटोक्तस्य भाष्यतात्पर्यार्थस्य कथं यथाश्रुतभाष्यादुपपत्तिरित्यत आह—प्रत्ययेति ।

( आक्षेपभाष्यम् )

तत्र को दोषः ? ।

( ४४६ (२) दोषदर्शनवार्तिकद्वितीयखण्डम् ॥ ४ ॥ )

॥*॥ तत्र लुकि श्लुविधिः प्रतिषेध्यः ॥*॥

( भाष्यम् )

तत्र लुकि श्लुविधिः प्राप्नोति स प्रतिषेध्यः । अस्ति हन्ति 'श्लौ' इति द्विर्वचनं प्राप्नोति ॥

( प्रदीपः ) तत्र लुकि श्लुविधिरिति । उपलक्षणं चैतत् । तेन श्लावपि लुग्विधिः प्राप्नोति—जुहोतीति उतो वृद्धिर्लुकि हलीति ॥ लुप्यपि लुग्विधिप्रसङ्गः—हरीतकीति लुक् तद्धितलुकीति ॥ तथा लुकि लुप्विधिः—लवणः सूप इति युक्तवद्भावः स्यात् ॥

( उद्द्योतः ) उतो वृद्धिरिति । न च तत्र नाभ्यस्तस्येति वर्त्तनाददोषः । अत्र पक्षे तदनुवृत्तेर्वक्तुमशक्यत्वात् ॥ हरीतकीति । नन्वत्र सत्यपि ङीषो लुकि युक्तवद्भावात् पुनर्ङीष् स्यादिति चेन्न । लक्ष्ये लक्षणस्येति न्यायादित्याहुः ॥ हरीतक्याः-हरीतक्यादिभ्यश्चेत्यणो लुप् । यद्वा हरितकीवेयं प्रतिकृतिरिति कनो लुप् ॥ लवण इत्यत्र लवणाल्लुक् ॥

( तत्त्वालोकः ) भाष्ये—तत्र—तथा सति । एवमग्रेऽपि । अस्तीति—अन्यथेत्यादिः ।

प्रदीपे—लुकि—लुक्यपि । युक्तवद्भावः—'लुपि युक्तवद्व्यक्तिवचने' इति युक्तवद्भावः ।

उद्द्योते—तत्रेति—'उतो वृद्धिर्लुकि हलि'त्यत्रेत्यर्थः । 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यत इति शेषः । वर्तनाद्—अनुवर्तनात् । अशक्यत्वादिति—लुक्यपि श्लुविधिप्रसङ्गेन लुकि सर्वत्राभ्यस्तत्वस्यापि प्रसङ्गादिति भावः । 'अणः—'अवयवे च प्राण्योषधिवृक्षेभ्यः' इत्यणः । इति कनो लुप्—इति व्युत्पत्तौ 'इवे प्रतिकृतौ' इति कनः 'देवपथादिभ्यश्चे'ति लुप् । लवणाल्लुक्—लवणेन संसृष्ट इति व्युत्पत्तौ 'संसृष्टे' इति ठकः 'लवणाल्लुगि'ति लुक् ।

( ४४७ सांकर्यवारणवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न वा पृथक्संज्ञाकरणात् ॥ * ॥

( भाष्यम् )

न वा एष दोषः ॥

किं कारणम् ? ।

पृथक्संज्ञाकरणात् । पृथक्संज्ञाकरणसामर्थ्याल्लुकि श्लुविधिर्न भविष्यति ॥

( प्रदीपः ) न वा पृथगिति । एकयैव संज्ञया प्रदेशवाक्येषु संज्ञिप्रत्यायने सिद्धेऽनेकसंज्ञाविधानसामर्थ्यात्तद्भावितग्रहणं विज्ञायते । तत्राश्रितस्वरूपव्यापारास्ते लुगादय आश्रीयन्ते, आवृत्तिर्वा लुगादिशब्दानामाश्रीयत इति तद्भावितग्रहणं सिध्यति ॥ विधिप्रदेशेषु चेतरेतराश्रयदोषानवकाशो नित्यशब्दाश्रयणाद्भाविसंज्ञाविज्ञानाद्वा ॥

( उद्द्योतः ) तद्भावितग्रहणे युक्तिमाह—तत्राश्रितेति । आश्रितः स्वरूपस्य व्यापारोऽदर्शनविषयो यैस्ते तथोक्ता इत्यर्थः ॥ अदर्शनबोधका लुगादिशब्दाः प्रत्ययादर्शनस्य संज्ञा इत्युक्ते प्रत्यासत्त्या यया संज्ञया यददर्शनं भाव्यते तस्यैव सा संज्ञेति सा लभ्यत इति भावः ॥ प्रत्यासत्तिः सर्वैर्दुर्ज्ञेयेत्यत आह—आवृत्तिर्वेति । तेन लुगादिशब्दभावितमदर्शनं क्रमेण तत्तत्संज्ञमित्यर्थः ॥ अदर्शनस्य नित्यत्वेऽपि तद्भावितत्वस्य शास्त्राधीनत्वादितरेतराश्रयत्वं तदवस्थमेवेत्यत आह—भाविसंज्ञेति ॥

( तत्त्वालोकः ) प्रदीपे—तत्र—'प्रत्ययस्य लुक्श्लुलुपः' इति सूत्रे ।

उद्द्योते—युक्तिम्—प्रकारम् । प्रत्यासत्तिरिति—नन्वित्यादिः । अदर्शनस्येति—नन्वित्यादिः ।

( लोपसंज्ञाया व्यापकत्वोपसंहारभाष्यम् )

तस्माददर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते ॥

( तत्त्वालोकः ) पूर्वापरग्रन्थसङ्गत्यर्थं प्रागुक्तमुपसंहरति—तस्मादिति । लुमत्संज्ञाः—लुमत्संज्ञाविषयम् । एवमग्रेऽपि । तथा च-लुक्युपसंख्यानं न कर्तव्यमिति भावः ।

( सांकर्यसाधकभाष्यम् )

यथैव तर्हि—अदर्शनसामान्याल्लोपसंज्ञा लुमत्संज्ञा अवगाहते । एवं लुमत्संज्ञा अपि लोपसंज्ञामवगाहेरन् ॥

तत्र को दोषः ? ।

अगोमती गोमती सम्पन्ना गोमतीभूता 'लुक् तद्धितलुकि' इति ङीपो लुक् प्रसज्येत ॥

( प्रदीपः ) यथैवेति । तिसृणां संज्ञानां विधानसामर्थ्यात्परस्परविषयावगाहनं तासां मा भूत् । लोपसंज्ञाविषये तु ताः प्रवर्तेरन् ॥ गोमतीभूतेति । च्वेर्लोपे कृते लुक्संज्ञायां सत्यां लुक् तद्धितलुकीति लुक् प्राप्नोति । पुंवद्भावस्त्वत्र न भवति, वैयधिकरण्यात् । महद्भूता ब्राह्मणीत्यत्र तु भवति, सामानाधिकरण्याद् । नित्यत्वाद्धि शब्दानां कचिद्विकारस्य जनिकर्तृत्वं, कचित्प्रकृतेः ।

( उद्द्योतः ) तद्भावितग्रहणपक्षे यथैवेत्यादिग्रन्थोऽनुपपन्न इत्यत आह—तिसृणामिति । इतरेतराश्रयपरिहाराय भाविसंज्ञावि-

ज्ञाने गौरवापत्त्या सामर्थ्यात्तिसृणामसङ्करः प्रतिपादितो न तु तद्भावितपक्षाश्रयेणेत्यभिमानः ॥ **वैयधिकरण्यादिति** । भवनक्रियायां प्रकृतेः कर्तृत्वादिति भावः ॥ **क्वचिद्विकारस्येति** । वस्तुतो वृत्तौ तद्वाक्ये च सर्वत्र प्रकृतेरेव कर्तृत्वम् । विकृतिशब्दस्यापि गौण्या प्रकृतिवृत्तित्वात्सामानाधिकरण्यम् । अत एव गौणत्वान्मह्च्छब्द आत्वाभावः । गोमतीशब्दे तु गोमतीनदीभिन्ना गोमतीनदीभूतेत्यर्थेनाभाषितपुंस्कत्वात् पुंवत्त्वाभाव इति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**तद्भावितेति**—नन्वित्यादिः ॥ अस्य तात्पर्यमाह—**इतरेतरेति** । तद्भावितग्रहणपक्षे इत्यादिः । **सामर्थ्यात्**—पृथक्संज्ञाकरणसामर्थ्यमात्रात् । **तिसृणाम्**—लुक्श्लुलुप्संज्ञानाम् । परस्परमिति भावः ॥ **प्रतिपादित इति**—भाष्यकृतेति शेषः । **तद्भावितेति**—पृथक्संज्ञाकरणसामर्थ्यादित्यादिः ॥ उक्तप्रकारमन्तरा तद्भावितग्रहणासिद्धेराह—**अभिमान इति** ॥ कैयटोक्तं खण्डयति—**वस्तुत इति** । **एवेन**—विकृतिव्यवच्छेदः । **विकृतीति**—विकृतिवाचकेत्यर्थः । **गौण्या**—वृत्त्या । **अत एव**—तथा प्रकृतिवृत्तित्वादेव ।

**( सांकर्यबाधकभाष्यम् )**

**ननु चात्रापि ॐ न वा पृथक्संज्ञाकरणाद् ॐ इत्येव सिद्धम् ॥**

**( प्रदीपः ) ननु चात्रापीति** । लुगादिसंज्ञानां भेदेनोपादानात्तद्भावितग्रहणमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**अत्र**—गोमतीभूतेत्यत्र । एवमग्रेऽपि । **सिद्धमिति**—लोपे लुग्विधेर्वारणमित्यादिः ।

**( आक्षेपभाष्यम् )**

**यथैव तर्हि—पृथक्संज्ञाकरणसामर्थ्यादत्र लुमत्संज्ञा लोपसंज्ञां नावगाहन्ते, एवं लोपसंज्ञापि लुमत्संज्ञा नावगाहेत । तत्र स एव दोषो—लुक्युपसंख्यानमिति ॥**

**( उद्द्योतः )** भाष्ये—**एवं लोपेति** । लोपसंज्ञायामपि तद्भावितग्रहणं मन्वानस्य चोद्यमेतत् ॥

**( समाधानभाष्यम् )**

**अस्त्यन्यल्लोपसंज्ञायाः पृथक्संज्ञाकरणे प्रयोजनम् ॥ किम् ? ।**

**लुमत्संज्ञासु यदुच्यते तल्लोपमात्रे मा भूदिति ॥**

**( प्रदीपः ) अस्त्यन्यदिति** । प्रत्ययाप्रत्ययादर्शनस्य लोपसंज्ञा यथा स्यादिति ॥ **लोपमात्रे मा भूदिति** । यथा गोमतीभूतेति च्वेर्लोपे कृते **लुक्तद्धितलुकी**ति न भवति । तस्माल्लोपसंज्ञायां नास्ति तद्भावितग्रहणम् ॥

**( उद्द्योतः )** अत्र सामर्थ्यात्तद्भावितग्रहणेऽपि लोपसंज्ञायां **तद्ग्रहणे** मानाभावः । न च लुगादिभ्यो लोपसंज्ञायाः पृथक्करणं **मानम्**, तस्याः प्रयोजनान्तरसत्त्वादित्याह—**अस्त्यन्यदिति** ॥ तद्**र्शयति**—**तल्लोपमात्र इति** भाष्ये ॥ स्वयं प्रयोजनान्तरमप्याह—**[illegible]प्रत्ययेति** ॥

**( तत्त्वालोकः )** भाष्ये—**अस्त्यन्यदिति**—नेदं युक्तम्, यत **[illegible]** । तथा च—लुक्युपसंख्यानं न कार्यमिति भावः ।

**[illegible]**—**अत्र**—लुगादिसंज्ञासु । **सामर्थ्यात्**—पृथक्संज्ञाकरणसामर्थ्यात् । **तस्या इति**—[illegible] शेषः । **स्वयं**—कैयटः ॥

( ४४८ समाधानान्तरवार्तिकम् ॥ ६ ॥ )

**॥ ॐ ॥ लुमति प्रतिषेधाद्वा ॥ ॥**

( भाष्यम् )

**अथवा यदयं—'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—भवति लुकि प्रत्ययलक्षणमिति ॥**

**( उद्द्योतः )** भाष्ये **लुमतिप्रतिषेधाद्वेति** । भवतु लोपसंज्ञायामपि तद्भावितग्रहणं, **न लुमते**ति निषेधेन [illegible] लोपनिमित्तकार्यप्रवृत्तिर्ज्ञाप्यत इत्यत्रोप इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—[illegible] सर्वत्र तद्भावितग्रहणमभ्युपेत्य तत्र समाधानान्तरमाह—**अथवेति** ।

उद्द्योते—**तत्र**—लुकि ।

---

( इष्टानुपपत्तिपरिहाराधिकरणम् )

( ४४९ आक्षेपवार्तिकम् ॥ ७ ॥ )

**॥ ॐ ॥ सतो निमित्ताभावात्पदसंज्ञाऽभावः ॥ ॐ ॥**

( भाष्यम् )

**सन् प्रत्ययो येषां कार्याणामनिमित्तं राज्ञः पुरुष इति, स लुप्तोऽप्यनिमित्तं स्याद्—राजपुरुष इति ॥**

**( प्रदीपः ) सतो निमित्ताभावादिति** । निमित्तशब्देन निमित्तत्वमुच्यते । तेन यस्य सतः कार्यं प्रति निमित्तत्वं नाभूत्स लुप्तोऽप्यनिमित्तं स्यादित्यर्थः ॥ **राज्ञ इति** । सति ङसि भसंज्ञायां **स्वादिष्विति** पदसंज्ञा बाधितेति नलोपो नाभूदल्लोपश्चाभूदिति लुप्तेऽपि तस्मिन्नलोपो न स्यादल्लोपश्च स्यात् ॥

**( उद्द्योतः ) लुक्युपसङ्ख्यानमिति** दोषे परिहृते, दोषान्तरमाशङ्कते—**सतो निमित्तेति** । वार्तिकतद्व्याख्यानयोर्विरोधं परिहरति—**निमित्तशब्देनेति** ॥

( समाधानभाष्यम् )

**अस्तु तस्या अनिमित्तम्—या स्वादौ पदमिति पदसंज्ञा । या तु 'सुबन्तं पदम्' इति पदसंज्ञा सा भविष्यति ॥**

**( प्रदीपः ) अस्तु तस्या इति** । द्वे चात्र पदसंज्ञे । एका **स्वादिष्वि**त्यवयवस्य, सा च भसंज्ञया बाधिता । द्वितीया सुबन्तत्वेन समुदायस्य, सा च लुप्तेऽपि स्थितैव । अल्लोपस्तु **न लुमताङ्गस्येति** प्रतिषेधान्न भवति ॥

**( उद्द्योतः )** नन्वेवं पदत्वेऽपि भत्वस्यापि सत्त्वादल्लोपः स्यादत आह—**अल्लोपस्त्विति** ।

( आक्षेपसाधकभाष्यम् )

**सत्येतत् प्रत्यय आसीत्—अनया भविष्यत्यनया न भविष्यतीति । लुप्ते इदानीं प्रत्यये यावत एवावयवेः स्वादौ पदमिति पदसंज्ञा तावत एव सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन यजादिपरतेति कृत्वा भसंज्ञा प्राप्नोति ॥**

( प्रदीपः ) सत्येतदिति । कालविप्रकर्षप्रतिपादनायानद्यतनप्रत्ययप्रयोगः । राज इत्यत्रावधिभेदाद्भसंज्ञयावयवस्यैव पदसंज्ञा बाध्यते, न समुदायस्य सुबन्तत्वनिमित्ता । लुप्ते प्रत्ययेऽवधिभेदाभावात्प्रत्ययलक्षणेन प्राप्तया भसंज्ञया द्वे अपि पदसंज्ञे बाधितव्ये । एकाऽपवादत्वेन, द्वितीया परत्वेनेति भावः ॥ अनयेति । पदसंज्ञाद्वयमनेन दर्शितम् । भसंज्ञा प्रत्ययलक्षणेन वर्णाश्रयापि भवति । यथा अतृणेडितीमागमः ॥

उद्द्योते-कालविप्रकर्षेति । अस्य चोत्तरस्य नायमवसर इत्यर्थः॥ भाष्ये—एतत् वक्ष्यमाणवाक्यार्थरूपम् ॥ पदसंज्ञाद्वयमिति । अनया पदसंज्ञया नलोपो भविष्यतीत्यादि भाष्यार्थः ॥ यथेति । वर्णप्राधान्यविषय एव स निषेध इति भावः ॥

( तत्त्वालोकः ) प्रदीपे—लुप्ते प्रत्यये इति—राजपुरुष इत्यत्रेत्यादिः । एका—'स्वादिष्वि'ति विधीयमाना । द्वितीया—'सुप्तिङन्तमि'ति विधीयमाना ।

उद्द्योते—नायमवसर इति—किन्तु कालान्तरमिति प्रतिपादयितुम् 'आसीत्' इति प्रयोग इति शेषः । वक्ष्यमाणेति—'अनये'त्यादिनेत्यादिः । अनयेति—'सुप्तिङन्तमि'ति विधीयमानयेत्यर्थः । तथा चेत्यादिः । आदिना—'अनया ( 'स्वादिष्वि'ति विधीयमानया ) पदसंज्ञया नलोपो न भविष्यती'त्यस्य परिग्रहः । ननु 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति निषेधात्कथमुभयत्र वर्णाश्रये तदित्यत आह—वर्णेति । स निषेधः—'वर्णाश्रये नास्ती'ति तन्निषेधः । तथा चात्र वर्णाश्रयत्वेऽपि प्राधान्येन तदाश्रयत्वाभावात्तेन प्रत्ययलक्षणनिषेधो नेति भावः ।

( ४५० आक्षेपान्तरवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात् परिवीरिति ॥ * ॥

( भाष्यम् )

तुग्दीर्घत्वयोश्च विप्रतिषेधो नोपपद्यते ॥

क ? ।

परिवीरिति ॥

किं कारणम् ? ।

एकयोगलक्षणत्वात् । एकयोगलक्षणे हि तुग्दीर्घत्वे ॥ इह—लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि भवन्ति, तान्येतेन प्रत्युत्थाप्यन्ते । अनेनैव तुग्, अनेनैव च दीर्घत्वमिति तदेकयोगलक्षणं भवति । एकयोगलक्षणानि च न प्रकल्पन्ते ॥

( प्रदीपः ) तुग्दीर्घत्वयोश्चेति । अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेपि प्रत्यये विधीयन्ते इति क्रमाभावात्पौर्वापर्यं न प्रकल्पते । कार्यस्य प्राधान्यान्नानेन शास्त्रव्यपदेशौ विधीयेते ।

( उद्द्योतः ) भाष्ये—पर्यवपन्नानि—मृतानि । अप्राप्तानीति यावत् ॥ नन्वेतत्कार्यातिदेशे स्यात्स एव कुतः शास्त्रनिमित्तातिदेशयोरपि संभवाद् । अत आह—कार्यस्येति । व्यपदेशो निमित्तम् ॥ विधीयेते इति । इत्यभिमान इति शेषः ॥ वस्तुतः कार्यशास्त्रातिदेशयोरभेद एवेत्युक्तम् ॥ भाष्ये—एकयोगलक्षणानि चेति । तादृशानि विप्रतिषेधविषयत्वेन न प्रकल्पन्त इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—दूषणान्तरमाशङ्कते—तुग्दीर्घत्वयोश्चेति । इह—परिवीरित्यत्र । एतेन—प्रकृतसूत्रेण । एवमग्रेऽपि । अनेनैवेति—एवञ्चेत्यादिः । तत्—तुग्दीर्घत्वम् ।

उद्द्योते—व्यवहारार्थं प्रसिद्धेन व्यपदेशशब्देनात्रापि स एव ज्ञायेत, किन्तु स न प्रकृतोपयोगीत्यतस्तस्यार्थमाह—निमित्तमिति । अत्राभिमानपदेन सूचिताया अरुचेर्बीजमाह—वस्तुत इति । उक्तमिति—स्थानिवत्सूत्रे इति भावः ।

( ४५१ न्यासान्तरेण समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सिद्धं तु स्थानिसंज्ञानुदेशादान्यभाव्यस्य ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

स्थानिसंज्ञाऽन्यभूतस्य भवतीति वक्तव्यम् ॥

किं कृतं भवति ? ॥

सत्तामात्रमनेन क्रियते । यथाप्राप्ते तुग्दीर्घत्वे भविष्यतः ॥

( प्रदीपः ) सिद्धं त्विति । अन्यो भावोऽन्यद्वस्तु स्थान्यपेक्षयाऽऽदेशः, अन्यभाव एवान्यभाव्यमिति स्वार्थे ष्यञ् । तत्र परिवीरिति स्थानिनः क्विपो या संज्ञा यो व्यपदेशः पित् कृत्प्रत्यय इत्यादिः, स लोपस्यानेन विधीयते । ततस्तन्निबन्धनं शास्त्रं प्रवर्तत इति सिद्धो विप्रतिषेधः ॥ सत्तामात्रमिति । कृदादिव्यपदेशस्येत्यर्थः ॥

( उद्द्योतः ) नन्वन्यभाव इति षष्ठीतत्पुरुषः कर्मधारयो वा; उभयत्रापि ष्यञनुपपन्नः, भावस्य भावान्तरेणायोगात्, समाससंज्ञया गुणवचनसंज्ञाया बाधाच्चार्थासङ्गतेश्चेत्यत आह—अन्यो भाव इति । भाष्येऽन्यरूपं प्राप्तस्येत्यर्थकमन्यभूतस्येत्येतत्तु फलितार्थो बोध्यः ॥ स्वार्थे इति । चातुर्वर्ण्यादित्वात् ॥ ननु सत्ता स्थानिनश्चेद्विरुद्धम्, अतिदेशसहस्रेण सत्ताया अशक्यत्वाच्चात आह—कृदादिव्यपदेशस्येति । एतदर्थमेव स्थानिसंज्ञानुदेशादित्युक्तम्, न तु स्थान्यनुदेशादिति । तथा सति स्थानिकार्यातिदेश एव स्यादिति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—यद्यपि प्रकृतसूत्राश्रयणे समापन्नयोरनयोर्दोषयोरनेन परिहार्यतायास्तुल्यत्वेऽपि प्रथम एव प्रथमम्परिहरणीयत्वेनोपादेयः, तथापि स्वतन्त्रेच्छस्य मुनेः पर्यनुयोगानर्हत्वाद् द्वितीयमेव प्रथमन्तत्त्वेन प्रतिपादयति—सिद्धमिति । स्थानिसंज्ञानुदेशादान्यभाव्यस्य—आदेशस्य स्थानिव्यवहारातिदेशात् । स्थानीति—यत इत्यादिः । सत्तामात्रमिति—आदेशे स्थानिव्यवहार एवानेनातिदिश्यते, नतु स्थानिकार्यम्, तच्च स्वशास्त्रेणैव भवतीति भावः । यथेति—तथा चेत्यादिः । भविष्यत इति—विप्रतिषेधविषयावित्यादिः । 'यथाप्राप्ते' इति भाष्यप्रयोगात् 'नाव्ययीभावादतोऽम् त्वपञ्चम्याः' इत्यम्भावस्यानित्यता प्रतीयते ।

प्रदीपे—बहुव्रीह्यपेक्षया लाघवात्कर्मधारयमभ्युपेत्य भावपदार्थमाह—वस्त्विति । विप्रतिषेध इति—तुग्दीर्घत्वयोरिति भावः । कृदादीति—आदेशे इत्यादिः ।

उद्द्योते—ननु तस्यापि तेन कश्चिद्योगो दृष्ट इत्यत आह—समासेति ॥ बहुव्रीहिं, स्वरूपञ्च भावपदार्थमभ्युपेत्याह—भाष्येऽ-

न्यरूपमिति। सत्ता स्थानिनश्चेदिति—'अत्र सत्ता कस्य ? आदेशस्य स्थानिनो वा। तत्र—नाद्यः, आदेशस्य सत्तायाः सिद्धत्वात्। न च द्वितीयः, यतः' इत्यादिः। तर्हीति शेषः। नह्यादेशसत्त्वसमये स्थानिनः सत्ता कर्तुं शक्यते; आदेशनिवर्त्यत्वस्यैव स्थानित्वेन, स्थानिनिवर्त्तकत्वस्यैव चादेशत्वेन तयोर्विरोधादिति भावः। अतिदेशेन स्थानिनोऽप्रयोगादाह—अतिदेशेति। सत्ताया इति—स्थानिन इत्यादिः। कर्त्तुमिति शेषः॥ वार्त्तिककारसम्मतमपीदमेवेत्याह-एतदर्थमेवेति। एतज्ज्ञाभार्थमेवेत्यर्थः। वार्त्तिककारेणेति शेषः। तथा सतीति—यत इत्यादिः।

( आक्षेपभाष्यम् )

तद्वक्तव्यं भवति॥

( उद्द्योतः ) भाष्ये-शङ्किता आह—तद्वक्तव्यमिति। वचनान्तरेण सूत्राक्षेपपरिहारो न युक्त इति भावः॥

( तत्त्वालोकः ) भाष्ये—तदिति—यद्युक्तवार्त्तिकेन तत्रेष्टं साध्यते, तर्हीत्यादिः।

उद्द्योते—न युक्त इति—गौरवादिति भावः।

( न्यासान्तरसाधकसमाधानभाष्यम् )

यद्यप्येतदुच्यते, अथवैतर्हि स्थानिवद्भावो नारभ्यते। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वक्ष्यामि॥

( उद्द्योतः ) परिहरति—यद्यपीति॥ अथवैतर्हीति। तथापीत्यर्थः। एवं च लघुतरत्वाद्वचनान्तरेणापि परिहारो युक्त इति भावः॥

( तत्त्वालोकः ) भाष्ये—स्थानिवद्भाव इति—स्थानिवत्सूत्रमित्यर्थः। प्रत्ययलक्षणसूत्रञ्चेति शेषः। स्थानिसंज्ञेति—किन्तु तयोः स्थाने इत्यादिः।

( आक्षेपभाष्यम् )

यद्येवम् 'आङो यमहनः' आत्मनेपदं भवतीति हन्तेरेव स्यात्, वधेर्न स्यात्। न हि काचिद्धन्तेः संज्ञास्ति, या वधेरतिदिश्येत॥

( प्रदीपः ) यद्येवमिति। हन्ति स्वरूपेणोपादायात्मनेपदं विधीयते, न तु काञ्चित्संज्ञामाश्रित्येति भावः॥ न हीति। यद्यपि धातुसंज्ञाऽस्ति, तथापि न तदुपादानेनात्मनेपदं विधीयते॥

( उद्द्योतः ) संज्ञामिति। निमित्तभूतव्यपदेशमित्यर्थः॥

( तत्त्वालोकः ) भाष्ये—यद्येवमिति—तर्हीति शेषः। वधेः—वधेस्तु।

( समाधानभाष्यम् )

हन्तेरपि संज्ञास्ति॥

का ?॥

हन्तिरेव॥

कथम् ?॥

'स्वं रूपं शब्दस्याशब्दसंज्ञा' इति वचनात्स्वं रूपं शब्दस्य संज्ञा भवतीति हन्तेरपि हन्तिः संज्ञा भविष्यति॥

( प्रदीपः ) हन्तेरपीति। आङो यमहन इति सूत्रोपात्तो हन्तिः संज्ञा, प्रयोगस्थस्तु संज्ञीति वधेरपि हन्तिसंज्ञाऽतिदिश्यते॥

( उद्द्योतः ) ननु संज्ञासंज्ञिनोर्भेदाद्धन्तेर्हन्तिः संज्ञेत्ययुक्तमत आह—सूत्रोपात्त इति॥

( तत्त्वालोकः ) भाष्ये—हन्तेरिति—नैष दोषः। यत इत्यादिः। अपिना-वधेः समुच्चयः। स्वं रूपमिति—यत इत्यादिः।

( ४५२ न्यासान्तरप्रयोजनान्तरवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धम्॥ * ॥

( भाष्यम् )

भसंज्ञाङीप्ष्फगोरात्वेषु च सिद्धं भवति॥

( उद्द्योतः ) फलान्तरमपि वचनान्तरारम्भे दर्शयति भाष्ये—भेत्यादि॥ सिद्धमिति। इष्टमिति शेषः। वक्ष्यमाणानल्विधित्वाद्वार्तिकमते नातिदेशेन भविष्यन्ति॥ सूत्रारम्भे तु वर्णाश्रये इत्यस्य वर्णप्राधान्यविषयत्वादतिदेशेन स्युरेवेति भावः॥

( तत्त्वालोकः ) भाष्ये—भसंज्ञाङीप्ष्फगोरात्वेष्विति—अस्य पूर्वनिपातप्रकरणानित्यत्वात् साधुता। तथाऽत्र 'गोरि'त्यत्र निपातनाद्विभक्तेर्लुक्।

उद्द्योते—वार्तिकमते—'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति न्यासान्तरपरवार्तिकमते। सूत्रेति—प्रकृतेत्यादिः।

( उदाहरणोपपादनभाष्यम् )

भसंज्ञा—राज्ञः पुरुषः—राजपुरुषः। प्रत्ययलक्षणेन 'यचि भम्' इति भसंज्ञा प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति॥ भसंज्ञा॥

( तत्त्वालोकः ) भसंज्ञेति—फलमिदं कार्यकालपक्षे। तत्पक्षे हि—प्रत्यये लुप्ते यावत् एवावधेः 'स्वादिष्वि'ति पदसंज्ञा, तावत एव 'सुप्तिङन्तमि'ति। तथा चापवादत्वात्प्रथमाया इव परत्वाद् द्वितीयाया अपि भसंज्ञा बाधिका भविष्यति। यथोद्देशपक्षे तु—प्रत्ययसत्त्वे तयोर्भिन्नावधिकत्वात्प्रथमैव भसंज्ञया बाध्यते, न तु द्वितीयेति जाता 'सुप्तिङन्तमि'ति पदसंज्ञैव लुप्तविभक्तिके एकदेशविकृतन्यायेनोपपद्यतेति नेदं फलमिति भावः।

( उदाहरणोपपादनभाष्यम् )

ङीप्—चित्रायां जाता चित्रा। प्रत्ययलक्षणेनाण्णन्तादितीकारः प्राप्नोति। 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति॥ ङीप्॥

(प्रदीपः) चित्रायां जातेति। चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानमित्यणो लुक्॥ टिड्ढाणञित्यत्रात इत्यधिकाराद् ङीपोऽल्विधित्वम्॥

( उद्द्योतः ) चित्रेति। नक्षत्रेण युक्त इत्यणो लुबविशेष इति लुप्। युक्तवद्भावात्स्त्रीत्वं, ततो जातेऽर्थे सन्धिवेलादीत्यणो वार्तिकेन लुग् इति भावः। नचाणो लुकि लुक्तद्धितेति टापो लुकि पुनष्टाब् दुर्लभः, लक्ष्ये लक्षणस्येति न्यायाद् इति वाच्यम्। जातगतस्त्रीत्वबोधनरूपफलस्यासिद्धतया प्रवृत्तेः॥ अत इत्यपीति। अकारान्तादण इत्यर्थः॥

( तत्त्वालोकः ) उद्द्योते—वार्तिकेन—'चित्रारेवती'त्यादिवार्तिकेन॥ इदम्फलमकारान्तादण इति व्याख्याने। अण योऽकार इति

व्याख्याने तु वर्णप्राधान्यात् 'वर्णाश्रये नास्ती'ति प्रत्ययलक्षणनिषेधात् प्रकृतसूत्रारम्भेऽपि न दोष इत्याशयेनाह—**अकारान्तादिति ।**

**( उदाहरणोपपादनभाष्यम् )**

**ष्फ—वतण्डी । प्रत्ययलक्षणेन 'यञन्ताद्' इति ष्फः प्राप्नोति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति ॥ ष्फ ॥**

**( प्रदीपः ) वतण्डीति ।** यथा आवट्यायनीति चापं बाधित्वा सर्वत्रग्रहणापकर्षात् ष्फो भवति । एवं शार्ङ्गरवादिपाठात् प्राप्तं ङीनं बाधित्वा प्राचां ष्फः स्यात् ॥ अत इत्यधिकारादल्विधिः ष्फः ॥

**( उद्द्योतः ) ननु** वतण्डात् स्त्र्यपत्ये यञो **लुक् स्त्रियामिति** लुकि प्रत्ययलक्षणेन **प्राचामिति** प्राप्तष्फं बाधित्वा परत्वान् ङीन् स्यात्, शार्ङ्गरवादिपाठादत आह—**यथेति ।** तत्र हि सूत्रे **यञ** इति वर्तते ॥ **सर्वत्रग्रहणेति ।** तद्धि पूर्वसूत्रेऽपकृष्यते ॥

**( तत्त्वालोकः )** प्रदीपे—**चापम्—**'आवट्याच्चे'ति प्राप्तम् । **अपकर्षात्—**अपकर्षसामर्थ्यात् । **प्राचाम्—**'प्राचामि'ति ।

उद्द्योते—**तत्र हि सूत्रे—**'प्राचां ष्फ तद्धितः' इत्यत्र हि सूत्रे । 'यञश्चे'ति सूत्रादिति भावः । **वर्तते—**अनुवर्त्तते । **तद्धि—**सर्वत्रग्रहणं हि । **पूर्वसूत्रे—**'प्राचामि'ति सूत्रे । 'सर्वत्र लोहितादिकतन्तेभ्यः' इति सूत्रादिति भावः ॥ इदम्फलम् 'प्राचामि'त्यत्र 'सर्वत्र' ग्रहणापकर्षण एव । अन्यथा तु प्रकृतसूत्रारम्भेऽपि न दोष इत्याशयः ।

**( उदाहरणोपपादनभाष्यम् )**

**गोरात्वम्—गामिच्छति—गव्यति । प्रत्ययलक्षणेनामि 'औतोऽम्शसोः' इत्यात्वं प्राप्नोति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न भवति ॥ गोरात्वम् ॥**

**( प्रदीपः ) गव्यतीति । औतोऽम्शसोरि**त्यत्राचीत्यनुवर्तनादल्विधिरात्वम् ॥

**(उद्द्योतः) औतोमिति ।** एकादेशविधायकं हि तत् ॥ **अचीति ।** अजाद्योरित्यर्थः । अत एव तद्धितशसो निवृत्तिः ॥

**( तत्त्वालोकः )** प्रदीपे—**अचीत्यनुवर्त्तनादिति—**'इको यणची'त्यस्मादिति भावः ।

उद्द्योते—अत्र 'आ' इति छेदायाह—**एकादेशेति ॥** इदम्फलम् 'अजाद्योरम्शसोरि'ति व्याख्यान एव । 'अम्शसोरची'ति व्याख्याने तु—वर्णप्राधान्याद् 'वर्णाश्रये नास्ती'ति प्रत्ययलक्षणनिषेधात् प्रकृतसूत्रारम्भेऽपि न दोष इत्याशयेनाह—**अजाद्योरिति ।**

**( ४५३ न्यासान्तरदूषणवार्तिकम् ॥ ११ ॥ )**

## ॥ * ॥ तस्य दोषो ङीनकारलोपेत्त्वेम्विधयः ॥ * ॥

**( भाष्यम् )**

**तस्यैतस्य लक्षणस्य दोषः ॥**

**( उद्द्योतः )** भाष्ये सूत्रारम्भवादी वचनान्तरवादिनं प्रति दूषणमाह—**तस्य दोष इति ।** स्थानिसंज्ञानुदेशादित्यस्येत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**दोष इति—**अतिप्रसक्तिस्थानानीत्यर्थः । लक्षणायाः, जातावेकवचनस्य चाश्रयणात् । **ङीनकारलोपेत्त्वेम्विधय इति—**अस्य पूर्वनिपातप्रकरणानित्यत्वात् साधुता । तथाऽत्र निपातनात्समासः ॥

**( उदाहरणोपपादनभाष्यम् )**

**ङौ नकारलोप—आर्द्रे चर्मन्; लोहिते चर्मन् । प्रत्ययलक्षणेन 'यचि भम्' इति भसंज्ञा सिद्धा भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥**

**( प्रदीपः ) चर्मन्निति ॥ सुपां सुलुगिति** ङेर्लुक् । अत्र भसंज्ञाया अभावान्नलोपः प्राप्नोतीति **न ङिसंबुद्ध्योरिति** वक्तव्यं जायते ॥

**( उदाहरणोपपादनभाष्यम् )**

**इत्त्वम्—आशीः । प्रत्ययलक्षणेन हलीतीत्त्वं सिद्धं भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥**

**( उद्द्योतः ) इत्वम् । शास इदङ्हलोरिति ॥**

**( उदाहरणोपपादनभाष्यम् )**

**इम्—अतृणेट् । प्रत्ययलक्षणेन हलीति इम् सिद्धो भवति । 'स्थानिसंज्ञाऽन्यभूतस्यानल्विधौ' इति वचनान्न प्राप्नोति ॥**

**( उद्द्योतः ) इम् । तृणह** इत्यनेन ॥

**( तटस्थभाष्यम् )**

**सूत्रं च भिद्यते ॥**

**( तत्त्वालोकः )** स एव तमेव प्रति दूषणान्तरमाह-**सूत्रञ्चेति ।** यदि तयोः स्थाने इदं क्रियते, तर्हीत्यादिः । तथा चापाणिनीयत्वादस्य पाठे पुण्यजनकता नोपपद्येतेति भावः ।

**( सिद्धान्तिभाष्यम् )**

**यथान्यासमेवास्तु ॥**

**( तत्त्वालोकः ) यथान्यासमिति—**तर्हीत्यादिः ।

**( आक्षेपस्मारणभाष्यम् )**

**ननु चोक्तम्—※सतो निमित्ताभावात्पदसंज्ञाऽभावः ※ तुग्दीर्घत्वयोश्च विप्रतिषेधानुपपत्तिरेकयोगलक्षणत्वात्परिवीः ※ इति ॥**

**( तत्त्वालोकः ) ननु चेति—**यथान्यासे इति शेषः ।

**( प्रथमदूषणपरिहारभाष्यम् )**

**नैष दोषः । वक्ष्यत्यत्र परिहारम् ॥**

**( उद्द्योतः )** भाष्ये—**वक्ष्यत्यत्रेति ॥ न ङीति** ङौ नलोपप्रतिषेधाज्ज्ञापकात्प्रत्ययलक्षणेन भसंज्ञा नेत्येवं रूपम् । अनुपदमेतत्सूत्र एवेत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये-**नैष दोष इति—**नैतौ दोषावित्यर्थः । यत इति शेषः । **अत्र—**अनयोराद्ये 'सतो निमित्ताभावात्' इत्यत्र ।

**( द्वितीयदूषणपरिहारभाष्यम् )**

**इहापि परिवीरिति—शास्त्रपरविप्रतिषेधेन परत्वाद्दीर्घत्वं भविष्यति ॥**

(प्रदीपः) **परत्वाद्दीर्घत्वमिति** । सति प्रत्यये यत्कार्यं दृष्टं तल्लुप्तेऽपि भवतीति सूत्रार्थः । परिवीयैलादौ च सति प्रत्यये दीर्घो दृष्टो, न लुगिति परिवीरित्यत्रापि दीर्घ एव भवति ॥

(उद्द्योतः) भाष्ये—**शास्त्रपरेति** । उपदेशशास्त्रपरेत्यर्थः । अतिदिश्यमानकार्याणामुत्पत्तिदेश एव विप्रतिषेधशास्त्रोपयोगीति भावः । तदाह—**सति प्रत्यये इति** । इदं सूत्रं तत्तच्छास्त्रनिमित्तसंपादनद्वारा तत्तच्छास्त्रप्रवृत्तिसंपादकमिति भावः ॥ अत एव पूर्वं **तान्यनेन प्रत्युत्थाप्यन्त** इत्युक्तम् । **तानि** तत्कार्यबोधकानि शास्त्राणीति तदर्थं उचितः, न तु कार्याणि क्रियन्त इत्यर्थः । **क्रियन्ते** इत्यस्यैव वक्तुमुचितत्वात् । अत एव **टित आत्मनेपदाना**मिति सूत्रे **पर्यवपादो** रूपान्तरापत्तिरित्युक्तं कैयटेन । विद्यमानस्य हि रूपान्तरापत्तिर्भवति । शास्त्रमेव च विद्यमानं न तु कार्यम् । तस्य च रूपान्तरमेतद्विषये कार्यान्तरप्रवर्तकत्वम् । एवं च पर्यवपन्नत्वमपि शास्त्रस्येत्यन्ये ॥

(तत्त्वालोकः) उद्द्योते—कैयटस्य 'अनेनैव प्रत्ययनिमित्तानि कार्याणि लुप्तेऽपि प्रत्यये विधीयन्ते' इत्यादि-प्रागुक्तेः, प्रकृतोक्तेश्च यदि 'प्रकृतसूत्रेण कार्यातिदेश एव, न तु शास्त्रातिदेशः' इत्याशयो गृह्येत, तर्हि 'शास्त्रपरविप्रतिषेधेन परत्वादि'त्यादि भाष्यं नोपपद्येत, अतस्तस्याशयन्तत्रोपपाद्यास्याशयमत्राह—**इदं सूत्रमिति** । तथा च—प्रकृतसूत्रेण शास्त्रातिदेश एव, न तु कार्यातिदेश इत्याशयः । अयमेवाशयो भाष्यस्यापीत्याह—**अत एवेति** । अस्य सूत्रस्य तद्द्वारा तत्सम्पादकत्वादेव, अथवा शास्त्रातिदेशस्यैव भाष्याशयत्वादेवेत्यर्थः । भाष्यकृतेति शेषः । **अनेन**—प्रकृतसूत्रेण । नन्वेतदुक्तेः पूर्वम् 'इह लुप्ते प्रत्यये सर्वाणि प्रत्ययाश्रयाणि कार्याणि पर्यवपन्नानि भवन्ती'त्युक्तेः सत्त्वात्तानीत्यस्य कार्याणीत्येवार्थः स्यादिति कथमेतदुक्तेः शास्त्रातिदेशमात्राशयकतेत्यत आह—**तानीति** । **इति**—इत्येव । **क्रियन्ते इति**—तथा सतीत्यादिः । कैयटोक्तेरप्ययमेवाशय इत्याह—**अत एवेति** । तत्पदस्य कार्यबोधकशास्त्रपरत्वादेवेत्यर्थः । **एवञ्च**—तथाऽऽवश्यकत्वे च । तथा च—तत्र कार्यपदमपि शास्त्रपरमेवेत्याशयः ।

---

(प्रयोजनकथनाधिकरणम्)

(आक्षेपभाष्यम्)

**कानि पुनरस्य योगस्य प्रयोजनानि ? ।**

(उद्द्योतः) भाष्ये—**कानि पुनरिति** । पूर्वमेतत्सूत्रकरणे का युक्तिरिति युक्तिप्रश्नः । इदानीं तु प्रयोजनप्रश्न **इति न पौनरुक्त्यम्** । अत एव **सदन्वाख्याना**दिति प्रागुत्तरितम् ॥

(तत्त्वालोकः) उद्द्योते—**पूर्वम्**—'किमर्थं पुनरिदमुच्यते' इत्यत्र ।

(४५४ यथान्याससूत्रे प्रयोजनवार्तिकम् ॥ १२ ॥)

**॥ * ॥ प्रयोजनमपृक्तशिलोपे नुममामौ गुणवृद्धी दीर्घत्वमडाट्श्नम्विधयः ॥ * ॥**

(भाष्यम्)

**अपृक्तलोपे शिलोपे च कृते नुम् अमामौ गुणवृद्धी दीर्घत्वमिम् अडाटौ श्नम्विधिरिति प्रयोजनानि ॥**

(प्रदीपः) **प्रयोजनमिति** । यद्यप्यल्विध्यर्थमतृणेडित्यादौ, तथापि विशेषविहितत्वान्नुमादयोऽप्यस्यैवोदाहरणानीति भावः ॥

(उद्द्योतः) **यद्यप्यल्विध्यर्थमिति** । [illegible] शेषः । **विशेषविहितत्वादिति** [illegible] इत्यर्थः ॥

(तत्त्वालोकः) भाष्ये—**प्रयोजनमिति**—अत्र 'वेदाः प्रमाणमि'त्यत्रत्य-प्रमाणमित्यस्येव साधुता । [illegible] । **अपृक्तशिलोपे इति**—अनयोर्यथासम्भवमगादिष्वन्वयः । [illegible] साधुता पूर्वनिपातप्रकरणानित्यत्वादेव बोध्या । [illegible] ।

प्रदीपे—वार्तिककारमतेना [illegible]—**यद्यपीति** । **अल्विध्यर्थम्**—अप्राधान्येनाल्आश्रयणे विध्यर्थम् । **अस्यैव**—प्रकृतसूत्रस्यैव ।

उद्द्योते—**इदम्**—प्रकृतसूत्रम् ।

(उदाहरणोपपादनभाष्यम्)

**नुम्—अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् ॥**

**अमामौ—हे अनड्वन् अनड्वान् ॥**

**गुणः—अधोक् अलेट् ॥**

**वृद्धिः—न्यमार्ट् ॥**

**दीर्घत्वम्—अग्ने त्री ते वाजिना त्री षधस्था ता ता पिण्डानाम् ॥**

**इम्—अतृणेट् ॥**

**अडाटौ—अधोक् अलेट् ऐयः औनः ॥**

**श्नम्विधिः—अभिनोऽत्र , अच्छिनोऽत्र ॥**

**अपृक्तशिलोपयोः कृतयोरेते विधयो न प्राप्नुवन्ति । प्रत्ययलक्षणेन भवन्ति ॥**

(प्रदीपः) **अनड्वन्निति** । पूर्वं संबुद्धिलोपमाश्रित्यैतदुक्तम् ॥ यदि तु विशेषविहितत्वा**दम् संबुद्धा**विति पूर्वं प्रवर्तते, तदा संबुद्धिलोपो न स्यात् ॥

**ऐय इति** । इयर्तेर्लङ् तिप् शपः श्लुः द्विर्वचनम् । **अर्तिपिपर्त्योश्चे**तीत्वम् , अभ्यासस्यासवर्णे इतीयङ् ॥

**औन इति** । उन्देर्लङ् सिप् श्नम् **श्नान्नलोपो दश्चे**ति रुत्वम् ॥

(उद्द्योतः) **त्री ते** इत्यादौ **शेश्छन्दसीति** लोपः । नुम्फलं तु दीर्घः ॥

**आश्रित्येति** । अपवादबाधकवाचनिकपूर्वविप्रतिषेधाश्रयेणेति भावः । **विशेषविहितत्वादिति** । **येन नाप्राप्ति**न्यायेनापवादत्वादित्यर्थः ॥ **तदेति** । **अपवादविषयं परित्यज्ये**ति न्यायेनापवादविषये उत्सर्गाप्रवृत्तेरिति भावः ॥ **यदी**त्यनेन विषयभेदादपवादत्वमेव नास्तीति सूचितम् । यदि तु **नुड्विषये रप्रतिषेधो वक्तव्य** इत्यादिसाप्तमिकभाष्येण विषयभेदेऽप्यपवादत्वं तर्हि **प्रत्ययलोपस्थलेऽनुत्पत्तिरेवान्वाख्यायते** इति **सरूप**सूत्रस्थभाष्ये उक्तत्वेनापवादत्वसंभावनैव नेत्याहुः ॥

**इतीयङिति** । ततो गुणेऽपृक्तलोपेऽडाटाविति भावः ॥ आडागमे रूपान्तरेण तत्तच्छास्त्रनिमित्तविघातात् केनापि कार्येणानयोर्न यौगपद्यमिति भावः ॥ **लावस्थायामडि**ति पक्षेऽपि **बहुलं छन्दस्यमाङ्योगेऽपीति** बाहुलकादत्रैवमेव प्रक्रिया बोध्या ॥ अभिनोऽत्रेत्यत्रापीकारलोपापृक्तलोपाभ्यां श्नमो यौगपद्यासम्भवेन परत्वाल्लोपे तस्य प्रवृत्तिरिति बोध्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**लोपः—**शैर्लोपः । नन्वत्र नुमि कृतेऽपि प्रातिपदिकान्तत्वान्नकारस्य लोपात्तदफलमेवेत्यत आह—**नुम्फलन्त्विति । यदि त्विति—**इयमुक्तिः, यदि शास्त्रं प्रमाणमित्युक्तिरिवासन्दिग्धे सन्दिग्धा । एवञ्च भाष्यं सम्यगेवेत्याशयः ॥ अस्यां प्रक्रियायां बीजमाह—**आडागमे इति । अनयोः**—अडाटोः । ननु पक्षान्तरे कथमुक्तप्रक्रियेत्यत आह—**लावस्थायामिति ।** सार्वधातुकपरत्वाभावादाह—**यौगपद्यासम्भवेनेति । तस्य—**क्षमः ।

( प्रत्याख्यानभाष्यम् )

नैतानि सन्ति प्रयोजनानि । स्थानिवद्भावेनाप्येतानि सिद्धानि ॥

**( तत्त्वालोकः ) स्थानिवद्भावेनापीति**—यत इत्यादिः ।

( सूत्रावश्यकताभाष्यम् )

न सिध्यन्ति । आदेशः स्थानिवदित्युच्यते । न च लोप आदेशः ॥

**( प्रदीपः ) न च लोप इति ।** दिशिरुच्चारणक्रियः। न च लोप उच्चार्यते, अभावरूपत्वात् ॥

**( तत्त्वालोकः )** भाष्ये—**न सिध्यन्तीति—**नैतानि स्थानिवत्त्वेन सिद्ध्यन्तीत्यर्थः । यत इति शेषः ।

प्रदीपे—**दिशिरिति—**आदेश इत्यत्र ह्रीत्यादिः ।

( प्रत्याख्यानसाधकभाष्यम् )

लोपोऽप्यादेशः ॥

कथम् ? ।

आदिश्यते यः स आदेशः, लोपोऽप्यादिश्यते ॥

**( प्रदीपः ) लोपोऽपीति ।** प्रतिपादनक्रियोऽत्र दिशिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**लोपोऽपीति—**स्थानिवद्भावेनाप्येतानि सिद्ध्यन्ति, यत इत्यादिः । **आदिश्यते इति—**यत इत्यादिः । **लोपोऽपि—**लोपश्चापि ।

प्रदीपे—**प्रतिपादनेति—**यस्मादित्यादिः ।

( लोपेऽप्यादेशत्वसाधकभाष्यम् )

दोषः खल्वपि स्याद्, यदि लोपो नादेशः स्यात् । इह 'अचः परस्मिन् पूर्वविधौ' इत्येतस्य भूयिष्ठानि लोप उदाहरणानि, तानि न स्युः ॥

**( तत्त्वालोकः ) दोषः खल्वपीति—**दोषोऽपि तर्हीत्यर्थः । दोषमेवाह—**इहेति ।**

( सूत्रारम्भावश्यकताभाष्यम् )

यत्र तर्हि स्थानिवद्भावो नास्ति, तदर्थमयं योगो वक्तव्यः ॥

**क च स्थानिवद्भावो नास्ति ? ।**

**योऽल्विधिः ॥**

( आक्षेपभाष्यम् )

**किं प्रयोजनम् ? ।**

( ४५५ प्रयोजनवार्तिकम् ॥ १३ ॥ )

## ॥ * ॥ प्रयोजनं ङीनकारलोपेत्त्वेम्-विधयः ॥ * ॥

( भाष्यम् )

[ ङीनकारलोपेत्त्वेम्विधयः प्रयोजयन्ति ॥

ङीनकारलोपस्तावत्—'आर्द्रे चर्मन्' 'लोहिते चर्मन्' । स्थानिवद्भावः 'अनल्विधौ' इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु यचीति भसंज्ञा सिद्धा भवति ॥

इत्त्वम्—आशीः । स्थानिवद्भावः 'अनल्विधौ' इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीत्त्वं सिद्धं भवति ॥

इम्—अतृणेट् । स्थानिवद्भावः 'अनल्विधौ' इति वचनान्न प्राप्नोति । प्रत्ययलक्षणेन तु हलीतीम् सिद्धो भवति । ]

**( उद्द्योतः )** भाष्ये—**प्रयोजनं ङाविति ।** सूत्रारम्भवादी ॥

**( तत्त्वालोकः )** भाष्ये—**ङीनकारलोपेति—**अत्र ङीनकारलोपोऽभावेन, तथा—इत्त्वेमौ भावेन प्रयोजनम् । अयं **कोष्ठकान्तर्गतो** व्याख्यानग्रन्थः क्वचिन्नास्ति ।

( ४५६ सूत्रारम्भदूषणवार्तिकम् ॥ १४ ॥ )

## [ ॥ * ॥ भसंज्ञाङीप्ष्फगोरात्वेषु च दोषः ॥ * ॥ ]

( भाष्यम् )

भसंज्ञाङीप्ष्फगोरात्वेषु च दोषो भवति ॥

**( उद्द्योतः )** प्रत्याख्यानवाद्याह—**भसंज्ञेत्यादि ॥**

[भसंज्ञा—राज्ञः पुरुषो राजपुरुषः । प्रत्ययलक्षणेन तु यचीति भसंज्ञायां 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥

ङीप्—चित्रायां जाता चित्रा । प्रत्ययलक्षणेन त्वणन्तादितीकारः प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥

ष्फ—वतण्डी । प्रत्ययलक्षणेन तु यञन्तादकारान्तादिति ष्फः प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥

गोरात्वम्—गामिच्छति गव्यति । प्रत्ययलक्षणेन 'औतोम्शसोः' इत्यात्वं प्राप्नोति । स्थानिवद्भावस्त्वनल्विधाविति वचनान्न प्राप्नोति ॥ ]

**( तत्त्वालोकः )** भाष्ये—**भसंज्ञेति—**इदं वार्तिकं तथाऽयं कोष्ठकान्तर्गतो व्याख्यानग्रन्थः क्वचिन्नोपलभ्यते ।

( सूत्रारम्भवादिभाष्यम् )

भसंज्ञायां तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—

न प्रत्ययलक्षणेन भसंज्ञा भवतीति । यदयम्—'न ङिसंबुद्ध्योः' इति ङौ प्रतिषेधं शास्ति ॥

ङीप्यपि, नैवं विज्ञायते—अणन्तादकारान्तादिति ।

कथं तर्हि ?

अण्योऽकार इति ॥

ष्फेऽपि, नैवं विज्ञायते—यञन्तादकारान्तादिति ॥

कथं तर्हि ? ।

यञ् योऽकार इति ॥

गोरात्वेऽपि, नैवं विज्ञायते—अमि अचीति ।

कथं तर्हि ? ।

अच्यमीति ।

**( प्रदीपः ) अण्योऽकार इति ।** अकारेणाणन्तं न विशेष्यते, किं नर्ह्यणेव, सर्वश्चाण् अकार एवेति विशेषणसामर्थ्याच्छ्रूयमाणाकाररूपादण इति विज्ञायते ॥ अथवाऽण्योऽकार इति अणाऽकारो विशेष्यत इति वर्णनिमित्तो ङीप्, न तु प्रत्ययनिमित्त इति प्रत्ययलक्षणाभावः ॥ **यञ् योऽकार इति ।** अकारावयव इत्यर्थः । अथवा—यञवयवे यञ्शब्दोऽत्र वर्तते । यञवयवो योऽकार इत्यर्थः ॥ पूर्ववदेतद्व्याख्येयम् ॥ **अच्यमीति ।** अच् प्रधानं तद्विशेषणममिति तदादिविध्यभावः । तत्र वर्णनिमित्तमात्वम्, न प्रत्ययनिमित्तमिति दोषाभावः ॥

**( उद्द्योतः )** सूत्रारम्भवाद्याह—**भसंज्ञायां तावदिति ॥ यदयं न ङीति ।** अज्ञाधिकारप्रतिनिर्देशपक्षेऽयं ज्ञापकोपन्यासः ॥ **अकारेणाणन्तमिति ।** तद्धि जातेरस्त्रीत्यादेराखुरित्यादौ व्यावृत्तये आवश्यकम् ॥ ननु प्रत्ययग्रहणसामर्थ्येन प्रधानतया प्रत्ययत्वेन प्रत्ययस्य यत्र निमित्तता तत्रैवास्विध्यर्थमिदम् । एवं चाकाररूपो योऽणित्यर्थेऽपि प्रत्ययलक्षणं दुर्वारमत आह—**विशेषणेति ।** वस्तुतोऽकार एव विशेष्य इत्याह—**अथेति ॥ न तु प्रत्ययनिमित्त इति ।** प्राधान्येन प्रत्ययनिमित्त इत्यर्थः ॥ अजझलात्मकयञोऽकारेण सामानाधिकरण्यासंभवादाह—**अकारावयवेति ।** बहुव्रीहिः । अस्य विशेषणत्वे इदम् । **गुणे त्वन्याय्यकल्पनेति** न्यायादिति भावः ॥ नन्वेवं सति मत्यादिष्वतिप्रसङ्गवारणायाजाद्यत इत्यत्र मुख्यार्थस्योत्तरत्र लक्षणायां वैरूप्यं स्यादतो व्याख्यानान्तरमाह—**अथवेति ॥ तद्विशेषणमिति ।** अमोऽवयवेऽचीत्यर्थ इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति**—यत इत्यादिः । **ङीप्यपीति**—अत्र, 'ष्फेऽपि' 'गोरात्वेऽपि' इत्यनयोश्च न दोष इत्यनुषज्यते । **नैवमिति**—यत इत्यादिः । एवमग्रेऽपि ।

प्रदीपे—**तत्र**—तथा सति ।

उद्द्योते—नन्वव्यभिचारादत्र 'अतः' इत्यनुवृत्तिरेव व्यर्थेत्यत आह—**तद्धीति ।** यद्यत्र तन्नानुवर्त्तेत, तर्हि मण्डूकप्लुत्या तत्र तदनुवर्त्तने गौरवमापद्येतेति भावः । **प्रत्ययलक्षणमिति**—प्राधान्येन प्रत्ययनिमित्तत्वस्य सत्त्वादिति भावः । प्रत्ययनिमित्तत्वस्यापि सत्त्वादाह—**प्राधान्येनेति ।** ननु विपरीत एव कुतो न, तेनापि निर्वाहादित्यत आह—**गुणे त्विति । इत्यत्रेति**—उपात्तस्य 'अतः' इत्यस्येति शेषः । **उत्तरत्र**—'प्राचामि'त्यत्र । **लक्षणायाम्**—अकारावयवे लक्षणायाम् । 'अम्शसोरि'त्यत्र षष्ठीत्याह—**अमोऽवयवेति ।**

( प्रत्याख्यानभाष्यम् )

प्रयोजनान्यपि तर्हि नैतानि सन्ति ॥

**( उद्द्योतः )** एवं प्रत्याख्यानवादकारोक्तेषु [illegible] प्रत्याख्यानवाद्याह—**प्रयोजनान्यपीत्यादि ॥**

**( तत्त्वालोकः )** भाष्ये—**एतानि**—'प्रयोजनं ङौनकारलोपे' इत्यादिवार्त्तिकोक्तानि ।

( दूषणोद्धारभाष्यम् )

यत्तावदुच्यते—ङौ नकारलोप इति ॥ क्रियत एतन्न्यास एव—'न ङिसंबुद्ध्योः' इति ॥

**( प्रदीपः )** क्रियत एतदिति । [illegible] ज्ञापनार्थमवश्यं वक्तव्यमिति भावः ॥

**( उद्द्योतः ) ज्ञापनार्थमिति ।** प्रत्ययलक्षणेन भत्वं नेत्यस्येति शेषः ॥ **न लुमता तस्मिन्नि**त्यनाश्रित्येदम् ॥

**( तत्त्वालोकः )** भाष्ये—**क्रियते इति**—तत्र प्रयोजनम्, यत इत्यादिः ।

प्रदीपे—**त्वयाऽपि**—सूत्रारम्भवादिनाऽपि । **अवश्यमिति**—'न ङिसम्बुद्ध्योरि'ति सूत्रमिति भावः ।

उद्द्योते—**इदमिति**—तदाश्रयणे तु तेनैव प्रत्ययलक्षणनिषेधाद् भत्वाप्रसङ्ग इत्याशयः ।

( दूषणोद्धारभाष्यम् )

इत्त्वमपि । वक्ष्यत्येतत् * शास इत्त्वे आशासः क्वौ * इति ॥

**( प्रदीपः ) शास इत्त्वे इति ।** क्रियमाणेऽस्मिन् सूत्रे नियमार्थमेतद्वक्तव्यमाशास्ते इत्यादौ मा भूत् । अक्रियमाणे तु विध्यर्थम् । आशास्त इत्यादौ तु न भवति, शासु अनुशिष्टावित्यस्यैव तत्र ग्रहणात् ॥

**( उद्द्योतः ) अक्रते त्विति ।** परस्मैपदिविहिताङ्साहचर्याद् शासुधातोरेव ग्रहण तत्रेति पक्षे विध्यर्थम् ॥ नन्वेवमप्याशोरित्याद्यसिद्धिरिति चेत् ॥ अत्राहुः—**शास इद्** इति सामान्यसूत्रम् । ततोऽङि, अजादौ, चेदङ्ग्वेवेति नियमार्थमिदम् । एवं च सूत्रे **हलग्रहणं** मास्त्विति मित्रशीरित्यादिसिद्धिः ॥ **आशासः क्वाविति** तु अत्र शासोरेव ग्रहणे विध्यर्थम् । अन्यथा नियमार्थमिति आशास्ते इत्यादौ न दोष इति ॥

**( तत्त्वालोकः )** भाष्ये—**इत्त्वमपीति**—न प्रयोजनम्, यत इति शेषः ।

प्रदीपे—**अस्मिन्**—'प्रत्ययलोपे' इत्यस्मिन् । **नियमार्थम्**—'आशास इत्त्वञ्चेत्तर्हि क्वावेवे'ति नियमार्थम् । **एतत्**—'आशासः क्वौ' इत्येतत् । **वक्तव्यमिति**—येनेति शेषः । **तत्र**—'शास इदङ्हलो'रि'त्यत्र ।

उद्द्योते—**तत्र**—'शास इदङ्हलोरि'त्यत्र । **सूत्रे**—'शास इदि'ति सूत्रे । **अत्र**—'शास इदि'त्यत्र । **शासोः**—शासु अनुशिष्टौ इत्यस्य । **एवेन**—आङः शासु इच्छायामित्यस्य व्यवच्छेदः । **एवम्**पूर्वत्रापि । **अन्यथा**—साहचर्यानाश्रयणात्तत्र **शासिमात्रग्रहणे ।**

( दूषणोद्धारभाष्यम् )

इम्विधिरपि । हलीति निवृत्तम् ॥

**( तत्त्वालोकः ) इम्विधिरपीति**—न प्रयोजनम्, यत इति

शेषः । **निवृत्तमिति**—'तृणह इमि'ति सूत्रे 'उतो वृद्धिर्लुकि हली'ति सूत्राद् हलीति नानुवर्त्तते इति भावः ।

**( आक्षेपभाष्यम् )**

**यदि हलीति निवृत्तं, तृणहानि अत्रापि प्राप्नोति ॥**

**( तत्त्वालोकः ) निवृत्तमिति**—तर्हीति शेषः । **प्राप्नोतीति**—इमित्यादिः ।

**( समाधानभाष्यम् )**

**एवं तर्हि—'अचि न' इत्यनुवर्तिष्यते ॥**

**( तत्त्वालोकः ) अचि नेति**—'तृणह इमि'त्यत्र 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यस्मादित्यादिः । तथा च—नोक्तदोष इति भावः ।

**( तटस्थाक्षेपभाष्यम् )**

**न तर्हीदानीमयं योगो वक्तव्यः ॥**

**( उद्द्योतः )** अथ वार्तिकोक्तविध्यर्थत्वे दूषिते भाष्यकृन्नियमार्थं सूत्रमिति प्रश्नपूर्वकमाह—**न तर्हीत्यादि ॥**

**( सिद्धान्तिसमाधानभाष्यम् )**

**वक्तव्यश्च ॥**

**किं प्रयोजनम् ? ।**

**प्रत्ययं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन यथा स्यात् । शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूदिति ॥**

**किं प्रयोजनम् ? ।**

**शोभना दृषदोऽस्य ब्राह्मणस्य सुदृषद् ब्राह्मणः 'सोर्मनसी अलोमोषसी' इत्येष स्वरो मा भूदिति ॥ प्रत्ययलोपे प्रत्ययलक्षणम् ॥ ६२ ॥**

**( प्रदीपः ) प्रत्ययं गृहीत्वेति ।** स्थानिवद्भावेन सिद्धे सत्ययं योगो नियमार्थः—प्रत्यय एव यस्य लक्षणं तत्प्रत्ययलोपे यथा स्यात् ॥ **सोर्मनसी** इत्यत्र **स्वनिनस्मनुग्रहणानि चेति** वचनादस् प्रत्ययश्चाप्रत्ययश्च गृह्यते इति सुदृषदित्यत्र स्थानिवद्भावाभावादुत्तरपदाद्युदात्तत्वाभावे **नञ्सुभ्या**मित्यन्तोदात्तत्वं भवति । तत्र **चोत्तरपदादि**रित्यधिकारादसन्तमुत्तरपदं गृह्यते इति सुदृषदित्यत्रापि स्थानिवद्भावादसन्तत्वमुत्तरपदस्य स्यात् ॥ ६२ ॥

**( उद्द्योतः ) प्रत्ययं गृहीत्वेति ।** प्रत्ययत्वतद्व्याप्यधर्मपुरस्कारेण यदुच्यत इत्यर्थः ॥ **शब्दं गृहीत्वेति ।** उक्तधर्मातिरिक्तपुरस्कारेण यदुच्यत इत्यर्थः ॥ ननु शब्दं गृहीत्वा यदुच्यते तत्प्रत्ययलक्षणेन मा भूत्स्थानिवत्त्वेन तु स्यादत आह—**स्थानिवदिति ॥ प्रत्यय एवेति ।** उक्तोऽर्थः । एतदर्थमेव द्वितीयं प्रत्ययपदम् ॥ न चा**लोमोषसी** इति पर्युदासेन श्रूयमाणासन्तस्यैव ग्रहणमिति नियमो व्यर्थ इति वाच्यम् ॥ पर्युदासेन प्रत्ययासन्तस्यैव ग्रहणापत्तौ सुव इत्यादौ **स्वरानापत्ते**रिति भाष्याशयात् ॥ ननु स्थानिनिमित्तं यदन्यस्य कार्यं तत्स्थानिवत्त्वेन लोपेऽपि, न तु तस्यैव । असतो वचनशतेनापि कार्यित्वाप्रतिपादनात् । **इह** चासत एव कार्यित्वमत आह—**तत्र चेति । सोर्मनसी** इति सूत्रे इत्यर्थः ॥ ६२ ॥

**( तत्त्वालोकः )** भाष्ये—**'सोर्मनसी' इति—अस्य** सूत्रस्य—'सोः परं लोमोषसी वर्जयित्वा मन्नन्तमसन्तञ्चाद्युदात्तं स्यादि'त्यर्थः ।

प्रदीपे—**स्यात्**—स्यादिति । **अन्तोदात्तत्वमिति**—उत्तरपदस्येति भावः । 'बहुव्रीहौ नञ्सुभ्यामुत्तरपदमन्तोदात्तमि'ति तदर्थात् ।

उद्द्योते—**तद्व्याप्येति**—अन्यतरेति शेषः । **उक्तोऽर्थः**—प्रत्ययत्वतद्व्याप्यान्यतरधर्माक्रान्त एवेत्यर्थः । **एतदर्थमेव**—एतदर्थलाभार्थमेव । **इह च**—'सोर्मनसी' इत्यत्र च ॥



**( ५७ प्रत्ययलक्षणनिषेधसूत्रम् ॥ १ । १ । ९ आ. । ४ र्थं सू. )**

# न लुमताङ्गस्य ॥ १ । १ । ६३ ॥

**( न्यूनतापरिहाराधिकरणम् )**

**( ४५७ ( १ ) आक्षेपवार्तिकम् ॥ )**

## ॥*॥ लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानम् ॥ * ॥

**( भाष्यम् )**

**लुमति प्रतिषेध एकपदस्वरस्योपसंख्यानं कर्तव्यम् ॥ एकपदस्वरे च लुमता लुप्ते प्रत्ययलक्षण न भवतीति वक्तव्यम् ॥**

**( प्रदीपः ) न लुमताङ्गस्य ॥ ६३ ॥ लुमतीति ।** लुमत्संज्ञया प्रतिपादितमदर्शनं लुमत्, तत्र यः प्रतिषेधस्तस्मिन्नित्यर्थः ॥ **एकपदस्वरस्येति ।** एकपदाश्रयो यः स्वरस्तस्येत्यर्थः ॥ यस्तु **पदस्य पदा**दिति पदद्वयाश्रयः स्वरः, तत्र प्रत्ययलक्षणं भवत्येव, दधि तिष्ठति **तिङ्ङतिङ** इति निघातः । **अङ्गस्ये**त्यङ्गाधिकारनिर्देशाद् ञ्नितिकित्स्वरस्य चानाङ्गत्वात्प्रतिषेधस्याप्राप्तिरिति भावः ॥

**( उद्द्योतः ) न लुमता ॥ ६३ ॥** लोपक्रियानिरूपिता करणे तृतीया । यद्यपि लुशब्दयोगात्संज्ञा लुमद्वाच्या । **न** च तत्रायं प्रतिषेधः, किंतु तत्प्रतिपादितादर्शने । एवं च **लुमति प्रतिषेध** इत्यनुपपन्नम् । तथापि वाचकधर्मस्य वाच्य उपचार इत्याह—**लुमदिति ॥** ननु सर्वोऽपि स्वरः कार्यित्वेनैकमेव पदं गृह्णातीत्यत आह—**एकेति । सर्वामन्त्रिते**त्यत्रामन्त्रितपदेनाष्टमिकमपि ग्रहीतुं शक्यमिति **पदस्य पदा**दित्यधिकारेऽनन्तरमप्या**मन्त्रितस्ये**त्युल्लङ्घ्य व्यवहितमुदाहरति—**दधीति ॥ अङ्गस्येत्यङ्गाधिकारेति ।** वस्तुतस्तदनिर्देशेऽप्यावश्यकमेतत् । तथाहि—सौवरीणां सप्तमीनां **भीह्रीभृहुमदे**ति सूत्रे **प्रत्ययात्पूर्व**मिति पूर्वग्रहणेन तदन्तसप्तमीत्वस्य षाष्ठभाष्ये तत्सूत्रे एवोक्तत्वेन स्वराणां प्रत्यये परतः पूर्वकार्यत्वाभावात् । कित्स्वरे षष्ठ्या एव सत्त्वाच्च ॥ ननु **संज्ञायामुपमान**मिति 'उपमानशब्दः संज्ञायामाद्युदात्त' इत्यर्थकं कनो लुपि चञ्चेव चञ्चेत्यादावाद्युदात्तसाधक **ञ्नित्यादि**रित्येव सिद्धे व्यर्थं सदनुबन्धलक्षणे स्वरे प्रत्ययलक्षणाभावज्ञापकमिति तत्सूत्रे भाष्ये स्पष्टम् , तेनेदं विरुध्येतेति चेन्न । प्रकृतसूत्रे वार्तिकव्याख्यानमात्रं, षष्ठे तु प्रत्याख्यातानीमानीत्यविरोधात् । अत एव तत्र भाष्ये **पथिमथिस्वरार्थं वचनं कर्तव्य**मित्युक्तम् । एवं च तदर्थस्यात्रत्यवचनस्य कर्तव्यत्वं वदताऽन्येषामकर्तव्यत्वमर्थादुक्तमेव ॥ एतेन **भीह्रीति** ज्ञापकं **विशेषापेक्षं** सप्तम्यर्थग्रहणे तदन्तग्रहणे च यत्र फलभेदस्तद्विषयम् । एवं **चोपोत्तमं रिती**त्यादावेव तत्प्रवृत्तिरिति न **ञ्नित्यादि**रित्यादौ

तत्प्रवृत्तिरिति कैयटाशय इति परास्तम् । **संज्ञायामुपमान**मिति सूत्रस्थभाष्यविरोधात् । तस्माद् ज्ञापकस्य सामान्यापेक्षत्वमेवोचितम् । तत्र सप्तम्या यथाश्रुतत्वे हि **न लुमते**ति निषेधात्तदप्राप्तौ **ञ्नितीति प्रयोजन**मिति भाष्यसङ्गतिः स्पष्टैव । न चाङ्गाधिकारप्रतिनिर्देशपक्षे तद्भाष्यम् । सिद्धान्तपक्षे योजयितुं शक्यत्वादिति दिक् ॥

**( तत्त्वालोकः )** प्रदीपे—**दधि तिष्ठति**—यथा 'दधि तिष्ठती'त्यत्र । अत्र हि-दधीत्यस्य पदसंज्ञार्थं प्रत्ययलक्षणमपेक्ष्यते ॥ ननु तत्र प्रकृतसूत्रेणैव कुतो न निर्वाह इत्यत आह—**अङ्गस्येति । प्रतिषेधस्य**—तत्र प्रकृतसूत्रेण प्रत्ययलक्षणनिषेधस्य ।

उद्द्योते—**पूर्वसूत्रे** ' **लोपे**' इत्यत्र स्वरितत्वप्रतिज्ञानादेकदेशस्यापि तस्यात्र सूत्रेऽनुवृत्तेराह—**लोपक्रियेति** । 'लुमते'त्यत्रेत्यादिः॥ **धर्मस्य**—लुशब्दयोगस्य । **आष्टमिकमपीति**—अत्रापिना षाष्ठस्य समुच्चयः । **एतत्**—प्रकृतवार्त्तिकम् । **तत्सूत्रे एव**—'भीह्री'ति सूत्रे एव ॥ **पूर्वकार्यत्वाभावादिति**—प्रकृतसूत्रस्य न प्रवृत्तिरिति भावः । **तत्सूत्रे**—'संज्ञायामुपमानमि'ति सूत्रे । **इदम्**—कित्स्वरे तत्साधनाय प्रकृतवार्त्तिकाश्रयणम् । **अत एव**—उक्तरीत्या तयोर्विरोधादेव । **तत्र**—'संज्ञायामुपमानमि'ति सूत्रे । **एवञ्च**—तथोक्तौ च । कौस्तुभायुक्तं दूषयति—**एतेनेति** । **ज्ञापकम्**—पूर्वग्रहणं सौवरीणां सप्तमीनां तदन्तसप्तमीत्वस्य ज्ञापकम् । विशेषापेक्षत्वमेवाह—**सप्तम्यर्थेति** । **फलभेदः**—यथा 'भीह्री'त्यत्रैव पूर्वग्रहणाभावे तदन्तग्रहणे 'प्रत्ययान्तानां भ्यादीनामुदात्तः' इत्यर्थे अलोऽन्त्यपरिभाषया प्रत्ययान्तस्यैवोदात्तः स्यात् , सप्तम्यर्थग्रहणे तु पितमपहाय भ्यादीनामेवोदात्तः स्यादिति फलभेदः । **रितीत्यादावेवेति**—तत्र हि—दरिद्राधातुविषये फलभेदः । **रित्यादाविति**—तत्र हि—पूर्वस्य, तदन्तस्य वा कार्यित्वे प्रकृत्यादेरेवोदात्तत्वात्फलभेदाभावः । एतेनेत्यस्यार्थमाह—**संज्ञायामिति** । सामान्यापेक्षत्वमेवोपपादयति—**तत्रेति** । 'भीह्री'त्यत्रेत्यर्थः । **सिद्धान्तपक्षे**—प्रत्यये परतः पूर्वकार्यमात्रे प्रतिषेध इति पक्षे ॥

( प्रत्याक्षेपभाष्यम् )

**किमविशेषेण ? ।**

**( तत्त्वालोकः )** **अविशेषेणेति**—तत्र सर्वस्यैकपदाश्रयस्वरस्योपसंख्यानं कर्तव्यमित्यर्थः ।

( प्रत्याक्षेपसमाधानभाष्यम् )

**नेत्याह ॥**

**( तत्त्वालोकः )** तटस्थ उत्तरमनुवदति—**नेत्याहेति** । समाधातेति शेषः ।

**( ४५७ (२) आक्षेपशेषवार्तिकद्वितीयखण्डम् ॥ १ ॥ )**

## ॥*॥सर्वामन्त्रितसिज्लुक्स्वरवर्जम्॥*॥

( भाष्यम् )

**सर्वस्वरमामन्त्रितस्वरं सिज्लुक्स्वरं च वर्जयित्वा ॥**

( उदाहरणोपपादनभाष्यम् )

**सर्वस्वर—सर्वस्तोमः, सर्वपृष्ठः 'सर्वस्य सुपि' इत्याद्युदात्तत्वं यथा स्यात् ॥**

**( प्रदीपः )** **सर्वस्तोम इति** । **सर्वस्य सुपी**ति यदाद्युदात्तत्वं, तदेव **बहुव्रीहौ प्रकृत्ये**ति विधीयत इत्येकपदस्वरो भवत्येव ॥

**( उद्द्योतः )** षष्ठीसमासादौ परत्वात्सन्निशिष्टत्वाच्च समासान्तोदात्तत्वस्यैव प्राप्तेर्भाष्ये **सर्वस्तोम** इति बहुव्रीहिरुदाहृतः । तत्र बहुव्रीहिस्वरस्य द्विपदाश्रयत्वात्प्रतिषेधस्यैवाप्राप्तेः कथं तदपवादे इदमुदाहरणमत आह—**सर्वस्येति** ॥ **विधीयत इति** । अपवादनिवर्तनेन व्यवस्थाप्यत इत्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे –**आद्युदात्तत्वमिति**—एकपदाश्रयमिति भावः । तथा च—प्रतिषेधस्य प्राप्तिरित्याशयः ।

उद्द्योते—**बहुव्रीहिस्वरस्य**—'बहुव्रीहौ प्रकृत्ये'ति विधेयस्य । ननु 'विधिरत्यन्तमप्राप्तावि'ति वचनेनापूर्वस्यैव विधेयत्वात्तस्य चात्राभावात्कथमस्य सङ्गतिरित्यत आह—**अपवादेति** । समासान्तोदात्तत्वेत्यर्थः ।

( उदाहरणोपपादनभाष्यम् )

**आमन्त्रितस्वर—सर्पिरागच्छ, सप्ताऽऽगच्छत 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं यथा स्यात् ॥**

**( प्रदीपः )** **सर्पिरिति** । सर्पिःशब्दोऽन्तोदात्तः प्रत्ययस्वरेण घृतादित्वाद्वा । सप्तन्शब्दोऽपि घृतादित्वादन्तोदात्तः । निरस्वरेण त्वाद्युदात्तत्वे विशेषो न स्यात् ॥

**( उद्द्योतः )** **प्रत्ययस्वरेणेति** । इसिप्रत्ययान्तत्वादिति भावः॥ **नब्विषयस्ये**त्यस्य तु न प्राप्तिः, **अनिसन्तस्ये**ति पर्युदासात् ॥ घृतादित्वकल्पनं तु किमर्थमिति चिन्त्यम् ॥ **निरस्वरेणेति** । सप्तन्शब्दो हि **सप्यशूभ्यां तुट्चे**ति कनिन्नन्तः ॥ **त्रः सङ्ख्याया** इत्यप्याद्युदात्तत्वं प्राप्नोतीति द्रष्टव्यम् ॥

**( तत्त्वालोकः )** प्रदीपे—नन्वस्यामन्त्रितस्वरमन्तराऽपि आद्युदात्तता लभ्येत्यत आह—**सर्पिःशब्द इति** ।

उद्द्योते—**इसिप्रत्ययेति**-'अर्चिशुचिहुसृपिछादिछर्दिभ्य इसि'रित्यौणादिकेत्यादिः । अव्युत्पत्तिपक्षेऽपि फिट्स्वरेणान्तोदात्तत्वसम्भवात् कैयटोक्तं खण्डयति—**घृतादित्वेति** । अव्युत्पत्तिपक्षे आह—**त्रः संख्येति** ।

( उदाहरणोपपादनभाष्यम् )

**सिज्लुक्स्वर—मा हि दाताम्, मा हि धाताम् 'आदिः सिचोऽन्यतरस्याम्' इत्येष स्वरो यथा स्यात् ॥**

**( प्रदीपः )** **मा हि दातामिति** । **गातिस्थाघ्विति** लेरेव लुकि विधातव्ये सिचो लुग्विधानं प्रत्ययलक्षणार्थम् ॥

**( उद्द्योतः )** **मा हि दाता**मित्यत्राट्प्रतिषेधाय माङ् । हिशब्दो **हि चेति** निघातप्रतिषेधार्थः ॥ सिज्लुक्स्वरवर्जनं न कार्यमित्याह—**लेरिति** । **गातीत्य**नेन च्लेरेव लुकि **मन्त्रे घसे**त्यत्र पुनर्लिग्रहणं न कार्यम् । लुग्विधा**वात** इत्येतच्च विध्यर्थं स्यादिति लाघवमिति भावः ॥ **प्रत्ययलक्षणार्थमिति** । प्रत्ययलक्षणेन सिज्निमित्तकार्यार्थमित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**आदिरिति**—अस्य 'सिजन्तस्यादिरुदात्तो वे'त्यर्थः ।

उद्द्योते—**लुकीति**—स्वीकृते इति शेषः । **न कार्यमिति**—तथा-अभूदपादित्यादिसिद्धये **'अस्तिसिचोऽपृक्ते'** इत्यत्र सकारान्तरप्रश्लेषोऽपि न कार्य इति भावः । **विध्यर्थमिति**—नन्वेवन्तत्र लण्निवृत्तये 'च्लिलुकी'ति वक्तव्यं स्यादिति कथं लाघवमिति चेन्न, च्लि इत्यनुवृत्त्यैव लटो व्युदस्तत्वात् ।

( भाष्यम् )

किं प्रयोजनम् ? ॥

( तत्त्वालोकः ) किमिति—'लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमि'ति वार्तिकारम्भस्येति भावः ।

( ४५८ प्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥*॥ प्रयोजनं ञ्निनिकिल्लुकि स्वराः ॥*॥

( भाष्यम् )

ञ्निनिकित्स्वरा लुकि प्रयोजयन्ति । गर्गा वत्सा विदा उर्वाः, उष्ट्रग्रीवा वामरज्जुः-'ञ्निति' इत्याद्युदात्तत्वं मा भूदिति ॥ इह चात्रयः-'कितः' इत्यन्तोदात्तत्वं मा भूदिति ॥

( प्रदीपः ) **ञिनिकिल्लुकीति ।** इकार उच्चारणार्थः । ञ्नित्कितां प्रत्ययानां लुकि कृते स्वरा निवर्त्यमानतया प्रयोजनमिति पदानां संबन्धः ॥ भाष्यकारस्तु वस्त्वर्थं व्याचष्टे—**ञिनिकित्स्वरा इति ।** प्रतिषेधमित्यध्याहारः ॥ **उष्ट्रग्रीवा वामरज्जुरिति । देवपथादि**त्वात्कनो लुप् । असंज्ञायां चेदमुदाहरणम् । संज्ञायां तु **संज्ञायामुपमान**मिति भवितव्यमाद्युदात्तत्वेन ॥ **अत्रय इति । राशदिभ्यां त्रिप् , 'अदेस्त्रिनिश्चेति'** त्रिबन्तोऽत्रिशब्द आद्युदात्तः॥

( उद्द्योतः ) ननु **ञिनिकित्स्वरा** इति भाष्यदर्शनाद् ञिनिकितां स्वरविशेषणत्वेन लुका समासोऽनुपपन्न इत्यत आह—**ञ्नित्कितामिति ।** प्रयोजयन्तीत्यस्य कर्माकाङ्क्षायामाह—**प्रतिषेधमिति । लुबिति ।** वार्तिके लुकीत्युपलक्षणमिति भावः ॥ भाष्ये—**आद्युदात्तत्वं मा भूदिति ।** एवं च प्रातिपदिकादिस्वरेणान्तोदात्तत्वमेवेति भावः ॥ अत्रिशब्दा**दितश्चानिञ** इति ढकोऽ**त्रिभृगिवति** लुक् ॥ नन्वत्रय इत्यत्र कित्त्वप्रयुक्तान्तोदात्तत्वाभावेऽपि प्रातिपदिकस्वरेण तत्त्वं दुर्वारमत आह—**राशदीति ॥ त्रिबन्त इति ।** नान्तस्त्वन्तोदात्त इति भावः ॥ इदं प्रयोजनं कित्तद्धितान्तस्यान्त उदात्त इत्यर्थे बोध्यम् । कितः प्रत्ययस्यैवान्तोदात्तत्वे तु प्रत्ययलक्षणेन कार्यिणोऽसंपादनान्न दोषः ॥ अत एव नखनिर्मिन्न इत्यैस्नेत्याहुः ॥

( तत्त्वालोकः ) भाष्ये—**ञ्नितीति**—'इत्यादौ यञादेर्लुकि प्रत्ययलक्षणेन प्राप्तमि'त्यादिः । एवमग्रेऽपि ।

प्रदीपे—**इकार इति**—ञिनिशब्दयोरित्यादिः । 'सुट्तिथोरि'त्यत्रत्यतिशब्दे इवेति भावः ॥

उद्द्योते—**लुकेति**—वार्तिके तेषामित्यादिः । **तत्त्वम्**—अन्तोदात्तत्वम् । **नान्त इति**—इदं त्रिन्नन्तस्याप्युपलक्षणम् । **इत्यर्थे**—इति 'कितः' इत्यस्यार्थे । **कित इति**—तेनेत्यादिः । प्रत्ययलक्षणेन प्रत्ययनिमित्तं कार्यमन्यस्यैवातिदिश्यते, न तु प्रत्ययस्य कार्यित्वं प्रतिपाद्यते, लोपेनासति तत्र कार्यस्याप्रसङ्गादित्याशयेनाह—**प्रत्ययलक्षणेनेति ।** प्रत्ययस्येति शेषः । तथा च—नेदं प्रयोजनमिति भावः । **अत एव**—प्रत्ययस्य कार्यित्वाभावादेव । **इति**—इत्यादौ ।

( ४५९ प्रयोजनान्तरवार्तिकम् ॥ ३ ॥ )

## ॥*॥ पथिमथोः सर्वनामस्थाने लुकि ॥*॥

( भाष्यम् )

पथिमथोः सर्वनामस्थाने लुकि प्रयोजनम् ॥ पथिप्रियो मथिप्रियः-'पथिमथोः सर्वनामस्थाने' इत्येष स्वरो मा भूदिति ॥

( प्रदीपः ) **पथिप्रियो मथिप्रिय इति ।** पूर्वपदप्रकृतिस्वरेणान्तोदात्तौ पथिमथिशब्दौ भवतः ॥

( उद्द्योतः ) **पथिमथि**शब्दौ इनि प्रत्ययान्ततया प्रत्ययस्वरेण **फिषोन्त** इति वान्तोदात्तौ । तयोः सर्वनामस्थाननिमित्तमाद्युदात्तत्वमत्रापि स्यादित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये-**मथिप्रिय इति**—इत्यनयोः सर्वनामस्थानस्य लुकि प्रत्ययलक्षणेन प्राप्त इति शेषः ।

उद्द्योते—अनयोः 'मन्थः' 'पतस्थ च' इत्याभ्यामौणादिकमिनिप्रत्ययमभिप्रेत्याह— **इनिप्रत्ययेति ।** अव्युत्पत्तिपक्षे आह—**फिष इति । अत्रापि**—अन्तोदात्तत्वेऽपि ।

( ४६० आक्षेपवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अह्नो रविधौ ॥ * ॥

( भाष्यम् )

अह्नो रविधाने लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ॥ अहर्ददाति अहर्भुङ्क्ते-'रोऽसुपि' इति प्रत्ययलक्षणेन प्रतिषेधो मा भूदिति ॥

( प्रदीपः ) **अहर्ददातीति । असुपीति** प्रसज्यप्रतिषेधः । पर्युदासे तु दीर्घाहा निदाघ इत्यत्रापि सुप्सदृशे निदाघशब्दे परतो रत्वं स्यात् । रुत्वं चेष्यते । लोपशब्देन सोर्लुप्तत्वात्प्रत्ययलक्षणेन सुपि नेति रत्वप्रतिषेधाद्रुत्वे यत्वे तस्य च लोपे दीर्घाहा निदाघ इति सिध्यति ॥ लुकि तु प्रत्ययलक्षणप्रतिषेधाद्रत्वे सत्युत्वाभावादहर्ददातीत्यादि सिध्यति ॥

( उद्द्योतः ) भाष्ये—**प्रतिषेधो मा भूदिति ।** तेनापर्युदासत्वं सूचितम् । तदुपपादयति-**पर्युदासे तु इति ।** प्रत्ययत्वेन सुप्सादृश्ये तु अहर्ददातीत्यत्रापि रत्वं न स्यादित्यर्थः ॥ नन्विष्यमाणमपि रुत्वं न प्राप्नोति, प्रत्ययलक्षणनिषेधेन रत्वस्यैव प्राप्तेरत आह—**लोपशब्देनेति ।** हल्ङ्यादिसूत्रेणेति भावः । लुमता लुप्त एव स निषेध इति तात्पर्यम् ॥ **न लुमता तस्मिन्निति** पक्षे तु नेदमावश्यकम् ॥

( तत्त्वालोकः ) भाष्ये—दोषान्तरमाह—**अह्न इति ।**

प्रदीपे—**सुप्सदृशे इति**—शब्दत्वेनेति भावः ।

उद्द्योते—**तेन**—प्रतिषेधशब्देन । **सः**—वार्तिकोक्तः ॥ 'अङ्गस्ये'त्यङ्गाधिकारनिर्देशादङ्गाधिकारीये कार्ये प्रकृतसूत्रेण प्रत्ययलक्षणनिषेध इति पक्षे-'असुपी'ति निषेधस्याङ्गाधिकारीयकार्यत्वाभावादत्र तेनानिर्वाहाद्वार्त्तिकमावश्यकमित्याशयेन पक्षान्तरे वार्त्तिकं खण्डयति—**न लुमतेति ।** वस्तुतस्तु-अङ्गस्य कार्ये कर्त्तव्ये प्रकृतसूत्रेण तन्निषेध इति सिद्धान्तपक्षेऽपि-'असुपी'ति निषेधस्याङ्गकार्यत्वादत्र तेनैव निर्वाहाद्वार्त्तिकं नावश्यकमिति भावः ।

( ४६१ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ उत्तरपदत्वे चापदादिविधौ ॥ * ॥

( भाष्यम् )

उत्तरपदत्वे चापदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् । परमवाचा परमवाचे परमगोदुहा परमगोदुहे परमश्वलिहा परमश्वलिहे । पदस्येति प्रत्ययलक्षणेन कुत्वादीनि मा भूवन्निति ॥

अपदादिविधाविति किमर्थम् ? ।

दधिसेचौ दधिसेचः—'सात्पदाद्योः' इति प्रतिषेधो यथा स्यात् ॥

( प्रदीपः ) **उत्तरपदत्वे चेति** । उत्तरपदम् उत्तरशब्देनोच्यते, पदैकदेशलोपात् । तेनोत्तरपदस्य पदत्वे पदव्यपदेशे कर्तव्ये प्रत्ययलक्षणं न भवतीत्यर्थः ॥ **परमवाचेति** । समासार्था या विभक्तिः कृता, तां प्रत्ययलक्षणेनाश्रित्य पदत्वनिबन्धनानि कुत्वादीनि प्राप्नुवन्ति । भसंज्ञा तु **यस्माद् यजादिविधिरिति** समुदायस्यैव, न त्ववयवस्य ॥ **दधिसेचाविति** । दध्नः सेचाविति षष्ठीसमासः । उपपदसमासे तु प्राक्सुबुत्पत्तेः समासविधानात्सेच्शब्दस्य पदसंज्ञाया अभावात्पदादित्वं सकारस्य न स्यात् । अनभिधानाच्च सोपपदाद्विजभावाद्दधिषेचावित्यादिप्रयोगाभावात्

( उद्द्योतः ) **उत्तरपदत्वे चेति** सर्वथा कार्यम् ॥ ननु सामान्यत उत्तरस्य पदत्व इत्यर्थे परमं चर्मेत्यत्रापि निषेधापत्तौ नलोपो न स्याद् अत आह—**उत्तरपदमिति** । अत एव **बहुच्पूर्वस्य नेति** वचनमर्थवदिति भावः । उत्तरपदशब्दश्च समासचरमावयवे रूढ इत्यसमासे नातिप्रसङ्ग इति बोध्यम् ॥ **समासार्थेति** । तत्र **सुप्सु** पेत्यधिकारादिति भावः ॥ **तां सुपोधाविति** लुप्ताम् ॥ **कुत्वादीनि** कुत्वघत्वढत्वानि ॥ ननु भत्वेन पदत्वबाधोऽत आह—**यस्मादिति** । तथा च भिन्नावधित्वान्न बाध्यबाधकभाव इति भावः ॥ भाष्ये **पदस्येतीति ॥ पदस्ये**त्यधिकृत्य यानि विहितानीत्यर्थः ॥ ननु सोपपदात्सिचेर्विचि दधिषेचाविति स्यादेव । न चेष्टापत्तिः, **पदादादिरिति** पक्षे दुर्लभत्वाद् अत आह—**अनभिधानादिति** । तस्य च्छान्दसत्वादिति भावः ॥

( तत्त्वालोकः ) भाष्ये—दोषान्तरमाह—**उत्तरेति** । इदं लुप्तषष्ठ्यन्तम् । **प्रतिषेध इति**—षत्वस्येति भावः । **स्यात्**—स्यादित्यर्थम् ।

प्रदीपे—**पदत्वनिबन्धनानीति**—उत्तरखण्डे इत्यादिः ॥ **भसंज्ञा त्विति**—पदसंज्ञा हि-उत्तरखण्डस्यैव, न तु समुदायस्येत्यादिः ।

उद्द्योते—अत्र मानमाह—**अत एवेति** । उत्तरपदस्य उत्तरशब्दबोध्यत्वादेवेत्यर्थः । नन्वेवमसमासेऽप्यतिप्रसङ्ग इत्यत आह—**उत्तरपदेति** । **तत्र**—'विशेषणं विशेष्येण बहुलमि'ति सूत्रे । **कुत्वघत्वढत्वानीति**—'चोः कुः' 'दादेर्धातोर्घः' 'हो ढः' इत्येभिरिति भावः । **भिन्नावधित्वादिति**—भपदसंज्ञयोरिति भावः । यथाश्रुतासङ्गतेराह—**पदस्येत्यधीति** । **यानि विहितानीति**—कुत्वादीनि, तानि प्रत्ययलक्षणेन पदत्वान्मा भूवन्निति शेषः । **तस्य**—विचः ॥

( आक्षेपभाष्यम् )

यद्यपदादिविधावित्युच्यते, उत्तरपदाधिकारो न प्रकल्पेत ॥

तत्र को दोषः ? ।

'कर्णो वर्णलक्षणात्' इत्येवमादिविधिर्न सिध्यति ॥

( प्रदीपः ) **कर्णोवर्णलक्षणादिति** । नन्वपदादिविधावित्युच्यते, स्वरश्चाऽयं पदादिविधिः । ककारोऽत्रादिः, न त्वकार इत्यदोषः । स्वरविधौ व्यञ्जनमविद्यमानवत्, न त्वादिव्यपदेशे ॥ सूत्रं चासमासार्थं स्यात् । कर्णशब्दादर्शआदित्वादचि कृते शुक्लः कर्ण इत्याद्युदात्तत्वं यथा स्यात् ॥

( उद्द्योतः ) भाष्ये **यद्यपदादीति** । एकदेशेन संपूर्णं वार्तिकमुपलक्ष्यते । यतः प्रतिषेधस्यातिव्याप्तिर्न प्रतिषेधापवादस्येति बोध्यम् ॥ **स्वरश्चेति** । **उत्तरपदादिरित्यधिकारादिति** भावः ॥ **नन्वसमासे**—**स्वाङ्गशिटा**मिति कर्णस्याद्युदात्तत्वं सिद्धमेवेत्यत आह—**कर्णशब्दादिति ॥ एवमादिविधिर्न सिध्यतीति** भाष्यात् **उत्तरपदादिरित्यधि**कारस्थसूत्राणां वैयर्थ्यस्यैव दूषणत्वेन प्रतीतिरित्येके ॥

( तत्त्वालोकः ) भाष्ये- **उत्तरेति**—गहीत्यादिः । **तत्र**—तथा सति । अनेन वार्तिकेन निषेधात्प्रत्ययलक्षणेनोत्तरखण्डे पदत्वानुपपत्तेः शुक्लकर्ण इत्यादौ 'वर्णवानिनो लक्षणवानिन' परः कर्णशब्द आद्युदात्तः' इत्यार्थकेन 'कर्णो वर्णलक्षणादि'त्यादि सूत्रेण कर्णादिशब्दस्याद्युदात्तता न सिद्ध्यतीत्याशयेनाह—**कर्ण इति** ।

प्रदीपे—ननु 'कर्णः' इत्यादिसूत्रारम्भसामर्थ्यात्स सिद्ध्येदित्यत आह-**सूत्रञ्चेति** । **कृते इति**—तथा सति स्वाङ्गत्वानित्वाभावान्न 'स्वाङ्गशिटामि'त्यनेन सिद्धिरिति भावः ॥

उद्द्योते—कैयटोक्तं दूषयन् प्रकारान्तरेण भाष्यं योजयति—**एवमादिति** ।

( आक्षेपबाधकन्यासान्तरभाष्यम् )

यदि पुनः ❀ नलोपादिविधौ प्लुत्यन्ते ❀ लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्युच्येत ।

( प्रदीपः ) **यदि पुनरिति** । तेन पूर्वस्मिन् परत्र च भवत्येव प्रत्ययलक्षणम् ॥

( तत्त्वालोकः ) भाष्ये—**नलोपादीति** —अत्र तद्गुणसंविज्ञानो बहुव्रीहिः । **प्लुत्यन्ते इति**—अत्रापि च विधिविशेषणे तद्गुणसंविज्ञानो बहुव्रीहिः । एवञ्च-नलोपादिप्लुत्यन्तसमुदायघटकविधौ कर्तव्य एव लुमता लुप्ते प्रत्ययलक्षणं न भवतीत्यभ्युपगमादुत्तरपदविधीनाञ्च तदनन्तर्गतत्वात्तेषां कर्तव्यत्वे निषेधाप्रसक्त्या न दोष इत्याशयः ।

प्रदीपे— **पूर्वस्मिन्**—उत्तरपदाद्युदात्तत्वे । **परत्र**—षत्वप्रतिषेधे । कुत्वादिकन्तु तदन्तर्गतमेवेति तत्र कर्तव्ये निषेधप्रसङ्गान्न दोष इति भावः ।

( न्यासान्तरनिराकरणभाष्यम् )

नैवं शक्यम् । इह हि-राजकुमार्यौ राजकुमार्ये इति शाकलं प्रसज्येत ॥

( प्रदीपः ) **राजकुमार्याविति** । इकोऽसवर्णे इत्यत्र ङः पदान्तादतीत्यतः पदान्तग्रहणमनुवर्तते । तत्र प्रत्ययलक्षणेन पदान्तत्वाच्छाकलप्रसङ्गः ॥

( तत्त्वालोकः ) भाष्ये—**नैवमिति**—वक्तुमिति शेषः । **शाकलम्**—'इकोऽसवर्णे' इति ह्रस्वः ।

प्रदीपे— **तत्र**—राजकुमार्यावित्यादौ ।

( न्यासान्तरसाधकभाष्यम् )

नैष दोषः । यदेतत्—❀ सिति शाकलं न❀ इति, एतत्—❀प्रत्यये शाकलं न❀इति वक्ष्यामि ।

( तत्त्वालोकः ) **नैष दोष इति**—यत इति शेषः । **इतीति**—तत्रेति शेषः ।

( आक्षेपभाष्यम् )

यदि 'प्रत्यये शाकलं न' इत्युच्यते, 'दधि अधुना, मधु अधुना' अत्राऽपि न प्रसज्येत ॥

( प्रदीपः ) **दधि अधुनेति** । अधुनाप्रत्यय इदमो विधीयते । तत्र इदम इश् । यस्येति चेति लोपः ॥

(**तत्त्वालोकः**) भाष्ये—**दधीति**—तर्हीत्यादिः । **अत्रापीति**—शाकलमित्यनुषज्यते ।

( **निराकरणभाष्यम्** )

**प्रत्यये शाकलं न भवति ।**

**कतरस्मिन् ? ।**

**यस्माद्यः प्रत्ययो विहित इति ॥**

( **प्रदीपः** ) **यस्माद्य इति ।** प्रत्यासत्त्येति भावः ॥ राजकुमार्यावित्यत्र यद्यपि समुदायाद्विहितः, तथाप्यवयवादप्यसौ विहित इति बुद्धिर्भवत्येव । समुदायद्विर्वचनेऽवयवद्विर्वचनबुद्धिवत् ॥

( **उद्द्योतः** ) **प्रत्यासत्त्येति । प्रत्ययग्रहणे यस्मात् स विहितस्तदादे**रित्युपस्थित्येति भावः ॥ **तथापीति ।** वस्तुतो राजकुमार्यावित्यत्रापि दोषः । समुदायादसौ विहितो नावयवात् । अन्यथा कौरुचरेय इत्यादौ चकाराकारस्यापि वृद्धिः स्यात् ॥ **इह तर्ही**त्यादिभाष्यं तु अभ्युपेत्यवादेन । प्लुतेरग्रे तु न **उत्तरपदत्वे** चेत्यस्य प्रवृत्तिः । अत एव पूर्वत्रैव दोषेणेदं दूषितं भगवतेति बोध्यम् ॥ **ङमो ह्रस्वादिति** सूत्रस्थभाष्यं त्वेकदेश्युक्तिरिति न दोष इति तत्रैव निरूपयिष्यामः ॥

( **तत्त्वालोकः** ) भाष्ये—**प्रत्यये इति**—नैष दोषः, यतो नेत्यादिः । **कतरेति**—तर्हीत्यादिः । **इति**—तस्मिन् । तथा च—तत्र दध्यादिशब्दादधुनाप्रत्ययस्याविहितत्वान्न शाकलानुपपत्तिरिति भावः ।

उद्द्योते—प्रत्यासत्तौ बीजमाह—**प्रत्ययेति ।** कैयटोक्तं खण्डयति—**वस्तुत इति । समुदायादिति**—यत इत्यादिः । एवेति शेषः । **अन्यथा**—समुदायाद्विहिते अवयवादपि विहितत्वस्याभ्युपगमे । **स्यादिति**—इति बोध्यमिति शेषः । नन्वेवमग्रिमभाष्यस्यासङ्गतिरित्यत आह—**इहेति ।** भाष्यगूढाशयमाह—**प्लुतेरिति । पूर्वत्रैवेति**—प्लुतेरिति भावः । नन्वेवं ङम इत्यत्र 'उत्तरपदत्वे चे'त्यनेन ङमुड्वारणं भाष्योक्तमयुक्तमित्यत आह—**ङम इति ।**

( **आक्षेपभाष्यम्** )

**इह तर्हि–परमदिवा परमदिवे । 'दिव उत्' इत्युत्त्वं प्राप्नोति ॥**

( **प्रदीपः** ) **उत्वमिति ।** उत्वविधावेङः **पदान्तादिति** पदाधिकारः ॥

( **तत्त्वालोकः** ) भाष्ये—**परमदिवेति**—समासार्था या विभक्तिः कृता, तां प्रत्ययलक्षणेनाश्रित्योत्तरखण्डस्य पदत्वादिति भावः ।

( **विशेषानभ्युपगमभाष्यम्** )

**अस्तु तर्ह्यविशेषेण ॥**

( **तत्त्वालोकः** ) **अविशेषेणेति**—'नलोपादिविधौ प्लुतयन्ते' इति विशेषं विहाय 'उत्तरपदत्वे चापदादिविधौ' इतीत्यर्थः ।

( **आक्षेपस्मारणभाष्यम्** )

**ननु चोक्तम्—उत्तरपदाधिकारो न प्रकल्पेतेति ॥**

( **परिहारभाष्यम्** )

**वचनादुत्तरपदाधिकारो भविष्यति ॥**

( **प्रदीपः** ) **वचनादिति ।** समासे ह्युत्तरपदं भवति । न च **कर्ण**शब्दोऽच्प्रत्ययान्तोऽस्ति, अर्शआदिषु **हि स्वाङ्गाद्धीना**दिति पठ्यते । तेन खञ्जादिभ्य एव हीनस्वाङ्गवाचिभ्योऽच्प्रत्ययो भवति । न च कर्णशब्दो हीनस्वाङ्गवाची ॥

( **उद्द्योतः** ) समासचरमावयवे उत्तरपदशब्दो रूढ इत्यभिप्रेत्याह—**समासे हीति** ॥ न तु पदत्वमपि तद्व्यवहारे प्रयोजकमित्यर्थः ॥ केवलरूढत्वे मानमुक्तम्, तुष्यतु दुर्जनन्यायेन केवलयोगेऽप्याह—**न च कर्णेति ।** राजवाचककर्णशब्दस्य तु **अभिव्यक्तपदार्था ये** इति न्यायान्न तत्र ग्रहणमिति भावः ॥ काश्यपिनावित्यादौ **छन्दोब्राह्मणानी**ति तद्विषयताबोधकशास्त्रबलात् सुबुत्पत्तेः प्रागेव तद्धित इति न दोषः ॥

( **तत्त्वालोकः** ) भाष्ये—**वचनादिति**—'कर्णो वर्णलक्षणादि' त्यादिवचनसामर्थ्यादित्यर्थः । नैष दोषः, यत इत्यादिः ।

उद्द्योते—**तदिति**—उत्तरपदशब्देत्यर्थः । 'कर्णः' इत्यादि वचनस्यान्यत्र चारितार्थ्यं निराचष्टे—**राजेति । तत्र**—'कर्णः' इत्यादिसूत्रे । **तदिति**—छन्द इत्यर्थः । **प्रागेवेति**—तस्या अनन्तरन्तद्धिते तु वैरूप्यात्तद्विषयतैव नोपपद्येतेति भावः । **न दोष इति**—अन्तर्वर्तिविभक्तिं प्रत्ययलक्षणेनाश्रित्य पदत्वान्नलोपापत्तिरूपो दोषो नेत्यर्थः ।

( **आक्षेपभाष्यम्** )

**तत्तर्हि वक्तव्यम् ॥**

( **प्रदीपः** ) **तत्तर्हीति ।** उत्तरपदत्वे चापदादिविधावित्येतत् ॥

( **समाधानभाष्यम्** )

**न वक्तव्यम् । अनुवृत्तिः करिष्यते । इदमस्ति—'यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' । 'सुप्तिङन्तं पदम्' यस्मात्सुप्तिङ्विधिस्तदादि सुबन्तं तिङन्तं च ॥ 'नः क्ये' नान्तं क्ये पदसंज्ञं भवति, यस्मात् क्यविधिस्तदादि सुबन्तं च ॥ 'सिति च' सिति च पूर्वं पदसंज्ञं भवति, यस्मात्सिद्विधिस्तदादि सुबन्तं च ॥ 'स्वादिष्वसर्वनामस्थाने' स्वादिष्वसर्वनामस्थाने पूर्वं पदसंज्ञं भवति, यस्मात्स्वादिविधिस्तदादि सुबन्तं च ॥ 'यचि भम्' यजादिप्रत्यये पूर्वं भं भवति, यस्माद्यजादिविधिस्तदादि सुबन्तं च ॥**

( **प्रदीपः** ) **यचि भमिति ।** ततश्च परमवाचेत्यत्र वाक्शब्दस्य भत्वात्पदत्वाभावः ॥

( **उद्द्योतः** ) भाष्ये **नः क्ये इत्यादि–तदादिसुबन्तं चेति । यस्मात्प्रत्ययविधिरि**ति अवश्यमुत्तरत्रानुवर्त्यम्, परमैश्वर्तुभिरित्यादौ परमघटितसमुदायस्य पदत्ववारणाय । तत्त्वे हि **झल्युपोत्तममि**ति परमैरित्यस्यापि निघातापत्तिः । एवं च तस्य **नः क्ये** इत्यत्रापि संबन्धे यस्मात् क्यविधिस्तदादि यदि क्ये तन्निमित्तान्तर्वर्तिसुपा पदं तदा नान्तमेवेति नियमः स्यात् । तथा च परमवाच्यतीत्यादावययववाक्शब्दस्य पदत्वेन कुत्वं स्यात् । सूत्रे तु समिध्यतीत्येतद्व्यावृत्त्यर्थं स्यादिति सुबन्तमित्यपि संबध्यत इति भावः । तस्य च–मध्ये **चेत्** सुबन्तं तदा तदपि नान्तमेव पदमित्यर्थः ॥ **अन्वाचयशिष्टं च** सुबन्तमिति सर्वत्र । संनियोगशिष्टत्वे षड्भ्य् इत्याद्यसिद्धिः ॥ **सिति** चेत्यत्र यद्यपि नास्योपयोगोऽवयवसुबन्ताप्रसिद्धेः तथापि उत्तरत्रानुवृत्तिं दर्शयितुं तत्रापि तत्संबन्धो दर्शितः । व्यपदेशिवद्भावेन कथंचिदन्वयः संपाद्यः । एवं **स्वादिष्विति** सूत्रेऽपि

तदनुवृत्तिकरणमुत्तरार्थमेव । **यचि भमित्यत्रापि** पदसंज्ञया तुल्यावधिकत्वसिद्ध्यर्थं **यस्मादि**त्याद्यनुवर्त्यमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**अनुवृत्तिरिति**—यत इत्यादिः ।

उद्द्योते—**उत्तरत्र**—'सुप्तिङन्तमि'त्यत्र । **तत्त्वे हि**—पदत्वे हि । **एवञ्च**—तत्रानुवृत्तौ च । **सूत्रम्**—'नः क्ये' इति सूत्रम् । **अन्वाचयेति**—समुदायस्य संज्ञा प्रधानशिष्टा । अवयवस्य त्वन्वाचयशिष्टा, 'कर्तुः क्यङ् सलोपश्चे'ति क्यङ्सलोपाविव । तेन राज्ञ इत्यादौ सुबन्तावयवाभावेऽपि भवति, सुबन्तावयवसत्त्वे तु तस्य समुदायस्य चेत्युभयोरपि भवतीति भावः ॥ प्रकारान्तरेण केवले न स्यादित्याह—**सन्नियोगेति** । **अस्य**—सुबन्तमित्यस्य । **उत्तरत्र**—'स्वादिष्वि' त्यत्र । **तत्रापि**—'सिति चे'त्यत्रापि । **तदिति**—सुबन्तमित्यस्येत्यर्थः । एवमग्रेऽपि । ननु दर्शितोऽपि दुःसम्पाद्य इत्यत आह—**व्यपदेशिवदिति** । **उत्तरार्थम्**—'यचि भमि'त्यत्रानुवृत्त्यर्थम् । **आदिना**—सुबन्तमित्यस्य परिग्रहः ॥

**( आक्षेपभाष्यम् )**

**इह तर्हि—परमवाक् । 'असर्वनामस्थाने' इति प्रतिषेधः प्राप्नोति ॥**

**( प्रदीपः )** **इह तर्हीति** । **असर्वनामस्थान** इति प्रसज्यप्रतिषेधं मन्यते । ततश्च—सर्वनामस्थाने परतो यस्मात् स्वादिविधिस्तदादि सुबन्तं च पदसंज्ञं न भवतीति प्रत्ययलक्षणेन सर्वनामस्थानपरत्वात् पदत्वप्रतिषेधात् कुत्वाप्राप्तिः ॥

**( तत्त्वालोकः )** प्रदीपे—**परत इति**—पूर्वमिति शेषः ।

**( समाधानभाष्यम् )**

**अस्तु तस्याः प्रतिषेधः—या स्वादौ पदमिति पदसंज्ञा । या तु सुबन्तं पदमिति पदसंज्ञा सा भविष्यति ।**

**( आक्षेपभाष्यम् )**

**सत्येतत्प्रत्यय आसीत्—अनया भविष्यत्यनया न भविष्यतीति ॥ लुप्ते इदानीं प्रत्यये यावत एवावधेः स्वादौ पदमिति पदसंज्ञा, तावत एवावधेः सुबन्तं पदमिति । अस्ति च प्रत्ययलक्षणेन सर्वनामस्थानपरतेति कृत्वा 'प्रतिषेधाश्च बलीयांसो भवन्ति' इति प्रतिषेधः प्राप्नोति ॥**

**( प्रदीपः )** **सत्येतदिति** । अवधिभेदात्संज्ञिनां भेदात् ॥ **बलीयांस इति** । विध्युन्मूलनरूपत्वात् ॥

**( उद्द्योतः )** **संज्ञिनां भेदादिति** । सति सौ तदन्तस्य **सुबन्त**मिति पदत्वम् । तत्प्राग्भागस्य **स्वादिष्वि**तीति भावः ॥ ननु अपरनिमित्तकत्वेनान्तरङ्गतया सुबन्तमिति पदत्वं स्यादत आह भाष्ये—**प्रतिषेधाश्चेति** । **विध्युन्मूलनम्** प्राप्तस्य विधेर्निवर्तनम् ॥ एवं चापवादन्यायेनात्रान्तरङ्गासंभव इति भावः ॥ अत्रानुवर्तमानं **सुबन्त**मित्यपि **स्वादिष्वि**ति सूत्रेण तदनुवृत्त्या मध्यस्य सुबन्तस्य यत्प्राप्तं तन्निषेधकम्, न तु **सुबन्त**मिति सूत्रप्राप्तस्येति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—अस्योत्तरस्य नायं समयः, किन्तु कालान्तरमिति प्रतिपादयितुं प्रयुङ्क्ते—**आसीदिति** । एतत्पदबोध्यं निर्दिशति—**अनयेति** । 'सुबन्तमि'ति विधीयमानया पदसंज्ञया कुत्वं भविष्यति, 'स्वादिष्वि'ति विधीयमानया पदसंज्ञया कुत्वं न भविष्यतीत्यर्थः । **पदमितीति**—तथा चावधिभेदाभावात् प्रत्ययलक्षणेन प्राप्तेन प्रतिषेधेनोभे अपि पदसंज्ञे बाधिते इति भावः । **प्रतिषेध इति**—उभयोः पदसंज्ञयोरित्यादिः ।

प्रदीपे—**अवधीति**—सति प्रत्यये इत्यादिः । **भेदादिति**—प्रतिषेधेन 'स्वादिष्वि'ति विधीयमानैव पदसंज्ञा प्रतिषिध्येत, न तु 'सुबन्तमि'ति विधीयमानेति शेषः ।

उद्द्योते—**अत्र**—परमवागित्यत्र । **अत्र**—'यचि भमि'त्यत्र । **तदनुवृत्त्या**—सुबन्तमित्यनुवृत्त्या ।

**( समाधानवार्तिकम् )**

**॥ * ॥ नाप्रतिषेधात् ॥ * ॥**

**( भाष्यम् )**

**नायं प्रसज्यप्रतिषेधः—सर्वनामस्थाने नेति ॥**

**किं तर्हि ? ।**

**पर्युदासोऽयम्—यदन्यत्सर्वनामस्थानादिति । सर्वनामस्थाने अव्यापारः । यदि केनचित्प्राप्नोति तेन भविष्यति । पूर्वेण च प्राप्नोति ॥**

**( तत्त्वालोकः )** **नायमिति**—यत इत्यादिः । **अयम्**—'असर्वनामस्थाने' इत्ययम् । **स्थानात्**—स्थानात्तस्मिन् । **सर्वेति**—तथा च—'स्वादिष्वि'त्यस्येत्यादिः । **यदीति**—च तत्रेति शेषः । **प्राप्नोतीति**—पदसंज्ञेत्यादिः । तर्हीति शेषः । **पूर्वेण**—'सुबन्तमि'त्यनेन । तथा च—परमवागित्यत्र न कुत्वानुपपत्तिरिति भावः ।

**( समाधानान्तरवार्तिकम् )**

**॥ * ॥ अप्राप्तेर्वा ॥ * ॥**

**( भाष्यम् )**

**अथवा—अनन्तरा या प्राप्तिः सा प्रतिषिध्यते ।**

**कुत एतत् ? ।**

**अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । पूर्वा प्राप्तिरप्रतिषिद्धा तया भविष्यति ॥**

**( तत्त्वालोकः )** तुष्यतु दुर्जनन्यायेन तत्र प्रसज्यप्रतिषेधमभ्युपेत्य समाधानान्तरमाह—**अथवेति** । **या प्राप्तिरिति**—'स्वादिष्वि'ति विधीयमानाया इति भावः । **पूर्वेति**—तथा च—'सुबन्तमि'ति विधीयमानाया इत्यादिः । **तयेति**—कुत्वमिति शेषः ।

**( आक्षेपभाष्यम् )**

**ननु चेयं प्राप्तिः पूर्वां प्राप्तिं बाधते ॥**

**( तत्त्वालोकः )** **इयम्**—अनन्तरा ।

**( समाधानभाष्यम् )**

**नोत्सहते प्रतिषिद्धा सती बाधितुम् ॥**

**( उद्द्योतः )** भाष्ये—**नोत्सहत इति** । स्वयमप्रवर्तमाना कथमन्यं बाधेतेति भावः ॥

**( आक्षेपभाष्यम् )**

**यद्येवं—परमवाचौ परमवाच इति 'सुप्तिङन्तं पदम्' इति पदसंज्ञा प्राप्नोति ॥**

( तत्त्वालोकः ) **यद्येवमिति**—तर्हीति शेषः ।

( समाधानभाष्यम् )

**एवं तर्हि योगविभागः करिष्यते—'स्वादिषु' पूर्वं पदसंज्ञं भवति ॥ ततः—'सर्वनामस्थाने अयचि' पूर्वं पदसंज्ञं भवति ॥ ततो—'भम्' भसंज्ञं भवति यजादावसर्वनामस्थान इति ॥**

( प्रदीपः ) **एवं तर्हीति** । योगविभागे सति सर्वा प्राप्तिः प्रतिषिद्ध्यत इति दोषाभावः ॥ **असर्वनामस्थान इति** नञः क्रियापदेन सम्बन्धादुत्तरपदेनासम्बन्धो, यचीत्येतच्च सर्वनामस्थानविशेषणम् । तेनायमर्थो भवति—यजादौ सर्वनामस्थाने परतः पदसंज्ञा न भवतीति । हलादौ तु सुशब्दे भवत्येव । भाष्ये तु वस्तुमात्रमुपन्यस्तम्—**सर्वनामस्थाने अयचीति** । यजादौ सर्वनामस्थाने पदसंज्ञानिषेधात्सामर्थ्यादयमर्थः संपद्यते—अयजादौ सर्वनामस्थाने पदसंज्ञा भवतीति ॥

( उद्द्योतः ) ननु **सर्वनामस्थानेऽयची**ति न्यासस्य पदत्वनिषेधकत्वेऽनन्तरस्येति न्यायेन **स्वादिष्वि**त्यस्यैव निषेधे परमवाचावित्यादौ **सुबन्त**मिति पदत्वं स्यादत आह—**योगविभागे इति** । एवं च तत्सामर्थ्यादनन्तरस्येति न्यायबाध इति भावः ॥ **यचीत्य**स्य पुरस्तादपकर्षफलमाह—**हलादाविति** । **वस्तुमात्रम्** । अर्थसिद्धोऽर्थः । तत्फलं नञः सर्वनामस्थानपदेनासंबन्धप्रदर्शनम् ॥

( तत्त्वालोकः ) प्रदीपे—ननु 'असर्वनामस्थाने, यचि' इति स्थितौ कथं नञो 'यची'त्यनेन सम्बन्ध इत्यत आह—**असर्वेति** । **उत्तरपदेन**—सर्वनामस्थानपदेन । एतत्प्रदर्शनार्थमेव नञ् उत्कृष्य 'यची'त्यत्र निवेशितः ॥ एवञ्च—समासे चरमभागस्य पदसंज्ञा यजादौ क्वापि न भवति; क्वचिन्निषेधात्, क्वचिच्च भसंज्ञया बाधादिति निष्कर्षः ।

उद्द्योते—**एवञ्च**—योगविभागे च । **तत्सामर्थ्यात्**—योगविभागसामर्थ्यात् । **तदिति**—नञ उत्कृष्य 'यची'त्यत्र निवेशनस्येत्यर्थः ।

( आक्षेपभाष्यम् )

**यदि तर्हि—सावपि पदं भवति, एचः प्लुतविकारे पदान्तग्रहणं चोदयिष्यति, इह मा भूत्—भद्रं करोषि गौरिति । तस्मिन् क्रियमाणेऽपि प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये-**प्लुतविकारे इति** । प्लुतसहितविकारे इत्यर्थः । **एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुता**वित्यत्रेति भावः ॥

( तत्त्वालोकः ) भाष्ये—**तर्हीति**—अस्याग्रेऽन्वयः । **पदान्तग्रहणं चोदयिष्यतीति**—यदित्यादिः । वार्तिककार इति शेषः । **तस्मिन्निति**—तद्विरुध्येत, यत इत्यादिः ।

( समाधानभाष्यम् )

**वाक्यपदयोरन्त्यस्येत्येवं तत् ॥**

( प्रदीपः ) **वाक्यपदयोरिति** । **गौरित्यौकारो** वाक्यान्तो न भवतीत्यादुतौ न भवतः ॥

( तत्त्वालोकः ) भाष्ये—**वाक्येति**—नैष दोषः, यत इत्यादिः । तत्रान्तग्रहणमात्रं कृत्वा 'वाक्यस्य टेरि'त्यतो वाक्यग्रहणमनुवर्त्यं च वाक्यान्तस्येति व्याख्यायेतेति भावः । तथा च—अत्र **पद**पदमनावश्यकमिति प्रतिभाति ॥

प्रदीपे—**वाक्यान्त इति**—पदान्तत्वेऽपीत्यादिः ।

( आक्षेपभाष्यम् )

**इह तर्हि—दधिसेचौ दधिसेचः । 'सात्पदाद्योः' इति पदादिलक्षणः षत्वप्रतिषेधो न प्राप्नोति ॥**

( उद्द्योतः ) भाष्ये—**इह तर्हीति** । वार्तिकारम्भे **स्वपदादिविधा**वित्युक्तेर्न दोषः ॥ प्रत्याख्याने तु दोषः । कुत्वाभावाय पदत्वनिषेधप्रवृत्तेरावश्यकत्वात् । एतेन योगविभागसिद्धस्य क्वाचित्कत्वान्न दोष इत्यपास्तमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्र योगविभागेऽपि दोषमाह—**इह तर्हीति** । एवमग्रेऽपि ।

( समाधानभाष्यम् )

**मा भूदेवम्—पदस्यादिः पदादिः, पदादेर्नेति ॥**

**कथं तर्हि ? ।**

**पदादादिः पदादिः, पदादेर्नेत्येवं भविष्यति ॥**

( प्रदीपः ) **पदादादिरिति** । **पञ्चमी**ति योगविभागात्समासः ॥

( उद्द्योतः ) **पञ्चमीति योगविभागादिति** । पदादित्यस्य परशब्दान्वयेनासामर्थ्यादत्र समासशास्त्राप्राप्तेः सौत्रः समास इति वक्तुमुचितम् ॥

( तत्त्वालोकः ) प्रदीपे—**पञ्चमीतीति**—'पञ्चमी भयेने'त्यत्रेति भावः ।

उद्द्योते—अत्र योगविभागस्य भाष्यकारासम्मतत्वात् कैयटोक्तं खण्डयति—**पदादित्यस्येति** ।

( आक्षेपभाष्यम् )

**नैवं शक्यम् । इहापि प्रसज्येत—ऋक्षु वाक्षु त्वक्षु कुमारीषु किशोरीष्विति ॥**

( तत्त्वालोकः ) **नैवमिति**—वक्तुमिति शेषः । **इहापीति**—यतस्तथा सतीत्यादिः । षत्वनिषेध इति शेषः ।

( समाधानभाष्यम् )

**सात्प्रतिषेधो ज्ञापकः—स्वादिषु पदत्वेन येषां पदसंज्ञा, न तेभ्यः प्रतिषेधो भवतीति ॥**

( उद्द्योतः ) भाष्ये—**नः तेभ्य प्रतिषेध इति** । तेभ्यः परस्य **सुबन्तं पद**मिति पदत्वमाश्रित्यापि न प्रतिषेध इत्यर्थः ॥ अत एव परमवाक्षु इत्यादावपि न दोषः ॥

( तत्त्वालोकः ) भाष्ये—**सात्प्रतिषेध इति**—नैष दोषः, यतस्तथा सति व्यर्थः सन्नित्यादिः ।

उद्द्योते—**अपिना**—'स्वादिष्वि'ति पदत्वस्य परिग्रहः । ईदृशार्थाश्रयणस्य फलमाह—**अत एवेति** । **ईदृशार्थाश्रयणादेवे**त्यर्थः । **अपिना**—वाक्षित्यादेः परिग्रहः ।

( आक्षेपभाष्यम् )

**इह तर्हि—'बहुसेचौ बहुसेचः' बहुजयं प्रत्ययः । अत्र पदादादिः पदादिः, पदादेर्नेत्युच्यमानेऽपि न सिध्यति ॥**

**( उद्द्योतः )** भाष्ये—**पदादेर्नस्युच्यमानेऽपीति** । षष्ठीतत्पुरुषेऽपि न सिध्यति, कुत्वाभावाय पदत्वाभावस्यावश्यकत्वाद् इति अपेरर्थः । अयं बहुसेचि दोषो वार्तिकारम्भेऽपि, उत्तरपदत्वाभावेन निषेधाप्राप्त्या पदत्वसत्त्वेन षष्ठीतत्पुरुषेण षत्वनिषेधसाम्राज्येऽपि कुत्वप्राप्तेः ॥

**( तत्त्वालोकः )** भाष्ये—**बहुसेच इति**—'सात्पदाद्योः' इति पदादिलक्षणः षत्वनिषेधो न प्राप्नोतीत्यनुषज्यते । तदुपपादयति—**बहुजिति** ।

उद्द्योते—अयं दोषो न प्रागुक्तदोषसदृशः, किन्तु ततो विलक्षण इत्याह—**अयमिति** । **अपिना**—प्रत्याख्यानपरिग्रहः । **उत्तरेति**—समासाभावादित्यादिः । **निषेधेति**—'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधेत्यर्थः ।

( वार्तिकन्यासान्तरेण समाधानभाष्यम् )

एवं तर्हि—

## ॥❀॥ उत्तरपदत्वे च पदादिविधौ ॥❀॥

( भाष्यम् )

**लुमता लुप्ते 'प्रत्ययलक्षणं भवति' इति वक्ष्यामि । तन्नियमार्थं भविष्यति—पदादिविधावेव, न पदान्तविधाविति ॥**

**( उद्द्योतः )** इदानीं प्रत्याख्यानप्रकारस्य गौरवदुर्ज्ञेयत्वाभ्यामयुक्तत्वं मनसि निधाय लाघवाय नञ्रहितवचनपाठमाह—**एवं तर्हीति** ॥ **न पदान्तविधाविति** । पदान्तस्थानिके विधावित्यर्थः ॥ नञ्घटितवार्तिकस्याप्यत्रैव प्रवृत्तिर्व्याख्यानादेकफलत्वाचेति बोध्यम् ॥ [ **न पदान्तविधा**विति प्रतिनिर्देशा**दुत्तरपदत्वे चे**त्यस्य वार्तिकस्य ङमुडादिविधौ णत्वादिविधौ चाप्रवृत्तिरिति बोध्यम् । **ङमुट्सूत्रस्थ** भाष्यं त्वेतद्विरोधाद् **उञि च पद इति** सूत्रभाष्यविरोधाच्च **नलोपादि-प्लुत्यन्त इति** वार्तिकस्थभाष्यविरोधाच्चैकदेश्युक्तिरिति बोध्यम् । एवं च प्रत्याख्यानप्रकारोऽपि योगविभागस्य काचित्कत्वेन ङमुडादिविषये न । इदमेव ध्वनयितुं प्रत्याख्यातमपि वार्तिकं पुनरक्षरान्तरैरुपात्तमित्याहुः ॥ ]

**( तत्त्वालोकः )** भाष्ये—**तन्नियमार्थमिति**—तत्रापि तस्य पूर्वसूत्रेणैव सिद्धत्वादिति भावः । **पदादीति**—उत्तरपदत्वे च लुमता लुप्ते प्रत्ययलक्षणं भवतीत्यादिः । तथा च—बहुसेचावित्यादौ समासाभावेनोत्तरपदत्वाभावान्नियमाप्रवृत्तौ प्रत्ययलक्षणेन पदत्वात् षष्ठीतत्पुरुषे षत्वनिषेध उपपद्यतेति भावः ।

उद्द्योते—**अत्रैव**—पदान्तस्थानिके विधावेव । अयं **कोष्ठकान्तर्गतः** पाठो बहुत्र **'गूढ आशयः'** इत्युत्तरमुपलभ्यते ।

( आक्षेपभाष्यम् )

**कथं—बहुसेचौ बहुसेचः ? ॥**

**( प्रदीपः ) कथं बहुसेचाविति** । समासाभावान्नोत्तरपदत्वम्, नापि पूर्वस्य पदत्वम् ॥

**( उद्द्योतः )** एतावतापि बहुसेचावित्यस्यासिद्धिरिति शङ्कते—**कथं बहुसेचाविति** । तदुपपादयति—**समासेति** । एवं च नियमाप्राप्तौ प्रत्ययलक्षणेन पदत्वात् **षत्वनिषेधवत् चोः कुः पदान्तस्ये**ति कुत्वं स्यादिति भावः ॥ पञ्चमीसमासेऽपि पत्वापत्तिरित्याह—**नापि पूर्वस्येति** ।

**( तत्त्वालोकः )** प्रदीपे—**नापीति**—प्रत्ययलक्षणादिति भावः । उद्द्योते—**एवञ्च**—उत्तरपदत्वाभावे च । **षत्वनिषेधेति**—षष्ठीतत्पुरुषे इति भावः । **अपीति**—समासेऽन्वयः ।

( ४६२ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥ ❀ ॥ बहुच्पूर्वस्य च ॥ ❀ ॥

( भाष्यम् )

**बहुच्पूर्वस्य च पदादिविधावेव, न पदान्तविधाविति ॥**

**( उद्द्योतः )** भाष्ये- बहुच्पूर्वस्य चेति । आद्यवार्तिकारम्भे, तत्प्रत्याख्याने च **सात्पदाद्यो**रित्यत्रेदं कार्यमिति गूढ आशयः ॥

**( तत्त्वालोकः )** भाष्ये- बहुच्पूर्वस्य चेति—लुमता लुप्ते प्रत्ययलक्षणं भवतीति शेषः । तथा च—बहुसेचावित्यादौ षत्वनिषेध एव प्रत्ययलक्षणं, न तु कुत्वे । तत्र च—षष्ठीतत्पुरुष एव, न तु पञ्चमीसमासः । अत्र च पक्षे तत्र न नः, योगविभागस्य चाकरणाल्लाघवमिति भावः ।

उद्द्योते—यदि पूर्वसूत्रे 'उत्तरपदत्वे च पदादिविधावि'ति पठ्यते, तर्हि तत्रैव 'बहुच्पूर्वस्य चे'त्यपि पाठ्यम् । तदुभयश्चोक्तरीत्योक्तनियमार्थं भवति ॥ यदि च प्रकृतसूत्रे 'उत्तरपदत्वे चापदादिविधावि'ति पठ्यते, तर्हि बहुसेचावित्यादौ समासाभावेनोत्तरपदत्वाभावात्तस्याप्रवृत्त्या प्रत्ययलक्षणेन पदत्वात् षत्वनिषेधोपपत्तावपि कुत्ववारणायात्रैव 'बहुच्पूर्वस्य चे'ति पाठ्यमित्याशयेनाह—**आद्येति** । तत्प्रत्याख्याने तु-योगविभागेन पदत्वनिषेधात् कुत्ववारणेऽपि षत्वनिषेधाय 'सात्पदाद्योरि'त्यत्रैव 'बहुच्पूर्वस्य चे'ति पाठ्यमित्याशयेनाह—**तत्प्रत्येति** । **च**—तु । केचित्तु-प्रकारान्तरेणापि ग्रन्थमिमं योजयन्ति ॥

( ४६३ आक्षेपवार्तिकम् ॥ ७ ॥ )

## ॥ ❀ ॥ द्वन्द्वेऽन्त्यस्य ॥ ❀ ॥

( भाष्यम् )

**द्वन्द्वेऽन्त्यस्य लुमता लुप्ते प्रत्ययलक्षणं न भवतीति वक्तव्यम् ॥ वाक् च स्रक् च त्वक् च वाक्स्रक्त्वचम् ।**

**( प्रदीपः ) द्वन्द्वेऽन्त्यस्येति** । **उत्तरपदत्वे चे**त्यनेनैव **सिद्धे** नियमार्थमिदमन्त्यस्यैवेति । मध्यमपदस्यापि पूर्वपदापेक्षयोत्तरपदत्वसंभवात्प्रत्ययलक्षणप्रतिषेधप्रसङ्गात् । मुख्ये तूत्तरपदे संभवति कथं मध्यमपदस्य ग्रहणं स्यादिति चिन्त्यमेतत् ॥

**(उद्द्योतः) मुख्ये त्विति** । उत्तरपदशब्दस्य समासचरमावयवे रूढेरिति भावः ॥ रूढस्यैव ग्रहणमित्येतदन्वाख्यापकं **द्वन्द्वे चेति** इति तत्त्वम् । प्रत्याख्यानेऽपि न मध्यमस्य प्राप्तिः, मध्यमसुबन्तस्यापि स्वादिपरत्वेन विशेषणाद् इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**ननु** 'उत्तरपदत्वे चापदादिविधावि'ति वार्तिकारम्भे वाक्स्रक्त्वचमित्यादौ स्रक्शब्दस्य पूर्वपदापेक्षयोत्तरपदत्वात्तत्र प्रत्ययलक्षणनिषेधेन पदत्वानुपपत्तेः कुत्वं नोपपद्येतेत्यत आह—**द्वन्द्वेऽन्त्यस्येति** ।

प्रदीपे—**मध्यमेति**—अन्यथेत्यादिः । भाष्यं दूषयति—**मुख्ये त्विति** । **ग्रहणमिति**—उत्तरपदशब्देनेति भावः । एवमुद्द्योतेऽपि ।

उद्द्योते—कैयटोक्तं दूषयन् भाष्यं योजयति—**रूढस्यैवेति** ।

चकारोऽधिको भाति । आरम्भप्रत्याख्यानयोर्विरोधं परिहरति—प्रत्याख्यानेऽपीति ।

( आक्षेपभाष्यम् )

इहाभूवन्निति प्रत्ययलक्षणेन जुस्भावः प्राप्नोति ॥

( तत्त्वालोकः ) प्राप्नोतीति—जुस्भावस्याङ्गाधिकारस्थत्वाभावाद्, अङ्गस्यानिककार्यत्वाभावाच्च तत्र प्रकृतसूत्रेण प्रत्ययलक्षणनिषेधस्याप्राप्तेरिति भावः । एवमग्रेऽपि ।

( ४६४ समाधानवार्तिकम् ॥ ८ ॥ )

॥*॥ सिचि जुसोऽप्रसङ्ग आकारप्रकरणात् ॥ * ॥

( भाष्यम् )

सिचि सिज्निमित्तस्य जुसोऽप्रसङ्गः ॥

किं कारणम् ? ॥

'आकारप्रकरणात्' । 'आतः' इत्येतन्नियमार्थं भविष्यति—आत एव च सिज्लुगन्तात्, नान्यस्मात्सिज्लुगन्तादिति ॥

( प्रदीपः ) आकारप्रकरणादिति । आकारस्य नियमार्थत्वेन प्रस्तावादित्यर्थः । अथवाऽऽकारे प्रकरणादात इत्यत्र सिचः प्रकृतत्वादित्यर्थः ॥

( उद्द्योतः ) प्रस्तावादिति । आत इत्यस्यारम्भादित्यर्थः ॥ सिच इति । अनेन विधित्वासंभवो दर्शितः ॥

( तत्त्वालोकः ) भाष्ये—किं कारणम्—कस्मात् कारणात् । आत इति—यत इत्यादिः ।

( आक्षेपभाष्यम् )

इह—इति युष्मत्पुत्रो ददाति, इत्यस्मत्पुत्रो ददातीत्यत्र प्रत्ययलक्षणेन 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' इति वान्नावादयः प्राप्नुवन्ति ॥

( प्रदीपः ) इति युष्मत्पुत्र इति । पदादुत्तरयोर्युष्मदस्मदोरादेशविधानादितिशब्दप्रयोगः ॥

( ४६५ समाधानवार्तिकम् ॥ ९ ॥ )

॥ * ॥ युष्मदस्मदोः स्थग्रहणात् ॥ * ॥

( भाष्यम् )

स्थग्रहणं तत्र क्रियते, तच्छ्रूयमाणविभक्तिविशेषणं विज्ञास्यते ॥

( प्रदीपः ) श्रूयमाणविभक्तिविशेषणमिति । षष्ठीचतुर्थीद्वितीयास्वित्येव सिद्धे स्थग्रहणे सत्ययमर्थो भवति-तासु ये अवस्थिते युष्मदस्मदी इति । श्रूयमाणासु चावस्थानं भवति । न तु लुप्तासु, लुप्तस्याधारत्वासंभवात् ॥

( उद्द्योतः ) भाष्ये—श्रूयमाणेति । श्रूयमाणत्वार्थकं विभक्तिविशेषणमित्यर्थः । तल्लाभायोपायं दर्शयति—षष्ठीत्यादि ॥

( तत्त्वालोकः ) भाष्ये—स्थग्रहणमिति—नैष दोषः, यत इत्यादिः । तत्र—'युष्मदस्मदोरि'त्यादिसूत्रे । तत्—तच्च ।

प्रदीपे—च—एव । आधारत्वेति—सामीपिकाधारत्वेत्यर्थः ।

( समाधानबाधकभाष्यम् )

अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम् ॥

किम् ? ।

सविभक्तिकस्य वान्नावादयो यथा स्युरिति ॥

( प्रदीपः ) अस्त्यन्यदिति । तिष्ठतिरहानावपि वर्तते ॥ यथा—तपसि स्थितः, तपो न जहातीत्यर्थः । यथा च—समये तिष्ठ सुग्रीव, समयं मा हासीरित्यर्थः । तेन सति स्थग्रहणे तत्सहितयोः कार्यं विज्ञायते ॥ अथवा यथा रथस्थ आनीयतामिति सरथ आनीयते, तथा षष्ठ्यादिसहितयोर्युष्मदस्मदोः कार्यं भवतीति विज्ञायते ॥

( उद्द्योतः ) अथवा यथा रथेति । स्थशब्दः साहित्यवाचीति भावः ॥

( तत्त्वालोकः ) भाष्ये—अस्त्यन्यदिति—नैतदस्ति ज्ञापकम्, यत इत्यादिः । सविभक्तिकस्येति—युष्मदस्मच्छब्दस्येति शेषः । एवमग्रेऽपि ।

प्रदीपे—तत्सहितयोः—षष्ठ्यादिसहितयोर्युष्मदस्मदोः । तथेति—सति स्थ ग्रहणे इत्यनुषज्यते ।

( समाधानसाधकभाष्यम् )

नैतदस्ति प्रयोजनम् । पदस्येति वर्तते । विभक्त्यन्तं च पदम् । तत्राऽन्तरेणापि स्थग्रहणं सविभक्तिकस्यैव भविष्यति ॥

( प्रदीपः ) पदस्येति वर्तत इति । केवलयोः पदत्वाभावात्तदवयवं पदं गृह्यत इति भावः ॥

( उद्द्योतः ) तदवयवमिति । बहुव्रीहिः । युष्मदस्मदोरिति तद्धटितसमुदाये लाक्षणिकमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—पदस्येतीति—यतोऽत्रेत्यादिः । वर्त्तते—अधिकरोति । युष्मदस्मदोः षष्ठी-द्वितीययोर्न पदत्वम्, भत्वेन बाधात्, किन्तु विभक्त्यन्तयोरेवेत्याशयेनाह— विभक्त्यन्तञ्चेति । तत्र—तथा सति । भविष्यतीति—तथा चातिरिच्यमानं स्थग्रहणं-श्रूयमाणविभक्तिविशेषणत्वं ज्ञापयतीति तत्र प्रत्ययलक्षणेन नादेशापत्तिरिति भावः । एवमग्रेऽपि ।

उद्द्योते—नन्वेवम् अधिक्रियमाणस्य 'पदस्ये'त्यस्य 'युष्मदस्मदोरि' त्यनेनान्वयो न स्याद्, विभक्त्यन्तयोः पदत्वेन निर्विभक्तिकयोश्च निर्दिष्टत्वेन तस्य ताभ्यामसमानाधिकरण्यादित्यत आह—युष्मदिति ।

( समाधानबाधकभाष्यम् )

भवेत्सिद्धम्—यत्र विभक्त्यन्तं पदम् । यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति—ग्रामो वां दीयते; जनपदो वां दीयते, ग्रामो नौ दीयते जनपदो नौ दीयते ॥

( प्रदीपः ) यत्र त्विति । अत्र हि ते एव पदे इति तयोरेवादेशप्रसङ्गः ॥

( उद्द्योतः ) मुख्येऽर्थे एव पदसामानाधिकरण्ये संभवति किं लक्षणयेत्याह—अत्र हीति ॥

( तत्त्वालोकः ) भाष्ये—भवेदिति—एवमपि-नैतदस्ति ज्ञाप-

कम्, यतः स्थग्रहणमन्तरेण तत्रैव सविभक्तिकस्येत्यादिः। **आमो वामिति—**अत्र चतुर्थीद्विवचने भ्यामि युष्मदस्मदोरपि पदत्वाद् अधिक्रियमाणस्य 'पदस्ये' त्यस्य मुख्यार्थेन सामानाधिकरण्ये सम्भवति लक्ष्यार्थेन तदनाश्रयणान्निर्विभक्तिकस्यैवादेशः प्रसज्येतेति तद्वारणाय स्थग्रहणमावश्यकमिति भावः।

प्रदीपे—**ते एव—**निर्विभक्तिके युष्मदस्मदी अपि।

**( समाधानसाधकभाष्यम् )**

**सर्वग्रहणमपि प्रकृतमनुवर्तते। तेन सविभक्तिकस्यैव भविष्यति॥**

**( प्रदीपः ) सर्वग्रहणमपीति।** अनेकाल्त्वात्सर्वादेशत्वे लब्धे सर्वग्रहणमनुवृत्तं षष्ठ्यन्तं विपरिणम्यमानं सर्वस्य पदस्य विभक्तिसहितस्य स्थानित्वमवगमयतीत्यर्थः॥

**( उद्द्योतः )** यद्यपि द्वितीयायां षष्ठ्यां च तयोः पदत्वासंभवेन तत्र लक्षणाया आवश्यकत्वेनान्यत्राप्येकरूपत्वाय लक्षणा युक्ता। तथापि **पदस्येत्यस्य मादुपधाया** इत्यादाववयवषष्ठीत्वस्य क्लृप्ततया पदावयवयोरित्यर्थ एव स्यादत ईदृशलक्षणालाभः सर्वग्रहणसाध्य एवेत्याह—**सर्वग्रहणमिति। अनुदात्तं सर्व**मित्यतः॥

**( तत्त्वालोकः )** भाष्ये—**सर्वग्रहणमिति—**एतदपि नास्ति प्रयोजनम्, यतोऽत्रेत्यादिः। **अपिना—**'पदस्ये'त्यस्य परिग्रहः। **तेनेति—**अन्तरेणापि स्थग्रहणमिति शेषः।

उद्द्योते—**तयोः—**केवलयोर्युष्मदस्मदोः। **अन्यत्रापि—**चतुर्थ्यामपि।

**( आक्षेपभाष्यम् )**

**इह—चक्षुष्कामं याजयांचकारेति 'तिङ्ङतिङ' इति तस्य च निघातस्तस्माच्चानिघातः प्राप्नोति॥**

**( प्रदीपः ) याजयांचकारेति।** परत्वात्तिबादिषु कृतेषु **आम** इति लुकि प्रत्ययलक्षणेन याजयामित्यस्य तिङन्तत्वमिति **पूर्वः** पक्षः॥

**( उद्द्योतः )** ननु लावस्थायामेव **अन्तरङ्गानपीति** न्यायेन लुकि प्रत्ययलक्षणेनापि न तिङन्तत्वमत आह—**परत्वादिति।**

**( तत्त्वालोकः )** भाष्ये—**तस्य च—**याजयामित्यस्य च। **तस्माच्चेति—**परस्य 'चकारे' त्यस्य तिङन्तत्वेऽप्यतिङन्तात्परत्वस्याभावादिति शेषः।

प्रदीपे—**इति पूर्वः पक्षः—**इति कारणात्पूर्वपक्षः।

उद्द्योते—**लुकि—**'आमः' इति लुकि। **न तिङन्तत्वमिति—**याजयामित्यस्येति भावः।

**( ४६६ समाधानवार्तिकम् ॥ १० ॥ )**

## ॥ * ॥ आमि लिलोपात्तस्य चानिघातस्तस्माच्च निघातः॥ * ॥

**( भाष्यम् )**

**आमि लिलोपात्तस्य चानिघातः तस्माच्च निघातः सिद्धो भविष्यति॥**

**( प्रदीपः ) आमि लिलोपादिति।** नाप्राप्तेषु तिबादिषु लुगारभ्यमाणस्तेषां बाधकः॥

**( उद्द्योतः ) नाप्राप्तेष्विति। अन्तरङ्गानपीति** न्यायादित्यपि बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**आमीति—**'आमः' इतीत्यर्थः। तिबादयादेशात्प्रागेवेति भावः। प्रत्ययलक्षणेनापि तिङन्तत्वस्यानुपपत्तेराह—**तस्य चेति।** याजयामित्यस्य चेत्यर्थः। **तस्माच्चेति—**परस्य 'चकारे' त्यस्य तिङन्तत्वाद्, अतिङन्तात्परत्वस्य सत्त्वाच्चेति शेषः।

प्रदीपे—येन नाप्राप्तिन्यायादिति सूचयति—**नाप्राप्तेष्विति।** यतइत्यादिः।

---

**( अङ्गपदवाच्यार्थनिरूपणाधिकरणम् )**

**( ४६७ आक्षेपवार्तिकम् ॥ ११ ॥ )**

## ॥*॥ अङ्गाधिकार इटो विधिप्रतिषेधौ ॥*॥

**( भाष्यम् )**

**अङ्गाधिकारे इटो विधिप्रतिषेधौ न सिध्यतः॥ जिगमिष संविवृत्स। अङ्गस्येतीटो विधिप्रतिषेधौ न प्राप्नुतः॥**

**( प्रदीपः ) अङ्गाधिकार इति।** अङ्गस्येति स्वर्यते, तेनाङ्गाधिकारविहितं यत् कार्यं तल्लुमता लुप्ते प्रत्यये न भवतीति सूत्रार्थे दोषोपन्यासः॥ **जिगमिषेति।** अतो हेरिति लुकि कृते, **गमेरिट् परस्मैपदेष्वि**तीड् न प्राप्नोति॥ **संविवृत्सेति। न वृद्भ्यश्चतुर्भ्यं** इतीट्प्रतिषेधः॥

**( उद्द्योतः ) इट्प्रतिषेध** इत्यत्र न प्राप्नोतीत्यनुषङ्गः॥

**( ४६८ आक्षेपवार्तिकम् ॥ १२ ॥ )**

## ॥ * ॥ क्रमेर्दीर्घत्वं च ॥ * ॥

**( उद्द्योतः )** दीर्घत्वं-क्रमः परस्मैपदेष्विति॥

**( प्रश्नभाष्यम् )**

**किं च?।**

**( प्रदीपः ) क्रमेरिति** कार्यसमीपे श्रूयमाणश्चकारः कार्यमेव समुच्चिनुयादित्यभिप्रायेण—**किं चेति॥**

**( उद्द्योतः ) समुच्चिनुयादिति।** तच्चासंभवीति शेषः॥ **इत्यभिप्रायेणे**ति। प्रश्न इत्यर्थः॥

**( एकदेशिसमाधानभाष्यम् )**

**इटश्च विधिप्रतिषेधौ॥**

**( उद्द्योतः )** भाष्ये तटस्थः अभिप्रायानभिज्ञ उत्तरयति—**इटश्चेति॥**

**( सिद्धान्तिभाष्यम् )**

**नेत्याह। अदेशोऽयं चः पठितः। क्रमेश्च दीर्घत्वम्॥ उत्क्राम संक्रामेति॥**

**( प्रदीपः ) अदेश इति।** कार्यस्य समुच्चेतव्यस्याभावात्सामर्थ्यात्प्रकृतिसमुच्चय इत्यर्थः॥

**( उद्द्योतः )** आचार्य आह—**नेत्याहेति। गम इड्विधिः,** वृतेस्तत्प्रतिषेधः, क्रमेश्च दीर्घत्वं न सिध्यतीत्यर्थ इति भावः॥

**( तत्त्वालोकः )** भाष्ये—**नेत्याहेति—**सिद्धान्ती, यत इति शेषः॥ तथा च—वार्त्तिके चकारो भिन्नक्रम इत्याह—**क्रमेश्चेति।**

उद्द्योते—**आह—**उत्तरमनुवदति।

( अङ्गाधिकारपरत्वदूषणोपसंहारभाष्यम् )

इह किंचिदङ्गाधिकारे लुमता लुप्ते प्रत्ययलक्षणेन भवति, किंचिचान्यत्र न भवति ॥

( प्रदीपः ) किंचिच्चेति । ञिनिकित्स्वराः ॥

( उद्द्योतः ) अनन्तरोक्तातिव्याप्तेरुपक्रमोक्ताव्याप्तेश्चाङ्गाधिकारपरत्वं न युज्यत इत्युपसंहरति–भाष्ये—इहेति ॥ ञिनिकित्स्वरा इति । इदमुपलक्षणम्–अहर्ददातीत्यत्रासुपीति प्रतिषेधस्यापि। वस्तुतः किंचिच्चेत्यत्र किंचित्पदेन रोऽसुपीत्येव । ञ्नित्स्वरविषये सौवरीणां सप्तमीनां तदन्तसप्तमीत्वेन न लुमता तस्मिन्निति न्यासेऽपि वचनस्यावश्यकत्वादिति बोध्यम् ।

( तत्त्वालोकः ) भाष्ये—किञ्चिदिति—इटो विधिप्रतिषेधौ, क्रमेश्च दीर्घत्वमित्यर्थः ।

उद्द्योते—अङ्गाधिकारेति –'अङ्गस्ये' त्यस्येत्यादिः । कैयटस्य न्यूनतां निराकरोति—इदमिति ॥ कैयटोक्तं खण्डयति—वस्तुत इति । वचनस्य—'लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमि'ति वचनस्य ।

---

( न्यासान्तरेण दूषणोद्धाराधिकरणम् )

( न्यासान्तरसाधकभाष्यम् )

यदि पुनः—

( ४६९ न्यासान्तरवार्तिकम् ॥ १३ ॥ )

॥ ❀ ॥ न लुमता तस्मिन् ॥ ❀ ॥

( भाष्यम् )

इत्युच्येत ॥

( प्रदीपः ) न लुमता तस्मिन्निति । लुमता यो लुप्तः प्रत्ययस्तस्मिन्यत्कार्यमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः। अत्रय इत्यत्र स्वरो न भवति, तद्धितस्यैव कितोऽन्तोदात्तत्वविधानात् । लुकि कृते कार्यिणोऽसत्त्वात् । प्रत्ययलक्षणं हि यदन्यस्य कार्यं तत्प्रत्ययलोपेऽपि भवति , न तु यत्प्रत्ययस्यैव कार्यं तदपि । न हि वचनेनासतः कार्यित्वं शक्यते प्रतिपादयितुम् ॥

( उद्द्योतः ) तस्मिन् यत्कार्यमिति । तस्मिन्परतस्तन्निमित्तकं तत्प्रकृतिभूतस्य यत्कार्यमित्यर्थः ॥ कित इत्युदाहरणभूतात्रय इत्यस्योभयपक्षेऽप्यसिद्धेस्तत् परिहरति—अत्रय इत्यत्रेति । यदन्यस्येति । प्रत्ययजमित्येव सिद्धे लक्षणग्रहणसामर्थ्येन प्रत्ययनिमित्तकमेव, न तु प्रत्ययस्थानिकमित्यर्थादिति भावः ॥ युक्त्यन्तरमप्याह—न हीति। षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वादिति भावः ॥ अत एव नखनिर्भिन्न इत्यादावैसादिकं न । एवमसतःसत्तापि न वचनेन शक्येति बोध्यम् ॥

( तत्त्वालोकः ) प्रदीपे—प्रत्ययलक्षणमिति—प्रत्ययनिमित्तकमित्यर्थः । प्रत्ययलक्षणेनेत्यादिः ।

उद्द्योते—उभयपक्षेऽपि—'न लुमताऽङ्गस्ये'ति पाणिनीयन्यासे; 'न लुमता तस्मिन्नि'ति वार्त्तिककारन्यासे च । असिद्धेरिति—अनाङ्गत्वात्तन्निमित्तकप्रकृत्यकार्यत्वाच्चेति भावः। तत् -तत्र दूषणम् । कैय— न्यूनतां निराकरोति-एवमिति । वचनेनेति-कर्तुमिति शेषः ।

( आक्षेपभाष्यम् )

अथ 'न लुमता तस्मिन्' इत्युच्यमाने किं सिद्धमेतद्भवति—इटो विधिप्रतिषेधौ, क्रमेर्दीर्घत्वं च॥

( समाधानभाष्यम् )

बाढं सिद्धम् । न इटो विधिप्रतिषेधौ परस्मैपदेष्वित्युच्यते ॥

कथं तर्हि ? ।

सकारादाविति । तद्विशेषणं परस्मैपदग्रहणम् ॥

न खल्वपि क्रमेर्दीर्घत्वं परस्मैपदेष्वित्युच्यते ॥

कथं तर्हि ? ।

शितीति । तद्विशेषणं परस्मैपदग्रहणम् ॥

( प्रदीपः ) तद्विशेषणमिति । विशेषण एवोपक्षीणत्वात्कार्यं प्रति निमित्तभावो नास्तीत्यर्थः ॥

( उद्द्योतः ) परस्मैपदपरसादेरङ्गत्वनिमित्तस्येड् इत्याद्यर्थे न दोष इत्याह—विशेषण एवेति । एवं च लुप्तप्रत्ययनिमित्तकं तत्प्रकृतेस्तन्न कार्यमिति भावः ॥

( तत्त्वालोकः ) भाष्ये—बाढं सिद्धमिति—यत इति शेषः । 'गमेरिट् परस्मैपदेषु' 'न वृद्भ्यश्चतुर्भ्यः' इत्यनयोः 'सेऽसिचि कृतचृतच्छृदतृदनृतः' इत्यस्मात् 'से' इति, 'आर्धधातुकस्येड् वलादेरि' त्यत 'आर्धधातुकस्ये'ति चानुवर्त्तते । तत्र—'से' इत्यस्यार्धधातुकविशेषणत्वात् तस्मात्तदादिविधिरित्याशयेनाह-सकारादाविति । 'क्रमः परस्मैपदेष्वि' त्यत्र 'ष्ठिवुक्लमुचमां शिती' त्यतः शितीत्यनुवर्तते इत्यभिप्रायेणाह—शितीति ।

प्रदीपे—विशेषण एवेति—परस्मैपदस्येत्यादिः ।

उद्द्योते—एवञ्च—विशेषण एवोपक्षीणत्वे च ।

( ४७० आक्षेपवार्तिकम् ॥ १४ ॥ )

॥ ❀ ॥ न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे ॥ ❀ ॥

( भाष्यम् )

न लुमता तस्मिन्निति चेद्धनिणिङादेशास्तलोपे न सिध्यन्ति ॥ अवधि भवता दस्युः । अगायि भवता ग्रामः । अध्यगायि भवताऽनुवाकः । तलोपे कृते लुकीति हनिणिङादेशा न प्राप्नुवन्ति ।

( प्रदीपः ) हनिणिङादेशा इति । लुका लुङो विषयत्वापहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिः ॥

( उद्द्योतः ) नन्वार्धधातुके इत्यादीनां विषयसप्तमीत्वात् पूर्वमेव तेषां प्रवृत्तेर्न प्रत्ययलक्षणापेक्षेत्यत आह—लुकेति । एवं च विषयत्वज्ञानायावश्यं प्रत्ययलक्षणमाश्रयणीयम् ॥ तच्च न लुमता तस्मिन्निति न्यासे न प्राप्नोतीति भावः ॥

( तत्त्वालोकः ) भाष्ये—'लुङि चे'ति हनो वधादेशः, 'इणो गा लुङी'ति इणो गादेशः, तथा 'विभाषा लुङ्लृङोरि'ति इङो गाङादेश इत्यभिप्रेत्याह—हनिणिङादेशा इति । तर्हीत्यादिः ।

उद्द्योते—**पूर्वमेवेति**—नादेशादिति भावः। **तेषाम्**—'लुङि चे' त्यादीनाम्। **एवञ्च**—लुका लुङो विषयत्वापहारे च।

( समाधानभाष्यम् )

**नैष दोषः। न लुङीति हनिणिङादेशा उच्यन्ते॥**

**किं तर्हि?।**

**आर्धधातुक इति। तद्विशेषणं लुङ्ग्रहणम्॥**

**( प्रदीपः ) तद्विशेषणं लुङ्ग्रहणमिति।** तेन लुङ्परे चिण्यादेशविधानम्॥

**( उद्द्योतः ) लुङ्परे चिणीति।** लुङ्परार्धधातुकविषये इत्यर्थ इति भावः॥

**( तत्त्वालोकः )** भाष्ये—**नैष दोष इति**—यत इति शेषः।

( आक्षेपभाष्यम् )

**इह च—सर्वस्तोमः सर्वपृष्ठः। 'सर्वस्य सुपि' इत्याद्युदात्तत्वं न प्राप्नोति॥**

( एकदेशिसमाधानभाष्यम् )

**तत्रापि वक्तव्यम्॥**

**( उद्द्योतः )** भाष्ये—**तत्रापीति।** **लुमता तस्मिन्नित्येत**दित्यर्थः॥

( सिद्धान्तिसमाधानभाष्यम् )

**न वक्तव्यम्। 'न लुमताङ्गस्य' इत्येव सिद्धम्।**

**कथम्?।**

**न लुमता लुप्तेऽङ्गाधिकारः प्रतिनिर्दिश्यते॥**

**किं तर्हि?।**

**योऽसौ लुमता लुप्यते तस्मिन् यदङ्गं तस्य यत्कार्यं तन्न भवति॥**

**( प्रदीपः ) न लुमतेति।** अङ्गस्येत्यस्य स्वरितत्वाप्रतिज्ञानात्त्र लुमता लुप्ते प्रत्यये यदङ्गं तस्य यत्कार्यं प्रत्ययाश्रयमाङ्गमनाङ्गं वा तन्न भवतीत्यर्थः॥

**( उद्द्योतः ) लुप्ते प्रत्यये यदङ्गमिति।** लुप्तप्रत्ययनिरूपिताङ्गसंज्ञकस्य यत्कार्यमित्यर्थः। **उत्क्रामेत्यादौ** तु परस्मैपदनिमित्ताङ्गसंज्ञकस्य न कार्यम्। किन्तु शिदादिनिमित्ताङ्गसंज्ञकस्येति न दोषः॥ **संजिगमिषेत्यादौ** सनः कार्यं नाङ्गसंज्ञकस्येति न दोषः॥ किञ्च परस्मैपदग्रहणस्य तङानाभावोपलक्षणत्वादपि न दोषः॥ **अगायीत्यादौ** तु न दोषः, लुङ्निमित्ताङ्गत्ववतश्चिणन्तस्य कार्याभावादिति बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**न लुमतेति**—यत इत्यादिः। एवमग्रेऽपि। अङ्गपदसत्त्वादाह—**यदङ्गमिति।**

प्रदीपे—सिद्धौ हेतुमाह—**अङ्गस्येति।** नन्वेवमपि कथं सिद्धिरित्यत आह—**तत्रेति।** तथा सतीत्यर्थः।

उद्द्योते—युक्त्यन्तरमप्याह—**किञ्चेति।**

( आक्षेपभाष्यम् )

**एवमपि—सर्वस्वरो न सिध्यति॥**

**( उद्द्योतः )** भाष्ये—**एवमपीति।** अङ्गाधिकारप्रतिनिर्देशाभावेऽपीत्यर्थः॥

( समाधानभाष्यम् )

**कर्तव्योऽत्र यत्नः॥ न लुमताङ्गस्य॥ ६३॥**

**( प्रदीपः )** कर्तव्योऽत्र यत्न इति। सर्वशब्दार्थं वचनं कर्तव्यम्॥ ६३॥

**( उद्द्योतः ) वचनं कर्तव्यमिति।** सौवर्यः सप्तम्यस्तदन्तसप्तम्य इत्येतत्॥ ६३॥

**( तत्त्वालोकः )** भाष्ये—**कर्तव्य इति**—नैष दोषः, यत इत्यादिः।

उद्द्योते—**इत्येतदिति**—अत्र विषये विशेषविचारः प्रकृतसूत्रारम्भभाष्यव्याख्यातोऽवगन्तव्यः।

---

( ५८ उपधासंज्ञासूत्रम् ॥ १ । १ । ९ आ० ५ सू० ॥ )

# अलोऽन्त्यात्पूर्व उपधा ॥१।१।६५॥

( अल इत्यस्य पञ्चम्यन्तत्वनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

**किमिदमल्ग्रहणमन्त्यविशेषणम्?॥**

**( प्रदीपः )** अलोऽन्त्यात्॥ ६५॥ **किमिदमिति।** प्रथमा पञ्चमी वेति सन्देहात्प्रश्नः॥

**( तत्त्वालोकः )** प्रदीपे—**प्रथमेति**—अल इत्यत्रेत्यादिः। एवमग्रेऽपि।

( इष्टापत्तिभाष्यम् )

**एवं भवितुमर्हति॥**

**( प्रदीपः ) एवमिति।** प्रथमायामभिप्रेतायामसंदेहार्थमलित्येकवचनं वक्तव्यं स्याद्, अन्त्यादिति पञ्चमीसाहचर्यादाल इत्यपि पञ्चम्यन्तमिति भावः॥

**( उद्द्योतः )** अलोऽन्त्यात्॥ ६५॥ **असन्देहार्थमिति।** अन्त्यात् पूर्वोऽलित्येव वदेदिति भावः॥

**( तत्त्वालोकः )** भाष्ये-**एवम्**—अल्ग्रहणमन्त्यविशेषणमिति।

प्रदीपे—**एकवचनम्**—एकवचनान्तम्। **स्यादिति**—उच्यते च 'अलोऽन्त्यात्पूर्व' इति, तस्मादिति शेषः।

उद्द्योते—'अलन्त्यात्पूर्व' इत्युक्तेऽपि सन्देहादाह-**अन्त्यादिति।** अल्ग्रहणस्यान्त्यविशेषणत्वे एव-'अलोऽन्त्यात्पूर्व' इति निर्देशो युज्येत, पूर्वविशेषणत्वे त्वसन्देहाय 'अन्त्यात्पूर्वोऽलि'त्येव निर्दिशेदित्याशयः।

( ४७१ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातप्रतिषेधः॥ १ ॥ * ॥**

( भाष्यम् )

**उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत्संघातस्य प्रतिषेधो वक्तव्यः॥ संघातस्योपधासंज्ञा प्राप्नोति॥**

**तत्र को दोषः?।**

'शास इदङ्हलोः' शिष्टः शिष्टवान् । संघातस्येत्त्वं प्राप्नोति ॥

( प्रदीपः ) **अल्ग्रहणमिति** । निर्दिश्यतेऽभिधीयतेऽनेनेति निर्देशः । यद्यन्त्यः प्रत्याय्यत इत्यर्थः । **सङ्घातप्रतिषेध इति** । पूर्वस्याविशेषितत्वात् समुदायावयवसन्निधौ च समुदायस्यैव कार्यित्वादेकाज्द्विर्वचन इवेति भावः ॥ अन्त्यविशेषणत्वे वर्णनिर्देशे जातिग्रहणेप्यल इत्युपादानसामर्थ्यात् संख्या विवक्ष्यते ॥

( उद्द्योतः ) **अल्ग्रहणमन्त्यनिर्देश** इत्यनयोः सामानाधिकरण्यमनुपपन्नमत आह—**अभिधीयतेऽनेनेति** । अल्ग्रहणमन्त्यप्रत्यायकं चेदित्यर्थः । **घञजपः** पुंसीति निर्देशशब्दस्य पुंस्त्वम् ॥ प्राप्तिपूर्वकत्वात्प्रतिषेधस्य, प्राप्तिमाह-**पूर्वस्येति** ॥ **एकाजिति** । यद्यप्यत्र समुदायसंज्ञया नावयवानामनुग्रहः, तथापि कदाचिदविशेषात्सङ्घातस्यापि स्यादित्यनिष्टमात्रापादने भाष्यतात्पर्यमिति बोध्यम् ॥ ननु संज्ञिवदवधिरपि कस्माज् जातिग्रहणप्राप्तः समुदायो न निषिध्यतेऽत आह—**अन्त्येति** । **संख्या विवक्ष्यत इति** । ज्ञापकसिद्धस्यासार्वत्रिकत्वादत्रानेका व्यक्तिर्न गृह्यत इति भावः ॥ सङ्ख्याविवक्षा तु उद्देश्यगतत्वादयुक्ता ॥

( तत्त्वालोकः ) भाष्ये—**उपधासंज्ञायाम्**—उपधासंज्ञासूत्रे । **अन्त्यनिर्देशश्चेदिति**—अन्त्यप्रत्यायकश्चेदित्यर्थः । तर्हीति शेषः । **संघातस्योपधासंज्ञा प्राप्नोतीति**—अला पूर्वस्याविशेषणाद् विनिगमनाविरहाद्वर्णस्येव समुदायस्याप्युपधासंज्ञा प्राप्नोतीत्यर्थः । अन्यथेत्यादिः । **तत्र**—तथा सति । **संघातस्य**—सङ्घातस्यापि । तथा च-वर्णस्य संज्ञित्वे शिष्ट इत्यादेः सिद्धावपि समुदायस्य तत्त्वे स न सिद्ध्येदिति भावः ।

प्रदीपे—**यदीति**—तथा चेत्यादिः । अल्ग्रहणेनेति शेषः । **पूर्वस्येति**—अलेत्यादिः । **अन्त्येति**—अल इत्यादिः ।

उद्द्योते—**अल्ग्रहणमिति**—नन्वित्यादिः । **अनुपपन्नमिति**—भिन्नार्थकत्वादिति भावः । 'अल्ग्रहणमन्त्यनिर्देशश्चेदि'ति भाष्यस्य कैयटेन फलितार्थस्यैवोक्तत्वाच्छाब्दार्थमाह—**अल्ग्रहणमिति** । अन्त्यविशेषणत्वादिति भावः । ननु विशेषणविशेष्ययोः समानलिङ्गताया नियमात् कथं निर्देश इत्यस्य पुंस्त्वमित्यत आह—**घञजेति** । **प्राप्तिम्**—संघातस्य प्राप्तिम् । दृष्टान्तवैषम्योपपादनेन कैयटोक्तं खण्डयति—**यद्यपीति** । **अपिना**-वर्णस्य परिग्रहः । **संज्ञिवदिति**—अत्र पक्षे यथा विनिगमनाविरहप्राप्तः समुदायः संज्ञी निषिध्यते, तथेत्यर्थः । **ज्ञापकसिद्धस्य**—वर्णग्रहणे जातिग्रहणस्य । कैयटोक्तं निराकरोति—**संख्येति** ।

( प्रथमान्तपक्षाभ्युपगमभाष्यम् )

यदि पुनरलन्त्यादित्युच्यते ॥

( प्रदीपः ) **यदि पुनरिति** । अत्राप्यल्ग्रहणसामर्थ्यात् संख्या विवक्ष्यते, पिबेरदन्तत्वप्रतिज्ञानाच्च लिङ्गात् । अल्समुदायस्य संज्ञित्वे गुणस्य प्राप्तिरेव नास्ति, किमदन्तत्वप्रतिज्ञानेन ॥

( उद्द्योतः ) **पिबेरदन्तत्वेति** । अल्समुदायस्य लघुत्वाभावादिति भावः ॥ सूत्रं तु उखादौ चरितार्थम् । कदाचिदिकारस्याप्युपधात्वेन चिन्त्यमिदम् ॥

( तत्त्वालोकः ) प्रदीपे—**अत्रापि**—अलः पूर्वविशेषणत्वेऽपि । अत्रैव हेत्वन्तरमप्याह—**पिबेरिति** । **अलिति**—अन्यथा वर्णनिर्देशे जातिग्रहणादित्यादिः । **नास्ति**—नास्तीति ।

उद्द्योते—गुणाप्राप्तौ हेतुमाह—**अलिति** । नन्वेवन्तत्र 'पुगन्ते'ति सूत्रे लघूपधग्रहणसामर्थ्याच्चेत्येव कुतो नोक्तमित्यत आह—**सूत्रन्त्विति** । 'पुगन्ते'ति सूत्रे लघूपधग्रहणन्त्वित्यर्थः । यत्र पूर्वः केवल एवेत्याशयः । कैयटोक्तं खण्डयति—**कदाचिदिति** । विनिगमकाभावादिति भावः । **अपिना**—समुदायस्य समुच्चयः । तथा च-पूर्वत्रैव प्रकृतेऽपि-'वर्णग्रहणे जातिग्रहणस्यासार्वत्रिकत्वादत्राप्यनेका व्यक्तिर्न गृह्यते इत्येव' भावोऽवगन्तव्यः ।

( प्रथमान्तपक्षे दूषणभाष्यम् )

एवमप्यन्त्योऽविशेषितो भवति ॥

तत्र को दोषः ? ।

संघातादपि पूर्वस्योपधासंज्ञा प्रसज्येत ॥

तत्र को दोषः ? ।

'शास इदङ्हलोः' शिष्टः शिष्टवान् । शकारस्येत्त्वं प्रसज्येत ॥

सूत्रं च भिद्यते ॥

( प्रदीपः ) **सूत्रं चेति** । अलन्त्यादिति पठ्यमान इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**एवमपीति**—एवञ्चेत्यर्थः । अत्रेति शेषः । नन्विदन्तन्त्रेणान्त्यपूर्वयोर्विशेषणमस्त्विति चेन्न, अस्य विभिन्नविभक्त्यन्तविशेष्ययोस्तयोरेकरूपेणान्वयासम्भवात् । **तत्र**—तथा सति । एवमग्रेऽपि । **शकारस्य**—शकारस्यापि । नन्वत एव-अल् उभयरूपेणान्त्यपूर्वयोर्विशेषणमस्त्वित्यत आह—**सूत्रञ्चेति** । तथा सति वाक्यभेदलक्षणः सूत्रभेद आपद्येतेत्यर्थः । केचित्तु-नन्वत एवात्र न्यासेऽलिति लुप्तपञ्चम्यन्तमाश्रीयेतेत्यत आह—**सूत्रञ्चेति** । इति वदन्ति ॥ तथा चापाणिनीयत्वादस्य न्यासस्य पाठे पुण्यजनकता नोपपद्येतेति भावः ।

( सिद्धान्तभाष्यम् )

यथान्यासमेवास्तु ॥

( तत्त्वालोकः ) **यथान्यासमिति**—एवन्तर्हीत्यादिः ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्** उपधासंज्ञायामल्ग्रहणमन्त्यनिर्देशश्चेत् सघातप्रतिषेधः** इति ॥

( परिहारभाष्यम् )

नैष दोषः ।

( ४७२ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अन्त्यविज्ञानात्सिद्धम् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति ॥

( प्रदीपः ) **अन्त्यविज्ञानादिति** । उपधाया इति षष्ठ्यन्त्यमलं नीयत इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—**सिद्धमिति**—यत इत्यादिः ।

प्रदीपे—'शास इदि'ति सूत्रे 'अनिदिताम्'ि ति सूत्रादनुवृत्तस्योपधाया इत्यस्य स्थानषष्ठ्यन्तत्वाभ्युपगमाद् 'अलोऽन्त्य' परिभाषयाऽऽकारस्यैवेत्त्वप्रवृत्तेरित्याशयेनाह—**उपेति**। यत इत्यादिः।

**( ४७३ समाधानबाधकवार्तिकम् ॥ ३ ॥ )**

## ॥ ॐ ॥ अन्त्यविज्ञानात् सिद्धमिति चेन्नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ ॐ ॥

**( भाष्यम् )**

**अन्त्यविज्ञानात् सिद्धमिति चेत्। तन्न ॥**

**किं कारणम् ?।**

**'नानर्थकेऽलोन्त्यविधिरनभ्यासविकारे' ॥**

**अनर्थकेऽलोन्त्यविधिर्नेत्येषा परिभाषा कर्तव्या ॥**

**किमविशेषेण ?।**

**नेत्याह। अनभ्यासविकारे—अभ्यासविकारान् वर्जयित्वा। 'भृञामित्' 'अतिपिपर्त्योश्च' इति ॥**

**( प्रदीपः ) अनभ्यासविकार इति**। अभ्यासोऽनर्थकः। शब्दस्य ह्यावृत्तिर्नार्थस्य ॥

**( उद्द्योतः ) शब्दस्य हीति**। एकाज्धातुविषयमिदम्। अनेकाक्षु प्रथमस्यैकाचो द्वित्वेनार्थवत्त्वशङ्कैव नेति बोध्यम् ॥ एवं चोत्तरखण्ड एवार्थवानिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अविशेषेणेति**—अनर्थकमात्रे इत्यर्थः। तटस्थ उत्तरमनुवदति—**नेत्याहेति**। समाधातेति शेषः **इतीति**—तेन बिभर्त्ति, पिपर्त्तीत्यादावभ्यासान्त्यस्येत्त्वं सिद्ध्यतीति शेषः।

**( प्रयोजनजिज्ञासाभाष्यम् )**

**कान्येतस्याः परिभाषायाः प्रयोजनानि ?।**

**( ४७४ परिभाषाप्रयोजनवार्तिकम् ॥ ४ ॥ )**

## ॥ ॐ ॥ प्रयोजनमव्यक्तानुकरणस्यात इतौ ॥ ४ ॥ ॐ ॥

**( भाष्यम् )**

**'अव्यक्तानुकरणस्यात इतौ' इत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोन्त्यविधिर्न भवतीति न दोषो भवति ॥**

**( प्रदीपः ) अव्यक्तानुकरणस्येति**। अव्यक्तानुकरणस्य योऽच्छब्दस्तस्येतौ पररूपमिति सूत्रार्थः ॥

**( उद्द्योतः ) अव्यक्तानुकरणस्येति**। अच्छब्दान्तस्याव्यक्तानुकरणस्येत्यर्थे संपूर्णस्याच्छब्दस्य पररूपानापत्तिरित्यतो वैयधिकरण्यमुक्तम् ॥ अव्यक्तानुकरणं योऽच्छब्द इति तु नार्थः। **एकाचो नेति** निषेधारम्भादित्यलम् ॥

**( तत्त्वालोकः )** भाष्ये—**अव्यक्तानुकरणस्येति**—यतः-पटत्-इति, पटितीत्यत्र पररूपमित्यादिः।

प्रदीपे—सूत्रे 'अतः' इत्यत्र षष्ठ्येव; न तु पञ्चमी, इताविस्युक्त्यैव-अति इतः पूर्वत्वस्येवेतौ-अतः परत्वस्यापि लाभादित्याशयेनाह—**तस्येति**। **इतौ**—इत्यवयवेऽचि।

उद्द्योते—ननु 'सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमि'ति न्यायेन वैयधिकरण्यमयुक्तमित्यत आह—**अच्छब्दान्तस्येति**। ननु तेनैव न्यायेनार्थान्तरमेव कुतो नेत्यत आह—**अव्यक्तानुकरणमिति**।

**( प्रयोजननिराकरणभाष्यम् )**

**नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—नान्त्यस्य पररूपं भवतीति। यदयम्—'नाम्रेडितस्यान्त्यस्य तु वा' इत्याह ॥**

**( प्रदीपः ) यदयमिति**। म्रेडितस्येत्येव वक्तव्यं स्यात् ॥

**( उद्द्योतः )** ननु विकल्पार्थं तदावश्यकमत आह—**वाम्रेडितस्येति**। अन्त्यस्य पूर्वेण नित्ये पररूपे प्राप्ते इति शेषः ॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति**—यत इत्यादिः। **अयम्**-आचार्यः।

**( ४७५ प्रयोजनवार्तिकम् ॥ ५ ॥ )**

## ॥ ॐ ॥ घ्वसोरेद्धावभ्यासलोपश्च ॥ ॐ ॥

**( भाष्यम् )**

**घ्वसोरेद्धावभ्यासलोपश्चेत्यन्त्यस्य प्राप्नोति। अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ॥**

**( प्रदीपः ) घ्वसोरिति**। **अनभ्यासविकार** इति प्रतिषेधो रूपवत्यादेशे। लोपस्तु नीरूपः। तथा च परस्पशायां **लोपागमवर्णविकारज्ञ** इति लोपविकारौ भेदेन निर्दिष्टौ ॥

**( उद्द्योतः ) भेदेन निर्दिष्टाविति**। यद्यप्येक**देशविकृतस्ये**त्यादौ लोपोऽपि विकारपदेनोच्यते। तथापि व्याख्यानादेवात्रेदृशार्थावगतिरिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**घ्वसोरिति**—यतो देहीत्यादावभ्यासलोप इत्यादिः।

प्रदीपे—**नन्वनभ्यासविकार** इति प्रतिषेधादत्राभ्यासविकारे कथन्तस्याः प्रवृत्तिरित्यत आह—**अनभ्यासेति**। तथा चात्र-विकारपदेन वर्णात्मक आदेश एव ग्राह्य इति भावः।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम्। पुनर्लोपवचनसामर्थ्यात्सर्वस्य भविष्यति ॥**

**( प्रदीपः ) पुनर्लोपेति**। **लोपो यी**त्यतो लोपग्रहणेऽनुवर्तमान इति भावः ॥ तत्र **घ्वसोरेद्धावभ्यासस्य चे**ति वक्तव्यम्। तत्र व्याख्यानादभ्यासस्य लोप एव भविष्यति, न त्वेत्त्वम्। योगविभागो वा करिष्यते—**घ्वसोरेद्धौ**। ततो**ऽभ्यासस्येति**। अत्र च लोपोऽनुवर्तिष्यते। तत्र पुनर्लोपवचनात् सर्वापहारार्थ**दलोन्त्यस्ये**ति बाध्यते ॥

**( उद्द्योतः )** ननु लोपग्रहणाभावे **घ्वसोरेद्धावभ्यासस्ये**त्युक्ते चकाराभावादन्यवचनाच्च प्रकृतासंबन्धे एत्त्वमेव स्यादत आह—**तत्र घ्वसोरित्यादि** ॥ ननु चेनानुवृत्तावपि **लोपोऽभ्यासस्यैवे**त्यत्र नियामकाभावात्पर्यायेण त्रयाणामप्येत्त्वलोपौ स्यातामत आह—**तत्र व्याख्यानादिति**। आगन्तूनामन्ते निवेशेनाभ्यासस्य लोपसंनिहितत्वादिति भावः ॥ **नन्वभ्यासपदोत्तरश्चकारः** स्थान्यन्तरमेव समुच्चिनुयात् न विधेयान्तरमिति **एत्त्वमभ्यासस्यापि** स्यादतः **परिहारा**-

न्तरमाह—**योगविभागो वेति** ॥ **अत्रेति** । न त्वेत्त्वमित्यर्थः । योगविभागसामर्थ्यादिति भावः ॥ **सर्वापहारेति** । लोप एव, नावशेषः कस्यचिदित्यर्थादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**पुनर्लोपेति**—यतः 'घ्वसोरि'ति सूत्रे इत्यादिः ।

प्रदीपे—**तत्र**—तदनुवृत्त्यभ्युपगमे । **तत्र**—चकारेण तदनुवृत्तौ । **अत्र च लोपः**—द्वितीये लोप एव । **तत्र**—तेन प्रकारेण निर्वाहे ।

उद्द्योते—**अन्येति**—एदित्यर्थः । **प्रकृतासम्बन्धे**—अभ्यासस्य 'लोपो यी'त्यत्र प्रकृतेन लोपेनासम्बन्धे । **एवेन**-लोपव्यवच्छेदः ॥ **त्रयाणाम्**—घ्वसभ्यासानाम् । **संनिहितत्वेति**—तथा च-घ्वसोरेत्त्वसंनिहितत्वात्तयोरेत्त्वमेव भविष्यति, न तु लोप इति भावः ।

**( निराकरणयुक्त्यन्तरकदेशिभाष्यम् )**

**अथवा—शिल्लोपः करिष्यते । स 'शित्सर्वस्य' इति सर्वादेशो भविष्यति ॥**

**( आक्षेपभाष्यम् )**

**स तर्हि शकारः कर्तव्यः ॥**

**( समाधानभाष्यम् )**

**न कर्तव्यः । क्रियते न्यास एव द्विशकारको निर्देशः'—घ्वसोरेद्धावभ्यासलोपश्श्च' इति ॥**

**( प्रदीपः ) द्विशकारको निर्देश इति** । लोपशब्दात् कृदन्तात्संज्ञिनार्थेनार्थवत्त्वाद्विभक्तौ कृतायां शकारः प्रतिनिर्दिश्यते । तस्य चेत्संज्ञायां सत्यां सर्वादेशो लोपो भवति । इत्संज्ञोपदेशे एव प्रवर्तते । तत्कार्यं तु प्रयोग इत्येष सिद्धान्तः ॥

**( उद्द्योतः )** ननु लोपशशब्दस्यासंज्ञात्वेनानर्थक्यात्सुरेव न स्यात्, उत्पत्तौ वा **हल्ङ्याब्दिलोपाद् द्विशकारकं** इत्यनुपपन्नमत आह—**लोपशब्दादिति** । पदस्य संयोगान्तत्वाभावादसन्देहाय च **झलां जशि**त्यत्र जश्त्ववत्संयोगान्तलोपसंयोगादिलोपौ नेति बोध्यम् ॥ **इत्संज्ञेति** । धातुप्रातिपदिकप्रत्ययनिपातागमादेशानां **हलन्त्य**मिती त्संज्ञायामपि न दोषः । शस्य स्वरूपेणार्थवत्तया प्रातिपदिकत्वात्, कुण्डिनच इव ॥ **उपदेश इति** तु तत्र नानुवर्तत इति तत्र भाष्ये स्पष्टम् ॥ **उपदेश एवेति** । अन्तरङ्गत्वादिति भावः ॥ एतेन लोपविधानकाले शित्त्वाभावात्कथं सर्वादेश इत्यपास्तम् ॥ **कार्यं त्विति** । **अनेकाल्शिदित्यादौ** समीपेऽप्यवयवत्वारोपेण न दोष इति भावः । **एकान्ता अनुबन्धा** इति मुख्यपक्षे तु आद्यमेव समाधानमिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**क्रियते इति**—यत इत्यादिः ।

प्रदीपे—संज्ञायां कृतोऽनुबन्धः सञ्ज्ञिनि फलति, यथा घुटीत्याशयेनाह—**तत्कार्यन्त्विति** ।

उद्द्योते—**आनर्थक्यादिति**—प्रातिपदिकत्वाभावेनेति शेषः । तस्यापि स्वरूपतोऽर्थवत्त्वेन प्रातिपदिकत्वसम्भवादाह—**उत्पत्तौ वेति** । नन्वेवमपि 'संयोगान्तस्ये' त्यनेनैकशकारस्य लोपाद् 'द्विशकारकः' इत्यस्यानुपपत्तिरस्त्येवेत्यत आह—**पदस्येति** । नन्वेवमपि झलि परे यः संयोगस्तदादित्वात् 'स्कोरि'ति लोपः स्यादित्यत आह-**असन्देहाय चेति** । **झलामिति**—झशपरकझल्त्वेऽपीत्यादिः । ननु शकारस्य तदन्यतमत्वाभावात्कथन्तेनेत्संज्ञेत्यत आह—**शस्येति** । नन्वेवमपि तस्योपदेशाभावात्कथन्तेनेत्त्वमित्यत आह—**उपेति** । **तत्र**—'हलन्त्यमि'त्यत्र । एवमग्रेऽपि । ननु लोपशकारयोर्भिन्नपदत्वात् कथं लोपपदार्थे तदित्त्वफलमित्यत आह—**अनेकालिति** । इदं समाधानम्-अनेकान्ता अनुबन्धा इति पक्षे । तत्र हि-अनुबन्धानां काकादिवदनवयवीभूयैव व्यावर्त्तकत्वमिति भावः ॥ अत एवाह—**एकान्ता इति** ।

**( ४७६ प्रयोजनवार्तिकम् ॥ ६ ॥ )**

**॥ * ॥ आपि लोपोऽकोऽनचि ॥ * ॥**

**( न्यासान्तरत्वशङ्कानिराकरणभाष्यम् )**

**तिष्ठति सूत्रम् । अन्यथा व्याख्यायते ॥**

**( प्रदीपः ) तिष्ठति सूत्रमिति** । लक्ष्यलक्षणभावस्याविवक्षितत्वात्तिष्ठत् सूत्रमिति न कृतम् । तत्रायमर्थः—तिष्ठति सूत्रम् । न प्रत्याख्यायते । तत्तु अन्यथा व्याख्यायते । तत्रानचीत्यनेन हलीत्यस्यार्थो व्याख्यातः । आप्यक इत्यनुवृत्तिर्दर्शिता ॥

**( उद्द्योतः )** भाष्ये **अन्यथा व्याख्यायत इति** । न तु तत्प्रत्याख्याय तत्स्थाने वचनान्तरं पठितमिति भ्रमितव्यमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**आपि लोप इति**—प्रयोजनमित्यनुषज्यते । एवं पूर्वत्र परत्र चापि । 'हलि लोपः' इति सूत्रस्य स्थाने 'आपि लोपोऽकोऽनची'ति न्यासस्य दर्शनात् तत्सूत्रं प्रत्याख्याय तत्सूत्रस्थाने न्यासान्तरमिदमाश्रितमिति भ्रमो मा भूदित्यर्थमाह—**तिष्ठतीति** । **सूत्रम्**—'हलि लोपः' इति सूत्रम् । एवं प्रदीपेऽपि । **अन्यथेति**—प्रकारान्तरेण ( आपि लोपोऽकोऽनचीति प्रकारेण ) इत्यर्थः । किन्तु तदेवेत्यादिः ।

प्रदीपे—नन्वत्र 'लक्षणहेत्वोः क्रियायाः' इति सूत्रेण शतृप्रत्यये तिष्ठत्सूत्रमिति वक्तव्यमित्यत आह—**लक्ष्येति** । **तत्र**—तदभावे । **तत्र**—अन्यथा व्याख्याने ।

**( वार्तिकव्याख्याभाष्यम् )**

**आपि हलि लोप इत्यन्त्यस्य प्राप्नोति । अनर्थकेऽलोऽन्त्यविधिर्नेति न दोषो भवति ॥**

**( उद्द्योतः ) इत्यन्त्यस्येति** । एवं च तेन दलोपे आभ्यामित्यसिद्धिरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**आपि हलीति**—यत आभ्यामित्यादौ इदो लोप इत्यादिः ।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । अन एव लोपं वक्ष्यामि ॥**

**( प्रदीपः ) अन एवेति** । **अनाप्यक** इति सामान्येनानादेशं विधाय हलादौ तु तस्यैव लोपो विधीयत इत्यर्थः ॥ येन नाव्यवधानमिति त्यदाद्यत्वेन व्यवधानमाश्रीयते ॥

**( उद्द्योतः )** ननु मस्थानिकत्यदाद्यत्वेन व्यवधानान्नानो हलादिविभक्तिपरतेत्यत आह—**येन नेति** । आप्परत्वेनेदमो विशेषणाच्चेत्यपि बोध्यम् ॥ इदमिदो लोप इत्यर्थेऽप्यावश्यकम् । एवं च नलोपे द्वयोरकारयोः पररूपे **सुपि चेति** दीर्घे सिद्धमाभ्यामिति ।

**( तत्त्वालोकः )** भाष्ये—**अन एवेति**—यत इत्यादिः ।

प्रदीपे—अत्र पक्षे 'अनाप्यकः' 'हलि लोपः' इत्यनयोर्बाध्यबाधकभावाभावादाह—**अनाप्येति । सामान्येन**—आप्-मात्रे । **तस्यैव**—अलोऽन्त्यपरिभाषया अनो नस्यैव ।

**( गौरवाक्षेपभाष्यम् )**

**तदनो ग्रहणं कर्तव्यम् ? ॥**

**( गौरवनिराकरणभाष्यम् )**

**न कर्तव्यम् । प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम् ? ।**

**'अनाप्यकः' इति ॥**

**( तत्त्वालोकः ) न कर्तव्यमिति**—यत इति शेषः ।

**( अनुवृत्तिबाधकभाष्यम् )**

**तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।**

**( तत्त्वालोकः ) तद्वै इति**—तद्धीत्यर्थः । न तदनुवृत्त्याऽत्र निर्वाह इत्यादिः ।

**( अनुवृत्तिसाधकभाष्यम् )**

**हलीत्येषा सप्तमी अन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति ॥**

**( तत्त्वालोकः )** हलीत्येषेति—नैवाऽनुपपत्तिर्यत इत्यादिः ।

**( ४७७ प्रयोजनवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ अत्र लोपोऽभ्यासस्य ॥ * ॥

**( भाष्यम् )**

**अन्त्यस्य प्राप्नोति । 'नानर्थकेऽलोऽन्त्यविधिः' इति न दोषो भवति ॥**

**( तत्त्वालोकः ) अन्त्यस्येति**—यत ईप्सतीत्यादावभ्यासलोपः 'अत्र लोपोऽभ्यासस्ये'तीत्यादिः ।

**( प्रयोजननिराकरणभाष्यम् )**

**एतदपि नास्ति प्रयोजनम् । अत्रग्रहणसामर्थ्यात्सर्वस्य भविष्यति ॥**

**( प्रदीपः ) अत्रग्रहणसामर्थ्यादिति** । मीमादीनामधिकारादेव सिद्धेरत्रग्रहणादयमर्थ आश्रीयते—योऽभ्यासत्वेन निर्ज्ञातस्तस्य समग्रस्य लोपो न त्व**लोऽन्त्यस्येति ॥**

**( उद्द्योतः ) अत्रग्रहणादिति** । अत्रशब्देन पुनः सनः परामर्शात्सनि योऽभ्यासत्वाक्रान्तस्तस्य सर्वस्य लोप इत्यर्थ इति भावः ।

**( तत्त्वालोकः )** भाष्ये—**अत्रग्रहणेति**—यत इत्यादिः ।

प्रदीपे—**मीमादीनाम्**—'सनि मीमघुरभलभशकपतपदामच इस्' 'आप्ज्ञप्यृधामीत्' 'दम्भ इच्च' 'मुचोऽकर्मकस्य गुणो वा' इति सूत्रचतुष्टयोक्तानाम् ।

**( प्रयोजनसाधकभाष्यम् )**

**अस्त्यन्यदत्रग्रहणस्य प्रयोजनम् ।**

**किम् ? ।**

**सन्नधिकारोऽपेक्ष्यते । इह मा भूत्—दधौ ददौ ॥**

**( तत्त्वालोकः )** अस्त्यन्यदिति—नास्त्यत्र सामर्थ्यम्, यत इत्यादिः ।

**( प्रयोजनबाधकभाष्यम् )**

**अन्तरेणाप्यत्रग्रहणं सन्नधिकारमपेक्षिष्यामहे ॥**

**( तत्त्वालोकः ) अन्तरेणापीति**—तदपि नास्ति प्रयोजनम्, यत इत्यादिः । एवमग्रेऽपि । **सन्नधिकारमिति**—यथा पूर्वसूत्रे सन्नधिकारोऽपेक्ष्यते, तथाऽत्रापीत्यादिः । **अपेक्षिष्यामहे इति**—लक्ष्यानुरोधादिति भावः । एवमग्रेऽपि ।

**( प्रयोजनसाधकभाष्यम् )**

**संस्तर्हि सकारादिरपेक्ष्यते—सनि सकारादाविति । इह मा भूत्—जिज्ञापयिषतीति ॥**

**( प्रयोजनबाधकभाष्यम् )**

**अन्तरेणाप्यत्रग्रहणं सनं सकारादिमपेक्षिष्यामहे ॥**

**( तत्त्वालोकः ) सनं सकारादिमिति**—यथा 'सनि मीमे'ति सूत्रे 'सः स्यार्धधातुके' इत्यतः सीत्यनुवर्त्य सकारादौ सनीत्यर्थस्तथाऽत्रापीत्याशयः ।

**( प्रयोजनसाधकभाष्यम् )**

**प्रकृतयस्तर्ह्यपेक्ष्यन्ते—एतासां प्रकृतीनां लोपो यथा स्यात् । इह मा भूत्—पिपक्षति यियक्षति ॥**

**( तत्त्वालोकः ) एतासाम्**—'सनि मीमे'त्यादिसूत्रचतुष्टयोक्तानाम् ।

**( प्रयोजनबाधकभाष्यम् )**

**अन्तरेणाप्यत्रग्रहणमेताः प्रकृतीरपेक्षिष्यामहे ॥**

**( प्रयोजनसाधकभाष्यम् )**

**विषयस्तर्ह्यपेक्ष्यते—'मुचोऽकर्मकस्य गुणो वा' इति । इह मा भूत्—मुमुक्षति गामिति ॥**

**( प्रयोजनबाधकभाष्यम् )**

**अन्तरेणाप्यत्रग्रहणमेतं विषयमपेक्षिष्यामहे ॥**

**कथम् ? ।**

**अकर्मकस्येत्युच्यते, तेन यत्रैवायं मुचिरकर्मकस्तत्रैव भविष्यति ॥ तस्मान्नार्थोऽनया परिभाषया—नानर्थकेऽलोऽन्त्यविधिरिति ॥**

**( उद्द्योतः )** भाष्ये—**विषयमपेक्षिष्यामह** इति । मुचोऽकर्मकस्य गुण इत्यनुवर्तनीयम् । यत्र मुचोऽकर्मकस्य गुणस्तत्राभ्यासस्य लोप इत्यर्थः । अकर्मकग्रहणमात्रानुवृत्तौ तु मुमुक्षते वत्सः स्वयमेवेत्यत्रापि स्यादिति भावः ॥ **विभाषा भवदि**ति वार्तिकेऽपि वस्येत्येव सिद्धेऽवस्येत्युच्चारणसामर्थ्या**द अलोऽन्त्यस्येति न प्रवर्तते** इति प्रत्याख्याता परिभाषा ॥

**( तत्त्वालोकः )** उद्द्योते—**यत्रेति**—तथा चेत्यादिः । **नन्वेव**मपि 'विभाषा भवद्भगवदघवतामोच्चावस्ये'ति वार्तिकेन विधीयनम

ओकारोऽन्त्यस्य स्यादित्यत आह—**विभापेति** । एतेन भाष्यकृतो न्यूनताऽपि निराकृता । **परिभाषा**—'नानर्थकेऽलोन्त्यविधिरि'ति परिभाषा । तथा च शासेः शाशब्दस्योपधात्वेऽपि शिष्ट इत्यादि सिद्ध्यतीति भावः ।

( ४७८ न्यासान्तरवार्तिकम् ॥ ८ ॥ )

## ॥ ॐ ॥ अलोऽन्त्यात् पूर्वोऽलुप-धेति वा ॥ ॐ ॥

( भाष्यम् )

अथवा व्यक्तमेव पठितव्यम्—अलोऽन्त्यात्पूर्वोऽलुपधासंज्ञो भवतीति ।

( उद्द्योतः ) एवं च **अन्यविज्ञानात्सिद्ध**मित्यस्य स्थितत्वाद्वार्तिके वाशब्दप्रयोगस्तदाह—**अथवा व्यक्तमेवेति** ॥

( आक्षेपभाष्यम् )

तत्तर्हि वक्तव्यम् ? ॥

( परिहारभाष्यम् )

न वक्तव्यम् ॥

( ४७९ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ॐ॥ अवचनाल्लोकविज्ञानात् सिद्धम् ॥ॐ॥

( भाष्यम् )

अन्तरेणापि वचनं लोकविज्ञानात् सिद्धमेतत् । तद्यथा—लोके—अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते ॥ अलोऽन्त्यात्पूर्व उपधा ॥ ६५ ॥

( प्रदीपः ) **यथाजातीयकोऽन्त्य इति** । एतच्च ब्रुवता पञ्चमीपक्ष एवाश्रितः । षष्ठीप्रथमयोरपि न दोषः । षष्ठीपक्षे निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्य भवतीति अलां मध्ये योऽन्त्योऽल् तस्मात् पूर्व उपधासंज्ञ इत्यलेवोक्तान्न्यायात्प्रतीयते ॥ प्रथमाबहुवचनपक्षेऽप्ययमर्थः-अन्त्यात् पूर्वोऽलुपधासंज्ञ इति । अल इति जातौ बहुवचनम् , अवधिमत्तुल्यजातीयश्चावधिरिति अलोऽन्त्यादिति विज्ञायते ॥

( उद्द्योतः ) **एतच्चेति** । अवधिनाऽवधिमती निर्णयं ब्रुवतेत्यर्थः। संयोगोपधेत्यादिव्यवहारास्तु ,गौणा इति भावः ॥ **षष्ठीप्रथमयोरपीति** । दृष्टान्तेऽ**मीषां ब्राह्मणाना**मित्युपाददता भगवता सूचितमिदम् ॥ **उक्तान्न्यायादिति** । भाष्योक्तादित्यर्थः । **जातौ बहुवचनमिति** । भाष्यकृता जात्याख्यायामिति सूत्रप्रत्याख्यानादिदं चिन्त्यम् ॥ ६५ ॥

( **तत्त्वालोकः** ) भाष्ये—**अन्तरेणापीति**—यत इत्यादिः ।

प्रदीपे—**निर्धारणे षष्ठीति**—सौत्रत्वाच्चैकवचनमिति भावः ।

उद्द्योते—**गौणा इति**—अवयवधर्मस्य समुदाये आरोपादिति भावः । कैयटोक्तं खण्डयति—**भाष्यकृतेति** ।

( ५९-६० **परिभाषासूत्रे** ॥ १ । १ । ९ आ. ६-७ ॥ सू० )

## तस्मिन्निति निर्दिष्टे पूर्वस्य ॥१।१।६६॥

## तस्मादित्युत्तरस्य ॥ १ । १ । ६७ ॥

( उदाहरणनिरूपणाधिकरणम् )

( आक्षेपभाष्यम् )

किमुदाहरणम् ? ।

( प्रदीपः ) **तस्मिन्निति** ॥ ६६ ॥ **तस्मादिति** ॥ ६७ ॥ **किमुदाहरणमिति** । इतिकरणस्य गौरित्ययमाहेत्यादौ स्वरूपपदार्थकत्वेन व्यवस्थापकत्वदर्शनात्प्रश्नः ॥

( उद्द्योतः ) **तस्मिन्निति** ॥ ६६ ॥ **तस्मादिति** ॥ ६७ ॥ **स्वरूपपदार्थकत्वेनेति** । स्वरूपस्य तत्र विशेष्यत्वादिति भावः ॥ **प्रश्न इति** । **तस्मिन्नणि चे**त्यत्रैव वोतान्यत्रापीति प्रश्न **इति** भावः ॥

( **तत्त्वालोकः** ) उद्द्योते—**अत्रैवेति**—'तस्माच्छस' इति चेत्यादिः । **अन्यत्रापि**—'इको यणची'ति, 'द्व्यन्तरुपसर्गेभ्योऽप ईदि'ति चादावपि ।

( समाधानभाष्यम् )

इह तावत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति—'इको यणचि' दध्यत्र मध्वत्र ॥ इह 'तस्मादित्युत्तरस्य' इति—'द्व्यन्तरुपसर्गेभ्योऽप ईत्' द्वीपम् अन्तरीपं समीपम् ॥

( प्रदीपः ) **दध्यत्रेति** । यदि **तस्मिन्नणि** चेति **तस्माच्छस** इति चात्रैवैते परिभाषे उपास्थास्येतां तदा तत्रैव पूर्वग्रहणमुत्तरग्रहणं चाकरिष्येतामिति भावः ॥ अत्र व्यवच्छेद्यमस्ति-यौष्माकीण अस्मभ्यं देहि, आस्माकीन युष्मभ्यं दीयतामिति खञः परयोर्युष्मदस्मदोरादेशौ न भवतः ॥ वृक्षानित्यत्र च पूर्वसवर्णदीर्घभूताच्छसः पूर्वस्य षकारस्य नत्वं न भवति ॥ अथ शस इति स्थानषष्ठीति व्याख्यानात् षकारस्य न भवतीत्युच्यते । एवमप्युच्चरत आनुपलभत इत्यादौ पूर्वसवर्णदीर्घात्पूर्वस्य **शसो** नत्वं व्यवच्छेद्यमेव ॥

( उद्द्योतः ) **तत्रैव पूर्वेति** ॥ ननु **तस्मान्नुडचि, तस्मान्नुड्द्विहलः, तस्माच्छस** इति सूत्रत्रये उत्तरग्रहणे विपरीतं गौरवमिति चेन्न । यतो द्विहलो नुड्विधायके नास्योपयोगः, तत्राङ्गाधिकारेण लिङ्गनिमित्ताङ्गसंबन्धिदीर्घात्पूर्वस्य प्रत्यासत्त्या तदङ्गसंबन्धिनोऽसम्भवेन फलाभावात् ॥ एवं **तस्मान् नुडची**त्यत्रापि न दोषः, उत्तरपदाधिकारेण प्रत्यासत्त्या नञ्रूपपूर्वपदनिरूपितोत्तरपदस्यैव तेन नुड्विधानाद् इति भावः॥ **तस्मिन्निति** परामृष्टखञव्यवधानाय संबुद्धयन्तमुदाहरति—**यौष्माकीणेति** ॥ **षकारस्येति** । **तस्मादि**त्येतत्साहचर्या**च्छस इति** पञ्चमी । शसा च सामानाधिकरण्यं शसवयवे लक्षणयैवेति भावः ॥ मुख्यार्थे सामानाधिकरण्यासंभवात् स्थान्याकाङ्क्षासत्त्वाच्च अवयवषष्ठीत्याशङ्कते—**अथेति** ॥ **शस इति स्थानषष्ठी**त्यपाठः । **इति षष्ठीत्ये**व पाठः ॥ **आनि**त्यशब्दस्य शसि रूपम् ॥

( **तत्त्वालोकः** ) प्रदीपे—ननु 'तस्मिन्नणि चे'ति, 'तस्माच्छस' इति चात्रैतयोः परिभाषयोरुपस्थित्या किं व्यवच्छेद्यमित्यत आह—**अत्र व्यवच्छेद्यमस्तीति** । **व्याख्यानादिति**—व्याख्यानादेवेत्यर्थः । नत्वमिति शेषः ।

उद्द्योते—**अस्य**—उत्तरग्रहणस्य। **न दोष इति**—उत्तरग्रहणाभावे इति भावः। **अवयवषष्ठी—शस** इत्यवयवषष्ठी। नन्वेतेन 'स्थान'पदं विरुणद्धीत्यत आह—**शस इति**।

**( समाधानबाधकभाष्यम् )**

**अन्यथाजातीयकेन शब्देन निर्देशः क्रियते, अन्यथाजातीयक उदाह्रियते ॥**

**( प्रदीपः ) अन्यथाजातीयकेनेति**। इतिकरणात् स्वरूपग्रहणेनैव भाव्यमिति भावः॥ थाला प्रकारमात्रमभिधीयत इति तद्वतोऽभिधानाय जातीयर् प्रत्ययः कृतः॥ लौकिके प्रयोगे लाघवानादरप्रदर्शनाय प्रत्ययद्वयप्रयोगः, केवलेनापि जातीयरा प्रकारवान् गम्यत एव॥

**( उद्द्योतः ) इतिकरणादिति**। लोकेऽर्थप्रधानस्य पदार्थविपर्यासकेतिना शब्दप्रधानत्वदर्शनादिति भावः॥ नन्वेकार्थकप्रत्ययद्वयोपादानं व्यर्थमत आह—**थालेति**। एवं च **शब्देने**त्यनेन सामानाधिकरण्यानुपपत्तिः। जातीयस्तु तद्वति स्वभावादिति भावः॥ नन्वेवं जातीय एव प्रयुज्यतां किं थालेत्यत आह—**लौकिके इति**। उभयोः प्रकारवद्वृत्तित्वेऽप्येवं वक्तुं शक्यमिति उक्तयत्नो वृथा। अत एव कस्य प्रयोग इति चिन्त्यम्॥

**( तत्त्वालोकः )** भाष्ये—**अन्यथाजातीयकेनेति**—अत्र अन्येन ( सर्वनामत्वेन ) प्रकारेण ( स्मात्स्मिनौ ) प्रकारावस्य ( तस्मात्, तस्मिन्नित्यस्य निर्देश्यस्य ) इति विग्रहः। एवमग्रेऽपि। 'नैतदस्त्युदाहरणम्, यतः' इत्यादिः।

प्रदीपे—**इतिकरणादिति**—'तस्मिन्' 'तस्मादि'त्यनयोरिति भावः। **तद्वतः**—प्रकारवतः। **केवलेनापीति**—यत इत्यादिः।

उद्द्योते—**प्रधानस्येति**—शब्दस्येति शेषः। **एवञ्च**—प्रकारमात्रोक्तौ च। **तद्वति**—प्रकारवति। 'थाला प्रकारमात्रमि'त्यादि कैयटोक्तं दूषयति—**उभयोरिति**। **एवम्**—'लौकिके प्रयोगे' इत्यादि। **उक्तयत्नः**—तयोर्विभिन्नार्थकत्वप्रतिपादनरूपो यत्नः। **अत एव**—तत्र लाघवानादरादेव। **कस्य**—कप्रत्ययस्य। **चिन्त्यमिति**—तदिति शेषः।

**( प्रत्याक्षेपभाष्यम् )**

**किं तर्ह्युदाहरणम्?।**

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**इह तावत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति—'तस्मिन्नणि च युष्माकास्माकौ' इति॥ 'तस्मादित्युत्तरस्य' इति—'तस्माच्छसो नः पुंसि' इति॥**

**( सिद्धान्तिभाष्यम् )**

**इदं चाप्युदाहरणम्—'इको यणचि', 'द्व्यन्तरुपसर्गेभ्योऽप ईद्' इति॥**

**कथम्?।**

**सर्वनाम्नाऽयं निर्देशः क्रियते। सर्वनाम च सामान्यवाचि। तत्र सामान्ये निर्दिष्टे विशेषा अप्युदाहरणानि भवन्ति॥**

**( प्रदीपः ) इदं चापीति**। सिद्धान्तवादी॥ इतिकरणोऽत्रार्थनिर्देशार्थ एव, **स्वं रूप**मिति वचनात्स्वरूपग्रहणे प्राप्ते॥ **सर्वनाम्नाऽयमिति**। सूत्रान्तरोपात्तस्य **तस्मिन्नि**त्यस्य **तस्मादि**त्यस्य च नैतदनुकरणम्। किं तर्हि? सर्वनाम्ना निर्देश इत्यर्थः। तेन यत्र सप्तम्यर्थनिर्देशः पञ्चम्यर्थनिर्देशश्च तत्रोभयोरुपस्थानम्॥ **विशेषा अपीति**। अपिः संभावनायाम्, न समुच्चये। न हि विशेषपरित्यागेनेह शास्त्रे सामान्यमस्ति, यदुदाहरणं स्यात्। तस्मात्सर्वे विशेषा इहोदाहरणमित्यर्थः। सामान्यस्य सर्वविशेषेषु भावात्॥

**( उद्द्योतः )** ननु दूषितस्यैव कथमुदाहरणत्वेन दानमत आह—**सिद्धान्तेति॥ अर्थनिर्देशार्थ एवेति**। अन्यथा तस्मिन्निति शब्देऽव्यवहिते इत्यर्थः स्यादिति भावः। **नैतदनुकरणमिति**। प्रागुक्तयुक्तेरिति भावः॥ **सर्वनाम्नेति**। सप्तम्यन्तार्थकसर्वनाम्नेत्यर्थः॥ सप्तमीत्वस्य सप्तम्यन्तार्थकत्वबोधनायानुवादिकेति भावः॥ इतिशब्दलभ्यमर्थमाह—**यत्र सप्तम्यर्थेति**। सप्तम्यर्थबोध इत्यादर्थः॥ अत एव **तस्मान्नुडची**त्यादौ न प्रवृत्तिः, अचि इत्यस्य षष्ठ्यर्थत्वादिति भावः॥ **सप्तमीपञ्चम्यर्थौ**विधिकरणावधी। अयं पदोपस्थितिपक्षेऽर्थो दर्शितः। पक्षान्तरेऽपि सप्तम्यन्तार्थेऽव्यवहिते सतीत्यर्थो बोध्यः॥ भाष्ये—**सामान्यवाचीति**। बुद्धिस्थत्वेनैव नदादीनां बोधकतेति भावः॥ **सामान्यम्**। अनिर्धारितविशेषम्। **तस्मिन्नणि चे**त्यादेरपि सप्तमीपञ्चमीविशेषत्वादित्याशयः॥ **सामान्यस्य**। उक्तबुद्धिस्थत्वस्य। **सर्वविशेषेषु भावात्** सत्त्वादित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**सर्वनाम्नेति**—यत इत्यादिः। **सामान्यवाचीति**—बुद्धिस्थत्वोपलक्षितधर्मावच्छिन्नवाचीत्यर्थः। **तत्र**—तथा सति। **भवन्तीति**—बुद्धिस्थत्वोपलक्षितसप्तम्यन्तत्वावच्छिन्नत्वादिति भावः।

प्रदीपे—**सूत्रान्तरेति**—'तस्मिन्नणि चे'ति 'तस्माच्छस' इति च सूत्रेत्यर्थः। **समुच्चये इति**—सामान्यस्येति भावः।

उद्द्योते—**दूषितस्यैवेति**—खण्डितोदाहरणत्वस्यैव '**इको यण**ची'त्यादेरित्यर्थः। पुनरिति शेषः। **इत्यर्थः**—इत्याद्यर्थः। **प्रागुक्तयुक्तेः**—तथा सति तत्रैव पूर्वग्रहणमुत्तरग्रहणञ्च कुर्यादिति युक्तेः। **बोधनायेति**—तद्बोध्यार्थस्य निर्दिष्ट इत्यनेन सामानाधिकरण्याय चेत्याशयः। इतिः पुनस्तस्य तदर्थपरत्वं बोधयतीत्याह—**इतिशब्देति**। **सप्तमीति**—तदन्तेत्यर्थः। एवमग्रेऽपि।

**( आक्षेपभाष्यम् )**

**किं पुनः सामान्यम्, को विशेषः?॥**

**( प्रदीपः ) किं पुनरिति**। सामान्यविशेषभावस्यानवस्थानात्प्रश्नः। कदाचिद्दूराद्गोत्वमात्रग्रहणं पश्चात् कृष्णादिविशेषावगमः, कदाचित्तु पूर्वं कृष्णादेर्ग्रहणं पश्चाद्गोत्वादेः॥

**( उद्द्योतः )** उक्तमर्थमजानानस्य चोद्यमित्यभिप्रायेणाह—**सामान्येति**। **तस्मिन्निती**त्यस्य **तस्मिन्नणि चेत्या**दिः कथं विशेषः? तस्यापि खमादिनिरूपितसामान्यत्वादिति, **अची**त्यस्याप्यकाराद्यपेक्षया सामान्यत्वादिति च प्रश्न इत्यपि बोध्यम्॥ ननु कथमनवस्थितिः? पूर्वावगतं **सामान्यम्**, पश्चादवगतो **विशेषः**—इति व्यवस्थासंभवादत आह—**कदाचिदिति**। परिच्छेद्यपरिच्छेदकभावोऽनियत इत्यर्थः॥ एवं प्रकृतेऽप्यचीत्यादीनां बुद्धिस्थत्वेन परिच्छेदाद् बुद्धिस्थस्यापि तैः परिच्छेदादनिर्णय इति भावः॥

**( तत्त्वालोकः )** प्रदीपे—**दूरादिति**—अस्याग्रेऽपि सम्बन्धः। पूर्वमिति शेषः।

उद्द्योते—प्रश्नाशयान्तरमाह—**तस्मिन्नितीत्यस्येति**। **आदिना**—'इको यणची'त्यस्य परिग्रहः। कैयटेन दृष्टान्त एव तस्योक्तत्वाद् दार्ष्टान्तिके तमाह—**एवमिति**।

( समाधानभाष्यम् )

**गौः सामान्यम् । कृष्णो विशेषः ।**

**( प्रदीपः ) गौः सामान्यमिति ।** यद्विशेष्यं प्रधानं तत्सामान्यम् । यत्तु विशेषणत्वेन परोपकारितया निर्दिश्यते स विशेष इति तात्पर्यम् । इहापि **तस्मिन्नि**त्यनेन सप्तम्यर्थमात्रं सामान्यं निर्दिष्टम् । अचि-हलीत्यादयस्तु विशेषाः ॥

**( उद्द्योतः ) विशेष्यं प्रधानमिति ।** परिच्छेद्यमित्यर्थः ॥ **परोपकारितया** परिच्छेदकत्वेन । एवं प्रकृतेऽपि **तस्मिन्नि**त्यर्थस्य परिच्छेद्यत्वेन विवक्षणात्सामान्यत्वम्, **अची**त्यादीनां परिच्छेदकत्वविवक्षणाद्विशेषत्वमिति भावः ॥ तदाह—**इहापीति ।** अयं भावः—सप्तम्यन्तार्थे इत्युक्ते कस्मिन्नित्याकाङ्क्षोदयाद् अचीत्याद्यर्थस्य परिच्छेदकत्वाद्विशेषत्वमेवेति ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीं कृष्णः सामान्यम् , गौर्विशेषो भवति?॥**

( समाधानभाष्यम् )

**भवति ॥**

( आक्षेपभाष्यम् )

**यदि तर्हि सामान्यमपि विशेषो, विशेषोऽपि सामान्यम् , सामान्यविशेषौ न प्रकल्पेते ॥**

**( तत्त्वालोकः ) तर्हीति—**अस्य 'सामान्यविशेषावि'त्यनेनान्वयः ।

( समाधानभाष्यम् )

**प्रकल्पेते च ॥**

**कथम् ? ॥**

**विवक्षातः ।**

**यदाऽस्य गौः सामान्येन विवक्षितो भवति कृष्णो विशेषत्वेन, तदा गौः सामान्यम्; कृष्णो विशेषः । यदाऽस्य कृष्णः सामान्येन विवक्षितो भवति गौर्विशेषत्वेन, तदा कृष्णः सामान्यम् , गौर्विशेषः ।**

**( तत्त्वालोकः )** 'सामान्यं विशेष इति बुद्ध्यपेक्षमि'ति कणादोक्तिमनुसृत्याह—**विवक्षात इति ।** इदमेव व्याचष्टे—**यदाऽस्येति ।**

( दृष्टान्तान्तरभाष्यम् )

**अपर आह—'प्रकल्पेते च'**

**कथम् ? ॥**

**पितापुत्रवत् । तद्यथा—स एव कञ्चित्प्रति पिता भवति, कञ्चित्प्रति पुत्रो भवति । एवमिहापि स एव कञ्चित्प्रति सामान्यं, कञ्चित्प्रति विशेषः । एते खल्वपि नैर्देशिकानां वार्त्ततरका भवन्ति, ये सर्वनाम्ना निर्देशाः क्रियन्ते । एतर्हि बहुतरकं व्याप्यते ॥**

**( प्रदीपः ) पितापुत्रवदिति ।** जन्यजनकशक्तिद्वययोगवदेकस्यैव विशेषणविशेष्यशक्तिद्वययोगात्कदाचित्काचिच्छक्तिराश्रीयते ॥ सप्तमीनिर्दिष्टे पूर्वस्येत्येव कस्मान्नोच्यत इत्याह—**एते खल्वपीति । नैर्देशिकानां—**निर्देशप्रयोजनानां मध्ये । **वार्त्ततरकाः—**युक्ततरका इत्यर्थः । भाष्यकारवचनप्रामाण्यादत्र तरप् प्रत्ययः । तमपा ह्यत्र भाव्यम् ॥ **एतर्हीति ।** यदि हि **सप्तमीनिर्दिष्ट** इत्युच्यते, तदा सप्तमीशब्देन यो निर्दिष्ट इति प्रतीयेतेति भावः ॥

**( उद्द्योतः )** तदेवं पर्यायेण सामान्यविशेषभावमुपपाद्य द्वितीयविधया कृतं प्रश्नं समाधातुं यौगपद्येनापि तमुपपादयितुमाह—भाष्ये **पितेत्यादि ।** यथा **'पराशरात्मजं वन्दे शुकतातं तपोनिधिम्'** इत्यत्र, तथा राजपुरुषाश्व इत्यत्र पुरुषो राजापेक्षया विशेष्यः, अश्वापेक्षया विशेषणम् । एवं प्रकृते खजादिनिरूपितसामान्यस्यापि **तस्मिन्नणि चे**त्यस्य **तस्मिन्निती**त्येतत्प्रति विशेषत्वमिति भावः ॥ **इत्याहेति ।** इत्यत आहेत्यर्थः ॥ **निर्देशप्रयोजनानामिति ॥** बोधप्रयोजनकानां शब्दानां मध्ये इत्यर्थः ॥ द्विवचनविभज्योपपदत्वाभावादाह—**भाष्यकारेति ॥** परे तु नैर्देशिकानां-मध्येऽन्येभ्यः शब्देभ्य इत्यध्याहृत्य विभज्योपपदेऽत्र तरप् । अत एव **न खल्वपि बहूनां प्रकर्षे तरपा भवितव्य**मिति **तरप्**सूत्रस्थभाष्येणाविरोध इत्याहुः ॥ **सप्तमीशब्देनेति ।** तथा च **सप्तम्यां जनेर्ड** इत्यादावेवेदमुपतिष्ठेतेति भावः ॥ किञ्च यत्र सप्तम्यन्तानिर्देश इत्यर्थे **नेड् वशि कृती**त्यादौ दोषः, तत्र **कृती**ति सप्तमीनिर्देशसत्त्वात्, परन्तु षष्ठ्यर्थे स इति भावः ॥ **सप्तमीति निर्दिष्टे** इति सूत्रकरणेऽपि तदर्थव्याद्यादिनिर्देश इत्यर्थे स एव दोषः ॥

**( तत्त्वालोकः )** भाष्ये—**वार्त्ततरका** इत्यत्र, **बहुतरकमि**त्यत्र च स्वार्थे कन् ।

प्रदीपे—**एकस्यैवेति—**अस्य मध्यमणिन्यायेन पूर्वत्र परत्र चान्वयः । **सप्तमीति—**नन्वेवमपि स्पष्टार्थमित्यादिः । **निर्देशप्रयोजनानामिति—**बहुविषयव्यापिनामिति भावः ।

उद्द्योते—**द्वितीयविधया—'तस्मिन्निती'त्यस्ये**त्याद्युद्द्योतोक्तया । **इत्यत्रेति—**एकस्मिन्नेव व्यासे युगपदेव तत्तदपेक्षया पुत्रत्वपितृत्वयोर्व्यपदेश इति शेषः । दृष्टान्तान्तरमाह—**तथेति ॥** अत्र बहुव्रीहिः, निर्देशपदार्थश्च बोध इत्याह—**बोधप्रयोजनकानामिति ॥** कैयटोक्तं खण्डयति—**परे त्विति । अन्येभ्यः—**असर्वनामभ्यः । **अत्र—**वार्त्ततरका इत्यत्र । **अत एवेति—**उक्तरीत्या विभज्योपपदेऽत्र तरपोऽङ्गीकारादेवेत्यर्थः । प्रकृतभाष्यस्येति शेषः । तस्यार्थान्तरमपि दूषयति—**किञ्चेति । सप्तमीति—**सप्तम्यन्तेत्यर्थः । **षष्ठ्यर्थे—**षष्ठ्यन्तार्थे । **सः—**सप्तम्यन्तनिर्देशः । स्वयं प्रकारान्तरमुद्भाव्य खण्डयति—**सप्तमीतीति ।** इतिना तस्यार्थपरत्वादाह- **तदर्थेति ।** सप्तमीपदार्थेत्यर्थः । **स एव—**'नेड्वशि कृती'त्यादावेव । **दोष इति—**इत्यपि बोध्यमिति शेषः ।

( आक्षेपभाष्यम् )

**अथ किमर्थमुपसर्गेण निर्देशः क्रियते ?**

**( प्रदीपः ) किमर्थमिति ।** किमर्थमुपसर्गयुक्तस्य धातोर्निर्देशः क्रियते, तस्मिन्निति पूर्वस्येति कस्मान्नोच्यत इति प्रश्नः । न पुनर्दिष्टे इत्येवोच्यतामिति प्रश्नः, केवलस्य दिशेर्दानार्थत्वादिहानुपयोगात् ॥

**( उद्द्योतः )** यथाश्रुतमेव कस्मान्न गृह्यत इत्यत आह—**न पुनरिति ।** अत एव **किमर्थमुपसर्गनिर्देशो न दिष्ट इत्येवोच्येते**ति नोक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—अध्याहारेणैव निर्दिष्टे इत्यस्य लाभसम्भवादाह—**अथेति । उपसर्गेण निर्देशः—**निर्दिष्टग्रहणम् ।

प्रदीपे—'उपसर्गेणे'त्यत्र वैशिष्ट्ये तृतीयेत्याह—**उपसर्गयुक्त-**

**स्येति।** **इति कस्मात्—**इत्येव कस्मात्। **इति प्रश्नः—**इत्येव प्रश्नः। **न पुनः—**न तु।

उद्द्योते—धान्येन धनवानित्यत्रेवात्र तृतीयामभिप्रेत्याह—**यथाश्रुतमेवेति।** नन्वित्यादिः॥ अत्र युक्त्यन्तरमाह—**अत एवेति।**

(समाधानभाष्यम्)

**शब्दे सप्तम्या निर्दिष्टे पूर्वस्य कार्यं यथा स्यात्। अर्थे मा भूत्—जनपदे, अतिशायन इति॥**

**(प्रदीपः) शब्द इति।** अन्तरेणाऽपि निर्दिष्टग्रहणं तस्मिन्निति पूर्वस्येत्येव निर्दिष्टत्वे लब्धे पुनर्निर्दिष्टशब्द उपादीयमानो बहिर्भावं गमयति। शब्दाच्च बहिर्भूतः शब्द एव भवतीति॥ **जनपद इति।** तत्रायमर्थः स्याद्—जनपदवाचिनि शब्दे परतश्चातुरर्थिकस्य लुब् भवतीति॥

**(उद्द्योतः) अन्तरेणापीति।** साकाङ्क्षतयोच्चारिते इति पदाध्याहारादिति भावः॥ **पुनर्निर्दिष्टेति।** एवं च सप्तम्यन्तार्थे बहिर्भूते उपश्लिष्टस्य पूर्वस्येत्यर्थः॥ बहिर्भावस्य चावध्यपेक्षत्वादवधेश्च सूत्रोपात्तस्यैव ग्रहीतुमुचितत्वेन तस्य च शब्दात्मकत्वादवधिमानपि शब्द एवेति शब्दे सप्तमीनिर्दिष्टे पूर्वस्येति लभ्यत इति भावः॥ ननु प्रत्ययस्यार्थेन पौर्वापर्यासंभवात् कथं जनपदे इत्यत्रास्योपस्थानमत आह—**तत्रायमर्थः स्यादिति।** लक्षणा स्यादिति भावः॥ निर्दिष्टग्रहणे तु यत्र मुख्यया वृत्त्या शब्दतात्पर्यको निर्देशस्तत्रास्योपस्थानमिति न दोष इति तात्पर्यम्॥

**(तत्त्वालोकः)** भाष्ये—**स्यादिति—**स्यादित्यर्थमित्यर्थः। येनेति शेषः।

प्रदीपे—शब्दात् पूर्वत्वेन परत्वेन वा बहिर्भावः शब्दस्यैव सम्भवति, न त्वर्थस्येत्याशयेनाह—**शब्दाचेति।** **इति—**इति भावः। **तत्र—**तत्रैतदुपस्थितौ।

उद्द्योते—**साकांक्षतयेति—**'तस्मिन्निती'त्यस्येति भावः। **तस्य च—**सप्तम्यन्तार्थस्य च।

(आक्षेपभाष्यम्)

**किं गतमेतदुपसर्गेण, आहोस्विच्छब्दाधिक्यादर्थाधिक्यम्॥**

**(तत्त्वालोकः) गतम्—**ज्ञातम्। एवमग्रेऽपि। **उपसर्गेण—**उपसर्गविशिष्टधातुनिर्देशेन।

(समाधानभाष्यम्)

**गतमित्याह॥**

**कथम्?।**

**निरयं बहिर्भावे वर्तते। तद्यथा—निष्क्रान्तो देशाद् निर्देशः, बहिर्देश इति गम्यते। शब्दश्च शब्दाद्बहिर्भूतः। अर्थोऽबहिर्भूतः॥**

**(तत्त्वालोकः)** तटस्थ उत्तरमनुवदति—**गतमित्याहेति।** समाधातेति शेषः। **निरयमिति—**यत इत्यादिः।

(आक्षेपभाष्यम्)

**अथ निर्दिष्टग्रहणं किमर्थम्?।**

**(प्रदीपः) अथेति।** ननु प्रयोजनस्योक्तत्वात् पुनः प्रश्नानुपपत्तिः। अयं भावः—**जनपदे लुबित्यत्रार्थेन पौर्वापर्याभावात्** 'जनपदे यः प्रत्यय उत्पन्नस्तस्य लुप्' इति, तथा 'अतिशायने वर्तमानात्तमबादयः' इत्यर्थनिर्देशेऽप्यस्मान्न भविष्यति। यदि चैतत्प्रयोजनम्, तदा तस्मिन्निति शब्दे पूर्वस्येति वक्तव्यम्॥

**(उद्द्योतः) अर्थेन पौर्वेति।** तद्वाचकशब्दलक्षणायां च न मानमिति भावः॥ अत्रार्थनिर्देशे च व्याख्यानमेव शरणम्। एवं चाथ **किमर्थ**मित्यादिपूर्वपक्षसिद्धान्तावेतदभिप्रायाविति बोध्यम्॥ किं चार्थनिर्देशे 'जनपदे यः प्रत्यय' इत्यन्वये, नियमप्रसङ्गाभावान्नियमफला परिभाषा नोपतिष्ठते' इत्यपि बोध्यम्॥

**(तत्त्वालोकः)** प्रदीपे—**नन्विति—**'अथ किमर्थमि'त्यादिना प्रश्ने निर्दिष्टग्रहणस्येति शेषः। **अयमिति—**प्रश्नानुपपत्तिः, यत इत्यादिः। **इत्यत्र**-इत्यादौ। **अर्थेनेति—**प्रत्ययस्येत्यादिः। **उपस्थानम्—**अस्योपस्थानम्। **न भविष्यतीति—**तथा च—अत्र प्रकृतोपस्थानवारणं न प्रयोजनमितीति शेषः। तदभ्युपेत्य समाधत्ते—**यदि चेति।** **तदेति—**लाघवादिति भावः। **इति—**इत्येव।

उद्द्योते—**तद्वाचकेति—**जनपदवाचकेत्यर्थः। जनपदशब्दस्येत्यादिः। नन्वत्रार्थनिर्देशे किं मानमित्यत आह—**अत्रेति।** 'जनपदे लुबि'त्यादावित्यर्थः। **एवञ्च—**उक्तरीत्या चैतदनुपस्थितौ च। युक्त्यन्तरमाह—**किञ्चेति।**

(४८० समाधानवार्तिकम्॥ १॥)

## ॥*॥ निर्दिष्टग्रहणमानन्तर्यार्थम्॥*॥

(भाष्यम्)

**निर्दिष्टग्रहणं क्रियते। आनन्तर्यार्थम्। आनन्तर्यमात्रे कार्यं यथा स्यात्—'इको यणचि' दध्यत्र मध्वत्र। इह मा भूत्—समिधौ समिधः, दृषदौ दृषदः॥**

**(प्रदीपः) निर्दिष्टग्रहणमिति।** पूर्वोक्तप्रयोजनाभावादिति भावः। निःशब्दो नैरन्तर्ये वर्तते, दिशिरुच्चारणक्रियः। तेन निरन्तरोच्चारिते कार्यं लभ्यते॥ **समिधाविति॥** ननु संहितायामित्युच्यते। न च व्यवहितयोः संहिताऽस्ति। अचीति चाधिकरणमौपश्लेषिकं निर्दिष्टम्। न च व्यवहित उपश्लिष्टो भवति॥ नैष दोषः। वर्णानां **परः संनिकर्षः संहिता।** सा चात्रास्ति। अचीति सत्सप्तमी विज्ञायते। व्यवहितेऽपि पूर्वशब्दो वर्तते—इति यत्र विषये यथाभूत इक् संभवति अनन्तरो व्यवहितो वा तत्र तथाभूतस्यैव यणादेशः स्यात्॥

**(उद्द्योतः)** भाष्ये—**आनन्तर्यमात्रे इति।** न तु व्यवधाने इत्यर्थः॥ **ननु संहितायामिति।** निमित्तस्थानिनोरन्येनाव्यवधानं संहितेति भावः॥ **उपश्लिष्ट इति।** उप समीपे श्लिष्टोऽत्यन्तसमीप इति हि तदर्थः॥ **नैष दोष इति।** वर्णशून्यकालाभावः **संहितेति** भावः॥ **सत्सप्तमीति।** औपश्लेषिकाधिकरणत्वस्य व्यवहिते बाधात्, सत्ता तु व्यवहितेऽपीति भावः। एवं च निर्दिष्टग्रहणमौपश्लेषिकाधिकरणसप्तम्यां तात्पर्यग्राहकमिति तात्पर्यम्॥ वस्तुत उपश्लेषोऽप्यल्पव्यवहितेऽस्त्येव, किंचिद्दूरस्थितेऽपि वृक्षमूले तिष्ठतीति, कटव्यवधानेऽपि भूमौ शेत इति च व्यवहारात्॥ ननु व्यवहिते इकोऽचः पूर्वत्वाभावेनाप्राप्तं निर्दिष्टग्रहणं व्यर्थमत आह—**व्यवहितेऽपीति।** मथुरायाः पूर्वं पाटलिपुत्रमित्यादिव्यवहारादिति भावः॥ **यत्र विषये इति।** लक्ष्यभेदेन लक्षणभेद इति भावः॥ वस्तुतः संहिताधिकारो न कर्तव्य इत्यभिप्रायमिदं भाष्यम्। संहिताधिकारप्रत्याख्यानं च तत्रैव भाष्ये स्पष्टम्॥

( तत्त्वालोकः ) भाष्ये—**स्यादिति**—स्यादित्यर्थमित्यर्थः। येनेहैव स्यादिति शेषः । **इह**—इह तु ।

प्रदीपे—ननु कथं निर्दिष्टपदेनानन्तर्यलाभ इत्यत आह—**निःशब्द इति । नन्विति**—'इको यणचि'त्यत्रेति शेषः । युक्त्यन्तरमाह—**अचीति चेति । भवतीति**-तथा च-समिधावित्यादौ तद्प्रवृत्तेर्न तत्र तत्प्रसङ्गवारणमस्य प्रयोजनमिति भावः । **वर्णानामिति**-यत इत्यादिः । **तथाभूतस्यैवेति**—तत्र विषये इत्यादिः ।

उद्द्योते—अत्र मात्रशब्दोऽवधारणार्थक इत्याह—**न त्विति । अन्येन** -अन्यवर्णेन । कैयटोक्तं खण्डयति—**वस्तुत इति ।** एवमग्रेऽपि । ननु तदकरणमेवासिद्धमित्यत आह—**संहितेति ।**

( सूत्रस्य नियमार्थताधिकरणम् )

( आक्षेपभाष्यम् )

**किमर्थं पुनरिदमुच्यते ? ।**

**( प्रदीपः ) किमर्थमिति ।** किं नियमार्थमथ षष्ठीप्रक्लृप्त्यर्थमिति प्रश्नः ॥

**( उद्द्योतः ) किमुदाहरण**मित्यादिना सूत्रप्रयोजनस्योक्तत्वात्प्रश्नानुपपत्तिरत आह—**किं नियमार्थमित्यादि ॥**

( तत्त्वालोकः ) भाष्ये—**इदम्**—प्रकृतसूत्रद्वयम् ।
प्रदीपे—**अथ**—अथवा ।
उद्द्योते—**सूत्रेति**—प्रकृतसूत्रद्वयेत्यर्थः ।
**किमुदेति**—नन्वित्यादिः ।

( ४८१ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तस्मिँस्तस्मादिति पूर्वोत्तरयोर्योगाविशेषान्नियमार्थं वचनं दध्युदकं पचत्योदनम् । * ॥**

( भाष्यम् )

**तस्मिंस्तस्मादिति पूर्वोत्तरयोर्योगयोरविशेषान्नियमार्थोऽयमारम्भः । ग्रामे देवदत्तः, पूर्वः पर इति संदेहः । ग्रामाद्देवदत्तः, पूर्वः पर इति संदेहः । एवमिहापि—दध्युदकम् । पचत्योदनम् ॥ 'इको यणचि' इति—उभाविकौ, उभावचौ । अचि पूर्वस्य, अचि परस्येति संदेहः । 'तिङ्ङतिङः' इति—अतिङः पूर्वस्य, अतिङः परस्येति संदेहः ॥ इष्यते चाचि पूर्वस्य स्याद्, अतिङश्च परस्येति । तच्चान्तरेण वचनं न सिध्यतीति । नियमार्थं वचनम् एवमर्थमिदमुच्यते ॥**

**( प्रदीपः ) पूर्वोत्तरयोरिति** कर्मणि षष्ठी । **योगः** संबन्धः । तदयमर्थः—[**इको यणचीत्यत्र**] अच्युपश्लिष्टस्येको यणा भाव्यम् । यथा च परस्मिन् पूर्व उपश्लिष्टः, एवं पूर्वस्मिन्नपि परः ॥ **तिङ्ङतिङ** इत्यत्रापि यथाऽतिङन्तात्परं तिङन्तं भवत्येवं पूर्वमपि । तत्र षष्ठीप्रक्लृप्तिपक्षे षष्ठ्यनुवर्तयितव्येति गौरवप्रसङ्गान्नियमार्थमित्युक्तम् ॥ **योगयोरिति ।** युज्येते इति योगौ, कर्मणि घञ् । अचीति सत्सप्तमीपक्षेऽप्यनियमप्रसङ्गः ॥ **अचि पूर्वस्येति । उपपदविभक्तेः कारकविभक्तिर्बलीयसी**ति न्यायादधिकरणसप्तमी कृता, न तु दिग्योगलक्षणा पञ्चमी। तत्र दध्युदकमित्यादौ पर्यायप्रसङ्गः । न हि युगपदेकस्य स्थानित्वं निमित्तत्वं चोपपद्यत इति नियमार्थं वचनं-पूर्वस्यैवाऽनन्तरस्यैव भवतीति ॥ द्वयं चानेन क्रियते परनिवृत्तिश्चर्यवहितनिवृत्तिश्च । संदेहस्तूपक्रममात्रतयोपन्यस्तः । **न हि संदेहादलक्षण**मिति न्यायात् पर्यायप्रसङ्गात् ॥

**( उद्द्योतः )** ननु **पूर्वोत्तरयोर्योगयो**रिति भाष्यदर्शनेन पूर्वोत्तरयोरित्यस्य योगसमानाधिकरणत्वात्सापेक्षस्यासमर्थत्वेन **योगाविशेष** इति समासो न स्यादत आह—**कर्मणि षष्ठीति ।** तथाच क्रियायाः कारकांशे नित्यसापेक्षत्वेनाविरुद्धः समास इति भावः ॥ **पूर्वोत्तरयोर्योगयो**रिति तु फलितार्थकथनम् ॥ **अच्युपश्लिष्टस्येति ।** औपश्लेषिकेऽधिकरणे सप्तमीति भावः । आद्यसूत्रोदाहरणम्-**दध्युदेति ।** द्वितीयसूत्रोदाहरणम्- **पचत्यविति ॥** ननु नियमपक्षात्षष्ठीप्रक्लृप्तिपक्षः प्रशस्तोऽनुवाददोषाभावादत आह—**तत्र षष्ठीति ।** भाष्ये- **योगयो**रिति द्विवचनोपपत्तये आह—**कर्मणीति ।** युज्यमानयोः पूर्वपरयोरविशेषात्-संबन्धाविशेषादित्यर्थः ॥ वस्तुतस्तु व्यधिकरणे षष्ठ्यौ, प्रतियोगिद्वित्वेन संबन्धद्वित्वाच्च द्विवचननिर्देश इति बोध्यम् ॥ **सत्सप्तमीपक्षेऽपीति । यस्य च भावेने**ति सप्तमीति भावः ॥ इदं चिन्त्यमित्याह—**उपपदविभक्तेरिति । कारकविभक्तिरत्वं** च कारकाधिकारपठितसंज्ञानिमित्तकविभक्तित्वम् । एतच्च **तत्र च दीयत** इति सूत्रे कैयटे स्पष्टम् ॥ **न तु दिग्योगेति ।** सत्सप्तम्या अप्युपलक्षणमिदम् । एतच्च **श्नान्नलोप** इत्यत्र निरूपयिष्यामः ॥ पर्यायस्यैवापादने बीजमाह— **न हि युगपदिति ।** स्थानित्वे हि कार्यित्वेन प्राधान्यं निवर्त्यत्वं च, निमित्तत्वे च पारार्थ्येन गुणत्वं सत्त्वं च । तच्चोभयमेकदा एकस्य विरुद्धमिति भावः ॥ ननु **सन्देह** इति भाष्योक्त्या शास्त्रस्य मूकत्वमित्याभातीत्यत आह—**सन्देहस्त्विति ॥**

( तत्त्वालोकः ) भाष्ये—**ग्रामे इति**— यथा लोके-इत्यादिः । **पूर्वः परः**—पूर्वः परो वा । एवमग्रेऽपि । अन्यथा सन्देहत्वमेव नोपपद्यतेति भावः । **पचत्योदनमिति**—इदमुपलक्षणम्-ओदनं पचतीत्यस्यापि । अन्यथा सन्देहस्य, तस्य व्यावर्त्योदाहरणत्वादिष्टस्य चानुपपत्त्याऽग्रिमभाष्यं न सङ्गच्छेतेति भावः । दध्युदकमित्युदाहरणमभिप्रेत्याह—**उभाविति ।**

प्रदीपे—'अची'ति सप्तम्युपादानादुपश्लिष्टपदाध्याहारेणाह—**अच्युपश्लिष्टस्येति । तत्र**—तयोः पक्षयोर्मध्ये । भाष्यकृतो न्यूनतां निराकरोति-**अचीतीति । तत्रेति**-तस्यां सत्यामित्यर्थः। यत इत्यादिः।

उद्द्योते—नन्वेवं कथन्तथा भाष्यमित्यत आह—**पूर्वोत्तरयोरिति । इति तु**—इति भाष्यन्तु । **द्वितीयसूत्रोदाहरणम्**—द्वितीयसूत्रस्य व्यावर्त्योदाहरणम् । **युज्यमानयोरिति**—तथा चेत्यादिः । कैयटोक्तं खण्डयति—**वस्तुतस्त्विति ।** पूर्वोक्तैकवाक्यता ह्याश्रितेति भावः ॥

( काकुभाष्यम् )

**अस्ति प्रयोजनमेतत् ? ॥**

( समाधानभाष्यम् )

**किं तर्हीति ? ॥**

( उभयनिर्देशे पञ्चमीनिर्देशबलीयस्त्वाधिकरणम् )

( आक्षेपभाष्यम् )

**अथ यत्रोभयं निर्दिश्यते, किं तत्र पूर्वस्य कार्यं भवति । आहोस्वित् परस्येति ? ॥**

( प्रदीपः ) अथ यत्रेति । यथा बहोर्लोप इत्यत्र । युगपच्चैकस्य कार्यित्वनिमित्तत्वासम्भवात् प्रश्नः ॥

( तत्त्वालोकः ) भाष्ये—उभयत्र—सप्तमीपञ्चम्युभयम् ।

( ४८२ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ ॐ ॥ उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशः ॥ ॐ ॥

( भाष्यम् )

उभयनिर्देशे विप्रतिषेधात्पञ्चमीनिर्देशो भविष्यति ॥

( प्रदीपः ) विप्रतिषेधादिति । सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमित्यर्थः ॥

( उद्द्योतः ) ननु कार्यकालत्वात्परिभाषयोः पौर्वापर्याभावात्कथं विप्रतिषेधोऽत आह—सूत्रपाठेति । अत एवाग्रे ङमो ह्रस्वादिति त्रैपादिकमुदाहरणं सङ्गच्छते । तत्र हि कार्यकालपक्षाश्रयेणैव परिभाषाप्रवृत्तिरिति बोध्यम् ॥

( तत्त्वालोकः ) उद्द्योते—अग्रे इति—वक्ष्यमाणमिति शेषः ।

( भाष्यम् )

किं प्रयोजनम् ? ।

( प्रदीप ) किं प्रयोजनमिति । विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति वक्ष्यमाणोऽभिप्रायः ॥

( उद्द्योतः ) विभक्तिविशेषनिर्देशस्यानवकाशत्वादिति । इदमुदाहरिष्यमाणोदाहरणविशेषापेक्षम् । अत एव ङः सि धुडित्यत्र द्वयोरनवकाशत्वेऽपि न क्षतिः ॥

( तत्त्वालोकः ) भाष्ये—किं प्रयोजनमिति—तत्र विप्रतिषेधाश्रयणस्येति भावः ।

प्रदीपे—प्रश्नस्य बीजमाह—विभक्तिविशेषनिर्देशस्येति । पञ्चमीनिर्देशस्येत्यर्थः । अभिप्रायः—विप्रतिषेधाश्रयणं विनैव परस्य कार्यित्वबोधनरूपः ।

उद्द्योते—अस्यासार्वत्रिकत्वादाह—इदमिति । द्वयोः—पञ्चमीसप्तमीनिर्देशयोः ।

( ४८३ प्रयोजनवार्तिकम् ॥ ४ ॥ )

## ॥ ॐ ॥ प्रयोजनमतो लसार्वधातुकानुदात्तत्वे ॥ ॐ ॥

( भाष्यम् )

वक्ष्यति—ॐ तास्यादिभ्योऽनुदात्तत्वे सप्तमीनिर्देशोऽभ्यस्तसिजर्थःॐ इति । तस्मिन् क्रियमाणे तास्यादिभ्यः परस्य लसार्वधातुकस्य, लसार्वधातुके परतस्तास्यादीनामिति संदेहः ॥ तास्यादिभ्यः परस्य लसार्वधातुकस्य ॥

( प्रदीपः ) संदेह इति । संदेहाच्च पर्यायप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये—वक्ष्यति तास्यादिभ्य इति । तास्यनुदात्तेदिति सूत्रे ॥ अभ्यस्तसिजर्थ इति । अभ्यस्तानामादिः' आदिः सिच इति सूत्रयोर्लसार्वधातुक इति सप्तम्यन्तानुवृत्तिसिद्धये इत्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—इत्यकलमांशिकमि याह— अत इति । सप्तमीनिर्देश इति—लसार्वधातुके इति सप्तमीनिर्देशः कर्तव्य इत्यर्थः ॥ लसार्वधातुके इति—अभावेत्यादिः । तास्यादिभ्य इति—इष्यते चेत्यादिः । एवमग्रेऽपि ॥

प्रदीपे—पर्यायप्रसङ्ग इति—अग्रेऽपीति भावः ।

( ४८४ प्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥ ॐ ॥ बहोरिष्ठादीनामादिलोपे ॥ ॐ ॥

( भाष्यम् )

बहोरुत्तरेषामिष्ठेमेयसाम्, इष्ठेमेयःसु परतो बहोरिति संदेहः ॥ बहोरुत्तरेषामिष्ठेमेयसाम् ॥

( प्रदीपः ) इष्ठेमेयःस्विति । तदा च बहुशब्दस्य लोपभूभावौ पर्यायेण स्याताम् ॥

( तत्त्वालोकः ) भाष्ये—बहोरिति—प्रयोजनमित्यनुषज्यते । एवमग्रेऽपि । प्रदीपे—तदा च—सन्देहे च ।

( ४८५ प्रयोजनवार्तिकम् ॥ ६ ॥ )

## ॥ ॐ ॥ गोतो णित् ॥ ॐ ॥

( भाष्यम् )

गोतः परस्य सर्वनामस्थानस्य, सर्वनामस्थाने परतो गोत इति संदेहः ॥ गोतः परस्य सर्वनामस्थानस्य ॥

( प्रदीपः ) गोतो णिदिति । यदि गोशब्दस्य णित्वं स्यात्तदा तिष्ठति गौरित्यत्र वचनसामर्थ्यादनङ्गस्यापि वृद्धिः स्यात् ॥

( उद्द्योतः ) ननु भाष्ये सर्वनामस्थानस्य गोत इति षष्ठीदर्शनात् णिदित्यनेनान्वयो न स्यादत आह— णित्त्वमिति । भावप्रधानो निर्देश इति भावः ॥ गोतो णित्वे को दोषस्तत्राह— तिष्ठतीत्यादि ।

( तत्त्वालोकः ) प्रदीपे—अनङ्गस्यापि—गोशब्दमप्रत्ययनङ्गस्यापि तिष्ठतेः । उद्द्योते—गोतो णित्वे क इति—तन्वित्यादिः ।

( ४८६ प्रयोजनवार्तिकम् ॥ ७ ॥ )

## ॥ ॐ ॥ रुदादिभ्यः सार्वधातुके ॥ ॐ ॥

( भाष्यम् )

रुदादिभ्यः परस्य सार्वधातुकस्य, सार्वधातुके परतो रुदादीनामिति संदेहः ॥ रुदादिभ्यः परस्य सार्वधातुकस्य ॥

( ४८७ प्रयोजनवार्तिकम् ॥ ८ ॥ )

## ॥ ॐ ॥ आने मुगीदासः ॥ ॐ ॥

( भाष्यम् )

आस उत्तरस्यानस्य, आने परत आस इति संदेहः ॥ आस उत्तरस्यानस्य ॥

( ४८८ प्रयोजनवार्तिकम् ॥ ९ ॥ )

## ॥ ॐ ॥ आमि सर्वनाम्नः सुट् ॥ ॐ ॥

( भाष्यम् )

सर्वनाम्न उत्तरस्यामः, आमि परतः सर्वनाम्न इति संदेहः ॥ सर्वनाम्न उत्तरस्यामः ॥

( ४८९ प्रयोजनवार्तिकम् ॥ १० ॥ )

॥ * ॥ घेर्ङिति ण् नद्याः ॥ * ॥

( भाष्यम् )

नद्या उत्तरेषां ङिताम्, ङित्सु परतो नद्या इति संदेहः ॥ नद्या उत्तरेषां ङिताम् ॥

( ४९० प्रयोजनवार्तिकम् ॥ ११ ॥ )

॥ * ॥ याडापः ॥ * ॥

( भाष्यम् )

आप उत्तरस्य ङितः, ङिति परत आप इति संदेहः ॥ आप उत्तरस्य ङितः ॥

( ४९१ प्रयोजनवार्तिकम् ॥ १२ ॥ )

॥*॥ ङमो ह्रस्वादचि ङमुण् नित्यम् ॥*॥

( भाष्यम् )

ङम उत्तरस्याऽचः, अचि परतो ङमः इति संदेहः ॥ ङम उत्तरस्याचः ॥

**( प्रदीपः ) ङमो ह्रस्वादिति ।** ङमो ङमुडागमे सति कुर्वन्नास्ते इत्यत्र णत्वप्रसङ्गः । पदस्य चैको नकारोऽन्तो न तु द्वाविति णत्वनिषेधो नास्ति ॥

**( उद्द्योतः ) पदस्य चैक इति ।** व्यक्तिपक्षे इदम् । व्यक्तिपक्षेऽप्येवंविधप्रयोगसाधनायेवं व्याख्यानमिति भावः ॥ यद्वाऽन्तशब्दस्यावयववाचित्वेनेदृशे विषये जातिग्रहणासंभव एवेत्याहुः ॥

**( तत्त्वालोकः )** प्रदीपे—ननु 'पदान्तस्ये'ति निषेधात्कथन्तत्प्रसङ्ग इत्यत आह—**पदस्य चेति । एकः**—एक एव ।

उद्द्योते—**एवं व्याख्यानम्**—ङम उत्तरस्याच इति व्याख्यानम् । **अन्तशब्दस्येति**—'पदान्तस्ये'त्यत्रेति भावः ।

( ४९२ समाधानहेत्वनुपपत्तिवार्तिकम् ॥ १३ ॥ )

॥ * ॥ विभक्तिविशेषनिर्देशानवकाशत्वादविप्रतिषेधः ॥ * ॥

( भाष्यम् )

विभक्तिविशेषनिर्देशस्यानवकाशत्वादयुक्तोऽयं विप्रतिषेधः । सर्वत्रैवात्र कृतसामर्थ्या सप्तमी, अकृतसामर्थ्या पञ्चमीति कृत्वा पञ्चमीनिर्देशो भविष्यति ॥

**( प्रदीपः ) विभक्तीति ।** पूर्वोपात्तेषु सूत्रेषु सप्तमीनिर्देशस्य क्वचित् पूर्वार्थत्वात् क्वचिदुत्तरार्थत्वात् सावकाशत्वम् । पञ्चमी तु निरवकाशेति परस्य कार्यित्वं बोधयिष्यतीति भावः ॥

**( उद्द्योतः )** ङः सि धुडित्यादावुभयोरप्यनवकाशत्वादाह—**पूर्वोपात्तेष्विति । बहोरिति** पञ्चमी अचरितार्था । अत एवेष्ठादिषु षष्ठी । अत एव **भू च बहोरि**ति पृथङ्निर्देशश्चरितार्थः । **गोत** इत्यादौ **सर्वनामस्थाने** इति सप्तमी पूर्वत्र चरितार्था । गोशब्दस्य णित्त्ववैयर्थ्यं च । तिष्ठति गौरित्यत्र गोशब्दं प्रति तिष्ठतेरनङ्गत्वान्न दोषः । **रुदादिभ्यः सार्वधातुके** इति सार्वधातुक इति **लिङः सलोप** इत्यादौ चरितार्थम् । तत्र हि सार्वधातुके विद्यमानस्य सस्य लोप इत्यर्थः ॥ **आमि सर्वनाम्नः** इत्यामीति **त्रेस्त्रय** इत्यत्र सावकाशम् । **ङम** इति सूत्रेऽचीति **मय उञ** इति सूत्रे चरितार्थम् ॥ भाष्ये—**पञ्चमीनिर्देशो भविष्यती**त्यस्य बलवान्स्वार्थ एव भविष्यतीत्यर्थः । सप्तमी तु षष्ठ्यर्थे इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**सर्वत्रैवेति**—यत इत्यादिः । **अकृतेति**—तथेत्यादिः ।

उद्द्योते—'तास्यनुदात्तेत्'इति सूत्रे लसार्वधातुके इति सप्तम्या उत्तरत्र चारितार्थ्यस्य ( येन तस्याः षष्ठ्यर्थता ) उक्तत्वादाह—**बहोरितीति । षष्ठी**—सप्तम्याः षष्ठ्यर्थता । **निर्देशः**—षष्ठीनिर्देशः । **चरितार्थेति ।** अत एव तस्याः षष्ठ्यर्थता । एवमग्रेऽपि । पूर्वोक्तदोषं खण्डयति—**गोशब्दस्येति**—ननु तिष्ठति गौरित्यत्र पूर्वस्य वृद्धिः फलमित्यत आह—**तिष्ठतीति ।** 'ईदासः' इत्यान इति पूर्वत्र चरितार्थम् । 'आण्नद्याः' इत्यादौ ङितीति पूर्वत्र सावकाशमित्यपि बोध्यम् । तदाशयमाह—**सप्तमीष्विति ।**

( ४९३ एकदेशिसमाधानवार्तिकम् ॥ १४ ॥ )

॥ * ॥ यथार्थं वा षष्ठीनिर्देशः ॥ * ॥

( भाष्यम् )

यथार्थं वा षष्ठीनिर्देशः कर्तव्यः । यत्र पूर्वस्य कार्यमिष्यते तत्र पूर्वस्य षष्ठी कर्तव्या । यत्र परस्य कार्यमिष्यते तत्र परस्य षष्ठी कर्तव्या ॥

**( प्रदीपः ) यथार्थं वेति ।** यथाविषयमित्यर्थः । प्रदेशेषु कार्यिणः षष्ठ्यैव निर्देष्टव्याः ॥

**( उद्द्योतः )** भाष्ये-एकदेशी प्रौढ्याह—**यथार्थं वेति ।** तत्र अर्थशब्दो न प्रयोजनादिवाचीत्याह—**यथाविषयमिति ॥ प्रदेशेष्विति ।** प्रागुक्तेष्वित्यर्थः ॥ भाष्ये—**पूर्वस्य षष्ठीति ।** पूर्वबोधकपदस्य षष्ठ्यन्तस्योच्चारणं कार्यमित्यर्थः ॥ एवं चोभयोच्चारणे गौरवमित्येकदेश्युक्तिरियम् ॥

**( तत्त्वालोकः )** प्रदीपे—**यथाविषयमिति**—विषयमनतिक्रम्येत्यर्थः । उक्तकारणादेवाह—**प्रदेशेष्विति ।**

उद्द्योते—**तत्र**—वार्त्तिके । **आदिना**—अभिधेयादिपरिग्रहः । **उभयेति**—सप्तम्यन्तषष्ठ्यन्तोभयेत्यर्थः ।

( आक्षेपभाष्यम् )

स तर्हि तथा निर्देशः कर्तव्यः ॥

**( उद्द्योतः )** तत्र तत्र सप्तम्यन्तषष्ठ्यन्तयोर्द्वयोः पाठे गौरवं मत्वेतर एकदेशी आह—**स तर्हीति ।**

( आक्षेपनिरासैकदेशिभाष्यम् )

न कर्तव्यः । अनेनैव प्रक्लृप्तिर्भविष्यति—तस्मिन्निति निर्दिष्टे पूर्वस्य षष्ठी, तस्मादित्युत्तरस्य षष्ठीति ॥

**( उद्द्योतः )** स एकदेशी प्रौढ्यैवाह—**न कर्तव्यः । अनेनैवेति ।** षष्ठीपदानुवृत्तिगौरवादयमेकदेशी ॥ उभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वे चावश्यके इति च ॥ **निर्दिष्टे पूर्वस्य षष्ठीति ।** पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीत्यर्थः ॥ एवमुत्तरस्येत्यपि ॥

**( तत्त्वालोकः )** भाष्ये—**अनेनैवेति**—प्रकृतपरिभाषाद्वयेनैवेत्यर्थः । यतस्तत्र तत्र षष्ठ्या इत्यादिः ।

उद्द्योते—**षष्ठीपदेति**—अत्र कल्पे 'षष्ठी स्थाने योगे'त्यस्मादित्यादिः। गौरवान्तरमप्याह—**उभयोरिति**। परिभाषयोरेकत्र तस्या इति शेषः। **इति चेति**—इत्यपीत्यर्थः। गौरवमिति बोध्यमिति शेषः।

**( आक्षेपभाष्यम् )**

**तत्तर्हि षष्ठीग्रहणं कर्तव्यम् ॥**

**( तत्त्वालोकः ) तत्**—तयोः ( परिभाषयोः )।

**( समाधानभाष्यम् )**

**न कर्तव्यम्। प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम्?।**

**'षष्ठी स्थानेयोगा' इति ॥**

**( तत्त्वालोकः ) प्रकृतमिति**—यत इत्यादिः।

**( ४९४ प्रकल्पकपक्षे दूषणवार्तिकम् ॥ १५ ॥ )**

## ॥*॥ प्रकल्पकमिति चेन्नियमाभावः ॥*॥

**( भाष्यम् )**

**प्रकल्पकमिति चेन्नियमस्याभावः। उक्तं चैतत्—नियमार्थोऽयमारम्भ इति ॥**

**( प्रदीपः ) प्रकल्पकमिति चेदिति।** यत्र षष्ठी नास्ति तत्र तस्याः प्रक्लृप्तिः क्रियते। यत्र तु षष्ठ्यस्ति—**इको यणचीत्यादौ**, तत्रानेन नियमो न क्रियते। न हि व्यापारद्वयमुपपद्यते। येन षष्ठीप्रक्लृप्तिस्तस्या नियमश्चेति भावः॥

**( उद्द्योतः ) न हीति**। आवृत्तिप्रसङ्गादिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**प्रकल्पकमिति चेदिति**—प्रकृतपरिभाषाद्वयन्तत्र तत्र षष्ठ्या इत्यादिः। तर्हीति शेषः। **अभावः**—अनुपपत्तिः। तथा च—वदतो व्याघात इति भावः।

**( दूषणान्तरभाष्यम् )**

**प्रत्ययविधौ खल्वपि पञ्चम्यः प्रकल्पिकाः स्युः ॥**

**तत्र को दोषः?।**

**'गुप्तिज्किद्भ्यः सन्' गुप्तिज्किद्भ्य इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मादित्युत्तरस्य' इति ॥**

**( तत्त्वालोकः )** दोषान्तरमाह—**प्रत्ययविधाविति**। **तत्र**—तथा सति। एवमग्रेऽपि।

**( दूषणान्तरबाधकभाष्यम् )**

**अस्तु। न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते। तत्राऽन्तर्यतः सनः सन्नेव भविष्यति ॥**

**( दूषणान्तरसाधकभाष्यम् )**

**नैवं शक्यम्। इत्संज्ञा न प्रकल्पेत। उपदेश इतीत्संज्ञोच्यते ॥**

**( प्रदीपः ) इत्संज्ञेति।** आदेशस्योपदेशाभावात्तस्येत्संज्ञा न सिध्यतीत्यर्थः। स्थानी चोत्पत्तिकाले एव निवृत्त्यभिमुखतया प्रतिपन्न इति स्थानिन्यपीत्संज्ञा नास्ति॥

**( उद्द्योतः )** इत्त एकदेशी उपदेश इति हलन्त्यमित्यत्रानुवर्तत इति मत्वाह—**इत्संज्ञेति** ॥ नत्वानेष्टे- **उपदेशाभावादिति** ॥ **स्थानेऽन्तरतम**परिभाषाप्राप्तगुणीभूतानन्त्यादेशस्योच्चारणाभावादित्यर्थः॥ ननु स्थानिन्येव तस्याः प्रवृत्तस्तुणीभूतानादेशो निरनुबन्धक एवेत्यत आह—**स्थानी चेति**। यथा धातोः प्रत्ययस्तदानीमेवादेशो भवेदिति नेत्संज्ञादि प्रतीक्षते। यत्र कार्यं तत्संज्ञेति प्रयोग एवेत्संज्ञेत्यभिमानः। एकदेशयुक्तिरत्रादन नात्यन्तं निर्भरः कार्य इति बोध्यम्॥

**( तत्त्वालोकः )** भाष्ये—**शक्यमिति**—शक्तमित्यादिः। यतस्तथा सतीति शेषः। **उपेति**—यत इत्यादिः।

उद्द्योते—**तस्याः**—इत्संज्ञायाः। नन्विदं सिद्धान्तेन विरुद्धमित्यत आह—**एकदेश्युक्तत्वादिति**।

**( ४९५ प्रकल्पकपक्षे आक्षेपान्तरवार्तिकम् ॥ १६ ॥ )**

## ॥ * ॥ प्रकृतिविकाराव्यवस्था च ॥ * ॥

**( भाष्यम् )**

**प्रकृतिविकारयोश्च व्यवस्था न प्रकल्पते। 'इको यणचि' अचीत्येषा सप्तमी यणिति प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति ॥**

**( प्रदीपः ) यणिति प्रथमाया इति ॥** ततश्चेकः स्थाने यण न लभ्येत। इकोऽप्यन्य आदेशः स्याद्यणोऽप्यन्य इत्यभिमता स्थान्यादेशभावव्यवस्था न स्यात्॥

**( उद्द्योतः ) ततश्चेति।** पूर्वस्य जायमानो यणपि पूर्व एवेति तत्रापि षष्ठीकल्पनमिति भावः॥

**( तत्त्वालोकः )** भाष्ये—तृतीयं दोषमाह—**प्रकृतीति**। **इको यणिति**—यत इत्यादिः।

प्रदीपे—नन्वेवं को दोष इत्यत आह—**ततश्चेति। यण्**-यणेव। **इकोऽपीति**—यतस्तथा सति विनिगमनाविरहादित्यादिः।

उद्द्योते—ननु यणोऽनुत्पन्नत्वान्न पूर्वत्वमित्यत आह—**पूर्वस्येति**।

**( ४९६ प्रकल्पकपक्षे आक्षेपान्तरवार्तिकम् ॥ १७ ॥ )**

## ॥ * ॥ सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः ॥ * ॥

**( भाष्यम् )**

**सप्तमीपञ्चम्योश्च भावादुभयत्रैव षष्ठी प्राप्नोति। तास्यादिभ्य इत्येषा पञ्चमी लसार्वधातुक इत्यस्याः सप्तम्याः षष्ठीं प्रकल्पयेत्—'तस्मादित्युत्तरस्य' इति। तथा लसार्वधातुक इत्येषा सप्तमी तास्यादिभ्य इति पञ्चम्याः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति ॥**

**तत्र को दोषः?**

**तत्रोभयकार्यप्रसङ्गः ॥**

**तत्र उभयोः कार्यं प्राप्नोति ॥**

**( प्रदीपः ) उभयकार्यप्रसङ्ग इति।** विरोधाभावाद्यौगपद्येनोभयोः कार्यं प्राप्नोति॥

( उद्द्योतः ) विरोधाभावादिति । स्थानिभेदादित्यर्थः । अत एव विप्रतिषेधाप्रवृत्तिः । यद्यपि कार्यित्वनिमित्तत्वे युगपद्विरुद्धे । तथाप्येकदेशयुक्तित्वान्नात्यन्तनिर्भरः कार्यं इति बोध्यम् ॥ एवमग्रेऽपि बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—चतुर्थं दूषणमाह—सप्तमीति । तत्र—तथा सति । एवमग्रेऽपि ।

( प्रकल्पकपक्षे दूषणोद्धारभाष्यम् )

नैष दोषः । यत्तावदुच्यते—❀ प्रकल्पकमिति चेन्नियमाभावः❀ इति । मा भून्नियमः । सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य । यावता सप्तमीनिर्दिष्टे पूर्वस्य षष्ठी प्रकल्प्यते, पञ्चमीनिर्दिष्टे परस्य । नोत्सहते सप्तमीनिर्दिष्टे परस्य कार्यं भवितुं, नापि पञ्चमीनिर्दिष्टे पूर्वस्य ॥

( प्रदीपः ) मा भून्नियम इति । षष्ठीप्रक्लृप्त्यैव तत्फलस्य लब्धत्वादिति भावः ॥ यत्र षष्ठी नास्ति तत्रासौ प्रकल्प्यते । यत्र त्वस्तीको यणचीति, तत्रापि पूर्वस्यैव षष्ठी, न परस्येति प्रकल्प्यते ॥

( उद्द्योतः ) यत्र त्वस्तीति । तस्मिन्नितीत्यस्य बहुविषयत्वलाभाय विषयभेदेन भेदात् क्वचित्पूर्वस्य षष्ठीति विधिपरम्, क्वचिन्नियमार्थपरमित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—प्रकृतपरिभाषाद्वयस्य तत्र तत्र षष्ठ्याः प्रकल्पकत्वपक्षे उक्तं दोषचतुष्टयं क्रमेण परिहर्तुं प्रतिजानीते—नैष दोष इति । नैते दोषा इत्यर्थः । जातावेकवचनात् । यत इति शेषः । मा भून्नियम इति—तत्रोच्यते इत्यादिः । इतीति शेषः । नन्वेवं कथमिष्टसिद्धिरित्यत आह—सप्तमीति । यावतेति—तथा चेत्यादिः । नोत्सहते इति—तावतैवेत्यादिः ।

प्रदीपे—तत्फलस्य—नियमफलस्य । असौ—षष्ठी । सा चानियतयोगत्वात् स्थानषष्ठी, यस्य च स्थानषष्ठी तस्यैव कार्यनियम इति नियमोऽप्यर्थात् सिद्ध इत्याशयः ॥

उद्द्योते—क्वचित्—यत्र षष्ठी नास्ति, तत्र । क्वचित्—यत्र षष्ठ्यस्ति, तत्र ।

( आक्षेपबाधकभाष्यम् )

यदप्युच्यते—'प्रत्ययविधौ पञ्चम्यः प्रकल्पिकाः स्युः' इति ॥ सन्तु प्रकल्पिकाः ॥

( तत्त्वालोकः ) सन्तु प्रकल्पिकाः—तत्रोच्यते–सन्तु प्रकल्पिका इति ।

( आक्षेपस्मारणभाष्यम् )

ननु चोक्तम्—'गुप्तिज्किद्भ्यः सन्' इत्येषा पञ्चमी सन्निति प्रथमायाः षष्ठीं प्रकल्पयेत्–'तस्मादित्युत्तरस्य' इति ॥

( तत्त्वालोकः ) इत्येषा—गुप्तिज्किद्भ्य इत्येषा ।

( परिहारस्मारणभाष्यम् )

परिहृतमेतत्—न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्रान्तर्यतः सनः सन्नेव भविष्यति–इति ॥

( तत्त्वालोकः ) परिहृतमिति—नैतद्दूषणम्, यत इत्यादिः ।

( परिहारबाधकस्मारणभाष्यम् )

ननु चोक्तम्—नैवं शक्यमित्संज्ञा न प्रकल्पेत । उपदेश इति इत्संज्ञोच्यते—इति ॥

( परिहारबाधानुपपत्तिभाष्यम् )

स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत । तत्र खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यति । उपदेश इति हीत्संज्ञोच्यते ॥

( प्रदीपः ) कृतायामित्संज्ञायामिति । सूत्र एवोच्चारितस्य इत्संज्ञेति प्रयोगे सशब्द एव सन्नित्कार्यं लभत इत्यर्थः ॥

( उद्द्योतः ) सूत्र एवेति । षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्च उपदेशोत्तरकालं सूत्र एवेत्संज्ञा । कार्यं तु प्रयोग एवेति भावः । एवंच निरनुबन्धस्यैव प्रत्ययत्वेन विधानात्तदादेशस्य कुतः सानुबन्धकतेति तात्पर्यम् ॥ भाष्ये-उपदेश इति हीत्संज्ञोच्यत इति । एवं च त्वदुक्तिर्व्याहतेति भावः ॥

( तत्त्वालोकः ) भाष्ये—तत्रेति—न च सा तत्प्रतीक्षते, किन्त्वित्यादिः ।

उद्द्योते—एवञ्च—सूत्र एवेत्संज्ञायाञ्च । एवञ्च—'हलन्त्य'सूत्रे उपदेशपदसम्बन्धे च । त्वदुक्तिः—इत्संज्ञा न प्रकल्पेतेति त्वदुक्तिः ।

( परिहारान्तरभाष्यम् )

अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम् । यदा चोत्पन्नः सन्, तदा कृतसामर्थ्या पञ्चमीति कृत्वा प्रक्लृप्तिर्न भविष्यति ॥

( प्रदीपः ) अथवेति । परत्वविशिष्टस्य सन उत्पादने उपक्षयात् प्रवृत्त्यन्तराभावान्नास्ति पञ्चम्याः प्रकल्पकत्वमित्यर्थः ॥

( उद्द्योतः ) हलन्त्यसूत्रे उपदेशपदासंबन्ध एवेति तत्सूत्रवक्ष्यमाणपक्षेऽप्याह—अथवेति ॥ परत्वविशिष्टस्येति । अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वादिति भावः ॥ उपक्षयादिति । पञ्चम्या इति शेषः ॥ प्रवृत्त्यन्तराभावादिति । पुनः प्रवृत्तौ मानाभावादिति भावः ॥

( आक्षेपान्तरबाधकभाष्यम् )

यदप्युच्यते–❀प्रकृतिविकाराव्यवस्था च❀–इति ॥

अत्रापि प्रकृतौ षष्ठी इक इति, विकृतौ प्रथमा यणिति । यत्र च नाम सौत्री षष्ठी नास्ति, तत्र प्रक्लृप्त्या भवितव्यम् ॥

( प्रदीपः ) प्रकृतौ षष्ठीति । इको यणचीति श्रुतयोरेव स्थान्यादेशभावोपपादनान्नास्ति षष्ठीप्रकल्पनम् । अपेक्षाया अभावादित्यर्थः ॥

( उद्द्योतः ) अपेक्षाया इति । श्रुतयोः संबन्धाभावे हि तस्मिन्नित्यनेन षष्ठीप्रक्लृप्त्यपेक्षा । न च प्रकृते तथा । लिङ्गाच्छ्रुतेर्बलीयस्त्वादित्यर्थः ॥

( तत्त्वालोकः ) भाष्ये—अत्रापीति–नैष दोषः, यत इत्यादिः ।

( परिहारान्तरभाष्यम् )

अथवाऽस्तु तावदिको यणिति यत्र नाम सौत्री षष्ठी ॥ यदि चेदानीमचीत्येषा सप्तमी यणिति

प्रथमायाः षष्ठीं प्रकल्पयेत्—'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति ॥

अस्तु । न कश्चिदन्य आदेशः प्रतिनिर्दिश्यते । तत्राऽऽन्तर्यतो यणो यणेव भविष्यति ॥

( उद्द्योतः ) भाष्ये—अथवाऽस्तु तावदिति । प्रथमाषष्ठीनिर्देशसामर्थ्यात् प्रथमत इग्यणोः स्थान्यादेशभावोऽस्तु । तत एतत्सूत्रबलाद्यणः स्थानित्वेऽपि न क्षतिरित्यर्थः ॥ यत्र नाम सौत्री षष्ठी । यदि चेदानीमिति । यत्र सौत्री षष्ठ्यस्ति तत्रापीदानीं यदि प्रकल्पयेत्तर्ह्यस्तु प्रकल्पयत्वित्यर्थः ॥ परं त्विदं प्रौढ्या' अथवा नानुत्पन्ने सनीति प्रागुक्तन्यायाद् ॥ गाङ्कुटादिभ्य इत्यादौ षष्ठीप्रक्लृप्तावपि न दोषः, ङित्पदस्य धर्मपरत्वादिति बोध्यम् ॥

( तत्त्वालोकः ) उद्द्योते—सौत्रनिर्देशक्रमसुपेक्ष्य विभक्तिक्रमेणाह—प्रथमाषष्ठीति । भाष्यकृतो न्यूनतां निराकरोति-गाङ्कुटेति । धर्मेति—तथा च तेभ्यः परस्याञ्णित्प्रत्ययस्य ङित्त्वं भवतीति तदर्थः ।

( आक्षेपान्तरबाधकभाष्यम् )

यदप्युच्यते—॰सप्तमीपञ्चम्योश्च भावादुभयत्र षष्ठीप्रक्लृप्तिस्तत्रोभयकार्यप्रसङ्गः॰—इति ॥ नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'नोभे युगपत्प्रकल्पिके भवतः' इति । यदयम् 'एकः पूर्वपरयोः' इति पूर्वपरग्रहणं करोति ॥ तस्मिन्निति निर्दिष्टे पूर्वस्य ॥ तस्मादित्युत्तरस्य ॥ ६६ ॥ ६७ ॥

( प्रदीपः ) यदयमिति । यद्युभयनिर्देशात्परस्परषष्ठीप्रकल्पने सति ग्रहणकवाक्याद्वाक्यान्तरमनुमीयते—तास्यादिभ्यो लसार्वधातुकस्य लसार्वधातुके तास्यादीनामनुदात्तत्वं भवतीति' तदाद्गुण इत्यादावपि तथैव प्रक्लृप्तिर्भविष्यतीति किं पूर्वपरयोरित्यनेनेत्यर्थः । तत्र परत्वानवकाशत्वाभ्यां नियमपक्षवत् षष्ठीप्रकल्पनपक्षे व्यवस्था । दीर्घाच्छे तुग् भवतीत्यत्र षष्ठीस्थाने व्यत्ययेन पञ्चमीति व्याख्यानात् सुराच्छायेत्यादेर्वा ज्ञापकाद् दीर्घस्यैव तुग् भवति, न तु च्छस्य ॥

(उद्द्योतः) यद्यपि युगपत् प्रक्लृप्तिर्विरोधान्न संभवति, तथाप्येकदेशित्वादेव ज्ञापकेन परिहरति—नोभे इत्यादिना ॥ तथैव प्रक्लृप्तिरिति । अवर्णादचि अवर्णस्याचश्चैको गुणो भवतीत्यर्थ इति भावः ॥ ननूभयोः प्रकल्पकत्वाभावेऽपि एकस्य कस्य प्रकल्पकत्वमत आह—तत्र परत्वेति ॥ ङः सि धुडित्यादौ परत्वमुक्तेष्वनवकाशत्वमिति भावः ॥ ननु दीर्घादिति सूत्रे पञ्चम्या अनवकाशत्वेन परत्वेन च च्छकारे षष्ठीप्रकल्पनं स्यादत आह—दीर्घाच्छे इति ॥ सुराच्छायेति । पदान्ते तुको वैकल्पिकत्वाच्चिन्त्यमिदम् । तुक्सहितं पाणिनिपाठमभिप्रेत्य तु ज्ञापकोपन्यासः । युक्तश्च तथा पाठः, वैकल्पिकेषु भावानुष्ठानस्य धर्माधिक्यफलकत्वात् ॥ ६६-६७ ॥

( तत्त्वालोकः ) भाष्ये—आचार्येति—यत इत्यादिः ।

प्रदीपे—ग्रहणकेति—सङ्ग्राहकेत्यर्थः । तत्र—तथा सति । एवं षष्ठीप्रक्लृप्तिपक्षेऽपि निर्दुष्टत्वेन स्थितेः, किन्तु तत्र गौरवान्नियमपक्ष एव ग्राह्य इति भावः ।

उद्द्योते—कैयटोक्तं खण्डयति—पदान्ते इति । तद् योजयति—तुक्सहितमिति ॥

( ४१ संज्ञासूत्रम् ॥ १ । १ । ९ आ. । ८ मं सू० ॥ )

# स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ १।१।६८॥

( प्रदीपः ) स्वं रूपं शब्द० ॥ ६८ ॥ स्वरूपस्य पर्यायाणां तद्विशेषाणां च ग्रहणे प्राप्ते नियमार्थं परिभाषेयमिति केचिदाहुः ॥ अन्ये तु लिङ्गाभावाद्विध्यन्तरशेषभावाभावाच्च नेयं परिभाषा, अपि तु संज्ञासूत्रमिदमिति प्रतिपन्नाः । देवदत्तादयश्च संज्ञाशब्दा नियमार्था इति सिद्धान्तः । सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः सर्वशब्दप्रत्याय्यशक्तियुक्तश्चार्थ इति व्यवहाराय नियमः क्रियते । रूपशब्देन चेहाग्निशब्दत्वादिकं शुकसारिकामनुष्यादिभिरभिव्यज्यमानशब्दव्यक्तिसमवेतं सामान्यमभिधीयते । तत्र व्यक्तेः सामान्यं संज्ञा सामान्यस्य वा व्यक्तिरिति व्याख्याने कामचारः । व्यक्तिः कार्यं प्रतिपद्यमाना सामान्यप्रतिबद्धैव प्रतिपद्यते, सामान्यमपि कार्यं प्रतिपद्यमानं व्यक्तिद्वारेणैव प्रतिपद्यत इति फले न कश्चिद्भेदः ॥

( उद्द्योतः ) स्वं रूपम् ॥ ६८ ॥ स्वरूपस्येति । शब्देनार्थप्रतीतावर्थे केषांचित्कार्याणामसंभवाद्वा ... शब्दमात्रग्रहणादिति भावः ॥ अन्ये त्विति । शब्दस्य स्वरूपमिह ग्राह्यत्वेन विधित्सितमिति नेह प्रदेशविशेषसमर्पकं लिङ्गमस्तीति भावः ॥ ननु शब्दस्येत्येव लिङ्गम्, यत्र शब्दग्रहणं तत्र स्वरूपमेव ग्राह्यं न तु पर्यायादीत्यर्थः । तेन जनपदे, अपत्यमित्यादौ नास्याः प्रवृत्तिरत आह—विध्यन्तरेति । न हि स्वं रूपमित्यस्याग्नेर्ढगित्यादौ पञ्चम्यन्तेन सामानाधिकरण्येन वैयधिकरण्येन वा संबन्धः संभवतीति भावः ॥ भाष्यकारोऽप्याह—रूपं शब्दस्य संज्ञेत्ययमेव पक्षो युक्तः ॥ ननु संज्ञापक्षे उभयगतिन्यायाद् एकस्यानेकार्थसंभवादन्यार्थस्यापि प्रतीतौ तत्र कार्यासंभवे ढगादयः पर्यायादिभ्योऽपि दुर्वारा इत्यत आह—देवदत्तादयश्चेति ॥ नियमार्थत्वमुपपादयति—सर्वार्थेति ॥ एकस्य सकलशब्दार्थात्मकस्फोटस्यैव सर्वबोधकत्वादिति भावः ॥ शक्तियुक्त इति । शक्त्याश्रय इत्यर्थः ॥ सर्वशब्दप्रत्याय्यशक्तिरिति । प्रत्याय्यत्वशक्तियुक्त इत्यर्थः ॥ अनेन नियमद्वय दर्शितम्—अनेन शब्देनायमेवार्थो ग्राह्यः, अयमर्थोऽनेनैव शब्देन बोधनीय इति चेति ॥ वस्तुतस्तु सर्वेषां सर्वार्थवाचकत्वेऽपि तत्रास्मदादिज्ञानविषयः, सर्वार्थसर्वशब्दानामस्माकं विशिष्याज्ञानात् । किंतु योगिनामेव तज्ज्ञानम् । एवंच शास्त्राधिकारिणोऽस्मदादीन्प्रति नियमार्थत्वं शास्त्रस्यासंभव्येव । इयं कथा तु सर्वस्य ब्रह्मरूपत्वकथावन्न व्यवहारोपयोगिनी । तस्मात् प्रकरणादस्यैनार्थस्य शास्त्रे उपस्थितौ अर्थान्नियमः फलित इति बोध्यम् ॥ तत्र द्वितीयो नियमश्चिन्त्यः, आकारादीनां वृद्धिशब्दातिरिक्तैराकारादिशब्दैर्व्यवहारानापत्तेरिति केचित् ॥ ननु रूपरूपिणोरत्र भेदाभावाच्छब्दस्येति षष्ठ्यनुपपन्ना, संज्ञासंज्ञिसंबन्धश्चानुपपन्न इत्यत आह—रूपेति । सामान्यलक्षणघटकानेकसमवेतत्वसिद्धये आह—शुकेति । न च तत्रोच्चारणक्रियैव भिद्यते न शब्द इति वाच्यम् । ताल्वादिव्यापाररूपस्योच्चारणस्याश्रौतत्वेन शब्दश्रवणानन्तरं ज्ञायमानवक्तृविशेषानुमानानापत्तेः, उदात्तत्वादिविरुद्धधर्माध्यासाच्च भेदसिद्धेः, वर्णनिष्ठतया प्रतीयमानानां ध्वनिनिष्ठत्वकल्पने मानाभावाद् इति भावः ॥ ननु प्रायेण सामानाधिकरण्यं संज्ञासंज्ञिनोर्दृष्टम्, न चेह तदित्यत आह—तत्रेति ॥ स्वशब्दो व्यक्तिबोधक आत्मीयत्वेन । एवंच शब्दस्य तत्तज्जातिविशिष्टस्य स्वं व्यक्तिः रूपं सामान्यसंज्ञकमित्याद्यः पक्षः । शब्दस्य रूपमित्युद्दिश्य स्वमित्यनेन व्यक्तिसंज्ञकत्वं विधीयत, इति द्वितीयपक्षसंभवः । सामानाधिकरण्यस्य चोप-

पत्तिः । न चानयोः पक्षयोः फले कश्चिद्विशेष इत्याह—**व्यक्तिरिति ॥ व्यक्तिद्वारेणेति ।** सामान्यस्य ढगादिभिः साक्षाद्गौर्यापर्यासंभवादिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—**स्वरूपस्येति**—शब्देन विनिगमकाभावादित्यादिः । **तत्र**—रूपशब्दस्य सामान्यवाचित्वे ।

उद्द्योते—शब्देन स्वरूपपर्यायविशेषाणां ग्रहणप्राप्तौ हेतुमाह—**शब्देनेति ।** विनिगमनाविरहादिति भावः । 'लिङ्गाभावादि'ति हेतोराशयमाह—**शब्दस्येति । आदिना**—विशेषसमुच्चयः । **अस्याः**—'स्वंरूपमि'त्यस्याः । अस्य संज्ञात्वे मानान्तरमाह—**भाष्यकारोऽपीति । अयमेव**—अस्य संज्ञासूत्रत्वमित्येव । अनुयोगितासम्बन्धेन शक्तियुक्तत्वं विवक्षितमित्याशयेनाह-**शक्त्याश्रय इति ।** तथा च—अर्थेऽस्यातिप्रसङ्गो नेति भावः । यथाश्रुतासङ्गतेराह-**प्रत्याय्यत्वेति ।** प्रत्याय्यत्वरूपेणेत्यर्थः । **ग्राह्यः**—ग्राह्य इति । कैयटोक्तं खण्डयति—**वस्तुतस्त्विति । सर्वार्थसर्वशब्दानां**—सर्वेषामर्थानां सर्वेषां शब्दानाञ्च । प्रमेयत्वादिना ज्ञानसत्त्वेऽपि तस्य व्यवहाराद्यनुपयोगित्वादाह—**विशिष्येति । इयं कथा**—सर्वे सर्वार्थवाचका इति कथा । तत्रापि दोष इत्याह—**तत्रेति ।** तयोर्मध्ये इत्यर्थः । **तत्र**—तत्तदुच्चारितशब्दविषये । तेषां वस्तुतः शब्देऽसत्त्वादाह—**अध्यासादिति । भेदेति**—शब्दभेदेत्यर्थः । ननूदात्तत्वादिविरुद्धधर्माध्यासकृतो न शब्दभेदस्तेषां ध्वनिनिष्ठत्वकल्पनादित्यत आह—**वर्णनिष्ठतयेति ।** 'उञः' इत्यादौ संज्ञासंज्ञिनोः सामानाधिकरण्याभावादाह—**प्रायेणेति । न च**—न तु । **एवञ्च**—स्वशब्देन व्यक्तेः, रूपशब्देन सामान्यस्य, तथा-शब्दशब्देन तत्तज्जातिविशिष्टस्य बोध्यत्वे च । **सामान्येति**—तत्तच्छब्दगतेत्यादिः । **शब्दस्येति**—तथेत्यादिः । **सामानेति**—पक्षद्वये संज्ञासंज्ञिनोरित्यादिः । **चोपपत्तिः**—उपपत्तिश्च । **न च**—नापि ॥ अशब्दसंज्ञेत्यत्र—न शब्दस्य संज्ञेति षष्ठीसमासः, तथा सति—कर्मकरणाद्यर्थसंज्ञास्वेतन्निषेधाप्रवृत्त्या स्वरूपग्रहणापत्तेः । किन्तु—शब्दे संज्ञेति सप्तमीसमासः, शब्दपदञ्च शब्दशास्त्रपरम् । तथा च—शब्दशास्त्रे या संज्ञा तां विनेति तदर्थः ॥

---

## ( अर्थवत्परिभाषासाधनाधिकरणम् )

### ( आक्षेपभाष्यम् )

**रूपग्रहणं किमर्थम् । न 'स्वं शब्दस्याशब्दसंज्ञा' भवतीत्येव रूपं शब्दस्य संज्ञा भविष्यति । न ह्यन्यत्स्वं शब्दस्यास्त्यन्यदतो रूपात् ?**

**( प्रदीपः ) रूपग्रहणमिति ।** प्रतीताद्युपदेशानपेक्षत्वादन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च रूपमेव ग्रहीष्यते । अर्थो हि सम्बन्धग्रहणमपेक्षते । अनुकरणशब्देषु नार्थः प्रतीयते । साधारणश्च पर्यायैरपि प्रत्यायनात् । न चार्थः संज्ञा शक्यते वक्तुं, संज्ञित्वे चार्थस्य सूत्रमनर्थकमिति प्रश्नः ॥

**( उद्द्योतः ) रूपग्रहणं किमर्थमि**ति भाष्यस्य-स्वशब्देनैव जातिर्ग्राह्या व्यक्तिर्वा । शब्दस्य स्वं स्वीया जातिर्व्यक्तिर्वा बोध्येत्यर्थो भविष्यति । सामानाधिकरण्यमेव संज्ञासंज्ञिनोरिति तु न नियमः, उञ इत्यादौ व्यभिचारादित्याशयः । शब्दस्य सूत्रोच्चारितस्य स्वं स्वीयं रूपं प्रयोगस्थं संज्ञीत्यर्थ इति केचित् ॥ भाष्ये—**रूपं शब्दस्य संज्ञे**त्यत्र संज्ञाशब्दो बोध्यपरः, कर्मण्युत्पत्तेः । अन्यथा स्वशब्देनार्थग्रहणाय रूपग्रहणमित्युत्तरभाष्यासङ्गतेः । न ह्यर्थः शब्दस्य संज्ञा, किन्तु बोध्य एवेति बोध्यम् । तत्रात्मीयवाचिना स्वशब्देन रूपस्यैव कथं परिग्रह इत्यत आह—**प्रतीतादिति । उपदेशः** संबन्धग्रहणम् । **अन्तरङ्गत्वं** प्रथमतः श्रोत्रेणोपस्थित्या ॥ अहेयत्वमुपपादयति—**अनुकरणेति ।** शब्दमात्रतात्पर्यकोच्चारणस्यैवानुकरणत्वाद् ॥ अर्थस्य रूपतुल्यत्वमभ्युपेत्याप्याह—**न चार्थ इति ।** शब्दात्मिकानामेवावर्तिनीत्वेन संज्ञात्वात्' तादृशसंज्ञयाऽव्यवहाराच्चेति भावः ॥ ननु स्वं शब्दस्याभिधेयमित्येवार्थोऽस्त्वित्यत आह-**संज्ञित्वे चेति ।** लोकत एव सिद्धेरिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**न**—किं न । ननु कस्मादन्यदित्यत आह—**अन्यदत इति ।**

प्रदीपे—**प्रतीतौ**—शब्दोच्चारणानन्तरं-शब्दस्वरूपप्रतीतौ । **रूपमिति**—स्वशब्देन शब्दस्येत्यादिः । **एवेन**—अर्थस्य व्यवच्छेदः । तत्र हेतुमाह—**अर्थो हीति ।** प्रतीताविति शेषः । **सूत्रम्**—प्रकृतसूत्रम् । **इति प्रश्नः**—इति हेतोः प्रश्नः ।

उद्द्योते—नन्वेवं 'रूपग्रहणं किमर्थमि'ति भाष्यस्यासङ्गतिरित्यत आह—**रूपग्रहणमिति । भाष्यस्येति**—अस्य 'आशयः' इत्यनेनान्वयः । **शब्दस्येति**—तथा चेत्यादिः । **अर्थः**—प्रकृतसूत्रार्थः । नन्वत्र कल्पे संज्ञासंज्ञिनोः सामानाधिकरण्यं नोपपद्यते इत्यत आह-**सामानेति ।** अनेनैवाशयेन रूपग्रहणसत्त्वेऽपि रत्नादिभिरुक्तमाह—**शब्दस्येति । स्वीयम्**—आत्मीयम् । **रूपं**—सदृशम् । **अर्थः**—प्रकृतसूत्रार्थः । **केचिदिति** सूचितारुचिबीजन्तु-एवमपि तदन्यतरवैयर्थ्यमेव । **तत्र**—रूपग्रहणाभावे । **अहेयत्वमिति**—अर्थस्य हेयत्वाद्युपपादनद्वारा शब्दस्येत्यादिः । **मात्र**—पदेनार्थव्यवच्छेदः । **आवर्त्तिनीत्वेन**—पुनः पुनः प्रयुज्यमानत्वेन ॥ **तादृशसंज्ञया**—अर्थसंज्ञया ।

### ( समाधानभाष्यम् )

**एवं तर्हि सिद्धे सति यद्रूपग्रहणं करोति तज्ज्ञापयत्याचार्यः—अस्त्यन्यद्रूपात्स्वं शब्दस्येति ॥**

**किं पुनस्तत् ? ॥**

**अर्थः ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ? ॥**

**'अर्थवद्ग्रहणे नानर्थकस्य'**

**इत्येषा परिभाषा न कर्तव्या भवति ॥**

**( प्रदीपः ) एवं तर्हीति ।** यत एवेह रूपग्रहणस्य व्यावर्त्यं नास्ति तत एव ज्ञापकम् । सति तु व्यावर्त्ये तत्रैवोपक्षयान्न ज्ञापकं स्यात् ॥ **अर्थवद्ग्रहण इति ।** अर्थयुक्तं रूपं गृह्यत इत्यर्थः । तेन काशे कुशे इत्यत्र शे इति प्रगृह्यसंज्ञा न भवति । यत्र चार्थवत्ता रूपेण शब्दो नाश्रीयते तत्रेदं नोपतिष्ठते । यथा वर्णग्रहणेषु टेरेत्वे चेति पचेते इत्यत्रानर्थकस्यापि टेरेत्वं भवति ॥

**( उद्द्योतः ) ज्ञापकमिति ।** स्वशब्देन बहिरङ्गस्याप्यर्थस्य ग्रहणे इत्यर्थः ॥ नन्वन्यस्य स्वीयस्य सत्त्वेन तद्व्यावृत्त्यर्थं रूपग्रहणमित्यर्थो भाष्याल्लभ्यते । एवं च शास्त्रेऽर्थस्याग्रहणे कथमर्थवत्परिभाषासिद्धिरिति चेन्न । अन्यत् स्वीयमस्ति यतोऽतस्तस्यापि शब्दबोध्यत्वबोधनार्थमुभयोपादानमिति भाष्याशयात् । एवं चाधिकसङ्ग्रहार्थं रूपग्रहणम् । रूपग्रहणेन चान्तरङ्गत्वादिन्यायबाधपूर्वकं स्वशब्देनार्थस्य शब्दबोध्यत्वं बोध्यत इति तात्पर्यम् ॥ तत्रोभयानुग्र-

ह्याय सति संभवेऽर्थवतो रूपस्य ग्रहणम्। असति तु केवलार्थस्य शुद्धस्य वा रूपस्य ग्रहणम्। तदाह—**यत्र चार्थवतेत्यादि।** अर्थोपस्थापकेन रूपेणेत्यर्थः। अत एव भिन्नविभक्तिनिर्देशश्चरितार्थः॥

**( तत्त्वालोकः )** भाष्ये—**भवति**—भवतीति।

उद्द्योते—**उभयेति**—स्वशब्दस्य रूपशब्दस्य चेत्यर्थः। पूर्वोक्तदोषं परिहरति—**रूपग्रहणेन चेति। तत्र**—तयोर्मध्ये। **उभयेति**—प्रकृतसूत्रप्राप्तरूप-ज्ञापनप्राप्तार्थरूपोभयेत्यर्थः॥ अत्र मानमाह—**अत एवेति।** उक्तार्थस्याभ्युपगमादेवेत्यर्थः। प्रकृतसूत्रे इति शेषः॥

---

( सूत्रप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं पुनरिदमुच्यते ?।

**( प्रदीपः ) किमर्थमिति।** वक्ष्यमाणोऽभिप्रायः॥

**( तत्त्वालोकः )** भाष्ये—**इदम्**—प्रकृतसूत्रम्। एवमग्रेऽपि।

( ४९७ समाधानवार्तिकम् ॥ १ ॥ )

**॥*॥ शब्देनार्थगतेरर्थे कार्यस्यासंभवात् तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम् ॥*॥**

( भाष्यम् )

शब्देनोच्चारितेनार्थो गम्यते—गामानय दध्यशानेति, अर्थ आनीयते अर्थश्च भुज्यते। अर्थे कार्यस्यासंभवाद्, इह च व्याकरणे अर्थे कार्यस्यासंभवः'-अग्नेर्ढग्' इति न शक्यतेऽङ्गारेभ्यः परो ढक् कर्तुम्। शब्देनार्थगतेरर्थे कार्यस्यासंभवाद् यावन्तस्तद्वाचिनः शब्दास्तावद्भ्यः सर्वेभ्य उत्पत्तिः प्राप्नोति। इष्यते च—तस्मादेव स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति तद्वाचिनः संज्ञाप्रतिषेधार्थं स्वंरूपवचनम्॥ एवमर्थमिदमुच्यते॥

**( प्रदीपः ) शब्देनार्थगतेरिति।** कात्यायनवचनप्रामाण्याद्**स्त्रियामिति** प्रतिषेधस्यानित्यत्वाद्विभाषा गुणेऽस्त्रियामिति पञ्चमी॥ इह योग्यतालक्षणेन संबन्धेन शब्दोऽर्थं लोके प्रत्याययति। व्याकरणेऽपि पशुरपत्यं देवता प्राच्य उदञ्चो भरता इत्यर्थ एव गृह्यते। **अग्नेर्ढगि**त्यादौ त्वर्थस्य प्रत्ययेन पौर्वापर्यासंभवात् साहचर्यात् सर्वस्य तद्वाचिनः संप्रत्ययः स्यादिति सूत्रारम्भः॥ **संज्ञाप्रतिषेधार्थमिति। संज्ञा** सम्प्रत्यय उच्यते॥

**( उद्द्योतः ) इह योग्यतेति। योग्यता** बोधजनकतारूपातया लक्ष्यते कल्प्यत इति योग्यतालक्षणः शक्तिः, तस्या उभयाश्रयत्वेन उभयाधीनत्वलक्षणगुणयोगाद् गौण्या वृत्त्या वा संबन्धपदव्यवहार्यत्वमिति बोध्यम्॥ **इत्यर्थ एवेति॥** अर्थे कार्यस्य संभवादिति भावः॥ ननु संज्ञाविधायकस्य तत्प्रतिषेधार्थकत्वमयुक्तमत आह—**संप्रत्यय इति।** भावेऽक्तिति भावः॥

**( तत्त्वालोकः )** भाष्ये—**गामिति**—यथा लोके इत्यादिः। **अग्नेरिति**—यथेत्यादिः। उच्चरितेति—इत्यादिः। **तस्मादेव**—अग्निशब्दादेव।

प्रदीपे—**तद्वाचिनः**—अग्निवाचिनः। **सूत्रेति**—प्रकृतसूत्रेत्यर्थः।

उद्द्योते—**संज्ञाविधायकस्येति**—प्रकृतसूत्रस्येति शेषः। **भावे इति**—तथा च-संज्ञानं संज्ञेत्यादिः।

( ४९८ समाधाननिराकरणवार्तिकम् ॥ २ ॥ )

**॥*॥ न वा शब्दपूर्वको ह्यर्थे संप्रत्ययस्तस्मादर्थनिवृत्तिः ॥*॥**

( भाष्यम् )

न वा एतत्प्रयोजनमस्ति॥

किं कारणम्।

शब्दपूर्वको ह्यर्थे संप्रत्ययः। आतश्च शब्दपूर्वकः। योऽपि ह्यसावाहूयते नाम्ना। नाम च यदानेन नोपलब्धं भवति, तदा पृच्छति—'किं भवानाह' इति, शब्दपूर्वकश्चास्य संप्रत्ययः॥ इह च व्याकरणे शब्दे कार्यस्य संभवः, अर्थेऽसंभवः। तस्मादर्थनिवृत्तिः। तस्मादर्थस्य निवृत्तिर्भविष्यति॥

**( प्रदीपः ) न वेति।** शब्द उपलब्धोऽर्थं प्रत्याययति, न सत्तामात्रेण, चक्षुरादीनि तु सत्तामात्रेण विषयमवगमयन्ति। अर्थस्य शास्त्रीये कार्ये कश्चिदयोग्यत्वात् प्रत्यासत्त्या स एवोपात्तः शब्दो ग्रहीष्यते, न तु विप्रकृष्टं शब्दान्तरमिति भावः॥ **शब्दपूर्वक इति। अस्योपलब्धुः** शब्दपूर्वक इत्यर्थः॥

**( उद्द्योतः )** नन्वर्थप्रत्ययस्य शब्दपूर्वकत्वेऽपि कथं स्वरूपस्यैव ग्रहणमत आह-**शब्द इति॥** तथा च प्रथमप्रतीतत्वरूपकारणादुच्चारितशब्दस्यैव ग्रहणं युक्तमिति भावः॥ **शब्दपूर्वक इत्यस्य** शब्दज्ञानपूर्वक इत्यर्थः। **प्रत्यासत्त्येति।** अर्थबोधानुकूलत्वेन ज्ञाते प्रथमप्रतीते शब्द एवार्थेऽसंभवे कार्यम्, न तु तत्पर्यायादिष्विति भावः॥ अर्थे कार्यसंभवे तु तस्यैव। एवं चोपस्थितस्यार्थस्य सर्वथा त्यागे मानाभावाद् **अर्थवत्**परिभाषापि सूत्रं विना सिद्धेति तात्पर्यम्॥ एवं चैतन्न्यायानुवादकमिदं सूत्रं मन्दमत्यनुग्रहायेति बोध्यम्॥ ननु अर्थज्ञानोत्तरं परं प्रति तद्बोधनाय शब्दप्रयोग इति कथं शब्दपूर्वकत्वमर्थप्रतीतेरत आह—**अस्योपलब्धुरिति।** श्रोतुरित्यर्थः। भाष्ये—**शब्दपूर्वको हीति।** हिः प्रसिद्ध्यर्थः। श्रोतुः शब्दज्ञानपूर्वकोऽर्थप्रत्यय इति लोकप्रसिद्धमित्यर्थः॥ युक्त्यन्तरमप्याह—**आतश्चेति।** एवं च शब्दस्यार्थप्रतीतौ कारणत्वादर्थे कार्यासंभवे तद्बोधकारणत्वेनोपस्थिते शब्दे कार्यमिति भावः॥ इदानीं तत्तच्छब्दजन्यार्थबोधे प्रकारतया भासमानशब्द एव कार्यमर्थेऽसंभवे इत्याह—**शब्दपूर्वकश्चेति।** शब्दविशेषणकश्चार्थविशेष्यकः प्रत्यय इत्यर्थः॥ **न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते** इति भावः॥ चकारेण चास्य युक्त्यन्तरत्वं सूचितम्॥ भाष्ये—**तस्मादर्थनिवृत्तिरिति।** अर्थवाचकशब्दान्तरनिवृत्तिरित्यर्थः॥

**( तत्त्वालोकः )** उद्द्योते—नन्वेवं भाष्यविरोध इत्यत आह—**शब्दपूर्वक इत्यस्येति।** भाष्यस्येति शेषः। **सूत्रम्—प्रकृतसूत्रम्। एतन्न्यायेति**—अर्थवन्न्यायेत्यर्थः। **उपस्थिते**—प्राक्उपस्थित एव,

न तु सर्वत्र । पौनरुक्त्यपरिहारायाह—इदानीमिति । तद्युक्तिकथनानन्तरमित्यर्थः । प्रत्ययः—ज्ञानम् । शब्दानुगमात्—शब्दविषयकत्वात् । ननूक्तोपसंहार एव 'शब्दपूर्वकश्चे'त्ययं कुतो नेत्यत आह—चकारेण चेति । अस्य—'शब्दपूर्वकश्चे'त्यस्य ।

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—अशब्दसंज्ञेति वक्ष्यामीति । इह मा भूत्—'दाधा घ्वदाप्' 'तरप्तमपौ घः' इति ॥**

**( प्रदीपः )** अशब्दसंज्ञेति । न्यायात् स्वरूपग्रहणे सिद्धे शब्दसंज्ञायां स्वरूपग्रहणं मा भूदित्येवमर्थमिदमित्यर्थः । अन्यथोपसर्गे घोः किरिति किः प्रत्ययो घोर्धातोः शब्दार्थात् स्यात्, न तु दाधाभ्यः । कुमारीघ इत्यत्र घरूपेति ह्रस्वः प्रसज्येत ॥ ई हल्यघो रित्यत्र तु घुशब्दस्याकारान्तत्वाभावाद्दाधामेव ग्रहणं सिध्यति ॥

**( उद्द्योतः )** फलान्तरं शङ्कते—इदं तर्हीति ॥ एवमर्थमिति । निषेधप्रतियोगिज्ञानार्थं न्यायसिद्धस्यापि विध्यंशस्यानुवाद इत्यर्थः ॥ किः प्रत्यय इति । न चैवं पेषंवासवाहनधिषु चेति धिग्रहणं व्यर्थं स्याद् । न हि धाधातोः किं विना उदकस्य ध्युत्तरपदत्वं संभवति । तत्र हि कर्मण्यधिकरणे चेति तदुत्तरसूत्रेण किरिति वाच्यम् । उपलक्षणमिदं, सनि मीमाघु नेर्गदेत्यादौ घुधातोर्ग्रहणं स्यादिति बोध्यम् ॥ कुमारीघ इति । ननु अयं षष्ठीतत्पुरुषः कर्मधारयो वा, उभयथापि नात्र प्राप्तिः, तत्र स्त्रियां समानाधिकरण इत्यनुवृत्तेरिति चेत् न । घोऽस्त्यस्याः सा घा, कुमारी घा अस्य इति बहुव्रीहौ कुमारीघ इत्यर्थाद् । घादिषु ह्रस्वत्वं पुंवद्भावाद्विप्रतिषेधेनेत्युक्तेः पुंवत्त्वं बाधित्वा ह्रस्वप्राप्तिरत्रेत्याशयात् ॥ घुसंज्ञाविधानस्य नहि कोऽवकाश इत्यत आह—ई हलीति ॥ घसंज्ञापि किमेत्तिङव्ययघादित्यादौ चरितार्था । तत्र हि तिङन्तात्तरान्तरात्माप्यातिपदिकासमभवादिति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—इहेति—अनेत्यादिः । स्वरूपग्रहणमिति शेषः ।

प्रदीपे—न्यायात्—अर्थवन्न्यायात् । इदम्—प्रकृतसूत्रम् । शब्दार्थात्—घुशब्दार्थात् । दाधाभ्य इति—घुसंज्ञकेभ्य इत्यादिः । कुमारीति—तथेत्यादिः ।

उद्द्योते—फलान्तरमिति—भाष्ये इत्यादिः । निषेधेति—शब्दसंज्ञायां स्वरूपग्रहणं मा भूदिति निषेधेत्यर्थः । न्यायेति—अर्थवन्न्यायेत्यर्थः । विध्यंशस्येति—प्रकृतसूत्रेणेति शेषः । एवम्—'उपसर्गे घोः किरि'त्यत्र घुशब्देन नदर्थस्य घुधातोर्ग्रहणे । उदकस्य—उदकशब्दस्य । उपलक्षणमिति—एत इत्यादिः । सनीति—तथा चेत्यादिः । घुधातोरिति—घुशब्देनेत्यादिः । प्राप्तिरिति—ह्रस्वस्येत्यादिः । तत्र—प्रकृतसूत्रे । घेति—अत्र 'अर्शआदित्वाद'च् । नन्वेवं पुंवत्त्वापत्तिरत्रेत्यत आह—घादिष्विति । घुसंज्ञेति—नन्वित्यादिः । कयटस्य न्यूनतां निराचष्ट—घसंज्ञाऽपीति ।

( ४९९ प्रयोजननिराकरणवार्तिकम् ॥ २ ॥ )

**॥ * ॥ शब्दसंज्ञाप्रतिषेधानर्थक्यं वचनप्रामाण्यात् ॥ * ॥**

( भाष्यम् )

**शब्दसंज्ञायाः प्रतिषेधोऽनर्थकः ॥**

**शब्दसंज्ञायां स्वरूपविधिः कस्मान्न भवति ? ।**

**वचनप्रामाण्यात् । शब्दसंज्ञावचनसामर्थ्यात् ॥**

**( प्रदीपः )** वचनप्रामाण्यादिति । प्रदेशेषु संज्ञिप्रत्यायनार्थं संज्ञाकरणमिति सामर्थ्यात् स्वरूपग्रहणं न भविष्यति ॥

**( उद्द्योतः )** प्रदेशेष्विति । सर्वप्रदेशेष्वित्यर्थः । संज्ञावचनसामर्थ्यगम्यप्रकरणात् प्रत्यासत्तिन्यायो बाध्यत इत्यभिप्रायः । न च 'ई हल्यघोः' 'किमेत्तिङव्ययघे'त्यत्र तयोश्चारितार्थ्यम् । तावन्मात्रफलकत्वे तत्रैव दाधाग्रहणं तरप्तमब्ग्रहणं च कुर्याद् इति बोध्यम् ॥

**( तत्त्वालोकः )** भाष्ये—शब्दसंज्ञायामिति—प्रतिषेधाभावे इत्यादिः ।

प्रदीपे—सामर्थ्यादिति—संज्ञाकरणसामर्थ्यादित्यर्थः । शब्दसंज्ञायामिति शेषः । उद्द्योते—तयोः—घुसंज्ञा-घसंज्ञावचनयोः ।

( प्रयोजनसाधकभाष्यम् )

**ननु च वचनप्रामाण्यात् संज्ञिनां संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च संज्ञायाः ॥**

**( प्रदीपः )** ननु चेति । उभयगतिरिह शास्त्रे दृष्टा-सङ्ख्याकर्मकरणादिष्विति इहापि स्वरूपस्य संज्ञिनश्च प्रदेशेषु ग्रहणं स्यात् ॥

**( उद्द्योतः )** उभयगतिरिति । संज्ञावचनस्य प्रत्यासत्तेश्चानुग्रहायोभयगतिरिति भावः । सूत्रारम्भमभ्युपेत्येदम् ॥

**( तत्त्वालोकः )** उद्द्योते—ननूभयगतिरित्यस्य कृत्रिमाकृत्रिमन्यायविषयत्वात् प्रकृतसूत्राभावे कथमत्र सेत्यत आह—सूत्रारम्भमिति । प्रकृतेत्यादिः ।

( प्रयोजनबाधकभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति—शब्दसंज्ञायां न स्वरूपविधिर्भवतीति । यदयम्—'ष्णान्ता षड्' इति षकारान्तायाः संख्यायाः षट्संज्ञां शास्ति । इतरथा हि वचनप्रामाण्याच्च नकारान्तायाः संख्यायाः संप्रत्ययः स्यात्, स्वरूपग्रहणाच्च षकारान्तायाः ॥**

**(तत्त्वालोकः)** आचार्येति—यत इत्यादिः । अयम्—आचार्यः । इतरथा—शब्दसंज्ञायां स्वरूपविधिसत्त्वे ।

( प्रयोजनसाधकभाष्यम् )

**नैतदस्ति ज्ञापकम् । न हि षकारान्ता संज्ञास्ति ॥**

**का तर्हि ? ।**

**डकारान्ता ॥**

**( प्रदीपः )** न हीति । षड्भ्यो लुगि यादावुच्चारितेति भावः ॥ का तर्हीति । तत्र डकारान्तः शब्द उच्चारितः, जश्शसोश्च षकारान्ताल्लुक् कर्तव्यः । षण्णामिति च नुट् ॥

**( उद्द्योतः )** षड्भ्य इति । भाष्ये—संज्ञाशब्दो बोधकपरः । न हि षकारान्तो बोधकशब्दस्तत्रोच्चारित इत्यर्थ इति भावः ॥ षकारान्तादिति । जश्शसोर्लुकः प्राग् जश्त्वाभावाद् । एवञ्च तदर्थं तस्य षट्संज्ञा विधीयत इति न ज्ञापकत्वमिति भावः ॥

**( तत्त्वालोकः )** प्रदीपे—तत्र—'षड्भ्यो लुगि'त्यादौ । एवमुद्द्योतेऽपि । नुडिति—षकारान्तात्कर्तव्य इत्यनुषज्यते ।

उद्द्योते—न हीति—तथा चेत्यादिः । तदर्थम्—लुग्नुडर्थम् । तस्य—षकारान्तस्य ।

( प्रयोजनबाधकभाष्यम् )

**असिद्धं जश्त्वम्। तस्यासिद्धत्वात् षकारान्ता ॥**

**( प्रदीपः ) असिद्धमिति।** डकारान्तः श्रूयमाणोऽपि डत्वस्यासिद्धत्वात् षकारान्तस्य स्वरूपस्य ग्राहको भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) डकारान्त इति।** षष उत्तरयोर्जश्शसोरिति स्वरूपग्रहणेन लुकि कार्ये जश्त्वमसिद्धमिति भावः॥ तथापि संज्ञासूत्रे टान्तोच्चारणात्षड्भ्य इत्यादौ डत्वासिद्धत्वेनैव निर्वाहः। संहितापाठेन डान्तस्य संज्ञात्वे **षट्चतुर्भ्यं** इत्यत्र चर्त्वासिद्धत्वमावश्यकमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**असिद्धमिति**—नैषाऽनुपपत्तिः, यतो लुग्दृष्टथेत्यादिः।

उद्द्योते—असिद्धत्वं सर्वथाऽभ्युपेयमित्याह—**तथापीति।** प्रकृतसूत्रारम्भवादिनोऽपीत्यर्थः। **संज्ञासूत्रे**—षट्संज्ञासूत्रे।

( प्रयोजनभाष्यम् )

**मन्त्राद्यर्थं तर्हीदं वक्तव्यम्। मन्त्रे, ऋचि, यजुषीति यदुच्यते, तन्मन्त्रशब्दे, ऋक्शब्दे, यजुःशब्दे च मा भूत् ॥**

**( प्रदीपः ) मन्त्राद्यर्थमिति।** मन्त्रादयः शब्दस्य संज्ञाः ॥

**( उद्द्योतः ) ण्णान्तेत्यादि** ज्ञापकं **शास्त्रीयशब्दसंज्ञायां न स्वरूपग्रहणमि**त्यर्थं बोधयितुं न तु शब्दपदार्थके इत्याशयेनाह—भाष्ये—**मन्त्राद्यर्थमिति ॥**

**( तत्त्वालोकः )** भाष्ये—'अशब्दसंज्ञे'त्यत्र शब्दस्य संज्ञेति षष्ठीसमासमभिप्रेत्याह—**मन्त्राद्यर्थमिति। मन्त्रे इति**–येनेत्यादिः।

( ५०० प्रयोजननिराकरणवार्तिकम् ॥ ४ ॥ )

**॥*॥ मन्त्राद्यर्थमिति चेच्छास्त्रसामर्थ्यादर्थगतेः सिद्धम् ॥*॥**

( भाष्यम् )

मन्त्राद्यर्थमिति चेत्। तन्न ॥

किं कारणम्?।

शास्त्रस्य सामर्थ्यादर्थस्य गतिर्भविष्यति। मन्त्रे ऋचि यजुषीति यदुच्यते, मन्त्रशब्दे ऋक्शब्दे यजुःशब्दे च तस्य कार्यस्य संभवो नास्तीति कृत्वा मन्त्रादिसहचरितो योऽर्थस्तस्य गतिर्भविष्यति, साहचर्यात् ॥

**( प्रदीपः ) शास्त्रसामर्थ्यादिति। देवसुम्नयो**रित्यादौ क्यजादीनां निमित्तत्वेनोपादानाद्यजुषि ऋचि मन्त्र इति च स्वरूपं न ग्रहीष्यते। न च तथाविधं लक्ष्यमस्तीति भावः॥ **मन्त्रादिसहचरित इति।** साहचर्यं च शब्दानुविद्धस्यैवार्थस्यावगमात् ॥

**( उद्द्योतः ) शब्दानुविद्धस्यैवेति। न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते,** इति हर्युक्तेरिति भावः॥ तद्बोध्यत्वेन सहचरितत्वमित्यन्ये ॥

---

( न्यूनतानिराकरणाधिकरणम् )

( ५०१ आक्षेपवार्तिकम् ॥ ५ ॥ )

**॥*॥ सित्तद्विशेषाणां वृक्षाद्यर्थम् ॥*॥**

( भाष्यम् )

सिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—'तद्विशेषाणां ग्रहणं भवति' इति ॥

किं प्रयोजनम्?।

वृक्षाद्यर्थम्। 'विभाषा वृक्षमृग—' इति—प्लक्षन्यग्रोधं प्लक्षन्यग्रोधाः ॥

**( प्रदीपः ) सित्तद्विशेषाणामिति।** वृक्षस् मृगस् इत्येवं निर्देशः कर्तव्यः। एतदपि न्यायसिद्धं तुल्यजातीयानां द्वन्द्व एकवद्भवतीति वक्ष्यते पर्यायाणां च युगपत्प्रयोगाभावात् सामान्यविशेषाणां च चार्थाभावात् सामान्यशब्देन सर्वविशेषाणामाक्षेपाद्धववृक्षमिति द्वन्द्वाभावाद्विशेषाणामेव प्लक्षन्यग्रोधादीनां ग्रहणं सिद्धम् ॥

**( उद्द्योतः )** चार्थाभावमुपपादयति—**सामान्यशब्देनेति।** एवं च पदार्थभेदाभावात्साहित्यरूपचार्थासंभव इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—प्रकृतसूत्राभ्युपगमे 'विभाषा वृक्षमृगे'त्यादिसूत्रे वृक्षादिशब्दानामेव ग्रहणं स्यात्, न तु तद्विशेषाणामित्यत आह—**सिन्निर्देश इति।** अत्र 'सिदि'त्युपलक्षणम्, एवञ्च-किञ्चिल्लिङ्गं वृक्षादिशब्देष्वासज्य 'इत्थंलिङ्गा विशेषाणां संज्ञे'ति वक्तव्यमित्याशयः। एवमग्रेऽपि। 'वृक्षादिशब्देषु' इति शेषः। **तद्विशेषाणामिति**—यत्र सिन्निर्देश इत्यादिः। **वृक्षाद्यर्थम्**—वृक्षादिशब्देषु विशेषाणां ग्रहणार्थम् ॥ यदि तु-लक्ष्यानुसारिव्याख्यानेनैवात्र तद्विशेषाणां ग्रहणन्तर्हि प्रकृतसूत्रविषयेऽपि तेनैव निर्वाहात्प्रकृतसूत्रं प्रत्याख्येयमेवेत्याशयः ॥

प्रदीपे—**निर्देश इति**—'विभाषा वृक्षमृगे'ति सूत्रे इति भावः। इदमपि प्रकारान्तरेणैव साधयति—**एतदपीति।** तद्विशेषाणां ग्रहणमपीत्यर्थः। **तुल्येति**—यत इत्यादिः। न्यायसिद्धत्वमेवोपपादयति—**पर्यायाणामिति।**

( ५०२ आक्षेपवार्तिकम् ॥ ६ ॥ )

**॥*॥ पित्पर्यायवचनस्य च स्वाद्यर्थम् ॥*॥**

( भाष्यम् )

पिन्निर्देशः कर्तव्यः। ततो वक्तव्यम्—पर्यायवचनस्य, च तद्विशेषाणां च ग्रहणं भवति स्वस्य च रूपस्येति ॥

किं प्रयोजनम्?।

**स्वाद्यर्थम्। 'स्वे पुषः'—स्वपोषं पुष्यति। रैपोषम्। धनपोषम्। अश्वपोषम्। गोपोषम् ॥**

**( प्रदीपः ) पित्पर्यायवचनस्य चेति।** चशब्दात् स्वरूपस्य विशेषाणां च ग्रहणम्। इदं वाचनिकमेव ॥

**( तत्त्वालोकः )** भाष्ये—**पिन्निर्देश इति**—स्वशब्दे इति शेषः। **पर्यायेति**—यत्र पिन्निर्देशस्तत्रेत्यादिः। **स्वाद्यर्थम्**—स्वशब्देन तत्पर्यायाणां तद्विशेषाणां स्वस्य च ग्रहणार्थम्।

( ५०३ आक्षेपवार्तिकम् ॥ ७ ॥ )

॥*॥ जित्पर्यायवचनस्यैव राजाद्यर्थम् ॥*॥

( भाष्यम् )

जिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—पर्यायवचनस्यैव ग्रहणं भवति ॥

किं प्रयोजनम् ? ।

राजाद्यर्थं । 'सभा राजाऽमनुष्यपूर्वा'—इनसभम्, ईश्वरसभम् ॥ तस्यैव न भवति—राजसभा ॥ तद्विशेषाणां च न भवति—पुष्पमित्रसभा, चन्द्रगुप्तसभा ॥

( प्रदीपः ) जित्पर्यायेति । इदं न्यायसिद्धमित्याहुः । अराजेति पर्युदास आश्रीयते । तेन राजशब्दसदृशानां तत्पर्यायाणामेव ग्रहणं सिध्यति ॥

( उद्द्योतः ) पर्युदास इति । कश्चित्तु अराजेति च्छेदाभावात् । किंच राजशब्दः, शब्दपरः मनुष्यशब्दश्चार्थपर इति दुर्लभं स्यात् । किंच एवं अमनुष्यशब्देनापि मनुष्यपर्यायाणामेव ग्रहणं स्यादितीदं वाचनिकमेवेत्याह ॥

( तत्त्वालोकः ) भाष्ये—जिन्निर्देश इति—राजशब्दे इति शेषः । पर्यायेति—यत्र जिन्निर्देशस्तत्रेत्यादिः । भवति—भवतीति । राजाद्यर्थम्—राजशब्देन तत्पर्यायाणामेव ग्रहणार्थम् । तस्यैव—राजशब्दस्यैव ।

प्रदीपे—इदम्—राजशब्देन तत्पर्यायाणां ग्रहणमपि । न्यायसिद्धत्वमेवोपपादयति—अराजेतीति ।

उद्द्योते—कश्चित्तु—कौस्तुभकृत्तु । अस्य 'आहे'त्यनेनान्वयः । किञ्चेति—यत इति शेषः । एवमग्रेऽपि ।

( ५०४ आक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ झित्तस्य च तद्विशेषाणां च मत्स्याद्यर्थम् ॥ * ॥

( भाष्यम् )

झिन्निर्देशः कर्तव्यः । ततो वक्तव्यम्—तस्य च ग्रहणं भवति तद्विशेषाणां चेति ॥

किं प्रयोजनम् ? ।

मत्स्याद्यर्थम् । 'पक्षिमत्स्यमृगान् हन्ति'—मात्सिकः । तद्विशेषाणाम्—शार्फरिकः । शाकुलिकः । पर्यायवचनानां न भवति—अजिह्मान् हन्ति, अनिमिषान् हन्तीति ॥ अस्यैकस्य पर्यायवचनस्येष्यते—मीनान् हन्ति मैनिकः ॥

स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ६८ ॥

( प्रदीपः ) झित्तस्य चेति । इदं वाचनिकमेव ॥ मत्स्याद्यर्थमिति । मृगपक्षिणोस्तु पिन्निर्देशस्तत्फललाभार्थः कर्तव्यः ॥ अस्यैकस्येति । इयमिष्टिरेव ॥ ६८ ॥

( उद्द्योतः ) आद्यन्तौ विहाय मध्योपादानेऽभिप्रायमाह—मृगेति । एवं च मत्स्याद्यर्थमित्यादिशब्दप्रयोजनं चिन्त्यम् ॥ ६८ ॥

( तत्त्वालोकः ) भाष्ये—झिन्निर्देश इति—मत्स्यादिशब्देष्विति शेषः । तस्य चेति—यत्र झिन्निर्देशस्तत्रेत्यादिः । मत्स्याद्यर्थम्—मत्स्यादिशब्देषु तस्य तद्विशेषाणाञ्च ग्रहणार्थम् ।

प्रदीपे—इदम्—इदमपि । तत्फलेति—झिन्निर्देशफलेत्यर्थः ।

उद्द्योते—आद्यन्तौ—पक्षिमृगशब्दौ । मध्येति—मत्स्यशब्दे-त्यर्थः ॥



( ६२-ग्रहणकशास्त्रम् ॥ १ । १ । ९ आ. । ९ मं. सू. ॥ )

# अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६९ ॥

( भाव्यमानेनेति परिभाषाज्ञापनाधिकरणम् )

( जिज्ञासाभाष्यम् )

अप्रत्यय इति किमर्थम् ? ॥

( प्रदीपः ) अणुदित् ॥ ६९ ॥ अप्रत्यय इति किमर्थमिति । किं यस्य प्रत्ययसंज्ञा विहिता तस्य प्रतिषेधः, उत यः प्रतीयते विधीयत इति यौगिकः प्रत्ययस्तस्यापीति प्रश्नः ॥

( उद्द्योतः ) अणुदित् ॥ ६९ ॥ किं यस्येति । नाक्षेपोऽयम् । किंतु विशेषजिज्ञासेत्यर्थः । उत यौगिक इत्यन्वयः । किमर्थमित्यत्रार्थशब्दोऽभिधेयपर इति तात्पर्यम् ॥

( तत्त्वालोकः ) भाष्ये—अणुदिदिति—अत्र 'अणिनुणः' 'अणिञोरनार्षयोः' 'इणजादिभ्यः' 'उणादयः' इत्यादिनिर्देशैः 'ङमो ह्रस्वादि'ति सूत्रे नित्यपदस्य प्रायिकार्थकत्वकल्पनाच्च ङमुडिति भावः ।

( समाधानभाष्यम् )

'सनाशंसभिक्ष उः' 'अ सांप्रतिके' ॥

( तत्त्वालोकः ) असाम्प्रतिके इति—इत्यादिभिर्विहितेनोप्रत्ययादिना सवर्णानां ग्रहणं मा भूदित्यर्थमिति शेषः ।

( आक्षेपभाष्यम् )

अत्यल्पमिदमुच्यते—अप्रत्यय इति । 'अप्रत्ययादेशटित्किन्मितः' इति वक्तव्यम् ॥ प्रत्यये—उदाहृतम् ॥ आदेशे—'इदम इश्' इतः, इह ॥ टिति—लविता, लवितुम् । किति—बभूव । मिति—हे अनड्वन् ॥

( प्रदीपः ) इत इति । विशेषविहितत्वात् त्यदाद्यत्वं बाधित्वा त्रिमात्र आदेशः प्राप्नोति ॥ बभूवेति । अनुनासिकः प्राप्नोति ॥ अनड्वन्निति । आमपि पक्षे प्राप्नोति ॥

( उद्द्योतः ) नन्विदमः परत्वात् त्यदाद्यत्वेऽन्तरङ्गत्वाच्च पररूपेऽर्धतृतीयमात्रस्य सवर्णग्रहणेऽपि नान्तरतम आदेशः संभवतीति श्रुत एव भविष्यति । न च श्रुतापेक्षया दीर्घप्लुतयोरन्तरतमत्वात्ते एव भविष्यतः, ह्रस्वोच्चारणं तु लाघवार्थं स्याद् इति वाच्यम् । एवं तर्हि परत्वाद्धलि लोपे मात्रिकत्वान्मात्रिक एव भविष्यति । तत्र नापीति वर्तते, फलाभावादत आह—विशेषेति । येन नाप्राप्तिन्यायादिति भावः । शादीनां चोपदेशे एवेत्संज्ञालोपयोरणुत्वेन सवर्णग्रहणप्रसक्तिः ॥ अनुनासिक इति । पक्षे इति शेषः ॥

( तत्त्वालोकः ) भाष्ये—लवितेति—अत्रेटा सवर्णग्रहणे पक्षे ईडपि प्रसज्येतेति भावः ।

प्रदीपे—त्रिमात्र इति—त्रिमात्रस्य स्थानिन इत्यादिः । अनु-

नासिक इति—अत्र वुका सवर्णग्रहणेऽनुनासिकोऽपि वुक् स्यादिति भावः।

उद्द्योते—अर्धतृतीयमात्रस्य—सार्धद्विमात्रिकस्य। हलि लोपे—'हलि लोपः' इत्यनेन इद्भागस्य लोपे। ननु तत्र 'अनाप्यकः' इत्यत्र 'आपी'त्यस्यानुवर्त्तनात्कथं तेन लोप इत्यत आह—तत्रेति। 'हलि लोपः' इत्यत्रेत्यर्थः। वर्त्तते—अनुवर्त्तते। लोपयोरिति—सतोः, अवशिष्टस्येति शेषः।

( टिद्ग्रहणवैयर्थ्यसाधकभाष्यम् )

**टितः परिहारः—आचार्यप्रवृत्तिर्ज्ञापयति—'न टिता सवर्णानां ग्रहणं भवति' इति। यदयम्—ग्रहोऽलिटि दीर्घत्वं शास्ति ॥**

( प्रदीपः ) यदयमिति। ग्रहेरेव दीर्घो नान्येभ्य इति नियमाभावादिति भावः॥

( उद्द्योतः ) नियमार्थं तत् स्यादत आह—ग्रहेरेवेति। वृतो वेत्यनेन विरोधादिति भाव इति केचिद्॥ वस्तुतस्तु यथा दिक्सङ्ख्ये इति नियमादप्राप्तसमासविधायकं तद्धितार्थेति, एवं ग्रहेरेवेति नियमादप्राप्तदीर्घविध्यर्थं वृतो वेति स्यादिति चिन्त्यैषा व्याख्या। तस्माद्विधेयसङ्कोचस्यान्याय्यत्वान्न तथा नियम इति भावः॥

( तत्त्वालोकः ) भाष्ये—टित इति—तत्र टित्पदं न वाच्यम्, यत इत्यादिः। आचार्येति—यत इत्यादिः। अयम्—आचार्यः। ग्रहोऽलिटि—'ग्रहोऽलिटि दीर्घः' इतीटः। यदि टिता सवर्णानां ग्रहणं स्यात्तर्हि 'आर्धधातुकस्येड् वलादेरि'त्यनेनैव पर्यायेण दीर्घोऽपीट् स्यादेवेति तस्य दीर्घत्वविधानं व्यर्थमिति भावः।

उद्द्योते—नियमार्थमिति—नन्वित्यादिः। तत्—तस्य दीर्घत्वविधानम्। केचित्—दण्ड्यादयः। एतत्स्वचितामत्रारुचिमुपपादयति—वस्तुतस्त्विति। तथा सति कैयटोक्तं योजयति—तस्मादिति।

( ज्ञापकत्वनिराकरणभाष्यम् )

**नैतदस्ति ज्ञापकम्। नियमार्थमेतत् स्यात्—ग्रहोऽलिटि दीर्घ एवेति ॥**

( प्रदीपः ) नियमार्थमिति। ग्रहेर्दीर्घ एव, न ह्रस्व इत्येवमर्थं स्यादित्यर्थः॥

( तत्त्वालोकः ) भाष्ये—नियमार्थमिति—यत इत्यादिः।

( ज्ञापकान्तरभाष्यम् )

**यत्तर्हि 'वृतो वा' इति विभाषां शास्ति ॥**

( प्रदीपः ) वृतो वेति॥ ननु ववरिथेति लिटि दीर्घो मा भूदित्येवमर्थमेतत् स्यादिति कथं ज्ञापकम्॥ एवं तर्हि वृत इत्यत्रापि अलिटीत्यनुवर्तनाल्लिटि दीर्घनिषेधादन्यत्र उभयस्मिन् सिद्धे वाग्रहणं ज्ञापकमीट इटा ग्रहणाभावस्य॥

( उद्द्योतः ) ववरिथेति। ववर्थेति छन्दसि इडभावनिपातनाद् भाषायां कृसृभृवृस्तुद्रुस्रुश्रुव इति इट्प्रतिषेधो न। अलिटीत्यस्य वृतो वेत्यर्थाद् लिटि ह्रस्व एवेति भावः॥ वाग्रहणमिति। अत एव भाष्ये—यद्विभाषां शास्ती युक्तम्॥

( तत्त्वालोकः ) भाष्ये—शास्तीति—तज्ज्ञापयति 'न टिता सवर्णानां ग्रहणं भवती'ति, इति शेषः। यदि टिता सवर्णानां ग्रहणं स्यात्तर्हि तेनैव सर्वत्र पर्यायेण ह्रस्वदीर्घयोः प्राप्तावनेन विकल्पविधानं व्यर्थं स्यादित्याशयः।

प्रदीपे—कथम्—कथमेतत्। अलिटीत्येति—'ग्रहोऽलिटी'त्यत इति भावः। उभयस्मिन्—'आर्धधातुकस्येडि'त्यनेनैव पर्यायेण ह्रस्वे दीर्घे च।

उद्द्योते—अस्यैव ज्ञापकत्वं भाष्यकृतोऽप्यभिमतमित्याह—अत एवेति।

( यौगिकत्वे पर्युदासवैयर्थ्यभाष्यम् )

**सर्वेषामेष परिहारः—'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येवं भविष्यति ॥**

( उद्द्योतः ) भाष्ये—भाव्यमानेनेति। इयं च जातिग्रहणप्राप्तं गुणाभेदकत्वप्राप्तं चानण्त्वाद्यारण्येन प्राप्तं सवर्णग्रहणं वारयितुमावश्यकीति भावः॥

( तत्त्वालोकः ) भाष्ये—सर्वेषामिति—प्रत्ययादेशटिकिन्मितामित्यर्थः। 'अप्रत्ययः' इति, 'अप्रत्ययादेशटित्किन्मितः' इति वा न वक्तव्यम्, यत इत्यादिः।

उद्द्योते—इयञ्चेति—परिभाषेति शेषः।

( संज्ञापरत्वेऽपि पर्युदासवैयर्थ्यभाष्यम् )

**प्रत्यये भूयान् परिहारः—अनभिधानात्प्रत्ययः सवर्णान् न ग्रहीष्यति। यान् हि प्रत्ययः सवर्णान् गृह्णीयाद् न तैरर्थस्याभिधानं स्यात्। अनभिधानान्न भविष्यति ॥**

( प्रदीपः ) प्रत्यये भूयानिति। साधारणासाधारणश्चेत्यर्थः। प्रत्यय इत्यन्वर्था संज्ञा कृता, येनार्थं प्रनियन्ति स प्रत्ययः। न च दीर्घप्लुतयोरर्थस्याभिधानमस्ति॥

( उद्द्योतः ) साधारणश्चेति। भूयानि त्युक्तिर्नापूर्वोऽनेकसमाधानाभिप्राया। किंतु पूर्वोक्तप्रत्ययग्रहणमपेक्ष्येति भूयानिति प्रतिज्ञायैकपरिहारोपन्यासेऽपि न विरोध इति भावः॥ नन्वस्त्वावित्यादावविवार्थाभिधानासमर्थस्यापि सवर्णस्य ग्रहणं स्यादत आह—प्रत्यय इतीति। प्रत्ययविधौ सवर्णग्रहणे हि तेषामपि प्रत्ययत्वमेष्टव्यम्। तच्चान्वर्थत्वादसंभवीति न तत्र सवर्णग्रहणमिति भावः॥

( तत्त्वालोकः ) भाष्ये—भूयानिति—'भाव्यमानेने'ति परिभाषया, अनभिधानेन चेत्यर्थः। तत्र तया परिभाषया प्रत्ययेऽपि परिहारस्य प्रागुक्तत्वादधुनाऽनभिधानेन तत्र तमाह—अनभिधानादिति। यान्—दीर्घादीन्। अर्थस्य—प्रत्ययार्थस्य। प्रकृतमुपसंहरति—अनभिधानादिति। तथा चेत्यादिः। प्रत्ययेन सवर्णानां ग्रहणमिति शेषः।

प्रदीपे—'भाव्यमानेने'ति परिभाषामभिप्रेत्याह—साधारणश्चेति। अनभिधानमभिप्रेत्याह—असाधारणश्चेति। प्रत्यय इतीति—यत इत्यादिः। प्रत्ययः—प्रत्यय इति। दीर्घप्लुतयोः—दीर्घप्लुताभ्याम्।

उद्द्योते—एकेति—अपूर्वैकेत्यर्थः। अत्र दृष्टान्तवैषम्यमाह—प्रत्ययविधाविति। तेषामपि—दीर्घादीनामपि। तत्र—प्रत्ययविधौ।

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—इह केचित्प्रतीयन्ते, केचित्प्रत्याय्यन्ते। ह्रस्वाः प्रतीयन्ते, दीर्घाः प्रत्याय्यन्ते। यावद् ब्रूते—प्रत्याय्यमानेन सवर्णानां ग्रहणं नेति, तावदप्रत्यय इति ॥**

**(प्रदीपः) ह्रस्वा इति ।** प्रतीयन्ते श्रूयन्ते उच्चार्यन्ते अणादिचोदनास्वित्यर्थः ॥ **दीर्घा इति ।** ह्रस्वैर्गृहीतैर्गृह्यदीर्घाणां ग्रहणात् । तत्राष्टन आ विभक्तावित्याकारो ग्राहको मा भूदित्यर्थः । यथैव हि अण्त्वादाकारो रपरत्वादिकार्यं प्रतिपद्यते, तथा ग्राहकत्वमपि प्रतिपद्येतेति भावः ॥ कथं पुनरप्रत्यय इत्यस्याप्रत्याय्यमान इत्यर्थः ? अन्तर्भावितण्यर्थादेतेः कर्मण्यच्प्रत्ययविधानात् ॥

**(उद्द्योतः) उच्चार्यन्त इति ।** उच्चारणं चात्र साक्षाच्छब्देन बोधनं विवक्षितम् । अतोऽणादिविधायकप्रतीयमानानेकारादिभिः सवर्णानां ग्रहणं सिद्धम् ॥ **ह्रस्वैर्गृहीतैरिति ।** प्रकृतसूत्रस्थाण्पदेनेति शेषः ॥ ननु प्रत्याहारसूत्रोपदिष्टा एवाण इति कथमाकारो ग्राहक इत्यत आह—**यथैवेति ।** न चाक्षरसमाम्नायिकविषयकः प्रतिषेधः, प्रत्याय्यमानविषयं तु सवर्णग्रहणमिति वैपरीत्यं किं न स्यादिति वाच्यम् । तथा सत्यको विधीयमानस्य पूर्वसवर्णदीर्घस्य कुमार्यावित्यादावप्राप्तेः **दीर्घाज्जसि** चेति प्रतिषेधोऽनर्थकः स्यादिति भावः ॥ एवं च वर्णसमाम्नायपठितानामेव ग्राहकत्वबोधनार्थमप्रत्ययपदमिति तात्पर्यम् ॥

**(तत्त्वालोकः)** भाष्ये—प्रत्ययपदस्य प्रत्याय्यमानार्थकत्वमभिप्रेत्याप्रत्ययपदस्य प्रयोजनमाह—**इदं तर्हीति । ह्रस्वा इति—**तत्रेत्यादिः ।

प्रदीपे—**तत्र—**तयोर्मध्ये । **तथेति—**अप्रत्ययपदाभावे इति शेषः ।

उद्द्योते—यथाश्रुते इष्टानुपपत्तेराह—**उच्चारणञ्चेति । प्रतिषेधः—**अप्रत्यय इति प्रतिषेधः । **तथा सतीति—**यत इत्यादिः ।

(आक्षेपभाष्यम्)

कं पुनर्दीर्घः सवर्णग्रहणेन गृह्णीयात् ? ।

**(तत्त्वालोकः) कं पुनरिति—**यद्यप्रत्ययपदं न पठेत्तर्हीत्यादिः ।

(प्रयोजनसाधकभाष्यम्)

ह्रस्वम् ॥

(प्रयोजननिराकरणभाष्यम्)

यत्नाधिक्यान्न ग्रहीष्यति ॥

**(प्रदीपः) यत्नाधिक्यादिति ।** ननु च ह्रस्वोच्चारणे अर्धमात्रिकस्य मात्रिक एव स्यादिति दीर्घोच्चारणमुभयार्थं स्यात् । एतत्तु न निरूपितम् ॥ न्याय्य एवात्र परिहारो विधास्यते ॥

**(उद्द्योतः) उभयार्थम् ।** ह्रस्वदीर्घोभयविध्यर्थम् । एवं च यत्नाधिक्यमेवासिद्धमिति भावः ॥ **न्याय्य एवेति ।** अनण्त्वादित्ययमित्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—**यत्नाधिक्यात्—**दीर्घोच्चारणरूपयत्नाधिक्यसामर्थ्यात् ।

प्रदीपे—**न्याय्य एवेति**—यत इत्यादिः ।

उद्द्योते-**यत्नाधिक्यम्**-दीर्घोच्चारणरूपयत्नाधिक्यसामर्थ्यम् ।

(प्रयोजनसाधकभाष्यम्)

प्लुतं तर्हि गृह्णीयात् ॥

(प्रयोजननिराकरणभाष्यम्)

अनण्त्वान्न ग्रहीष्यति ॥

**(प्रदीपः) अनण्त्वादिति ।** अत्र हि सूत्रे प्रत्याहारसन्निविष्टा [illegible] ग्रहणकशास्त्रान्तराभावाच्च अत्र सूत्रे अकारादिभिराकारादीनां ग्रहणासम्भवोऽन्येषु प्रदेशेष्वनेन सूत्रेणाकारादिभिराकारादयो गृह्यमाणा अणादिकार्याणि लभन्ते ॥

**(उद्द्योतः)** यदुक्तं **यथैवेति,** तत्राह—**अत्र हीति । स्वात्मनि क्रिया** स्वस्मिन्प्रवृत्तिः ॥ विरोधे हेतुमाह—**अनिष्पादादिति ।** अर्थाबोधादित्यर्थः ॥

**(तत्त्वालोकः)** प्रदीपे—**स्वात्मनीति—**यत इत्यादिः । **प्रदेशेषु—**प्रदेशेषु तु ।

उद्द्योते—**यथैवेति—**'यथैव हि अण्त्वादाकारो रपरत्वादिकार्यमि'त्यादि । प्रकृतसूत्रस्य सत्त्वादाह—**अर्थाबोधादिति ।**

(सिद्धान्तप्रयोजनभाष्यम्)

एवं तर्हि सिद्धे सति यद् 'अप्रत्ययः' इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यो—भवत्येषा परिभाषा—'भाव्यमानेन सवर्णानां ग्रहणं न' इति ॥

**(प्रदीपः) भाव्यमानेनेति ।** प्रतीयते विधीयत इति यौगिकस्यात्र प्रत्ययस्य ग्रहणमिति भावः ॥

**(उद्द्योतः)** नन्वल्पविषयेणाप्रत्यय इत्यनेन कथं बहुविषयपरिभाषार्थः शक्यते प्रतिपादयितुमत आह—**प्रतीयत इति ।** भाष्ये— **ज्ञापयतीत्यस्य** योगेन बोधयतीत्यर्थः ॥ **अप्रत्यय** इति च वाक्यभेदेन निषेधार्थम् । अणित्यस्य च नात्र संबन्धः । तेनोक्तसकलार्थलाभ इति भावः ॥ वस्तुत एकदेशानुमतिद्वारा तां परिभाषां ज्ञापयतीति भाष्याक्षरार्थः ॥ विधीयत इत्यर्थे **प्रतीयत** इत्यस्य प्रयोगादृष्ट्या कैयटोक्तं चिन्त्यम् ॥

**(तत्त्वालोकः)** उद्द्योते—**निषेधार्थम्—**सवर्णग्रहणनिषेधार्थम् । **अत्र—**'अप्रत्ययः' इति भिन्नवाक्ये । **उक्तसकलार्थलाभः—**जातिग्रहणाद् गुणाभेदकत्वात्प्रकृतसूत्राच्चानणसाधारण्येन प्राप्तस्य सवर्णग्रहणस्य निषेधो लभ्यते इति भावः । **ताम्—**'भाव्यमानेने'तीमाम् । कैयटोक्तं खण्डयति— **विधीयत इति ।** तथा चेत्यादिः ।

---

(अण्ग्रहणप्रयोजनाधिकरणम्)

(आक्षेपभाष्यम्)

किमर्थं पुनरिदमुच्यते ?

**(प्रदीपः) किमर्थं पुनरिति । आकृतिनिर्देशात् सिद्ध**मिति प्रश्नः ॥

**(उद्द्योतः) आकृतीति ।** प्रत्याहारसूत्रेष्वस्य च्वावित्यादिषु चेत्यर्थः ॥

**(तत्त्वालोकः)** भाष्ये—**इदम्—**अण्ग्रहणम् । एवमग्रेऽपि ।

प्रदीपे—**इति प्रश्नः—**इति हेतोः प्रश्नः ।

(५०५ समाधानवार्तिकम् ॥ १ ॥

**॥ * ॥ अण् सवर्णस्येति स्वरानुनासिक्यकालभेदात् ॥ * ॥**

(भाष्यम्)

अण् सवर्णस्येत्युच्यते । स्वरभेदादानुनासिक्यभेदात् कालभेदाच्चाण् सवर्णान्न गृह्णीयाद् । इष्यते चत्—

ग्रहणं स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमिदमुच्यते ॥

( प्रदीपः ) अण् सवर्णस्येति । उदिद्ग्रहणस्याविचारयिष्यमाणत्वादेवमुक्तम् । व्यक्तिनिर्देशे कालादिभिन्नस्य ग्रहणं न प्राप्नोतीति भावः ॥

( उद्द्योतः ) नेयमुदिद्विषया शङ्का, चुत्वादिजातौ मानाभावेन तस्यावश्यकत्वादित्याशयेनाह—**उदिदिति ॥ कालादिभिन्नस्येति ।** एकोऽवर्णः, उदात्तत्वादिकं ध्वनिगतमिति **पक्षे**ऽपि उपाधिभेदभिन्नत्वाद् ग्रहणं न सिध्यतीति भावः ॥ अनन्ता अवर्णव्यक्तय इति **पक्षे** तु अग्रहणं स्पष्टमेवेति बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—इदमेवोपपादयति—**स्वरभेदादिति । ग्रहणम्—**अणा सवर्णानां ग्रहणम् । **एवमर्थम्—**अणा सवर्णानां ग्रहणार्थम् । **इदम्—**अण् सवर्णस्येति ।

प्रदीपे—**कालादिभिन्नस्येति—**कालादिभेदभिन्नस्य सवर्णस्येत्यर्थः । अणेति शेषः ।

उद्द्योते—**इयम्—**'किमर्थं पुनरिदमुच्यते' इति भाष्येण विधीयमाना । **तस्य—**उदिद्ग्रहणस्य । **ग्रहणम्—**सवर्णानामणा ग्रहणम् । **अग्रहणमिति—**अणा सवर्णानामित्यादिः ।

( भाष्यम् )

अस्ति प्रयोजनमेतत् ॥

किं तर्हीति ? ॥

( ५०६ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥*॥ तत्र प्रत्याहारग्रहणे सवर्णाग्रहणमनुपदेशात् ॥ * ॥

( भाष्यम् )

तत्र प्रत्याहारग्रहणे सवर्णानां ग्रहणं न प्राप्नोति—'अकः सवर्णे दीर्घः' इति ॥

किं कारणम् ? ।

अनुपदेशात् । यथाजातीयकानां संज्ञा कृता तथाजातीयकानां संप्रत्यायिका स्याद् । ह्रस्वानां च क्रियते ह्रस्वानामेव संप्रत्यायिका स्याद्, दीर्घाणां न स्यात् ॥

( प्रदीपः ) प्रत्याहारग्रहण इति । अकोऽचीति यत्र संज्ञया प्रत्यायनमिकारादीनां तत्र तैरन्येषां ग्रहणं न स्याद् ॥ यत्र स्वरूपेणोच्चार्यन्ते- 'अस्य च्वौ' 'यस्येति चे'ति, तत्रैवैषां ग्राहकत्वं स्यात् ॥ **अनुपदेशादिति ।** अनुच्चारणादित्यर्थः । न हि प्रत्याहारे दीर्घा उच्चारिताः, यतोऽगादिचोदनाभिर्गृह्येरन् ॥ अथवा अकोऽचीत्यादावनुच्चारिता इकारादयो दीर्घाणां प्रत्यायका न स्युरित्यर्थः ॥

( उद्द्योतः ) नन्वेतत्प्रयोजनम्-अस्य च्वावित्यादौ वा, अगादिप्रत्याहारेषु वा । तत्राद्यं **तत्रानुवृत्तिनिर्देशे** इत्यादिना दूषयिष्यति । नान्त्य इत्याह—**प्रत्याहारग्रहणे इत्यादि । प्रत्याहारग्रहणे सवर्णाग्रहणमिति** वार्तिकस्य द्वेधाऽर्थः—अक इत्यादौ ईकारादीनामगादिसंज्ञाभिर्ग्रहणं न प्राप्नोति, अनुपदेशादक्षरसमाम्नाये तेषामनुच्चारणादित्यर्थः । तदाह—**यत्र संज्ञयेति ।** एकस्यैव युगपत्प्रत्याय्यत्वप्रत्यायकत्वयोर्विरोधादित्यर्थः । **यत्र स्वरूपेणेति । इदं चिन्त्यम् ।** व्यक्त्यानन्त्ये तस्याग्रहणाभावाद् । तस्मादयः स्वरूपेणोच्चार्यते अक इत्यादावकारादिस्तस्यैव ग्राहकत्वं नागादिभिरिति तत्सारं चिन्त्यम् ॥ **प्रत्याहारे** अइउणित्यादौ ॥ भाष्ये—**यथाजातीयकानामिति ।** वर्णसमाम्नायपठितानामित्यर्थः ॥ **संज्ञेति ।** आदिरन्त्येनेति कृताऽगादिसंज्ञेत्यर्थः ॥ यद्वा—अगादौ इकारादिभिरुच्चार्यैर्दीर्घाणामग्रहणम् ॥ कुतः ? अनुपदेशाद्—अकोऽचीत्यादाविकारादीनामनुच्चारणादित्यर्थस्तदाह—**अथवेति ।** भाष्यस्वारस्यं त्वाद्यव्याख्यानेन ॥

( तत्त्वालोकः ) भाष्ये—**किं कारणम्—**कस्मात्कारणात् । **यथेति—**यत इत्यादिः । **क्रियते इति—**संज्ञेति शेषः । **दीर्घाणामिति—**किन्त्वित्यादिः ।

प्रदीपे- **तैः—**इकारादिभिः । **अन्येषाम्—**ईकारादीनाम् । **यत्रेति—**यत्र त्वित्यर्थः । अकारादय इति शेषः ।

उद्द्योते—**तत्र—**तयोर्मध्ये । नान्त्य इत्याह—**अक इत्यादाविति । तस्य—**'अस्य च्वावि'त्यादावुच्चारितस्य अकारादेः । **तस्यैवेति—**अनुबन्धसन्निधानेन प्रत्याहारस्थोऽयमिति प्रत्यभिज्ञानादिति भावः । द्वितीयं वार्तिकार्थमाह—**यद्वेति ।**

( आक्षेपबाधकभाष्यम् )

ननु च ह्रस्वाः प्रतीयमाना दीर्घान् संप्रत्याययिष्यन्ति॥

( प्रदीपः ) नन्निति । उच्चार्यमाणैरेव प्रत्यायकैर्भवितव्यमिति नास्ति । सन्निहितास्तु प्रत्यायकाः । तच्च सन्निधानं यथायोगमस्त्येवेत्यर्थः ॥

( उद्द्योतः ) उच्चार्यमाणैरेवेति । पुस्तकदर्शनादौ व्यभिचारादित्यर्थः ॥ **सन्निहिता इति ।** बुद्धिसन्निहिता इत्यर्थः ॥ अयं भावः—शब्दा उपस्थिता बोधं जनयन्ति । उपस्थितिस्तु-स्मृतिरूपा प्रत्यक्षरूपा च । न त्वन्त्यैवेति नियमः, लिपिस्मारितपदैर्बोधानापत्तेरिति ॥ **संनिधानमिति ।** प्रतीतिरित्यर्थः ॥ **यथायोगम् ।** उच्चारणेन संज्ञया चेत्यर्थः ॥

( तत्त्वालोकः ) प्रदीपे- **इति—**इति नियमः ।

उद्द्योते—यथाश्रुते इष्टानुपपत्तेराह—**बुद्धीति ।** एतदाशयमाह—**अयमिति । न तु—**न तु तत्र । **लिपीति—**तया स्मृतेत्यादिः । सान्निध्यमविवक्षितमित्याह—**प्रतीतिरिति ।**

( ५०७ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणशब्दसंप्रत्यायकत्वाच्छब्दस्यावचनम् ॥ * ॥

( भाष्यम् )

ह्रस्वसंप्रत्ययादिति चेदुच्चार्यमाणः शब्दः संप्रत्यायको भवति, न संप्रतीयमानः । तद्यथा—ऋगित्युक्ते संपाठमात्रं गम्यते, नास्या अर्थो गम्यते ॥

( प्रदीपः ) उच्चार्यमाणेति । प्रतीयमानो हि प्रधानं सत्कथमन्यप्रत्यायनेऽङ्गभावं तदैव गच्छेदित्यर्थः ॥ **शब्दस्यावचनमिति ।** प्रतीयमानशब्देनान्यस्याप्रत्यायनमित्यर्थः ॥ **ऋगित्युक्त इति ।** यद्यपि प्रकरणवशादिविशिष्टसन्निवेशापि ऋक्शब्देन ऋक् प्रत्याय्यते । तथापि सा स्वार्थं न प्रत्याययतीत्यर्थः ॥

( उद्द्योतः ) प्रतीयमानो हीति । यद्यप्युच्चारणे प्रधानमपि

अर्थप्रतीतावङ्गभावं प्रतिपद्यते, तथाप्युच्चारणकृतायास्तत्प्रतिबिम्बविशिष्टस्फोटाभिव्यक्तेरिरस्थायितयोपपद्यते तत्त्वम् । शब्दज्ञानमात्रस्य तु न तदभिव्यञ्जकत्वं, वक्ष्यमाणहेतोरिति भावः ॥ अन्यस्येति । दीर्घादिरूपशब्दस्येत्यर्थः ॥ भाष्ये—**ह्रस्वसंप्रत्ययादिति** । तृतीयातत्पुरुषः ॥ **ऋगित्युक्ते संपाठमात्रं गम्यते इति** । एतेनोच्चारितानामेव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तेर्बोधकज्ञानसामान्यस्यैव बोधे तन्त्रत्वेनेदमयुक्तमित्यपास्तम् । मानसजपस्थल इव तत्रापि स्वीयसूक्ष्मोच्चारणाद्बोधेनाक्षतेः । जपे हि मन्त्राणां त्रैस्वर्यनियमेन तत्तत्स्थानेषु उच्चादिदेशोपलभ्यमानस्वरूपोदात्तत्वादेर्मात्राकालिकत्वादिरूपह्रस्वत्वादेश्च विनोच्चारणमनभिव्यक्तेः । यद्वा—लिपेरेव चेष्टादिवत्सङ्केतेन बोधकत्वम् । अत एव लिपौ शब्दत्वभ्रमो बालानाम् । यद्वा—लिप्यादीनादेः शब्दतादात्म्याध्यासाद्बोधकत्वम् । लिपौ शब्दत्वबाधज्ञानवतां पण्डितानामपि अन्तःकरणादावात्मत्वप्रत्यये भ्रमत्वं जानतामनादिसिद्धारोपेणैव व्यवहारवद्बोधोऽपि ॥ ननु ऋगित्युक्ते तद्विशेषाप्रतीतेरर्थप्रतीतिसंभावनाया अप्यभावः । ऋक्त्वस्य वेदत्वस्य चार्थप्रतीतिजनकतानवच्छेदकत्वादत आह—**यद्यपीति** । ऋक्शब्देन विशिष्टसंनिवेशापि ऋक् प्रत्याय्यत इत्यन्वयः । यत्र सङ्केतादिवशाद् ऋगित्युक्ते ऽग्निमीळे पुरोहितमित्याद्यानुपूर्वीप्रकारेण बोधस्तत्रापि सा स्वार्थे बोधनादिक्रियाकर्मत्वेन न प्रत्याययतीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—तत्र, यत इति शेषः । **उच्चार्यमाणः**—उच्चार्यमाण एव । **न**—न तु । एवमग्रेऽपि । **सम्पाठमात्रमिति**—सम्पठ्यते इति सम्पाठः, 'अकर्त्तरि च कारके संज्ञायामि'त्यत्र संज्ञायामित्यस्य प्रायिकत्वात् कर्मकारके घञ् । तथा च—शब्दमात्रमित्यर्थः ।

प्रदीपे—**प्रतीयमानो हीति**—ह्रस्व इति शेषः । **अन्येति**—दीर्घादीत्यर्थः । **तदैवेति**—युगपदेवैकस्य प्रत्याय्यप्रत्यायकत्वयोर्विरोधादिति भावः । **शब्देन**—ह्रस्वरूपशब्देन ।

उद्द्योते—**तत्तदिति**—वर्णादीत्यर्थः । **तत्त्वम्**—अर्थप्रतीतावङ्गत्वम् । **तदिति**—स्फोटेत्यर्थः । **वक्ष्यमाणेति**—'ऋगि'ति भाष्योक्तेत्यर्थः । इरदत्ताद्युक्तं दूषयति—**एतेनेति** । 'मानसजपे'त्यादिवक्ष्यमाणहेतुनेत्यर्थः । **तत्रापि**—रहसि पुस्तकदर्शनस्थलेऽपि । ननु मानसजपस्थले एवोच्चारणसत्त्वे किं मानमित्यत आह—**जपे हीति** । ये रहसि पुस्तकेक्षणस्थले उच्चारणसत्त्वं नाभ्युपगच्छन्ति, तेषां कृते समाधानान्तरमाह—**यद्वेति** । तथा च न तत्रोच्चारणापेक्षेति भावः । ननु चेष्टादेर्बोधकत्वं सहृदयहृदयगम्यम्, लिपेस्तु सार्वजनीनमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमित्यत आह—**यद्वेति** । एतच्च यथा शब्दोच्चारणानन्तरमर्थबोधस्तथा शब्दतादात्म्याध्यासापन्नलिपिज्ञानानन्तरमपीति न तत्रोच्चारणसत्त्वापेक्षेति भावः ॥

**( समाधानभाष्यम् )**

**एवं तर्हि वर्णपाठ एवोपदेशः करिष्यते ॥**

**( प्रदीपः ) एवं तर्हीति** । **अइउणेति** प्रत्याहार एवाकारादिभिराकारादीनां ग्रहणाद् तेषामप्यणादिसंज्ञाभिर्ग्रहणं भविष्यतीत्यर्थः ॥ **उपदेश इति** । प्रत्यायनमित्यर्थः ॥ **करिष्यत इति** । व्याख्यास्यते ॥

**( उद्द्योतः ) प्रत्यायनमिति** । तच्चैतत्सूत्रेणैवेति बोध्यम् ॥

( ५०८ (१) समाधानबाधकवार्तिकप्रथमखण्डम् ॥ )

## ॥ * ॥ वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः ॥ * ॥

**( भाष्यम् )**

वर्णपाठ उपदेश इति चेदवरकालत्वात् परिभाषाया अनुपदेशः ॥

**( प्रदीपः ) अवरकालत्वादिति** । निष्पन्नेष्वङ्गेष्वनयान्यत्रास्य स्वावित्यादौ सवर्णानां ग्रहणं भवति, नाङ्गेषु नापि स्वात्मनि, अनिष्पन्नत्वादिति भावः ॥

**( उद्द्योतः )** अनेन तत्प्रत्यायनमशक्यमित्याह—भाष्ये—**अवरकालत्वादिति** ॥

**( तत्त्वालोकः )** भाष्ये—**चेदिति**—तत्र, यत इति शेषः । **परिभाषायाः**—'अणुदिदि'ति सवर्णस्य संज्ञायाः । **अनुपदेश इति**—तया प्रत्याहारे अकारादिभिराकारादीनां प्रत्यायनमसम्भवीत्यर्थः ।

प्रदीपे—**अङ्गेषु**—अणादिप्रत्याहारेषु । **अनया**—'अणुदिदि'ति सवर्णस्य संज्ञया । **अनिष्पन्नत्वादिति**—ततः पूर्वमित्यादिः ।

उद्द्योते—**अनेन**—प्रकृतसूत्रेण । **तदिति**—प्रत्याहारे अकारादिभिराकारादीनामित्यर्थः ।

**( आक्षेपभाष्यम् )**

किं परा सूत्रात् क्रियत इत्यतोऽवरकाला ? ।

**( उद्द्योतः ) परा सूत्रादिति** । **सूत्रा**त्प्रत्याहारसूत्रात्**परा** परकाला क्रियत इत्यर्थः ॥ तेषामनादित्वादेषां पाणिनिकृतत्वादिति भावः ॥

**( तत्त्वालोकः )** उद्द्योते-**तेषाम्**—'अइउणि'त्यादिसूत्राणाम् । **एषाम्**—'अणुदिदि'त्यादिसूत्राणाम् ।

**( समाधानभाष्यम् )**

नेत्याह । सर्वथाऽवरकालैव । वर्णानामुपदेशस्तावत् । उपदेशोत्तरकालेत्संज्ञा । इत्संज्ञोत्तरकाल 'आदिरन्त्येन सहेता' इति प्रत्याहारः । प्रत्याहारोत्तरकाला सवर्णसंज्ञा ॥ सवर्णसंज्ञोत्तरकालम् 'अणुदित्सवर्णस्य चाप्रत्ययः' इति । सैषाऽवरकाला—उपदेशोत्तरकाला वर्णानामुत्पत्तौ निमित्तत्वाय कल्पयिष्यत इत्येतन्न ॥

**( प्रदीपः ) सर्वथेति** । आर्थक्रमेणापि, न शाब्दक्रमेणैवेत्यर्थः ॥ **वर्णानामुत्पत्ताविति** । **अइउणित्यत्र** इयमेव वर्णानाकारादीनुत्पादयतीत्येतन्नास्ति ॥

**( उद्द्योतः ) अवरकालैवेति** । वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वादिति भावः ॥ **शाब्दक्रमो**ऽष्टाध्यायीक्रमः ॥ **प्रत्याहारोत्तरकाला सवर्णसंज्ञेति** । **नाज्झला**वित्येतद्विषयनिर्णयोत्तरं तत्परिहारेण सवर्णपदशक्तिग्रहस्यैव व्यवहारोपयोगित्वादिति भावः ॥ **वर्णानामुत्पत्ताविति** । प्रतीतावित्यर्थः ॥ अक इत्यादावाद्यवर्णेष्वस्या एव प्रत्यायकत्वादध्याहारेण व्याचष्टे—**अइउणिति** ॥ **उत्पादयतीति** । प्रत्याययतीत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—तटस्थ उत्तरमनुवदति—**नेत्याहेति** । समाधाता, यत इति शेषः । इदमेवोपपादयति—**वर्णानामिति** । **तावत्**—प्रथमम् ।

प्रदीपे—इयमेवेति—'अणुदिदि'ति सवर्णस्य संज्ञैवेत्यर्थः । अकारादिभिर्वर्णैरिति शेषः ।

उद्द्योते—वाक्यार्थज्ञाने—अणुदित्सूत्रार्थबोधे । पदार्थज्ञानस्य-अणादिपदार्थज्ञानस्य । अस्याः-'अणुदिदि'ति सवर्णस्य संज्ञायाः ।

( ५०८ (२) समाधानबाधकवार्तिकद्वितीयखण्डम् ॥ ४ ॥ )

## ॥ * ॥ तस्मादुपदेशः ॥ * ॥

( भाष्यम् )

तस्मादुपदेशः कर्तव्यः ॥

( प्रदीपः ) तस्मादिति । प्रत्याहार एव दीर्घप्लुता अपि पठनीया इत्यर्थः ॥

( उद्द्योतः ) प्रत्याहारे । अइउणित्यादौ ॥ न च प्रत्याहारेषु तद्वाच्यवाच्ये लक्षणाङ्गीकारान्न दोषः । उक्तभाष्यरीत्या तद्वाच्यानां प्रत्यायकत्वाभावेन तेषामशक्तत्वेन लक्ष्यतावच्छेदकलक्षणामूलसंबन्धज्ञानयोर्दुरुपपादत्वात् ॥

( तत्त्वालोकः ) उद्द्योते—दीक्षितायुक्तं दूषयति—न चेति । तद्वाच्यवाच्ये—प्रत्याहारवाच्यह्रस्ववाच्यदीर्घादौ । तद्वाच्यानाम्—प्रत्याहारवाच्यह्रस्वानाम् ।

---

( अण्ग्रहणप्रत्याख्यानाधिकरणम् )

( ५०९ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ तत्रानुवृत्तिनिर्देशे सवर्णाग्रहणमनणत्वात् ॥ * ॥

( भाष्यम् )

तत्रानुवृत्तिनिर्देशे सवर्णानां ग्रहणं न प्राप्नोति—'अस्य च्वौ' 'यस्येति च' ॥

किं कारणम् ? ।

अनणत्वात् । न ह्येतेऽणो येऽनुवृत्तिनिर्देशे ॥ के तर्हि ? ।

येऽक्षरसमाम्नाय उपदिश्यन्ते ॥

( प्रदीपः ) तत्रानुवृत्तीति । व्यक्तिपक्षे सत्यपि सूत्रारम्भेऽवान्तरभेदसंभवाद् ग्रहणं न सिद्ध्यतीत्यर्थः ॥

( उद्द्योतः ) एवं प्रत्याहारेषु सूत्रप्रयोजनाभावमुक्त्वा अस्य च्वावित्यादावपि तमाह—तत्रानुवृत्तिनिर्देश इति । भाष्ये-वृत्तिवर्णसमाम्नायमनुगतस्तत्सदृशोऽनुवृत्तिरकारादिस्तस्य निर्देशः स्वरूपेणोच्चारणमित्यर्थः ॥ तत्र सवर्णाग्रहणे हेतुमाह-व्यक्तीति । अनन्ता व्यक्तय इति पक्षे इत्यर्थः । तदाह—अवान्तरभेदेति । जात्येकत्वेऽपि व्यक्तीनां परस्परं भेदसंभवादित्यर्थः ॥ एका अवर्णव्यक्तिरिति पक्षे तु यद्यपि सिध्यति, तथापि सोऽसङ्गतः, उदात्तादिविरुद्धधर्माध्यासात् । यदि तु ध्वनिनिष्ठास्ते, तदा कत्वखत्वादिकमपि तन्निष्ठमस्तु किं वर्णैर्नो चेदनन्ता एवेति भावः ॥

( तत्त्वालोकः ) भाष्ये—यस्येति च—'यस्येति चे'ति । किं कारणम्—कस्मात् कारणात् ।

प्रदीपे—ग्रहणम्—ह्रस्वेन दीर्घादीनां ग्रहणम् ।

उद्द्योते—तत्रेति—'अस्य च्वावि'त्यादावित्यर्थः । अकारादिभिरिति शेषः । ते—उदात्तत्वादयः ।

( आक्षेपबाधकभाष्यम् )

एवं तर्ह्यनणत्वादनुवृत्तौ न, अनुपदेशाच्च प्रत्याहारे न । उच्यते चेदम्—अण् सवर्णान् गृह्णातीति । तत्र वचनाद्भविष्यति ॥

( प्रदीपः ) वचनादिति । अण्सदृशोऽणिति ग्रहीष्यत इत्यर्थः ॥

( उद्द्योतः ) अनणो वचनादपि कथं ग्राहकत्वमत आह—अण्सदृश इति ॥

( तत्त्वालोकः ) भाष्ये—अनुवृत्तौ—'अस्य च्वावि'त्यादौ । न—अकारादिना सवर्णानां ग्रहणं न । एवमग्रेऽपि । तत्र—तथा सति । वचनादिति—एतद्वचनसामर्थ्यादित्यर्थः । तत्र तत्राकारादिना सवर्णानां ग्रहणमिति शेषः ।

उद्द्योते—अनण इति—नन्वित्यादिः ।

( ५१० आक्षेपसाधकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ वचनाद्यत्र तन्नास्ति ॥ * ॥

( भाष्यम् )

नेदं वचनाल्लभ्यम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥

किम् ? ।

य एते प्रत्याहाराणामादितो वर्णास्तैः सवर्णानां ग्रहणं यथा स्यात् ॥

( प्रदीपः ) यत्रेति । अनन्तरोक्तमुभयं यत्र नास्ति-अकोऽचीत्यादौ । अत्र ह्यनुबन्धेन चिह्नेन प्रत्याहारस्थ एव निर्दिष्ट इत्यणत्वमुच्चारणं चास्ति । तत्राकार उच्चारित आदिरन्त्येन सहेतेति मध्यपातिनां स्वरूपस्य च ग्राहकोऽस्माच्च वचनात्सवर्णानामपीत्यर्थः ॥

( उद्द्योतः ) उभयम् । अनणत्वमनुच्चारणं च ॥ मध्यपातिनामिति ॥ दृष्टान्तार्थम् ॥

( तत्त्वालोकः ) भाष्ये— स्यात्—स्यादिति ।

( समाधानान्तरभाष्यम् )

एवं तर्हि—

( ५११ ( १ ) सिद्धान्तसमाधानअण्प्रत्याख्यानवार्तिकम् )

## ॥ * ॥ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणात् ॥ * ॥

( भाष्यम् )

सवर्णेऽण्ग्रहणमपरिभाष्यम् ॥

कुतः ? ।

आकृतिग्रहणात् । अवर्णाकृतिरुपदिष्टा सर्वमवर्णकुलं ग्रहीष्यति । तथेवर्णाकृतिस्तथोवर्णाकृतिः ॥

( प्रदीपः ) एवं व्यक्तिपक्षे सत्यपि सूत्रारम्भे नास्तीष्टसिद्धिराकृतिपक्षे तु सूत्रं न कर्तव्यमित्याह—सवर्ण इति । प्रत्याहारे अनु-

वृत्तिनिर्देशे च सर्वत्र जातिरुपदिश्यते, नान्तरीयकं व्यक्त्युच्चारणम् । अत्वं च ह्रस्वदीर्घप्लुतेषु विद्यते, यथा-गोत्वं कृशे गोपिण्डे स्थूले, शुक्ले कृष्णे चेति भावः ॥

( उद्द्योतः ) **नास्तीत्येति ।** यदि त्वइउणित्यादावत्वादिजातिनिर्देशादेषामणत्वम्, प्रत्याहारग्रहणेषु च न दोषः, **त्वादय** इत्यादिनिर्देशाश्चात्रैवार्थे लिङ्गमित्युच्यते । तदा सूत्रमेव व्यर्थमित्याह—**आकृतीति । प्रत्याहारे** अइउणित्यादिसूत्रे ॥ **अनुवृत्तिनिर्देशे ।** अस्य च्वावित्यादौ ॥ **उपदिश्यते** उच्चार्यते प्रत्याय्यते वा ॥ **नान्तरीयकमिति ।** जातेः साक्षादुच्चारणासंभवात्तदुच्चारणम् । किंच जातौ कार्यान्वयस्य व्यक्तिं विना साक्षादसंभवात्तदुच्चारणं तद्बोधनमित्यर्थः ॥ तत्र दीर्घादिव्यक्त्याक्षेपे बीजमाह—**अत्वं चेति ।** प्रमाणकृतभेदे दृष्टान्तमभिधाय गुणकृतभेदेऽप्याह—**शुक्ल इति ॥**

( तत्त्वालोकः ) भाष्ये—**अवर्णाकृतिरिति**—यत इत्यादिः । उद्द्योते—**एषाम्**—'अस्य च्वावि'त्यादावुपात्तानामकारादीनाम् । **तदुच्चारणम्**—व्यक्त्युच्चारणम् । एवमग्रेऽपि ।

( आक्षेपभाष्यम् )

**ननु चान्याऽऽकृतिरकारस्यान्याऽऽकारस्य च ॥**

( प्रदीपः ) **ननु चान्येति ।** श्रुतिभेदाद्भेदं मन्यमानस्य प्रश्नः ॥

( उद्द्योतः ) **श्रुतिः ।** श्रवणोपलब्धिः ॥ **भेदाद्भेदमिति ।** जातेरिति शेषः ॥

( तत्त्वालोकः ) भाष्ये—**ननु चान्येति**—तथा च—कथमाकृतिपक्षे सूत्र विनैवेष्टसिद्धिरिति भावः ।

( ५११ ( २ ) समाधानवार्तिकद्वितीयखण्डम् )

**॥ * ॥ अनन्यत्वाच्च ॥ * ॥**

( भाष्यम् )

**अनन्याकृतिरकारस्याकारस्य च ॥**

( प्रदीपः ) **अनन्यत्वाच्चेति ।** सत्यपि श्रुतिभेदे एकाकृतियोगोऽस्त्येव, यथा कृशे स्थूलेऽपि च गोपिण्डे गोत्वयोगः ॥

( उद्द्योतः ) **सत्यपीति ।** श्रुतिभेदो हि व्यक्तिभेदसाधको नाकृतिभेदसाधक इति भावः ॥ अत एव ह्रस्वोऽयमकारो दीर्घोऽयमकार इति अत्वेन सामानाधिकरण्यानुभवः ॥ इकारादिष्वत्वमननुभवात् । अत एवोदात्तादयो न जात्यन्तरप्रयोजका इति तात्पर्यम् ॥ न च आकारोऽयं न अकार इति प्रतीत्यनापत्तिः । तस्या व्यक्तिभेदविषयकत्वात् ॥

( तत्त्वालोकः ) भाष्ये-**अनन्याकृतिरिति**—न तयोर्विभिन्नाकृतिः, यत इत्यादिः ।

प्रदीपे—**सत्यपीति**—तयोर्हीत्यादिः ।

उद्द्योते—**इकारादिषु**—इकारादिषु तु । **न च**—न चैवम् ।

( ५११ ( ३ ) समाधानसाधकवार्तिकतृतीयखण्डम् ॥ ७ ॥ )

**॥ * ॥ अनेकान्तो ह्यनन्यत्वकरः ॥ * ॥**

( भाष्यम् )

**यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ॥**

( प्रदीपः ) **यो हीति ।** अभेदस्यापि प्रत्यभिज्ञानात्सद्भाव इत्यर्थः ॥ **यस्त्विति ।** अत्रापि यदा **प्राणी न हन्तव्य** इति प्राणित्वेनाश्रयणं तदा अभेद एव, गवाश्वरूपाश्रयणे तु भेद इति भावः ॥ **अष्टन आ विभक्ता**वित्यत्र तु यत्नाधिक्याद्दीर्घव्यक्तिसमवेतं सामान्यं गृह्यते । यथा **पूर्ववया ब्राह्मणः प्रत्युत्थेय** इति विशिष्टव्यक्तिस्थं ब्राह्मण्यमाश्रीयते ॥

( उद्द्योतः ) भाष्ये—**अनेकान्तेनेति ।** अनियमेनेत्यर्थः ॥ अभेदेन समानाधिकरण इति भावः । तदाह—**अभेदस्यापीति । प्रत्यभिज्ञानादिति ।** स एवायमिति प्रत्यभिज्ञानादित्यर्थः ॥ अकारोऽकार इत्येकाकारप्रत्ययाच्चेत्यपि बोध्यम् ॥ **नासावन्यत्वमिति ॥** भेदप्रतीतिमेवेत्यर्थः ॥ **प्राणीति ।** यद्यपि प्राणित्वं न जातिस्तथापि साधारणधर्मत्वाभिप्रायेणोक्तम् ॥ **गवाश्वरूपेति ।** गोत्वाश्वत्वेत्यर्थः ॥

परे तु ह्रस्वषड्भेदवृत्त्येवात्वं दीर्घषड्भेदवृत्त्येव आत्वमित्यादि **ननु चेति** भाष्याशयः । सकलव्यापकमत्वमप्यस्तीत्युत्तरम् । ननु व्यापकजात्यैक्येऽपि व्याप्यजात्या भेदोऽप्यस्तीत्यत आह-**अनेकान्तो हीति ।** व्यापकधर्मेण समानाधिकरणव्याप्यधर्मकृतो भेदः केवलभेदबुद्धिं न करोतीत्यर्थ इत्याहुः ॥

ननु जातिनिर्देशे**ऽष्टन आ** इत्यादावपि तन्निर्देशा**द्** अकारादयः स्युः । यत्नाधिक्यं तूभयार्थं स्याद् । ह्रस्वोच्चारणे तु अर्धमात्रिकेण तस्यान्तरतम्याद् ह्रस्व एव स्यादत आह—**अष्टन इति ॥ दीर्घव्यक्तीति ।** व्यक्तेरुपलक्षणत्वे आन्तरतम्या**द्ध्र**स्व एव स्यादिति यत्नाधिक्यानर्थक्यं तदवस्थमिति विशेषणत्वमेव तस्या इति भावः । अत्वातिरिक्तमात्वादि नास्त्येवेति तात्पर्यम् ॥ केचित्तु दीर्घषड्भेदवृत्त्यात्वजातेरेवात्वव्याप्यायास्तत्र निर्देश इति वदन्ति ॥

( तत्त्वालोकः ) भाष्ये—अभेदसमानाधिकरणो ह्यकाराकारयोर्भेदो भेदबुद्धिमेव न सम्पादयति, किन्त्वभेदबुद्धिमपीत्याह—**यो हीति ।**

प्रदीपे—**अभेदस्यापीति**—अकाराकारयोरित्यादिः । **अत्रापि**—गवाश्वयोरपि । **यत्नाधिक्यात्**—दीर्घोच्चारणरूपयत्नाधिक्यात् ।

उद्द्योते—अभेदसत्त्वे स्वयं युक्त्यन्तरमप्याह—**अकारोऽकार इति ।** ह्रस्वोऽकारः, दीर्घोऽकार इत्यर्थः । **इत्यर्थ इति**—एवमग्रेऽपि । पृथिवीत्वाभाववज्जीवज्जलीयादिशरीरे प्राणित्वस्य, प्राणित्वाभाववत्पटादौ च पृथिवीत्वस्य सत्त्वेन परस्परात्यन्ताभावसमानाधिकरणयोः प्राणित्वपृथिवीत्वरूपधर्मयोरेकत्र जीवत्पार्थिवशरीरे सत्त्वेन साङ्कर्यात्तस्य च जातित्वबाधकत्वादाह—**न जातिरिति ।** सिद्धान्तमाह—**परे त्विति । अस्ति**—उभयत्रास्ति । एवमग्रेऽपि । **अकारादय इति**—पर्यायेणेति भावः । ननु तत्र जातिनिर्देशेऽपि दीर्घोच्चारणरूपयत्नाधिक्यसामर्थ्यादकारादयो न स्युरित्यत आह—**यत्नाधिक्यन्त्विति । उभयार्थम्**—ह्रस्वदीर्घोभयार्थम् । **तु**—हि । **अर्धमात्रिकेण**—नकारेण । **तस्य**—ह्रस्वस्य । **तस्याः**—व्यक्तेः । **तत्र**—'अष्टन आ' इत्यादौ ।

( भाष्यम् )

**अपर आह—**

( वार्तिकपाठान्तरम् )

## ॥ * ॥ सवर्णेऽण्ग्रहणमपरिभाष्यमाकृतिग्रहणादनन्यत्वम् ॥ * ॥

( भाष्यम् )

सवर्णेऽण्ग्रहणमपरिभाष्यम् । आकृतिग्रहणादनन्यत्वं भविष्यति ॥ अनन्याऽऽकृतिरकारस्याकारस्य च ॥

( वार्तिकपाठान्तरखण्डम् )

## ॥ * ॥ अनेकान्तो ह्यनन्यत्वकरः ॥ * ॥

( भाष्यम् )

यो ह्यनेकान्तेन भेदो नासावन्यत्वं करोति । तद्यथा—न यो गोश्च गोश्च भेदः सोऽन्यत्वं करोति । यस्तु खलु गोश्चाश्वस्य च भेदः सोऽन्यत्वं करोति ॥

**( प्रदीपः ) अपर आहेति ।** व्यक्तिरेव शब्दार्थः । जातिस्त्वशब्दार्थोऽप्यभेदप्रत्ययहेतुरस्तीति सर्वव्यक्तीनामभेदाश्रयणादेकव्यक्तिनिर्देशेऽपि सर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः ॥ अत्र पक्षे आकृतिग्रहणमाकृतेरेकाकारप्रत्ययनिमित्तत्वेन प्रतिपत्तिरुच्यते ॥

**( उद्द्योतः ) अशब्दार्थ इति ।** शब्दजन्यप्रतीतिविशेष्यत्वाभाववानित्यर्थः । यद्वा शक्यतावच्छेदकत्वेऽप्यशक्य इत्यर्थः ॥ **सर्वव्यक्तीनामिति ।** जातिवैशिष्ट्येन प्रत्येकवृत्तिपरस्परभेदस्यागपूर्वकमभेदेनैकरूपेणाश्रयणात्तज्जात्याक्रान्तसर्वव्यक्तीनां ग्रहणं सिध्यतीत्यर्थः ॥ पूर्ववार्तिकेऽण्ग्रहणाकरणे आकृतिग्रहणं हेतुः, आकृतेरपि भेदाशङ्कायामनन्यत्वाच्चेति वार्तिकखण्डः । अपरमतेऽण्ग्रहणाकरणे सर्वव्यक्तीनामनन्यत्वं हेतुरनन्यत्वे आकृतिग्रहणम् । आकृतेर्ग्रहणं विशेषणत्वेनाश्रयणम् । **रूपसामान्यादि**त्ययमाकृतिग्रहणादित्यस्यार्थोऽपरमत इत्येके ॥

**( तत्त्वालोकः )** भाष्ये—**सवर्णे**—'अणुदिदि'ति सूत्रे । एवम्पूर्वत्रापि । **आकृतिग्रहणादिति**—यत इत्यादिः । अकाराकारयोरिति शेषः । **अनन्येति**—यत इत्यादिः ।

प्रदीपे—**अभेदप्रत्ययेति**—व्यक्तीनामित्यादिः । **एकाकारप्रत्ययेति**—व्यक्तीनामित्यादिः ।

उद्द्योते—ननु जातेः शब्दजन्यप्रतीतिविशेषणत्वात्, शक्यतावच्छेदकत्वाद्वा कथमशब्दार्थत्वमित्यत आह—**शब्दजन्येति । प्रत्येकेति**—प्रत्येकव्यक्तीत्यर्थः । **अभेदेनेति**—सर्वव्यक्तीनामित्यादिः । **अनन्यत्वे**—तासामनन्यत्वे च । अपरमते-'अइउण्' सूत्रभाष्यविरोधं परिहरति—**रूपसामान्येति ।** 'एके' इति सूचिताया अत्रारुचेर्बीजन्तु-तथा सति 'रूपसामान्याद्'त्यत्र वाकारस्य वैयर्थ्यमेव । तथा च पूर्वमतमेव सम्यगित्याशयः ।

( ५१२ सिद्धान्तवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ तद्वच्च हल्ग्रहणेषु ॥ * ॥

( भाष्यम् )

एवं च कृत्वा हल्ग्रहणेषु सिद्धं भवति । 'झलो झलि'—अवात्ताम् अवात्तम् अवात्त । यत्रैतन्नास्ति—अण् सवर्णान् गृह्णातीति ॥

**( प्रदीपः ) तद्वच्चेति ।** यथाऽऽकृतिग्रहणादण्सु कार्यं सिध्यति, तथा हल्ष्वपि आकृतिग्रहणादेव सिध्यति । व्यक्तिनिर्देशपक्षे तु एकैव तकारव्यक्तिर्लब्धव्यपदेशमासादयेत् पूर्वा परा वेत्यत्रात्तामिति लोपो न स्यात् । अनुद्धेत्यादावेव तु स्यात् ॥

**( उद्द्योतः )** जात्याश्रयणमावश्यकमित्याह—**तद्वच्चेति । पूर्वा परा वेति ।** उभयोरपि झल्त्वं न स्याद्, अन्यतरस्य प्रत्याहारसूत्रोपात्तादन्यत्वादिति भावः ॥ **अवात्तामिति ।** वसेर्लुङि तसस्तामि वृद्धौ **सः सी**ति तत्त्वे **झलो झली**ति सिज्लोपे रूपम् ॥ ननु झल इति सूत्रं क्व चरितार्थमत आह— **अनुद्धेति ।** नुधेर्लुङि रूपम् ॥

**( तत्त्वालोकः )** प्रदीपे— **लोपः**—'झलो झली'ति सलोपः ।

उद्द्योते— **वृद्धौ**—'वदव्रजहलन्तस्याचः' इति वृद्धौ । **ननु**—नन्वेवम् ।

( ५१३ सिद्धान्तसाधकवार्तिकखण्डम् ॥ ९ ॥ )

## ॥ * ॥ अनेकान्तो ह्यनन्यत्वकरः ॥ * ॥

( भाष्यम् )

इत्युक्तार्थम् ॥

**( प्रदीपः )** धातुप्रत्ययावयवयोस्तकारयोर्भेद एवेति चेत् । तत्राह—**अनेकान्त इति ॥**

**( उद्द्योतः ) भेद एवेति ।** व्यक्त्योः परस्परं भेद एवेति भावः ॥ भाष्ये—**अनेकान्त इति ।** उपात्ताभेदकधर्मसमानाधिकरणो भेदकधर्म इत्यर्थः । प्रकृते भेदकधर्मस्तत्त्वम् ॥

**( तत्त्वालोकः )** भाष्ये-**उक्तार्थमिति**—'यो ह्यनेकान्तेन भेदः' इत्यादिनेति भावः ।

प्रदीपे—हेतुगर्भं विशेषणमाह—**धातुप्रत्ययावयवयोरिति ।** नन्वित्यादिः ।

उद्द्योते— **तत्त्वम्**—तकारद्वयनिष्ठं तकारत्वम् । भेदकधर्मश्च धात्ववयवत्वप्रत्ययावयवत्वरूपः ।

( ५१४ सिद्धान्तसाधकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ द्रुतविलम्बितयोश्चानुपदेशात् ॥ * ॥

( भाष्यम् )

द्रुतविलम्बितयोश्चानुपदेशान्मन्यामहे—'आकृतिग्रहणात् सिद्धम्' इति । यदयं कस्यांचिद् वृत्तौ वर्णाननुपदिश्य सर्वत्र कृती भवति ॥

**( प्रदीपः ) द्रुतेति ।** हल्ग्रहणेष्वेवेदमुच्यते, यत्रैतन्नास्ति—अण् सवर्णान् गृह्णातीति । अण्सु तु व्यक्तिनिर्देशेऽपि **ग्रहणकशास्त्रेण** स्यादेव वृत्तिभिन्नस्य ग्रहणम् ।

**( उद्द्योतः ) प्रयोगार्थं तु मध्यमेत्युक्तेर्द्रुतविलम्बितयो**रित्युक्तम् ॥

**( तत्त्वालोकः )** भाष्ये—**द्रुतविलम्बितयोश्चेति**—वृत्त्योर्वर्णानामिति शेषः । अत्र 'द्रुते'त्यत्र वार्तिककारैतद्वचनप्रामाण्यादेव ह्रस्वः । **यत्**—यस्मात् । **अयम्**—पाणिनिः ।

प्रदीपे—**वृत्तिभिन्नस्य**—वृत्तिभेदभिन्नस्यापि ।

( आकुभाष्यम् )

अस्ति प्रयोजनमेतत् ॥

किं तर्हीति ॥

---

( वृत्तिपृथक्त्वाधिकरणम् )

( ५१५ (१) आक्षेपवार्तिकप्रथमखण्डम् ॥ )

## ॥ ※ ॥ वृत्तिपृथक्त्वं तु नोपपद्यते ॥ ※ ॥

( भाष्यम् )

वृत्तेस्तु पृथक्त्वं नोपपद्यते ॥

**( प्रदीपः ) वृत्तिपृथक्त्वमिति** । ह्रस्वदीर्घादिप्रमाणलक्षणापि वृत्तिर्न भेदिका स्यादिति खट्वाभिरित्यत्रैस् प्रसज्येतेति भावः ॥

**( उद्द्योतः ) ह्रस्वदीर्घादीति** । वृत्त्या कालप्रमाणेन पृथक्त्वमिति तृतीयासमास इति भावः । भाष्ये तु शेषत्वविवक्षया षष्ठी । हेतौ पञ्चमी वा ॥

**( तत्त्वालोकः )** प्रदीपे— **ह्रस्वदीर्घादीति**—यथुक्तरीत्या द्रुतविलम्बितादिलक्षणा वृत्तिर्न भेदिका स्यात्तर्हीत्यादिः ।

उद्द्योते— **वृत्त्येति**—वृत्तिपृथक्त्वमित्यत्रेत्यादिः । तथा च—वृत्त्या कृताः पृथक्त्वगुणवन्तो वर्णा इति नोपपद्यते इति तदर्थः । **शेषत्वेति**—वृत्तावित्यादिः । तथा च—वृत्तिसम्बन्धि, वृत्तिहेतुकं वा पृथक्त्वं वर्णानां नोपपद्यते इति तदर्थः ।

( ५१५ (२) आक्षेपवार्तिकद्वितीयखण्डम् ॥ ११ ॥ )

## ॥※॥ तस्मात्तत्र तपरनिर्देशात्सिद्धम् ॥※॥

( भाष्यम् )

तस्मात्तत्र तपरनिर्देशः कर्तव्यः ॥

( समाधानभाष्यम् )

न कर्तव्यः । क्रियते न्यास एव—'अतो भिस ऐस्' इति ॥ अणुदित्सवर्णस्य चाप्रत्ययः ॥ ६६ ॥

**( प्रदीपः ) क्रियत इति** । अवश्यकर्तव्यतां दर्शयति । व्यक्तिपक्षेऽण् सवर्णान् गृह्णातीति प्रसङ्गः । सूत्रप्रत्याख्याने त्वाकृतिग्रहणात् ॥ उदिद्ग्रहणं कर्तव्यमेव । न हि वर्ग्याणामेकाकृतियोगोऽस्ति । कृते तु सूत्रे **कुहोश्चुरित्यादौ** भाव्यमानस्य उदित्त्वसामर्थ्या**दप्रत्यय** इति निषेधो नावतरतीत्यण्स्वेवायं निषेधः । प्रत्याख्यानपक्षे भाव्यमानेषु यथाश्रुतं रूपमुत्पद्यत इत्याकृतिग्रहणेऽपि भिन्नकालानां ग्रहणं न भवति । यथा **पशुना यजेत, पशुमालभेते**त्युत्पत्तिवाक्यत्वात् संख्या विवक्ष्यते । उदात्तादयस्त्वभेदका इत्युक्तम् । **अनुवादे** तु नान्तरीयकत्वादेकव्यक्त्युच्चारणेऽपि सकलव्यक्तिग्रहणम् । यथा **ग्रहं संमार्ष्टीति** सर्वेषां ग्रहाणां 'प्राजापत्या नव ग्रहा' इत्यादिभ्यो ज्ञातानां संमार्जनम् ॥ ६९ ॥

**( उद्द्योतः ) आकृतिग्रहणादिति** । तदुक्त**मइउण्सूत्रे** भाष्ये—※**तद्वच्च तपरकरणम्**※ **एवं च कृत्वा तपराः क्रियन्ते आकृतिग्रहणेनातिप्रसक्तमिति कृत्वे**ति ॥ **एकाकृतियोग इति** । तन्मात्रनिष्ठेत्यादिः ॥ **उदिदिति** च कुचुटुतुपूनां प्राचां संज्ञा । तयेहापि व्यवहारः ॥ **न तु सर्वत्रे**त्संज्ञा प्राप्नोति, अनुवादे तदप्राप्तेरिति बोध्यम् ॥ नन्वण्ग्रहणप्रत्याख्यानेऽनुवादेष्विव विधावपि जातिनिर्देशात्सर्वग्रहणप्रसङ्ग इत्यत आह— **भाव्यमानेष्विति** । **यथाश्रुतमिति** । जातिविशेषावच्छिन्नव्यक्तिविशेषरूपमित्यर्थः ॥ **उत्पत्तिवाक्यत्वादिति** । विधिवाक्यत्वादित्यर्थः । विधौ हि प्रमिमित्सितत्वाद्विशिष्टोपादाने न वाक्यार्थभेदः । अनुवादे तु तस्य सिद्धत्वेनाप्रमिमित्सितत्वात्तद्विशेषणोपादानं न वाक्यभेदमन्तरेण भवति । स चान्याय्य इति भावः । यत्तु क्वचिद्विधावपि व्यक्त्यन्तरस्योपादानम्, **तद्विव उदित्यादौ** तपरत्वाछिङ्गादिति द्रष्टव्यमित्याहुः ॥ **नान्तरीयकत्वादिति** । अनेन नान्तरीयकविशेषणविषय एव विवक्षाऽविवक्षाविचार इति ध्वनयति । अत एव **न श्रेयांसं प्रबोधये**दित्यादौ अनुवाद्यविशेषणश्रेयस्त्वादेर्विवक्षायामपि न दोषः ॥ वस्तुतोऽत्र व्याख्यानमेव शरणं, नान्तरीयकसङ्ख्यालिङ्गविषयन्यायस्य प्रधानव्यक्तिविषयकत्वानौचित्यात् । **उपेयिवानि**त्यादौ उपेत्यविवक्षाया नञो विवक्षाया वा दर्शनात् ॥ ऋकारेण लृग्रहणाय तु **लृवर्णस्य ऋवर्णवद्भावो वाच्य** इति तात्पर्यम् ॥

परे तु जातिपक्षेऽपि **तपर**सूत्रस्य जातिग्रहणप्राप्तसवर्णग्रहणनियमार्थत्ववत्तत्प्रयुक्तसवर्णग्रहणनिषेधाया**प्रत्यय** इति पृथक् कार्यमेव । ध्वनितं चेदं **ज्यादादीयस** इति सूत्रे भाष्ये ॥ किञ्च तत्र व्यक्तिविवक्षायां यत्र क्वचित् प्रयोगे एकाकारव्यक्तिः साध्वी स्यान्न प्रयोगान्तरे इति व्यक्तिविवक्षया समाधानं दुर्घटमित्याहुः ॥ ६९ ॥

**( तत्त्वालोकः )** भाष्ये—**क्रियते इति**—यत इत्यादिः ।

प्रदीपे—**व्यक्तिपक्षे इति**—यत इत्यादिः । सूत्रसत्त्वादिति शेषः । **इति प्रसङ्गः**—इति हेतोः प्रसङ्गः । **ग्रहणादिति**—प्रसङ्ग इत्यनुषज्यते । **उत्पद्यते**—उत्पत्तिवाक्ये विवक्ष्यते ।

उद्द्योते—ननु यौगिक एवोदिच्छब्दः कुतो नेत्यत आह— **न त्विति** । **प्रमिमित्सितत्वादिति**—विधेयस्येत्यादिः । **विशिष्टेति**—संख्याविशिष्टेत्यर्थः । **वाक्यार्थभेद इति**—अत्र 'वाक्यभेदः' इति पाठो युक्तः । **स च**—वाक्यभेदश्च । **क्वचित्**—'अदसोऽसेर्दादु दो मः' इत्यादौ । कैयटोक्तं खण्डयति— **वस्तुत इति** । तत्र हेत्वन्तरमाह—**उपेयीति** । **वा दर्शनात्**—दर्शनाद्वा । नन्विष्टस्य ऋकारेण लृकारग्रहणस्य जातिपक्षे कथमुपपत्तिरित्यत आह—**ऋकारेणेति** । कैयटेन जातिपक्षे 'अप्रत्ययः' इति निषेधस्यासत्त्वमुक्तन्तत्खण्डयति— **परे त्विति** । अत्र मानमाह— **ध्वनितञ्चेति** । व्यक्तिपक्षेण निर्वाहे दोषमप्याह— **किञ्चेति** ॥

---

( ६३ तपरसंज्ञासूत्रम् ॥ १ । १ । ९ आ । १० मं० सू० ॥ )

## तपरस्तत्कालस्य ॥ १ । १ । ७० ॥

( तत्कालपदसाधनाधिकरणम् )

( आक्षेपभाष्यम् )

अयुक्तोऽयं निर्देशस्तत्कालस्येति । तदित्यनेन कालः प्रतिनिर्दिश्यते, तदित्ययं च वर्णः । तत्रायुक्तं वर्णस्य कालेन सह सामानाधिकरण्यम् ॥

**( प्रदीपः ) तपरः** ॥ ७० ॥ **अयुक्त इति** । न्यायेनासंबद्ध इत्यर्थः । न्यायशब्दस्य प्रयोगस्तु प्रसिद्धत्वान्न कृतः । कदाचित्तु प्रसिद्धार्थस्यापि प्रयोगो दृश्यते—न्यायेनायुक्तमिति । धात्वर्थेऽन्तर्भूतस्य प्रयोगाभावः, न हि भवति—जीवति प्राणानिति ॥ **तदित्यनेनेति** । स कालो यस्येति कालसामानाधिकरण्येन तच्छब्दोपादानात् ॥

**तदित्ययं च वर्ण इति।** परामृष्ट इत्यर्थः। तपरशब्दवाच्यस्यार्थस्य तच्छब्देन परामर्शात् ॥ **वर्णस्येति।** वर्णवाचिनस्तच्छब्दस्येत्यर्थः॥ **कालेनेति।** कालवाचिनेत्यर्थः। कालो हि प्रसिद्धपरिमाणा क्रियाऽप्रसिद्धपरिमाणस्य क्रियान्तरस्य परिच्छेदिका। यथा दिवसमधीत इति दिवसशब्देनोदयादिरस्तमयान्त आदित्यगतिप्रबन्ध उच्यते। स चाध्ययनस्य परिच्छेदकत्वात्कालः। वर्णस्तु क्रियात्मको न भवति॥

**( उद्द्योतः ) तपरस्तत्का ॥ ७० ॥** युजेः संबन्धवाचकत्वेन संबन्धस्योभयनिरूप्यत्वेन संबन्ध्यन्तराकाङ्क्षायामाह—**न्यायेनेति ॥ प्रसिद्धत्वादिति।** निष्ठान्तयुजेः प्रायो न्यायसंबन्धिन्येव प्रयोगादित्यर्थः॥ नन्वेवं युज्यर्थेऽन्तर्भूतत्वादप्रयोग इति कुतो नोच्यत इत्यत आह—**धात्वर्थे इति।** यद्ययमन्तर्भूतः स्यात्तदा **न्यायेनायुक्त** इति प्रयोगो न स्यादिति भावः॥ **दण्डेनायुक्त** इत्यादि च न स्यादित्यपि बोध्यम्॥ एतेन मेघो वर्षतीत्यादौ प्रसिद्धत्वाज्जलमित्यादेरप्रयोगादकर्मकतेति नव्योक्तिः परास्ता॥ भाष्ये—**प्रतिनिर्दिश्यत इति।** सामानाधिकरण्येन विशेष्यत इत्यर्थः। **तदित्ययं च वर्ण** इत्यस्य साकाङ्क्षत्वादाह—**परामृष्ट इति।** वर्णस्यैव परामर्शे हेतुमाह—**तपरेति।** तः परो यस्मादिति विग्रहेऽवध्यवधिमतोः साजात्यात्सवर्णत्वस्य वर्णनिष्ठत्वाच्च तेन वर्ण एवोच्यते इति भावः॥ एकार्थवृत्तित्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वात् कथं **वर्णस्य कालेनेति** भाष्यमत आह—**वर्णवाचिन इति ॥** सामानाधिकरण्यानुपपत्तिप्रदर्शनाय कालस्वरूपमाह—**कालो हीति॥** अपरिच्छिन्नस्य विभोः कालस्य व्यवहारानुपयोगित्वादाह—**प्रसिद्धेति ॥ वर्णस्त्विति।** गुणरूपत्वाद् द्रव्यरूपत्वाद्वेत्यर्थः॥ जन्यमात्रं कालोपाधिरिति तु न युक्तम्। दिवसादिव्यवहारस्य सूर्यक्रियादिभिरेव दर्शनाद् इति भावः। एतत्कालस्वरूपकथनं **कालाः परिमाणिनेति** सूत्रस्थभाष्यविरुद्धमिति तत्रैवोपपादयिष्यते॥

**( तत्त्वालोकः )** भाष्ये—**तदित्यनेनेति**—यत इत्यादिः। तच्छब्दस्य पूर्वपरामर्शित्वादत्र सूत्रे तेन तपरशब्दवाच्यो वर्णः परामृश्यते, वर्णकालयोश्च सामानाधिकरण्यं न सम्भवतीति तत्पदेन कालस्य सामानाधिकरण्येन विशेषणं न युक्तमिति तथा निर्देशो न युक्त इत्याशयः।

प्रदीपे—नन्वेवं न्यायशब्दः कथं नोपात्त इत्यत आह—**न्यायशब्दस्येति।** नन्वेवं न्यायेनायुक्तमित्यादि-व्यवहारो नोपपद्येतेत्यत आह—**कदाचिदिति। अन्तर्भूतस्य**—अन्तर्भूतार्थकस्य। **इत्यर्थः**—इति शेषः। **तच्छब्देनेति**—पूर्वपरामर्शिनेत्यादिः।

उद्द्योते—न्यायासम्बन्धिनि 'युक्तश्छन्दांस्यधीयीते'त्यादावपि प्रयोगादाह—**प्राय इति। अन्तर्भूतत्वादिति**—न्यायशब्दार्थस्येत्यादिः। युजिना सह न्यायशब्दस्येति शेषः। **अयमिति**—न्यायशब्दार्थ इत्यर्थः। युज्यर्थे इति शेषः। उक्तं प्रायःपदं सफलयन् स्वयं युक्त्यन्तरमप्याह—**दण्डेनेति।** दीक्षितोक्तिं दूषयति—**एतेनेति।** कदाचित् प्रसिद्धार्थस्यापि प्रयोगदर्शनेनेत्यर्थः। ननु पूर्वपरामर्शिना तच्छब्देन प्रकृते तपरशब्दवाच्यः तपरेति समुदाय एव परामृश्येत, न तु वर्ण इत्यत आह—**तः पर इति। तेन**—तादृशेन तच्छब्देन। **एकार्थवृत्तित्वेति**—एकार्थबोधकत्वेत्यर्थः। नन्वित्यादिः। **शब्दधर्मत्वादिति**—कालवर्णयोरभावेनेति शेषः। **वाचिन इति**—वाचिन इत्यादि। **'कालो ही'**त्यादिग्रन्थस्य प्रकृतानुपयुक्तत्वशङ्कां वारयति—**सामानेति।** कालवर्णयोरित्यादिः। **नैयायिकमतेनाह—गुणेति।** मीमांसकमतेनाह—**द्रव्येति।** नैयायिकमतं खण्डयति—**जन्येति।** कैयटोक्तं दूषयति—**एतदिति॥**

**( प्रत्याक्षेपभाष्यम् )**

**कथं तर्हि निर्देशः कर्तव्यः ?।**

**( प्रत्याक्षेपसमाधानभाष्यम् )**

**तत्कालकालस्येति ॥**

**( आक्षेपभाष्यम् )**

**किमिदं तत्कालकालस्येति ?।**

**( तत्त्वालोकः ) किम्**—किंसमासत्वम्।

**( समाधानभाष्यम् )**

**तस्य कालस्तत्कालः, तत्कालः कालो यस्येति सोऽयं तत्कालकालस्तत्कालकालस्येति ॥**

**( प्रदीपः ) तस्य काल इति।** यैव एकस्य वर्णस्य परिच्छेदिका क्रिया निमेषादिः, सैव यस्य परस्य स तत्कालकालः॥

**( उद्द्योतः ) सैवेति।** तज्जातीयेत्यर्थः॥

**( तटस्थाक्षेपभाष्यम् )**

**स तर्हि तथा निर्देशः कर्तव्यः ॥**

**( सिद्धान्तिसमाधानभाष्यम् )**

**न कर्तव्यः। उत्तरपदलोपोऽत्र द्रष्टव्यः। तद्यथा—उष्ट्रमुखमिव मुखं यस्य सोऽयमुष्ट्रमुखः। खरमुखः। एवं तत्कालकालस्तत्कालस्तत्कालस्येति ॥**

**( प्रदीपः ) उष्ट्रमुख इति।** गम्यमानार्थत्वाद् द्वितीयमुखशब्दाप्रयोगः। उष्ट्रो मुखमस्योष्ट्रमुखः। न च प्राणी प्राण्यन्तरस्य मुखमिति सामर्थ्यात्सादृश्यप्रतीतिः। समग्रेण चोष्ट्रेण मुखस्य सादृश्याभावादुष्ट्रशब्दोऽवयवे वर्तते। मुखेनैव मुखस्य सादृश्यं प्रसिद्धमिति सामर्थ्यादुष्ट्रमुखमिव मुखमस्येत्यर्थो गम्यते। एवमिहापि वर्णः कालो न भवतीति सामर्थ्यात्तदीया क्रिया क्रियान्तरपरिच्छिन्ना सती क्रियान्तरस्य परिच्छेदिकेति वर्ण एव परिच्छेदक उच्यते॥

**( उद्द्योतः ) तदीया क्रियेति।** उच्चारणरूपेत्यर्थः॥ **क्रियान्तरस्य** वर्णान्तरोच्चारणस्य॥ **वर्ण एवेति।** वर्णाश्रितक्रियागतपरिच्छेदकत्वस्याश्रये उपचाराद्वर्णपरामर्शिनस्तच्छब्दस्य मुख्यवृत्त्यैव कालशब्देन सामानाधिकरण्यमित्यर्थः॥

**( तत्त्वालोकः )** भाष्ये—**उत्तरपदेति**—किन्त्वित्यादिः।

प्रदीपे—स्वयं 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानमि'त्यस्य प्रत्याख्यातत्वादाह—**गम्यमानेति।** द्वितीयमुखशब्दोपादानमन्तरैव गम्यमानतदर्थत्वादित्यर्थः। तदेवोपपादयति—**उष्ट्रो मुखमिति। प्राण्यन्तरस्येति**—स्वस्य वेति शेषः। **सामर्थ्यात्**—उष्ट्रपदोपादानसामर्थ्यात्। एवमग्रेऽपि। **सादृश्येति**—मुखे उष्ट्रस्येति भावः। **अवयवे**—उष्ट्रावयवे।

उद्द्योते—**आश्रये**—क्रियाश्रये वर्णे।

**( समाधानान्तरभाष्यम् )**

**अथवा साहचर्यात्ताच्छब्द्यं भविष्यति, कालसहचरितो वर्णोऽपि काल एव ॥**

**( प्रदीपः ) अथवेति ।** वर्णसहचरितायां क्रियायां तच्छब्दो वर्तते, स कालो यस्येति वर्णसमवेता क्रिया परिच्छेदिकाऽस्येत्यर्थः। यथाऽश्मादि द्रव्यं प्रस्थादिरूपेण परिच्छिन्नं व्रीह्यादीनां परिच्छेदकं, तद्वत् क्रियापीत्यर्थः ॥

**( उद्द्योतः )** पूर्वव्याख्यानतो विशेषमाह—**वर्णसहेति।** अनेन लक्षणाबीजं संबन्धो दर्शितः। क्रियायाः परिच्छेदकत्वं सापेक्षं न स्वत इति दृष्टान्तेनाह—**यथेति** ॥

**( तत्त्वालोकः )** भाष्ये—उत्तरपदलोपापेक्षया लक्षणाया आश्रयणे लाघवमाह— **अथवेति।** उक्तं हि 'पुंयोगादि'ति सूत्रस्य भाष्ये 'चतुर्भिः प्रकारैरतस्मिन् स इत्येतद् भवति—तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्याच्चे'ति। **साहचर्यात्**—तत्साहचर्यात्।

उद्द्योते—**पूर्वेति**—अत्र व्याख्याने इत्यादिः।

---

**( विध्यर्थत्वनिर्णयाधिकरणम् )**

**( आक्षेपभाष्यम् )**

किं पुनरिदं नियमार्थम्, आहोस्वित् प्रापकम् ? ॥

**( उद्द्योतः )** भाष्ये—**प्रापकमिति।** स्वतन्त्रविधायकमित्यर्थः।

**( तत्त्वालोकः )** भाष्ये—**इदम्**—प्रकृतसूत्रम्।

**( प्रत्याक्षेपभाष्यम् )**

कथं च नियमार्थं स्यात् ? कथं वा प्रापकम् ?

**( प्रत्याक्षेपसमाधानभाष्यम् )**

यद्यत्राण्ग्रहणमनुवर्तते, ततो नियमार्थम् । अथ निवृत्तम्, ततः प्रापकम् ॥

**( तत्त्वालोकः ) अत्र**—प्रकृतसूत्रे। पूर्वसूत्रादिति भावः। **अथ**—यदि। **निवृत्तम्**—तन्नानुवर्त्तते। यद्यपि तत्र तत्प्रत्याख्यातम्, तथापि शिष्यबुद्धिवैशद्यार्थन्तत्र तत्सत्त्वमभ्युपेत्यैवमुक्तिः सम्भवतीत्याशयः।

**( विशेषजिज्ञासाभाष्यम् )**

कश्चात्र विशेषः ? ।

**( तत्त्वालोकः ) अत्र**—अनयोः पक्षयोः।

**( ५१६ नियमपक्षे दूषणवार्तिकम् ॥ १ ॥ )**

## ॥*॥ तपरस्तत्कालस्येति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नाग्रहणम् ॥*॥

**( भाष्यम् )**

'तपरस्तत्कालस्य' इति नियमार्थमिति चेद्दीर्घग्रहणे स्वरभिन्नानां ग्रहणं न प्राप्नोति ॥

केषाम् ? ।

उदात्तानुदात्तस्वरिता[नुनासिका]नाम् ॥

**( प्रदीपः ) दीर्घग्रहण इति।** भेदका उदात्तादय इति भावः ॥ अत्र **वृद्धिरादैजिति** षण्णामाकाराणां वृद्धिसंज्ञेष्यते, एकस्यैव तु दीर्घस्य स्यात्। तपरकरणं त्वैजर्थमेव स्यात् ॥

**( उद्द्योतः ) षण्णामिति ।** अनुनासिकाकारस्य वृद्धिसंज्ञायां फलाभावादवसाने तदभावाच्चेदं चिन्त्यम्। अत एव वार्त्तिके—**स्वरभिन्ने**त्येवोक्तम्, न तु गुणभिन्नेति। भाष्येऽप्युदात्तानुदात्तस्व**रितानामि**त्येव पाठः ॥ ननु तत्र तपरत्वसामर्थ्यादस्य सूत्रस्यावृत्तिमङ्गीकृत्यावृत्तस्याण्ग्रहणाननुवृत्त्या विध्यर्थत्वान्न दोष इत्यत आह—**तपरकरणमिति** ॥

**( तत्त्वालोकः )** भाष्ये—**नियमार्थम्**—'तपरोऽण् तत्कालस्यैवे'ति नियमार्थम्। **चेदिति**—तर्हीति शेषः। एवमग्रेऽपि।

प्रदीपे—**तत्र**—तथा सति। **तपरेति**—वृद्धिसंज्ञासूत्रे इति भावः।

उद्द्योते—**तदभावात्**—वृद्ध्यभावात्। **तत्र**—'वृद्धिरादैजि'त्यत्र।

**( प्रापकपक्षाभ्युपगमभाष्यम् )**

अस्तु तर्हि प्रापकम् ॥

**( ५१७ प्रापकपक्षे दूषणवार्तिकम् ॥ २ ॥ )**

## ॥*॥ प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतप्रतिषेधः ॥*॥

**( भाष्यम् )**

प्रापकमिति चेद् ह्रस्वग्रहणे दीर्घप्लुतयोः प्रतिषेधो वक्तव्यः ॥

**( प्रदीपः ) ह्रस्वग्रहण इति। अतो भिस ऐस्** इत्यकारग्रहणे पूर्वसूत्रेण दीर्घप्लुतयोर्ग्रहणं प्राप्नोति। इदं हि सूत्रमनण्ग्रहणे चरितार्थम् ॥

**( तत्त्वालोकः )** भाष्ये—**दीर्घप्लुतयोरिति**—अपि ग्रहणम्प्राप्नोतीति तयोरिति शेषः।

प्रदीपे—नन्वेतत्सूत्रारम्भसामर्थ्यात्तथा न स्यादित्यत आह—**इदं हीति।** अत्र पक्षे पूर्वसूत्रात्प्रकृतसूत्रेऽण्ग्रहणं नानुवर्त्तते इति भावः।

**( समाधानभाष्यम् )**

न वक्तव्यः।

**( ५१८ समाधानवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ विप्रतिषेधात् सिद्धम् ॥ * ॥

**( भाष्यम् )**

अण् सवर्णान् गृह्णातीत्येतदस्तु, 'तपरस्तत्कालस्य' इति वा । 'तपरस्तत्कालस्य' इत्येतद्भवति विप्रतिषेधेन ॥ अण् सवर्णान् गृह्णातीत्यस्यावकाशः—ह्रस्वा अतपरा अणः । 'तपरस्तत्कालस्य' इत्यस्यावकाशः—दीर्घास्तपराः। ह्रस्वेषु तपरेषूभयं प्राप्नोति । 'तपरस्तत्कालस्य' इत्येतद्भवति विप्रतिषेधेन ॥

**( प्रदीपः ) विप्रतिषेधादिति।** विरोधो ह्यत्र विद्यते । यदि पूर्वसूत्रेणाकारः सवर्णानां ग्राहकस्तदाष्टादशानां ग्रहणप्रसङ्गोऽनेन तु षण्णाम्। तत्र परत्वादनेनैव तपरोऽण् सवर्णानां तत्कालानां स्वरूपस्य च ग्राहकः ॥ **नन्वत इति** तकारोच्चारणसामर्थ्यादनेनै[व] ग्रहणं भविष्यति, किं विप्रतिषेधाश्रयेण। नैतदस्ति। मुखसुखार्थस्यापि तकारस्य दर्शनात्। **ऋत इद्धातोरिति** यथा ॥

**( उद्द्योतः )** नन्वाकडारादन्यत्र संज्ञासमावेशदर्शनाद्विप्रतिषेधादित्ययुक्तमत आह—**विरोधो हीति ।** न हि संज्ञासमावे[श]

संज्ञात्वं प्रयोजकम्, किन्तु विरोधाभाव इति भावः ॥ सङ्ख्याकृतव्यवहारस्य परस्परपरिहारेणैव दृष्टत्वादत्र युगपदसंभवरूपो विरोध इति तात्पर्यम् ॥ तपरत्वसामर्थ्यात् प्रतिलक्ष्यं लक्षणभेदाच्चातो भिस इत्येतद्विषयं तपर इति लक्षणमनवकाशमित्ययुक्तो विप्रतिषेध इति शङ्कते—**अत इतीति** ॥ तपरत्वस्य संदिग्धत्वाद् विप्रतिषेधोपपत्तिरित्युत्तरयति—**नैतदिति। ऋत इदिति।** अत्र भाव्यमानत्वेन सवर्णाग्राहकत्वाद्यथा तपरत्वं मुखसुखार्थं तथेत्यर्थः ॥ **ऋत** इति तपरत्वं तु गुणान्तरयुक्तसंग्रहार्थम्। अन्यथोदात्तोच्चारणे जीर्ण इत्यत्र क्ते प्रत्ययसंनियुक्ताद्युदात्तत्वे शेषनिघाते चोदात्तत्वाभावान्न स्यात्। अनुदात्तोच्चारणे जीर्यतीत्यत्र न स्याद् इति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**विप्रतिषेधादिति**—यत इत्यादिः।

प्रदीपे—**अत्र**—पूर्वमत्रप्रकृतसूत्रयोः। विरोधमेवोपपादयति—**यदीति। अनेन**—प्रकृतसूत्रेण। एवमग्रेऽपि। **तत्र**—एवं विरोधे।

उद्द्योते—**संज्ञेति**—संज्ञयोरित्यर्थः। एवमग्रेऽपि। **अत्र**—अष्टादश ग्राह्या इति-षड् ग्राह्या इति व्यवहारयोः। **'अत इतीति' इति**—इदं प्रतीकम्प्रदीपे 'ननु' इत्यस्यासत्त्वम्बोधयति। **तपरत्वस्येति**—उच्चारणार्थत्वस्यापि सम्भवेनैतदर्थत्वस्येति शेषः। **तपरत्वम्**—इदिति तपरत्वम्। **न स्यादिति**—इत्वमित्यादिः। एवमग्रेऽपि।

---

**( स्फोटस्यैकत्वनिरूपणाधिकरणम् )**

**( भाष्यम् )**

यद्येवम्—

**( ५१९ आक्षेपवार्तिकम् ॥ ४ ॥ )**

## ॥*॥ द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कालभेदात् ॥*॥

**( भाष्यम् )**

द्रुतायां तपरकरणे मध्यमविलम्बितयोरुपसंख्यानं कर्तव्यम्। तथा मध्यमायां द्रुतविलम्बितयोः। तथा विलम्बितायां द्रुतमध्यमयोः ॥ किं पुनः कारणं न सिध्यति ?।

कालभेदात्। ये हि द्रुतायां वृत्तौ वर्णास्त्रिभागाधिकास्ते मध्यमायाम्। ये च मध्यमायां वर्णास्त्रिभागाधिकास्ते विलम्बितायाम् ॥

**( प्रदीपः ) यद्येवमिति।** यद्ययं योगस्तत्कालान् प्रतिपादयन् भिन्नकालान् निवर्तयतीत्यर्थः ॥ **त्रिभागाधिका इति।** द्रुतं श्लोकमृचं वोच्चारयति वक्तरि नाडिकाया यस्या नव पानीयपलानि स्रवन्ति तस्या एव मध्यमायां वृत्तौ द्वादश पलानि स्रवन्ति। नवानां त्रिभागास्त्रीणि पलानि, तदधिकानि नव द्वादश सम्पद्यन्ते। विलम्बितायां तु वृत्तौ षोडश पलानि स्रवन्ति ॥

**( उद्द्योतः ) भिन्नकालानिति।** परत्वेन पूर्वसूत्रबाधादिति भावः ॥ अप्राप्तिरेवात्र निवृत्तिः ॥ भाष्ये—**यद्येवमित्यस्य** एतद्विषये **पूर्वसूत्राप्रवृत्ता**वित्यर्थः। यस्यां वृत्तौ तपरकरणं तदन्यत्र वृत्तौ प्रयोगे ऐसादीनामुपसङ्ख्यानं कार्यमिति तात्पर्यम् ॥

**अभ्यासार्थे द्रुता वृत्तिः प्रयोगार्थे तु मध्यमा।**
**शिष्याणामुपदेशार्थे वृत्तिरिष्टा विलम्बिता ॥ इति।**

वृत्तिषु उपलब्धय एव भिन्नकालाः। वर्णास्तु तत्काला एवेत्यभिसन्धाय भाष्ये—**किं पुनरिति** प्रश्नः ॥ तत्तत्कालावच्छिन्नताल्वोष्ठपुटव्यापारजन्या भिन्नकाला एवेत्याशयेन **कालभेदादि**त्युत्तरम् ॥ **त्रिभागाधिका इति।** तृतीयभागाधिका इत्यर्थः। कैयटात्तथा प्रतीतेः ॥ त्रयो भागा अधिका इत्यर्थस्तु उचितः। केवलसङ्ख्यावाचकानां पूरणप्रत्ययान्तार्थकत्वे मानाभावात्तत्रासाधुत्वाच्चेति परे ॥ **यस्या नाडिकाया इति।** सुषुम्नाया इत्यर्थः। **पलानि।** बिन्दवः। ब्रह्माण्डसंबद्धा साऽमृतबिन्दुस्राविणीति प्रसिद्धिर्योगिनाम् ॥

**( तत्त्वालोकः )** भाष्ये—**द्रुतायामिति**—वृत्त्यामित्यादिः। **मध्यमेति**—अत्र निपातनाद् ह्रस्वः। एवमग्रेऽपि। **मध्यमायामिति**—तपरकरणे इत्यनुषज्यते। एवमग्रेऽपि। **द्रुतविलम्बितयोरिति**—उपसंख्यानं कर्तव्यमित्यनुषज्यते। एवमग्रेऽपि। **किं पुनः कारणमिति**—कस्मात्पुनः कारणादित्यर्थः। वृत्त्यन्तरे तपरकरणे वृत्त्यन्तरे इति शेषः। **मध्यमायामिति**—वृत्तावित्यनुषज्यते। एवमग्रेऽपि।

प्रदीपे—**षोडशपलानि स्रवन्तीति**—द्वादशानां त्रिभागाश्चत्वारि पलानि, तदधिकानि द्वादश षोडश सम्पद्यन्ते इति भावः।

उद्द्योते—नन्वेवं निवृत्तिः कथमित्यत आह—**अप्राप्तिरेवेति। प्रयोगे इति**—अतो भिस ऐस् न स्यात्, कालावधारणेन दीर्घप्लुतयोरिव वृत्त्यन्तरस्यापि वारणादिति तन्त्रेति शेषः। तिसृणां वृत्तीनामुपयोगमाह—**अभ्यासेति। उपलब्धय इति**—वर्णानामिति भावः। **जन्या इति**—वर्णा इति शेषः। **टात्**—कैयटोक्तात्। कैयटोक्तं खण्डयन् सिद्धान्तमाह—**त्रय इति।** सुषुम्नाया इति भावः। **सा**—सुषुम्ना।

**( ५२० ( १ ) समाधानवार्तिकप्रथमखण्डम् ॥ )**

## ॥*॥ सिद्धं त्ववस्थिता वर्णा वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते ॥*॥

**( भाष्यम् )**

सिद्धमेतत् ॥

कथम् ?।

अवस्थिता वर्णा द्रुतमध्यमविलम्बितासु ॥

किंकृतस्तर्हि वृत्तिविशेषः ?।

वक्तुश्चिराचिरवचनाद् वृत्तयो विशिष्यन्ते। वक्तैव कश्चिदाश्वभिधायी भवति—आशु वर्णानभिधत्ते, कश्चिच्चिरेण, कश्चिच्चिरतरेण [ कश्चिच्चिरतमेन ]। तद्यथा तमेवाध्वानं कश्चिदाशु गच्छति, कश्चिच्चिरेण, कश्चिच्चिरतरेण [ कश्चिच्चिरतमेन ]। रथिक आशु गच्छति, आश्विकश्चिरेण, पदातिश्चिरतरेण [ शिशुश्चिरतमेन ] ॥

**( प्रदीपः ) सिद्धं त्विति।** सर्वासु वृत्तिषु न वर्णानामुपचयापचयौ। यथा गन्तॄणामालस्यादिभेदाद् गतिभेदेऽपि न मार्गभेद इत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**सिद्धन्त्विति।** उत्पत्तिपक्षेऽपि उपलब्धीनामेव कालभेदाद्वृत्तित्रैविध्यम्। वर्णास्तु वृत्तिभेदेऽप्येकरूपा एवेत्यभिमानः ॥ **अवस्थिताः** नियतकालाः। **चिराचिरवचनात्** चिराचिरकालोच्चारणजनकयत्नात्। जायमानवैकृतध्वनेरुपलब्धीनामेव भेद इति भावः ॥ **उपचयापचयौ** कालवृद्धिह्रासौ ॥ **आलस्यादिभेदादिति।** आलस्यादिना गतिक्रियाया भेदेऽपि यथा न मार्गभे-

दस्तथाऽऽलस्यादिनो[illegible]ध्वनिभेदेऽपि न वर्णस्वरूपभेद इति भावः ॥

( तत्त्वालोकः ) भाष्ये—अवस्थिता इति—यत इत्यादिः ॥ इदमेव दृष्टान्तेनो[illegible] भाष्ये—वक्तैवेति ।

उद्द्योते—उत्पत्तीति—वर्णानामित्यादिः । अपिना—नित्यत्वपक्षस्य परिग्रहः ॥ [illegible]सिद्धान्त[illegible]मोपपादयिष्यमाणत्वादाह—अभिमान इति ।

( समाधानबाधकभाष्यम् )

**विषम उपन्यासः । अधिकरणमत्राध्वा व्रजिक्रियायाः । तत्रायुक्तं यदधिकरणस्य वृद्धिह्रासौ स्याताम् ॥**

( प्रदीपः ) **विषम इति ।** वर्णाः प्रयत्नजन्याः, तद्भेदे वृत्तिभेदाद्भिन्नकाला एव । अध्वा तु व्यवस्थित एव, नगन्तृक्रियाजन्यः ।

(उद्द्योतः) **तद्भेदे ।** प्रयत्नभेदे ॥ **तद्भेदेनेति** तृतीयान्तः क्वचित्पाठः ॥ **वृत्तिभेदात् ।** द्रुतादिवृत्तिभेदात् ॥ **भिन्नकाला एवेति ।** चिराचिरोपलब्ध्युपयोगिवृद्धिह्रासयुक्ता एवेत्यर्थः ॥ अयं भावः—उत्पत्तिवादिनो वर्णोत्पत्तिं प्रति उच्चारणव्यापारस्य कारणत्वात्तावत्तावत्कालावच्छिन्नोच्चारणेन ह्रस्वदीर्घादेरिव द्रुतादेरपि तावत्कालस्यैवोत्पत्तिः स्यात् । न चानुनिष्पादी ध्वनिरेव तत्कालो न तु वर्ण इति वाच्यम् । विनिगमनाविरहादिति ॥

( तत्त्वालोकः ) भाष्ये—उपन्यास इति—दृष्टान्त इत्यर्थः । यत इति शेषः ।

उद्द्योते—ननु वैकृतध्वनेरुपलब्धीनामेव भेदो न तु वर्णानामित्यस्योक्तत्वात्कथमिदमित्यतस्तत्राभिमानपदसूचितामरुचिं ध्वनयन्नाह—अयं भाव इति ।

( समाधानसाधकभाष्यम् )

**एवं तर्हि—स्फोटः शब्दः । ध्वनिः शब्दगुणः ॥**

( आक्षेपभाष्यम् )

**कथम् ? ।**

**( ५२० (२) समाधानवार्तिकदृष्टान्तखण्डम् ॥ ५ ॥ )**

**॥ * ॥ भेर्याघातवत् ॥ * ॥**

( भाष्यम् )

**तद्यथा—भेर्याघातः भेरीमाहत्य कश्चिद्विंशतिपदानि गच्छति, कश्चित्त्रिंशत्, कश्चिच्चत्वारिंशत् । स्फोटस्तावानेव भवति । ध्वनिकृता वृद्धिः ॥**

**ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते ।**
**अल्पो महांश्च केषांचिदुभयं तत्स्वभावतः ॥ १ ॥**

**तपरस्तत्कालस्य ॥ ७० ॥**

( प्रदीपः ) **एवं तर्हीति ।** व्यक्तिस्फोटोऽत्र विवक्षितः । स च नित्यः । एतच्च **येनोच्चारितेने**त्यत्र पस्पशायां विचारितमिति तत एव बोद्धव्यम् ॥ **शब्दगुण इति ।** शब्दस्य गुण उपकारको व्यञ्जकत्वेनेत्यर्थः । तद्यथा—घटः पुनः पुनर्दृश्यमानोऽपि न भेदमवलम्बते, तथा विलम्बितायां वृत्तावकार एव पुनः पुनरुपलभ्यत इति वृत्तिभेदेऽपि वर्णस्य भेदो न गृह्यत इति सर्ववृत्तिषु तत्कालत्वम् ॥ ह्रस्वदी[illegible] स्वत एव भिन्ना भिन्नैर्ध्वनिभिर्व्यज्यन्त इति तेषां कालभेदः । **भेर्याघात इति ।** भेरीमाहन्तीति भेर्याघातः । उपलब्धिसामान्ये दृष्टान्तः । यथा प्रयत्नवशादुत्पन्नो भेरीशब्दः कश्चिदल्पकालमुपलभ्यते, कश्चिच्चिरं, कश्चिच्चिरतरं च । एवं वृत्तिषूपलब्धीनां कालभेदो, विषयस्य त्वभेद एव ॥ **स्फोटस्तावानेवेति ।** दार्ष्टान्तिकोपन्यासः ॥ **ध्वनिः स्फोटश्चेति ।** व्यञ्जको व्यङ्ग्यश्चेत्यर्थः । शब्दानां व्यङ्ग्यानां संबन्धी व्यञ्जकत्वेन यो ध्वनिः स एव महानल्पश्च लक्ष्यते । व्यङ्ग्यस्त्वभिन्नकाल एवेत्यर्थः ॥ **उभयमिति ।** व्यङ्ग्यो व्यञ्जकश्च प्रमाणेन स्वभावतः स्वरूपेण सिद्धावित्यर्थः ॥ **केषांचिदिति ।** व्यक्तानामुभयं गृह्यते, अव्यक्तानां तु ध्वनिरेव ॥ ७० ॥

( उद्द्योतः ) अतो नित्यमतिरिक्तं स्फोटमादाय समाधत्ते भाष्ये—**एवं तर्हीति** ॥ **अत्रेति ।** भाष्ये इत्यर्थः ॥ **स च नित्य इति ।** आकाशादिवदिति भावः ॥ ननु स्फोटोऽसिद्धस्तन्नित्यत्वं चेत्यत आह—**एतच्चेति ।** स एवायमकार इति प्रत्यभिज्ञानाद्, एकं पदमिति प्रत्ययाच्च तत्सिद्धिरित्यन्यत्र विस्तरः ॥ ननु ध्वनिरपि शब्दविशेष एव स कथं शब्दगुणोऽत आह—**शब्दस्येति** ॥ **व्यञ्जकत्वेन** स्फोटोपलब्धिप्रतिबन्धकस्तिमितवाय्वपसरणद्वारा स्वधर्मरूषिततदुपलब्धिहेतुत्वेनेत्यर्थः ॥ तद्विषयायाः पुनः पुनरुपलब्धेर्नैरन्तर्येऽपि न वर्णभेद इति दृष्टान्तेनोपपादयति—**तद्यथेति** ॥ **पुनः पुनरुपलम्भो**ऽविच्छेदेन दर्शनम् ॥ **ह्रस्वदीर्घेत्यादि ।** तमेवायं विलम्बितमुच्चारितवानन्यो द्रुतमितिवदिह व्यक्तिप्रत्यभिज्ञानाभावादिति भावः ॥ एवं च परिदृश्यमानकालभेद उपलब्धिगत एवेति तात्पर्यम् ॥ अत्रेदं बोध्यम्—एक एव स्फोटस्तत्तद्वर्णैस्तत्तद्रूपेणाभिव्यज्यते ॥ **ध्वनिः शब्दगुण इति** भाष्ये ध्वनिशब्देन वर्णा वैकृतध्वनिश्च ॥ तत्र वैकृतध्वनेः स्फोटस्य तद्रूपेण पुनः पुनरभिव्यक्तिः कार्यमिति तदभिव्यक्तस्फोटस्य तत्कालत्वमेव । ह्रस्वदीर्घप्लुतरूपस्फोटस्तु भिन्नकालावच्छिन्नैर्विजातीयैर्ध्वनिभिरभिव्यक्तो भिन्न इव, लौकिकैर्ध्वनिगतभेदेन तद्भेदस्यापि संप्रत्ययात् ॥ कैयटे **ह्रस्वदीर्घप्लुतास्तु स्वत एव भिन्ना** इत्यस्य व्यञ्जकभेदेनारोपितभेदा एव भिन्नैर्ध्वनिभिर्वर्णैर्व्यज्यन्त इत्यर्थः । विलम्बितादिवृत्तौ तु स्फोट एकजातीय एव । ध्वनिकृता वृद्धिरित्यस्य वैकृतध्वनिकृतोपलब्धिकालवृद्धिरित्यर्थः । वर्णोपरागाभिव्यक्तिजनकयत्नीयकालोपरागेणैव स्फोटस्य भानम् । अत एवास्य प्राकृतत्वेन व्यवहारः । अयं तु वैकृतः । तत्त्वं चालस्यादिकृतत्वाद् । वर्णाभिव्यक्त्युत्तरकालश्चायम् । अयं तूपलब्धेरेव पौनःपुन्ये कारणम् । पौनःपुन्यं चाविच्छेदेनोपलब्धिधारामात्रेण, न तु विच्छिद्य विच्छिद्योपलब्ध्या । एतदवच्छिन्नत्वेन तु न स्फोटोपलब्धिः, ह्रस्वाकार एवायमिति प्रत्यभिज्ञानाद् । **आरोपे सति निमित्तानुसरणं, न तु निमित्तमस्तीत्यारोप** इति न्यायाद् । उत्पत्तिवादिना त्वेवं वक्तुमशक्यमिति स्पष्टमेवेति ॥ ननु भेर्याघातो भेरीदण्डादिसंयोगविशेषः, स कथं गच्छेदत आह—**भेरीमिति ।** कर्मण्यणिति भावः ॥ भाष्ये—**आहत्य ।** तं शब्दमुपलभमान इति शेषः ॥ ननु दृष्टान्ते ध्वनेरुपलभ्यमानस्य भेदो न तथेह वर्णस्य द्रुतादिष्विति वैषम्यमत आह—**उपलब्धिसामान्ये इति ।** यथा तत्र तस्य ध्वनेस्तावत्तावत्कालमुपलम्भस्तथेहापि तत्तद्वृत्तौ तावत्तावत्कालं तत्तदभिव्यञ्जकरूपरूषितत्वेन परिच्छिन्नस्यैव स्फोटस्योपलम्भमात्रमित्येतावत्येव दृष्टान्तः । न चैतावता स्फोटभेद इति तात्पर्यम् ॥ ननु भेर्याघातस्थले स्फोटाभावात् **स्फोटस्तावानेवे**त्यनुपपन्नमत आह—**दार्ष्टान्तिकेति** ॥ भाष्ये—**ध्वनिः स्फोटश्च ।** स्त इति शेषः ॥ किं तत इत्यत आह—**शब्दानामिति ।** **व्यञ्जकत्वेन** उपल-

ब्धिजनकत्वेन । वैकृतध्वनेरप्युपलब्धिपौनःपुन्यकारणत्वाद्व्यञ्जकत्वमिति भावः ॥ तदुपक्रमेणैव भाष्यप्रवृत्तेः । **तदुभयं स्वभावतः**—सिद्धमिति शेषः ॥ न तु तत्र प्रमाणान्तरापेक्षेति भावः ॥ योगिप्रत्यक्षसिद्धं चैतदुभयमिति तात्पर्यम् ॥ इदमेव कैयटेन **प्रमाणेनेत्यनेनो**क्तम् ॥ वस्तुतस्तु भेर्याघातस्थलेऽपि स्फोट एव भेरीताडनाभिव्यक्तः श्रोत्रग्राह्यः । शब्दानां चिराचिरोपलब्धिकराल्पत्वमहत्त्ववान् वैकृतध्वनिरेवाल्पत्वादिना लक्ष्यते ॥ **महत्त्वं** चिरकालत्वम् ॥ वैकृतध्वनिस्फोटयोः प्रमाणमाह—**उभयं तदिति** । तदुक्तं हरिणा—

**वर्णस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते ।**

**ग्रहणे** तत्तत्कालकत्वेन ग्रहणे ।

**वृत्तिभेदे निमित्तत्वं वैकृतः प्रतिपद्यते ॥** इति,
**शब्दस्योर्ध्वमभिव्यक्तेर्वृत्तिभेदाय वैकृतः ॥**

इति **च । उभय**मित्यावृत्त्या योजनीयम् । **उभयं** गृह्यत इति शेषः । तेन व्यक्तवाचामुभयम् , अव्यक्तवाचां वर्णधर्मानाक्रान्तध्वनिरेवेत्यर्थः । ध्वनिपदेन प्राकृतवैकृतावुभावपि उच्येते । ग्रहणकर्मीभूतमुभयं तु प्राकृतध्वनिस्फोटरूपम् । वैकृतस्याल्पत्वादि चिराचिरोपलब्ध्यनुमेयमिति बोध्यम् ॥ ७० ॥

**( तत्त्वालोकः )** भाष्ये—**स्फोटस्तावानिति**—एवमित्यादिः । **ध्वनिकृतेति**—किन्त्वित्यादिः ।

प्रदीपे—**एतच्च**—तस्य नित्यत्वञ्च । **शब्दस्य**—व्यङ्ग्यस्य स्फोटस्य । केचित्तु—'ननु गुणे गुणाभावाद्यथाश्रुतमसङ्गतमित्यत आह—**उपकारक इति** ।' इति वदन्ति ॥ **विषयस्य**—उपलभ्यस्य । **अभेद एव**—कालाभेद एव । तु-शब्दार्थमाह—**एवेति** । केषाञ्चिदल्पः, केषाञ्चिच्च महान् लक्ष्यते इति भावः ॥ 'केषाञ्चिदि'त्यादिभाष्ये-आवृत्त्या शेषेण च 'केषाञ्चिदुभयं गृह्यते, उभयन्तत् स्वभावतः सिद्धमि'त्यन्वयमभिप्रेत्य तद्व्याचष्टे—**'उभयमिती'त्यादिना** । प्रमाणमन्तरा सिद्धेरसम्भवादाह—**प्रमाणेनेति** । योगिप्रत्यक्षात्मकप्रमाणेनेत्यर्थः ।

उद्द्योते—व्यक्तिस्फोटस्य पारमार्थिकनित्यत्वाभावादाह-**आकाशादिवदिति** । तन्नित्यत्वस्य तत्र परपशायां साधितत्वात् स्फोटं साधयति—**स एवेति** । ननु सादृश्यमूलकाभेदारोपात्तादृशप्रत्ययभिन्नायाः, वर्णसमुदायात्मकपदस्यैकत्वात्तादृशप्रत्ययस्य चोपपत्तेरलं स्फोटाङ्गीकारेणेत्यत आह—**अन्यत्रेति** । मञ्जूषायामित्यर्थः । **ध्वनिरपीति**—अव्यक्तकत्वादिमानिति शेषः । **एव**—एवेति । **तमेव**—अकारमेव । **इह**—ह्रस्वादिषु । **एवेन**—वर्णगतताया व्यवच्छेदः । तयोर्वैषम्ये बीजमाह—**अत्रेदमिति । तत्र**—तयोर्मध्ये । **वैकृतध्वनेरि** यस्य **कार्यमि**त्यनेनान्वयः । **विजातीयैः**—वर्णरूपैः । वस्तुतो भेदाभावादाह—**भिन्न इवेति** । अत एवाह—**ध्वनिगतभेदेनेति** । वर्णरूपध्वनिगतभेदेनेत्यर्थः । नन्विदं कैयटोक्त्या विरुद्धमित्यत आह—**कैयटे इति** । कैयटोक्ते इत्यर्थः । **वर्णैः**—वर्णरूपैः । नन्वेवमपीदं 'ध्वनिकृता वृद्धिरि'ति वक्ष्यमाणभाष्येण विरुद्धमेवेत्यत आह—**ध्वनिकृतेति । वर्णोपरागेति**—यत इत्यादिः । **अत एव**—तथैव स्फोटस्य भानादेव । **अस्य**—तज्जनकयत्नस्य । **अयन्तु**—तथैव तस्य भानोत्तरं जायमानो ध्वनिस्तु । **तत्त्वञ्च**—वैकृतत्वञ्च । **वर्णेति**—वर्णैरित्यर्थः । नन्वेवं वैकृतध्वनिर्निष्फल एवेत्यत आह—**अयन्त्विति** । स्फोटस्येति शेषः । ननु सकृत्स्फोटोपलब्धिजननेनैव वैकृतध्वनेर्नष्टत्वात्कथन्तेन पुनः पुनस्तदुपलब्धिरित्यत आह—**पौनःपुन्यञ्चेति** ।

नन्वेवमपि तदवच्छिन्नत्वेन तज्ज्ञाने भेद एवेत्यत आह—**एतदिति** । वैकृतध्वनीत्यर्थः । ननु प्रत्यभिज्ञानमप्येवमेव स्यादित्यत आह—**आरोपे सतीति । कर्मणीति**—तथा च-भेर्याघात इत्यत्रेत्यादिः । यथाश्रुतासङ्गतेराह—**तं शब्दमिति । इहेति** विवृणोति—**द्रुतेति** । एवमग्रेऽपि । **तत्र**—दृष्टान्ते । नन्वेवं प्राकृत एव ध्वनिर्गृह्यते, न तु वैकृत इत्यनिष्टापत्तिरित्यत आह—**वकृतध्वनेरपीति** । प्रदीपतत्त्वालोके 'केषाञ्चिदि'त्यादिभाष्यस्योक्तरीत्योक्तयोजनामभिप्रेत्याह—**तदुभयमिति** । ध्वनिस्फोटोभयमित्यर्थः । **तत्र**—तदुभयसिद्धौ । **प्रमाणान्तरेति**—योगिप्रत्यक्षात्मकप्रमाणातिरिक्तप्रमाणेत्यर्थः । **इदमेव**—योगिप्रत्यक्षमेव । 'दार्ष्टान्तिके'ति कैयटोक्तं खण्डयति—**वस्तुतस्त्विति** । अस्य 'बोध्यमि'त्यनेनान्वयः । **आदिना** महत्त्वपरिग्रहः । तस्य स्वरूपतो महत्त्वादेरभावादाह—**महत्त्वमिति** । तथा चाल्पत्वम्-अचिरकालत्वमिति भावः । कैयटेन 'तदुभय'पदस्य प्राकृतध्वनिस्फोटपरतया व्याख्यातत्वादाह—**वैकृतध्वनिस्फोटयोरिति** । एवं भाष्यव्याख्याने मानमाह—**तदुक्तमिति । वर्णस्य**—तत्तदभिव्यञ्जकरूपरूषितस्य स्फोटस्य । **ग्रहणे**—अभिव्यक्तौ । **वृत्तिभेदे**—चिराचिरोपलब्धिविशेषे । तदेवाह—**शब्दस्येति** । अत्र-शब्दस्याभिव्यक्तेरूर्ध्वमित्यन्वयः । तत्र तस्योक्तयोजनामुपपादयति—**उभयमित्यादिना** । विनिगमनाविरहादाह—**ध्वनिपदेनेति** । किन्तु प्रकृतोभयपदेन नेमौ ग्राह्यावित्याह—**ग्रहणेति** । ननु वैकृतस्य तादृशाल्पत्वादौ किं मानमित्यत आह—**वैकृतस्येति** ॥



**( ६४ प्रत्याहारसंज्ञासूत्रम् ॥ १।१।९ आ. ११ शं सू० ॥ )**

# आदिरन्त्येन सहेता ॥ १ । १ । ७१ ॥

**( संज्ञिनिरूपणाधिकरणम् )**

**( ५२१ आक्षेपवार्तिकम् ॥ १ ॥ )**

**॥ * ॥ आदिरन्त्येन सहेतेत्यसंप्रत्ययः संज्ञिनोऽनिर्देशात् ॥ * ॥**

**( भाष्यम् )**

आदिरन्त्येन सहेतेति असंप्रत्ययः ॥

किं कारणम् ? ।

संज्ञिनोऽनिर्देशात् । न हि संज्ञिनो निर्दिश्यन्ते ॥

**( प्रदीपः ) आदिरन्त्येन ॥ ७१ ॥ असम्प्रत्यय इति ।** अप्रतिपत्तिरित्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**इति**—इति सूत्रार्थस्य । **किं कारणम्**—कस्मात्कारणात् ।

**( ५२२ न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )**

**॥*॥ सिद्धं त्वादिरिता सह तन्मध्यस्येति वचनात् ॥*॥**

**( भाष्यम् )**

सिद्धमेतत् ॥

कथम् ? ।

आदिरन्त्येन सहेता गृह्यमाणः स्वस्य च रूपस्य ग्राहकस्तन्मध्यानां चेति वक्तव्यम् ॥

( तत्त्वालोकः ) आदिरन्त्येनेति—यत इत्यादिः । **गृह्यमाणः**—उच्चार्यमाणः ।

( ५२३ यथान्यासेनैव समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ संबन्धिशब्दैर्वा तुल्यम् ॥ * ॥

( भाष्यम् )

संबन्धिशब्दैर्वा तुल्यमेतत् । तद्यथा—संबन्धिशब्दाः—मातरि वर्तितव्यम्, पितरि शुश्रूषितव्यमिति । न चोच्यते—स्वस्यां मातरि, स्वस्मिन् पितरीति । संबन्धाच्च गम्यते—या यस्य माता, यो यस्य पितेति । एवमिहाप्यादिरन्त्य इति संबन्धिशब्दावेतौ । तत्र संबन्धादेतद्गन्तव्यम्—यं प्रति य आदिरन्त्य इति च भवति, तस्य ग्रहणं भवति, स्वस्य च रूपस्येति ॥ आदिरन्त्येन सहेता ॥ ७१ ॥

( प्रदीपः ) **सम्बन्धिशब्दैर्वेति** । संज्ञयैवाक्षिप्तः संज्ञीत्यर्थः । आद्यन्तौ च मध्यापेक्षाविति मध्यमानामेव संज्ञित्वम् ॥ **स्वंरूपम्**इत्यनुवर्तनात्स्वस्य रूपस्य च । सहग्रहणादाद्यन्त्यौ समुदितौ संज्ञेती**को यणची**ति समुदायादेव विभक्त्युत्पत्तिर्नादिमात्रात् । स्वंरूपं त्वादेरेव गृह्यते, नान्त्यस्य, तस्याप्राधान्यादिति दध्यत्रेति केवल एव यकार आदेशः प्रवर्तते, न तु णकारसहितः ॥ ७१ ॥

( उद्द्योतः ) आदिरन्त्ये० ॥ ७१ ॥ **संज्ञयैवेति** । संज्ञाबोधकेनान्त्यसमभिव्याहृतेच्छब्दसहितादिशब्देनेत्यर्थः ॥ आक्षेपप्रकारमाह—**आद्यन्तौ चेति** । यद्यप्यादिशब्दः परमात्रमपेक्षते, अन्त्यश्च पूर्वमात्रम्, तथापि सह प्रयुज्यमानौ मध्यापेक्षाविति भावः ॥ **मध्यमानामेवे**त्येवकारः सौलभ्यद्योतकः ॥ **स्वंरूपमित्यनुवर्तनादिति** ॥ अन्ये तु—आद्यन्तशब्दाभ्यामवयववाचकाभ्यामवयवी समुदाय आक्षिप्त इति संबन्धित्वेनाविशेषादादेरपि ग्रहणम् । अन्त्यस्य तु न, **'आचारादप्रधानत्वाल्लोपश्च बलवत्तरः'** इत्युक्तेरन्यानुबन्धानामिवास्यापि संज्ञाकार्याभावात् । स्वशब्देन विशेषणीभूतान्त्यमात्रपरामर्शासम्भवेऽपि विशिष्टपरामर्शे बाधकाभावेन अप्रधानतृतीयानिर्देशादित्यनया युक्त्या न निर्वाहः । एतत्फलितार्थकथनमेव भाष्ये—**स्वस्य च रूपस्ये**ति । तेन चाद्यन्तशब्दौ पूर्वपरशब्दवन्नावधिमच्छब्दौ, किंत्ववयवशब्दाविति सूचयति इत्याहुः ॥ **समुदायादेवेति** । तस्यैव संज्ञिनोऽर्थेनार्थवत्तया प्रातिपदिकत्वादिति भावः ॥ ननु **स्वंरूप**मित्यस्यानुवृत्तावन्त्यसहितादेर्विशिष्टस्य यणिति रूपस्य संज्ञित्वे दध्यत्रेत्यादौ णकारसहितः स्यादत आह—**स्वंरूपं त्विति** ॥ अत्र वदन्ति—समुदितस्य संज्ञात्वे 'प्रत्याहारेष्वाद्या वाचकास्तत्र ग्रहणकशास्त्रं सावकाशमिति' ग्रहणकसूत्रस्थभाष्यविरोधः । टिघुभाद्येकदेशवदस्यापि ग्राहकत्वप्रसक्त्यभावात् । तस्मादाद्यवर्ण एव वाचकता, अन्त्यस्तु तात्पर्यग्राहकः । सहग्रहणात्तु विशिष्टे तदारोपाद्विशिष्टाद्विभक्त्युत्पत्तिरिति द्योतकान्तरवैषम्यमिति ॥ ७१ ॥

( तत्त्वालोकः ) भाष्ये—**य आदिः**—य आदिरिति ।
प्रदीपे—**न**—न तु । एवमग्रेऽपि ।
उद्द्योते—संज्ञयाऽऽक्षेपासम्भवादाह-**संज्ञाबोधकेनेति** । **अन्येति**—अन्त्यशब्देत्यर्थः । एवमग्रेऽपि । द्विवचनान्तैतदुक्तिफलमाह—**यद्यपीति** । **मानाविति**—ताविति शेषः । व्यवच्छेद्याभावादाह—**सौलभ्येति** । कैयटोक्तं खण्डयन् सिद्धान्तमाह—**अन्ये त्विति** । **अवयवी**—आद्यन्तघटितः । नन्वेवमन्त्यस्यापि ग्रहणं स्यादित्यत आह—**अन्त्यस्य तु नेति** । **अन्येति**—मध्येत्यर्थः । **अस्यापि**—अन्त्यस्यापि । विपक्षे बाधकमप्याह—**स्वशब्देनेति** । नन्वेवं भाष्यविरोध इत्यत आह—**एतदिति** । **एवे**नानुवृत्तिव्यवच्छेदः । ननु स्पष्टमेव तथा कुतो नोक्तमित्यत आह—**तेन चेति** । तेन च तयोः सम्बन्धिशब्दत्वप्रतिपादनादित्याशयः । भाष्यकार इति शेषः । कृष्णायुक्तमाह—**अत्र वदन्तीति** ।



( ६५ संज्ञासूत्रम् ॥ १ । १ । ९ आ० १२ शं सू० ॥ )

# येन विधिस्तदन्तस्य ॥ १ । १ । ७२ ॥

( तदन्तविधिविषयनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

इह कस्मान्न भवति—'इको यणचि' दध्यत्र मध्वत्र? ॥

( प्रदीपः ) **येन ॥ ७२ ॥ इह कस्मादिति** । शब्दानुशासनप्रस्तावाच्छब्दरूपमिका विशेष्यत इत्यस्ति तदन्तस्य प्रसङ्गः ॥

( उद्द्योतः ) **येन विधिः ॥ ७२ ॥** ननु **येनेति** करणे तृतीया, न कर्तरि, षष्ठ्यापत्तेः । शास्त्रे करणं च विशेषणमेवेत्यग्रे भाष्यकृद्वक्ष्यति । **तदन्तस्येति** बहुव्रीहिः । एवञ्चे**को यणि**त्यादौ विशेष्याभावात् कथमतिव्याप्तिरत आह-**शब्दानुशासनेति** । वस्तुतोऽस्यार्थस्य भाष्येऽग्रे वक्ष्यमाणत्वान्नैतं पूर्वपक्षी जानातीति विशेष्यप्रदर्शनं व्यर्थम् ॥ यत्संबन्धी विधिः स तदन्तस्य संज्ञेति सूत्रार्थं मत्वा शङ्का । अत एवाग्रे विधेयेनापि तदन्तविधिं वक्ष्यति । **विधिरि**ति च भावे किः । सौत्रत्वाच्च तृतीयेत्याहुः ॥

( तत्त्वालोकः ) उद्द्योते-**षष्ठ्यापत्तेः**-कृद्योगलक्षणायाः षष्ठ्या आपत्तेः । कैयटोक्तं खण्डयति—**वस्तुत इति** । नन्वेवं कथं शङ्केत्यत आह—**यत्सम्बन्धीति** । तथा चेत्यादिः । **तृतीया**—कर्तरि तृतीया । उद्देश्यस्येक इत्यादेर्वैवक्षिकं विधानकर्तृत्वमिति भावः ॥

( समाधानभाष्यम् )

अस्तु । अलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य भविष्यति ॥

( तत्त्वालोकः ) नन्वेवं कथमिष्टसिद्धिरित्यत आह—**अलोऽन्त्यस्येति** ।

( अनिष्टापत्तिभाष्यम् )

नैवं शक्यम् । ये अनेकाल आदेशास्तेषु दोषः स्याद्—'एचोऽयवायावः' इति ॥

( प्रदीपः ) **येऽनेकाल इति** । ततश्च चयनजयनादिष्वयनमिति प्राप्नोति । प्रकरणादिवशाच्चाक्षादिष्विवार्थविशेषावगतिः स्यात् । **निर्दिश्यमानस्यादेशा** इत्यनाश्रितं परिहारान्तरविवक्षया ॥

( उद्द्योतः ) नन्वयनमित्यादितश्चयनमित्याद्यर्थावबोधात्, अर्थाभिधानयोग्यस्यैवादेशत्वात्कथमत्रादेशोऽत आह—**प्रकरणेति** ।

( तत्त्वालोकः ) भाष्ये—**शक्यमिति**—वक्तुमित्यादिः । यत्र-

स्तथा सतीति शेषः । **आदेशाः—**अयाद्यादेशाः । **दोषः—**एजन्तस्यायाद्यादेशापत्तिरूपो दोषः ।

प्रदीपे—ननु निर्दिश्यमानपरिभाषाऽऽश्रयणान्न दोष इत्यत आह—**निर्दिश्येति ।**

**( अनिष्टापत्तिनिराकरणभाष्यम् )**

**नैष दोषः। यथैव प्रकृतितस्तदन्तविधिर्भवति, एवमादेशतोऽपि भविष्यति । तत्रैजन्तस्यायाद्यन्ता आदेशा भविष्यन्ति ?**

**( उद्द्योतः )** भाष्ये—**यथैवेति ।** एचा तदन्तविधावयादेः कार्यत्वम्, अयादेस्तु तदन्तविधौ साधुत्वस्यायादिना बोध्यमानतया कार्यत्वमिति विवेकः ॥

**( तत्त्वालोकः )** भाष्ये—**यथैवेति—**यत इत्यादिः । **एवम्—**एवमेव । **तत्र—**तथा सति ।

उद्द्योते—नन्वेच्सम्बन्धिनोऽयादिविधेः सत्त्वादेचा तदन्तविधिसम्भवेऽपि अयादिसम्बन्धिनः किञ्चिद्विधानस्यासत्त्वादयादिना तदन्तविधेरसम्भवात्कथं भाष्यस्य सङ्गतिरित्यत आह—**एचेति ।**

**( आक्षेपभाष्यम् )**

**यदि चैवं क्वचिद्द्वैरूप्यं तत्र दोषः स्याद्—ब्रह्मेन्द्रः ब्रह्मोदकम् ।**

**( प्रदीपः ) यदि चैवमिति ।** आद्गुण इत्यादौ । अत्र ह्यादित्वकारान्तो गृह्यते । अचीति चाजादिः । तेन खट्वेन्द्र इत्यादावर्णान्तस्य समुदायस्याजादेश्च गुणप्रसङ्गाद्द्वैरूप्यप्रसङ्गः । षष्ठ्यनिर्देशाच्च **निर्दिश्यमानस्ये**त्यपि नास्ति ॥

**( उद्द्योतः ) अजादिरिति । यस्मिन्विधिरि**ति परिभाषणादिति भावः ॥ **षष्ठ्यनिर्देशादिति । पूर्वपरयो**रिति षष्ठी तु साधारणीति भावः ॥ तदादितदन्तविध्युपस्थितिसामर्थ्याच्च तदप्रवृत्तिर्बोध्या ॥ अत **एवालोऽन्त्यस्ये**त्यादेरप्यप्रवृत्तिरित्याहुः ॥

**( तत्त्वालोकः )** उद्द्योते—स्वयं युक्त्यन्तरेणापि निर्दिश्यमानपरिभाषाया अप्रवृत्तिमाह—**तदादीति ।**

**( आक्षेपान्तरभाष्यम् )**

**अपि चान्तरङ्गबहिरङ्गे न प्रकल्पेयाताम् ॥**

**तत्र को दोषः ? ।**

**स्योनः, स्योना । अन्तरङ्गलक्षणस्य यणादेशस्य बहिरङ्गलक्षणो गुणो बाधकः प्रसज्येत । ऊनशब्दमाश्रित्य यणादेशो, नशब्दमाश्रित्य गुणः ॥**

**( प्रदीपः ) स्योन इति ।** सिवेर्बाहुलकादौणादिके नप्रत्यये गुणो वलोपः ऊठिति कार्यत्रयप्रसङ्गः । तत्रापवादत्वादूठा वलोपो बाध्यते, गुणस्त्वन्तरङ्गत्वाद्बाध्यते । गुणो ह्यङ्गसंबन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति, ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते गुणश्च प्राप्नोति यणादेशश्च । तत्र वर्णमात्रापेक्षत्वाद्यणादेशोऽन्तरङ्गः प्रवर्तते । नानाश्रयत्वाद्वार्णादाङ्गं बलीय इत्येतन्नास्ति । यत्रैकाश्रये वार्णाङ्गे यथा कार इति ह्यन्याश्रये यणवृद्धी तत्रैवास्य प्रवृत्तिः । यदि च **इको यणची**त्यत्र तदन्ततदादिविधी स्यातां तदा यणादेशस्यान्तरङ्गत्वाभावात् परत्वाद्गुणादेशः स्यात् ॥ **अन्तरङ्गलक्षणस्येति ।** असति तदन्ततदादिविधित्वे योऽन्तरङ्गस्तस्येत्यर्थः ॥ एवं बहिरङ्गलक्षणो गुण इति व्याख्येयम् ॥

**( उद्द्योतः )** भाष्ये—**अन्तरङ्गबहिरङ्गे इति ।** वर्णमात्राश्रयत्वेन वार्णस्यान्तरङ्गत्वमिष्यते तदपि चेत्समुदायस्य, न कोऽपि विशेषः स्यादिति भावः ॥ **अन्तरङ्गलक्षणस्ये**त्यस्य तत्त्वाभिमतस्येत्यर्थः ॥ **बाधक** इत्यस्य—तव मते उभयोः समत्वेन परत्वादिति शेषः ॥ **गुणः । पुगन्तेत्यनेन ॥ गुणो हीति ।** इकारस्येति शेषः ॥ गुणः पञ्चकाश्रयः, ऊठ् तु चतुष्काश्रय इति विवेकः ॥ **नानेति ।** अचि यण्, प्रत्यये गुण इति भावः ॥ इदं चिन्त्यमियायेत्याद्यसिद्धेः, ज्ञापकासंभवाच्च ॥ केचित्त्वत्रापि तदादितदन्तविधावस्य वार्णत्वाभावात्तदप्रवृत्तिः । सा वक्तुं चाशक्या वार्णाप्रसिद्धेरिति भाष्याशयः ॥ यद्वा तदप्रवृत्तिरनित्यत्वादुभयसंमतेति भाष्याशय इत्याहुः । व्याहृतिं निराकरोति—**असतीति ।** सति तु तस्मिन्नान्तरङ्गत्वमिति भावः ॥ इदं तु बोध्यम्—एवमपीगन्तशब्दाजादिशब्दमात्रापेक्षत्वं यणः, गुणस्य तूक्तरीत्या पदार्थपञ्चकापेक्षत्वमिति कथं न बहिरङ्गत्वम् । तस्मात्संज्ञापेक्षं न बहिरङ्गम् । गुणादूठ् तु नित्यः । सिद्धान्ते ऊठि कृते यणा बाधाद्गुणो न नित्यः । इदानीं तदसिद्धिरपि दोष इति भाष्याशय इति ॥ **एवमिति ।** सति तदादितदन्तविधित्वे यणा तुल्यनिमित्त इति न स बहिरङ्ग इति भावः ॥ भाष्ये-**ऊनशब्दमाश्रित्ये**त्यादिना यणो बहिरङ्गत्वं गुणस्यान्तरङ्गत्वं दर्श्यते । एवं च **परत्वाद् गुणः स्या**दिति कैयटश्चिन्त्यः । अनेन हि भाष्येण परिभाषायामङ्गशब्दो निमित्तपरो, न तु स्थान्यादिपरोऽपीति सूचयति । यण्निमित्तोनशब्दावयवत्वेन नशब्दस्य ततो बहिष्ट्वाभावः । गुणनिमित्तनशब्दादूनशब्दस्य बहिर्भूतोकारघटितत्वाद्यणो बहिरङ्गत्वमिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**तत्र—**तथा सति । **बहिरङ्गलक्षणः—**बहिरङ्गलक्षणत्वेनाभिमतः ।

प्रदीपे—**आश्रयतीति—**इति बह्वपेक्षत्वाद् बहिरङ्ग इति शेषः । **तत्र कृते—**ऊठि कृते । **तत्रेति—**तयोर्मध्ये इत्यर्थः । किन्त्वित्यादिः । **यणादेशः—**यणादेश एव । ननु वार्णपरिभाषया बह्वपेक्षत्वाद् बहिरङ्गोऽपि गुण एव प्रवर्त्ततेत्यत आह—**नानेति ।** गुणस्येत्यादिः । **यत्रेति—**यत इत्यादिः । **अस्य—**'वार्णादाङ्गं बलीयः' इत्यस्य ।

उद्द्योते—**वार्णस्य—**यणः । **तदपि—**वार्णमपि । **न कोऽपीति—**तर्हि तत्र गुणादित्यादिः । अत्र पक्षे यणो वर्णमात्राश्रयत्वाभावेनान्तरङ्गत्वाभावादाह—**तत्त्वेति ।** अन्तरङ्गलक्षणत्वेत्यर्थः । कैयटोक्तरीत्याऽऽह—**परत्वादिति । ज्ञापकेति—**वार्णपरिभाषायाः 'अभ्यासस्यासवर्णे' इतीत्यादिः । नन्वेवं भाष्यस्य कथं सङ्गतिरित्यत आह—**केचित्त्विति । अत्रापि—**'इको यणची'त्यादावपि । **अस्य—**यणः । **तदिति—**वार्णपरिभाषेत्यर्थः । एवमग्रेऽपि । सिद्धान्तरीत्याऽऽह—**यद्वेति । तस्मिन्—**तदन्ततदादिविधित्वे । कैयटोक्तं खण्डयन् प्रकारान्तरेण भाष्यं योजयति—**इदन्त्विति । एवमपि—**तदन्ततदादिविधित्वे सत्यपि । नन्वेवं कथं गुणं बाधित्वा प्रथममूठ् स्यादित्यत आह—**गुणादिति ।** इदमपि सिद्धान्ते एव, न त्विदानीमित्याह—**सिद्धान्ते इति । तदसिद्धिः—**प्रथममूठोऽसिद्धिः । **सः—**गुणः । **परिभाषायाम्—**अन्तरङ्गपरिभाषायाम् । **आदिना—**आगम्यवयव्यादिसंग्रहः । **ततः—**यण्निमित्तोनशब्दात् । **यण इति—**तन्निमित्तकस्येत्यादिः ।

**( आक्षेपान्तरभाष्यम् )**

**अल्विधिश्च न प्रकल्पेत—द्यौः पन्थाः स इति ॥**

( प्रदीपः ) अल्विधिश्चेति । अलोऽन्त्यस्येत्यत्रापि तदन्तविधिसद्भावादन्त्यालन्तस्य समुदायस्य कार्येण भाव्यमिति पौः पन्था इत्यत्रालोऽन्त्यस्यादेशो न प्राप्नोतीत्यर्थः ॥ तत्र कदाचित्पथिन्नित्यस्याकारः स्यात्, कदाचित् थिन्नित्यस्य । अनेकाल् शित्सर्वस्येत्येतत् सर्वस्यैवेति नियमार्थं स्यात् ॥

( उद्द्योतः ) भाष्ये—अल्विधिश्चेति । स्थानिवदित्यत्र अलां जायमानो विधिरल्विधिरित्यर्थः ॥ अलोऽन्त्यस्यादेशो नेति । नियमेनेति शेषः ॥ थिन्नित्यस्येति । कदाचिदित्यस्येत्यपि बोध्यम् ॥ सर्वादेशस्य स्थानिवत्त्वात्सुलोपः स्यादिति भावः ॥ नन्वेवमनेकाल्शिदिति व्यर्थं, कदाचिदेकाल्त्वस्यापि सर्वादेशत्वसिद्धेरत आह—अनेकालिति । सर्वस्यैवेति । षष्ठीनिर्दिष्टसर्वस्यैवेत्यर्थः ॥

( तत्त्वालोकः ) प्रदीपे—तत्र—तथा सति ।

उद्द्योते—तस्य पाक्षिकत्वादाह—नियमेनेति । कैयटस्य न्यूनतां निराकरोति—कदाचिदिति । सर्वथेति—तथा चेत्यादिः । अनल्विधाविति निषेधविषयत्वाभावेनेति शेषः । सुलोप इति—पन्था इत्यादाविति भावः । तस्यापि—अनेकालोऽपि ।

## ( न्यासान्तरोपसंहारभाष्यम् )

### तस्मात्—'प्रकृते तदन्तविधिः' इति वक्तव्यम् ॥

( प्रदीपः ) प्रकृत इति । प्रस्तुते । प्रस्तावश्च क्वचित्साक्षात् तदन्तविधिभाजो निर्देशाद् यथेदूदेद्द्विवचनं प्रगृह्यमित्यत्र द्विवचनस्य । क्वचिदधिकाराद् यथैरजित्यत्र धातोः । क्वचिदाक्षेपाद् यथेको झलित्यत्र सना धातोः ॥

( उद्द्योतः ) प्रकृतं नाम पूर्वत्र निर्दिष्टमनुवर्तमानं चेदीदूदेद्द्विवचनमित्यत्र तदन्तविधिर्न स्यादत आह—प्रस्तुत इति । प्रस्तावश्च बुद्धिसंनिधिः ॥ भाष्ये—प्रस्तुत इत्यर्थकं प्रकृते इत्यस्य विशेष्ये इति शेषः ॥ तदन्तविधिभाज इति । तदन्तश्चासौ विधिभाक्चेति कर्मधारयः । तदन्तशब्दे च बहुव्रीहिरिति बोध्यम् ॥ शब्दरूपं विशेष्यमादाय तु अस्य सर्वत्र न प्रवृत्तिरव्यावर्तकत्वादिति भावः ॥

( तत्त्वालोकः ) उद्द्योते—चेदिति—तर्हीति शेषः । अस्य—प्रकृतसूत्रस्य ।

## ( न्यासान्तरनिराकरणभाष्यम् )

**न वक्तव्यम् । येनेति करण एषा तृतीया । अन्येन चान्यस्य विधिर्भवति । तद्यथा—देवदत्तस्य समाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते । तथा—संग्रामं हस्त्यश्वरथपदातिभिः । एवमिहाप्यचा धातोर्यतं विधत्ते । अकारेण प्रातिपदिकस्य इवं विधत्ते ॥**

( प्रदीपः ) करण एषेति । विधिशब्दः कर्मसाधनः । येन करणेन कार्यं विधीयते स शब्दस्तदन्तस्य संज्ञेत्यर्थः । तेन विशेषणेन विशेष्यस्य तदन्तविधिर्भवति नान्यथा । इको यणचीत्यादौ च विशेष्यस्यासन्निधानात्तदन्तविधेरभावः ॥ हस्त्यश्वरथपदातिभिरिति । बहुप्रकृतित्वाभावादेकवद्भावाभावः ॥

( उद्द्योतः ) कर्मसाधन इति । भावसाधनत्वेऽपि न बाधकं, प्रसिद्धत्वादेव विधेयं कर्म लभ्यते ॥ स शब्द इति । इह शास्त्रे प्रायः शब्दस्यैव कार्यकरणत्वादिति भावः ॥ तेन विशेषणेनेति । कार्यविधाविति शेषः ॥ विशेषणत्वलाभोऽत्रैवम्—करणस्य व्यापारवत्त्वनियमादन्येषां च व्यापाराभावाद्विशेषणमेवात्र करणशब्देनोच्यते । तस्य चेतरव्यावृत्तिकरणमेव व्यापार इति भावः ॥ तत्र प्रत्यासत्त्या शब्दप्रयोज्योपस्थितिविषयं विशेषणमेव प्रायेण तदन्तग्राहकमितीको यणचीत्यादौ न दोषः ॥ क्वचित्तु सति गमकेऽतादृशं शब्दरूपविशेष्यमादायापि तदन्तविधिरिति भावः ॥ तदप्यन्तरङ्गत्वान्समानाधिकरणविशेषणमेवेति बोध्यम् ॥ भाष्ये—अन्येन चान्यस्येति । अनेन यस्य कार्यं यस्मिन्परतस्तयोरकरणत्वं दर्शितम् । अन्यस्येत्यन्यस्मिन्नित्यस्याप्युपलक्षणम् । समाशो भोजनम् ॥ सेनाङ्गत्वादेकवत्त्वं प्राप्नोतीत्यत आह—बह्विति । बह्वर्थवाचिपूर्वोत्तरपदकत्वाभावाद्द्वन्द्वस्येत्यर्थः ।

( तत्त्वालोकः ) भाष्ये—येनेतीति—यत इत्यादिः । तद्यथेति—लोके इति शेषः । अकारेणेति—तथेत्यादिः ।

प्रदीपे—येन करणेनेति—तथा चेत्यादिः ।

उद्द्योते—प्रसिद्धत्वादेवेति—यत इत्यादिः । तस्य च—विशेषणस्य च । तत्र—तथा सति । 'प्रायेणे'त्युक्तिं सफलयति—क्वचित्त्विति । अतादृशं—शब्दप्रयोज्योपस्थितिविषयभिन्नम् । तदुपपत्त्यर्थमेवाह-अन्यस्येत्यन्येति । सेनाङ्गत्वादिति-नन्वित्यादिः ।

---

## ( विशेषणविशेष्यभावयोर्यथेष्टत्वाधिकरणम् )

### ( ५२४ आक्षेपवार्तिकम् ॥ १ ॥ )

# ॥ * ॥ येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिप्रसङ्गः ॥ * ॥

## ( भाष्यम् )

**येन विधिस्तदन्तस्येति चेद् ग्रहणोपाधीनां तदन्तोपाधिताप्रसङ्गः । ये ग्रहणोपाधयस्ते तदन्तोपाधयः स्युः ॥**

**तत्र को दोषः ? ।**

**'उतश्च प्रत्ययादसंयोगपूर्वाद्' इति असंयोगपूर्वग्रहणमुकारान्तविशेषणं स्यात् ।**

**तत्र को दोषः ? ।**

**असंयोगपूर्वग्रहणेन इहैव पर्युदासः स्यात्—अश्नुहि, तक्ष्णुहीति । इह न स्याद्—आप्नुहि, शक्नुहीति ॥**

**तथा 'उदोष्ठ्यपूर्वस्य' इति ओष्ठ्यपूर्वग्रहणमृकारान्तविशेषणं स्यात् ॥**

**तत्र को दोषः ? ।**

**ओष्ठ्यपूर्वग्रहणेन इह प्रसज्येत—संकीर्णम्, संगीर्णमिति । इह च न स्याद्—निपूर्ताः पिण्डा इति ॥**

( प्रदीपः ) ग्रहणोपाधीनामिति । गृह्यत उच्चार्यत इति ग्रहणं, तस्य ये उपाधय इष्यन्ते ते तदन्तस्य संज्ञिनः प्राप्नुवन्ति । संज्ञा हि संज्ञिप्रत्यायने विशेषणभावमापन्ना कथमात्मनो विशेषणसंबन्धमनुभवेत् ॥ संकीर्णमिति । ओष्ठ्यः पूर्वो यस्माद् ऋकारान्ताद्धातोस्तस्योत्त्वमित्येव सूत्रार्थः स्यात् । तत्र च सूत्रार्थे धात्ववयवत्वमोष्ठ्यस्याश्रयितुं न युज्यते, अवयवित्वावयवित्वयोरेकस्य विरोधात् ॥

( उद्द्योतः ) तस्य गृह्यमाणस्य ॥ उपाधय इति । विशेषणा-

नीत्यर्थः ॥ **प्राप्नुवन्ति ।** उपाधय इत्यनुकर्षः ॥ वार्तिके **तदन्तोपाधी**ति भावप्रधानो निर्देश इति बोध्यम् ॥ तदन्तसंज्ञायामप्युकारस्यास्तु विशेषणेन संबन्धो विरोधाभावादत आह—**संज्ञा हीति ॥ विशेषणभावम् ।** गुणभावम् ॥ यद्वा—संज्ञिप्रत्यायने तद्बोध सति विशेषणत्वमापन्नेत्यर्थः । **आत्मनेति** पाठे स्वयमित्यर्थः । आत्मनीत्यर्थो वा । **आत्मन** इति पाठे तु सम्यगेव । **गुणानां च परार्थत्वात्पदार्थैकदेशत्वाच्चे**ति न्यायादिति भावः ॥ **अवधित्वेति ।** अवधित्वं **च** तदनारम्भकत्वे सति पञ्चम्यन्तपदवाच्यत्वरूपं पूर्वादियोगे । अवयवत्वं च तदारम्भकत्वमिति ते एकं प्रत्येकस्य न संभवत इत्यर्थः । ओष्ठ्यः पूर्वो यस्मादिति विग्रहे एष दोषः । षष्ठ्यर्थे बहुव्रीहौ तु यद्यपि पूर्वशब्दस्य प्रथमावयववाचित्वाद्धात्ववयवत्वमोष्ठ्यस्य लभ्यत इति नायं दोषस्तथापि सुस्वूर्षतीत्यादौ दोषो बोध्यः ॥ एव**मुतश्चेति** सूत्रे पूर्वशब्दस्यावयववाचित्वे प्रत्ययविशेषणत्वासंभवः । संयोगपूर्वकोकारान्तप्रत्ययाभावेनाव्यावर्तकतयाऽसंयोगपूर्वादिति निषेधवैयर्थ्यापत्तेः । न चाङ्गविशेषणत्वम् । क्ष्णु इत्याद्यसिद्धेः ॥ अतो व्यवस्थावाची पूर्वशब्दः श्रूयमाणप्रत्ययविशेषणम् । तदुक्तं भाष्ये—**पूर्वग्रहणमुकारान्तविशेषण**मिति । **न** चासंयोगादिति वक्तव्ये पूर्वग्रहणाद्विशेषणस्याप्युकारस्य विशेषणमिति **न** दोष इति वाच्यम् । वाच्यवृत्त्याऽलाभात् । किं च व्यवहिते क्षिणु इत्यादावपि निषेधार्थं पूर्वग्रहणं स्यादिति भावः ॥ भाष्ये **निपूर्ता** इत्यत्र **न ध्याख्येति** नत्वनिषेधः ॥

**( तत्त्वालोकः )** भाष्ये—**ग्रहणोपाधीनामिति**—उच्चार्यमाणनिष्ठविशेष्यतानिरूपितविशेषणताश्रयाणामित्यर्थः । तर्हीत्यादिः । **तदन्तोपाधितेति**—तदन्तनिष्ठविशेष्यतानिरूपितविशेषणतेत्यर्थः । **तत्र**—तथा सति । एवमग्रेऽपि । **असंयोगपूर्वग्रहणमिति**—'येन विधिस्तदन्तस्ये'ति-उकारान्तादिति तदन्तविधौ उकारविशेषणमित्यादिः । एवमग्रेऽपि । **अचणुहीति**—उकारान्तप्रत्ययस्य संयोगपूर्वकत्वादिति भावः । **इह—इह** तु । तस्य तत्त्वाभावादिति भावः । **प्रसज्येतेति**—ऋकारान्तधातोः संसम्बन्धिमकारपूर्वकत्वेन ओष्ठ्यपूर्वकत्वादिति भावः । **निपूर्त्ता इति**—तस्य ओष्ठ्यपूर्वकत्वाभावादिति भावः ।

प्रदीपे—**सूत्रेति**—'उदोष्ठ्यपूर्वस्ये ति' सूत्रेत्यर्थः ।

उद्द्योते—**तदन्तसंज्ञायामपीति**—नन्वित्यादिः । **न्यायादिति**—न्यायाभ्यामित्यर्थः । जातावेकवचनसत्त्वात् ॥ **तदिति**—अवयवीत्यर्थः । एवमग्रेऽपि । **ते**—अवधित्वावयवित्वे । **षष्ठ्यर्थे बहुव्रीहौ तु**—ओष्ठ्यः पूर्वो यस्येति विग्रहे तु । **न चेति**—तस्येति शेषः । **क्ष्णुविति**—इदं तनाद्यन्तर्गतस्य 'क्ष्णु हिंसायामि'त्यस्य रूपम् । यदि 'उतश्च प्रत्ययादसंयोगादि'त्येतावदेव सूत्रं क्रियेत, तर्हि-असंयोगात्परो य उकारान्त इत्याद्यर्थः स्यात् । तथा च—क्षिणु इत्यत्रेकारेण व्यवधानादुकारान्तस्य संयोगात्परत्वाभावेन निषेधो नोपपद्येत, व्यवहिताव्यवहितसाधारणपूर्वग्रहणे तु तस्य संयोगपूर्वकत्वात्स उपपद्यते इत्याशयेनाह—**क्षिण्विति ।** इदं स्वाद्यन्तर्गतस्य '''क्षि''' हिंसायामि'त्यस्य रूपम् ।

( ५२५ समाधानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात् ॥ * ॥

( भाष्यम् )

**सिद्धमेतत् ॥**

**कथम् ? ।**

**यथेष्टं विशेषणविशेष्ययोर्योगो भवति । यावता यथेष्टम् । इह तावद्—'उतश्च प्रत्ययादसंयोगपूर्वाद्' इति नासंयोगपूर्वग्रहणेन उकारान्तं विशेष्यते ॥**

**किं तर्हि ? ।**

**उकार एव विशेष्यते—उकारो योऽसंयोगपूर्वस्तदन्तात्प्रत्ययादिति ॥**

**तथा—'उदोष्ठ्यपूर्वस्य' इति नौष्ठ्यपूर्वग्रहणेन ऋकारान्तं विशेष्यते ॥**

**किं तर्हि ? ।**

**ऋकार एव विशेष्यते—ऋकारो य ओष्ठ्यपूर्वस्तदन्तस्य धातोरिति ॥**

**( प्रदीपः ) सिद्धं त्विति ।** वृद्ध्यादिसंज्ञा गुणप्रधानभावानपेक्षा एव प्रदेशेषु संज्ञिनं प्रत्याययन्ति । इयं तु संज्ञा गुणप्रधानभावापेक्षत्वात्कार्यकाला । तत्रो**तश्च प्रत्यया**दित्यादौ विशेषणसंबन्धमनुभूय विशेष्येण संबन्धमुकारादिरनुभवतीति यथोक्तदोषाभावः ॥

**( उद्द्योतः )** विशेषणविशेष्यभावे कामचारेऽपि संज्ञासूत्रस्य प्रबलत्वात्पूर्वं तदन्तविधिरेव स्यादत आह—**वृद्ध्यादीति ॥** एवं च विशेषणत्वज्ञानसापेक्षतयाऽवान्तरवाक्यार्थबोधोत्तरमेव प्रवृत्त्या बहिरङ्गत्वादस्य पूर्वमुकारादीनामेव तद्विशेषणमिति भावः ॥ **गुणप्रधानभावानपेक्षा इति ।** एवं च तत्र वाक्यभेद एवेति भावः ॥ **इयं त्विति ।** तदपेक्षत्वाद् विधिवाक्यैकवाक्यतापन्नैवेत्यर्थः ॥ यदुक्तम्- **संज्ञा हीति,** तत्राह—**तत्रेति । गुणः कृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवती**ति न्यायादिति भावः ॥ भाष्ये—**यथेष्टमिति ।** विशिष्टे वैशिष्ट्यम्, विशिष्टस्य वैशिष्ट्यम्, विशेष्ये विशेषणं तत्र च विशेषणान्तरम्, एकत्र द्वयमिति योगेषु यथेष्टमित्यर्थः ॥ एवं च व्याख्यानात्प्रकृते विशिष्टस्य वैशिष्ट्यमिति रीत्यैव बोधो न तु विशेष्ये विशेषणमित्यादिरीत्येति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**यथेष्टमिति**—यत इत्यादिः । **यथेष्टमिति**—यावतेति शेषः ।

प्रदीपे—**तत्र**—तथा सति ।

उद्द्योते—**विशेषणविशेष्येति**—नन्वित्यादिः । **प्रबलत्वादिति**-विधिसूत्रादिति भावः । **एवञ्च**—गुणप्रधानभावापेक्षत्वे च । **अवान्तरेति**—विधिसूत्रस्येति भावः । **अस्य**—प्रकृतसूत्रस्य । **तद्**—असंयोगपूर्वत्वादि । **तत्र**—वृद्ध्यादिसंज्ञासु । **योगेषु**—विशिष्टवैशिष्ट्यबुद्धिनियामकसम्बन्धचतुष्टयेषु । **एवञ्च**—तत्र यथेष्टं ग्राह्यत्वे च । **विशिष्टस्य**—असंयोगपूर्वत्वादिविशिष्टस्योकारादेः ।

---

( तदन्तसंज्ञाप्रतिषेधाधिकरणम् )

( ५२६ आक्षेपवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ समासप्रत्ययविधौ प्रतिषेधः ॥ * ॥

( भाष्यम् )

**समासविधौ प्रत्ययविधौ च प्रतिषेधो वक्तव्यः ॥ समासविधौ तावत्—द्वितीया श्रितादिभिः समस्यते—कष्टश्रितः, नरकश्रितः । कष्टं परमश्रित इत्यत्र मा भूत् ॥**

प्रत्ययविधौ—'नडादिभ्यः फक्' नडस्यापत्यं नाडायनः । इह न भवति—सूत्रनडस्यापत्यं सौत्रनाडिः ॥

( प्रदीपः ) **समासेति** । श्रितादिभिः सुबन्तस्य विशेषणे सति प्राप्तस्तदन्तविधिः प्रतिषिध्यते । प्रतिषेधद्वारेण चैतत् प्रदर्श्यते—श्रितादयः प्राधान्येनाश्रयितव्याः, तद्विशेषणत्वेन च—सुपेति ॥ **कष्टं परमश्रित इति** । श्रितान्तमेतत् सुबन्तं न भवतीति संबुध्यन्तमुदाहर्तव्यम्—परमश्रितेति । अत्र प्रत्ययलक्षणेन सुबन्तं भवति, श्रितान्तं च श्रूयते ॥ **सौत्रनाडिरिति** । अनुशतिकादित्वादुभयपदवृद्धिः । नडादीनि प्रातिपदिकेन विशेष्यन्त इति तदन्तविध्यभावः ॥

( उद्द्योतः ) **सुबन्तस्येति** । सुपेत्युपस्थितस्येति शेषः ॥ **तद्विशेषणत्वेनेति** । सुबन्तैः श्रितादिभिरित्यर्थ इति भावः ॥ **श्रितान्तमिति** । विसर्गान्तस्य तदन्तत्वाभावादिति भावः ॥ **संबुद्ध्यन्तमिति** । इदमुपलक्षणम्—कष्टं परमश्रित इत्यादेः ॥ **तदन्तविध्यभाव इति** । नडादीनां विशेष्यत्वात्प्रातिपदिकस्य विशेषणत्वेऽपि तदन्तस्य नडादेरसंभवादिति भावः ॥ अत्र वदन्ति—एवं हि कृष्णश्रितमित्यादेरप्यसिद्धिरिति भाष्यस्य निर्दलत्वापत्तिः ॥ यत्तु सुप्सहितैः श्रितादिभिरिति विवरणकृतः सिद्धान्ताशयवर्णनम् । तन्न, पूर्वकालैकेत्यादौ सुप इति प्रथमान्ते तथार्थासंभवात् । तस्मात् **समर्थ**परिभाषोपस्थितसमर्थपदार्थं प्रति विशेषणतया प्राप्ततदन्तविधेर्निषेधार्थमिति भाष्याशयः ॥ उपस्थितसमर्थपदं च तृतीयतत्तत्पदोत्तरविभक्तिसमानविभक्त्यन्तम् । तस्य च तत्प्रकृतिके लक्षणया सुपेत्यनेनान्वयः । न हि सामर्थ्यं सुबन्तेनैवेति नियमः, कुम्भकार इत्यादौ सुप्प्रागभावेऽपि तदङ्गीकारात् । **परिपूर्णं पद**मिति न्यायस्तु यस्योत्तरत्राकाङ्क्षयान्वयस्तद्विषयो, न तु यत्रान्वयस्तद्विषय इति **कुत्सित** इति सूत्रभाष्यात् स्पष्टमेवोपलभ्यते इति दिक् ॥

( तत्त्वालोकः ) भाष्ये—वार्त्तिके विधिपदस्य 'द्वन्द्वान्ते' इत्यादिन्यायेन प्रत्येकमन्वयादाह—**समासविधाविति** । **प्रतिषेधः**—तदन्तविधिप्रतिषेधः । तत्र तत्प्रतिषेधस्य कथनं सफलयति—**कष्टमिति** । येनेत्यादिः । एवमग्रेऽपि ।

प्रदीपे—**श्रितान्तमिति**—अस्य 'न भवती'त्यनेनान्वयः । **तदन्तेति**—नडादिभ्य इति भावः ।

उद्द्योते—**तदन्तेति**—श्रितान्तेत्यर्थः । कैयटस्य न्यूनतां परिहरति—**इदमिति** । नन्वेवमपि प्रातिपदिकादेव तदन्तविधिः कुतो नेत्यत आह—**नडादीनामिति** । **तदन्तस्य**—प्रातिपदिकान्तस्य । **वदन्तीति**—नारायणादय इति शेषः । **एवं हि**—तत्र श्रितादिभिस्तदन्तविधौ हि । **असिद्धिरिति**—सुबन्तस्य श्रितान्तत्वाभावादिति भावः । **आपत्तिः**—आपत्तिरिति । **तथाऽर्थेति**—सुप्सहितपूर्वेत्याद्यर्थेत्यर्थः । अत्र 'सुपे'त्यस्य साहित्यबोधकतृतीयान्तत्वात्तादृशार्थलाभसम्भवेऽपि तत्र 'सुपः' इति प्रथमान्तस्य तत्त्वाभावात्तादृशार्थलाभो न सम्भवति, किन्तु सुबन्तपूर्वेत्याद्यर्थलाभ एव सम्भवतीति भावः । कैयटानुक्तं भाष्याशयमाह—**तस्मादिति** । तदन्तविधौ हि श्रिताद्यन्तसमर्थप्रकृतिकैरित्याद्यर्थे भाष्योक्तदोष इति भावः । **ननु** तदुपस्थितसमर्थपदस्य तेनासामानाधिकरण्यात्कथं तदन्तविधिप्रसङ्ग इत्यत आह—**उपस्थितेति** । नन्वेवमपि तस्य सुपेत्यनेन कथमन्वय इत्यत आह—**तस्य चेति** । ननु सुपः पूर्वमसामर्थ्यात्कथमिदमित्यत आह—**न हीति** । **तदिति**—सामर्थ्येत्यर्थः । नन्वेवमपि न्यायविरोध इत्यत आह—**परिपूर्णमिति** ।

**( प्रत्याक्षेपभाष्यम् )**

किमविशेषेण ? ॥

**( समाधानभाष्यम् )**

नेत्याह ।

( तत्त्वालोकः ) तटस्थ उत्तरमनुवदति—**नेत्याहेति** । समाधातेति शेषः । एवमग्रेऽपि ।

( ५२७ आक्षेपपरिशेषवार्त्तिकम् ॥ ४ ॥ )

## ॥ * ॥ उगिद्वर्णग्रहणवर्जम् ॥ * ॥

**( भाष्यम् )**

उगिद्ग्रहणं वर्णग्रहणं च वर्जयित्वा ।

उगिद्ग्रहणम्-'उगितश्च' भवती अतिभवती महती अतिमहती ॥

वर्णग्रहणम्—'अत इञ्' दाक्षिः प्लाक्षिः ॥

( प्रदीपः ) **अतिमहतीति** । महान्तमतिक्रान्तेति प्रादिसमासः । तत्र यद्यपि गौरादिषु बृहद् महदिति पठ्येते । तथापि **अनुपसर्जना**धिकारात् तत्र ङीष् न भवतीति उगिल्लक्षणो ङीप् प्रार्थ्यते ॥ अन्ये तु गौरादिष्वेतयोः प्रमादपाठमाहुः । तथा चोक्तम्—**नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यान**मिति । ङीपि सति उदात्तस्य सिद्धत्वात् किं नद्या उदात्तविधानेन ॥ **अत इञिति** । तदन्तविधावसति ञित्करणमुत्तरार्थं स्यात् ॥

( उद्द्योतः ) **तत्र यद्यपीति** । एवं च ङीबभावेऽपि ङीषा सिद्धिरिति भावः ॥ **किं नद्या इति** । सत्यपि पाठे उपसर्जने ङीषप्राप्तौ ङीपि तस्योदात्तत्वाय तच्चारितार्थ्याच्चिन्त्यमिदम् ॥ एवं च तस्यावश्यकत्वे पाठो निष्फल इत्यन्यदिति कश्चित् ॥ ननु **इञो** ञित्त्वाद्वृद्धिस्वराद्यर्थात् तदन्तविधिस्तत्र, न हि अशब्दस्य **यस्येति चे**ति लोपे तेषां संभवोऽस्तीत्यत आह—**उत्तरार्थमिति** । बाहविरित्यादौ स्वरादिसिद्धये इति भावः ॥

( तत्त्वालोकः ) भाष्ये—वार्त्तिके ग्रहणपदस्य 'द्वन्द्वान्ते' इत्यादिन्यायेन प्रत्येकमन्वयादाह—**उगिद्ग्रहणमिति** । एवमग्रेऽपि ।

प्रदीपे—**एतयोः**—बृहन्महतोः । **उत्तरार्थम्**—'बाह्वादिभ्यश्चे'त्युत्तरसूत्रोदाहरणार्थम् ।

उद्द्योते—**एवञ्च**—गौरादिषु बृहन्महतोः पाठे च । **कैयटोक्तं** खण्डयति—**सत्यपीति** । तत्र तयोरिति शेषः । **तदिति**—'नद्यजादी'ति वार्त्तिकेत्यर्थः । **तस्य**—'नद्यजादी'ति वार्त्तिकस्य । **पाठः**—गौरादिषु बृहन्महतोः पाठः । **तेषाम्**—वृद्ध्यादीनाम् ।

**( आक्षेपभाष्यम् )**

अस्ति चेदानीं कश्चित्केवलोऽकारः प्रातिपदिकं, यदर्थो विधिः स्यात् ॥

( तत्त्वालोकः ) ननु केवलाकाररूपप्रातिपदिकाभावेन सूत्रारम्भसामर्थ्यादेव 'अत इञि'त्यत्र तदन्तविध्युपपत्तेः वर्ज्यकोटौ वर्णग्रहणं व्यर्थमित्याशयेनाह—**अस्ति चेति** । **इदानीम्**—तदन्तविध्यभावे । **विधिः**—इञ्विधिः ।

**( समाधानभाष्यम् )**

अस्तीत्याह—अततेर्डः—अः, तस्यापत्यम् 'अत इञ्' इः ॥

( तन्मध्यपतितन्यायाधिकरणम् )

( ५२८ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥*॥ अकच्श्नम्वतः सर्वनामाव्ययधातुविधावुपसंख्यानम् ॥*॥

( भाष्यम् )

अकच्वतः सर्वनामाव्ययविधौ श्नम्वतो धातुविधावुपसंख्यानं कर्तव्यम् ॥

अकच्वतः सर्वनामविधौ—सर्वके विश्वके । अव्ययविधौ—उच्चकैः नीचकैः ॥

श्नम्वतः—भिनत्ति छिनत्ति ॥

किं पुनः कारणं न सिध्यति ? ।

इह—तस्य वा ग्रहणं भवति, तदन्तस्य वा । न चेदं तद्, नापि तदन्तम् ॥

**( प्रदीपः ) सर्वक इति ।** अकचि कृते शीभावो न स्यात् । **उच्चकैरिति ।** तथैवाकचि कृते लुङ्न स्यात् । उच्चकैरधीयानेस्य**व्ययानां प्रतिषेध** इति पराङ्गवद्भावनिषेधो न स्यात् ॥ उच्चकैर्मुखमिति **नाव्ययदिक्शब्देति** मुखस्वरनिषेधो न स्यात्॥ **भिनत्तीति ।** धातोरन्त उदात्तो भवतीति उदात्तत्वं न स्यात् । प्रत्ययस्वरेण तु तत्सिध्यतीत्यभिनोत्रेति **दश्चेति** धातोर्विधीयमानं रुत्वं न स्यादिति वक्तव्यम् ॥ अन्ये त्वाहुः—भिनत्तीत्यत्रागमानुदात्तत्वेन प्रत्ययस्वरस्य बाधितत्वात् सतिशिष्टः स्वरो धातुस्वर एष्टव्यः ॥

**( उद्द्योतः ) अकचीति ।** सर्वं जसिति स्थितेऽन्तरङ्गानपीति न्यायेन शीभावादि बाधित्वाऽकचि **यस्मात्प्रत्ययविधि**रित्युक्ते**रप्रत्यय** इति निषेधाभावे प्रातिपदिकत्वेन सुपो लुकि पुनर्जसि शी न स्यादित्यर्थः ॥ **लुगिति ।** यद्यपि **हल्ङ्याब्भ्य**इति सूत्रेणापि सोर्लोपः सिध्यति, तथापि सर्वविभक्त्युत्पत्तिपक्षे इदम् ॥ **पराङ्गेति ।** तथा चामन्त्रितायुदात्तत्वं स्यात् । **चितः सप्रकृते**रित्यन्तोदात्तश्चेष्यत इति भावः ॥ **अन्ये त्वाहुरिति ।** श्नमो मित्त्वेन **परश्चे**त्यस्य तत्राप्रवृत्तौ तत्संनियोगशिष्टाद्युदात्तत्वाप्रवृत्त्या शेषनिघातेन तस्यानुदात्तत्वप्राप्तिरिति भावः ॥ ननु भिनत्तीत्यादौ **यदागमा** इति न्यायेन न दोष **इति चेन्न ।** अवयवानामवयविग्रहणेन ग्रहणं हि तद्बीजम् । न चात्र तदस्ति । अन्तावयव इत्यंशस्याप्रवृत्त्याऽवयवत्वे मानाभावात् । यस्य विहितस्तदन्तावयव इति तदर्थात् । एवं च नन्दतीत्यपि तदुदाहरणं बोध्यम् ॥ भाष्ये च **श्नम्वत** इत्युपलक्षणं बोध्यमिति कश्चित् ॥

**( तत्त्वालोकः )** भाष्ये—**इह**—सर्वनामाव्ययधातुविधौ । **तस्य**—सर्वादेः । **तदन्तस्य**—सर्वाद्यन्तस्य । **इदं**—सर्वकादि । अकजादेर्मध्ये जातत्वादिति भावः ।

प्रदीपे—**शीभावः**—'जसः शी'ति शीभावः । **लुक्**—'अव्ययादाप्सुपः' इति लुक् ।

उद्द्योते—**अकचीति**—'सर्वक जस्' इत्यस्य प्रातिपदिकत्वसम्पादनद्वारा सुब्लुक्प्रयोजकत्वेन प्राबल्यादिति भावः । **अप्रत्यय इतीति**—यस्मात्प्रत्ययविधिस्तदादितदन्तभिन्नमित्यर्थकेत्यादिः । **प्रातिपदिकत्वेनेति**—'सर्वकजसि'त्यस्येत्यादिः । **लुकि**—'सुपो धातुप्रातिपदिकयोरि'ति लुकि । **तथापीति**—अव्ययादिति शेषः । **शेषनिघातेनेति**—प्राग् भिद्धातोरन्तोदात्तत्वप्रवृत्त्येत्यादिः । **तस्य**—श्नमः । **अत्र**—भिनत्तीत्यादौ । **तद्**—अवयवावयवित्वन् । ननु 'मिदचोऽन्त्यादि'ति सूत्रे पूर्वसूत्रादन्तपदस्यानुवृत्त्या 'अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मिदि'त्यर्थात् श्नमोऽवयवत्वं स्यादित्यत आह—**अन्तेति ।** ननु कुतस्तदंशाप्रवृत्तिरित्यत आह—**यस्येति ।** एवञ्च—मितोऽनवयवत्वात्तदागमन्यायाविषयत्वं च । **तदिति**—उपसंख्यानेत्यर्थः । धातोरन्तोदात्तत्वाप्रवृत्तेरिति भावः ॥ अत एवाह—**भाष्ये चेति ।** **उपलक्षणमिति**—मध्यपतितमिद्वत इति भावः ॥

( ५२९ समाधानवार्तिकम् ॥ ६ ॥ )

## ॥*॥ सिद्धं तु तदन्तान्तवचनात् ॥*॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ॥

तदन्तान्तवचनात् । तदन्तान्तस्येति वक्तव्यम् ॥

किमिदं तदन्तान्तस्येति ? ॥

तस्यान्तस्तदन्तस्तदन्तोऽन्तो यस्य तदिदं तदन्तान्तं तदन्तान्तस्येति ॥

**( प्रदीपः ) सिद्धं त्विति ।** सर्वशब्दस्य योऽन्तोऽकारः सोऽन्तः सर्वकशब्दस्य ॥ **एवमन्यत्रापि योज्यम् ।** तत्र **सर्वनामानी**त्यन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते ॥ अव्ययसंज्ञाक्षिप्तः स्वरादिभिः । धातुसंज्ञाभाजो वाप्रकारा भूवादिभिरिति भावः ॥

**( उद्द्योतः )** ननु **तदन्तान्तस्ये**ति पाठेऽपि विशेष्यासंनिधानात् कथं **सर्वादीनी**त्यादावस्य प्रवृत्तिरत आह—**तत्रेति ।** **अव्यये**त्यस्यान्वर्थेत्यादिः ॥ वस्तुतः शब्दरूपविशेष्यमादाय वाचनिक एवोभयत्रापि तदन्तविधिरिति वक्ष्यते ॥ इदं तु चिन्त्यं, शाब्दसंज्ञिनोऽसत्त्वे हि स्यादस्याक्षेपः, सत्त्वे त्वाक्षेपे आक्षिप्तस्य वा विशेष्यत्वे मानाभावात् । किंचान्वर्थत्वं योगरूढत्वम् , योगरूढस्थले हि योगान्वितरूढ्यर्थस्यैव प्रतीतिर्दृष्टा, न तु तयोः परस्परमुद्देश्यविधेयभाव इति कस्य विशेष्यतया तदन्तविधिः स्यादिति बोध्यम् ॥ **वाप्रकारा इति ।** 'वा'-सदृशा इत्यर्थः । **भूवादय** इति सूत्रे द्वन्द्वैकशेषगर्भो बहुव्रीहिरिति भावः ॥ एवं हि प्रभू पराभू इत्यादीनामपि धातुसंज्ञा स्यादिति अडाद्यव्यवस्थापत्तिरिति चिन्त्यमिदम् ॥ तस्मादयं समाधिरकज्विषय एवेति बोध्यम् ॥ **परजित्यादौ** तु व्यपदेशिवद्भावेनैतन्यासे सिद्धिर्बोध्या ॥

**( तत्त्वालोकः )** भाष्ये—**तदन्तान्तस्येति वक्तव्यमिति**—यतः प्रकृतसूत्रे 'तदन्तस्ये'त्यपहायेत्यादिः ।

प्रदीपे—**तत्र**—प्रकृतसूत्रे 'तदन्तस्ये'त्यस्य स्थाने 'तदन्तान्तस्ये'ति पाठे सति ।

उद्द्योते—**नन्विति**—अत्र 'तदन्तस्ये'त्यपहायेति **शेषः ।** **अस्य**—प्रकृतसूत्रस्य । कैयटोक्तं खण्डयति—**वस्तुत इति ।** **उभयत्रापि**—सर्वनामाव्ययसंज्ञयोरपि । **इदन्तु**—संज्ञिनस्ताभ्यामाक्षेपणन्तु । **शाब्देति**—सर्वाद्यादेरित्यादिः । **अस्य**—संज्ञिनः । कैयटोक्तं पुनर्दूषयति—**एवं हीति ।** अत्र तदन्तविधिस्वीकारे हीत्यर्थः । 'अडादीनां व्यवस्थाऽर्थं, पृथक्त्वेन प्रकल्पनम् । धातूपसर्गयोः शास्त्रे, धातुरेव तु तादृशः ॥' इति सिद्धान्तमनाश्रित्याह—**अव्यवस्थेति ॥**

( तटस्थाक्षेपभाष्यम् )

स तर्हि तथा निर्देशः कर्तव्यः ॥

( तत्त्वालोकः ) सः—प्रकृतयोगः । तथा निर्देशः—'तदन्तस्ये' त्यस्य स्थाने 'तदन्तान्तस्ये'ति निर्देशेन युक्तः ।

( सिद्धान्तिसमाधानभाष्यम् )

न कर्तव्यः । उत्तरपदलोपोऽत्र द्रष्टव्यः । तद्यथा उष्ट्रमुखमिव मुखमस्य उष्ट्रमुखः, खरमुखः । एवमिहापि तदन्तः अन्तो यस्य सोऽयं तदन्तस्तदन्तस्येति ॥

( प्रदीपः ) उत्तरपदलोप इति । वाचनिकोऽत्र लोपो, न तु सामर्थ्याद्गम्यमानार्थस्य निवृत्तिरित्याहुः ॥ अन्ये तु वर्णयन्ति—यथावयवदर्शनाद् गौरित्यवयविविषया बुद्धिरुदेति, तथेहापि सर्वशब्दस्य योऽवयवोऽन्त्यस्तत्रैव सर्वशब्दविषयबुद्ध्युत्पत्त्या तदवयवान्तः सर्वशब्दान्त इति व्यपदिश्यते ॥ अथवाऽवयवे समुदायरूपारोपात् तदन्तता भविष्यति । गौणेनापि ह्यर्थेन शास्त्रव्यवहारो दृश्यते—छत्रपार्श्वायःशूलदण्डाजिनशीतोष्णार्द्धह्रस्वादिषु ॥

( उद्द्योतः ) न तु सामर्थ्यादिति । उष्ट्रमुखवत् तदभावादित्यर्थः ॥ यथावयवेति । अवयवी प्रत्यवयवमवयवान्तरसंनिधौ समवेन इति भावः ॥ नन्वेवमपि भूयोऽवयवसंनिकर्षस्यैवावयविप्रत्यक्षे हेतुत्वादेकावयवदर्शने तद्बुद्ध्यभाव इत्यरुचेराह—अथवेति ॥ ननु मुख्यविशेषणे चरितार्थं सूत्रं कथमारोपिते स्यादत आह—गौणेनापीति । स्वरितत्वगुणयोगाद् यथान्यत्रारोपितार्थकस्य ग्रहणं तथेहापीत्यर्थः । तदेवाह—छत्रेत्यादि । छत्त्रं गुरुच्छिद्रावरणं गौण्योच्यते । तत्रैव हि छात्र इष्यते । एवं पार्श्वशब्दोऽनृजूपाये, अयःशूलशब्दस्तीक्ष्णोपाये, दण्डाजिनो दम्भे, शीतोऽलसे, उष्णः शैघ्र्ये गौणः । तत्रैव पार्श्वकायःशूलिकदाण्डाजिनिकशीतकोष्णकादिप्रयोगेष्टेः । तस्यादित इत्यत्र चार्धह्रस्वशब्दोऽर्धमात्रालाक्षणिक इत्याद्यूह्यम् ॥ आदिनाऽऽधारोऽधिकरणमित्यादिसंग्रहः ॥

( तत्त्वालोकः ) भाष्ये—उत्तरेति—यत इत्यादिः । अत्र—तदन्तस्येत्यत्र ।

प्रदीपे—'शाकपार्थिवादीनामि'ति वचनमभिप्रेत्याह—वाचनिक इति । अत्र—'तदन्तस्ये'त्यत्र । उत्तरपदस्येति भावः । तदन्तता—सर्वशब्दान्तता । ह्रस्वादिषु—ह्रस्वादिष्विति ।

उद्द्योते—यथोष्ट्रमुख इत्यत्र तस्य गम्यमानार्थता, न तथाऽत्रेत्याशयेनाह—उष्ट्रमुखवदिति । तदिति—गम्यमानार्थत्वेत्यर्थः । तदिति—अवयवीत्यर्थः । सूत्रम्—प्रकृतसूत्रम् । दण्डाजिनः—दण्डाजिनशब्दः । एवमग्रेऽपि ।

( ५३० यथान्यासेऽपि समाधानवार्तिकम् ॥ ७ ॥ )

॥*॥ तदेकदेशविज्ञानाद्वा सिद्धम् ॥*॥

( भाष्यम् )

तदेकदेशविज्ञानाद्वा पुनः सिद्धमेतत् । तदेकदेशभूतस्तद्ग्रहणेन गृह्यते ॥ तद्यथा—गङ्गा यमुना देवदत्तेति । अनेका नदी गङ्गां यमुनां च प्रविष्ट गङ्गायमुनाग्रहणेन गृह्यते । तथा—देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते ॥



( प्रदीपः ) तदेकदेशविज्ञानादिति । मध्यपातिनोऽकजादयस्तदेकदेशा इति तत्त्वबुद्धिं न विघ्नन्ति ॥

( उद्द्योतः ) मध्यपातिन इति । यस्याकजादिस्तदेकदेशत्वेनाकजादेर्विज्ञानादिति वार्तिकार्थः ॥

( तत्त्वालोकः ) भाष्ये—तदेकदेशभूत इति—यत इत्यादिः ।

( समाधानबाधकभाष्यम् )

विषम उपन्यासः । इह केचिच्छब्दा अक्तपरिमाणानामर्थानां वाचका भवन्ति—य एते संख्याशब्दाः परिमाणशब्दाश्च । पञ्च सप्तेति एकेनाप्यपाये न भवन्ति । द्रोणः खारी आढकमिति नैवाधिके भवन्ति, न न्यूने । केचिद् यावदेव तद्भवति तावदेवाहुः—य एते जातिशब्दा गुणशब्दाश्च । तैलं घृतमिति खार्यामपि भवन्ति, द्रोणेऽपि ॥ शुक्लो नीलः कृष्ण इति हिमवत्यपि भवति, वटकणिकामात्रेऽपि द्रव्ये ॥ इमाश्चापि संज्ञा अक्तपरिमाणानामर्थानां क्रियन्ते ताः केनाधिकस्य स्युः ॥

( प्रदीपः ) अक्तपरिमाणानामिति । परिच्छिन्नपरिमाणानामित्यर्थः ॥ यावदेवेति । अल्पमधिकं वेत्यर्थः ॥ इमाश्चापीति । सर्वाद्युपादानेन संज्ञाः क्रियमाणाः कथं सर्वकादीनां भवन्ति । नित्या हि शब्दा विकारोपजनरहिता इति सर्वशब्दः सर्वकशब्द इति न वक्तुं शक्यत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—अक्तपरिमाणानामिति । अत्र परिमाणमानुपूर्वीविशेषोऽपि ॥ परिमाणे युपलक्षणं परिच्छिन्नार्थानाम् । तदाह—सङ्ख्येति ॥ भाष्ये—अर्थानामिति । संज्ञिभूतानां शब्दानामित्यर्थः ॥ नन्वधिकगड्वादिजननेऽपि शुनः श्वत्ववद् अकस्याधिकस्योपजनेऽपि सर्वकस्य सर्वशब्दत्वमक्षतमेवेत्यत आह—नित्या इति । वस्तुतः परिच्छिन्नपरिमाणकग्रहणे एकदेशविकृतन्यायस्याप्यप्रवृत्तिरिति भाष्याशयः ॥

( तत्त्वालोकः ) भाष्ये—इहेति—यत इत्यादिः । केचिदिति—शब्दा इत्यनुषज्यते ।

( समाधानसाधकभाष्यम् )

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—

'तदेकदेशभूतं तद्ग्रहणेन गृह्यते—'

इति । यदयं 'नेदमदसोरकोः' इति सककारयोरिदमदसोः प्रतिषेधं शास्ति ॥

कथं कृत्वा ज्ञापकम् ? ।

इदमदसोः कार्यमुच्यमानं कः प्रसङ्गो यत्सककारयोः स्यात् । पश्यति त्वाचार्यः—'तदेकदेशभूतं तद्ग्रहणेन गृह्यते' इति । ततः सककारयोः प्रतिषेधं शास्ति ॥

( प्रदीपः ) एवं तर्हीति । यद्यपि नित्याः शब्दास्तथापि प्रक्रियायामकजादयो विधीयमाना ज्ञापकादव्यतिरेककृत इत्यर्थः ॥

( उद्द्योतः ) ननु नित्यशब्दवादेऽकज्वतः शब्दान्तरत्वादकजादेः सर्वाद्येकदेशत्वमसिद्धमित्यत आह—यद्यपीति ॥ अव्यतिरेककृत इति । अनवयवत्वेपि ज्ञापकाद् भेदबुद्धिं न कुर्वन्ति इत्यर्थः ॥ एकदेशसादृश्यं च मध्यपातित्वेन बोध्यम् ॥

( तदन्तसंज्ञोदाहरणाधिकरणम् )

( आक्षेपभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ।

( ५३१ प्रयोजनवार्तिकम् ॥ ८ ॥ )

**॥*॥ प्रयोजनं सर्वनामाव्ययसंज्ञायाम् ॥*॥**

( भाष्यम् )

सर्वनामाव्ययसंज्ञायां प्रयोजनम् ॥ सर्वे परमसर्वे । विश्वे परमविश्वे । उच्चैः परमोच्चैः । नीचैः परमनीचैरिति ॥

( प्रदीपः ) **प्रयोजनमिति** । अन्वर्थसंज्ञाक्षिप्तः संज्ञी सर्वादिभिर्विशेष्यते । अपूर्वो वा तदन्तविधिरुपसंख्यायते । एवमुत्तरत्र विज्ञेयम् ॥

( उद्द्योतः ) ननु सर्वनामत्वे संज्ञोपसर्जनप्रतिषेधवार्तिकारम्भेण वार्तिककृतोऽन्वर्थत्वं नेष्टम् । किञ्च संज्ञिनामुपात्तत्वेनाक्षेपे मानाभाव इत्यत आह—**अपूर्वो वेति** । एतद्वार्तिकमूलाद् व्याख्यानादव्यावर्तकमपि शब्दरूपं विशेष्यमादाय तदन्तविधिरिति भावः ॥

( तत्त्वालोकः ) प्रदीपे—**अन्वर्थेति**—सर्वनामादीति शेषः । **सर्वादिभिः**—सर्वाद्यादिभिः ।

उद्द्योते—**अन्वर्थत्वमिति**—तस्येत्यादिः । **संज्ञिनाम्**—सर्वाद्यादीनाम् ।

( ५३२ प्रयोजनवार्तिकम् ॥ ९ ॥ )

**॥*॥ उपपदविधौ भयाढ्यादिग्रहणम् ॥*॥**

( भाष्यम् )

उपपदविधौ भयाढ्यादिग्रहणं प्रयोजनम् ॥

भयंकरः अभयंकरः । आढ्यंकरणं स्वाढ्यंकरणम् ॥

( प्रदीपः ) **उपपदविधाविति** । भयाढ्यादिभिः कर्म विशेष्यते । क्षेमप्रियमद्रेऽण् चेत्यत्र तु कर्मणा क्षेमादय इति तदन्तविध्यभावः ॥

( उद्द्योतः ) भयं चाढ्यादि चेति द्वन्द्वमभिप्रेत्याह—**क्षेमेति** ॥

( तत्त्वालोकः ) प्रदीपे—**विशेष्यते इति**—इति तेभ्यस्तदन्तविधिरिति शेषः । एवम्पूर्वत्रापि । **क्षेमादय इति**—विशेष्यन्त इति शेषः । **इतीति**—तेभ्य इति शेषः ।

उद्द्योते—ननु वार्त्तिके 'भयाढ्यादी'त्यत्र भयश्चाढ्यश्चेति भयाढ्यौ, तौ आदिनी येषान्ते भयाढ्यादयस्तेषामिति व्युत्पत्तौ 'द्वन्द्वान्ते' इति न्यायेनादिपदस्य प्रत्येकमन्वयाद् भयादिभिः क्षेमादीनां ग्रहणात् 'क्षेमप्रिये'त्यत्र ततो वैलक्षण्यस्य कथनं न युक्तमित्यत आह—**भयश्चेति** ।

( ५३३ प्रयोजनवार्तिकम् ॥ १० ॥ )

**॥ * ॥ ङीब्विधावुगिद्ग्रहणम् ॥ * ॥**

( भाष्यम् )

ङीब्विधावुगिद्ग्रहणं प्रयोजनम् । भवती अतिभवती । महती अतिमहती ॥

( ५३४ प्रयोजनवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ प्रतिषेधे स्वस्रादिग्रहणम् ॥ * ॥**

( भाष्यम् )

ङीप्प्रतिषेधे स्वस्रादिग्रहणं प्रयोजनम् । स्वसा परमस्वसा । दुहिता परमदुहिता ॥

( प्रदीपः ) **प्रतिषेध इति** । विधीयत इति विधिः सामान्येन गृह्यत इति प्रतिषेधेऽपि तदन्तविधिर्भवति, स्वस्रादिभिः प्रातिपदिकस्य विशेषणात् ॥

( उद्द्योतः ) **विधीयते इति** । सूत्रे विधिशब्देन प्रतिषेधविरोधी न विवक्षित इति भावः ॥

(तत्त्वालोकः) प्रदीपे-ननु विधिशब्दघटितेन प्रकृतसूत्रेण कथं प्रतिषेधेऽपि तदन्तविधिरित्यत आह-**विधीयते इति** । प्रकृतसूत्रे इत्यादिः।

उद्द्योते—**सूत्रे**—'येन विधिरि'ति सूत्रे ।

( ५३५ प्रयोजनवार्तिकम् ॥ १२ ॥ )

**॥*॥ अपरिमाणबिस्तादिग्रहणं च ॥*॥**

( भाष्यम् )

अपरिमाणबिस्तादिग्रहणं च ङीप्प्रतिषेधे प्रयोजनम् ॥ 'अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि' द्विबिस्ता द्विपरमबिस्ता । त्रिबिस्ता त्रिपरमबिस्ता । द्व्याचिता द्विपरमाचिता ।

( प्रदीपः ) **द्विपरमबिस्तेति** । द्विगुना सन्निधापितमुत्तरपदं बिस्तादिभिर्विशेष्यत इति तदन्तविधिः ॥

( ५३६ प्रयोजनवार्तिकम् ॥ १३ ॥ )

**॥ * ॥ दिति ॥ * ॥**

( भाष्यम् )

दितिग्रहणं च [ण्यविधौ] प्रयोजनम् ॥ दितेरपत्यं दैत्यः । अदितेरपत्यमादित्यः । 'दित्यदित्यादित्य—' इत्यदितिग्रहणं न कर्तव्यं भवति ॥

( प्रदीपः ) **दितिग्रहणं चेति** । परमदित्यादिभ्यस्त्वनभिधानात् ण्यो न भवति ॥

( तत्त्वालोकः ) प्रदीपे—नन्वेवं परमदित्यादिभ्योऽपि ण्यः प्रसज्येतेत्यत आह—**परमदित्यादिभ्यस्त्विति** ।

( ५३७ प्रयोजनवार्तिकम् ॥ १४ ॥ )

**॥ * ॥ रोण्या अण् ॥ * ॥**

( भाष्यम् )

रोण्या अण्ग्रहणं च प्रयोजनम् । आजकरौणः । सैंहिकरौणः ॥

( तत्त्वालोकः ) **रोण्या अण् ग्रहणञ्च**—अण्विधौ रोणीग्रहणञ्च । **आजकरौण इति**—अत्र 'ङ्यापोः संज्ञाछन्दसोरि'ति ह्रस्वः । एवमग्रेऽपि ।

( ५३८ आक्षेपवार्तिकम् ॥ १५ ॥ )

**॥ ॥ तस्य च ॥ ॥**

( भाष्यम् )

**तस्य चेति वक्तव्यम् ॥ रौणः ॥**

**( प्रदीपः ) तस्य चेति ।** स्वं रूपमित्यस्यानुवृत्तिं वार्तिककारो नेच्छति । तथा चाद्यन्तवदित्यत्र येन विधिस्तदन्तस्य इति प्रयोजनमवोचत् ॥

**( उद्द्योतः )** ननु स्वंरूपमित्यनुवृत्त्या स्वस्यापि संज्ञासिद्धौ किं तस्य चेत्यनेनात आह—**स्वमिति ।** तेन सूत्रप्रत्याख्यानादिति तात्पर्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—**नन्विति—**'येन विधिस्तदन्तस्ये'ति सूत्रे इति शेषः । **तेन—**वार्तिककारेण । **सूत्रेति—**'स्वं रूपमि'ति सूत्रेत्यर्थः ।

( प्रत्याक्षेपभाष्यम् )

**किं पुनः कारणं न सिध्यति । न तदन्ताच्च तदन्तविधिना सिद्धम् , केवलाच्च व्यपदेशिवद्भावेन ?**

**( तत्त्वालोकः ) न सिध्यति—**तदन्तविधौ तदन्तस्य स्वतः, केवलस्य च व्यपदेशिवद्भावेन तदन्तत्वादुभयतोऽण् न सिध्यतीत्यत्र । काक्वा पृच्छति—**नेति ।** किं नेत्यर्थः । **केवलाच्चेति—**तदन्तविधिना सिद्धमित्यनुषज्यते । एवमग्रेऽपि ।

( समाधानभाष्यम् )

**'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ॥**

**( प्रदीपः ) व्यपदेशिवद्भावोऽप्रातिपदिकेनेति ॥** ननु रौणीशब्दो न प्रातिपदिकं, प्रत्ययान्तत्वात् ॥ नैष दोषः । अप्रातिपदिकेनेत्यत्र वाक्ये **प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहण**मिति वचनात् स्त्रीप्रत्ययान्तैरपि व्यपदेशिवद्भावो न भवति । न च **लिङ्गविशिष्ट**परिभाषा स्वरूपविधिविषयैवेति **प्रातिपदिक**सूत्रे वक्ष्यते ॥

**( उद्द्योतः ) प्रत्ययान्तत्वादिति ।** स्त्रीप्रत्ययान्तत्वादित्यर्थः ॥ **स्वरूपविधिविषयैवेति ।** प्रातिपदिकविशेषोपादानविहितकार्यविषयैवेत्यर्थः ॥

**( तत्त्वालोकः )** प्रदीपे—**प्रत्ययान्तत्वादिति—**तथा च—तेन व्यपदेशिवद्भावः स्यादेवेति भावः । **अप्रातीति—**यत इत्यादिः । **वचनादिति—**प्रातिपदिकेन गृहीतैरिति शेषः । **न च—**न हि ।

( आक्षेपभाष्यम् )

**किं पुनः कारणं 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' ॥**

**(उद्द्योतः) किं पुनः कारणमिति ।** भाष्ये—कारणशब्दः प्रयोजनवाची ॥

( समाधानभाष्यम् )

**इह सूत्रान्ताठ्ठग्भवति, दशान्ताड्डो भवतीति केवलादुत्पत्तिर्मा भूदिति ॥**

( समाधानबाधकभाष्यम् )

**नैतदस्ति प्रयोजनम् । सिद्धमत्र तदन्ताच्च तदन्तविधिना, केवलाच्च व्यपदेशिवद्भावेन । सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तज्ज्ञापयत्याचार्यः—सूत्रान्तादेव, दशान्तादेवेति ॥**

**( उद्द्योतः ) तज्ज्ञापयतीति ।** बोधयतीत्यर्थः । अन्तग्रहणं नियमार्थमिति तात्पर्यम् ॥

**( तत्त्वालोकः )** भाष्ये—**सिद्धमत्रेति—**यत इत्यादिः ।

( समाधानसाधकभाष्यम् )

**नात्र तदन्तादुत्पत्तिः प्राप्नोति । इदानीमेव ह्युक्तम्—समासप्रत्ययविधौ प्रतिषेधः इति ॥**

**( उद्द्योतः ) नात्र तदन्तादिति ।** ननु **समासप्रत्ययविधा**वित्यस्य विशेषणविशेष्यभावव्यत्यासमात्रतात्पर्यग्राहकतया दित्यादावित्रापि तदन्तविधिसंभवेनान्तग्रहणसामर्थ्यादेव केवलेऽप्रवृत्तौ अप्रातिपदिकेनेति व्यर्थम् ॥ एतेन **ग्रहणवते**ति निषेधात्तदन्तविधिर्दुर्लभ इत्यपास्तम् ॥ किंच परमदित्यादिभ्य इवानभिधानेन केवलेऽप्रवृत्तिरिति व्यर्थैव सेति चेन्न । विशेषणविशेष्यभावव्यत्यासतात्पर्यग्राहकतया **समासे**त्यादिनिषेधवचनवदस्याप्यावश्यकत्वात्सूत्रभाष्यवार्तिकारूढतात्पर्यग्राहकाभावेऽपि तदन्तविधिकल्पनेतिप्रसङ्गापत्तेः । अत **एवोगिद्वर्णग्रहणवर्ज**मित्यादेश्चारितार्थ्यम् । अनभिधानेन प्रत्याख्यानं तु न चमत्कारकारि ॥

**( तत्त्वालोकः )** भाष्ये—**नात्रेति—**अस्त्येतत्प्रयोजनम्, यत इत्यादिः ।

उद्द्योते—**अत्रापि—**सूत्रादावपि । **एतेन—**तदन्तविधिनिषेधकानां विशेषणविशेष्यभावव्यत्यासमात्रतात्पर्यग्राहकत्वस्वीकारेण । **सा—**'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषा । **अस्यापि—**'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति वचनस्यापि । **अनभिधानेनेति—**केवलस्येत्यादिः । अस्येति शेषः ।

( गौरवाक्षेपभाष्यम् )

**सा तर्ह्येषा परिभाषा कर्तव्या ॥**

**( उद्द्योतः ) सा तर्ह्येषेति ।** व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्येषा ॥

( गौरवनिराकरणभाष्यम् )

**न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति—'व्यपदेशिवद्भावोऽप्रातिपदिकेन'—इति । यदयम्—'पूर्वादिनिः' 'सपूर्वाच्च' इत्याह ॥**

**( उद्द्योतः ) यदयमिति । पूर्वा**दित्यंशो ज्ञापक इत्यर्थः ॥

**( तत्त्वालोकः )** भाष्ये—**आचार्येति—**यत इत्यादिः ।

( ज्ञापकनिराकरणभाष्यम् )

**नैतदस्ति ज्ञापकम् ॥ अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् ॥**

**किम् ? ।**

**सपूर्वादिनिं वक्ष्यामीति ॥**

**( प्रदीपः ) सपूर्वादिनिमिति ।** पूर्वग्रहणे त्यक्ते **सपूर्वादिनि**रित्युच्यमाने सर्वस्मात् सपूर्वात्प्राप्नोतीति कथं ज्ञापकमित्यर्थः ॥

**( उद्द्योतः ) सर्वस्मादिति ।** पूर्वशब्दव्यतिरिक्तादपीत्यर्थः ॥

( ज्ञापकान्तरभाष्यम् )

यत्तर्हि योगविभागं करोति ॥ इतरथा 'पूर्वात्सपूर्वादिनिः' इत्येव ब्रूयात् ॥

( उद्द्योतः ) भाष्ये-यत्तर्हि योगविभागमिति ॥ नचेष्टादिभ्यश्चेत्यत्रानुवृत्त्यर्थं तथा पाठः, अत एवानिष्टीति प्रयोगसिद्धिरिति वाच्यम् । एतद्भाष्यप्रामाण्येन तत्प्रयोगाभावानुमानात् । प्रकारान्तरेण सिद्धौ तु नास्माकं क्षतिः । एकयोगेऽपि तावति स्वरितत्वप्रतिज्ञासामर्थ्येन तावत उत्तरत्रानुवृत्तिसिद्धेश्चेति दिक् ॥ एवं च रोणीत्यादौ केवलस्याप्राप्तेस्तस्य चेति वक्तव्यमिति सिद्धम् ॥

( तत्त्वालोकः ) भाष्ये—करोतीति—तज्ज्ञापकमिति शेषः ।

उद्द्योते—अनुवृत्त्यर्थमिति—'सपूर्वाच्चे'त्यस्येत्यादिः । तथा पाठः—'पूर्वादिनिः' 'सपूर्वाच्चे'ति पाठः । अत एव—तस्य तत्रानुवर्त्तनादेव । तत्प्रयोगेति—अनिष्टीति प्रयोगेत्यर्थः । प्रकारान्तरेणेति—तद्धितान्तेन नञः समासेनेत्यर्थः । तत्प्रयोगस्येति शेषः । अनेनैव प्रकारेण निष्पन्नस्य तत्प्रयोगस्याभ्युपगमेऽप्याह—एकयोगेऽपीति । तावति—'सपूर्वादि'त्येतावति । एकयोगे चकाराकरणेन लाघवमपीत्याह—दिगिति । एवञ्च—'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति परिभाषासत्त्वे च ।

( आक्षेपभाष्यम् )

किं पुनरयमस्यैव शेषः—॥ तस्य च ॥ इति ?।

( तत्त्वालोकः ) अस्यैव—'रोण्या अणि'त्यस्यैव ।

( समाधानभाष्यम् )

नेत्याह । यच्चानुक्रान्तं, यच्चानुक्रंस्यते, सर्वस्यैव शेषः—॥ तस्य च ॥ इति ॥

( प्रदीपः ) यच्चानुक्रान्तमिति । अप्रातिपदिकेनेति तु निषेधो यत्रान्तग्रहणं सूत्र एवोपात्तं तत्र । यथा दशान्ताड्ड इति दशाधिका अस्मिन् शत इत्यत्र न भवति ॥

( उद्द्योतः ) ननु तदन्तविधिविषये तस्य चेत्यनेन केवलादपि चेद्, व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यर्थमत आह—अप्रातिपदिकेनेति । ज्ञापकस्य सजातीयापेक्षत्वादिति भावः ॥ अत एव पूर्वादिनिरित्येव तदन्तविधिना सिद्धे सपूर्वाच्चेत्यस्य ग्रहणवत्तेति परिभाषाज्ञापकत्वं कैयटोक्तं सङ्गच्छते ॥ यत्रान्तेत्यन्तग्रहणमुपलक्षणम् । अत एव एकगोपूर्वादित्यस्य केवलैकशब्दे न प्रवृत्तिः । ग्रहणवते यपि प्रत्ययविधौ निषेधस्यैवानुवादकं, लाघवात् । स्पष्टं चेदम् असमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः ॥

( तत्त्वालोकः ) भाष्ये—यच्चानुक्रान्तमिति—किन्त्वित्यादिः । सर्वस्यैवेति—तस्येत्यादिः । अयमिति शेषः ।

उद्द्योते—अपिना—तदन्तस्य समुच्चयः । चेदिति—तर्हीति शेषः । कैयटस्य न्यूनतां निराचष्टे—यत्रान्तेति । नन्वेवमुपसंख्यानमध्ये तद्ग्रहणनाऽप्युचितेत्यत आह—ग्रहणेति । निषेधस्य—तदन्तविधिनिषेधस्य ।

( ५३९ प्रयोजनवार्तिकम् ॥ १६ ॥ )

॥ * ॥ रथसीताहलेभ्यो यद्विधौ ॥ * ॥

( भाष्यम् )

रथसीताहलेभ्यो यद्विधौ प्रयोजनम् ॥ रथ्यः परमरथ्यः । सीत्यं परमसीत्यम् । हल्या परमहल्या ॥

( प्रदीपः ) यद्विधाविति । ठग्विधौ तु तदन्तविधेरभावात्पारमहलिक इति ठञ् भवति ॥

( उद्द्योतः ) रथ्ये—तद्वहति रथेति यत् । सीत्ये—नौवयोधर्मेति । हल्ये—मतजनहलात्करणजल्पकर्षेष्विति यत् ॥ भाष्ये—परमरथ्य इति । रथाद्रथाङ्गवोढॄरित्येवं शैषिकप्रकरणे पाठेन सिद्धे तद्वहतीत्यत्र रथग्रहणं रथांशे तदन्तविधौ ज्ञापकम् । शैषिके सति हि द्विरथ इत्यादौ द्विगोर्लुगिति लुक् । तत्र सूत्रेऽचीति न संबध्यते । अनभिधानाच्च नातिप्रसङ्गः । वहत्यर्थे तु द्विरथ्य इत्येव, तस्याप्राग्दीव्यतीयत्वात् । इतरयोस्तु वाचनिक एव ॥ यत्तु हलसीरात् ठगित्यपि 'तस्येदं' 'तद्वहती'त्यधिकारे च द्विः पठ्यते, तत्तु इदंशब्देन वोढॄरूपार्थग्रहणज्ञापकम् । तदाह—ठक् न भवतीति ॥

( तत्त्वालोकः ) प्रदीपे—अस्य प्रयोजनमाह—ठग्विधाविति । 'हलसीराट्ठगि'ति ठग्विधावित्यर्थः ।

उद्द्योते—सतीति—प्राग्दीव्यतीयत्वादिति भावः । तत्र सूत्रे इति—यत इत्यादिः । 'गोत्रेऽलुगची'ति सूत्रादिति शेषः । नन्वेवं 'द्विगोर्लुगि'ति सूत्रं पञ्चगर्गरूप्यमित्यादावपि प्रसज्येतेत्यत आह—अनभिधानाच्चेति । तस्य सूत्रस्येति शेषः । इतरयोस्तु—सीताहलयोस्तु । तदन्तविधिरिति भावः । तस्येदम्—'तस्येदमि'त्यधिकारे । ज्ञापकमिति—न तु तदन्तविधिज्ञापकमिति भावः ।

( ५४० प्रयोजनवार्तिकम् ॥ १७ ॥ )

॥ * ॥ सुसर्वार्धदिक्छब्देभ्यो जनपदस्य ॥ * ॥

( भाष्यम् )

सुसर्वार्धदिक्शब्देभ्यो जनपदस्य प्रयोजनम् ॥

सु—सुपाञ्चालकः । सुमागधकः । सु ॥

सर्व—सर्वपाञ्चालकः । सर्वमागधकः । सर्व ॥

अर्ध—अर्धपाञ्चालकः । अर्धमागधकः । अर्ध ॥

दिक्छब्द—पूर्वपाञ्चालकः । अपरपाञ्चालकः । पूर्वमागधकः । अपरमागधकः ॥

( उद्द्योतः ) भाष्ये-सुपाञ्चालक इत्यादि । जनपदेत्यधिकारे अवृद्धादपि बहुवचनविषयादिति वुञ् । तद्विधौ चायं तदन्तविधिः । सुसर्वार्धाज्जनपदस्य, दिशोऽमद्राणामिति उत्तरपदवृद्धिः ॥

( तत्त्वालोकः ) उद्द्योते—इति उत्तरपदवृद्धिः—इत्याभ्यामुत्तरपदादिवृद्धिः ।

( ५४१ प्रयोजनवार्तिकम् ॥ १८ ॥ )

॥*॥ ऋतोर्वृद्धिमद्विधाववयवानाम् ॥*॥

( भाष्यम् )

ऋतोर्वृद्धिमद्विधाववयवानां प्रयोजनम् ॥ पूर्वशारदम् । अपरशारदम् । पूर्वनैदाघम् । अपरनैदाघम् ॥

( प्रदीपः ) ऋतोरिति । ऋतुवाचिनः शब्दाद्यो वृद्धिमान् प्रत्ययस्तद्विधानेऽवयवानां तदन्तविधिः । शरदः पूर्वो भागः पूर्वशरत्

तत्र भवमिति ऋतुलक्षणोऽण् । तत्र वृद्धिमदिति वचनात्प्रावृषेण्य इत्यत्र तदन्तविधिर्न भवति । तेन ऋत्वणेव भवति—**पूर्वप्रावृषमिति** । प्रावृट्शब्दो वर्षापर्यायः ॥ अवयवानामिति किम् ? पूर्वस्यां शरदि भवं पौर्वशारदिकमित्यण् न भवति । **कालाट्ठञ्** येत्र भवति । तत्र हि यथाकथंचित्कालवाचिनो गृह्यन्ते ॥

**( उद्द्योतः ) वृद्धिमानिति ।** वृद्धिनिमित्तमित्यर्थः ॥ **अवयवानामिति ।** पूर्वपदत्वे इति शेषः ॥ **शरद इति । पूर्वापराधरेत्ये-** कदेशिसमासः । **सन्धिवेलाद्यृ**त्विति अण् । **अवयवादृतो**रित्युत्तरपदवृद्धिः ॥ ननु शरच्छब्द एव कालवाची, न पूर्वशरच्छब्द इति कथं ठञित्यत आह—**तत्र हीति ।** अत एव **सन्धिवेलादिसूत्रे** नक्षत्राणां कालेन विशेषणं सङ्गच्छते ॥

**( तत्त्वालोकः )** प्रदीपे—**वृद्धिमानिति**—वृद्धिः ( कार्यत्वेन ) अस्त्यस्येति व्युत्पत्तिः । **तत्र भव**—पूर्वशारदम् । **कालादिति**—किन्त्वित्यादिः । **यथाकथञ्चिदिति**—न तु रूढ्यैवेति भावः ।

( ५४२ प्रयोजनवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ ठञ्विधौ संख्यायाः ॥ * ॥

( भाष्यम् )

**ठञ्विधौ संख्यायाः प्रयोजनम् ॥ द्विषाष्टिकं पञ्चषाष्टिकम् ।**

**( प्रदीपः ) द्विषाष्टिकमिति ।** द्वे षष्टी परिमाणमस्येति समासे कृते आर्हादिति ठञ भवति, सङ्ख्यायास्तदन्तविधौ सति संख्यान्तादपि ठक्प्रतिषेधात् । तेन प्राग्वतेरिति ठञ् भवति । अध्यर्धपूर्वेति लुग भवति, **सोस्यांशवस्नभृतय** इत्यतः सोस्येत्यनुवर्तमाने **तदस्य परिमाण**मित्यत्र पुनः प्रत्ययार्थसमर्थविभक्तिनिर्देशात् । कृते वा लुकि पुनस्तन्निर्देशसामर्थ्यात् पुनः प्रत्ययः । तद्विधानसामर्थ्याच्च पुनर्लुगभावः ॥

**( उद्द्योतः )** भाष्ये—**ठञ्विधौ सङ्ख्याया इति । तदस्य परिमाणं, सङ्ख्यायाः संज्ञे**ति सूत्रे इति भावः ॥ **द्वे षष्टी परिमाणमस्ये**ति । सङ्ख्यादिरस्य विशेष्यः ॥ **प्रतिषेधादिति । आर्हादगोपुच्छेत्यनेन** । तस्य प्रत्ययप्रतिषेधत्वात्तत्र तदन्तविधिर्भवत्येव ॥ **तेन प्राग्वतेरिति ।** ठञ्विधायके **सङ्ख्यायाः संज्ञेति** सूत्रे तदन्तविधिसत्त्वेन **प्राग्वतो**रत्यधिकारप्राप्तष्ठञ् भवतीत्यर्थः ॥ **पुनः प्रत्ययार्थसमर्थेति । अस्ये**ति प्रत्ययार्थः । **तदिति** समर्थविभक्तिः । अनुवर्तमानस्य लुक्सम्बद्धतया पुनरुपादानेन तादृग्लक्षणलक्षणवचनादनेन विहितस्य लुगभाव इत्यर्थः ॥ **कृते वेति ।** अनुवर्तमान**सोस्येति** सहित-**परिमाण**मित्यनेन विहितस्य लुकि पुनस्**तदस्य परिमाण**मिति वचनसामर्थ्यात्स्वार्थे तज्जातीयप्रत्यये तस्य विधानसामर्थ्याद् द्विगुनिमित्तत्वाभावाद्वा लुगभाव इत्यर्थः ॥ इदं वृत्तिकारमतेनोक्तम् । वस्तुतस्तु **तदस्ये**ति पुनरुपादानमात्रेणार्हीयत्वापगमे तत्त्वेऽपि लुगभावे वा द्वे षष्टी जीवितपरिमाणमस्येत्यर्थेऽनेन ठञि लुकमाशङ्क्य **कालादि**त्यधिकारस्थेन **तमधीष्ट** इति सूत्रेण ठञा द्विषाष्टिकः साधितो भाष्ये । कालग्रहणेन यथाकथञ्चित् कालवाचिनो ग्रहणमिति चोक्तं, तद्विरुध्येत । त्वद्रीत्याऽनेनापि ठञि लुगभावात् । तस्माद्द्वे षष्टी परिमाणमस्य सङ्घस्य स परिमाणमस्येति भाष्योदाहरणार्थः । तत्र द्विगुनिमित्तत्वाभावान्न लुक् । सङ्घे द्विषष्ट्यनतिरेकस्यापि सत्त्वात्तस्यापि सङ्ख्याशब्दत्वमित्यपरे ॥

**( तत्त्वालोकः )** प्रदीपे—**समासे—'तद्धितार्थे'त्यनेन समासे । ठञ्**—ठञेव । **लुक्**—लुक् । **प्रत्ययार्थ-समर्थविभक्तीति**—प्रत्ययार्थ-समर्थविभक्त्योरित्यर्थः ।

उद्द्योते—**अनुवर्तमानस्य**—'सोऽस्ये'त्यस्य । **उपादानेनेति**—'तदस्ये'त्यस्येत्यादिः । अस्मिन्निति शेषः । **अनेन**—'तदस्य परिमाणमि'त्यनेन । एवमग्रेऽपि । प्रथमतद्धितार्थ एव द्विगुसमासविधानात्प्रथमं विहितस्यैव द्विगुनिमित्तत्वादाह—**द्विगुनिमित्तत्वाभावाद्वेति** । कैयटोक्तं खण्डयन् प्रकारान्तरेण भाष्यं योजयति—**वस्तुतस्त्विति । तत्त्वेऽपीति**—आर्हीयत्वेऽपीत्यर्थः । 'तदस्ये'ति पुनरुपादानमात्रेणेति चानुषज्यते । **वेति**—स्वीक्रियमाणे इति शेषः । **तत्रेति**—पुनर्विहितस्येति शेषः ।

( ५४३ प्रयोजनवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ धर्मान्नञः ॥ * ॥

( भाष्यम् )

**धर्मान्नञः प्रयोजनम् ॥ धर्मं चरति धार्मिकः । अधर्मं चरति अधार्मिकः ॥ *अधर्माच्च* इति न वक्तव्यं भवति ॥**

---

( पदाङ्गाधिकारपरिभाषाधिकरणम् )

( ५४४ आक्षेपवार्तिकम् ॥ २१ )

## ॥ * ॥ पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ॥ * ॥

( भाष्यम् )

**पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य चेति वक्तव्यम् ॥**

**( प्रदीपः ) पदाङ्गाधिकार इति ।** पदशब्देनोत्तरपदं गृह्यते, पदैकदेशलोपात् ॥

**( उद्द्योतः )** भाष्ये- **पदाङ्गेति** । तदन्तविधेरपवादोऽयम् । अत एव **तस्य चेति** पुनरभिहितम् । तदन्तविधौ हि बह्वच्पूर्वेऽपि स्यात्तच्च नेष्टमिति वार्तिकाशयः ॥ **पदशब्देनेति ।** अत एव भाष्ये उत्तरपदाधिकारे प्रयोजनदानम् ॥

( भाष्यम् )

**पदाधिकारे किं प्रयोजनम् ? ॥**

( ५४५ प्रयोजनवार्तिकम् ॥ २२ ॥ )

## ॥ * ॥ प्रयोजनमिष्टकेषीकामालानां चिततूलभारिषु ॥ * ॥

( भाष्यम् )

**इष्टकेषीकामालानां चिततूलभारिषु प्रयोजनम् ॥ इष्टकचितं चिन्वीत । पक्वेष्टकचितं चिन्वीत । इषीकतूलेन, मुञ्जेषीकतूलेन । मालभारिणी कन्या, उत्पलमालभारिणी कन्या ॥**

**( प्रदीपः )** उत्तरपदेन सामर्थ्यादाक्षिप्तं पूर्वपदमिष्टकादिभिर्विशेष्यते ॥

( उद्द्योतः ) तदन्तविध्यपवादत्वादस्या विशेषण एव प्रवृत्तिरित्याशयेनाह—**उत्तरपदेनेति** । शब्दरूपं विशेष्यमादायेत्यन्ये ॥

( तत्त्वालोकः ) उद्द्योते— **अस्याः**-पदाङ्गाधिकारपरिभाषायाः ।

( भाष्यम् )

**अङ्गाधिकारे किं प्रयोजनम् ? ।**

( ५४६ प्रयोजनवार्तिकम् ॥ २३ ॥ )

**॥*॥ महदप्स्वस्रनप्तॄणां दीर्घविधौ ॥*॥**

( भाष्यम् )

**महदप्स्वस्रनप्तॄणां दीर्घविधौ-प्रयोजनम् ॥**

**महत्—महान् । एवं परममहान् । महत् ॥**

**अप्—आपस्तिष्ठन्ति । एवं स्वापस्तिष्ठन्ति । अप् ॥**

**स्वसृ—स्वसा स्वसारौ स्वसारः । एवं परमस्वसा परमस्वसारौ परमस्वसारः । स्वसृ ॥**

**नप्तृ—नप्ता नप्तारौ नप्तारः । एवं परमनप्ता परमनप्तारौ परमनप्तारः ॥ नप्तृ ॥**

( प्रदीपः ) **महदप्स्वस्निति** । महदादिभिरङ्गं विशेष्यते ॥ **स्वाप इति । न पूजनादिति** समासान्तनिषेधः । **अपो भीति** तत्वमपि स्वद्भिरिति भवति ॥

( उद्द्योतः ) **समासान्तनिषेध इति** । ऋक्पूरबिति प्राप्ते ॥ अत एव द्व्यन्तरुपसर्गेभ्योऽप इत्त्वं न । तत्र स्वाप इति कृतसमासान्तानुकरणम्, व्यत्ययेन षष्ठ्यर्थे प्रथमा । अत्र चेदमेव भाष्यं मानमित्याहुः । **तत्त्वमपीति** । वार्तिकस्थेन दीर्घविधाविति विषयनिर्देशेनेदं विरुध्यते ॥

( तत्त्वालोकः ) प्रदीपे—अत्र तदन्तविधेः प्रयोजनान्तरमाह—**अपो भीति** ।

उद्द्योते—कैयटोक्तं खण्डयति— **वार्तिकस्थेनेति** । 'दीर्घविधावि'त्यस्योपलक्षणत्वे तु कैयटोक्तं युक्तमेवेति बोध्यम् ।

( ५४७ प्रयोजनवार्तिकम् ॥ २४ ॥ )

**॥*॥ पद्युष्मदस्मदस्थ्याद्यनडुहो नुम् ॥*॥**

( उद्द्योतः ) भाष्ये—**पद्युष्मदस्मदस्थ्यादीति** समस्तं पृथक्पदम् । **अनडुह इति** त्वसमस्तम् । अन्यथा नुमोऽनडुच्छब्दमात्रान्वयित्वेनासामर्थ्यात्समासो न स्यात् । पदादयोऽनडुहो नुम् च तदन्तविधिं प्रयोजयन्तीत्यर्थः ॥

( भाष्यम् )

**पद्भावः प्रयोजनम् । द्विपदः पश्य ।**

( प्रदीपः ) **द्विपद इति** । पादः पदित्यत्र पाच्छब्देनाङ्गं विशेष्यते ॥

( आक्षेपभाष्यम् )

**अस्ति चेदानीं कश्चित् केवलः पाच्छब्दो यदर्थो विधिः स्यात् ? ।**

( उद्द्योतः ) समासे एव **पादस्य लोप** इत्यन्तलोपविधानात्सामर्थ्यादेव तदन्तविधिर्भविष्यतीत्याशयेन काक्वा पृच्छति—भाष्ये- **अस्ति चेति** ॥

( तत्त्वालोकः ) भाष्ये— **विधिः**—पद्विधिः ।

( समाधानभाष्यम् )

**नास्तीत्याह ॥**

( प्रयोजनदर्शकभाष्यम् )

**एवं तर्हि अङ्गाधिकारे प्रयोजनं नास्तीति कृत्वा पदाधिकारस्य प्रयोजनमुक्तम्—'हिमकाषिहतिषु च' । यथा पत्काषिणौ पत्काषिणः । एवं परमपत्काषिणौ परमपत्काषिणः ॥**

( उद्द्योतः ) आचार्यदेशीय आह—**एवं तर्हीति** । संनिधेर्लिङ्गं बलीय इति भावः ॥

( आक्षेपभाष्यम् )

**यदि तर्हि पदाधिकारे पादस्य तदन्तविधिर्भवति 'पादस्य पदाज्यातिगोपहतेषु' यथेह भवति—पादेनोपहतं पदोपहतम् । एवमत्रापि स्यात्—दिग्धपादेनोपहतं दिग्धपादोपहतमिति ॥**

( प्रदीपः ) **पादस्य पदेति** । पद्भावे तदन्तविधिरुक्तः । अयं तु पद्भावविधिः । नैष दोषः । पादशब्देन पूर्वपदस्य विशेषणात्पद्भावे तदन्तविधिः । अनेनैव न्यायेन पद्भावेऽपि तदन्तविधिप्रसङ्गः । यथाभूतः पूर्वसूत्रे पादशब्दो निर्दिश्यते तथाभूतस्योत्तरत्रानुमानात् ॥

( उद्द्योतः ) **तदन्तविधिरिति** । तदपवाद उत्तरपदविधिरित्यर्थः ॥ अर्थाधिकाराश्रयेण परिहरति—**नैषेति** ।

( तत्त्वालोकः ) प्रदीपे—**पादशब्देनेति**—यत इत्यादिः ।

( समाधानभाष्यम् )

**एवं तर्ह्यङ्गाधिकार एव प्रयोजनम् ॥**

( प्रदीपः ) **एवं तर्हीति** । एवं च परमपादेन कषतीति विवक्षायां परमपादकाषीति भवति, यदा तु परमः पत्काषीति विवक्षा तदा परमपत्काषीति भवति ॥

( उद्द्योतः ) नन्वेवं पादशब्देन तदन्तविध्यभावे परमपत्काषिणाविति पूर्वोदाहृतासङ्गतिरत आह—**एवं चेति** । अर्थभेदेन तत्साध्विति भावः ॥

( तत्त्वालोकः ) उद्द्योते—**नन्वेवमिति**-पदाधिकारे **इति** शेषः ।

( आक्षेपभाष्यम् )

**ननु चोक्तम्—न केवलः पाच्छब्द इति ॥**

( तत्त्वालोकः ) तत्फलितार्थकं निर्दिशति— **न केवल इति** ।

( समाधानभाष्यम् )

**अयमस्ति पादयतेरप्रत्ययः—पात् पदः पदा पदे । पत् ॥**

( प्रदीपः ) **पादयतेरिति** । पदेर्ण्यन्तादित्यर्थः ॥

( उद्द्योतः ) पादशब्दादाख्यानणिचि णिचिमित्तकटिलोपस्य स्थानिवत्त्वात्पदादेशाप्राप्तेराह—**पदेरिति । क्वौ लुप्तमिति निषेधान्न** णिलोपस्य स्थानिवत्त्वमित्यर्थः ॥ अत एव **पादस्य पादहस्त्यादिभ्य**

इति नास्त्रि । तथा सति तस्यैव प्रतिपदोक्तत्वात्पञ्चावः स्यान्नास्येति तात्पर्यम् ॥

( भाष्यम् )

युष्मत् अस्मत्—यूयं वयम् । परमयूयं परमवयम् ॥

अस्थ्यादि—अस्थ्ना दध्ना सक्थ्ना । परमास्थ्ना परमदध्ना परमसक्थ्ना ॥

अनडुहो नुम्—अनड्वान् परमानड्वान् ॥

( ५४८ प्रयोजनवार्तिकम् ॥ २५ ॥ )

## ॥ * ॥ द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणम् ॥ * ॥

( भाष्यम् )

द्युपथिमथिपुंगोसखिचतुरनडुत्त्रिग्रहणं प्रयोजनम् ॥ द्यौः सुद्यौः । पन्थाः सुपन्थाः । मन्थाः परममन्थाः । पुमान् परमपुमान् । गौः सुगौः । सखा सखायौ सखायः, सुसखा सुसखायौ सुसखायः, परमसखा परमसखायौ परमसखायः । चत्वारः परमचत्वारः । अनड्वाहः परमानड्वाहः । त्रयाणां परमत्रयाणाम् ॥

( प्रदीपः ) **परमपन्था** इति क्वचित्पाठः । स त्वयुक्तः, समासान्तविधानात् । **न पूजनादित्यत्र पूजायां स्वतिग्रहणमिति** वचनान्नास्ति निषेधः । तस्मात्सुपन्था इति पाठः ॥ **परमगौरि**त्यप्यपपाठः, **गोरतद्धितलुकी**ति टच्विधानात् । तस्मात् सुगौरिति पाठः । **परमसखायावि**ति बहुव्रीहिः । तत्पुरुषे तु टचा भाव्यम् ॥ अनडुच्छब्दस्येह प्रपञ्चार्थः पाठः । **अनडुहो नुम्** इत्यत एव वचनादादित्यधिकारादमामोः कृतयोर्नुम्विधानान् नुम्विधौ तदन्तविधिना अमामोरपि तदन्तविधेराक्षेपात् ॥ अन्ये त्वाहुः—असतीह पुनर्ग्रहणे यत्रैव नुम् क्रियते तत्रैवामामौ तदन्तस्य स्याताम् । परमानड्वाह इत्यत्र त्वाम्न स्यादिति पुनः पाठः कर्तव्यः । पूर्वत्रापि पाठो नुमर्थः कर्तव्यः । अन्यथा अमामोरेव तदन्तविधिः स्यान्न तु नुम्विधौ ॥

( उद्द्योतः ) **इह—द्युपथीति** प्रयोजनवार्तिके ॥ **इत्यत एवेति । पद्युष्मदिति** वार्तिकस्थादित्यर्थः ॥ **आदित्यधिकारादिति । आच्छीत्यतः** । अन्यथा नुम् बाधकः स्याद्, अम् च नुमो बाधकः स्यादिति भावः । **अन्यथाऽमामोरेवेति ।** चतुःसाहचर्यादिति भावः ॥

( तत्त्वालोकः ) प्रदीपे—**न पूजनादित्यत्रेति**—यत इत्यादिः । **निषेधः**—समासान्तनिषेधः । **सुपन्था इति पाठ इति**—तत्र तु 'न पूजनादि'ति निषेधात् समासान्तस्याभावः । एवमग्रेऽपि । **तत्पुरुषे तु**—तत्पुरुषे हि । **वचनादिति**—अस्य 'नुम्विधौ तदन्तविधिने'त्यनेनान्वयः । **विधानादिति**—अस्य 'अमामोरपि तदन्तविधेराक्षेपादि'-'त्यनेनान्वयः । **इह**—प्रकृतवार्तिके । **ग्रहणे**—अनडुच्छब्दग्रहणे । **पुनः**—पुनरिह । **पाठः**—अनडुच्छब्दपाठः । एवमग्रेऽपि । **पूर्वत्रापि**—'पद्युष्मदि'ति वार्तिकेऽपि ।

उद्द्योते—**अन्यथेति**—आदित्यधिकारेणामामोर्नुमुपजीव्यैवस्या-स्वीकारे इत्यर्थः । आम इति शेषः । **बाधक इति**—विशेषविहितत्वादिति भावः । एवमग्रेऽपि ।

( ५४९ प्रयोजनवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च ॥ * ॥

( भाष्यम् )

त्यदादिविधिभस्त्रादिस्त्रीग्रहणं च प्रयोजनम् ॥ सः अतिसः ॥ भस्त्रका भस्त्रिका, बहुभस्त्रका बहुभस्त्रिका, निर्भस्त्रका निर्भस्त्रिका ॥ स्त्रीग्रहणं च प्रयोजनम् । स्त्रियौ स्त्रियः । राजस्त्रियौ राजस्त्रियः ॥

( प्रदीपः ) **अतिस इति** । शोभनः स इत्यर्थः । उपसर्जने तु तच्छब्दार्थेऽतितदिति भवति ॥ **बहुभस्त्रिकेति** । नञ्पूर्वाणामपीति न वक्तव्यं भवति ॥

( ५५० प्रयोजनवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ वर्णग्रहणं च सर्वत्र ॥ * ॥

( भाष्यम् )

वर्णग्रहणं च सर्वत्र प्रयोजनम् ॥

क्व सर्वत्र ?

अङ्गाधिकारे चान्यत्र च । अन्यत्रोदाहृतम् ॥ अङ्गाधिकारे—'अतो दीर्घो यञि, सुपि च' इहैव स्यात्—आभ्याम् । घटाभ्यामित्यत्र न स्यात् ॥

( प्रदीपः ) **वर्णग्रहणं चेति** यद्येव**मुगिद्वर्णग्रहणवर्जमि**-त्यत्र किमर्थं वर्णग्रहणम् । उच्यते—प्रत्ययविधौ तदन्तविधिप्रतिषेधाद्वर्णग्रहणे प्रत्ययविधौ प्रतिषेधाशङ्कानिरासार्थम् ॥

( उद्द्योतः ) **अन्यत्र चेति**भाष्यादङ्गाधिकारादन्यत्र प्रत्ययविधानेऽपि वर्णग्रहणे तदन्तविधिरिति मत्वा चोदयति—**यद्येवमिति ।** अन्यत्रेत्यनेन भाष्ये**णेको झलि**त्यादौ निषेधाभावात्तदन्तविधिरनुज्ञायते । एवं च प्रत्ययविधौ वर्णग्रहणे स प्रतिषेध एव स्यादतस्तत्र वर्णग्रहणमिति परिहरति—**उच्यत इति** ॥

( तत्त्वालोकः ) भाष्ये—**उदाहृतमिति**—'वर्णग्रहणम्—'अत इञ्' दाक्षिः प्लाक्षिरि'ति भाष्येणेति भावः ।

प्रदीपे—**यद्येवमिति**—तर्हीति शेषः ।

उद्द्योते—**स प्रतिषेधः**—'समासप्रत्ययविधौ प्रतिषेधः' इति तदन्तविधिप्रतिषेधः ।

( ५५१ प्रयोजनवार्तिकम् ॥ २८ ॥ )

## ॥ * ॥ प्रत्ययग्रहणं चापञ्चम्याः ॥ * ॥

( भाष्यम् )

प्रत्ययग्रहणं च अपञ्चम्याः प्रयोजनम् ॥ यञिञोः फग्भवति—गार्ग्यायणः, वात्स्यायनः । परमगार्ग्यायणः, परमवात्स्यायनः । दाक्षायणः, परमदाक्षायणः ॥

अपञ्चम्या इति किमर्थम् ? ।

दृषत्तीर्णा, परिषत्तीर्णा ॥

( प्रदीपः ) **प्रत्ययग्रहणं चापञ्चम्या इति । प्रत्ययग्रहणे यस्मात् स विहित** इति सिद्धे तदन्तविधाव**पञ्चम्या** इति प्रतिषेधार्थं वचनम्—यत्र पञ्चम्यन्तात् परः प्रत्ययः कार्यान्तरविधानाय परि-

गृह्यते तत्र तदन्तविधिर्मा भूद्। यथा—**रदाभ्या**मित्यत्र। तत्र हि तदन्तविधौ रेफदकाराभ्यामुत्तरो यो निष्ठान्तस्तस्य यस्तकारस्तस्य नत्वं स्यात्। न च **संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिर्नास्ती**ति निषेधावतारः। यत्र हि संज्ञाविधानं तत्रायं निषेधः। इह तु निष्ठानुवादेन नत्वविधिः। संज्ञाविधौ तर्हि तदन्तविधिनिषेधस्य किं फलम्। उच्यते—यदि संज्ञाविधौ प्रत्ययग्रहणे तदन्तस्य संज्ञा स्यात् प्रदेशेषु पुनस्तदन्तविधिः स्यादिति प्रत्ययान्तान्तं गृह्येत, तस्मात्संज्ञाविधावपि तदन्तविधिनिषेधो **रदाभ्या**मित्यत्र च॥ **अपञ्चम्या** इत्यस्य नायमर्थः—यत्र पञ्चम्यन्तात्प्रत्ययो विधीयते तत्र तदन्तविधिर्न भवतीति। एवं हि व्याख्यायमाने **ञितश्च तत्प्रत्यया**दित्यत्र तत्प्रत्ययादेवाञि विधीयमाने तस्यैवाङ्गसंज्ञायां वृद्धिस्वरौ स्यातां, न तु तदन्तस्य॥ **परमगार्ग्यायण इति**। तत्र गार्ग्यायण इत्येवोदाहरणम्, गार्ग्यशब्दाद्यञन्तात् फग्विधानाद्। न त्वत्र परमगार्ग्यशब्दात्प्रत्ययस्तस्य यञन्तत्वाभावात्। तस्माच्च फकि विधीयमाने परमगार्ग्यायण इत्यनिष्टरूपप्रसङ्गः। तस्मादेतन्न्यायव्युत्पादनार्थं पारमगार्ग्यायण इत्युपन्यस्तम्। उत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तविध्यभावो लेखग्रहणेन ज्ञापितः। तत्र **रदाभ्या**मित्यत्र निष्ठायाः प्राधान्येनाश्रयणात्तदन्तविध्यभावः। **स्यतासी लृलुटो**रित्यत्र धातोरित्यधिकारादपञ्चम्या इति निषेधाल्लृलुटोर्वा प्राधान्येनाश्रयणात्तदन्तविध्यभावः॥

**( उद्द्योतः ) सिद्धे तदन्तविधाविति**। उक्तवचनेन वात्त्रिक इत्यर्थः। यत्तु प्रत्ययाक्षिप्तप्रकृतिप्रत्ययावयवकसमुदायस्य विशेषणादेतत्सूत्रसिद्ध एव स इति॥ तन्न। तादृशार्थस्य नियमाक्षेपे आक्षिप्तस्य वा शाब्देऽन्वये मानाभावात्। किं च **वनो रचे**त्यादौ **समासप्रत्ययविधा**वित्यनेनास्यापि निषेधापत्तिर्मम तु सौत्रस्यैव स निषेध इति न दोषः। पञ्चम्यन्तात्परः प्रत्ययो यत्र कार्यान्तरविधानायानूद्यते तद्भिन्नस्थले प्रत्ययग्रहणं तदन्तविधेः प्रयोजनमिति वार्त्तिकार्थस्तदाह—**यत्रेत्यादि। परिगृह्यते** अनूद्यते॥ **नत्वं स्यादिति।** वृषत्तीर्णेत्यादौ धातोस्तकारस्य तत्पूर्वदस्य च तत्स्यादित्यर्थः॥ **न च संज्ञाविधाविति।** संज्ञया विधावित्यर्थ इत्यभिमानः॥ **यत्र हीति।** संज्ञाया विधौ स निषेधो न तु संज्ञया विधौ॥ **तर्हीति।** प्रदेशेषु तदन्तग्रहणं यदि, तर्हि इत्यर्थः॥ **पुनस्तदन्तेति।** धादिभिरुत्तरपदस्य विशेषणादिति भावः॥ **तस्मादिति। संज्ञाविधौ प्रत्ययग्रहण** इति **प्रत्ययग्रहणे चापञ्चम्या** इति वचनाभ्यामिति भावः॥ **नायमर्थ इति।** प्रत्यासत्त्या चास्यार्थस्य प्रसक्तिः॥ **पञ्चम्यन्तादिति।** पञ्चम्यन्तनिर्दिष्टप्रत्ययादित्यर्थः॥ **समासप्रत्ययविधा**विति तु सौत्रस्य निषेध इति न तेनास्य गतार्थतेति भावः॥ **तत्प्रत्ययादेव** विकारावयवविहितप्रत्ययादेव॥ एवञ्चौष्ट्रविकारादौष्ट्रकादञि वुञ एव वृद्धिस्वरौ स्यातामित्यर्थः॥ भाष्ये—**यञिञोः फगिति।** यद्यपि **ङ्याप्प्रातिपदिका**दित्यधिकारा**दपञ्चम्या** इति निषेधस्तत्र प्राप्नोति तथापि न तद्यधिकरणं विशेषणम्, किन्तु यञिञोरिति पञ्चम्यर्थे षष्ठीसत्त्वात् तस्य समानाधिकरणं विशेष्यमिति अपञ्चम्या इत्यस्याविषयोऽयमिति भावः॥ **तस्मादिति। प्रत्ययग्रहणे यस्मात्स विहित** इति नियमोऽत्रापि तदन्तविधावपेक्ष्य एव। एतत्सिद्ध एव च तदन्तविधिस्तत्रानूद्यते उक्तनियमबोधनाय। अन्यथा परमगार्ग्यशब्दात् फकि पारमगार्ग्यायण इति स्यादिति न्यायव्युत्पादनार्थमित्यर्थः॥ नन्वेतद्रीत्या परमश्चासौ गार्ग्यायण इति भाष्योदाहरणार्थः न द्वीदृशेऽर्थे परमगार्ग्यशब्दस्य प्रकृतित्वसंभावनापीति कथमेतन्न्यायप्रदर्शनमनेन भाष्येणेति चेन्न। परमगार्ग्यैकदेशगार्ग्यशब्दादेव प्रत्ययः परमगार्ग्यस्यापत्यमित्यर्थेऽपि उक्तन्यायाद् इत्यकोपात्। विशिष्टेनैकार्थीभावेऽवयवेनापि तस्य सत्त्वमस्त्येव॥ निष्कृष्टैकार्थीभाव एव वृत्तौ निमित्तमित्यत्र न मानम्। अत एवानुपसर्जनादिति सूत्रे कुम्भकारीशब्दैकदेशात्कारीशब्दादप्युत्पत्तिः शङ्किता भाष्ये। अस्य कैयटस्याप्यत्रैव तात्पर्यम्॥ एतन्न्यायेऽस्यापि **यस्माद्विहित** इत्यादिन्यायेन समस्तैकदेशात्प्रत्यय इत्येतन्न्यायेत्यर्थः। न चैवं **सुपि च, रोः सुपी**त्यादौ सुबन्ते इत्यर्थापत्तिः, न हि तत्र पञ्चम्यन्तात्परत्वेन प्रत्ययो विशेष्यत इति वाच्यम्। **तस्मिन्निति** परिभाषया सुपि परे इत्यर्थे नियमेन कस्मादित्यवधिसाकाङ्क्षत्वेनोपस्थितानामादेरेवावधित्वेनान्वयेन पञ्चम्यन्तस्य विशेषणत्वेन निषेधप्रवृत्तेरित्याहुः॥ ननु **येन नाप्राप्ति**न्यायेनायं निषेधो बाधनीयस्तदन्तविधिरेवेति **घरूपे**त्यादौ उत्तरपदस्य विशेष्यतया प्राप्तस्तदन्तविधिः स्यादेवेत्यत आह—**उत्तरपदेति।** अन्यथा **हृदयस्य हृल्लेखयदण्**लासग्रहणेनैव सिद्धे लेखग्रहणं व्यर्थं स्यात्॥ लेख इत्यणन्तमेव तत्र गृह्यते। घञन्तस्य त्वनभिधानात्तत्राग्रहणमेवेति भावः॥ अयमपि निषेधो विशेषणविशेष्यभावव्यत्यासमूलक एवेत्याह—**तत्रेति। प्राधान्येनेति।** शब्दरूपापेक्षयेत्यर्थः॥ **धातोरिति। इदं** स्यतासिविशेषणमिति चिन्त्यमिदम्॥ **सुपि चे**त्यादावस्मदुक्तरीत्यैवात्रापि समाधानं बोध्यम्॥

**( तत्त्वालोकः )** प्रदीपे—**मा भूत्**—मा भूदिति। भाष्योक्तं खण्डयति—**तत्र गार्ग्येति। अत्र**—परमगार्ग्यायण इत्यत्र। **प्रत्ययः**—फक्। तन्मण्डयति—**तस्मादिति। लेखग्रहणेनेति**—'हृदयस्य हृल्लेख'त्यादिसूत्रे इति भावः। **तत्र**—तथा सति। **प्राधान्येनेति**—तस्य विशेषणत्वेनाश्रयणे हि तदन्तविधिरिति भावः। एवमग्रेऽपि।

उद्द्योते—दीक्षितोक्तं सिद्धान्तरीत्या सङ्गतिमुपस्थापयति—**यत्त्विति। विशेषणादिति**—समासेनेति भावः। **सः**—तदन्तविधिः। प्राचामनुरोधेनाह—**किञ्चेति। अस्यापि**—'प्रत्ययग्रहणे' इति वचनेन विधीयमानस्यापि तदन्तविधेः। **सौत्रस्यैव**—प्रकृतसूत्रेण विधीयमानस्यैव तस्य। **सः**—'समासप्रत्ययविधावि'त्यनेन विधीयमानः। एवमग्रेऽपि। **तत्स्यात्**—नत्वं स्यात्। ननु 'समासप्रत्ययविधावि'त्यनेनैव 'प्रत्ययग्रहणे चापञ्चम्याः' इत्यस्य गतार्थत्वमत आह—**समासेति। सौत्रस्य निषेधः**—प्रकृतसूत्रेण विधीयमानस्यैव तदन्तविधेर्निषेधः, न तु 'प्रत्ययग्रहणे' इत्यनेन विधीयमानस्य। **अस्य**—'प्रत्ययग्रहणे चापञ्चम्याः' इत्यस्य। **अधिकारादिति**—तेन यञिञोरित्यस्य विशेषणेऽपि प्रकृतसूत्रेण तदन्तविधेः (अर्थासङ्गत्या) असम्भवात् 'प्रत्ययग्रहणे' इति वचनेन विधीयमानस्य तस्येति शेषः। **तत्र**—'यञिञोश्चे'त्यत्र। **विशेषणमिति**—यञिञोरित्यस्येत्यादिः। **इत्यस्य**—इति निषेधस्य। **अयम्**—अत्र प्रकृतसूत्रेण विधीयमानस्तदन्तविधिः। **अत्रापि**—'यञिञोश्चे'त्यत्र प्रकृतसूत्रेण विधीयमानेऽपि। **एतदिति**—प्रकृतसूत्रेत्यर्थः। **च**—हि। **तत्र**—'प्रत्ययग्रहणे' इत्यत्र। **न्यायेति**—'प्रत्ययग्रहणे' इति न्यायेत्यर्थः। **उत्पत्तिरिति**—ढक इत्यादिः। **कैयटस्य**—कैयटोक्तस्य। **यस्माद्विहितः**—'प्रत्ययग्रहणे यस्मात्स विहितः'। **विशेषणत्वेन**—प्रत्ययेत्यादिः। **निषेधेति**—'अपञ्चम्याः' इति तदन्तविधिनिषेधेत्यर्थः। **अयम् निषेधः**—'अपञ्चम्याः' इति निषेधः। एवमग्रेऽपि। **वाचनिकेति**—'प्रत्ययग्रहणे' इतीत्यादिः। **अन्यथा**—उत्तरपदाधिकारे तदन्तविधौ। **सिद्धे**—अणन्तग्रहणादिष्टसिद्धौ। ननु घञन्तस्य लेख इत्यस्य ग्रहणार्थं तत्स्यादित्यत आह—**लेख इत्यणन्तमेवेति।** लेखग्रहणेनेति भावः। **विशेषणमिति**—न तु लृलुटोरित्याशयः। **चिन्त्यमिदमिति**—इत

एवारुचेः प्रदीपे वापक्षाश्रयणमिति भावः । **अत्रापीति**—ऌलुटोः परयोरित्यर्थेन कस्मादित्याकांक्षायामुपस्थितस्य स्यनासिविशेषणस्यापि धातोरित्यस्य तत्र विशेषणत्वेन 'अपञ्चम्याः' इति निषेधप्रवृत्तेरिति भावः ।

( ५५२ आक्षेपवार्तिकम् ॥ २९ ॥ )

## ॥ * ॥ अलैवानर्थकेन ॥ * ॥

( भाष्यम् )

**अलैवानर्थकेन, नान्येनानर्थकेनेति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**हन्ग्रहणे प्लीहन्ग्रहणं मा भूत् । उद्ग्रहणे गर्मुद्ग्रहणम् । स्त्रीग्रहणे शस्त्रीग्रहणम् । संग्रहणे पायसंग्रहणं मा भूत् ॥**

**( प्रदीपः ) अलैवानर्थकेनेति । अर्थवद्ग्रहणे नानर्थकस्येति** वर्णनिर्देशेषु नाश्रीयत इति स्थितम् । वर्णरूपतया यस्य शब्दस्याश्रयणं नार्थवत्तारूपमाश्रीयते, तत्र **वर्णग्रहणं च सर्वत्रे**त्यत्रव संग्रहणे जातिग्रहणाद्वर्णसमुदायग्रहणेऽनर्थकस्य ग्रहणं प्राप्तमनेन नियमेन निवार्यते । अलैवेति चैकत्वसंख्या गुणत्वाद्विवक्ष्यते । नियमविधानसामर्थ्याद्वा ॥ **हन्ग्रहण इति ।** तेन प्लीहानाविति दीर्घो भवति ॥ **उद्ग्रहण इति । उदः स्थास्तम्भोरित्यत्र । तेन** गर्मुत् स्थास्यतीति पूर्वसवर्णाभावः ॥ **शस्त्रीग्रहणमिति ।** तेन शस्त्र्याविति **स्त्रिया** इतीयङ् न भवति ॥ **पायसंग्रहणमिति ।** तेन पायसं करोतीति **संपर्युपेभ्य** इति सुट् न भवति । तत्र हन्ग्रहणे स्त्रीग्रहणे चाङ्गस्य विशेष्यत्वात् स्यात्तदन्तविधिः । **उदः स्थे**त्यत्र **तोरि**त्यधिकारात् तवर्गान्तस्योच्छब्देन विशेषणात् स्यात्तदन्तविधिः । प्रतिषेधविज्ञाने तु **न** भवति, उद एव तवर्गेण विशेष्यत्वात् तोरित्यस्य वा निवृत्तत्वात् । संग्रहणे पदप्रकरणात्तदन्तविधिः स्यादिति निवार्यते, पदेन समादयो विशेष्यन्ते इति तदन्तविध्यभावः । पायसं करोतीति करोतेर्भूषणार्थवृत्तिता संभवतीति सुट् स्यात् ॥

**( उद्द्योतः )** नन्वलानर्थकेनेत्ययुक्तं, **अर्थवत्**परिभाषाविरोधादत आह—**अर्थवदिति ॥ स्थितमिति ॥ स्वं रूप**मित्यत्रेति शेषः ॥ कुतो हेतोरित्यत आह—**वर्णरूपतया तस्येति । वर्णरूपतया यस्ये**ति पाठे **नार्थवत्तारूप**मित्यतः प्राक् **तस्य** इति शेषो बोध्यः ॥ **अर्थवत्तेति ।** तत्त्वसमानाधिकरणं रूपमित्यर्थः ॥ **वर्णसमुदायग्रहणं प्राप्त**मिति पाठेऽ**नर्थके**त्यादिः ॥ तदपि प्राप्तमिति शेषः ॥ **गुणत्वादिति ।** तदन्तविधिनियमशेषत्वादित्यर्थः ॥ वर्णसमुदायेन चेत्तदन्तविधिस्तर्ह्यर्थवत्तैवेति फलितम् ॥

अन्ये तु—अङ्गाधिकारे तदन्तविधेरतिप्रसङ्गस्य निवारणायेदम् । **वर्णग्रहणं चे**त्यन्वाख्यानवार्तिके ज्ञापकसिद्धजातिग्रहणे न मानम् । एवमलैवेत्यत्रापि । **एकत्वसङ्ख्या गुणत्वा**दित्यपि चिन्त्यम् । जातिपरत्वे तद्गतसङ्ख्याया एव तदुत्तरविभक्तिवाच्यत्वेन तद्विवक्षयापि दोषानुद्धारादित्याहुः ॥

**दीर्घो भवतीति । इन्हन्निति** नियमेनानिवर्तितत्वादिति भावः ॥ अर्थवत्परिभाषासिद्धार्थानुवादोऽयम् ॥ **संपर्युपेभ्य इति ।** वृत्तिपाठमनुसृत्येदम् ॥ **तस्योच्छब्देनेति । वा पदान्तस्ये**त्यतः पदग्रहणमनुवर्त्य तस्योदा विशेषणादुदन्तस्य पदस्येत्यर्थ उचितः ॥ नन्वव्यभिचारात्तवर्णोदो विशेषणं व्यर्थमत आह—**वा निवृत्तत्वादिति ॥**

पदग्रहणमपि फलाभावान्निवृत्तम्, विशेषणं चेत्यपि बोध्यम् ॥ **पदप्रकरणात् । एङः पदान्तादती**त्यतः ॥ नन्वत्र करोतिर्न भूषणार्थोऽत आह—**भूषणेति ।** पायसं भूषयतीत्यर्थसंभवादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**अनर्थकेनेति**-तदन्तविधिरिति शेषः । **नान्येन**—न त्वन्येन । **हन्ग्रहणे इति**—'इन्हन्पूषार्यम्णां शौ'ति सूत्रे इति भावः । **प्लीहन्**-शब्दो वामकुक्षिस्थमांसखण्डविशेषवाचकः । **गर्मुत्**—तृणविशेषः । **ग्रहणमिति**—मा भूदित्यनुषज्यते । एवमग्रेऽपि । **स्त्रीग्रहणे इति**—'स्त्रियाः' इति सूत्रे **इति** भावः । **संग्रहणे इति**—'सम्परिभ्यां करोतौ भूषणे' इति सूत्रे इत्याशयः । **मा भूत्**—मा भूदिति ।

प्रदीपे—**वर्णरूपतया तस्येति** पाठे-यत इत्यादिः । **तत्र**—तथा सति । **नियमेति**—प्रकृतेत्यादिः । **दीर्घः**—'सर्वनामस्थाने चासम्बुद्धावि'ति दीर्घः । तत्र—तेषां मध्ये । **'तोरि'त्यधिकारादिति**—'तोर्ली'त्यत इत्यादिः । **प्रतिषेधेति**-प्रकृतनियमेनेति भावः । **निवार्यते इति**—प्रकृतनियमेनेत्यादिः ।

उद्द्योते—**वर्णसमुदायेनेति**—तथा चेत्यादिः । कैयटोक्तं खण्डयति—**अन्ये त्विति । इदम्**—प्रकृतनियमविधानम् । **नियमेनेति**—प्लीहन्नित्यस्येति शेषः । **वृत्तिपाठम्**—'सम्परिभ्यामि'त्यत्र 'सम्पर्युपेभ्यः' इति वृत्तिपाठम् । कैयटोक्तं पुनर्दूषयति—**वा पदान्तेति ।** स्वोक्तप्रकारेऽप्याह—**पदग्रहणमिति ।**

( वार्तिकवैयर्थ्याक्षेपभाष्यम् )

**किमर्थमिदमुच्यते, न 'पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इत्येव सिद्धम् ॥ न चेदं तत्, नापि तदुत्तरपदम् ॥**

**( प्रदीपः ) किमर्थमिति । अलैवानर्थकेने**त्येतदाक्षिप्यते । अस्य हि नियमस्य प्लीहानावित्यादि प्रयोजनम् । तच्चान्यथा सिध्यति । अङ्गाधिकारे हन्ग्रहणं स्त्रीग्रहणं चास्ति । **एङः पदान्तादती**ति पदाधिकारे संग्रहणम् । **वा पदान्तस्ये**त्यतः पदग्रहणानुवर्तनादुदः **स्थास्तम्भो**रिति पूर्वसवर्णः पदाधिकारे विधीयते । **पदाङ्गाधिकार** इत्यत्र च केवलपदाधिकारोऽपि ग्रहीष्यते, उत्तरपदाधिकारोऽपि । ततश्च प्लीहानावित्यादिषु दोषो **न** भवति । न हि प्लीहानावित्यत्र हन्नित्यङ्गं नापि तदुत्तरपदमिति प्रश्नः ॥

**( उद्द्योतः ) केवलपदाधिकारोऽपीति ।** अन्यथाऽसन्देहायोत्तरपदेत्येव वदेदिति भावः ॥

भाष्ये—**नापीति ।** समासचरमावयवे तस्य रूढत्वादिति भावः ॥

**( तत्त्वालोकः )** भाष्ये—**इदम्**—'अलैवानर्थकेने'ति वार्तिकम् । काक्वा पृच्छति—**नेति ।** किं नेत्यर्थः । **न च**—न हि । **इदम्**—प्लीहन्नित्यादि । **तत्**—हन्नित्यादि । **तदुत्तरपदम्**—हन्नित्याद्युत्तरपदकम् । तथा च—'पदाङ्गाधिकारे' इति परिभाषयैव प्लीहानावित्यादिसिद्धेः 'अलैवानर्थकेने'ति वार्तिकं व्यर्थमेवेति भावः ।

प्रदीपे—**अङ्गाधिकारे इति**—तथाहीत्यादिः । **इति प्रश्नः**—इति हेतोः प्रश्नः ।

( परिभाषानावश्यकत्वलाघवभाष्यम् )

**तन्न वक्तव्यं भवति ॥**

**( प्रदीपः ) तन्न वक्तव्यमिति । पदाङ्गाधिकार** इत्येतदित्यर्थः । **अलैवानर्थकेने**ति वचनेनार्थवता तदन्तविधिसद्भावादिति भावः ॥

( उद्द्योतः ) नन्वेवं तदन्तविध्यभावे वृत्रहणावित्याद्यसिद्धिः। तदन्तविधौ तु प्लीहानावित्यत्र दोषोऽत आह—**अलैवेति** ॥

( तत्त्वालोकः ) भाष्ये—**भवति**—भवतीत्यर्थम्।
उद्द्योते—**एवम्**—'पदाङ्गाधिकारे' इति विहाय 'अलैवानर्थकेने'ति करणे। **तदन्तेति**—इन्ग्रहणादिष्वित्यादिः।

( आक्षेपभाष्यम् )

**किं पुनरत्र ज्यायः ? ॥**

( तत्त्वालोकः ) अत्र—'अलैवानर्थकेने'ति वार्त्तिक-'पदाङ्गाधिकारे' इति परिभाषयोः।

( समाधानभाष्यम् )

**तदन्तविधिरेव ज्यायान्। इदमपि सिद्धं भवति—परमातिमहान्। एतद्धि नैव तद्, नापि तदुत्तरपदम् ॥**

( प्रदीपः ) **तदन्तविधिरेवेति**। प्राथमकल्पिकः सूत्रेणैव तदन्तविधिः। स एव त्वलैवानर्थकेनेति नियम्यते॥ **परमातिमहानिति**। परमश्चासावतिमहानिति समासः। तत्र परमादिर्महच्छब्दो न भवति, नापि महच्छब्दोत्तरपदः, अतिमहच्छब्दोत्तरपदत्वादिति **सान्तमहत** इति दीर्घत्वं न स्यात्। अनेनैव न्यायेनोगिल्लक्षणो नुमागमोऽपि न स्यात्। तदन्तविधिना तु भवति ॥

( उद्द्योतः ) ननु वार्त्तिकोक्तोऽपि फलतस्तदन्तविधिरेवेत्यत आह—**प्राथमेति**। सौत्रतदन्तविधिरेव ज्यायान्, न तु वार्त्तिकोक्तोत्तरपदस्येत्यंश इति नियम आवश्यक इति भावः॥ **परमादिरिति**। परमादिः समास उद्देश्यः, महच्छब्दो न भवतीति विधेयं बोध्यम् ॥

( तत्त्वालोकः ) भाष्ये—**इदमपीति**—येनेत्यादिः। **एतद्धीति**—न चेदम् 'पदाङ्गाधिकारे' इति परिभाषया सिद्ध्यतीत्यादिः।
प्रदीपे—**सूत्रेणैव**—प्रकृतसूत्रेणैव। **नियम्यते इति**—तथा च-नाक्षेपसमाधानयोरसङ्गतिरिति भावः। **परमादिः**—परमातिमहच्छब्दः।
उद्द्योते—**वार्त्तिकेति**—'पदाङ्गाधिकारे' इति परिभाषेत्यर्थः। एवमग्रेऽपि। तस्योपादानेनैव सिद्धत्वादाह—**फलत इति**। 'तदन्तविधिरेवे'ति भाष्ये नियमपदानुपादानादाह—**सौत्रेति**। **नियमः**-प्रकृतनियमः।

( ५५३ प्रयोजनवार्तिकम् ॥ ३० ॥ )

## ॥ * ॥ अनिनस्मन्ग्रहणानि च ॥ * ॥

( भाष्यम् )

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥**

**अन्—राज्ञेत्यर्थवता, साम्नेत्यनर्थकेन। अन् ॥ इन्—दण्डीत्यर्थवता, वाग्ग्मीत्यनर्थकेन। इन् ॥ अस्—सुपया इत्यर्थवता, सुस्रोता इत्यनर्थकेन। अस् ॥ मन्—सुशर्मा इत्यर्थवता, सुप्रथिमा इत्यनर्थकेन। मन् ॥**

( प्रदीपः ) **सुस्रोता इति**। अनागमकानां सागमका आदेशा इत्याश्रयणादत्रास आनर्थक्यम्। **अर्थवतो ह्यागम** इति न्यायाश्रये त्वर्थवानेवास्शब्दः॥

( उद्द्योतः ) भाष्ये—**अन्निति**। अल्लोपोऽनः, इन्हन्पूषेति, अत्वसन्तस्य, **मन** इत्यादिषु वर्तमानानीत्यर्थः॥ **अर्थवानेवासिति**। इदं चिन्त्यम्, कृते आगमे तद्विशिष्टस्यैवार्थवत्ताया न्याय्यत्वादन्यत्र भाष्ये स्पष्टमुक्तत्वाच्च ॥

( तत्त्वालोकः ) भाष्ये—**राज्ञेति**—अत्र 'राजृ दीप्तौ' इति धातोः 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इत्युणादिसूत्रेण कनिन्प्रत्ययः। **साम्नेति**—अत्र 'षै क्षये' इति धातोः 'सातिभ्यां मनिन्मनिणौ' इत्युणादिसूत्रेण मनिन्प्रत्ययः। **दण्डीति**—अत्र दण्डशब्दाद् 'अत इनिठनौ' इति सूत्रेणेनिप्रत्ययः। **वाग्ग्मीति**—अत्र वाच्शब्दाद् 'वाचो ग्मिनिः' इति सूत्रेण ग्मिनिप्रत्ययः। **सुपया इति**—अत्र 'पय गतौ' इति धातोः 'सर्वधातुभ्योऽसुन्नि'त्युणादिसूत्रेणासुन्प्रत्यये, शोभनानि पयांसि यस्येति विग्रहे बहुव्रीहिसमासः। एवमग्रेऽपि। **सुस्रोता इति**—अत्र 'स्रु गतौ' इति धातोः 'स्रुरिभ्यां तुट् चे'त्युणादि—सूत्रेणासुन्प्रत्ययस्तुडागमश्च। **सुशर्मेति**—अत्र सूपसर्गकात् 'शॄ हिंसायामि'ति धातोः 'मिथुने मनिः' इत्युणादिसूत्रेण मनिप्रत्ययः। **सुप्रथिमेति**—अत्र पृथुशब्दात् 'पृथ्वादिभ्य इमनिज्वे'ति सूत्रेणेमनिच्प्रत्यये सुगता प्रथिमानमिति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'ति वार्त्तिकेन तत्पुरुषसमासः।
प्रदीपे—**आश्रयणादिति**—सतुडसुनो विधानादिति भावः। **आश्रये त्विति**—पार्थक्येनासुनस्तुटश्च विधानादिति भावः।
उद्द्योते—कैयटोक्तं खण्डयति—**इदमिति**। **कृते इति**—तुटः प्रागसोऽर्थवत्त्वेऽपीत्यादिः।

---

( तदन्तसंज्ञापवादनिरूपणम् )

( ५५४ आक्षेपवार्तिकम् ॥ ३१ ॥ )

## ॥*॥ यस्मिन्विधिस्तदादावल्ग्रहणे ॥*॥

( भाष्यम् )

**यस्मिन्विधिस्तदादाविति वक्तव्यम् ॥**

**किं प्रयोजनम् ? ।**

**'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' इति इहैव स्यात्—श्रियौ भ्रुवौ। श्रियो भ्रुव इत्यत्र न स्यात् ॥ येन विधिस्तदन्तस्य ॥ ७२ ॥**

( प्रदीपः ) **यस्मिन्विधिरिति**। तदन्तविध्यपवादस्तदादिविधिः। अत एव विशेषणेन भवति, नान्येन ॥ ७२ ॥

( उद्द्योतः ) **नान्येनेति**। अत एवैको यणचीत्यादौ न दोषः॥ **यस्मिन्विधिरिति** वाचनिकमेव। **यस्मिन्निति** सप्तम्यन्तोपलक्षणम्। सप्तम्यन्तं यत्र विशेषणं तत्रेति यावत् ॥ ७२ ॥

( तत्त्वालोकः ) प्रदीपे—**तदन्तेति**—सौत्रेत्यादिः।
उद्द्योते—**न दोषः**—न तदादिविधिप्रसङ्गः॥

( अथ वृद्धसंज्ञाप्रकरणम् )

( ६६ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. । १२ सू. )

# वृद्धिर्यस्याचामादिस्तद् वृद्धम्॥१।१।७३॥

( तत्तत्पदकृत्यनिर्वचनाधिकरणम् )

( आक्षेपभाष्यम् )

**वृद्धिग्रहणं किमर्थम् ? ।**

**( प्रदीपः ) वृद्धिर्यस्या ॥ ७३ ॥ वृद्धिग्रहणमिति ।** असति वृद्धिग्रहणे कथं सर्वस्य वृद्धसंज्ञा न भवतीति चेत् । यस्याचामादिर्भिन्नजातीयो हल् तद्वृद्धमित्यजादि व्यावर्तितं स्यात् ॥

**( उद्द्योतः ) वृद्धिर्यस्या ॥ ७३ ॥** ननु वृद्धिग्रहणाभावे सर्वत्र वृद्धसंज्ञायां विशेषणान्तराणां वैयर्थ्यमेव स्यादिति तन्मात्राक्षेपोऽनुपपन्न इति शङ्कते—**असतीति ।** सङ्कोचे प्रमाणाभावादच्शब्देन सर्वेष्वक्षु गृहीतेषु तदादिः समीपो हलेव भवतीति परिहरति—**यस्येति ॥**

**( तत्त्वालोकः )** उद्द्योते—**तन्मात्रेति**—वृद्धिग्रहणमात्रेत्यर्थः । **तदादिः**—तेषामचामादिः ।

( समाधानभाष्यम् )

**'यस्याचामादिस्तद् वृद्धम्' इतीयत्युच्यमाने 'दात्ता राक्षिताः' अत्रापि प्रसज्येत । वृद्धिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**( प्रदीपः ) दात्ता इति ।** असति वृद्धिग्रहणे निर्धारणहेतोर्धर्मस्यानुपादानादादिशब्दः समीपार्थो विज्ञायेत । दत्तशब्दो रक्षितशब्दश्चात्र क्रियाशब्दो द्रष्टव्यः । नामधेयस्य तु पक्षे भवत्येव वृद्धसंज्ञा । **प्रस्थेऽवृद्ध**मित्यत्र यदा नामधेयत्वादवृद्धाः पक्षे कर्क्यादयस्तदर्थं प्रतिषेधः स्यात् ॥

**( उद्द्योतः )** नन्वचामिति निर्धारणे षष्ठी । निर्धारणं च तुल्यजातीयस्येति यस्यादिरचां मध्ये कश्चिदिति विज्ञायमाने दत्तादौ नातिप्रसक्तिरत आह—**असतीति ॥ समीपार्थ इति ।** पूर्वसमीपार्थ इत्यर्थः । एवं च तन्निरूपितसंबन्धे षष्ठी, न तु निर्धारण इति भावः ॥ यस्याचामादिर्हलित्यर्थः स्यादिति तात्पर्यम् ॥ **नामधेयस्य त्विति । वा नामधेयस्ये**ति वचनादिति भावः ॥ भाष्ये-**अत्रापीति ।** अण्प्रकृतावित्यर्थः ॥ नन्वेवं हलादेः सर्वस्य वृद्धत्वे **प्रस्थेऽवृद्ध**मिति सूत्रे कर्क्यादिप्रतिषेधोऽनर्थकोऽत आह—**प्रस्थ इति ॥**

**( तत्त्वालोकः )** भाष्ये—**प्रसज्येतेति**—वृद्धसंज्ञेति भावः । एवमग्रेऽपि ।

उद्द्योते—**यस्याचामिति**—तथा चेत्यादिः ।

( आक्षेपभाष्यम् )

**अथ यस्यग्रहणं किमथम् ? ॥**

( समाधानभाष्यम् )

**यस्येति व्यपदेशाय ॥**

**( प्रदीपः ) यस्येति व्यपदेशायेति ।** संज्ञिन इति शेषः । अन्यथा तच्छब्देन किं प्रत्यवमृश्येत । तदित्यस्यानुपादाने च वृद्धेरेव वृद्धसंज्ञाप्रसङ्गः ॥

**( उद्द्योतः ) तदित्यस्यानुपादान इति ।** तदित्यस्याप्यनुपादाने इत्यर्थः ॥ **वृद्धेरेवेति ।** तथा च प्रदेशेषु त्यदादिविषये मुख्यो वृद्धशब्दोऽन्यत्र वृद्धघटिते लाक्षणिक इति वैरूप्यप्रसङ्ग इति भावः ॥

**( तत्त्वालोकः )** उद्द्योते—**तथा च**—वृद्धेरेव वृद्धसंज्ञायाञ्च । **प्रदेशेषु**—'वृद्धाच्छः' इत्यादिषु । **मुख्य इति**—'त्यदादीनि चे'ति सूत्रेण त्यदादीनां वृद्धसंज्ञाविधानादिति भावः । **वृद्धघटिते**—शालादिविषये ।

( आक्षेपभाष्यम् )

**अथाज्ग्रहणं किमर्थम् ? ॥**

( समाधानभाष्यम् )

**'वृद्धिर्यस्यादिस्तद् वृद्धम्' इतीयत्युच्यमाने इहैव स्यात्—ऐतिकायनीयाः औपगवीयाः । इह न स्यात्—गार्गीया वात्सीया इति । अज्ग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**( प्रदीपः ) गार्गीया इति ।** न हि गार्ग्यशब्दस्य वृद्धिरादिः । किं तर्हि हल् । **मालादीनां चे**त्येतत्तु नामधेयार्थं स्यात् ॥

**( उद्द्योतः )** ननु **मालादीना**मिति लिङ्गादादिसहचरिता यस्य वृद्धिस्तस्यापि संज्ञा स्यादत आह—**मालादीति ।**

**( तत्त्वालोकः )** भाष्ये—**स्यादिति**—वृद्धसंज्ञेति भावः । एवमग्रेऽपि । **इह**—इह तु । एवमग्रेऽपि ।

प्रदीपे—**नामधेयार्थमिति**—'वा नामधेयस्ये'ति वार्त्तिकेन नामधेयस्य वृद्धसंज्ञाविधानादिति भावः ।

उद्द्योते—अज्ग्रहणाभावे मालादीनां वृद्धसंज्ञाऽनुपपत्तेः 'प्रस्थेऽवृद्धमि'त्यनेनैवाद्युदात्तसिद्धेः 'मालादीनाञ्चे'त्यस्य वैयर्थ्यादाह—**मालादीनामिति लिङ्गादिति । संज्ञा**—वृद्धसंज्ञा ।

( आक्षेपभाष्यम् )

**अथादिग्रहणं किमर्थम् ? ॥**

**( उद्द्योतः )** भाष्ये—**अथादीति ।** **अचा**मिति षष्ठ्युपादानसामर्थ्यादादिशब्दोऽध्याहरिष्यत इति प्रश्नः ॥

**( तत्त्वालोकः )** उद्द्योते—**इति प्रश्नः**—इति हेतोः प्रश्नः ।

( समाधानभाष्यम् )

**'वृद्धिर्यस्याचां तद् वृद्धम्' इतीयत्युच्यमाने—सभासंनयने भवः साभासंनयनः—इत्यत्रापि प्रसज्येत । आदिग्रहणे पुनः क्रियमाणे न दोषो भवति ॥**

**( प्रदीपः ) सभासंनयन इति ।** सति चेहादिग्रहणे **आद्यन्तव**त्सूत्र एकग्रहणस्य सभासंनयनशब्दः प्रत्युदाहरणम् । असति त्विहादिशब्दे दरिद्रातेरिवर्णान्तलक्षणस्याचोऽभाव एकग्रहणस्य प्रयोजनम् ॥ **अचा**मिति तु बहुत्वसंख्याविवक्षार्थं स्यात् ॥

**( उद्द्योतः )** यस्यावयविनोऽवयवानामचां मध्ये वृद्धिरप्यवयव इत्यध्याहारं विनैवार्थसंभवेऽध्याहारे मानाभाव इत्युत्तराशयः ॥ तत्र प्रसङ्गादादिग्रहणसत्त्वासत्त्वयो**राद्यन्तव**त्सूत्रस्यैकग्रहणप्रयोजनं दर्शयति—**सति चेति ।** असत्येकग्रहणे पूर्वसहितेऽपि भाष्याद्याकारे आदिवत्त्वात् सभासंनयनस्यापि वृद्धत्वं स्यादिति भावः ॥ **अच इति । एरच** इत्यर्थः । तत्र हि **धातो**रित्यधिकार इति भावः ॥ घञचोः स्वरे विशेषः ॥ **नन्वेवं** यस्य वृद्धिरवयव इत्येव सिद्धेऽचामिति व्यर्थमत आह—**अचामितीति ।** तथा च राट्

शब्दाद्वैर्वृद्धत्वं नेति भावः ॥ कृते त्वादिग्रहणे यत्र वृद्धेरादित्वमेवाजपेक्षया न त्वनादित्वं तस्यैव तेन ग्रहणान्न सभासंनयने दोषः ॥ अचामिति बहुत्वमविवक्षितं, तेन मालीयादिसिद्धिः ॥

**( तत्त्वालोकः )** उद्द्योते—अध्याहारमिति—आदिशब्दस्येति भावः। एवमग्रेऽपि। नन्वेवं मालादीनां द्व्यच्कत्वाद् वृद्धसंज्ञा न स्यादित्यत आह—अचामितीति।

---

**( सूत्रोपपादनाधिकरणम् )**

**( ५५५ आक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ वृद्धसंज्ञायामजसंनिवेशादनादित्वम् ॥ * ॥

**( भाष्यम् )**

**वृद्धसंज्ञायामजसंनिवेशादादिरित्येतन्नोपपद्यते । न ह्यचां संनिवेशोऽस्ति ॥**

**( प्रदीपः ) न ह्यचामिति।** सर्वस्य प्रातिपदिकस्याज्झल्समुदायरूपत्वात्। अचामित्यनेन केवलानामचां समुदायः संनिवेशरूपो निर्दिष्टः। पौर्वापर्येणावस्थानं संनिवेशः। स च केवलानामचां नास्ति ॥

**( उद्द्योतः )** ननु यत्र हलघटिता अच एव संनिविष्टास्तत्रास्य प्रवृत्तिरुचिता, न तु हलन्तरितेष्वस्तु इति मन्यमानः शङ्कते—भाष्ये-वृद्धसंज्ञायामिति ॥ नन्वस्त्येव मातृकापाठे सन्निवेशोऽत आह—सर्वस्येति। वृद्धत्वप्रयुक्तकार्यभाज इत्यर्थः। वृद्धत्वनिबन्धनकार्यस्य प्रातिपदिके सत्त्वादिति भावः ॥ अचामित्यनेन केवलानामिति। सर्वपदानां सावधारणत्वेन प्रथमतस्तथैव प्रतीतेरिति भावः। अज्मात्रसंबन्धिनो यस्य समुदायस्यादिर्वृद्धिरित्यर्थः स्यादिति तात्पर्यम् ॥

**( तत्त्वालोकः )** उद्द्योते—अस्य—प्रकृतसूत्रस्य। अज्मात्रेति—तथा चेत्यादिः। इत्यर्थः—इत्याद्यर्थः

**( आक्षेपबाधकभाष्यम् )**

**ननु चैवं विज्ञायते—अजेवादिरिति ॥**

**( प्रदीपः ) ननु चैवमिति।** अच्संनिवेशस्यासंभवादचां मध्येऽजपेक्षया यस्य वृद्धिरादिरिति विज्ञास्यत इत्यर्थः ॥

**( उद्द्योतः )** ननु प्रथमान्ताच्पदाभावादजेवादिरित्ययुक्तमत आह—अजिति। निर्धारणषष्ठ्याश्रयणान् निर्धारणस्य समानजातीयविषयत्वाच्च तल्लाभ इति भावः ॥ अज्झल्समुदायेऽप्यजपेक्ष एवादिर्गृह्यते इति भाष्याक्षरार्थः ॥

**( तत्त्वालोकः )** उद्द्योते—तल्लाभः—अजेवादिरिति लाभः।

**( आक्षेपसाधकभाष्यम् )**

**नैवं शक्यम्। इहैव प्रसज्येत—औपगवीयाः। इह न स्यात्—गार्गीयाः ॥**

**( प्रदीपः ) नैवं शक्यमिति।** वृद्धिविशेषणार्था निर्धारणे षष्ठी स्यात्—अचां मध्ये अजूपा या वृद्धिरित्याकारस्य निवृत्तिप्रसङ्गः। आकारो ह्यजेव सन् केवलमच्कार्याणि अनुपकश्चाणेन लभते। ततश्चाश्वलायन इत्यत्र न स्याद्। गार्ग्य इत्यत्र चाकारस्यानच्त्वात् समुदायानादित्वाच्च न स्यात् ॥

**( उद्द्योतः ) वृद्धिविशेषणार्थेति।** तस्याः प्रधानत्वादचामिति तस्या एव विशेषणं स्यादित्यर्थः ॥ यदीयादिर्वृद्धिरजमध्यवर्तिनीत्यर्थः। निर्धार्यमाणनिर्धारणावध्योः सजातीयत्वाच्च वृद्धेरच्त्वलाभः। तत्र वृद्धेरच्त्वाव्यभिचाराद् विशेषणसामर्थ्येन आक्षरसमाम्नायिकाज्रूपलक्षणवृद्धिपरिग्रह इति भावः ॥ **आकारस्य निवृत्तिप्रसङ्ग इति।** वृद्धसंज्ञानिमित्तत्वनिवृत्तिराकारस्य स्यादित्यर्थः ॥ तत्रासाधारणं प्रत्युदाहरणमाह—ततश्चेति ॥ भाष्योक्तस्य साधारणत्वं ध्वनयन्नाह— समुदायेति। यस्येत्याद्यपेक्षया षष्ठीति भावः ॥

**( तत्त्वालोकः )** भाष्ये—शक्यमिति—विज्ञातुमित्यादिः। यतस्तथा सतीति शेषः।

प्रदीपे—आकारस्य निवृत्तीति—तथा चेत्यादिः। ततश्च—आकारस्यानच्त्वेन वृद्धसंज्ञानिमित्तत्वनिवृत्तेश्च। न स्यादिति—वृद्धसंज्ञेत्यादिः। एवमग्रेऽपि। अनादित्वाच्चेति—वृद्धसंज्ञानिमित्तत्वस्य निवृत्तेरिति शेषः।

उद्द्योते—तस्याः—वृद्धेः। यदीयेति—एवञ्चेत्यादिः। तत्र—तथा सति। लक्षणेति—इदमधिकम्प्रतिभाति। आद्यपेक्षया—आदिनिरूपितसम्बन्धे। तथा च—अचां मध्ये आक्षरसमाम्नायिकाज्रूपा वृद्धिर्यस्य प्रातिपदिकस्यादिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः।

**( आक्षेपबाधकभाष्यम् )**

**एकान्तादित्वं तर्हि विज्ञायते ॥**

**( प्रदीपः ) एकान्तादित्वमिति।** एकान्ता अवयवा अचः प्रातिपदिकस्य तेषामचाम् आदिर्वृद्धिर्यस्य तद्वृद्धमित्यर्थः ॥

**( उद्द्योतः )** एवं यस्येत्याद्युपजनितव्यतिरेके षष्ठीमङ्गीकृत्याचामिति निर्धारणषष्ठ्यां दोषोऽभिहितः, अजुपजनितव्यतिरेके यस्येति षष्ठ्यामपि तं वक्तुं भाष्ये—एकान्तादित्वमित्युक्तम् ॥ तद्व्याचष्टे—एकान्ता इति। यस्य प्रातिपदिकस्येति संबन्धः। एवं च यत्प्रातिपदिकावयवभूतानामचामादिर्वृद्धिस्तत्प्रातिपदिकं वृद्धमिति सूत्रार्थः ॥

**( तत्त्वालोकः )** उद्द्योते—उपजनितव्यतिरेके—निरूपितसम्बन्धे। एवमग्रेऽपि। अजुपेति—अचुनेत्यादिः। तं—दोषम्।

**( ५५६ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )**

## ॥*॥ एकान्तादित्वे च सर्वप्रसङ्गः ॥*॥

**( भाष्यम् )**

**इहापि प्रसज्येत—सभासन्नयने भवः साभासन्नयन इति ॥**

**( प्रदीपः ) सर्वप्रसङ्ग इति।** न ह्यत्र विशेष उपादीयते—सर्वेषामचामादिर्वृद्धिरिति। ततश्च मध्येऽपि वर्तमान आकारोऽन्याजपेक्षया आदिरिति सभासन्नयने संज्ञाप्रसङ्गः। आदिग्रहणं त्वन्त्यनिवृत्त्यर्थं स्यात्—खट्वेति ॥

**( उद्द्योतः )** नन्वादिशब्दोपादानादेव सर्वेषामचामिति लप्स्यतेऽत आह—आदिग्रहणमिति ॥

**( तत्त्वालोकः )** प्रदीपे—वृद्धिरितीति—किन्तु संघटकानामचामादिर्वृद्धिरितीति शेषः। संज्ञेति—वृद्धसंज्ञेत्यर्थः।

( ५५७ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धमजाकृतिनिर्देशात् ॥ * ॥

( भाष्यम् )

सिद्धमेतत् ॥

कथम् ? ।

'अजाकृतिनिर्देशात्' । अच आकृतिर्निर्दिश्यते ॥

( प्रदीपः ) **सिद्धमिति** । उभयरूपत्वेऽपि प्रातिपदिकस्याजाकृतिरचामिति वचनादाश्रीयते । विद्यमानापि हलाकृतिर्न विवक्ष्यते । तेनायमर्थः—यस्य शब्दस्य सकलाजपेक्षया वृद्धिरादिस्तद्वृद्धमिति । यथा—पङ्क्तौ ब्राह्मणानामादिमानयेत्युक्ते सतोऽपि शूद्रादीननादृत्य ब्राह्मणजातीयापेक्षया यो ब्राह्मण आदिः स आनीयते ॥

( उद्द्योतः ) **उभयरूपत्वेऽपीति** । अज्झलरूपत्वेऽपीत्यर्थः । **यस्येति** नाचां विशेषणम्, तेषामन्यविशेषणत्वात् । नाप्यादेः, व्यवहितत्वात् । किन्तु वृद्धेः । अचामिति चादेर्विशेषणं, संनिधानात् । न वृद्धेः, व्यवहितत्वात् । एवं च यस्य वृद्धिरचामादिरित्युक्ते लब्धस्याजपेक्षादित्वस्योपपत्तये मध्ये वर्तमानापि हलाकृतिर्न विवक्ष्यत इति भावः ॥ **सकलाजिति** । सङ्कोचे मानाभावादिति भावः ॥ **सतोऽपीति** । आदौ मध्ये वेति शेषः ॥

( तत्त्वालोकः ) भाष्ये—**अच आकृतिरिति**—यत इत्यादिः । प्रदीपे—**विद्यमानापीति**—किन्त्वित्यादिः । **अर्थः**—सूत्रार्थः । उद्द्योते—**अन्यविशेषणत्वादिति**—'नह्युपाधेरुपाधिर्भवति, विशेषणस्य च विशेषणमि'ति न्यायादिति भावः ।

( आक्षेपभाष्यम् )

एवमपि व्यञ्जनैर्व्यवहितत्वान्न प्राप्नोति ॥

( तत्त्वालोकः ) **न प्राप्नोतीति**—वृद्धसंज्ञेति भावः ।

( ५५८ समाधानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ व्यञ्जनस्याविद्यमानत्वं यथान्यत्र ॥ * ॥

( भाष्यम् )

व्यञ्जनस्याविद्यमानवद्भावो वक्तव्यः । 'यथाऽन्यत्र' । यथाऽन्यत्रापि व्यञ्जनस्याविद्यमानवद्भावो भवति ॥

कान्यत्र ? ।

स्वरे ॥

( प्रदीपः ) **व्यञ्जनस्येति** । **अचामिति** वचनाद्विद्यमानान्यपि व्यञ्जनानि न विवक्षितानीत्यर्थः ॥ **यथाऽन्यत्रेति** । यथा स्वरविधावयोग्यत्वाद्व्यञ्जनमविद्यमानवदेवमिहाप्यचामिति वचनादित्यर्थः ॥ **ह्रस्वनुड्भ्यामिति** स्वरविधौ नुड्ग्रहणाल्लिङ्गाद्व्यञ्जनं व्यवधायकमेवेत्युदश्वित्वानिति मतुप उदात्तत्वं न प्रवर्तते ॥

( उद्द्योतः ) **अचामितीति** । केवलाच्संनिवेशासंभवादिति भावः ॥ **स्वरविधाविति** । स्वरे विधेये इत्यर्थः ॥ **अयोग्यत्वादिति** । स्वराणामजधर्मत्वादिति भावः ॥ अत एव **यतोऽनाव** इति अनाव इति प्रतिषेधः सार्थकः ॥ **नुड्ग्रहणादिति** । हल्स्वरप्राप्तिविषयकत्वाबाध इति ज्ञापकमिति भावः ॥ अन्यथा नुटोऽविद्यमानवत्त्वादक्षण्वानित्यादौ ह्रस्वादित्येव मतुप उदात्तत्वं सिद्धमिति तद्वैयर्थ्यं स्यादिति तात्पर्यम् ॥

( तत्त्वालोकः ) प्रदीपे—**विद्यमानान्यपीति**—मध्ये इत्याशयः । **ह्रस्वेति**—किन्त्वित्यादिः ।

उद्द्योते—**अत एव**—व्यञ्जनस्याविद्यमानवत्त्वादेव । अन्यथा तत्राच आदित्वाभावादेवोदात्तत्वस्याप्राप्तेस्तत्प्रतिषेधो व्यर्थः स्यादिति भावः । **ज्ञापकम्**—व्यञ्जनाविद्यमानवत्त्वस्य ज्ञापकम् । **तद्वैयर्थ्यम्**—नुड्ग्रहणवैयर्थ्यम् ।

---

( न्यूनतापूर्त्यधिकरणम् )

( ५५९ आक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ वा नामधेयस्य ॥ * ॥

( भाष्यम् )

वा नामधेयस्य वृद्धसंज्ञा वक्तव्या ॥ दैवदत्तीयाः । दैवदत्ताः । याज्ञदत्तीयाः । याज्ञदत्ताः ॥

( प्रदीपः ) **वा नामधेयस्येति** । पौरुषेयं नाम गृह्यते ॥

( उद्द्योतः ) **पौरुषेयमिति** । आधुनिकमित्यर्थः ॥ **गृह्यत इति** । अत्र वार्तिके इत्यादिः । अत एवैङ्प्राचां देशे इति चरितार्थम्, रूढमात्रस्य नामत्वेन ग्रहणे तद्वैयर्थ्यं स्पष्टमेव । घटीय इति तु गहादित्वात्साधु । घाट इति त्वसाधु । अत एव भाष्ये देवदत्तशब्द उदाहृत इति भावः ॥

( ५६० आक्षेपवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ गोत्रोत्तरपदस्य च ॥ * ॥

( भाष्यम् )

गोत्रोत्तरपदस्य च वृद्धसंज्ञा वक्तव्या ॥

कम्बलचारायणीयाः । ओदनपाणिनीयाः । घृतरौढीयाः ॥

( प्रदीपः ) **कम्बलचारायणीया इति** । कम्बलप्रियस्य चारायणस्य शिष्या इत्यर्थः ॥ **ओदनपाणिनीया इति** । पणिनोऽपत्यमित्यण् । **गाथिविदथी**ति प्रकृतिभावाट्टिलोपाभावः । पाणिनस्यापत्यं युवेतीञ्, तस्य छात्रा इति विवक्षिते **यूनि लुगि**तीञो लुक्, **तेनेञश्चे**त्यण् न भवतीति छो भवति ॥

( उद्द्योतः ) **युवेतीञिति** । प्रकृते च गोत्रत्वेनाप्रत्ययाभावात्, अपत्याधिकारादन्यत्वादिति भावः ॥ नन्वोदनपाणिनीय इत्यत्र वृद्धत्वे च्छोऽसमस्तवदतिदेशे इञन्तत्वादिञश्चेत्यणिति भेदः स्यादत आह—**तेनेञश्चेति** । येन यूनि विहितो न गोत्रे, तेनेत्यर्थः । **इञश्चे**त्यत्र गोत्र इति वर्तते । पारिभाषिकं च तत्र गोत्रं गृह्यते इति भावः ॥ यत्तु तेन लुकेति ॥ तन्न ॥ प्रत्ययलक्षणस्य दुर्वारत्वात् ॥

( तत्त्वालोकः ) प्रदीपे—**पणिनोऽपत्यम्**—पणनं पणः, 'घञर्थे कविधानमि'ति तस्मात्कस्य विधानात् । सोऽस्यास्तीति पणी, पणिनो गोत्रापत्यम् । **प्रकृतीति**—पणिन इत्यादिः ।

उद्द्योते—**वर्त्तते**—'कण्वादिभ्यो गोत्रे' इत्यतोऽनुवर्त्तते ।

( ५६१ वार्तिकन्यासान्तरम् ॥ ७ ॥ )

## ॥ * ॥ गोत्रान्ताद्वाऽसमस्तवत् ॥ * ॥

( भाष्यम् )

गोत्रान्ताद्वा असमस्तवत्प्रत्ययो भवतीति वक्तव्यम् ॥ एतान्येवोदाहरणानि ॥

( उद्द्योतः ) भाष्ये-गोत्रान्ताद्वेति । गोत्रप्रत्ययान्तोत्तरपदादित्यर्थः ॥ चारायणो गोत्रान्तो यथाऽसमासे वृद्धत्वाच्छं लभते तथा समासे वृद्धत्वाभावेऽपीत्यर्थः ॥ वेत्यनेन वृद्धसंज्ञा वा कर्तव्या, इदमुपसङ्ख्यानं वेत्युक्तं भवति ॥

( तत्त्वालोकः ) उद्द्योते—शैषिकाधिकारे 'प्राग्दीव्यतोऽणि'त्यत्र वा इत्थमतिदेशः कर्तव्यः, न तु 'गोत्रोत्तरपदस्य चे'ति वार्त्तिकं वृद्धसंज्ञाविधायकम्; तथा सति हि—पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वा इत्यत्र 'वृद्धाच्छः' इति छः प्रसज्येतेत्याशयेनाह—इदमुपेति।

( आक्षेपभाष्यम् )

किमविशेषेण ? ।

( समाधानभाष्यम् )

नेत्याह ।

( ५६२ शेषवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ जिह्वाकात्यहरितकात्यवर्जम् ॥ * ॥

( भाष्यम् )

जिह्वाकात्यं हरितकात्यं च वर्जयित्वा । जैह्वाकाताः हारितकाताः ।

(उद्द्योतः) भाष्ये—जिह्वाकात्यादिवर्जनं वृद्धसंज्ञापक्षेऽपि द्रष्टव्यम् ।

( तत्त्वालोकः ) भाष्ये—कतशब्दो गर्गादिगणान्तर्गतः । जिह्वाचपलः कात्यो जिह्वाकात्यः, हरितवर्णः कात्यो हरितकात्यः । तस्य छात्रा इत्यर्थेऽणेव भवतीत्याशयेनाह—जैह्वाकाता इति ।

उद्द्योते—अपिना—असमस्तवत्त्वातिदेशपक्षस्य परिग्रहः ।

( आक्षेपभाष्यम् )

किं पुनरत्र ज्यायः ? ।

( तत्त्वालोकः ) अत्र—'गोत्रोत्तरपदस्य चे'ति—'गोत्रान्ताद्वाऽसमस्तवदि'ति वार्त्तिकयोः ।

( समाधानभाष्यम् )

*गोत्रान्ताद्वाऽसमस्तवद्*इत्येव ज्यायः । इदमपि सिद्धं भवति—पिङ्गलकाण्वस्य छात्राः पैङ्गलकाण्वाः ॥ वृद्धिर्यस्याचामादिस्तद्वृद्धम् ॥ ७३ ॥

( प्रदीपः ) पैङ्गलकाण्वा इति । कण्वादिभ्यो गोत्र इत्यण् । वृद्धसंज्ञायां तु छः स्यात् ॥ ७३ ॥

( उद्द्योतः ) अणिति । स च केवलेभ्यः काण्व्यादिभ्यश्छस्यापवादः । वृद्धसंज्ञापक्षे तु समुदायस्य कण्वादिषु पाठाभावात् प्रत्ययविधौ तदन्तविधिप्रतिषेधाच्च न तत्प्राप्तिरिति भावः ॥ ७३ ॥

( तत्त्वालोकः ) भाष्ये—इदमपीति—येनेत्यादिः ।

उद्द्योते—कण्वादिषु—गर्गादिगणान्तर्गतेषु ।

( ६७ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. । १४ सू० ॥ )

# त्यदादीनि च ॥ १ । १ । ७४ ॥

( अनुवृत्तिनिर्णयाधिकरणम् )

( आक्षेपभाष्यम् )

यस्याचामादिग्रहणमनुवर्तते, उताहो न ॥

( उद्द्योतः ) त्यदादीनि च ॥ ७४ ॥ भाष्ये—अनुवर्तत इति ॥ पूर्वसूत्रात्परतो गच्छति न वेति विचारः ॥

( भाष्यम् )

किं चातः ? ।

( अनुवृत्तिपक्षे दूषणभाष्यम् )

यद्यनुवर्तते, इह च प्रसज्येत—त्वत्पुत्रस्य च्छात्रास्त्वात्पुत्राः, मात्पुत्राः । इह च न स्यात्—त्वदीयो मदीय इति ॥

( प्रदीपः ) त्यदादीनि च ॥ ७४ ॥ त्वात्पुत्रा इति । आदिग्रहणानुवृत्त्यन्यथानुपपत्त्योपसर्जनानामपि त्यदादित्वं स्यादिति भावः ॥ अचामित्यस्य तूत्तरार्थैवानुवृत्तिः स्यात्, तत्संबन्धस्येहायोग्यत्वात् । निर्धारणस्य समानजातीयविषयत्वात् ॥ त्वदीय इति । व्यपदेशिवद्भावोऽत्र नास्ति, अप्रातिपदिकेनेति निषेधात् ॥

( उद्द्योतः ) ननूपसर्जनानां गणबहिर्भावेन कथं त्यदादित्वमत आह—आदीति । सामर्थ्याद्भूतपूर्वगतिराश्रयिष्यत इति भावः ॥ अचामित्यस्य त्विति । इहादिग्रहणसंबन्ध एव भाष्यतात्पर्यमिति भावः ॥ व्यपदेशिवद्भावेन केवलेऽपि सिद्धमिति इह च नेति भाष्यमयुक्तमत आह—व्यपदेशिवदिति । स निषेधः प्रत्ययविधौ तन्मात्रोपयोगिसंज्ञाविधौ चेति भावः । तदनाश्रित्यैव वेदम् ॥

( तत्त्वालोकः ) भाष्ये—यद्यनुवर्त्तत इति—तर्हि—यस्यादिस्त्यदादिस्तद्वृद्धमिति सूत्रार्थस्य जायमानत्वादिति शेषः ।

प्रदीपे—अप्रातीति—व्यपदेशिवद्भाव इत्यादिः ।

उद्द्योते—गणेति—सर्वादीत्यादिः । व्यापकाभावे व्याप्याभावस्य दुर्निवारत्वादिति भावः । व्यपदेशिवद्भावेनेति—नन्वित्यादिः । स निषेधः—'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधः । तत्—व्यपदेशिवत्त्वम् ।

( निवृत्तिपक्षे दूषणभाष्यम् )

अथ निवृत्तम्, 'एङ् प्राचां देशे' यस्याचामादिग्रहणं कर्तव्यम् ॥

( तत्त्वालोकः ) 'एङ्प्राचां देशे' इति—तर्हीत्यादिः । इत्यत्रेति शेषः ।

( अनुवृत्तिपक्षाभ्युपगमभाष्यम् )

एवं तर्ह्यनुवर्तते ॥

( आक्षेपभाष्यम् )

कथं त्वात्पुत्रा मात्पुत्रा इति ? ॥

( तत्त्वालोकः ) कथम्—कथन्तर्हि ।

( समाधानभाष्यम् )

संबन्धमनुवर्तिष्यते—'वृद्धिर्यस्याचामादिस्तद् वृ-

द्धप्' । 'त्यदादीनि च' वृद्धसंज्ञानि भवन्ति, वृद्धिर्यस्याचामादिस्तद् वृद्धम् ॥ 'एङ् प्राचां देशे' यस्याचामादिग्रहणमनुवर्तते, वृद्धिग्रहणं निवृत्तम् । तद्यथा—कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते, स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति ॥ त्यदादीनि च ॥

( प्रदीपः ) **संबन्धमिति** । द्वितीयान्तमेतत् । संबन्धमनुरोत्स्यते न हास्यतीत्यर्थः । अथवा संबध्यत इति संबन्धम्, कर्मणि घञ् नपुंसकेऽपि बाधकाभावाद्भवति । वृद्धिग्रहणसंबद्धमादिग्रहणमिहानुवर्तत इति नास्ति तस्य त्यदादिभिः संबन्धः ॥ **तद्यथेति** । एतद्दर्शयति, स्वरितत्वप्रतिज्ञानादुत्तरसूत्र एव योग्यत्वाद्यस्याचामादिरिति संबध्यते, एङ् यस्याचामादिस्तद् वृद्धमिति वाक्यार्थसंपादनाय । इह त्वयोग्यत्वात् संबन्धानुपपत्तिः, तुल्यजातीयस्य निर्धारणात् । त्यदादीनां चात्र पूत्वाभावाद्यस्याचामादयस्त्यदादय इति तत्संबन्धाभावात् ॥ ७४ ॥

( उद्द्योतः ) ननु नपुंसके भावे क्तल्युटौ घञजपवादौ । स्त्र्यधिकारात्परतो **वाऽसरूपविधिश्च** नेति संबन्धमिति नपुंसकप्रथमैकवचनमनुपपन्नमत आह—**द्वितीयान्तमिति ॥ नपुंसकेऽपीति । घञजपः पुंसीति** भावघञ्विषयकं, क्वाचित्कं वेति भावः ॥ चेतनावतस्त्यागोपादाने संभवतः, यस्यादिरित्यस्य तु कथं ते स्यातामत आह—**एतदिति । योग्यत्वादादिरि**त्यस्यैङित्येकवचनान्तेन संबन्ध इति शेषः ॥ **तुल्यजातीयस्ये**त्युपलक्षणम् । त्यदादीनीत्यनेनादिरित्यस्य भिन्नविभक्तिकत्वाच्चेत्यपि बोध्यम् ॥ ७४ ॥

**(तत्त्वालोकः)** भाष्ये—**सम्बन्धमिति**—यत इत्यादिः । **सार्थं**—सहायकम् ।

प्रदीपे—**तस्य**—आदिग्रहणस्य । **सम्बन्धेति**—तदित्यादिः ।

उद्द्योते—**चेतनावत इति**—नन्वित्यादिः । **यस्यादिः**-यस्याचामादिः । **योग्यत्वादादिरितीति**—एतत्प्रदीपपाठधारणेन नागेशोपलब्धप्रदीपपुस्तके 'योग्यत्वाद्यस्याचामादिरिति सम्बध्यते' इत्यस्य स्थाने 'योग्यत्वादादिरिति' इत्येव पाठ आसीदिति प्रतीयते । कैयटस्य न्यूनतां निराचष्टे—**उपलक्षणमिति** ।

---

( ६८ वृद्धसंज्ञासूत्रम् ॥ १ । १ । ९ आ. १५ सू० ॥ )

# एङ् प्राचां देशे ॥ १ । १ । ७५ ॥

( विषयनिर्णयाधिकरणम् )

( आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ एङ् प्राचां देशे शैषिकेषु ॥ * ॥

( भाष्यम् )

एङ् प्राचां देशे शैषिकेष्विति वक्तव्यम् । सैपुरिकी सैपुरिका । स्कौनगरिकी स्कौनगरिकेति ॥ एङ् प्राचां देशे ॥ ७५ ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये
प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥
पादश्चायं समाप्तः ॥

( प्रदीपः ) एङ् प्राचाम् ॥ ७५ ॥ कुणिना प्राग्ग्रहणमाचार्यनिर्देशार्थं व्यवस्थितविभाषार्थं चेति व्याख्यातम् । तेन क्रोडो नामोदग्ग्रामस्तत्र भवः क्रौड इत्यणेव भवति ॥ अन्येन तु प्राग्ग्रहणं देशविशेषणं व्याख्यातम् । तेन देवदत्तो नाम वाहीकेषु ग्रामस्तत्र भवो दैवदत्त इत्यवृद्धत्वाट्ठञ्ञिठौ न भवतः ॥ भाष्यकारस्तु कुणिदर्शनमशिश्रियत् । सेपुरं स्कोनगरं च वाहीकग्रामौ । तत्र वृद्धत्वाद्वाहीकग्रामेभ्यश्चेति ञिठञ्ठौ भवतः । **शैषिकेष्विति** वचनादपत्यविकारयोर्वृद्धलक्षणप्रत्ययाभावः । क्रोडदेवदत्तयोस्त्वप्राग्देशवाचिनोर्व्यवस्थितविभाषया न भवतीति । प्राग्देशवाचिनस्तु देवदत्तस्य वृद्धसंज्ञत्वात् काश्यादित्वाद् वृद्धलक्षणौ ठञ्ञिठौ भवतः ॥ ७५ ॥

इत्युपाध्यायजयटपुत्रकैयटकृते महाभाष्यप्रदीपे
प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥
पादश्चायं समाप्तः ॥

( उद्द्योतः ) एङ् प्राचाम् ॥ ७५ ॥ **कुणिनेति** । विधेयसंबन्धलाभात्प्राग्ग्रहणमाचार्यनिर्देशार्थम् । अन्यथा प्राग्देश इत्येव वदेदिति भावः ॥ लक्ष्यावैषम्याय च व्यवस्थितविभाषाश्रयणम् । तत्फलमाह—**तेनेति ॥ अन्येन त्विति** । श्रुतान्वये संभवत्यन्येनान्वयोऽनुचित इति तद्भावः ॥ **वाहीकश्च** देशविशेषः । तत्र स ग्रामः प्राग्देशबहिर्भूतः । वाहीकदेशश्चोभयसंबद्धः प्राग्देशबहिर्भूतो वा । अत एवा**व्ययात्त्यब्**विति सूत्रे शाकलनाम्नो ग्रामस्य उदीच्यवाहीकोभयरूपता भाष्यकृतोक्ता ॥ एतेनोभयबहिर्भूता वाहीका इत्यपास्तम् ॥ **वाहीकग्रामाविति** । आद्ये-अस्याप्राग्देशीयाविति शेषः पूरणीय इति बोध्यम् ॥ अन्यथा कुणिमताश्रयणेऽस्य प्रमाणता नोपपद्येत ॥ **ठञ्ञिठाविति । वाहीकग्रामेभ्यश्चे**त्यत्र **वृद्धा**दित्यनुवृत्तेः ॥ प्रागुदग्विभागस्तु-'**शरावत्यास्तु योऽवधेः ।**

**देशः प्राग्दक्षिणः प्राच्य उदीच्यः पश्चिमोत्तरः'**

इत्यमरेण दर्शितः ॥ **शरावती** चोत्तरतः पूर्वाभिमुखीत्येके । ऐशानीतो नैर्ऋत्यां पश्चिमाब्धिगामिनी सेत्यन्ये ॥ उभयथापि प्रागुदक्स्वरूपे न विवादः ॥ वाहीकलक्षणं च—

**'पञ्चानां सिन्धुषष्ठानामन्तरं ये समाश्रिताः ।**
**वाहीका नाम ते देशा न तत्र दिवसं वसेत्' ॥**

इति कर्णपर्वणि । एवं च धर्मबहिर्भूतत्वाद्वाहीकत्वम् । शतद्रुर्विपाशेरावती वितस्ता चन्द्रभागेति पञ्च नद्यः, सिन्धुः षष्ठः । तन्मध्यदेशो वाहीक इति तद्व्याख्यातारः ॥ कुणिमताश्रयणे **शैषिकेष्वि**त्यस्य वैयर्थ्यम्, व्यवस्थितविभाषयैव सिद्धेः अतोन्यमताश्रयेणैव भाष्यम् । भाष्यप्रामाण्याच्चैतावाहीकग्रामावपीत्यन्ये ॥ भाष्योक्तव्यवस्थितविभाषातिरिक्ता न व्यवस्थिता इत्यस्यार्थस्य **शैषिकेष्विति** ज्ञापकमित्यपरे ॥ **अपत्येत्यादि । उदीचां वृद्धा**दिति **नित्यंवृद्धे**ति चेति सर्वेष्टसिद्धिः ॥ ७५ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य प्रथमे नवममाह्निकम् ।
पादश्च प्रथमः समाप्तः ॥

**( तत्त्वालोकः )** प्रदीपे—**तेन**—तस्य व्यवस्थितविभाषार्थत्वाश्रयणेन । **अन्येन तु**—जयादित्येन तु । **कुणिदर्शनम्**—कुणिमतम् । **प्रत्ययेति**—ञिञ्मयटोरित्यर्थः । **व्यवस्थितविभाषया**—प्राग्ग्रहणस्य व्यवस्थितविभाषार्थत्वाश्रयणेन । वृद्धसंज्ञेति भावः ।

उद्द्योते—**इत्येवेति**—न तु 'प्राचां देशे' इतीति शेषः । **श्रुतान्वये**—प्राचामित्यस्य श्रुतेन देश इत्यनेनान्वये । **अन्येन**—अध्याहृतेन मतेनेत्यनेन । 'श्रुतानुमितयोः श्रुतसम्बन्धो बलीयानि'ति न्यायादिति भावः । **स ग्रामः**—देवदत्तो नाम ग्रामः । **उभयेति**—प्रागुदग्देशोभयेत्यर्थः । एवमग्रेऽपि । **आद्ये**—कुणिमते । **अन्यथा**—तयोः प्राग्देशीयत्वे । जयादित्यमतेनापि सिद्धेरिति भावः । **अस्य**—सैपुरिकीत्याद्युदाहरणस्य । **शरावत्यास्त्विति**—'लोकोऽयं भारतं वर्ष'मि'त्यादिः । **एके इति**—तद्व्याख्यातार इति शेषः । एवमग्रेऽपि । **सा**—शरावती । **सिन्धुः**—सिन्धुनदः । **व्यवस्थितविभाषयैव सिद्धेः**—तन्मते प्राग्ग्रहणस्य व्यवस्थितविभाषार्थत्वाश्रयणेनैव सैपुरिकीत्यादिसिद्धेः । **एतौ**—सेपुर-स्कोनगराख्यौ । **अपिना**—वाहीकग्रामावित्यस्य परिग्रहः । तथा च—तयोरुभयत्राचित्वादन्यमतेऽपि वृद्धसंज्ञायाः ठञ्ञिठोश्चोपपत्तिरिति भावः ।

**इति दरभङ्गामण्डलान्तर्गत 'ठाढी' ग्रामवास्तव्य-व्याकरण-न्याय-वेदान्ताचार्य-लब्धस्वर्णपदक-पण्डितश्रीरुद्रधरझा-शर्मप्रणीते महाभाष्यप्रदीपोद्द्योततत्त्वालोके प्रथमाध्यायस्य प्रथमे पादे नवममाह्निकम् ॥**

---

## तत्त्वालोककर्त्तुः परिचयः

( १ )

अस्ति प्रसिद्धमहिमाऽखिलभूतलेऽयं, देशः सुरैरपि सदा स्पृहया प्रतीष्टः ।
शोभारतः प्रथितभारतनाम यस्तस्यैकतो जनकजाजनिभूर्गरिष्ठा ॥

( २ )

तन्मध्यमन्ववसितो बुधवर्गपूर्णः, ठाढीतिनामविदितोऽभिजनो यदीयः ।
आसीत्स मैथिलधरासुरवंशदीपः, श्रीमद्गणेशदयितः किल विश्वनाथः ॥

( ३ )

यस्तर्ककर्कशगिरोऽखिलमर्मवेत्ता, भेत्ता च वादिनिवहस्य समस्तवादे ।
यज्ज्ञानगौरववशीकृतमानसोऽसौ, सर्वेष्टदाननिरतो मिथिलाऽधिपोऽभूत् ॥

( ४ )

तस्यात्मजस्तदनुरूपगुणैरुपेतो, दामोदरो निजगृहे बहुशः सुशिष्यान् ।
अन्नादिदानसहितं विधिनाऽतितुष्टः, प्राध्यापयन् किल निनाय समस्तमायुः ॥

( ५ )

तत्पुत्रः शाब्दतर्काध्ययनविशदधीर्व्यासतन्त्रे प्रवीणः,
काश्यामध्यापयंस्तानविकलविषयान् वाग्मितायां प्रसिद्धः ।
खैकव्योमाद्रिवर्षे फणिपतिवचसां कैयटोद्द्योतभाजां,
तत्त्वालोकं व्यतानीद् गुरुवरकृपया छात्रवर्गस्य तुष्ट्यै ॥

( ६ )

नवीननीरदश्यामे श्रीरामचरणाम्बुजे ।
कृतिं समर्पयत्येतां निजां रुद्रधरः शुभाम् ॥ इति ॥

---

**नवाह्निके व्याख्याताऽव्याख्यातसमुदितसूत्रसंख्या—**

| आह्निकसंख्या | प्र० | द्वि० | तृ० | च० | प० | ष० | स० | अ० | न० |
|---|---|---|---|---|---|---|---|---|---|
| शिवसूत्राणि | × | १४ | × | × | × | × | × | × | × |
| पाणिनिसूत्राणि | × | × | ३ | ७ | १६ | १८ | ११ | ४ | १६ |
| व्याख्यातसूत्राणि | × | ८ | २ | ७ | १५ | १५ | ११ | ४ | १५ |
| अव्याख्यातसूत्राणि | × | ६ | १ | × | १ | ३ | × | × | १ |
| सर्वयोगः | शिवसूत्राणि १४, | | | | पाणिनिसूत्राणि ७५ | | | | |

# अथ नवाह्निकसूत्रपाठः



इत्यष्टाध्यायीसूत्रपाठे प्रथमाध्याये प्रथमः पादः ।

# अथ नवाह्निकवार्तिकपाठः

इति नवाह्निकवार्तिकपाठः।

# प्रश्नपत्राणि

१ व्याकरणपदार्थस्तत्तदनुपपत्तिनिराकरणेन पातञ्जल्या प्रणाल्या निरुच्यताम् ।

२ वर्णानां सार्थक्यमानर्थक्यञ्च हेतूपन्यासगर्भमालोच्य तदुभयस्य स्वाभाविकत्वं सदृष्टान्तमुपपाद्यताम् ।

३ 'इकोगुणवृद्धी' इति सूत्रे वृद्धिग्रहणप्रयोजनं निरूप्यताम्। अथवा—ऋलृवर्णयोः सावर्ण्यविधिप्रयोजनं परीक्ष्यताम् ।

४ मन्त्राणामानर्थक्यमापाद्य तदर्थवत्त्वोपपादनेन निरुक्तशास्त्रारम्भः समर्थ्यताम् ।

५ दैवतकाण्डस्य दैवतत्वं निरुच्य ऋचां त्रैविध्यं लक्षणोदाहरणैर्विविच्यताम् ।

६ ईदूतौ च सप्तम्यर्थे, इति सूत्रस्थार्थग्रहणस्य सार्थक्यं साधूपपाद्यताम् ।

७ उभस्य सर्वनामत्वेऽव्ययीभावस्याव्ययत्वे च प्रयोजनानि प्रदर्श्यन्ताम् ।

८ षष्ठी स्थानेयोगेति सूत्रमावश्यकं नवेति विविच्यताम् ।

९ स्थानिवत्सूत्रस्वीकारे निर्दिष्टा दोषाः साकल्येन निराकर्तुं शक्यन्ते नवेति निर्णीयताम् ।

१० 'उत्तरपदत्वे चापदादिविधौ' इति वार्तिकस्य फलानि प्रदर्श्य तत्खण्डनप्रकारोऽपि स्फुटं निर्दिश्यताम् ।

११ तपरस्तत्कालस्येति सूत्रं भाष्यरीत्या व्याख्यायताम् ।

१२ 'समानशब्दाप्रतिषेधोऽर्थवद्ग्रहणात्' 'नवा संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति' अवयवग्रहणात् सिद्धमिति चेदादेशे रात्तप्रतिषेधः, एकादेशस्योपसंख्यानम्, तदेकदेशविज्ञानाद् वा सिद्धम् ।

एषु वार्तिकत्रयस्य तात्पर्यं प्रकरणोपन्यासपुरःसरं भाष्योक्तदिशा विशदीक्रियताम् ।

---

१ शब्दानां ज्ञानस्य धर्मजनकत्वमाहोस्वित्प्रयोगस्येति सोपपत्तिकमालोच्यताम् ।

२ त्रिमात्रचतुर्मात्रस्थानिनां त्रिमात्रचतुर्मात्रा आदेशा निराक्रियन्ताम् ।

३ वृद्धिरादैजिति सूत्रे तपरकरणप्रयोजनं निरूप्यताम् । अथवा—न धातुलोप इति सूत्रं प्रत्याख्यायताम् ।

४ निरुक्तोद्धृतमन्त्रर्थज्ञानं प्रशंसताऽर्थाज्ञानं निन्दता चायुष्मता निरुक्तशास्त्रारम्भः समर्थ्यताम् ।

५ अग्नि–वैश्वानर–जातवेदश्शब्देषु किमपि शब्दद्वयं निरुक्तोक्तविविधप्रकारैर्निरुच्यताम् ।

६ सरूपसूत्र एवकारापकर्षे फलप्रमाणे निरूप्य, सोऽपकर्षो युज्यते न वा ? युज्यते चेदपकृष्टस्य क्वान्वयः ? सर्वं समासतो निरूपणीयम् ।

७ निर्जरशब्दस्य तृतीयैकवचने नव्यप्राच्यमतयोर्निष्पन्नं रूपं सप्रकारमुक्त्वाऽतिजरशब्दस्य नपुंसके द्वितीयैकवचने रूपमुभयमतेन सप्रमाणं प्रदर्शयन्तो युक्तत्वायुक्तत्वे कस्येति विवेचयत ।

८ अतिखट्वायेत्यत्र स्थानिवद्भावेन याडागम आपाद्यावन्तं यदङ्गं ततः परस्य याडित्यर्थेन प्राचा निराकृतः । प्रतिपदोक्तपरिभाषया च नवीनेन । तत्रोभयोर्गुणदोषौ विविच्यैकतरः पक्षः स्थापनीयः ।

९ उच्चारणार्थानां स्वत इत्संज्ञया वा निवृत्तिरिति विचार्य, सुद्यौरित्यादौ स्वरितापत्तिर्निरसनीया ।

१० मपर्यन्तस्येत्यधिकारसूत्रस्थपरिग्रहणफलं प्रदर्श्यताम् ।

११ टाबृचीति सूत्रे पादोऽन्यतरस्यामित्यतोऽन्यतरस्याङ्ग्रहणस्यानुवृत्तिर्भवति नवेति स्पष्टं प्रतिपाद्यताम् ।

---

१ गौरिति ज्ञाने प्रतिभासमानेषु सास्नालाङ्गूलादिमद्व्यक्त्यादिषु युक्त्या शब्दत्वमाशङ्क्य तद्व्यावृत्तशब्दस्वरूपनिरूपणपुरस्सरं शब्दानुशासनस्य मुख्यं प्रयोजनपञ्चकं सप्रपञ्चमुदाह्रियताम् ।

२ सवर्णानां ग्रहणार्थमवतीर्णं वर्णानामेकत्वपक्षमाक्षिप्य सिद्धान्तपक्ष उपक्षिप्यताम् ।

३ 'इको गुणवृद्धी' इति सूत्रे इग्ग्रहणसार्थक्यं व्यवस्थाप्य स्वरानन्तर्हितवचनमिति वार्तिकं व्याख्याय प्रत्याख्यायताम् । अथवा—वर्णसमाम्नाये हकारस्य द्विरुपदेशं समर्थ्य तस्येति तु वक्तव्यमिति तुल्यास्यसूत्रस्थं वार्तिकं पातञ्जल्या प्रणाल्या प्रत्याख्यायताम् ।

४ नाम्नामाख्यातजत्वे मतभेदमुद्भाव्य शाकटायनाचार्यमतं निराक्रियताम् ।

५ अविस्पष्टदैवतलिङ्गेषु मन्त्रेषु देवतामुपपत्त्या परीक्ष्य देवतावददेवतानामश्वादीनामपि स्तुतिः समाधीयताम् ।

६ नवेति विभाषेतिसूत्रं भाष्योक्तशङ्कासमाधिभिः समर्थ्य, तत्प्रत्याख्यानेनाऽपि सुतरामभीष्टसिद्धिं प्रदर्श्य च, द्वन्द्वे च, विभाषा जसि, विभाषाग्रे प्रथमपूर्वेषु, विभाषा विप्रलापे, न यदि, विभाषा साकाङ्क्षे, एषु त्रिसंशयान् प्रदर्श्याऽत्रत्यं सिद्धान्तं सुविशदं वदत ।

७ भाष्योक्तदिशा स्थानेऽन्तरतम इति सूत्रस्याऽनन्यथासिद्धं प्रयोजनमभिधाय ग्रन्थोक्तं तमपः फलं सप्तम्यन्तपाठे दोषांश्च प्रदर्श्य प्रथमान्तसप्तम्यन्तपाठयोः कः सिद्धान्त इति साधु लिखत ।

८ स्थानिवत्सूत्रघटकपदानां साफल्यं सप्रमाणं प्रतिपाद्य ज्ञापकलौकिकन्यायादिभिर्निखिलेष्टसिद्धावपि किमिति प्रकृतसूत्रमाराध्यते इत्यभिधत्त ।

९ न लुमताऽङ्गस्येति सूत्रं वादिप्रतिवाद्युक्तविविधवादोपन्यासपुरस्सरं भाष्यकाराभिप्रायावलम्बेन समर्थयत ।

१० तस्मिन्निति सूत्रं ग्रन्थोक्तदिशा व्याख्याय कथाऽत्रोद्देश्यविधेयभावो भाष्यकारादिसम्मत इत्यभिधीयताम् ।

११ अणुदित्सूत्रघटकाऽप्रत्ययपदं भाष्योक्तशङ्कासमाधानैर्व्यवस्थाप्य तेन कथं भाव्यमानेनेति परिभाषा ज्ञाप्यत इति प्रतिपाद्य चाऽणग्रहणप्रत्याख्यानेन जातिपक्षस्वीकाराऽभावेऽपीष्टसिद्धिर्भवत्सम्मता नवेति सविवेकमुपपादयत ।